४२ ॥ इतिस्त्रीपर्वणिनीलकंठीयेभारतभावदीपेत्रयोविंशोऽध्यायः ॥ २३ ॥ सोमदत्तसुतमितिस्पष्टार्थश्चतुर्विंशः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ बीभत्सुरतीनि





गच्छंत्यभिमुखागंगांद्रोणशिष्याद्विजातयः ॥ अपसव्यांचितिंकृत्वापुरस्कृत्यकृपींचते ४२ ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीवि० गांधारीवचनेत्रयोविंशो ऽध्यायः ॥ २३ ॥ ॥ गांधार्युवाच ॥ सोमदत्तसुतंपश्ययुयुधानेनपातितम् ॥ वितुद्यमानंविहगैर्बहुभिर्माधवांतिके १ पुत्रशोकाभिसंतप्तःसोमदत्तोजनार्दन ॥ युयुधानंमहेष्वासंगर्हयन्निवदृश्यते २ असौहिभूरिश्रवसोमाताशोकपरिप्लुता ॥ आश्वासयतिभर्तारंसोमदत्तमनिंदिता ३ दिष्ट्यानैनंमहाराजदारुणंभरतक्षयम् ॥ कुरुसंक्रंदनंघोरंयुगांतमनुपश्यसि ४ दिष्ट्यायूपध्वजंपुत्रंवीरंभूरिसहस्रदम् ॥ अनेकक्रतुयज्वानंनिहतंनानुपश्यसि ५ दिष्ट्यास्नुषाणामाक्रंदेघोरंविलपितं बहु ॥ नशृणोषिमहाराजसारसीनामिवार्णवे ६ एकवस्त्रार्धसंवीताःप्रकीर्णासितमूर्धजाः ॥ स्नुषास्तेपरिधावंतिहतापत्याहतेश्वराः ७ श्वापदैर्भक्ष्यमाणंत्वमहो दिष्ट्यानपश्यसि ॥ छिन्नबाहुंनरव्याघ्रमर्जुनेननिपातितम् ८ शलंविनिहतंसंख्येभूरिश्रवसमेवच ॥ स्नुषाश्चविविधाःसर्वादिष्ट्यानाद्येहपश्यसि ९ दिष्ट्या तत्कांचनंछत्रंयूपकेतोर्महात्मनः ॥ विनिकीर्णंरथोपस्थेसौमदत्तेर्नपश्यसि १० अमूस्तुभूरिश्रवसोभार्याःसात्यकिनाहतम् ॥ परिवार्यानुशोचंतिभर्तारमसिते क्षणाः ११ एताविलप्यकरुणंभर्तृशोकेनकर्शिताः ॥ पतंत्यभिमुखाभूमौकृपणंबतकेशव १२ बीभत्सुरतिबीभत्संकर्मेदमकरोत्कथम् ॥ प्रमत्तस्ययदच्छैत्सीद्बा हुंशूरस्ययज्वनः १३ ततःपापतरंकर्मकृतवानपिसात्यकिः ॥ यस्मात्प्रायोपविष्टस्यप्राहार्षीत्संशितात्मनः १४ एकोद्वाभ्यांहतःशेषेत्वमधर्मेणधार्मिक ॥ किंनु वक्ष्यतिवैसत्सुगोष्ठीषुचसभासुच १५ अपुण्यमयशस्यंचकर्मेदंसात्यकिःस्वयम् ॥ इतियूपध्वजस्यैताःस्त्रियःक्रोशंतिमाधव १६ भार्यायूपध्वजस्यैषाकरसं मितमध्यमा ॥ कृत्वोत्संगेभुजंभर्तुःकृपणंपरिदेवति १७ अयंसहंताशूराणांमित्राणामभयप्रदः ॥ प्रदातागोसहस्राणांक्षत्रियांतकरःकरः १८ अयंसरसनोत्कर्षी पीनस्तनविमर्दकः ॥ नाभ्यूरुजघनस्पर्शीनीवीविस्रंसनःकरः १९ वासुदेवस्यसान्निध्येपार्थेनाक्लिष्टकर्मणा ॥ युध्यतःसमरेऽन्येनप्रमत्तस्यनिपातितः २० किंनुवक्ष्यसिसंसत्सुकथासुचजनार्दन ॥ अर्जुनस्यमहत्कर्मस्वयंवासकिरीटभृत् २१ इत्येवंगर्हयित्वैषातूष्णीमास्तेवरांगना ॥ तामेतामनुशोचंतिसपत्न्यःस्वा मिवस्नुषाम् २२ गांधारराजःशकुनिर्बलवान्सत्यविक्रमः ॥ निहतःसहदेवेनभागिनेयेनमातुलः २३ यःपुराहेमदंडाभ्यांव्यजनाभ्यांस्मवीज्यते ॥ सएषप क्षिभिःपक्षैःशयानउपवीज्यते २४ यःस्वरूपाणिकुरुतेशतशोऽथसहस्रशः ॥ तस्यमायाविनोमायादग्धाःपांडवतेजसा २५ माययानिकृतिप्रज्ञोजितवान्यो युधिष्ठिरम् ॥ सभायांविपुलंराज्यंसपुनर्जीवितंजितः २६ शकुंताःशकुनिंकृष्णसमंतात्पर्युपासते ॥ कैतवंममपुत्राणांविनाशायोपाशीक्षितम् २७





मलकर्षी अतिबीभत्संअतिगर्हितम् १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपे चतुर्विंशोऽध्यायः ॥ २४ ॥ ७ ॥ ॥ कांबोजमिति कांबोजास्तरणंकंबलविशेषः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

एतेनैतन्महद्वैरंप्रसक्तंपांडवैःसह ॥ वधायममपुत्राणामात्मनःसगणस्यच २८ यथैवममपुत्राणांलोकाःशस्त्रजिताःप्रभो ॥ एवमस्यापिदुर्बुद्धेर्लोकाःशस्त्रेणवैजिताः २९ कथंचनायंतत्रापिपुत्रान्मेभ्रातृभिःसह ॥ विरोधयेदृजुप्रज्ञानमृजुर्मधुसूदन ३० ॥ इतिश्रीमहाभारतेस्त्रीपर्वणिस्त्रीवि०गांधारीवाक्येचतुर्विंशोऽध्यायः॥२४॥ ॥ गांधार्युवाच ॥ ॥ कांबोजंपश्यदुर्धर्षंकांबोजास्तरणोचितम् ॥ शयानमृषभस्कंधंहतंपांसुषुमाधव १ यस्यक्षतजसंदिग्धौबाहूचंदनभूषितौ ॥ अवेक्ष्यकरुणंभार्याविलपत्यतिदुःखिता २ इमौतौपरिघप्रख्यौबाहूशुभतलांगुली ॥ ययोर्विवरमापन्नांनरतिर्मांपुराऽजहात् ३ कांगतिंतुगमिष्यामि त्वयाहीनाजनेश्वर ॥ हतबंधुरनाथाचवेपंतीमधुरस्वरा ४ आतपेक्लाम्यमानानांविविधानामिवस्रजाम् ॥ क्लांतानामपिनारीणांनश्रीर्जहातिवैतनूः ५ शयानमभितःशूरंकालिंगंमधुसूदन ॥ पश्यदीप्तांगदयुगप्रतिनद्धमहाभुजम् ६ मागधानामधिपतिंजयत्सेनंजनार्दन ॥ आवार्यसर्वतःपत्न्यःप्ररुदंत्यःसुविह्वलाः ७ आसामायतनेत्राणांसुस्वराणांजनार्दन ॥ मनःश्रुतिहरोनादोमनोमोहयतीवमे ८ प्रकीर्णवस्त्राभरणारुदत्यःशोककर्शिताः ॥ स्वास्तीर्णशयनोपेतामागध्यः शेरतेभुवि ९ कोसलानामधिपतिंराजपुत्रंबृहद्बलम् ॥ भर्तारंपरिवार्यैताःपृथक्प्ररुदिताःस्त्रियः १० अस्यगात्रगतान्बाणान्कार्ष्णिबाहुबलार्पितान् ॥ उद्धरंत्यसुखाविष्टामूर्छमानाःपुनःपुनः ११ आसांसर्वानवद्यानामातपेनपरिश्रमात् ॥ प्रम्लाननलिनाभानिभांतिवक्त्राणिमाधव १२ द्रोणेननिहताःशूराः शेरतेरुचिरांगदाः ॥ धृष्टद्युम्नसुताःसर्वेशिशवोहेममालिनः १३ रथाग्न्यगारंचापार्चिंशरशक्तिगदेंधनम् ॥ द्रोणमासाद्यनिर्दग्धाःशलभाइवपावकम् १४ तथैवनिहताःशूराःशेरतेरुचिरांगदाः ॥ द्रोणेनाभिमुखाःसर्वेभ्रातरःपंचकेकयाः १५ तप्तकांचनवर्माणस्तालध्वजरथव्रजाः ॥ भासयंतिमहींभासाज्वलिता इवपावकाः १६ द्रोणेनद्रुपदंसंख्येपश्यमाधवपातितम् ॥ महाद्विपमिवारण्येसिंहेनमहताहतम् १७ पांचालराज्ञोविमलंपुंडरीकाक्षपांडुरम् ॥ आतपत्रं समाभातिशरदीवनिशाकरः १८ एतास्तुद्रुपदंवृद्धंस्नुषाभार्याश्चदुःखिताः ॥ दग्ध्वागच्छंतिपांचाल्यंराजानमपसव्यतः १९ धृष्टकेतुंमहात्मानंचेदिपुंग वमंगनाः ॥ द्रोणेननिहतंशूरंहरंतिहृतचेतसः २० द्रोणास्त्रमभिहत्यैषविमर्देमधुसूदन ॥ महेष्वासोहतःशेतेनद्याहतइवद्रुमः २१ एषचेदिपतिःशूरोधृष्टकेतुर्म हारथः ॥ शेतेविनिहतःसंख्येहत्वाशत्रून्सहस्रशः २२ वितुद्यमानंविहगैस्तंभार्याःपर्युपाश्रिताः ॥ चेदिराजंहृषीकेशहतंसबलबांधवम् २३ दाशार्हपुत्रजंवीरं शयानंसत्यविक्रमम् ॥ आरोप्यांकेरुदंत्येताश्चेदिराजवरांगनाः २४ अस्यपुत्रंहृषीकेशसुवक्त्रंचारुकुंडलम् ॥ द्रोणेनसमरेपश्यनिकृत्तंबहुधाशरैः २५

१० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ दाशार्हपुत्रजमित्यत्रपुत्रामपिपुत्रशब्दः २४ । २५

पितरमिति पितृपदस्यावृत्तिःशोकाकुलत्वान्नदोषाय २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ तयोर्भीष्मविदुरयोः दर्शनमनागतवेक्षणं ३६ । ३७ । ३८ । ३९

पितरंनूनमाजिस्थंयुध्यमानंपरैःसह ॥ नाजहात्पितरंवीरमद्यापिमधुसूदन २६ एवंममापिपुत्रस्यपुत्रःपितरमन्वगात् ॥ दुर्योधनंमहाबाहोलक्ष्मणः परवीरहा २७ विंदानुविंदावावंत्यौपतितौपश्यमाधव ॥ हिमांतेपुष्पितौशालौमरुतागलिताविव २८ कांचनांगदवर्माणौबाणखड्गधनुर्धरौ ॥ ऋषभप्रति रूपाक्षौशयानौविमलस्रजौ २९ अवध्याःपांडवाःकृष्णसर्वएवत्वयासह ॥ येमुक्ताद्रोणभीष्माभ्यांकर्णाद्वैकर्तनात्कृपात् ३० दुर्योधनाद्द्रोणसुतात्सैंधवाच्च जयद्रथात् ॥ सोमदत्ताद्विकर्णाच्चशूराच्चकृतवर्मणः ३१ येहन्युःशस्त्रवेगेनदेवानपिनरर्षभाः ॥ तइमेनिहताःसंख्येपश्यकालस्यपर्ययम् ३२ नातिभारोऽस्तिदै वस्यध्रुवंमाधवकश्चन ॥ यदिमेनिहताःशूराःक्षत्रियैःक्षत्रियर्षभाः ३३ तदैवनिहताःकृष्णममपुत्रास्तरस्विनः ॥ यदैवाकृतकामस्त्वमुपप्लव्यंगतःपुनः ३४ शांतनोश्चैवपुत्रेणप्राज्ञेनविदुरेणच ॥ तदैवोक्ताऽस्मिमास्नेहंकुरुष्वात्मसुतेष्विति ३५ तयोर्हिदर्शनंनैतन्मिथ्याभवितुमर्हति ॥ अचिरेणैवमेपुत्राभस्मीभूता जनार्दन ३६ ॥ वैशंपायनउवाच ॥ इत्युक्त्वान्यपतद्भूमौगांधारीशोकमूर्छिता ॥ दुःखोपहतविज्ञानाधैर्यमुत्सृज्यभारत ३७ ततःकोपपरीतांगीपुत्रशोकपरिप्लु ता ॥ जगामशौरिंदोषेणगांधारीव्यथितेंद्रिया ३८ ॥ गांधार्युवाच ॥ पांडवाधार्तराष्ट्राश्चदग्धाःकृष्णपरस्परं ॥ उपेक्षिताविनश्यंतस्त्वयाकस्माज्जनार्दन ३९ शक्तेनबहुभृत्येनविपुलेतिष्ठताबले ॥ उभयत्रसमर्थेनश्रुतवाक्येनचैवह ४० इच्छतोपेक्षितोनाशःकुरूणांमधुसूदन ॥ यस्मात्त्वयामहाबाहोफलंतस्मादवाप्नुहि ४१ पतिशुश्रूषयायन्मेतपःकिंचिदुपार्जितम् ॥ तेनत्वांदुरवापेनशप्स्येचक्रगदाधरम् ४२ यस्मात्परस्परंघ्नंतोज्ञातयःकुरुपांडवाः ॥ उपेक्षितास्तेगो विंदतस्माज्ज्ञातीन्वधिष्यसि ४३ त्वमप्युपस्थितेवर्षेषट्त्रिंशेमधुसूदन ॥ हतज्ञातिर्हतामात्योहतपुत्रोवनेचरः ४४ अनाथवदविज्ञातोलोकेष्वनभिलक्षितः ॥ कुत्सितेनाभ्युपायेननिधनंसमवाप्स्यसि ४५ तवाप्येवंहतसुतानिहतज्ञातिबांधवाः ॥ स्त्रियःपरिपतिष्यंतियथैताभरतस्त्रियः ४६ ॥ वैशंपायनउवाच ॥ तच्छ्रुत्वावचनंघोरंवासुदेवोमहामनाः ॥ उवाचदेवींगांधारीमीषदभ्युत्स्मयन्निव ४७ जानेऽहमेतदप्येवंचीर्णंचरसिक्षत्रिये ॥ दैवादेवविनश्यंति वृष्णयोनात्रसंशयः ४८ संहर्ताष्णिचक्रस्यनान्योमद्विद्यतेशुभे ॥ अवध्यास्तेनरैरन्यैरपिवादेवदानवैः ४९ परस्परकृतंनाशंयतःप्राप्स्यंतियादवाः ॥ इत्युक्तवतिदाशार्हेपांडवास्त्रस्तचेतसः ॥ बभूवुर्भृशसंविग्नानिराशाश्चापिजीविते ५० ॥ इतिश्रीमहाभारतेस्त्रीपर्वणि स्त्रीविलापपर्वणि गांधारीशापदाने पंचविंशोऽध्यायः ॥ २५ ॥ ॥ ७ ॥ ॥ समाप्तंचस्त्रीविलापपर्व ॥

४० । ४१ । ४२ । ४३ । ४४ । ४५ तवापीति । अनिरस्तःपरध्वंसोयाविशक्तमुपेक्षकं ॥ कुलध्वंसप्रसूतार्तिर्गांधार्याइवकेशवं ४६ अभ्युत्स्मयन्नीषद्धसन् ४७ चीर्णंचरसिमदनुष्ठितमेवानु तिष्ठसि स्वतपोनाशार्थमितिभावः ४८ । ४९ । ५० ॥ इतिस्त्रीपर्वणिनीलकंठीये भारतभावदीपे पंचविंशोऽध्यायः ॥ २५ ॥ ॥ ७ ॥



उत्तिष्ठेति १ दुष्कृतंदुराचरितंस्वकीयं २ वैरमिच्छुरुषं वैरपुरुषं ३ द्वौपूर्वापरदुःखद्वयकृपौ ४ तपोर्थायार्थायोत्सन्नंतपोवीर्यं स्वद्विषावधार्थीयमेवगर्भंधत्ते अन्यावृजयार्थीयंकीर्त्यार्थयांयमपी

॥ अथश्राद्धपर्व ॥ श्रीभगवानुवाच ॥ उत्तिष्ठोत्तिष्ठगांधारिमाचशोकेमनःकृथाः ॥ तवैवह्यपराधेनकुरवोनिधनंगताः १ यत्त्वंपुत्रंदुरात्मानमीर्षुमत्यंतमानिनम् ॥ दुर्योधनंपुरस्कृत्यदुष्कृतंसाधुमन्यसे २ निष्ठुरंवैरपुरुषंवृद्धानांशासनातिगं ॥ कथमात्मकृतंदोषंमय्याधातुमिहेच्छसि ३ मृतंवायदिवानष्टंयोऽतीतमनुशोचति दुःखेनलभतेदुःखंद्वावनर्थौप्रपद्यते ४ तपोर्थीयंब्राह्मणीधत्तगर्भंगौर्वोढारंधावितारंतुरंगी ॥ शूद्रादासंपशुपालंचवैश्यावधार्थीयंक्षत्रियाराजपुत्री ५ ॥ वैशंपायन उवाच ॥ तच्छ्रुत्वावासुदेवस्यपुनरुक्तंवचोऽप्रियं ॥ तूष्णींबभूवगांधारीशोकव्याकुललोचना ६ धृतराष्ट्रस्तुराजर्षिर्निगृह्याबुद्धिजंतमः ॥ पर्यपृच्छतधर्मज्ञो धर्मराजंयुधिष्ठिरं ७ जीवतांपरिमाणज्ञःसैन्यानामसिपांडव ॥ हतानांयदिजानीषेपरिमाणंवदस्वमे ८ ॥ युधिष्ठिरउवाच ॥ दशायुतानामयुतंसहस्राणिचविंश तिः ॥ कोट्यःषष्टिश्चषट्चैवह्यस्मिन्राजन्मृधेहताः ९ अलक्षितानांवीराणांसहस्राणिचतुर्दश ॥ दशचान्यानिराजेंद्रशतंषष्टिश्चपंचच १० ॥ धृतराष्ट्रउवाच ॥ युधिष्ठिरगतिंकांतेगताःपुरुषसत्तम ॥ आचक्ष्वमेमहाबाहोसर्वज्ञोह्यसिमेमतः ११ ॥ युधिष्ठिरउवाच ॥ यैर्हुतानिशरीराणिहृष्टैःपरमसंयुगे ॥ देवराजसमाँल्लोकान् गतास्तेसत्यविक्रमाः १२ येत्वहृष्टेनमनसामर्तव्यमितिभारत ॥ युद्ध्यमानाहताःसंख्येगंधर्वैःसहसंगताः १३ येचसंग्रामभूमिष्ठायाचमानाःपराङ्मुखाः ॥ शस्त्रेण निधनंप्राप्तागतास्तेगुह्यकान्प्रति १४ पात्यमानाःपरैर्येतुहीयमानानिरायुधाः ॥ ह्रीनिषेवामहात्मानःपरानभिमुखारणे १५ छिद्यमानाःशितैःशस्त्रैःक्षत्रधर्मपरा यणाः ॥ गतास्तेब्रह्मसदनंनमेऽत्रास्तिविचारणा १६ येत्वत्रनिहताराजन्नंतरायोधनंप्रति ॥ यथाकथंचित्पुरुषास्तेगतास्तूत्तरान्कुरून् १७ ॥ धृतराष्ट्रउवाच ॥ केनज्ञानबलेनैवंपुत्रपश्यसिसिद्धवत् ॥ तन्मेवदमहाबाहोश्रोतव्यंयदिवैमया १८ ॥ युधिष्ठिरउवाच ॥ निदेशाद्भवतःपूर्वंवनेविचरतामया ॥ तीर्थयात्राप्रसंगे नसंप्राप्तोऽयमनुग्रहः १९ देवर्षिर्लोमशोदृष्टस्ततःप्राप्तोस्म्यनुस्मृतिम् ॥ दिव्यंचक्षुरपिप्राप्तंज्ञानयोगेनवैपुरा २० ॥ धृतराष्ट्रउवाच ॥ अनाथानांजनानां चसनाथानांचभारत ॥ कच्चित्तेषांशरीराणिधक्ष्यसिविधिपूर्वकम् २१ नयेषामस्तिसंस्कर्तानचयेऽत्राहिताग्नयः ॥ वयंचकस्यकुर्यामोबहुत्वात्तातकर्मणाम् २२ यान्सुपर्णाश्चगृध्राश्चविकर्षंतियतस्ततः ॥ तेषांतुकर्मणालोकाभविष्यंतियुधिष्ठिर २३ ॥ वैशंपायनउवाच ॥ एवमुक्तोमहाराजकुंतीपुत्रोयुधिष्ठिरः ॥ आ दिदेशसुधर्माणंधौम्यंसूतंचसंजयम् २४ विदुरंचमहाबुद्धिंयुयुत्सुंचैवकौरवम् ॥ इंद्रसेनमुखांश्चैवभृत्यान्सूतांश्चसर्वशः २५ भवंतःकारयंत्वेषांप्रेतकार्याण्यशे षतः ॥ यथाचानाथवत्किंचिच्छरीरंनविनश्यति २६ शासनाद्धर्मराजस्यक्षत्तासूतश्चसंजयः ॥ सुधर्माधौम्यसहितइंद्रसेनादयस्तथा २७



विभावः ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ सुधर्माणंदुर्योधनपुरोहितं २४ । २५ । २६ । २७

१८ । १९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४१ स्नेहया चितैःस्नेहसंयुक्तैः ४२ । ४४ ॥ इतिस्त्रीपर्वणिनीलकंठीये भा०



चंदनागुरुकाष्ठानितथाकालीयकान्युत ॥ घृततैलंचगंधांश्चक्षौमाणिवसनानिच २८ समाहृत्यमहार्हाणिदारूणांचैवसंचयान् ॥ रथांश्चमृदितांस्तत्रनानाप्रहर
णानिच २९ चिताःकृत्वाप्रयत्नेनयथामुख्यान्नराधिपान् ॥ दाहयामासुरव्यग्राःशास्त्रदृष्टेनकर्मणा ३० दुर्योधनंचराजानंभ्रातृंश्चास्यशताधिकान् ॥ शल्यंशलं
चराजानंभूरिश्रवसमेवच ३१ जयद्रथंचराजानमभिमन्युंचभारत ॥ दौःशासनिंलक्ष्मणंचधृष्टकेतुंचपार्थिवम् ३२ बृहंतंसोमदत्तंचसृंजयांश्चशताधिकान् ॥
राजानंक्षेमधन्वानंविराटद्रुपदौतथा ३३ शिखंडिनंचपांचाल्यंधृष्टद्युम्नंचपार्षतम् ॥ युधामन्युंचविक्रांतमुत्तमौजसमेवच ३४ कौसल्यंद्रौपदेयांश्चशकुनिंचा
पिसौबलम् ॥ अचलंवृषकंचैवभगदत्तंचपार्थिवम् ३५ कर्णंवैकर्तनंचैवसहपुत्रममर्षणम ॥ केकयांश्चमहेष्वासांस्त्रिगर्तांश्चमहारथान् ३६ घटोत्कचंराक्षसेंद्रंब
कभ्रातरमेवच ॥ अलंबुषंराक्षसेंद्रंजलसंधंचपार्थिवम् ३७ एतांश्चान्यांश्चसुबहून्पार्थिवांश्चसहस्रशः ॥ घृतधाराहुतैर्दीप्तैःपावकैःसमदाहयन् ३८ पितृमेधाश्चके
षांचित्प्रावर्तंतमहात्मनाम् ॥ सामभिश्चाप्यगायंततेऽन्वशोचंतचापरैः ३९ साम्नामृचांचनादेनस्त्रीणांचरुदितस्वनैः ॥ कश्मलंसर्वभूतानांनिशायांसमपद्यत
४० तेविधूमाःप्रदीप्ताश्चदीप्यमानाश्चपावकाः ॥ नभसीवान्वदृश्यंतग्रहास्तन्वभ्रसंवृताः ४१ येचाप्यनाथास्तत्रासन्नानादेशसमागताः ॥ तांश्चसर्वान्समाना
य्यराशीन्कृत्वासहस्रशः ४२ चित्वादारुभिरव्यग्रैःप्रभूतैःस्नेहपाचितैः ॥ दाहयामासतान्सर्वान्विदुरोराजशासनात् ४३ कारयित्वाक्रियास्तेषांकुरुराजोयुधि
ष्ठिरः ॥ धृतराष्ट्रंपुरस्कृत्यगंगामभिमुखोऽगमत् ४४ ॥ इतिश्रीमहाभा० स्त्री० श्राद्धपर्वणिकुरूणामौर्ध्वदेहिकेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ वैशंपायनउवाच ॥
तेसमासाद्यगंगांतुशिवांपुण्यजलोचिताम् ॥ ह्रदिनींचप्रसन्नांचमहारूपांमहाबलाम् १ भूषणान्युत्तरीयाणिवेष्टनान्यवमुच्यच ॥ ततःपितृणांभ्रातॄणां
पौत्राणांस्वजनस्यच २ पुत्राणामार्यकाणांचपतीनांचकुरुस्त्रियः ॥ उदकंचक्रिरेसर्वारुदत्योभृशदुःखिताः ३ सुहृदांचापिधर्मज्ञाःप्रचक्रुःसलिलक्रियाः ॥
उदकेक्रियमाणेतुवीराणांवीरपत्निभिः ४ सूपतीर्थाभवद्गंगाभूयोविप्रससारच ॥ तन्महोदधिसंकाशंनिरानंदमनुत्सवम् ५ वीरपत्नीभिराकीर्णंगंगाती
रमशोभत ॥ ततःकुंतीमहाराजसहसाशोककर्शिता ६ रुदतीमंदयावाचापुत्रान्वचनमब्रवीत् ॥ यःसवीरोमहेष्वासोरथयूथपयूथपः ७ अर्जुनेनजितःसंख्येवीरल
क्षणलक्षितः ॥ यंसूतपुत्रंमन्यध्वंराधेयमितिपांडवाः ८ योव्यराजच्चमूमध्येदिवाकरइवप्रभुः ॥ प्रत्ययुध्यतवःसर्वान्पुरायःसपदानुगान् ९ दुर्योधनबलंसर्वं 
यःप्रकर्षन्व्यरोचत ॥ यस्यनास्तिसमोवीर्येपृथिव्यामपिपार्थिवः १० योऽवृणीतयशःशूरःप्राणैरपिसदाभुवि ॥ कर्णस्यसत्यसंधस्यसंग्रामेष्वपलायिनः ११

षड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ तेसमासाद्येति १ वेष्टनानिउष्णीषकटिबंधनादीनि २ । ३ । ४ सूपतीर्थासोपानजलावतरणमार्गा ५ । ६ । ७ । ८ । ९ । १० । ११

१२ । १३ भवन्अभवन् अहमावभार्थैः १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ नेहस्मेति कर्णंभ्रातृत्वेनज्ञात्वेसतितदनुसारिणामस्माकमपिदुर्लभंनामविष्यन्नापिकीर

कुरुध्वमुदकंतस्यभ्रातुरक्लिष्टकर्मणः ॥ सहिवःपूर्वजोभ्रातामास्करान्मय्यजायत १२ कुंडलीकवचीशूरोदिवाकरसमप्रभः ॥ श्रुत्वातुपांडवाःसर्वेमातुर्वचनमप्रि
यम् १३ कर्णमेवानुशोचंतोभूयःक्लांततराऽभवन् ॥ ततःसपुरुषव्याघ्रःकुंतीपुत्रोयुधिष्ठिरः १४ उवाचमातरंवीरोनिःश्वसन्निवपन्नगः ॥ यःशरोर्मिर्ध्वजावर्तोम
हाभुजमहाग्रहः १५ तलशब्दानुनदितोमहारथमहाह्रदः ॥ यस्येषुपातमासाद्यनान्यस्तिष्ठेद्धनंजयात् १६ कथंपुत्रोभवत्याःसदेवगर्भःपुराऽभवत् ॥ यस्य
बाहुप्रतापेनतापिताःसर्वतोवयम् १७ तमग्निमिववस्त्रेणकथंछादितवत्यसि ॥ यस्यबाहुबलंनित्यंधार्तराष्ट्रैरुपासितम् १८ उपासितंयथाऽस्माभिर्बलंगांडीव
धन्वनः ॥ भूमिपानांचसर्वेषांबलंबलवतांवरः १९ नान्यःकुंतीसुतात्कर्णादगृह्णाद्रथिनांरथी ॥ सनःप्रथमजोभ्रातासर्वशस्त्रभृतांवरः २० असूततंभवत्यग्रेकथ
मद्भुतविक्रमम् ॥ अहोभवत्यामंत्रस्यगूहनेनवयंहताः २१ निधनेनहिकर्णस्यपीडितास्तुसबांधवाः ॥ अभिमन्योर्विनाशेनद्रौपदेयवधेनच २२ पंचालानां
विनाशेनकुरूणांपतनेनच ॥ ततःशतगुणंदुःखमिदंमामस्पृशद्भृशम् २३ कर्णमेवानुशोचामिदह्याम्यग्नाविवाहितः ॥ नेहस्मकिंचिदप्राप्यंभवेदपिदिविस्थि
तम् २४ नचेदंवैशसंघोरंकौरवांतकरंभवेत् ॥ एवंविलप्यबहुलंधर्मराजोयुधिष्ठिरः २५ व्यरुदच्छनकैराजंश्चकारास्योदकंप्रभुः ॥ ततोविनेदुःसहसास्त्रिय
स्ताःखलुसर्वशः २६ अभितोयाःस्थितास्तत्रतस्मिन्नुदककर्मणि ॥ ततआनाययामासकर्णस्यसपरिच्छदाः २७ स्त्रियःकुरुपतिर्धीमान्भ्रातुःप्रेम्णायुधिष्ठि
रः ॥ सताभिःसहधर्मात्माप्रेतकृत्यमनंतरम् २८ चकारविधिवद्धीमान्धर्मराजोयुधिष्ठिरः ॥ पापेनासौमयाश्रेष्ठोभ्राताज्ञातिर्निपातितः २९ अतोमनसिय
द्गुह्यंस्त्रीणांतन्नभविष्यति ॥ इत्युक्त्वासतुगंगायाउत्ततारकुलेंद्रियः ॥ भ्रातृभिःसहितःसर्वैर्गंगातीरमुपेयिवान् ३० ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायां
वैयासिक्यांस्त्रीपर्वणिकर्णगूढजत्वकथनेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ समाप्तमिदंस्त्रीपर्व ॥ अतःपरंशांतिपर्वभविष्यति ॥ तस्यायमाद्यःश्लोकः ॥
॥ वैशंपायनउवाच ॥ कृतोदकास्तेसुहृदांसर्वेषांपांडुनंदनाः ॥ विदुरोधृतराष्ट्रश्चसर्वाश्चभरतस्त्रियः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥

यणांक्षयोऽभविष्यदित्यर्थः २४ । २५ । २६ । २७ । २८ । २९ । ३० ॥ इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायां वैयासिक्यांश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवं
शावतंसश्रीगोविंदसूरिसूनोःश्रीनीलकंठकृतौभारतभावदीपे स्त्रीपर्वार्थप्रकाशे सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ अस्मिन्पर्वणि आदिपर्वोक्ताध्यायपर्वश्लोकसंख्यावैषम्यंलिपिकरप्रमादादिना बोध्यम् ॥

॥ इति श्रीमहाभारते स्त्रीपर्व समाप्तम् ॥

# ॥ अथ श्रीमहाभारते शांतिपर्वप्रारंभः॥




॥ श्रीगणेशायनमः ॥ श्रीमद्गोपालमानम्यश्रीलक्ष्मणपदानुगः ॥ नीलकंठोभावदीपंकुरुतेशांतिपर्वणि ॥ १ ॥ यस्साधनेपुरुच्यर्थमितिहासोऽप्यमीरितः ॥ धर्मार्थकाममोक्षास्तेसम्यगत्रनिरू
पिताः ॥ २ ॥ धर्मादित्रयमर्थकामकरणमीत्यर्थमित्यल्पकाधीशुद्धिकृतुजीविनार्थकतयानुक्त्यर्थमित्युत्तमाः ॥ एतत्पांडवधार्तराष्ट्रचरितव्याख्यामिषाद्दर्शितंयेनासौनिजवाक्यजातहृदयंमह्यंददा
त्वादरात् ॥ ३ ॥ तत्रतावच्छांतौराजधर्मापद्धर्ममोक्षधर्माख्यास्त्रयःकांडास्त्रयःक्रमेणविश्वस्यापन्नस्यविरक्तस्यचोपकारकास्तेष्वभ्यर्हितत्वात्प्राधान्यंराजधर्माणां । राजशब्दार्थश्चात्रप्रकरणात्प्रा
जारंजनकाम्ययेतिवक्ष्यमाणनिर्वचनानुसारेणसमानप्रकरणेसर्वारंजयतिप्रजाइतिमनूक्तेः'धातोनृपतेर्धर्मंवक्ष्यामिहितकाम्यया'इतिवृद्धपराशरेणापिसर्ववर्णसाधारणनृपतिशब्दप्रयोगाच्चयःप्रजारं
जनंकरोतिसएवबोध्यः । सचक्षत्रियोऽक्षत्रियोवाउत्थानेनसदापुत्रेत्यादिनावक्ष्यमाणानुत्थानादीन्धर्माननुतिष्ठेत् । तत्रापियःकामलोभादिहीनोऽत्यंतनिर्विण्णःकेवलंप्रजापालनजंधर्म
मात्रंकामयते सएवराज्यार्हइतियुधिष्ठिरोदाहरणेनप्रथमंनिरूपयति । कृतोदकास्तेसुहृदामित्यादिना नमोधर्मायमहते इत्यतःप्राक्तनेनग्रंथेन । कृतोदकाःकृतप्रेततर्पणाः । सुहृदामित्यनेनैव
दुर्योधनादीनामपिग्रहणं । मरणांतानिवैराणीतिन्यायेनतेषामपीदानींसुहृत्त्वात् १ तत्रगंगातीरेपुराद्बहिर्मासमात्रवासस्यप्रयोजनंतुयत्कचिच्छद्मयुद्धंकृतंतज्जन्यदोषनिर्हरणेनशुद्धिसंपादनं तदे

॥ श्रीगणेशायनमः ॥ ॥ श्रीवेदव्यासायनमः ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ वैशंपायनउवाच ॥ कृतो
दकास्तेसुहृदांसर्वेषांपांडुनंदनाः ॥ विदुरोधृतराष्ट्रश्चसर्वाश्चभरतस्त्रियः १ तत्रतेसुमहात्मानोन्यवसन्पांडुनंदनाः ॥ शौचंनिर्वर्तयिष्यंतोमासमात्रंबहिःपुरात् २
कृतोदकंतुराजानंधर्मपुत्रंयुधिष्ठिरम् ॥ अभिजग्मुर्महात्मानःसिद्धाब्रह्मर्षिसत्तमाः ३ द्वैपायनोनारदश्चदेवलश्चमहानृषिः ॥ देवस्थानश्चकण्वश्चतेषांशिष्याश्चसत्त
माः ४ अन्येचवेदविद्वांसःकृतप्रज्ञाद्विजातयः ॥ गृहस्थाःस्नातकाःसंतोददृशुःकुरुसत्तमम् ५ तेऽभिगम्यमहात्मानःपूजिताश्चयथाविधि ॥ आसनेषुमहार्हेषुविवि
शुस्तेमहर्षयः ६ प्रतिगृह्यततःपूजांतत्कालसदृशींतदा ॥ पर्युपासन्यथान्यायंपरिवार्ययुधिष्ठिरम् ७ पुण्येभागीरथीतीरेशोकव्याकुलचेतसम् ॥ आश्वासयंतोरा
जानंविप्राःशतसहस्रशः ८ नारदस्त्वब्रवीत्कालेधर्मपुत्रंयुधिष्ठिरम् ॥ संभाष्यमुनिभिःसार्धंकृष्णद्वैपायनादिभिः ९ भवताबाहुवीर्येणप्रसादान्माधवस्यच ॥ जितेे
यमवनिःकृत्स्नाधर्मेणचयुधिष्ठिर १० दिष्ट्यामुक्तस्तुसंग्रामादस्माल्लोकभयंकरात् ॥ क्षत्रधर्मरतश्चापिकच्चिन्मोदसिपांडव ११

तदुक्तंशौचंनिर्वर्तयिष्यंतइति । नत्वत्रशावाशौचशुद्धिर्मासमात्रेणेतिविवक्षितं । 'दशाहाच्छुद्ध्यतेविप्रोद्वादशाहेनभूपतिः । वैश्यःपंचदशाहेनशूद्रोमासेनशुद्ध्यति'इतिमनुवाक्यविरोधात् ।
नचैतेशूद्रायेनमासमाशौचंकुर्युः । किंच'उद्यतैराहवेशस्त्रैःक्षत्रधर्महतस्यच । सद्यःसंतिष्ठतेयज्ञस्तथाऽऽशौचमितिस्थितिः'इति । संग्रामहतानांसपिंडाःसद्यएवशुद्ध्यंतीत्युक्तंमनुना । तेनद्वा
दशाहमपिनैषामाशौचंमासस्तुदूरतोनिरस्तइतिप्रतीयते । यद्वा सौप्तिकेपशुवद्धतानांयुद्धदांद्वादशाहमाशौचमस्ति तेनयुद्धदिनेष्वष्टादशाहपर्यंतंप्रत्यहमाशौचप्राप्तिः सद्यःशुद्धिश्चांऽत्यदिने
प्राप्तस्याशौचस्यद्वादशाहेननिवृत्तिरितिमासंशौचसंपादनोकिर्युज्यते २ । ३ । ४ वेदविद्वांसोवेदार्थविदः कृतप्रज्ञावेदोक्ताचारनिष्ठाः स्नातकाब्रह्मचारिणः संतोऽभयदक्षिणाप्रदाःसंन्यासिनः
१ ५ तेराजाऽभिगम्यप्रत्युपगम्यनमस्कारादिनापूर्वंपूजिताःसंतआसनेषुविविशुरितिसंबंधः ६ पूजामर्घादिकां परिवार्यपर्युपासन्परितउपविष्टवंतः तद्भावआर्षः ७ आश्वासयंतः हेतौशतृप्रत्ययः
आश्वासनार्थंपर्युपासन्नित्यर्थः ८ कालेऽवसरेसंभाष्यैकमत्यंकृत्वाऽब्रवीत् ९ भवतइतिपष्ठ्यंतपाठेपूर्वमधर्मेणाक्रांतासतीयमवनिरिदानींत्वद्बलेनमाधवबलसहायेनधर्मेणकर्त्राजितायुवाभ्यां
खलनाशेकृतेसतिधर्मःप्रादुरभूदित्यर्थः १० दिष्ट्याभाग्येन कच्चिदितिकामप्रवेदने अनेनकर्मणातवमोदंसुहृत्क्षीणनंविशोकत्वंचकामयमानस्त्वांपृच्छामीत्यर्थः ११

१२ । १३ । १४ । १५ किंनुवक्ष्यतीति वधूःकनिष्ठभ्रातृभार्यात्वात्स्नुषाभूतावार्ष्णेयीसुभद्रा मेमांप्रतिकिंनुवक्ष्यति राज्यलोभेनत्वयामत्पुत्रोघातितइतिवक्ष्यत्येवेतिभावः । तथायमधुसूदनंह रिमितोद्वारकांप्रतिगतंसंतंप्रतिवासिनीश्वस्मज्जयश्रवणोत्सुकाद्वारकाद्वारकावासिजनसमूहःकिंनुवक्ष्यतीतिसंबंधः । खलहंत्रास्वजनपीडापहंत्राईश्वरेणत्वयासाधुःस्वीयःसोमद्रःकथंघाति तइतिवक्ष्यत्येवेतिभावः । एतच्चकृष्णस्य मधुसूदनंहरिमितिविशेषणद्वयसामर्थ्यादिवलभ्यते १६ यतोहतपुत्राहतबांधवाऽतःकृपणादीनाऽतिदुःखिताइत्यर्थः प्रियंसुखकरं हितंपथ्यं प्रियंचतद्धितं

कच्चिच्चनिहतामित्रःप्रीणासिसुहृदोनृप ॥ कच्चिच्छ्रियमिमांप्राप्यनत्वांशोकःप्रबाधते १२ ॥ युधिष्ठिरउवाच ॥ विजितेयंमहीकृत्स्नाकृष्णबाहुबलाश्रयात् ॥ ब्रा
ह्मणानांप्रसादेनभीमार्जुनबलेनच १३ इदंममहद्दुःखंवर्ततेहृदिनित्यदा ॥ कृत्वाज्ञातिक्षयमिमंमहांतंलोभकारितम् १४ सौभद्रंद्रौपदेयांश्चघातयित्वासुतान्प्रि
यान् ॥ जयोऽयमजयाकारोभगवन्प्रतिभातिमे १५ किंनुवक्ष्यतिवार्ष्णेयीवधूर्मेमधुसूदनम् ॥ द्वारकावासिनीकृष्णमितःप्रतिगतंहरिम् १६ द्रौपदीहतपुत्रेयंकृ
पणाहतबांधवा ॥ अस्मत्प्रियहितेयुक्ताभूयःपीडयतीवमाम् १७ इदमन्यत्तुभगवन्यत्त्वांवक्ष्यामिनारद ॥ मंत्रसंवरणेनास्मिकुंत्यादुःखेनयोजितः १८ यःसना
गायुतबलोलोकेऽप्रतिरथोरणे ॥ सिंहखेलगतिर्धीमानघृणीदातायतव्रतः १९ आश्रयोधार्तराष्ट्राणांमानीतीक्ष्णपराक्रमः ॥ अमर्षीनित्यसंरंभीक्षेप्तास्माकंरणेर
णे २० शीघ्रास्त्रश्चित्रयोधीचकृतीचाद्भुतविक्रमः ॥ गूढोत्पन्नःसुतःकुंत्याभ्रातास्माकमसौकिल २१ तोयकर्मणितंकुंतीकथयामाससूर्यजम् ॥ पुत्रंसर्वगुणोपेतमव
कीर्णंजलेपुरा २२ मंजूषायांसमाधायगंगास्रोतस्यमज्जयत् ॥ यंसूतपुत्रंलोकोऽयंराधेयंचाप्यमन्यत २३ सज्येष्ठपुत्रःकुंत्यावैभ्राताऽस्माकंचमातृजः ॥ अजा
नतामयाभ्रात्राराज्यलुब्धेनघातितः ॥ तन्मेदहतिगात्राणितूलराशिमिवानलः ॥ नहितंवेदपार्थोऽपिभ्रातरंश्वेतवाहनः २५ नाहंनभीमोनयमौसत्वस्मान्वेदसुव्र
तः ॥ गताकिलपृथातस्यसकाशमितिनःश्रुतम् २६ अस्माकंशमकामावैत्वंचपुत्रोममेत्यथ ॥ पृथायानकृतःकामस्तेनचापिमहात्मना २७ अपिपश्चादिदंमात
र्यवोचादितिनःश्रुतम् ॥ नहिशक्ष्याम्यहंत्यक्तुंनृपंदुर्योधनंरणे २८ अनार्यत्वंनृशंसत्वंकृतघ्नत्वंचमेभवेत् ॥ युधिष्ठिरेणसंधिंहियदिकुर्यांमतेतव २९ भीतोरणेश्वेत
वाहादितिमांमंस्यतेजनः ॥ सोऽहंनिर्जित्यसमरेविजयंसहकेशवम् ३० संधास्येधर्मपुत्रेणपश्चादितिचसोऽब्रवीत् ॥ तमुवाचकिलपृथापुनःपृथुलवक्षसम् ३१

चतस्मिन्नर्थेयुक्तासन्नद्धा १७ मंत्रसंवरणेनगूढोत्पन्नस्यास्मद्भ्रातुःकर्णस्याप्रकाशेन १८ तदेवाहत्रिभिः । यःसइति । सिंहस्यैवखेलोयुद्धक्रीडागतिर्गमनंचयस्यसतथा घृणीदयालुः १९ अ
मर्षीपरोत्कर्षासहिष्णुः नित्यसंरंभीसदाक्रोधवान् २० । २१ पुत्रंस्वस्येतिशेषः अवकीर्णंत्यक्तम् २२ । २३ मातृजोमातृसंबंधेन २४ श्वेतवाहनोऽर्जुनः २५ । २६ पांडववत्
त्वंचपुत्रोममेत्यब्रवीदितिशेषः कामोऽभिलषितम् २७ मातरिमातरंप्रत्यवोचत्कर्णइतिशेषः नोऽस्माभिःश्रुतम् २८ । २९ नृशंसत्वंसंकटेमित्रत्यागान्निर्दयत्वंकृतघ्नत्वमुपकर्तुरप
कारित्वंचप्रसिद्धमित्यतोऽनार्यत्वमेवस्पष्टीकरोति भीतइति विजयमर्जुनम् ३० पृथुलवक्षसंकपाटवक्षसम् ३१

वेपमानामर्जुननाशभीत्या ३२ विषह्यान्वशगान् ३३ पुत्रगृद्धिनीपुत्रलोभवती ३४ विसृज्यकर्णमितिशेषः ३५।३६।३७ दूयतेउपतप्यते ३८।३९।४०।४१। ४२ कारणंसादृश्यहेतोस्तज्जन्यत्वस्य
ज्ञापकं कथंनुइत्यद्भुतप्रश्ने चक्रंरथचक्रं ४३ सर्ववित्त्वेहेतुःविद्वानितिआत्मज्ञइत्यर्थः अतएवकृतंकार्यमकृतंकारणंचवेदजानाति ४४॥इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभाव
चतुर्णामभयंदेहिकामंयुध्यस्वफाल्गुनम् ॥ सोऽब्रवीन्मातरंधीमान्वेपमानांकृतांजलिः ३२ प्राप्तान्विषह्यांश्चतुरोनहनिष्यामितेसुतान् ॥ पंचैवहिसुतादेवि
भविष्यंतितवध्रुवाः ३३ सार्जुनावाहतेकर्णेसकर्णावाहतेऽर्जुने ॥ तंपुत्रगृद्धिनीभूयोमातापुत्रमथाब्रवीत् ३४ भ्रातृणांस्वस्तिकुर्वीथायेषांस्वस्तिचिकीर्षसि ॥
एवमुक्त्वाकिलपृथाविसृज्योपययौगृहान् ३५ सोऽर्जुनेनहतोवीरोभ्रात्राभ्रातासहोदरः ॥ नचैवविवृतोमंत्रःपृथायास्तस्यवाविभो ३६ अथशूरोमहेष्वासः
पार्थेनाजौनिपातितः ॥ अहंत्वज्ञासिषंपश्चात्स्वसोदर्यंद्विजोत्तम ३७ पूर्वजंभ्रातरंकर्णंपृथायावचनात्प्रभो ॥ तेनमेदूयतेतीव्रंहृदयंभ्रातृघातिनः ३८ कर्णार्जुन
सहायोऽहंजयेयमपिवासवं ॥ सभायांक्लिश्यमानस्यधार्तराष्ट्रैर्दुरात्मभिः ३९ सहसोत्पतितःक्रोधःकर्णंदृष्ट्वाप्रशाम्यति ॥ यदाह्यस्यगिरोरूक्षाःशृणोमि
कटुकोदयाः ४० सभायांगदतोद्यूतेदुर्योधनहितैषिणः ॥ तदानश्यतिमेरोषःपादौतस्यनिरीक्ष्यह ४१ कुंत्याहिसदृशौपादौकर्णस्येतिमतिर्मम ॥ सादृश्यहेतु
मन्विच्छन्पृथायास्तस्यचैवह ४२ कारणंनाधिगच्छामिकथंचिदपिचिंतयन् ॥ कथंनुतस्यसंग्रामेपृथिवीचक्रमग्रसत् ४३ कथंनुशप्तोभ्रातामेतत्त्वंवक्तुमिहार्हसि ॥
श्रोतुमिच्छामिभगवंस्त्वत्तःसर्वंयथातथं ॥ भवान्हिसर्वविद्विद्वान्लोकेवेदकृताकृतं ४४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिकर्णाभिज्ञाने
प्रथमोऽध्यायः ॥ १ ॥ वैशंपायनउवाच ॥ सएवमुक्तस्तुमुनिर्नारदोवदतांवरः ॥ कथयामासतत्सर्वंयथाशप्तःससूतजः १ ॥ नारदउवाच ॥ एवमेतन्महाबाहो
यथावदसिभारत ॥ नकर्णार्जुनयोःकिंचिदविषह्यंभवेद्रणे २ गुह्यमेतत्तुदेवानांकथयिष्यामितेऽनघ ॥ तन्निबोधमहाबाहोयथावृत्तमिदंपुरा ३ क्षत्रंस्वर्गंकथंगच्छेच्छस्त्र
पूतमितिप्रभो ॥ संघर्षजननस्तस्मात्कन्यागर्भोविनिर्मितः ४ सबालस्तेजसायुक्तःसूतपुत्रत्वमागतः ॥ चकारांगिरसःश्रेष्ठाद्धनुर्वेदंगुरोस्तदा ५ सबलंभीमसेनस्य
फाल्गुनस्यचलाघवं ॥ बुद्धिंचतवराजेंद्रयमयोर्विनयंतदा ६ सख्यंचवासुदेवेनबाल्येगांडीवधन्वनः ॥ प्रजानामनुरागंचचिंतयानोव्यदह्यत ७ ससख्यमकरो
द्बाल्येराज्ञादुर्योधनेनच ॥ युष्माभिर्नित्यसंद्विष्टोदैवाच्चापिस्वभावतः ८ वीर्याधिकमथालक्ष्यधनुर्वेदेधनंजयम् ॥ द्रोणंरहस्युपागम्यकर्णोवचनमब्रवीत् ९ ब्रह्मास्त्रं
वेत्तुमिच्छामिसरहस्यनिवर्तनम् ॥ अर्जुनेनसमंचाहंयुध्येयमितिमेमतिः १० समःशिष्येषुवःस्नेहःपुत्रेचैवतथाध्रुवम् ॥ त्वत्प्रसादान्नमांब्रूयुरकृतास्त्रंविचक्षणाः ११

दीपेप्रथमोऽध्यायः॥१॥सएवमिति उक्तःपृष्टः १ कर्णार्जुनसहायोऽहंजयेयमपिवासवमित्युक्तमनुमोदतेएवमेतदिति२ वाहेकिमर्थंदेवैरनयोर्वैरमुत्पादितमित्याशंक्याह गुह्यमिति ३क्षत्रमिति संघर्ष
जननोवैराग्न्युद्दीपकः कन्यागर्भोदेवैःक्षत्रस्यस्वर्गगमनायनिर्मितइत्यर्थः ४ चकाराऽधीतवान् अंगिरसांश्रेष्ठाद्द्रोणात्५।६।७दैवाच्चापिस्वभावतइति दैवाद्देवानांसंकल्पात्पूर्वोक्तात् स्वभावतः 'वीर्या
धिकोनीचकुलोदुःसंगेनसमेधितः ॥ महाजनैःस्पर्धमानोहंतिराष्ट्रंसराजकम्' इतिश्लोकोक्तात्८।९ब्रह्मास्त्रमिति रहस्यंतत्प्रसादनविधिर्निवर्तनमुपसंहारस्ताभ्यांसहितंसरहस्यनिवर्तनम् १० । ११

११ । ब्रह्मास्त्रमिति त्वंतुब्रह्मक्षत्रेतरत्वान्नविद्यार्हइत्यर्थः १२ । १४ गुरुरेवपितेत्यभिसंधायाहंब्राह्मणोभार्गवोऽस्मीति १५ । १६ । १७ । १८ समुद्रांतेदक्षिणसमुद्रसमीपे १९ होमधेनुंकर्णे
पर्वोक्तदिशावत्सवधपरत्वात्रधेनुवधोज्ञेयः २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ मेव्याहृतमितिशेषः अव्याहृतमनुक्तंतद्वदन्यथेत्यर्थः नेदमव्याहृतमितिपाठःसुगमः केवलंतूष्णींयथा

द्रोणस्तथोक्तःकर्णेनसापेक्षःफाल्गुनंप्रति ॥ दौरात्म्यंचैवकर्णस्यविदित्वातमुवाचह १२ ब्रह्मास्त्रंब्राह्मणोविद्याद्यथावच्चरितव्रतः ॥ क्षत्रियोवातपस्वीयोनान्योवि
द्यात्कथंचन १३ इत्युक्तोंगिरसांश्रेष्ठमामंत्र्यप्रतिपूज्यच ॥ जगामसहसारामंमहेंद्रंपर्वतंप्रति १४ सतुराममुपागम्यशिरसाऽभिप्रणम्यच ॥ ब्राह्मणोभार्गवोऽस्मीति
गौरवेणाभ्यगच्छत १५ रामस्तंप्रतिजग्राहपृष्ट्वागोत्रादिसर्वशः ॥ उष्यतांस्वागतंचेतिप्रीतिमांश्चाभवद्भृशम् १६ तत्रकर्णस्यवसतोमहेंद्रेस्वर्गसन्निभे ॥ गंधर्वै
राक्षसैर्यक्षैर्देवैश्चासीत्समागमः १७ सतत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि ॥ प्रियश्चाभवदत्यर्थंदेवदानवरक्षसाम् १८ सकदाचित्समुद्रांतेविचरन्नाश्रमांतिके ॥ एकः
खड्गधनुष्पाणिःपरिचक्रामसूर्यजः १९ सोऽग्निहोत्रप्रसक्तस्यकस्यचिद्ब्रह्मवादिनः ॥ जघानाज्ञानतःपार्थहोमधेनुंयदृच्छया २० तदज्ञानकृतंमत्वाब्राह्मणाय
न्यवेदयत् ॥ कर्णःप्रसादयंश्चैनमिदमित्यब्रवीद्वचः २१ अबुद्धिपूर्वंभगवन्धेनुरेषाहतातव ॥ मयातत्रप्रसादंचकुरुष्वेतिपुनःपुनः २२ तंसविप्रोऽब्रवीत्क्रुद्धोवाचा
निर्भर्त्सयन्निव ॥ दुराचारवधार्हस्त्वंफलंप्राप्नुहिदुर्मते २३ येनविस्पर्धसेनित्यंयदर्थंघटसेऽनिशम् ॥ युध्यतस्तेनतेपापभूमिश्चक्रंग्रसिष्यति २४ ततश्चक्रेमहीग्रस्ते
मूर्धानंतेविचेतसः ॥ पातयिष्यतिविक्रम्यशत्रुर्गच्छनराधम २५ यथेयंगौर्हतामूढप्रमत्तेनत्वयामम ॥ प्रमत्तस्यतथाऽरातिःशिरस्तेपातयिष्यति २६ शप्तः
प्रसादयामासकर्णस्तंद्विजसत्तमम् ॥ गोभिर्धनैश्वरत्नैश्चसचैनंपुनरब्रवीत् २७ नहिमेऽव्याहृतंकुर्यात्सर्वलोकोऽपिकेवलम् ॥ गच्छवातिष्ठवायद्वाकार्यंतेतत्समाचर
२८ इत्युक्तोब्राह्मणेनाथकर्णोदैन्यादधोमुखः ॥ राममभ्यगमद्भीतस्तदेवमनसास्मरन् २९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनप०कर्णशापोनाम
द्वितीयोऽध्यायः ॥ २ ॥ ॥ नारदउवाच ॥ कर्णस्यबाहुवीर्येणप्रणयेनदमेनच ॥ तुतोषभृगुशार्दूलोगुरुशुश्रूषयातथा १ तस्मैसविधिवत्कृत्स्नंब्रह्मास्त्रंसनि
वर्तनम् ॥ प्रोवाचाखिलमव्यग्रंतपस्वीतत्तपस्विने २ विदितास्त्रस्ततःकर्णोरममाणोश्रमेभृगोः ॥ चकारवैधनुर्वेदेयत्नमद्भुतविक्रमः ३ ततःकदाचिद्रामस्तु
चरन्नाश्रममंतिकात् ॥ कर्णेनसहितोधीमानुपवासेनकर्शितः ४ सुष्वापजामदग्न्यस्तुविश्रंभोत्पन्नसौहृदः ॥ कर्णस्योत्संगआधायशिरःक्लांतमनागुरुः ५ अथ
कृमिःश्लेष्ममेदोमांससशोणितभोजनः ॥ दारुणोदारुणस्पर्शःकर्णस्याभ्याशमागतः ६ सतस्योरुमथासाद्यबिभेदरुधिराशनः ॥ नचैनमशकत्क्षेप्तुंहंतुंवापि
गुरोर्भयात् ७ संदश्यमानस्तुतथाकृमिणातेनभारत ॥ गुरोःप्रबोधनाशंकीतमुपैक्षतसूर्यजः ८

स्यात्तथायत्तेकार्यंतद्वासमाचरेत्यन्वयः २८ । २९॥इतिशांतिपर्वणिरा०नीलकंठीयेभारतभावदीपेद्वितीयोऽध्यायः ॥ २ ॥ कर्णस्येति प्रश्रयेणेतिपाठेऽनुरागेण दमेनेंद्रियजयेन १ कृत्स्नंसरहस्यं
नतुमंत्रमात्रं अखिलमंगप्रत्यंगदेवताराधनसहितं अव्यग्रंयथास्यात्तथा तपस्वीएकाग्रचित्तः २ अश्रमेश्रमवर्जितेआश्रमेइत्यर्थः ३।४विश्रंभोविश्वासः ५।६क्षेप्तुंदूरीकर्तुं मयाभिद्रामंगभयात् ७।८

९ । १० । ११ । १२ सूचीभिरिवतीक्ष्णैरोमभिःसंवृतं सन्निरुद्धांगंत्रासेनसंकुचितांगं नामप्रसिद्धं नामतोऽभिधान्मा १३ असृजिशोणिते १४ विश्वरूपःकामरूपी करालवान्भीषणरूपवान् मेघवा
हनोमेघोपरिस्थः १५ । १६ । १७ । १८ देवयुगेसत्ययुगे १९ । २० । २१ । २२ नकुशलममद्रम् २३ । २४ कामयारवरसेन २५ ब्रह्मक्षत्रयोरंतरेऽन्यत्रजातं तदेवाह सूतंमाविद्धीति
२६ । २७ कथंतर्हिब्राह्मणोभार्गवोस्मीतिमिथ्यावचनंत्वयोक्तमित्यतआह पितागुरुरिति २८ । २९ तस्मादिति हेमूढ तेतववधकालादन्यत्र ब्रह्मास्त्रंनप्रतिभास्यतीतिनकिंतुवधकालएवनप्रति

कर्णस्तुवेदनांधैर्यादसह्यांविनिगृह्यताम् ॥ अकंपयन्नव्यथयन्धारयामासभार्गवम् ९ यदाऽस्यरुधिरेणांगंपरिस्पृष्टंभृगूद्वहः ॥ तदाऽबुद्ध्यततेजस्वीसंत्रस्तश्चेदम
ब्रवीत् १० अहोऽस्म्यशुचितांप्राप्तःकिमिदंक्रियतेत्वया ॥ कथयस्वभयंत्यक्त्वायाथातथ्यमिदंमम ११ तस्यकर्णस्तदाचष्टकृमिणापरिभक्षणम् ॥ ददर्शराम
स्तंचापिकृमिंसूकरसन्निभम् १२ अष्टपादंतीक्ष्णदंष्ट्रंसूचीभिरिवसंवृतम् ॥ रोमभिःसन्निरुद्धांगमलर्कंनामनामतः १३ सदृष्टमात्रोरामेणकृमिःप्राणानवासृ
जत् ॥ तस्मिन्नेवासृजिक्लिन्नस्तदद्भुतमिवाभवत् १४ ततोंऽतरिक्षेददृशेविश्वरूपःकरालवान् ॥ राक्षसोलोहितग्रीवःकृष्णांगोमेघवाहनः १५ सरामंप्रांजलिर्भू
त्वाबभाषेपूर्णमानसः ॥ स्वस्तितेभृगुशार्दूलगमिष्येऽहंयथागतम् १६ मोक्षितोनरकादस्माद्भवतामुनिसत्तम ॥ भद्रंतवास्तुवंदेत्वांप्रियंमेभवताकृतम् १७ तमु
वाचमहाबाहुर्जामदग्न्यःप्रतापवान् ॥ कस्त्वंकस्माच्चनरकंप्रतिपन्नोब्रवीहितत् १८ सोऽब्रवीदहमासंप्राक्दंशोनाममहासुरः ॥ पुरादेवयुगेतातभृगोस्तुल्यवयाइव
१९ सोऽहंभृगोःसुदयितांभार्यामपहरंबलात् ॥ महर्षेरभिशापेनकृमिभूतोऽपतंभुवि २० अब्रवीद्धिसमांक्रुद्धस्तवपूर्वपितामहः ॥ मूत्रश्लेष्माशनःपापनिरयंप्रतिप
त्स्यसे २१ शापस्यांतोभवेद्ब्रह्मन्नित्येवंतमथाब्रुवम् ॥ भविताभार्गवाद्रामादितिमामब्रवीद्भृगुः २२ सोऽहमेनांगतिंप्राप्तोयथानकुशलंतथा ॥ त्वयासाधोसमागम्यवि
मुक्तःपापयोनितः २३ एवमुक्त्वानमस्कृत्यययौरामंमहासुरः ॥ रामःकर्णंचसक्रोधमिदंवचनमब्रवीत् २४ अतिदुःखमिदंमूढनजातुब्राह्मणःसहेत् ॥ क्षत्रियस्यैवते
धैर्यंकामयासत्यमुच्यताम् २५ तमुवाचततःकर्णःशापाद्भीतःप्रसादयन् ॥ ब्रह्मक्षत्रांतरेजातंसूतंमांविद्धिभार्गव २६ राधेयःकर्णइतिमांप्रवदंतिजनाभुवि ॥ प्रसा
दंकुरुमेब्रह्मन्नस्त्रलुब्धस्यभार्गव २७ पितागुरुर्नसंदेहोवेदविद्याप्रदःप्रभुः ॥ अतोभार्गवइत्युक्तंमयागोत्रंतवांतिके २८ तमुवाचभृगुश्रेष्ठःसरोषःप्रहसन्निव ॥ भूमौ
निपतितंदीनंवेपमानंकृतांजलिं२९ यस्मान्मिथ्योपचरितोह्यस्त्रलोभादिहत्वया ॥ तस्मादेतन्नतेमूढब्रह्मास्त्रंप्रतिभास्यति ३० अन्यत्रवधकालात्तेसदृशेनसमीयुषः॥
अब्राह्मणेनहिब्रह्मध्रुवंतिष्ठेत्कदाचन ३१ गच्छेदानींनतेस्थानमनृतस्येहविद्यते ॥ नत्वयासदृशोयुद्धेभविताक्षत्रियोभुवि ३२ एवमुक्तःसरामेणन्यायेनोपजगाम
ह ॥ दुर्योधनमुपागम्यकृतास्त्रोऽस्मीतिचाब्रवीत् ३३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिकर्णास्त्रप्राप्तिर्नामतृतीयोऽध्यायः ॥ ३ ॥

भास्यति कालांतरेतुप्रतिभास्यत्येवेत्यर्थःइत्युत्तरेणसंबंधः ३० सदृशेऽर्जुनादौशूरेतेपुरतःस्थिते समीयुषोयुध्यमानस्य । 'समित्स्याजिसमिद्युधे'इति संपूर्वस्यइणोयुद्धार्थत्वदर्शनात् । ध्रुवंमरणा
वधिनतिष्ठेद्ब्रह्मब्रह्मास्त्रम् ३१ । ३२ न्यायेनाभिवंदनादिपूर्वकमुपजगाम इष्टदेशमितिशेषः ३३ ॥इति शांतिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे तृतीयोऽध्यायः ॥३॥

कर्णस्तुसमवाप्यैवमित्यध्यायःस्पष्टार्थः १ विषयेदेशे २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ वर्षवरःषंढः १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ व्यपेयुर्व्यपगताः २० । २१

नारदउवाच ॥ कर्णस्तुसमवाप्यैवमस्त्रंभार्गवनंदनात् ॥ दुर्योधनेनसहितोमुमुदेभरतर्षभ १ ततःकदाचिद्राजानःसमाजग्मुःस्वयंवरे ॥ कलिंगविषयेराजन्राज्ञ श्चित्रांगदस्यच २ श्रीमद्राजपुरंनामनगरंतत्रभारत ॥ राजानःशतशस्तत्रकन्यार्थसमुपागमन् ३ श्रुत्वादुर्योधनस्तत्रसमेतान्सर्वपार्थिवान् ॥ रथेनकांचनांगेन कर्णेनसहितोययौ ४ ततःस्वयंवरेतस्मिन्संप्रवृत्तेमहोत्सवे ॥ समाजग्मुर्नृपतयःकन्यार्थेनृपसत्तम ५ शिशुपालोजरासंधोभीष्मकोवक्रएवच ॥ कपोतरोमानील श्वरुक्मीचदृढविक्रमः ६ सृगालश्चमहाराजःस्त्रीराज्याधिपतिश्चयः ॥ अशोकःशतधन्वाचभोजोवीरश्चनामतः ७ एतेचान्येचबहवोदक्षिणांदिशमाश्रिताः ॥ म्लेच्छाचार्याश्चराजानःप्राच्योदीच्यास्तथैवच ८ कांचनांगदिनःसर्वेशुद्धजांबूनदप्रभाः ॥ सर्वेभास्वरदेहाश्चव्याघ्राइवबलोत्कटाः ९ ततःसमुपविष्टेषुतेषुराजसु भारत ॥ विवेशरंगंसाकन्याधात्रीवर्षवरान्विता १० ततःसंश्राव्यमाणेषुराज्ञांनामसुभारत ॥ अत्यक्रामद्धार्तराष्ट्रंसाकन्यावरवर्णिनी ११ दुर्योधनस्तुकौरव्योना मर्षयतलंघनम् ॥ प्रत्यषेधच्चतांकन्यामसत्कृत्यनराधिपान् १२ सवीर्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः ॥ रथमारोप्यतांकन्यामाजहारनराधिपः १३ तमन्व गाद्रथीखड्गीबद्धगोधांगुलित्रवान् ॥ कर्णःशस्त्रभृतांश्रेष्ठःपृष्ठतःपुरुषर्षभ १४ ततोविमर्दःसुमहान्राज्ञामासीद्युयुत्सताम् ॥ सन्नह्यतांतनुत्राणिरथान्योजयताम पि १५ तेऽभ्यधावंतसंक्रुद्धाःकर्णदुर्योधनावुभौ ॥ शरवर्षाणिमुंचंतोमेघाःपर्वतयोरिव १६ कर्णस्तेषामापततामेकैकेनशरेणह ॥ धनूंषिचशरव्रातान्पातयामा सभूतले १७ ततोविधनुषःकांश्चित्कांश्चिदुद्यतकार्मुकान् ॥ कांश्चिच्चोद्वहतोबाणान्रथशक्तिगदास्तथा १८ लाघवाद्व्याकुलीकृत्यकर्णःप्रहरतांवरः ॥ हतसूतांश्च भूयिष्ठानवजिग्येनराधिपान् १९ तेस्वयंवाहयंतोऽश्वान्पाहिपाहीतिवादिनः ॥ व्यपेयुस्तेरणंहित्वाराजानोभग्नमानसाः २० दुर्योधनस्तुकर्णेनपाल्यमानोऽभ्य यात्तदा ॥ हृष्टःकन्यामुपादायनगरंनागसाह्वयम् २१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिरा० दुर्योधनस्यस्वयंवरेकन्याहरणंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ४ ॥

॥ नारदउवाच ॥ आविष्कृतबलंकर्णंश्रुत्वाराजासमागधः ॥ आह्वयद्द्वैरथेनाजौजरासंधोमहीपतिः १ तयोःसमभवद्युद्धंदिव्यास्त्रविदुषोर्द्वयोः ॥ युधिनानाप्रहरणै रन्योन्यमभिवर्षतोः २ क्षीणबाणौविधनुषौभग्नखड्गौमहींगतौ ॥ बाहुभिःसमसज्जेतामुभावपिबलान्वितौ ३ बाहुकंटकयुद्धेनतस्यकर्णोऽथयुध्यतः ॥ बिभेदसं धिंदेहस्यजरयाश्लेषितस्यहि ४ सविकारंशरीरस्यदृष्ट्वानृपतिरात्मनः ॥ प्रीतोऽस्मीत्यब्रवीत्कर्णंवैरमुत्सृज्यदूरतः ५ प्रीत्याददौसकर्णायमालिनींनगरीमथ ॥ अंगेषुनरशार्दूलसराजाऽऽसीत्सपत्नजित् ६

॥ इतिशांतिप० रा० नीलकंठीयेभारतभावदीपेचतुर्थोऽध्यायः ॥ ४ ॥ आविष्कृतेति १ । २ । ३ बाहुकंटकयुद्धेनबाहुकंटकंकेतकपत्रंतद्वद्यत्रबलिनादुर्बलस्यशरीरंपाट्यतेतद्बाहुकंटकं नामयुद्धं यथोक्तं । 'एकांजंघांपदाऽऽक्रम्यपरामुद्यम्यपाट्यते ॥ केतकीपत्रवच्छत्रुर्युद्धंतद्बाहुकंटकम्'इति जरासंधस्यसंबंधीयोदेहस्तस्यसंधिंबिभेद ४ विकारंपातनरूपम् ५ । ६ ॥ ३ ॥

७ । ८ । ९ । १० । ११ रथस्यार्धानुकीर्तनाच्छल्यात्तेजोवधादितिसंबंधः १२ । १३ । १४ । १५ इतिशांति० रा०नी०भारतभावदीपे पंचमोऽध्यायः ॥ ५ ॥ ७ ॥ एतावदुक्त्वेति दध्यौ भ्रातृवधजंदोषंचिंतितवान् १ पर्यश्रुनयनंपरितोऽश्रुव्याप्तनयनं २ मधुराआभाषाभाषणंयस्याःसातथा ३ एनंकर्णं ४ यातितःप्रवर्तितस्तवभ्रातृत्वं भ्राऽयंभ्रातुःकर्मकमिष्टानांपरिपालनंज्ञापयितुं

पालयामासचंपांचकर्णःपरबलार्दनः ॥ दुर्योधनस्यानुमतेतवापिविदितंतथा ७ एवंशस्त्रप्रतापेनप्रथितःसोऽभवत्क्षितौ ॥ त्वद्धितार्थंसुरेंद्रेणभिक्षितोवर्मकुं डले ८ सदिव्येसहजेप्रादात्कुंडलेपरमार्चिते ॥ सहजंकवचंचापिमोहितोदेवमायया ९ विमुक्तःकुंडलाभ्यांचसहजेनचवर्मणा ॥ निहतोविजयेनाजौवासुदेव स्यपश्यतः १० ब्राह्मणस्याभिशापेनरामस्यचमहात्मनः ॥ कुंत्याश्चवरदानेनमाययाचशतक्रतोः ११ भीष्मावमानात्संख्यायांरथस्यार्धानुकीर्तनात् ॥ शल्यात्तेजोवधाच्चापिवासुदेवनयेनच १२ रुद्रस्यदेवराजस्ययमस्यवरुणस्यच ॥ कुबेरद्रोणयोश्चैवकृपस्यचमहात्मनः १३ अस्त्राणिदिव्यान्यादाययुधिगां डीवधन्वना ॥ हतोवैकर्तनःकर्णोदिवाकरसमद्युतिः १४ एवंशप्तस्तवभ्राताबहुभिश्चापिवंचितः ॥ नशोच्यःपुरुषव्याघ्रयुद्धेननिधनंगतः १५ ॥ इतिश्रीम हाभारतेशांतिप०राज०कर्णवीर्यकथनंनामपंचमोऽध्यायः ॥ ५ ॥ ॥ वैशंपायनउवाच ॥ एतावदुक्त्वादेवर्षिर्विरराससनारदः ॥ युधिष्ठिरस्तुराजर्षिर्दध्यौ शोकपरिप्लुतः १ तंदीनमनसंवीरंशोकोपहतमातुरम् ॥ निःश्वसंतंयथानागंपर्यश्रुनयनंतथा २ कुंतीशोकपरीतांगीदुःखोपहतचेतना ॥ अब्रवीन्मधुराभा षाकालेवचनमर्थवत् ३ युधिष्ठिरमहाबाहोनैनंशोचितुमर्हसि ॥ जहिशोकंमहाप्राज्ञशृणुचेदंवचोमम ४ यातितःसमयापूर्वंभ्रात्र्यंज्ञापयितुंतव ॥ भास्करेणचदे वेनपित्राधर्मभृतांवरः ५ यद्वाच्यंहितकामेनसुहृदाहितमिच्छता ॥ तथादिवाकरेणोक्तःस्वप्नांतेममचाग्रतः ६ नचैनमशकद्भानुरहंवास्नेहकारणैः ॥ पुराप्रत्य नुनेतुंवानेतुंवाऽप्येकतांत्वया ७ ततःकालपरीतःसवैरस्योद्धरणेरतः ॥ प्रतीपकारीयुष्माकमितिचोपेक्षितोमया ८ इत्युक्तोधर्मराजस्तुमात्राबाष्पाकुले क्षणः ॥ उवाचवाक्यंधर्मात्माशोकव्याकुलितेंद्रियः ९ भवत्यागूढमंत्रत्वात्पीडितोऽस्मीत्युवाचताम् १० शशापचमहातेजाःसर्वलोकेषुयोषितः ॥ नगुह्यंधा रयिष्यंतीत्येवंदुःखसमन्वितः ११ सराजापुत्रपौत्राणांसंबंधिसुहृदांतदा ॥ स्मरन्नुद्विग्नहृदयोबभूवोद्विग्नचेतनः १२ ततःशोकपरीतात्मासधूमइवपावकः ॥ निर्वेदमगमद्धीमानराजासंतापपीडितः १३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिस्त्रीशापेषष्ठोऽध्यायः ॥ ६ ॥ ॥ वैशंपायनउवाच ॥ युधिष्ठिरस्तुधर्मात्माशोकव्याकुलचेतनः ॥ शुशोचदुःखसंततःस्मृत्वाकर्णंमहारथम् १

त्वयासौभ्रात्रंयुधिष्ठिरादिभ्यःप्रदर्शनीयमित्यभ्यर्थितइति ५ । ६ प्रत्यनुनेतुंक्षमयितुं ७ कालपरीतोमृत्युग्रस्तः उद्धरणेशत्रूणांनिःशेषनाशेनोन्मूलने ८ । ९ । १० । ११ सराजेति कर्माणि षष्ठी उद्विग्नहृदयउद्विग्नचेतनोबभूव । ध्यायतीवलेलायतीवेतिश्रुतेः बुद्धौध्यायंत्यांचेतनोऽपिध्यायतीवेत्यादिरर्थः १२ निर्वेदंराज्यादौवैराग्यं १३ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशास नपर्वणिनीलकंठीयेभारतभावदीपेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ युधिष्ठिरइति १

दुःखंदेहेंद्रियादीनांतापः शोकस्तस्कृतंवैकल्यं ताभ्यामाविष्टोव्याप्तः कर्शितःकृशीकृतः १ यद्यदिभैक्ष्यमाचीर्णस्यात्तर्हिज्ञातिवधाज्जाताद्दुर्गतिर्नप्राप्तास्यादित्यर्थः । लिङ्गनिमित्तेलृङ्क्रियातिपत्तौ ३ यतोवयंवृत्तार्थाःसंक्षिप्तपुरुषार्थाःज्ञातिवधेनहतभाग्याःस्म ततोहेतोर्नोऽस्माकममित्राःसमृद्धार्थाइत्यर्थः । ज्ञातिवधोऽप्यस्माकंधर्मवधएवेत्याशंक्याह आत्मानमिति धर्मफलंपशुःस्वर्गोकिमाप्नुमः उभयमपिनास्तीत्यर्थः ४ सत्यविशाखदृष्टेफलेवीभत्सत्वात्क्षत्रियएवायंधर्मइत्याह धिगिति बलंसहायादि पौरुषंपराक्रमः अमर्षःक्रोधः येनआचारादिना आपदंशोकं ५ तर्हिकोधर्मःश्रेष्ठःइत्यतआह साध्विति क्षमादिकमेवश्रेष्ठमित्यर्थः ६ । ७ ननुयुद्धेजयश्चेद्राज्यलाभो मृत्युश्चेत्स्वर्गलाभइत्युभयलोकहितंयुद्धमित्याशंक्यार्थंनिरस्यति त्रैलोक्यस्येति ८ । ९

आविष्टोदुःखशोकाभ्यांनिःश्वसंश्चपुनःपुनः ॥ दृष्ट्वाऽर्जुनमुवाचेदंवचनंशोककर्शितः २ ॥ युधिष्ठिरउवाच ॥ यद्भैक्ष्यमाचरिष्यामवृष्ण्यंधकपुरेवयम् ॥ ज्ञातीन्निष्पुरुषान्कृत्वानेमांप्राप्स्यामिदुर्गतिम् ३ अमित्रानःसमृद्धार्थाःवृत्तार्थाःकुरवःकिल ॥ आत्मानमात्मनाहत्वाकिंधर्मफलमाप्नुमः ४ धिगस्तुक्षात्रमाचारंधिगस्तुबलपौरुषम् ॥ धिगस्त्वमर्षयेनेमामापदंगमितावयम् ५ साधुक्षमादमःशौचंवैराग्यंचाप्यमत्सरः ॥ अहिंसासत्यवचनंनित्यानिवनचारिणाम् ६ वयंतुलोभान्मोहाच्चदंभंमानंचसंश्रिताः ॥ इमामवस्थांसंप्राप्ताराज्यलाभबुभुत्सया ७ त्रैलोक्यस्यापिराज्येननास्मान्कश्चित्प्रहर्षयेत् ॥ बांधवान्निहतान्दृष्ट्वापृथिव्यांविजयैषिणः ८ तेवयंपृथिवीहेतोरवध्यान्पृथिवीश्वरान् ॥ संपरित्यज्यजीवामोहीनार्थाहतबांधवाः ९ आमिषेगृध्यमानानामशुभंवैशुनामिव ॥ आमिषंचैवनोहीष्टमामिषस्यविवर्जनम् १० नपृथिव्यासकलयानसुवर्णस्यराशिभिः ॥ नगवाश्वेनसर्वेणतेत्याज्यायइमेहताः ११ काममन्युपरीतास्तेक्रोधहर्षसमन्विताः ॥ मृत्युयानंसमारुह्यगतावैवस्वतक्षयम् १२ बहुकल्याणसंयुक्तानिच्छंतिपितरःसुतान् ॥ तपसाब्रह्मचर्येणसत्येनचतितिक्षया १३ उपवासैस्तथेज्याभिर्व्रतकौतुकमंगलैः ॥ लभंतेमातरोगर्भान्मासान्दशचबिभ्रति १४ यदिस्वस्तिप्रजायंतेजाताजीवंतिवायदि ॥ संभाविताजातबलास्तेदद्युर्यदिनःसुखम् १५ इहचामुत्रचैवेतिकृपणाःफलहेतवः ॥ तासामयंसमुद्योगोनिर्वृत्तःकेवलोऽफलः १६ यदासांनिहताःपुत्रायुवानोमृष्टकुंडलाः १७ अभुक्त्वापार्थिवान्भोगानृणान्यनपहायच ॥ पितृभ्योदेवताभ्यश्चगतावैवस्वतक्षयम् १८ यदैषामंबपितरौजातकामावुभावपि ॥ संजातधनरत्नेषुतदैवनिहतान्नृपाः १९

हीनार्थत्वमेवाह आमिषमिति आमिषेराज्यनिमित्ते अशुभंज्ञातिद्रोहाख्यं शुनामिवेतरेषांमवतिनोह्यस्माकंत्वामिषंचाऽऽमिषस्यविवर्जनंचेतिद्वयमपीष्टं १० एतदेवविभजते नपृथिव्येति । पृथिव्यादेरामिषस्यवर्जनमिष्टंबंधुरूपंत्वामिषमिष्टमेव बंधूनामर्थेसर्वंत्याज्यमित्यर्थः ११ कामेति मृत्युयानंमृत्युमार्गं युद्धेमृतानांस्वर्गोऽपिनास्तिकिंतुकामाद्याक्रांतत्वान्नरकएवास्तीत्यर्थः १२ एवंहिनृणांपापहतानांनरकंचोपपाद्यहतसंबंधिनांशोकंचव्युत्पादयति बहुकल्याणेत्यादिना १३ व्रतानिगौरीव्रतादीनि कौतुकानिदुर्गोत्सवादीनि मंगलानिलक्ष्मीनारायणशिलादीनितैः १४ । १५ । १६ । १७ अनपहायअपरिहृत्य अनवदायेतिपाठेअपरिशोध्य पितृभ्यइतिषष्ठ्यर्थेचतुर्थी १८ यदैषामिति अर्जुनेनसहवदन्नपिसन्निहितांमातरमुद्दिश्यकार्थंसंवादायसंबोधयति हेअंबेति पितरौमातापितरौ गांधारीधृतराष्ट्रौ यदैवजातकामौतदैवतेनृपादुर्योधनप्रभृतयोहताः १९



संयुक्ताइति कामोऽर्थस्याभिलाषः । मन्युस्तदलाभेदैन्यं । क्रोधःकामप्रतिबंधेसत्यत्युत्तप्तता । हर्षोलाभेसतिअत्युत्फुल्लता तैरसमंजसाः । इत्यपाठेऽसमंजसइतिसकारांतःशब्दः । विषमायेपुरुषास्तेजयफलंभूमेःस्वर्गस्यवाजयेनयत्फलंतन्नभोक्तारोनभोक्ष्यंति । जातुकदाचिज्जीवनेमरणेवाकर्हिचित्क्वचिद्देशेइहपरत्रवा २० नत्वयेहतास्तेस्वर्गंभोक्ष्यंत्येवेत्याशंक्याह पंचालानामिति येहतास्तेहताएवनतुस्वर्गंगताः कामाद्युपेतत्वादित्युक्तहेतोः । एवंनचेदपहंतास्वेनैवकर्मणानिमित्तेनस्वर्गंगतास्तान्पश्येन्नचपश्यतीतिलोकायतमतमाश्रित्योक्तम् ११ तस्सर्वविनाशकारणत्वं प्रतिपत्स्यतिपर्यवस्यति वयंराज्यलोभाद्विनाशेअवांतरकारणं मुख्यंकारणंत्वस्मद्राज्यापहाराद्धार्तराष्ट्राएवेतिभावः २२ तदेवाह सदैवेत्यादिना निकृतिर्वंचनंतन्निष्ठैवप्रज्ञायस्येतिनिकृतिप्रज्ञः मायाकपटद्यूतादिनोपजीवनंयस्यसतथा मिथ्याविनीतश्चद्दृवराष्ट्रएवात्रग्राह्यः सर्वमूलत्वात् २३ युद्धयतांत्वेकद्वयनाशमुपपाद्योपसंहरत्यर्थेन नसकामाइति २४ श्रुतवतांपंडितानां रत्नानीत्यादौमुक्तानी

संयुक्ताःकाममन्युभ्यांक्रोधहर्षासमंजसाः ॥ नतेजयफलंकिंचिद्भोक्तारोजातुकर्हिचित् २० पंचालानांकुरूणांचहताएवहियेहताः ॥ नचेत्सर्वानयंलोकःपश्येत्स्वेनैवकर्मणा २१ वयमेवास्यलोकस्यविनाशेकारणंस्मृताः ॥ धृतराष्ट्रस्यपुत्रेषुतत्सर्वंप्रतिपत्स्यति २२ सदैवनिकृतिप्रज्ञोद्वेष्टामायोपजीवनः ॥ मिथ्याविनीतःसततमस्मास्वनपकारिषु २३ नसकामावयंतेचनचास्माभिर्नतेर्जितम् ॥ नबैर्भुक्तेयमवनिर्नार्योगीतवादितम् २४ नामात्यसुहृदांवाक्यंनचश्रुतवतांश्रुतम् ॥ नरत्नानिपरार्घ्यानिनभूर्नद्रविणागमः २५ अस्मद्द्वेषेणसंतप्तःसुखंनस्मेहविंदति ॥ ऋद्धिमस्मासुतांदृष्ट्वाविवर्णोहरिणःकृशः २६ धृतराष्ट्रश्चनृपतिःसौबलेननिवेदितः ॥ तंपितापुत्रगृद्धित्वादनुमेनेऽनयेस्थितः २७ अनपेक्ष्यैवपितरंगांगेयंविदुरंतथा ॥ असंशयंक्षयंराजायथैवाहंतथागतः २८ अनियम्याशुचिंलुब्धंपुत्रंकामवशानुगम् ॥ यशसःपतितोदीप्ताद्घातयित्वासहोदरान् २९ इमौहिवृद्धौशोकाग्नौप्रक्षिप्यससुयोधनः ॥ अस्मत्प्रद्वेषसंयुक्तःपापबुद्धिःसदैवह ३० कोहिबंधुःकुलीनःसंस्तथाब्रूयात्सुहृज्जने ॥ यथाऽसाववदद्वाक्यंयुयुत्सुःकृष्णसंनिधौ ३१ आत्मनोहिवयंदोषाद्विनष्टाःशाश्वतीःसमाः ॥ प्रदहंतोदिशःसर्वाभास्वराइवतेजसा ३२ सोऽस्माकंवैरपुरुषोदुर्मतिःप्रग्रहंगतः ॥ दुर्योधनकृतेह्येतत्कुलंनोविनिपातितम् ३३ अवध्यानांवधंकृत्वालोकेप्राप्ताःस्मवाच्यताम् ॥ कुलस्यास्यांतकरणंदुर्मतिंपापपूरुषम् ३४ राजाराष्ट्रेश्वरंकृत्वाधृतराष्ट्रोऽद्यशोचति ॥ हताःशूराःकृतंपापंविषयःस्वोविनाशितः ३५ हत्वानोविगतोमन्युःशोकोमांरुंधयत्ययम् ॥ धनंजयकृतंपापंकल्याणेनोपहन्यते ३६ ख्यापनेनानुतापेनदानेनतपसाऽपिवा ॥ निवृत्त्यातीर्थगमनाच्छ्रुतिस्मृतिजपेनवा ३७ त्यागवांश्चपुनःपापंनालंकर्तुमितिश्रुतिः ॥ त्यागवान्जन्ममरणेनाप्नोतीतिश्रुतिर्यदा ३८

स्यादिर्यथालिंगंशेषः २५ तत्रहेतुरस्मादिति हरिणःपांडुरः २६ । २७ तथागतोबुद्धमुनिः क्षणिकबुद्धिरितियावत् यथाहमनवस्थितबुद्धिस्तथाधृतराष्ट्रोऽपीत्यर्थः २८ एतत्फलमाह अनियम्येति २९ प्रक्षिप्यगतइतिशेषः ३० युयुत्सुर्योद्धुकामःवाक्यमस्मद्द्वेषेणपांडवानद्यहत्येवंरूपम् ३१ तदेवार्थतआह आत्मनइवि दुर्योधनेऽप्युपचारादात्मपदप्रयोगः आत्मनोदुर्योधनस्य ३२ प्रग्रहंदृढबंधनं गतःप्राप्तः नोऽस्माभिः ३३ अवध्यानामवध्यकल्पानांभीष्मादीनांगुरुत्वाद्द्रावधानर्हाणाम् ३४ विषयआमिषम् ३५ नोऽस्माकंसर्वेषांमन्युःक्रोधस्तान्हत्वाविगतः मांत्वेकंशोकोरुंधयतिरुणद्धि रोधयतीतिवक्तव्येरुंधयतीतिप्रयोगोवक्तुर्वैक्लव्यंसूचयति कल्याणेनोपकारेण ३६ निवृत्त्यात्यागेन ३७ एतेषुत्यागमेवप्रशंसति त्यागवानिति । श्रुतिः'त्यागेनैकेअमृतत्वमानशुः'इति यदायदाह ३८

तस्मात्प्राप्तवर्त्मा लब्धयोगमार्गः कृतमतिःश्रवणमननादिनाऽहंब्रह्मास्मीतिनिश्चितबुद्धिः ब्रह्मअखंडानंदंसंपद्यतेऐक्येनप्राप्नोति सइति एवंत्यागफलंज्ञानमुक्त्वांनिर्द्वंद्वःपरिग्रहशून्यः मुनिर्ध्याननिष्ठःज्ञानेनब्रह्मात्मैक्यविषयेणसमन्वितोभवितुमिच्छुः ३९ समन्वितःसन्वावनंगमिष्यामि कृत्स्नोधर्मोयोगेनात्मदर्शनं यदाहयाज्ञवल्क्यः। 'इज्याऽऽचारदमोऽहिंसादानस्वाध्यायकर्मणां ॥ अयंतुपरमोधर्मोयद्योगेनात्मदर्शनम्'इति । कृत्स्नतमोधर्मस्तुपार्थतिकंजीवन्मुक्तिसुखं ४० परिग्रहवताग्रहस्थेननहिप्राप्तुंशक्यं एतेनयाज्ञवल्क्यादिवत्स्वस्यापिविद्वत्संन्यासेऽधिकारोदर्शितः परिग्रहसत्त्वेदोषमाहमयेति परिग्रहात्पापकरणंततश्चजन्मादिहेतोर्मोहस्यपुनःप्राप्तिरित्यर्थः अत्रश्रुतिः । 'तस्यैवमयंविदुषोऽमन्वानस्य'तदेवब्रह्मभयहेतुर्विदुषोप्यमन्वानस्यध्यानशून्यस्येतिश्रुत्यर्थः फलितमाहसइति ४१ । ४२ गमिष्यामिनिर्विक्षेपेणध्यानसिद्ध्यर्थं कचिदितिअज्ञातदेशत्वंदर्शितं ४३ । ४४ ॥ इतिशांतिप०रा०नी०भारतभावदीपे सप्तमोऽध्यायः ॥ ७ ॥ अथार्जुनः दृढौ

प्राप्तवर्त्मांकृतमतिर्ब्रह्मसंपद्यतेतदा ॥ सधनंजयनिर्द्वंद्वोमुनिर्ज्ञानसमन्वितः ३९ वनमामंत्र्यवःसर्वान्गमिष्यामिपरंतप ॥ नहिकृत्स्नतमोधर्मःशक्यःप्राप्तुमिति श्रुतिः ४० परिग्रहवतातन्मेप्रत्यक्षमरिसूदन ॥ मयानिसृष्टंपापंहिपरिग्रहमभीप्सता ४१ जन्मक्षयनिमित्तंचप्राप्तुंशक्यामितिश्रुतिः ॥ सपरिग्रहमुत्सृज्यकृत्स्नं राज्यंसुखानिच ४२ गमिष्यामिविनिर्मुक्तोविशोकोनिर्ममःक्वचित् ॥ प्रशाधित्वमिमामुर्वीक्षेमांनिहतकंटकाम् ४३ नममार्थोऽस्तिराज्येनभोगैर्वाकुरुनंदन ॥ एतावदुक्त्वावचनंकुरुराजोयुधिष्ठिरः ॥ उपारमत्ततःपार्थःकनीयानभ्यभाषत ४४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनप० युधिष्ठिरपरिदेवनंनामसप्तमोध्यायः ॥ ७ ॥ ॥ ॥ वैशंपायनउवाच ॥ अथार्जुनउवाचेदमधिक्षिप्तइवाक्षमी ॥ अभिनीततरंवाक्यंदृढवादपराक्रमः १ दर्शयन्नैंद्रिरात्मानमुग्रमुग्रपराक्रमः ॥ स्मयमानोमहातेजाःसृक्किणीपरिसंलिहन् २ ॥ अर्जुनउवाच ॥ अहोदुःखमहोकृच्छ्रमहोवैक्लव्यमुत्तमम् ॥ यत्कृत्वाऽमानुषंकर्मत्यजेथाःश्रियमुत्तमाम् ३ शत्रून्हत्वामहींलब्ध्वास्वधर्मेणोपपादिताम् ॥ एवंविधंकथंसर्वंत्यजेथाबुद्धिलाघवात् ४ क्लीबस्यहिकुतोराज्यंदीर्घसूत्रस्यवापुनः ॥ किमर्थंचमहीपालानवधीःक्रोधमूर्छितः ५ योह्याजिजीविषेद्भैक्ष्यंकर्मणानैवकस्यचित् ॥ समारंभान्बुभूषेतहतस्वस्तिरकिंचनः ॥ सर्वलोकेषुविख्यातोनपुत्रपशुसंहितः ६ कापालींनृपपापिष्ठांवृत्तिमासाद्यजीवतः ॥ संत्यज्यराज्यमृद्धंतेलोकोऽयंकिंवदिष्यति ७ सर्वारंभान्समुत्सृज्यहतस्वस्तिरकिंचनः ॥ कस्मादाशंससेभैक्ष्यंकर्तुंप्राकृतवत्प्रभो ८

युक्तिशक्त्युपेतौवादपराक्रमौयुक्तिविक्रमौयस्यसतथा १ । २ अमानुषमितिच्छेदः ३ दुःखंस्वजनवधात् कृच्छ्रंपरवीरजयात् वैक्लव्यंमार्दवं धर्मलब्धस्यस्यागादित्याह शत्रूनिति शत्रून्शातयितॄन्परान्हत्वाप्रविनाश्यशत्रून्शातयितव्यान्स्वीयान्हत्वाघातयित्वेतिचद्वयोरेकेनवाक्येनसंग्रहः ४ क्लीबस्यस्वीयवधेकातरस्य दीर्घसूत्रस्यपरवधेऽलसस्य एवंचेन्महीपालानुभयपक्षीयान्किमर्थमवधीरतोऽपिक्लीबोसीत्यर्थः ५ एतदेवस्पष्टयति योहीति सार्धश्लोकोवाक्यं हिप्रसिद्धं यःपुमान्हतस्वस्तिर्नष्टकल्याणः अकिंचनोदरिद्रः अतएवक्रमात्सर्वलोकेषुनविख्यातः पुत्रपशुसंहितःपुत्रादिभिराश्लिष्टश्चनभवति सभैक्ष्यंआजिजीविषेदुपजीवितुमिच्छेत् सकर्मणापौरुषेणकस्यचिदपिपरस्य समारभ्यंतइतिसमारंभाअर्थास्तान्नैवबुभूषेतनैवप्राप्तुमिच्छेत् त्वंतुप्राप्तकल्याणःसंपन्नःख्यातःपुत्राद्याश्लिष्टश्चपौरुषेणार्थाँल्लब्ध्वाभैक्ष्येणजीवितुमिच्छसीतिविपर्यस्तबुद्धिरसीतिभावः ६ कापालींभिक्षापात्रवतींमिमांवृत्तिंजीविकामासाद्यराज्यंसंत्यज्यजीवतस्ते इतिसंबंधः ७ सर्वारंभान्सर्वार्थान्धर्मादीन् प्राकृतवन्मूढवत् ८

९ धर्महानिंच्युत्पादयाति यदीति अस्माकंराज्येऽनधिकारात् अधिकारिणस्तवैवधर्मलोपजंकिल्बिषंभवतीत्यर्थः १० अर्थस्तुधर्मादीनांचतुर्णामपिमूलमितिसर्वथासनत्याज्यइत्याह आकिंचन्यमित्यादिना 'आकिंचन्यंमुनीनांचराज्यादप्यधिकंमतम्' इतियद्वाक्यंतदुद्दिश्यनहुषोराजा अधनतामिहधिगस्त्वित्यब्रवीत् । अधनेधनाभावेनिमित्तेसत्यगस्त्यशापात्सर्पीभावदशायां नृशंसंनिर्दयंभीमसेनादिमनुष्यग्रासरूपंकर्मकृत्वादारिद्र्यंपापहेतुत्वान्निंदितवानित्यर्थः ११ एतदपिऋषीणामेवोचितं नराज्ञामित्याह अश्वस्तनमिति। 'वयमेवास्यलोकस्यविनाशेकारणंस्मृताः' इतियदुक्तंतत्राह यंत्विमामित्यादि १२ वयंक्षत्रियाःकस्यभ्रातुःपितुर्वाअपराधंक्षमेमहिनकस्यापीत्यर्थः १३ क्षमायांदोषमाह अभिशस्तामिति अभिशस्तवदित्यर्थः शंसितुंप्रशंसितुं १४ । १५ । १६

अस्मिन्राजकुलेजातोजित्वाकृत्स्नांवसुंधराम् ॥ धर्मार्थावखिलौहित्वावनंमौढ्यात्प्रतिष्ठसे ९ यदीमानिहवींपीहविमथिष्यंत्यसाधवः ॥ भवताविप्रहीणानिप्राप्तंत्वामेवकिल्बिषम् १० आकिंचन्यंमुनीनांचइतिवैनहुषोब्रवीत् ॥ कृत्वानृशंसंह्यधनेधिगस्त्वधनतामिह ११ अश्वस्तनमृषीणांहिविद्यतेवेदतद्भवान् ॥ यंत्विमंधर्ममित्याहुर्धनादेषप्रवर्तते १२ धर्मंसंहरतेतस्यधनंहरतियस्यसः ॥ ह्रियमाणेधनेराजन्वयंकस्यक्षमेमहि १३ अभिशस्तंप्रपश्यंतिदरिद्रंपार्श्वतःस्थितम् ॥ दरिद्रंपातकंलोकेनतच्छंसितुमर्हति १४ पतितःशोच्यतेराजन्निर्धनश्चापिशोच्यते ॥ विशेषंनाधिगच्छामिपतितस्याधनस्यच १५ अर्थेभ्योहिविवृद्धेभ्यःसंभृतेभ्यस्ततस्ततः ॥ क्रियाःसर्वाःप्रवर्तंतेपर्वतेभ्यइवापगाः १६ अर्थाद्धर्मश्चकामश्चस्वर्गश्चैवनराधिप ॥ प्राणयात्राऽपिलोकस्यविनाह्यर्थेनसिद्ध्यति १७ अर्थेनहिविहीनस्यपुरुषस्याल्पमेधसः ॥ विच्छिद्यंतेक्रियाःसर्वाग्रीष्मेकुसरितोयथा १८ यस्यार्थास्तस्यमित्राणियस्यार्थास्तस्यबांधवाः ॥ यस्यार्थाःसपुमाँल्लोकेयस्यार्थाःसचपंडितः १९ अधनेनार्थकामेननार्थःशक्योविधित्सितुम् ॥ अर्थैरर्थानिबध्यंतेगजैरिवमहागजाः २० धर्मःकामश्चस्वर्गश्चहर्षःक्रोधःश्रुतंदमः ॥ अर्थादेतानिसर्वाणिप्रवर्तंतेनराधिप २१ धनात्कुलंप्रभवतिधनाद्धर्मःप्रवर्धते ॥ नाधनस्यास्त्ययंलोकोनपरःपुरुषोत्तम २२ नाधनोधर्मकृत्यानियथावदनुतिष्ठति ॥ धनाद्धिधर्मःस्रवतिशैलादभिनदीयथा २३ यःकृशार्थःकृशगवःकृशभृत्यःकृशातिथिः ॥ सवैराजन्कृशोनामनशरीरकृशःकृशः २४ अवेक्षस्वयथान्यायंपश्यदेवासुरंयथा ॥ राजन्किमन्यज्ज्ञातीनांवधादृध्यंतिदेवताः २५ नचेद्धर्तव्यमन्यस्यकथंतद्धर्ममारभेत् ॥ एतावानेववेदेषुनिश्चयःकविभिःकृतः २६ अध्येतव्यात्रयीनित्यंभवितव्यंविपश्चिता ॥ सर्वथाधनमाहार्यंयष्टव्यंचापियत्नतः २७ द्रोहाद्देवैरवाप्तानिदिविस्थानानिसर्वशः ॥ द्रोहात्किमन्यज्ज्ञातीनांगृध्यंतेयेनदेवताः २८ इतिदेवाव्यवसितावेदवादाश्चशाश्वताः ॥ अधीयंतेऽध्यापयंतेयजंतेयाजयंतिच २९

३ प्राणेति मुमुक्षूणांप्राणयात्राऽप्यर्थाधीनेति मोक्षोऽप्यर्थादेवभवतीत्याशयः १७ । १८ । १९ । २० । २१ । २२ । २३ कृशार्थःक्षीणार्थः २४ यन्नूक्तंज्ञातीनांपरस्परंयुद्धेहतानांहंतॄणांचश्रेयोनास्तीतितच्छिष्टाचारदर्शनेनदूषयति अवेक्षस्वेत्यादिना २५ अन्यस्यपरस्यधनंचेन्नहर्तव्यंततर्हिराजाकथंधर्ममाचरेत् तस्यहृत्यंतराभावान्नकथंचिदित्यर्थः २६ आहार्यंस्वधर्मेणार्जनीयं तस्यचप्रयोजनंयष्टव्यमित्युक्तं २७ । २८ । २९

ननुपरद्रव्यापहारेदोषोऽस्तीत्याशंक्याह कृत्स्नमिति यदेवधनंराजानोऽन्यतःपरस्मादाददतेतदेवतेषांश्रेयःश्रेयस्करमन्यथाअनपकृतमपकारवर्जितंधनंराज्ञांनास्त्येवेत्यर्थः । यज्ञार्थंपशुबीजादिवधादिवपरद्रव्यापहारादपिराज्ञांनदोषोऽस्तीतिभावः ३० । ३१ निरुच्यतेउत्कृष्टत्वेनकीर्त्यते स्यंदंतिप्रस्रवंति ३२ । ३३ । ३४ किंचपरवित्तापहारोऽस्यपरोद्धरणार्थएवेत्याह येषामिति येषांमांडलिकानांप्रजादीनांच द्रव्यापहर्तांराजायजतेतेसर्वेतदवभृथेपूताभवंतीत्यन्वयः ३५ विश्वरूपइति ब्रह्मणेब्राह्मणमालभतइत्यादिशाखाद्ब्राह्मणादीनांभूतानांचस्वदेहस्यचहोमोयज्ञार्थक्रियते तत्रकियान्द्रव्यापहारइतिभावः ३६ एवमनादिरनंतश्चायंयज्ञियःपंथाइत्याह शाश्वतइति । दाशरथः एकःपशुः द्वौपत्नीयजमानौ त्रयोवेदाश्चत्वारऋत्विजइतिदशरथाश्चप्रवर्तियस्मिन्सदशरथःसएवदाशरथः ३७ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे अष्टमोऽध्यायः ॥ ८ ॥ मुहूर्तमिति त्वमपिमदुक्तंनिवृत्तिमार्गमपिश्रुत्वामुहूर्तमंतरात्मनिहृदयपुंडरीकेमनःश्रोत्रेबाह्याभ्यंतरकरणेधारयन्स्थिरीकुर्वंस्तावदादावेकाग्रोभवेविशेषः पश्चान्ममवचनंतुभ्यंरोचेतत्वद्रुचयेभवेत् । अंतर्मुखस्यैवनिवृत्तिमार्गइष्टोनबहिर्मुखस्येतिभावः । श्रोत्रेंतररितिसंधिरार्षः १ साध्विति उतअपिग्राम्यसुखानिहित्वासाधुगम्यंमार्गंगच्छेयं नपुनस्त्वत्कृतेजातुतद्राज्यंगमिष्यामिस्वीकरिष्यामि २ राज्यमेवसाधुगम्योमार्गइतिचेत्तत्राह क्षेम्यइति ३ तत्प्रतावद्वनस्थधर्माननुष्ठास्यामीत्याह हित्वेत्यादिना ४ । ५ । ६ । ७ पेशलान्रम्यान् ८ । ९ । १० । ११ यत्तेधर्मानुष्ठानंमविजानीतेऽप्यवेति १२

कृत्स्नंतदेवतच्छ्रेयोयदप्याददतेऽन्यतः ॥ नपश्यामोनपकृतंधनंकिंचित्क्वचिद्वयम् ३० एवमेवहिराजानोजयंतिपृथिवीमिमाम् ॥ जित्वाममेयंब्रुवतेपुत्राइवपितुर्धनम् ३१ राजर्षयोऽपितेस्वर्ग्याधर्मोह्येषांनिरुच्यते ॥ यथैवपूर्णादुदधेःस्यंदंत्यापोदिशोदश ३२ एवंराजकुलाद्वित्तंपृथिवींप्रतितिष्ठति ॥ आसीदियंदिलीपस्यनृगस्यनहुषस्यच ३३ अंबरीषस्यमांधातुःपृथिवीसात्वयिस्थिता ॥ सत्वांद्रव्यमयोयज्ञःसंप्राप्तःसर्वदक्षिणः ३४ तंचेन्नयजसेराजन्प्राप्तस्त्वंराज्यकिल्बिषम् ॥ येषांराजाऽश्वमेधेनयजतेदक्षिणावता ३५ उपेत्यतस्यावभृथेपूताःसर्वेभवंतिते ॥ विश्वरूपोमहादेवःसर्वमेधेमहामखे ॥ जुहावसर्वभूतानितथैवात्मानमात्मना ३६ शाश्वतोऽयंभूतिपथोनास्त्यंतमनुशुश्रुम ॥ महान्दाशरथःपंथामाराजन्कुपथंगमः ३७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिअर्जुनवाक्येअष्टमोऽध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ मुहूर्तंतावदेकाग्रोमनःश्रोत्रेंतरात्मनि ॥ धारयन्नपितच्छ्रुत्वारोचेतवचनंमम १ साधुगम्यमहंमार्गंनजातुत्वत्कृतेपुनः ॥ गच्छेयंतद्गमिष्यामिहित्वाग्राम्यसुखान्युत २ क्षेम्यश्चैकाकिनागम्यःपंथाःकोऽस्तीतिपृच्छमाम् ॥ अथवानेच्छसिप्रष्टुमपृच्छन्नपिमेशृणु ३ हित्वाग्राम्यसुखाचारंतप्यमानोमहत्तपः ॥ अरण्येफलमूलाशीचरिष्यामिमृगैःसह ४ जुह्वानोऽग्निंयथाकालमुभौकालावुपस्पृशन् ॥ कृशःपरिमिताहारश्चर्मचीरजटाधरः ५ शीतवातातपसहःक्षुत्पिपासाश्रमक्षमः ॥ तपसाविधिदृष्टेनशरीरमुपशोषयन् ६ मनःकर्णसुखानित्यंशृण्वन्नुच्चावचागिरः ॥ मुदितानामरण्येषुवसतांमृगपक्षिणाम् ७ आजिघ्रन्पेशलान्गंधान्फुल्लानांवृक्षवीरुधाम् ॥ नानारूपान्वनेपश्यन्रमणीयान्वनौकसः ८ वानप्रस्थजनस्यापिदर्शनंकुलवासिनाम् ॥ नाप्रियाण्याचरिष्यामिकिंपुनर्ग्रामवासिनाम् ९ एकांतशीलीविमृशन्पक्वापक्वेनवर्तयन् ॥ पितॄन्देवांश्चवन्येनवाग्भिरद्भिश्चतर्पयन् १० एवमारण्यशास्त्राणामुग्रमुग्रतरंविधिम् ॥ सेवमानःप्रतीक्षिष्येदेहस्यास्यसमापनम् ११ अथवैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ॥ चरन्भैक्ष्यंमुनिर्मुंडःक्षपयिष्येकलेवरम् १२

१३ । १४ आत्मारामोयोगेनात्मन्येवरममाणः प्रसन्नात्माशुद्धसत्वः केनचिन्निमित्तेनसंविदंसंवादमकुर्वाणः कृत्याभावात् १५ चतुर्विधान्जंगमस्थजरायुजांडजस्वेदजभेदेनत्रैविध्यात् स्वधर्मस्थाःप्राणभृतइंद्रियपोषकाश्चप्रजाःप्रतिसमइत्यन्वयः १६ । १७ केनचिन्मार्गेण १८ एवंचत्याश्रमधर्मानुक्त्वाऽत्याश्रमधर्ममाह ऋजुरिति कामक्रोधादिशून्यः प्राणिहिंसाऽन्तर्मुखः त्रस्यतीतित्रसंभयादिधर्मकंलिंगशरीरं मरणकालेऽत्रैवतिष्ठतीतिस्थावरंस्थूलशरीरंतयोर्वर्जकः स्थूलसूक्ष्मशरीराभिमानशून्यइत्यर्थः १९ एवंरूपस्यकथंदेहयात्रानिर्वाहइत्याशंक्याह स्वभावइति स्वभावोदेहादीनांपूर्वसंस्कारः कटवेष्टनवत्प्रारब्धकर्मोपस्थापितदेहनिर्वाहार्थंमग्रेव्रजतिपुरस्कृतोभवतिनन्वेवंसुषुप्तावपिग्रासादिस्यादित्याशंक्याह प्रभवंत्यशनान्यपीति यथाप्रसुप्तःशिशुस्तनंपिबतिसंस्कारदार्ढ्यात् एवंदेहद्वयाभिमानहीनोऽहमपिभोजनादिकंकरिष्यामीत्यर्थः द्वंद्वानिसुखादिविरुद्धान्यपमानाल्पभोज्यादीनितान्यचिंतयन् २० पूर्वालाभेनपूर्वस्मिन्गृहेऽलाभेनहेतुनाजातुकदाचिदन्येष्वपिगृहेषुलाभंलब्धमन्नंचरन्भक्षयन् २१ भैक्ष्यकालमाह विधूमेइति गृहेइतिशेषः २२ त्रीन्गृहान् २३ जिजीविषुवन्धनादिसंग्रहं मुमूर्षुवद्ग्रासादित्यागम् २४ वासीतक्षाक्षुरधंतया २५ याइति निमेषोन्मेषाशनपानादिशारीरनिर्वाहमात्रकर्मस्वव्यवस्थितइत्यर्थः २६ तेष्वपिकर्मसुअसक्तः अपरित्यक्तोनित्यंवशीकृतःसंकल्पोमनःक्रियायेन दृढमनाइत्यर्थः । नास्तिपरित्यक्तःसंकल्पोयस्मादन्यइतिवा । सुनिर्णिक्तात्मकल्मषःसम्यक्दूरीकृतधीमलः २७ वागुराःस्नेहपाशान् २८ चिकीर्षितमाह वीतरागइति २९ एकेमूढाःकार्यकारणसंश्लिष्टंस्वसुखेननिमित्तभूतेनसंश्लिष्टंकृत्यादिकंबिभ्रत्यात्मोपकारकत्वेनपुष्णंति तथाचश्रुतिः । 'नवाअरेपत्युःकामायपतिःप्रियोभवत्यात्मनस्तुकामायपतिःप्रियोभवति' इति ३०

पांसुभिःसमभिच्छन्नःशून्यागारप्रतिश्रयः ॥ वृक्षमूलनिकेतोवात्यक्तसर्वप्रियाप्रियः १३ नशोचन्नप्रहृष्यंश्चतुल्यनिंदात्मसंस्तुतिः ॥ निराशीर्निर्ममोभूत्वानिर्द्वंद्वोनिष्परिग्रहः १४ आत्मारामःप्रसन्नात्माजडांधबधिराकृतिः ॥ अकुर्वाणःपरैःकांचित्संविदंजातुकैरपि १५ जंगमाजंगमान्सर्वानविहिंसंश्चतुर्विधान् ॥ प्रजाःसर्वाःस्वधर्मस्थाःसमःप्राणभृतःप्रति १६ नचाप्यवहसन्कंचिन्नकुर्वन्भ्रुकुटीःक्वचित् ॥ प्रसन्नवदनोनित्यंसर्वेंद्रियसुसंयतः १७ अपृच्छन्कस्यचिन्मार्गंप्रव्रजन्नेवकेनचित् ॥ नदेशंनदिशंकांचिद्गंतुमिच्छन्विशेषतः १८ गमनेनिरपेक्षश्चपश्चादनवलोकयन् ॥ ऋजुःप्रणिहितोगच्छंस्त्रसस्थावरवर्जकः १९ स्वभावस्तुप्रयात्यग्रेप्रभवंत्यशनान्यपि ॥ द्वंद्वानिचविरुद्धानितानिसर्वाण्यचिंतयन् २० अल्पंवास्वादुवाभोज्यंपूर्वालाभेनजातुचित् ॥ अन्येष्वपिचरँल्लाभमलाभेसप्तपूरयन् २१ विधूमेन्यस्तमुसलेव्यंगारेभुक्तवज्जने ॥ अतीतपात्रसंचारेकालेविगतभिक्षुके २२ एककालंचरन्भैक्ष्यंत्रीनथद्वेचपंचवा ॥ स्नेहपाशंविमुच्याहंचरिष्यामिमहीमिमाम् २३ अलाभेसतिवालाभेसमदर्शीमहातपाः ॥ नजिजीविषुवत्किंचिन्नमुमूर्षुवदाचरन् २४ जीवितंमरणंचैवनाभिनंदन्नचद्विषन् ॥ वास्यैकंतक्षतोबाहुंचंदनेनैकमुक्षतः ॥ नाकल्याणंनकल्याणंचिंतयन्नुभयोस्तयोः २५ याःकाश्चिज्जीवताशक्याःकर्तुमभ्युदयक्रियाः ॥ सर्वास्ताःसमभित्यज्यनिमेषादिव्यवस्थितः २६ तेषुनित्यमसक्तश्चत्यक्तसर्वेंद्रियक्रियः ॥ अपरित्यक्तसंकल्पःसुनिर्णिक्तात्मकल्मषः २७ विमुक्तःसर्वसंगेभ्योव्यतीतःसर्ववागुराः ॥ नवशेकस्यचित्तिष्ठन्सधर्मामातरिश्वनः २८ वीतरागश्चरन्नेवंतुष्टिंप्राप्स्यामिशाश्वतीम् ॥ तृष्णयाहिमहत्पापमज्ञानादस्मिकारितः २९ कुशलाकुशलान्येकेकृत्वाकर्माणिमानवाः ॥ कार्यकारणसंश्लिष्टंस्वजनंनामबिभ्रति ३०

जनात्मीयेष्वात्मीयबुद्ध्यातत्पोषणार्थंकृतंकर्मतुमरणोत्तेऽपिनमुंचतीत्याह आयुषइति ३१ व्याविद्धेभ्राम्यमाणे समेतिसंयोगमेति ३२ अस्वस्थमात्मन्यध्यासंविनारज्ज्वांभुजंगवद्विद्यमानम् ३३ ऐहिकार्थानांत्यागेसुखमुक्त्वाऽऽमुष्मिकाणामपित्यागेतदस्तीत्याह दिवइति भवेनस्वर्गैश्वर्येण कारणमविद्यातस्यास्तत्त्वंतदुःखमयत्वंतद्वित् ३४ कृत्वाहीति विविधंसामाद्युपायव द्विविधलक्षणंनानाविधकपटादिरूपंकर्मकृत्वास्वल्पैःपार्थिवैःक्षुद्रराजभिर्नृपतिर्महाराजोबध्यते कारणैःस्वापमानादिभिर्हेतुभिः बहवोमिलित्वाएकंमहांतंघ्नंतीत्यर्थः ३५ यस्मादुःखमयंज्ञ यिष्णुचऐश्वर्यंतस्मात् स्थानंमोक्षंअव्ययमपक्षयशून्यं शाश्वतमनादि ध्रुवंसदैकरूपम् ३६ संस्थापयिष्यामि समापयिष्यामि ३७ ॥ इतिशांतिपर्वणिरा ० नी० भारत० नवमोऽध्यायः ॥ ९ ॥

आयुषोंतेप्रहायेदंक्षीणप्राणंकलेवरम् ॥ प्रतिगृह्णातितत्पापंकर्तुःकर्मफलंहितत् ३१ एवंसंसारचक्रेऽस्मिन्व्याविद्धेरथचक्रवत् ॥ समेतिभूतग्रामोऽयंभूतग्रामेणकार्यवान् ३२ जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ॥ अपारमिवचास्वस्थंसंसारंत्यजतःसुखम् ३३ दिवःपतत्सुदेवेषुस्थानेभ्यश्चमहर्षिषु ॥ कोहिनामभवेनार्थीभवेत्कारणतत्त्ववित् ३४ कृत्वाहिविविधंकर्मतत्तद्विविधलक्षणम् ॥ पार्थिवैर्नृपतिःस्वल्पैःकारणैरेवबध्यते ३५ तस्मात्प्रज्ञामृतमिदंचिरान्मांप्रत्युपस्थितम् ॥ तत्प्राप्यप्रार्थयेस्थानमव्ययंशाश्वतंध्रुवम् ३६ एतयासततंधृत्याचरन्नेवंप्रकारया ॥ जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ॥ देहंसंस्थापयिष्यामिनिर्भयंमार्गमास्थितः ३७ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनप० युधिष्ठिरवाक्ये नवमोऽध्यायः ॥ ९ ॥ छ ॥ भीमउवाच ॥ श्रोत्रियस्येवतेराजन्मंदकस्याविपश्चितः ॥ अनुवाकहताबुद्धिर्नैषातत्त्वार्थदर्शिनी १ आलस्येकृतचित्तस्यराजधर्मानसूयतः ॥ विनाशेधार्तराष्ट्राणांकिंफलंभरतर्षभ २ क्षमाऽनुकंपाकारुण्यमानृशंस्यंनविद्यते ॥ क्षात्रमाचरतोमार्गमपिबंधोस्त्वदंतरे ३ यदीमांभवतोबुद्धिंविद्यामवयमीदृशीम् ॥ शस्त्रंनैवग्रहीष्यामोनवधिष्यामकंचन ४ भैक्ष्यमेवाचरिष्यामशरीरस्याविमोक्षणात् ॥ नचेदंदारुणंयुद्धमभविष्यन्महीक्षिताम् ५ प्राणस्यान्नमिदंसर्वमितिवैकवयोविदुः ॥ स्थावरंजंगमंचैवसर्वंप्राणस्यभोजनम् ६ आददानस्यचेद्राज्यंयेकेचित्परिपंथिनः ॥ हंतव्यास्तइतिप्राज्ञाःक्षत्रधर्मविदोविदुः ७ तेसदोषाहतास्माभीराज्यस्यपरिपंथिनः ॥ तान्हत्वाभुंक्ष्वधर्मेणयुधिष्ठिरमहीमिमाम् ८ यथाहिपुरुषःखात्वाकूपमप्राप्यचोदकम् ॥ पंकदिग्धोनिवर्तेतकर्मेदंनस्तथोपमम् ९ यथाऽऽरुह्यमहावृक्षमपहृत्यततोमधु ॥ अप्राश्यनिधनंगच्छेत्कर्मेदंनस्तथोपमम् १० यथामहांतमध्वानमाशयापुरुषःपतन् ॥ सनिराशोनिवर्तेतकर्मैतन्नस्तथोपमम् ११ यथाशत्रून्घातयित्वापुरुषःकुरुनंदन ॥ आत्मानंघातयेत्पश्चात्कर्मेदंनस्तथोपमम् १२

श्रोत्रियस्यवेदपाठकस्यमंदस्यादेवाविपश्चितोऽर्थज्ञानशून्यस्य अनुवाकेन नित्यपाठेनहतानष्टा १ आलस्यएवनतुपरमार्थेकृतचित्तस्यतव २ त्वदंतरेत्वत्तोऽन्यत्र ३ । ४ । ५ प्राणस्यप्राणवतोबलिष्ठस्येदंसर्वमन्नमिवान्नंभोग्यम् 'वीरभोग्यावसुंधरा' इतिस्मृतेः अतएवतस्यैवभोजनंभुज्यतेपाल्यतेइतिव्युत्पत्त्यापालनीयमिदंयद्यप्येतत्प्राणोपासनाप्रकरणेश्रुतंतथाऽपिसर्वस्यात्मार्थत्वमित्यंशेनसाम्यादुदाहृतम् ६ । ७ हतास्माभिरितिसंधिरार्षः तान्धर्मेणहत्वानिघ्नन् स्वंराज्यंभुंक्ष्व । हंतेरन्येभ्योऽपिदृश्यतइतिक्विप् अनुनासिकलोपोह्रस्वस्येतितुक् ८ तथातेनप्रकारेणोपमीयतइतितथोपमम् ९ । १० पतन्गच्छन् ११ । १२

१३ । १४ अशक्तयःशक्तिहीनाः १५ अगतीकगतीननाथरक्षकान् दैर्घ्यंमार्थं ईदृशानपिनस्त्रार्थान्दृष्ट्वाजनाइतरेऽपिअर्थसिद्धयेकर्थनानुपश्येयुरपितुअलोचयेयुरेव एततयादृशंममवचनंत्वादृशं पश्यत युक्तमयुक्तंवेतिपरीक्षयतेत्यर्थः समर्थैःस्वार्थसिद्धयर्थंयतितव्यमेवेतिभावः १६ ननुसंन्यासएवनःश्रेयानित्युक्तंतत्राह आपदीति ध्वंसितेनदुर्गतिंप्रापितेन १७ इहक्षत्रयोनौत्यागंचरन् भैक्ष्यंमुनिर्मुंडइत्युक्तविधंसंन्यासंनपरिचक्षतेनप्रशंसंति तत्रहेतुःधर्मेति 'मुखजानामयंधर्मोवैष्णवंलिंगधारणं ॥ बाहुजातोरुजातानांनायंधर्मोविधीयते'इतिस्मृतेः क्षत्रियस्यमौंड्यादिकंनिषिद्धं तस्याचरणेधर्मव्यतिक्रमोऽस्त्येवेतिभावः १८ ननुहिंस्त्रोऽयंक्षात्रधर्मोनिंद्यएवेत्याशंक्याह कथमिति हिंसार्थमुत्पन्नाहिंस्त्रयोनौजाताहिंसैकजीवनास्तदेवतस्यैवहिंस्त्रधर्मस्यनिंदांकथंमाषेयुः । कथंवातत्रधातातस्यधर्मस्यप्रष्टानगर्ह्येतेननिंद्यते । धातृविहितत्वात्सहजत्वाच्चनासौधर्मोनिंद्यइत्यर्थः । यदाहभगवान् 'सदोषमपिकौंतेयसहजंकर्मनत्यजेत्'इति १९ कथंतर्हिजाबालोपनिषदि अथपरिव्राड्मुंडोविवर्णवासाइत्युपक्रम्यभरतरैवतकप्रभृतयोऽनुन्मत्ताउन्मत्तवदाचरंतःइति भरतादीनांक्षत्रियाणांमौंड्यमुन्मत्तचर्याचश्रूयतेइत्याशंक्याह श्रियेति 'ऋचःसमानियजूंषिसाहिश्री

यथाऽन्नंक्षुधितोलब्ध्वानभुंजीयाद्यदृच्छया ॥ कामीवकामिनींलब्ध्वाकर्मेदंनस्तथोपमम् १३ वयमेवात्रगर्ह्याहियद्वयंमंदचेतसम् ॥ त्वांराजन्ननुगच्छामोज्येष्ठोऽयमितिभारत १४ वयंहिबाहुबलिनःकृतविद्यामनस्विनः ॥ क्लीबस्यवाक्येतिष्ठामोयथैवाशक्तयस्तथा १५ अगतीकगतीनस्मान्नष्टार्थानर्थसिद्धये ॥ कथंवैनानुपश्येयुर्जनाःपश्यतयादृशम् १६ आपत्कालेहिसंन्यासःकर्तव्यइतिशिष्यते ॥ जरयाऽभिपरीतेनशत्रुभिर्व्यंसितेनवा १७ तस्मादिहकृतप्रज्ञास्त्यागंनपरिचक्षते ॥ धर्मव्यतिक्रमंचैवमन्यंतेसूक्ष्मदर्शिनः १८ कथंतस्मात्समुत्पन्नास्तन्निष्ठास्तदुपाश्रयाः ॥ तदेवनिंदांभाषेयुर्धातातत्रनगर्ह्यते १९ श्रियाविहीनैरधनैर्नास्तिकैःसंप्रवर्तितम् ॥ वेदवादस्यविज्ञानंसत्याभासमिवानृतम् २० शक्यंतुमौनमास्थायबिभ्रताऽऽत्मानमात्मना ॥ धर्मच्छद्मसमास्थायच्यवितुंनतुजीवितुम् २१ शक्यंपुनररण्येषुसुखमेकेनजीवितुम् ॥ अबिभ्रतापुत्रपौत्रान्देवर्षीनतिथीन्पितॄन् २२ नेमेमृगाःस्वर्गजितोनवराहानपक्षिणः ॥ अथान्येनप्रकारेणपुण्यमाहुर्नतंजनाः २३ यदिसंन्यासतःसिद्धिंराजाकश्चिदवाप्नुयात् ॥ पर्वताश्चद्रुमाश्चैवक्षिप्रंसिद्धिमवाप्नुयुः २४ एतेहिनित्यसंन्यासादृश्यंतेनिरुपद्रवाः ॥ अपरिग्रहवंतश्चसततंब्रह्मचारिणः २५ अथचेदात्मभाग्येषुनान्येषांसिद्धिमश्नुते ॥ तस्मात्कर्मैवकर्तव्यंनास्तिसिद्धिरकर्मणः २६

रमूर्तासताम्'इतिश्रुतेः श्रियात्रय्याधियाविहीनैःअधनैर्लक्ष्म्याचहीनैः इदमनृतंसंप्रवर्तितं वेदयतीतिवेदोविधिस्तस्यवादोऽर्थवादस्तत्संबंधिविज्ञानंसंन्यासविधिस्तुत्यर्थंभरतादिकीर्तनंप्रजापतिवपोत्खननवदर्थवादोनतुतावतामौंड्यंक्षत्रियस्याधिकारःसिद्ध्यतीतिभावः २० यत्तुऋजुःप्रणिहितोगच्छन्निति अत्याश्रमउक्तस्तंदूषयति शक्यंत्विति आत्मानंदेहमात्मनास्वेनैवबिभ्रतानिश्चलंस्थापयताधर्मच्छद्मकपटयोगंआस्थायच्यवितुंमर्तुमेवशक्यंनजीवितुं केवलंप्रणिधानेनशरीरनाशोभवेदित्यर्थः २१ यत्तुस्वभावस्तुब्रजत्यग्रेइतिमुग्धबालकस्तनपानवद्देहयात्रासिद्धिरुक्तातांदूषयतिद्वाभ्यां शक्यंपुनरिति पुत्राद्यभरणेनपशुसाम्येनचतत्रापिदोषोऽस्तीत्यर्थः २२ अथेत्यतःशब्दार्थे तमेकचरमन्येनप्रकारेणएकचर्याविनानपुण्यंश्रेयांसमाहुःसाचमृगेऽप्यस्तीतिनतयोर्विशेषइतिभावः २३ संन्यासयुक्तमेकाकित्वमपिनिरस्यतिद्वाभ्यां यदीति २४। २५ ननुपश्वादयःकर्मयोनयोनभवंतिकिंतुपूर्वकृतमेवतेभुंजते अहंतुकर्मोधिकृतःस्वप्रयत्नेनध्रुवंपदंप्राप्स्यामीतिचेत्तत्राह अथचेदिति आत्ममाग्येषुस्वसंपत्स्वन्येषांसिद्धिंपरकर्मार्जितंफलंनाप्नुतेकिंतुस्वकर्मार्जितमेवाप्नुतेतर्हिकर्मैवकुर्वित्यर्थः सिद्धिर्मोक्षः २६

ननुमुमुक्षूणांदेहमरणव्यतिरिक्तंकर्मनापेक्षितमित्यतआह औदकाइति उदकेभवामीनादयःसृष्टयःस्थावरास्तेषामप्यात्मैवदेहएवमर्तव्योनान्यइतितेऽपिमुच्येरन् २७ लोकदृष्टयाऽपिकर्मैवकर्तव्यमित्याहअवेक्षस्वेति २८ ॥ इतिशांतिपर्वणिरा०नीलकंठीयेभारतभावदीपेदशमोऽध्यायः ॥ १० ॥ एवंसंन्यासःश्रेयानितिधर्मस्यपक्षः गार्हस्थ्यंश्रेयइतिभीमस्यपक्षः तत्राऽऽद्यस्यश्रैष्ठ्यं मत्वाऽनधिकारिकृतसंन्यासापेक्षयागार्हस्थ्यमेवश्रेयइत्याख्यायिकामुखेनसमर्थयन्नर्जुनउवाच अत्रैवेत्यादिना १ प्रवव्रजुःपुनर्गृहंप्रतिनमंतव्यमितिप्रकर्षेणगताइत्यर्थः २ । ३ विघसाशिभिर्भ्रष्टयज्ञावशिष्टभोजिभिः ४ । ५ शास्तिज्ञापयति विगतोघसोऽन्नंयस्यतदन्नंविघसंशीर्णतृणपर्णफलादिकंतदशनशीलास्तुवयमेवातोविघसाशिनःश्रेयांसःस्मइतिमेनिरेइत्यर्थः ६ पंकदिग्धान्

औदकाःसृष्टयश्चैवजंतवःसिद्धिमाप्नुयुः ॥ तेषामात्मैवभर्तव्योनान्यःकश्चनविद्यते २७ अवेक्षस्वयथास्वैःस्वैःकर्मभिर्व्याप्तंजगत् ॥ तस्मात्कर्मैवकर्तव्यंनास्तिसिद्धिरकर्मणः २८ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिदशमोऽध्यायः ॥ १० ॥ ॥ अर्जुनउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनं ॥ तापसैःसहसंवादंशक्रस्यभरतर्षभ १ केचिद्गृहान्परित्यज्यवनमभ्यागमन्द्विजाः ॥ अजातश्मश्रवोमंदाःकुलेजाताःप्रवव्रजुः २ धर्मोऽयमितिमन्वानाःसमृद्धाब्रह्मचारिणः ॥ त्यक्त्वाभ्रातॄन्पितॄंश्चैवतानिंद्रोऽन्वकृपायत ३ तानाबभाषेभगवान्पक्षीभूत्वाहिरण्मयः ॥ सुदुष्करंमनुष्यैश्चयत्कृतंविघसाशिभिः ४ पुण्यंभवतिकर्मैदंप्रशस्तंचैवजीवितम् ॥ सिद्धार्थास्तेगतिंमुख्यांप्राप्ताधर्मपरायणाः ५ ॥ ऋषयऊचुः ॥ ॥ अहोबतायंशकुनिर्विघसाशान्प्रशंसति ॥ अस्मान्नूनमयंशास्तिवयंचविघसाशिनः ६ ॥ ॥ शकुनिरुवाच ॥ ॥ नाहंयुष्मान्प्रशंसामिपंकदिग्धान्रजस्वलान् ॥ उच्छिष्टभोजिनोमंदानन्येवैविघसाशिनः ७ ॥ ॥ ऋषयऊचुः ॥ ॥ इदंश्रेयःपरमितिवयमेवाभ्युपास्महे ॥ शकुनेब्रूहियच्छ्रेयोभृशंतेश्रद्दधामहे ८ ॥ ॥ शकुनिरुवाच ॥ ॥ यदिमांनाभिशंकध्वंविभज्यात्मानमात्मना ॥ ततोऽहंवःप्रवक्ष्यामियाथातथ्यंहितंवचः ९ ॥ ॥ ऋषयऊचुः ॥ शृणुमस्तेवचस्तातपंथानोविदितास्तव ॥ नियोगेचैवधर्मात्मन्स्थातुमिच्छामशाधिनः १० ॥ शकुनिरुवाच ॥ चतुष्पदांगौःप्रवरालोहानांकांचनंवरम् ॥ शब्दानांप्रवरोमंत्रोब्राह्मणोद्विपदांवरः ११ मंत्रोऽयंजातकर्मादिर्ब्राह्मणस्यविधीयते ॥ जीवतोपियथाकालंश्मशाननिधनादिभिः १२ कर्माणिवैदिकान्यस्यस्वर्ग्यःपंथास्त्वनुत्तमः ॥ कथंमेसर्वकर्माणिमंत्रसिद्धानिचक्रिरे १३ आत्मानंदृढवादीनितथासिद्धिरिहेष्यते ॥ मासार्धमासाऋतवआदित्यशशितारकम् १४

रजस्वलान्नित्यागंतुकस्वाभाविकदोषयुक्तत्वमुक्तंक्रमेण उच्छिष्टभोजिनइति प्रायेणशीर्णतृणपर्णफलानिमृगकीटपक्ष्युच्छिष्टानिभवंति तद्भोजिनोमंदान्मूढान् ७ तेतववचइतिशेषः ८ श्रद्दधानोऽन्योवक्ताऽस्माशंकितोऽन्योमंताऽऽस्मेतीत्यात्मन्येवायंविभागोविषममागद्वयं यदिधूर्तानभविष्यथेत्यर्थः ९ पंथानःश्रेयोमार्गाः १०।११ मंत्रोमंत्रोक्तसंस्कारः श्मशानेतिपदंयतिनिधनव्यावृत्त्यर्थम् १२ कर्माणिस्वर्ग्यःपंथाइतिनचेत्तर्हिकथंमेमत्समक्षंमदर्थंवाकर्माणिचक्रिरेप्राञ्चःस्वर्गार्थिनइतिशेषः अतस्तानिस्वर्ग्याण्येवेतिभावः मंत्रसिद्धानिमंत्रैःप्रकाशितानि १३ आत्मानामिति दृढवादीदृढनिश्चयःपुमान्यथाऽऽत्मानमितिप्रति गुणाभावआर्षः। यद्देवतारूपंजानीतेअयमहमस्मिसांबशिवइतितथैवेहलोकेशास्त्रेवासिद्धिस्तत्तद्देवतातादात्म्यरूपाइष्यते। ‘तंयथायथोपासतेतथेतःप्रेत्यभवंति’इतिश्रुतेःअयागमो। यांयांदेवतांनिराहतस्यास्तस्यास्ताद्रूप्यमनुभवतीतिस्मृतेश्च तत्रकतिप्रकारासिद्धिरित्यतआह मासेति माघादिभिर्मासैःशुक्लैरर्धमासैःशिशिरादिभिर्ऋतुभि-



-श्चाऽऽदित्यमार्गप्राप्तिरूपाएकासिद्धिः क्रममुक्तिस्थानभूतब्रह्मलोकावाप्तिफला। तथाश्रावणादिभिर्मासैःकृष्णैरर्धमासैर्वर्षादिभिर्ऋतुभिःशशिमार्गप्राप्तिरूपाद्वितीयासिद्धिःपुनरावृत्तिस्थानभूतस्वर्गलोकावाप्तिफला। तयामार्गद्वयानपेक्षाआध्यात्मिकमाधिभौतिकंवाविमुक्तमुपासीनानांदेहांतेतारकब्रह्मावाप्तिरूपातृतीयासद्योमुक्तिफला तथाचश्रुतयः। ‘सएतान्ब्रह्मगमयतिनसपुनरावर्तते इति। तथाएतमेवाध्वानंपुनर्निवर्ततइति। तथाऽत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवति’इतिचक्रमेणज्ञेयाः १४ ईहंतइति तदिदमादित्यशशितारकमंकंसिद्धित्रयंकर्मसंज्ञितंकर्मफलत्वेनाभिहितमीहंतेकामयंतेसर्वभूतानि। तस्मात्कर्माधिकारस्थानंगार्हस्थ्यमेवसिद्धिक्षेत्रंपुण्यश्चायमाश्रमोमहांश्च १५ अन्ययादोषमाहअथेति निंदंतोनिंदांकृत्वाकापथंत्वदुक्तंत्यागमार्गंयेगतास्तेषामेनःपापंविद्यते १६ आदित्यशशितारकाख्यसिद्धित्रयानादरेदुर्गतिमाह देवेति वंशइववंशोर्चिरादिपर्वोपेतत्वान्मार्गः देववंशोदेवयानमार्गः। तथापितृवंशःपितृयानमार्गः ब्रह्मवंशोब्रह्मावाप्तिमार्गः। तत्प्राप्त्युपायबहुत्वात्प्रत्येकंबहुवचनम्। पर्यात्यागेनाऽश्रुतीपर्यंतंप्रदंदशूकादियोनिर्यांति श्रुतीतिदैर्घ्यमार्षं १७ एतत्कर्मवोयुष्माकमस्तुतच्चतपोयुक्तमुपासनायुक्तं उपासनाचात्रद्विविधा अध्यात्ममधियज्ञंच। तत्रयज्ञाङ्गेष्वादौविराड्दृष्टिरूपावाअश्वस्यमेध्यस्याशिरइत्यादिनाविहितांत्या। आद्यात्वविमुक्तोपासनासोऽविमुक्तउ

ईहंतेसर्वभूतानितदिदंकर्मसंज्ञितम् ॥ सिद्धिक्षेत्रमिदंपुण्यमयमेवाश्रमोमहान् १५ अथयेकर्मनिंदंतोमनुष्याःकापथंगताः ॥ मूढानामर्थहीनानांतेषामेनस्तुविद्यते १६ देववंशान्पितृवंशान्ब्रह्मवंशांश्चशाश्वतान् ॥ संत्यज्यमूढावर्तंतेततोयांत्यश्रुतीपथम् १७ एतद्वोऽस्तुतपोयुक्तंददामीत्यृषिचोदितम् ॥ तस्मात्तत्तद्व्यवस्थानंतपस्वितपउच्यते १८ देववंशान्ब्रह्मवंशान्पितृवंशांश्चशाश्वतान् ॥ संविभज्यगुरोश्चर्यांतद्वैदुष्करमुच्यते १९ देवावैदुष्करंकृत्वाविभूतिंपरमांगताः ॥ तस्माद्गार्हस्थ्यमुद्वोढुंदुष्करंप्रब्रवीमिवः २० तपःश्रेष्ठंप्रजानांहिमूलमेतन्नसंशयः ॥ कुटुंबविधिनाऽनेनयस्मिन्सर्वंप्रतिष्ठितम् २१ एतद्विदुस्तपोविप्राद्वंद्वातीताविमत्सराः ॥ तस्माद्व्रतंमध्यमंतुलोकेषुतपउच्यते २२ दुराधर्षंपदंचैवगच्छंतिविघसाशिनः ॥ सायंप्रातर्विभज्यान्नंस्वकुटुंबेयथाविधि २३ दत्वाऽतिथिभ्योदेवेभ्यःपितृभ्यःस्वजनायच ॥ अवशिष्टानियेऽश्नंतितानाहुर्विघसाशिनः २४

पास्यइत्युपक्रम्यकतमचास्यस्थानंभ्रूवोर्घ्राणस्यचयःसंधिरित्यादिनाविहिता। एतेनद्विविधाऽप्युपासनाकर्मसमुच्चितैवकर्तव्येतिदर्शितम्। किंभूतमेतत्कर्म ददामीति ऋषिणामंत्रेणचोदितं तथाचब्रवाक्यंकर्मकांडे। ‘देहिमेददामिते’इति। देवतोद्देशेनद्रव्यत्यागरूपंदानंकुरुतुभ्यंचाहंपुत्रपशुवर्गादिकंफलंदास्यामीतिमंत्रार्थः। यस्मादेवंतस्मात्तत्तत्तत्रतत्रमार्गेव्यवस्थानंनिष्ठापूर्वकास्थितिस्तदेवतपस्विनांतपउच्यतेनान्यत्कायशोषणादि १८ देवेति अंगोपास्तियुक्तंवाकेवलंवाविमुक्तोपास्तियुक्तंवादेववंशादिशब्दोपलक्षितंकर्मगुरोश्चर्यांपरिचर्यांसंविभज्यपरस्पराविरोधेनविनिनाडीविभागेनानित्यंक्रियमाणंदुष्करंदुःसाध्यमुच्यतेविद्वद्भिः इत्यमेवकर्तव्यमितिभावः १९ एतदेवपरकृत्याद्रढयति देवाइति २० तपःकर्मैवप्रजानांमूलमतःश्रेष्ठं यतोऽनेनच्छांदोग्यदृष्टेनकुटुंबविधिनाकुटुंबेशुचौदेशेस्वाध्यायमधीयानइत्यादिनायस्मिन्गृहस्थकर्मणिसर्वंप्रतिष्ठितं तथाचसूत्रम्। ‘कृत्स्नभावात्तुगृहिणोपसंहारः’इति। सर्वेषामाश्रमाणांधर्मोगृहेएवसंतिनत्वन्यत्रेतिहेतोश्छांदोग्येकुटुंबइत्यादिश्रुत्यागृहिणैवविद्योपसंहारःकृतइतिसूत्रार्थः २१ व्रतंब्रह्मचर्याद्युपेतमध्ययनंमध्यमंचतद्रहितंयज्ञादिचतपःशब्देनोच्यते २२ तयोर्द्वितीयंस्तौति दुराधर्षेति २३ विघसाशिपदंव्याचष्टे सायमितिसार्धेन २४

अनुपस्कृतानिःसंशयाः २५ । २६ ततइति तेतरुणाःसंन्यासचिकीर्षवः उत्सृज्यनास्तीतिगताः आश्रमांतरेसिद्धिर्नास्तीतितदुत्सृज्यगताइतियोज्यं २७ फलितमाह तस्मादीति २८ ॥ इति शांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेएकादशोऽध्यायः ॥ ११ ॥ ॥ ७ ॥ एवमर्जुनवाक्यात्कर्मणामवश्यकर्तव्यत्वेसिद्धे संगंकर्तृत्वाभिमानंफलाशांचत्यक्त्वातानि कर्तव्यानीतिनकुलवाक्येनप्रतिपादयिष्यन्नारभते अर्जुनस्येत्यादि १ ताम्रास्योदुःखेनविवर्णमुखः २ विशाखयूपेक्षेत्रविशेषे देवानांदेवैःअग्न्योऽग्निस्थापनार्थानिस्थंडिलानिचिताइष्टकाभी रचिताअद्यापिदृश्यंते तेनदेवत्वमपिकर्मफलमेवेत्यर्थः । 'कर्मणापितृलोकोविद्ययादेवलोकः' इतिश्रुतेश्चयनाश्रितविद्याबलाद्ब्रह्मलोकंगतायेतेऽत्रदेवाः । तथाग्नेःकेवलकर्मणास्वर्लोकंगतायेते ऽत्रपितरइतिबोध्यं ३ अनास्तिकानामास्तिक्यशून्यानामपि पाठांतरेस्पष्टोऽर्थः प्राणदावृष्टिद्वाराअन्नप्रदाः'अन्नंहप्राणः'इतिश्रुतेः विधिर्मंत्रित्राअकामयतेत्यादि अभ्यादिभावस्यकर्मसाध्यत्व

तस्मात्स्वधर्ममास्थायसुव्रताःसत्यवादिनः ॥ लोकस्यगुरवोभूत्वातेभवंत्यनुपस्कृताः २५ त्रिदिवंप्राप्यशक्रस्यस्वर्गलोकेविमत्सराः ॥ वसंतिशाश्वतान्वर्षान् जनादुष्करकारिणः २६ ॥ अर्जुनउवाच ॥ ततस्तेतद्वचःश्रुत्वाधर्मार्थसहितंहितम् ॥ उत्सृज्यनास्तीतिगतागार्हस्थ्यंसमुपाश्रिताः २७ तस्मात्त्वमपिसर्वज्ञधैर्य मालंब्यशाश्वतम् ॥ प्रशाधिपृथिवींकृत्स्नांहतामित्रांनरोत्तम २८ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिअर्जुनवाक्येऋषिशकुनिसंवादकथने एकादशोऽध्यायः ॥ ११ ॥ वैशंपायनउवाच ॥ अर्जुनस्यवचःश्रुत्वानकुलोवाक्यमब्रवीत् ॥ राजानमभिसंप्रेक्ष्यसर्वधर्मभृतांवरम् १ अनुरुध्यमहाप्राज्ञोभ्रातु श्चित्तमरिंदम ॥ व्यूढोरस्कोमहाबाहुस्ताम्रास्योमितभाषिता २ ॥ नकुलउवाच ॥ विशाखयूपेदेवानांसर्वेषामग्नयश्चिताः ॥ तस्माद्विद्धिमहाराजदेवाःकर्मफले स्थिताः ३ अनास्तिकानांभूतानांप्राणदाःपितरश्चये ॥ तेऽपिकर्मैवकुर्वंतिविधिंसंप्रेक्ष्यपार्थिव ४ वेदवादापविद्धांस्तुतान्विद्धिभृशनास्तिकान् ॥ नहिवेदोक्त मुत्सृज्यविप्रःसर्वेषुकर्मसु ५ देवयानेननाकस्यपृष्ठमाप्नोतिभारत ॥ अत्याश्रमानयंसर्वानित्याहुर्वेदनिश्चयाः ६ ब्राह्मणाःश्रुतिसंपन्नास्तान्निबोधनराधिप ॥ वित्तानिधर्मलब्धानिक्रतुमुख्येष्ववासृजन् ७ कृतात्मासमहाराजसर्वैत्यागीस्मृतोनरः ८ अनवेक्ष्यसुखादानंतथैवोर्ध्वंप्रतिष्ठितः ॥ आत्मत्यागीमहाराजस त्यागीतामसोमतः ९ अनिकेतःपरिपतन्वृक्षमूलाश्रयोमुनिः ॥ अपाचकःसदायोगीसत्यागीपार्थभिक्षुकः १०

ज्ञापकं ४ वेदवादोऽपविद्धस्त्यक्तोयैस्तान् ५ देवयानेनमार्गेणपृष्ठमुपरिभागंब्रह्मलोकमित्यर्थः । अयंगृहाश्रमःसर्वानाश्रमानतिअतिक्रांतस्तेभ्यःश्रेष्ठइत्यर्थः ६ तान्ब्राह्मणान्गत्वाभिबोध बुध्यस्व अवासृजन्समार्पयन् ७ कृतात्माजितचित्तः अहंममाभिमानशून्यइत्यर्थः सत्यागीसात्विकइतिशेषः ८ सुखादानंगार्हस्थ्यसुखभोगं ऊर्ध्ववनादौप्रतिष्ठितोनिष्ठावान्सन्यआत्मत्यागी देहत्यागीसतामसोमतः । 'अनधीत्यद्विजोवेदाननुत्पाद्यसुतानपि ॥ अनिष्ट्वाशक्तितोयज्ञैर्मोक्षमिच्छन्व्रजत्यधः'इति मनूक्त्यनभिज्ञत्वात्तामसोऽयंत्यागीतिभावः ९ परिपतन्भिक्षार्थंपर्यटन् यतोऽपाचकःयोगीनिरुद्धसर्ववृत्तिर्भिक्षुकइति । याश्चाधर्माब्राह्मणस्मृतः । सोऽयंब्राह्मणकल्पोधर्मः शूनोऽपिप्रजापरिपालनक्लेशार्हेणक्षत्रियेणआश्रितइतिराजसत्वाद्दोषमूलः तथाचश्रुतिः । 'यदाविक्षत्रियायपापंभवतिब्राह्मणकल्पोऽस्यप्रजायामाजायते' इतिमाभूवं याचकोभिक्षुकः १०

'संन्यस्येत्सर्वकर्माणिवेदंतुनपरित्यजेत् । निवृत्तौवेदमभ्यस्यन्पुत्रैश्वर्येसुखंवसेत्'इतिमनूक्तेवेदन्यासमकृत्वाप्रातृराज्यैनिवत्स्यामीत्याशंक्याह क्रोधेति विप्रइत्यनेनायमपिधर्मोब्राह्मणस्यैवविहि तोधिकारादितिदर्शितम् । तेनायंत्यागीराजसएवपूर्ववदितिसिद्धम् ११ । १२ समीक्ष्येति आश्रमांतरेस्वर्गएवास्तिनकामःगार्हस्थ्येतूभयमस्तीत्ययमेवमार्गोगतिश्रेष्ठेत्यर्थः १३ इतीति आवश्य कमेवेदंममेतिभावंकृत्वायःसंगफलेप्साराहितःकरोतिसत्यागी नान्यइत्यर्थः १४ वनेऽपिकामस्मरणंधत्पतत्येवेत्याह यदेति धर्मवैतंसिकोधर्मध्वजी १५ अभिमानःकर्ताऽहमित्येवंरूपस्तेनकृतं कर्मफलवन्नगतिप्रदंन त्यागयुक्तमभिमानत्यागोपेतम् १६ आर्षःऋषीणांहितः १७ अत्रगार्हस्थ्ये १८ इहविधौ प्रसृतस्यनिष्ठावतः १९ । २० । २१ तच्चकर्मगृहस्थाश्रमिणोविरोधकंनिगडव

क्रोधहर्षावनादृत्यपैशुन्यंचविशेषतः ॥ विप्रोवेदानधीतेयःसत्यागीपार्थउच्यते ११ आश्रमांस्तुलयासर्वान्धृतानाहुर्मनीषिणः ॥ एकतश्चत्रयोराजन्गृहस्थाश्र मएकतः १२ समीक्ष्यतुलयापार्थकामंस्वर्गंचभारत ॥ अयंपंथामहर्षीणामियंलोकविदांगतिः १३ इतियःकुरुतेभावंसत्यागीभरतर्षभ ॥ नयःपरित्यज्यगृहा न्वनमेतिविमूढवत् १४ यदाकामान्समीक्षेतधर्मवैतंसिकोनरः ॥ अथैनंमृत्युपाशेनकंठेबध्नातिमृत्युराट् १५ अभिमानकृतंकर्मनैतत्फलवदुच्यते ॥ त्यागयुक्तं महाराजसर्वमेवमहाफलम् १६ शमोदमस्तथाधैर्यंसत्यंशौचमथार्जवम् ॥ यज्ञोधृतिश्चधर्मश्चनित्यमार्षोविधिःस्मृतः १७ पितृदेवातिथिकृतेसमारंभोऽत्रशस्य ते ॥ अत्रैवहिमहाराजत्रिवर्गःकेवलंफलम् १८ एतस्मिन्वर्तमानस्यविधावप्रतिषेधिते ॥ त्यागिनःप्रसृतस्येहनोच्छित्तिर्विद्यतेक्वचित् १९ असृजद्धिप्रजाराज न्प्रजापतिरकल्मषः ॥ मांयक्ष्यंतीतिधर्मात्मायज्ञैर्विविधदक्षिणैः २० वीरुधश्चैववृक्षांश्चयज्ञार्थंवैतथौषधीः ॥ पशूंश्चैवतथामेध्यान्यज्ञार्थानिहवींषिच २१ गृह स्थाश्रमिणस्तच्चयज्ञकर्मविरोधकम् ॥ तस्माद्गार्हस्थ्यमेवेहदुष्करंदुर्लभंतथा २२ तत्संप्राप्यगृहस्थायेपशुधान्यधनान्विताः ॥ नयजंतेमहाराजशाश्वतंतेषुकि ल्बिषम् २३ स्वाध्याययज्ञाऋषयोज्ञानयज्ञास्तथाऽपरे ॥ अथापरेमहायज्ञान्मनस्येववितन्वते २४ एवंमनःसमाधानंमार्गमातिष्ठतोनृप ॥ द्विजातेर्ब्रह्मभूत स्यस्पृहयंतिदिवौकसः २५ सरत्नानिविचित्राणिसंहृतानिततस्ततः ॥ मखेष्वनभिसंत्यज्यनास्तिक्यमभिजल्पसि २६ कुटुंबमास्थितेत्यागंनपश्यामिनरा धिप ॥ राजसूयाश्वमेधेषुसर्वमेधेषुवापुनः २७ येचान्येक्रतवस्तातब्राह्मणैरभिपूजिताः ॥ तैर्यजस्वमहीपालशक्रोदेवपतिर्यथा २८ राज्ञःप्रमाददोषेणदस्युभिःप रिमुष्यताम् ॥ अशरण्यःप्रजानांयःसराजाकलिरुच्यते २९ अश्वान्गाश्चैवदासीश्चकरेणूश्चस्वलंकृताः ॥ ग्रामान्जनपदांश्चैवक्षेत्राणिचगृहाणिच ३०

द्विशेषेणरोधकम् २१ एतत्त्यागेदोषमाह तदिति २३ अपरेयोगिनःमहायज्ञानितिबहुवचनंवितर्कविचाराद्यवांतरयोगभेदापेक्षम् २४ । २५ त्रिष्वपियज्ञेष्वाद्योतीतकालः उपस्थितंमध्यममुद्दि श्यात्त्यस्यवार्ताकुर्वतस्तेनास्तिक्यंस्पष्टमित्याह सइति २६ पूर्वंविदसंन्यासेऽपित्वयाधिकारोनास्तीत्युक्तं इदानींविदसंन्यासएवनसंभवतीत्यर्थेनाह कुटुंबमिति । कुत्रतर्हित्यागंपश्यसीत्यतआह राजसूयेति २७ फलितमाह येचेति २८ प्रमादोराज्याकरणं परिमुष्यतांलुप्यमानानाम् २९ । ३०

मात्सर्यंबंधुद्रोहः दानाभावेनकलिस्वरूपाएववयंजाताइत्यर्थः ३१ । ३२ । ३३ अंतरालेपिशाचयोनौ ३४ अंतर्व्यासंगः अहंज्ञाताहंदाताकर्ताहंहर्ताइत्यादिरात्मपूजा बहिर्व्यासंगःपुत्रपश्वादि पूजा तयोःकारकंमूलंअहंकारममकारौत्यक्त्वैवत्यागीभवेन्नतुयोग्यहंहित्वाप्रतितिष्ठतिसइत्यर्थः ३५ । ३६ । ३७ । ३८ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपे द्वादशोऽध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ नबाह्यमिति अहंकारममकारौत्यक्त्वावित्युक्तं तत्राद्यत्यागेसर्वव्यवहारोच्छेदःस्यादितिममकारएवत्याज्यइत्येतदर्थमध्यायआरभ्यते । तत्रद्रव्यं ममकारास्पदंद्विविधं बाह्यंव्यावहारिकं शारीरंशरीरेमवंमनःकल्पितंच यथोक्तं । 'घटौमृन्मयधीमयौ'इति । तथाचश्रुतिर्विदुषोविदेहकैवल्यकालेबाह्यद्रव्यस्यस्वकारणेलयंदर्शयति गताःकलाः पंचदशप्रतिष्ठाइति । कलाः प्राणमनःप्रभृतयः प्रतिष्ठाःउपादानकारणानिप्रतिगताः तथाइमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंयंतीतिमनःकल्पितानांकलानांपुरुषेलयंदर्शयति अतःशा

अप्रदायद्विजातिभ्योमात्सर्याविष्टचेतसः ॥ वयंतेराजकलयोभविष्यामविशांपते ३१ अदातारोशरण्याश्चराजकिल्बिषभागिनः ॥ दोषाणामेवभोक्तारोनसुखा नांकदाचन ३२ अनिष्ट्वाचमहायज्ञैरकृत्वाचपितृस्वधाम् ॥ तीर्थेष्वनभिसंक्रुत्यप्रव्रजिष्यसिचेत्प्रभो ३३ छिन्नाभ्रमिवगंताऽसिविलयंमारुतेरितम् ॥ लोकयो रुभयोर्भ्रष्टोह्यंतरालेव्यवस्थितः ३४ अंतर्बहिश्चयत्किंचिन्मनोव्यासंगकारकम् ॥ परित्यज्यभवेत्त्यागीनहित्वाप्रतितिष्ठति ३५ एतस्मिन्वर्तमानस्यविधावप्र तिषेधिते ॥ ब्राह्मणस्यमहाराजनोच्छित्तिर्विद्यतेक्वचित् ३६ निहत्यशत्रूंस्तरसासमृद्धान्शक्रोयथादैत्यबलानिसंख्ये ॥ कःपार्थशोचेन्निरतःस्वधर्मेपूर्वैःस्मृतेपा र्थिवशिष्टजुष्टे ३७ क्षात्रेणधर्मेणपराक्रमेणजित्वामहींमंत्रविद्भ्यःप्रदाय ॥ नाकस्यपृष्ठेऽसिनरेंद्रगंतानशोचितव्यंभवताऽद्यपार्थ ३८ ॥ इतिश्रीमहाभारतेशां तिपर्वणि राजधर्मानुशासनपर्वणिनकुलवाक्येद्वादशोऽध्यायः ॥ १२ ॥ ॥ सहदेवउवाच ॥ नबाह्यंद्रव्यमुत्सृज्यसिद्धिर्भवतिभारत ॥ शारीरंद्रव्यमुत्सृज्य सिद्धिर्भवतिवानवा १ बाह्यद्रव्यविमुक्तस्यशारीरेष्वनुगृध्यतः ॥ योधर्मोयत्सुखंवास्याद्द्विषतांततथाऽस्तुनः २ शारीरंद्रव्यमुत्सृज्यपृथिवीमनुशासतः ॥ योधर्मोयत्सुखंवास्यात्सुहृदांततथाऽस्तुनः ३ द्व्यक्षरस्तुभवेन्मृत्युस्त्र्यक्षरंब्रह्मशाश्वतम् ॥ ममेतिचभवेन्मृत्युर्नममेतिचशाश्वतम् ४ ब्रह्ममृत्यूततोराजन्ना त्मन्येवसमाश्रितौ ॥ अदृश्यमानौभूतानियोधयेतामसंशयम् ५ अविनाशोऽस्यसत्वस्यनियतोयदिभारत ॥ हत्वाशरीरंभूतानांनहिंसाप्रतिपत्स्यते ६ अथापि चसहोत्पत्तिःसत्वस्यप्रलयस्तथा॥नष्टेशरीरेनष्टःस्याद्वृथाचस्यात्क्रियापथः७तस्मादेकांतमुत्सृज्यपूर्वैःपूर्वतरैश्चयः ॥पंथानिषेवितःसद्भिःसनिषेव्योविजानता८



रीरमेवद्रव्यंबंधनमूलंनबाह्यमितिबाह्यत्यागोव्यर्थः । शारीरद्रव्यत्यागेऽपिमनश्चांचल्यात्पुनरुपादानेसिद्धिर्नभवतीतिनवेत्यनेनउक्तं । तेनदृढत्यागएवसिद्धिकादित्युक्तं अक्षरयोज नास्पष्टा १ । २ । ३ ममेतिस्वीकारः नममेतिपरित्यागश्च एतौमृत्युशाश्वतौसंसारमोक्षयोर्मूलेइत्यर्थः ४ आत्मनिबुद्धौभूतानिशास्त्रकर्तृन्तथाचकेचित्कर्ताऽऽत्मानित्यइतिकेचिदनित्यइति ५ तत्राद्येदोषाभावमाह अविनाशइति ६ सत्वस्यकर्तृत्वधर्मवत्याबुद्धेः ७ द्वितीयेकृतहानादिदोषइत्याह तस्मादिति यस्मादकर्तुरनाशेमोक्षाभावोनाशेदेहारमवादप्रसंगस्तस्मादेकांतमन्यतरं निश्चयंत्यक्त्वाप्राचांपंथास्तन्निष्ठमात्पक्षएवादर्तव्यः । तेनकल्पितस्यशारीरद्रव्यस्यस्वाप्नस्येवत्यागोयुज्यतइत्याशयवानाह तस्मादिति ८

निष्फलंबाह्यद्रव्यत्यागंकृत्वाऽऽन्तरद्रव्यत्यागमकुर्वन्मूढएवेत्याहद्वाभ्यां लब्ध्वापीति ९ । १० तर्हिउभयद्रव्यत्यागःश्रेयानित्याशंक्याह बाह्येति भूतानांबाह्यमाभ्यंतरंचयद्द्रव्यंतत्सर्वंस्व भावंस्वस्यप्रत्यगात्मनोभावं सत्तांपश्यजानीहि तदात्मव्यतिरिक्तंनास्तीत्यर्थः तथाचश्रुतिः । 'आत्मैवेदंसर्वम्'इति येतुपुमांसस्तदात्मरूपंभूतंनित्यसिद्धंपश्यंति वृत्तमितिपाठेऽपिसएवार्थः । तेमहतोभयादुभयद्रव्यसंगजातसंसारान्मुच्यंतेकल्पितस्यमरीचिकोदकस्येवमनस्येवत्यागःकर्तव्योनस्वरूपतस्तस्यनित्यनिवृत्तत्वादितिभावः ११ । १२ मत्येवमापितंनतुज्ञानगर्वेण १३

लब्ध्वाऽपिपृथिवींकृत्स्नांसहस्थावरजंगमाम् ॥ नभुङ्क्तेयोनृपःसम्यङ्निष्फलंतस्यजीवितम् ९ आथवावसतोराजन्वनेवन्येनजीवतः ॥ द्रव्येषुयस्यममताम्नृ त्योरास्येसवर्तते १० बाह्यांतरंचभूतानांस्वभावंपश्यभारत ॥ येतुपश्यंतितद्भूतंमुच्यंतेतेमहाभयात् ११ भवान्पिताभवान्माताभवान्भ्राताभवान्गुरुः ॥ दुःखप्रलापानार्तस्यतन्मेत्वंक्षंतुमर्हसि १२ तथ्यंवायदिवाऽतथ्यंयन्मयैतत्प्रभाषितम् ॥ तद्विद्धिपृथिवीपालभक्त्याभरतसत्तम १३ ॥ ॥ इति श्रीम हाभारते शांतिपर्वणि राजध०सहदेववाक्ये त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ वैशंपायनउवाच ॥ अव्याहरतिकौंतेयेधर्मराजेयुधिष्ठिरे ॥ भ्रातृणांब्रुव तांतांस्तान्विविधान्वेदनिश्चयान् १ महाभिजनसंपन्नाश्रीमत्यायतलोचना ॥ अभ्यभाषतराजेंद्रद्रौपदीयोषितांवरा २ आसीनमृषभंराज्ञांभ्रातृभिःपरिवा रितम् ॥ सिंहशार्दूलसदृशैर्वारणैरिवयूथपम् ३ अभिमानवतीनित्यंविशेषेणयुधिष्ठिरे ॥ लालितासततंराज्ञाधर्मज्ञाधर्मदर्शिनी ४ आमंत्र्यविपुलश्रोणीसाम्ना परमवल्गुना ॥ भर्तारमभिसंप्रेक्ष्यततोवचनमब्रवीत् ५ ॥ द्रौपद्युवाच ॥ इमेतेभ्रातरःपार्थशुष्यंतेस्तोककाइव ॥ वावाश्यमानास्तिष्ठंतिनचैनानभिनंदसे ६ नंदयैतान्महाराजमत्तानिवमहाद्विपान् ॥ उपपन्नेनवाक्येनसततंदुःखभागिनः ७ कथंद्वैतवनेराजन्पूर्वमुक्त्वातथावचः ॥ भ्रातॄनेतान्स्मसहितान्शीतवाता तपार्दितान् ८ वयंदुर्योधनंहत्वामृधेभोक्ष्याममेदिनीम् ॥ संपूर्णांसर्वकामानामाहवेविजयैषिणः ९ विरथांश्चरथान्कृत्वानिहत्यचमहागजान् ॥ संस्तीर्यचरथैर्भू मिंससादिभिररिंदमाः १० यजतांविविधैर्यज्ञैःसमृद्धैराप्तदक्षिणैः ॥ वनवासकृतंदुःखंभविष्यतिसुखायवः ११ इत्येतानेवमुक्त्वात्वंस्वयंधर्मभृतांवर ॥ कथमद्यपु नर्वीरविनिहंसिमनांसिनः १२ नक्लीबोवसुधांभुंक्तेनक्लीबोधनमश्नुते ॥ नक्लीबस्यगृहेपुत्रामत्स्याःपंकइवासते १३ नादंडःक्षत्रियोभातिनादंडोभूमिमश्नुते ॥ नादंडस्यप्रजाराज्ञःसुखंविंदंतिभारत १४ मित्रतासर्वभूतेषुदानमध्ययनंतपः ॥ ब्राह्मणस्यैवधर्मःस्यान्नराज्ञोराजसत्तम १५ असतांप्रतिषेधश्चसतांचपरिपा लनम् ॥ एषराज्ञांपरोधर्मःसमरेचापलायनम् १६ यस्मिन्क्षमाचक्रोधश्चदानादानेभयाभये ॥ निग्रहानुग्रहौचोभौसवैधर्मविदुच्यते १७ नश्रुतेननदानेन नसांत्वेननचेज्यया ॥ त्वयेयंपृथिवीलब्धानसंकोचेनचाप्युत १८

॥ इतिशांतिपर्वणिरा० नीलकंठीये भारतभावदीपे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥ अव्याहरति वक्तव्याभावान्नतुक्रोधान्मौर्ख्याद्वा १ । २ । ३ । ४ साम्नासांत्ववादेन वल्गुनारमणीयेन ५ स्तोककाश्चातकावावाश्यमानाःपुनःपुनः क्रंदंतः ६ उपपन्नेनयुक्तियुक्तेन ७ । ८ सर्वकामानांसर्वैरर्थैः ९ । १० । ११ । १२ क्लीबोऽधीरः १३ । १४ । १५ प्रतिषेधोदंडोराज्यान्निर्वासनंवा १६ दानमादानंचवे १७ संकोचेनयाच्यया १८

त्रिभिरंगैस्त्रिभूमिः शक्तिभिः ताश्च प्रभुशक्तिर्मंत्रशक्तिरुत्साहशक्तिस्ताभिरनुत्तमं श्रेष्ठम् १९ । २० । २१ अधरेणपश्चिमतः २२ क्रौंचद्वीपादिवशीकरणंसिद्धद्वाराराजसूये २३ । २४।२५ । २६
२७ । २८ । २९ । ३० । ३१ । ३२ । ३३ नस्यकर्मनासाद्वारभेषजग्रहणं नष्टेतिपाठेनष्टाभ्रेतास्तद्बाधानिवृत्त्यर्थैरक्षाबंधनादिभिःकर्मभिः ३४ । ३५ । एतेषांएतानननादृत्य ३६।३७।३८ । ३९

यत्तद्बलममित्राणांतथावीर्यसमुद्यतम् ॥ हस्त्यश्वरथसंपन्नंत्रिभिरंगैरनुत्तमम् १९ रक्षितंद्रोणकर्णाभ्यामश्वत्थाम्नाकृपेणच ॥ तत्त्वयानिहतंवीरतस्माद्भुंक्ष्व
वसुंधराम् २० जुंबूद्वीपोमहाराजनानाजनपदैर्युतः ॥ त्वायापुरुषशार्दूलदंडेनमृदितःप्रभो २१ जंबुद्वीपेनसदृशःक्रौंचद्वीपोनराधिप ॥ अधरेणमहामेरोर्दंडेन
मृदितस्त्वया २२ क्रौंचद्वीपेनसदृशःशाकद्वीपोनराधिप ॥ पूर्वेणतुमहामेरोर्दंडेनमृदितस्त्वया २३ उत्तरेणमहामेरोःशाकद्वीपेनसंमितः ॥ भद्राश्वःपुरुषव्याघ्र
दंडेनमृदितस्त्वया २४ द्वीपाश्वसांतरद्वीपानानाजनपदाश्रयाः ॥ विगाह्यसागरंवीरदंडेनमृदितास्त्वया २५ एतान्यप्रतिमेयानिकृत्वाकर्माणिभारत ॥
नप्रीयसेमहाराजपूज्यमानोद्विजातिभिः २६ सत्वंभ्रातॄनिमान्दृष्ट्वाप्रतिनंदस्वभारत ॥ ऋषभानिवसंमत्तान्गजेंद्रानूर्जितानिव २७ अमरप्रतिमाःसर्वेशत्रुसाहाः
परंतपाः॥ एकोऽपिहिसुखायैषांममस्यादितिमेमतिः २८ किंपुनःपुरुषव्याघ्रपतयोमेनरर्षभाः ॥ समस्तानींद्रियाणीवशरीरस्यविचेष्टने २९ अनृतंनाब्रवी
च्छ्वश्रूःसर्वज्ञासर्वदर्शिनी ॥ युधिष्ठिरस्त्वांपांचालिसुखेधास्यत्यनुत्तमे ३० हत्वाराजसहस्राणिबहून्याशुपराक्रमः ॥ तद्व्यर्थंसंप्रपश्यामिमोहात्तवजनाधिप ३१
येषामुन्मत्तकोज्येष्ठःसर्वेतेऽप्यनुसारिणः ॥ तवोन्मादान्महाराजसोन्मादाःसर्वपांडवाः३२ यदिहिस्युरनुन्मत्ताभ्रातरस्तेनराधिप ॥ बद्ध्वात्वांनास्तिकैःसार्धंप्रशा
सेयुर्वसुंधराम् ३३ कुरुतेमूढएवंहियःश्रेयोनाधिगच्छति ॥ धूपैरंजनयोगैश्चनस्यकर्मभिरेवच ३४ भेषजैःसचिकित्स्यःस्याद्यउन्मार्गेणगच्छति ॥ साऽहंसर्वाध
मालोकेस्त्रीणांभरतसत्तम ३५ तथाविनिकृतापुत्रैर्याऽहमिच्छामिजीवितुम् ॥ एतेषांयतमानानांनमेऽद्यवचनंमृषा ३६ त्वंतुसर्वांमहींत्यक्त्वाकुरुषेस्वयमा
पदम् ॥ यथाऽऽस्तांसंमतौराज्ञांपृथिव्यांराजसत्तम ३७ मांधाताचांबरीषश्चतथाराजन्विराजसे ॥ प्रशाधिपृथिवींदेवींप्रजाधर्मेणपालयन् ३८ सपर्वतवन
द्वीपांमाराजन्विमनाभव ॥ यजस्वविविधैर्यज्ञैर्युध्यस्वारीन्प्रयच्छच ॥ धनानिभोगान्वासांसिद्विजातिभ्योनृपोत्तम ३९ ॥ इतिश्रीमहाभारतेशांतिपर्व
णिराजधर्मानुशासनप०द्रौपदीवाक्येचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ वैशंपायनउवाच ॥ याज्ञसेन्यावचःश्रुत्वापुनरेवार्जुनोऽब्रवीत् ॥ अनुमान्यमहाबाहुंज्ये
ष्ठंभ्रातरमच्युतम् १ ॥ अर्जुनउवाच ॥ दंडःशास्तिप्रजाःसर्वादंडएवाभिरक्षति ॥ दंडःसुप्तेषुजागर्तिदंडंधर्मंविदुर्बुधाः २ दंडःसंरक्षतेधर्मंतथैवार्थंजनाधिप ॥
कामंसंरक्षतेदंडस्त्रिवर्गोदंडउच्यते ३ दंडेनरक्ष्यतेधान्यंधनंदंडेनरक्ष्यते ॥ एवंविद्वन्नुपाधत्स्वभावंपश्यस्वलौकिकम् ४

॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनैलकंठीयेभारतभावदीपेचतुर्दशोऽध्यायः ॥ १४ ॥ याज्ञसेन्यावचइति १ नादंडःक्षत्रियोभातीतिद्रौपद्युक्तिमुपबृंहयतिदंडइति २ । ३ उपाधत्स्वदं
डमितिशेषः लौकिकंभावंलोकव्यवहारंपश्यस्वपश्य । यद्वा शेभनश्चासावलौकिकश्चतंभावंशास्त्रैकगम्यमानंदात्मानमंतर्दृष्ट्यापश्यबहिश्चदंडमुपाधत्स्वतेनसहद्वैवोक्तोऽर्थःप्रदर्शितोभवति ४



५ सांसिद्धिकेपशुवद्दंडाईस्वभावे ६ । ७ दंडशब्दार्थमाह यस्मादिति दमयतिताडनादिना दंडयतिवित्तमपहरति ८ भुज्यतइतिभुजंभुक्तंतन्मात्रार्पणंवेतनप्रदानमित्यर्थः । दानंराज्ञेद्रव्या
र्पणं । निर्दंडोदास्यमेवकारयेन्नत्वस्यदंडोऽस्ति । 'शूद्रंतुकारयेद्दास्यम्'इतिमनूक्तेः एतच्चाल्पापराधेज्ञेयं ९ । १० श्यामोद्वाभिघातेनदंड्यस्यांध्यजनकत्वात् लोहिताक्षोदंडयितुःक्रोधातिश

राजदंडभयादेकेपापाःपापंनकुर्वते ॥ यमदंडभयादेकेपरलोकभयादपि ५ परस्परभयादेकेपापाःपापंनकुर्वते ॥ एवंसांसिद्धिकेलोकेसर्वंदंडेप्रतिष्ठितम् ६ दंडस्यै
वभयादेकेनखादंतिपरस्परम् ॥ अंधेतमसिमज्जेयुर्यदिदंडोनपालयेत् ७ यस्माददांतान्दमयत्यशिष्टान्दंडयत्यपि ॥ दमनाद्दंडनाच्चैवतस्माद्दंडंविदुर्बुधाः ८ वा
चादंडोब्राह्मणानांक्षत्रियाणांभुजार्पणम् ॥ दानदंडाःस्मृतावैश्यानिर्दंडःशूद्रउच्यते ९ असंमोहायमर्त्यानामर्थसंरक्षणायच ॥ मर्यादास्थापितालोकेदंडसंज्ञावि
शांपते १० यत्रश्यामोलोहिताक्षोदंडश्चरतिसूद्यतः ॥ प्रजास्तत्रनमुह्यंतिनेताचेत्साधुपश्यति ११ ब्रह्मचारीगृहस्थश्चवानप्रस्थश्चभिक्षुकः ॥ दंडस्यैवभयादेते
मनुष्यावर्त्मनिस्थिताः १२ नाभीतोयजतेराजन्नाभीतोदातुमिच्छति ॥ नाभीतःपुरुषःकश्चित्समयेस्थातुमिच्छति १३ नाच्छित्त्वापरमर्माणिनाकृत्वाकर्मदु
ष्करम् ॥ नाहत्वामत्स्यघातीवप्राप्नोतिमहतींश्रियम् १४ नाघ्नतःकीर्तिरस्तीहनवित्तंनपुनःप्रजाः ॥ इंद्रोवृत्रवधेनैवमहेंद्रःसमपद्यत १५ यएवदेवाहंतारस्ताँल्लो
कोऽर्चयतेभृशम् ॥ हंतारुद्रस्तथास्कंदःशक्रोऽग्निर्वरुणोयमः १६ हंताकालस्तथावायुर्मृत्युर्वैश्रवणोरविः ॥ वसवोमरुतःसाध्याविश्वेदेवाश्चभारत १७ एता
न्देवान्नमस्यंतिप्रतापप्रणताजनाः ॥ नब्रह्माणंनधातारंनपूषाणंकथंचन १८ मध्यस्थान्सर्वभूतेषुदांतान्शमपरायणान् ॥ जयंतेमानवाःकेचित्प्रशांताःसर्वकर्मसु
१९ नहिपश्यामिजीवंतंलोकेकंचिदहिंसया ॥ सत्वैःसत्वाहिजीवंतिदुर्बलैर्बलवत्तराः २० नकुलोमूषिकानत्तिबिडालोनकुलंतथा ॥ बिडालमत्तिश्वाराजन्श्वानं
व्यालमृगस्तथा २१ तानत्तिपुरुषःसर्वान्पश्यकालोयथागतः ॥ प्राणस्यान्नमिदंसर्वंजंगमंस्थावरंचयत् २२ विधानंदैवविहितंतत्रविद्वान्नमुह्यति ॥ यथासृष्टोऽसि
राजेंद्रतथाभवितुमर्हसि २३ विनीतक्रोधहर्षाहिमंदावनमुपाश्रिताः ॥ विनावधंनकुर्वंतितापसाःप्राणयापनम् २४ उदकेबहवःप्राणाःपृथिव्यांचफलेषुच ॥ नचक
श्चिन्नतान्हंतिकिमन्यत्प्राणयापनात् २५ सूक्ष्मयोनीनिभूतानितर्कगम्यानिकानिचित् ॥ पक्ष्मणोऽपिनिपातेनयेषांस्यात्स्कंधपर्ययः २६ ग्रामान्निष्क्रम्यमुनयोवि
गतक्रोधमत्सराः ॥ वनेकुटुंबधर्माणोदृश्यंतेपरिमोहिताः २७ भूमिंभित्त्वौषधीश्छित्त्वावृक्षादीनंडजान्पशून् ॥ मनुष्यास्तन्वतेयज्ञांस्तेस्वर्गंप्राप्नुवंतिच २८ दंडनी
त्यांप्रणीतायांसर्वेसिद्ध्यंत्युपक्रमाः॥कौंतेयसर्वभूतानांतत्रमेनास्तिसंशयः२९दंडश्चेन्नभवेल्लोकेविनश्येयुरिमाःप्रजाः॥ जलेमत्स्यानिवाभक्ष्यन्दुर्बलान्बलवत्तराः३०

५ वात् सूद्यतःसुतरामुद्यतः साधुयथापराधं ११ । १२ । १३ महतींश्रियंइंद्रलोकादि मत्स्यघातीवेत्यनपकारिणामपिवधःकार्यइत्यत्रदृष्टांतः १४ । १५ । १६ । १७ । १८ । १९ । २० व्या
लमृगश्चित्रव्याघ्रः २१ । २२ यथासृष्टःशौर्यतेजोधृतिर्दाक्ष्यमित्याद्युक्तस्वभावःक्षत्रियःसृष्टोऽसिधात्रा २३ विनीतावपनीतौक्रोधहर्षौयैस्ते मंदाःक्षत्रियाः २४ । २५ स्कंधपर्ययोदेहस्यविपर्य
यः २६ । २७ । २८ ततोदंडयुक्तानीतिर्दंडनीतिस्तस्यांप्रणीतायांप्रवर्तितायां २९ अभक्ष्यन्नभक्षयेयुः ३०

संतर्जिताःफूत्कारेण ३१ । ३२ भोगायपालनाय मर्यादायाइतिशेषः ३३ । ३४ सुनीतिंनयनायविनयप्रापणाय ३५ । ३६ कल्याणीमपत्यवर्तांनदुहेतलोकः उद्वहनंनगच्छेत्तर्कितुल्यमिथःदेव ३७ विष्वग्लोपःसर्वोच्छेदः सेतवोमर्यादाःममत्वंपरिच्छिन्नंनजानीयुः सर्वःसर्वत्रममत्वंकुर्यादित्यर्थः ३८ तिष्ठेयुरनुतिष्ठेयुः ३९ आश्रिताआश्रमिणः ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

सत्यंचेदंब्रह्मणापूर्वमुक्तंदंडःप्रजारक्षतिसाधुनीतः ॥ पश्याग्नयश्चप्रतिशाम्यभीताःसंतर्जितादंडभयाज्ज्वलंति ३१ अंधंतमइवेदंस्यान्नप्राज्ञायतकिंचन ॥ दंड
श्चेन्नभवेल्लोकेविभजन्साध्वसाधुनी ३२ येऽपिसंभिन्नमर्यादानास्तिकावेदनिंदकाः ॥ तेऽपिभोगायकल्पंतेदंडेनाशुनिपीडिताः ३३ सर्वोदंडजितोलोकोदुर्लभो
हिशुचिर्जनः ॥ दंडस्यहिभयाद्भीतोभोगायैवप्रवर्तते ३४ चातुर्वर्ण्यप्रमोदायसुनीतिनयनायच ॥ दंडोविधात्राविहितोधर्मार्थौभुविरक्षितुम् ३५ यदिदंडान्न
बिभ्येयुर्वयांसिश्वापदानिच ॥ अद्युःपशून्मनुष्यांश्चयज्ञार्थानिहवींषिच ३६ नब्रह्मचार्यधीयीतकल्याणींनदुहेतगाम् ॥ नकन्योद्वहनंगच्छेद्यदिदंडोनपाल
येत् ३७ विष्वग्लोपःप्रवर्तेतभिद्येरन्सर्वसेतवः ॥ ममत्वंनप्रजानीयुर्यदिदंडोनपालयेत् ३८ नसंवत्सरसत्राणितिष्ठेयुरकुतोभयाः ॥ विधिवद्दक्षिणावंतियदिदं
डोनपालयेत् ३९ चरेयुर्नाश्रमंधर्मंयथोक्तंविधिमाश्रिताः ॥ नविद्यांप्राप्नुयात्कश्चिद्यदिदंडोनपालयेत् ४० नचोष्ट्रानबलीवर्दानाश्वाश्वतरगर्दभाः ॥ युक्तावहे
युर्यानानियदिदंडोनपालयेत् ४१ नप्रेष्यावचनंकुर्युर्नबालाजातुकर्हिचित् ॥ नतिष्ठेद्युवतीधर्मेयदिदंडोनपालयेत् ४२ दंडेस्थिताःप्रजाःसर्वाभयंदंडेविदुर्बुधाः ॥
दंडस्वर्गोमनुष्याणांलोकोऽयंसुप्रतिष्ठितः ४३ नतत्रकूटंपापंवावंचनावाऽपिदृश्यते ॥ यत्रदंडःसुविहितश्चरत्यरिविनाशनः ४४ हविःश्वाप्रलिहेद्दृष्ट्वादंडश्चेन्नो
द्यतोभवेत् ॥ हरेत्काकःपुरोडाशंयदिदंडोनपालयेत् ४५ यदीदंधर्मतोराज्यंविहितंयद्यधर्मतः ॥ कार्यस्तत्रनशोकोवैभुंक्ष्वभोगान्यजस्वच ४६ सुखेनधर्म
श्रीमंतश्चरंतिशुचिवाससः ॥ संवर्धतःफलैर्दानैर्भुंजानाश्चान्नमुत्तमम् ४७ अर्थेसर्वेसमारंभाःसमायत्तानसंशयः ॥ सचदंडेसमायत्तःपश्यदंडस्यगौरवम् ४८ लो
कयात्रार्थमेवेहधर्मप्रवचनंकृतम् ॥ अहिंसासाधुहिंसेतिश्रेयान्धर्मपरिग्रहः ४९ नात्यंतंगुणवत्किंचिन्नचाप्यत्यंतनिर्गुणम् ॥ उभयंसर्वकार्येषुदृश्यतेसाध्वसाधु
वा ५० पशूनांवृषणंछित्त्वाततोभिंदंतिमस्तकम् ॥ वहंतिबहवोभारान्बध्नंतिदमयंतिच ५१ एवंपर्याकुलेलोकेवितथैर्जर्जरीकृते ॥ तैस्तैर्न्यायैर्महाराजपुरा
णंधर्ममाचर ५२ यजदेहिप्रजारक्षधर्मंसमनुपालय ॥ अमित्राञ्जहिकौंतेयमित्राणिपरिपालय ५३ माचतेनिघ्नतःशत्रून्मन्युर्भवतुपार्थिव ॥ नतत्रकिल्बिषं
किंचित्कर्तुर्भवतिभारत ५४ आततायीहियोहन्यादाततायिनमागतम् ॥ नतेनभ्रूणहासस्यात्मन्युस्तंमन्युमार्छति ५५

४७ । ४८ क्रोष्ठप्रविष्टन्याप्रादेरहिंसागवामेवहिंसाभवति । अतएतयोर्मध्येधर्मस्यपरिग्रहआर्तत्राणंश्रेयान् ४९ । ५० मस्तकंभिंदंतिशृंगच्छेदिर्मामूदिति । मस्तकानितिपाठेनासिकाः ५१ ज
र्जरीकृतेदंडेन वधमविभारवहनादिकार्यंनस्यादतःपुराणमेवधर्ममाचर । मत्वन्नप्रवाहायातंहिंसादिदोषमवेक्षस्वेतिभावः ५२ । ५३ मन्युर्दैन्यम् ५४ आततायीशस्त्रपाणिः मन्युःक्रोधः मन्युं
क्रोधमार्छति आसर्वतऋच्छतिप्राप्नोति 'मन्युःकर्तानाहंकर्ता'इतिश्रुतेस्तत्रनभ्रूणहाभवतीत्यर्थः ५५



वस्तुतस्त्ववध्यएवआत्मा देहस्तुशालावदनात्मा तेनदेहेनदेहेनिहतेनात्माहंतावावध्योवेत्याह अवध्यइत्यादिना ५६ । ५७ । ५८ ॥ इतिशांतिपर्वणिरा०नीलकंठीयेभारतभावदीपे पंचदशो
ऽध्यायः ॥ १५ ॥ ॥ अर्जुनस्येति ननुदेहश्चेच्छालातुल्यस्तर्हितत्पीडयाकःपीड्यतेइत्याशंक्यमनएवपीड्यतेनात्मेतिवक्तुमयमध्यायः १ नवशक्नुमःकर्तुमितिशेषः २ । ३ । ४ । ५
आयत्यामुत्तरकालेतदात्वेवर्तमानकाले अगतिर्दुर्मार्गः गतिःसन्मार्गः ६ राज्यंप्रतिहेतुंराज्यंकर्तुंयुक्तिं ७ देहमनसीदुःखाश्रयेनत्वात्मेतिज्ञात्वासुखेनराज्यंकर्तव्यमितितात्पर्यं । निर्द्वंद्वंशरीरं

अवध्यःसर्वभूतानामंतरात्मानसंशयः ॥ अवध्येचात्मनिकथंवध्योभवतिकस्यचित् ५६ यथाहिपुरुषःशालांपुनःसंप्रविशेन्नवाम् ॥ एवंजीवःशरीराणितानि
तानिप्रपद्यते ५७ देहान्पुराणानुत्सृज्यनवान्संप्रतिपद्यते ॥ एवंमृत्युमुखंप्राहुर्जनायेतत्त्वदर्शिनः ५८ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनप
र्वणिअर्जुनवाक्येपंचदशोऽध्यायः ॥ १५ ॥ ॥ ॥ वैशंपायनउवाच ॥ अर्जुनस्यवचःश्रुत्वाभीमसेनोऽत्यमर्षणः ॥ धैर्यमास्थायतेजस्वीज्येष्ठंभ्रातरम
ब्रवीत् १ राजन्विदितधर्मोऽसिनतेऽस्त्यविदितंक्वचित् ॥ उपशिक्षामतेवृत्तंसदैवनचशक्नुमः २ नवक्ष्यामिनवक्ष्यामीत्येवंमेमनसिस्थितम् ॥ अतिदुः
खात्तुवक्ष्यामितन्निबोधजनाधिप ३ भवतःसंप्रमोहेनसर्वंसंशयितंकृतम् ॥ विक्लवत्वंचनःप्राप्तमबलत्वंतथैवच ४ कथंहिराजालोकस्यसर्वशास्त्रविशारदः ॥ मो
हमापद्यसेदैन्याद्यथाकापुरुषस्तथा ५ अगतिश्चगतिश्चैवलोकस्यविदितातव ॥ आयत्यांचतदात्वेचनतेऽस्त्यविदितंप्रभो ६ एवंगतेमहाराजराज्यंप्रतिजना
धिप ॥ हेतुमत्रप्रवक्ष्यामितामिहैकमनाःशृणु ७ द्विविधोजायतेव्याधिःशारीरोमानसस्तथा ॥ परस्परंतयोर्जन्मनिर्द्वंद्वंनोपलभ्यते ८ शारीराज्जायतेव्याधि
र्मानसोनात्रसंशयः ॥ मानसाज्जायतेवाऽपिशारीरइतिनिश्चयः ९ शारीरंमानसंदुःखंयोऽतीतमनुशोचति ॥ दुःखेनलभतेदुःखंद्वावनर्थौचविंदति १० शीतो
ष्णेचैववायुश्चत्रयःशारीरजागुणाः ॥ तेषांगुणानांसाम्यंयत्तदाहुःस्वस्थलक्षणम् ११ तेषामन्यतमोद्रेकेविधानमुपदिश्यते ॥ उष्णेनबाध्यतेशीतंशीतेनोष्णं
प्रबाध्यते १२ सत्वंरजस्तमइतिमानसाःस्युस्त्रयोगुणाः ॥ तेषांगुणानांसाम्यंयत्तदाहुःस्वस्थलक्षणम् १३ तेषामन्यतमोत्सेकेविधानमुपदिश्यते ॥ हर्षेण
बाध्यतेशोकोहर्षःशोकेनबाध्यते १४ कश्चित्सुखेवर्तमानोदुःखस्यस्मर्तुमिच्छति ॥ कश्चिद्दुःखेवर्तमानःसुखस्यस्मर्तुमिच्छति १५ सत्वंनदुःखीदुःखस्य
नसुखीचसुखस्यवा ॥ नदुःखीसुखजातस्यनसुखीदुःखजस्यवा १६ स्मर्तुमिच्छसिकौरव्यदिष्टंहिबलवत्तरं ॥ अथवातेस्वभावोऽयंयेनपार्थिवक्लिश्यसे १७

विनाव्याधिर्नास्ति मनोविनाआधिर्नास्तीत्यर्थः ८ । ९ । १० शीतोष्णेकफपित्ते वायुर्वातः ११ विधानंचिकित्सा उष्णेनद्रव्येण १२ । १३ । १४ कश्चिदिति कश्चिन्मूढोदिव्यरूपा
दिसुखकालेनष्टंपुत्रादिस्मरन्शोकेनहर्षंबाधते । कश्चिद्दुःखकालेऽतीतंसुखंस्मरन्हर्षेणशोकंबाधते । इदमुभयंदेहाद्यभिमानविषयं १५ त्वंतुशारीरमानसाभ्यामन्यःकालत्रयेऽपिनदुःखी
नवासुखी । अतस्तदुभयस्मरणानर्हत्वात्सुखकालेदुःखंदुःखकालेसुखंवास्मर्तुंनार्हसि अथापिचेत्स्मरसितर्हिदैवमेवबलीयइत्याहसार्धेनसद्यति १६ अथतेतवदेहादिसंघातस्यमानिनःस्वभावएवे
तिचेत्क्लिश्रौपदीक्लेशादिकंदुःखंनस्मर्तुमर्हस्यपितुअर्हस्येवेत्याह अथवेत्यादिना १७

१८ । १९ । २० । २१ यच्चयथाचतेद्रोणभीष्माभ्यामात्मतुल्याभ्यांसहयुद्धमासीत्ततथातेतवचात्मसमेनमनसाएकेनयोद्धव्यमुपस्थितमितियोजना । द्रोणादिवन्मनोऽपित्वत्तोऽन्यदित्याशयः । एकेनमिर्विकल्पात्स्थेनाऽऽत्ममनोनाशोभवतीत्यर्थः २२ । २३ तस्मिन्मनसिवासनातंतुसंतानरूपेअनिर्जितेसतिदेहांतरेऽपिपूर्वसंस्कारात्तवयुध्यतस्तस्ययुद्धमापिरानिवार्येत्याहतस्मिन्निति २४ तस्मादिति यस्मादेवंतस्मादद्यैवस्वकर्मभिर्यमाद्यष्टांगैर्व्यक्तंस्थूलशरीरंत्यक्त्वाऽव्यक्तरूपस्यमनसःपरंशत्रुभूतमैकात्म्यं गंतव्यंप्राप्तव्यं अतोयुध्यस्व मनोजयार्थंसन्नद्धोभवेत्यर्थः २५ तस्मिन्म

दृष्ट्वासभागतांकृष्णामेकवस्त्रांरजस्वलाम् ॥ मिषतांपांडुपुत्राणांनतस्यस्मर्तुमर्हसि १८ प्रव्राजनंचनगरादजिनैश्चविवासनम् ॥ महारण्यनिवासश्चनतस्य स्मर्तुमर्हसि १९ जटासुरात्परिक्लेशंचित्रसेनेनचाहवम् ॥ सैंधवाच्चपरिक्लेशंकथंविस्मृतवानसि २० पुनरज्ञातचर्यायांकीचकेनपदावधम् ॥ द्रौपद्याराज पुत्र्याश्चकथंविस्मृतवानसि २१ यच्चतेद्रोणभीष्माभ्यांयुद्धमासीदरिंदम ॥ मनसैकेनयोद्धव्यंतत्तेयुद्धमुपस्थितम् २२ यत्रनास्तिशरैःकार्यंनमित्रैर्नचबंधु भिः ॥ आत्मनैकेनयोद्धव्यंतत्तेयुद्धमुपस्थितम् २३ तस्मिन्ननिर्जितेयुद्धेप्राणान्यदिविमोक्ष्यसे ॥ अन्यंदेहंसमास्थायततस्तैरपियोत्स्यसे २४ तस्माद द्यैवगंतव्यंयुद्धचस्वभरतर्षभ ॥ परमव्यक्तरूपस्यव्यक्तंत्यक्त्वास्वकर्मभिः २५ तस्मिन्ननिर्जितेयुद्धेकामवस्थांगमिष्यसि ॥ एतज्जित्वामहाराजकृतकृ त्योभविष्यसि २६ एतांबुद्धिंविनिश्चित्यभूतानामागतिंगतिम् ॥ पितृपैतामहेवृत्तेशाधिराज्यंयथोचितम् २७ दिष्ट्याद्दुर्योधनःपापोनिहतःसानुगोयुधि ॥ द्रौपद्याःकेशपाशस्यदिष्ट्यात्वंपदवींगतः २८ यजस्ववाजिमेधेनविधिवद्दक्षिणावता ॥ वयंतेकिंकराःपार्थवासुदेवश्चवीर्यवान् २९ ॥ इतिश्रीमहाभारतेशां तिपर्वणिराजधर्मानुशासनपर्वणिभीमवाक्येषोडशोऽध्यायः ॥ १६ ॥ ॥ ध ॥ ॥ युधिष्ठिरउवाच ॥ असंतोषःप्रमादश्चमदोरागोप्रशांतता ॥ बलंमोहोऽ भिमानश्चाप्युद्वेगश्चैवसर्वशः १ एभिःपाप्मभिराविष्टोराज्यंत्वमभिकांक्षसे ॥ निरामिषोविनिर्मुक्तःप्रशांतःसुसुखीभव २ यइमामखिलांभूमिंशिष्यादेको महीपतिः ॥ तस्याप्युदरमेकंवैकिमिदंत्वंप्रशंससि ३ नाह्नापूरयितुंशक्यानमासैर्भरतर्षभ ॥ अपूर्यांपूरयन्निच्छामायुषाऽपिनशक्नुयात् ४ यथेद्धःप्रज्वलत्य ग्निरसमिद्धःप्रशाम्यति ॥ अल्पाहारतयात्वग्निंशमयौदर्यमुत्थितम् ५ आत्मोदरकृतेप्राज्ञःकरोतिविघसंबहु ॥ जयोदरंपृथिव्यातेश्रेयोनिर्जितयाजितम् ६ मानुषान्कामभोगांस्त्वमैश्वर्यंचप्रशंससि ॥ अभोगिनोऽबलाश्चैवयांतिस्थानमनुत्तमम् ७

नांसि कामवस्थां आवाप्स्यामित्यर्थः एतन्मनः २६ एतांमनोदेहाभ्यामन्यश्चात्मेत्येवंरूपां । भूतानामागतिंगतिंचमनसातादात्म्येनकृतामवेक्ष्यतदपहायहर्षशोकविमुक्तःसन्राज्यंकुर्वित्यर्थः २७ । २८ । २९ ॥ इतिशांतिपर्वणिराज० नीलकंठीयेभारतभावदीपेषोडशोऽध्यायः १६ ॥ ७ ॥ असंतोषइति मनस्तादात्म्यंत्यक्त्वाहर्षविषादशून्योराज्यंयज्ञांश्चकुर्वित्युक्तं तत्रत्यागो वाङ्मात्रेणनभवतिकिंतुमनोनिरोधेन सचसंतोषैकाऽपविनयवैराग्यशांतिधैर्यविवेकाहंकारत्यागानुद्वेगादिनासाध्यः राज्यंत्वसंतोषादिमताकर्तव्यमतोराज्याकांक्षीत्वपापाडित्यंमाकुरु किंतु राज्यंत्यक्त्वासंतोषादिनिष्ठएवभवेतिश्लोकद्वयार्थः १ । २ । ३ । ४ इद्धःप्रदीप्तः ५ श्रेयसापरलोकभयेनैवपृथिवीजिताभवतीतितेनजितंजयएवास्तीतिभावः ६ अबलास्तपःकृशाः ७

अलब्धलाभोयोगो लब्धसंरक्षणंक्षेमस्तदुभयंधर्माधर्मात्मकसंसाररूपत्वान्महद्भयंतस्मान्मुच्यस्वमुक्तोभव ८ एकेति व्याघ्रइवस्वार्थपरएवराजाऽतोबध्यते पारार्थ्यंत्वस्यानुषंगिकंनमोचयितुंक्षम मितिभावः ९ विषयानिति बहिरर्थांस्त्यक्त्वाशांतःसंन्यासीसन्नबध्यतइत्युक्तं तद्बुद्धयंतरंबुद्धेर्विपर्ययोयथातथापश्यजानीहि १० एवंचेत्पत्राहारादिकंमुनयोनकुर्युरितिद्वयोःश्लोकयोर्भावः ११ १२ । १३ मनसैवत्यागःकार्यइत्येतन्निरस्यति निरामिषाइति अतआत्मानंत्यागीतिवदन्नमृषावादीभवसीत्यर्थः १४ ईजानावर्णाश्रमाद्यभिमानिनः गताइतिशेषः मोक्षिणोनिःसंगाः १५ १६ बंधनंराज्यसंगस्ताभ्यामामिषाभ्याम् १७ यत्तुपितृपैतामहंराज्यमित्युक्तंतत्रापिस्वस्यासंगंदर्शयति अपिगाथामिति १८ । १९ यत्तूक्तंदिष्ट्याद्दुर्योधनोहतइतितत्राह प्रज्ञेति मंदत्वादे

योगःक्षेमश्चराष्ट्रस्यधर्माधर्मौत्वयिस्थितौ ॥ मुच्यस्वमहतोभारात्त्यागमेवाभिसंश्रय ८ एकोदरकृतेव्याघ्रःकरोतिविघसंबहु ॥ तमन्येऽप्युपजीवंतिमंदालोभव शानुगाः ९ विषयान्प्रतिसंगृह्यसंन्यासंकुर्वतेयदि ॥ नचतुष्यंतिराजानःपश्यबुद्ध्यंतरंयथा १० पत्राहारैरश्मकुट्टैर्दंतोलूखलिकैस्तथा ॥ अब्भक्षैर्वायुभक्षै श्चतैरयंनरकोजितः ११ यस्त्विमांवसुधांकृत्स्नांप्रशासेदखिलांनृपः ॥ तुल्याश्मकांचनोयश्चसकृतार्थोनपार्थिवः १२ संकल्पेषुनिरारंभोनिराशोनिर्ममोभव ॥ अशोकंस्थानमातिष्ठइहचामुत्रचाव्ययम् १३ निरामिषानशोचंतिशोचसित्वंकिमामिषम् ॥ परित्यज्यामिषंसर्वंमृषावादात्प्रमोक्ष्यसे १४ पंथानोपितृयानश्चदे वयानश्चविश्रुतौ ॥ ईजानाःपितृयानेनदेवयानेनमोक्षिणः १५ तपसाब्रह्मचर्येणस्वाध्यायेनमहर्षयः ॥ विमुच्यदेहांस्तेयांतिमृत्योरविषयंगताः १६ आमिषंबंध नंलोकेकर्मेहोक्तंतथाऽऽमिषम् ॥ ताभ्यांविमुक्तःपापाभ्यांपदमाप्नोतितत्परम् १७ अपिगाथांपुरागीतांजनकेनवदंत्युत ॥ निर्द्वंद्वेनविमुक्तेनमोक्षंसमनुपश्य ता १८ अनंतंवतमेवित्तंयस्यमेनास्तिकिंचन ॥ मिथिलायांप्रदीप्तायांनमेदह्यतिकिंचन १९ प्रज्ञाप्रासादमारुह्यअशोच्यान्शोचतोजनान् ॥ जगतीस्थानि वाद्रिस्थोमंदबुद्धीन्वेक्षते २० दृश्यंपश्यतियःपश्यन्सचक्षुष्मान्सबुद्धिमान् ॥ अज्ञातानांचविज्ञानात्संबोधाद्बुद्धिरुच्यते २१ यस्तुवाचंविजानातिबहुमान मियात्सवै ॥ ब्रह्मभावप्रपन्नानांवैद्यानांभावितात्मनाम् २२ यदाभूतपृथग्भावमेकस्थमनुपश्यति ॥ ततएवचविस्तारंब्रह्मसंपद्यतेतदा २३

वप्रज्ञाप्रासादमारोढुमशक्तः । अशोच्यान्स्वर्गतान्दुर्योधनादीन्शोचतस्त्वद्दारादीन्प्रपश्यसि । परदुःखेनदुःखीभवन्मूर्खोऽसीतिभावः २० कस्तर्हिबुद्धिमानित्यतआह दृश्यमिति दृश्यंद्रष्टुं योग्यंकर्तव्यमकर्तव्यंच । अज्ञातंज्ञापयतितस्यकर्तव्यत्वमकर्तव्यत्वंवासंबोधयतिसम्यङ्निश्चाययतिसाबुद्धिस्तद्वान्बुद्धिमान् २१ यत्त्वेतांबुद्धिंविनिश्चित्येत्युक्तंतत्राह यइति यस्तुवैद्यानां विद्यावतांवाचंविजानातिनतुतदर्थंसत्वात्दशोबहुमानमियात् । गुरूनप्युपदेष्टुंयोग्यमात्मानंमन्यते नतुतत्त्वंविदति २२ कस्तर्हितत्त्वंविंदतीत्यतआह यदेति यदायस्मिन्कालेभूतानांवियदादीनांपृथग्भावंनानात्वमेकस्थंएकस्मिन्नात्मनिपर्यवसन्नंविलीनमितियावत् पश्यशरावादीनामिवमृण्मात्रमनुपश्यतिशास्त्राचार्योपदेशमनुध्यानेनसाक्षात्करोतितथातत् एकस्मादेवविस्तारमुत्प त्तिंचपश्यतितदाब्रह्मसंपद्यतेतत्त्वंविंदति २३

तेबुद्धिमंतस्तांगतिंब्रह्मसंपत्तिंयांतिनत्वाद्दशाविद्वांसःशास्त्रमात्राभिज्ञाः यतोऽल्पचेतसः मंदबुद्धयोबहिर्मुखाइत्यर्थः । कथंतर्हिबुद्धिमंतोभवंतीत्यतआह नाबुद्धयोनातपसइति येअतपसोनते अबुद्धयोन तपसैवबुद्धिःप्राप्यतइत्यर्थः २४ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे सप्तदशोऽध्यायः ॥ १७ ॥ ७ ॥ तूष्णींभूतमिति १ बुद्धयर्थंतपोऽनुष्ठातुंवनमेव श्रेयइत्युक्तंतत्रकर्मणैवहिसंसिद्धिमास्थिताजनकादयइत्युक्तेऽगृहेऽपिचित्तशुद्धिकरंयज्ञादिकंतपोऽस्तीत्याख्यायिकामुखेनप्रतिपादयिष्यन्नर्जुनउवाच कथयंतीति २ । ३ पावकंयज्ञादिद्वारा शौचकं ४ धानामृष्टयवाः निरीहंवितृष्णं ५ हेतुमद्युक्तियुक्तं ६ नतेवरोनतेत्वयावरणीयः ७ प्रतिज्ञा सर्वसंगंत्यक्ष्यामीत्येवंरूपा स्वल्पेनापिकुंडिकादिसंग्रहेणनष्टेत्यर्थः ८ एतेनधानामुष्टिना ९

तेजनास्तांगतिंयांतिनाविद्वांसोऽल्पचेतसः ॥ नाबुद्धयोनातपसःसर्वंबुद्धौप्रतिष्ठितम् २४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणियुधिष्ठिर वाक्येसप्तदशोऽध्यायः ॥ १७ ॥ ७ ॥ वैशंपायनउवाच ॥ तूष्णींभूतंतुराजानंपुनरेवार्जुनोऽब्रवीत् ॥ संतप्तःशोकदुःखाभ्यांराजवाक्शल्यपीडितः १ अर्जुनउवाच ॥ कथयंतिपुरावृत्तमितिहासमिमंजनाः ॥ विदेहराज्ञःसंवादंभार्ययासहभारत २ उत्सृज्यराज्यंभिक्षार्थंकृतबुद्धिंनरेश्वरम् ॥ विदेहराजमहिषीदुः खितायदभाषत ३ धनान्यपत्यंदारांश्चरत्नानिविविधानिच ॥ पंथानंपावकंहित्वाजनकोमौढ्यमास्थितः ४ तंददर्शप्रियाभार्याभैक्ष्यवृत्तिमकिंचनम् ॥ धाना मुष्टिमुपासीनंनिरीहंगतमत्सरम् ५ तमुवाचसमागत्यभर्तारमकुतोभयम् ॥ क्रुद्धामनस्विनीभार्याविविक्तेहेतुमद्वचः ६ कथमुत्सृज्यराज्यंस्वंधनधान्यसमान्वि तम् ॥ कापालींवृत्तिमास्थायधानामुष्टिर्नृपतेऽवरः ७ प्रतिज्ञातेऽन्यथाराजन्विचेष्टाचान्यथातव ॥ यद्राज्यंमहदुत्सृज्यस्वल्पेतुष्यसिपार्थिव ८ नैतेनातिथयो राजन्देवर्षिपितरस्तथा ॥ अद्यशक्यास्त्वयाभर्तुंमोघस्तेऽयंपरिश्रमः ९ देवतातिथिभिश्चैवपितृभिश्चैवपार्थिव ॥ सर्वैरेतैःपरित्यक्तःपरिव्रजसिनिष्क्रियः १० यस्त्वंत्रैविद्यवृद्धानांब्राह्मणानांसहस्रशः ॥ भर्ताभूत्वाचलोकस्यसोऽद्यतेभृतिमिच्छसि ११ श्रियंहित्वाप्रदीप्तांत्वंश्ववत्संप्रतिवीक्ष्यसे ॥ अपुत्राजननीतेऽ द्यकौसल्याचापतिस्त्वया १२ अमीचधर्मकामास्त्वांक्षत्रियाःपर्युपासते ॥ त्वदाशामभिकांक्षंतःकृपणाःफलहेतुकाः १३ तांश्चत्वंविफलान्कुर्वन्कंलोकंगमि ष्यसि ॥ राजन्संशयितेमोक्षेपरतंत्रेषुदेहिषु १४ नैवतेऽस्तिपरोलोकोनापरःपापकर्मणः ॥ धर्म्यान्दारान्परित्यज्ययस्त्वमिच्छसिजीवितुम् १५ स्रजोगं धानलंकारान्वासांसिविविधानिच ॥ किमर्थमभिसंत्यज्यपरिव्रजसिनिष्क्रियः १६ निपानंसर्वभूतानांभूत्वात्वंपावनंमहत् ॥ आढ्योवनस्पतिर्भूत्वासो ऽन्यांस्त्वंपर्युपाससे १७ खादंतिहस्तिनंन्यासैःक्रव्यादाबहवोऽप्युत ॥ बहवःकृमयश्चैवकिंपुनस्त्वामनर्थकम् १८

यतोनिष्क्रियोऽतोदेवतादिभिःपरित्यक्तःसन्नेवपरिव्रजसि १० भृतिंस्वोदरभरणं ११ । १२ फलहेतुकाःफलार्थिनः १३ परतंत्रेष्वदृष्टाधीनेषु १४ । १५ । १६ निपीयतेऽस्मिन्स्वेच्छयागो भिर्जलमितिनिपानमाहावः कूपोपांतस्थक्षुद्रजलाशयइतियावत् तद्वद्भूत्वा तथाआढ्यःफलवान्पक्षिणामाश्रयश्चभूत्वा अन्यान्उदरार्थंकथंपर्युपाससे १७ हस्तिनमपिन्यासैःसर्वकर्मत्यागैरुपेतं क्रव्यादामांसादाःखादंति अनर्थकंसर्वपुरुषार्थहीनं १८



यइमामिति त्रिविष्टब्धंत्रिदंडं १९ अत्रसीयसेअध्यवस्यसि अनेनधानामुष्टिनासर्वैराज्यादिकंसमं संगित्वाविशेषात् २० इहार्थंइतिजीवनार्थंबाह्यमप्यर्थंत्यक्तुमशक्तःकथमांतरान्देहेंद्रियादीं स्त्यक्ष्यसि । तथाचसर्वसंगत्यागप्रतिज्ञाव्यर्थैव किंतर्हिसर्वसंगत्यागरूपमतआह कावेति देहेंद्रियमनोबुद्धिविषयाणांत्यागेशुद्धंचिन्मात्ररूपतवाहंचतादृशीकाममत्वंचकः । नह्यसंगचिन्मात्र योर्द्वयोःपरस्परसंबंधोऽस्तिभेदकोपाधेरभावात् एवंसतिमयिकश्चतेऽनुग्रहोनकश्चिदित्यर्थः २१ एवमसंगस्यतवराज्यंकुर्वतोयथाकथंचित्प्रारब्धकर्मावसानपर्यंतंदेहंधारयतःकुंडिकाद्यपेक्षया राज्यमेवमंगलमनुग्राहकमित्याह प्रशाधीत्यादिना २२ सौखिकैःपरमसुखार्थिभिःसंन्यासिभिः संभृतानर्थान्कुंडिकादीन्वीक्ष्ययःस्वयमपितथाकरोतिसकिंनुतद्राज्यादिकंत्यजत्यपितुनैव

यइमांकुंडिकांभिंद्यात्त्रिविष्टब्धंचयोहरेत् ॥ वासश्चापिहरेत्तस्मिन्कथंतेमानसंभवेत् १९ यस्त्वयंसर्वमुत्सृज्यधानामुष्टेरनुग्रहः ॥ यदानेनसमंसर्वंकिमिदंह्यवसी यसे २० धानामुष्टेरिहार्थश्चेत्प्रतिज्ञातेविनश्यति ॥ कावाऽहंतवकोमेत्वंकश्चतेमय्यनुग्रहः २१ प्रशाधिपृथिवींराजन्यदितेनुग्रहोभवेत् ॥ प्रासादंशयनंयानंवा सांस्याभरणानिच २२ श्रियाविहीनैरधनैस्त्यक्तमित्रैरकिंचनैः ॥ सौखिकैःसंभृतानर्थान्यःसंत्यजतिकिंनुतत् २३ योऽत्यंतंप्रतिगृह्णीयाद्यश्चदद्यात्सदैवहि ॥ तयोस्त्वमंतरंविद्धिश्रेयांस्ताभ्यांकउच्यते २४ सदैवयाचमानेषुतथादंभान्वितेषुच ॥ एतेषुदक्षिणादत्तादावाग्राविवदुर्हुतम् २५ जातवेदायथाराजन्नादग्ध्वै वोपशाम्यति ॥ सदैवयाचमानोहितथाशाम्यतिवैद्विजः २६ सतांवैददतोऽन्नंचलोकेऽस्मिन्प्रकृतिर्ध्रुवा ॥ नचेद्राजाभवेद्दाताकुतःस्युर्मोक्षकांक्षिणः २७ अन्नाद्गृहस्थालोकेऽस्मिन्भिक्षवस्तततएवच ॥ अन्नात्प्राणःप्रभवतिअन्नदःप्राणदोभवेत् २८ गृहस्थेभ्योऽपिनिर्मुक्तागृहस्थानेवसंश्रिताः ॥ प्रभवंचप्रतिष्ठांचदां तांविंदंतआसते २९ त्यागान्नभिक्षुकंविद्यान्नमौढ्यान्नचयाचनात् ॥ ऋजुस्तुयोऽर्थंत्यजतिनसुखंविद्धिभिक्षुकम् ३० असक्तःसक्तवद्गच्छन्निःसंगोमुक्तबं धनः ॥ समःशत्रौचमित्रेचसवैमुक्तोमहीपते ३१ परिव्रजंतिदानार्थंमुंडाःकाषायवाससः ॥ सिताबहुविधैःपाशैःसंचिन्वंतोवृथाऽऽमिषम् ३२ त्रयींचनाम वार्तांचत्यक्त्वापुत्रान्व्रजंतिये ॥ त्रिविष्टब्धंचवासश्चप्रतिगृह्णंत्यबुद्धयः ३३ अनिष्कषायेकाषायमीहार्थमितिविद्धितम् ॥ धर्मध्वजानांमुंडानांवृत्त्यर्थमितिमे मतिः ३४ काषायैरजिनैश्चीरैर्नग्नान्मुंडान्जटाधरान् ॥ बिभ्रत्साधून्महाराजजयलोकाञ्जितेंद्रियः ३५ अग्न्याधेयानिगुर्वर्थंक्रतूनपिसुदक्षिणान् ॥ ददात्यह रहःपूर्वंकोनुधर्मरतस्ततः ३६ ॥ अर्जुनउवाच ॥ तत्त्वज्ञोजनकोराजालोकेऽस्मिन्निति गीयते ॥ सोऽप्यासीन्मोहसंपन्नोमामोहवशमन्वगाः ३७ एवंधर्ममनु क्रांताःसदादानतपःपराः ॥ आनृशंस्यगुणोपेताःकामक्रोधविवर्जिताः ३८

६ स्त्यजति किंतूचितंपरिग्रहंत्यक्त्वादैवोपहतत्वादनुचितंपरिग्रहांतरमेवकरोतीत्यसंयतत्वमस्यदुर्लभमित्यर्थः २३ एतदेवाह यइति २४ सदैवयाचमानःपरिव्राट् २५ सचक्लेशान्दग्ध्वैवोपशाम्य त्यग्निवदित्याह जातेति २६ एतच्चगृहस्थाधीनमित्याह सतामिति सतांसंन्यासिनां प्रकृतिर्जीवनं २७ । २८ । २९ । ३० ऋजुत्वमेवाह असक्तइति ३१ दानार्थंदानंप्राप्तुंसिताबद्धाःपाशैर्मठो मेभूयाच्छिष्योमेभूयान्मानोमेभूयादित्यादिभिः आमिषंधनंमठपुस्तकादार्थं ३२ । ३३ अनिष्कषायेरागादिदोषवर्जनाभावे ३४ अपूर्न्निष्कषायान् ३५ । ३६ । ३७ । ३८

३९ । ४० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेअष्टादशोऽध्यायः ॥ १८ ॥ ॥ अंतःसंगंत्यक्त्वाबाहिःकर्मकुर्वित्युक्तंदूषयन्युधिष्ठिरउवाच वेदेति अपराणि धर्मशास्त्राणिपराणिब्रह्मशास्त्राणि 'कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः' इति 'त्यजतैवहितज्ज्ञेयम्' इतिकुरुकर्मत्यजेतिचशास्त्रद्वयंवेदजाने १ तयोर्निश्चयमप्यहंवेद । विविदिषंतियज्ञेनदानेने त्यादिश्रुतेरात्मवेदनेच्छापर्यंतंकर्मविषयः १ एतमेवप्रव्राजिनोलोकमिच्छंतःप्रव्रजंतीतिइच्छोत्तरंप्रव्रज्येतिकर्मतत्त्यागश्रुत्योर्व्यवस्थामजानंस्त्वंमूर्खोऽसीत्याह त्वंत्वित्यादिना ३ । ४ । ५ । ६ धर्मंधर्मप्रतिपादकंतत्रविषयेदुष्प्रतरंदुरवगाहम् ७ । ८ कस्तर्हिनिश्चयइत्यतआह तपइति अवधिरनिर्देश्यंब्रह्म ९।१० एतेषुतपोविभजते तपइति ११ अरण्यइति अतिजघन्यंतपोऽपिधनाज्ज्या

प्रजानांपालनेयुक्तादानमुत्तममास्थिताः ॥ इष्टान्लोकानवाप्स्यामोगुरुवृद्धोपचायिनः ३९ देवतातिथिभूतानांनिर्वपंतोयथाविधि ॥ स्थानमिष्टमवाप्स्यामोब्र ह्मण्याःसत्यवादिनः ४० ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणि अर्जुनवाक्येअष्टादशोऽध्यायः ॥ १८ ॥ ॥ युधिष्ठिरउवाच ॥ वेदाहंता तशास्त्राणिअपराणिपराणिच ॥ उभयंवेदवचनंकुरुकर्मत्यजेतिच १ आकुलानिचशास्त्राणिहेतुभिश्चिंतितानिच ॥ निश्चयश्चैवयोमंत्रेवेदाहंतंयथाविधि २ त्वं तुकेवलमस्त्रज्ञोवीरव्रतसमन्वितः ॥ शास्त्रार्थंतत्त्वतोगंतुंनसमर्थःकथंचन ३ शास्त्रार्थसूक्ष्मदर्शीयोधर्मनिश्चयकोविदः ॥ तेनाप्येवंनवाच्योऽहंयदिधर्मंप्रपश्यसि ४ भ्रातृसौहृदमास्थाययदुक्तंवचनंत्वया ॥ न्याय्यंयुक्तंचकौंतेयप्रीतोऽहंतेनतेऽर्जुन ५ युद्धधर्मेषुसर्वेषुक्रियाणांनैपुणेषुच ॥ नत्वयासदृशःकश्चित्त्रिषुलोकेषु विद्यते ६ धर्मंसूक्ष्मतरंवाच्यंतत्रदुष्प्रतरंत्वया ॥ धनंजयनमेबुद्धिमभिशंकितुमर्हसि ७ युद्धशास्त्रविदेवत्वंनवृद्धाःसेवितास्त्वया ॥ संक्षिप्तविस्तरविदांनतेषांवि त्सिनिश्चयम् ८ तपस्त्यागोऽविधिरितिनिश्चयस्त्वेषधीमताम् ॥ परस्परंज्यायएषांयेषांनैश्रेयसीमतिः ९ यस्त्वेतन्मन्यसेपार्थनज्यायोऽस्तिधनादिति ॥ तत्र तेवर्तयिष्यामियथानैतत्प्रधानतः १० तपःस्वाध्यायशीलाहिदृश्यंतेधार्मिकाजनाः ॥ ऋषयस्तपसायुक्तायेषांलोकाःसनातनाः ११ अजातशत्रवोधीरास्त थाऽन्येवनवासिनः ॥ अरण्येबहवश्चैवस्वाध्यायेनदिवंगताः १२ उत्तरेणतुपंथानमार्याविषयनिग्रहात् ॥ अबुद्धिजंतमस्त्यक्त्वालोकांस्त्यागवतांगताः १३ दक्षिणेनतुपंथानंयंभास्वंतंप्रचक्षते ॥ एतेक्रियावतांलोकायेश्मशानानिभेजिरे १४ अनिर्देश्यागतिःसातुयांप्रपश्यंतिमोक्षिणः ॥ तस्माद्योगःप्रधानेष्टः सतुदुःखंप्रवेदितुम् १५ अनुसृत्यतुशास्त्राणिकवयःसमवस्थिताः ॥ अपीहस्यादपीहस्यात्सारासारदिदृक्षया १६

यः किमुतत्यागविधिरितिभावः १२ त्यागमाह उत्तरेणेति १३ श्मशानानीतिक्रियावतांजन्ममरणलंबंधोदुर्वारइतित्यागएवकर्तव्यइतिदर्शितम् १४ अविधिमाह अनिर्देश्येति गतिर्मोक्षः प्र त्यगानंदरूपः तस्माद्धेतोस्तल्लाभायेत्यर्थः योगश्चित्तवृत्तिनिरोधः सः प्रधानंचतदिष्टश्चप्रधानेष्टः योगेनैवब्रह्मप्राप्यतेनान्यथेत्यर्थः यदाहदक्षः । 'स्वसंवेद्यंहितद्ब्रह्मकुमारीस्त्रीसुखंयथा ॥ अ योगीनैवजानातिजात्यंधोघटंयथा' इति सतुदुःखंप्रवेदितुंदुष्प्रज्ञापयितुमशक्यस्तवतत्रानधिकारादित्यर्थः १५ अपिर्वार्थे इहवासारोऽस्तीहवेति एवमिहवाऽसारइहवेतिशास्त्राण्यालोक्य कवयःसारमुपादायासारंपरित्यज्यसमवस्थिताः सम्यङ्निश्चयवंतोजाताइत्यर्थः १६

अरण्यकानिवेदांतान् १७ एकांतंजनवर्जितंतद्वदुदासेनतत्त्यागेन केचिच्छरीरेस्थितमात्मानमिच्छादिमंतंप्राहुः । ममेदंभूयादित्यादिभिरिंगितैर्लिंगैः १८ एवंपरमतमुपन्यस्यसिद्धांतमाह अग्रा ह्यमिति चक्षुषासमनस्कैश्चक्षुरादिभिरग्राह्यंयतःसूक्ष्मंगिरावाऽनिर्देश्यं । कर्महेतुरविद्यातयैवपुरस्कारोब्राह्मणोऽहंगृहस्थोऽहमितिचक्षुर्वाग्गोचरत्वंयस्यतत्सूक्ष्ममेवविपरिवर्तते जीवरूपेणास्ती त्यर्थः १९ कल्याणगोचरमात्मोन्मुखं निरालंबनोनिरहंकारः २० सूक्ष्मगम्येसूक्ष्मयाबुद्ध्यागम्ये सद्भिश्चनिषेविते ऽतरहंकारत्यागरूपेसतिकथंबाह्यतमानर्थान्नुपादेयत्वेनप्रशंससि २१ पूर्वशा स्त्रविदःकर्मकांडविदोऽपिएवमर्थमनर्थत्वेनपश्यंतिकिमुतज्ञानिनः २२ दुरावर्ताःदुःखेनापिसिद्धांतंग्राहयितुमशक्याः दृढःपूर्वःप्राग्भावीयःसंस्कारोयेषांतेदृढपूर्वे । बहुवीहावप्यार्षोसर्वनामता २३

वेदवादानतिक्रम्यशास्त्राण्यारण्यकानिच ॥ विपाट्यकदलीस्तंभंसारंददृशिरेनते १७ अथैकांतव्युदासेनशरीरेपांचभौतिके ॥ इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिंगितैः १८ अग्राह्यंचक्षुषासूक्ष्ममनिर्देश्यंचतद्गिरा ॥ कर्महेतुपुरस्कारंभूतेषुपरिवर्तते १९ कल्याणगोचरंकृत्वामनस्तृष्णांनिगृह्यच ॥ कर्मसंततिमु त्सृज्यस्यान्निरालंबनःसुखी २० अस्मिन्नेवंसूक्ष्मगम्येमार्गेसद्भिर्निषेविते ॥ कथमर्थमनर्थाढ्यमर्जुनत्वंप्रशंससि २१ पूर्वशास्त्रविदोऽप्येवंजनाःपश्यंतिभारत ॥ क्रियासुनिरतानित्यंदानेयज्ञेचकर्मणि २२ भवंतिसुदुरावर्ताहेतुमंतोऽपिपंडिताः ॥ दृढपूर्वेस्मृतामूढानैतदस्तीतिवादिनः २३ अनृतस्यावमंतारोव क्तारोजनसंसदि ॥ चरंतिवसुधांकृत्स्नांवावदूकाबहुश्रुताः २४ पार्थयन्नविजानीमःकस्तान्ज्ञातुमिहार्हति ॥ एवंप्राज्ञाःश्रुताश्चापिमहांतःशास्त्रवित्तमाः २५ तपसामहदाप्नोतिबुद्ध्यावैविंदतेमहत् ॥ त्यागेनसुखमाप्नोतिसदाकौंतेयतत्त्ववित् २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध०युधिष्ठिरवाक्येएकोनविंशति तमोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ अस्मिन्वाक्यांतरेवक्तादेवस्थानोमहातपाः ॥ अभिनीततरंवाक्यमित्युवाचयुधिष्ठिरम् १ ॥ देवस्थानउवाच ॥ यद्वचःफाल्गुनेनोक्तंनज्यायोऽस्तिधनादिति ॥ अत्रतेवर्तयिष्यामितदेकांतमनाःशृणु २ आजातशत्रोधर्मेणकृत्स्नातेवसुधाजिता ॥ तांजित्वाचवृथाराजन्नपरित्यक्तुमर्हसि ३ चतुष्पदीहिनिःश्रेणीब्रह्मण्येवप्रतिष्ठिता ॥ तांक्रमेणमहाबाहोयथावज्जयपार्थिव ४ तस्मात्पार्थमहायज्ञैर्यजस्वबहु दक्षिणैः ॥ स्वाध्याययज्ञाऋषयोज्ञानयज्ञास्तथाऽपरे ५ कर्मनिष्ठांश्चबुद्ध्येथास्तपोनिष्ठांश्चपार्थिव ॥ वैखानसानांकौंतेयवचनंश्रूयतेयथा ६ ईहेतधनहे तोर्यस्तस्यानीहागरीयसी ॥ भूयान्दोषोहिवर्धेतयस्तंधर्ममुपाश्रयेत् ७

२४ हेपार्थ यत्तयान्लौकिकानप्यर्थान्नवयंविजानीमस्तान्इतरःकोज्ञातुमर्हति नकोऽपि यथा एवंप्राज्ञाअपि अस्माकमन्येषांचदुर्ज्ञेयाइत्यर्थः २५ महद्वैराग्यं महत्परंब्रह्म तत्त्ववित्तपआदीनामे व २६ ॥ ॥ इतिशांतिपर्वणि रा० नीलकंठीयेभारतभावदीपेएकोनविंशोऽध्यायः ॥ १९ ॥ ॥ ७ ॥ ॥ अस्मिन्नवाक्यांतरेवक्तेत्यादिना दंडएवहिराजेंद्रक्षत्रधर्मोनमुंडनमित्यंतेनग्रं थेनात्मविविदिषोत्पत्तेःपूर्वंकर्माणिकर्तव्यानिपश्चात्त्याज्यानीतियुधिष्ठिरमतंब्राह्मणविषयं नतुक्षत्रियविषयमितिप्रतिपाद्यते वाक्यांतरेवाक्यावसरे अभिनीततरंयुक्तिमत्तरं १ । २ । ३ चतुष्पदी चतुराश्रमी ४ तामेवाह स्वाध्यायेतिक्रमाद्ब्रह्मचारियतिगृहस्थवानप्रस्थान्बुध्यस्वेत्यर्थः ५ वैखानसानांहैरण्यगर्भाणां ६ धनंहेतुःकारणंयस्यतत्तस्ययज्ञादेर्यज्ञाद्यर्थंईहेतधनंतस्यानीहैवगरी यसी । 'प्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंवरम्' इतिन्यायात्तमिमंपरधर्मंयःक्षत्रियउपाश्रयेतसदुष्येतेत्याह भूयानिति ७

च्छेदेतौयस्माद्विविकारणात् यज्ञार्थंधनसंहारंधमसंचयं आत्मानमितिबुद्धयादूषितआत्मानंदेहंतद्धस्त्रियंधनंवाअनर्हतेअयोग्यायकर्मणेसमर्पयतियोग्यायचन सआत्मद्रोहजाभ्रूणहत्यानबुध्यते सार्धः ८ दानधर्मंशुद्धिवर्मः दैवेशोधनेइत्यस्यरूपं पक्षेस्पष्टोऽर्थः ९ यज्ञोद्दिष्टोयज्ञार्थमेवआम्नातोवेदेन यज्ञसृष्टइतिपाठेयज्ञार्थमेवसृष्टःअनंतरःसंनिहितःयज्ञादेवसर्वकामावाप्तिर्भवतीतिभावः १०।११। १२ भांडमुपकरणंपात्रादि १३ । १४ ॥ इतिशांतिपर्वणि रा० नीलकंठीयेभारतभावदीपेविंशतितमोऽध्यायः ॥ २० ॥ अत्रैवक्षत्रियस्यवैखानसधर्माश्रयणंदोषः पालनयागदाना दिकंगुणइत्यस्मिन्नर्थेपरत्व १ असंतुष्टोहिराजाप्रजाःपीडयत्यतःसंतोषमेवस्तौतिसंतोषइति सातुष्टिः २ सम्यक्प्रतितिष्ठतियेनतदाह्यदेति यदाप्रसीदतितदातुष्टिःप्रतितिष्ठतीतिसंबंधः कदा प्रसीदति यदाकामान्जाग्रदादिविषयान्संहरतेआत्मनिप्रविलापयतितदाऽऽत्मज्योतिःस्वयंज्योतिरात्मास्वात्मन्येवस्वस्वरूपेएवप्रसीदतिद्रष्टृदर्शनेनदृश्यादिभेददर्शनरूपंमलंत्यजति ३ नबि

कृत्स्नंचधनसंहारंकुर्वंतिविधिकारणात् ॥ आत्मानंदूषितोबुद्ध्याभ्रूणहत्यांनबुद्ध्यते ८ अनर्हतेयद्ददातिनददातियदर्हते ॥ अर्हानर्हापरिज्ञानाद्दानधर्मोऽपिदु ष्करः ९ यज्ञायसृष्टानिधनानिधात्रायज्ञोद्दिष्टःपुरुषोरक्षिताच ॥ तस्मात्सर्वंयज्ञएवोपयोज्यंधनंततोऽनंतरएवकामः १० यज्ञैरिंद्रोविविधैरन्नवद्भिर्देवान्सर्वा नभ्ययाद्भूरितेजाः ॥ तेनेंद्रत्वंप्राप्यविभ्राजतेऽसौतस्माद्यज्ञेसर्वमेवोपयोज्यं ११ महादेवःसर्वयज्ञेमहात्माहुत्वाऽऽत्मानंदेवदेवोबभूव ॥ विश्वाँल्लोकान्व्याप्यवि ष्टभ्यकीर्त्याविराजतेद्युतिमान्कृत्तिवासाः १२ आविक्षितःपार्थिवोऽसौमरुत्तोवृद्ध्याशक्रंयोऽजयद्देवराजम् ॥ यज्ञेयस्यश्रीःस्वयंसंनिविष्टायस्मिन्भांडंकांचनंस र्वमासीत् १३ हरिश्चंद्रःपार्थिवेंद्रःश्रुतस्तेयज्ञैरिष्ट्वापुण्यभाग्वीतशोकः ॥ ऋद्ध्याशक्रंयोऽजयन्मानुषःसंस्तस्माद्यज्ञेसर्वमेवोपयोज्यं १४ ॥ इतिश्रीमहा०शां तिपर्वणिराज०देवस्थानवाक्येविंशतितमोऽध्यायः ॥ २० ॥ ॥ देवस्थानउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ इंद्रेणसमयेपृष्टोयदुवाचबृहस्प तिः १ संतोषोवैस्वर्गतमःसंतोषःपरमंसुखं ॥ तुष्टेर्नकिंचित्परतःसासम्यक्प्रतितिष्ठति २ यदासंहरतेकामान्कूर्मोऽङ्गानीवसर्वशः ॥ तदाऽऽत्मज्योतिरचिरा त्स्वात्मन्येवप्रसीदति ३ नबिभेतियदाचायंयदाचास्मान्नबिभ्यति ॥ कामद्वेषौचजयतितदाऽऽत्मानंचपश्यति ४ यदाऽसौसर्वभूतानांनद्रुह्यतिनकांक्षति ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा ५ एवंकौंतेयभूतानितंतंधर्मंतथातथा ॥ तदात्मनाप्रपश्यंतितस्माद्बुध्यस्वभारत ६ अन्येसामप्रशंसंतिव्यायाममपरे जनाः ॥ नैकंनचापरेकेचिदुभयंचतथाऽपरे ७ यज्ञमेवप्रशंसंतिसंन्यासमपरेजनाः ॥ दानमेकेप्रशंसंतिकेचिच्चैवप्रतिग्रहम् ८

मेविद्वितीयाभावात् अस्मान्नबिभ्यति अस्यनिष्क्रियत्वात् समाधौव्युत्थानेतु कामक्रोधौजयति ४ यदाकाले ५ एवमिति भूतानिअधिकारिजीवाः यथायथायेनयेनप्रकारेण यद्यत्कर्मयज्ञा दिकंवा सगुणोपासनंनिर्गुणोपासनंवा सांगंव्यंगंवाकरोतितत्तत्कर्मतथातथातेनतेनप्रकारेणफलात्मनाआविर्भूतंआत्मनास्वानुभवेनपश्यंति ।एतेन'तंयथायथोपासतेतथेतःप्रेत्यभवति'इतिश्रुतेरर्थो वर्णितः । तस्मात्सर्वेभ्योभूतेभ्योभयंददद्भयंविंदत्यभयंदददभयंविंदतीतिबुध्यस्व । सम्यक्प्रजापालनेनस्वस्मात्प्रभयंमाप्नुहीतिभावः ६ अन्यइति साममीति व्यायामंयत्नं अपरेएकंध्यानं नप्रशंसंतिइतिनापितुप्रशंसंत्येवउभयंसामव्यायामौएकस्यैवअवस्थाभेदेनप्रशंसंति । अपरेतथैवप्रशंसंतिप्रागुपात्तमेकंज्ञेयं ७ पंचाप्येतान्यज्ञान्विह्वणोति यज्ञेतित्रिभिः यज्ञसंन्यासदानैर्द वसर्वभूतविश्राणांप्रीतिर्भवति प्रतिग्रहंप्रजाभ्योयजमानेभ्योवाद्रव्यादानंव्यायामरूपंमंवृत्ताःप्रशंसंति ८

सर्वपरित्यागेनस्वकंकेचित् । राज्यमेकेइत्यादिपादत्रयेणसामव्यायामावेकस्यैवाह ९ अंत्यंपक्षमाह केचिदेकांतशीलिनः १० सिद्धांतमाह अद्रोहेणेति ११ प्रजनंपुत्रोत्पादनंप्रधानेचासौइष्ट श्चेतिसमासस्तम् १२ । १३ प्रग्रहेसंग्रहे १४ । १५ श्रावणेनशास्त्रश्रवणाद्विहितेन १६ । १७ । १८ । १९ । २० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपेए

केचित्सर्वंपरित्यज्यतूष्णींध्यायंतआसते ॥ राज्यमेकेप्रशंसंतिप्रजानांपरिपालनम् ९ हत्वाछित्त्वाचभित्त्वाचकेचिदेकांतशीलिनः ॥ एतत्सर्वंसमालोक्यबुधा नामेषनिश्चयः १० अद्रोहेणैवभूतानांयोधर्मःससतांमतः ॥ अद्रोहःसत्यवचनंसंविभागोदयादमः ११ प्रजनंस्वेषुदारेषुमार्दवंह्रीरचापलम् ॥ एवंधर्मंप्रधा नेष्टंमनुःस्वायंभुवोऽब्रवीत् १२ तस्मादेतत्प्रयत्नेनकौंतेयप्रतिपालय ॥ योहिराज्येस्थितःशश्वद्वशीतुल्यप्रियाप्रियः १३ क्षत्रियोयज्ञशिष्टाशीराजाशास्त्रार्थत त्त्ववित् ॥ असाधुनिग्रहरतःसाधूनांप्रग्रहेरतः १४ धर्मवर्त्मनिसंस्थाप्यप्रजावर्तेतधर्मतः ॥ पुत्रसंक्रामितश्रीश्चवनेवन्येनवर्तयन् १५ विधिनाश्रावणेनैषकुर्या त्कर्माण्यतंद्रितः ॥ यएवंवर्ततेराजन्सराजाधर्मनिश्चितः १६ तस्यायंचपरश्चैवलोकःस्यात्सफलोदयः ॥ निर्वाणंहिसुदुष्प्राप्यंबहुविघ्नंचमेमतम् १७ एवंध र्ममनुक्रांताःसत्यदानतपःपराः ॥ आनृशंस्यगुणैर्युक्ताःकामक्रोधविवर्जिताः १८ प्रजानांपालनेयुक्ताधर्ममुत्तममास्थिताः ॥ गोब्राह्मणार्थेयुध्यंतःप्राप्ताःगतिम नुत्तमाम् १९ एवंरुद्राःसवसवस्तथाऽऽदित्याःपरंतप ॥ साध्याराजर्षिसंघाश्चधर्ममेवंसमाश्रिताः ॥ अप्रमत्तास्ततःस्वर्गंप्राप्ताःपुण्यैःस्वकर्मभिः २० ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मेदेवस्थानवाक्येएकविंशोऽध्यायः ॥ २१ ॥ ॥ वैशंपायनउवाच ॥ अस्मिन्नेवांतरेवाक्यंपुनरेवार्जुनोऽब्रवीत् ॥ निर्वि ण्णमनसंज्येष्ठमिदंभ्रातरमच्युतम् १ क्षत्रधर्मेणधर्मज्ञप्राप्यराज्यंसुदुर्लभम् ॥ जित्वाचारीन्नरश्रेष्ठतप्यतेकिंभृशंभवान् २ क्षत्रियाणांमहाराजसंग्रामेनिधनंम तम् ॥ विशिष्टंबहुभिर्यज्ञैःक्षत्रधर्ममनुस्मर ३ ब्राह्मणानांतपस्त्यागःप्रेत्यधर्मविधिःस्मृतः ॥ क्षत्रियाणांचनिधनंसंग्रामेविहितंप्रभो ४ क्षात्रधर्मोमहारौद्रःशस्त्र नित्यइतिस्मृतः ॥ वधश्चभरतश्रेष्ठकालेशस्त्रेणसंयुगे ५ ब्राह्मणस्यापिचेद्राजन्क्षत्रधर्मेणवर्ततः ॥ प्रशस्तंजीवितंलोकेक्षत्रंहिब्रह्मसंभवम् ६ नत्यागोनपुनर्य ज्ञोनतपोमनुजेश्वर ॥ क्षत्रियस्यविधीयंतेनपरस्वोपजीवनम् ७ सभवान्सर्वधर्मज्ञोधर्मात्माभरतर्षभ ॥ राजामनीषीनिपुणोलोकेदृष्टपरावरः ८ त्यक्त्वासंताप जंशोकंदंशितोभवकर्मणि ॥ क्षत्रियस्यविशेषेणहृदयंवज्रसंनिभम् ९ जित्वाऽरीन्क्षत्रधर्मेणप्राप्यराज्यमकंटकम् ॥ विजितात्मामनुष्येंद्रयज्ञदानपरोभव १० इंद्रोवैब्रह्मणःपुत्रःक्षत्रियःकर्मणाऽभवत् ॥ ज्ञातीनांपापवृत्तीनांजघाननवतीर्नव ११ तच्चास्यकर्मपूज्यंचप्रशस्यंचविशांपते ॥ तेनेंद्रत्वंसमापेदेदेवानामिति नःश्रुतम् १२ सत्वंयज्ञैर्महाराजयजस्वबहुदक्षिणैः ॥ यथैवेंद्रोमनुष्येंद्रचिरायविगतज्वरः १३

कविंशतितमोऽध्यायः ॥ २१ ॥ ॥ अस्मिन्निति अच्युतंधर्मात् १ । २ । ३ त्यागःसंन्यासः ४ । ५ । ६ यज्ञआत्मयज्ञःसमाधिरितियावत् ७ । ८ दंशितःसन्नद्धः विजयंधर्मसंहि तमितिपाठेप्रशंसंतीत्यध्याहारः ९ । १० ब्रह्मणःकश्यपस्यनवतीर्नव दशाधिकंशताष्टकम् ११ इंद्रत्वमैश्वर्यं १२ । १३

१४ । १५ ॥ इतिशां० रा० नी० भारतभावदीपेद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ एवमुक्तइति १ गार्हस्थ्यंगृहस्थस्यायंगार्हस्थ्यस्तम् २ तत्रक्षत्रियत्वादरण्यंसंन्यासः ३ । ४ । ५ दुर्बलानि

माल्वमेवंगतेकिंचिच्छोचेथाःक्षत्रियर्षभ ॥ गतास्तेक्षत्रधर्मेणशस्त्रपूताःपरांगतिम् १४ भवितव्यंतथातच्चयद्वृत्तंभरतर्षभ ॥ दिष्टंहिराजशार्दूलनशक्यमतिवर्ति
तुम् १५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिअर्जुनवाक्येद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुकौंतेयोगुडाकेशे
नपांडवः ॥ नोवाचकिंचित्कौरव्यस्ततोद्वैपायनोऽब्रवीत् १ ॥ व्यासउवाच ॥ बीभत्सोर्वचनंसौम्यसत्यमेतद्युधिष्ठिर ॥ शास्त्रदृष्टःपरोधर्मःस्थितोगार्हस्थ्यमाश्रि
तः २ स्वधर्मंचरधर्मज्ञयथाशास्त्रंयथाविधि ॥ नहिगार्हस्थ्यमुत्सृज्यतवारण्यंविधीयते ३ गृहस्थंहिसदादेवाःपितरोऽतिथयस्तथा ॥ भृत्याश्चैवोपजीवंतितान्भ
रस्वमहीपते ४ वयांसिपशवश्चैवभूतानिचजनाधिप ॥ गृहस्थैरेवधार्यंतेतस्माच्छ्रेष्ठोगृहाश्रमी ५ सोऽयंचतुर्णामेतेषामाश्रमाणांदुराचरः ॥ तंचराद्यविधिंपार्थ
दुश्चरंदुर्बलेंद्रियैः ६ वेदज्ञानंचतेकृत्स्नंतपश्चाचरितंमहत् ॥ पितृपैतामहंराज्यंधुर्यवद्वोढुमर्हसि ७ तपोयज्ञस्तथाविद्याभैक्ष्यमिंद्रियसंयमः ॥ ध्यानमेकांतशीलत्वं
तुष्टिर्ज्ञानंचशक्तितः ८ ब्राह्मणानांमहाराजचेष्टासंसिद्धिकारिका ॥ क्षत्रियाणांतुवक्ष्यामितवापिविदितंपुनः ९ यज्ञोविद्यासमुत्थानमसंतोषःश्रियंप्रति ॥ दंड
धारणमुग्रत्वंप्रजानांपरिपालनम् १० वेदज्ञानंतथाकृत्स्नंतपःसुचरितंतथा ॥ द्रविणोपार्जनंभूरिपात्रेचप्रतिपादनम् ११ एतानिराज्ञांकर्माणिसुकृतानिविशांप
ते ॥ इमंलोकममुंचैवसाधयंतीतिनःश्रुतम् १२ एषांज्यायस्तुकौंतेयदंडधारणमुच्यते ॥ बलंहिक्षत्रियेनित्यंबलेदंडःसमाहितः १३ एताविद्याःक्षत्रियाणांराजन्
संसिद्धिकारिकाः ॥ अपिगाथामिमांचापिबृहस्पतिरगायत १४ भूमिरेतौनिगिरतिसर्पोबिलशयानिव ॥ राजानंचाविरोद्धारंब्राह्मणंचाप्रवासिनम् १५ सुद्युम्नश्चापि
राजर्षिःश्रूयतेदंडधारणात् ॥ प्राप्तवान्परमांसिद्धिंदक्षःप्राचेतसोयथा १६॥युधिष्ठिरउवाच ॥ भगवन्कर्मणाकेनसुद्युम्नोवसुधाधिपः ॥ संसिद्धिंपरमांप्राप्तःश्रोतुमिच्छा
मितंनृप १७॥व्यासउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ शंखश्चलिखितश्चास्तांभ्रातरौसंशितव्रतौ १८ तयोरावसथावास्तांरमणीयौपृथक्पृथक् ॥
नित्यपुष्पफलैर्वृक्षैरुपेतौबाहुदामनु १९ ततःकदाचिल्लिखितःशंखस्याश्रममागतः ॥ यदृच्छयाऽथशंखोऽपिनिष्क्रांतोऽभवदाश्रमात् २० सोऽभिगम्याश्रमंभ्रातुः
शंखस्यलिखितस्तदा ॥ फलानिपातयामाससम्यक्परिणतान्युत २१ तान्युपादायविस्रब्धोभक्षयामाससद्द्विजः ॥ तस्मिंश्चभक्षयत्येवशंखोऽप्याश्रममागतः २२
भक्षयंतंतुतंदृष्ट्वाशंखोभ्रातरमब्रवीत् ॥ कुतःफलान्यवाप्तानिहेतुनाकेनखादसि २३ सोऽब्रवीद्भ्रातरंज्येष्ठमुपसृत्याभिवाद्यच ॥ इतएवगृहीतानिमयेतिप्रहसन्निव २४

जितानिचतानिइंद्रियाणितैः ६ । ७ विद्याआत्मनोऽसंगत्वज्ञानं ज्ञानंशास्त्रविषयम् ८ । ९ । १० । ११ । १२ । १३ । १४ बिलशयान्मूषिकान् अप्रवासिनंगृहादिसंगिनम् १५ । १६ । १७
१८ बाहुदांनदीमनुतत्समीपे १९ । २० । २१ विस्रब्धोममैवैतानीतिनिश्चयवान् २२ । २३ । २४



इदंभक्षणंकृतम् २५ हेपार्थिवसत्तम मयाअदत्तादानंकृतमित्यस्मैराज्ञेकथयस्वेतिसंबंधः २६ । २७ । २८ अंतपालेभ्योद्वारपालेभ्यः २९ । ३० करिष्यइतिसंधिरार्षः ३१ अनिसृष्टान्यदत्ता
नि गुरुणाज्येष्ठभ्रात्रा ३२ यथादंडधारणेराजाप्रमाणंतथाऽनुज्ञायांहेतुःप्रमाणम् ३३ शुचिकर्मामदनुज्ञयैवशोधितदोषः । श्रुतकर्मेतिपाठेश्राविकर्मा कीर्तनेनापिदोषानश्यतीत्यर्थः ३४ । ३५

तमब्रवीत्तथाशंखस्तीव्ररोषसमन्वितः ॥ स्तेयंत्वयाकृतमिदंफलान्याददतास्वयम् २५ गच्छराजानमासाद्यस्वकर्मकथयस्ववै ॥ अदत्तादानमेवंहिकृतंपार्थिवस
त्तम २६ स्तेनंमांत्वंविदित्वाचस्वधर्ममनुपालय ॥ शीघ्रंधारयचौरस्यममदंडंनराधिप २७ इत्युक्तस्तस्यवचनात्सुद्युम्नंसनराधिपम् ॥ अभ्यगच्छन्महाबाहोलि
खितःसंशितव्रतः २८ सुद्युम्नस्त्वंतपालेभ्यःश्रुत्वालिखितमागतम् ॥ अभ्यगच्छत्सहामात्यःपद्भ्यामेवजनेश्वरः २९ तमब्रवीत्समागम्यसराजाधर्मवित्तमम् ॥
किमागमनमाचक्ष्वभगवन्कृतमेवतत् ३० एवमुक्तःसविप्रर्षिःसुद्युम्नमिदमब्रवीत् ॥ प्रतिश्रुत्यकरिष्येतिश्रुत्वातत्कर्तुमर्हसि ३१ अनिसृष्टानिगुरुणाफलानिमनुज
र्षभ ॥ भक्षितानिमहाराजतत्रमांशाधिमाचिरम् ३२ ॥ सुद्युम्नउवाच ॥ प्रमाणंचेन्मतोराजाभवतोदंडधारणे ॥ अनुज्ञायामपितथाहेतुःस्याद्ब्राह्मणर्षभ ३३
सभवानभ्यनुज्ञातःशुचिकर्मामहाव्रतः ॥ ब्रूहिकामानतोऽन्यांस्त्वंकरिष्यामिहितेवचः ३४ ॥ व्यासउवाच ॥ संछंद्यमानोब्रह्मर्षिःपार्थिवेनमहात्मना ॥ नान्यं
सवरयामासतस्माद्दंडाद्दृतेवरम् ३५ ततःसपृथिवीपालोलिखितस्यमहात्मनः ॥ करौप्रच्छेदयामासधृतदंडोजगामसः ३६ सगत्वाभ्रातरंशंखमार्तरूपोऽब्रवी
दिदम् ॥ धृतदंडस्यदुर्बुद्धेर्भवांस्तत्क्षंतुमर्हति ३७ ॥ शंखउवाच ॥ नकुप्येतवधर्मज्ञनत्वंदूषयसेमम ॥ धर्मस्तुतेव्यतिक्रांतस्ततस्तेनिष्कृतिःकृता ३८ त्वं
गत्वाबाहुदांशीघ्रंतर्पयस्वयथाविधि ॥ देवानृषीन्पितॄंश्चैवमाचाधर्मेमनःकृथाः ३९ तस्यतद्वचनंश्रुत्वाशंखस्यलिखितस्तदा ॥ अवगाह्यापगांपुण्यामुदकार्थंप्र
चक्रमे ४० प्रादुरास्तांततस्तस्यकरौजलजसन्निभौ ॥ ततःसविस्मितोभ्रातुर्दर्शयामासतौकरौ ४१ ततस्तमब्रवीच्छंखस्तपसेदंकृतंमया ॥ माचतेऽत्रविशंकाऽ
भूद्दैवमत्रविधीयते ४२ ॥ लिखितउवाच ॥ किंनुनाहंत्वयापूतःपूर्वमेवमहाद्युते ॥ यस्यतेतपसोवीर्यमीदृशंद्विजसत्तम ४३ ॥ शंखउवाच ॥ एवमेतन्मयाका
र्यंनाहंदंडधरस्तव ॥ सचपूतोनरपतिस्त्वंचापिपितृभिःसह ४४ ॥ व्यासउवाच ॥ सराजापांडवश्रेष्ठश्रेयान्वैतेनकर्मणा ॥ प्राप्तवान्परमांसिद्धिंदक्षःप्राचेतसो
यथा ४५ एषधर्मःक्षत्रियाणांप्रजानांपरिपालनम् ॥ उत्पथोऽन्योमहाराजमास्मशोकेमनःकृथाः ४६ भ्रातुरस्यहितंवाक्यंशृणुधर्मज्ञसत्तम ॥ दंडएवहिराजें
द्रक्षत्रधर्मोनमुंडनम् ४७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध०व्यासवाक्येत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ वैशंपायनउवाच ॥ पुनरेवमहर्षिस्तंकृष्ण
द्वैपायनोमुनिः ॥ अजातशत्रुंकौंतेयमिदंवचनमब्रवीत् १

३६ । ३७ ममर्मांमयावानदूषयसे तेत्वया निष्कृतिःप्रायश्चित्तम् ३८ । ३९ उदकस्यार्थंप्रयोजनमाचमनादिकर्तुमितिशेषः ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ आरूढायि
कातात्पर्यमाहदंडइति ४७ ॥ इतिशांतिपर्वणि,रा०नीलकंठीयेभारतभावदीपेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ७ ॥ ॥ पुनरेवेति १

स्वधर्मइतिराज्यंकर्तव्यमित्युक्तेभ्रात्रादीनामानृण्यार्थमपितत्कर्तव्यमित्याह अरण्यइत्यादिना २।३।४।५।६।७।८ वचनंहिंसाप्रधानःक्षत्रधर्मोमिमाऽस्त्वित्येवंरूपं हेकुरुसत्तम ९
आददानस्यपरस्वापहर्तुः समानधर्मःअविषमोधर्मस्तत्रकुशलाःस्थापयंतिअवश्यकर्तव्यतयाव्यवस्थापयंति हेनरेश्वर नरेश्वरमितिपाठांतरेविजयादिकंकर्तुमितिशेषः १० मर्षयतेदस्यूनपिनहंति



अरण्येवसतांतातभ्रातॄणांतेमनस्विनाम् ॥ मनोरथामहाराजयेतत्रासन्युधिष्ठिर २ तानिमेभरतश्रेष्ठप्राप्नुवंतुमहारथाः ॥ प्रशाधिपृथिवींपार्थययातिरिवनाहुषः
३ अरण्येदुःखवसतिरनुभूतातपस्विभिः ॥ दुःखस्यांतेनरव्याघ्रसुखान्यनुभवंतुवै ४ धर्ममर्थंचकामंचभ्रातृभिःसहभारत ॥ अनुभूयततःपश्चात्प्रस्थाताऽसि
विशांपते ५ अर्थिनांचपितॄणांचदेवतानांचभारत ॥ आनृण्यंगच्छकौंतेयतत्सर्वंचकरिष्यसि ६ सर्वमेधाश्वमेधाभ्यांयजस्वकुरुनंदन ॥ ततःपश्चान्महाराजग
मिष्यसिपरांगतिम् ७ भ्रातॄंश्चसर्वान्क्रतुभिःसंयोज्यबहुदक्षिणैः ॥ संप्राप्तःकीर्तिमतुलांपांडवेयभविष्यसि ८ विद्मस्तेपुरुषव्याघ्रवचनंकुरुसत्तम ॥ शृणुष्वैवंयथा
कुर्वन्नधर्मान्नच्यवसेनृप ९ आददानस्यविजयंविग्रहंचयुधिष्ठिर ॥ समानधर्मकुशलाःस्थापयंतिनरेश्वर १० देशकालप्रतीक्षीयोदस्यून्मर्षयतेनृपः ॥ शास्त्रजांबु
द्धिमास्थाययुज्यतेनैनसाहिसः ११ आदायबलिषड्भागंयोराष्ट्रंनाभिरक्षति ॥ प्रतिगृह्णातितत्पापंचतुर्थांशेनभूमिप १२ निबोधचयथाऽऽतिष्ठन्धर्मान्नच्यवतेनृ
पः ॥ निग्रहाद्धर्मशास्त्राणामनुरुद्धयन्नपेतभीः १३ कामक्रोधावनादृत्यपितेवसमदर्शनः ॥ शास्त्रजांबुद्धिमास्थाययुज्यतेनैनसाहिसः १४ दैवेनाभ्याहतोराजा
कर्मकालेमहाद्युते ॥ नसाधयतियत्कर्मनतत्राहुरतिक्रमम् १५ तरसाबुद्धिपूर्वंवानिग्राह्याएवशत्रवः ॥ पापैःसहनसंदध्याद्राज्यंपुण्यंचकारयेत् १६ शूराश्चार्याश्च
सत्कार्याविद्वांसश्चयुधिष्ठिर ॥ गोमिनोधनिनश्चैवपरिपाल्याविशेषतः १७ व्यवहारेषुधर्मेषुयोक्तव्याश्चबहुश्रुताः ॥ गुणयुक्तेपिनैकस्मिन्विश्वसेतविचक्षणः १८
अरक्षितादुर्विनीतोमानीस्तब्धोऽभ्यसूयकः ॥ एनसायुज्यतेराजादुर्दांतइतिचोच्यते १९ येरक्षमाणाहीयंतेदैवेनाभ्याहतानृप ॥ तस्करैश्चापिहीयंतेसर्वंतद्रा
जकिल्बिषम् २० सुमंत्रितेसुनीतेचसर्वतश्चोपपादिते ॥ पौरुषेकर्मणिकृतेनास्त्यधर्मोयुधिष्ठिर २१ विच्छिद्यंतेसमारब्धाःसिद्ध्यंतेचापिदैवतः ॥ कृतेपुरुष
कारेतुनैनःस्पृशतिपार्थिवम् २२ अत्रतेराजशार्दूलवर्तयिष्येकथामिमाम् ॥ यद्वृत्तंपूर्वराजर्षेर्हयग्रीवस्यपांडव २३ शत्रून्हत्वाहतस्याजौशूरस्याक्लिष्टकर्मणः ॥
असहायस्यसंग्रामेनिर्जितस्ययुधिष्ठिर २४ यत्कर्मवैनिग्रहेशात्रवाणांयोगश्चाग्र्यःपालनेमानवानाम् ॥ कृत्वाकर्मप्राप्यकीर्तिंसयुद्धाद्वाजिग्रीवोमोदतेस्वर्गलोके२५

एनसातज्जेनपापेन ११।१२ आतिष्ठन्निति छेदः धर्मशास्त्राणांनिग्रहादतिलंघनाज्जातादधर्माद्भीतोऽयमेतानिअनुरुध्यन्नपेतभीश्चभवति १३।१४।१५।१६ गांवाचंभिमतोविचारयंतितेगोमिनोब्रह्म
कर्मकांडार्थविदोब्राह्मणाः गोमंतोवाधनिनोवैश्याः १७।१८ स्तब्धोमान्यानमानयन् अभ्यसूयकोगुणेषुदोषदृष्टिः १९ येजनाःदैवेनआवर्षणादिना २० मंत्रनीतिसहायाद्युपेतेपुरुषकारेकृतेऽपियदिज
नाहीयंतेम्रियंतेवावहिराज्ञोऽधर्मोनास्तीत्यर्थः २१।२२।२३ शत्रून्हत्वाप्राप्यततःशत्रोःसकाशादाजौहतस्यवधंप्राप्तस्य तत्रहेतुरसहायस्येति २४ यत्कर्मकर्तव्यंतत्कर्मकृत्वेतिसंबंधः २५



२६ कामजःक्रोधोयुद्धमूलभूतोऽग्निः चातुर्होत्रंब्रह्माद्याःऋत्विजः चतुरश्चत्वारः २७। २८ संत्यक्तात्मात्यक्ताहंकारः २९ योगःक्रियायामुत्साहोऽभ्यासोअभिमानत्यागास्तैर्युक्ताद्दैवीसिद्धि
यज्ञादिक्रियामन्यदीयांमानुषींचसिद्धिंदंडनीतिंमहींचपालयित्वेतियोजना स्वयंचयज्ञशीलः ३० मानुषंलोकमितिसंबंधः तत्तुल्यजांप्रयागादी ३१।३२।३३।३४ ॥ इतिशां०रा०नी०भारत

संत्यक्तात्मासमरेष्वाततायीशस्त्रैश्छिन्नोदस्युभिर्वध्यमानः ॥ अश्वग्रीवःकर्मशीलोमहात्मासंसिद्धार्थोमोदतेस्वर्गलोके २६ धनुर्यूपोरशनाज्याशरःस्रुक्स्रुवःखड्गो
रुधिरंयत्रचाज्यम् ॥ रथोवेदीकामजोयुद्धमग्निश्चातुर्होत्रंचतुरोवाजिमुख्याः २७ हुत्वातस्मिन्यज्ञवह्नावथारीन्पापान्मुक्तोराजसिंहस्तरस्वी ॥ प्राणान्हुत्वाचाव
भृथेरणेसवाजिग्रीवोमोदतेदेवलोके २८ राष्ट्रंरक्षन्बुद्धिपूर्वंनयेनसंत्यक्तात्मायज्ञशीलोमहात्मा ॥ सर्वाँल्लोकान्व्याप्यकीर्त्यामनस्वीवाजिग्रीवोमोदतेदेवलोके २९
दैवींसिद्धिंमानुषींदंडनीतिंयोगन्यासैःपालयित्वामहींच ॥ तस्माद्राजाधर्मशीलोमहात्मावाजिग्रीवोमोदतेदेवलोके ३० विद्वांस्त्यागीश्रद्दधानःकृतज्ञस्त्यक्त्वालो
कंमानुषंकर्मकृत्वा ॥ मेधाविनांविदुषांसंमतानांतनुत्यजांलोकमाक्रम्यराजा ३१ सम्यग्वेदान्प्राप्यशास्त्राण्यधीत्यसम्यग्राज्यंपालयित्वामहात्मा ॥ चातुर्वर्ण्यं
स्थापयित्वास्वधर्मेवाजिग्रीवोमोदतेदेवलोके ३२ जित्वासंग्रामान्पालयित्वाप्रजाश्चसोमंपीत्वातर्पयित्वाद्विजाग्र्यान् ॥ युक्त्यादंडंधारयित्वाप्रजानांयुद्धेक्षीणोमोदते
देवलोके ३३ वृत्तंयस्यश्लाघनीयंमनुष्याःसंतोविद्वांसोऽर्हयंत्यर्हणीयम् ॥ स्वर्गंजित्वावीरलोकानवाप्यसिद्धिंप्राप्तःपुण्यकीर्तिर्महात्मा ३४ ॥ इतिश्रीमहाभारतेशां
तिपर्वणिराजधर्मानुशासनपर्वणिव्यासवाक्येचतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ वैशंपायनउवाच ॥ ॥ द्वैपायनवचःश्रुत्वाकुपितेचधनंजये ॥ व्यासमामंत्र्य
कौंतेयःप्रत्युवाचयुधिष्ठिरः १ ॥ युधिष्ठिरउवाच ॥ नपार्थिवमिदंराज्यंनभोगाश्चपृथग्विधाः ॥ प्रीणयंतिमनोमेऽद्यशोकोमांरुंधयत्ययम् २ श्रुत्वावीरवि
हीनानामपुत्राणांचयोषिताम् ॥ परिदेवयमानानांशांतिंनोपलभेमुने ३ इत्युक्तःप्रत्युवाचेदंव्यासोयोगविदांवरः ॥ युधिष्ठिरंमहाप्राज्ञोधर्मज्ञोवेदपारगः ४
॥ व्यासउवाच ॥ नकर्मणालभ्यतेचेज्ययावानाप्यस्तिदातापुरुषस्यकश्चित् ॥ पर्याययोगाद्विहितंविधात्राकालेनसर्वंलभतेमनुष्यः ५ नबुद्धिशास्त्राध्ययनेन
शक्यंप्राप्तुंविशेषंमनुजैरकाले ॥ मूर्खोऽपिचाप्नोतिकदाचिदर्थान्कालोहिकार्यंप्रतिनिर्विशेषः ६ नाभूतिकालेषुफलंददंतिशिल्पानिमंत्राश्चतथौषधानि ॥ तान्येव
कालेनसमाहितानिसिद्ध्यंतिवर्धंतिचभूतिकाले ७ कालेनशीघ्राःप्रवहंतिवाताःकालेनवृष्टिर्जलदानुपैति ॥ कालेनपद्मोत्पलवज्जलंचकालेनपुष्यंतिवनेषुवृक्षाः ८
कालेनकृष्णाश्चसिताश्चरात्र्यःकालेनचंद्रःपरिपूर्णबिंबः ॥ नाकालतःपुष्पफलंद्रुमाणांनाकालवेगाःसरितोवहंति ९ नाकालमत्ताःखगपन्नगाश्चमृगद्विपाःशैलमृगा
श्चलोके ॥ नाकालतःस्त्रीषुभवंतिगर्भानायांत्यकालेशिशिरोष्णवर्षाः १० भाव०चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ ॥ ७ ॥ ॥ द्वैपायनेति

कुपितेराज्यकारणात् १ रुंधयतिशोकोपहतोगुरूणांबंधूनांवावाक्यंनशृणोतीतिभावः २ वीरविहीनानांपतिहीनानां ३।४ नलभ्यतेवीरोहतवीराभिर्वीरपत्नीभिरित्यर्थः नापिताभ्यः
काश्चित्पतिदातुंसमर्थोऽस्तीत्यर्थः कालेनलभतेनत्वकालेऽतस्तासांपतिलाभकालोतीतइतिनताःशोच्याः ५ विशेषंविगतंशेषमस्यास्तितद्विशेषंपुत्रादिकं ६ ददंतिददते ७।८।९।१०

११ अस्तंगिरिंभानुरभ्युपैति १२ सेनजितापुत्रशोककृतदुःखार्तेन १३ पर्यायःकालगतिः १४ नहिनस्तिनहन्यते हननस्यकर्तृकर्मैवानभवति तेनकर्त्रात्मवादोदेहात्मवादश्चतार्किकलोकायति कमतक्रमेणनिरस्तौ १५ कश्चित्तार्किकः अपरःसांख्यः स्वभावतश्चित्सत्तातः भूतानांदेहाद्याकाराणामभवाप्ययौउत्पत्तिनाशौनियतौ आत्मानकर्तानाप्यकर्ता किंतु स्वसत्तामात्रेणमहान्हृदत रंगाणांमरीचयइवभूतानामुत्पत्तिविनाशयोर्हेतुरितिभावः १६ मौढ्यात्ध्यायन्नेवापचितिंप्रतीकारंचरेन्नत्वध्यायन् १७ शोच्यान्शोकाक्रांतान्बालविधवयादुहितृतुल्यान् दुःखेषुशोकजेषुमन स्तापेषुदुःखानिशिरस्ताडनादीनिदुःखादेर्द्विगुणीकरणंमूढकार्यमित्यर्थः १८ मोहनिवृत्तेरवधिमाहआत्मेति अयंव्यावहारिकआत्माअहंप्रत्ययविषयः सोऽपिममस्वरूपंन मतःपृथग्भूतत्वात् सर्वा 

नाकालतोम्रियतेजायतेवानाकालतोव्याहरतेचबालः ॥ नाकालतोयौवनमभ्युपैतिनाकालतोरोहतिबीजमुप्तम् ११ नाकालतोभानुरुपैतियोगंनाकालतोऽस्तंगि रिमभ्युपैति ॥ नाकालतोवर्धतेहीयतेचचंद्रःसमुद्रोऽपिमहोर्मिमाली १२ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ गीतंराज्ञासेनजितादुःखार्तेनयुधिष्ठिर १३ सर्वनिवैषपर्यायोमर्त्यान्स्पृशतिदुःसहः ॥ कालेनपरिपक्वाहिम्रियंतेसर्वपार्थिवाः १४ घ्नंतिचान्यान्नरान्राजंस्तानप्यन्येतथानराः ॥ संज्ञैषालौकिकीराजन्नहिन स्तिनहन्यते १५ हंतीतिमन्यतेकश्चिन्नहंतीत्यपिचापरः ॥ स्वभावतस्तुनियतौभूतानांप्रभवाप्ययौ १६ नष्टेधनेवादारेवापुत्रेपितरिवामृते ॥ अहोदुःखमिति ध्यायन्दुःखस्यापचितिंचरेत् १७ सकिंशोचसिमूढःसन्शोच्यान्किमनुशोचसि ॥ यस्यदुःखेषुदुःखानिभयेषुचभयान्यपि १८ आत्माऽपिचायंनममसर्वाऽपिपृ थिवीमम ॥ यथाममतथाऽन्येषामितिपश्यन्नमुह्यति १९ शोकस्थानसहस्राणिहर्षस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् २० एवमेतानिकालेन प्रियद्वेष्याणिभागशः ॥ जीवेषुपरिवर्तंतेदुःखानिचसुखानिच २१ दुःखमेवास्तिनसुखंतस्मात्तदुपलभ्यते ॥ तृष्णार्तिप्रभवंदुःखंदुःखार्तिप्रभवंसुखम् २२ सु खस्यानंतरंदुःखंदुःखस्यानंतरंसुखम् ॥ ननित्यंलभतेदुःखंननित्यंलभतेसुखम् २३ सुखमेवहिदुःखांतंकदाचिद्दुःखतःसुखम् ॥ तस्मादेतद्द्वयंजह्याद्यइच्छे च्छाश्वतंसुखम् २४ सुखांतप्रभवंदुःखंदुःखांतप्रभवंसुखम् ॥ यन्निमित्तोभवेच्छोकस्तापोवादुःखमूर्छितः ॥ आयासोवाऽपियन्मूलस्तदेकांगमपित्यजेत् २५ 
सुखंवायदिवादुःखंप्रियंवायदिवाऽप्रियम् ॥ प्राप्तंप्राप्तमुपासीतहृदयेनापराजितः २६ ईषदप्यंगदाराणांपुत्राणामाचरन्प्रियम् ॥ ततोज्ञास्यसिकःकस्यकेनवाक थमेवच २७ येचमूढतमालोकेयेचबुद्धेःपरंगताः ॥ तएवसुखमेधंतेमध्यमःक्लिश्यतेजनः २८

पृथिवीतिसर्वप्रपंचोपलक्षणं सर्वंवाममैवस्वरूपं यथाऽहंसर्वस्मादन्यःसर्वोस्माचतथाऽन्येपीत्याहयथेति एवमद्वैतात्मतत्त्वंपश्यन्नमुह्यतीत्यर्थः तथाचश्रुतिः । 'तरतिशोकमात्मवित्'इति १९ । २० यानिप्रियाणितान्येवकालेदुःखानिभवंति यानिद्वेष्याणितान्येवसुखानि तस्माद्वातजडस्यताडनमिवसर्वंदुःखमेवमोहात्सुखवद्भिमातीत्यर्थः २१ तृष्णायायाऽऽर्तिरनवस्थितचित्ततातज्जंदुःखं दुःख स्यार्तिर्विनाशस्तज्जंसुखं २२ संततेयंसुखदुःखधारेत्यतस्त्याज्यैवेत्याह सुखस्येत्यादिना२३।२४दुःखमूर्छितःदुखेनवर्धितः एकांगमपिसर्पदष्टांगुष्ठवत्त्यजेत्किमुतबाह्यंराज्यादीतिभावः२५ हृदयेन शोकमूलेन २६ प्रियमाचरन्कुर्वन्केनहेतुनाकथंकेनप्रकारेणकस्यसंबंधीतिज्ञास्यसि २७ मूढतमाःप्रसुप्तनरवज्जडाः बुद्धेःपरंब्रह्मगताःप्राप्ताः अतस्त्वमधमस्तुनमवसिमध्यमोऽपिमाभूरित्यर्थः २८ 

२९ येनतृष्णादिनिमित्तेन ३० भवाभवौऐश्वर्यानैश्वर्ये ३१ दीक्षामिति राज्ञोयागयोगसंन्यासस्थानीयाः युद्धंपालनंकृतोवित्तत्यागश्चेति तान्येवास्यपावनानीत्यर्थः ३२ संत्यक्तात्मानिरहंकारः ३३ । ३४ । ३५ । ३६ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेपंचविंशोऽध्यायः ॥ २५ ॥ ७ ॥ अस्मिन्नेवेति १ । २ । ३ समयमध्ययनसंप्रदायस्याविच्छेदं आश्रिताआश्रमिणः ब्रह्मचारिणइत्यर्थः ४ । ५ कार्याणिराजकार्याणिप्रतिष्ठाप्यानि तद्वचसाऽनुष्ठेयानीत्यर्थः तथाहि । धर्माधर्मनिर्णयार्थंपर्षदमुपक्रम्यएकोवाऽध्यात्मवित्तमइतिस्मरंति पर्ष

इत्यब्रवीन्महाप्राज्ञोयुधिष्ठिरससेनजित् ॥ परावरज्ञोलोकस्यधर्मवित्सुखदुःखवित् २९ येनदुःखेनयोदुःखीनसजातुसुखीभवेत् ॥ दुःखानांहिक्षयोनास्तिजा यतेह्यपरात्परम् ३० सुखंचदुःखंचभवाभवौचलाभालाभौमरणंजीवितंच ॥ पर्यायतःसर्वमवाप्नुवंतितस्माद्धीरोनैवहृष्येन्नशोचेत् ३१ दीक्षांराज्ञःसंयुगेयुद्धमा हुर्योगंराज्येदंडनीत्यांचसम्यक् ॥ वित्तत्यागोदक्षिणानांचयज्ञेसम्यग्दानंपावनानीतिविद्यात् ३२ रक्षन्राज्यंबुद्धिपूर्वंनयेनसंत्यक्तात्मायज्ञशीलोमहात्मा ॥ सर्वा न्लोकान्धर्मदृष्ट्याचरंश्चाप्यूर्ध्वंदेहान्मोदतेदेवलोके ३३ जित्वासंग्रामान्पालयित्वाचराष्ट्रंसोमंपीत्वावर्धयित्वाप्रजाश्च ॥ युक्त्यादंडंधारयित्वाप्रजानांयुद्धेक्षीणो मोदतेदेवलोके ३४ सम्यग्वेदान्प्राप्यशास्त्राण्यधीत्यसम्यग्राज्यंपालयित्वाचराजा ॥ चातुर्वर्ण्यंस्थापयित्वास्वधर्मेपूतात्माविमोदतेदेवलोके ३५ यस्यवृत्तंनमस्यं तिस्वर्गस्थस्यापिमानवाः ॥ पौरजानपदामात्याःसराजाराजसत्तमः ३६ ॥ इतिश्रीमहाभारतेशांतिप० राजध० सेनजिदुपाख्यानेपंचविंशोऽध्यायः ॥ २५॥ ॥ वैशंपायनउवाच ॥ अस्मिन्नेवप्रकरणेधनंजयमुदारधीः ॥ अभिनीततरंवाक्यमित्युवाचयुधिष्ठिरः १ यदेतन्मन्यसेपार्थनज्यायोऽस्तिधनादिति ॥ नस्वर्गो नसुखंनार्थोनिर्धनस्येतितन्मृषा २ स्वध्याययज्ञसंसिद्धादृश्यंतेबहवोजनाः ॥ तपोरताश्चमुनयोयेषांलोकाःसनातनाः ३ ऋषीणांसमयंशश्वद्येरक्षंतिधनंज य ॥ आश्रिताःसर्वधर्मज्ञादेवास्तान्ब्राह्मणान्विदुः ४ स्वाध्यायनिष्ठान्हिऋषीन्ज्ञाननिष्ठांस्तथाऽपरान् ॥ बुद्ध्येथाःसंततंचापिधर्मनिष्ठान्धनंजय ५ ज्ञान निष्ठेषुकार्याणिप्रतिष्ठाप्यानिपांडव ॥ वैखानसानांवचनंयथानोविदितंप्रभो ६ अजाश्चपृश्नयश्चैवसिकताश्चैवभारत ॥ अरुणाःकेतवश्चैवस्वाध्यायेनदिवंगताः ७ अवाप्यैतानिकर्माणिवेदोक्तानिधनंजय ॥ दानमध्ययनंयज्ञोनिग्रहश्चैवदुर्ग्रहः ८ दक्षिणेनचपंथानमर्यम्णोयेदिवंगताः ॥ एतान्क्रियावतांलोकानुक्तवान्पू र्वमप्यहम् ९ उत्तरेणतुपंथानंनियमाद्यंप्रपश्यसि ॥ एतेयोगवतांलोकाभांतिपार्थसनातनाः १० तत्रोत्तरांगतिंपार्थप्रशंसंतिपुराविदः ॥ संतोषोवैस्वर्गतमः संतोषःपरमंसुखम् ११ तुष्टेर्नकिंचित्परमंसासम्यक्प्रतितिष्ठति ॥ विनीतक्रोधहर्षस्यसततंसिद्धिरुत्तमा १२

स्वेनवरणीयइतिशेषः कव्यानीतिपाठेपित्र्याणिहवींषिज्ञाननिष्ठेभ्यएवदेयानीत्यर्थः । ज्ञाननिष्ठेषुकव्यानिप्रतिपाद्यानीत्येववैखानसानांवानप्रस्थानांवचनम् ६ अजादयोवालखिल्यवदृषीणांग णविशेषाः ७ । ८ एतान्धूम्रूपान् क्रियावतांकर्मिणाम् ९ उत्तरेणउत्तरतःस्थितम् १० गतिद्वयादप्यधिकमाह संतोषइति संतोषःपरंवैराग्यं परमंसुखंकैवल्यम् ११ सात्तुष्टिःपरमवैरा ग्याभिधाउत्तमासिद्धिर्विनीतक्रोधहर्षस्यक्रोधादिजयिनःसम्यक्प्रतितिष्ठति इतरस्यतुनेत्यर्थः १२

१३ । १४ । १५ आत्मज्योतिषआत्मज्ञस्यनिर्वाणंमोक्षः १६ वृत्तंशीलंईहंतिईहंते १७ धनहेतोर्धर्मायवित्तस्यार्जनेइतिशेषः तदाश्रयोधर्मोयज्ञादिस्तस्मिन्नपिभूयान्दोषोऽस्ति १८ ईहमाने बधनार्थिना १९ सम्यक्कंसाधुकमद्रुह्यतःद्रोहयुक्तानेवतद्धनमेतिनस्त्वद्रोहानितिमाहुः हिंसांविनाधनप्राप्तिर्नास्तीत्यर्थः । प्राप्तमपियथावयंसर्वथाप्रतिकूलं नानामपहेतुत्वात् २० संभिन्नवृत्तः संकीर्णस्वभावः वीतंगतंभाविशोकजंभयंयस्मात्सवीतशोकभयः अल्पेनधनेनहेतुनातृपितस्तृष्णावान्सन्द्रुह्यंस्तेनद्रोहेणजायमानांब्रह्महत्यांनबुध्यतेलोभी अल्पार्थेपिब्रह्महत्यामर्जयतीत्यर्थः २१ दुर्लभंधनंप्राप्यानुकूलेभ्योपिभृत्येभ्योदस्त्वादस्युभयादिवभृशमनुतप्यतइतिसंबंधः वित्तव्ययेमहद्दुःखंभवतीत्यर्थः २२ देवस्वं तथा'त्रैवार्षिकाधिकान्नोयःसहिसोमंपिबेद्द्विजः । प्राक्सौमिकीःक्रियाः

अत्राप्युदाहरंतीमांगाथांगीतांययातिना ॥ योऽभिप्रेत्याहरेत्कामान्कूर्मोऽंगानीवसर्वशः १३ यदाचायंनबिभेतियदाचास्मान्नबिभ्यति ॥ यदानेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा १४ यदानभावंकुरुतेसर्वभूतेषुपापकम् ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा १५ विनीतमानमोहश्चबहुसंगविवर्जितः ॥ तदाऽऽत्मज्योतिषःसाधोर्निर्वाणमुपपद्यते १६ इदंतुशृणुमेपार्थब्रुवतःसंयतेंद्रियः ॥ धर्ममन्येवृत्तमन्येधनमीहंतिचापरे १७ धनहेतोर्यईहेततस्यानीहागरीयसी ॥ भूयान्दोषोहिवित्तस्ययश्चधर्मस्तदाश्रयः १८ प्रत्यक्षमनुपश्यामित्वमपिद्रष्टुमर्हसि ॥ वर्जनंवर्जनीयानामीहमानेनदुष्करम् १९ येवित्तमभिपश्यंतिसम्यक्त्वंतेषुदुर्लभम् ॥ द्रुह्यतःप्रैतितत्प्राहुःप्रतिकूलंयथातथम् २० यस्तुसंभिन्नवृत्तःस्याद्वीतशोकभयोनरः ॥ अल्पेनतृषितोद्रुह्यन्भ्रूणहत्यांनबुध्यते २१ दुष्यंत्याददतोभृत्यानित्यंदस्युभयादिव ॥ दुर्लभंचधनंप्राप्यभृशंदत्वाऽनुतप्यते २२ अधनःकस्यकिंवाच्योविमुक्तःसर्वशःसुखी ॥ देवस्वमुपहृत्यैवधनेनेनसुखीभवेत् २३ तत्रगाथांयज्ञगीतांकीर्तयंतिपुराविदः ॥ त्रयीमुपाश्रितांलोकेयज्ञसंस्तरकारिकाम् २४ यज्ञायसृष्टानिधनानिधात्रायज्ञायसृष्टःपुरुषोरक्षिताच ॥ तस्मात्सर्वंयज्ञएवोपयोज्यंधनंनकामायहितंप्रशस्तम् २५ एतत्स्वार्थेचकौंतेयधनंधनवतांवर ॥ धातादहातिमर्त्येभ्योयज्ञार्थमितिविद्धितत् २६ तस्माद्विदुर्धंतिपुरुषानहितत्कस्यचिद्ध्रुवम् ॥ श्रद्धानस्ततोलोकोदद्याच्चैवयजेतच २७ लब्धस्यत्यागमित्याहुर्नभोगंनचसंक्षयम् ॥ तस्यकिंसंचयेनार्थःकार्येज्यायसितिष्ठति २८ येस्वधर्माद्पेतेभ्यःप्रयच्छंत्यल्पबुद्धयः ॥ शतंवर्षाणितेप्रेत्यपुरीषंभुंजतेजनाः २९ अनर्हतेयद्ददातिनददातियदर्हते ॥ अर्हानर्हापरिज्ञानाद्दानधर्मोऽपिदुष्करः ३० लब्धानामपिवित्तानांबोधव्यौद्वावतिक्रमौ ॥ अपात्रेप्रतिपत्तिश्चपात्रेचाप्रतिपादनम् ३१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध०युधिष्ठिरवाक्येषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ४ ॥

कुर्याद्यस्यान्नंवार्षिकंभवेत्'इतिस्मृतेरल्पमपिसंचितंधनंदेवस्वमेवतदाप्युपसंहृत्यदेवेभ्योऽदत्त्वैवनतेनतावताऽपिसुखीभवेत्किंतुलाभाल्लोभःप्रवर्ततइतिन्यायेनतृष्णाधिक्याद्दुःखमेवानुभवतीत्यर्थः २३ गाथांवैदिकजनेयज्ञप्रतिष्ठाकरीम् २४ तामाहयज्ञायेति २५ एतद्धनंस्वार्थे चायज्ञार्थेपि २६ तस्मादिति धनस्याध्रुवंतस्यापिनास्तीत्यर्थः तथाचश्रुतिः । 'माग्रधःकस्यस्विद्धनम्'इति फलितमाह श्रद्दधानतइति । इत्याहुःप्रशस्तमाहुरित्यर्थः कार्येत्यागरूपे २८ । २७ अपात्रेधनंनदेयमित्याह । यइति २९ । ३० । ३१ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेषड्विंशोऽध्यायः ॥ २६ ॥ ॥ ७ ॥ ॥

अभिमन्याविति १ वृषसेनेकर्णे पाठांतरेवसुषेणोऽपिसएव २ । ३ । ४ । ५ । ६ परस्पराङ्गपरस्परयानांपीडकं ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ आमर्शयन्निश्चिन्वन् १६ । १७

॥ युधिष्ठिरउवाच ॥ अभिमन्यौहतेबालेद्रौपद्यास्तनयेषुच ॥ धृष्टद्युम्नेविराटेचद्रुपदेचमहीपतौ १ वृषसेनेचधर्मज्ञेधृष्टकेतौतुपार्थिवे ॥ तथाऽन्येषुनरेंद्रेषुनानादेश्येषुसंयुगे २ नचमुंचतिमांशोकोज्ञातिघातिनमातुरम् ॥ राज्यकामुकमत्युग्रंस्ववंशोच्छेदकारिणम् ३ यस्यांकेक्रीडमानेनमयावैपरिवर्तितम् ॥ समयाराज्यलुब्धेनगांगेयोयुधिपातितः ४ यदाह्येनंविघूर्णंतमपश्यंपार्थसायकैः ॥ कंपमानंयथावज्रैःप्रेक्ष्यमाणंशिखंडिना ५ जीर्णसिंहमिवप्रांशुंनरसिंहंपितामहम् ॥ कीर्यमाणंशरैर्दृष्ट्वाभृशंमेव्यथितंमनः ६ प्राङ्मुखंसीदमानंचरथेपररथारुजम् ॥ घूर्णमानंयथाशैलंतदामेकश्मलोऽभवत् ७ यःसबाणधनुष्पाणिर्योधयामासभार्गवम् ॥ बहून्यहानिकौरव्यःकुरुक्षेत्रेमहामृधे ८ समेतंपार्थिवंक्षत्रंवाराणस्यांनदीसुतः ॥ कन्यार्थमाह्वयद्वीरोरथेनैकेनसंयुगे ९ येनचोग्रायुधोराजाचक्रवर्तीदुरासदः ॥ दग्धश्चास्त्रप्रतापेनसमयायुधिघातितः १० स्वयंमृत्युंरक्षमाणःपांचाल्यंयःशिखंडिनम् ॥ नबाणैःपातयामाससोऽर्जुनेननिपातितः ११ यदैनंपतितंभूमावपश्यंरुधिरोक्षितम् ॥ तदैवाविशदत्युग्रोज्वरोमांमुनिसत्तम १२ येनसंवर्धिताबालायेनस्मपरिरक्षिताः ॥ समयाराज्यलुब्धेनपापेनगुरुघातिना ॥ अल्पकालस्यराज्यस्यकृतेमूढेनघातितः १३ आचार्यश्चमहेष्वासःसर्वपार्थिवपूजितः ॥ अभिगम्यरणेमिथ्यापापेनोक्तःसुतंप्रति १४ तन्मेदहतिगात्राणियन्मांगुरुरभाषत ॥ सत्यमाख्याहिराजंस्त्वंयदिजीवतिमेसुतः १५ सत्यमामर्षयन्विप्रोमयितत्परिपृष्टवान् ॥ कुंजरंचांतरंकृत्वामिथ्योपचरितंमया १६ सुभृशंराज्यलुब्धेनपापेनगुरुघातिना ॥ सत्यकंचुकमुन्मुच्यमयासगुरुराहवे १७ अश्वत्थामाहतइतिनिरुक्तःकुंजरेहते ॥ कांल्लोकांस्तुगमिष्यामिकृत्वाकर्मसुदुष्करम् १८ अघातयंचयत्कर्णंसमरेष्वपलायिनम् १९ ज्येष्ठभ्रातरमत्युग्रंकोमत्तःपापकृत्तमः ॥ अभिमन्युंचयद्बालंजातंसिंहमिवाद्रिषु २० प्रावेशयमहंलुब्धोवाहिनींद्रोणपालिताम् ॥ तदाप्रभृतिबीभत्सुंनशक्नोमिनिरीक्षितुम् २१ कृष्णंचपुंडरीकाक्षंकिल्बिषीभ्रूणहायथा ॥ द्रौपदींचाप्यदुःखार्तांपंचपुत्रैर्विनाकृताम् २२ शोचामिपृथिवींहीनांपंचभिःपर्वतैरिव ॥ सोऽहमागस्करःपापःपृथिवीनाशकारकः २३ आसीनएवमेवेदंशोषयिष्येकलेवरम् ॥ प्रायोपविष्टंजानीध्वमथमांगुरुघातिनम् २४ जातिष्वन्यास्वपियथानभवेयंकुलांतकृत् ॥ नभोक्ष्येनचपानीयमुपभोक्ष्येकथंचन २५ शोषयिष्येप्रियान्प्राणानिहस्थोऽहंतपोधनाः ॥ यथेष्टंगम्यतांकाममनुजानेप्रसाद्यवः २६ सर्वेमामनुजानीतत्यक्ष्यामीदंकलेवरम् ॥ ॥ वैशंपायनउवाच ॥ तमेवंवादिनंपार्थंबंधुशोकेनविह्वलम् २७ मैवमित्यब्रवीद्व्यासोनिगृह्यमुनिसत्तमः २८ ॥ व्यासउवाच ॥ अतिवेलंमहाराजनशोकंकर्तुमर्हसि ॥ पुनरुक्तंतुवक्ष्यामिदिष्टमेतदितिप्रभो २९ संयोगाविप्रयोगांताजातानांप्राणिनांध्रुवम् ॥ बुद्बुदाइवतोयेषुभवंतिनभवंतिच ३० १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ अतिवेलमत्यर्थं २९ । ३०

३१ आलस्यंतत्कालेसुखमपिदुःखांतं दाक्ष्यंतत्कालेदुःखमपिसुखोदयं । भूतिरणिमादिः ३२ । ३३ अतएवकर्मभ्यएवकर्मणांत्यागेत्वंनेशोनप्रभुः ३४ ॥ इति श्रीम०शां०रा०नीलकंठीयेभारतभावदीपेसप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ ७ ॥ ॥ ज्ञातीति अभ्युत्सिसृक्षतस्त्यक्तुमिच्छतः १ । २ । ३ कल्याणमिच्छतासुखादिकंकथंप्रतिपत्तव्यंकेनप्रकारेणेष्टत्वेनाऽनिष्टत्वेनोदासीनत्वेनवाज्ञातव्यं ४ आत्मानंदेहमुत्पन्नमनुअनंतरमव्यवधानेनैवदेहस्वभावमाप्तेषु वादौहर्षविषादौनकुर्वीतकिंतुउदासीनैवेतिभावः ५ । ६ प्रसिध्यतेछिन्नेश्चयंभवतीत्यर्थः ७ भोगान्भो

सर्वेक्षयांतानिचयाःपतनांताःसमुच्छ्रयाः ॥ संयोगाविप्रयोगांतामरणांतंहिजीवितम् ३१ सुखंदुःखांतमालस्यंदाक्ष्यंदुःखंसुखोदयम् ॥ भूतिःश्रीर्ह्रीर्धृतिःकीर्तिर्दक्षेवसतिनालसे ३२ नालंसुखायसुहृदोनालंदुःखायशत्रवः ॥ नचप्रज्ञाऽलमर्थेभ्योनसुखेभ्योऽप्यलंधनम् ३३ यथासृष्टोसिकौंतेयधात्राकर्मसुतत्कुरु ॥ अतएवहिसिद्धिस्तेनेशस्त्वंकर्मणांनृप ३४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मा० व्यासवाक्येसप्तविंशतितमोऽध्यायः ॥ २७ ॥ वैशंपायनउवाच ॥ ज्ञातिशोकाभितप्तस्यप्राणानभ्युत्सिसृक्षतः ॥ ज्येष्ठस्यपांडुपुत्रस्यव्यासःशोकमपानुदत् १ ॥ व्यासउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ अश्मगीतंनरव्याघ्रतन्निबोधयुधिष्ठिर २ अश्मानंब्राह्मणंप्राज्ञं वैदेहोजनकोनृपः ॥ संशयंपरिपप्रच्छदुःखशोकसमन्वितः ३ ॥ जनकउवाच ॥ आगमेयदिवाऽपायेज्ञातीनांद्रविणस्यच ॥ नरेणप्रतिपत्तव्यंकल्याणंकथमिच्छता ४ ॥ अश्मोवाच ॥ उत्पन्नमिममात्मानंनरस्यानंतरंततः ॥ तानितान्यनुवर्तंतेदुःखानिचसुखानिच ५ तेषामन्यतरापत्तौयद्यदेवोपपद्यते ॥ तदस्यचेतनामाशुहरत्यभ्रमिवानिलः ६ अभिजातोऽस्मिसिद्धोऽस्मिनास्मिकेवलमानुषः ॥ इत्येभिर्हेतुभिस्तस्यत्रिभिश्चित्तंप्रसिच्यते ७ संप्रसक्तमनाभोगानविसृज्यपितृसंचितान् ॥ परिक्षीणःपरस्वानामादानंसाधुमन्यते ८ तमतिक्रांतमर्यादमाददानमसांप्रतम् ॥ प्रतिषेधंतिराजानोलुब्धाव्याघ्रमिवेषुभिः ९ येचविंशतिवर्षावात्रिंशद्वर्षाश्चमानवाः ॥ परेणतेवर्षशतान्नभविष्यंतिपार्थिव १० तेषांपरमदुःखानांबुद्ध्याभैषज्यमाचरेत् ॥ सर्वप्राणभृतांवृत्तंप्रेक्षमाणस्ततस्ततः ११ मानसानांपुनर्योनिर्दुःखानांचित्तविभ्रमः ॥ अनिष्टोपनिपातोवातृतीयंनोपपद्यते १२ एवमेतानिदुःखानितानितानीहमानवम् ॥ विविधान्युपवर्तंतेतथासंस्पर्शजान्यपि १३ जरामृत्यूहिभूतानांखादितारौवृकाविव ॥ बलिनांदुर्बलानांचह्रस्वानांमहतामपि १४ नकश्चिज्जात्वतिक्रामेज्जरामृत्यूहिमानवः ॥ अपिसागरपर्यंतांविजित्येमांवसुंधराम् १५ सुखंवायदिवादुःखंभूतानांपर्युपस्थितम् ॥ प्राप्तव्यमवशैःसर्वंपरिहारोनविद्यते १६

ग्यार्थान्धनादीन्नविसृज्यभोगेननटनर्तकादिद्वाराव्ययीकृत्य आदानंचौर्यंसाधुविंतं ८ असांप्रतमयुक्तंयथास्यात्तथाइषुभिःप्रतिषेधंतिनिघ्नंतीत्यर्थः लुब्धाव्याधाः ९ येचोरास्तेपरेणविंशत्यादिवर्षादूर्ध्वंवर्षशतावशतवर्षपर्यंतंनभविष्यंतिनजीविष्यंति चौर्यप्रसक्ताःसद्यएवमार्यंतइत्यर्थः १० तेषांदारिद्र्योत्थानांभैषज्यंप्रतीकारंतमेवाह सर्वेति । 'दुःखेदुःखाधिकान्पश्येत्सुखेपश्येत्सुखाधिकान् ॥ आत्मानंहर्षशोकाभ्यांशत्रुभ्यामिवनार्पयेत्' इतिभावः ११ विभ्रमोविपर्यासः अनिष्टेपीष्टबुद्धिरिष्टेचानिष्टबुद्धिरिति अनिष्टंपुत्रशोकादितत्प्राप्तिर्वा १२ संस्पर्शजानिविषयसंगजानि १३ । १४ । १५ प्राप्तव्यंभोक्तव्यं १६

तेऽर्थाजरादयःपदार्थाः ततोऽन्यथाऽजरत्वादिरूपेणयेमनुष्यस्यकांक्षिताइष्टाः १७ विधानमदृष्टम् १८ प्राप्तिर्लाभो व्ययःयामःश्रमः अलाभइतियावत् तयोर्योगः प्रतिष्ठितंविधानमित्यनुषज्यते १९ गंधेति फलस्यागंधादयोनिवर्ततेपूर्वंपूर्वं उत्तरेउत्तरेउपयाति तथैवसुखादीन्यमस्याख्येयानि अनुसृत्यवर्ततेविद्वान् २० । २१ । २२ । २३ । २४ बुभुक्षाः क्षुरमभृतयः २५ निर्माणेऽदृष्टे से

पूर्वेवयसिमध्येवाऽप्युत्तरेवानराधिप ॥ अवर्जनीयास्तेऽर्थावैकांक्षितायेततोऽन्यथा १७ अप्रियैःसहसंयोगोविप्रयोगश्चसुप्रियैः ॥ अर्थानर्थौसुखंदुःखंविधानमनुवर्तते १८ प्रादुर्भावश्चभूतानांदेहत्यागस्तथैवच ॥ प्राप्तिर्व्यायामयोगश्चसर्वमेतत्प्रतिष्ठितम् १९ गंधवर्णरसस्पर्शानिवर्ततेस्वभावतः ॥ तथैवसुखदुःखानिविधानमनुवर्तते २० आसनंशयनंयानमुत्थानंपानभोजनम् ॥ नियतंसर्वभूतानांकालेनैवभवत्युत २१ वैद्याश्चाप्यातुराःसंतिबलवंतश्चदुर्बलाः ॥ श्रीमंतश्चापरेषण्ढाविचित्रःकालपर्ययः २२ कुलेजन्मतथावीर्यमारोग्यंरूपमेवच ॥ सौभाग्यमुपभोगश्चभवितव्येनलभ्यते २३ संतिपुत्राःसुबहवोदरिद्राणामनिच्छताम् ॥ नास्तिपुत्रःसमृद्धानांविचित्रंविधिचेष्टितम् २४ व्याधिरग्निर्जलंशस्त्रंबुभुक्षाश्वापदोविषम् ॥ ज्वरश्चमरणंजंतोरुच्चाच्चपतनंतथा २५ निर्माणेयस्ययद्दिष्टंतेनगच्छतिसेतुना ॥ दृश्यतेनाप्यतिक्रामन्ननिष्क्रांतोऽथवापुनः ॥ दृश्यतेचाप्यतिक्रामन्ननिग्राह्योऽथवापुनः २६ दृश्यतेहियुवैवेहविनश्यन्वसुमान्नरः ॥ दरिद्रश्चपरिक्लिष्टःशतवर्षोजरान्वितः २७ अकिंचनाश्चदृश्यंतेपुरुषाश्चिरजीविनः ॥ समृद्धेचकुलेजाताविनश्यंतिपतंगवत् २८ प्रायेणश्रीमतांलोकेभोक्तुंशक्तिर्नविद्यते ॥ काष्ठान्यपिहिजीर्यंतेदरिद्राणांचसर्वशः २९ अहमेतत्करोमीतिमन्यतेकालनोदितः ॥ यद्यदिष्टमसंतोषाद्दुरात्मापापमाचरेत् ३० मृगयाक्षाःस्त्रियःपानंप्रसंगान्निंदिताबुधैः ॥ दृश्यंतेपुरुषाश्चात्रसंप्रयुक्ताबहुश्रुताः ३१ इतिकालेनसर्वार्थानीप्सितानीप्सितानिह ॥ स्पृशंतिसर्वभूतानिनिमित्तंनोपलभ्यते ३२ वायुमाकाशमग्निंचचंद्रादित्यावहःक्षपे ॥ ज्योतींषिसरितःशैलान्कःकरोतिबिभर्तिच ३३ शीतमुष्णंतथाऽवर्षंकालेनपरिवर्तते ॥ एवमेवमनुष्याणांसुखदुःखेनरर्षभ ३४ नौषधानिनमंत्राश्चनहोमानपुनर्जपाः ॥ त्रायंतेमृत्युनोपेतंजरयाचापिमानवम् ३५ यथाकाष्ठंचकाष्ठंचसमेयातांमहोदधौ ॥ समेत्यचव्यपेयातांतद्वद्भूतसमागमः ३६ येचैवपुरुषाःस्त्रीभिर्गीतवाद्यैरुपस्थिताः ॥ येचानाथाःपरान्नादाःकालस्तेषुसमक्रियः ३७ मातापितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनुभूतानिकस्यतेकस्यवावयम् ३८ नैवास्यकश्चिद्भवितानायंभवतिकस्यचित् ॥ पथिसंगतमेवेदंदारबंधुसुहृज्जनैः ३९ क्वासंक्वचगमिष्यामिकोन्वहंकिमिहास्थितः ॥ कस्मात्किमनुशोचेयमित्येवंस्थापयेन्मनः ४०

तुनाकर्ममर्यादयाऽतिक्रामन्नतिप्राप्यनिष्क्रांतोनदृश्यतेकिंतुपापेनसद्योबध्यतएव कश्चित्तुनिग्राह्योनभवतीत्यपिदृश्यते २६ । २७ । २८ । २९ । ३० प्रसंगाद्युद्धविवादादयः अत्रमृगयादौ ३१ इहनिमित्तंनोपलभामहे किंत्वदृष्टंनिमित्तमेवतदित्यर्थः ३२ यथावाय्वादिरीशकृतत्वादविनाश्यएवंदुःखमपीत्याह वायुमित्यादिना ३३ । ३४ । ३५ । ३६ उपस्थिताःसेविताः कालोमृत्युः ३७ । ३८ पथिमार्गेअन्यैरिवेहदारादिभिःसंगतंज्ञेयम् ३९ स्थापयेद्विचारेइतिशेषः ४०

 ४१ एवमिष्टवियोगेशोकोनकार्यइत्युक्त्वाऽमुत्रनरकपातभयादपिशोकोनकार्यइत्याह नदृष्टपूर्वमित्यादिना आगमैकगम्यःपरलोकआगमेषयुद्धेशत्रुघातिनांसनश्यतीतिनदृष्टमतोयुधैवतेशोकइ 
त्यर्थः ४२ धर्म्याणिधर्मावहानि ४३ । ४४ । ४५ । ४६ नागागजाःउत्तमैर्बलिष्ठैः ४७ । ४८ । ४९ अध्वानंसंसारमार्गं अवशइतिच्छेदः ५० अभ्येत्याविर्भवति नित्यात्मपक्षेजीवाद्देहोत्पत्तिर 

 अनित्येप्रियसंवासेसंसारेचक्रवद्गतौ ॥ पथिसंगतमेवैतद्भ्रातामातापितासखा ४१ नदृष्टपूर्वंप्रत्यक्षंपरलोकंविदुर्बुधाः ॥ आगमांस्त्वनतिक्रम्यश्रद्धातव्यंबुभूषता
४२ कुर्वीतपितृदैवत्यंधर्म्याणिचसमाचरेत् ॥ यजेच्चविद्वान्विधिवत्त्रिवर्गंचाप्युपाचरेत् ४३ सन्निमज्जेज्जगदिदंगंभीरेकालसागरे ॥ जरामृत्युमहाग्राहेनकश्चिदवबु 
ध्यते ४४ आयुर्वेदमधीयानाःकेवलंसपरिग्रहाः ॥ दृश्यंतेबहवोवैद्याव्याधिभिःसमभिप्लुताः ४५ तेपिबंतःकषायांश्चसर्पींषिविविधानिच ॥ नमृत्युमतिवर्तंतेवेला
मिवमहोदधिः ॥ ४६ ॥ रसायनविदश्चैवसुप्रयुक्तरसायनाः ॥ दृश्यंतेजरयाभग्नानगानागैरिवोत्तमैः ४७ तथैवतपसोपेताःस्वाध्यायाभ्यसनेरताः ॥ दातारो
यज्ञशीलाश्चनतरंतिजरांतकौ ४८ नह्यहानिनिवर्तंतेनमासानपुनःसमाः ॥ जातानांसर्वभूतानांनपक्षानपुनःक्षपाः ४९ सोऽयंविपुलमध्वानंकालेनध्रुवमध्रुवः ॥
नरोऽवशःसमभ्येतिसर्वभूतनिषेवितम् ५० देहोवाजीवतोऽभ्येतिजीवोवाऽभ्येतिदेहतः ॥ पथिसंगममभ्येतिदारैरन्यैश्चबंधुभिः ५१ नायमत्यंतसंवासोलभ्यते
जातुकेनचित् ॥ अपिस्वेनशरीरेणकिमुतान्येनकेनचित् ५२ क्वनुतेऽद्यपिताराजन्क्वनुतेऽद्यपितामहाः ॥ नत्वंपश्यसितानद्यनत्वांपश्यंतितेऽनघ ५३ नचैव
पुरुषोद्रष्टास्वर्गस्यनरकस्यच ॥ आगमस्तुसतांचक्षुर्नृपतेतमिहाचर ५४ चरितब्रह्मचर्योहिप्रजायेतयजेतच ॥ पितृदेवमनुष्याणामानृण्यादनसूयकः ५५ स
यज्ञशीलःप्रजनेनिविष्टःप्राग्ब्रह्मचारीप्रविविक्तचक्षुः ॥ आराधयेत्स्वर्गमिमंचलोकंपरंचमुक्त्वाहृदयव्यलीकम् ५६ समंहिधर्मंचरतोनृपस्यद्रव्याणिचाभ्याहरतो
यथावत् ॥ प्रवृत्तधर्मस्ययशोऽभिवर्धतेसर्वेषुलोकेषुचराचरेषु ५७ इत्येवमाज्ञायविदेहराजोवाक्यंसमग्रंपरिपूर्णहेतु ॥ अश्मानमामंत्र्यविशुद्धबुद्धिर्ययौगृहंस्वंप्रति
शांतशोकः ५८ तथात्वमप्यच्युतमुंचशोकमुत्तिष्ठशक्रोपमहर्षमेहि ॥ क्षात्रेणधर्मेणमहीजिताते तांभुंक्ष्वकुंतीसुतमाऽवमंस्थाः ५९ ॥ ॥ इतिश्रीम॰शां॰राज
ध॰व्यासवाक्येअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ वैशंपायनउवाच ॥ ॥ अव्याहरतिराजेंद्रेधर्मपुत्रेयुधिष्ठिरे ॥ गुडाकेशोहृषीकेशमभ्यभाषतपांडवः १
अर्जुनउवाच ॥ ॥ ज्ञातिशोकाभिसंतप्तोधर्मपुत्रःपरंतपः ॥ एषशोकार्णवेमग्नस्तमाश्वासयमाधव २

नित्यात्मपक्षेदेहाज्जीवोत्पत्तिर्वाभवतु सर्वथादारादिसंगमःपांथसंगमतुल्यएवेत्यर्थः ५१ संवासःसहावस्थानं ५२ । ५३ । ५४ प्रजायेतपुत्रादीनुत्पादयेत् आनृण्याद्धेतोः ५५ प्रजनेप्रजोत्पादने 
हृदयव्यलीकंहृत्स्थमप्रियंशोकमनृतंवाममत्वाद्यध्यासंमुक्त्वास्वर्गमिमंचलोकंपरंपरमात्मानंवाआराधयेत् ५६ समंरागद्वेषवर्जंयथास्यात्तथाधर्मंचरतः ५७। ५८ हेअच्युतेति स्वधर्मान्नच्युतोसी
त्यर्थः तेत्वया ५९ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेअष्टाविंशोऽध्यायः ॥ २८ ॥ अव्याहरति हेत्वभावेऽपिशोकोबाधतेइतिविस्मयान्मौनमास्थिते १ । २

तेवयम् ३ पर्यवर्ततअभिमुखोऽभूत् ४ । ५ भुजंराज्ञःसंप्रगृह्यहस्तेधृत्वा ६ व्याकोशंविकसितम् ७ हताः अस्मिन्संधिरार्षः ८ लाभाः अर्थाः ९ । १० । ११ । १२ मृतान्महानुभावान्श्रुत्वा
तान्बंधून्शोचितुंनार्हसीतिसंबंधः १३ सृंजयस्यपुत्रःसहदेवस्तस्यशोकेनार्तं सहदेवायसार्जयायेतिब्राह्मणात् १४ अविमुक्ताइति मरणेऽपिसुखादेर्वियोगोनास्तीतिप्रायोपवेशनंव्यर्थमितिभा

सर्वेस्मतेसंशयिताःपुनरेवजनार्दन ॥ अस्यशोकंमहाबाहोप्रणाशयितुमर्हसि ३ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुगोविंदोविजयेनमहात्मना ॥ पर्यवर्तत
राजानंपुंडरीकेक्षणोऽच्युतः ४ अनतिक्रमणीयोहिधर्मराजस्यकेशवः ॥ बाल्यात्प्रभृतिगोविंदःप्रीत्याचाभ्यधिकोऽर्जुनात् ५ संप्रगृह्यमहाबाहुर्भुजंचंदनभू
षितम् ॥ शैलस्तंभोपमंशौरिरुवाचाभिविनोदयन् ६ शुशुभेवदनंतस्यसुदंष्ट्रंचारुलोचनम् ॥ व्याकोशमिवविस्पष्टंपद्मंसूर्यइवोदिते ७ ॥ वासुदेवउवाच ॥
माकृथाःपुरुषव्याघ्रशोकंत्वंगात्रशोषणम् ॥ नहितेसुलभाभूयोयेहताऽस्मिन्रणाजिरे ८ स्वप्नलब्धायथालाभावितथाःप्रतिबोधने ॥ एवंतेक्षत्रियाराजन्येव्य
तीतामहारणे ९ सर्वेऽप्यभिमुखाःशूराविजितारणशोभिनः ॥ नैषांकश्चित्पृष्ठतोवापलायन्वापिपातितः १० सर्वेत्यक्त्वाऽऽत्मनःप्राणान्युद्धावीरामहामृधे ॥
शस्त्रपूतादिवंप्राप्तानतान्शोचितुमर्हसि ११ क्षत्रधर्मरताःशूरावेदवेदांगपारगाः ॥ प्राप्तावीरगतिंपुण्यांतान्नशोचितुमर्हसि १२ मृतान्महानुभावांस्त्वंश्रुत्वैव
पृथिवीपतीन् ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् १३ सृंजयंपुत्रशोकार्तंयथाऽयंनारदोऽब्रवीत् ॥ सुखदुःखैरहंत्वंचप्रजाःसर्वाश्चसृंजय १४ अविमुक्ता
मरिष्यामस्तत्रकापरिदेवना ॥ महाभाग्यंपुराराज्ञांकीर्त्यमानंमयाशृणु १५ गच्छावधानंनृपतेततोदुःखंप्रहास्यसि ॥ मृतान्महानुभावांस्त्वंश्रुत्वैवपृथिवी
पतीन् १६ शममानयसंतापंशृणुविस्तरशश्चमे ॥ क्रूरग्रहाभिशमनमायुर्वर्धनमुत्तमं १७ अग्रिमाणांक्षितिभुजामुपादानंमनोहरम् ॥ आविक्षितंमरुत्तंचमृतंसृं
जयशुश्रुम १८ यस्यसेंद्राःसवरुणाबृहस्पतिपुरोगमाः ॥ देवाविश्वसृजोराज्ञोयज्ञमीयुर्महात्मनः १९ यःस्पर्धयाऽजयच्छक्रंदेवराजंपुरंदरम् ॥ शक्रप्रियैषीयं
विद्वान्प्रत्याचष्टबृहस्पतिः २० संवर्तोयाजयामासयवीयान्सबृहस्पतेः ॥ यस्मिन्प्रशासतिमहींनृपतौराजसत्तम ॥ अकृष्टपच्यापृथिवीविबभौचैत्यमालिनी
२१ आविक्षितस्यवैसत्रेविश्वेदेवाःसभासदः ॥ मरुतःपरिवेष्टारःसाध्याश्चासन्महात्मनः २२ मरुद्गणामरुत्तस्ययत्सोममपिबंस्ततः ॥ देवान्मनुष्यान्गंधर्वा
नत्यरिच्यंतदक्षिणाः २३ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः २४ सुहोत्रंचैवातिथिनंमृतंसृंजयशुश्रुम ॥ यस्मि
न्हिरण्यंववृषेमघवापरिवत्सरम् २५ सत्यनामावसुमतीयंप्राप्यऽसीज्जनाधिपम् ॥ हिरण्यमवहन्नद्यस्तस्मिन्जनपदेश्वरे २६

वः महाभाग्यंमाहात्म्यम् १५ । १६ । १७ उपादानमुपादातुंश्रोतुंयोग्यम् १८ ईयुःप्रत्यक्षमागतवंतः १९ यागंमाकुर्विति प्रत्याचष्टप्रत्याख्यातवान् २० । २१ 'मरुतःपरिवेष्टारोमरुत्तस्याव
सन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदः' इतिश्रुतेरर्थंदर्शयतिआविक्षितस्येति २२ अत्यरिच्यंतएभ्योयाःदक्षिणादत्तास्तास्तैर्वोढुमशक्याजाताइत्यर्थः २३ चतुर्भद्रतरः चत्वारि
धर्मज्ञानवैराग्यैश्वर्याख्यानिभद्राणियस्मिन्सचतुर्भद्रः त्वयाअवधिभूतेनत्वत्तोऽतिशयेनचतुर्भद्रइत्यर्थः २४ । २५ । २६

१७ । १८ । १९ । २० चेरयचेतनावान्भवजानीहीत्यर्थः संशाम्यज्ञात्वाशांतोभवेत्यर्थः ३१ अवासृजयज्ञार्थमुत्सृष्टवान् ३२ अत्यकालयददत्तवान् ३३ । ३५ । ३६ । ३७ । सप्तस्वग्निष्टोम

कूर्मान्कर्कटकान्नक्रान्मकरान्छिशुकानपि ॥ नदीष्वपातयद्राजन्मघवालोकपूजितः २७ हिरण्यान्पातितान्दृष्ट्वामत्स्यान्मकरकच्छपान् ॥ सहस्रशोऽथशतशस्ततोऽस्मयदथोऽतिथिः २८ तद्धिरण्यमपर्यंतमावृतंकुरुजांगले ॥ ईजानोविततेयज्ञेब्राह्मणेभ्यःसमार्पयत् २९ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ३० अदक्षिणमयज्वानंचेत्यसंशाम्यमाशुचः ॥ अंगंबृहद्रथंचैवमृतंसृंजयशुश्रुम ३१ यःसहस्रंसहस्राणांश्वेतानश्वानवासृजत् ॥ सहस्रंचसहस्राणांकन्याहेमपरिष्कृताः ३२ ईजानोविततेयज्ञेदक्षिणामत्यकालयत् ॥ यःसहस्रंसहस्राणांगजानामतिपद्मिनाम् ३३ ईजानोविततेयज्ञेदक्षिणामत्यकालयत् ॥ शतंशतसहस्राणिवृषाणांहेममालिनाम् ३४ गवांसहस्रानुचरंदक्षिणामत्यकालयत् ॥ अंगस्ययजमानस्यतदाविष्णुपदेगिरौ ३५ अमाद्यदिंद्रःसोमेनदक्षिणाभिर्द्विजातयः ॥ यस्ययज्ञेषुराजेंद्रशतसंख्येषुवैपुरा ३६ देवान्मनुष्यान्गंधर्वानत्यरिच्यंतदक्षिणाः ॥ नजातोजनितानान्यःपुमान्यःसंप्रदास्यति ३७ यदंगःप्रददौवित्तंसोमसंस्थासुसप्तसु ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ३८ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ॥ शिबिमौशीनरंचैवमृतंसृंजयशुश्रुम ३९ यइमांपृथिवींसर्वांचर्मवत्समवेष्टयत् ॥ महतारथघोषेणपृथिवीमनुनादयन् ४० एकच्छत्रांमहींचक्रेजैत्रेणैकरथेनयः ॥ यावदस्यगवाश्वंस्यादारण्यैःपशुभिःसह ४१ तावतीःप्रददौगाःसशिबिरौशीनरोऽध्वरे ॥ नवोढारंधुरंतस्यकंचिन्मेनेप्रजापतिः ४२ नभूतंनभविष्यंचसर्वराजसुसृंजय ॥ अन्यत्रौशीनराच्छैब्याद्राजर्षेरिंद्रविक्रमात् ४३ अदक्षिणमयज्वानंमापुत्रमनुतप्यथाः ॥ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ४४ भरतंचैवदौष्यंतिंमृतंसृंजयशुश्रुम ॥ शाकुंतलंमहात्मानंभूरिद्रविणसंचयम् ४५ योबद्धात्रिशतंचाश्वान्देवेभ्योयमुनामनु ॥ सरस्वतींविंशतिंचगंगामनुचतुर्दश ४६ अश्वमेधसहस्रेणराजसूयशतेनच ॥ इष्टवान्समहातेजादौष्यंतिर्भरतःपुरा ४७ भरतस्यमहत्कर्मसर्वराजसुपार्थिवाः ॥ खंमर्त्याइवबाहुभ्यांनानुगंतुमशक्नुवन् ४८ परंसहस्राद्योबद्धान्हयान्वेदींवितत्यच ॥ सहस्रंयत्रपद्मानांकण्वायभरतोददौ ४९ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ५० रामंदाशरथिंचैवमृतंसृंजयशुश्रुम ॥ योऽन्वकंपतवैनित्यंप्रजाःपुत्रानिवौरसान् ५१ विधवायस्यविषयेनानाथाःकाश्चनाभवन् ॥ सदैवासीत्पितृसमोरामोराज्यंयदन्वशात् ५२ कालवर्षीचपर्जन्यःसस्यानिसमपादयत् ॥ नित्यंसुभिक्षमेवासीद्रामेराज्यंप्रशासति ५३

उक्थ्यःषोडशीवाजपेयोऽतिरात्रआप्तोर्यामइतिसप्तसोमसंस्थास्तासु ३८ । ३९ । ४० । ४१ । ४२ । ४३ ४४ । ४५ । ४६ । ४७ 'महाकर्मभरतस्यनपूर्वेनापरेजनाः ॥ दिवंमर्त्यइवहस्ताभ्यांनोदापुःपंचमानवाः' इतिश्रुतेरर्थसंग्रहोविभरतस्येति ४८ बद्धान्हयानितिपाठः बद्धंसंख्याविशेषोऽर्बुदपर्यायः 'यस्मिन्सहस्रंब्राह्मणाबद्धशोगाविभेजिरे' इतिश्रुते. ४९ । ५० । ५१ । ५२ । ५३ ॥२३॥

५४ वर्षसहस्रिण्यःस्त्रियःवर्षसहस्रकाःपुरुषाः ५५ । ५६।५७ द्रोणदुघाःद्रोणपरिमितंक्षीरंदुहंतिताः द्रोणःकलशइत्येके ५८ जारूथ्यान्स्तुत्यान् त्रिगुणदक्षिणानित्यन्ये निरर्गलानवारितद्वारान् ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ चतुर्युजश्चतुरश्वाः ६६ । ६७ उपह्वरेसमीपे अंकेऊरौनिषसाद आसांचक्रे तस्माद्योगात्साउर्वशीऊरौवासोयस्याःसाइतियोगात् । उर्वसीत्यपे

प्राणिनोनाप्सुमज्जंतिनान्यथापावकोऽदहत् ॥ रुजाभयंनतत्रासीद्रामेराज्यंप्रशासति ५४ आसन्वर्षसहस्रिण्यस्तथावर्षसहस्रकाः ॥ अरोगाःसर्वसिद्धार्थारामेराज्यंप्रशासति ५५ नान्योन्येनविवादोऽभूत्स्त्रीणामपिकुतोनृणाम् ॥ धर्मनित्याःप्रजाश्चासन्रामेराज्यंप्रशासति ५६ संतुष्टाःसर्वसिद्धार्थानिर्भयाःस्वैरचारिणः ॥ नराःसत्यव्रताश्चासन्रामेराज्यंप्रशासति ५७ नित्यपुष्पफलाश्चैवपादपानिरुपद्रवाः ॥ सर्वाद्रोणदुघागावोरामेराज्यंप्रशासति ५८ सचतुर्दशवर्षाणिवनेप्रोष्यमहातपाः ॥ दशाश्वमेधान्जारूथ्यानाजहारनिरर्गलान् ५९ युवाश्यामोलोहिताक्षोमातंगइवयूथपः ॥ आजानुबाहुःसुमुखःसिंहस्कंधोमहाभुजः ६० दशवर्षसहस्राणिदशवर्षशतानिच ॥ अयोध्याधिपतिर्भूत्वारामोराज्यमकारयत् ६१ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ६२ भगीरथंचराजानंमृतंसृंजयशुश्रुम ॥ यस्येंद्रोविततेयज्ञेसोमंपीत्वामदोत्कटः ६३ असुराणांसहस्राणिबहूनिसुरसत्तमः ॥ अजयद्बाहुवीर्येणभगवान्पाकशासनः ६४ यःसहस्रंसहस्राणांकन्याहेमविभूषिताः ॥ ईजानोविततेयज्ञेदक्षिणामत्यकालयत् ६५ सर्वारथगताःकन्याःरथाःसर्वेचतुर्युजः ॥ शतंशतंरथेनागाःपद्मिनोहेममालिनः ६६ सहस्रमश्वाएकैकंहस्तिनंपृष्ठतोन्वयुः ॥ गवांसहस्रमश्वेऽश्वेसहस्रंगव्यजाविकम् ६७ उपह्वरेनिवसतोयस्यांकेनिषसादह ॥ गंगाभागीरथीतस्मादुर्वशीचाभवत्पुरा ६८ भूरिदक्षिणमिक्ष्वाकुंयजमानंभगीरथम् ॥ त्रिलोकपथगागंगादुहितृत्वमुपेयुषी ६९ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ७० दिलीपंचमहात्मानंमृतंसृंजयशुश्रुम ॥ यस्यकर्माणिभूरीणिकथयंतिद्विजातयः ॥ ७१ ॥ यइमांवसुसंपूर्णांवसुधांवसुधाधिपः ॥ ददौतस्मिन्महायज्ञेब्राह्मणेभ्यःसमाहितः ७२ यस्येहयजमानस्ययज्ञेयज्ञेपुरोहितः ॥ सहस्रंवारणान्हैमान्दक्षिणामत्यकालयत् ७३ यस्ययज्ञेमहानासीद्यूपःश्रीमान्हिरण्मयः ॥ तंदेवाःकर्मकुर्वाणाःशक्रज्येष्ठाउपाश्रयन् ७४ चषालेयस्यसौवर्णेतस्मिन्यूपेहिरण्मये ॥ ननृतुर्देवगंधर्वाःषट्सहस्राणिसप्तधा ७५ अवादयत्तत्रवीणांमध्येविश्वावसुःस्वयम् ॥ सर्वभूतान्यमन्यंतममवादयतीत्ययम् ७६ एतद्राज्ञोदिलीपस्यराजानोनानुचक्रिरे ॥ यस्येभाहेमसंछन्नाःपथिमत्ताःस्मशेरते ७७ राजानंशतधन्वानंदिलीपंसत्यवादिनम् ॥ येऽपश्यन्सुमहात्मानंतेऽपिस्वर्गजितोनराः ७८ त्रयःशब्दानजीर्यंतेदिलीपस्यनिवेशने ॥ स्वाध्यायघोषोज्याघोषोदीयतामितिवैत्रयः ७९ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ८० मांधातारंयौवनाश्वंमृतंसृंजयशुश्रुम ॥ यंदेवामरुतोगर्भंपितुःपार्श्वादपाहरन् ८१

क्षितेर्ह्रस्वत्वंवर्णविपर्ययश्चपृषोदरादित्वाज्ज्ञेयः ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ सप्तधासप्तस्वरानुसारेणावादयदितिसंबंधः ७५ ममपुरतइतिशेषः मांलक्षीकृत्येत्यर्थः ७६ । ७७ शतधन्वानंशतंअनंवान्सहतेधनुर्यस्यतंशतधन्वानं मध्यमपदलोपीसमासः ७८ । ७९ । ८० । ८१

पृषदाज्यंदधिमिश्रमाज्यं कस्यचिदर्थेपुत्रोत्पादनायनिर्मितंतद्युवनाश्वेनपीतं ततस्तेनोरुभिरयोर्विनाऽपितदुदरेगर्भोऽभवत् । सपितुःपार्श्वंभित्त्वानिःसारितोदेवैरित्याख्यायिकार्थोऽत्रसूचितः
८२ । ८३ । ८४ । ८५ अह्नाएकेनशतंपलानिव्यवर्धत द्वादशसमोद्वादशवर्षतुल्यः । द्वादशशतपलतुलितोवाऽभवत् एतावानेवमायेणपकस्यपुरुषस्यभारोभवति ८६ । ८७ । ८८ अभेदिभिन्ना
८९ । ९० मत्स्यान्हैरण्यानितिसंबंधः ९१ । ९२ । ९३ । ९४ शम्यास्थूलयुग्मःकाष्ठदंडः सबलवताक्षिप्तोयावद्दूरंपतेत्तावान्देशःशम्यापातः तावतांतरेणपुरःपुरोयज्ञवेदीःकुर्वाणोवसुंधरांपर्यग



सम्वृद्धोयुवनाश्वस्यजठरेयोमहात्मनः ॥ पृषदाज्योद्भवःश्रीमांस्त्रिलोकविजयीनृपः ८२ यंदृष्ट्वापितुरुत्संगेशयानंदेवरूपिणम् ॥ अन्योन्यमब्रुवन्देवाःकमयं
धास्यतीतिवै ८३ मामेवधास्यतीत्येवमिंद्रोऽथाभ्युपपद्यत ॥ मांधातेतिततस्तस्यनामचक्रेशतक्रतुः ८४ ततस्तुपयसोधारांपुष्टिहेतोर्महात्मनः ॥ तस्यास्ये ॥२९॥
यौवनाश्वस्यपाणिरिंद्रस्यचास्रवत् ८५ तंपिबन्पाणिमिंद्रस्यशतमह्नाव्यवर्धत ॥ सआसीद्द्वादशसमोद्वादशाहेनपार्थिवः ८६ तमिमंपृथिवीसर्वाएकाह्नासमप
द्यत ॥ धर्मात्मानंमहात्मानंशूरमिंद्रसमंयुधि ८७ यश्चांगारंतुनृपतिंमरुत्तमसितंगयम् ॥ अंगंबृहद्रथंचैवमांधातासमरेऽजयत् ८८ यौवनाश्वोयदांगारंसमरेप्र
त्ययुध्यत ॥ विस्फारैर्धनुषोदेवाद्यौरभेदीतिमेनिरे ८९ यत्रसूर्यउदेतिस्मयत्रचप्रतितिष्ठति ॥ सर्वंतद्यौवनाश्वस्यमांधातुःक्षेत्रमुच्यते ९० अश्वमेधशतेनेष्ट्वारा
जसूयशतेनच ॥ अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्योविशांपते ९१ हैरण्यान्योजनोत्सेधानायतान्दशयोजनम् ॥ अतिरिक्तान्द्विजातिभ्योव्यभजंस्त्वितरेजनाः
९२ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ९३ ययातिंनाहुषंचैवमृतंसृंजयशुश्रुम ॥ यइमांपृथिवींकृत्स्नांविजित्यसहसाग
राम् ९४ शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीम् ॥ ईजानःक्रतुभिर्मुख्यैःपर्यगच्छद्वसुंधराम् ९५ इष्ट्वाक्रतुसहस्रेणवाजपेयशतेनच ॥ तर्पयामासविप्रेंद्रां
स्त्रिभिःकांचनपर्वतैः ९६ व्यूढेनासुरयुद्धेनहत्वादैतेयदानवान् ॥ व्यभजत्पृथिवींकृत्स्नांययातिर्नहुषात्मजः ९७ अंत्येषुपुत्रान्निक्षिप्ययदुद्रुह्युपुरोगमान् ॥ पूरुं
राज्येऽभिषिच्याथसदारःप्राविशद्वनम् ९८ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ९९ अंबरीषंचनाभागंमृतंसृंजयशुश्रु
म ॥ यंप्रजावव्रिरेपुण्यंगोप्तारंनृपसत्तमम् १०० यःसहस्रंसहस्राणांराज्ञामयुतयाजिनाम् ॥ ईजानोविततेयज्ञेब्राह्मणेभ्यःसुसंहितः १ नैतत्पूर्वेजनाश्चकुर्नकरि
ष्यंतिचापरे ॥ इत्यंबरीषंनाभागिमन्वमोदंतदक्षिणाः २ शतंराजसहस्राणिशतंराजशतानिच ॥ सर्वेऽश्वमेधैरीजानास्तेऽन्वयुर्दक्षिणायनम् ३ सचेन्ममारसृंज
यचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ४ शशबिंदुंचैत्ररथंमृतंशुश्रुमसृंजय ॥ यस्यभार्यासहस्राणांशतमासीन्महात्मनः १०५ ॥२४॥

च्छद्वपरित्यज्यसमुद्रतीरंप्राप्तइत्यर्थः ९५ । ९६ व्यभजत्पुत्रेभ्योदत्तवान् ९७ यदुर्द्रुह्युस्तुर्वसुश्चतान्यदुद्रुह्युपुरोगमान् ९८ । ९९ । १०० याजिनांयज्वनांराज्ञांसहस्रंब्राह्मणेभ्यःब्राह्मणा
नामार्थ्यार्थंअयुतयोजितवान् नृपान्दासत्वेयोजितवानित्यर्थः १०१ दक्षिणाःदाक्षप्रयुक्ताः २ सर्वेराजानोंऽबरीषयज्ञेषुविप्रदास्यंकुर्वाणाअश्वमेधफलभागित्वात्तद्याजिनःसंतःअंबरीषमाहा
त्म्याद्दक्षिणायनंअनुपश्चात्अनुर्गताः । उत्तरायणमार्गेणहिरण्यगर्भलोकंप्राप्ताइत्यर्थः ३ । ४ । १०५

शाशबिंदवाः शशबिंदोःपुत्राः ६ । ७ । ८ । ९ । ११० । ११ ददतोदानंकुर्वतः अयःसुवर्णं तदेववित्तंअक्षयंसततंवर्धतां भैक्ष्यमितिपाठस्त्वनार्षः १२ । १३ । १५ । १६ व्यामंव्यायतहस्तप्रमाणं
पंचहस्तोन्मितं दशव्यामांपंचाशद्धस्तविस्तारां द्विरायतांशतहस्तदीर्घाम् १७ । १८ । १९ । १२० । २१ उपातिष्ठंतपितृकार्यमांनियोजयमांनियोजयेति २२ तेषांमारितानांपशूनां चर्मराशेः
सहस्रंतुसहस्राणांयस्यासन्शाशबिंदवाः ॥ हिरण्यकवचाःसर्वेसर्वेचोत्तमधन्विनः ६ शतंकन्याराजपुत्रमेकैकंपृथगन्वयुः ॥ कन्यांकन्यांशतंनागानागंनागं
शतंरथाः ७ रथेरथेशतंचाश्वादेशजाहेममालिनः ॥ अश्वेअश्वेशतंगावोगवांतद्वदजाविकं ८ एतद्धनमपर्यंतमश्वमेधेमहामखे ॥ शशबिंदुर्महाराजब्राह्मणेभ्यः
समार्पयत् ९ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः १० गयंचामूर्तरयसंमृतंशुश्रुमसृंजय ॥ यःसवर्षशतंराजाहुत
शिष्टाशनोऽभवत् ११ यस्मैवह्निर्वरंप्रादात्ततोवव्रेवरान्गयः ॥ ददतोयोऽक्षयंवित्तंधर्मेश्रद्धाचवर्धतां १२ मनोमेरमतांसत्येत्वत्प्रसादाद्धुताशन ॥ लेभेचका
मांस्तान्सर्वान्पावकादितिनःश्रुतम् १३ दर्शेचपूर्णमासेचचातुर्मास्येपुनःपुनः ॥ अयजद्धयमेधेनसहस्रंपरिवत्सरान् १४ शतंगवांसहस्राणिशतमश्वतराणि
च ॥ उत्थायोत्थायवैप्रादात्सहस्रंपरिवत्सरान् १५ तर्पयामाससोमेनदेवान्वित्तैर्द्विजानपि ॥ पितॄन्स्वधाभिःकामैश्चस्त्रियःसपुरुषर्षभ १६ सौवर्णांपृथिवीं
कृत्वादशव्यामांद्विरायताम् ॥ दक्षिणामददद्राजावाजिमेधेमहाक्रतौ १७ यावत्यःसिकताराजन्गंगायांपुरुषर्षभ ॥ तावतीरेवगाःप्रादादामूर्तरयसोगयः १८
सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः १९ रंतिदेवंचसांकृत्यंमृतंसृंजयशुश्रुम ॥ सम्यगाराध्ययःशक्राद्वरंलेभेमहात
पाः १२० अन्नंचनोबहुभवेदतिथींश्चलभेमही ॥ श्रद्धाचनोमाव्यगमन्माचयाचिष्मकंचन २१ उपातिष्ठंतपशवःस्वयंतंसंशितव्रतम् ॥ ग्राम्यारण्यामहात्मा
नंरंतिदेवंयशस्विनम् २२ महानदीचर्मराशेरुत्क्लेदात्ससृजेयतः ॥ ततश्चर्मण्वतीत्येवंविख्यातासामहानदी २३ ब्राह्मणेभ्योददौनिष्कान्सदसिप्रततेनृपः ॥
तुभ्यंनिष्कंतुभ्यंनिष्कमितिक्रोशंतिवैद्विजाः २४ सहस्रंतुभ्यमित्युक्त्वाब्राह्मणान्संप्रपद्यते ॥ अन्वाहार्योपकरणंद्रव्योपकरणंचयत् २५ घटाःपात्र्यः
कटाहानिस्थाल्यश्चपिठराणिच ॥ नासीत्किंचिदसौवर्णंरंतिदेवस्यधीमतः २६ सांकृतेरंतिदेवस्ययांरात्रिमवसन्गृहे ॥ आलभ्यंतशतंगावःसहस्राणिच
विंशतिः २७ तत्रस्मसूदाःक्रोशंतिसुमृष्टमणिकुंडलाः ॥ सूपंभूयिष्ठमश्नीध्वंनाद्यमांसंयथापुरा २८ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चै
वमापुत्रमनुतप्यथाः २९ सगरंचमहात्मानंमृतंशुश्रुमसृंजय ॥ ऐक्ष्वाकंपुरुषव्याघ्रमतिमानुषविक्रमम् १३० षष्टिःपुत्रसहस्राणियंयांतमनुजग्मिरे ॥
नक्षत्रराजंवर्षांतेव्यभ्रेज्योतिर्गणाइव ३१ एकच्छत्रामहीयस्यप्रतापादभवत्पुरा ॥ योऽश्वमेधसहस्रेणतर्पयामासदेवताः १३२

उत्क्लेदात्रसस्रवात् २३ तुभ्यमिति निष्कंनिष्कशतं । 'शतंतुभ्यंशतंतुभ्यमितिस्मैवप्रताम्यति'इतिमंत्रवर्णात् । तुभ्यंनिष्कशतंददामीतिक्रोशंत्येवद्विजाः नतुकश्चिद्गृह्णाति २४ सहस्रंतुभ्य
मित्युक्त्वाब्राह्मणान्प्रतिग्रहीतॄन्प्रपद्यतेप्राप्नोति २५ पिठराणिविततमुखानिदारुपात्राणि २६ । २७ नाद्यमांसंपशुयागेउपयोगस्यमांसस्यवत्वात् २८ । २९ ऐक्ष्वाकमिक्ष्वाकुवंशजं १३० । ३१ । १३२

३३ आदेशेनआज्ञया तद्वित्तंस्वर्णप्रासादरूपं ३४ । ३५ । ३६ वैन्यंवेनपुत्रं महारण्येदंडकारण्ये ३७ । ३८ । ३९ पुटकेपुटकेपत्रेपत्रेइतिमाध्वः १४० । ४१ । ४२ त्रिनलोत्सेधान्नल्वःकिष्कुचतुःशतमितिपाठंप्रकल्प्यव्याख्यायतेप्राचीनैः । वस्तुतस्तुनलइत्यत्रच्छांदसोवर्णलोपः ४३ । ४४ विप्रलब्धंविप्रलपितं ४५ । ४६ विशोकोजातइतिशेषः ४७ । ४८ गमितःमृतः विजातःगुणवान्

यःप्रादात्कनकस्तंभंप्रासादंसर्वकांचनम् ॥ पूर्णंपद्मदलाक्षीणांस्त्रीणांशयनसंकुलम् ३३ द्विजातिभ्योऽनुरूपेभ्यःकामांश्चविविधान्बहून् ॥ यस्यादेशेनतद्वित्तं
व्यभजंतद्विजातयः ३४ खानयामासयःकोपात्पृथिवींसागरांकिताम् ॥ यस्यनाम्नासमुद्रश्चसागरत्वमुपागतः ३५ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रा
त्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ३६ राजानंचपृथुंवैन्यंमृतंशुश्रुमसृंजय ॥ यमभ्यषिंचन्संभूयमहारण्येमहर्षयः ३७ प्रथयिष्यतिवैलोकान्पृथुरित्येवशब्दितः॥
क्षताद्योवैत्रायतीतिसतस्मात्क्षत्रियःस्मृतः ३८ पृथुंवैन्यंप्रजादृष्ट्वारक्ताःस्मेतियदब्रुवन् ॥ ततोराजेतिनामास्यअनुरागादजायत १३९ अकृष्टपच्यापृथि
वीपुटकेपुटकेमधु ॥ सर्वाद्रोणदुघागावोवैन्यस्यासन्प्रशासतः ॥ १४० ॥ अरोगाःसर्वसिद्धार्थामनुष्याअकुतोभयाः ॥ यथाभिकाममवसन्क्षेत्रेषुचगृहेषुच ४१
आपस्तस्तंभिरेचास्यसमुद्रमभियास्यतः ॥ सरितश्चानुदीर्यंतध्वजभंगश्चनाभवत् ४२ हैरण्यांस्त्रिनलोत्सेधान्पर्वतानेकविंशतिं ॥ ब्राह्मणेभ्योददौराजा
योऽश्वमेधेमहामखे ४३ सचेन्ममारसृंजयचतुर्भद्रतरस्त्वया ॥ पुत्रात्पुण्यतरश्चैवमापुत्रमनुतप्यथाः ४४ किंवातूष्णींध्यायसेसृंजयत्वंनमेराजन्वाचमिमां
शृणोषि ॥ नचेन्मोघंविप्रलब्धंममेदंपथ्यंमुमूर्षोरिवसुप्रयुक्तं ४५ ॥ सृंजयउवाच ॥ शृणोमितेनारदवाचमेनांविचित्रार्थांस्रजमिवपुण्यगंधाम् ॥ राजर्षी
णांपुण्यकृतांमहात्मनांकीर्त्यायुक्तानांशोकनिर्नाशनार्थां ४६ नतेमोघंविप्रलब्धंमहर्षेदृष्ट्वैवाहंनारदत्वांविशोकः ॥ शुश्रूषेतेवचनंब्रह्मवादिन्नतृप्याम्यमृतस्येव
पानात् ४७ अमोघदर्शिन्ममचेत्प्रसादंसंतापदग्धस्यविभोप्रकुर्याः ॥ सुतस्यसंजीवनमद्यमेस्यात्तवप्रसादात्सुतसंगमश्च ४८ ॥ नारदउवाच ॥ यस्तेपुत्रो
गमितोऽयंविजातःस्वर्णष्ठीवीयमदात्पर्वतस्ते ॥ पुनस्तुतेपुत्रमहंददामिहिरण्यनाभंवर्षसहस्रिणंच १४९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासन
पर्वणिषोडशराजोपाख्यानेएकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ ॥ युधिष्ठिरउवाच ॥ सकथंकांचनष्ठीवीसृंजयस्यसुतोऽभवत् ॥ पर्वतेनकिमर्थंवादत्तस्तेन
ममारच १ यदावर्षसहस्रायुस्तदाभवतिमानवः ॥ कथमप्राप्तकौमारःसृंजयस्यसुतोमृतः २ उताहोनाममात्रंवैसुवर्णष्ठीविनोऽभवत् ॥ कथंवाकांचनष्ठीवीत्ये
तदिच्छामिवेदितुम् ३ ॥ श्रीकृष्णउवाच ॥ अत्रतेवर्णयिष्यामियथावृत्तंजनेश्वर ॥ नारदःपर्वतश्चैवद्वावृषीलोकसत्तमौ ४ मातुलोभागिनेयश्चदेवलोकादि
हागतौ ॥ विहर्तुकामौसंप्रीत्यामानुषेषुपुराविभो ५ हविःपवित्रभोज्येनदेवभोज्येनचैवहि ॥ नारदोमातुलश्चैवभागिनेयश्चपर्वतः ६

१४९ ॥ इतिशांतिपर्वे०रा०नी०भारतभाव०एकोनत्रिंशत्तमोऽध्यायः ॥ २९ ॥ सहति १ । २ । ३ । ४ । ५ हविःपवित्रभोज्येनशाल्यन्नेन देवभोज्येनघृतेन ताभ्यांविहर्तुकामावितिसंबंधः ६

७ । ८ । ९ । १० प्रगुणीभवानुकूलोभव ११ । १२ । १३ सुकुमारीनाम्ना सौम्यमुत्तमं १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ प्रवर्तितंप्रवर्तमानं २२ तेत्वां २३ । २४ । २५ ।

तावुभौतपसोपेताववनीतलचारिणौ ॥ भुंजानौमानुषान्भोगान्यथावत्पर्यधावताम् ७ प्रीतिमंतौमुदायुक्तौसमयंचैवचक्रतुः ॥ योभवेद्धृदिसंकल्पःशुभोवाय
दिवाऽशुभः ८ अन्योन्यस्यचआख्येयोमृषाशापोऽन्यथाभवेत् ॥ तौतथेतिप्रतिज्ञायमहर्षीलोकपूजितौ ९ सृंजयंश्वित्यमभ्येत्यराजानमिदमूचतुः ॥ आवां
भवतिवत्स्यावःकंचित्कालंहितायते १० यथावत्पृथिवीपालआवयोःप्रगुणोभव ॥ तथेतिकृत्वाराजातौसत्कृत्योपचचारह ११ ततःकदाचित्तौराजामहात्मानौ
तपोधनौ ॥ अब्रवीत्परमप्रीतःसुतेयंवरवर्णिनी १२ एकैवममकन्यैषायुवांपरिचरिष्यति ॥ दर्शनीयाऽनवद्यांगीशीलवृत्तसमाहिता १३ सुकुमारीकुमारीच
पद्मकिंजल्कसुप्रभा ॥ परमंसौम्यमित्युक्तंताभ्यांराजाशशासताम् १४ कन्येविप्रावुपचरदेववत्पितृवच्चह ॥ सातुकन्यातथेत्युक्त्वापितरंधर्मचारिणी १५
यथानिदेशंराज्ञस्तौसत्कृत्योपचचारह ॥ तस्यास्तेनोपचारेणरूपेणाप्रतिमेनच १६ नारदंहृच्छयस्तूर्णंसहसैवाभ्यपद्यत ॥ ववृधेहिततस्तस्यहृदिकामो
महात्मनः १७ यथाशुक्लस्यपक्षस्यप्रवृत्तौचंद्रमाःशनैः ॥ नचतंभागिनेयायपर्वतायमहात्मने १८ शशंसहृच्छयंतीव्रंव्रीडमानःसधर्मवित् ॥ तपसाचेंगितै
श्चैवपर्वतोऽथबुबोधतम् १९ कामार्तंनारदंक्रुद्धःशशापैनंततोभृशम् ॥ कृत्वासमयमव्यग्रोभवान्वैसहितोमया २० योभवेद्धृदिसंकल्पःशुभोवायदिवाऽशुभः ॥
अन्योन्यस्यसआख्येयइतितद्वैमृषाकृतम् २१ भवतावचनंब्रह्मंस्तस्मादेषशपाम्यहम् ॥ नहिकामंप्रवर्ततंभवानाचष्टमेपुरा २२ सुकुमार्यांकुमार्यांतेतस्मादेष
शपाम्यहम् ॥ ब्रह्मचारीगुरुर्यस्मात्तपस्वीब्राह्मणश्चसन् २३ अकार्षीःसमयभ्रंशमावाभ्यांयःकृतोमिथः ॥ शप्स्येतस्मात्सुसंक्रुद्धोभवंतंतंनिबोधमे २४ सुकुमा
रीचतेभार्याभविष्यतिनसंशयः ॥ वानरंचैवतेरूपंविवाहात्प्रभृतिप्रभो २५ संद्रक्ष्यंतिनराश्चान्येस्वरूपेणविनाशनम् ॥ सतद्वाक्यंतुविज्ञायनारदःपर्वतंतथा
२६ अशपत्तमपिक्रोधाद्भागिनेयंसमातुलः ॥ तपसाब्रह्मचर्येणसत्येनचदमेनच २७ युक्तोऽपिनित्यधर्मश्चनवैस्वर्गमवाप्स्यसि ॥ तौतुशप्त्वाभृशंक्रुद्धौपरस्प
रममर्षणौ २८ प्रतिजग्मतुरन्योन्यंक्रुद्धाविवगजोत्तमौ ॥ पर्वतःपृथिवींकृत्स्नांविचचारमहामतिः २९ पूज्यमानोयथान्यायंतेजसास्वेनभारत ॥ अथताम
लभत्कन्यांनारदःसृंजयात्मजाम् ३० धर्मेणविप्रप्रवरःसुकुमारीमनिंदिताम् ॥ सातुकन्यायथाशापंनारदंतंददर्शह ३१ पाणिग्रहणमंत्राणांनियोगादेवनारदम् ॥
सुकुमारीचदेवर्षिंवानरप्रतिमाननम् ३२ नैवावमन्यततदाप्रीतिमत्येवचाभवत् ॥ उपतस्थेचभर्तारंनचान्यंमनसाऽप्यगात् ३३ देवंमुनिंवायक्षंवापतित्वेप
तिवत्सला ॥ ततःकदाचिद्भगवान्पर्वतोऽनुचचारह ३४ वनंविरहितंकिंचित्तत्रापश्यत्सनारदम् ॥ ततोऽभिवाद्यप्रोवाचनारदंपर्वतस्तदा ३५ भवान्प्रसादं
कुरुतात्स्वर्गादेशायमेप्रभो ॥ तमुवाचततोदृष्ट्वापर्वतंनारदस्तथा ३६ २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

१७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेत्रिंशत्तमोऽध्यायः ॥ ३० ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६

कृतांजलिमुपासीनंदीनंदीनतरःस्वयम् ॥ त्वयाऽहंप्रथमंशप्तोवानरस्त्वंभविष्यसि ३७ इत्युक्तेनमयापश्चाच्छप्तस्त्वमपिमत्सरात् ॥ अद्यप्रभृतिवैवासंस्वर्गेनावाप्स्य
सीतिह ३८ तवनैतद्धिसदृशंपुत्रस्थानेहिमेभवान् ॥ निवर्तयेतांतौशापावन्योन्येनतदामुनी ३९ श्रीसमृद्धंतदादृष्ट्वानारदंदेवरूपिणम् ॥ सुकुमारीप्रदुद्रावपरप
त्यभिशंकया ४० तांपर्वतस्ततोदृष्ट्वाप्रद्रवंतीमनिंदिताम् ॥ अब्रवीत्तवभर्तैषनात्रकार्याविचारणा ४१ ऋषिःपरमधर्मात्मानारदोभगवान्प्रभुः ॥ तवैवाभेद्यहृद
योभातेऽभूदत्रसंशयः ४२ सानुनीताबहुविधंपर्वतेनमहात्मना ॥ शापदोषंचतंभर्तुःश्रुत्वाप्रकृतिमागता ॥ पर्वतोऽथययौस्वर्गंनारदोऽभ्यगमद्गृहान् ४३
वासुदेवउवाच ॥ प्रत्यक्षकर्तासर्वस्यनारदोभगवानृषिः ॥ एषवक्ष्यतितेपृष्टोयथावृत्तंनरोत्तम ४४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिरा०नारदपर्वतोपाख्यानेत्रिं
शत्तमोऽध्यायः ॥ ३० ॥ ॥ वैशंपायनउवाच ॥ ततोराजापांडुसुतोनारदंप्रत्यभाषत ॥ भगवञ्छ्रोतुमिच्छामिसुवर्णष्ठीविसंभवम् १ एवमुक्तस्तुसमुनिर्ध
र्मराजेननारदः ॥ आचचक्षेयथावृत्तंसुवर्णष्ठीविनंप्रति २ ॥ नारदउवाच ॥ एवमेतन्महाबाहोयथाऽयंकेशवोऽब्रवीत् ॥ कार्यस्यास्यतुयच्छेषंतत्तेवक्ष्यामिपृच्छ
तः ३ अहंचपर्वतश्चैवस्वस्रीयोमेमहामुनिः ॥ वस्तुकामावभिगतौसृंजयंजयतांवरम् ४ तत्रावांपूजितौतेनविधिदृष्टेनकर्मणा ॥ सर्वकामैःसुविहितौनिवसावो
ऽस्यवेश्मनि ५ व्यतिक्रांतासुवर्षासुसमयेगमनस्यच ॥ पर्वतोमामुवाचेदंकालेवचनमर्थवत् ६ आवामस्यनरेंद्रस्यगृहेपरमपूजितौ ॥ उषितौसमयेब्रह्मंस्तद्वि
चिंतयसांप्रतम् ७ ततोऽहमब्रुवंराजन्पर्वतंशुभदर्शनम् ॥ सर्वमेतत्त्वयिविभोभागिनेयोपपद्यते ८ वरेणच्छंद्यतांराजालभतांयद्यदिच्छति ॥ आवयोस्तपसासिद्धिं
प्राप्नोतुयदिमन्यसे ९ ततआहूयराजानंसृंजयंजयतांवरम् ॥ पर्वतोऽनुमतोवाक्यमुवाचकुरुपुंगव १० प्रीतौस्वोनृपसत्कारैर्भवदार्जवसंभृतैः ॥ आवाभ्यामभ्यनुज्ञातो
वरंनृवरचिंतय ११ देवानामविहिंसायांनभवेन्मानुषक्षयम् ॥ तद्गृहाणमहाराजपूजार्हौनौमतोभवान् १२ ॥ सृंजयउवाच ॥ प्रीतौभवंतौयदिमेकृतमेतावतामम ॥
एषएवपरोलाभोनिर्वृत्तोमेमहाफलः १३ तमेवंवादिनंभूयःपर्वतःप्रत्यभाषत ॥ वृणीष्वराजन्संकल्पंयत्तेहृदिचिरंस्थितम् १४ ॥ सृंजयउवाच ॥ अभीप्सामिसुतंवी
रंवीर्यवंतंदृढव्रतम् ॥ आयुष्मंतंमहाभागंदेवराजसमद्युतिम् १५ ॥ पर्वतउवाच ॥ भविष्यत्येषतेकामोनत्वायुष्मान्भविष्यति ॥ देवराजाभिभूत्यर्थंसंकल्पोह्येषतेहृदि
१६ ख्यातःसुवर्णष्ठीवीतिपुत्रस्तवभविष्यति ॥ रक्ष्यश्चदेवराजात्सदेवराजसमद्युतिः १७ तच्छ्रुत्वासृंजयोवाक्यंपर्वतस्यमहात्मनः ॥ प्रसादयामासतदानैतदेवंभवेदिति
१८ आयुष्मान्मेभवेत्पुत्रोभवतस्तपसामुने ॥ नचतंपर्वतःकिंचिदुवाचेंद्रव्यपेक्षया १९ तमहंनृपतिंदीनमब्रुवंपुनरेवच ॥ स्मर्तव्योऽस्मिमहाराजदर्शयिष्यामितेसुतम् २०

सांप्रतंकल्याणम् ७ । ८ । ९ । १० । ११ देवानामिति येनदेवपीडामनुष्यक्षयश्चनभवतितत्ताहृशंवरंगृहाणेतिभावः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

अहंतेदयितंपुत्रंप्रेतराजवशंगतम् ॥ पुनर्दास्यामितद्रूपंमाशुचःपृथिवीपते २१ एवमुक्त्वातुनृपतिंप्रयातौस्वोयथेप्सितम् ॥ सृंजयश्चयथाकामंप्रविवेशस्वमंदि
रम् २२ सृंजयस्याथराजर्षेःकस्मिंश्चित्कालपर्यये ॥ जज्ञेपुत्रोमहावीर्यस्तेजसाप्रज्वलन्निव २३ ववृधेसयथाकालंसरसीवमहोत्पलम् ॥ बभूवकांचनष्ठीवीयथार्थं
नामतस्यतत् २४ तदद्भुततमंलोकेपप्रथेकुरुसत्तम ॥ बुबुधेतच्चदेवेंद्रोवरदानंमहर्षितः २५ ततःस्वाभिभवाद्भीतोबृहस्पतिमतेस्थितः ॥ कुमारस्यांतरप्रेक्षीबभू
ववलवृत्रहा २६ चोदयामासतद्वज्रंदिव्यास्त्रंमूर्तिमत्स्थितम् ॥ व्याघ्रोभूत्वाजहीमंत्वंराजपुत्रमितिप्रभो २७ प्रवृद्धःकिलवीर्येणमामेषोऽभिभविष्यति ॥ सृंजय
स्यसुतोवज्रयथैनंपर्वतोऽब्रवीत् २८ एवमुक्तस्तुशक्रेणवज्रःपरपुरंजयः ॥ कुमारमंतरप्रेक्षीनित्यमेवान्वपद्यत २९ सृंजयोऽपिसुतंप्राप्यदेवराजसमद्युतिम् ॥ हृष्टः
सांतःपुरोराजावननित्योबभूवह ३० ततोभागीरथीतीरेकदाचिन्निर्जनेवने ॥ धात्रीद्वितीयोबालःसक्रीडार्थंपर्यधावत् ३१ पंचवर्षकदेशीयोबालोनागेंद्रविक्रमः ॥
सहसोत्पतितंव्याघ्रमाससादमहाबलम् ३२ सबालस्तेननिष्पिष्टोवेपमानोनृपात्मजः ॥ व्यसुःपपातमेदिन्यांततोधात्रीविचुक्रुशे ३३ हत्वातुराजपुत्रंसतत्रैवांत
रधीयत ॥ शार्दूलोदेवराजस्यमाययांतर्हितस्तदा ३४ धात्र्यास्तुनिनदंश्रुत्वारुदत्याःपरमार्तवत् ॥ अभ्यधावततंदेशंस्वयमेवमहीपतिः ३५ सददर्शशयानंतंगता
सुंपीतशोणितम् ॥ कुमारंविगतानंदंनिशाकरमिवच्युतम् ३६ सतमुत्संगमारोप्यपरिपीडितमानसः ॥ पुत्रंरुधिरसंसिक्तंपर्यदेवयदातुरः ३७ ततस्तामातरस्त
स्यरुदत्यःशोककर्शिताः ॥ अभ्यधावंततंदेशंयत्रराजासंसृंजयः ३८ ततःसराजासस्मारमामेवगतमानसः ॥ तदाऽहंचिंतनंज्ञात्वागतवांस्तस्यदर्शनम् ३९ मयैता
निचवाक्यानिश्रावितःशोकलालसः ॥ यानितेयदुवीरेणकथितानिमहीपते ४० संजीवितश्चापिपुनर्वासवानुमतेतदा ॥ भवितव्यंतथातच्चनतच्छक्यमतोऽन्यथा
४१ ततऊर्ध्वंकुमारस्तुस्वर्णष्ठीवीमहायशाः ॥ चित्तंप्रसादयामासपितुर्मातुश्चवीर्यवान् ४२ कारयामासराज्यंचपितरिस्वर्गतेनृप ॥ वर्षाणांशतमेकंचसहस्रंभीमविक्र
मः ४३ ततइजेमहायज्ञैर्बहुभिर्भूरिदक्षिणैः ॥ तर्पयामासदेवांश्चपितॄंश्चैवमहाद्युतिः ४४ उत्पाद्यचबहून्पुत्रान्कुलसंतानकारिणः ॥ कालेनमहताराजन्कालधर्म
मुपेयिवान् ४५ सत्वंराजेंद्रसंजातंशोकमेनंनिवर्तय ॥ यथात्वांकेशवःप्राहव्यासश्चसुमहातपाः ४६ पितृपैतामहंराज्यमास्थायधुरमुद्वह ॥ इष्ट्वापुण्यैर्महायज्ञैरि
ष्टंलोकमवाप्स्यसि ४७ इतिश्रीमहाभारतेशां०रा०स्वर्णष्ठीविसंभवोपाख्यानेएकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ वैशंपायनउवाच ॥ तूर्ष्णींभूतंतुराजानंशोचमानंयु
धिष्ठिरम् ॥ तपस्वीधर्मतत्त्वज्ञःकृष्णद्वैपायनोऽब्रवीत् १ ॥ व्यासउवाच ॥ प्रजानांपालनंधर्मोराज्ञांराजीवलोचन ॥ धर्मःप्रमाणंलोकस्यनित्यंधर्मानुवर्तिनः २

॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ तूर्ष्णींभूतमिति १ । २

तचस्माद्धर्ममनुतिष्ठस्वपदंपालयेतिचसंबंधः ३ । ४ । ५ । ६ शातयीतमारयेत् ७ । ८ । ९ । १० मेर्मादहंति हृदयंपचंति शरीरंशोषयंति ११ मयाबहवोघातिताइत्युक्तं तत्किंहनन क्रियायांतवप्रयोज्यकर्तृत्वंप्रयोजककर्तृत्वंवावध्यस्यचकर्मत्वंवाप्राकृतकर्मफलभोक्तृत्वंवेतिविकल्पानाह ईश्वरइति १२ नाद्यइत्याह ईश्वरेणेति परशोरिवपरप्रयोज्यस्यतवहंतृत्वंनास्तीत्यर्थः १३ । १४ परप्रयोज्योऽप्यहंपरशोःप्रयोक्ताऽस्मिनतुपरशुवदचेतनोऽस्मीतिममपापसंबंधोऽस्त्येवेत्याह अथवेति प्राप्नुयात्परशोरुपादाता एवंतर्हियेनपरशोर्दंडःशस्त्रंपरशुश्चकृतस्तस्यैवपापंकर्तृ नाप्नुयात्तस्यप्रथमप्रयोज्यत्वात्पुरुषेउपादातरिवतन्नविद्यतेतस्यजघन्यत्वात् १५ नचेति यदिचैतन्नेष्टं एतत्किं यदन्येनप्रहर्त्राकृतंपापंतस्यफलंशस्त्रकर्ताआप्नुयादिति । तर्हिजघन्यप्रयोज्ये

अनुतिष्ठस्वतद्राजन्पितृपैतामहंपदम् ॥ ब्राह्मणेषुतपोधर्मःसनित्योवेदनिश्चितः ३ तत्प्रमाणंब्राह्मणानांशाश्वतंभरतर्षभ ॥ तस्यधर्मस्यकृत्स्नस्यक्षत्रियःपरिरक्षिता ४ यःस्वयंप्रतिहंतिस्मशासनंविषयेरतः ॥ सबाहुभ्यांविनिग्राह्योलोकयात्राविघातकः ५ प्रमाणमप्रमाणंयःकुर्यान्मोहवशंगतः ॥ भृत्योवायदिवापुत्रस्तपस्वीवाथ कश्चन ६ पापान्सर्वैरुपायैस्तान्नियच्छेच्छातयीतवा ॥ अतोऽन्यथावर्तमानोराजाप्राप्नोतिकिल्बिषम् ७ धर्मंविनश्यमानंहियोनरक्षेत्सधर्महा ॥ तेत्वयाधर्महं तारोनिहताःसपदानुगाः ८ स्वधर्मेवर्तमानस्त्वंकिंनुशोचसिपांडव ॥ राजाहिहन्याद्दद्याच्चप्रजारक्षेच्चधर्मतः ९ ॥ युधिष्ठिरउवाच ॥ नतेऽभिशंकेवचनंयद्ब्रवी षितपोधन ॥ अपरोक्षोहितेधर्मःसर्वधर्मविदांवर १० मयात्ववध्याबहवोघातिताराज्यकारणात् ॥ तानिकर्माणिमेब्रह्मन्दहंतिचपचंतिच ११ ॥ व्यासउवाच ॥ ईश्वरोवाभवेत्कर्तापुरुषोवाऽपिभारत ॥ हठोवावर्ततेलोकेकर्मजंवाफलंस्मृतम् १२ ईश्वरेणनियुक्तोहिसाध्वसाधुचभारत ॥ कुरुतेपुरुषःकर्मफलमीश्वरगामितत् ॥ १३ यथाहिपुरुषश्छिंद्याद्वृक्षंपरशुनावने ॥ छेत्तुरेवभवेत्पापंपरशोर्नकथंचन १४ अथवातदुपादानात्प्राप्नुयात्कर्मणःफलम् ॥ दंडशस्त्रकृतंपापंपुरुषेतन्नविद्यते १५ नचैतदिष्टंकौंतेययदन्येनकृतंफलम् ॥ प्राप्नुयादितियस्माच्चईश्वरेतन्निवेशय १६ अथापिपुरुषःकर्ताकर्मणोःशुभपापयोः ॥ नपरोविद्यतेतस्मादेवमेतच्छुभंकृतम् १७ नहिकश्चित्क्वचिद्राजन्दिष्टंप्रतिनिवर्तते ॥ दंडशस्त्रकृतंपापंपुरुषेतन्नविद्यते १८ यदिवामन्यसेराजन्हतमेकंप्रतिष्ठितम् ॥ एवमप्यशुभंकर्मनभूतंनभवि ष्यति १९ अथाभिपत्तिर्लोकस्यकर्तव्यापुण्यपापयोः ॥ अभिपन्नमिदंलोकेराज्ञामुद्यतदंडनम् २०

त्वय्यपिपापाभावादीश्वरेएवतन्निवेशय १६ अथापीति यदापुरुषएवकर्तापरईश्वरोनास्तितस्मादपिहेतोस्त्वयाएतच्छुभमेवकृतम् १७ यतःकश्चिदपिदिष्टंप्रत्यदृष्टस्यप्रतिकूलोभूत्वाऽवश्यंभा विनःकर्मणःसकाशान्ननिवर्तते दैवस्यदुर्लंघ्यत्वादितिभावः । ननुदिष्टमपिजन्मांतरीयंस्वस्यैवापराधइत्याशंक्याह दंडेति पूर्वपूर्वापराधस्योत्तरोत्तरहेतुत्वमित्यनादित्वादिदानींतनस्यकर्तुर्ना पराधोऽस्तीत्यतःप्राचीनकर्तादंडशस्त्रकृदिवनपर्यनुयोज्यइतिभावः १८ तृतीयंपक्षंदूषयति प्रतिष्ठितंनिश्चितंयथास्यात्तथायदिपुरुषंहतंहननक्रियायाःकर्मभूतमेवमन्यसेतर्हिस्वभाववादिनस्ते भूतभाव्यशुभाभावात्वृथैवशोकइत्यर्थः १९ चतुर्थंपक्षमाह अथेति पुण्यपापयोःसुखदुःखयोःअभिपत्तिरुपपत्तिःकर्तव्या साचधर्माधर्मांतरेणनघटते तौचशास्त्रैकगम्याविति चेद्राज्ञामुद्यतदं डनमुद्धतदमनंलोकेशास्त्रेचोपपन्नतरमित्यर्थः २०



अत्रशंकते तथाऽपीति यद्यप्येवंतथापिलोकेशास्यमानेकर्माणिशुभान्यशुभानिचसमापतंत्यवश्यभावीतिफलंचप्रयच्छंत्यतोममप्रायोपवेशनमेववरमितिभावः २१ समाधत्ते एवमिति यस्मात्क र्मणःपापादशुभफलात्मकंपापप्रवृत्तिरूपंकर्मभवतितत्पापमूलंकर्मत्यज २२ सापवादेनिषेधेऽपिस्वधर्मेस्थितस्यतेआत्मत्यागोनोचितइत्यर्थः २३ ननुतथापिनिंद्यात्कर्मणःपापंभवतीत्याशंक्याह तथापिलोकेकर्माणिसमावर्तंतिभारत ॥ शुभाशुभफलंचैतेप्राप्नुवंतीतिमेमतिः २१ एवमप्यशुभंकर्मकर्मणस्तत्फलात्मकम् ॥ त्यजत्वंराजशार्दूलमैवंशोकेमनः कृथाः २२ स्वधर्मेवर्तमानस्यसापवादेऽपिभारत ॥ एवमात्मपरित्यागस्तवराजन्नशोभनः २३ विहितानिहिकौंतेयप्रायश्चित्तानिकर्मणाम् ॥ शरीरवांस्तानि कुर्यादशरीरःपराभवेत् २४ तद्राजन्जीवमानस्त्वंप्रायश्चित्तंकरिष्यसि ॥ प्रायश्चित्तमकृत्वातुप्रेत्यतप्तासिभारत २५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध र्मानुशासनपर्वणि प्रायश्चित्तविधौद्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ युधिष्ठिरउवाच ॥ हताःपुत्राश्चपौत्राश्चभ्रातरःपितरस्तथा ॥ श्वशुरागुरवश्चैवमातु लाश्चपितामहाः १ क्षत्रियाश्चमहात्मानःसंबंधिसुहृदस्तथा ॥ वयस्याभागिनेयाश्चज्ञातयश्चपितामह २ बहवश्चमनुष्येंद्रानानादेशसमागताः ॥ घातिताराज्यलुब्धेनमयैकेनपितामह ३ तांस्तादृशानहंहत्वाधर्मनित्यान्महीक्षितः ॥ असकृत्सोमपान्वीरान्किंप्राप्स्यामितपोधन ४ दह्याम्यनिशमद्यापिचिंतयानः पुनःपुनः ॥ हीनांपार्थिवसिंहैस्तैःश्रीमद्भिःपृथिवीमिमाम् ५ दृष्ट्वाज्ञातिवधंघोरंहतांश्चशतशःपरान् ॥ कोटिशश्चनरानन्यान्परितप्येपितामह ६ कानुता सांवरस्त्रीणामवस्थाऽद्यभविष्यति ॥ विहीनानांतुतनयैःपतिभिर्भ्रातृभिस्तथा ७ अस्मानंतकरान्घोरान्पांडवान्वृष्णिसंहतान् ॥ आक्रोशंत्यःकृशादीनाःप्र पतिष्यंतिभूतले ८ अपश्यंत्यःपितॄन्भ्रातॄन्पतीन्पुत्रांश्चयोषितः ॥ त्यक्त्वाप्राणान्प्रियान्सर्वागमिष्यंतियमक्षयम् ९ वत्सलत्वाद्द्विजश्रेष्ठतत्रमेनास्तिसंशयः ॥ व्यक्तंसौक्ष्म्याच्चधर्मस्यप्राप्स्यामःस्त्रीवधंवयम् १० यद्वयंसुहृदोहत्वाकृत्वापापमनंतकम् ॥ नरकेनिपतिष्यामोह्यधःशिरसएवह ११ शरीराणिविमोक्ष्याम स्तपसोग्रेणसत्तम ॥ आश्रमाणांविशेषंत्वमथाचक्ष्वपितामह १२ ॥ वैशंपायनउवाच ॥ युधिष्ठिरस्यतद्वाक्यंश्रुत्वाद्वैपायनस्तदा ॥ निरीक्ष्यनिपुणंबुद्ध्या ऋषिःप्रोवाचपांडवम् १३ ॥ व्यासउवाच ॥ माविषादंकृथाराजन्क्षत्रधर्ममनुस्मरन् ॥ स्वधर्मेणहताह्येतेक्षत्रियाःक्षत्रियर्षभ १४ कांक्षमाणाःश्रियंकृत्स्नांपृ थिव्यांचमहद्यशः ॥ कृतांतविधिसंयुक्ताःकालेननिधनंगताः १५ नत्वंहंतानभीमोऽयंनार्जुनोनयमावपि ॥ कालःपर्यायधर्मेणप्राणानादत्तदेहिनाम् १६ न तस्यमातापितरौनानुग्राह्योहिकश्चन ॥ कर्मसाक्षीप्रजानांयस्तेनकालेनसंहृताः १७

विहितानीति २४ । २५ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपेद्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥ ॥ हताःपुत्राश्चेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ १० अनंतकंप्रायश्चित्तैरप्यविनाश्यम् ११ शरीराणीति ममतुतपएवप्रशस्तमितिनिश्चयोऽस्ति तथापिआश्रमाणांमध्येविशेषंश्रेष्ठमुक्तदोषनिवर्तनक्षममाचक्ष्वेत्यर्थः १२ । १३ । १४ कृतांत विधिःपरमाणहरणंतेनसंयुक्ताः स्वापराधेनैवहताइत्यर्थः १५ वस्तुतस्तुतेषामपिस्वातंत्र्यंनास्तीत्याह नत्वमिति पर्यायधर्मेणमरणविधिना आदत्तगृहीतवान् १६ । १७

हेतुमात्रंनिमित्तमात्रमिदंयुद्धं तस्यतेन अस्मैअस्य ऐश्वरंनियंतृत्वम् १८ कर्मैवसूत्रंबंधनंतदात्मकंतत्प्रधानं ईश्वरोऽपिकर्मानुसारेणफलंददन्नवैषम्यनैर्घृण्यदोषौभजतीत्यर्थः कालंकर्मापिकालएवे त्यर्थः १९ । २० आत्मनइति शांतस्यापितवहिंस्रेकर्मणिप्रवृत्तिरितिकालस्यैवैतन्माहात्म्यमित्यर्थः २१ । २२ पुरुषस्येति उत्पत्तिवद्विनाशोऽपियादृच्छिकएवेतिभावः २३ व्यलीकमनृतंचि त्तवैतंसिकंचित्तबंधनंतदर्थं तन्निवृत्त्यर्थंमृषाभूतमपिहंतृत्वादिकंयदिसत्यमितिमन्यसेतर्हिप्रायश्चित्तंकुर्वित्यर्थः २४ यवीयसःयवीयांसः २५ सुमुच्छ्रयोविरोधः २६ । २७ संश्रिताःसन्नद्धाः

हेतुमात्रमिदंतस्यविहितंभरतर्षभ ॥ यद्धंतिभूतैर्भूतानितदस्मैरूपमैश्वरम् १८ कर्मसूत्रात्मकंविद्धिसाक्षिणंशुभपापयोः ॥ सुखदुःखगुणोदर्ककालंकालफल प्रदम् १९ तेषामपिमहाबाहोकर्माणिपरिचिंतय ॥ विनाशहेतुकानिस्वंयैस्तेकालवशंगताः २० आत्मनश्चविजानीहिनियतव्रतशासनम् ॥ यदात्वमीदृशंकर्म विधिनाऽऽक्रम्यकारितः २१ त्वष्ट्रेवविहितंयंत्रंयथाचेष्टयितुर्वशे ॥ कर्मणाकालयुक्तेनतथेदंचेष्टतेजगत् २२ पुरुषस्यहिदृष्ट्वेमामुत्पत्तिमनिमित्ततः ॥ यदृच्छया विनाशंचशोकहर्षावनर्थकौ २३ व्यलीकमपियत्त्वत्रचित्तवैतंसिकंतव ॥ तदर्थमिष्यतेराजन्प्रायश्चित्तंतदाचर २४ इदंतुश्रूयतेपार्थयुद्धेदेवासुरेपुरा ॥ असु राभ्रातरोज्येष्ठादेवाश्चापियवीयसः २५ तेषामपिश्रीनिमित्तंमहानासीत्समुच्छ्रयः ॥ युद्धंवर्षसहस्राणिद्वात्रिंशदभवत्किल २६ एकार्णवांमहींकृत्वारुधिरेणप रिप्लुताम् ॥ जघ्नुर्दैत्यांस्तथादेवास्त्रिदिवंचाभिलेभिरे २७ तथैवपृथिवींलब्ध्वाब्राह्मणावेदपारगाः ॥ संश्रितादानवानांवैसाह्यार्थंदर्पमोहिताः २८ शालावृकाइ तिख्यातास्त्रिषुलोकेषुभारत ॥ अष्टाशीतिसहस्राणितेचापिविबुधैर्हताः २९ धर्मंव्युच्छित्तिमिच्छंतोयेऽधर्मस्यप्रवर्तकाः ॥ हंतव्यास्तेदुरात्मानोदेवैर्दैत्याइ वोल्बणाः ३० एकंहत्वायदिकुलेशिष्टानांस्यादनामयम् ॥ कुलंहत्वाचराष्ट्रंचनतद्वृत्तोपघातकम् ३१ अधर्मरूपोधर्मोहिकश्चिदस्तिनराधिप ॥ धर्मश्चाधर्म रूपोऽस्तितच्चज्ञेयंविपश्चिता ३२ तस्मात्संस्तंभयात्मानंश्रुतवानसिपांडव ॥ देवैःपूर्वगतंमार्गमनुयातोसिभारत ३३ नहीदृशागमिष्यंतिनरकंपांडवर्षभ ॥ भ्रातॄनाश्वासयैतांस्त्वंसुहृदश्चपरंतप ३४ योहिपापसमारंभेकार्येतद्भावभावितः ॥ कुर्वन्नपितथैवस्यात्कृत्वाचनिरपत्रपः ३५ तस्मिंस्तत्कलुषंसर्वंसमाप्तमि तिशब्दितम् ॥ प्रायश्चित्तंनतस्यास्तिह्रासोवापापकर्मणः ३६ त्वंतुशुक्लाभिजातीयःपरदोषेणकारितः ॥ अनिच्छमानःकर्मेदंकृत्वाचपरितप्यसे ३७ अ श्वमेधोमहायज्ञःप्रायश्चित्तमुदाहृतं॥ तमाहरमहाराजविपाप्मैवंभविष्यसि ३८ मरुद्भिःसहजित्वाऽरीन्भगवान्पाकशासनः॥ एकैकंक्रतुमाहृत्यशतकृत्वःशतक्रतुः३९

साह्यार्थंसाहाय्यार्थम् २८ । २९ अधर्मस्येतिच्छेदः ३० राष्ट्रेऽनामयंस्यात्तर्हितदेकस्यकुलस्यवाहननंतद्वृत्तोपघातकंधर्मनाशकंनभवति ३१ अधर्मरूपोधर्मवद्व्रात्यधर्मः यथाशालावृकाख्यब्राह्म णवधः धर्मश्चाधर्मःयथाकर्णपर्वोक्तसत्यवादिनःचोरेभ्यःकार्पटिकमार्गप्रदिशतः ३२ । ३३ । ३४ तद्भावभावितःपापभावनांगतः कुर्वन्पापमितिवर्तते ३५ तस्मिन्निति तस्यापश्चात्तापिनो निर्लज्जस्यप्रायश्चित्तंवातेनपापह्रासोवानास्तीत्यर्थः ३६ परदोषेणदुर्योधनदोषेण ३७ । ३८ । ३९



४० महीयंतंमहीयमानं ४१ । ४२ हतनाथानांक्षीणांशोकेनममदोषोनंतइत्युक्तंतत्राह तेषामिति ४३ । ४४ कामाःआशेरतेऽस्मिन्कामाशयःपूर्णकामइत्यर्थः ४५ । ४६ । ४७ । ४८ ॥ इति शांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेत्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥ ॥ ७ ॥ ॥ कानिकृत्वेति प्रायश्चित्तीयतेप्रायश्चित्तेऽधिक्रियते १ मिथ्यानुवर्तयन्कापथ्यंचरन् २ सूर्येणाभ्युदितः यस्मिन्शयानेसतिसूर्योऽभ्युदेतीत्यर्थः । अभिनिर्मुक्तो यस्मिन्शयानेसतिसूर्योऽस्तंगच्छतीत्यर्थः । अव्याधितंचेत्स्वपंतमादित्योऽभ्युदियादित्यादिस्मृत्युक्तप्रायश्चित्तंसकुर्या

धूतपाप्माजितस्वर्गोलोकान्प्राप्यसुखोदयान् ॥ मरुद्गणैर्वृतःशक्रःशुशुभेभासयन्दिशः ४० स्वर्गेलोकेमहीयंतमप्सरोभिःशचीपतिम् ॥ ऋषयःपर्युपासंतेदेवाश्च विबुधेश्वरम् ४१ सेयंत्वामनुसंप्राप्ताविक्रमेणवसुंधरा ॥ निर्जिताश्चमहीपालाविक्रमेणत्वयाऽनघ ४२ तेषांपुराणिराष्ट्राणिगत्वाराजन्सुहृद्वृतः ॥ भ्रातॄन्पुत्रांश्चपौ त्रांश्चस्वेस्वेराज्येऽभिषेचय ४३ बालानपिचगर्भस्थान्सांत्वेनसमुदाचरन् ॥ रंजयन्प्रकृतीःसर्वाःपरिपाहिवसुंधराम् ४४ कुमारोनास्तियेषांचकन्यास्तत्राभिषे चय ॥ कामाशयोहिस्त्रीवर्गःशोकमेवंप्रहास्यसि ४५ एवमाश्वासनंकृत्वासर्वराष्ट्रेषुभारत ॥ यजस्ववाजिमेधेनयथेंद्रोविजयीपुरा ४६ अशोच्यास्तेमहात्मानः क्षत्रियाःक्षत्रियर्षभ ॥ स्वकर्मभिर्गतानाशंकृतांतबलमोहिताः ४७ अवाप्तःक्षत्रधर्मस्तेराज्यंप्राप्तमकंटकम् ॥ रक्षस्वधर्मंकौंतेयश्रेयान्यःप्रेतभारत ४८ ॥ इति श्रीम०शां०रा०प्रायश्चित्तीयोपाख्यानेत्रयस्त्रिंशत्तमोऽध्यायः ३३ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कानिकृत्वेहकर्माणिप्रायश्चित्तीयतेनरः ॥ किंकृत्वामुच्यतेतत्र तन्मेब्रूहिपितामह ॥ १ ॥ ॥ व्यासउवाच ॥ ॥ अकुर्वन्विहितंकर्मप्रतिषिद्धानिचाचरन् ॥ प्रायश्चित्तीयतेह्येवंनरोमिथ्याऽनुवर्तयन् २ सूर्येणाभ्युदितोय श्चब्रह्मचारीभवत्युत ॥ तथासूर्याभिनिर्मुक्तःकुनखीश्यावदन्नपि ३ परिवित्तिःपरिवेत्ताब्रह्मघ्नोयश्चकुत्सकः ॥ दिधिषूपपतिर्यःस्यादग्रेदिधिषुरेवच ४ अवकीर्णी भवेद्यश्चद्विजातिवधकस्तथा ॥ अतीर्थेब्राह्मणस्त्यागीतीर्थेचाप्रतिपादकः ५ ग्रामघातीचकौंतेयमांसस्यपरिविक्रयी ॥ यश्चाग्नीनपविध्येततथैवब्रह्मविक्रयी ६ गुरुस्त्रीवधकोयश्चपूर्वःपूर्वस्तुगर्हितः ॥ वृथापशुसमालंभीगृहदाहस्यकारकः ७ अनृतेनोपवर्तीचप्रतिरोद्धागुरोस्तथा ॥ एतान्येनांसिसर्वाणिव्युत्क्रांतसमयश्च यः ८ अकार्याणितुवक्ष्यामियानितानिनिबोधमे ॥ लोकवेदविरुद्धानितान्येकाग्रमनाःशृणु ९ स्वधर्मस्यपरित्यागःपरधर्मस्यचक्रिया ॥ अयाज्ययाजनंचैव तथाऽभक्ष्यस्यभक्षणम् १० शरणागतसंत्यागोभृत्यस्याभरणंतथा ॥ रसानांविक्रयश्चापितिर्यग्योनिवधस्तथा ११

दित्यर्थः । कुनखीश्यावदन्निति च'स्वर्णहारीतुकुनखीसुरापःश्यावदंतकः'इतिकर्मविपाकेजन्मांतरीयदोषवताऽपिसूर्यारुणसंवादादावुपदिष्टंप्रायश्चित्तंकर्तव्यमित्युक्तं ३ अनूढेज्येष्ठेऊढवान्कनिष्ठः परिवेत्ता परिवित्तिःपूर्वजः ज्येष्ठायामनूढायांकनिष्ठामूढवानग्रेदिधिषुः दिधिषूपपतिस्तुकनिष्ठाविवाहोत्तरंज्येष्ठामूढवान् ४ अवकीर्णीनष्टव्रतः अतीर्थेअपात्रे त्यागीदाता ५ ग्रामघातीसमूहहंता । याजीतिपाठांतरं मांसस्येतिनृपश्वादेः अपविध्येतत्यजेत् । ब्रह्मविक्रयीभृतकाध्यापकः राजविक्रयीतिपाठेसोमविक्रयी । राजानमाप्याययेत्यादौसोमेराजशब्दश्रवणात् ६ । ७ । ८ । ९ अभक्ष्यस्यलशुनादेः १० रसानांलवणगुडादीनां ११

नित्यदेयानिमोप्रासादीनि १२ दक्षिणानामप्रतिश्रुतानां १३ विवदते धनाद्यर्थंपित्रासहकलहंकरोति । अप्रजायन्नृपर्भपत्न्यांकालेमैथुनमकुर्वन् १४ इतरेणसंक्षेपेण १५ एतानिस्वधर्मस्यपरित्यागइत्यादीनिकर्माणिक्रियमाणानियेमानवाः उपजीवंतइविशेषः १६ जिघांसींहंतुमिच्छावान् इयात्गच्छेत् १७ मंत्रोमन्युरकार्षीन्नमोनमइत्यादिर्मन्युर्वेस्वाहेत्यंतः १८ मन्युःक्रोधःतन्मन्युंशत्रोःक्रोधंप्रतिऋच्छतिगच्छति क्रोधएवतंप्रतीपीभूयपरशरीरद्वाराहंतीत्यर्थः १९ असाध्यरोगादिनाप्राणात्ययेउपस्थितेजीवनार्थंमदिरामपिआचरन्पिबन्धर्मपरैःचिकित्सकैःआदेशितउप

आधानादीनिकर्माणिशक्तिमान्नकरोतियः ॥ अप्रयच्छंश्चसर्वाणिनित्यदेयानिभारत १२ दक्षिणानामदानंचब्राह्मणस्वाभिमर्शनम् ॥ सर्वाण्येतान्यकार्याणिप्राहुर्धर्मविदोजनाः १३ पित्राविवदतेपुत्रोयश्चस्याद्गुरुतल्पगः ॥ अप्रजायन्नरव्याघ्रभवत्यधार्मिकोनरः १४ उक्तान्येतानिकर्माणिविस्तरेणेतरेणच ॥ यानिकुर्वन्नकुर्वंश्चप्रायश्चित्तीयतेनरः १५ एतान्येवतुकर्माणिक्रियमाणानिमानवः ॥ येषुयेषुनिमित्तेषुनलिप्यंतेऽथतान्शृणु १६ प्रगृह्यशस्त्रमायांतमपिवेदांतगंरणे ॥ जिघांसंतंजिघांसीयान्नतेनब्रह्महाभवेत् १७ इतिचाप्यत्रकौंतेयमंत्रोवेदेषुपठ्यते ॥ वेदप्रमाणविहितंधर्मंचप्रब्रवीमिते १८ अपेतंब्राह्मणंवृत्ताद्योहन्यादाततायिनम् ॥ नतेनब्रह्महासस्यान्मन्युस्तन्मन्युमृच्छति १९ प्राणात्ययेतथाऽज्ञानादाचरन्मदिरामपि ॥ आदेशितोधर्मपरैःपुनःसंस्कारमर्हति २० एतत्तेसर्वमाख्यातंकौंतेयाभक्ष्यभक्षणम् ॥ प्रायश्चित्तविधानेनसर्वमेतेनशुद्ध्यति २१ गुरुतल्पंहिगुर्वर्थंनदूषयतिमानवम् ॥ उद्दालकःश्वेतकेतुंजनयामाससशिष्यतः २२ स्तेयंकुर्वंश्चगुर्वर्थमापत्सुननिषिध्यते ॥ बहुशःकामकारेणनचेद्यःसंप्रवर्तते २३ अन्यत्रब्राह्मणस्वेभ्यआददानोनदुष्यति ॥ स्वयमप्राशितायश्चनसपापेनलिप्यते २४ प्राणत्राणेऽनृतंवाच्यमात्मनोवापरस्यच ॥ गुर्वर्थेस्त्रीषुचैवस्याद्विवाहकरणेषुच २५ नावर्ततेव्रतंस्वप्नेशुक्रमोक्षेकथंचन ॥ आज्यहोमःसमिद्धेऽग्नौप्रायश्चित्तंविधीयते २६ पारिवित्त्यंतुपतितेनास्तिप्रव्रजितेतथा ॥ भिक्षितेपारदार्यंचतद्धर्मस्यनदूषकम् २७ वृथापशुसमालंभंनैवकुर्यान्नकारयेत् ॥ अनुग्रहःपशूनांहिसंस्कारोविधिनोदितः २८ अनर्हेब्राह्मणेदत्तमज्ञानात्तन्नदूषकम् ॥ सत्काराणांतथातीर्थेनित्यंवाप्रतिपादनम् २९ स्त्रियास्तथाऽपचारिण्यानिष्कृतिःस्याददूषिका ॥ अपिसापूयतेतेननतुभर्ताप्रदुष्यति ३० तत्त्वंज्ञात्वातुसोमस्यविक्रयःस्याददोषवान् ॥ असमर्थस्यभृत्यस्यविसर्गःस्याददोषवान् ॥ वनदाहोगवामर्थेक्रियमाणोनदूषकः ३१

दिष्टः २० । २१ गुर्वर्थंगुर्वाज्ञया २२ । २३ । २४ । २५ व्रतंनावर्ततेपुनरुपनयनंनकर्तव्यमित्यर्थःआज्यहोमः पुनर्मामैत्विन्द्रियमित्येतिमंत्रेण २६ पतितेज्येष्ठभ्रातरि भिक्षितेधर्मार्थमपिरेतःसिंचेतिस्त्रियाप्रार्थितेसति २७ वृथाश्राद्धादिनिमित्तंविना संस्कारःपावित्र्यं । 'योयजेताश्वमेधेनमासिमासिशतंसमाः ॥ मांसानिचनखादेतद्वयमेतत्समंस्मृतम्'इतिस्मृतेः २८ तीर्थेसत्काराणामज्ञानादप्रतिपादनमपिनदूषकं २९ अपचारिण्याःव्यभिचारिण्याःनिष्कृतिःधिक्करणंदासीवदन्नाच्छादनमात्रेणदूरस्थापनं तयासहरतिभोजनादिवर्जनंचेत्यर्थः ३० सोमस्यतत्त्वंअनेनतृप्तादेवामनुष्यान्कामैरभिवर्षंतीतिलोकद्वयोपकारणकोऽयंसोमइति ३१

३२ ॥ इतिशांतिपर्वणिरा० नी०भारतभावदीपेचतुर्स्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ ॥ साधारणानिप्रायश्चित्तान्येतावदाह तपसेति तपसाकृच्छ्रचांद्रायणादिना । कर्मणायज्ञादिना प्रदानेनगवादीनां पुनातिशोधयति १ स्वकर्मकृद्दासादिरहितः २ कर्मब्रह्महत्यां ३ लक्ष्यइतिकामकारविषयेविदुषांप्रायश्चित्तोपदेष्टॄणांआत्मनोवाइच्छयावेदुष्येसति अकामतस्त्वाह त्रिरित्यादिना ४ अवाक्शिराःयंकंचिद्वेदंजपन्योजनानांशतंत्रिर्व्रजेत् शतत्रययोजनंपादचारेणतीर्थयात्रायांवेदंजपन्मुच्यतइत्यर्थः ५ । ६ कृच्छ्रभोजीकृच्छ्रीत्यासातत्येनभुंजानः । 'त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितं । त्र्यहंपरंचनाश्नीयात्'इतिविधिनाएकैकःकृच्छ्रोद्वादशदिनात्मकोज्ञेयः मासेमासेइतितस्यैवातिदेशः सप्ताहंप्रातःसप्ताहंसायंसप्ताहमयाचितंसप्ताहमनशनंविषमेषुमासेषु

उक्तान्येतानिकर्माणियानिकुर्वन्नदुष्यति ॥ प्रायश्चित्तानिवक्ष्यामिविस्तरेणैवभारत ३२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिप्रायश्चित्तीयेचतुर्स्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥ ॥ व्यासउवाच ॥ तपसाकर्मणाचैवप्रदानेनचभारत ॥ पुनातिपापंपुरुषःपुनश्चेन्नप्रवर्तते १ एककालंतुभुंजीतचरन्भैक्ष्यंस्वकर्मकृत् ॥ कपालपाणिःखट्वांगीब्रह्मचारीसदोत्थितः २ अनसूयुरधःशायीकर्मलोकेप्रकाशयन् ॥ पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महाविप्रमुच्यते ३ लक्ष्यःशस्त्रभृतांवास्याद्विदुषामिच्छयाऽऽत्मनः ॥ प्रास्येदात्मानमग्नौवासमिद्धेत्रिरवाक्शिराः ४ जपन्वान्यतमंवेदंयोजनानांशतंव्रजेत् ॥ सर्वस्वंवावेदविदेब्राह्मणायोपपादयेत् ५ धनंवाजीवनायालंगृहंवासपरिच्छदं ॥ मुच्यतेब्रह्महत्यायागोप्तागोब्राह्मणस्यच ६ षड्भिर्वर्षैःकृच्छ्रभोजीब्रह्महापूयतेनरः ॥ मासेमासेसमश्नंस्तुत्रिभिर्वर्षैःप्रमुच्यते ७ संवत्सरेणमासाशीपूयतेनात्रसंशयः ॥ तथैवोपवसन्राजन्स्वल्पेनापिप्रपूयते ८ क्रतुनाचाश्वमेधेनपूयतेनात्रसंशयः ॥ येचाप्यवभृथस्नाताःकेचिदेवंविधानराः ९ तेसर्वेधूतपाप्मानोभवंतीतिपराश्रुतिः ॥ ब्राह्मणार्थेहतोयुद्धेमुच्यतेब्रह्महत्यया १० गवांशतसहस्रंतुपात्रेभ्यःप्रतिपादयेत् ॥ ब्रह्महाविप्रमुच्येतसर्वपापेभ्यएवच ११ कपिलानांसहस्राणियोदद्यात्पंचविंशतिं ॥ दोग्ध्रीणांसचपापेभ्यःसर्वेभ्योविप्रमुच्यते १२ गोसहस्रंसवत्सानांदोग्ध्रीणांप्राणसंशये ॥ साधुभ्योवैदरिद्रेभ्योदत्वामुच्येतकिल्बिषात् १३ शतंवैयस्तुकांबोजान्ब्राह्मणेभ्यःप्रयच्छति ॥ नियतेभ्योमहीपालसचपापात्प्रमुच्यते १४ मनोरथंतुयोदद्यादेकस्माअपिभारत ॥ नकीर्तयेतदत्वायःसचपापात्प्रमुच्यते १५ सुरापानंसकृत्कृत्वायोऽग्निवर्णांसुरांपिबेत् ॥ सपावयत्यथात्मानमिहलोकेपरत्रच १६ मरुप्रपातंप्रपतन्ज्वलनंवासमाविशन् ॥ महाप्रस्थानमातिष्ठन्मुच्यतेसर्वकिल्बिषैः १७ बृहस्पतिसवेनेष्ट्वासुरापोब्राह्मणःपुनः ॥ समितिंब्राह्मणोगच्छेदितिवैब्राह्मणःश्रुतिः १८

११ सप्ताष्टाहक्रमेणसमेषुमासेषुप्रकारएवंवर्षत्रयमितिद्वितीयः ७ मासाशीति मासंसायंमासंप्रातर्मासमयाचितंमासमुपवासइतिक्रमेणवर्षंवानयेत् मासादधिकेनस्वल्पेनापिकालेनोपवसन्जलमात्रेणवर्तयन्मुच्यते ८ 'सर्वंपाप्मानंतरतितरतिब्रह्महत्यांयोऽश्वमेधेनयजते'इतिश्रुतिः ९ । १० । ११ । १२ । १३ कांबोजानजात्यश्वान् कंबुदेशजान् १४ मनोरथंवांछितंगृहक्षेत्रादि १५ । १६ मरुप्रपातंनिर्जलदेशेपर्वताग्रात्पतनं महाप्रस्थानंकेदारेहिमवदारोहणं १७ समितिंगच्छेदित्यस्यनिष्पापःसन्ब्राह्मणःसभामारोढुंयोग्योभवतीत्यर्थः १८

१९ शेफंशिश्नं २० यचास्त्यक्ताहारविहारः पुक्तेष्वेवपापेषुसत्सुमुच्यंते २१ महाव्रतंमासमात्रंजलस्यापित्यागः २२ । २३ । २४ । २५ । २६ कृच्छ्रादिति एतच्चज्येष्ठस्यापिदाराग्निहोत्रकरणानंतरंद्रष्टव्यं २७ तेनकनिष्ठेननिवेश्यंविवाहोतरंकर्तव्यं अन्यथाशुद्धिर्नास्तीत्यर्थः २८ अंतराभोजनंधारणापारणव्रतेनमासचतुष्टयकृतेनशुध्यंतिमहापापयोगे २९अन्यत्रतुसकृद्व्यभिचारमात्रे मानसिकेवाआह स्त्रियइति ३० प्रसंगाद्भाजनशुद्धिमाह पादजेति शूद्रस्यउच्छिष्टंकांस्यंपात्रंतथातदेवगवाघ्रातंतथागंडूषपात्रंब्राह्मणस्यापिपूतानिदशभिःशोधनैःशुद्ध्यंतितानिचपंचगव्येनमृत्तोयैर्भस्मनाऽम्लेनवह्निनेति ३१ । ३२ विधीयतेपादःपादोपकृष्टइत्यर्थः वैश्यस्यद्विपादः शूद्रस्यपादमात्रः धर्मःशौचादिः प्राश्चित्तादेरधिकस्याविधानात् ३३ । ३४ । १९ एषइति भस्मसाहच

भूमिप्रदानंकुर्याद्यःसुरांपीत्वाविमत्सरः ॥ पुनर्नचपिबेद्राजन्संस्कृतःसचशुध्यति १९ गुरुतल्पीशिलांतप्तामायसीमभिसंविशेत् ॥ अवकृत्यात्मनःशेफंप्रव्रजेदूर्ध्वदर्शनः २० ॥ शरीरस्यविमोक्षेणमुच्यतेकर्मणोऽशुभात् ॥ कर्मभ्योविप्रमुच्यंतेयत्ताःसंवत्सरंस्त्रियः २१ महाव्रतंचरेद्यस्तुदद्यात्सर्वस्वमेवतु ॥ गुर्वर्थेवाहतोयुद्धेसमुच्येत्कर्मणोऽशुभात् २२ अनृतेनोपवर्तीचेत्प्रतिरोद्धागुरोस्तथा ॥ उपाहृत्यप्रियंतस्मैतस्मात्पापात्प्रमुच्यते २३ अवकीर्णिनिमित्तंतुब्रह्महत्याव्रतंचरेत् ॥ गोचर्मवासाःषण्मासांस्तथामुच्येतकिल्बिषात् २४ परदारापहारीतुपरस्यापहरन्वसु ॥ संवत्सरंव्रतीभूत्वातथामुच्येतकिल्बिषात् २५ धनंतुयस्यापहरेत्तस्मैदद्यात्समंवसु ॥ विविधेनाभ्युपायेनतदामुच्येतकिल्बिषात् २६ कृच्छ्राद्द्वादशरात्रेणसंयतात्मव्रतेस्थितः ॥ परिवेत्ताभवेत्पूतःपरिवित्तिस्तथैवच २७ निवेश्यंतुपुनस्तेनसदातारयतापितॄन् ॥ नतुस्त्रियाभवेद्दोषोनतुसातेनलिप्यते २८ भोजनंह्यंतराशुद्धंचातुर्मास्येविधीयते ॥ स्त्रियस्तेनप्रशुध्यंतीइतिधर्मविदोविदुः २९ स्त्रियस्त्वाशंकिताःपापानोपगम्याविजानता ॥ रजसाताविशुध्यंतेभस्मनाभाजनंयथा ३० पादजोच्छिष्टकांस्यंयद्गवाघ्रातमथापिवा ॥ गंडूषोच्छिष्टमपिवाविशुध्येद्दशभिस्तुतत् ३१ चतुष्पात्सकलोधर्मोब्राह्मणस्यविधीयते ॥ पादावकृष्टोराजन्येतथाधर्मोविधीयते ३२ तथावैश्येचशूद्रेचपादःपादोविधीयते ॥ विद्याद्देवंविधेनैषांगुरुलाघवनिश्चयम् ३३ तिर्यग्योनिवधंकृत्वाद्रुमांश्छित्त्वेतरान्बहून् ॥ त्रिरात्रंवायुभक्षःस्यात्कर्मचप्रथयन्नरः ३४ अगम्यागमनेराजन्प्रायश्चित्तंविधीयते ॥ आर्द्रवस्त्रेणषण्मासान्विहार्यंभस्मशायिना ३५ एषएवतुसर्वेषामकार्याणांविधिर्भवेत् ॥ ब्राह्मणोक्तेनविधिनादृष्टांतागमहेतुभिः ३६ सावित्रीमप्यधीयीतशुचौदेशेमिताशनः ॥ अहिंसोमंदकोऽजल्पोमुच्यतेसर्वकिल्बिषैः ३७ अहःसुसततंतिष्ठेदभ्याकाशंनिशांस्वपन् ॥ त्रिरह्नित्रिर्निशायांचसवासाजलमाविशेत् ३८

र्यांच्छतरुद्रीयजपोऽप्यत्रद्रष्टव्यः यदाहवृद्धशातातपः । 'मद्यंपीत्वागुरुदारांश्चगत्वास्तेयंकृत्वाब्रह्महत्यांचकृत्वा ॥ भस्मच्छन्नोभस्मशय्यांशयानोरुद्राध्यायीमुच्यतेसर्वपापैः'इति । पापानांगौरवलाघवानुसारेणदीक्षासंवत्सरंषण्मासंत्रिमासंमासंद्वादशाहमितियथायोग्यंज्ञेया । तत्रयथाकूष्मांडहोमे योयोनौरेतःसिंचतीतिपारदार्यंप्रकृत्य वर्षमासचतुर्विंशतिरात्रद्वादशरात्रषड्रात्रत्रिरात्रपक्षाउक्ताः । यावदेनोदीक्षामुपैतीतिचपापानुसारित्वंदीक्षायामुक्तंतद्दृष्टांतेनसर्वत्रबोध्यं । दृष्टांतभूतोयआगमस्तत्रोक्तैर्हेतुभिर्यावदेनइत्याद्यैः ३६ मंदइवमंदकः रागद्वेषमानापमानशून्यः अजल्पइतिच्छेदः ३७ तिष्ठेदित्युपवेशनादेर्व्यावृत्तिः अभ्याकाशंनिरावरणेस्थंडिलादौ अहःसुहविबहुवचनादिनाऽपिपापानुसारेणत्र्यवराणामह्नांगणनाकल्पनीया ३८ 

३९ यत्रपुण्येपापेवाऽतिरिच्येतयोधिकोभवति सइतरेणेतरदभिभूयातिरिक्तस्यफलंभुंक्तइत्यर्थः ४० । ४१ । ४२ व्रतादिरूपंप्रायश्चित्तंमहापातकवर्जंज्ञेयम् ४३ । ४४ । ४५ । ४५ । ४६ । ४७ ४८ । ४९ । ५० । ५१ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेपंचत्रिंशत्तमोऽध्यायः ॥ ३५ ॥ ॥ किंभक्ष्यमिति १ । २ प्रजापतिंमनुम् ३ कथंकेनप्रकारेण

स्त्रीशूद्रंपतितंचापिनाभिभाषेद्व्रतान्वितः ॥ पापान्यज्ञानतःकृत्वामुच्येदेवंव्रतोद्विजः ३९ शुभाशुभफलंप्रेत्यलभतेभूतसाक्षिकम् ॥ अतिरिच्येतयोयत्रतत्कर्तालभतेफलम् ४० तस्माद्दानेनतपसाकर्मणाचफलंशुभम् ॥ वर्धयेदशुभंकृत्वायथास्यादतिरेकवान् ४१ कुर्याच्छुभानिकर्माणिनिवर्तेत्पापकर्मणः ॥ दद्यान्नित्यंचवित्तानितथामुच्येतकिल्बिषात् ४२ अनुरूपंहिपापस्यप्रायश्चित्तमुदाहृतम् ॥ महापातकवर्जंतुप्रायश्चित्तंविधीयते ४३ भक्ष्याभक्ष्येषुचान्येषुवाच्यावाच्येतथैवच ॥ अज्ञानज्ञानयोराजन्विहितान्यनुजानतः ४४ जानतातुकृतंपापंगुरुसर्वंभवत्युत ॥ अज्ञानात्स्वल्पकोदोषःप्रायश्चित्तंविधीयते ४५ शक्यतेविधिनापापंयथोक्तेनव्यपोहितुम् ॥ आस्तिकेश्रद्दधानेचविधिरेषविधीयते ४६ नास्तिकाश्रद्दधानेषुपुरुषेषुकदाचन ॥ दंभद्वेषप्रधानेषुविधिरेषनदृश्यते ४७ शिष्टाचारश्चशिष्टश्चधर्मोधर्मभृतांवर ॥ सेवितव्योनरव्याघ्रप्रेत्येहचसुखेप्सुना ४८ सराजन्मोक्ष्यसेपापात्तेनपूर्वेणहेतुना ॥ प्राणार्थंवाधनेनैषामथवान्नृपकर्मणा ४९ अथवातेघृणाकाचित्प्रायश्चित्तंचरिष्यसि ॥ मात्वेवानार्यजुष्टेनमन्युनानिधनंगमः ५१ ॥ वैशंपायनउवाच ॥ एवमुक्तोभगवताधर्मराजोयुधिष्ठिरः ॥ चिंतयित्वामुहूर्तेनप्रत्युवाचतपोधनम् ५१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणि प्रायश्चित्तीयेपंचत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

युधिष्ठिरउवाच ॥ किंभक्ष्यंचाप्यभक्ष्यंचकिंचदेयंप्रशस्यते ॥ किंचपात्रमपात्रंवातन्मेब्रूहिपितामह १ ॥ व्यासउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ सिद्धानांचैवसंवादंमनोश्चैवप्रजापतेः २ ऋषयस्तुव्रतपराःसमागम्यपुराविभुम् ॥ धर्मपप्रच्छुरासीनमादिकालेप्रजापतिम् ३ कथमन्नंकथंपात्रंदानमध्ययनंतपः ॥ कार्याकार्यंचयत्सर्वंशंसवैत्वंप्रजापते ४ तैरेवमुक्तोभगवान्मनुःस्वायंभुवोऽब्रवीत् ॥ शुश्रूषध्वंयथावृत्तंधर्मंव्याससमासतः ५ अनादेशेजपोहोमउपवासस्तथैवच ॥ आत्मज्ञानंपुण्यनद्योयत्रप्रायश्चतत्पराः ६ अनादिष्टंतथैतानिपुण्यानिधरणीभृतः ॥ सुवर्णप्राशनमपिरत्नादिस्नानमेवच ७ देवस्थानाभिगमनमाज्यप्राशनमेवच ॥ एतानिमेध्यंपुरुषंकुर्वंत्याशुनसंशयः ८ नगर्वेणभवेत्प्राज्ञःकदाचिदपिमानवः ॥ दीर्घमायुरथेच्छन्हित्रिरात्रंचोष्णपोभवेत् ९

अन्नमदनीयंकिंद्रव्यकंकर्तव्यमित्यर्थः ४ व्यासोविस्तरः ५ अनादेशोविशेषतोऽनुक्तेदोषयत्रदेशेतत्पराःजपादिपराः प्रायःबहुशःसंति सोऽपिगंगादिवत्पावनइत्यर्थः । यत्रोपायाइतिपाठेस्पष्टोर्थः ६ तथाजपादिवत् पुण्यान्येतानिवक्ष्यमाणानि धरणीभृतःपर्वताःब्रह्मगिरिप्रभृतयः आदिपदात्सुवर्णस्नानादि अनादिष्टंप्रायश्चित्तंसामान्यमित्यर्थः ७ । ८ गर्वेणयुक्तोनभवेत्पूज्यानावगणयेत् अवगणनेतुत्रिरात्रमुष्णपोभवेदितितप्तकृच्छ्रंवर्मशास्त्रोक्तंकुर्यादित्यर्थः । भवेदित्यत्रपिबेदितिपाठंप्रकल्प्यसुरामित्यध्याहृत्यसुरांनपिबेत् । पानेतूष्णपोभवेत्सुरामेवोष्णांकृत्वापिबेदितिकेचित् ९

तपउपवासादि १० आदानंस्तेयं आवास्थिकोऽवस्थाविशेषेभवः प्राणात्ययादावधर्मस्यापिस्तेयादेर्धर्मत्वंधर्मस्याप्यस्तेयादेरधर्मत्वमित्यर्थः ११ वैदिकयोःप्रवृत्त्यप्रवृत्त्योर्मर्त्यत्वामृतत्वप्रदे लौकिकयोस्तुतेशुभेचेच्छुभफलेअशुभेचेदशुभफलेइत्याहद्वाभ्यां द्विविधाविति १२ एतयोर्लौकिकयोःफलेअपिकारणानुरूपेइत्यर्थः १३ दैवयुक्तंशास्त्रीयंकर्म प्राणोजीवनं एतेषांचतुर्णामपेक्षापूर्वंयत्किंचित्क्रियतेतद्वशुभानांनीचानामपिपुंसांतस्यफलंशुभंभवति १४ ऊर्ध्वमिति सत्यपिसंदेहेयच्छोकविगानपरिहारार्थंकृतंनित्यादियच्चकेवलंदृष्टार्थंकृतंश्येनादितत्रोभयत्रापि १५ क्रोधादिनायन्मनसः

अदत्तस्यानुपादानंदानमध्ययनंतपः ॥ अहिंसासत्यमक्रोधइज्याधर्मस्यलक्षणम् १० सएवधर्मःसोऽधर्मोदेशकालेप्रतिष्ठितः ॥ आदानमनृतंहिंसाधर्मोह्यावस्थिकःस्मृतः ११ द्विविधौचाप्युभवेतौधर्माधर्मौविजानताम् ॥ अप्रवृत्तिःप्रवृत्तिश्चद्वैविध्यंलोकवेदयोः १२ अप्रवृत्तेरमर्त्यत्वंमर्त्यत्वंकर्मणःफलम् ॥ अशुभस्याशुभंविद्याच्छुभस्यशुभमेवच ॥ एतयोश्चोभयोःस्यातांशुभाशुभतयातथा १३ दैवंचदैवसंयुक्तंप्राणश्चप्राणदश्चह ॥ अपेक्षापूर्वकरणादशुभानांशुभंफलम् १४ ऊर्ध्वंभवतिसंदेहादिहदृष्टार्थमेवच ॥ अपेक्षापूर्वकरणात्प्रायश्चित्तंविधियते १५ क्रोधमोहकृतेचैवदृष्टांतागमहेतुभिः ॥ शरीराणामुपक्लेशोमनसश्चप्रियाप्रिये ॥ तदौषधैश्चमंत्रैश्चप्रायश्चित्तैश्चशाम्यति १६ उपवासमेकरात्रंदंडोत्सर्गेनराधिपः ॥ विशुद्ध्येदात्मशुद्ध्यर्थंत्रिरात्रंतुपुरोहितः १७ क्षयंशोकंप्रकुर्वाणोनम्रियेतयदानरः ॥ शस्त्रादिभिरुपाविष्टस्त्रिरात्रंतत्रनिर्दिशेत् १८ जातिश्रेण्यधिवासानांकुलधर्मांश्चसर्वतः ॥ वर्जयंतिचयेधर्मंतेषांधर्मोनविद्यते १९ दशवावेदशास्त्रज्ञास्त्रयोवाधर्मपाठकाः ॥ यद्ब्रूयुःकार्यउत्पन्नेसधर्मोधर्मसंशये २० अनड्वान्मृत्तिकाचैवतथाक्षुद्रपिपीलिकाः ॥ श्लेष्मातकस्तथाविप्रैरभक्ष्यंविषमेवच २१ अभक्ष्याब्राह्मणैर्मत्स्याःशल्कैर्येवैविवर्जिताः ॥ चतुष्पात्कच्छपादन्योमंडूकाजलजाश्चये २२ भासाहंसाःसुपर्णाश्चचक्रवाकाःप्लवाबकाः ॥ काकोमद्गुश्चगृध्रश्चश्येनोलूकस्तथैवच २३ क्रव्यादादंष्ट्रिणःसर्वेचतुष्पात्पक्षिणश्चये ॥ येषांचोभयतोदंताश्चतुर्दंष्ट्राश्चसर्वशः २४ एडकाश्वखरोष्ट्रीणांसूतिकानांगवामपि ॥ मानुषीणांमृगीणांचनपिबेद्ब्राह्मणःपयः २५ प्रेतान्नंसूतिकान्नंचयच्चकिंचिदनिर्दशम् ॥ अभोज्यंचाप्यपेयंचधेन्वोदुग्धमनिर्दशम् २६ राजान्नंतेजआदत्तेशूद्रान्नंब्रह्मवर्चसम् ॥ आयुःसुवर्णकारान्नमवीरायाश्चयोषितः २७ विष्ठावार्धुषिकस्यान्नंगणिकान्नमथेंद्रियम् ॥ मृष्यंतियेचोपपतिंस्त्रीजितान्नंचसर्वशः २८

प्रियमप्रियंकृतंतत्रदृष्टांतागमहेतुभिःपूर्वोक्तैर्यावेदनइत्याद्यैःप्रमाणैर्देहस्यशोषणमुपवासादिकंप्रायश्चित्तंकर्तव्यं । औषधैर्हविष्याशनैः मंत्रैश्चपवित्रजपैः चादन्यदपितीर्थाटनश्रमादिभिस्तत्पापंशाम्यतीतिसार्धं १६ । १७ क्षयंपुत्रादिमरणनिमित्तमात्मवधार्थंप्रवृत्तोनम्रियेतचेत्त्रिरात्रमुपवासंचरेत् १८ जातिर्ब्राह्मणत्वादिः श्रेणीगृहस्थादीनांपंक्तिः अधिवासोजन्मभूमिः जात्यादिधर्मांश्चयेवर्जयंतितेषांधर्मःप्रायश्चित्तादिस्वरूपोनविद्यते १९ पाठकाःशोधकाः विचारकाइतियावत् कार्येप्रायश्चित्तनिमित्तेदोषे २० अभक्ष्यानाहचतुर्भिः अनड्वानिति २१ । २२ । २३ । २४ एडकामेषी सूतिकानामनिर्दशानां २५ अभोज्यंपायसाद्यंतर्गतं २६ अवीरायाःपतिपुत्रहीनायाः २७ इंद्रियंशुक्रं गणिकादित्रयाणामन्नं २८



दीक्षितस्यअक्रीतोमीषत्रपाहोमात्प्राङ्नभोक्तव्यं कदर्योधनव्ययभयाद्भोगत्यागहीनः २९ रक्षिणोग्रामपालकस्य सीमादिरक्षिणोवा ३० । ३१ शोषितंकुडुंबायाऽदत्वात्मार्थरक्षितं ३२ धानाभृष्टयवाः करंभादधिसक्तवः सक्त्वादीनांविकारानष्टाःसक्त्वादयः कृसरंतिलमिश्रओदनः वृथाकृताःदेवताद्युद्देशंविनाकृताः ३३ चात्पेयाःपीयूषादयः ३४ । ३५ । ३६ हासकेषुपरिहासपरे

दीक्षितस्यकदर्यस्यक्रतुविक्रयिकस्यच ॥ तक्षणश्चर्मावकर्तुश्चपुंश्चल्यारजकस्यच २९ चिकित्सकस्ययच्चान्नमभोज्यंरक्षिणस्तथा ॥ गणग्रामाभिशस्तानांरंगस्त्रीजीविनांतथा ३० परिवित्तिनांपुंसांचवंदिद्यूतविदांतथा ॥ वामहस्ताहृतंचान्नंभक्तंपर्युषितंचयत् ३१ सुरानुगतमुच्छिष्टमभोज्यंशेषितंचयत् ॥ पिष्टस्यचेक्षुशाकानांविकाराःपयसस्तथा ३२ सक्तुधानाकरंभाणांनोपभोग्याश्चिरस्थिताः ॥ पायसंकृसरंमांसमपूपाश्चवृथाकृताः ३३ अपेयाश्चाप्यभक्ष्याश्चब्राह्मणैर्गृहमेधिभिः ॥ देवानृषीन्मनुष्यांश्चपितॄन्गृह्याश्चदेवताः ३४ पूजयित्वाततःपश्चाद्गृहस्थोभोक्तुमर्हति ॥ यथाप्रव्रजितोभिक्षुस्तथैवस्वेगृहेवसेत् ३५ एवंवृत्तःप्रियैर्दारैःसंवसन्धर्ममाप्नुयात् ॥ नदद्याद्यशसेदानंनभयान्नोपकारिणे ३६ ननृत्यगीतशीलेषुहासकेषुचधार्मिकः ॥ नमत्तेचैवनोन्मत्तेनस्तेनेनचकुत्सके ३७ नवाग्घीनेविवर्णेवानांगहीनेनवामने ॥ नदुर्जनेदौष्कुलेवाव्रतैर्योवानसंस्कृतः ३८ नश्रोत्रियमृतेदानंब्राह्मणेब्रह्मवर्जिते ॥ असम्यक्चैवयद्दत्तमसम्यक्चप्रतिग्रहः ॥ उभयंस्यादनर्थायदातुरादातुरेवच ३९ यथाखदिरमालंब्याशिलांवाऽप्यर्णवंतरन् ॥ मज्जेतमज्जतस्तद्वद्दातायश्चप्रतिग्रही ४० काष्ठैरार्द्रैर्यथावह्निरुपस्तीर्णोनदीप्यते ॥ तपःस्वाध्यायचारित्रैरेवंहीनःप्रतिग्रही ४१ कपालेयद्वदापःस्युःश्वदृतौचयथापयः ॥ आश्रयस्थानदोषेणवृत्तहीनेतथाश्रुतम् ४२ निर्मंत्रोनिर्व्रतोयःस्यादशास्त्रज्ञोऽनसूयकः ॥ अनुक्रोशात्प्रदातव्यंहीनेष्वव्रतिकेषुच ४३ नवैदेयमनुक्रोशाद्दीनायार्तातुरकेष्वपि ॥ आप्ताचरितइत्येवधर्मइत्येववापुनः ४४ निष्कारणंस्मृतंदत्तंब्राह्मणेब्रह्मवर्जिते ॥ भवेदपात्रदोषेणनचात्रास्तिविचारणा ४५ यथादारुमयोहस्तीयथाचर्ममयोमृगः ॥ ब्राह्मणश्चानधीयानस्त्रयस्तेनामबिभ्रति ४६ यथाषंढोऽफलःस्त्रीषुयथागौर्गविचाफला ॥ शकुनिर्वाप्यपक्षःस्यान्निर्मंत्रोब्राह्मणस्तथा ४७ ग्रामधान्यंयथाशून्यंयथाकूपश्चनिर्जलः ॥ यथाहुतमनग्नौचतथैवस्यान्निराकृतौ ४८ देवतानांपितॄणांचहव्यकव्यविनाशकः ॥ शत्रुरर्थहरोमूर्खोनलोकान्प्राप्तुमर्हति ४९ एतत्तेकथितंसर्वंयथावृत्तंयुधिष्ठिर ॥ समासेनमहद्ध्येतच्छ्रोतव्यंभरतर्षभ ५० ॥ ॥ इतिश्रीमहाभारतेशां॰रा॰व्यासवाक्येषट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ श्रोतुमिच्छामिभगवन्विस्तरेणमहामुने ॥ राजधर्मान्द्विजश्रेष्ठचातुर्वर्ण्यस्यचाखिलान् १

पुमंडेषु ३७ वाग्घीनेमूकेमूर्खेवा ३८ । ३९ । ४० । ४१ श्वदृतौशुनकचर्ममयेकोशे ४२ अनसूयकोगुणेषुदोषारोपमकुर्वन् अनुक्रोशाद्दयया ४३ आप्ताचरितइष्टकारीतिबुद्ध्याधर्मबुद्ध्यावा निर्मंत्रेनदेयमित्याह नवाइति ४४ अत्रैवहेतुमाह निष्कारणमिति निष्कारणंनिष्फलं दोषेणयुक्तइतिशेषः ४५ । ४६ । ४७ निराकृतौमूर्खे ४८ । ४९ । ५० ॥ इतिशांतिपर्वणिरा॰नीलकंठीयेभा॰षट्त्रिंशत्तमोऽध्यायः ॥ ३६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रोतुमिति १

२ भक्ष्याभक्ष्यविवर्जिताउपवासात्मिका कौतुहलेनप्रसंगेनाऽनुप्रवणाअभिमुखा ३ । ४ । ५ प्रैहिप्रयाहि । ६ । ७ । ८ । ९ सवैयाख्यंव्याख्यासहितम् १० । ११ । १२ । १३ । १४ । १५

आपत्सुचयथानीतिःप्रणेतव्याद्विजोत्तम ॥ धर्म्यमालक्ष्यपंथानंविजयेयंकथंमहीम् २ प्रायश्चित्तकथाह्येषाभक्ष्याभक्ष्यविवर्जिता ॥ कौतूहलानुप्रवणाहर्षंज
नयतीवमे ३ धर्मचर्याचराज्यंचनित्यमेवविरुध्यते ॥ एवंमुह्यतिमेचेतश्चिंतयानस्यनित्यशः ४ ॥ वैशंपायनउवाच ॥ तमुवाचमहाराजव्यासोवेदविदां
वरः ॥ नारदंसमभिप्रेक्ष्यसर्वज्ञानांपुरातनम् ५ श्रोतुमिच्छसिचेद्धर्मंनिखिलेननराधिप ॥ प्रैहिभीष्मंमहाबाहोवृद्धंकुरुपितामहम् ६ सतेधर्मरहस्येषुसंशया
न्मनसिस्थितान् ॥ छेत्ताभागीरथीपुत्रःसर्वज्ञःसर्वधर्मवित् ७ जनयामासयंदेवीदिव्यात्रिपथगानदी ॥ साक्षाद्ददर्शयोदेवान्सर्वानिंद्रपुरोगमान् ८ बृहस्पतिपु
रोगांस्तुदेवर्षीनसकृत्प्रभुः ॥ तोषयित्वोपचारेणराजनीतिमधीतवान् ९ उशनावेदयच्छास्त्रंयच्चदेवगुरुर्द्विजः ॥ यच्चधर्मंसवैयाख्यंप्राप्तवान्कुरुसत्तमः १० भा
र्गवाच्च्यवनाच्चापिवेदानंगोपबृंहितान् ॥ प्रतिपेदेमहाबाहुर्वसिष्ठाच्चरितव्रतः ११ पितामहसुतंज्येष्ठंकुमारंदीप्ततेजसम् ॥ अध्यात्मगतितत्त्वज्ञमुपाशिक्षतयः
पुरा १२ मार्कंडेयमुखात्कृत्स्नंयतिधर्ममवाप्तवान् ॥ रामादस्त्राणिशक्राच्चप्राप्तवान्पुरुषर्षभः १३ मृत्युरात्मेच्छयायस्यजातस्यमनुजेष्वपि ॥ तथाऽनपत्य
स्यसतःपुण्यश्लोकादिविश्रुताः १४ यस्यब्रह्मर्षयःपुण्यानित्यमासन्सभासदः ॥ यस्यनाविदितंकिंचिज्ज्ञानयज्ञेषुविद्यते १५ सतेवक्ष्यतिधर्मज्ञःसूक्ष्मधर्मार्थ
तत्त्ववित् ॥ तमभ्येहिपुराप्राणान्सविमुंचतिधर्मवित् १६ एवमुक्तस्तुकौंतेयोदीर्घप्रज्ञोमहामतिः ॥ उवाचवदतांश्रेष्ठंव्यासंसत्यवतीसुतम् १७ ॥ युधिष्ठिरउ
वाच ॥ वैशसंसुमहत्कृत्वाज्ञातीनांरोमहर्षणम् ॥ आगस्कृत्सर्वलोकस्यपृथिवीनाशकारकः १८ घातयित्वातमेवाजौछलेनाजिह्मयोधिनम् ॥ उपसंप्रष्टुमर्हामि
तमहंकेनहेतुना १९ ॥ वैशंपायनउवाच ॥ ततस्तंनृपतिश्रेष्ठंचातुर्वर्ण्यहितेप्सया ॥ पुनराहमहाबाहुर्यदुश्रेष्ठोमहामतिः २० ॥ वासुदेवउवाच ॥ नेदानी
मतिनिर्बंधंशोकेत्वंकर्तुमर्हसि ॥ यदाहभगवान्व्यासस्तत्कुरुष्वनृपोत्तम २१ ब्राह्मणास्त्वांमहाबाहोभ्रातरश्चमहौजसः ॥ पर्जन्यमिवघर्मार्तानाथमानाउपासते
२२ हतशिष्टाश्चराजानःकृत्स्नंचैवसमागतम् ॥ चातुर्वर्ण्यंमहाराजराष्ट्रंतेकुरुजांगलम् २३ प्रियार्थमपिचैतेषांब्राह्मणानांमहात्मनाम् ॥ नियोगादस्यचगुरो
र्व्यासस्यामिततेजसः २४ सुहृदामस्मदादीनांद्रौपद्याश्चपरंतप ॥ कुरुप्रियममित्रघ्नलोकस्यचहितंकुरु २५ ॥ वैशंपायनउवाच ॥ एवमुक्तःसकृष्णेनराजा
राजीवलोचनः ॥ हितार्थंसर्वलोकस्यसमुत्तस्थौमहामनाः २६ सोऽनुनीतोनरव्याघ्रविष्टरश्रवसास्वयम् ॥ द्वैपायनेनचतथादेवस्थानेनजिष्णुना २७ एतै
श्चान्यैश्चबहुभिरनुनीतोयुधिष्ठिरः ॥ व्यजहान्मानसंदुःखंसंतापंचमहायशाः २८

विमुंचतिविमोक्ष्यति ततःपुरा १६ । १७ वैशसंविनाशम्
१८ उपसंप्रष्टुमुपागत्यसम्यक्प्रष्टुं १९ । २० । २१ नाथमानाःयाचमानाः उपासतइत्युत्तरत्रापियोज्यम् २२ । २३ । २४।२५ । २६ ! विष्टरश्रवसाविष्णुना २७ संतापंशारीरंतापम् २८ 

वाक्यानिवेदावयवाः । निधिस्तदर्थोविचारग्रंथोमीमांसा । अन्यदपियच्छ्रुतंश्रव्यंनीतिशास्त्रादितत्रविशारदःऊहापोहकुशलः । व्यवस्यकर्तव्यमर्थंनिश्चित्य २९ । ३० । ३१ तद्धाति गोभिर्ब
लीवर्दैःएतस्माल्लिंगाद्गम्यतेयत्पुरप्रवेशेप्रथमंगोरथेनप्रवेष्टव्यमिति । मंत्रलिंगादप्येतद्गम्यते । 'संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिनाय ॥ जनेमित्रोनदंपतीअनक्तीबृहस्पतेवाजयाशू
रिवाजौ'अस्यार्थः हेबृहस्पतेबृहस्पतितुल्यहेपुरोहित अंगिरसोबृहस्पतिः गोभिर्वृषैःरथमित्यर्थात् संनक्षमाणःरथस्यसंनहनंकरिष्यन् यकारलोपआर्षः अर्यमणंदेवंभगइवषड्विधमैश्वर्यमिवनिनाय
प्रापितवान् तत्रदृष्टांतःजनेइति नकारउपमार्थंयथाजनेलोकेमित्रःसखादंपतीअनक्तिअन्योन्यसंबद्धेसकरोतिएवंनगरगताभिश्वर्यलक्ष्मींपरिणेष्यन्गोरथेननगरंप्रवेशयेद्राजानंपुरोहितः । एवंजयल

श्रुतवाक्यःश्रुतनिधिःश्रुतश्रव्यविशारदः ॥ व्यवस्यमनसःशांतिमगच्छत्पांडुनंदनः २९ सतैःपरिवृतोराजानक्षत्रैरिवचंद्रमाः ॥ धृतराष्ट्रंपुरस्कृत्यस्वपुरंप्रविवे
शह ३० प्रविविक्षुःसधर्मज्ञःकुंतीपुत्रोयुधिष्ठिरः ॥ अर्चयामासदेवांश्चब्राह्मणांश्चसहस्रशः ३१ ततोनवंरथंशुभ्रंकंबलाजिनसंवृतम् ॥ युक्तंषोडशभिर्गोभिःपांडुरैः
शुभलक्षणैः ३२ मंत्रैरभ्यर्चितंपुण्यैःस्तूयमानश्चबंदिभिः ॥ आरुरोहयथादेवःसोमोऽमृतमयंरथम् ३३ जग्राहरश्मीन्कौंतेयोभीमोभीमपराक्रमः ॥ अर्जुनःपां
डुरंछत्रंधारयामासभानुमत् ३४ ध्रियमाणंचतच्छत्रंपांडुरंरथमूर्धनि ॥ शुशुभेतारकाकीर्णंसितमभ्रमिवांबरे ३५ चामरव्यजनेत्वस्यवीरौजगृहतुस्तदा ॥ चंद्र
रश्मिप्रभेशुभ्रेमाद्रीपुत्रावलंकृते ३६ तेपंचरथमास्थायभ्रातारःसमलंकृताः ॥ भूतानीवसमस्तानिराजन्ददृशिरेतदा ३७ आस्थायतुरथंशुभ्रंयुक्तमश्वैर्मनोजवैः ॥
अन्वयात्पृष्ठतोराजन्युयुत्सुःपांडवाग्रजम् ३८ रथंहेममयंशुभ्रंशैब्यसुग्रीवयोजितम् ॥ सहसात्यकिनाकृष्णःसमास्थायान्वयात्कुरून् ३९ नरयानेनतुज्येष्ठःपि
तापार्थस्यभारत ॥ अग्रतोधर्मराजस्यगांधारीसहितोययौ ४० कुरुस्त्रियश्चताःसर्वाःकुंतीकृष्णातथैवच ॥ यानैरुच्चावचैर्जग्मुर्विदुरेणपुरस्कृताः ४१ ततोरथा
श्चबहुलानागाश्चसमलंकृताः ॥ पादाताश्चहयाश्चैवपृष्ठतःसमनुव्रजन् ४२ ततोवैतालिकैःसूतैर्मागधैश्चसुभाषितैः ॥ स्तूयमानोययौराजानगरंनागसाह्वयम् ४३
तत्प्रयाणंमहाबाहोर्बभूवाप्रतिमंभुवि ॥ आकुलाकुलमुत्कुष्टंहृष्टपुष्टजनाकुलम् ४४ अभियानेतुपार्थस्यनरैर्नगरवासिभिः ॥ नगरंराजमार्गाश्चयथावत्समलंकृताः
४५ पांडुरेणचमाल्येनपताकाभिश्चमेदिनी ॥ संस्कृतोराजमार्गोऽभूद्धूपनैश्चप्रधूपितः ४६ अथचूर्णैश्चगंधानांनानापुष्पप्रियंगुभिः ॥ माल्यदामभिरासक्तैराज
वेश्माभिसंवृतम् ४७ कुंभाश्चनगरद्वारिवारिपूर्णानवादृढाः ॥ सिताःसुमनसोगौराःस्थापितास्तत्रतत्रह ४८

 क्ष्मींपरिणेष्यन्नश्वरथेनआजिंप्रविशेदित्याह वाजयेति आजौसंग्रामे अशूनश्वान्रथेयुंजन्वाजयगमययजमानंजयलक्ष्मींपरिणेतुमित्यर्थादनुषंजनीयं ३२ अमृतमयंदेवतामयं ३३ । ३४ तारका
स्ताराः तत्तुल्याश्छत्रप्रांतस्थमौक्तिकगुच्छाश्च ३५ । ३६ यथादेहरयोभूतपंचकमयः एवंसोऽपिरथोभ्रातृपंचकयुक्तः ३७ युयुत्सुर्धृतराष्ट्रपुत्रः ३८ । ३९ नरयानं 'तखतरावा'इतिम्लेच्छभाषायां
प्रसिद्धं नतुशिबिका ४० । ४१ । ४२ । ४३ आकुलाकुलमतिसंकुलं संमर्दवशात् ४४ । ४५ माल्येनपुष्पसमूहेनमेदिनीसमलंकृतेत्यनुषज्यते धूपनैःअगुरुप्रभृतिभिर्धूपद्रव्यैः
४६ । ४७ सिताःचूर्णादिनाशुक्लीकृताः सुमनसःपुष्पाणि गौराःशुक्लाः ४८

४९ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेसप्तत्रिंशत्तमोऽध्यायः ॥३७॥ प्रवेशनेइति १ । २ स्त्रीणांस्त्रीभिः ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२। १३

यथास्वलंकृतद्वारंनगरंपांडुनंदनः ॥ स्तूयमानःशुभैर्वाक्यैःप्रविवेशसुहृद्वृतः ४९ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणियुधिष्ठिरप्रवेशेसप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ प्रवेशनेतुपार्थानांजनानांपुरवासिनाम् ॥ दिदृक्षूणांसहस्राणिसमाजग्मुःसहस्रशः १ सराजमार्गःशुशुभेसमलंकृतचत्वरः ॥ यथाचंद्रोदयेराजन्वर्धमानोमहोदधिः २ गृहाणिराजमार्गेषुरत्नवंतिमहांतिच ॥ प्राकंपतीवभारेणस्त्रीणांपूर्णानिभारत ३ ताःशनैरिवसव्रीडंप्रशशंसुर्युधिष्ठिरम् ॥ भीमसेनार्जुनौचैवमाद्रीपुत्रौचपांडवौ ४ धन्यात्वमसिपांचालियात्वंपुरुषसत्तमान् ॥ उपतिष्ठसिकल्याणिमहर्षीनिवगौतमी ५ तवकर्माण्यमोघानिव्रतचर्याचभाविनि ॥ इतिकृष्णांमहाराजप्रशशंसुस्तदास्त्रियः ६ प्रशंसावचनैस्तासांमिथःशब्दैश्चभारत ॥ प्रीतिजैश्चतदाशब्दैःपुरमासीत्समाकुलम् ७ तमतीत्ययथायुक्तंराजमार्गंयुधिष्ठिरः ॥ अलंकृतंशोभमानमुपायाद्राजवेश्मह ८ ततःप्रकृतयःसर्वाःपौराजानपदास्तदा ॥ ऊचुःकर्णसुखावाचःसमुपेत्यततस्ततः ९ दिष्ट्याजयसिराजेंद्रशत्रूञ्छत्रुनिषूदन ॥ दिष्ट्याराज्यंपुनःप्राप्तंधर्मेणचबलेनच १० भवनस्त्वंमहाराजराजेहशरदांशतम् ॥ प्रजाःपालयधर्मेणयथेंद्रस्त्रिदिवंतथा ११ एवंराजकुलद्वारिमंगलैरभिपूजितः ॥ आशीर्वादान्द्विजैरुक्तान्प्रतिगृह्यसमंततः १२ प्रविश्यभवनंराजादेवराजगृहोपमम् ॥ श्रुत्वाविजयसंयुक्तंरथात्पश्चादवातरत् १३ प्रविश्याभ्यंतरंश्रीमान्दैवतान्यभिगम्यच ॥ पूजयामासरत्नैश्चगंधमाल्यैश्चसर्वशः १४ निश्चक्रामततःश्रीमान्पुनरेवमहायशाः ॥ ददर्शब्राह्मणांश्चैवसोऽभिरूपानवस्थितान् १५ ससंवृतस्तदाविप्रैराशीर्वादविवक्षुभिः ॥ शुशुभेविमलश्चंद्रस्तारागणवृतोयथा १६ तांस्तुवैपूजयामासकौंतेयोविधिवद्द्विजान् ॥ धौम्यंगुरुंपुरस्कृत्यज्येष्ठंपितरमेवच १७ सुमनोमोदकैरत्नैर्हिरण्येनचभूरिणा ॥ गोभिर्वस्त्रैश्चराजेंद्रविविधैश्चकिमिच्छकैः १८ ततःपुण्याहघोषोऽभूद्दिवंस्तब्ध्वेवभारत ॥ सुहृदांप्रीतिजननःपुण्यःश्रुतिसुखावहः १९ हंसवद्विदुषांराजाद्द्विजानांतत्रभारतीम् ॥ शुश्रुवेवेदविदुषांपुष्कलार्थपदाक्षराम् २० ततोदुंदुभिनिर्घोषःशंखानांचमनोरमः ॥ जयंप्रवदतांतत्रस्वनःप्रादुरभून्नृप २१ निःशब्देचस्थितेतत्रततोविप्रजनेपुनः ॥ राजानंब्राह्मणच्छद्माचार्वाकोराक्षसोऽब्रवीत् २२ तत्रदुर्योधनसखाभिक्षुरूपेणसंवृतः ॥ साक्षःशिखीत्रिदंडीचधृष्टोविगतसाध्वसः २३ वृतःसर्वैस्तथाविप्रैराशीर्वादविवक्षुभिः ॥ परंसहस्रैराजेंद्रतपोनियमसंवृतैः २४ सदुष्टःपापमाशंसुःपांडवानांमहात्मनां ॥ अनामंत्र्यैवतान्विप्रांस्तमुवाचमहीपतिं २५ ॥ चार्वाकउवाच ॥ इमेप्राहुर्द्विजाःसर्वेसमारोप्यवचोमयि ॥ धिग्भवंतंकुनृपतिंज्ञातिघातिनमस्तुवै २६ किंतेनस्याद्धिकौंतेयकृत्वेवंज्ञातिसंक्षयं ॥ घातयित्वागुरूंश्चैवमृतंश्रेयोनजीवितम् २७ ॥३३॥

१४ अभिरूपान्मंगलद्रव्यपाणीन् १५।१६।१७ किमिच्छसिकिमिच्छसीतिपृच्छद्भिर्भृत्यैर्विविधैर्गोवस्त्रादिद्रव्यैर्निमंत्रयद्भिरित्यर्थः १८ स्तब्ध्वाव्याप्य १९।२०।२१।२२।२३। २४।२५।२६।२७

२८। २९ प्रत्यासन्नाःसमीपस्थाव्यसनिनश्चिरदुःखिनोभ्रातृप्रभृतयोयस्यतं भ्रात्रादिदुःखपरिहारार्थंममेदंराज्यकरणंनतुस्वसुखार्थमित्यर्थः ३० । ३१ जह्नुर्ज्ञातवंतः ३२ । ३३ । ३४ । ३५ । ३६ ३७ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेअष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥ ॥ ७ ॥ ॥ ब्राह्मणाइति १ । २ । ३ । ४ । ५ । ६ विहितोयथाआज्ञप्तः

इतितेवैद्विजाःश्रुत्वातस्यदुष्टस्यरक्षसः ॥ विव्यथुश्चुक्रुशुश्चैवतस्यवाक्यप्रधर्षिताः २८ ततस्तेब्राह्मणाःसर्वेसचराजायुधिष्ठिरः ॥ व्रीडिताःपरमोद्विग्नास्तूष्णीमासन्विशांपते २९ ॥ युधिष्ठिरउवाच ॥ प्रसीदंतुभवंतोमेप्रणतस्याभियाचतः ॥ प्रत्यासन्नव्यसनिनंनमांधिक्कर्तुमर्हथ ३० ॥ ॥ वैशंपायनउवाच ॥ ततोराजन्ब्राह्मणास्तेसर्वएवविशांपते ॥ ऊचुर्नैतद्वचोऽस्माकंश्रीरस्तुतवपार्थिव ३१ जज्ञुश्चैवमहात्मानस्ततस्तंज्ञानचक्षुषा ॥ ब्राह्मणावेदविद्वांसस्तपोभिर्विमलीकृताः ३२ ॥ ब्राह्मणाऊचुः ॥ एषदुर्योधनसखाचार्वाकोनामराक्षसः ॥ परिव्राजकरूपेणहितंतस्यचिकीर्षति ३३ नवयंब्रूमधर्मात्मन्व्येतुतेभयमीदृशं ॥ उपतिष्ठतुकल्याणंभवंतंभ्रातृभिःसह ३४ ॥ वैशंपायनउवाच ॥ ततस्तेब्राह्मणाःसर्वेहुंकारैःक्रोधमूर्छिताः ॥ निर्भर्त्सयंतःशुचयोनिजघ्नुःपापराक्षसम् ॥ ३५ सपपातविनिर्दग्धस्तेजसाब्रह्मवादिनाम् ॥ महेंद्राशनिनिर्दग्धःपादपोंकुरवानिव ३६ पूजिताश्चययुर्विप्राराजानमभिनंद्यतम् ॥ राजाचहर्षमापेदेपांडवःससुहृज्जनः ३७ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिचार्वाकवधेअष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥ ॥ वैशंपायनउवाच ॥ ततस्तत्रतुराजानंतिष्ठंतंभ्रातृभिःसह ॥ उवाचदेवकीपुत्रःसर्वदर्शीजनार्दनः १ ॥ वासुदेवउवाच ॥ ब्राह्मणास्ताततलोकेऽस्मिन्नर्चनीयाःसदामम ॥ एतेभूमिचरादेवावाग्विषाःसुप्रसादकाः १ पुराकृतयुगेराजंश्चार्वाकोनामराक्षसः ॥ तपस्तेपेमहाबाहोबदर्यांबहुवार्षिकम् २ वरेणच्छंद्यमानश्चब्रह्मणाचपुनःपुनः ॥ अभयंसर्वभूतेभ्योवरयामासभारत ३ द्विजावमानादन्यत्रप्रादाद्वरमनुत्तमम् ॥ अभयंसर्वभूतेभ्योददौतस्मैजगत्पतिः ४ सतुलब्धवरःपापोदेवानमितविक्रमः ॥ राक्षसस्तापयामासतीव्रकर्मामहाबलः ५ ततोदेवाःसमेताश्चब्रह्माणमिदमब्रुवन् ॥ वधायरक्षसस्तस्यबलविप्रकृतास्तदा ६ तानुवाचततोदेवोविहितस्तत्रवैमया ॥ यथाऽस्यभवितामृत्युरचिरेणेतिभारत ७ राजादुर्योधनोनामसखाऽस्यभवितानृषु ॥ तस्यस्नेहावबद्धोऽसौब्राह्मणानवमंस्यते ८ तत्रैनंरुषितावविप्राविप्रकारप्रधर्षिताः ॥ धक्ष्यंतिवाग्बलाःपापंततोनाशंगमिष्यति ९ सएषनिहतःशेतेब्रह्मदंडेनराक्षसः ॥ चार्वाकोनृपतिश्रेष्ठमाशुचोभरतर्षभ १० हतास्तेक्षत्रधर्मेणज्ञातयस्तवपार्थिव ॥ स्वर्गताश्चमहात्मानोवीराःक्षत्रियपुंगवाः ११ सत्वमातिष्ठकार्याणिमातेऽभूद्ग्लानिरच्युत ॥ शत्रूञ्जहिप्रजारक्षद्विजांश्चपरिपूजय १२ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणि चार्वाकवरदानादिकथने एकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥ ॥ वैशंपायनउवाच ॥ ततःकुंतीसुतोराजागतमन्युर्गतज्वरः ॥ कांचनेप्राङ्मुखोहृष्टोन्यषीदत्परमासने १

७ । ८ । ९ । १० । ११ । १२ ॥ ॥ इतिशां०रा०नी०भारतभाव०एकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥ ॥ ततःकुंतीसुतइति गतमन्युर्वीतदैन्यः गतज्वरोवीतशोकः १

निषीदतुरितिनिषेदतुरित्यर्थेआर्षम् १ । ३ दांतेगजदंतमये ४ सुधर्मादुर्योधनपुरोहितः ५ । ६ स्वस्तिकान्सर्वतोभद्राद्यंकितानिदेवतापीठानि ७ । ८ भांडंउपकरणम् ९ औदुंबरास्ताम्र



तमेवाभिमुखौपीठेप्रदिप्तेकांचनेशुभे ॥ सात्यकिर्वासुदेवश्चनिषीदतुररिंदमौ २ मध्येकृत्वातुराजानंभीमसेनार्जुनावुभौ ॥ निषीदतुर्महात्मानौश्लक्ष्णयोर्मणिपी
ठयोः ३ दांतेसिंहासनेशुभ्रेजांबूनदविभूषिते ॥ पृथापिसहदेवेनसहास्तेनकुलेनच ४ सुधर्माविदुरोधौम्योधृतराष्ट्रश्चकौरवः ॥ निषेदुर्ज्वलनाकारेष्वासनेषुपृ
थक्पृथक् ५ युयुत्सुःसंजयश्चैवगांधारीचयशस्विनी ॥ धृतराष्ट्रोयतोराजाततःसर्वेसमाविशन् ६ तत्रोपविष्टोधर्मात्माश्वेताःसुमनसोऽस्पृशत् ॥ स्वस्तिकान
क्षतान्भूमिंसुवर्णरजतंमणिम् ७ ततःप्रकृतयःसर्वाःपुरस्कृत्यपुरोहितम् ॥ ददृशुर्धर्मराजानमादायबहुमंगलम् ८ पृथिवींचसुवर्णंचरत्नानिविविधानिच ॥ आ
भिषेचनिकंभांडंसर्वसंभारसंभृतम् ९ कांचनौदुंबरास्तत्रराजताःपृथिवीमयाः ॥ पूर्णकुंभाःसुमनसोलाजाबर्हींषिगोरसम् १० शमीपिप्पलपालाशसमिधोमधु
सर्पिषी ॥ स्रुवऔदुंबरःशंखस्तथाहेमविभूषितः ११ दाशार्हेणाभ्यनुज्ञातस्तत्रधौम्यःपुरोहितः ॥ प्रागुदक्प्रवणेवेदींलक्षणेनोपलिख्यच १२ व्याघ्रचर्मोत्तरे
शुक्लेसर्वतोभद्रआसने ॥ दृढपादप्रतिष्ठानेहुताशनसमत्विषि १३ उपवेश्यमहात्मानंकृष्णांचद्रुपदात्मजाम् ॥ जुहावपावकंधीमान्विधिमंत्रपुरस्कृतम् १४ त
तउत्थायदाशार्हःशंखमादायपूजितम् ॥ अभ्यषिंचत्पतिंपृथ्व्याःकुंतीपुत्रंयुधिष्ठिरम् १५ धृतराष्ट्रश्चराजर्षिःसर्वाःप्रकृतयस्तथा ॥ अनुज्ञातोऽथकृष्णे
नभ्रातृभिःसहपांडवः १६ पांचजन्याभिषिक्तश्चराजाऽमृतमुखोऽभवत् ॥ ततोऽनुवादयामासुःपणवानकदुंदुभीन् १७ धर्मराजोऽपितत्सर्वंप्रतिजग्राहधर्मतः ॥
पूजयामासतांश्चापिविधिवद्भूरिदक्षिणः १८ ततोनिष्कसहस्रेणब्राह्मणान्स्वस्तिवाचयन् ॥ वेदाध्ययनसंपन्नान्धृतिशीलसमन्वितान् १९ तेप्रीताब्राह्मणाराज
न्स्वस्त्यूचुर्जयमेवच ॥ हंसाइवचनर्दंतःप्रशशंसुर्युधिष्ठिरम् २० युधिष्ठिरमहाबाहोदिष्ट्याजयसिपांडव ॥ दिष्ट्यास्वधर्मंप्राप्तोऽसिविक्रमेणमहाद्युते २१ दि
ष्ट्यागांडीवधन्वाचभीमसेनश्चपांडवः ॥ त्वंचापिकुशलीराजन्माद्रीपुत्रौचपांडवौ २२ मुक्तावीरक्षयात्तस्मात्संग्रामाद्विजितद्विषः ॥ क्षिप्रमुत्तरकार्याणिकुरुसर्वा
णिभारत २३ ततःप्रत्यर्चितःसद्भिर्धर्मराजोयुधिष्ठिरः ॥ प्रतिपेदेमहद्राज्यंसुहृद्भिःसहभारत २४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणियुधि
ष्ठिराभिषेकेचत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ वैशंपायनउवाच ॥ प्रकृतीनांचतद्वाक्यंदेशकालोपबृंहितम् ॥ श्रुत्वायुधिष्ठिरोराजाऽथोत्तरंप्रत्यभाषत १ धन्याःपां
डुसुतान्नूनंयेषांब्राह्मणपुंगवाः ॥ तथ्यान्वाप्यथवाऽतथ्यान्गुणानाहुःसमागताः २ अनुग्राह्यावयंनूनंभवतामितिमेमतिः ॥ यदेवंगुणसंपन्नानस्मान्ब्रूथविमत्सराः ३ ॥३४॥

याः १० उदुंबरकाष्ठमयःस्रुवः ११ । १२ । १३ । १४ । १५ । १६ अमृतमुखः अत्यंतंदर्शनीयः १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ ॥ इतिशांतिपर्वणिराजधर्मानुशासन
पर्वणि नीलकंठीये भारतभावदीपे चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ ७ ॥ ॥ प्रकृतीनामिति तद्वाक्यं दिष्ट्याजयसीत्यादि अंतरंपश्चात् १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ यत्अस्यकार्यंतत्भवद्भिःकर्तव्यमित्यर्थः १८ राजानंधृतराष्ट्रंअनुज्ञाप्यतानिकार्याणिकर्तव्यानीत्यर्थः १९

धृतराष्ट्रोमहाराजःपितामेदैवतंपरम् ॥ शासनेऽस्यप्रियेचैवस्थेयंमत्प्रियकांक्षिभिः ४ एतदर्थंहिजीवामिकृत्वाज्ञातिवधंमहत् ॥ अस्यशुश्रूषणंकार्यंमयानित्य
मतंद्रिणा ५ यदिचाहमनुग्राह्योभवतांसुहृदांतथा ॥ धृतराष्ट्रेयथापूर्वंवृत्तिंवर्तितुमर्हथ ६ एषनाथोहिजगतोभवतांचमयासह ॥ अस्यैवपृथिवीकृत्स्नापांडवाः
सर्वएवच ७ एतन्मनसिकर्तव्यंभवद्भिर्वचनंमम ॥ अनुज्ञाप्याथतान्राजायथेष्टंगम्यतामिति ८ पौरजानपदान्सर्वान्विसृज्यकुरुनंदनः ॥ यौवराज्येनकौंतेयं
भीमसेनमयोजयत् ९ मंत्रेचनिश्चयेचैवषाड्गुण्यस्यचचिंतने ॥ विदुरंबुद्धिसंपन्नंप्रीतिमान्ससमादिशत् १० कृताकृतपरिज्ञानेतथाऽऽयव्ययचिंतने ॥ संजयं
योजयामासवृद्धंसर्वगुणैर्युतम् ११ बलस्यपरिमाणेचभक्तवेतनयोस्तथा ॥ नकुलंव्यादिशद्राजाकर्मणांचान्ववेक्षणे १२ परचक्रोपरोधेचदुष्टानांचावमर्दने ॥
युधिष्ठिरोमहाराजफाल्गुनंव्यादिदेशह १३ द्विजानांदेवकार्येषुकार्येष्वन्येषुचैवह ॥ धौम्यंपुरोधसांश्रेष्ठंनित्यमेवसमादिशत् १४ सहदेवंसमीपस्थंनित्यमेवसमा
दिशत् ॥ तेनगोप्योहिनृपतिःसर्वावस्थोविशांपते १५ यान्यानमन्यद्योग्यांश्चयेषुयेष्विहकर्मसु ॥ तांस्तांस्तेष्वेवयुयुजेप्रीयमाणोमहीपतिः १६ विदुरंसंजयं
चैवयुयुत्सुंचमहामतिम् ॥ अब्रवीत्परवीरघ्नोधर्मात्माधर्मवत्सलः १७ उत्थायोत्थायतत्कार्यमस्यराज्ञःपितुर्मम ॥ सर्वंभवद्भिःकर्तव्यमप्रमत्तैर्यथायथम् १८ पौ
रजानपदानांचयानिकार्याणिसर्वशः ॥ राजानंसमनुज्ञाप्यतानिकर्माणिभागशः १९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानु० भीमादिकर्मनियोगेएकच
त्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ ॥ वैशंपायनउवाच ॥ ततोयुधिष्ठिरोराजाज्ञातीनांयेहतायुधि ॥ श्राद्धानिकारयामासतेषांपृथगुदारधीः १ धृतराष्ट्रो
ददौराजापुत्राणामौर्ध्वदेहिकम् ॥ सर्वकामगुणोपेतमन्नंगाश्चधनानिच २ रत्नानिचविचित्राणिमहार्हाणिमहायशाः ॥ युधिष्ठिरस्तुद्रोणस्यकर्णस्यचमहा
त्मनः ३ धृष्टद्युम्नाभिमन्युभ्यांहैडिंबस्यचरक्षसः ॥ विराटप्रभृतीनांचसुहृदामुपकारिणाम् ४ द्रुपदद्रौपदेयानांद्रौपद्यासहितोददौ ॥ ब्राह्मणानांसहस्राणि
पृथगेकैकमुद्दिशन् ५ धनैरत्नैश्चगोभिश्चवस्त्रैश्चसमतर्पयत् ॥ येचान्येपृथिवीपालायेषांनास्तिसुहृज्जनः ६ उद्दिश्योद्दिश्यतेषांचचक्रेराजौर्ध्वदेहिकम् ॥ सभाः
प्रपाश्चविविधास्तटाकानिचपांडवः ७ सुहृदांकारयामाससर्वेषामौर्ध्वदेहिकम् ॥ सतेषामनृणोभूत्वागत्वालोकेष्ववाच्यताम् ८ कृतकृत्योऽभवद्राजाप्रजाधर्मे
णपालयन् ॥ धृतराष्ट्रंयथापूर्वंगांधारींविदुरंतथा ९ सर्वांश्चकौरवान्मान्यान्भृत्यांश्चसमपूजयत् ॥ याश्चतत्रस्त्रियःकाश्चिद्धतवीराहतात्मजाः १०

॥ इति शांतिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे एकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ ॥ ॥ ७ ॥ ॥ ॥ ततोयुधिष्ठिरइति १ । २ । ३ । ४ । ५
६ उद्दिश्येति सभाःधर्मशालाः तत्तन्नामांकितानिसभादीनिचक्रे इयममुकस्यसभाइयममुकस्यसभेति । एतेनसभादिकरणात्संतानफलंलभ्यतेइतिगम्यते ७ । ८ । ९ । १०

११ । १२ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपेद्विचत्वारिंशत्तमोऽध्यायः ॥ ४२ ॥ ॥ अभिषिक्तइति १ । २ । ३ पुरुषंसर्वशरीरशायिनं सात्वतामुपासकानांप तिंपालकम् ४ विश्वस्यसंभवोयोनिः ५ सप्तधा विष्णवाख्यआदित्योवामनश्चेतिद्विधाअदित्यामेवजन्म । ततोऽदितेरूपांतरेषुपृश्निप्रमृतिषु क्रमात्पृश्निगर्भः परशुरामः दाशरथीरामः यादवौ रामकृष्णौचेतिसर्वेषुगर्भेषुएकएवत्वंनतुप्रतिगर्भंभिन्नः । त्रिषुवर्तमानायुगात्पूर्वेषुभवंत्रियुगं । अन्येतुधर्मज्ञानवैराग्यैश्वर्यश्रीयशसीचेतित्रीणियुग्मानितद्वंतमित्याहुः ६ शुचिश्रवाःपुण्यकीर्तिः । घृतार्चिर्यज्ञेश्वरः हंसोब्रह्मणोऽपिगुरुः त्रीणिचक्षूंषिदर्शनसाधनानिश्रुत्यनुमानप्रत्यक्षाणियस्मिन् ७ बृहद्भानुःसूर्यः । वृषमोधर्मः । तार्क्ष्यलक्षणोगरुडध्वजः । अनीकसाहःशत्रुसेनावमर्दी । शिपि

सर्वास्ताःकौरवोराजासंपूज्यापालयद्घृणी ॥ दीनांधकृपणानांचगृहाच्छादनभोजनैः ११ आनृशंस्यपरोराजाचकारानुग्रहंप्रभुः ॥ सविजित्यमहींकृत्स्नामा नृण्यंप्राप्यवैरिषु ॥ निःसपत्नःसुखीराजाविजहारयुधिष्ठिरः १२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिश्राद्धक्रियायांद्विचत्वारिंशत्तमो ऽध्यायः ॥ ४२ ॥ ७ ॥ वैशंपायनउवाच ॥ अभिषिक्तोमहाप्राज्ञोराज्यंप्राप्ययुधिष्ठिरः ॥ दाशार्हंपुंडरीकाक्षमुवाचप्रांजलिःशुचिः १ तवकृष्णप्रसादेनन येनचबलेनच ॥ बुद्ध्याचयदुशार्दूलतथाविक्रमणेनच २ पुनःप्राप्तमिदंराज्यंपितृपैतामहंमया ॥ नमस्तेपुंडरीकाक्षपुनःपुनररिंदम ३ त्वामेकमाहुःपुरुषं त्वामाहुःसात्वतांपतिम् ॥ नामभिस्त्वांबहुविधैस्तुवंतिप्रयताद्विजाः ४ विश्वकर्मन्नमस्तेऽस्तुविश्वात्मन्विश्वसंभव ॥ विष्णोजिष्णोहरेकृष्णवैकुंठपुरषोत्तम ५ अदित्याःसप्तधात्वंतुपुराणोगर्भतांगतः ॥ पृश्निगर्भस्त्वमेवैकस्त्रियुगंत्वांवदंत्यपि ६ शुचिश्रवाहृषीकेशोघृतार्चिर्हंसउच्यते ॥ त्रिचक्षुःशंभुरेकस्त्वंविभुर्दामो दरोऽपिच ७ वराहोऽग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः ॥ अनीकसाहःपुरुषःशिपिविष्टउरुक्रमः ८ वरिष्ठउग्रसेनानीःसत्योवाजसनिर्गुहः ॥ अच्युतश्च्याव नोऽरीणांसंस्कृतोविकृतिर्वृषः ९ कृष्णधर्मस्त्वमेवादिर्वृषदर्भोवृषाकपिः ॥ सिंधुर्विधर्मास्त्रिककुप्त्रिधामात्रिदिवाच्युतः १० संम्राड्विराट्स्वराट्चैवसुर राजोभवोद्भवः ॥ विभुर्भूरतिभूःकृष्णःकृष्णवर्त्मात्वमेवच ११ स्विष्टकृद्भिषजावर्तःकपिलस्त्वंचवामनः ॥ यज्ञोध्रुवःपतंगश्चयज्ञसेनस्त्वमुच्यसे १२ शि खंडीनहुषोबभ्रुर्दिवस्पृक्त्वंपुनर्वसुः ॥ सुबभ्रूरुक्मयज्ञश्चसुषेणोदुंदुभिस्तथा १३ गभस्तिनेमिःश्रीपद्मःपुष्करःपुष्पधारणः ॥ ऋभुर्विभुःसर्वसूक्ष्मश्चारित्रं चैवपठचसे १४ अंभोनिधिस्त्वंब्रह्मात्वंपवित्रंधामधामवित् ॥ हिरण्यगर्भंत्वामाहुःस्वधास्वाहाचकेशव १५ ॥४३॥

विष्टःसर्वशरीरांतःप्रविष्टःपुरुषोजीवः ८ वरिष्ठउत्तमः । वाजसनिःअन्नप्रदः । गुहःदेवसेनानीः संस्कृतोविप्रादिरूपः विकृतिःअनुलोमजविलोमजादिरूपः वृषःश्रेष्ठः परिव्राडादिरूपः ९ कृष्णधर्मःयज्ञादिरूपः । वृषाइंद्रस्तंदभ्रातिस्तभ्रातीतिवृषदर्भइंद्रदर्पहंता । वृषाकपिर्हरिहररूपी सिंधुःसमुद्रः विधर्मानिर्गुणः त्रिककुप्कर्मयोग्यप्रागुदगैशानादिदिग्रूपः । त्रिधामासूर्यचं द्राग्निप्रभः । त्रिदिवाच्युतोऽवतीर्णः १० भूःसत्तारूपः । अतिभूः अशरीरः ११ भिषजावर्तःभिषजौअश्विनौआवर्ततइत्यावर्तस्तयोःपितासूर्यः पतंगोगरुडः १२ बभ्रुर्महेश्वरः पुनर्वसुर्न क्षत्रभेदः । सुबभ्रुःसुतरांपिंगलवर्णः १३ गभस्तिरर्कोनेमिःपरिधिर्यस्यसकालचक्ररूपः १४ । १५ ॥१५॥

१६ । १७ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेत्रिचत्वारिंशत्तमोऽध्यायः ॥ ४३ ॥ ततइति विस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

योनिस्त्वमस्यप्रलयश्चकृष्णत्वमेवेदंसृजसिवि श्वमग्रे ॥ विश्वंचेदंत्वद्वशेविश्वयोनेनमोऽस्तुतेशार्ङ्गचक्रासिपाणे १६ एवंस्तुतोधर्मराजेनकृष्णःसभामध्येप्रीति मान्पुष्कराक्षः ॥ तमभ्यनंदद्भारतंपुष्कलाभिर्वाग्भिर्ज्येष्ठंपांडवंयादवाग्र्यः १७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिवासुदेवस्तुतौत्रिचत्वा रिंशत्तमोऽध्यायः ॥ ४३ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ ततोविसर्जयामाससर्वाःप्रकृतयोनृपः ॥ विविशुश्चाभ्यनुज्ञातायथास्वानिगृहाणिते १ ततोयुधि ष्ठिरोराजाभीमंभीमपराक्रमम् ॥ सांत्वयन्नब्रवीच्छ्रीमानर्जुनंयमजौतथा २ शत्रुभिर्विविधैःशस्त्रैःक्षतदेहामहारणे ॥ श्रांताभवंतःसुभृशंतापिताःशोकमन्युभिः ३ अरण्येदुःखवसतीर्मत्कृतेभरतर्षभाः ॥ भवद्भिरनुभूताहियथाकुपुरुषैस्तथा ४ यथासुखंयथाजोषंजयोऽयमनुभूयताम् ॥ विश्रांताँल्लब्धविज्ञानान्श्वःसमे ताऽस्मिवःपुनः ५ ततोदुर्योधनगृहंप्रासादैरुपशोभितम् ॥ बहुरत्नसमाकीर्णंदासीदाससमाकुलम् ६ धृतराष्ट्राभ्यनुज्ञातंभ्रात्रादत्तंवृकोदरः ॥ प्रतिपेदेमहाबा हुर्मंदिरंमघवानिव ७ यथादुर्योधनगृहंतथादुःशासनस्यतु ॥ प्रासादमालासंयुक्तंहेमतोरणभूषितम् ८ दासीदाससुसंपूर्णंप्रभूतधनधान्यवत् ॥ प्रतिपेदेमहाबा हुरर्जुनोराजशासनात् ९ दुर्मर्षणस्यभवनंदुःशासनगृहाद्वरम् ॥ कुबेरभवनप्रख्यंमणिहेमविभूषितम् १० नकुलायवरार्हायकर्शितायमहावने ॥ ददौप्रीतोम हाराजधर्मपुत्रोयुधिष्ठिरः ११ दुर्मुखस्यचवेश्माग्र्यंश्रीमत्कनकभूषणम् ॥ पूर्णपद्मदलाक्षीणांस्त्रीणांशयनसंकुलम् १२ प्रददौसहदेवायसततंप्रियकारिणे ॥ मुमुदेतच्चलब्ध्वाऽसौकैलासंधनदोयथा १३ युयुत्सुर्विदुरश्चैवसंजयश्चविशांपते ॥ सुधर्माचैवधौम्यश्चयथास्वान्जग्मुरालयान् १४ सहसात्यकिनाशौरिरर्जुन स्यनिवेशनं ॥ विवेशपुरुषव्याघ्रोव्याघ्रोगिरिगुहामिव १५ तत्रभक्ष्यान्नपानैस्तेमुदिताःसुसुखोषिताः ॥ सुखप्रबुद्धाराजानमुपतस्थुर्युधिष्ठिरम् १६ ॥ इति श्रीमहाभारतेशांतिपर्वणिराजध०गृहविभागेचतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ ॥ ७ ॥ जनमेजयउवाच ॥ प्राप्यराज्यंमहाबाहुर्धर्मपुत्रोयुधिष्ठिरः ॥ यदन्यदकरोद्विप्रतन्मेवक्तुमिहार्हसि १ भगवान्वाहृषीकेशस्त्रैलोक्यस्यपरोगुरुः ॥ ऋषेयदकरोद्वीरस्तच्चव्याख्यातुमर्हसि २ ॥ वैशंपायनउवाच ॥ शृणुतत्त्वे नराजेंद्रकीर्त्यमानंमयाऽनघ ॥ वासुदेवंपुरस्कृत्ययदकुर्वंतपांडवाः ३ प्राप्यराज्यंमहाराजकुंतीपुत्रोयुधिष्ठिरः ॥ चातुर्वर्ण्यंयथायोग्यंस्वेस्वेस्थानेन्यवेशयत् ४ ब्राह्मणानांसहस्रंचस्नातकानांमहात्मनाम् ॥ सहस्रंनिष्कमेकैकंदापयामासपांडवः ५ तथाऽनुजीविनोभृत्यान्संश्रितानतिथीनपि ॥ कामैःसंतर्पयामासकृपणां स्तर्कंकानपि ६ पुरोहितायधौम्यायप्रादादयुतशःसगाः ॥ धनंसुवर्णंरजतंवासांसिविविधान्यपि ७

१२ । १३ । १४ । १५ । १६ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपे चतुश्चत्वारिंशत्तमोऽध्यायः ॥ ४४ ॥ प्राप्येति १ । २ । ३ । ४ । ५ तर्ककान्याचकान् ६ । ७

८ । ९ लब्धप्रशमनंलब्धस्यधनादेःयथोचितमंशतःपात्रेसमर्पणेनशांतिकं १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ इतिशां०रा०नी०भा०पंचचत्वारिंश
तमोऽध्यय ॥ ४५ ॥ किमिति १ चतुर्थंजाग्रत्स्वप्नसुषुप्तिभ्यःपरंआलंब्यअपक्रांतःदेहत्रयात् २ पंचकर्माप्राणनादिकारी ३ सत्त्वंमनः वागुपलक्षितानींद्रियाणिचबुद्धौमहत्तत्त्वे गुणाःशब्दादिगुण

॥३६॥ कृपयाचमहाराजगुरुवृत्तिमवर्तत ॥ विदुरायचराजाऽसौपूजांचक्रेयतव्रतः ८ भक्ष्यान्नपानैर्विविधैर्वासोभिःशयनासनैः ॥ सर्वान्संतोषयामाससंश्रितान्ददतां
वरः ९ लब्धप्रशमनंकृत्वासराजाराजसत्तम ॥ युयुत्सोर्धार्तराष्ट्रस्यपूजांचक्रेमहायशाः १० धृतराष्ट्रायतद्राज्यंगांधार्यैविदुरायच ॥ निवेद्यसुस्थवद्राजासुख ॥४६॥
मास्तेयुधिष्ठिरः ११ तथासर्वंसनगरंप्रसाद्यभरतर्षभ ॥ वासुदेवंमहात्मानमभ्यगच्छत्कृतांजलिः १२ ततोमहतिपर्यंकेमणिकांचनभूषिते ॥ ददर्शकृष्णमा
सीनंनीलमेघसमद्युतिं १३ जाज्वल्यमानंवपुषादिव्याभरणभूषितम् ॥ पीतकौशेयवसनंहेम्नेवोपगतंमणिम् १४ कौस्तुभेनोरसिस्थेनमणिनाभिविराजितम् ॥
उद्यतेवोदयंशैलंसूर्येणाभिविराजितम् १५ नौपम्यंविद्यतेतस्यत्रिषुलोकेषुकिंचन ॥ सोभिगम्यमहात्मानंविष्णुंपुरुषविग्रहम् १६ उवाचमधुरंराजास्मितपूर्वं
मिदंतदा ॥ सुखेनतेनिशाकाच्चिद्व्युष्टाबुद्धिमतांवर १७ कच्चिज्ज्ञानानिसर्वाणिप्रसन्नाणितवाच्युत ॥ तथैवोपाश्रितादेवीबुद्धिर्बुद्धिमतांवर १८ वयंराज्यमनु
प्राप्ताःपृथिवीचवशेस्थिता ॥ तवप्रसादाद्भगवंस्त्रिलोकगतिविक्रम १९ जयंप्राप्तायशश्चाग्र्यंनचधर्माच्च्युतावयम् ॥ तंतथाभाषमाणंतुधर्मराजमरिंदमम् ॥
नोवाचभगवान्किंचिद्ध्यानमेवान्वपद्यत २० ॥ इतिश्रीमहाभारतेशांतिपर्वणिरा०कृष्णंप्रतियुधिष्ठिरवाक्येपंचचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥ ॥ युधिष्ठिर
उवाच ॥ किमिदंपरमाश्चर्यंध्यायस्यमितविक्रम ॥ कच्चिल्लोकत्रयस्यास्यस्वस्तिलोकपरायण १ चतुर्थंध्यानमार्गंत्वमालंब्यपुरुषर्षभ ॥ अपक्रांतोयतोदेवस्ते
नमेविस्मितंमनः २ निगृहीतोहिवायुस्तेपंचकर्माशरीरगः ॥ इंद्रियाणिप्रसन्नानिमनसिस्थापितानिते ३ वाक्सत्त्वंचगोविंदबुद्धौसंवेशितानिते ॥ सर्वेचैवगु
णादेवाःक्षेत्रज्ञेतेनिवेशिताः ४ नेंगंतितवरोमाणिस्थिराबुद्धिस्तथामनः ॥ काष्ठकुड्यशिलाभूतोनिरीहश्चासिमाधव ५ यथादीपोनिवातस्थोनिरिंगोज्वलतेपु
नः ॥ तथाऽसिभगवन्देवपाषाणइवनिश्चलः ६ यदिश्रोतुमिहार्हामिनरहस्यंचतेयदि ॥ छिंधिमेसंशयंदेवप्रपन्नायाभियाचते ७ त्वंहिकर्ताविकर्ताचक्षरंचैवा
क्षरंचहि ॥ अनादिनिधनश्चाद्यस्त्वमेवपुरुषोत्तम ८ त्वत्प्रपन्नायभक्तायशिरसाप्रणतायच ॥ ध्यानस्यास्ययथातत्त्वंब्रूहिधर्मभृतांवर ९ ततःस्वेगोचरे
न्यस्यमनोबुद्धींद्रियाणिसः ॥ स्मितपूर्वमुवाचेदंभगवान्वासवानुजः १० ॥ वासुदेवउवाच ॥ शरतल्पगतोभीष्मःशाम्यन्निवहुताशनः ॥ मांध्यातिपुरुषव्या
घ्रस्ततोमेतद्गतंमनः ११ यस्यज्यातलनिर्घोषंविस्फूर्जितमिवाशनेः ॥ नसेहेदेवराजोऽपितमस्मिमनसागतः १२ ॥३६॥

भाजोदेवाः श्रोत्रादीनिइंद्रियाणि ४ नेंगंतिनकंपंते निरीहोनिश्चेष्टः ५ निरिंगःअचलः ६ । ७ । ८ । ९ गोचरेस्वेस्वेस्थाने १० ध्यातिध्यायति ११ । १२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ चतस्रोविद्याः धर्मार्थकाममोक्षविद्याः सर्ववर्णसाधारणाः चातुर्होत्रंत्रैवर्णिकानांविशेषधर्मोयज्ञादिः २२ । २३ । २४ । २५ । २६

येनाभिजित्यतरसासमस्तंराजमंडलम् ॥ ऊढास्तिस्रस्तुताःकन्यास्तमस्मिमनसागतः १३ त्रयोविंशतिरात्रंयोयोधयामासभार्गवम् ॥ नचरामेणनिस्तीर्णं
स्तमस्मिमनसागतः १४ एकीकृत्येंद्रियग्रामंमनःसंयम्यमेधया ॥ शरणंमामुपागच्छत्ततोमेतद्गतंमनः १५ यंगंगागर्भविधिनाधारयामासपार्थिव ॥ वसिष्ठशि
ष्यंतंतात तमस्मिमनसागतः १६ दिव्यास्त्राणिमहातेजायोधारयतिबुद्धिमान् ॥ सांगांश्चचतुरोवेदांस्तमस्मिमनसागतः १७ रामस्यदयितंशिष्यंजामदग्न्य
स्यपांडव ॥ आधारंसर्वविद्यानांतमस्मिमनसागतः १८ सहिभूतंभविष्यच्चभवच्चभरतर्षभ ॥ वेत्तिधर्मविदांश्रेष्ठंतमस्मिमनसागतः १९ तस्मिन्हिपुरुषव्या
घ्रेकर्मभिःस्वैर्दिवंगते ॥ भविष्यतिमहीपार्थनष्टचंद्रेवशर्वरी २० तद्युधिष्ठिरगांगेयंभीष्मंभीमपराक्रमम् ॥ अभिगम्योपसंगृह्यपृच्छयत्तेमनोगतम् २१ चातु
र्विद्यंचातुर्होत्रंचातुराश्रम्यमेवच ॥ राजधर्मांश्चनिखिलान्पृच्छैनंपृथिवीपते २२ तस्मिन्नस्तमितेभीष्मेकौरवाणांधुरंधरे ॥ ज्ञानान्यस्तंगमिष्यंतितस्मात्त्वां
चोदयाम्यहम् २३ तच्छ्रुत्वावासुदेवस्यतथ्यंवचनमुत्तमम् ॥ साश्रुकंठःसधर्मज्ञोजनार्दनमुवाचह २४ यद्भवानाहभीष्मस्यप्रभावंप्रतिमाधव ॥ तथातत्रात्रसंदे
होविद्यतेमममाधव २५ महाभाग्यंचभीष्मस्यप्रभावश्चमहाद्युते ॥ श्रुतंमयाकथयतांब्राह्मणानांमहात्मनाम् २६ भवांश्चकर्तालोकानांयद्ब्रवीत्यरिसूदन ॥ तथा
तदनभिध्येयंवाक्यंयादवनंदन २७ यदित्वनुग्रहवतीबुद्धिस्तेमयिमाधव ॥ त्वामग्रतःपुरस्कृत्यभीष्मंयास्यामहेवयम् २८ आवृत्तेभगवत्यर्केसहिलोकान्गमिष्य
ति ॥ त्वद्दर्शनंमहाबाहोतस्मादर्हतिकौरवः २९ तवचाद्यस्यदेवस्यक्षरस्यैवाक्षरस्यच ॥ दर्शनंतस्यलाभःस्यात्त्वंहिब्रह्ममयोनिधिः ३० ॥वैशंपायनउवाच॥
श्रुत्वैवंधर्मराजस्यवचनंमधुसूदनः ॥ पार्श्वस्थंसात्यकिंप्राहरथोमेयुज्यतामिति ३१ सात्यकिस्त्वाशुनिष्क्रम्यकेशवस्यसमीपतः ॥ दारुकंप्राहकृष्णस्ययुज्य
तांरथइत्युत ३२ ससात्यकेराशुवचोनिशम्यरथोत्तमंकांचनभूषितांगम् ॥ मसारगल्वर्कमयैर्विभंगैर्विभूषितंहेमनिबद्धचक्रम् ३३ दिवाकरांशुप्रभमाशुगामिनंवि
चित्रनानामणिभूषितांतरम् ॥ नवोदितंसूर्यमिवप्रतापिनंविचित्रतार्क्ष्यध्वजिनंपताकिनम् ३४ सुग्रीवशैब्यप्रमुखैर्वराश्वैर्मनोजवैःकांचनभूषितांगैः ॥ संयुक्तमा
वेदयदच्युतायकृतांजलिर्दारुकोराजसिंह ३५ ॥ इ०म०शां०रा०महापुरुषस्तवेषट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ जनमेजयउवाच ॥ शरतल्पेशयानस्तुभर
तानांपितामहः ॥ कथमुत्सृष्टवान्देहंकंचयोगमधारयत् १ ॥वैशंपायनउवाच॥ शृणुष्वावहितोराजन्शुचिर्भूत्वासमाहितः ॥ भीष्मस्यकुरुशार्दूलदेहोत्सर्गंमहात्मनः २

अत्रभिध्येयमविचारणीयम् २७ । २८ । २९ । ३० । ३१ । ३२ सइति मसारगल्वर्कमयैर्विभंगैः मसारोमरकतमणिः गल्वश्चंद्रकांतः अर्कःसूर्यकांतः तन्मयैर्विभंगैर्विस्तरैः विटंकैरितिपाठेप
क्ष्युपवेशनस्थानैः ३३ । ३४ । ३५ ॥ इतिशांतिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपेषट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥ ॥ ७ ॥ ॥ शरतल्पेइति १ । २

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ आरिराधयिषुः वस्तुतस्तत्त्वावधारणपूर्वकंध्यानमाराधनंतत्कर्तुमिच्छुः जिगदिषामिवक्तुमिच्छामि व्याससमासिन्या विस्तरसंक्षेपवत्या १६ तत्रसंक्षेपमाह शुचिमिति शुचिस्वतःपरतोवादोषहीनं शुचिपदंतादृशमेवपदंप्राप्तिमार्गोयोगोयस्यतं । हंसंसर्वातिगं । तत्पदंतत्त्वमसीतिवाक्येतत्पदस्यार्थभूतमीश्वरं

निवृत्तमात्रेत्वयनउत्तरेवैदिवाकरे ॥ समावेशयदात्मानमात्मन्येवसमाहितः ३ विकीर्णांशुरिवादित्योभीष्मःशरशतैश्चितः ॥ शुशुभेपरयालक्ष्म्यावृतोब्राह्मणसत्तमैः ४ व्यासेनवेदविदुषानारदेनसुरर्षिणा ॥ देवस्थानेनवात्स्येनतथाऽश्मकसुमंतुना ५ तथाजैमिनिनाचैवपैलेनचमहात्मना ॥ शांडिल्यदेवलाभ्यांचमैत्रेयेणचधीमता ६ असितेनवसिष्ठेनकौशिकेनमहात्मना ॥ हारीतलोमशाभ्यांचतथाऽऽत्रेयेणधीमता ७ बृहस्पतिश्चशुक्रश्चच्यवनश्चमहामुनिः ॥ सनत्कुमारःकपिलोवाल्मीकिस्तुंबुरुःकुरुः ८ मौद्गल्योभार्गवोरामस्तृणबिंदुर्महामुनिः ॥ पिप्पलादोऽथवायुश्चसंवर्तःपुलहःकचः ९ काश्यपश्चपुलस्त्यश्चक्रतुर्दक्षःपराशरः॥ मरीचिरंगिराःकाश्यपोगौतमोगालवोमुनिः १० धौम्योविभांडोमांडव्योधौम्रःकृष्णानुभौतिकः ॥ उलूकःपरमोविप्रोमार्कंडेयोमहामुनिः ११ भास्करिःपूरणःकृष्णःसूतःपरमधार्मिकः ॥ एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः १२ श्रद्धादमशमोपेतैर्वृतश्चंद्रइवग्रहैः ॥ भीष्मस्तुपुरुषव्याघ्रःकर्मणामनसागिरा १३ शरतल्पगतःकृष्णंप्रदध्यौप्रांजलिःशुचिः ॥ स्वरेणहृष्टपुष्टेनतुष्टावमधुसूदनम् १४ योगेश्वरंपद्मनाभंविष्णुंजिष्णुंजगत्पतिम् ॥ कृतांजलिपुटोभूत्वावाग्विदांप्रवरःप्रभुः ॥ भीष्मःपरमधर्मात्मावासुदेवमथास्तुवत् १५ ॥ भीष्मउवाच ॥ आरिराधयिषुःकृष्णंवाचंजिगदिषामियाम् ॥ तयाव्याससमासिन्याप्रीयतांपुरुषोत्तमः १६ शुचिंशुचिपदंहंसंतत्पदंपरमेष्ठिनम् ॥ युक्त्वासर्वात्मनाऽऽत्मानंतंप्रपद्येप्रजापतिम् १७ अनाद्यंतंपरंब्रह्मनदेवानर्षयोविदुः ॥ एकोऽयंवेदभगवान्धातानारायणोहरिः १८ नारायणादृषिगणास्तथासिद्धमहोरगाः ॥ देवादेवर्षयश्चैवयंविदुःपरमव्ययम् १९ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ यंनजानंतिकोह्येषकुतोवाभगवानिति २० यस्मिन्विश्वानिभूतानितिष्ठंतिचविशंतिच ॥ गुणभूतानिभूतेशेसूत्रेमणिगणाइव २१ यस्मिन्नित्येततेतंतौदृढेस्रगिवतिष्ठति ॥ सदसद्ग्रथितंविश्वंविश्वांगेविश्वकर्मणि २२ हरिंसहस्रशिरसंसहस्रचरणेक्षणम् ॥ सहस्रबाहुमुकुटंसहस्रवदनोज्ज्वलम् २३ प्राहुर्नारायणंदेवंयंविश्वस्यपरायणम् ॥ अणीयसामणीयांसंस्थविष्ठंचस्थवीयसां २४ गरीयसांगरिष्ठंचश्रेष्ठंचश्रेयसामपि २५ यंवाकेष्वनुवाकेषुनिषत्सूपनिषत्सुच ॥ गृणंतिसत्यकर्माणंसत्यंसत्येषुसामसु २६

परमेष्ठिनंहिरण्यगर्भं आत्मानंदेहत्रयम् १७ । १८ । १९ । २० । २१ सदसत्कार्यकारणंचताभ्यांसूत्रांतर्याभिभ्यांग्रथितं । विश्वमंगेऽधिष्ठानभूतेयस्यतस्मिन् । विश्वंकर्मयस्मात् । कोह्येवान्यादितिश्रुतिः २२ । २३ । २४ । २५ वाकेषुमंत्रेषुसामान्यतःकर्मप्रकाशकेषु अनुवाकेषुमंत्रार्थविवरणभूतेषुब्राह्मणवाक्येषु । निषत्सुकर्मांगायववद्धदेवतादिज्ञानवाक्येषु । उपनिषत्सुकेवलात्मज्ञापकवाक्येषु । गृणंतिष्यायंति सत्यमबाधितं सत्येष्वबाधितार्थेषु सामसुज्येष्ठसामादिषु २६



चतुर्भिर्नामभिर्वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपैः क्रमाच्चतुरात्मानंब्रह्मजीवमनोहंकाररूपं । सत्त्वस्थंबुद्धावभिव्यक्तं सात्वतांभक्तानांपतिं २७ नित्यंतपःस्वधर्मस्तत्चयस्मिन् यत्प्रीत्यर्थंतत्संसयथ्यस्मादंगेषुचित्तेष्वनुतिष्ठतिउपतिष्ठति । यश्चसर्वात्मातंप्रपद्येइति सर्वेषांयच्छब्दसंबद्धानांप्रथमेनान्वयः । ईश्वरार्थमनुष्ठितोधर्मःस्वचित्तशुद्धिद्वारास्वार्थएवभवतीत्याश्चर्यमितिभावः २८ भौमंब्रह्मवेदाब्राह्मणायज्ञाश्च २९ अनन्यस्त्यक्तभेदः आत्मानंप्रत्यंचमेव आत्मानंसर्वेश्वरमात्मनिहार्दाकाशेदृष्ट्वासूक्ष्मबुद्ध्या इष्ट्वेतिपाठेयोगेन पश्यति आनंत्यायमोक्षाय ३० । ३१ पुराणेश्रुती

चतुर्भिश्चतुरात्मानंसत्वस्थंसात्वतांपतिम् ॥ यंदिव्यैर्देवमर्चंतिगुह्यैःपरमनामभिः २७ यस्मिन्नित्यंतपस्तत्तंयदंगेष्वनुतिष्ठति ॥ सर्वात्मासर्ववित्सर्वःसर्वज्ञःसर्वभावनः २८ यंदेवंदेवकीदेवीवसुदेवादजीजनत् ॥ भौमस्यब्रह्मणोगुप्त्यैदीप्तमग्निमिवारणिः २९ यमनन्योव्यपेताशीरात्मानंवीतकल्मषम् ॥ दृष्ट्वाऽऽनंत्यायगोविंदंपश्यत्यात्मानमात्मनि ३० अतिवाय्विंद्रकर्माणमतिसूर्यातितेजसम् ॥ अतिबुद्धींद्रियात्मानंतंप्रपद्येप्रजापतिम् ३१ पुराणेपुरुषंप्रोक्तंब्रह्मप्रोक्तंयुगादिषु ॥ क्षयेसंकर्षणंप्रोक्तंतमुपास्यमुपास्महे ३२ यमेकंबहुधाऽऽत्मानंप्रादुर्भूतमधोक्षजम् ॥ नान्यभक्ताःक्रियावंतोयजंतेसर्वकामदम् ३३ यमाहुर्जगतःकोशंयस्मिन्सन्निहिताःप्रजाः ॥ यस्मिँल्लोकाःस्फुरंतीमेजलेशकुनयोयथा ३४ ऋतमेकाक्षरंब्रह्मयत्तत्सदसतोःपरम् ॥ अनादिमध्यपर्यंतंनदेवानर्षयोविदुः ॥ यंसुरासुरगंधर्वाःसिद्धाऋषिमहोरगाः ३५ प्रयतानित्यमर्चंतिपरमंदुःखभेषजम् ॥ अनादिनिधनंदेवमात्मयोनिंसनातनम् ३६ अप्रेक्ष्यमनभिज्ञेयंहरिंनारायणंप्रभुम् ॥ यंवैविश्वस्यकर्तारंजगतस्तस्थुषांपतिम् ॥ वदंतिजगतोऽध्यक्षमक्षरंपरमंपदम् ३७ हिरण्यवर्णंयंगर्भमदितेर्दैत्यनाशनम् ॥ एकंद्वादशधाजज्ञेतस्मैसूर्यात्मनेनमः ३८ शुक्लेदेवान्पितॄन्कृष्णेतर्पयत्यमृतेनयः ॥ यश्चराजाद्विजातीनांतस्मैसोमात्मनेनमः ३९ महतस्तमसःपारेपुरुषंह्यतितेजसम् ॥ यंज्ञात्वामृत्युमत्येतितस्मैज्ञेयात्मनेनमः ४० यंबृहंतंबृहत्युक्थेयमग्नौयंमहाध्वरे ॥ यंविप्रसंघागायंतितस्मैवेदात्मनेनमः ४१ ऋग्यजुःसामधामानंदशार्धहविरात्मकम् ॥ यंसप्ततंतुंतन्वंतितस्मैयज्ञात्मनेनमः ४२ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांतस्मैहोमात्मनेनमः ४३

तकल्पादिविषये पुरुषंपूर्णंसर्वमस्मिन्नतीतमस्त्येवेतियोगात्पुरुषइतिनाम युगादिषुयुगारंभेषु बृंहकत्वात्सृष्टेरेनंब्रह्मेत्याहुः क्षयेसर्वस्यसम्यक्कर्षणादयंसंकर्षणइत्युक्तः ३२ बहुधाइंद्रादिदेवतारूपेणनान्यभक्ताअनन्यभक्ताः ३३ शकुनयाहंसकारंडवाद्याः ३४ । ३५ । ३६ । ३७ जज्ञेजनयामास ३८ । ३९ अतितेजसंस्वयंज्योतिषं ज्ञेयात्मनेनतूपास्यात्मने ४० उक्थेबव्हृचाः अग्नौचयनेऽध्वर्यवः ४१ ऋग्यजुःसामान्येवधामानियस्यतं । दशार्धानिपंचधानाःकरंभःपरिवापःपुरोडाशःपयश्चेतिपंचहवींषितदात्मकं । सप्ततंतवइवयोजनीयागायत्र्यादयोयस्मिन्नतंसप्ततंतुं ४२ चतुर्भिरिति आश्रावयेतिचतुरक्षरं अस्तुश्रौषडितिचतुरक्षरं यजेतिद्व्यक्षरं येयजामहेइतिपंचाक्षरं द्व्यक्षरोवषट्कारइतिसप्तदशभिरक्षरैर्योहूयतेतस्मैहोमात्मनेनमः ४३

सुपर्णोवेदपुरुषःयजुरितियस्यनाम छंदांसिगायत्र्यादीनियस्यगात्राणिहस्तादीनि त्रिवृत्त्रिभिर्ऋग्यजुःसामभिर्वर्ततइतियोगायज्ञः सएवशिरोयस्य यस्यरथंतरंबृहच्चवैकल्पिकंसामप्रीतिवाक्यं ४४ सहस्रसमेसहस्रसंवत्सरेसत्रेजज्ञेआविर्बभूव ४५ पादाश्चरणाःपदसमूहावाक्यानिवाअंगानिहस्तादीनियस्यतंपादांगं । संधयःशाब्दिकप्रसिद्धाः । पर्वाण्यंगुल्यादिकांडानि । स्वरा अचः । व्यंजनानिहलः ४६ ।४७ । ४८ सेतुंतरणोपायंयोगधर्मं । ऋतेनवेदोक्तेनोपायेनअमृतयोनिनामोक्षहेतुना धर्मार्थएवनत्वर्थकामार्थो व्यवहारोवागादिपरिस्पंदस्तदर्थान्यंगानितैः जितेंद्रियैरित्य

यःसुपर्णोयजुर्नामछंदोगात्रस्त्रिवृच्छिराः ॥ रथंतरंबृहत्सामतस्मैस्तोत्रात्मनेनमः ४४ यःसहस्रसमेसत्रेजज्ञेविश्वसृजामृषिः ॥ हिरण्यपक्षःशकुनिस्तस्मैहंसात्मनेनमः ४५ पादांगंसंधिपर्वाणंस्वरव्यंजनभूषणम् ॥ यमाहुरक्षरंदिव्यंतस्मैवागात्मनेनमः ४६ यज्ञांगोयोवराहोवैभूत्वागामुज्जहारह ॥ लोकत्रयहितार्थायतस्मैवीर्यात्मनेनमः ४७ यःशेतेयोगमास्थायपर्यंकेनागभूषिते ॥ फणासहस्ररचितेतस्मैनिद्रात्मनेनमः ४८ यस्तनोतिसतांसेतुमृतेनामृतयोनिना ॥ धर्मार्थव्यवहारांगैस्तस्मैसत्यात्मनेनमः ४९ यंपृथग्धर्मचरणाःपृथग्धर्मफलैषिणः ॥ पृथग्धर्मैःसमर्चंतितस्मैधर्मात्मनेनमः ५० यतःसर्वेप्रसूयंतेह्यनंगात्मांगदेहिनः ॥ उन्मादःसर्वभूतानांतस्मैकामात्मनेनमः ५१ यंचव्यक्तस्थमव्यक्तंविचिन्वंतिमहर्षयः ॥ क्षेत्रेक्षेत्रज्ञमासीनंतस्मैक्षेत्रात्मनेनमः ५२ यंत्रिधात्मानमात्मस्थंवृतंषोडशभिर्गुणैः ॥ प्राहुःसप्तदशंसांख्यास्तस्मैसांख्यात्मनेनमः ५३ यंविनिद्राजितश्वासाःसत्वस्थाःसंयतेंद्रियाः ॥ ज्योतिःपश्यंतियुंजानास्तस्मैयोगात्मनेनमः ५४ अपुण्यपुण्योपरमेयंपुनर्भवनिर्भयाः ॥ शांताःसंन्यासिनोयांतितस्मैमोक्षात्मनेनमः ५५ योऽसौयुगसहस्रांतेप्रदीप्तार्चिर्विभावसुः ॥ संभक्षयतिभूतानितस्मैघोरात्मनेनमः ५६ संभक्ष्यसर्वभूतानिकृत्वाचैकार्णवंजगत् ॥ बालःस्वपितियश्चैकस्तस्मैमायात्मनेनमः ५७ तद्यस्यनाभ्यांसंभूतंयस्मिन्विश्वंप्रतिष्ठितम् ॥ पुष्करेपुष्कराक्षस्यतस्मैपद्मात्मनेनमः ५८ सहस्रशिरसेचैवपुरुषायामितात्मने ॥ चतुःसमुद्रपर्याययोगनिद्रात्मनेनमः ५९ यस्यकेशेषुजीमूतानद्यःसर्वांगसंधिषु ॥ कुक्षौसमुद्राश्चत्वारस्तस्मैतोयात्मनेनमः ६० यस्मात्सर्वाःप्रसूयंतेसर्गप्रलयविक्रियाः ॥ यस्मिंश्चैवप्रलीयंतेतस्मैहेत्वात्मनेनमः ६१ योनिषण्णोभवेद्रात्रौदिवाभवतिविष्ठितः ॥ इष्टानिष्टस्यचद्रष्टातस्मैद्रष्ट्रात्मनेनमः ६२ अकुंठंसर्वकार्येषुधर्मकार्यार्थमुद्यतम् ॥ वैकुंठस्यचतद्रूपंतस्मैकार्यात्मनेनमः ६३ त्रिःसप्तकृत्वोयःक्षत्रंधर्मव्युत्क्रांतगौरवम् ॥ क्रुद्धोनिजघ्नेसमरेतस्मैक्रौर्यात्मनेनमः ६४

र्थः ४९ धर्मैःपाशुपतपंचरात्रादितंत्रोक्तैः ५० अनंगात्मानिकाममयान्यंगानियस्यसोऽनंगात्मांगःसचासौदेहीचतस्यानंगात्मांगदेहिनः ५१ व्यक्तस्थंदेहांतस्थं क्षेत्रेबुद्धौ ५२ आत्मानंचेतनं । आत्मस्थंनित्यंस्वरूपस्थितमपि षोडशभिर्गुणैर्गुणकार्यैरेकादशभिरिंद्रियैः पंचभिर्भूतैश्चत्रिधाजाग्रत्स्वप्नसुषुप्तिषुद्वारतनुप्रसृतरूपैर्वृतं ५३ । ५४ । ५५ । ५६ । ५७ तत्पुष्करंयस्यनाभ्यां संभूतं यस्मिन्पुष्करेविश्वंप्रतिष्ठितं ५८ चतुर्णांप्रसुप्ततनुविच्छिन्नोदाराणांसमुद्राणांकामानांपर्यायःसर्वात्मनानिर्गमनंयस्याःसायोगनिद्रातदात्मने कामंसमुद्रमाविशेतिमंत्रवर्णात्समुद्रःकामः ५९ ६० । ६१ रात्रौसुप्तौनिषण्णएवनतुप्रसुप्तःसाक्षीत्यर्थः दिवाजाग्रत्स्वप्नयोर्विष्ठितः कर्तृरूपेणतद्विपरीतेनस्थितः वस्तुतस्तुद्रष्टा नतुकर्ता ६२ अकुंठमनिरुद्धं ६३ । ६४ ॥३८॥

पंचधाप्राणादिरूपेण ६५ युगेषुकृतादिषु आवर्ततेमरस्वादिरूपेण किंकर्मवशोऽयंनेत्याह योगैरिति योगमायाबलेननत्वविद्ययार्थः ६६ । ६७ । ६८ पराद्धिरण्यगर्भात् परोमायावी परतरस्तुशुद्धः ६९ विषयेश्रोत्रादिगोचरेवर्तमानानां अनादरेषष्ठी ताननादृत्यवैशेषिकैर्गुणैर्विशेषजैरागद्वेषैर्यैविषयगोप्तारंप्राहुः यत्ररागस्तमेवार्थंवासनारूपेणमनसिरक्षन्संसरतिनतुसर्वमित्यर्थः ७० । ७१ अंतर्भूतोऽतःप्रविष्टः ७२ दृप्तात्मनेनृसिंहाय ७३ ।७४। ७५। ७६ आत्मेति शब्दादिविषयकोयोबोधः सविषयमनंतर्मा व्यआत्मस्वरूपभूतमेवज्ञानं यथोक्तं । 'परागर्थप्रमेयेषुयाफलत्वेनसंमता ।

विभज्यपंचधाऽऽत्मानंवायुर्भूत्वाशरीरगः ॥ यश्चेष्टयतिभूतानितस्मैवाय्वात्मनेनमः ६५ युगेष्वावर्ततेयोगैर्मासर्त्वयनहायनैः ॥ सर्गप्रलययोःकर्तातस्मैकालात्मनेनमः ६६ ब्रह्मवक्त्रंभुजौक्षत्रंकृत्स्नमूरूदरंविशः ॥ पादौयस्याश्रिताःशूद्रास्तस्मैवर्णात्मनेनमः ६७ यस्याग्निरास्यंद्यौर्मूर्धाखंनाभिश्चरणौक्षितिः ॥ सूर्यश्चक्षुर्दिशःश्रोत्रेतस्मैलोकात्मनेनमः ६८ परःकालात्परोयज्ञात्परात्परतरश्चयः ॥ अनादिरादिर्विश्वस्यतस्मैविश्वात्मनेनमः ६९ विषयेवर्तमानानांयंतेवैशेषिकैर्गुणैः ॥ प्राहुर्विषयगोप्तारंतस्मैगोप्त्रात्मनेनमः ७० अन्नपानेंधनमयोरसप्राणविवर्धनः ॥ योधारयतिभूतानितस्मैप्राणात्मनेनमः ७१ प्राणानांधारणार्थाययोऽन्नंभुंक्तेचतुर्विधम् ॥ अंतर्भूतःपचत्यग्निस्तस्मैपाकात्मनेनमः ७२ पिंगेक्षणसटंयस्यरूपंदंष्ट्रानखायुधम् ॥ दानवेंद्रांतकरणंतस्मैदृप्तात्मनेनमः ७३ यंनदेवानगंधर्वानदैत्यानचदानवाः ॥ तत्त्वतोहिविजानंतितस्मैसूक्ष्मात्मनेनमः ७४ रसातलगतःश्रीमाननंतोभगवान्विभुः ॥ जगद्धारयतेकृत्स्नंतस्मैवीर्यात्मनेनमः ७५ योमोहयतिभूतानिस्नेहपाशानुबंधनैः ॥ सर्गस्यरक्षणार्थायतस्मैमोहात्मनेनमः ७६ आत्मज्ञानमिदंज्ञानंज्ञात्वापंचस्ववस्थितम् ॥ यंज्ञानेनाभिगच्छंतितस्मैज्ञानात्मनेनमः ७७ अप्रमेयशरीरायसर्वतोबुद्धिचक्षुषे ॥ अनंतपरिमेयायतस्मैदिव्यात्मनेनमः ७८ जटिनेदंडिनेनित्यंलंबोदरशरीरिणे ॥ कमंडलुनिषंगायतस्मैब्रह्मात्मनेनमः ७९ शूलिनेत्रिदशेशायत्र्यंबकायमहात्मने ॥ भस्मदिग्धोर्ध्वलिंगायतस्मैरुद्रात्मनेनमः ८० चंद्रार्धकृतशीर्षायव्यालयज्ञोपवीतिने ॥ पिनाकशूलहस्तायतस्मैउग्रात्मनेनमः ८१ सर्वभूतात्मभूतायभूतादिनिधनायच ॥ अक्रोधद्रोहमोहायतस्मैशांतात्मनेनमः ८२ यस्मिन्सर्वंयतःसर्वंयःसर्वंसर्वतश्चयः ॥ यश्चसर्वमयोनित्यंतस्मैसर्वात्मनेनमः ॥ ८३ विश्वकर्मन्नमस्तेऽस्तुविश्वात्मन्विश्वसंभव ॥ अपवर्गस्थभूतानांपंचानांपरतःस्थित ८४ नमस्तेत्रिषुलोकेषुनमस्तेपरतस्त्रिषु ॥ नमस्तेदिक्षुसर्वासुत्वंहिसर्वमयोनिधिः ८५ नमस्तेभगवन्विष्णोलोकानांप्रभवाप्यय ॥ त्वंहिकर्ताहृषीकेशसंहर्ताचापराजितः ८६ नहिपश्यामितेभावंदिव्यंहित्रिषुवर्त्मसु ॥ त्वांतुपश्यामितत्त्वेनयत्तेरूपंसनातनम् ८७

१४ संवित्सैवेहमेयोऽर्थोवेदांतोक्तिप्रमाणतः' इति ईदृशमेवयंज्ञानेनज्ञानसाधनवाक्येन ७७ अप्रमेयमगोचरंशरीरंस्वरूपंयस्य अनंतमपारंपरिमेयंविषयजातंयत्रतस्मै ७८ कमंडलुनिषंगायतज्जलेरेवबाणभूतैरसुरान्नाशयतेइत्यर्थः ७९ । ८० । ८१ भूतादेरहंकारस्यानिधनंमरणंतस्मै ८२ । ८३ अपवर्गस्थनित्यमुक्त यतोभूतानांभूतेभ्यःपरतःस्थित ८४ त्रिषुलोकेषुतेभ्यःपरतश्चविद्यमानायतेत्रिषुकालेषुनमः ८५ । ८६ वर्त्मसुवर्तमानादिषु ८७

दिवंद्यौः ८८ सप्तउपरितनानिच्छिद्राणिप्रवहादयोवा सर्वत्वयैवव्याप्तमित्यर्थः ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ । ९८ । ९९ । १०० भीष्मायज्ञानंदत्वापुनःस्वदेहंप्र

दिवंतेशिरसाव्याप्तंप द्भ्यांदेवीवसुंधरा ॥ विक्रमेणत्रयोलोकाःपुरुषोऽसिसनातनः ८८ दिशोभुजारविश्चक्षुर्वीर्येशुक्रःप्रतिष्ठितः ॥ सप्तमार्गानिरुद्धास्तेवायोर
मिततेजसः ८९ अतसीपुष्पसंकाशंपीतवाससमच्युतम् ॥ येनमस्यंतिगोविंदंनतेषांविद्यतेभयम् ९० एकोऽपिकृष्णस्यकृतःप्रणामोदशाश्वमेधावभृथेनतुल्यः॥
दशाश्वमेधीपुनरेतिजन्मकृष्णप्रणामीनपुनर्भवाय ९१ कृष्णव्रताःकृष्णमनुस्मरंतोरात्रौचकृष्णंपुनरुत्थिताये ॥ तेकृष्णदेहाःप्रविशंतिकृष्णमाज्यंयथामंत्रहुतं
हुताशे ९२ नमोनरकसंत्रासरक्षामंडलकारिणे ॥ संसारनिम्नगावर्ततरिकाष्ठायविष्णवे ९३ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच ॥ जगद्धितायकृष्णायगोविं
दायनमोनमः ९४ प्राणकांतारपाथेयंसंसारोच्छेदभेषजम् ॥ दुःखशोकपरित्राणंहरिरित्यक्षरद्वयम् ९५ यथाविष्णुमयंसत्यंतथाविष्णुमयंजगत् ॥ यथाविष्णु
मयंसर्वंपाप्मामेनश्यतांतथा ९६ त्वांप्रपन्नायभक्तायगतिमिष्टांजिगीषवे ॥ यच्छ्रेयःपुंडरीकाक्षतद्ध्यायस्वसुरोत्तम ९७ इतिविद्यातपोयोनिरयोनिर्विष्णुरी
डितः ॥ वाग्यज्ञेनार्चितोदेवःप्रीयतांमेजनार्दनः ९८ नारायणःपरंब्रह्मनारायणपरंतपः ॥ नारायणःपरोदेवःसर्वंनारायणःसदा ९९ ॥ वैशंपायनउवाच ॥
एतावदुक्त्वावचनंभीष्मस्तद्गतमानसः ॥ नमइत्येवकृष्णायप्रणाममकरोत्तदा १०० अभिगम्यतुयोगेनभक्तिंभीष्मस्यमाधवः ॥ त्रैलोक्यदर्शनंज्ञानंदिव्यंदत्वा
ययौहरिः १ तस्मिन्नुपरतेशब्देततस्तेब्रह्मवादिनः ॥ भीष्मंवाग्भिर्बाष्पकंठास्तमानर्चुर्महामतिम् २ तेस्तुवंतश्चविप्राग्र्याःकेशवंपुरुषोत्तमम् ॥ भीष्मंचशन
कैःसर्वेप्रशशंसुःपुनःपुनः ३ विदित्वाभक्तियोगंतुभीष्मस्यपुरुषोत्तमः ॥ सहसोत्थायसंहृष्टोयानमेवान्वपद्यत ४ केशवःसात्यकिश्चापिरथेनैकेनजग्मतुः ॥ अ
परेणमहात्मानौयुधिष्ठिरधनंजयौ ५ भीमसेनोयमौचोभौरथमेकंसमाश्रिताः ॥ कृपोयुयुत्सुःसूतश्चसंजयश्चपरंतपः ६ तेरथैर्नगराकारैःप्रयाताःपुरुषर्षभाः ॥
नेमिघोषेणमहताकंपयंतोवसुंधराम् ७ ततोगिरःपुरुषवरस्तवान्विताद्विजेरिताःपथिसुमनाःसशुश्रुवे ॥ कृतांजलिंप्रणतमथापरंजनंसकेशिहामुदितमनाऽभ्य
नंदत १०८ ॥ इतिश्रीम० शांतिपर्वणिराज० भीष्मस्तवराजेसप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ ॥ वैशंपायनउवाच ॥ ततःसचहृषीकेशःसचराजा
युधिष्ठिरः ॥ कृपादयश्चतेसर्वेचत्वारःपांडवाश्चते १ रथैस्तैर्नगरप्रख्यैःपताकाध्वजशोभितैः ॥ ययुराशुकुरुक्षेत्रंवाजिभिःशीघ्रगामिभिः २ तेऽवतीर्यकुरुक्षेत्रं
केशमज्जास्थिसंकुलम् ॥ देहन्यासःकृतोयत्रक्षत्रियैस्तैर्महात्मभिः ३ गजाश्वदेहास्थिचयैःपर्वतैरिवसंचितम् ॥ नरशीर्षकपालैश्चशंखैरिवचसर्वशः ४ चिता
सहस्रप्रचितंवर्मशस्त्रसमाकुलम् ॥ आपानभूमिंकालस्यतथाभुक्तोज्झितामिव ५ तिशयनस्थानेययावागतवान् तदायुधिष्ठिरेणचप्रबोधितःसमुत्थितइत्यर्थः १ । २ । ३ 
विदित्वायोगबलेनज्ञात्वा ४ । ५ । ६ । ७ अभ्यनंददेवेतिसंधिरार्षः १०८ ॥ इतिशां० रा० भी० भा० भा० सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ ॥ ७ ॥ ॥ ततःसचेति १ । २ । ३ । ४ । ५

६ । ७ संतर्पयामासरामइत्यर्थौ र एतैनश प्रकुलवधजाग्लानिस्तेमाभूदितिदर्शितम् ८ । ९ । १० । ११ । १२ । १३ । १४ आगमोवेदः स्वत्तस्त्वद्वचनान्नोपरःनाधिकः १५ । १६ ॥ इतिशां
भूतसंघानुचरितंरक्षोगणनिषेवितम् ॥ पश्यंतस्तेकुरुक्षेत्रंययुराशुमहारथाः ६ गच्छन्नेवमहाबाहुःसर्वयादवनंदनः ॥ युधिष्ठिरायप्रोवाचजामदग्न्यस्यविक्र
मम् ७ अमीरामह्रदाःपंचदृश्यंतेपार्थदूरतः ॥ येषुसंतर्पयामासपितॄन्क्षत्रियशोणितैः ८ त्रिःसप्तकृत्वोवसुधांकृत्वानिःक्षत्रियांप्रभुः ॥ इहेदानींततोरामःक
र्मणोविररामह ९ ॥ युधिष्ठिरउवाच ॥ त्रिःसप्तकृत्वःपृथिवीकृतानिःक्षत्रियापुरा ॥ रामेणेतियथाऽऽत्थत्वमत्रमेसंशयोमहान् १० क्षत्रबीजंयथादग्धंरामेणयदु
पुंगव ॥ कथंभूयःसमुत्पत्तिःक्षत्रस्यामितविक्रम ११ महात्मनाभगवतारामेणयदुपुंगव ॥ कथमुत्सादितंक्षत्रंकथंवृद्धिमुपागतम् १२ महतारथयुद्धेनकोटिशःक्ष
त्रियाहताः ॥ तथाभूच्चमहीकीर्णाक्षत्रियैर्वदतांवर १३ किमर्थंभार्गवेणेदंक्षत्रमुत्सादितंपुरा ॥ रामेणयदुशार्दूलकुरुक्षेत्रेमहात्मना १४ एतन्मेछिंधिवार्ष्णेयसं
शयंतार्क्ष्यकेतन ॥ आगमोहिपरःकृष्णत्वत्तोनोवासवानुज १५ ॥ वैशंपायनउवाच ॥ ततोयथावत्सगदाग्रजःप्रभुःशशंसतस्मैनिखिलेनतत्त्वतः ॥ युधिष्ठि
रायाप्रतिमौजसेतदायथाऽभवत्क्षत्रियसंकुलामही १६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिरा० रामोपाख्यानेअष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ ॥ वासुदेव
उवाच ॥ शृणुकौंतेयरामस्यप्रभावोयोमयाश्रुतः ॥ महर्षीणांकथयतांविक्रमंतस्यजन्मच १ यथाचजामदग्न्येनकोटिशःक्षत्रियाहताः ॥ उद्भूताराजवंशेषुयेभू
योभारतेहताः २ जह्नोरजस्तुतनयोबलाकाश्वस्तुतत्सुतः ॥ कुशिकोनामधर्मज्ञस्तस्यपुत्रोमहीपते ३ अग्र्यंतपःसमातिष्ठत्सहस्राक्षसमोभुवि ॥ पुत्रंलभेय
माजितंत्रिलोकेश्वरमित्युत ४ तमुग्रतपसंदृष्ट्वासहस्राक्षःपुरंदरः ॥ समर्थंपुत्रजननेस्वयमेवान्वपद्यत ५ पुत्रत्वमगमद्राजंस्तस्यलोकेश्वरेश्वरः ॥ गाधिर्नामा
भवत्पुत्रःकौशिकःपाकशासनः ६ तस्यकन्याऽभवद्राजन्नाम्नासत्यवतीप्रभो ॥ तांगाधिर्भृगुपुत्रायसर्चीकायददौप्रभुः ७ तस्याःप्रीतःसशौचेनभार्गवःकुरुनंद
नः ॥ पुत्रार्थंश्रपयामासचरुंगाधेस्तथैवच ८ आहूयोवाचतांभार्यांसर्चीकोभार्गवस्तदा ॥ उपयोज्यश्चरुरयंत्वयामात्राऽप्ययंतव ९ तस्याजनिष्यतेपुत्रो
दीप्तिमान्क्षत्रियर्षभः ॥ अजय्यःक्षत्रियैर्लोकेक्षत्रियर्षभसूदनः १० तवापिपुत्रंकल्याणिधृतिमंतंशमात्मकम् ॥ तपोन्वितंद्विजश्रेष्ठंचरुरेषविधास्यति ११
इत्येवमुक्त्वातांभार्यांसर्चीकोभृगुनंदनः ॥ तपस्यभिरतःश्रीमान्जगामारण्यमेवहि १२ एतस्मिन्नेवकालेतुतीर्थयात्रापरोनृपः ॥ गाधिःसदारःसंप्राप्तःसर्चीक
स्याश्रमंप्रति १३ चरुद्वयंगृहीत्वाचराजन्सत्यवतीतदा ॥ भर्तुर्वाक्यंतदाव्यग्रामात्रेहृष्टान्यवेदयत् १४ मातातुतस्याःकौंतेयदुहित्रेस्वंचरुंददौ ॥ तस्याश्च
रुमथाज्ञानादात्मसंस्थंचकारह १५ अथसत्यवतीगर्भंक्षत्रियांतकरंतदा ॥ धारयामासदीप्तेनवपुषाघोरदर्शनम् १६
तिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे अष्टचत्वारिंशत्तमोऽध्यायः ॥ ४८ ॥ ॥ ७ ॥ ॥ शृण्विति १ भारतेभारतसंग्रामे २ । ३ । ४ । ५ । ६ गाधेः पुत्रार्थं
तस्याश्चपुत्रार्थंचरुंचरुद्वयम् ८ उपयोज्योभोज्योभोक्तव्यः ९ । १० । ११ । १२ । १३ अव्यग्राहर्षेणैव १४ । १५ । १६

१७ व्यंसितावंचिता १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ चित्रभानुनाअग्निना ३८



तामृचीकस्तदादृष्ट्वातस्यागर्भगतंद्विजम् ॥ अब्रवीद्भृगुशार्दूलःस्वांभार्यांदेवरूपिणीम् १७ मात्राऽसिव्यंसिताभद्रेचरुव्यत्यासहेतुना ॥ भविष्यतिहितेपुत्रः
क्रूरकर्माऽत्यमर्षणः १८ उत्पत्स्यतिचतेभ्राताब्रह्मभूतस्तपोरतः ॥ विश्वंहिब्रह्मसुमहच्चरौतवसमाहितं १९ क्षत्रवीर्यंचसकलंतवमात्रेसमर्पितम् ॥ विपर्ययेणते
भद्रेनैतदेवंभविष्यति २० मातुस्तेब्राह्मणोभूयात्तवचक्षत्रियःसुतः ॥ सैवमुक्तामहाभागाभर्त्रासत्यवतीतदा २१ पपातशिरसातस्मैवेपंतीचाब्रवीदिदम् ॥
नार्होऽसिभगवन्नद्यवक्तुमेवंविधंवचः ॥ ब्राह्मणापसदंपुत्रंप्राप्स्यसीतिहिमांप्रभो २२ ॥ ऋचीकउवाच ॥ नैषसंकल्पितःकामोमयाभद्रेतथात्वयि ॥ उग्रकर्मा
समुत्पन्नश्चरुव्यत्यासहेतुना २३ ॥ सत्यवत्युवाच ॥ इच्छन्लोकानपिमुनेसृजेथाःकिंपुनःसुतम् ॥ शमात्मकमृजुंपुत्रंदातुमर्हसिमेप्रभो २४ ॥ ऋचीकउवाच ॥
नोक्तपूर्वानृतंभद्रेस्वैरेष्वपिकदाचन ॥ किमुताग्निंसमाधायमंत्रवच्चरुसाधने २५ दृष्टमेतत्पुराभद्रेज्ञातंचतपसामया ॥ ब्रह्मभूतंहिसकलंपितुस्तवकुलंभवेत् २६
॥ सत्यउवाच ॥ काममेवंभवेत्पौत्रोममैहतवचप्रभो ॥ शमात्मकमहंपुत्रंलभेयंजयतांवर २७ ॥ ऋचीकउवाच ॥ पुत्रेनास्तिविशेषोमेपौत्रेचवरवर्णिनि ॥ य
थात्वयोक्तंवचनंतथाभद्रेभविष्यति २८ ॥ वासुदेवउवाच ॥ ततःसत्यवतीपुत्रंजनयामासभार्गवम् ॥ तपस्यभिरतंशांतंजमदग्निंयतव्रतम् २९ विश्वामित्रं
चदायादंगाधिःकुशिकनंदनः ॥ यःप्रापब्रह्मसमितंविश्वैर्ब्रह्मगुणैर्युतम् ३० ऋचीकोजनयामासजमदग्निंतपोनिधिं ॥ सोऽपिपुत्रंह्यजनयज्जमदग्निःसुदारुणम्
३१ सर्वविद्यांगतंश्रेष्ठंधनुर्वेदस्यपारगम् ॥ रामंक्षत्रियहंतारंप्रदीप्तमिवपावकम् ३२ तोषयित्वामहादेवंपर्वतेगंधमादने ॥ अस्त्राणिवरयामासपरशुंचातितेज
सम् ३३ सतेनाकुंठधारेणज्वलितानलवर्चसा ॥ कुठारेणाप्रमेयेणलोकेष्वप्रतिमोऽभवत् ३४ एतस्मिन्नेवकालेतुकृतवीर्यात्मजोबली ॥ अर्जुनोनामतेजस्वीक्ष
त्रियोहैहयाधिपः ३५ दत्तात्रेयप्रसादेनराजाबाहुसहस्रवान् ॥ चक्रवर्तीमहातेजाविप्राणामाश्वमेधिके ३६ ददौसपृथिवींसर्वांसप्तद्वीपांसपर्वताम् ॥ स्वबाहुस्त्र
बलेनाजौजित्वापरमधर्मवित् ३७ तृषितेनचकौंतेयभिक्षितश्चित्रभानुना ॥ सहस्रबाहुर्विक्रांतःप्रादाद्भिक्षामथाग्नये ३८ ग्रामान्पुराणिराष्ट्राणिघोषांश्चैवतु
वीर्यवान् ॥ जज्वालतस्यबाणाग्राच्चित्रभानुर्दिधक्षया ३९ सतस्यपुरुषेंद्रस्यप्रभावेणमहौजसः ॥ ददाहकार्तवीर्यस्यशैलानथवनस्पतीन् ४० सशू
न्यमाश्रमंरम्यमापवस्यमहात्मनः ॥ ददाहपवनेनेद्धश्चित्रभानुःसहैहयः ४१ आपवस्तुततोरोषाच्छशापार्जुनमच्युत ॥ दग्धेश्रमेमहाबाहोकार्तवीर्ये
णवीर्यवान् ४२ त्वयानवर्जितंयस्मान्ममेदंहिमहद्वनम् ॥ दग्धंतस्माद्रणेरामोबाहूंस्तेच्छेत्स्यतेऽर्जुन ४३ अर्जुनस्तुमहातेजाबलीनित्यंशमात्मकः ॥ ॥४०॥
ब्रह्मण्यश्चशरण्यश्चदाताशूरश्चभारत ४४

बाणाग्रावउत्तुतइविशेषः ३९ । ४० आपवस्यवसिष्ठस्य ४१ दग्धेश्रमेआश्रमे ४२ । ४३ । ४४

पितुर्वधेवधनिमित्तमासन् ४५ निमित्तात्छापादेवहेतोः ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ क्षेपन्निंदांनीमक्षकोरामइति ५६ । ५७ । ५८
मिथ्याप्रतिज्ञःसर्वेषांक्षत्रियाणांवधाकरणात् ५९ स्तूताव्याधा शखंजग्राहतत्कार्यंक्षत्रियाणामंतंकृतवान् ६० वर्जिताःअहताः ६१ । ६२ । ६३ । ६४ स्रुक्प्रग्रहवताकरणेतिकश्यपोऽध्वर्युः

नार्चितयत्तदाशापंतेनदत्तंमहात्मना ॥ तस्यपुत्रास्तुबलिनःशापेनासन्पितुर्वधे ४५ निमित्तादवलिप्तावैनृशंसाश्चैवसर्वदा ॥ जमदग्निधेन्वास्तेवत्समानिन्यु
र्भरतर्षभ ४६ अज्ञातंकार्तवीर्येणहैहयेंद्रेणधीमता ॥ तन्निमित्तमभूद्युद्धंजामदग्न्येर्महात्मना ४७ ततोऽर्जुनस्यबाहूंस्तांश्छित्त्वारामोरुषान्वितः ॥ तंभ्रमंतंत
तोवत्संजामदग्न्यःस्वमाश्रमम् ४८ प्रत्यानयतराजेंद्रतेषामंतःपुरात्प्रभुः ॥ अर्जुनस्यसुतास्तेतुसंभूयाबुद्धयस्तदा ४९ गत्वाऽऽश्रममसंबुद्धाजमद
ग्नेर्महात्मनः ॥ अपातयंतभल्लाग्रैःशिरःकायान्नराधिप ५० समित्कुशार्थंरामस्यनिर्यातस्ययशस्विनः ॥ ततःपितृवधामर्षाद्रामःपरममन्युमान् ५१ निःक्षत्रि
यांप्रतिश्रुत्यमहींशस्त्रमगृह्णत ॥ ततःसभृगुशार्दूलःकार्तवीर्यस्यवीर्यवान् ५२ विक्रम्यनिजघानाशुपुत्रान्पौत्रांश्चसर्वशः ॥ सहैहयसहस्राणिहत्वापरममन्युमान्
५३ चकारभार्गवोराजन्महींशोणितकर्दमां ॥ सतथाऽऽशुमहातेजाःकृत्वानिःक्षत्रियांमहीम् ५४ कृपयापरयाऽऽविष्टोवनमेवजगामह ॥ ततोवर्षसहस्रेषुसमतीते
षुकेषुचित् ५५ क्षेपंसंप्राप्तवांस्तत्रप्रकृत्याकोपनःप्रभुः ॥ विश्वामित्रस्यपौत्रस्तुरैभ्यपुत्रोमहातपाः ५६ परावसुर्महाराजक्षिप्त्वाऽऽहजनसंसदि ॥ येते
ययातिपतनेयज्ञेसंतःसमागताः ५७ प्रतर्दनप्रभृतयोरामकिंक्षत्रियानते ५८ मिथ्याप्रतिज्ञोरामत्वंकत्थसेजनसंसदि ॥ भयात्क्षत्रियवीराणांपर्वतंसमुपाश्रि
तः ५९ सापुनःक्षत्रियशतैःपृथिवीसर्वतस्तृता ॥ परावसोर्वचःश्रुत्वाशस्त्रंजग्राहभार्गवः ६० ततोयेक्षत्रियाराजन्शतशस्तेनवर्जिताः ॥ तेविवृद्धामहावीर्याः
पृथिवीपतयोऽभवन् ६१ सपुनस्तान्जघानाशुबालानपिनराधिप ॥ गर्भस्थैस्तुमहीव्याप्तापुनरेवाभवत्तदा ६२ जातंजातंसगर्भंतुपुनरेवजघानह ॥ अरक्षं
श्चसुतान्कांश्चित्तदाक्षत्रिययोषितः ६३ त्रिःसप्तकृत्वःपृथिवींकृत्वानिःक्षत्रियांप्रभुः ॥ दक्षिणामश्वमेधांतेकश्यपायाददत्ततः ६४ सक्षत्रियाणांशेषार्थंकरेणो
द्दिश्यकश्यपः ॥ स्रुक्प्रग्रहवताराजंस्ततोवाक्यमथाब्रवीत् ६५ गच्छतीरंसमुद्रस्यदक्षिणस्यमहामुने ॥ नतेमद्विषयेरामवस्तव्यमिहकर्हिचित् ६६ ततः
शूर्पारकंदेशंसागरस्तस्यनिर्ममे ॥ सहसाजामदग्न्यस्यसोपरांतमहीतलम् ६७ कश्यपस्तांमहाराजप्रतिगृह्यवसुंधराम् ॥ कृत्वाब्राह्मणसंस्थांवैप्रविष्टः
सुमहद्वनम् ६८ ततःशूद्राश्चवैश्याश्चयथास्वैरप्रचारिणः ॥ अवर्तंतद्विजाग्र्याणांदारेषुभरतर्षभ ६९ अराजकेजीवलोकेदुर्बलाबलवत्तरैः ॥ पीड्यंतेन
हिविप्रेषुप्रभुत्वंकस्यचित्तदा ७० ततःकालेनपृथिवीपीड्यमानादुरात्मभिः ॥ विपर्ययेणतेनाशुप्रविवेशरसातलम् ७१ अरक्ष्यमाणाविधिवत्क्षत्रियैर्धर्मर
क्षिभिः ॥ तांदृष्ट्वाद्रवतींतत्रसंत्रासात्समहामनाः ७२ सत्रकर्मांतरपवमाध्यंदिनसवनेदक्षिणाकालेहइदमब्रवीदितिसूच्यते ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२

७३ । ७४ । ७५ । ७६ । ७७ द्विजःक्षत्रियोऽपि ७८ । ७९ । ८० । ८१ । ८२ । ८३ चोकारेत्यादिवचित्रमाकारादादीन्कुर्वतितेचोकाराःशिल्पिनः ज्याकारेतिपाठांतरेस्पष्टोऽर्थः ८४ । ८५ 

॥४१॥ ऊरुणाधारयामासकश्यपःपृथिवींततः ॥ धृतातेनोरुणायेनतेनोर्वीतिमहीस्मृता ७३ रक्षणार्थंसमुद्दिश्यययाचेपृथिवीतदा ॥ प्रसाद्यकश्यपंदेवीवरयामासभू 
मिपम् ७४ ॥ पृथिव्युवाच ॥ संतिब्रह्मन्मयागुप्ताःस्त्रीषुक्षत्रियपुंगवाः ॥ हैहयानांकुलेजातास्तेसंरक्षंतुमांमुने ७५ अस्तिपौरवदायादोविदूरथसुतःप्रभो ॥
ऋक्षैःसंवर्धितोविप्रऋक्षवत्यथपर्वते ७६ तथाऽनुकंपमानेनयज्वनाऽथामितौजसा ॥ पराशरेणदायादःसौदासस्याभिरक्षितः ७७ सर्वकर्माणिकुरुतेशूद्रवत्तस्यस ॥५०॥
द्विजः ॥ सर्वकर्मेत्यभिख्यातःसमांरक्षतुपार्थिवः ७८ शिबिपुत्रोमहातेजागोपतिर्नामनामतः ॥ वनेसंवर्धितोगोभिःसोऽभिरक्षतुमांमुने ७९ प्रतर्दनस्यपुत्रस्तु
वत्सोनाममहाबलः ॥ वत्सैःसंवर्धितोगोष्ठेसमांरक्षतुपार्थिवः ८० दधिवाहनपौत्रस्तुपुत्रोदिविरथस्यच ॥ गुप्तःसगौतमेनासीद्गंगाकूलेऽभिरक्षितः ८१ बृहद्रथोम
हातेजाभूरिभूतिपरिष्कृतः ॥ गोलांगुलैर्महाभागोगृध्रकूटेऽभिरक्षितः ८२ मरुत्तस्यान्ववायेचरक्षिताःक्षत्रियात्मजाः ॥ मरुत्पतिसमावीर्येसमुद्रेणाभिरक्षिताः
८३ एतेक्षत्रियदायादास्तत्रतत्रपरिश्रुताः ॥ चोकारहेमकारादिजातिंनित्यंसमाश्रिताः ८४ यदिमामभिरक्षंतिततःस्थास्यामिनिश्चला ॥ एतेषांपितरश्चैवतथै
वचपितामहाः ८५ मदर्थंनिहतायुद्धेरामेणाक्लिष्टकर्मणा ॥ तेषामपचितिश्चैवमयाकार्यामहामुने ८६ नह्यहंकामयेनित्यमतिक्रांतेनरक्षणम् ॥ वर्तमानेनवर्तेयंत
त्क्षिप्रंसंविधीयताम् ८७ ॥ वासुदेवउवाच ॥ ततःपृथिव्यानिर्दिष्टांस्तान्समानीयकश्यपः ॥ अभ्यषिंचन्महीपालान्क्षत्रियान्वीर्यसंमतान् ८८ तेषांपुत्राश्चपौ
त्राश्चयेषांवंशाःप्रतिष्ठिताः ॥ एवमेतत्पुरावृत्तंयन्मांपृच्छसिपांडव ८९ ॥ वैशंपायनउवाच ॥ एवंब्रुवंस्तंचयदुप्रवीरोयुधिष्ठिरंधर्मभृतांवरिष्ठम् ॥ रथेनतेनाशु
ययौमहात्मादिशःप्रकाशन्भगवानिवार्कः ९० ॥ इतिश्रीमहाभारते शांतिपर्वणि राजधर्मानुशासनपर्वणि रामोपाख्याने एकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥
॥ वैशंपायनउवाच ॥ ततोरामस्यतत्कर्मश्रुत्वाराजायुधिष्ठिरः ॥ विस्मयंपरमंगत्वाप्रत्युवाचजनार्दनम् १ अहोरामस्यवार्ष्णेयशक्रस्येवमहात्मनः ॥ विक्रमोव
सुधायेनक्रोधान्निःक्षत्रियाकृता २ गोभिःसमुद्रेणतथागोलांगूलर्क्षवानरैः ॥ गुप्तारामभयोद्विग्नाःक्षत्रियाणांकुलोद्वहाः ३ अहोधन्योऽयंलोकोऽयंसभाग्याश्चनरा
भुवि ॥ यत्रकर्मेदृशंधर्म्यंद्विजेनकृतमित्युत ४ तथावृत्तौकथांतातताववच्युतयुधिष्ठिरौ ॥ जग्मतुर्यत्रगांगेयःशरतल्पगतःप्रभुः ५ ततस्तेददृशुर्भीष्मंशरप्रस्तर
शायिनम् ॥ स्वरश्मिजालसंवीतंसायंसूर्यसमप्रभम् ६ उपास्यमानंमुनिभिर्देवैरिवशतक्रतुम् ॥ देशेपरमधर्मिष्ठेनदीमोघवतीमनु ७ दूरादेवतमालोक्यकृष्णो ॥४१॥
राजाचधर्मजः ॥ चत्वारःपांडवाश्चैवतेचशारद्वतादयः ८

अपचितिःआनृण्यार्थपूजा ८६ नित्यमतिक्रांतेनधर्मातिक्रमिणा ८७ । ८८ । ८९ प्रकाशन्प्रकाशयन्
॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे एकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ ७ ॥ सतइति १ । २ । ३ । ४ तथावृत्तौतादृग्गोष्ठीपरौ ५ । ६ । ७ । ८

अवस्कंद्यावरुह्य वाहेभ्यः ९ । १० । ११ निशाम्यआलोच्य १२ । १३ । १४ छंदमृत्युःइच्छामरणः एतच्छंदमृत्युतायाःकारणंपितृतोषणंममापिनकिंतुतान्येषामित्यर्थः १५ । १६ कामंप्र
तत्रयुक्तमितिशेषः सर्वज्ञस्यापितत्रोपदेशोनयुक्तइत्यर्थः १७ प्रतिष्ठितंवृद्धाविवितिशेषः १८ । १९ पश्यामीवेतीवशब्दात्प्रतिज्ञातःपूर्वमूर्ध्वरेतस्त्वंनासीदितिभावः २० भीष्माद्दते मृत्युमावार्य
अवस्कंद्याथवाहेभ्यःसंयम्यप्रचलंमनः ॥ एकीकृत्येंद्रियग्राममुपतस्थुर्महामुनीन् ९ अभिवाद्यतुगोविंदःसात्यकिस्तेचपार्थिवाः ॥ व्यासादींस्तानृषिमुख्यांश्चगांगे
यमुपतस्थिरे १० ततोवृद्धंतथादृष्ट्वागांगेयंयदुकौरवाः ॥ परिवार्यततःसर्वेनिषेदुःपुरुषर्षभाः ११ ततोनिशाम्यगांगेयंशाम्यमानमिवानलम् ॥ किंचिद्दीनमना
भीष्ममितिहोवाचकेशवः १२ कच्चिज्ज्ञानानिसर्वाणिप्रसन्नानियथापुरा ॥ कच्चिन्नव्याकुलाचैवबुद्धिस्तेवदतांवर १३ शराभिघातदुःखार्त्तेकच्चिद्गात्रंनदूयते ॥
मानसादपिदुःखाद्धिशारीरंबलवत्तरम् १४ वरदानात्पितुःकामंछंदमृत्युरसिप्रभो ॥ शांतनोर्धर्मनित्यस्यनत्वेतन्ममकारणम् १५ सुसूक्ष्मोऽपितुदेहेवैशल्योज
नयतेरुजम् ॥ किंपुनःशरसंघातैश्चितस्यतवपार्थिव १६ कामंनैतत्तवाख्येयंप्राणिनांप्रभवाप्ययौ ॥ उपदेष्टुंभवान्शक्तोदेवानामपिभारत १७ यच्चभूतंभविष्यं
चभवच्चपुरुषर्षभ ॥ सर्वंतज्ज्ञानवृद्धस्यतवभीष्मप्रतिष्ठितम् १८ संहारश्चैवभूतानांधर्मस्यचफलोदयः ॥ विदितस्तेमहाप्राज्ञत्वंहिधर्ममयोनिधिः १९ त्वांहिरा
ज्येस्थितंस्फीतेसमग्रांगमरोगिणम् ॥ स्त्रीसहस्रैःपरिवृतंपश्यामीवोर्ध्वरेतसम् २० ऋतेशांतनवाद्भीष्मात्त्रिषुलोकेषुपार्थिव ॥ सत्यधर्मान्महावीर्याच्छूराद्धर्मैक
तत्परात् २१ मृत्युमावार्यतपसाशरसंस्तरशायिनः ॥ निसर्गप्रभवंकिंचिन्नचतातानुशुश्रुम २२ सत्येतपसिदानेचयज्ञाधिकरणेतथा ॥ धनुर्वेदेचवेदेचनीत्यांचै
वानुरक्षणे २३ अनृशंसंशुचिंदांतंसर्वभूतहितेरतम् ॥ महारथंत्वत्सदृशंनकंचिदनुशुश्रुम २४ त्वंहिदेवान्सगंधर्वान्सुरान्यक्षराक्षसान् ॥ शक्तस्त्वेकरथेनैवविजे
तुंनात्रसंशयः २५ सत्वंभीष्ममहाबाहोवसूनांवासवोपमः ॥ नित्यंविप्रैःसमाख्यातोनवमोऽनवमोगुणैः २६ अहंचत्वाऽभिजानामियस्त्वंपुरुषसत्तम ॥ त्रि
दशेष्वपिविख्यातस्त्वंशक्त्यापुरुषोत्तमः २७ मनुष्येषुमनुष्येंद्रनदृष्टोनचमेश्रुतः ॥ भवतोयागुणैर्युक्तःपृथिव्यांपुरुषःक्वचित् २८ त्वंहिसर्वगुणैराजन्देवानप्य
तिरिच्यसे ॥ तपसाहिभवान्शक्तःस्रष्टुंलोकांश्चराचरान् २९ किंपुनश्चात्मनोलोकानुत्तमानुत्तमैर्गुणैः ॥ तदस्यतप्यमानस्यज्ञातीनांसंक्षयेनवै ३० ज्येष्ठस्यपां
डुपुत्रस्यशोकंभीष्मव्यपानुद ॥ येहिधर्माःसमाख्याताश्चातुर्वर्ण्यस्यभारत ३१ चातुराश्रम्यसंयुक्ताःसर्वेतेविदितास्तव ॥ चातुर्विद्येचयेप्रोक्ताश्चातुर्होत्रेचभारत
३२ योगेसांख्येचनियतायेचधर्माःसनातनाः ॥ चातुर्वर्ण्यस्ययश्चोक्तोधर्मोनस्मविरुध्यते ३३ सेव्यमानःसवैयाख्योगांगेयविदितस्तव ॥ प्रतिलोमप्रसूतानां
१५ वर्णानांचैवयःस्मृतः ३४ देशजातिकुलानांचजानीषेधर्मलक्षणम् ॥ वेदोक्तोयश्चशिष्टोक्तःसदैवविदितस्तव ३५ इतिहासपुराणार्थाःकार्त्स्न्येनविदितास्तव ॥
धर्मशास्त्रंचसकलंनित्यंमनसितेस्थितम् ३६ येचकेचनलोकेऽस्मिन्नर्थाःसंशयकारकाः ॥ तेषांछेत्तानास्तिलोकेत्वदन्यःपुरुषर्षभ ३७
स्थितंकिमपिनिसर्गप्रभवंजनिमरसरत्वंनशुश्रुमेतिद्वयोःसंबंधः २१ । २२ । २३ । २४ । २५ वसूनामष्टानामंशैर्यदिवोनवमोगुणैरनवमश्च २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ ॥ इति शांतिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे पंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ श्रुत्वेति १ नमस्तइत्यादयोऽष्टौश्लोकाःस्तवराजेव्याख्याताः २ । ३ ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ पंचाशतंषट्चेति तवजीवितसंबंधिनांदिनानांशेषंपंचषष्ट्यपंचवारमावर्तिताःषडितिरीत्याविंशदितिज्ञेयं तावदेवआशतंशतावधि यदि नानांशतेनकर्तुंशक्यंतत्त्रिंशताऽपिकर्तुंशक्यमित्यर्थः । 'अष्टपंचाशतंरात्र्यःशयानस्याद्यमेगताः' इतिभीष्मोवक्ष्यति । तत्रत्रिंशदतःपरंशिष्टाअष्टाविंशतिरितःपूर्वंव्यतीताः । तथाहिभीष्मस्य

सपांडवेयस्यमनःसमुत्थितंनरेंद्रशोकंव्यपकर्षमेधया ॥ भवद्विधाह्युत्तमबुद्धिविस्तराविमुह्यमानस्यनरस्यशांतये ३८ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणि कृष्णवाक्ये पंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ वैशंपायनउवाच ॥ श्रुत्वातुवचनंभीष्मोवासुदेवस्यधीमतः ॥ किंचिदुन्नाम्यवदनंप्रांजलिर्वाक्यमब्रवीत् १ ॥ भीष्मउवाच ॥ नमस्तेभगवन्कृष्णलोकानांप्रभवाप्यय ॥ त्वंहिकर्ताहृषीकेशसंहर्ताचापराजितः २ विश्वकर्मन्नमस्तेऽस्तुविश्वात्मन्विश्वसंभव ॥ अपवर्गस्थभूतानांपंचानांपरतःस्थित ३ नमस्तेत्रिषुलोकेषुनमस्तेपरतस्त्रिषु ॥ योगीश्वरनमस्तेऽस्तुत्वंहिसर्वपरायणः ४ मत्संश्रितंयदात्थत्वंवचःपुरुषसत्तम ॥ तेनपश्यामितेदिव्यान्भावान्हित्रिषुवर्त्मसु ५ तच्चपश्यामिगोविंदयत्तेरूपंसनातनम् ॥ सप्तमार्गानिरुद्धास्तेवायोरमिततेजसः ६ दिवंतेशिरसाव्याप्तंपद्भ्यांदेवीवसुंधरा ॥ दिशोभुजारविश्चक्षुर्वीर्येशुक्रःप्रतिष्ठितः ७ अतसीपुष्पसंकाशंपीतवाससमच्युतम् ॥ वपुर्ह्यनुमिमीमस्तेमेघस्येवसविद्युतः ८ त्वत्प्रपन्नायभक्तायगतिमिष्टांजिगीषवे ॥ यच्छ्रेयःपुंडरीकाक्षतद्ध्यायस्वसुरोत्तम ९ ॥ वासुदेवउवाच ॥ यतःखलुपराभक्तिर्मयितेपुरुषर्षभ ॥ ततोमयावपुर्दिव्यंत्वयिराजन्प्रदर्शितम् १० नह्यभक्तायराजेंद्रभक्तायानृजवेनच ॥ दर्शयाम्यहमात्मानंनचाशांतायभारत ११ भवांस्तुममभक्तश्चनित्यंचार्जवमास्थितः ॥ दमेतपसिसत्येचदानेचनिरतःशुचिः १२ अर्हस्त्वंभीष्ममांद्रष्टुंतपसास्वेनपार्थिव ॥ तवह्युपस्थितालोकायेभ्योनावर्ततेपुनः १३ पंचाशतंषट्चकुरुप्रवीरशेषंदिनानांतवजीवितस्य ॥ ततःशुभैःकर्मफलोदयैस्त्वंसमेष्यसेभीष्मविमुच्यदेहम् १४ एतेहिदेवावसवोविमानान्यास्थायसर्वेज्वलिताग्निकल्पाः ॥ अंतर्हितास्त्वांप्रतिपालयंतिकाष्ठांप्रपद्यंतमुदक्पतंगम् १५ व्यावर्तमानेभगवत्युदीचींसूर्येजगत्कालवशंप्रपन्ने ॥ गंतासिलोकान्पुरुषप्रवीरनावर्ततेयानुपलभ्यविद्वान् १६ अमुंचलोकंत्वयिभीष्मयातेज्ञानानिनंक्ष्यंत्यखिलेनवीर ॥ अतस्तुसर्वेत्वभिसन्निकर्षंसमागताधर्मविवेचनाय १७ तज्ज्ञातिशोकोपहतश्रुतायसत्याभिसंधाययुधिष्ठिराय ॥ प्रब्रूहिधर्मार्थसमाधियुक्तंसत्यंवचोऽस्यापनुदाशुशोकम् १८ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजध० कृष्णवाक्ये एकपंचाशत्तमोऽध्यायः ॥ ५१ ॥

शरतल्पशयनानंतरमष्टौदिनानियुद्धं ततोदुर्योधनाशौचंयुयुत्सोःषोडशदिनानि तेनसहपुरंप्रविशतांपांडवानामपितावंतिदिनानिगतानि पंचविंशेसर्वेषांश्राद्धदानंषड्विंशेपुरप्रवेशःसप्तविंशे राज्याभिषेकः अष्टाविंशेप्रकृतिसांत्वनमाभ्युदयिकंदानंच ऊनत्रिंशेभीष्मंप्रत्यागमनं तद्दिनमारभ्यात्रिंशद्दिनानिशिष्टानीतिज्ञेयम् १४ प्रतिपालयंतिप्रतीक्षंते पतंगंसूर्यम् १५ कालवशंचजगत्प्रपन्नेप्राप्तेक्षेपुमितिशेषः १६ । १७ । १८ ॥ इतिशांतिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे एकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ छ ॥ ॥ छ ॥



तवइति १ । २ तेतवैववाक्यंतवसन्निधौ वाचोगतंवाचांविषयःसर्वोऽपितवत्राचिवेदे ३ यच्चेति हितेप्रिये लोकेदेवलोके इहपरत्रच तत्सर्वंत्रैकालिकं त्वत्तोनिःसृतमितिउक्तेऽर्थेहेतुरुक्तः ४ । ५

॥ वैशंपायनउवाच ॥ ततःकृष्णस्यतद्वाक्यंधर्मार्थसहितंहितं ॥ श्रुत्वाशांतनवोभीष्मःप्रत्युवाचकृतांजलिः १ लोकनाथमहाबाहोशिवनारायणाच्युत ॥ तववाक्यमुपश्रुत्यहर्षेणास्मिपरिप्लुतः २ किंचाहमभिधास्यामिवाक्यंतेतवसन्निधौ ॥ यदावाचोगतंसर्वंतववाचिसमाहितम् ३ यच्चकिंचित्क्वचिल्लोकेकर्तव्यंक्रियतेचयत् ॥ त्वत्तस्तन्निःसृतंदेवलोकेबुद्धिमतोहिते ४ कथयेद्देवलोकंयोदेवराजसमीपतः ॥ धर्मकामार्थमोक्षाणांसोऽर्थंब्रूयात्तवाग्रतः ५ शराभितापाद्व्यथितंमनोमेमधुसूदन ५ गात्राणिचावसीदंतिनचबुद्धिःप्रसीदति ६ नचमेप्रतिभाकाचिदस्तिकिंचित्प्रभाषितुम् ॥ पीड्यमानस्यगोविंदविषानलसमैःशरैः ७ बलंमेप्रजहातीवप्राणाःसंत्वरयंतिच ॥ मर्माणिपरितप्यंतिभ्रांतचित्तस्तथाह्यहम् ८ दौर्बल्यात्सज्जतेवाङ्मेसकथंवक्तुमुत्सहे ॥ साधुमेत्वंप्रसीदस्वदाशार्हकुलवर्धन ९ तत्क्षमस्वमहाबाहोनब्रूयांकिंचिदच्युत ॥ त्वत्सन्निधौचसीदेद्धिवाचस्पतिरपिब्रुवन् १० नदिशःसंप्रजानामिनाकाशंनचमेदिनीम् ॥ केवलंतववीर्येणतिष्ठामिमधुसूदन ११ स्वयमेवभवांस्तस्माद्धर्मराजस्ययद्धितम् ॥ तद्ब्रवीत्वाशुसर्वेषामागमानांत्वमागमः १२ कथंत्वयिस्थितेकृष्णेशाश्वतेलोककर्तरि ॥ प्रब्रूयान्मद्विधःकश्चिद्गुरौशिष्यइवस्थिते १३ ॥ वासुदेवउवाच ॥ उपपन्नमिदंवाक्यंकौरवाणांधुरंधरे ॥ महावीर्येमहासत्वेस्थिरेसर्वार्थदर्शिनि १४ यच्चमामात्थगांगेयबाणघातरुजंप्रति ॥ गृहाणात्रवरंभीष्ममत्प्रसादकृतंप्रभो १५ नतेग्लानिर्नतेमूर्छानदाहोनचतेरुजा ॥ प्रभविष्यंतिगांगेयक्षुत्पिपासेनचाप्युत १६ ज्ञानानिचसमग्राणिप्रतिभास्यंतितेनघ ॥ नचतेक्वचिदासत्तिर्बुद्धेःप्रादुर्भविष्यति १७ सत्वस्थंचमनोनित्यंतवभीष्मभविष्यति ॥ रजस्तमोभ्यांरहितंघनैर्मुक्तइवोडुराट् १८ यद्यच्चधर्मसंयुक्तमर्थयुक्तमथापिच ॥ चिंतयिष्यसितत्राग्र्यातुद्धिस्तवभविष्यति १९ इमंचराजशार्दूलभूतग्रामंचतुर्विधम् ॥ चक्षुर्दिव्यंसमाश्रित्यद्रक्ष्यस्यमितविक्रम २० संसरंतंप्रजाजालंसंयुक्तोज्ञानचक्षुषा ॥ भीष्मद्रक्ष्यसितत्त्वेनजलेमीनइवामले २१ ॥ वैशंपायनउवाच ॥ ततस्तेव्याससहिताःसर्वएवमहर्षयः ॥ ऋग्यजुःसामसहितैर्वचोभिःकृष्णमार्चयन् २२ ततःसर्वार्तवंदिव्यंपुष्पवर्षंनभस्तलात् ॥ पपातयत्रवार्ष्णेयःसगांगेयःसपांडवः २३ वादित्राणिचसर्वाणिजगुश्चाप्सरसांगणाः ॥ नचाहितमनिष्टंचकिंचित्तत्रप्रदृश्यते २४ ववौशिवःसुखोवायुःसर्वगंधवहःशुचिः ॥ शांतायांदिशिशांताश्चप्रावदन्मृगपक्षिणः २५ ततोमुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः ॥ दहन्वनमिवैकांतेप्रतीच्यांप्रत्यदृश्यत २६ ततोमहर्षयःसर्वेसमुत्थायजनार्दनम् ॥ भीष्ममामंत्रयांचक्रूराजानंचयुधिष्ठिरम् २७ ततःप्रणाममकरोत्केशवःसहपांडवः ॥ सात्यकिःसंजयश्चैवसचशारद्वतःकृपः २८

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ आसत्तिरवसन्नता १७ । १८ । १९ । २० संसरंतंसंसरत् २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

२९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

ततस्तेधर्मनिरताःसम्यक्तैरभिपूजिताः ॥ श्वःसमेष्यामइत्युक्त्वायथेष्टंत्वरिताययुः २९ तथैवामंत्र्यगांगेयंकेशवःपांडवास्तथा ॥ प्रदक्षिणमुपावृत्यरथानारुरुहुः अ०
॥४३॥ शुभान् ३० ततोरथैःकांचनचित्रकूबरैर्महीधराभैःसमदैश्चदंतिभिः ॥ हयैःसुपर्णैरिवचाशुगामिभिःपदातिभिश्चात्तशरासनादिभिः ३१ ययौरथानांपुरतोहिसाच
मूस्तथैवपश्चादतिमात्रसारिणी ॥ पुरश्चपश्चाच्चयथामहानदीतमृक्षवंतंगिरिमेत्यनर्मदा ३२ ततःपुरस्ताद्भगवान्निशाकरःसमुत्थितस्तामभिहर्षयंश्चमूम् ॥ दिवा ॥५३॥
करापीतरसामहौषधीःपुनःस्वकेनैवगुणेनयोजयन् ३३ ततःपुरंसुरपुरसंमितद्युतिप्रविश्यतेयदुवृषपांडवास्तदा ॥ यथोचितान्भवनवरान्समाविशन्श्रमान्विता
मृगपतयोगुहाइव ३४ ॥ इतिश्रीम०शां०राजधर्मानुशासनपर्वणियुधिष्ठिराद्यागमनेद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ वैशंपायनउवाच ॥ ततःशयनमाविश्यप्रसु
प्तोमधुसूदनः ॥ याममात्रार्धशेषायांयामिन्यांप्रत्यबुद्ध्यत १ सध्यानपथमाविश्यसर्वज्ञानानिमाधवः ॥ अवलोक्यततःपश्चाद्दध्यौब्रह्मसनातनम् २ ततःस्तुति
पुराणज्ञारक्तकंठाःसुशिक्षिताः ॥ अस्तुवन्विश्वकर्माणंवासुदेवंप्रजापतिम् ३ पठंतिपाणिस्वनिकास्तथागायंतिगायनाः ॥ शंखानथमृदंगांश्चप्रवाद्यंतिसह
स्रशः ४ वीणापणववेणूनांस्वनश्चातिमनोरमः ॥ प्रहासइवविस्तीर्णःशुश्रुवेतस्यवेश्मनः ५ ततोयुधिष्ठिरस्यापिराज्ञोमंगलसंहिताः ॥ उच्चेरुर्मधुरावाचोगीत
वादित्रनिःस्वनाः ६ ततउत्थायदाशार्हःस्नातःप्रांजलिरच्युतः ॥ जप्त्वागुह्यंमहाबाहुरग्नीनाश्रित्यतस्थिवान् ७ ततःसहस्रंविप्राणांचतुर्वेदविदांतथा ॥ गवांसहस्रे
णैकैकंवाचयामासमाधवः ८ मंगलालंभनंकृत्वाआत्मानमवलोक्यच ॥ आदर्शेविमलेकृष्णस्ततःसात्यकिमब्रवीत् ९ गच्छशैनेयजानीहिगत्वाराजनिवेशनम् ॥
अपिसज्जोमहातेजाभीष्मंद्रष्टुंयुधिष्ठिरः १० ततःकृष्णस्यवचनात्सात्यकिस्त्वरितोययौ ॥ उपगम्यचराजानंयुधिष्ठिरमभाषत ११ युक्तोरथवरोराजन्वासुदे
वस्यधीमतः ॥ समीपमापगेयस्यप्रयास्यतिजनार्दनः १२ भवत्प्रतीक्षःकृष्णोऽसौधर्मराजमहाद्युते ॥ यदत्रानंतरंकृत्यंतद्भवान्कर्तुमर्हति १३ एवमुक्तःप्रत्युवाच
धर्मपुत्रोयुधिष्ठिरः ॥ युधिष्ठिरउवाच ॥ युज्यतांमेरथवरःफाल्गुनाप्रतिमद्युते १४ नसैनिकैश्चयातव्यंयास्यामोवयमेवहि ॥ नचपीडयितव्योमेभीष्मोधर्म
भृतांवरः १५ अतःपुरःसराश्चापिनिवर्तंतुधनंजय ॥ अद्यप्रभृतिगांगेयःपरंगुह्यंप्रवक्ष्यति १६ अतोनेच्छामिकौंतेयपृथक्जनसमागमम् ॥ वैशंपायनउवाच ॥ ॥४३॥
सतद्वाक्यमथाज्ञायकुंतीपुत्रोधनंजयः १७ युक्तंरथवरंतस्माआचचक्षेनरर्षभः ॥ ततोयुधिष्ठिरोराजायमौभीमार्जुनावपि १८ भूतानीवसमस्तानिययुःकृष्णनिवे
शनम् ॥ आगच्छत्स्वथकृष्णोऽपिपांडवेषुमहात्मसु १९ शैनेयसहितोधीमानरथमेवान्वपद्यत ॥ रथस्थाःसंविदंकृत्वासुखांपृष्ट्वाचशर्वरीम् २०

मंगलानांगवादीनामालंभनंस्पर्शः ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ७ ॥ ॥ धर्मात्मनीति १

मेघघोषैरथवरैःप्रययुस्तेनरर्षभाः ॥ बलाहकंमेघपुष्पंशैब्यंसुग्रीवमेवच २१ दारुकश्चोदयामासवासुदेवस्यवाजिनः ॥ तेहयावासुदेवस्यदारुकेणप्रचोदिताः २२
गांखुराग्रैस्तथाराजन्लिखंतःप्रययुस्तदा ॥ तेग्रसंतइवाकाशंवेगवंतोमहाबलाः २३ क्षेत्रंधर्मस्यकृत्स्नस्यकुरुक्षेत्रमवातरन् ॥ ततोययुर्यत्रभीष्मःशरतल्पगतःप्र
भुः २४ आस्तेमहर्षिभिःसार्धंब्रह्मादेवगणैर्यथा ॥ ततोऽवतीर्यगोविंदोरथात्सचयुधिष्ठिरः २५ भीमोगांडीवधन्वाचयमौसात्यकिरेवच ॥ ऋषीनभ्यर्चयामासुःक
रानुद्यम्यदक्षिणान् २६ सतैःपरिवृतोराजानक्षत्रैरिवचंद्रमाः ॥ अभ्याजगामगांगेयंब्रह्माणमिववासवः २७ शरतल्पेशयानंतमादित्यंपतितंयथा ॥ सददर्शमहा
बाहुंभयाच्चागतसाध्वसः २८ ॥ इतिश्रीमहाभारतेशां० राज० भीष्माभिगमनेत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ जनमेजयउवाच ॥ धर्मात्मनिमहा
वीर्येसत्यसंधेजितात्मनि ॥ देवव्रतेमहाभागेशरतल्पगतेऽच्युते १ शयानेवीरशयनेभीष्मेशांतनुनंदने ॥ गांगेयेपुरुषव्याघ्रेपांडवैःपर्युपासिते २ काःकथाःसमवर्तं
ततस्मिन्वीरसमागमे ॥ हतेषुसर्वसैन्येषुतन्मेशंसमहामुने ३ ॥ ॥ वैशंपायनउवाच ॥ ॥ शरतल्पगतेभीष्मेकौरवाणांधुरंधरे ॥ आजग्मुर्ऋषयःसिद्धानार
दप्रमुखान्नृप ४ हतशिष्टाश्चराजानोयुधिष्ठिरपुरोगमाः ॥ धृतराष्ट्रश्चकृष्णश्चभीमार्जुनयमास्तथा ५ तेऽभिगम्यमहात्मानोभरतानांपितामहम् ॥ अन्वशोचंतगां
गेयमादित्यंपतितंयथा ६ मुहूर्तमिवचध्यात्वानारदोदेवदर्शनः ॥ उवाचपांडवान्सर्वान्हतशिष्टांश्चपार्थिवान् ७ प्राप्तकालंसमाचक्षेभीष्मोऽयमनुयुज्यताम् ॥
अस्तमेतिहिगांगेयोभानुमानिवभारत ८ अयंप्राणानुत्सिसृक्षुस्तंसर्वेऽभ्यनुपृच्छत ॥ कृत्स्नान्हिविविधान्धर्मांश्चातुर्वर्ण्यस्यवेत्त्ययम् ९ एषवृद्धःपरान्लोकान्सं
प्राप्नोतितनुंत्यजन् ॥ तंशीघ्रमनुयुंजीध्वंसंशयान्मनसिस्थितान् १० ॥ ॥ वैशंपायनउवाच ॥ ॥ एवमुक्तेनारदेनभीष्ममीयुर्नराधिपाः ॥ प्रष्टुंचाशक्नुवंतस्ते
वीक्षांचक्रुःपरस्परम् ११ ततोवाचहृषीकेशंपांडुपुत्रोयुधिष्ठिरः ॥ नान्यस्तुदेवकीपुत्राच्छक्तःप्रष्टुंपितामहम् १२ प्रव्याहरयदुश्रेष्ठत्वमग्रेमधुसूदन ॥ त्वंहिन
स्तातसर्वेषांसर्वधर्मविदुत्तमः १३ एवमुक्तःपांडवेनभगवान्केशवस्तदा ॥ अभिगम्यदुराधर्षंप्रव्याहारयदच्युतः १४ ॥ ॥ वासुदेवउवाच ॥ ॥ कच्चित्सुखेन
रजनीव्युष्टातेराजसत्तम ॥ विस्पष्टलक्षणाबुद्धिःकच्चिच्चोपस्थितातव १५ कच्चिज्ज्ञानानिसर्वाणिप्रतिभांतिचतेऽनघ ॥ नग्लायतेचहृदयंनचतेव्याकुलंमनः १६
॥ भीष्मउवाच ॥ दाहोमोहःश्रमश्चैवक्लमोग्लानिस्तथारुजा ॥ तवप्रसादाद्वार्ष्णेयसद्यःप्रतिगतानिमे १७ यच्चभूतंभविष्यच्चभवच्चपरमद्युते ॥ तत्सर्वमनुपश्या
मिपाणौफलमिवार्पितम् १८ वेदोक्ताश्चैवयेधर्मावेदांताधिगताश्चये ॥ तान्सर्वान्संप्रपश्यामिवरदानात्तवाच्युत १९ २ । ३ । ४ । ५ । ६ । ७ समाचक्षेब्रवीमि अनु

युज्यतांपृच्छतां ८ । ९ । १० । ११ ततःउवाचेतिच्छेदः १२ । १३ प्रव्याहारयत्अवाचयत् १४ । १५ । १६ । १७ । १८ वेदोक्ताअग्निहोत्रादयः वेदांताधिगताःशमदमसंन्यासादयः १९

२० । २१ मेममममनःकर्मबुद्धिराविशत् २२ । २३ । २४ । २५ । २६ मेमया २७ । २८ । २९ । ३० । ३१ यशःपरचित्तचमत्कृतिजनकोगुणौघः कीर्तिःसाधुतयाऽन्यैःकथनं ३१ अनुयुयुक्षंतः

शिष्टैश्चधर्मोयःप्रोक्तःसचमेहृदिवर्तते ॥ देशजातिकुलानांचधर्मज्ञोऽस्मिजनार्दन २० चतुर्ष्वाश्रमधर्मेषुयोऽर्थःसचहृदिस्थितः ॥ राजधर्मांश्चसकलानवगच्छामिकेशव २१ यच्चयत्रचवक्तव्यंतद्वक्ष्यामिजनार्दन ॥ तवप्रसादाद्धिशुभामनोमेबुद्धिराविशत् २२ युवेवास्मिसमावृत्तस्त्वदनुध्यानबृंहितः ॥ वक्तुंश्रेयःसमर्थोऽस्मित्वत्प्रसादाज्जनार्दन २३ स्वयंकिमर्थंतुभवान्श्रेयोनप्राहपांडवम् ॥ किंतेविवक्षितंचात्रतदाशुवदमाधव २४ ॥ ॥ वासुदेवउवाच ॥ ॥ यशसःश्रेयसश्चैवमूलंमांविद्धिकौरव ॥ मत्तःसर्वेऽभिनिर्वृत्ताभावाःसदसदात्मकः २५ शीतांशुश्चंद्रइत्युक्तेलोकेकोविस्मयिष्यति ॥ तथैवयशसापूर्णेमयिकोविस्मयिष्यति २६ आवेयंतुमयाभूयोयशस्तवमहाद्युते ॥ ततोमेविपुलाबुद्धिस्त्वयिभीष्मसमर्पिता २७ यावद्धिपृथिवीपालपृथ्वीयंस्थास्यतिध्रुवा ॥ तावत्तवाक्षयाकीर्तिर्लोकाननुचरिष्यति २८ यच्चत्वंवक्ष्यसेभीष्मपांडवायानुपृच्छते ॥ वेदप्रवादइवतेस्थास्यतेवसुधातले २९ यश्चैतेनप्रमाणेनयोक्ष्यत्यात्मानमात्मना ॥ सफलंसर्वपुण्यानांप्रेत्यचानुभविष्यति ३० एतस्मात्कारणाद्भीष्ममतिर्दिव्यामयाहिते ॥ दत्तायशोविप्रथयेत्कथंभूयस्तवेतिह ३१ यावद्धिप्रथतेलोकेपुरुषस्ययशोभुवि ॥ तावत्तस्याक्षयाकीर्तिर्भवतीतिविनिश्चिता ३२ राजानोहतशिष्टास्त्वांराजन्नभितआसते ॥ धर्माननुयुयुक्षंतस्तेभ्यःप्रब्रूहिभारत ३३ भवान्हिवयसावृद्धःश्रुताचारसमन्वितः ॥ कुशलोराजधर्माणांसर्वेषामपराश्रये ३४ जन्मप्रभृतितेकश्चिद्वृजिनंनददर्शह ॥ ज्ञातारंसर्वधर्माणांत्वांविदुःसर्वपार्थिवाः ३५ तेभ्यःपितेवपुत्रेभ्योराजन्ब्रूहिपरंनयम् ॥ ऋषयश्चैवदेवाश्चत्वयानित्यमुपासिताः ३६ तस्माद्वक्तव्यमेवेदंत्वयाऽवश्यमशेषतः ॥ धर्मंशुश्रूषमाणेभ्यःपृष्टेनचसतापुनः ३७ वक्तव्यंविदुषाचेतिधर्ममाहुर्मनीषिणः ॥ अप्रतिब्रुवतःकष्टोदोषोहिभवितात्रभो ३८ तस्मात्पुत्रैश्चपौत्रैश्चधर्मान्पृष्टान्सनातनान् ॥ विद्वान्जिज्ञासमानैस्त्वंप्रब्रूहिभरतर्षभ ३९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिकृष्णवाक्येचतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ वैशंपायनउवाच ॥ अथाब्रवीन्महातेजावाक्यंकौरवनंदनः ॥ हंतधर्मान्प्रवक्ष्यामिदृढेवाङ्मनसीमम १ तवप्रसादाद्गोविंदभूतात्माह्यसिशाश्वतः ॥ युधिष्ठिरस्तुधर्मात्मामांधर्माननुपृच्छतु ॥ एवंप्रीतोभविष्यामिधर्मान्वक्ष्यामिचाखिलान् २ यस्मिन्राजर्षभेजातेधर्मात्मनिमहात्मनि ॥ अहृष्यन्नृषयःसर्वेसमांपृच्छतुपांडवः ३ सर्वेषांदीप्तयशसांकुरूणांधर्मचारिणाम् ॥ यस्यनास्तिसमःकश्चित्समांपृच्छतुपांडवः ४ धृतिर्दमोब्रह्मचर्यंक्षमाधर्मश्चनित्यदा ॥ यस्मिन्नोजश्चतेजश्चसमांपृच्छतुपांडवः ५

प्रष्टुमिच्छंतः ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे चतुष्पंचाशत्तमोऽध्यायः ॥ ५४ ॥ ॥ ७ ॥ अथेति भूतात्मा प्राणिनामंतरात्माऽसि तेनममाभिप्रायंवेत्सीतिभावः २ प्रसंगाद्धर्मश्रवणाधिकारिणंनिरूपयतियुधिष्ठिरस्तुवित्यादिना ३ । ४ । ५



संबंधीन्संबंधिनः ६ । ७ । ८ । ९ । १० अभिशापोलोकगर्हता ११ । १२ । १३ गोत्रवधजां ग्लानिंधर्मराजस्यापनेष्यन् भीष्मउवाच ब्राह्मणानामिति १४ । १५ । १६ तंलोभिनम् १७ १८ । १९ । २० । २१ । २२ ॥ इतिशांतिपर्वणिरा॰ नी॰ भारतभावदीपेपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ७ ॥ प्रणिपत्येति गुरून्कृपव्यासादीन् पर्यपृच्छद्धर्मानितिशेषः १ धर्मःप्रजा

संबंधीनतिथीन्भृत्यान्संश्रितांश्चैवयोभृशम् ॥ संमानयतिसत्कृत्यसमांपृच्छतुपांडवः ६ सत्यंदानंतपःशौर्यंशांतिर्दाक्ष्यमसंभ्रमः ॥ यस्मिन्नेतानिसर्वाणिसमांपृच्छतुपांडवः ७ योनकामान्नसंरंभान्नभयान्नार्थकारणात् ॥ कुर्यादधर्मंधर्मात्मासमांपृच्छतुपांडवः ८ सत्यनित्यःक्षमानित्योज्ञाननित्योऽतिथिप्रियः ॥ योददातिसतांनित्यंसमांपृच्छतुपांडवः ९ इज्याध्ययननित्यश्चधर्मेचनिरतःसदा ॥ क्षांतःश्रुतरहस्यश्चसमांपृच्छतुपांडवः १० ॥ वासुदेवउवाच ॥ लज्जयापरयोपेतोधर्मराजोयुधिष्ठिरः ॥ अभिशापभयाद्भीतोभवंतंनोपसर्पति ११ लोकस्यकदनंकृत्वालोकनाथोविशांपते ॥ अभिशापभयाद्भीतोभवंतंनोपसर्पति १२ पूज्यान्मान्यांश्चभक्तांश्चगुरून्संबंधिबांधवान् ॥ अर्घार्हानिषुभिर्भित्त्वाभवंतंनोपसर्पति १३ ॥ भीष्मउवाच ॥ ब्राह्मणानांयथाधर्मोदानमध्ययनंतपः ॥ क्षत्रियाणांतथाकृष्णसमरेदेहपातनम् १४ पितॄन्पितामहान्भ्रातॄन्गुरून्संबंधिबांधवान् ॥ मिथ्याप्रवृत्तान्यःसंख्येनिहन्याद्धर्मएवसः १५ समयत्यागिनोलुब्धान्गुरूनपिचकेशव ॥ निहंतिसमरेपापान्क्षत्रियोयःसधर्मवित् १६ योलोभान्नसमीक्षेतधर्मसेतुंसनातनम् ॥ निहंतियस्तंसमरेक्षत्रियोवैसधर्मवित् १७ लोहितोदांकेशतृणांगजशैलांध्वजद्रुमाम् ॥ महींकरोतियुद्धेषुक्षत्रियोयःसधर्मवित् १८ आहूतेनरणेनित्यंयोद्धव्यंक्षत्रबंधुना ॥ धर्म्यंस्वर्ग्यंचलोक्यंचयुद्धंहिमनुरब्रवीत् १९ ॥ वैशंपायनउवाच ॥ एवमुक्तस्तुभीष्मेणधर्मपुत्रोयुधिष्ठिरः ॥ विनीतवदुपागम्यतस्थौसंदर्शनेऽग्रतः २० अथास्यपादौजग्राहभीष्मश्चापिननंदतम् ॥ मूर्ध्निचैनमुपाघ्रायनिषीदेत्यब्रवीत्तदा २१ तमुवाचाथगांगेयोवृषभःसर्वधन्विनाम् ॥ मांपृच्छताततविश्रब्धंमाभैस्त्वंकुरुसत्तम २२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणि युधिष्ठिराश्वासनेपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ वैशंपायनउवाच ॥ प्रणिपत्यहृषीकेशमभिवाद्यपितामहम् ॥ अनुमान्यगुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः १ ॥ युधिष्ठिरउवाच ॥ राज्ञांवैपरमोधर्मइतिधर्मविदोविदुः ॥ महांतमेतंभारंचमन्येतद्ब्रूहिपार्थिव २ राजधर्मान्विशेषेणकथयस्वपितामह ॥ सर्वस्यजीवलोकस्यराजधर्मःपरायणम् ३ त्रिवर्गोहिसमासक्तोराजधर्मेषुकौरव ॥ मोक्षधर्मश्चविस्पष्टःसकलोऽत्रसमाहितः ४ यथाहिरश्मयोऽश्वस्यद्विरदस्यांकुशोयथा ॥ नरेंद्रधर्मोलोकस्यतथाप्रग्रहणंस्मृतम् ५ तत्रचेत्संप्रमुह्येतधर्मेराजर्षिसेविते ॥ लोकस्यसंस्थाननभवेत्सर्वंचव्याकुलीभवेत् ६ उदयन्हियथासूर्योनाशयत्यशुभंतमः ॥ राजधर्मास्तथाऽलोक्यांनिक्षिपंत्यशुभांगतिम् ७

पालनात्मकः परमःसर्वधर्मश्रेष्ठः एतंधर्मभारंदुर्वहंमन्ये २ परायणमाश्रयः ३ त्रिवर्गोधर्मार्थकामात्मकोराजधर्मेषुदंडनीतौसमासक्तःसमाश्रितः ४ प्रग्रहणंनियंत्रणम् ५ संस्थामर्यादाव्यवस्था ६ अलोक्यामप्रकाशात्मिकामशुभांगतिंनरकंनिक्षिपंतिदूरीकुर्वंति तथाचस्मृतिः । 'राजभिःकृतदंडास्तुशुध्यंतिमलिनाजनाः ॥ कृतार्थाश्चततोयांतिस्वर्गंसुकृतिनोयथा'इति ७

अग्रेइतरेभ्योधर्मेभ्यःपूर्वं ८ परःआगमःपरंरहस्यं नोऽस्माकंत्वत्तएवविहितमस्तु ९ शाश्वतान्वेदपरंपरागतान् १० । ११ रंजनकाम्ययेति यःकश्चिदक्षत्रियोऽपिप्रजापालनाधिकृतस्तस्यरा ज्ञोऽयंधर्मः यद्देवद्विजादिषुयथाविधिअनुग्रहबुद्ध्यावर्तितव्यमिति १२ यद्धर्मलोपाद्राज्ञोऋणंभवतितद्देवताद्यर्चनेननश्यतीत्याह दैवतानीति लोकेचततएवपूज्योभवतीतिसंयोगांतरम् १३ उत्थानेनपुरुषकारेण प्रयतेथाःजयाद्यर्थंयतस्व दैवंप्राग्भवीयंकर्मदेवताराधनादिकंवाकेवलमुत्थानंविनानराज्ञामिष्टमर्थंसाधयेत् १४ साधारणंरथचक्रवत्समानं तत्रापिपौरुषंपरंश्रेष्ठंदृष्टद्वारत्वात् दैवंतुफलद्वारानिश्चित्यमुच्यते अकरणदोषात्फलासिद्धौफलसिद्धौवुदुःखान्मुच्यते १५ विपन्नेइति घटस्वघटयस्व कर्षकवत्सकृद्यत्नवैफल्येपियतस्वैवेत्यर्थः १६ नहीति सत्यात्सामंताअपिवशेभ

तदग्रेराजधर्मान्हिमदर्थेत्वंपितामह ॥ प्रब्रूहिभरतश्रेष्ठत्वंहिधर्मभृतांवरः ८ आगमश्चपरस्त्वत्तःसर्वेषांनःपरंतप ॥ भवंतंहिपरंबुद्धौवासुदेवोभिमन्यते ९ ॥ भीष्मउवाच ॥ नमोधर्मायमहतेनमःकृष्णायवेधसे ॥ ब्राह्मणेभ्योनमस्कृत्यधर्मान्वक्ष्यामिशाश्वतान् १० शृणुकार्त्स्न्येनमत्तस्त्वंराजधर्मान्युधिष्ठिर ॥ निरुच्यमानान्नियतोयच्चान्यदपिवांछसि ११ आदावेवकुरुश्रेष्ठराज्ञारंजनकाम्यया ॥ देवतानांद्विजानांचवर्तितव्यंयथाविधि १२ दैवतान्यर्चयित्वाहिब्राह्मणांश्च कुरूद्वह ॥ आनृण्यंयातिधर्मस्यलोकेनचसमर्च्यते १३ उत्थानेनसदापुत्रप्रयतेथायुधिष्ठिर ॥ नह्युत्थानमृतेदैवंराज्ञामर्थंप्रसाधयेत् १४ साधारणंद्वयंह्येतद्दैवमुत्थानमेवच ॥ पौरुषंहिपरंमन्येदैवंनिश्चित्यमुच्यते १५ विपन्नेचसमारंभेसंतापंमास्मवैकृथाः ॥ घटस्वैवसदात्मानंराज्ञामेषपरोनयः १६ नहिसत्यादृतेकिंचिद्राज्ञांवैसिद्धिकारकम् ॥ सत्येहिराजानिरतःप्रेत्यचेहचनंदति १७ ऋषीणामपिराजेंद्रसत्यमेवपरंधनम् ॥ तथाराज्ञांपरंसत्यान्नान्यद्विश्वासकारणम् १८ गुणवान्शीलवान्दांतोमृदुर्धर्म्योजितेंद्रियः ॥ सुदर्शःस्थूललक्ष्यश्चनभ्रश्येतसदाश्रियः १९ आर्जवंसर्वकार्येषुश्रयेथाःकुरुनंदन ॥ पुनर्नयविचारेणत्रयीसंवरणेनच २० मृदुर्हिराजासततंलंघ्योभवतिसर्वशः ॥ तीक्ष्णाच्चोद्विजतेलोकस्तस्मादुभयमाश्रय २१ अदंड्याश्चैवतेपुत्रविप्राश्चददतांवर ॥ भूतमेतत्परंलोकेब्राह्मणोनामपांडव २२ मनुनाचैवराजेंद्रगीतौश्लोकौमहात्मना ॥ धर्मेषुस्वेषुकौरव्यहृदितौकर्तुमर्हसि २३ अद्भ्योऽग्निर्ब्रह्मतःक्षत्रमश्मनोलोहमुत्थितम् ॥ तेषांसर्वत्रगंतेजःस्वासुयोनिषुशाम्यति २४ अयोहंतियदाश्मानमग्निनावारिहन्यते ॥ ब्रह्मचक्षत्रियोद्वेष्टितदासीदंतितेत्रयः २५ एवंकृत्वामहाराजनमस्याएवतेद्विजाः ॥ भौमंब्रह्मद्विजश्रेष्ठाधारयंतिसमर्चिताः २६ एवंचैवनरव्याघ्रलोकत्रयविघातकाः ॥ निग्राह्याएवसततंबाहुभ्यांयेस्युरीदृशाः २७ श्लोकौचोशनसागीतौपुरातातमहर्षिणा ॥ तौनिबोधमहाराजत्वमेकाग्रमनानृप २८

वंत्यन्यथाविश्वासाभावात्स्वीयाअप्युद्विजंते क्षीणाअपिपरेप्राणपणेनाविजिगीषंतएवेतिश्लोकद्वयार्थः १० । १८ गुणाःशौर्यौदार्यगांभीर्यादयस्तद्वान् शीलंसदाचारस्तद्वान् दांतःअचपलः मृदुर्दयावान् धर्म्योधर्मादनपेतः जितेंद्रियःजितचित्तः सुदर्शःप्रसन्नवक्त्रः स्थूललक्ष्यःबहुप्रदः १९ आर्जवमवक्रतां नयोनीतिः स्वरंध्रगोपनंपररंध्रान्वेषणस्यस्वेनक्रियमाणस्यपरेभ्योगोपनं मंत्रगोपनंचेत्यादिरुक्तेनविचारेणऊहापोहेनसाधकबाधकोपन्यासेनाक्रियमाणेन त्रयींसंवरणेउक्तविधनीतिरूपे आर्जवंयथार्थभाषित्वंवचनश्रयेथाः २० उभयंमृदुत्वंतीक्ष्णत्वंचसमुचितमाश्रय २१ तत्रापितैक्ष्ण्यापवादमाह अदंड्याइति २२ । २३ । २४ । २५ भौमंब्रह्मवेदान्यज्ञांश्च २६ मार्दवापवादमाह एवमिति २७ । २८



स्वधर्मेणशस्त्रोद्यमनेन निगृह्णीयादेवनतुहन्यात् २९ विनश्यमानमाततायिदोषात् तेनआततायिनिग्रहेण अनिग्रहेतुधर्महासस्यादेव जीवतोऽस्यनिग्रहोदुःशकश्चेत्तत्राह मन्युस्तन्मन्युमृच्छति यथा सूर्यांशुतप्तस्फटिकस्तूलपिंडमुद्दीप्यतद्भस्मनास्वयंनश्यति एवंआततायिक्रोधोऽन्यमुद्दीप्यतद्द्वाराततायिनमेवाश्रयदाहेनदहति नात्रहंतुर्दोषइत्यर्थः ३० एवंचेति यद्यप्येवंतथापिद्विजातयो ब्राह्मणारक्ष्याएव ३१ अभिशस्तंसताऽसतावादोषेणयुक्तंतयाख्यापितं ३२ शारीरंकशाघातादिदंडं क्लीबत्वमार्ष ३३ पुरुषसंचयात्ब्राह्मणभक्तादितिपूर्वोर्धार्थः ३४ षट्सुमरुजलपृथिवीवनपर्वतनरमयेषु ३५ । ३६ पुनर्दयापवादमाह नचेति समंततःसर्वजातीयेषु अधर्मोधर्मविरोधी ३७ । ३८ गजस्यक्षममाणस्य ३९ । ४० प्रत्यक्षेणोपकारापकारादिना अनुमानेननेत्रवक्त्रविकारादिना यथोक्तं । 'नेत्रवक्त्रविकारेणज्ञायतेऽन्तर्गतंमनः' इति औपम्यमुपमानमन्यत्रकार्यदर्शनेन आगमैःशब्दादिनासामुद्रिकलक्षणेन तेपुरुषाःपरीक्ष्याः ४१ व्यसनान्यष्टादश यथाहमनुः 'मृगयाक्षादिवास्वप्नःपरिवादःस्त्रियोमदः ॥ तौर्यत्रिकंवृथाट्याचकामजोदशकोगणः' ॥ तौर्यत्रिकंवाद्यगीतनृत्यानि । 'पैशुन्यंसाहसंद्रोहईर्ष्याऽसूयाऽर्थदूषणं ॥ वाग्दंडजंचपारुष्यंक्रोधजोऽपिगणोऽष्टकः' इति तत्रचसप्तकष्टतमानि यथाऽऽह । 'पानमक्षाःस्त्रियश्चैवमृगयाचयथाक्रमं ॥ एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे ॥ दंडस्यपातनंचैववाक्पारुष्यार्थदूषणे ॥ क्रोधजेऽपिगणेविद्यात्कष्टमेतत्त्रिकंसदा' इति नप्रयुंजीतेतिनअपितुसर्वदाशूरान्जयायप्रयोजयेदेव संकीर्णंप्रयुक्तप्रयुक्तयोःसंकरं साम्राउपगतेप्रयोगोनास्तिअन्यत्रकुर्यादेवेत्यर्थः ४२ व्यसनीमृगयाऽक्षाःस्त्रियःपानंचतद्वान् अतिद्वेषीप्रजाद्रोहपरः ४३ । ४४ । ४५ प्रियमिष्टं ४६ वेत्रया स्पष्टःप्रख्यातोदंडःअश्वरथहस्तिपुरुषादिसमूहोयस्यतस्यस्पष्टदंडस्य ४७

उद्यम्यशस्त्रमायांतमपिवेदांतगंरणे ॥ निगृह्णीयात्स्वधर्मेणधर्मापेक्षीनराधिपः २९ विनश्यमानंधर्मंहियोभिरक्षेत्सधर्मवित् ॥ नतेनधर्महासस्यान्मन्युस्तन्मन्युमृच्छति ३० एवंचैवनरश्रेष्ठरक्ष्याएवद्विजातयः ॥ सापराधानपिहितान्विषयांतेसमुत्सृजेत् ३१ अभिशस्तमपिह्येषांकृपायीतविशांपते ॥ ब्रह्मघ्नेगुरुतल्पेचभ्रूणहत्येतथैवच ३२ राजद्विष्टेचविप्रस्यविषयांतेविसर्जनम् ॥ विधीयतेनशारीरंदंडमेषांकदाचन ३३ दयिताश्चनरास्तेस्युर्भक्तिमंतोद्विजेषुये ॥ नकोशःपरमोऽन्योस्तिराज्ञांपुरुषसंचयात् ३४ दुर्गेषुचमहाराजषट्सुयेशास्त्रनिश्चिताः ॥ सर्वदुर्गेषुमन्यंतेनरदुर्गंसुदुस्तरं ३५ तस्मान्नित्यंदयाकार्याचातुर्वर्ण्येविपश्चिता ॥ धर्मात्मासत्यवाक्चैवराजारंजयतिप्रजाः ३६ नचक्षांतेनतेनित्यंभाव्यंपुत्रसमंततः ॥ अधर्मोहिमृदूराजाक्षमावानिवकुंजरः ३७ बार्हस्पत्येचशास्त्रेचश्लोकोनिगदितःपुरा ॥ अस्मिन्नर्थेमहाराजतन्मेनिगदतःशृणु ३८ क्षममाणंनृपंनित्यंनीचःपरिभवेज्जनः ॥ हस्तियंतागजस्येवशिरएवारुरुक्षति ३९ तस्मान्नैवमृदुर्नित्यंतीक्ष्णोनैवभवेन्नृपः ॥ वासंतार्कइवश्रीमान्नशीतोनचघर्मदः ४० प्रत्यक्षेणानुमानेनतथौपम्यागमैरपि ॥ परीक्ष्यास्तेमहाराजस्वेपरेचैवनित्यशः ४१ व्यसनानिचसर्वाणित्यजेथाभूरिदक्षिण ॥ नचैवनप्रयुंजीतसंकीर्णंपरिवर्जयेत् ४२ लोकस्यव्यसनीनित्यंपरिभूतोभवत्युत ॥ उद्वेजयतिलोकंचयोऽतिद्वेषीमहीपतिः ४३ भवितव्यंसदाराज्ञागर्भिणीसहधर्मिणा ॥ कारणंचमहाराजशृणुयेनेदमिष्यते ४४ यथाहिगर्भिणीहित्वास्वंप्रियंमनसोऽनुगम् ॥ गर्भस्यहितमाधत्तेतथाराज्ञाप्यसंशयम् ४५ वर्तितव्यंकुरुश्रेष्ठसदाधर्मानुवर्तिना ॥ स्वंप्रियंतुपरित्यज्ययद्यल्लोकहितंभवेत् ४६ नसंत्याज्यंचतेधैर्यंकदाचिदपिपांडव ॥ धीरस्यस्पष्टदंडस्यनभयंविद्यतेक्वचित् ४७

४८ संवर्षात् अतिसंश्लेषात् ४९ विकल्पंतेकार्यसंशयंदर्शयंति गुह्यंगोप्यमपिच्छिद्रंअनुयुंजतेप्रकटयंति भोज्यानिराज्ञः आहारयंतिभक्षयंति ५० उत्कोचैर्लंचाभिः वंचनाअलीकगुणदोषादिप्रदर्शनं अनुविहंतिविनिघ्नंति ५१ प्रतिरूपकैःकृत्रिमैःशासनपत्रैः विषयंदेशं जर्जरंनिःसारं स्त्रीरक्षिभिःसज्जंतेप्रीतिंकुर्वंति अंतःपुरेप्रवेशमिच्छंतः ५२ वातंजृंभादिना निष्ठीवनंथूत्कारं तद्वचःराजवाक्यंगुह्यमपिलोकेव्याहरंति ५३ हर्षुलेपरिहासशीले ५४ । ५५ । ५६ विस्रंसयंतिभेदयंति ५७ हेलनानिकुर्वंतीतिशेषः उपशृण्वतःशृण्वंतमनादृत्य स्वस्थाःनिर्भयाः ५८ राजदेयंराजभागं

परिहासश्चभृत्यैस्तेनात्यर्थंवदतांवर ॥ कर्तव्योराजशार्दूलदोषमत्रहिमेशृणु ४८ अवमन्यंतिभर्तारंसंघर्षादुपजीविनः ॥ स्वेस्थानेनचतिष्ठंतिलंघयंतिचतद्वचः ४९ प्रेष्यमाणाविकल्पंतेगुह्यंचाप्यनुयुंजते ॥ अयाच्यंचैवयाचंतेभोज्यान्याहारयंतिच ५० क्रुश्यंतिपरिदीप्यंतिभूमिपायाधितिष्ठते ॥ उत्कोचैर्वंचनाभिश्चकार्याण्यनुविहंतिच ५१ जर्जरंचास्यविषयंकुर्वंतिप्रतिरूपकैः ॥ स्त्रीरक्षिभिश्चसज्जंतेतुल्यवेषाभवंतिच ५२ वातंनिष्ठीवनंचैवकुर्वतेचास्यसन्निधौ ॥ निर्लज्जाराजशार्दूलव्याहरंतिचतद्वचः ५३ हयंवादंतिनंवापिरथंवानृपसत्तम ॥ अभिरोहंत्यनादृत्यहर्षुलेपार्थिवेमृदौ ५४ इदंतेदुष्करंराजन्निदंतेदुष्टचेष्टितम् ॥ इत्येवंसुहृदोवाचंवदंतेपरिषद्गताः ५५ क्रुद्धेचास्मिन्हसंत्येवनचहृष्यंतिपूजिताः॥ संहर्षशीलाश्चतदाभवंत्यन्योन्यकारणात् ५६ विस्रंसयंतिमंत्रंचविवृण्वंतिचदुष्कृतम् ॥ लीलयाचैवकुर्वंतिसावज्ञास्तस्यशासनम् ५७ अलंकारेचभोज्येचतथास्नानानुलेपने ॥ हेलनानिनरव्याघ्रस्वस्थास्तस्योपशृण्वतः ५८ निंदंतेस्वानधीकारान्संत्यजंतेचभारत ॥ नवृत्त्यापरितुष्यंतिराजदेयंहरंतिच ५९ क्रीडितुंतेनचेच्छंतिससूत्रेणेवपक्षिणा ॥ अस्मत्प्रणेयोराजेतिलोकांश्चैववदंत्युत ६० एतेचैवापरेचैवदोषाःप्रादुर्भवंत्युत ॥ नृपतौमार्दवोपेतेहर्षुलेचयुधिष्ठिर ६१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध० षट्पंचाशत्तमोऽध्यायः ॥ ५६॥
॥ भीष्मउवाच ॥ नित्योद्युक्तेनवैराज्ञाभवितव्यंयुधिष्ठिर ॥ प्रशस्यतेनराजाहिनारीवोद्यमवर्जितः १ भगवानुशनाचाहश्लोकमत्रविशांपते ॥ तदिहैकमनाराजन्गदतस्तंनिबोधमे २ द्वाविमौग्रसतेभूमिःसर्पोबिलशयानिव ॥ राजानंचाविरोद्धारंब्राह्मणंचाप्रवासिनम् ३ तदेतन्नरशार्दूलहृदित्वंकर्तुमर्हसि ॥ संधेयानभिसंधत्स्वविरोध्यांश्चविरोधय ४ सप्तांगस्यचराज्यस्यविपरीतंयआचरेत् ॥ गुरुर्वायदिवामित्रंप्रतिहंतव्यएवसः ५ मरुत्तेनहिराज्ञावैगीतःश्लोकःपुरातनः ॥ राजाधिकारेराजेंद्रबृहस्पतिमतेपुरा ६ गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः ॥ उत्पथप्रतिपन्नस्यदंडोभवतिशाश्वतः ७

५९ क्रीडितुंराज्ञासहमृगयादिक्रीडांकर्तुं ससूत्रेणबद्धेनपक्षिणाश्येनेन राज्ञोनिरोधकाइत्यर्थः प्रणेयःशास्यः ६० अपरेदारापहारादयः ६१ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपे षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ५७ ॥ अस्यैवाध्यायस्यसूत्रभूतस्योत्तरोग्रंथोवृत्तिरूपः । तत्रउत्थानेनयतेथाइत्युक्तंतद्विवृणोति नित्योति १ यच्छ्लोकंआहतत्तस्मात्तंश्लोकंनिबोध २ अप्रवासिनंवेदाध्ययनार्थं ब्राह्मणंपर्विवा ३ विरोधयपर्वतादौसेवाविशेषेणरोधंकुरु ४ सप्तस्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानिअंगानियस्यतस्यसप्तांगस्यविपरीतंयस्यकस्यचिदप्यंगस्यप्रतिकूलं ५ । ६ शाश्वतःअप्रतिसमाधेयःपर्वतारोहणादिर्गुरोः अन्यस्यतुवधएव ७ ॥४६॥

८ । ९ । १० । ११ नहिंस्यात्करार्थंक्षेत्रेषुधान्यानिरुद्धात्तृष्ट्यादिनाननाशयेत् देयंभृत्यानांवेतनं विक्रांतःपराक्रमी क्षांतःक्षमावान् पथःशुभमार्गात् १२ आत्मवान्जितचित्तः शास्त्रार्थंकृतनिश्चयःनिःसंदेहः सततंनित्यं पूर्वाह्णेधर्मंमध्याह्नेऽर्थमपराह्णेकाममपररात्रेयोगंचेतिनित्यंत्रयींनापिसेवेत १३ वृजिनंसंकटं अरक्षणान्मंत्रस्यागोपनादन्यन्नास्ति १४ धर्माणांसंकरोव्यत्ययस्तस्मात्प्रजानांरक्षाधर्मसंकररक्षा १५नविश्वसेत् चातविश्वसेदप्याप्तेषु तेष्वप्यत्यर्थंनविश्वसेत् षण्णांगुणानांभावःषाड्गुण्यं तेचबलवतिस्थायिनियानिनःसंधिः समबलेविग्रहोयुद्धादिः दुर्बलेयानंतदीयदुर्गाद्याक्रमणं एवंस्थायिनोबलवतियायिन्यासनंदुर्गादावेवस्वरक्षणं मध्यमेद्वैधीभावः अर्धेनदंडेनदुर्गाश्रयणमर्धेनपरेषांधान्यादिनिरोधनं दुर्बलेसमाश्रयोमित्रांतरमाश्रियतेनसहयुद्धंकर्तव्यं एतेषुकर्तव्येषुगुणान्जयावहान्दोषान्पराजयावहांश्चार्थान्कोशदंडादिपौष्कल्यादीन्बुद्ध्यास्वयमेवनिश्चिनुयात् १६ द्विषःशत्रोःसप्तसुराज्यांगेषुस्वप्रवेशद्वारशैथिल्यंतत्तद्विड्छिद्रं एवंस्वस्यसप्तसुराज्यांगेषुयत्परप्रवेशद्वारशैथिल्यंतत्पराच्छिद्रं द्विड्छिद्रदर्शीस्यात् एतच्चस्वच्छिद्रगोपनस्याप्युपलक्षणं

बाहोःपुत्रेणराज्ञाचसगरेणचधीमता ॥ असमंजाःसुतोज्येष्ठस्त्यक्तःपौरहितैषिणा ८ असमंजाःसरय्वांसपौराणांबालकान्नृप ॥ न्यमज्जयदतःपित्रानिर्भर्त्स्यसविवासितः ९ ऋषिणोद्दालकेनापिश्वेतकेतुर्महातपाः ॥ मिथ्याविप्रानुपचरन्संत्यक्तोदयितःसुतः १० लोकरंजनमेवात्रराज्ञांधर्मःसनातनः ॥ सत्यस्यरक्षणंचैवव्यवहारस्यचार्जवम् ११ नहिंस्यात्परवित्तानिदेयंकालेचदापयेत् ॥ विक्रांतःसत्यवाक्क्षांतोनृपोनचलतेपथः १२ आत्मवांश्चजितक्रोधःशास्त्रार्थकृतनिश्चयः ॥ धर्मेचार्थेचकामेचमोक्षेचसततंरतः १३ त्रय्यांसंवृतमंत्रश्चराजाभवितुमर्हति ॥ वृजिनंचनरेंद्राणांनान्यच्चारक्षणात्परम् १४ चातुर्वर्ण्यस्यधर्माश्चरक्षितव्यामहीक्षिता ॥ धर्मसंकररक्षाचराज्ञांधर्मःसनातनः १५ नविश्वसेच्चनृपतिर्नचात्यर्थंचविश्वसेत् ॥ षाड्गुण्यगुणदोषांश्चनित्यंबुद्ध्यावलोकयेत् १६ द्विड्छिद्रदर्शीनृपतिर्नित्यमेवप्रशस्यते ॥ त्रिवर्गेविदितार्थश्चयुक्तचारोपधिश्चयः १७ कोशस्योपार्जनरतिर्यमवैश्रवणोपमः ॥ वेत्ताचदशवर्गस्यस्थानवृद्धिक्षयात्मनः १८ अभृतानांभवेद्भर्ताभृतानामन्ववेक्षकः ॥ नृपतिःसुमुखश्चस्यात्स्मितपूर्वाभिभाषिता १९ उपासिताचवृद्धानांजिततंद्रिरलोलुपः ॥ सतांवृत्तेस्थितमतिःसंतोष्यश्चारुदर्शनः २० नचाददीतवित्तानिसतांहस्तात्कदाचन ॥ असद्भ्यश्चसमादद्यात्सद्भ्यस्तुप्रतिपादयेत् २१ स्वयंप्रहर्तादाताचवश्यात्मारम्यसाधनः ॥ कालेदाताचभोक्ताचशुद्धाचारस्तथैवच २२ शूरान्भक्तानसंहार्यान्कुलेजातानरोगिणः ॥ शिष्टान्शिष्टाभिसंबंधान्मानिनोनवमानिनः २३

त्रिवर्गेधर्मादौविदितार्थोज्ञाततत्त्वः युक्तश्चारःप्रच्छन्नःस्पशःउपधिःपरकीयानाममात्यादीनामुत्कोचदानादिनाभेदनंचयेनसयुक्तचारोपधिः तत्रचारनियोजनस्थानान्युक्तानिनीतिशास्त्रे 'मंत्रीपुरोहितश्चैवयुवराजश्चभूपतिः ॥ पंचमोद्वारपालश्चषष्ठोऽन्तर्वंशिकस्तथा ॥ कारागाराधिकारीचद्रव्यसंचयकृत्तथा ॥ कृत्याकृत्येषुचार्थानांनवमोविनियोजकः ॥ प्रदेष्टानगराध्यक्षःकार्यनिर्माणकृत्तथा ॥ धर्माध्यक्षःसभाध्यक्षोदंडपालस्त्रिपंचमः ॥ षोडशोदुर्गपालश्चतथाराष्ट्रांतपालकः ॥ अटवीपालकांतानितीर्थान्यष्टादशैवतु ॥ चारान्विचारयेत्तीर्थेस्वात्मनश्चपरस्यच ॥ पाषंडादीनविज्ञातानन्योन्यमितरेष्वपि ॥ मंत्रिणंयुवराजंचहित्वास्वेषुपुरोहितम्'इति १७ दशवर्गःअमात्यराष्ट्रदुर्गाणिकोशोदंडश्चपंचमइतिप्रकृतिपंचकंस्वपक्षेपरपक्षेचेतिदशकोवर्गः सचोभयोःसाम्यंचेत्स्थानंस्थितिस्तत्कर्ता स्वस्याधिकश्चेद्वृद्धिकर्ता परस्याधिकश्चेत्क्षयकर्ता १८ । १९ २० । २१ । २२ शूरान्सहायान्कुर्यादितितृतीयेनान्वयः असंहार्यान्परैरग्रसाह्यान् शिष्टाभिसंबंधान्शिष्टपरिवारान् अनवमानिनःअवमानंपरस्याकुर्वतः २३

अचलान्स्थिरान् अचलानिवपर्वतानिव २४ छत्रमात्रेणसहितायाआज्ञेदमित्थंकुर्विदंनेतितयाऽधिकःअन्यस्तवशूरैःसमानैर्भुंजीत २९ इयंचशूरेपुराज्ञोवृत्तिःप्रत्यक्षाऽपरोक्षाचसमाभवेत् सान्निहिते व्यसान्निहितेषुवातुल्यास्यादित्यर्थः २६ सर्वाभिशंकीसर्वत्राकृतविश्वासः सर्वहरःसर्वस्वापहारीअनृजुरनृतापराधारोपकृत् यतोलुब्धः २७। २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ असं

विद्याविदोलोकविदःपरलोकान्ववेक्षकान् ॥ धर्मेचनिरतान्साधूनचलानचलानिव २४ सहायान्सततंकुर्याद्राजाभूतिपरिष्कृतः ॥ तैश्चतुल्योभवेद्भोगैश्छत्रमा त्राज्ञयाधिकः २५ प्रत्यक्षाचपरोक्षाचवृत्तिश्चास्यभवेत्समा ॥ एवंकुर्वन्नरेंद्रोपिनखेदमिहविंदति २६ सर्वाभिशंकीनृपतिर्यश्चसर्वहरोभवेत् ॥ सक्षिप्रमनृजुर्लुब्धः स्वजनेनैवबध्यते २७ शुचिस्तुपृथिवीपालोलोकचित्तग्रहेरतः ॥ नपतत्यरिभिर्ग्रस्तःपतितश्चावतिष्ठते २८ अक्रोधनोह्यव्यसनीमृदुदंडोजितेंद्रियः ॥ राजाभ वतिभूतानांविश्वास्योहिमवानिव २९ प्राज्ञस्त्यागगुणोपेतःपररंध्रेषुतत्परः ॥ सुदर्शःसर्ववर्णानांनयापनयवित्तथा ३० क्षिप्रकारीजितक्रोधःसुप्रसादोमहामनाः ॥ अरोषप्रकृतिर्युक्तःक्रियावानविकत्थनः ३१ आरब्धान्येवकार्याणिसुपर्यवसितानिच ॥ यस्यराज्ञःप्रदृश्यंतिसराजाराजसत्तमः ३२ पुत्राइवपितुर्गेहेविषयेयस्य मानवाः ॥ निर्भयाविचरिष्यंतिसराजाराजसत्तमः ३३ अगूढविभवायस्यपौराराष्ट्रनिवासिनः ॥ नयापनयवेत्तारःसराजाराजसत्तमः ३४ स्वकर्मनिरतायस्यज नाविषयवासिनः ॥ असंघातरतादांताःपाल्यमानायथाविधि ३५ वश्यानेयाविधेयाश्चनचसंघर्षशीलिनः ॥ विषयेदानरुचयोनरायस्यसपार्थिवः ३६ नयस्य कूटंकपटंनमायानचमत्सरः ॥ विषयेभूमिपालस्यतस्यधर्मःसनातनः ३७ यःसत्करोतिज्ञानानिज्ञेयेपरहितेरतः ॥ सतांवर्त्मानुगस्त्यागीसराजाराज्यमर्हति ३८ यस्यचाराश्चमंत्राश्चनित्यंचैवकृताकृताः ॥ नज्ञायंतेहिरिपुभिःसराजाराज्यमर्हति ३९ श्लोकश्चायंपुरागीतोभार्गवेणमहात्मना ॥ आख्यातेरामचरितेनृपतिंप्र तिभारत ४० राजानंप्रथमंविंदेत्ततोभार्यांततोधनम् ॥ राजन्यसतिलोकस्यकुतोभार्याकुतोधनम् ४१ तद्राज्येराज्यकामानांनान्योधर्मःसनातनः ॥ ऋतेरक्षां तुविस्पष्टांरक्षालोकस्यधारिणी ४२ प्राचेतसेनमनुनाश्लोकौचेमावुदाहृतौ ॥ राजधर्मेषुराजेंद्रताविहैकमनाःशृणु ४३ षडेतान्पुरुषोजह्याद्भिन्नांनावमिवार्णवे ॥ अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ४४ अरक्षितारंराजानंभार्यांचाप्रियवादिनीम् ॥ ग्रामकामंचगोपालंवनकामंचनापितम् ४५ ॥ इतिश्रीमहाभारतेशांति पर्वणिराजधर्मानुशासनपर्वणिसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ भीष्मउवाच ॥ एतत्तेराजधर्माणांनवनीतंयुधिष्ठिर ॥ बृहस्पतिर्हिभगवान्न्याय्यंधर्मंप्रशंसति १

घातरताःसंघातेशरीरेप्रीतिर्मंतोनभवंतिकिंतुतत्साध्येधर्मेएवेत्यर्थः ३५ नेयाःविनेतुंयोग्याः संघर्षःपराभिभवस्तच्छीलिनोन ३६ कूटंदंभः कपटमनृतं मत्सरःपरोत्कर्षासहिष्णुत्वं ३७ ज्ञानानि ज्ञानयुक्तान्पंडितान् ज्ञेयेशास्त्रार्थेपरस्यहितावहेरतोनतुहिंसामये त्यागीदाता ३८ कृताअप्यकृताइवेतिकृताकृताः ३९।४० प्रथमंश्रेष्ठं असत्यशुभे ४१। ४२ रक्षैवराज्ञःकर्म तामकुर्वन्नराजात्या ज्यइत्याह प्राचेतसइति ४३ ।४४ ।४५ ॥ इतिशांतिप० राजध०नी० भारतभा०सप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ एतदिति एतद्रक्षणंनवनीतंनवनीतवत्सर्वधर्मसारं न्याय्यंन्यायादनपेतं १ ॥४७॥

२ । ३ अत्ररक्षणेसाधनंयुक्ति ४ चारोगुप्तस्पशः प्रणिधिःप्रकटस्पशः दानंभक्तवेतनयोः युक्तेरादानं अयोगेनाऽनुपायेनआदानंकरग्रहणंनच ५ । ६ केतनानांगृहादीनां द्विविधस्यशारीरदंडो र्थदंडश्चेतिभेदात् ७ निचेयानांसंग्राह्याणांधान्यादीनांनिचयःसंग्रहः ८। ९ अविश्वासोयामिकादीनामपि पौराणांसंघातस्यपरैर्वाणिज्यादिच्छलेनवशीकृतस्यभेदनंविघटनम् १० उपजापःपरैः

विशालाक्षश्चभगवान्काव्यश्चैवमहातपाः ॥ सहस्राक्षोमहेंद्रश्चतथाप्राचेतसोमनुः २ भरद्वाजश्चभगवांस्तथागौरशिरामुनिः ॥ राजशास्त्रप्रणेतारोब्रह्मण्याब्रह्मवा दिनः ३ रक्षामेवप्रशंसंतिधर्मंधर्मभृतांवर ॥ राज्ञांराजीवताम्राक्षसाधनंचात्रमेशृणु ४ चारश्चप्रणिधिश्चैवकालेदानममत्सरात् ॥ युक्त्यादानंनचादानमयोगेनयु धिष्ठिर ५ सतांसंग्रहणंशौर्यंदाक्ष्यंसत्यंप्रजाहितम् ॥ अनार्जवैरार्जवैश्चशत्रुपक्षस्यभेदनम् ६ केतनानांचजीर्णानामवेक्षाचैवसीदताम् ॥ द्विविधस्यचदंडस्यप्रयो गःकालचोदितः ७ साधूनामपरित्यागःकुलीनानांचधारणम् ॥ निचयश्चनिचेयानांसेवाबुद्धिमतामपि ८ बलानांहर्षणंनित्यंप्रजानामन्ववेक्षणम् ॥ कार्येष्वखे दःकोशस्यतथैवचविवर्धनम् ९ पुरगुप्तिरविश्वासःपौरसंघातभेदनम् ॥ अरिमध्यस्थमित्राणांयथावच्चान्ववेक्षणम् १० उपजापश्चभृत्यानामात्मनःपुरदर्शनम् ॥ अविश्वासःस्वयंचैवपरस्याश्वासनंतथा ११ नीतिधर्मानुसरणंनित्यमुत्थानमेवच ॥ रिपूणामनवज्ञानंनित्यंचानार्यवर्जनम् १२ उत्थानंहिनरेंद्राणांबृहस्पतिरभा षत ॥ राजधर्मस्यतन्मूलंश्लोकांश्चात्रनिबोधमे १३ उत्थानेनामृतंलब्धमुत्थानेनासुराहताः ॥ उत्थानेनमहेंद्रेणश्रैष्ठ्यंप्राप्तंदिवीहच १४ उत्थानवीरःपुरुषो वाग्वीरानधितिष्ठति ॥ उत्थानवीरान्वाग्वीराःरमयंतउपासते १५ उत्थानहीनोराजाहिबुद्धिमानपिनित्यशः ॥ प्रधर्षणीयःशत्रूणांभुजंगइवनिर्विषः १६ नचश त्रुरवज्ञेयोदुर्बलोपिबलीयसा ॥ अल्पोपिहिदहत्यग्निर्विषमल्पंहिनस्तिच १७ एकांगेनापिसंभूतःशत्रुर्दुर्गमुपाश्रितः ॥ सर्वंतापयतेदेशमपिराज्ञःसमृद्धिनः १८ राज्ञोरहस्यंतद्वाक्यंयथार्थंलोकसंग्रहः ॥ हृदियच्चास्यजिह्मंस्यात्कारणेनचयद्भवेत् १९ यच्चास्यकार्यंवृजिनमार्जवेनेहनिर्जयेत् ॥ दंभनार्थंचलोकस्यधर्मिष्ठामा चरेत्क्रियाम् २० राज्यंहिसुमहत्तंत्रंधार्यतेनाकृतात्मभिः ॥ नशक्यंमृदुनावोढुमायासस्थानमुत्तमम् २१ राज्यंसर्वामिषंनित्यमार्जवेनेहधार्यते ॥ तस्मा न्मिश्रेणसततंवर्तितव्यंयुधिष्ठिर २२ यद्यप्यस्यविपत्तिःस्याद्रक्षमाणस्यवैप्रजाः ॥ सोप्यस्यविपुलोधर्मएवंवृत्ताहिभूमिपाः २३ एषतेराजधर्माणांलेशःसमनुवर्णि तः ॥ भूयस्तेयत्रसंदेहस्तद्ब्रूहिकुरुसत्तम २४ ॥ वैशंपायनउवाच ॥ ततोव्यासश्चभगवान्देवस्थानोश्मएवच ॥ वासुदेवःकृपश्चैवसात्यकिःसंजयस्त था २५ साधुसाध्वितिसंहृष्टाःपुष्यमाणैरिवाननैः ॥ अस्तुवंश्चनरव्याघ्रंभीष्मंधर्मभृतांवरम् २६

१७ स्वभृत्यानांभेदनं अविश्वासोभृत्यानामेव ११ उत्थानमुद्योगः अनार्यहीनकर्मकदर्यस्तादितद्वर्जनम् १२ । १३ । १४ वाग्वीरान्पंडितान् उत्थानमेवमहत्पांडित्यमित्यर्थः १५ । १६ । १७ एकां गेनहस्त्यश्वरथपादातानामन्यतमेनापिसंभूतःसंपन्नः समृद्धिनःसमृद्धिमतः १८ स्वीयेनआर्जवेनराज्ञोयद्रहस्यंवाक्यंयोवाजयार्थंलोकसंग्रहोयच्चास्यकारणेनशत्रुजयादिहेतुना।जिह्मंकपटंयच्चवृ जिनंहीनंकार्यंतत्सर्वंसमीकुर्यादित्याद्वाभ्यां राज्ञइति १९ दंभनार्थंसंघातार्थम् २० अकृतात्मभिःक्रूरैः २१ मिश्रेणक्रौर्यमार्दवाभ्याम् २२ । २३ । २४ । २५ । २६

२७ ।२८ ।२९ ।३० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ततःकल्यमित्यध्यायोदंडनीतिशास्त्रस्यराज्ञश्चोत्पत्तिंवक्तुंप्रवर्तते कल्यंप्रातः १। २ ।३।४ मानुषत्वेसमानेऽपिकिंनिमित्तेयमेकस्मिन्निग्रहानुग्रहशक्तिरितिपृच्छति यइत्यादिना ५ ।६। ७। ८।९ ।१०। ११। १२।१३ दंडोदमनं दांडिकोदंडप्रणेता १४ धर्मेणैवमनु



ततोदीनमनाभीष्ममुवाचकुरुसत्तमः ॥ नेत्राभ्यामश्रुपूर्णाभ्यांपादौतस्यशनैःस्पृशन् २७ श्वइदानींस्वसंदेहंप्रक्ष्यामित्वांपितामह ॥ उपैतिसविताह्यस्तंरसमापीयपार्थिवम् २८ ततोद्विजातीनभिवाद्यकेशवःकृपश्चतेचैवयुधिष्ठिरादयः ॥ प्रदक्षिणीकृत्यमहानदीसुतंततोरथानारुरुहुर्मुदान्विताः २९ दृषद्वतींचाप्यवगाह्यसुव्रताःकृतोदकार्थाःकृतजप्यमंगलाः ॥ उपास्यसंध्यांविधिवत्परंतपास्ततःपरंतेविविशुर्गजाह्वयम् ३० ॥ इतिश्रीमहाभारते शांतिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरादिस्वस्थानगमने अष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ वैशंपायनउवाच ॥ ततःकल्यंसमुत्थायकृतपूर्वाह्णिकक्रियाः ॥ ययुस्तेनगराकारैरथैःपांडवयादवाः १ प्रतिपद्यकुरुक्षेत्रंभीष्ममासाद्यचानघ ॥ सुखांचरजनींपृष्ट्वागांगेयंरथिनांवरम् २ व्यासादीनभिवाद्यर्षीन्सर्वैस्तैश्चाभिनंदिताः ॥ निषेदुरभितोभीष्मंपरिवार्यसमंततः ३ ततोराजामहातेजाधर्मराजोयुधिष्ठिरः ॥ अब्रवीत्प्रांजलिर्भीष्मंप्रतिपूज्ययथाविधि ४ ॥ युधिष्ठिरउवाच ॥ यएषराजन्राजेतिशब्दश्चरतिभारत ॥ कथमेषसमुत्पन्नस्तन्मेब्रूहिपरंतप ५ तुल्यपाणिभुजग्रीवस्तुल्यबुद्धींद्रियात्मकः ॥ तुल्यदुःखसुखात्माचतुल्यपृष्ठभुजोदरः ६ तुल्यशुक्रास्थिमज्जाचतुल्यमांसासृगेवच ॥ निःश्वासोच्छ्वासतुल्यश्चतुल्यप्राणशरीरवान् ७ समानजन्ममरणःसमःसर्वगुणैर्नृणाम् ॥ विशिष्टबुद्धीन्शूरांश्चकथमेकोऽधितिष्ठति ८ कथमेकोमहींकृत्स्नांशूरवीरार्यसंकुलाम् ॥ रक्षत्यपिचलोकस्यप्रसादमभिवांछति ९ एकस्यतुप्रसादेनकृत्स्नोलोकःप्रसीदति ॥ व्याकुलेचाकुलःसर्वोभवतीतिविनिश्चयः १० एतदिच्छाम्यहंश्रोतुंतत्त्वेनभरतर्षभ ॥ कृत्स्नंतन्मेयथातत्त्वंप्रब्रूहिवदतांवर ११ नैतत्कारणमल्पंहिभविष्यतिविशांपते ॥ यदेकस्मिन्जगत्सर्वंदेववद्यातिसन्नतिम् १२ ॥ भीष्मउवाच ॥ नियतस्त्वंनरव्याघ्रशृणुसर्वमशेषतः ॥ यथाराज्यंसमुत्पन्नमादौकृतयुगेऽभवत् १३ नवैराज्यंनराजासीन्नचदंडोनदांडिकः ॥ धर्मेणैवप्रजाःसर्वारक्षंतिस्मपरस्परम् १४ पाल्यमानास्तथाऽन्योन्यंनराधर्मेणभारत ॥ खेदंपरमुपाजग्मुस्ततस्तान्मोहआविशत् १५ तेमोहवशमापन्नामनुजामनुजर्षभ ॥ प्रतिपत्तिविमोहाच्चधर्मस्तेषामनीनशत् १६ नष्टायांप्रतिपत्तौचमोहवश्यानरास्तदा ॥ लोभस्यवशमापन्नाःसर्वेभरतसत्तम १७ अप्राप्तस्याभिमर्शंतुकुर्वंतोमनुजास्ततः ॥ कामोनामापरस्तत्रप्रत्यपद्यतवैप्रभो १८ तांस्तुकामवशंप्राप्तान्रागोनामाभिसंस्पृशत् ॥ रक्ताश्चनाभ्यजानंतकार्याकार्यंयुधिष्ठिर १९ अगम्यागमनंचैववाच्यावाच्यंतथैवच ॥ भक्ष्याभक्ष्यंचराजेंद्रदोषादोषंचनात्यजन् २० विप्लुतेनरलोकेऽस्मिन्ब्रह्मचैवननाशह ॥ नाशाच्चब्रह्मणोराजन्धर्मोनाशमथागमत् २१



मातृवत्स्नेहेनभृत्यवद्वेतनेनवा खेदंश्रमं मोहोवैचित्त्यं १५ प्रतिपत्तिविमोहाज्ज्ञानलोपात् १६ प्रथमंज्ञानलोपस्ततोमोहस्ततोलोभोलोभाद्विषयाभिलाषोऽभिलषितसंयोगादिंद्रियप्रीत्याख्यः कामस्ततस्तद्विषयेरागोरागात्कर्तव्याकर्तव्यप्रतिपत्तिशून्यत्वंततःपुनर्मोहइत्यादिचक्रमाह नष्टायामितित्रिभिः १७।१८।१९ नात्यजन्दुष्टमदुष्टंच सर्वस्वीचक्रुरित्यर्थः २० ब्रह्मवेदः धर्मोयज्ञः२१

२२ । २३ । २४ मर्त्यैःसमतांयाताःस्म स्वाहाद्यभावेनक्षीणाःस्मइत्यर्थः २५ नरायजमानाहविर्भिरामिरूर्ध्वंप्रवर्षिणः ततश्चान्नाभावान्नश्यामइत्यर्थः २६ नोऽस्माकंस्वभावऐश्वर्यंसत्यसंकल्पत्वादिकम् २७ । २८ । २९ पृथगर्थस्त्रिवर्गफलापेक्षयाविपरीतफलः पृथग्गुणस्त्रिवर्गसाधनापेक्षयाविपरीतसाधनः ३० मोक्षस्यत्रिवर्गोधर्मादिरन्योनिष्कामः धर्मादिभेदश्चसत्त्वादिगुणप्राधान्यनिमित्तइत्यर्थः दंडात्स्थानंसाम्यंवणिजां वृद्धिस्तपस्विनां क्षयश्चोराणांचभवतीत्याद्यार्थेन स्थानमितिवि३१नीतिजान्षड्गुणानाह आत्मेति आत्माचित्तंनीतिबलात्प्रजानांचित्तंदुःस्थितमपिसुस्थितंभवतिकुदेशोपिसुदेशोभवतिकालिरपिकृतंभवति । उपायाःसाधनानि । कृत्यंकृतिनिर्वर्त्यंप्रयोजनं । सहायाःसुहृदादयः । एतेसर्वेविकलाअपिसकलाभवंति तत्रकारणंनीतिजःषड्गोंनीतिमो

नष्टेब्रह्मणिधर्मेचदेवांस्त्रासःसमाविशत् ॥ तेत्रस्तानरशार्दूलब्रह्माणंशरणंययुः २२ प्रसाद्यभगवंतंतेदेवंलोकपितामहम् ॥ ऊचुःप्रांजलयःसर्वेदुःखवेगसमाहताः २३ भगवन्नरलोकस्थंग्रस्तंब्रह्मसनातनम् ॥ लोभमोहादिभिर्भावैस्ततोनोभयमाविशत् २४ ब्रह्मणश्चप्रणाशेनधर्मोप्यनशदीश्वर ॥ ततःस्मसमतांयातामर्त्यैस्त्रिभुवनेश्वर २५ अधोहिवर्षमस्माकंनरास्तूर्ध्वप्रवर्षिणः ॥ क्रियाव्युपरमात्तेषांततोगच्छामसंशयम् २६ अत्रनिःश्रेयसंप्राप्तंतद्ध्यायस्वपितामह ॥ त्वत्प्रभावसमुत्थोऽसौस्वभावोनोविनश्यति २७ तानुवाचसुरान्सर्वान्स्वयंभूर्भगवांस्ततः ॥ श्रेयोऽहंचिंतयिष्यामिव्येतुवोभीःसुरर्षभाः २८ ततोऽध्यायसहस्राणांशतंचक्रेस्वबुद्धिजम् ॥ यत्रधर्मस्तथैवार्थःकामश्चैवाभिवर्णितः २९ त्रिवर्गइतिविख्यातोगणएषस्वयंभुवा ॥ चतुर्थोमोक्षइत्येवपृथगर्थःपृथग्गुणः ३० मोक्षस्याप्तित्रिवर्गोन्यःप्रोक्तःसत्त्वंरजस्तमः ॥ स्थानंवृद्धिःक्षयश्चैवत्रिवर्गश्चैवदंडजः ३१ आत्मादेशश्चकालश्चाप्युपायाःकृत्यमेवच ॥ सहायाःकारणंचैवषड्वर्गोनीतिजःस्मृतः ३२ त्रयीचान्वीक्षिकीचैववार्ताचभरतर्षभ ॥ दंडनीतिश्चविपुलाविद्यास्तत्रनिदर्शिताः ३३ अमात्यरक्षाप्रणिधीराजपुत्रस्यलक्षणम् ॥ चारश्चविविधोपायःप्रणिधेयःपृथग्विधः ॥ सामभेदःप्रदानंचततोदंडश्चपार्थिव ॥ उपेक्षापंचमीचात्रकात्स्न्येनसमुदाहृता ३५ मंत्रश्चवर्णितःकृत्स्नस्तथाभेदार्थएवच ॥ विभ्रमश्चैवमंत्रस्यसिद्ध्यसिद्ध्योश्चयत्फलम् ३६ संधिश्चत्रिविधाभिख्योहीनोमध्यस्तथोत्तमः ॥ भयसत्कारवित्ताख्यंकार्त्स्न्येनपरिवर्णितम् ३७ यात्राकालाश्चचत्वारस्त्रिवर्गस्यचविस्तरः ॥ विजयोधर्मयुक्तश्चतथार्थविजयश्चह ३८ आसुरश्चैवविजयस्तथाकार्त्स्न्येनवर्णितः ॥ लक्षणंपंचवर्गस्यत्रिविधंचात्रवर्णितम् ३९ प्रकाशश्चाप्रकाशश्चदंडोऽथपरिशब्दितः ॥ प्रकाशोऽष्टविधस्तत्रगुह्यश्चबहुविस्तरः ४० रथानागाहयाश्चैवपादाताश्चैवपांडव ॥ विष्टिर्नावश्चराश्चैवदेशिकाइतिचाष्टमम् ४१

क्षंभितस्त्रिचादिरित्यर्थः ३३ त्रयीकर्मकांडः । आन्वीक्षिकीज्ञानकांडः । वार्ताकृषिवाणिज्यादिजीविकाकांडः । दंडनीतिःपालनविद्या । एतेधर्मादयस्तत्रब्रह्मकृतशतसहस्राध्यायेदर्शिताः ३३ भेदशंकयाऽमात्यानामपरीक्षाकर्तव्यातदर्थंप्रणिधिर्गुप्तश्चारः सचचारोविविधोपायः ब्रह्मचार्यादिवेषधारी प्रणिधेयःपृथग्विधः एकैकस्मिन्स्थानेपृथक्पृथक्त्रयोऽप्यज्ञातत्वं ३४ सामादिचतुष्टयमुपेक्षाचपंचभीत्युपायाः ३५ विभ्रमोभेदार्थे ३६ भयेनसंधिर्हीनः । सत्कारेणमध्यमः । वित्तग्रहणेनोत्तमः । तत्त्रयंसंधिकारणंवर्णितम् ३७ चत्वारोमित्रवृद्धिकोशसंचयश्चस्वस्य मित्रनाशःकोशहानिश्चपरस्येति ३८ आसुरोविजयःसौप्तिकेगतः । पंचवर्गोऽमात्यराष्ट्रदुर्गाणिबलंकोशश्चपंचमः । त्रिविधमुत्तममध्यमाधमभेदेन ३९ दंडःसेना । 'दंडोऽस्त्रीलगुडेपुमान्' इत्युपक्रम्य 'सैन्येकालेमानभेदे' इतिमेदिनी ४० विष्टिर्वेष्टिग्रहीताभारवाहाः चराश्चाराः देशिकाउपदेष्टारोगुरवः ४१

 

जंगमामहाहिवृश्चिकादिजाः अजंगमाःरकशृंगिकादयः ४२ स्पर्शेवस्त्रादौ अभ्यवहार्येऽन्नादौ उपांशुरभिचारादिरितिविविधोविषयोगरूपोदंडः ४३ मार्गगुणाःग्रहनक्षत्रादिमार्गगुणाः । भूमिगुणाश्च सुरक्षीतिभुवलानियामलोकानि आत्मरक्षणंमंत्रयंत्रादिना । सर्गाणांरथादिनिर्माणानाम् ४४ कल्पनाःबलपुष्टिकरायोगाः । विविधाभिख्याश्चक्रव्यूहक्रौंचव्यूहादिनानानामानः ४५ उत्पाताःग्रहयुद्धादयोधूमकेत्वादयश्च । निपाताःउल्कापातभूमिकंपादयः । शस्त्राणांपालनंतीक्ष्णीकरणम् ४६ पीडाचआपदांसमूहआपद्दंतस्यकालआपदकालः ४७ आख्यातमभिमंत्रितदुंदुभिध्वनिनामयाणादिकथनं योगःपताकादिमंत्रणादि तयोःसंचारःश्रवणदर्शनाभ्यांपरमोहनं एतत्सर्वंतत्रउक्तमितिसंत्रयोज्यम् ४८ गरदैःविषदैः प्रतिरूपकंप्रतिमातत्कारकैस्तद्द्वाराकार्मणका

अंगान्येतानिकौरव्यप्रकाशानिबलस्यतु ॥ जंगमाजंगमाश्चोक्ताश्चूर्णयोगाविषादयः ४२ स्पर्शेचाभ्यवहार्येचाप्युपांशुर्विविधःस्मृतः ॥ अरिर्मित्रउदासीन इत्येतेऽप्यनुवर्णिताः ४३ कृत्स्नामार्गगुणाश्चैवतथाभूमिगुणाश्चह ॥ आत्मरक्षणमाश्वासःस्पर्शानांचान्ववेक्षणम् ४४ कल्पनाविविधाश्चापिनृनागरथवाजिनां व्यूहाश्चविविधाभिख्याविचित्रंयुद्धकौशलम् ४५ उत्पाताश्चनिपाताश्चसुयुद्धंसुपलायितम् ॥ शस्त्राणांपालनंज्ञानंतथैवभरतर्षभ ४६ बलव्यसनयुक्तंचतथैवबलहर्षणम् ॥ पीडाचापदकालश्चपत्तिज्ञानंचपांडव ४७ तथाख्यातविधानंचयोगःसंचारएवच ॥ चोरैराटविकैश्चोग्रैःपरराष्ट्रस्यपीडनम् ४८ अग्निदैर्गरदैश्चैवप्रतिरूपककारकैः ॥ श्रेणिमुख्योपजापेनवीरुधश्छेदनेनच ४९ दूषणेनचनागानामातंकजननेनच ॥ आराधनेनभक्तस्यप्रत्ययोपार्जनेनच ५० सप्तांगस्यचराज्यस्यह्रासवृद्धीसमंजसम् ॥ दूतसामर्थ्यसंयोगात्स्वराष्ट्रस्यविवर्धनम् ५१ अरिमध्यस्थमित्राणांसम्यक्चोक्तंप्रपंचनम् ॥ अवमर्दःप्रतीघातस्तथैवचबलीयसाम् ५२ व्यवहारःसुसूक्ष्मश्चतथाकंटकशोधनम् ॥ श्रमोव्यायामयोगश्चत्यागोद्रव्यस्यसंग्रहः ५३ अभृतानांचभरणंभृतानांचान्ववेक्षणम् ॥ अर्थस्यकालेदानंचव्यसनेचाप्रसंगिता ५४ तथाराजगुणाश्चैवसेनापतिगुणाश्चह ॥ कारणंचत्रिवर्गस्यगुणदोषास्तथैवच ५५ दुश्चेष्टितंचविविधंवृत्तिश्चैवानुवर्तिनाम् ॥ शंकितत्वंचसर्वस्यप्रमादस्यचवर्जनम् ५६ अलब्धलाभोलब्धस्यतथैवचविवर्धनम् ॥ प्रदानंचविवृद्धस्यपात्रेभ्योविधिवत्ततः ५७ विसर्गोऽर्थस्यधर्मार्थंकामहेतुकमुच्यते ॥ चतुर्थंव्यसनाघातेतथैवात्रानुवर्णितम् ५८ क्रोधजानितथोग्राणिकामजानितथैवच ॥ दशोक्तानिकुरुश्रेष्ठव्यसनान्यत्रचैवह ५९ मृगयाक्षास्तथापानंस्त्रियश्चभरतर्षभ ॥ कामजान्याहुराचार्याःप्रोक्तानीहस्वयंभुवा ६० वाक्पारुष्यंतथोग्रत्वंदंडपारुष्यमेवच ॥ आत्मनोनिग्रहस्त्यागोह्यर्थदूषणमेवच ६१ यंत्राणिविविधान्येवक्रियास्तेषांचवर्णिताः ॥ अवमर्दःप्रतीघातःकेतनानांचभंजनम् ६२

रिभिःकौलिकैः श्रेणिमुख्याबलाध्यक्षादयस्तेषामुपजापोभेदनंतेन वीरुधश्छेदनेनधान्याद्युच्छेदेन ४९ नागानांदूषणंमंत्रतंत्रौषधादिनातेन प्रत्ययोपार्जनेनविश्वासोत्पादनेनचपरराष्ट्रस्य पीडनमुक्तमितिप्रपूर्वेणसंबंधः ५० समंजसंसमत्वम् ५१ । ५२ कंटकशोधनंखलानामुन्मूलनं श्रमोमल्लक्रीडा व्यायामयोगःआयुधप्रयोगाभ्यासः त्यागोदानं ५३ अप्रसंगिताअसंबंधः ५४ राजगुणाःउत्थानादयः सेनापतिगुणाःमौलतादयः ५५ । ५६ पात्रेभ्यःप्रदानंप्रथमम् ५७ विसर्गइति विसर्गोदानंधर्मार्थं यज्ञार्थंद्वितीयं काम्यंतृतीयं व्यसनाघातेचतुर्थम् ५८ । ५९ । ६० परिशेषात्वाक्पारुष्यादीनिषट्क्रोधजानि आत्मनोदेहस्य ६१ अवमर्दःपरचक्रेणदेशादेःपीडनम् ६२ 

कर्मांतःकृष्यादिफलंतत्रानुशासनंरोधः अपस्कारउपकारणानि वसनंकवचादिकं उपायास्तन्निर्माणेयुक्तयः ६३ तानिद्रव्याणिषट् 'मणयःपशवःपृथ्वीवासोदास्यादिकांचनम्'इति ६४।६५ मंगलंस्वर्णादिकंतस्यालंभनंस्पर्शः प्रतिक्रियाअलंकरणं ६६ एकस्याप्युत्थानप्रकारः केतनजाःगृहजाःक्रियाःध्वजारोहणाद्याः ६७ अधिकरणेषुजनोपवेशनस्थानेषुचत्वरादिषु ६८ जातितोगुण

चैत्यद्रुमावमर्दश्चरोधःकर्मानुशासनम् ॥ अपस्करोऽथवसनंतथोपायाश्चवर्णिताः ६३ पणवानकशंखानांभेरीणांचयुधिष्ठिर ॥ उपार्जनंचद्रव्याणांपरिमर्दश्चतानिषट् ६४ लब्धस्यचप्रशमनंसतांचैवाभिपूजनम् ॥ विद्वद्भिरेकीभावश्चदानहोमविधिज्ञता ६५ मंगलालंभनंचैवशरीरस्यप्रतिक्रिया ॥ आहारयोजनंचैवनित्यमास्तिक्यमेवच ६६ एकेनचयथोत्थेयंसत्यत्वंमधुरागिरः ॥ उत्सवानांसमाजानांक्रियाःकेतनजास्तथा ६७ प्रत्यक्षाश्चपरोक्षाश्चसर्वाधिकरणेष्वथ ॥ वृत्तेर्भरतशार्दूलनित्यंचैवान्ववेक्षणम् ६८ अदंड्यत्वंचविप्राणांयुक्त्यादंडनिपातनम् ॥ अनुजीविस्वजातिभ्योगुणेभ्यश्चसमुद्भवः ६९ रक्षणंचैवपौराणांराष्ट्रस्यचविवर्धनम् ॥ मंडलस्थाचयाचिंताराजन्द्वादशराजिका ७० द्वासप्ततिविधाचैवशरीरस्यप्रतिक्रिया ॥ देशजातिकुलानांचधर्माःसमनुवर्णिताः ७१ धर्मश्चार्थश्चकामश्चमोक्षश्चात्रानुवर्णिताः ॥ उपायाश्चार्थलिप्साचविविधाभूरिदक्षिण ७२ मूलकर्मक्रियाचात्रमायायोगश्चवर्णितः ॥ दूषणंस्रोतसांचैववर्णितंचास्थिराम्भसां ७३ यैर्यैरुपायैर्लोकस्तुनचलेदार्यवर्त्मनः ॥ तत्सर्वंराजशार्दूलनीतिशास्त्रेऽभिवर्णितम् ७४ एतत्कृत्वाशुभंशास्त्रंततःसभगवान्प्रभुः ॥ देवानुवाचसंहृष्टःसर्वाञ्छक्रपुरोगमान् ७५ उपकारायलोकस्यत्रिवर्गस्थापनायच ॥ नवनीतंसरस्वत्याबुद्धिरेषाप्रभाविता ७६ दंडेनसहिताह्येषालोकरक्षणकारिका ॥ निग्रहानुग्रहरतालोकाननुचरिष्यति ७७ दंडेननीयतेचेदंदंडंनयतिवापुनः ॥ दंडनीतिरितिख्यातात्रीन्लोकानभिवर्तते ७८ षाड्गुण्यगुणसारैषास्थास्यत्यग्रेमहात्मसु ॥ धर्मार्थकाममोक्षाश्चसकलाह्यत्रशब्दिताः ७९ ततस्तांभगवान्नीतिंपूर्वंजग्राहशंकरः ॥ बहुरूपोविशालाक्षःशिवःस्थाणुरुमापतिः ८० प्रजानामायुषोह्रासंविज्ञायभगवाञ्शिवः ॥ संचिक्षेपततःशास्त्रंमहार्थंब्रह्मणाकृतम् ८१ वैशालाक्षमितिप्रोक्तंतदिंद्रःप्रत्यपद्यत ॥ दशाध्यायसहस्राणिसुब्रह्मण्योमहातपाः ८२ भगवानपितच्छास्त्रंसंचिक्षेपपुरंदरः ॥ सहस्रैःपंचभिस्तातयदुक्तंबाहुदंतकम् ८३ अध्यायानांसहस्रैस्तुत्रिभिरेवबृहस्पतिः ॥ संचिक्षेपेश्वरोबुद्ध्याबार्हस्पत्यंतदुच्यते ८४ अध्यायानांसहस्रेणकाव्यःसंक्षेपमब्रवीत् ॥ तच्छास्त्रममितप्रज्ञोयोगाचार्योमहायशाः ८५ एवंलोकानुरोधेनशास्त्रमेतन्महर्षिभिः ॥ संक्षिप्तमायुर्विज्ञायमर्त्यानांह्रासमेवच ८६

तश्चसमुद्भवोमान्यत्वं ६९ द्वादशानांराज्ञांसमूहोद्वादशराजिका मध्यस्थस्यविजिगीषोश्चतुर्दिक्षुचत्वारोऽरयस्तेभ्योऽपरेचत्वारोमित्राणितेभ्यापरे चत्वारउदासीनाइति ७० द्वासप्ततिविधावैद्यशास्त्रप्रसिद्धाप्रतिक्रिया संस्कारःशौचाभ्यंगादिः ७१ हेभूरिदक्षिण ७२ मूलकर्माणिकोशवृद्धिकराणिकृष्यादीनि तेषांक्रियाकरणप्रकारः ७३ । ७४ । ७५ । ७६ । ७७ नीयतेपुरुषार्थफलाय इदंजगत् दंडंनयतिप्रणयतिअनयाचेतिवा ७८ । ७९ । ८० संचिक्षेपसंक्षिप्तंकृतवान् ८१ वैशालाक्षंबाहुदंतकंबार्हस्पत्यमित्युत्तरोत्तरसंक्षिप्तदंडनीतिग्रंथनामानि ८२ । ८३ । ८४ । ८५ । ८६

एवंशास्त्रोत्पत्तिमुक्त्वानृपोत्पत्तिमाह अथेत्यादिना ८७ । ८८ । ८९ पंचातिगःविषयातिगःमुक्तः ९० अनंगइत्यंगस्यैवनामांतरं ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ । ९८ । ९९

अथदेवाःसमागम्यविष्णुमूचुःप्रजापतिं ॥ एकोयोऽर्हतिमर्त्येभ्यःश्रेष्ठ्यंवैतंसमादिश ८७ ततःसंचिन्त्यभगवान्देवोनारायणःप्रभुः ॥ तैजसंवैविरजसंसोऽसृजन्मानसंसुतम् ८८ विरजास्तुमहाभागःप्रभुत्वंभुविनैच्छत ॥ न्यासायैवाभवद्बुद्धिःप्रणीतातस्यपांडव ८९ कीर्तिमांस्तस्यपुत्रोभूत्सोऽपिपंचातिगोऽभवत् ॥ कर्दमस्तस्यतुसुतःसोऽप्यतप्यन्महत्तपः ९० प्रजापतेःकर्दमस्यत्वनंगोनामवैसुतः ॥ प्रजारक्षयितासाधुर्दंडनीतिविशारदः ९१ अनंगपुत्रोऽतिबलोनीतिमानभिगम्यवै ॥ प्रतिपेदेमहाराज्यमथेंद्रियवशोऽभवत् ९२ मृत्योस्तुदुहितराजन्सुनीथानाममानसी ॥ प्रख्यातात्रिषुलोकेषुयाऽसौवेनमजीजनत् ९३ तंप्रजासुविधर्माणंरागद्वेषवशानुगम् ॥ मंत्रपूतैःकुशैर्जघ्नुर्ऋषयोब्रह्मवादिनः ९४ ममंथुर्दक्षिणंचोरुमृषयस्तस्यमंत्रतः ॥ ततोऽस्यविकृतोजज्ञेह्रस्वांगःपुरुषोभुवि ९५ दग्धस्थूणाप्रतीकाशोरक्ताक्षःकृष्णमूर्धजः ॥ निषीदेत्येवमूचुस्तमृषयोब्रह्मवादिनः ९६ तस्मान्निषादाःसंभूताःक्रूराःशैलवनाश्रयाः ॥ येचान्येविंध्यनिलयाम्लेच्छाःशतसहस्रशः ९७ भूयोस्यदक्षिणंपाणिंममंथुस्तेमहर्षयः ॥ ततःपुरुषउत्पन्नोरूपेणेंद्रइवापरः ९८ कवचीबद्धनिस्त्रिंशःसशरःसशरासनः ॥ वेदवेदांगविच्चैवधनुर्वेदेचपारगः ९९ तंदंडनीतिःसकलाश्रितराजन्नरोत्तमं ॥ ततस्तुप्रांजलिर्वैन्योमहर्षीस्तानुवाचह १०० सुसूक्ष्मामेसमुत्पन्नाबुद्धिर्धर्मार्थदर्शिनी ॥ अनयाकिंमयाकार्यंतन्मेतत्त्वेनशंसत १ यन्मांभवंतोवक्ष्यंतिकार्यमर्थसमन्वितम् ॥ तदहंवैकरिष्यामिनात्रकार्याविचारणा २ तमूचुस्तत्रदेवास्तेतेचैवपरमर्षयः ॥ नियतोयत्रधर्मोवैतमशंकःसमाचर ३ प्रियाप्रियेपरित्यज्यसमःसर्वेषुजंतुषु ॥ कामंक्रोधंचलोभंचमानंचोत्सृज्यदूरतः ४ यश्चधर्मात्प्रविचलेल्लोकेकश्चनमानवः ॥ निग्राह्यस्तेस्वबाहुभ्यांशश्वद्धर्ममवेक्षता ५ प्रतिज्ञांचाधिरोहस्वमनसाकर्मणागिरा ॥ पालयिष्याम्यहंभौमंब्रह्मइत्येवचासकृत् ६ यश्चात्रधर्मोनित्योक्तोदंडनीतिव्यपाश्रयः ॥ तमशंकःकरिष्यामिस्ववशोनकदाचन ७ अदंड्यामेद्विजाश्चेतिप्रतिजानीहिहेविभो ॥ लोकंचसंकरात्कृत्स्नंत्रातास्मीतिपरंतप ८ वैन्यस्ततस्तानुवाचदेवानृषिपुरोगमान् ॥ ब्राह्मणामेमहाभागानमस्याःपुरुषर्षभाः ९ एवमस्त्वितिवैन्यस्तुतैरुक्तोब्रह्मवादिभिः ॥ पुरोधाश्चाभवत्तस्यशुक्रोब्रह्ममयोनिधिः ११० मंत्रिणोवालखिल्याश्चसारस्वत्योगणस्तथा ॥ महर्षिर्भगवान्गर्गस्तस्यसांवत्सरोऽभवत् ११ आत्मनाष्टमइत्येवश्रुतिरेषापरानृषु ॥ उत्पन्नौवंदिनौचास्यतत्पूर्वौसूतमागधौ १२ तयोःप्रीतोददौराजापृथुर्वैन्यःप्रतापवान् ॥ अनूपदेशंसूतायमगधंमागधायच १३ समतांवसुधायाश्चससम्यगुदपादयत् ॥ वैषम्यंहिपरंभूमेरासीदितिचनःश्रुतम् ११४

१०० । १ । २ । ३ । ४ । ५ । ६ स्ववशःस्वामींद्रियाधितद्वशः नकदाचनभविष्यामीतिशेषः स्वेतिस्वच्छःपाठः ७ । ८ । ९ । ११० सांवत्सरोज्यौतिषिकः ११ आत्मनास्वशरीरेणसहाष्टमःपृथुर्विष्णोःसकाशादित्यर्थः तथाहि विष्णुःप्रथमः विरजाद्वितीयः कीर्तिमांस्तृतीयः कर्दमश्चतुर्थः अनंगःपंचमः अतिबलःषष्ठः वेनःसप्तमः पृथुरष्टमइति १२ । १३ । ११४



११५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ प्रथितावनताचेतिविग्रहेवर्णलोपविकाराभ्यांपृथिवी २६ स्थापनंमर्यादा २७ । २८ दंडेति रक्षितव्यंराज्यं तत्रान्योनआधर्षयेत् तत्रहेतुःचाराणांनिष्पंदःसंचारस्तद्द्वारायद्दर्शनंलोकवृत्तांतस्यदुष्टपालनंततइत्यर्थः आत्मनाचित्तेनकारणैःक्रियाभिश्चसमस्यमहीक्षितःकर्मेतिसंबंधः २९ । १३० विष्णुर्भूमिपमाविवेशेत्युक्तंतत्रोपपत्तिःकइत्यर्धेन ३१ पत्नीपालयित्री ३२ । ३३ । ३४ स्थापितमभिषिक्तं एकस्यराज्ञोवशेइदंतिष्ठतितच्चेदंलक्ष्मीकस्यनविधीयतेइदंजगद्विधानसामर्थ्येनमवति ३५ तुल्यस्यहस्ताद्यवयवैःसमस्य ३६ अस्यराज्ञःसौम्यंमुखमद्राक्षीत्सुभगादिरूपंचैनंपश्यत्यस्यद्रष्टुःसराजावशानुगआज्ञाकारीविज्ञेयं ३७ महत्त्वादिति दंडसामर्थ्यादेवलोकेनीत्यादिकंदृश्यतइत्यर्थः ३८ आगमादिकंचात्रग्रंथेकीर्तितं १३९

मन्वंतरेषुसर्वेषुविषमाजायतेमही ॥ उज्जहारततोवैन्यःशिलाजालान्समंततः ११५ धनुष्कोट्यामहाराजतेनशैलाविवर्धिताः ॥ सविष्णुनाचदेवेनशक्रेणविबुधैःसह १६ ऋषिभिश्चप्रजापालैर्ब्राह्मणैश्चाभिषेचितः ॥ तंसाक्षात्पृथिवीभेजेरत्नान्यादायपांडव १७ सागरःसरितांभर्ताहिमवांश्चाचलोत्तमः ॥ शक्रश्चधनमक्षय्यंप्रादात्तस्मैयुधिष्ठिर १८ रुक्मंचापिमहामेरुःस्वयंकनकपर्वतः ॥ यक्षराक्षसभर्ताचभगवान्नरवाहनः १९ धर्मेचार्थेचकामेचसमर्थंप्रददौधनम् ॥ हयारथाश्चनागाश्चकोटिशःपुरुषास्तथा १२० प्रादुर्बभूवुर्वैन्यस्यचिंतनादेवपांडव ॥ नजरानचदुर्भिक्षंनाधयोव्याधयस्तथा २१ सरीसृपेभ्यःस्तेनेभ्योनचान्योन्यात्कदाचन ॥ भयमुत्पद्यतेतत्रतस्यराज्ञोऽभिरक्षणात् २२ आपस्तस्तंभिरेचास्यसमुद्रमभियास्यतः ॥ पर्वताश्चददुर्मार्गंध्वजभंगश्चनाभवत् २३ तेनेयंपृथिवीदुग्धासस्यानिदशसप्तच ॥ यक्षराक्षसनागैश्चापीप्सितंयस्ययस्ययत् २४ तेनधर्मोत्तरश्चायंकृतोलोकोमहात्मना ॥ रंजिताश्चप्रजाःसर्वास्तेनराजेतिशब्द्यते २५ ब्राह्मणानांक्षतत्राणात्ततःक्षत्रियउच्यते ॥ प्रथिताधर्मतश्चेयंपृथिवीबहुभिःस्मृता २६ स्थापनंचाकरोद्विष्णुःस्वयमेवसनातनः ॥ नातिवर्तिष्यतेकश्चिद्राजंस्त्वामितिभारत २७ तपसाभगवान्विष्णुराविवेशचभूमिपम् ॥ देववन्नरदेवानांनमतेयंजगन्नृपम् २८ दंडनीत्याचसततंरक्षितव्यंनरेश्वर ॥ नाधर्षयेत्तथाकश्चिच्चारनिष्पंददर्शनात् २९ शुभंहिकर्मराजेंद्रशुभत्वायोपकल्पते ॥ आत्मनाकारणैश्चैवसमस्येहमहीक्षितः १३० कोहेतुर्यद्वशेतिष्ठेल्लोकोदैवादृतेगुणात् ॥ विष्णोर्ललाटात्कमलंसौवर्णमभवत्तदा ३१ श्रीःसंभूतायतोदेवीपत्नीधर्मस्यधीमतः ॥ श्रियःसकाशादर्थश्चजातोधर्मेणपांडव ३२ अथधर्मस्तथैवार्थःश्रीश्चराज्येप्रतिष्ठिता ॥ सुकृतस्यक्षयाच्चैवस्वर्लोकादेत्यमेदिनीम् ३३ पार्थिवोजायतेतातदंडनीतिविशारदः ॥ महत्त्वेनचसंयुक्तोवैष्णवेननरोभुवि ३४ बुद्ध्याभवतिसंयुक्तोमाहात्म्यंचाधिगच्छति ॥ स्थापितंचततोदेवैर्नकश्चिदतिवर्तते ॥ तिष्ठत्येकस्यचवशेतंचेदंनविधीयते ३५ शुभंहिकर्मराजेंद्रशुभत्वायोपकल्पते ॥ तुल्यस्यैकस्ययस्यायंलोकोवचसितिष्ठते ३६ योऽस्यवैमुखमद्राक्षीत्सौम्यंसोऽस्यवशानुगः ॥ सुभगंचार्थवंतंचरूपवंतंचपश्यति ३७ महत्त्वात्तस्यदंडस्यनीतिर्विस्पष्टलक्षणा ॥ नयचारश्चविपुलोयेनसर्वमिदंततम् ३८ आगमश्चपुराणानांमहर्षीणांचसंभवः ॥ तीर्थवंशश्चवंशश्चनक्षत्राणांयुधिष्ठिर १३९

१४० । ४१। ४२ ।४३ । ४४ । ४५ ॥ इतिशांतिप॰रा॰नी॰भारतभाव॰एकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ततःपुनरिति १ सर्ववर्णानामनुलोमविलोमजादीनांचातुर्वर्ण्यस्ययेआश्रमाःब्राह्मण

सकलंचातुराश्रम्यंचातुर्होत्रंतथैवच ॥ चातुर्वर्ण्यंतथैवात्रचातुर्विद्यंचकीर्तितम् १४० इतिहासाश्चवेदाश्चन्यायश्चकृत्स्नश्चवर्णितः ॥ तपोज्ञानमहिंसाचसत्या
सत्येनयःपरः ४१ वृद्धोपसेवादानंचशौचमुत्थानमेवच ॥ सर्वभूतानुकंपाचसर्वमत्रोपवर्णितम् ४२ भुविवाचोगतंयच्चतच्चसर्वंसमर्पितं ॥ तस्मिन्पैतामहेशा
स्त्रेपांडवैतन्नसंशयः ४३ ततोजगतिराजेंद्रसततंशब्दितंबुधैः ॥ देवाश्चनरदेवाश्चतुल्याइतिविशांपते ४४ एततेसर्वमाख्यातंमहत्त्वंप्रतिराजसु ॥ कात्स्न्येन
भरतश्रेष्ठकिमन्यदिहवर्तते १४५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिसूत्राध्यायेएकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ५ ॥ ॥
वैशंपायनउवाच ॥ ततःपुनःसगांगेयमभिवाद्यपितामहम् ॥ प्रांजलिर्नियतोभूत्वापर्यपृच्छद्युधिष्ठिरः १ केधर्माःसर्ववर्णानांचातुर्वर्ण्यस्यकेपृथक् ॥ चातुर्वर्ण्या
श्रमाणांचराजधर्माश्चकेमताः २ केनवैवर्धतेराष्ट्रंराजाकेनविवर्धते ॥ केनपौराश्चभृत्याश्चवर्धंतेभरतर्षभ ३ कोशंदंडंचदुर्गंचसहायान्मंत्रिणस्तथा ॥ ऋत्विक्पु
रोहिताचार्यान्कीदृशान्वर्जयेन्नृपः ४ केषुविश्वसितव्यंस्याद्राज्ञाकस्यांचिदापदि ॥ कुतोवाऽऽत्माद्दढंरक्ष्यस्तन्मेब्रूहिपितामह ५ ॥ भीष्मउवाच ॥ नमोध
र्मायमहतेनमःकृष्णायवेधसे ॥ ब्राह्मणेभ्योनमस्कृत्यधर्मान्वक्ष्यामिशाश्वतान् ६ अक्रोधःसत्यवचनंसंविभागःक्षमातथा ॥ प्रजनःस्वेषुदारेषुशौचमद्रोहएवच
७ आर्जवंभृत्यभरणंनवैतेसार्ववर्णिकाः ॥ ब्राह्मणस्यतुयोधर्मस्तंतेवक्ष्यामिकेवलम् ८ दममेवमहाराजधर्ममाहुःपुरातनम् ॥ स्वाध्यायाभ्यसनंचैवतत्रकर्मसमा
प्यते ९ तंचेद्विजमुपागच्छेद्वर्तमानंस्वकर्मणि ॥ अकुर्वाणंविकर्माणिशांतंप्रज्ञानतर्पितम् १० कुर्वीतापत्यसंतानमथोदद्याद्यजेतच ॥ संविभज्यचभोक्तव्यं
धनंसद्भिरितीर्यते ११ परिनिष्ठितकार्यस्तुस्वाध्यायेनैवब्राह्मणः ॥ कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते १२ क्षत्रियस्यापियोधर्मस्तंतेवक्ष्यामिभारत ॥
दद्याद्राजन्नयाचेतयजेतनचयाजयेत् १३ नाध्यापयेदधीयीतप्रजाश्चपरिपालयेत् ॥ नित्योद्युक्तोदस्युवधेरणेकुर्यात्पराक्रमम् १४ येतुक्रतुभिरीजानाःश्रुतवं
तश्चभूमिपाः ॥ यएवाहवजेतारस्तएषांलोकजित्तमाः १५ अविक्षतेनदेहेनसमराद्योनिवर्तते ॥ क्षत्रियोनास्यतत्कर्मप्रशंसंतिपुराविदः १६ एवंहिक्षत्रबंधूनांमार्गं
माहुःप्रधानतः ॥ नास्यकृत्यतमंकिंचिदन्यद्दस्युनिबर्हणात् १७ दानमध्ययनंयज्ञोराज्ञांक्षेमोविधीयते ॥ तस्माद्राज्ञाविशेषेणयोद्धव्यंधर्ममीप्सता १८ स्वेषुधर्मे
ष्ववस्थाप्यप्रजाःसर्वामहीपतिः ॥ धर्मेणसर्वकृत्यानिशमनिष्ठानिकारयेत् १९ परिनिष्ठितकार्यस्तुनृपतिःपरिपालनात् ॥ कुर्यादन्यन्नवाकुर्यादैंद्रोराजन्यउच्यते २०

स्यचत्वारआश्रमाः क्षत्रियस्यत्रयो वैश्यस्यद्वौ शूद्रस्यैकइतितेषां २ । ३ । ४ । ५ । ६ सर्ववर्णधर्मानाह अक्रोधइतिसार्धेन ७ । ८ तत्राध्ययने तावतैवनैष्ठिकःकृतार्थोभवतीत्यर्थः ९
स्वयमुपागतेविवेदारक्रियापूर्वकमपत्यसंतानमिच्छेत्सइत्याहद्वाभ्यां तंचेदिति १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०



२१ । २२ । २३ । २४ षण्णाधेनूनांरक्षकोवैश्यएकस्याःक्षीरंस्ववेतनंहरेत् शतस्यरक्षकोवर्षेएकंगोमिथुनंवेतनंहरेत् । वाणिज्येतुलब्धात्सप्तमंभागंधनिकाद्धरेत् गवयादिशृंगवाणिज्येलाभा
त्सप्तममेव । खुरेपशुविशेषखुरेमहामूल्ये कलाषोडशोभागः २५ एवंसस्यानामपिसप्तममेवांशंहरेत् २६ । २७ । २८ । २९ । ३० कुर्वीतसंचयानित्यपक्रुष्यते धार्मिकःकर्मप्रधानोनतुभोग
लोभप्रधानः ३१ औशीरंवेष्टनंवीरणमूलकृतंवाच्छदिः ३२ यातयामानिभुक्तभोगानिजीर्णानीतियावत् ३९ द्विजातीनामध्येयंकंचित्प्रति ३४ तेनद्विजातिना ३५ अतिरेकेणस्वकुटुंबपोष
णादाधिक्येनभर्तापोष्टा ३६ अन्यत्रभृत्याजितमपिधनंशूद्रस्यस्वामिनैवहार्यं यथोक्तं । 'त्रयएवाधनाराजन्भार्यादासस्तथासुतः ॥ यत्तेसमधिगच्छंतियस्यैतेतस्यतद्धनम्'इति तस्माद्युक्तमुक्तंभ

वैश्यस्यापिहियोधर्मस्तंतेवक्ष्यामिशाश्वतम् ॥ दानमध्ययनंयज्ञःशौचेनधनसंचयः २१ पितृवत्पालयेद्वैश्योयुक्तःसर्वान्पशूनिह ॥ विकर्मतद्भवेदन्यत्कर्मयत्स
समाचरेत् २२ रक्षयासहितेषांवैमहत्सुखमवाप्नुयात् ॥ प्रजापतिर्हिवैश्यायसृष्ट्वापरिददौपशून् २३ ब्राह्मणायचराज्ञेचसर्वाःपरिददेप्रजाः ॥ तस्यवृत्तिंप्रव
क्ष्यामियच्चतस्योपजीवनम् २४ षण्णामेकांपिबेद्धेनुंशताच्चमिथुनंहरेत् ॥ लब्धाच्चसप्तमंभागंतथाशृंगेकलाखुरे २५ सस्यानांसर्वबीजानामेषासांवत्सरीभृतिः ॥
नचवैश्यस्यकामःस्यान्नरक्षेयंपशूनिति २६ वैश्येचेच्छतिनान्येनरक्षितव्याःकथंचन ॥ शूद्रस्यापिहियोधर्मस्तंतेवक्ष्यामिभारत २७ प्रजापतिर्हिवर्णानांदा
संशूद्रमकल्पयत् ॥ तस्माच्छूद्रस्यवर्णानांपरिचर्याविधीयते २८ तेषांशुश्रूषणाच्चैवमहत्सुखमवाप्नुयात् ॥ शूद्रएतान्परिचरेत्त्रीन्वर्णाननुपूर्वशः २९ संचयां
श्चनकुर्वीतजातुशूद्रःकथंचन ॥ पापीयान्हिधनंलब्ध्वावशेकुर्याद्गरीयसः ३० राज्ञावासमनुज्ञातःकामंकुर्वीतधार्मिकः ॥ तस्यवृत्तिंप्रवक्ष्यामियच्चतस्योपजी
वनम् ३१ अवश्यंभरणीयोहिवर्णानांशूद्रउच्यते ॥ छत्रंवेष्टनमौशीरमुपानद्व्यजनानिच ३२ यातयामानिदेयानिशूद्रायपरिचारिणे ॥ अधार्याणिविशीर्णा
निवसनानिद्विजातिभिः ३३ शूद्रायैवप्रदेयानितस्यधर्मधनंहितत् ॥ यंचकंचिद्द्विजातीनांशूद्रःशुश्रूषुरावजेत् ३४ कल्प्यांतेनतुतेप्राहुर्वृत्तिंधर्मविदोजनाः ॥
देयःपिंडोऽनपत्यायभर्तव्यौवृद्धदुर्बलौ ३५ शूद्रेणतुनहातव्योभर्ताकस्यांचिदापदि ॥ अतिरेकेणभर्तव्योभर्ताद्रव्यपरिक्षये ३६ नहिस्वमस्तिशूद्रस्यभर्तृ
हार्यधनोहिसः ॥ उक्तस्त्रयाणांवर्णानांयज्ञस्तस्यचभारत ॥ स्वाहाकारवषट्कारौमंत्रःशूद्रेनविद्यते ३७ तस्माच्छूद्रःपाकयज्ञैर्यजेतान्नतवान्स्वयम् ॥ पूर्णं
पात्रमयीमाहुःपाकयज्ञस्यदक्षिणाम् ३८ शूद्रःपैजवनोनामसहस्राणांशतंददौ ॥ ऐंद्राग्नेनविधानेनदक्षिणामितिनःश्रुतम् ३९ यतोहिसर्ववर्णानांयज्ञस्तस्यैव
भारत ॥ अग्रेसर्वेषुयज्ञेषुश्रद्धायज्ञोविधीयते ४०

र्तृहार्यधनोहिसइति तस्यशूद्रस्यचामंत्रकोयज्ञोऽस्तीत्यर्थः ३७ तस्मादिति पाकयज्ञैः
क्षुद्रयज्ञैर्ग्रहशांतिवैश्वदेवादिभिर्यजेत अव्रतवान्श्रौतव्रतोपायहीनः 'अष्टमुष्टिर्भवेत्किंचित्किंचित्पुष्कलं ॥ पुष्कलानितुचत्वारिपूर्णपात्रंप्रचक्षते ' इत्युक्तलक्षणपूर्णपात्रमयी यज्ञेगवाभि
वपूर्णपात्राणामेवगणनायज्ञानुसारेण मंत्रास्तेषांपौराणिकानाममंत्रावाप्रणववर्जिताइतिसर्वंशूद्रपद्धत्युक्तंद्रष्टव्यं ३८ सहस्राणांशतंलक्षंपूर्णपात्राणि ऐंद्राग्नस्यविधिर्यथाश्रौतेचरोःपशोर्वावि
धिस्तथैवामंत्रकमस्यविधानंतेन ३९ ननु 'तस्माच्छूद्रोयज्ञेऽनवक्लृप्तः' इतिश्रुतेःकथमस्यामंत्रोऽपियज्ञइत्याशंक्याह यतइति सर्ववर्णानांत्रैवर्णिकानांयोयज्ञःसतस्यैवशूद्रस्यभवति
तस्यतत्सेवकत्वात् यथाहिश्रद्धयागुर्वग्नीन्परिचरतउपकोसलस्याग्नयोब्रह्मविद्यांददुः एवंश्रद्धयाब्राह्मणादीनाराधयतःशूद्रस्यापिब्राह्मणकृतयज्ञफलभागित्वमस्त्येवेत्यर्थः सार्धःश्लोकः ४०

४१ सृष्टयः संतानानि तेन सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः ४२ यद्भूयुस्तेतेतत्परं हितं वर्णैःसशूद्रैः सर्वयज्ञाः श्रौताःस्मार्ताश्चनकाम्यया स्वभावात्संसृज्यंत इति पूर्वस्यो पसंहारः ४३ अत्रहेतुमाह ऋगिति द्विजस्त्रैवर्णिकः पूज्यः शूद्रेणोपद्रवतीति तत्समीपगामित्वादुपद्रवो दासः शूद्रः सवेदहीनोऽपि प्राजापत्यः प्रजापतिदेवताकः यथाऽऽग्नेयो ब्राह्मण ऐंद्रः क्षत्रियस्तद्वत् तथाचमामसेदेवतोद्देशेनद्रव्यत्यागात्मकेयज्ञेसर्वेवर्णा अधिक्रियंत इत्यर्थः सार्धःश्लोकः ४४ अस्यमानस्यज्ञकर्तुर्देवाइतरेजनाश्च नईहंतेहतिनाऽपितुश्रद्धापूतत्वात्सर्वेऽप्यस्य यज्ञेभागंकामयंत इत्यर्थः नास्ययज्ञस्यताइतिपाठे एनंयज्ञंदेवा अपिकर्तुंनईहंतेनसमर्था भवंतीतियोज्यं ४५ नन्वग्निहीनस्यशूद्रस्यकथंपाकयज्ञेष्वधिकार इत्याशंक्याह 'स्वंदैवतंब्राह्मणःस्वेननित्यंपरान्वर्णानयजन्नेवमा सीत् ॥ अधरोवितानःसंसृष्टोवैश्योब्राह्मणस्त्रिषुवर्णेषुयज्ञसृष्टः' इति ब्राह्मणस्त्रयाणामपिवर्णानांस्वमसाधारणंदैवतमतःकारणात्तेस्वे आत्मीया ब्राह्मणाः परान्वर्णानुद्दिश्यनायजन्निति नैवाऽऽसीद पित्वमुककामेनामुकशर्मणाहं त्वामुकयज्ञेनयक्ष्य इत्युद्देशंकृत्वाऽयजन्नेवयागंकृतवंत एवेत्येवमेवासीदेवंपुराकल्पप्रदर्शनमुखेनायंविधिर्ज्ञेयः । आयजन्नितिपरस्मैपदप्रयोगस्तुपरगामित्वात्क्रियाफल स्ययुक्तः । अधरोनीचःवैवाहिकाच्छ्रौताद्वान्यत्वात् वितानोऽग्नीनांविस्तरः तस्माऽप्रयोलौकिकाएवपंचकुंडीविधानादौज्ञेयाः । एककुंडपक्षेत्वेकएवलौकिकः । तवाऽप्यत्रत्रैवकचहोष्यन्स्या

दैवतंहिमहच्छ्रद्धापवित्रंयजतांचयत् ॥ दैवतंहिपरंविप्राःस्वेनस्वेनपरस्परम् ४१ अयजन्निहसत्रैस्तेतैस्तैःकामैःसमाहिताः ॥ संसृष्टाब्राह्मणैरेवत्रिषुवर्णेषुसृ ष्टयः ४२ देवानामपियेदेवायद्भूयुस्तेपरंहितम् ॥ तस्माद्वर्णैःसर्वयज्ञाःसंसृज्यंतेनकाम्यया ४३ ऋग्यजुःसामवित्पूज्योनित्यंस्याद्देववद्द्विजः ॥ अनृग्यजुर सामाचप्राजापत्यउपद्रवः ॥ यज्ञोमनीषयातातसर्ववर्णेषुभारत ४४ नास्ययज्ञकृतोदेवाईहंतेनेतरेजनाः ॥ ततःसर्वेषुवर्णेषुश्रद्धायज्ञोविधीयते ४५ स्वंदैवतं ब्राह्मणःस्वेननित्यंपरान्वर्णानयजन्नेवमासीत् ॥ अधरोवितानःसंसृष्टोवैश्योब्राह्मणस्त्रिषुवर्णेषुयज्ञसृष्टः ४६ तस्माद्वर्णाऋजवोज्ञातिवर्णाःसंसृज्यंतेतस्यविकार एव ॥ एकंसामयजुरेकमृगेकाविप्रश्चैकोनिश्चयेतेषुसृष्टः ४७ अत्रगाथायज्ञगीताःकीर्तयंतिपुराविदः ॥ वैखानसानांराजेंद्रमुनीनांयष्टुमिच्छताम् ४८ उदितेऽनु दितेवापिश्रद्दधानोजितेंद्रियः ॥ वह्निंजुहोतिधर्मेणश्रद्धावैकारणंमहत् ४९ यत्स्कन्नमस्यतत्पूर्वंयदस्कन्नंतदुत्तरम् ॥ बहूनियज्ञरूपाणिनानाकर्मफलानिच ५०

दित्युपक्रम्याग्निमतिष्ठाप्येतिगृह्यकारैर्दर्शितः संसृष्टइति तत्रापिमंत्रसंसर्गउच्यते वैश्योवैश्यगृहादानीतः श्रौतेऽपिविट्कुलाद्विसवतोवेतिवैश्यगृहाद्दक्षिणाग्न्यर्थमग्न्यानयनंदृश्यते यस्मादेवं तस्माद्ब्राह्मणस्त्रिष्वपिवर्णेषुयज्ञःसृष्टोयेनसयज्ञस्रष्टाभवतीत्यर्थः । पाठांतरेवैश्यपदेविभक्तिलोपआर्षः ४६ यस्मात्त्रिषुवर्णेषुब्राह्मणोयज्ञस्रष्टातस्मात्सर्वेऽपिवर्णाऋजवःसाधवएवयज्ञसंयोगात् । एवंधर्मसाम्येऽपिज्ञातिसाम्यंनास्तीत्याशंक्याह ज्ञातिवर्णा अपिक्षत्रियवैश्यशूद्रास्तस्यब्राह्मणस्यैवविकारेक्षत्रियादिकन्यासूत्पन्नेमूर्धाभिषिक्तादौसंसृज्यंतएव तेनधर्मतोजन्मतश्चसर्वेवर्णाब्राह्मणसं सृष्टाइतिस्थितं । तत्रहेतुमाह एकइति तेषुतत्त्वनिश्चयेक्रियमाणेएकोविप्रोब्रह्मैवमयमोब्राह्मणःसृष्टोजातः ब्राह्मणसंततित्वात्सर्वेऽप्येतेब्राह्मणाएवेत्यर्थः । तत्रदृष्टांतः एकंसामेति अकारोवैसर्वा वाक्सैषास्पर्शोष्मभिर्व्यज्यमानाबह्वीनानारूपाभवतीतिश्रुतेरेकमकाररूपमेवाक्षरंयथासामादिरूपंतथात्रब्रह्मैवब्राह्मणादिरूपमित्यर्थः ४७ वैखानसानांवानप्रस्थानां गाथायज्ञस्तुतिश्लोकाः यज्ञगीताविष्णुगिताः ४८ । ४९ यत्स्कन्नमिति रौद्रंगविसद्रायव्यमुपासृष्टमित्यादिबह्वृचब्राह्मणेषोडशकमग्निहोत्रमुक्तं । तत्रमारुतंविष्यंदमानमितिस्कन्नमपिमरुद्दैवत्यंभवती तितत्पूर्वंमाद्यमग्निहोत्रंयदस्कन्नंयथाविधिहुतमुत्तरंसर्वोत्कृष्टं बहूनीतिरौद्रादीनि ५०



तानिषोडशाऽग्निहोत्ररूपाणि ५१ यज्ञंविष्णुंयष्टुंयज्ञदानादिनाआराधितुम् ५२ ऋषयइतिसार्धः ५३ श्रद्धापवित्रंयथास्यात्तथायष्टव्यमितिसंबंधः आश्रित्यशास्त्रमितिशेषः ५४ ॥ इतिशां तिपर्वणिराजधर्मानुशासनपर्वणिनी० भारतभा० षष्टितमोऽध्यायः ॥ ६० ॥ ७ ॥ आश्रमाणामिति १ वानप्रस्थमितिपाठक्रमोनविवक्षितः चतुर्थंसंन्यासंतंचजटाधारणसंस्कारमवाप्यचेति चोमित्रक्रमः चान्मुंडिनंचवदंति २ द्विजातित्वमवाप्यवेदमधीत्यआधानादीनिकर्माणिप्राप्यवानप्रस्थाश्रमंगच्छेदित्यन्वयः ३ । ४ आरण्यकानांवानप्रस्थानांशास्त्राणिशासनानिसमधीत्य

यष्टुमिच्छतियज्ञंयःसाधु ॥ द्विजातिःश्रद्धयोपेतःसयष्टुंपुरुषोऽर्हति ५१ स्तेनोवायदिवापापोयदिवापापकृत्तमः ॥ यष्टुमिच्छतियज्ञंयःसाधु तानियःसंप्रजानातिज्ञाननिश्चयनिश्चितः ॥ द्विजातिःश्रद्धयोपेतःसयष्टुंपुरुषोऽर्हति ५१ स्तेनोवायदिवापापोयदिवापापकृत्तमः ॥ यष्टुमिच्छतियज्ञंयःसाधु मेववदंतितम् ५२ ऋषयस्तंप्रशंसंतिसाधुचैतदसंशयम् ॥ सर्वथासर्वदावर्णैर्यष्टव्यमितिनिर्णयः ॥ नहियज्ञसमंकिंचित्त्रिषुलोकेषुविद्यते ५३ तस्माद्यष्टव्यमि त्याहुःपुरुषेणानसूयता ॥ श्रद्धापवित्रमाश्रित्ययथाशक्तियथेच्छया ५४ ॥ ॥ इ० म० शां० प० रा० प० वर्णाश्रमधर्मकथनेषष्टितमोऽध्यायः ॥ ६० ॥ भीष्मउवाच ॥ आश्रमाणांमहाबाहोशृणुसत्यपराक्रम ॥ चतुर्णामपिनामानिकर्माणिचयुधिष्ठिर १ वानप्रस्थंभैक्ष्यचर्यंगार्हस्थ्यंचमहाश्रमम् ॥ ब्रह्मचर्याश्रमं प्राहुश्चतुर्थंब्राह्मणैर्वृतम् २ जटाधरणसंस्कारंद्विजातित्वमवाप्यच ॥ आधानादीनिकर्माणिप्राप्यवेदमधीत्यच ३ सदारोवाऽप्यदारोवाआत्मवान्संयतेंद्रियः ॥ वानप्रस्थाश्रमंगच्छेत्कृतकृत्योगृहाश्रमात् ४ तत्रारण्यकशास्त्राणिसमधीत्यसधर्मवित् ॥ ऊर्ध्वरेताःप्रव्रजित्वागच्छत्यक्षरसात्मताम् ५ एतान्येवनिमित्तानिमु नीनामूर्ध्वरेतसाम् ॥ कर्तव्यानीहविप्रेणराजन्नादौविपश्चिता ६ चरितब्रह्मचर्यस्यब्राह्मणस्यविशांपते ॥ भैक्षचर्यास्वधीकारःप्रशस्तइहमोक्षिणः ७ यत्रास्त मितशायीस्यान्निराशीरनिकेतनः ॥ यथोपलब्धजीवीस्यान्मुनिर्दांतोजितेंद्रियः ८ निराशीःस्यात्सर्वसमोनिर्भोगोनिर्विकारवान् ॥ विप्रःक्षेमाश्रमंप्राप्तोगच्छ त्यक्षरसात्मताम् ९ अधीत्यवेदान्कृतसर्वकृत्यःसंतानमुत्पाद्यसुखानिभुक्त्वा ॥ समाहितःप्रचरेद्दुश्चरंयोगार्हस्थ्यधर्मंमुनिधर्मजुष्टम् १० स्वदारतुष्टस्त्वृतुकाल गामीनियोगसेवीनशठोनजिह्मः ॥ मिताशनोदेवरतःकृतज्ञःसत्योमृदुश्चानृशंसःक्षमावान् ११ दांतोविधेयोहव्यकव्येप्रमत्तोह्यन्नस्यदातासततंद्विजेभ्यः ॥ अ मत्सरीसर्वलिंगप्रदातावैतानानित्यश्चगृहाश्रमीस्यात् १२ अथात्रनारायणगीतमाहुर्महर्षयस्तातमहानुभावाः ॥ महार्थमत्यंततपःप्रयुक्तंतदुच्यमानंहिमयानिबोध १३ सत्यार्जवंचातिथिपूजनंचधर्मस्तथाऽर्थश्चरतिःस्वदारैः ॥ निषेवितव्यानिसुखानिलोकेह्यस्मिन्परेचैवमतंममैतत् १४ भरणंपुत्रदाराणांवेदानांधारणंतथा ॥ वसतामाश्रमंश्रेष्ठंवदंतिपरमर्षयः १५ एवंहियोब्राह्मणोयज्ञशीलोगार्हस्थ्यमध्यावसतेयथावत् ॥ गृहस्थवृत्तिंप्रविशोध्यसम्यक्स्वर्गेविशुद्धंफलमाप्नुतेसः १६

सम्यगनुष्ठानेनमाप्यअक्षरसात्मतांकैवल्यम् ५ एतानिद्विजत्वावास्यादीनि एवशब्दःमकारांतरंमोक्षप्राप्तौवारयति ६ ब्रह्मचर्यादेवप्रव्रजेतिश्रुतेर्मध्यममाश्रमद्वयमनित्यमित्याह चरितेति ७ । ८ विकाराःकामसंकल्पादयस्तद्वच्चित्तंतद्रहितोनिर्विकारवान् अमनस्कइत्यर्थः ९ गृहिणोमुक्तिमाह अधीत्येति समाहितोयोगयुक्तःसन्गार्हस्थ्यधर्मंयःप्रचरेत्सोऽप्यक्षरसात्मतांगच्छतीतिपूर्वेणसंबं धः १० असमाहितंमत्याह स्वदारेति शठोधूर्तः जिह्मःकुटिलः ११ विधेयोगुरुशास्त्राज्ञापालकः अप्रमत्तोऽवहितः । सर्वेभ्योलिंगयुक्तेभ्यःआश्रमेभ्यःप्रदाताऽन्नादेः लिंगप्रदातेतिमध्यमपद लोपीसमासः वैतानंश्रौतकर्मतत्रनित्यः १२ । १३ । १४ । १५ वृत्तिंजीविकांप्रविशोध्यशुद्धांकृत्वा न्यायागतेनधनेनजीवन्नित्यर्थः १६

तस्येति तस्यगृहस्थस्यदेहपरित्यागात्समाहितश्चेदिहैवदेहाभिमानत्यागात्समाहितस्यमरणानंतरंदृष्टाःकामाविषयाःहार्दाकाशेस्वर्गेवाउपतिष्ठंति कामाःअक्षयाइतिच्छेदः संधिरार्षः सर्वतोक्षिशिरोमुखाइत्यनेनकामानांकिंकराणामिववश्यत्वमुक्तं यत्रयत्रदेशेकालेवायोग्यमयोग्यंवासंकल्पयतितत्सर्वसद्यउपतिष्ठतीत्यर्थः १७ ब्रह्मचारिणोऽपिकैवल्यमाह स्मरान्निति सर्वान्देवान्मंत्रांश्च १८ दीक्षानियमविशेषस्वीकारः वेदंवेदांतान् कृत्यंकर्तुमर्हध्यानयोगम् १९ तदविरोधेनशुश्रूषांचकुर्वन्निवृत्तोनिवृत्तिमान् २० अधिकारेणनिग्रहानुग्रहेण २१ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेएकषष्टितमोऽध्यायः ॥ ६१ ॥ ७ ॥ शिवानिति १ उक्तविशेषणविशिष्टान्ब्राह्मणस्यैवधर्मान्इत्याशयेनाह ब्राह्मणस्येति एतेनगृहस्थस्यापिब्राह्मणस्य हिंस्रोधर्मःकामकारएवनविधिचोदितइतिदर्शितं वक्ष्यतिचमोक्षधर्मेषु । 'पशुयज्ञैःकथंहिंस्रैर्मादृशोयष्टुमर्हति' इति । त्रयोहिंसापरावर्णास्तान्नानुवर्तंते २ नानुवर्ततेइत्येतत्प्रपंचयति उक्तानीत्यादि

तस्यदेहपरित्यागादिष्टाःकामाऽक्षयामताः ॥ आनंत्यायोपतिष्ठंतिसर्वतोक्षिशिरोमुखाः १७ स्मरन्नेकोजपन्नेकःसर्वानेकोयुधिष्ठिर ॥ एकस्मिन्नेवचाचार्येशुश्रूषुर्मलपंकवान् १८ ब्रह्मचारीव्रतीनित्यंनित्यंदीक्षापरोवशी ॥ परिचार्यतथावेदंकृत्यंकुर्वन्वसेत्सदा १९ शुश्रूषांसततंकुर्वन्गुरोःसंप्रणमेतच ॥ षट्कर्मसुनिवृत्तश्चनप्रवृत्तश्चसर्वशः २० नचरत्यधिकारेणसेवेतद्विषतोनच ॥ एषोऽश्रमपदस्तातब्रह्मचारिणइष्यते २१ ॥ इतिश्रीमहाभारते शांतिपर्वणि राजधर्मानुशासनपर्वणि चतुराश्रमधर्मकथने एकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ शिवान्सुखान्महोदर्कानहिंस्रान्लोकसंमतान् ॥ ब्रूहि धर्मान्सुखोपायान्मद्विधानांसुखावहान् १ ॥ भीष्मउवाच ॥ ब्राह्मणस्यतुचत्वारस्त्वाश्रमाःविहिताःप्रभो ॥ वर्णास्तान्नानुवर्तंतेत्रयोभारतसत्तम २ उक्तानि कर्माणिबहूनिराजन्स्वर्ग्याणिराजन्यपरायणानि ॥ नेमानिदृष्टांतविधौस्मृतानिक्षात्रेहिसर्वंविहितंयथावत् ३ क्षात्राणिवैश्यानिचसेव्यमानःशौद्राणिकर्माणि चब्राह्मणःसन् ॥ अस्मिँल्लोकेनिंदितोमंदचेताःपरेलोकेनिरयंप्रयाति ४ यासंज्ञाविहितालोकेदासेशुनिवृकेपशौ ॥ विकर्मणिस्थितेविप्रेसैवसंज्ञाचपांडव ५ षट्कर्मसंप्रवृत्तस्यआश्रमेषुचतुर्ष्वपि ॥ सर्वधर्मोपपन्नस्यसंवृतस्यकृतात्मनः ६ ब्राह्मणस्यविशुद्धस्यतपस्यभिरतस्यच ॥ निराशिषोवदान्यस्यलोकाह्यक्षरसंमिताः ७ योयस्मिन्कुरुतेकर्मयादृशंयेनयत्रच ॥ तादृशंतादृशेनैवसगुणंप्रतिपद्यते ८ वृद्ध्याकृषिवणिक्त्वेनजीवसंजीवनेनच ॥ वेत्तुमर्हसिराजेंद्रस्वाध्यायगणितंमहत् ९

ना राजन्यानांपरायणानियुद्धजयादीनि दृष्टांतविधौत्वयापृष्टस्यप्रतिवचनेनयोग्यानि यतःक्षात्रेविहितंविधिप्रधानंप्रवृत्तिशास्त्रमितियावत् तत्कथंनिवृत्तिप्रधानैर्ब्राह्मणधर्मैःसमत्वमेतीत्यर्थः ३ ४ । ५ षट्कर्माणिप्राणायामःप्रत्याहारोध्यानंधारणातर्कःसमाधिरिति । इज्यादीनामाश्रमांतरेष्वयोगात्सर्वाश्रमयोग्यान्येतान्येवषट्कर्माणि सर्वधर्मोऽहिंसा संवृतस्याचपलस्य कृतात्मनोजितचित्तस्य ६ तपसिविचारे अक्षरसंमिताः अक्षयाः ७ नन्वेवंब्राह्मणःस्वधर्मत्यक्त्वाकिमितिहीनधर्मरमतइत्याशंक्याह यइति यःपुमान्यस्मिन्नवस्थाविशेषेयत्रदेशेकालेवायेनफलेननिमित्तेन यत्कर्मकरोतिसाध्वसाधुवातत्सकलंलोभाच्चिराभ्यासाच्चसगुणमेवेतिप्रतिपद्यते नत्विदंनिंद्यमितिवेत्तोविरज्यतइत्यर्थः ८ तान्येवाह वृद्ध्येति जीवैःसंजीवनंमृगयाजीवित्वंतेनमहदपि स्वाध्यायगणितंवेदाभ्यसनंवृद्ध्यादिभिःसमानमितिवेत्तुमर्हसि उक्तहेतोरित्यर्थः ९



अभ्यासात्कर्माणिरोचंतेचेदुत्तमान्येवतानिकुतोनाभ्यस्यंतइत्याशंक्याह कालेति कालेनपर्येत्याविर्भवतीतिकालपर्यायःप्राग्भवीयोवासनासमूहस्तेननिश्चितः तेनकालेनप्रेरितस्तदनुगुणंकर्मकरोति यतःअवशःकालाद्यधीनः १० एवंचेत्कृतंविधिनिषेधाभ्यामित्यत आह अंतवंतीति पुराश्रेयस्कराणिप्राचीनानिपुण्यापुण्यानियानिप्रधानानिदेहारंभकाणितान्यंतवंतिदेहस्यैवांऽतवत्त्वात्देहसंबंधियत्सुखदुःखाद्यागममंतदपरिहार्यं अन्यत्रतुशुभाशुभप्रवृत्त्यादौ लोकःस्वकर्मनिरतःस्वस्याऽभीष्टंयत्कर्मरागादिविषयभूतंतत्रैवनिरतस्तत्रायत्तःसर्वतोमुखःप्रवृत्तौवास्वतंत्रः अक्षरोजीवः तत्रतत्र कामकारेणप्रवर्ततेऽतोविधिनिषेधशास्त्रस्यास्त्येवार्थवत्त्वमित्यर्थः ११ ॥ इतिशांतिपर्वणिनीलकंठीयेभारतभावदीपेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ ७ ॥ ॥ ज्याकर्षणमिति १ । १ कौटिल्य मनाजवं कौलटेयंकुलटाप्रधानंजारकर्मपारदार्यंवा अन्येतुकौटिलीयमितिपाठंप्रकल्प्यमात्सर्यमितिव्याचक्षते कुसीदंवृद्धिजीविका १ । ४ राजप्रेष्यादिर्वेदान्जपन्नजपन्वाशूद्रवत्पंक्तेर्बहिर्भोजनी

कालसंचोदितोलोकःकालपर्यायनिश्चितः ॥ उत्तमाधममध्यानिकर्माणिकुरुतेवशः १० अंतवंतिप्रधानानिपुराश्रेयस्कराणिच ॥ स्वकर्मनिरतोलोकोह्यक्षरःसर्वतोमुखः ११ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिवर्णाश्रमधर्मकथनेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ भीष्मउवाच ॥ ॥ ज्याकर्षणंशत्रुनिबर्हणंचकृषिर्वणिज्यापशुपालनंच ॥ शुश्रूषणंचापितथाऽर्थहेतोरकार्यमेतत्परमंद्विजस्य १ सेव्यंतुब्रह्मषट्कर्मगृहस्थेनमनीषिणा ॥ कृतकृत्यस्यचारण्येवासोविप्रस्यशस्यते २ राजप्रेष्यंकृषिधनंजीवनंचवणिक्पथा ॥ कौटिल्यंकौलटेयंचकुसीदंचविवर्जयेत् ३ शूद्रोराजन्भवतिब्रह्मबंधुर्दुश्चारित्रोयश्चधर्मादपेतः ॥ वृषलीपतिःपिशुनोनर्तनश्चराजप्रेष्योयश्चभवेद्विकर्मा ४ जपन्वेदानजपंश्चापिराजन्समःशूद्रैर्दासवच्चापिभोज्यः ॥ एतेसर्वेशूद्रसमाभवंतिराजन्नेतान्वर्जयेद्देवकृत्ये ५ निर्मर्यादेचाशुचौक्रूरवृत्तौहिंसात्मकेत्यक्तधर्मस्ववृत्ते ॥ हव्यंकव्यंयानिचान्यानिराजन्देयान्यदेयानिभवंतिचास्मै ६ तस्माद्धर्मोविहितोब्राह्मणस्यदमःशौचमार्जवंचापिराजन् ॥ तथाविप्रस्याश्रमाःसर्वएवपुराराजन्ब्रह्मणावैनिसृष्टाः ७ यःस्याद्दांतःसोमपश्चार्यशीलःसानुक्रोशःसर्वसहोनिराशीः ॥ ऋजुर्मृदुरनृशंसःक्षमावान्सवैविप्रोनेतरःपापकर्मा ८ शूद्रंवैश्यंराजपुत्रंचराजन्लोकाःसर्वेसंश्रिताधर्मकामाः ॥ तस्माद्वर्णान्शांतिधर्मेष्वसक्तान्मत्वाविष्णुर्नेच्छतिपांडुपुत्र ९ लोकेचेदंसर्वलोकस्यनस्याच्चातुर्वर्ण्यंवेदवादाश्चनस्युः ॥ सर्वाश्चेज्याःसर्वलोकक्रियाश्चसद्यःसर्वेचाश्रमस्थानवैस्युः १० यश्चत्रयाणांवर्णानामिच्छेदाश्रमसेवनम् ॥ चातुराश्रम्यदृष्टांश्चधर्मास्तान्शृणुपांडव ११ शुश्रूषोःकृतकार्यस्यकृतसंतानकर्मणः ॥ अभ्यनुज्ञातराजस्यशूद्रस्यजगतीपते १२ अल्पांतरगतस्यापिदशधर्मगतस्यवा ॥ आश्रमाविहिताःसर्वेवर्जयित्वानिराशिषम् १३

यएवेतिभावः ५ । ६ । ७ । ८ । ९ धर्मेष्वसक्तान्विष्णुर्नेच्छतिचेत्काहानिरतआह लोकइति लोकेस्वर्गे इदंसुखादि आश्रमस्थाश्चस्वधर्मेनतिष्ठेयुः स्वर्गादिकंसर्वंविष्णुप्रसादादेवतदभावेसर्वंकृतंकर्मव्यर्थमितिभावः १० योराजात्रयाणांब्राह्मणवैश्यशूद्राणांस्वराज्येआश्रमधर्मसेवनंयथोक्तंइच्छेत् तेनावश्यज्ञातव्यान्धर्मान्शृणु ११ शुश्रूषोर्वेदांतेष्वनधिकारात्पुराणद्वाराआत्मानंश्रोतुमिच्छोः कृतकार्यस्ययावच्छरीरसामर्थ्यंसेवितत्रैवर्णिकस्य कृतसंतानकर्मणोजातपुत्रस्य अभ्यनुज्ञातोराज्ञाइत्यभ्यनुज्ञातराजस्तस्य १२ अल्पांतरगतस्यआचारनिष्ठयात्रैवर्णिकसमस्य दशधर्मगतस्येतिमत्तप्रमत्तादीन्प्रकृत्यदशधर्मंनजानंतीत्युक्तेरत्रयोगधर्मानभिज्ञस्यग्रहणंतस्यापिआश्रमाःसर्वेविहिताः । शूद्रोऽपिनैष्ठिकंब्रह्मचर्यंवानप्रस्थंवासकलविक्षेपककर्मत्यागरूपंसंन्यासंवाऽनुतिष्ठेदेव निराशिषंशांतिदांत्यादिकल्याणगुणरहितं १३

भैक्ष्यचर्यापारिव्राज्यं तस्यशूद्रस्य तद्धर्मचारिणस्तान्पूर्वोक्तान्स्वधर्मांश्चरतीतितथाभूतस्य तथावैश्यस्यराजपुत्रस्यचभैक्ष्यचर्याप्राहुरित्यन्वयः १४ । १५ । १६ १७ । १८ । १९ । २० । २१ राजाऋषित्वेनमंत्रार्थद्रष्टृत्वेनवेदांतश्रवणकर्तृत्वेनहेतुनाभैक्ष्यचर्यामिच्छेदितिपूर्वेणसंबंधः नतुसेवयाश्रवणमकुर्वन्नान्नमात्रार्थमित्यर्थः तत्कुर्वंस्तुजीवितकांक्षयाभैक्ष्यचर्यांचरेदेवेत्यर्थः २२ एतद्वैक्ष्यंनैनैष्ठिकंनित्यं त्रयाणांराजादीनां तेषामाश्रमसंन्यासोनित्योनास्ति अपितुविक्षेपककर्मत्यागरूपःकाम्यएवास्तीत्यर्थः । सचचतुर्णामप्याश्रमाणामस्तीतिप्राहुः २३ राजधर्मप्रशंसतिबाह्यायत्त

भैक्ष्यचर्याततःप्राहुस्तस्यतद्धर्मचारिणः ॥ तथावैश्यस्यराजेंद्रराजपुत्रस्यचैवहि १४ कृतकृत्योवयोतीतोराज्ञःकृतपरिश्रमः ॥ वैश्योगच्छेदनुज्ञातोनृपेणाश्रम
संश्रयम् १५ वेदानधीत्यधर्मेणराजशास्त्राणिचानघ ॥ संतानादीनिकर्माणिकृत्वासोमंनिषेव्यच १६ पालयित्वाप्रजाःसर्वाधर्मेणवदतांवर ॥ राजसूयाश्वमेधा
दीन्मखानन्यांस्तथैवच १७ आनयित्वायथापाठंविप्रेभ्योदत्तदक्षिणः ॥ संग्रामेविजयंप्राप्यतथाल्पंयदिवाबहु १८ स्थापयित्वाप्रजापालंपुत्रंराज्येचपांडव ॥
अन्यगोत्रंप्रशस्तंवाक्षत्रियंक्षत्रियर्षभ १९ अर्चयित्वापितॄन्सम्यक्पितृयज्ञैर्यथाविधि ॥ देवान्यज्ञैर्ऋषीन्वेदैरर्चयित्वातुयत्नतः २० अंतकालेचसंप्राप्तेयइच्छेदाश्र
मांतरम् ॥ सोऽनुपूर्व्याश्रमान्राजन्गत्वासिद्धिमवाप्नुयात् २१ राजर्षित्वेनराजेंद्रभैक्ष्यचर्यांनसेवया ॥ अपेतगृहधर्मोऽपिचरेज्जीवितकाम्यया २२ नचैतन्नैष्ठिकं
कर्मत्रयाणांभूरिदक्षिण ॥ चतुर्णांराजशार्दूलप्राहुराश्रमवासिनाम् २३ बाह्वायत्तंक्षत्रियैर्मानवानांलोकश्रेष्ठंधर्ममासेवमानैः ॥ सर्वेधर्माःसोपधर्मास्त्रयाणांराज्ञो
धर्मादितिवेदाच्छृणोमि २४ यथाराजन्हस्तिपदेपदानिसंलीयंतेसर्वसत्वोद्भवानि ॥ एवंधर्मान्राजधर्मेषुसर्वान्सर्वावस्थंसंप्रलीनान्निबोध २५ अल्पाश्रयानल्प
फलान्वदंतिधर्मानन्यान्धर्मविदोमनुष्याः ॥ महाश्रयंबहुकल्याणरूपंक्षात्रंधर्मंनेतरंप्राहुरार्याः २६ सर्वेधर्माराजधर्मप्रधानाःसर्वेवर्णाःपाल्यमानाभवंति ॥ सर्व
स्त्यागोराजधर्मेषुराजंस्त्यागंधर्मंचाहुरग्र्यंपुराणम् २७ मज्जेत्त्रयीदंडनीतौहतायांसर्वेधर्माःप्रक्षयेयुर्विबुद्धाः ॥ सर्वेधर्माश्चाश्रमाणांहताःस्युःक्षात्रेत्यक्तेराजधर्मेपु
राणे २८ सर्वेत्यागाराजधर्मेषुदृष्टाःसर्वादीक्षाराजधर्मेषुचोक्ताः ॥ सर्वाविद्याराजधर्मेषुयुक्ताःसर्वेलोकाराजधर्मेप्रविष्टाः २९ यथाजीवाःप्राकृतैर्वध्यमानाधर्मश्रुता
नामुपपीडनाय ॥ एवंधर्माराजधर्मैर्वियुक्ताःसंचिन्वंतोनाद्रियंतेस्वधर्मम् ॥ ३० ॥ इतिश्रीम०शांतिपर्वणिराजध०वर्णाश्रमधर्मकथनेत्रिषष्टितमोऽध्यायः॥६३॥
भीष्मउवाच ॥ ॥ चातुराश्रम्यधर्माश्चयतिधर्माश्चपांडव ॥ लोकवेदोत्तराश्चैवक्षात्रधर्मेसमाहिताः १ सर्वाण्येतानिकर्माणिक्षात्रेभरतसत्तम ॥ निराशिषोजी
वलोकाःक्षत्रधर्मेव्यवस्थिते २

मित्यादिना २४ । २५ । २६ सर्वेषांत्यागिनांषड्भागहारीराजाऽपिसर्वत्यागीभवतीत्यर्थः २७ । २८ । २९ यथेति जीवामृगादयः प्राकृतैर्नीचैर्वध्यमानाहंतॄणांधर्मस्यश्रुतदृष्टादीनांचनाशायभ वंति एवंराजधर्मैर्नीत्यादिभिर्वियुक्ताधर्माअग्निहोत्रादयश्चोरैर्नाश्यमानाः कर्तॄणांधर्मंचित्तंचखेदयंतिकर्तारश्चसंचिन्वंतस्स्वास्थ्यमन्वेषयंतोव्याकुलतयास्वधर्मंनाद्रियंतेतस्माद्राजधर्मएवमुख्योधर्म इत्यर्थः ३० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेत्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ ७ ॥ ॥ चातुराश्रम्येति १ । २



धर्मंबहुद्वारंविद्धि अन्येतुतद्भावंधर्मस्यस्वरूपंकोपयंतिविरुद्धागमैः ३ अदृष्टविनष्टदृष्टोऽयोग्यस्तस्मिन्परेधर्मेहताःनष्टधियःनिश्चयंप्रकोपयंति ४।५ धर्माश्रमेइति गार्हस्थ्येत्रयाणांवर्णानांधर्माणा मुपश्रुतिरंतर्भावः संख्याताप्रकटा तथाऽध्यवसिनांनैष्ठिकवानप्रस्थयतीनांब्राह्मणानांचधर्माणामुपश्रुतिःसंख्याता तथाराजधर्मेषुधर्मैःसहलोकाअंतर्भूताइति सार्धःश्लोकः ६ अत्रपूर्वोक्तार्थेकथोस्मार यति उदाहृतमिति सार्धः ७ । ८ आश्रमंआश्रमविहितंकर्मधर्मंतुलयित्वाकिंदंडनीतिजोधर्मोमहानुत आश्रमधर्मइतिसंदिग्धदृष्टांतवचनेसिद्धांतंश्रोतुंप्रभुमुपासंतेतियोजना ९ । १० अर्थस्य

अप्रत्यक्षंबहुद्वारंधर्ममाश्रमवासिनां ॥ प्रकोपयंतितद्भावमागमैरेवशाश्वतं ३ अपरेवचनैःपुण्यैर्वादिनोलोकनिश्चयं ॥ अनिश्चयज्ञाधर्माणामदृष्टांतेपरेहताः ४
प्रत्यक्षंसुखभूयिष्ठमात्मसाक्षिकमच्छलं ॥ सर्वलोकहितंधर्मक्षत्रियेषुप्रतिष्ठितं ५ धर्माश्रमेऽध्यवसिनांब्राह्मणानांयुधिष्ठिर ॥ यथात्रयाणांवर्णानांसंख्यातोपश्रु
तिःपुरा ६ राजधर्मेष्वनुमतालोकाःसुचरितैःसह ॥ उदाहृतंतेराजेंद्रयथाविष्णुंमहौजसम् ७ सर्वभूतेश्वरंदेवंप्रभुंनारायणंपुरा ॥ जग्मुःसुबहुशःशूराराजानोदं
डनीतये ८ एकैकमात्मनःकर्मतुलयित्वाऽऽश्रमंपुरा ॥ राजानःपर्युपासंतदृष्टांतवचनेस्थिताः ९ साध्यादेवावसवश्चाश्विनौचरुद्राश्चविश्वेमरुतांगणाश्च ॥ सृ
ष्टाःपुराद्यादिदेवेनदेवाःक्षात्रेधर्मेवर्तयंतेचसिद्धाः १० अत्रतेवर्तयिष्यामिधर्ममर्थविनिश्चयं ॥ निर्मर्यादेवर्तमानेदानवैकार्णवेपुरा ११ बभूवराजाराजेंद्रमांधा
तानामवीर्यवान् ॥ पुरावसुमतीपालोयज्ञंचक्रेदिदृक्षया १२ अनादिमध्यनिधनंदेवंनारायणंप्रभुम् ॥ सराजाराजशार्दूलमांधातापरमेश्वरम् १३ जगामशिर
सापादौयज्ञेविष्णोर्महात्मनः ॥ दर्शयामासतंविष्णूरूपमास्थायवासवम् १४ सपार्थिवैर्वृतःसद्भिरर्चयामासतंप्रभुम् ॥ तस्यपार्थिवसिंहस्यतस्यचैवमहात्मनः ॥
संवादोऽयंमहानासीद्विष्णुंप्रतिमहाद्युतिम् १५ ॥ इंद्रउवाच ॥ किमिष्यतेधर्मभृतांवरिष्ठयद्द्रष्टुकामोऽसितमप्रमेयम् ॥ अनंतमायामितमंत्रवीर्यंनारायणंह्यादिदे
वंपुराणम् १६ नासौदेवोविश्वरूपोमयाऽपिशक्योद्रष्टुंब्रह्मणावापिसाक्षात् ॥ येऽन्येकामास्तवराजन्हृदिस्थादास्येचैतांस्त्वंहिमर्त्येषुराजा १७ सत्येस्थितो
धर्मपुरोजितेंद्रियःशूरोदृढप्रीतिरतःसुराणां ॥ बुद्ध्याभक्त्याचोत्तमश्रद्धयाचततस्तेऽहंददन्निवरान्यथेष्टं १८ ॥ मांधातोवाच ॥ असंशयंभगवन्नादिदेवंद्रक्ष्या
मित्वाऽहंशिरसासंप्रसाद्य ॥ त्यक्त्वाकामान्धर्मकामोह्यरण्यमिच्छेगंतुंसत्पथंलोकदृष्टं १९ क्षात्राद्धर्माद्विपुलादप्रमेयाल्लोकाःप्राप्ताःस्थापितंस्वंयशश्च ॥ धर्मो
योसावादिदेवात्प्रवृत्तोलोकश्रेष्ठंतंनजानामिकर्तुं २० ॥ इंद्रउवाच ॥ असैनिकाधर्मपराश्चधर्मेपरांगतिंननयंतेह्ययुक्तं ॥ क्षात्रोधर्मोह्यादिदेवात्प्रवृत्तःपश्चादन्ये
शेषभूताश्चधर्माः २१ शेषाःसृष्टाह्यंतवंतोह्यनंताःसप्रस्थानाःक्षात्रधर्माविशिष्टाः ॥ अस्मिन्धर्मेसर्वधर्माःप्रविष्टास्तस्माद्धर्मंश्रेष्ठमिमंवदंति २२

निश्चयोयत्रतं ११ । १२ । १३ वासवमैंद्रंरूपं १४ । १५ । १६ । १७ । १८ त्वाऽहंत्वामहं १९ तंक्षात्रधर्मात्श्रेष्ठंकर्तुंनजानामि २० नसंतिसैनिकायेषांतेअसैनिकाअराजानः धर्मेविषये परांगतिंकाष्ठांननयंतेनप्रापयंति अन्यंस्वयंचनव्रजंति । राजानस्तुप्रयुक्तैर्धर्मैर्द्वयमपिकुर्वंति । ह्ययुक्तमितिपाठेहिप्रसिद्धमयुक्तंअभिनिवेशशून्यंयथास्यात्तथाहेलयैवनननयंतेइत्यर्थः शेषभूताअंगभूताः २१ सप्रस्थानाःपारिव्राज्यसहिताः शेषधर्माअंतवत्फलाः अनंताअसंख्याताः २२

कर्मणाक्रियया २३ अयंक्षात्रः आदिर्मांद्यः २४ । २५ । २६ आत्मत्यागोयुद्धेमरणम् २७।२८।२९ अक्षरपर्यंतंमोक्षावसानम् ३० ॥ इति शां०रा०नी०भारतभा०चतुःषष्टितमोऽध्यायः॥६४॥ 

 कर्मणावैपुरादेवाऋषयश्चामितौजसः ॥ त्राताःसर्वेप्रसह्यारीन्क्षत्रधर्मेणविष्णुना २३ यदिह्यसौभगवन्नाहनिष्यद्रिपून्सर्वानसुरानप्रमेयः ॥ नब्राह्मणानचलोकाऽऽ
दिकर्तानायंधर्मोनादिधर्मोऽभविष्यत् २४ इमामुर्वीनाजयद्विक्रमेणदेवश्रेष्ठःसासुरामादिदेवः ॥ चातुर्वर्ण्यंचातुराश्रम्यधर्माःसर्वेनस्युर्ब्राह्मणानांविनाशात् २५
नष्टाधर्माःशतधाशाश्वतास्तेक्षात्रेणधर्मेणपुनःप्रवृद्धाः ॥ युगेयुगेह्यादिधर्माःप्रवृत्तालोकज्येष्ठंक्षात्रधर्मंवदंति २६ आत्मत्यागःसर्वभूतानुकंपालोकज्ञानंपालनंमो 
क्षणंच ॥ विषण्णानांमोक्षणंपीडितानांक्षात्रेधर्मेविद्यतेपार्थिवानाम् २७ निर्मर्यादाःकाममन्युप्रवृत्ताभीताराज्ञोनाधिगच्छंतिपापम् ॥ शिष्टाश्चान्येसर्वधर्मोपप
न्नासाध्वाचाराःसाधुधर्मंवदंति २८ पुत्रवत्पाल्यमानानिराजधर्मेणपार्थिवैः ॥ लोकेभूतानिसर्वाणिचरंतेनात्रसंशयः २९ सर्वधर्मपरंक्षात्रंलोकश्रेष्ठंसनातनम् ॥
शश्वदक्षरपर्यंतमक्षरंसर्वतोमुखम् ३० ॥ इति श्रीम०शां०राजध०वर्णाश्रमध०चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ इंद्रउवाच ॥ एवंवीर्यःसर्वधर्मोपप
न्नःक्षात्रःश्रेष्ठःसर्वधर्मेषुधर्मः ॥ पाल्योयुष्माभिर्लोकहितैरुदारैर्विपर्ययेस्यादभवःप्रजानाम् १ भूसंस्कारंराजसंस्कारयोगमभैक्ष्यचर्यांपालनंचप्रजानाम् ॥ विद्या
द्राजासर्वभूतानुकंपीदेहत्यागंचाहवेधर्ममग्र्यम् २ त्यागंश्रेष्ठंमुनयोवैवदंतिसर्वश्रेष्ठंयच्छरीरंत्यजंतः ॥ नित्यंयुक्ताराजधर्मेषुसर्वेप्रत्यक्षंतेभूमिपालायथैव ३ बहुश्रु
त्यागुरुशुश्रूषयाचपरस्पराःसंहननाद्वदंति ॥ नित्यंधर्मंक्षत्रियोब्रह्मचारीचरेदेकोह्याश्रमंधर्मकामः ४ सामान्यार्थेव्यवहारप्रवृत्तेप्रियाप्रियेवर्जयन्नेवयत्नात् ॥ चा
तुर्वर्ण्यस्थापनात्पालनाच्चतैस्तैर्योगैर्नियमैरौरसैश्च ५ सर्वोद्योगैराश्रमंधर्ममाहुःक्षात्रंश्रेष्ठंसर्वधर्मोपपन्नम् ॥ स्वंस्वंधर्मंयेनचरंतिवर्णास्तांस्तान्धर्मानन्यथार्थान्वदं
ति ६ निर्मर्यादान्नित्यमर्थेनिविष्टानाहुस्तांस्तान्वैपशुभूतान्मनुष्यान् ॥ यथानीतिंगमयत्यर्थयोगाच्छ्रेयस्तस्मादाश्रमात्क्षत्रधर्मः ७ त्रैविद्यानांयागतिर्ब्राह्मणानांये
चैवोक्ताश्चाश्रमाब्राह्मणानाम् ॥ एतत्कर्मब्राह्मणस्याहुरग्र्यमन्यत्कुर्वञ्छूद्रवच्छस्त्रवध्यः ८ चातुराश्रम्यधर्माश्चवेदधर्माश्चपार्थिव ॥ ब्राह्मणेनानुगंतव्यानान्योविद्या
त्कदाचन ९ अन्यथावर्तमानस्यनासौवृत्तिःप्रकल्प्यते ॥ कर्मणावर्धतेधर्मोयथाधर्मस्तथैवसः १० योविकर्मस्थितोविप्रोनससन्मानमर्हति ॥ कर्मस्वंनोपयुंजानमवि
श्वास्यंहितंविदुः ११ एतेधर्माःसर्ववर्णेषुलीनाउत्कृष्टव्याःक्षत्रियैरेषधर्मः ॥ तस्माज्ज्येष्ठाराजधर्मानचान्येवीरज्येष्ठावीरधर्मामतामे १२ ॥मांधातोवाच॥ यवनाःकि
रातागांधाराश्चीनाःशबरबर्बराः॥शकास्तुषाराःकंकाश्चपल्हवाश्चांध्रमद्रकाः १३ पौंड्राःपुलिंदारमठाःकांबोजाश्चैवसर्वशः ॥ब्रह्मक्षत्रप्रसूताश्चवैश्याःशूद्राश्चमानवाः १४

एवमिति १ भूसंस्कारंभुवःसंपन्नसस्यत्वं राजसंस्कारोराजसूयाश्वमेधावभृथस्नानमभैक्ष्यचर्यासंन्यासाभावं एतेनसंन्यासोराज्ञामधर्मइत्युक्तम् २ यथैवशरीराणित्यक्तवंतः ३। ४ औरसैःपौरुषैः ५ 
येनक्षात्रधर्मेणअन्यथार्थास्तांस्तान्धर्मान्वदंति ६ । ७ यागातिर्यज्ञादिः आश्रमधर्मश्चएतद्वयं ८ । ९ । १० नोपयुंजानंनाचरंतं ११ उत्कष्टव्याउत्कर्षंप्रापणीयाः एषधर्मःक्षत्रियस्य १२ । १३ । १४

दस्युजीविनोदस्युवृत्तिजीविनः १५ एतादिति संकरजानांचोरणांचकथंधर्मेस्थापनंकर्तव्यमितिप्रश्नार्थः १६ तेषामपिमात्रादिशुश्रूषारूपेधर्मेस्थापनंकर्तव्यमित्याह मातेति १७ । १८ । १९
२० महार्हाइति पाकयज्ञमुद्दिश्यब्राह्मणायधनंदेयमेवंश्राद्धमप्यामेनहिरण्येनचेतिज्ञेयम् २१ । २२ । २३ । २४ । २५ । २६ पापःपापादितिशेषः २७ । २८ । २९ । ३० गतिफलं आस्तिक
कथंधर्मांश्चरिष्यंतिसर्वेविषयवासिनः ॥ मद्विधैश्चकथंस्थाप्याःसर्वेवैदस्युजीविनः १५ एतदिच्छाम्यहंश्रोतुंभगवंस्तद्ब्रवीहिमे ॥ त्वंबंधुभूतोह्यस्माकंक्षत्रियाणां
सुरेश्वर १६ ॥ इंद्रउवाच ॥ मातापित्रोर्हिशुश्रूषाकर्तव्यासर्वदस्युभिः ॥ आचार्यगुरुशुश्रूषातथैवाश्रमवासिनाम् १७ भूमिपानांचशुश्रूषाकर्तव्यासर्वदस्यु
भिः ॥ वेदधर्मक्रियाश्चैवतेषांधर्मोविधीयते १८ पितृयज्ञास्तथाकूपाःप्रपाश्चशयनानिच ॥ दानानिचयथाकालंद्विजेभ्योविसृजेत्सदा १९ अहिंसासत्यमक्रोधो
वृत्तिदायानुपालनम् ॥ भरणंपुत्रदाराणांशौचमद्रोहएवच २० दक्षिणासर्वयज्ञानांदातव्याभूतिमिच्छता ॥ पाकयज्ञामहार्हाश्चदातव्याःसर्वदस्युभिः २१ एता
न्येवंप्रकाराणिविहितानिपुराऽनघ ॥ सर्वलोकस्यकर्माणिकर्तव्यानीहपार्थिव २२ ॥ मांधातोवाच ॥ दृश्यंतेमानुषेलोकेसर्ववर्णेषुदस्यवः ॥ लिंगांतरेवर्तमाना
आश्रमेषुचतुर्ष्वपि २३ ॥ इंद्रउवाच ॥ विनष्टायांदंडनीत्यांराजधर्मेनिराकृते ॥ संप्रमुह्यंतिभूतानिराजदौरात्म्यतोऽनघ २४ असंख्याताभविष्यंतिभिक्षवोलिं
गिनस्तथा ॥ आश्रमाणांविकल्पाश्चनिवृत्तेऽस्मिन्कृतेयुगे २५ अशृण्वानाःपुराणानांधर्माणांपरमागतीः ॥ उत्पथंप्रतिपत्स्यंतेकाममन्युसमीरिताः २६ यदा
निवर्त्यंतेपापोदंडनीत्यामहात्मभिः ॥ तदाधर्मोनचलतेसद्भूतःशाश्वतःपरः २७ सर्वलोकगुरुंचैवराजानंयोऽवमन्यते ॥ नतस्यदत्तंनहुतंनश्राद्धंफलतेक्वचित् २८
मानुषाणामधिपतिंदेवभूतंसनातनम् ॥ देवाऽपिनावमन्यंतेधर्मकामंनरेश्वरम् २९ प्रजापतिर्हिभगवान्सर्वंचैवासृजज्जगत् ॥ सप्रवृत्तिनिवृत्त्यर्थंधर्माणांक्षत्रमिच्छ
ति ३० प्रवृत्तस्यहिधर्मस्यबुद्ध्यायःस्मरतेगतिम् ॥ समेमान्यश्चपूज्यश्चतत्रक्षत्रंप्रतिष्ठितम् ३१ ॥ भीष्मउवाच ॥ एवमुक्त्वासभगवान्मरुद्गणवृतःप्रभुः ॥ ज
गामभवनंविष्णोरक्षरंशाश्वतंपदम् ३२ एवंप्रवर्तितेधर्मेपुरासुचरितेऽनघ ॥ कःक्षत्रमवमन्येतचेतनावान्बहुश्रुतः ३३ अन्यायेनप्रवृत्तानिनिवृत्तानितथैवच ॥
अंतराविलयंयांतियथापथिविचक्षुषः ३४ आदौप्रवर्तितेचक्रेतथैवादिपरायणे ॥ वर्तस्वपुरुषव्याघ्रसंविजानामितेऽनघ ३५ ॥ इतिश्रीमहाभारतेशां
तिपर्वणिराजधर्मानुशासनपर्वणिइंद्रमांधातृसंवादेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ७ ॥ युधिष्ठिरउवाच ॥ श्रुतामेकथिताःपूर्वेचत्वारोमानवाश्रमाः ॥ व्याख्या
नयित्वाव्याख्यानमेषामाचक्ष्वपृच्छतः १ ॥ भीष्मउवाच ॥ विदिताःसर्वएवेहधर्मास्तवयुधिष्ठिर ॥ यथाममहाबाहोविदिताःसाधुसंमताः २
स्वात्समेमान्यः ३१ । ३२ । ३३ अन्यायेनक्षत्रधर्मावज्ञया ३४ चक्रेधातुराज्ञायांआदिपरायणेपूर्वेषांशरणभूतेवर्तस्व तेत्वांसंविजानामिसम्यक्समर्थोऽसीतिजानामि ३५ ॥ इतिशांतिपर्वणि
राजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ७ ॥ ॥ श्रुताइति मानवस्यमनुष्यमात्रस्याऽऽश्रमाश्चत्वारइतिश्रुतं तत्कथंदस्यूनामप्युत्तमाश्रमयो
गः एषामाश्रमाणां व्याख्यानंस्पष्टीकरणं व्याख्यानयित्वाविस्तरंनीत्वाआचक्ष्व आख्यानयित्वेतिनामधातुपदम् १ यथाममविदितास्तथातवविदिताइत्यन्वयः २

लिंगस्यसूक्ष्मस्याप्यंतरंकारणंहादाकाशंतद्वंतंसर्वज्ञमित्यर्थः ३ एतानिचातुराश्रम्यकारिणांलिंगानितत्ताराज्ञाराजधर्मेष्वेववर्ततेइत्यर्थः ४ अत्रयोयस्याश्रमस्यासाधारणोधर्मःसयत्रकुत्रचि दाश्रमेयस्यांकस्यांचिज्ञातौदृष्टश्चेत्सतदाश्रमधर्मप्राप्यंस्थानमाप्नोतिनतूत्तमपदप्राप्तौजातिराश्रमोवाकारणमित्यध्यायार्थस्तमाह अकामेत्यादिना कामद्वेषराहित्यंसमदर्शित्वंचयतेरसाधारणो

॥५६॥ यत्तुलिंगांतरगतंपृच्छसेमांयुधिष्ठिर ॥ धर्मंधर्मभृतांश्रेष्ठतन्निबोधनराधिप ३ सर्वाण्येतानिकौंतेयविद्यंतेमनुजर्षभ ॥ साध्वाचारप्रवृत्तानांचातुराश्रम्यकारिणाम् अ०
४ अकामद्वेषयुक्तस्यदंडनीत्यायुधिष्ठिर ॥ समदर्शिनश्चभूतेषुभैक्ष्याश्रमपदंभवेत् ५ वेत्तिज्ञानविसर्गंचनिग्रहानुग्रहंतथा ॥ यथोक्तवृत्तेर्धीरस्यक्षेमाश्रमपदंभ
वेत् ६ अर्हान्पूजयतोनित्यंसंविभागेनपांडव ॥ सर्वतस्तस्यकौंतेयभैक्ष्याश्रमपदंभवेत् ७ ज्ञातिसंबंधिमित्राणिव्यापन्नानियुधिष्ठिर ॥ समभ्युद्धरमाणस्यदीक्षा ॥६६॥
श्रमपदंभवेत् ८ लोकमुख्येषुसत्कारंलिंगिमुख्येषुचासकृत् ॥ कुर्वतस्तस्यकौंतेयवन्याश्रमपदंभवेत् ९ आह्निकंपित्र्यज्ञांश्चभूतयज्ञान्समानुषान् ॥ कुर्वतःपार्थ
विपुलान्वन्याश्रमपदंभवेत् १० संविभागेनभूतानामतिथीनांतथाऽर्चनात् ॥ देवयज्ञैश्चराजेंद्रवन्याश्रमपदंभवेत् ११ मर्दनंपरराष्ट्राणांशिष्टार्थंसत्यविक्रम ॥ कुर्व
तःपुरुषव्याघ्रवन्याश्रमपदंभवेत् १२ पालनात्सर्वभूतानांस्वराष्ट्रपरिपालनात् ॥ दीक्षाबहुविधाराजन्सत्याश्रमपदंभवेत् १३ वेदाध्ययननित्यत्वंक्षमाऽथाचार्य
पूजनम् ॥ अथोपाध्यायशुश्रूषाब्रह्माश्रमपदंभवेत् १४ आह्निकंजपमानस्यदेवान्पूजयतःसदा ॥ धर्मेणपुरुषव्याघ्रधर्माश्रमपदंभवेत् १५ मृत्युर्वारक्षणंवेतियस्य
राज्ञोविनिश्चयः ॥ प्राणद्यूतेततस्तस्यब्रह्माश्रमपदंभवेत् १६ अजिह्ममशठंमार्गंवर्तमानस्यभारत ॥ सर्वदासर्वभूतेषुब्रह्माश्रमपदंभवेत् १७ वानप्रस्थेषुविप्रेषुत्रै
विद्येषुचभारत ॥ प्रयच्छतोर्थान्विपुलान्वन्याश्रमपदंभवेत् १८ सर्वभूतेष्वनुक्रोशंकुर्वतस्तस्यभारत ॥ आनृशंस्यप्रवृत्तस्यसर्वावस्थंपदंभवेत् १९ बालवृद्धेषु
कौंतेयसर्वावस्थंयुधिष्ठिर ॥ अनुक्रोशक्रियापार्थसर्वावस्थंपदंभवेत् २० बलात्कृतेषुभूतेषुपरित्राणंकुरूद्वह ॥ शरणागतेषुकौरव्यकुर्वन्गार्हस्थ्यमावसेत् २१ च
राचराणांभूतानांरक्षणंचापिसर्वशः ॥ यथार्हपूजांचतथाकुर्वन्गार्हस्थ्यमावसेत् २२ ज्येष्ठानुज्येष्ठपत्नीनांभ्रातॄणांपुत्रनप्तृणाम् ॥ निग्रहानुग्रहौपार्थगार्हस्थ्य
मितितत्तपः २३ साधूनामर्चनीयानांपूजासुविदितात्मनाम् ॥ पालनंपुरुषव्याघ्रगृहाश्रमपदंभवेत् २४ आश्रमस्थानिभूतानियस्तुवेश्मनिभारत ॥ आद
दीतेहभोज्येनतद्गार्हस्थ्यंयुधिष्ठिर २५ यःस्थितःपुरुषोधर्मेधात्रासृष्टेयथाऽर्थवत् ॥ आश्रमाणांहिसर्वेषांफलंप्राप्नोत्यनामयम् २६ यस्मिन्ननश्यंतिगु
णाःकौंतेयपुरुषेसदा ॥ आश्रमस्थंतमप्याहुर्नरश्रेष्ठंयुधिष्ठिर २७

धर्मस्तद्वान्नराजायदिदंडनीत्याभूतेषुवर्ततेहितस्ययज्ञैक्ष्याश्रमस्यसंन्यासिनोयत्पदंब्रह्मलोकप्राप्तिस्तद्भवेत् एवंसर्वत्रज्ञेयम् ५ क्षेमाश्रमोगार्हस्थ्यम् ६ भैक्ष्याश्रमोब्रह्मचर्यम् ७ दीक्षाश्रमोवै ॥५६॥
खानसः ८ । ९ । १० । ११ परराष्ट्राणांवनौषधीनामिवशिष्टार्थंशिष्टसंरक्षणार्थंकुर्वन्वनितुल्यः १२ दीक्षाबहुविधेति यावत्पालनंतावत्तोयज्ञाःकृताइत्यर्थः सत्याश्रमोब्रह्मलोकप्रदआश्रमः
संन्यासः १३ । १४ । १५ । १६ । १७ । १८ अनुक्रोशंदयां आनृशंस्यमनिष्ठुरत्वम् १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० दशधर्मगतोभीतस्त्वादिना अत्यंतंव्याकुलतयाधर्माधर्मप्रतिपत्तिशून्योऽपिसोऽश्रमीसःआश्रमी सर्वाश्रमफलभागित्यर्थः ३१ । ३२ । ३३ । ३४ । ३५ । ३६ धर्मेइति राजधर्मो
त्मिकानौःधर्मेऽध्याविवस्थितासत्वमेववीर्यंकर्णधारवत्कंयत्र धर्मसेतुःशाखंसैववटारकाबंधनरज्जुर्यत्र त्यागवातेनेवशीघ्रगा ३७ सत्वस्थोधीसत्वमात्रनिष्ठः ३७ भावेनचेतसा योगेनचित्तनिरोधेन
स्थानमानंकुलेमानंवयोमानंतथैवच ॥ कुर्वन्वसतिसर्वेषुह्याश्रमेषुयुधिष्ठिर २८ देशधर्मांश्चकौंतेयकुलधर्मांस्तथैवच ॥ पालयन्पुरुषव्याघ्रराजासर्वाश्रमीभवेत्
२९ कालेविभूतिंभूतानामुपहारांस्तथैवच ॥ अर्हयन्पुरुषव्याघ्रसाधूनामाश्रमेवसेत् ३० दशधर्मगतश्चापियोधर्मंप्रत्यवेक्षते ॥ सर्वलोकस्यकौंतेयराजाभवतिसो
श्रमी ३१ येधर्मकुशलालोकेधर्मंकुर्वंतिभारत ॥ पालितायस्यविषयेधर्मांशस्तस्यभूपतेः ३२ धर्मारामान्धर्मपरान्येनरक्षंतिमानवान् ॥ पार्थिवाःपुरुषव्या
घ्रतेषांपापंहरंतिते ३३ येचाप्यत्रसहायाःस्युःपार्थिवानांयुधिष्ठिर ॥ तेचैवांशहराःसर्वेधर्मेपरकृतेऽनघ ३४ सर्वाश्रमपदेऽप्याहुर्गार्हस्थ्यंदीप्तनिर्णयम् ॥ पावनं
पुरुषव्याघ्रयंधर्मंपर्युपास्महे ३५ आत्मोपमस्तुभूतेषुयोवैभवतिमानवः ॥ न्यस्तदंडोजितक्रोधःप्रेत्येहलभतेसुखम् ३६ धर्मेस्थितासत्ववीर्याधर्मसेतुवटारका ॥
त्यागवाताध्वगाशीघ्रानौस्तंसंतारयिष्यति ३७ यदानिवृत्तःसर्वस्मात्कामोयोस्यहृदिस्थितः ॥ तदाभवतिसत्वस्थस्ततोब्रह्मसमश्नुते ३८ सुप्रसन्नस्तुभावेनयो
गेनचनराधिप ॥ धर्मंपुरुषशार्दूलप्राप्स्यतेपालनेरतः ३९ वेदाध्ययनशीलानांविप्राणांसाधुकर्मणाम् ॥ पालनेयत्नमातिष्ठसर्वलोकस्यचेवह ४० वनेचरंतियेध
र्मंमाश्रमेषुचभारत ॥ रक्षणात्तच्छतगुणंधर्मंप्राप्नोतिपार्थिवः ४१ एषतेविविधोधर्मःपांडवश्रेष्ठकीर्तितः ॥ अनुतिष्ठत्वमेनंवैपूर्वदृष्टंसनातनम् ४२ चातुराश्रम्यमेका
ग्र्यंचातुर्वर्ण्यंचपांडव ॥ धर्मंपुरुषशार्दूलप्राप्स्यसेपालनेरतः ४३ ॥ इतिश्रीमहाभारतेशां०राजधर्मा०चातुराश्रम्यविधौषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥
युधिष्ठिरउवाच ॥ ॥ चातुराश्रम्यमुक्तंतेचातुर्वर्ण्यंतथैवच ॥ राष्ट्रस्ययत्कृत्यतमंतत्तोब्रूहिपितामह १ ॥ ॥ भीष्मउवाच ॥ ॥ राष्ट्रस्यैतत्कृत्यतमंराज्ञएवाभि
षेचनम् ॥ अनिंद्रमबलंराष्ट्रंदस्यवोऽभिभवंत्युत २ अराजकेषुराष्ट्रेषुधर्मोनव्यवतिष्ठते ॥ परस्परंचखादंतिसर्वथाधिगराजकम् ३ इंद्रमेवप्रवृणुतेयद्राजानमिति
श्रुतिः ॥ यथैवेंद्रस्तथाराजासंपूज्योभूतिमिच्छता ४ नाराजकेषुराष्ट्रेषुवस्तव्यमितिरोचये ॥ नाराजकेषुराष्ट्रेषुहव्यमग्निर्वहत्युत ५ अथचेदभिवर्तेतराज्यार्थी
बलवत्तरः ॥ अराजकाणिराष्ट्राणिहतवीर्याणिवापुनः ६ प्रत्युद्गम्याभिपूज्यःस्यादेतदत्रसुमंत्रितम् ॥ नहिपापात्परतरमस्तिकिंचिदराजकात् ७ सचेत्समनुप
श्येतसमग्रंकुशलंभवेत् ॥ बलवान्हिप्रकुपितःकुर्यान्निःशेषतामपि ८

२० ३९ । ४० । ४१ पूर्वमनादिं सनातनंपारंपर्यागतम् ४२ अध्यायार्थमुपसंहरति चातुराश्रम्यमिति ४३ ॥ इतिशांतिपर्वणिनीलकंठीयेभारतभावदीपेषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥
चातुराश्रम्यमिति १ राष्ट्रस्यवास्तव्यस्यराष्ट्रवासिनोजनस्यकृत्यतमंमुख्यंकार्यमनिंद्रमराजकमतएवाबलम् २ नव्यवतिष्ठतेअन्योन्यंलोकाधर्मव्यवस्थापनंनकुर्वंतीत्यर्थः ३ । ४ । ५ अथेति
राज्यार्थीअन्योऽपिकश्चिदायातितदासंपूज्यः राष्ट्रस्थैरित्युभयोःसंबंधः ६ अपूजनेदोषमाह नहीति ७ सचेदिति तत्प्रसादप्रकोपायत्तेकुशलाकुशलेराष्ट्रस्येत्यर्थः ८

९ । १० । ११ धनादेरर्थेउपभोगः १२।१३ ।१४।१५। १६।१७ वाक्क्रूरोनिष्ठुरभाषी दंडपरुषउग्रदंडः पारजायिकःपरस्त्रीगामी १८।१९ असुखार्तादुःखपीडिताः असुखार्ताइतिपाठे सुखैरर्थैश्चही
नाः दिशदेहि २० ताःप्रजाःनाभिनन्दनाभिचकार २१ । २२ अधिपंचाशत्पंचाशतमधिकृत्यपंचाशत्पशुलाभेएकंभागंतुभ्यंदास्यामइत्यर्थः तथैवहिरण्यस्यापि २६ विवाहेषूद्यतासुकन्यासुशु

भूयांसंलभतेक्लेशंयागोर्भवतिदुर्दुहा ॥ अथयासुदुहाराजन्नैवतांवितुदंत्यपि ९ यदतप्तंप्रणमतेनैतत्संतापमर्हति ॥ यत्स्वयंनमतेदारुनतत्संनामयंत्यपि १० एत
योपमयावीरसन्नमेतबलीयसे ॥ इंद्रायसप्रणमतेनमतेयोबलीयसे ११ तस्माद्राजैवकर्तव्यःसततंभूतिमिच्छता ॥ नधनार्थोनदारार्थस्तेषांयेषामराजकम् १२
प्रीयतेहिहरन्पापःपरवित्तमराजके ॥ यदाऽस्यउद्धरंत्यन्येतदाराजानमिच्छति १३ पापाह्यपितदाक्षेमंनलभंतेकदाचन ॥ एकस्यहिद्वौहरतोद्वयोश्चबहवोऽपरे
१४ अदासःक्रियतेदासोह्रियंतेचबलात्स्त्रियः ॥ एतस्मात्कारणाद्देवाःप्रजापालान्प्रचक्रिरे १५ राजाचेन्नभवेल्लोकेपृथिव्यांदंडधारकः ॥ जलेमत्स्यानिवाभक्ष्य
न्दुर्बलंबलवत्तराः १६ अराजकाःप्रजाःपूर्वंविनेशुरितिनःश्रुतम् ॥ परस्परंभक्षयंतोमत्स्याइवजलेकृशान् १७ समेत्यतास्ततश्चक्रुःसमयानितिनःश्रुतम् ॥ वा
क्शूरोदंडपरुषोयश्चस्यात्पारजायिकः १८ यःपरस्वमथादद्यात्त्याज्यानस्तादृशाइति ॥ विश्वासार्थंचसर्वेषांवर्णानामविशेषतः ॥ तास्तथासमयंकृत्वासमयेना
वतस्थिरे १९ सहितास्तास्तदाजग्मुरसुखार्ताःपितामहम् ॥ अनीश्वराविनश्यामोभगवन्नीश्वरंदिश २० यंपूजयेमसंभूययश्चनःप्रतिपालयेत् ॥ ततोमनुंव्या
दिदेशमनुर्नाभिननंदताः २१ ॥ ॥ मनुरुवाच ॥ ॥ बिभेमिकर्मणःपापाद्राज्यंहिभृशदुस्तरम् ॥ विशेषतोमनुष्येषुमिथ्यावृत्तेषुनित्यदा २२ ॥ ॥ भीष्मउ
वाच ॥ ॥ तमब्रुवन्प्रजामाभैःकर्तॄनेनोगमिष्यति ॥ पशूनामधिपंचाशद्धिरण्यस्यतथैवच २३ धान्यस्यदशमंभागंदास्यामःकोशवर्धनम् ॥ कन्यांशुल्केचारु
रूपांविवाहेषूद्यतासुच २४ मुखेनशस्त्रपत्रेणयेमनुष्याःप्रधानतः ॥ भवंतंतेऽनुयास्यंतिमहेंद्रमिवदेवताः २५ सत्वंजातबलोराजादुष्प्रधर्षःप्रतापवान् ॥ सुखे
धास्यसिनःसर्वान्कुबेरइवनैर्ऋतान् २६ यंचधर्मंचरिष्यंतिप्रजाराज्ञासुरक्षिताः ॥ चतुर्थंतस्यधर्मस्यत्वत्संस्थंवैभविष्यति २७ तेनधर्मेणमहतासुखंलब्धेनभा
वितः ॥ पाह्यस्मान्सर्वतोराजन्देवानिवशतक्रतुः २८ विजयायहिनिर्याहिप्रतपन्रश्मिवानिव ॥ मानंविधमशत्रूणांजयोऽस्तुतवसर्वदा २९ सनिर्ययौमहातेजा
बलेनमहतावृतः ॥ महाभिजनसंपन्नस्तेजसाप्रज्वलन्निव ३० तस्यदृष्ट्वामहत्त्वंतंमहेंद्रस्येवदेवताः ॥ अपतत्रसिरेसर्वेस्वधर्मेचदधुर्मनः ३१ ततोमहींपरिययौप
र्जन्यइववृष्टिमान् ॥ शमयन्सर्वतःपापान्स्वकर्मसुचयोजयन् ३२ एवंयेभूतिमिच्छेयुःपृथिव्यांमानवाःक्वचित् ॥ कुर्यूराजानमेवाग्रेप्रजाऽनुग्रहकारणात् ३३ नम
स्येरंश्चतंभक्त्याशिष्याइवगुरुंसदा ॥ देवाइवचदेवेंद्रंतत्रराजानमंतिके ३४ सत्कृतंस्वजनेनेहपरोऽपिबहुमन्यते ॥ स्वजनेनत्ववज्ञातंपरेपरिभवंत्युत ३५

शुल्केमौल्यप्रसंगेसतिसुरूपांकन्यांतुभ्यंदास्यामइतिपूर्वेणान्वयः विवादेषुद्यतासुचेतिप्राचांपाठः इयंमयाक्रियाइयंममयाक्रियेतिविवादविषयास्विवितदर्थः । विवादेयूतवासुचेतिपाठेयूतवायूतेपणी
कृतत्वं २४ मुखेनमुख्यतःप्रथमभित्यर्थः शस्त्रपत्रेणशस्त्रेणवाहनेनच प्रधानतःश्रेष्ठाःप्रथमायेतसिः २५।२६।२७। २८ मानंदर्पविधमनाशय २९।३० अपतत्रसिरेत्रासंप्रापुः ३१।३२।३३।३४।३५

९ । १० । ११ पत्रंवाहनं ३६ । ३७ । ३८ संविभागीविभज्यभोक्ता वल्गुशोभनं ३९ ॥ इतिशांतिपर्वणिराजधर्मानुशासनप० नीलकंठीयेभारतभावदीपेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ किमाहुरिति १। २। ३
वैनयिकमभ्युत्थानाभिवादनादिकं दक्षिणादक्षिणावोऽनंतरःसमीपेभूत्वाप्रदक्षिणीकृत्येत्यर्थः ४।५।६।७।८ समुदीर्णस्यकमर्यादं समुत्सुकंपरदाराद्यासक्तं प्रसादयतिदंडेनशुद्धंकरोति

राज्ञःपरैःपरिभवःसर्वेषामसुखावहः ॥ तस्माच्छत्रंचपत्रंचवासांस्याभरणानिच ३६ भोजनान्यथपानानिराज्ञेदद्युर्गृहाणिच ॥ आसनानिचशय्याश्चसर्वोपक
रणानिच ३७ गोप्तातस्माद्दुराधर्षःस्मितपूर्वाभिभाषिता ॥ आभाषितश्चमधुरंप्रत्याभाषेतमानवान् ३८ कृतज्ञोदृढभक्तिःस्यात्संविभागीजितेंद्रियः ॥ ईक्षि
तःप्रतिवीक्षेतमृदुवल्गुचसुष्ठुच ३९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध० राष्ट्रेराजकरणावश्यकत्वकथनेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ युधिष्ठिरउवाच ॥
किमाहुर्दैवतंविप्राराजानंभरतर्षभ ॥ मनुष्याणामधिपतिंतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीमितिहासंपुरातनम् ॥ बृहस्पतिंवसुमना
यथापप्रच्छभारत २ राजावसुमनानामकौसल्योधीमतांवरः ॥ महर्षिकिलपप्रच्छकृतप्रज्ञंबृहस्पतिम् ३ सर्ववैनयिकंकृत्वाविनयज्ञोबृहस्पतिम् ॥ दक्षिणाऽनंत
रोभूत्वाप्रणम्यविधिपूर्वकम् ४ विधिंपप्रच्छराज्यस्यसर्वलोकहितेरतः ॥ प्रजानांसुखमन्विच्छन्धर्मशीलंबृहस्पतिम् ५ ॥ वसुमनाउवाच ॥ केनभूतानिवर्धंते
क्षयंगच्छंतिकेनवा ॥ कमर्चंतोमहाप्राज्ञसुखमव्ययमाप्नुयुः ६ एवंपृष्टोमहाप्राज्ञःकौसल्येनामितौजसा ॥ राजसत्कारमव्यग्रंशशंसास्मैबृहस्पतिः ७ ॥ बृहस्प
तिरुवाच ॥ राजमूलोमहाप्राज्ञधर्मोलोकस्यलक्ष्यते ॥ प्रजाराजभयादेवनखादंतिपरस्परम् ८ राजाह्येवाखिलंलोकंसमुदीर्णंसमुत्सुकम् ॥ प्रसादयतिधर्मेणप्र
साद्यचविराजते ९ यथाह्यनुदयेराजन्भूतानिशशिसूर्ययोः ॥ अंधेतमसिमज्जेयुरपश्यंतःपरस्परम् १० यथाह्यनुदकेमत्स्यानिराक्रंदेविहंगमाः ॥ विहरेयुर्यथा
कामंविहिंसंतःपुनःपुनः ११ विमथ्यातिक्रमेरंश्चविषह्यापिपरस्परम् ॥ अभावमचिरेणैवगच्छेयुर्नात्रसंशयः १२ एवमेवविनाराज्ञाविनश्येयुरिमाःप्रजाः ॥
अंधेतमसिमज्जेयुरगोपाःपशवोयथा १३ हरेयुर्बलवंतोऽपिदुर्बलानांपरिग्रहान् ॥ हन्युर्व्यायच्छमानांश्चयदिराजानपालयेत् १४ ममेदमितिलोकेऽस्मिन्नभ
वेत्संपरिग्रहः ॥ नदारानचपुत्रःस्यान्नधनंनपरिग्रहः ॥ विष्वग्लोपःप्रवर्तेतयदिराजानपालयेत् १५ यानंवस्त्रमलंकारान्रत्नानिविविधानिच ॥ हरेयुःसहसापा
पायदिराजानपालयेत् १६ पतेद्बहुविधंशस्त्रंबहुधाधर्मचारिषु ॥ अधर्मःप्रगृहीतःस्याद्यदिराजानपालयेत् १७ मातरंपितरंवृद्धमाचार्यमतिथिंगुरुम् ॥
क्लिश्नीयुरपिहिंस्युर्वायदिराजानपालयेत् १८ वधबंधपरिक्लेशोनित्यमर्थवतांभवेत् ॥ ममत्वंचनविंदेयुर्यदिराजानपालयेत् १९ अंताश्चाकालएवस्युर्लोकोऽ
यंदस्युसाद्भवेत् ॥ पतेयुर्नरकंघोरंयदिराजानपालयेत् २० नयोनिदोषोवर्तेतनकृषिर्नवणिक्पथः ॥ मज्जेद्धर्मस्त्रयीनस्याद्यदिराजानपालयेत् २१

९ । १० अनुदकेह्यल्पोदके निराक्रंदेहिंस्रभयरहिते ११ । १२ । १३ परिग्रहान्गृहादीन् व्यायच्छमानान्स्वंस्वमर्थमाग्रहेणरक्षमाणान् १४ ममेदमितिनस्यादपितुबलवदइदमित्येवस्यात्
विष्वक्सर्वतः लोपोऽर्थानांलुंठनं १५ । १६ । १७ । १८ । १९ अंताम्रत्यवः दस्युसाच्चोराधीनः २० योनिदोषोव्यभिचारेविगानम् २१

२१ नसंप्रवर्तेरन्नरेतःसिंचेरन् गर्गरामंथन्यः । 'गर्गरीमीनभेदेस्त्रीमंथन्याम्'इतिमेदिनी २३ । २४ । २५ । २६ । २७ हस्ताद्धस्तंहस्तस्थंममपिचोराहरेयुः २८ अनयाअनीतयः । अनाया सभितिपाठेअक्लेशंयथास्यात्तथाप्रवर्तेरन्परदारादिषु २९ विवृत्त्योद्घाट्य ३० हस्तलाघवंतरसाध्यंताडनं आक्रुष्टंगालनंवा कुतोनसहतेअपित्वनायकत्वात्सहतएव गांपृथ्वीं ३१ अपुरुषाअर

नयज्ञाःसंप्रवर्तेयुर्विधिवत्स्वाप्तदक्षिणाः ॥ नविवाहाःसमाजोवायदिराजानपालयेत् २२ नवृषाःसंप्रवर्तेरन्नमथ्येरंश्चगर्गराः ॥ घोषाःप्रणाशंगच्छेयुर्यदिराजान पालयेत् २३ त्रस्तमुद्विग्नहृदयंहाहाभूतमचेतनं ॥ क्षणेनविनशेत्सर्वंयदिराजानपालयेत् २४ नसंवत्सरसत्राणितिष्ठेयुरकुतोभयाः ॥ विधिवद्दक्षिणावंतियदि राजानपालयेत् २५ ब्राह्मणाश्चतुरोवेदान्नाधीयीरंस्तपस्विनः ॥ विद्यास्नाताव्रतस्नातायदिराजानपालयेत् २६ नलभेद्धर्मसंश्लेषंहतविप्रहतोजनः ॥ हर्तास्व स्थैद्रियोगच्छेद्यदिराजानपालयेत् २७ हस्ताद्धस्तंपरिमुषेद्भिद्येरन्सर्वसेतवः ॥ भयार्तविद्रवेत्सर्वंयदिराजानपालयेत् २८ अनयाःसंप्रवर्तेरन्भवेद्वैवर्णसंकरः ॥ दु र्भिक्षमाविशेद्राष्ट्रंयदिराजानपालयेत् २९ विवृत्त्यहियथाकामंगृहद्वाराणिशेरते ॥ मनुष्यारक्षिताराज्ञासमंतादकुतोभयाः ३० नाक्रुष्टंसहतेकश्चित्कुतोवाहस्त लाघवं ॥ यदिराजानसम्यग्गांरक्षयत्यपिधार्मिकः ३१ स्त्रियश्चापुरुषामार्गंसर्वालंकारभूषिताः ॥ निर्भयाःप्रतिपद्यंतेयदिरक्षतिभूमिपः ३२ धर्ममेवप्रपद्यंते नहिंसंतिपरस्परम् ॥ अनुगृह्णंतिचान्योन्यंयदारक्षतिभूमिपः ३३ यजंतेचमहायज्ञैस्त्रयोवर्णाःपृथग्विधैः ॥ युक्ताश्चाधीयतेविद्यांयदारक्षतिभूमिपः ३४ वार्ता मूलोह्ययंलोकस्त्रय्यावैधार्यतेसदा ॥ तत्सर्वंवर्ततेसम्यग्यदारक्षतिभूमिपः ३५ यदाराजाधुरंश्रेष्ठामादायवहतिप्रजाः ॥ महताबलयोगेनतदालोकःप्रसीदति ३६ यस्याभावेनभूतानामभावःस्यात्समंततः ॥ भावेचभावोनित्यंस्यात्कस्तंनप्रतिपूजयेत् ३७ तस्ययोवहतेभारंसर्वलोकभयावहम् ॥ तिष्ठन्प्रियहितेराज्ञ उभौलोकाविमौजयेत् ३८ यस्तस्यपुरुषःपापंमनसाप्यनुचिंतयेत् ॥ असंशयमिहक्लिष्टःप्रेत्यापिनरकंव्रजेत् ३९ नहिजात्ववमंतव्योमनुष्यइतिभूमिपः ॥ महतीदेवताह्येषानररूपेणतिष्ठति ४० कुरुतेपंचरूपाणिकालयुक्तानियःसदा ॥ भवत्यग्निस्तथादित्योमृत्युर्वैश्रवणोयमः ४१ यदाह्यासीदतःपापान्दहत्युग्रे णतेजसा ॥ मिथ्योपचरितोराजातदाभवतिपावकः ४२ यदापश्यतिचारेणसर्वभूतानिभूमिपः ॥ क्षेमंचकृत्वाव्रजतितदाभवतिभास्करः ४३ अशुचींश्चयदा क्रुद्धःक्षिणोतिशतशोनरान् ॥ सपुत्रपौत्रान्सामात्यांस्तदाभवतिसोऽतकः ४४ यदात्वधार्मिकान्सर्वांस्तीक्ष्णैर्दंडैर्नियच्छति ॥ धार्मिकांश्चानुगृह्णातिभवत्य थयमस्तदा ४५ यदातुधनधाराभिस्तर्पयत्युपकारिणः ॥ आच्छिनत्तिचरत्नानिविविधान्यपकारिणाम् ४६ श्रियंददातिकस्मैचित्कस्माच्चिदपकर्षति ॥ तदा वैश्रवणोराजालोकेभवतिभूमिपः ४७ नास्यापवादेस्थातव्यंदक्षेणाक्लिष्टकर्मणा ॥ धर्म्यमाकांक्षतालोकमीश्वरस्यानसूयता ४८

क्षिताअपि ३२ । ३३ । ३४ वार्ताजीविकातन्मूलः त्रय्याचदृष्टयादिहेतुतयात्रायतेरक्षतेसर्वंत्रयीवार्तादिः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ आसीदतःसमीपस्थान् मिथ्योपच रितोवंचितः ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

४९ कृष्णगतिरग्निः अभिपन्नस्यतिरस्कृतस्य ५० सर्वाणिद्रव्याणिरक्ष्याण्येवनतुहर्तव्यानि यद्वारक्षणीयानिद्रव्याण्येवरक्ष्याणि ५१ कूटंमारणयंत्रं'कूटोऽस्त्रीसीरावयवयंत्रयोः'इतिमेदिनी ५२ । ५३ राजारंजकः भोजःसुखानांभोजयिता विविधंराजतइतिविराट् श्रीमान्सम्राडितिराज्ञामपि राजेत्यकुंठितैश्वर्यः ५४ बुभूषुर्भवितुमिच्छुः ५५ । ५६ निषिद्धजनमहमेकएवेदंकार्यंकरिष्या

नहिराज्ञःप्रतीपानिकुर्वन्सुखमवाप्नुयात् ॥ पुत्रोभ्रातावयस्योवायद्यप्यात्मसमोभवेत् ४९ कुर्यात्कृष्णगतिःशेषंज्वलितोऽनिलसारथिः ॥ नतुराजाभिपन्नस्य शेषंक्वचनविद्यते ५० तस्यसर्वाणिरक्ष्याणिदूरतःपरिवर्जयेत् ॥ मृत्योरिवजुगुप्सेतराजस्वहरणान्नरः ५१ नश्येदभिमृशन्सद्योमृगःकूटमिवस्पृशन् ॥ आत्म स्वमिवरक्षेतराजस्वमिहबुद्धिमान् ५२ महांतंनरकंघोरमप्रतिष्ठमचेतनम् ॥ पतंतिचिररात्रायराजवित्तापहारिणः ५३ राजाभोजोविराट्सम्राट्क्षत्रियोभूपति र्नृपः ॥ यएभिःस्तूयतेशब्दैःकस्तंनार्चितुमर्हति ५४ तस्माद्बुभूषुर्नियतोजितात्मानियतेंद्रियः ॥ मेधावीस्मृतिमान्दक्षःसंश्रयेतमहीपतिम् ५५ कृतज्ञंप्रा ज्ञमक्षुद्रंदृढभक्तिंजितेंद्रियम् ॥ धर्मनित्यंस्थितंनीत्यांमंत्रिणंपूजयेन्नृपः ५६ दृढभक्तिंकृतप्रज्ञंधर्मज्ञंसंयतेंद्रियम् ॥ शूरमक्षुद्रकर्माणंनिषिद्धजनमाश्रयेत् ५७ प्रज्ञाप्रगल्भंकुरुतेमनुष्यंराजाकृशंवैकुरुतेमनुष्यम् ॥ राजाऽभिपन्नस्यकुतःसुखानिराजाऽभ्युपेतंसुखिनंकरोति ५८ राजाप्रजानांहृदयंगरीयोगतिःप्रतिष्ठासु खमुत्तमंच ॥ समाश्रितालोकमिमंपरंचजयंतिसम्यक्पुरुषानरेंद्र ५९ नराधिपश्चाप्यनुशिष्यमेदिनींदमेनसत्येनचसौहृदेन ॥ महद्भिरिष्ट्वाक्रतुभिर्महायशा स्त्रिविष्टपेस्थानमुपैतिशाश्वतम् ६० सएवमुक्तोंऽगिरसाकौसल्योराजसत्तमः ॥ प्रयत्नात्कृतवान्वीरःप्रजानांपरिपालनम् ६१ ॥ इतिश्रीमहाभारतेशांतिपर्व णिराजधर्मानुशासनपर्वणिआंगिरसवाक्येअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ पार्थिवेनविशेषेणकिंकार्यमवशिष्यते ॥ कथंर क्ष्योजनपदःकथंजेयाश्चशत्रवः १ कथंचारंप्रयुंजीतवर्णान्विश्वासयेत्कथम् ॥ कथंभृत्यान्कथंदारान्कथंपुत्रांश्चभारत २ ॥ भीष्मउवाच ॥ राजवृत्तंमहाराजश्रृ णुष्वावहितोऽखिलम् ॥ यत्कार्यंपार्थिवेनादौपार्थिवप्रकृतेनवा ३ आत्माजेयःसदाराज्ञाततोजेयाश्चशत्रवः ॥ अजितात्मानरपतिर्विजयेतकथंरिपून् ४ एता वानात्मविजयःपंचवर्गविनिग्रहः ॥ जितेंद्रियोनरपतिर्बाधितुंशक्नुयादरीन् ५ न्यसेतगुल्मान्दुर्गेषुसंधौचकुरुनंदन ॥ नगरोपवनेचैवपुरोद्यानेषुचैवह ६ सं स्थानेषुचसर्वेषुपुरेषुनगरेषुच ॥ मध्येचनरशार्दूलतथाराजनिवेशने ७ प्रणिधींश्चततःकुर्याज्जडांधबधिराकृतीन् ॥ पुंसःपरीक्षितान्प्राज्ञान्क्षुत्पिपासाश्रमक्ष मान् ८ अमात्येषुचसर्वेषुमित्रेषुविविधेषुच ॥ पुत्रेषुचमहाराजप्रणिदध्यात्समाहितः ९

मिकिमेतैरितिवादिनमेकांगवीरं ५७ । ५८ समाश्रितराजानमितिशेषः ५९ । ६० । ६१ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ एवंराज्ञांमहात्म्यंश्रुत्वातत्कर्तव्यंपृच्छति पार्थिवेनेति १ भृत्यादीनपिकथंप्रयुंजीतविश्वासयेच्चेतियोज्यं २ पार्थिवेनपृथुवंश्येनराज्ञापार्थिवप्रकृतेनवाविजातीयेनापितत्कार्यंकारिणा प्रहितेनेतिपा ठांतरं ३ आत्माचित्तं ४ पंचवर्गःश्रोत्रादिः ५ गुल्मान्रक्षिणःपत्तीन् संधौसीमांते ६ संस्थानेषुकोष्ठपालाद्युपवेशनस्थानेषु मध्येंऽतःपुरे ७ प्रणिधीन्चारान् ८ प्रणिदध्याद्गुप्तचारान्प्रयुंज्यात् ९

१० आपणेषुवणिजांहट्टेषु विहारेषुयूनांमल्लक्रीडास्थानेषु समाजेषुमहाजनसमुदायेषु ११ आरामेषुपुरवाटिकासु उद्यानेबहिर्वाटिकायां देशेष्वाकरस्थानेषु चत्वरे अधिकारिणामुपवेशनस्थाने सभासुराजसंसत्सु आवसथेषुतत्रतत्रमहतांगृहेषु १२ विचिनुयादन्विष्यात् १३ । १४ । १५ तैद्वारभूतैस्तान्द्वारीकरस्थसंदष्टपाद्बलवाद्भिर्नृपैःसहसंधिंकुर्यात् १६ पूर्वापकारिणः पूर्वंदुष्टाहरयपक्षाप्यश्चाद्दययाऽनुगृहीतास्तेपूर्वापकारवंतस्तान् १७ तत्रापिविशेषमाह यइति १८ यात्रायांयदीच्छास्यात्तर्हिदुर्बलत्वादिनाविज्ञातंशत्रुंमत्येवयात्रामाज्ञापयेदित्युत्तरेणसंबंधः यात्रांयाया दविज्ञातमितिपाठेदुर्बलंशत्रुमुद्दिश्यतेनाविज्ञातंययास्यात्तथायात्रांयायादितियोजना अनाक्रंदंमित्रहीनं अनंतरंबंधुजनहीनं व्यासक्तमन्येनयुद्धंकुर्वाणं प्रमत्तमनवहितम् १९ विधानंरक्षणंरक्ष

पुरेजनपदेचैवतथासामंतराजसु ॥ यथानविद्युरन्योन्यंप्रणिधेयास्तथाहिते १० चारांश्चविद्याग्प्रहितान्परेणभरतर्षभ ॥ आपणेषुविहारेषुसमाजेषुचाभिक्षुषु ११ आरामेषुतथोद्यानेपंडितानांसमागमे ॥ देशेषुचत्वरेचैवसभास्वावसथेषुच १२ एवंविविचिनुयाद्राजापरचारंविचक्षणः ॥ चारेहिविदितेपूर्वंहितंभवतिपांडव १३ यदातुहीनंनृपतिर्विद्यादात्मानमात्मना ॥ अमात्यैःसहसंमंत्र्यकुर्यात्संधिंबलीयसा १४ अज्ञायमानेहीनत्वेसंधिंकुर्यात्परेणवै ॥ लिप्सुर्वाकंचिदेवार्थं त्वरमाणोविचक्षणः १५ गुणवंतोमहोत्साहाधर्मज्ञाःसाधवश्चये ॥ संदधीतनृपस्तैश्चराष्ट्रंधर्मेणपालयन् १६ उच्छिद्यमानमात्मानंज्ञात्वाराजामहामतिः ॥ पूर्वापकारिणोहन्याल्लोकद्विष्टांश्चसर्वशः १७ योनोपकर्तुंशक्नोतिनापकर्तुंमहीपतिः ॥ नशक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशोभवेत् १८ यात्रांयायदिविज्ञातमनाक्रंदमनंतरं ॥ व्यासक्तंचप्रमत्तंचदुर्बलंचविचक्षणः १९ यात्रामाज्ञापयेद्वीरःकल्यःपुष्टबलःसुखी ॥ पूर्वंकृत्वाविधानंचयात्रायांनगरेतथा २० नचवश्योभवेदस्यनृपोयश्चातिवीर्यवान् ॥ हीनश्चबलवीर्याभ्यांकर्षयंस्तत्परोवसेत् २१ राष्ट्रंचपीडयेत्तस्यशस्त्राग्निविषमूर्छनैः ॥ अमात्यवल्लभानांचविवादांस्तस्यकारयेत् २२ वर्जनीयंसदायुद्धंराज्यकामेनधीमता ॥ उपायैस्त्रिभिरादानमर्थस्याहबृहस्पतिः २३ सांत्वेनतुप्रदानेनभेदेनचनराधिप ॥ यमर्थंशक्नुयात्प्राप्तुंतेनतुष्येत्पंडितः २४ आददीतबलिंचापिप्रजाभ्यःकुरुनंदन ॥ सषड्भागमपिप्राज्ञस्तासामेवाभिगुप्तये २५ दशधर्मगतेभ्योयद्वसुबह्वल्पमेवच ॥ तदाऽऽददीतसहसापौराणांरक्षणायवै २६ यथापुत्रास्तथापौत्राद्रष्टव्यास्तेनसंशयः ॥ भक्तिश्चैषांनकर्तव्याव्यवहारेप्रदर्शिते २७ श्रोतुंचैवन्यसेद्राजाप्राज्ञान्सर्वार्थदर्शिनः ॥ व्यवहारेषुसततंतत्रराज्यंप्रतिष्ठितम् २८

णादिसामग्रीसंपादनम् २० कर्षयन्वीर्यवंतं तत्परःकर्षणपरः २१ कर्षणमेवाह राष्ट्रंचेति कारयेद्भृत्यादिद्वारा २२ । २३ बलिनोराष्ट्रंकर्षन्दुर्बलस्तत्प्रसादेनार्थंयथावत्प्राप्तुंशक्नुयात्तेनतुष्येत् भवद्भिर्भक्तोवार्षिकःकरोनग्राह्योमयाचभवतोराष्ट्रंनोपहंतव्यमितिसांत्वं । मह्यंग्रामद्वयंदेयंतेनाहंशमिष्येइत्युक्त्याऽर्थप्रदानं । भेदेनराजामात्यान्भेदयित्वाराज्ञःस्वोपरिप्रयाणस्यविघ्नादिकंवाकर्तव्यमित्यादिना । क्षीणःप्रबलेनसहवैरंचेत्संग्रामंविनाएवमुपायत्रयेणस्वार्थंसाधयेदित्यर्थः २४ प्रजाभ्यःस्वाभ्यः २५ दशधर्मगतामत्तोन्मत्तादयस्तेभ्योदंड्येभ्योपद्वसुग्राह्यंतत्पौराणांरक्षणायभवति अदंडितास्तेपुरंबाधेरन्निति भावः २६ भक्तिःस्वीयत्वेनस्नेहदर्शनपुरःसरि २७ व्यवहारेष्वर्थिप्रत्यर्थिवाक्यविचारेषु विषयेषुराजामाज्ञान्पंडितान्न्यसेत् २८



आकरेस्वर्णाद्युत्पत्तिस्थाने । लवणेतदुत्पत्तिस्थाने । शुल्केधान्यादिविक्रयस्थाने । तरेनदीसंतरणे । नागबलेहस्तियूथे । एतेषुस्थानेष्वायव्ययविचारार्थममात्यान्न्यसेत् २९ । ३० । ३१ । ३२ ३३ । ३४ घोषान्वनस्थान्मार्गेषुराजपथेषुन्यसेत् । शाखानगराणिमहानगरस्योपनगराणि ३५ येइति धनिकादीन्दुर्गेषुप्रवेशयेदित्यर्थः ३६ अभिहारंसमीपमानयनं दहेत् परेषांतन्माभूदिति ३७ उपजपेत्भेदयित्वातद्द्वारादाहयेत् ३८ संक्रमानवतरणार्थान्सेतून् । जलंतटाकादिस्थंविस्रावयेत्तद्योग्यंवापीकूपादिस्थंदूषयेद्विषादिनानाशयेत् ३९ तदात्वेनवर्तमानकाले आयतीमित्युत्तरकालेषुच अपवर्गेतृतीया सर्वदामित्रकार्यउपस्थितेऽपितद्विहायेत्यर्थात् आत्मोपरस्यशत्रोःप्रतीघातंहंतारंभूम्यनंतरंनिकटदेशवासिनंतच्छत्रुमाश्रित्यनिवसेत् अयमर्थः । स्वराष्ट्रेयन्मुख्यंस्थानंतदाक्रम्यवसन्शत्रोःशत्रुभिःसर्वदास्नेहंकृत्वातद्बलेनशत्रून्स्वराष्ट्राद्दूरीकुर्यादिति ४० दुर्गाणांक्षुद्रदुर्गाणांपरेषामाश्रयोमाभूदितिमूलच्छेदंकुर्यात् ४१ । ४२ ‘प्रगंडीःकारयेत्सम्यक्षाड्गुण्यंस

आकरेलवणेशुल्केतरेनागबलेतथा ॥ न्यसेदमात्यान्नृपतिःस्वाप्तान्वापुरुषान्हितान् २९ सम्यग्दंडधरोनित्यंराजाधर्ममवाप्नुयात् ॥ नृपस्यसततंदंडःसम्यग्धर्मेप्रशस्यते ३० वेदवेदांगवित्प्राज्ञःसुतपस्वीनृपोभवेत् ॥ दानशीलश्चसततंयज्ञशीलश्चभारत ३१ एतेगुणाःसमस्ताःस्युर्नृपस्यसततंस्थिराः ॥ व्यवहारलोपेनृपतेःकुतःस्वर्गःकुतोयशः ३२ यदातुपीडितोराजाभवेद्राज्ञाबलीयसा ॥ तदाऽभिसंश्रयेद्दुर्गंबुद्धिमान्पृथिवीपतिः ३३ विधायाक्रम्यमित्राणिविधानमुपकल्पयेत् ॥ सामभेदान्विरोधार्थंविधानमुपकल्पयेत् ३४ घोषान्न्यसेतमार्गेषुग्रामानुत्थापयेदपि ॥ प्रवेशयेच्चतान्सर्वान्शाखानगरकेष्वपि ३५ येगुप्ताश्चैवदुर्गाश्चदेशास्तेषुप्रवेशयेत् ॥ धनिनोबलमुख्यांश्चसांत्वयित्वापुनःपुनः ३६ तस्याभिहारंकुर्याच्चस्वयमेवनराधिपः ॥ असंभवेप्रवेशस्यदहेदावाग्निनाभृशम् ३७ क्षेत्रस्थेषुचसस्येषुशत्रोरुपजपेन्नरान् ॥ विनाशयेद्वातत्सर्वंबलेनाथस्वकेनवा ३८ नदीमार्गेषुचतथासंक्रमानवसादयेत् ॥ जलंविस्रावयेत्सर्वमविस्राव्यंचदूषयेत् ३९ तदात्वेनायतीभिश्चनिवसेद्भूम्यनंतरम् ॥ प्रतीघातंपरस्याजौमित्रकार्येऽप्युपस्थिते ४० दुर्गाणांचाभितोराजामूलच्छेदंप्रकारयेत् ॥ सर्वेषांक्षुद्रवृक्षाणांचैत्यवृक्षान्विवर्जयेत् ४१ प्रवृद्धानांचवृक्षाणांशाखाःप्रच्छेदयेत्तथा ॥ चैत्यानांसर्वथात्याज्यमपिपत्रस्यपातनम् ४२ प्रगंडीःकारयेत्सम्यगाकाशजननीस्तदा ॥ आपूरयेच्चपरिखांस्थाणुनक्रझषाकुलाम् ४३ संकटद्वारकाणिस्युरुच्छ्वासार्थंपुरस्यच ॥ तेषांचद्वारवद्गुप्तिःकार्यासर्वात्मनाभवेत् ४४ द्वारेषुचगुरूण्येवयंत्राणिस्थापयेत्सदा ॥ आरोपयेच्छतघ्नीश्चस्वाधीनानिचकारयेत् ४५ काष्ठानिचाभिहार्याणितथाकूपांश्चखानयेत् ॥ संशोधयेत्तथाकूपान्कृतपूर्वान्पयोर्थिभिः ४६ तृणच्छन्नानिवेश्मानिपंकेनाथप्रलेपयेत् ॥ निर्हरेच्चतृणंमासिचैत्रेवह्निभयात्तथा ४७ नक्तमेवचभक्तानिपाचयेतनराधिपः ॥ नदिवाज्वालयेदग्निंवर्जयित्वाऽग्निहोत्रिकम् ४८

त्रिवर्गकम् । योवेत्तिपुरुषव्याघ्रसम्यक्पृथिवीमिमाम्’ इतिप्राचांपाठः तद्व्याख्यानंचतदीयमेव । ‘संचारोयत्रलोकानांदूरादेवावबुध्यते । प्रगंडीसाचविज्ञेयाबाह्यप्राकारसंज्ञिता । प्रणिधिस्तत्रयत्नेनकर्तव्योभूतिमिच्छता । सचाकाशरक्षीतिप्रोच्यतेशास्त्रकोविदैः’ इतितांश्चतुर्दिक्षुकारयेदित्यर्थः षाड्गुण्यंसंधिविग्रहादि । त्रिवर्गःस्थानवृद्धिक्षयरूपोवा । अरिमित्रोदासीनरूपोवा । मंत्रोत्साहप्रभुशक्तिरूपोवा । भूमिमित्रहिरण्यादिरूपोवा । धर्मार्थकामरूपोवा । उत्तरार्धार्थःस्पष्टः । प्रगंडीदुर्गप्राकारभित्तौशूराणामुपवेशनस्थानानि । आकाशजननीस्तत्रैवैकपक्षायांभित्तौतत्रस्थानारक्षणभूतायांबाह्यार्थदर्शनार्थानिक्षुद्रच्छिद्राणि यद्द्वाराआग्नेयाश्चगुलिकाःप्रक्षिप्यंते । स्थाणवःसशूलाः येषुपतन्तिदीर्यंतेनक्रैर्भक्ष्यते ४३ संकटद्वारकाणिसूक्ष्मद्वाराणितेषांचद्वारवद्गुप्तिःकार्या तेषांचाचारवद्गुप्तिरितिपाठेआचारवद्भिःशिष्टैर्गुप्तिःकार्या ४४ । ४५ । ४६ । ४७ । ४८

४८ कर्मारोलोहकारादिस्तच्छाला । अरिष्टंसूतिकागृहंतद्रूपासुशालासु । अंतर्विधेयःआच्छादितःकर्तव्यः महादंडोवधः ५० चाक्रिकान्शाकटिकान् कुशीलवान्कालखेखान् कीनाशानितिया वद् ५१ तीर्थेषुमंत्र्यादिष्वष्टादशसुप्राग्व्याख्यातेषु ५२ । ५३ । ५४ प्रतोलीरथ्या निष्कुटानिगृहारामाः ५५ । ५६ वर्णिनलिखकानाम् । 'वर्णीस्याल्लेखकेचित्रकारेऽपिब्रह्मचारिणि'इतिमेदिनी

कर्मारारिष्टशालासुज्वलेदग्निःसुरक्षितः ॥ गृहाणिचप्रवेश्यांतर्विधेयःस्याद्धुताशनः ४९ महादंडश्चतस्यस्याद्यस्याग्निर्वैदिवाभवेत् ॥ प्रघोषयेदथैवंचरक्षणार्थंपुरस्यच ५० भिक्षुकांश्चाक्रिकांश्चैवक्षीबोन्मत्तान्कुशीलवान् ॥ बाह्यान्कुर्यान्नरश्रेष्ठदोषायस्युर्हितेऽन्यथा ५१ चत्वरेष्वथतीर्थेषुसभास्वावसथेषुच ॥ यथार्थवर्णप्रणिधिंकुर्यात्सर्वस्यपार्थिवः ५२ विशालान्राजमार्गांश्चकारयीतनराधिपः ॥ प्रपाश्चविपणीश्चैवयथोद्देशंसमाविशेत् ५३ भांडागारायुधागारान्योधागारांश्चसर्वशः ॥ अश्वागारान्गजागारान्बलाधिकरणानिच ५४ परिखाश्चैवकौरव्यप्रतोलीर्निष्कुटानिच ॥ नजात्वन्यःप्रपश्येतगुह्यमेतद्युधिष्ठिर ५५ अर्थसंनिचयंकुर्याद्राजापरबलार्दितः ॥ तैलंवसामधुघृतमौषधानिचसर्वशः ५६ अंगारकुशमुंजानांपलाशशरवर्णिनाम् ॥ यवसेंधनदिग्धानांकारयीतचसंचयान् ५७ आयुधानांचसर्वेषांशक्त्यृष्टिप्रासवर्मणाम् ॥ संचयानेवमादीनांकारयीतनराधिपः ५८ औषधानिचसर्वाणिमूलानिचफलानिच ॥ चतुर्विधांश्चवैद्यान्वैसंगृह्णीयाद्विशेषतः ५९ नटांश्चनर्तकांश्चैवमल्लान्मायाविनस्तथा ॥ शोभयेयुःपुरवरंमोदयेयुश्चसर्वशः ६० यतःशंकाभवेच्चापिभृत्यतोऽथापिमंत्रितः ॥ पौरेभ्योनृपतेर्वापिस्वावशीनान्कारयीतताः ६१ कृतेकर्मणिराजेंद्रपूजयेद्धनसंचयैः ॥ दानेनचयथार्हेणसांत्वेनविविधेनच ६२ निर्वेदयित्वातुपरंहत्वावाकुरुनंदन ॥ ततोऽनृणोभवेद्राजायथाशास्त्रेनिदर्शितम् ६३ राज्ञासप्तैवरक्ष्याणितानिचैवनिबोधमे ॥ आत्माऽमात्याश्चकोशश्चदंडोमित्राणिचैवहि ६४ तथाजनपदाश्चैवपुरंचकुरुनंदन ॥ एतत्सप्तात्मकंराज्यंपरिपाल्यंप्रयत्नतः ६५ षाड्गुण्यंचत्रिवर्गंचत्रिवर्गपरमंतथा ॥ योवेत्तिपुरुषव्याघ्रसभुंक्तेपृथिवीमिमाम् ६६ षाड्गुण्यमितियत्प्रोक्तंतन्निबोधयुधिष्ठिर ॥ संधानासनमित्येवयात्रासंधानमेवच ६७ विगृह्यासनमित्येवयात्रांसंपरिगृह्यच ॥ द्वैधीभावस्तथाऽन्येषांसंश्रयोऽथपरस्यच ६८ त्रिवर्गश्चापियःप्रोक्तस्तमिहैकमनाःशृणु ॥ क्षयःस्थानंचवृद्धिश्चत्रिवर्गःपरमस्तथा ६९ धर्मश्चार्थश्चकामश्चसेवितव्योऽथकालतः ॥ धर्मेणचमहीपालश्चिरंपालयतेमहीम् ७० अस्मिन्नर्थेचश्लोकौद्वौगीतावंगिरसास्वयम् ॥ यादवीपुत्रभद्रंतेतावपिश्रोतुमर्हसि ७१ कृत्वासर्वाणिकार्याणिसम्यक्संपाल्यमेदिनीम् ॥ पालयित्वातथापौरान्परत्रसुखमेधते ७२ किंतस्यतपसाराज्ञःकिंचतस्याध्वरैरपि ॥ सुपालितप्रजोयःस्यात्सर्वधर्मविदेवसः ७३



यवसंधासः दिग्धानांविषाक्तबाणानाम् । 'दिग्धोविषाक्तबाणेस्यात्'इतिमेदिनी ५७ । ५८ चतुर्विधान्विषशल्यरोगकृत्याहरान् ५९ । ६० । ६१ । ६२ अस्थानेकोपेनपरस्यनिर्वेदस्ताडनं वाकृतंचैतंदानमानादिनापुनस्तत्समीकर्तव्यमित्याह निर्वेदयित्वेति ६३ । ६४ । ६५ । ६६ संधानासनंसंधिकृत्वाऽवस्थितिः यात्रासंधानंयानम् ६७ विगृह्यवैरंकृत्वाऽऽस्थानंविग्रहः । यात्रांसंपरिगृह्याऽऽसनंशत्रोर्भयमदृर्शनार्थयानंमदृर्श्यस्वस्याभेऽयस्थानम् । द्वैधीभावउभयत्रसंधिकरणं परस्याऽन्यस्याश्रयोदुर्गादेर्महाराजस्यवा ६८ । ६९ । ७० । ७१ । ७२ । ७३

अत्राध्यायंकेचित्समापयंति । दंडेति इदंद्वयंसमस्तंचव्यस्तंचतत्रकेनकस्यकिंक्रियतइतिप्रश्नत्रयम् ७४ दंडनीत्याःसकाशाद्राज्ञांप्रजानांचयन्महाभाग्यंतच्छृणु ७५ तत्रदंडनीत्याराजास्वर्गादिकंप्राप्नोति राज्ञांचदंडनीतिःकृतादीन्जनयति तावुभौचप्रजानांक्षेमंजनयतइत्युत्तरमाह दंडनीतिरित्यादिना स्वधर्मेभ्यःस्वधर्मार्थं अधर्मेभ्यइतिपंचमी ७६ असंकरेतद्रूपेक्षेमे ७७ स्वाम्ये

॥ युधिष्ठिरउवाच ॥ दंडनीतिश्चराजाचसमस्तौतावुभावपि ॥ कस्यकिंकुर्वतःसिध्येत्तन्मेब्रूहिपितामह ७४ ॥ भीष्मउवाच ॥ महाभाग्यंदंडनीत्याःसिद्धैःशब्दैःसहेतुकैः ॥ शृणुमेशंसतोराजन्यथावदिहभारत ७५ दंडनीतिःस्वधर्मेभ्यश्चातुर्वर्ण्यंनियच्छति ॥ प्रयुक्तास्वामिनासम्यगधर्मेभ्योनियच्छति ७६ चातुर्वर्ण्येस्वकर्मस्थेमर्यादानामसंकरे ॥ दंडनीतिकृतेक्षेमेप्रजानामकुतोभये ७७ स्वाम्येप्रयत्नंकुर्वंतित्रयोवर्णायथाविधि ॥ तस्माद्देवमनुष्याणांसुखंविद्धिसमाहितम् ७८ कालोवाकारणंराज्ञोराजावाकालकारणम् ॥ इतितेसंशयोमाभूद्राजाकालस्यकारणम् ७९ दंडनीत्यांयदाराजासम्यक्कार्त्स्न्येनवर्तते ॥ तदाकृतयुगंनामकालःसृष्टःप्रवर्तते ८० ततःकृतयुगेधर्मोनाधर्मोविद्यतेक्वचित् ॥ सर्वेषामेववर्णानांनाधर्मेरमतेमनः ८१ योगक्षेमाःप्रवर्तंतेप्रजानांनात्रसंशयः ॥ वैदिकानिचसर्वाणिभवंत्यपिगुणान्युत ८२ ऋतवश्चसुखाःसर्वेभवंत्युतनिरामयाः ॥ प्रसीदंतिनराणांचस्वरवर्णमनांसिच ८३ व्याधयोनभवंत्यत्रनाल्पायुर्दृश्यतेनरः ॥ विधवानभवंत्यत्रकृपणोनतुजायते ८४ अकृष्टपच्याप्टथिवीभवंत्योषधयस्तथा ॥ त्वक्पत्रफलमूलानिवीर्यवंतिभवंतिच ८५ नाधर्मोविद्यतेतत्रधर्मएवतुकेवलम् ॥ इतिकार्तयुगानेतान्धर्मान्विद्धियुधिष्ठिर ८६ दंडनीत्यांयदाराजात्रीनंशाननुवर्तते ॥ चतुर्थमंशमुत्सृज्यतदात्रेताप्रवर्तते ८७ अशुभस्यचतुर्थांशस्त्रीनंशाननुवर्तते ॥ कृष्टपच्यैवपृथिवीभवंत्योषधयस्तथा ८८ अर्धंत्यक्त्वायदाराजानीत्यर्धमनुवर्तते ॥ ततस्तुद्वापरंनामसकालःसंप्रवर्तते ८९ अशुभस्ययदात्वर्धंद्वावंशावनुवर्तते ॥ कृष्टपच्यैवपृथिवीभवत्यर्धफलातथा ९० दंडनीतिंपरित्यज्ययदाकार्त्स्न्येनभूमिपः ॥ प्रजाःक्लिश्नात्ययोगेनप्रवर्तेततदाकलिः ९१ कलावधर्मोभूयिष्ठंधर्मोभवतिनक्वचित् ॥ सर्वेषामेववर्णानांस्वधर्माच्च्यवतेमनः ९२ शूद्राभैक्षेणजीवंतिब्राह्मणाःपरिचर्यया ॥ योगक्षेमस्यनाशश्चवर्ततेवर्णसंकरः ९३ वैदिकानिचकर्माणिभवंतिविगुणान्युत ॥ ऋतवोनसुखाःसर्वेभवंत्यामयिनस्तथा ९४ ह्रसंतिचमनुष्याणांस्वरवर्णमनांस्युत ॥ व्याधयश्चभवंत्यत्रम्रियंतेचगतायुषः ९५ विधवाश्चभवंत्यत्रनृशंसाजायतेप्रजा ॥ क्वचिद्वर्षतिपर्जन्यःक्वचित्सस्यंप्ररोहति ९६ रसाःसर्वेक्षयंयांतियदानेच्छतिभूमिपः ॥ प्रजाःसंरक्षितुंसम्यग्दंडनीतिसमाहितः ९७ राजाकृतयुगस्रष्टात्रेतायाद्वापरस्यच ॥ युगस्यचचतुर्थस्यराजाभवतिकारणम् ९८ कृतस्यकरणाद्राजास्वर्गमत्यंतमश्नुते ॥ त्रेतायाःकरणाद्राजास्वर्गंनात्यंतमश्नुते ९९ प्रवर्तनाद्द्वापरस्ययथाभागमुपाश्नुते ॥ कलेःप्रवर्तनाद्राजापापमत्यंतमश्नुते १०० ततोवसतिदुष्कर्मानरकेशाश्वतीःसमाः ॥ प्रजानांकल्मषेमग्नोऽकीर्तिंपापंचविंदति १०१

स्वास्थ्येतान्निमित्तं तस्मात्क्षेमाख्यादसंकरात् ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ ८७ ८८ अशुभस्याऽधर्मस्य ८८ ८९ ९० अयोगेनाऽनुपायेन ९१ । ९२ ९३ । ९४ ९५ । ९६ । ९७ चतुर्थस्यकलेः ९८ । ९९ । १०० । १०१

१०२ सीमंतकरीव्यवस्थापिका ३ । ४ । १०१ ॥ इतिशांतिप० रा० नी० भा० एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ केनेति दंडनीतिंसम्यक्प्रयोज्यकेनवृत्तेनवर्तेतेतिप्रश्नः ॥ १ ॥ षट्त्रिंशत् वृत्तसंख्याकोधर्मचर्यादिगुणगणः सचप्रत्येकमेकैकगुणयोगात्षट्त्रिंशद्गुणैरकटुकतादिभिःसंयुतः अतएवगुणोपेतः यान्गुणान्धर्मादीन्वर्तन्गुणंकल्याणमवाप्नुयात्सोऽयंषट्त्रिंशत्कोगणस्त्वया श्रोतव्यइत्यर्थः ॥ २ ॥ अकटुकोरागद्वेषहीनःधर्मान्सर्वांश्चरेत् १ आस्तिकःपरलोककामुकःसन्स्नेहंकुर्यान्नतुलोभादिना २ अनृशंसोऽनिष्ठुरःसन्नर्थमर्जयेत् ३ अनुद्धतोधर्मार्थाविनाशयन्का ममिंद्रियप्रीतिंचरेत् ४ ॥३ ॥ अकृपणोऽदीनः ५ अविकत्थनः श्लाघाहीनः ६ । ७ अनिष्ठुरःसदयः ८ ॥ ४ ॥ आर्यत्वंजानन्संधिंकुर्यात् ९ बंधुत्वंजानन्विग्रहंनकुर्यात् १० इतिसर्वत्रगुणोपेतो

दंडनीतिंपुरस्कृत्यविजानन्क्षत्रियःसदा ॥ अनवाप्तंचलिप्सेतलब्धंचपरिपालयेत् १०२ लोकस्यसीमंतकरीमर्यादालोकभाविनी ॥ सम्यङ्नीतादंडनीति र्यथामातायथापिता ३ यस्यांभवंतिभूतानितद्विद्धिमनुजर्षभ ॥ एषएवपरोधर्मोयद्राजादंडनीतिमान् ४ तस्मात्कौरव्यधर्मेणप्रजाःपालयनीतिमान् ॥ एवं वृत्तःप्रजारक्षन्स्वर्गंजेताऽसिदुर्जयम् १०५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ युधिष्ठिरउवाच ॥ केनवृत्तेनवृत्तज्ञवर्तमानोमहीपतिः ॥ सुखेनार्थान्सुखोदर्कानिहचप्रेत्यचाप्नुयात् १ ॥ भीष्मउवाच ॥ अयंगुणानांषट्त्रिंशत्षट्त्रिंशद्गुणसंयुतः ॥ यान्गुणां स्तुगुणोपेतःकुर्वन्गुणमवाप्नुयात् २ चरेद्धर्मानकटुकोमुंचेत्स्नेहंनचास्तिकः ॥ अनृशंसश्चरेदर्थंचरेत्काममनुद्धतः ३ प्रियंब्रूयादकृपणःशूरःस्यादविकत्थनः ॥ दातानापात्रवर्षीस्यात्प्रगल्भःस्यादनिष्ठुरः ४ संदधीतनचानार्यैर्विगृह्णीयान्नबंधुभिः ॥ नाभक्तंचारयेच्चारंकुर्यात्कार्यमपीडया ५ अर्थंब्रूयान्नचासत्सुगुणान् ब्रूयान्नचात्मनः ॥ आदद्यान्नचसाधुभ्योनासत्पुरुषमाश्रयेत् ६ नापरीक्ष्यनयेद्दंडंनचमंत्रंप्रकाशयेत् ॥ विसृजेन्नचलुब्धेभ्योविश्वसेन्नापकारिषु ७ अनीर्षुर्गु प्तदारःस्याच्चोक्षःस्यादघृणीनृपः ॥ स्त्रियःसेवेतनात्यर्थंमृष्टंभुंजीतनाहितम् ८ अस्तब्धःपूजयन्मान्यान्गुरून्सेवेदमायया ॥ अर्चेद्देवानदंभेनश्रियमिच्छेद कुत्सिताम् ९ सेवेतप्रणयंहित्वादक्षःस्यान्नत्वकालवित् ॥ सांत्वयेन्नचमोक्षायअनुगृह्णन्नचाक्षिपेत् १० प्रहरेन्नत्वविज्ञायहत्वाशत्रून्नशोचयेत् ॥ क्रोधंकुर्यान्नचा कस्मान्मृदुःस्यान्नापकारिषु ११ एवंचरस्वराज्यस्थोयदिश्रेयइहेच्छसि ॥ अतोऽन्यथानरपतिर्भयमृच्छत्यनुत्तमम् १२ इतिसर्वान्गुणानेतान्यथोक्तान्यो ऽनुवर्तते ॥ अनुभूयेहभद्राणिप्रेत्यस्वर्गेमहीयते १३ ॥ वैशंपायनउवाच ॥ इदंवचःशांतनवस्यशुश्रुवान्युधिष्ठिरःपांडवमुख्यसंवृतः ॥ तदाववंदेचपितामहं नृपोयथोक्तमेतच्चचकारबुद्धिमान् १४ ॥ इति श्रीमहाभारते शांतिपर्वणि राजधर्मानुशासनपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ छ ॥

गुणोद्रष्टव्यः अभक्तमलवान्नं पुष्कलान्नदश्चारान्कुर्यात् ११ अपीडयन्भक्तंदद्यात् १२ ॥ ५ ॥ साधुत्वेनपरीक्ष्यार्थप्रयोजनंब्रूयात् १३ श्रोतारउपहसिष्यंतीतिज्ञात्वाऽऽत्मनोगुणान्नब्रूयात् १४ १६ ॥ ६ ॥ २० ॥ ७ ॥ २१ चोक्षः शुद्धः २२ । २४ ॥ ८ ॥ २८ ॥ ९ ॥ प्रणयंनम्रतांहित्वाधारयित्वा हित्वेतिधाञोरूपम् २९ । ३० नचमोक्षायफलंदित्सन्नेवसांत्वयेदित्यर्थः ३१ ३२ ॥ १० ॥ अविज्ञायशत्रुंदोषंचेतिशेषः ३३ नशोचयेच्छत्रुबंधूनांशोकमपनुदेत् ३४ अकस्मात्कारणंविना ३५ । ३६ ॥ ११ ॥ अनुत्तमंमहत्तरम् ॥ १२ ॥ १३ ॥ पांडवमुख्यैः पांडुपुत्रै र्भीमादिभिःसंवृतोवृतः ॥ १४ ॥ ॥ इति शांतिपर्वणि राजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ छ ॥



कथमिति बह्वीनांप्रजानांपरिपालनंकथंस्यादितिचिंताआधिः सएवबंधस्तेननयुज्यते नापराध्नोति नान्यथाकरोति धर्मं व्यवहारनिर्णयादौएतद्द्वयंकथंस्यादितिप्रश्नः १ उत्तरंवक्तुंप्रतिजानीतेसमा सेनैवेति २ रागद्वेषहीनोब्राह्मणान्पुरस्कृत्यव्यवहारनिर्णयंकुर्वन्धर्मंऽपिनापराध्नोतीतिद्वितीयस्योत्तरमाह धर्मनिष्ठानितिचतुर्भिः ३ । ४ । ५ । ६ विपक्षेदोषमाह कामेति ७ आद्यस्योत्तर माह मास्मेत्यादिना साधून्सर्वत्रकार्येषुनियोज्यस्त्वयंनाधिबंधेनयुज्यतइत्यर्थः ८ अयोगेनयोगइष्टप्राप्तिस्तदभावेन ९ बलीराजदेयंतदेवसस्यादेःषष्ठांशस्तेनबलिषष्ठेन शुल्केनशुद्धेन गणनादन

॥ युधिष्ठिरउवाच ॥ कथंराजाप्रजारक्षन्नाधिबंधेनयुज्यते ॥ धर्मेचनापराध्नोतितन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ समासेनैवतेराजन्धर्मान्वक्ष्यामिशाश्व तान् ॥ विस्तरेणैवधर्माणांनजात्वंतमवाप्नुयात् २ धर्मनिष्ठान्श्रुतवतोदेवव्रतसमाहितान् ॥ अर्चयित्वायजथास्त्वंगृहेगुणवतोद्विजान् ३ प्रत्युत्थायोपसंगृह्य चरणावभिवाद्यच ॥ अथसर्वाणिकुर्वीथाःकार्याणिसपुरोहितः ४ धर्मकार्याणिनिर्वर्त्यमंगलानिप्रयुज्यच ॥ ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ५ आ र्जवेनचसंपन्नोधृत्याबुद्ध्याचभारत ॥ यथार्थंप्रतिगृह्णीयात्कामक्रोधौचवर्जयेत् ६ कामक्रोधौपुरस्कृत्ययोऽर्थंराजाऽनुतिष्ठति ॥ नसधर्मंनचाप्यर्थंप्रतिगृह्णा तिबालिशः ७ मास्मलुब्धांश्चमूर्खांश्चकामार्थेचप्रयूयुजः ॥ अलुब्धान्बुद्धिसंपन्नान्सर्वकर्मसुयोजयेत् ८ मूर्खोह्यधिकृतोऽर्थेषुकार्याणामविशारदः ॥ प्रजाः क्लिश्नात्ययोगेनकामक्रोधसमन्वितः ९ बलिषष्ठेनशुल्केनदंडेनाथापराधिनाम् ॥ शास्त्रानीतेनलिप्सेथावेतनेनधनागमम् १० दापयित्वाकरंधर्म्यंराष्ट्रंनीत्याय थाविधि ॥ तथैतंकल्पयेद्राजायोगक्षेममतंद्रितः ११ गोपायितारंदातारंधर्मनित्यमतंद्रितम् ॥ अकामद्वेषसंयुक्तमनुरज्यंतिमानवाः १२ मास्मलोभेनाध र्मेणलिप्सेथास्त्वंधनागमम् ॥ धर्मार्थावध्रुवौतस्ययोनशास्त्रपरोभवेत् १३ अर्थशास्त्रपराराजाधर्मार्थौनाधिगच्छति ॥ अस्थानेचास्यतद्वित्तंसर्वमेवविनश्यति १४ अर्थमूलोऽपिहिंसांचकुरुतेस्वयमात्मनः ॥ करैरशास्त्रदृष्टैर्हिमोहात्संपीडयन्प्रजाः १५ ऊधश्छिंद्याद्धियोधेन्वाःक्षीरार्थीनलभेत्पयः ॥ एवंराष्ट्रमयोगेनपी डितंनविवर्धते १६ योहिदोग्ध्रीमुपास्तेचसनित्यंविंदतेपयः ॥ एवंराष्ट्रमुपायेनभुंजानोलभतेफलम् १७ अथराष्ट्रमुपायेनभुज्यमानंसुरक्षितम् ॥ जनयत्यतु लांनित्यंकोशवृद्धिंयुधिष्ठिर १८ दोग्ध्रीधान्यंहिरण्यंचमहीराज्ञासुरक्षिता ॥ नित्यंस्वेभ्यःपरेभ्यश्चतृप्तामातायथापयः १९ मालाकारोपमोराजन्भवमांगारि कोपमः ॥ तथायुक्तश्चिरंराज्यंभोक्तुंशक्ष्यसिपालयन् २० परचक्राभियानेनयदितेस्याद्धनक्षयः ॥ अथसाम्नैवलिप्सेथाधनमब्राह्मणेषुयत् २१ मास्मतेब्राह्मणं दृष्ट्वाधनस्थंप्रचलेन्मनः ॥ अंत्यायामप्यवस्थायांकिमुस्फीतस्यभारत २२ धनानितेभ्योदद्यास्त्वंयथाशक्तियथार्हतः ॥ सांत्वयन्परिरक्षंश्चस्वर्गमाप्स्यसिदुर्जयम् २३

धिकेनेत्यर्थः । 'शुल्कंघट्टादिदेयेऽपि' इतिमेदिनी वेतनेनपथिरक्षितैर्वणिग्भिर्यद्दत्तंतद्राज्ञोवेतनंसेवाधनंतेनचधनागमंलिप्सेतराजा १० धान्यादेःषष्ठांशोद्धृतेशेषेणप्रजानांयदिवार्षिकोग्रासोनभ वेत्तदाराजैवतासांयोगक्षेमंकल्पयेदित्याह दापयित्वेति ११ । १२ । १३ धर्मसहितानर्थान्धर्मार्थौन् १४ । १५ अर्थमूलोऽर्थार्थी प्रजाःपीडयन्नात्मानमेवहिनस्तीत्युक्तंतत्रदृष्टांतमाह ऊधइति १६ । १७ । १८ दोग्ध्रीपूरयित्री १९ आंगारिकइंगालकर्ता २० । २१ । २२ । २३

२४ यथायुक्तउक्तेनप्रकारेणाऽन्वहितः २५ । २६ योदयांकुरुतेतंधर्ममन्यंतेइतियोजना २७ अंतंयातनामोगनिष्कृतिं २८ । २९ स्विष्टिःस्वधीतिःसुतपाइतिक्रमेणगृहस्थब्रह्मचारिवानप्रस्थ

एवंधर्मेणवृत्तेनप्रजास्त्वंपरिपालय ॥ स्वंतंपुण्यंयशोनित्यंप्राप्स्यसेकुरुनंदन २४ धर्मेणव्यवहारेणप्रजाःपालयपांडव ॥ युधिष्ठिरयथायुक्तोनाधिबंधेनयोक्ष्य
से २५ एषएवपरोधर्मोयद्राजारक्षतिप्रजाः ॥ भूतानांहियदाधर्मोरक्षणंपरमादया २६ तस्मादेवंपरंधर्ममन्यंतेधर्मकोविदाः ॥ योराजारक्षणेयुक्तोभूतेषुकुरु
तेदयाम् २७ यदह्नाकुरुतेपापमरक्षन्भयतःप्रजाः ॥ राजावर्षसहस्रेणतस्यांतमधिगच्छति २८ यदह्नाकुरुतेधर्मंप्रजाधर्मेणपालयन् ॥ दशवर्षसहस्राणित
स्यभुंक्तेफलंदिवि २९ स्विष्टिःस्वधीतिःसुतपालोकान्जयतियावतः ॥ क्षणेनतानवाप्नोतिप्रजाधर्मेणपालयन् ३० एवंधर्मंप्रयत्नेनकौंतेयपरिपालय ॥ ततः
पुण्यफलंलब्ध्वानाधिबंधेनयोक्ष्यसे ३१ स्वर्गलोकेसुमहतींश्रियंप्राप्स्यसिपांडव ॥ असंभवश्चधर्माणामीदृशानामराजसु ३२ तस्माद्राजैवनान्योस्तियोधर्म
फलमाप्नुयात् ॥ सराज्यंधृतिमान्प्राप्यधर्मेणपरिपालय ॥ इंद्रंतर्पयसोमेनकामैश्चसुहृदोजनान् ३३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणि
एकसप्ततितमोऽध्यायः ॥ ७१ ॥ ७ ॥ भीष्मउवाच ॥ यएवतुसतोरक्षेदसतश्चनिवर्तयेत् ॥ सएवराज्ञाकर्तव्योराजन्राजपुरोहितः १ अत्राप्युदाहरंतीम
मितिहासंपुरातनम् ॥ पुरूरवसऐलस्यसंवादंमातरिश्वनः २ ॥ पुरूरवाउवाच ॥ कुतःस्विद्ब्राह्मणोजातोवर्णाश्चापिकुतस्त्रयः ॥ कस्माच्चभवतिश्रेष्ठस्तन्मेव्या
ख्यातुमर्हसि ३ ॥ मातरिश्वोवाच ॥ ब्राह्मणोमुखतःसृष्टोब्रह्मणोराजसत्तम ॥ बाहुभ्यांक्षत्रियःसृष्टऊरुभ्यांवैश्यएवच ४ वर्णानांपरिचर्यार्थंत्रयाणांभरतर्षभ ॥
वर्णश्चतुर्थःसंभूतःपद्भ्यांशूद्रोविनिर्मितः ५ ब्राह्मणोजायमानोहिपृथिव्यामनुजायते ॥ ईश्वरःसर्वभूतानांधर्मकोशस्यगुप्तये ६ अतःपृथिव्यायंतारंक्षत्रियंदंड
धारणे ॥ द्वितीयंदंडमकरोत्प्रजानामनुगुप्तये ७ वैश्यस्तुधनधान्येनत्रीन्वर्णान्बिभृयादिमान् ॥ शूद्रोह्येतान्परिचरेदितिब्रह्मानुशासनम् ८ ॥ ऐलउवाच ॥
द्विजस्यक्षत्रबंधोर्वाकस्येयंपृथिवीभवेत् ॥ धर्मतःसहवित्तेनसम्यग्वायोप्रचक्ष्वमे ९ ॥ वायुरुवाच ॥ विप्रस्यसर्वमेवैतद्यत्किंचिज्जगतीगतम् ॥ ज्येष्ठेनाभिज
नेनेहतद्धर्मकुशलाविदुः १० स्वमेवब्राह्मणोभुंक्तेस्वंवस्तेस्वंददातिच ॥ गुरुर्हिसर्ववर्णानांज्येष्ठःश्रेष्ठश्चवैद्विजः ११ पत्यभावेयथैवस्त्रीदेवरंकुरुतेपतिम् ॥ एष
तेप्रथमःकल्पआपद्यन्योभवेदतः १२ यदिस्वर्गंपरंस्थानंस्वधर्मंपरिमार्गसि ॥ यत्किंचिज्जयसेभूमिंब्राह्मणायनिवेदय १३ श्रुतवृत्तोपपन्नायधर्मज्ञायतपस्वि
ने ॥ स्वधर्मपरितृप्ताययोनवित्तपरोभवेत् १४ योराजानंनयेद्बुद्ध्यासर्वतःपरिपूर्णया ॥ ब्राह्मणोहिकुलेजातःकृतप्रज्ञोविनीतवान् १५ श्रेयोनयतिराजानं ॥६२॥
ब्रुवंश्चित्रांसरस्वतीम् ॥ राजाचरतियंधर्मंब्राह्मणेननिदर्शितम् १६

र्मान्सम्यगनुतिष्ठन् ३० । ३१ । ३२ । ३३ ॥ इतिशांतिपर्वणिराज
धर्मानुशासन० नीलकंठीयेभारतभावदीपेएकसप्ततितमोऽध्यायः॥ ७१ ॥ यइति निवर्तयेद्राज्याद्दूरीकारयेत् १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ ।१५।१६

१७ । १८ । १९ । २० । २१ छायायामिति उष्णजंशीतजंचभयंछायादिनाग्न्यादिनाचनश्यतिशब्दादिनाचरमते अराजकभयक्रांतस्तुकुत्रापिसुखंनलभतेइतिश्लोकद्वयतात्पर्यम् २२ । २३
अतएवमतोऽभयदानमेवमुख्यंदानं तद्दातेंद्रादिरूपएवेत्याहद्वाभ्यां अभयस्येति २४।२५ ।२६ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेद्विसप्ततितमोऽध्यायः॥७२॥

शुश्रूषुरनहंवादीक्षत्रधर्मव्रतेस्थितः ॥ तावतासत्कृतःप्राज्ञश्चिरंयशसितिष्ठति १७ तस्यधर्मस्यसर्वस्यभागीराजपुरोहितः ॥ एवमेवप्रजाःसर्वाराजानमभिसंश्रि
ताः १८ सम्यग्वृत्ताःस्वधर्मस्थानकुतश्चिद्भयान्विताः ॥ राष्ट्रेचरंतियंधर्मंराज्ञासाध्वभिरक्षिताः १९ चतुर्थंतस्यधर्मस्यराजाभागंतुविंदति ॥ देवामनुष्याः
पितरोगंधर्वोरगराक्षसाः २० यज्ञमेवोपजीवंतिनास्तिचेष्टमराजके ॥ ततोदत्तेनजीवंतिदेवताःपितरस्तथा २१ राजन्येवास्यधर्मस्ययोगक्षेमःप्रतिष्ठितः ॥
छायायामप्सुवायौचसुखमुष्णेऽधिगच्छति २२ अग्नौवाससिसूर्येचसुखंशीतेऽधिगच्छति ॥ शब्देस्पर्शेरसेरूपेगंधेचरमतेमनः २३ तेषुभोगेषुसर्वेषुनभीतो
लभतेसुखं ॥ अभयस्यहियोदातातस्यैवसुमहत्फलं २४ नहिप्राणसमंदानंत्रिषुलोकेषुविद्यते ॥ इंद्रोराजायमोराजाधर्मोराजातथैवच २५ राजाबिभर्तिरूपा
णिराज्ञासर्वमिदंधृतम् २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ भीष्मउवाच ॥ राज्ञापुरोहितःकार्योभ
वेद्विद्वान्बहुश्रुतः ॥ उभौसमीक्ष्यधर्मार्थावप्रमेयावनंतरम् १ धर्मात्मामंत्रविद्येषांराज्ञांराजन्पुरोहितः ॥ राजाचैवंगुणोयेषांकुशलंतेषुसर्वशः २ उभौप्रजावर्ध
यतोदेवान्सर्वान्सुतान्पितॄन् ॥ भवेयातांस्थितौधर्मेश्रद्धेयौसुतपस्विनौ ३ परस्परस्यसुहृदौविहितौसमचेतसौ ॥ ब्रह्मक्षत्रस्यसमानात्प्रजासुखमवाप्नुयात् ४
विमाननात्तयोरेवप्रजानश्येयुरेवहि ॥ ब्रह्मक्षत्रंहिसर्वेषांवर्णानांमूलमुच्यते ५ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ ऐलकश्यपसंवादंतन्निबोधयुधिष्ठिर ६
॥ ऐलउवाच ॥ यदाहिब्रह्मप्रजहातिक्षत्रंक्षत्रंयदावाप्रजहातिब्रह्म ॥ अन्वग्बलंकतमेऽस्मिन्भजंतेतथावर्णाःकतमेऽस्मिन्ध्रियंते ७ ॥ कश्यपउवाच ॥ वृद्धं
राष्ट्रंक्षत्रियस्यभवतिब्रह्मक्षत्रंयत्रविरुद्धयतीह ॥ अन्वग्बलंदस्यवस्तद्भजंतेतथावर्णंतत्रविंदंतिसंतः ८ नैषांब्रह्मचवर्धतेनोतपुत्रानगर्गरोमथ्यतेनोजयंते ॥
नैषांपुत्रावेदमधीयतेचयदाब्रह्मक्षत्रियाःसंत्यजंति ९ नैषामर्थोवर्धतेजातुगेहेनाधीयतेसुप्रजानोयजंते ॥ अपध्वस्तादस्युभूताभवंतियेब्राह्मणान्क्षत्रियाःसंत्य
जंति १० एतौहिनित्यंसंयुक्ताविततरेतरधारणे ॥ क्षत्रंवैब्रह्मणोयोनिर्योनिःक्षत्रस्यवैद्विजाः ११

२२ राज्ञेति अप्रमेयौगहनौ अनंतरंशीघ्रमेवपुरोहितःकार्योभवेद् १ धर्मात्मेति धर्मसाधकः २ । ३ । ४ । ५ । ६ ब्रह्मकर्म क्षत्रंकर्तृ अनुपश्चात्प्रकाशमानंबलमन्वग्बलंयथास्यात्तथाऽस्मिन्ब्रह्मअ
ब्राह्मण्यतरस्मिन्कतमेभजंते किंक्षत्रेणब्रह्मबलवद्भवत्युतब्रह्मणाक्षत्रमित्यर्थः ७ वृद्धंछिन्नं क्षत्रंकर्तृ तत्रसत्रेसंतोवर्णंविंदंति ब्राह्मणानामवमंताम्लेच्छजातीयोऽयंराजेत्यनुमानाज्जानंति यथोक्तं ।
भोगेनज्ञायतेकर्मकर्मणाज्ञायतेजनिः’इति ८ अपध्वस्ताःसंकरजाइवकंसादिवत् सार्धःश्लोकः ९ । १० । ११

अभिप्रपन्नावन्योन्यशरणौ क्षत्रशरणं ब्रह्मतपस्यति ब्रह्मशरणं क्षत्रंजयतीतिभावः ११ अमब्रह्मक्षत्रयोर्वियोगे संप्रपन्नाविपन्ना १२ मधुसुखं अश्रुदुःखं पापंनरकम् १४ नक्षत्रियंब्रह्मब्राह्मण जातिर्ब्रह्मचारीचरणात् अधीतशाखातःअपेतःदस्युभिर्वारिङःसन्ब्रह्मणिवेदेऽध्येतव्येत्राणंरक्षणमिच्छेत् रक्षितुरभावात्तदादेवस्तत्रआश्वर्यतोवर्षति तत्रवर्षमस्यतंतुर्लभमित्यर्थः दुःसहाःमारीदुर्भिक्षादयः । अब्रह्मचारीनाश्वर्यतइतिचपाठे ब्रह्मचरणादपेतत्वादब्रह्मचारीवेदाध्ययनशून्यःसन्त्राणमिच्छेत्तर्हितत्राश्वर्यतोऽपिनवर्षतीतियोज्यं १५ स्त्रियंब्राह्मणंवाऽपिहत्वाऽनुवादंप्रशंसां १६ रुद्रोहिंस्रः देवोराजा रुद्रंकलिं १७ । १८ कुतोराज्ञोरुद्रत्वमितिपृष्टेआह आत्मेति मानवानांहृदयेयआत्माजीवोऽस्तिसएवरुद्रःसंहर्ताभवति । यथाचग्रहाविष्टस्यशरीरंदेहस्वामिनःस्वंनभवतिकिंतुतदानींतद्ग्रहस्यैवस्वमेवंरुद्राविशकालेनृपस्यशरीरंरौद्रमेवभवतीत्यर्थः । ननुकुतःशांतस्यात्मनोरुद्रत्वमतआह वातेति यथाउत्पातवातआकाशोत्थआकाशोत्थामेघदेवतामित

उभावेतौनित्यमभिप्रपन्नौसंप्रापतुर्महतींसंप्रतिष्ठां ॥ तयोःसंधिर्भिद्यतेचेत्पुराणस्ततःसर्वंभवतिहिसंप्रमूढम् १२ नात्रपारंलभतेपारगामीमहागाधेनौरिवसंप्रपन्ना ॥ चातुर्वर्ण्यंभवतिहिसंप्रमूढंप्रजास्ततःक्षयसंस्थाभवंति १३ ब्रह्मवृक्षोरक्ष्यमाणोमधुहेमचवर्षति ॥ अरक्षमाणःसततमश्रुपापंचवर्षति १४ नब्रह्मचारीचरणादपेतोयदाब्रह्मब्रह्मणित्राणमिच्छेत् ॥ आश्चर्यतोवर्षतितत्रदेवस्तत्राभीक्ष्णंदुःसहाश्चाविशंति १५ स्त्रियंहत्वाब्राह्मणंवाऽपिपापःसभायांयत्रलभतेनुवादम् ॥ राज्ञःसकाशेनबिभेतिचापिततोभयंविद्यतेक्षत्रियस्य १६ पापैःपापेक्रियमाणेहिचैलततोरुद्रोजायतेदेवएषः ॥ पापैःपापाःसंजनयंतिरुद्रंततःसर्वान्साध्वसाधून्हिनस्ति १७ ॥ ऐलउवाच ॥ कुतोरुद्रःकीदृशोवापिरुद्रःसत्वैःसत्वंदृश्यतेवध्यमानम् ॥ एतत्सर्वंकश्यपमेप्रचक्ष्वकुतोरुद्रोजायतेदेवएषः १८ ॥ कश्यपउवाच ॥ आत्मारुद्रोहृदयेमानवानांस्वंस्वंदेहंपरदेहंचहंति ॥ वातोत्पातैःसदृशंरुद्रमाहुर्दैवैर्जीमूतैःसदृशंरूपमस्य १९ ॥ ऐलउवाच ॥ नवैवातःपरिवृणोतिकश्चिन्नजीमूतोवर्षतिनापिदेवः ॥ तथायुक्तोदृश्यतेमानुषेषुकामद्वेषाद्बध्यतेमुच्यतेच २० ॥ कश्यपउवाच ॥ यथैकगेहेजातवेदाःप्रदीप्तःकृत्स्नंग्रामंदहतेचत्वरंवा ॥ विमोहनंकुरुतेदेवएषततःसर्वंस्पृशतेपुण्यपापैः २१

स्ततोनयतिगर्जयतिविद्युद्दर्शनिवारीणिचततआविर्भावयत्येवमात्मोत्थितंजीवमात्मोत्थिताःकामक्रोधादयःसर्वहिंस्रंकारयंतीत्यर्थः १९ इदमाक्षिपति नवाइति यथाआकाशेनयुक्तास्ततःपृथग्भूताःवातोमेघाश्चमेघमवर्तकदेवताचप्रत्यक्षेणशास्त्रज्ञानेनचदृश्यंतेनैवंजीवोवातदभिमावकःकामादिर्वापृथक्दृश्यतेकिंत्वात्मन्येवबद्धत्वोष्ण्यवत्कामद्वेषावर्ततेतौचैतस्यसंबंधकौमोहकोचभवत इत्यर्थः २० अत्रोत्तरमाह यथेति यथाऽल्पोऽपिवह्निराविकमधिकंकाष्ठमारमुपारुह्यकृत्स्नंग्रामंदहतितत्रनकेवलंकाष्ठानांदाहकत्वंनापिकाष्ठान्यनुपारूढस्याग्नेःकिंतुतदुभयसंघातस्यैव । तत्राविविवेकेक्रियमाणेवन्हेरेवोपाध्यावेशाद्दाहकत्वं । एवमात्मानमारुह्याहंकारवह्निःकामक्रोधादिवातैरुद्दीपितोरुद्रत्वंप्रतिपद्यते । ततश्चान्योदृहत्येधासिपचंतीतिवदहंकारेणकृतमात्मन्युपचर्यतेमोहात्तेनचसर्वंजगदसंगमपिजलचंद्रन्यायेनपुण्यैःपापैश्चस्पृश्यते तत्त्वालोचनेत्वसंगएवात्मेत्यर्थः २१

अत्रशंकतेयदीति अपुण्यपापमप्यात्मानंयदिविशेषात्क्रियमाणेपापेनिमित्तभूतेसतिदंडःपार्थिवदंडात्मकःपीडनंगालनताडनादिदुःखंकर्तृस्पृशतेमोहादितितर्हिविचितर्हिपुण्यकरणंपापवर्जनंचशास्त्रचोदितंवृथैवस्यात् । आत्मनिवास्तवदुःखाभावस्यसिद्धत्वात्तदर्थंसाधनोपादानंव्यर्थंस्यादितिभावः २२ आत्माहंकारयोर्मिश्रीभावादहंकारगतंदुःखमात्मनिप्रतीयतेऽतोऽहंकारत्यागान्नकिंचिदात्मनोदुःखमस्तीत्युत्तरयति असंयोगादिति २३ अहंकर्त्रादीनधिष्ठानभूतआत्माभूमिसूर्यादिवदसंगएवसन्धारयतुप्रकाशयतु वाय्यंबुवच्चालयतुक्लेदयतुवाक स्तत्रात्मनःसंबंधोऽहंकारधर्मैरुद्रत्वेनातआत्मारुद्रइत्युक्तमयुक्तमित्याक्षेपः २४ तत्त्वदृष्ट्यायद्यप्येवमेवतथाऽपि ऐहिकामुष्मिकव्यवहारदृष्ट्याऽस्त्येवात्मनोरुद्रत्वमित्युत्तरयति एवमस्मिन्नित्यादिना

ऐलउवाच ॥ यदिदंडःस्पृशतेऽपुण्यपापंपापंपापेक्रियमाणेविशेषात् ॥ कस्यहेतोःसुकृतंनामकुर्याद्दुष्कृतंवाकस्यहेतोर्नकुर्यात् २२ ॥ कश्यपउवाच ॥ असंयोगात्पापकृतामपापांस्तुल्योदंडःस्पृशतेमिश्रभावात् ॥ शुष्केनार्द्रंदह्यतेमिश्रभावान्नमिश्रःस्यात्पापकृद्भिःकथंचित् २३ ॥ ऐलउवाच ॥ साध्वसाधून्धारयतीहभूमिःसाध्वसाधूंस्तापयतीहसूर्यः ॥ साध्वसाधूंश्चापिवातीहवायुरापस्तथासाध्वसाधून्पुनंति २४ ॥ कश्यपउवाच ॥ एवमस्मिन्वर्ततेलोकएषनामुत्रैवंवर्ततेराजपुत्र ॥ प्रेत्यैतयोरंतरवान्विशेषोयोवैपुण्यंचरतेयश्चपापम् २५ पुण्यस्यलोकोमधुमान्घृतार्चिर्हिरण्यज्योतिरमृतस्यनाभिः ॥ तत्रप्रेत्यमोदतेब्रह्मचारीनतत्रमृत्युर्नजरानोतदुःखम् २६ पापस्यलोकोनिरयोऽप्रकाशोनित्यंदुःखंशोकभूयिष्ठमेव ॥ तत्रात्मानंशोचतिपापकर्माबह्वीःसमाःप्रतपन्नप्रतिष्ठः २७ मिथोभेदाद्ब्राह्मणक्षत्रियाणांप्रजादुःखंदुःसहंचाविशंति ॥ एवंज्ञात्वाकार्यएवेहनित्यंपुरोहितोनैकविद्योनृपेण २८ तंचैवान्वभिषिंचेततथाधर्मोविधीयते ॥ अग्र्यंहिब्राह्मणःप्रोक्तंसर्वस्यैवेहधर्मतः २९ पूर्वंहिब्राह्मणःसृष्टिरितिब्रह्मविदोविदुः ॥ ज्येष्ठेनाभिजनेनास्यप्राप्तंपूर्वंयदुत्तरम् ३० तस्मान्मान्यश्चपूज्यश्चब्राह्मणःप्रसृताग्रभुक् ॥ सर्वंश्रेष्ठंविशिष्टंचनिवेद्यंतस्यधर्मतः ३१ अवश्यमेवकर्तव्यंराज्ञाबलवताऽपिहि ॥ ब्रह्मवर्धयतिक्षत्रंक्षत्रतोब्रह्मवर्धते ॥ एवंराज्ञाविशेषेणपूज्यावैब्राह्मणाःसदा ३२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध० ऐलकश्यपसंवादेत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ भीष्मउवाच ॥ योगक्षेमोहिराष्ट्रस्यराजन्यायत्तउच्यते ॥ योगक्षेमोहिराज्ञोहिसमायत्तःपुरोहिते १ यत्रादृष्टंभयंब्रह्मप्रजानांशमयत्युत ॥ दृष्टंचराजाबाहुभ्यांयद्राज्यंसुखमेधते २ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ मुचुकुंदस्यसंवादंराज्ञोवैश्रवणस्यच ३ मुचुकुंदोविजित्येमांपृथिवींपृथिवीपतिः ॥ जिज्ञासमानःस्वबलमुपेयादलकाधिपम् ४

एवप्रपंचरूपोऽर्थःअस्मिन्प्रत्यगात्मनिलोकेलोक्यतइतिलोकोदर्शनंतत्रविषये वर्ततेसिद्धांतोऽस्ति नत्वमुत्रपरलोकविषये एवंदर्शनंवर्तते किंतर्ह्यमुत्रवर्ततेयःपापंचरतेयश्चपुण्यमेतयोःप्रेत्यमरणानंतरंविशेषोऽस्तिसचांतरवान्तिरोहितः शास्त्रैकगम्येधर्माधर्मफलेइत्यर्थः २५ शास्त्रमेवाहद्वाभ्यां पुण्यस्येति २६ । २७ प्रकृतमनुसरति मिथइति नैकविद्योबहुविद्यः २८ तंपुरोहितंवृत्वाअनुपश्चादात्मानंराज्येऽभिषिंचेत् २९ । ३० । ३१ । ३२ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ ७ ॥
योगेति १ अदृष्टमनावृष्ट्यादिजं ब्रह्मब्राह्मणः दृष्टंपरचक्रादिजम् २ । ३ । ४

अनृजदतिसृष्टवान् आज्ञापितवानिवियावत् ५ । ६ तस्यमुचुकुंदस्य पंथानंगतिमार्गमविंदतज्ञातवान् ७ । ८ । ९ । १० । ११ । १२।१३ । १४ । १५ अनिर्दिष्टमीश्वरेणाननुज्ञातंविदधामिद

ततोवैश्रवणोराजाराक्षसानसृजत्तदा ॥ तेबलान्यवमृद्नंतमुचुकुंदस्यनैर्ऋताः ५ सहन्यमानेसैन्येस्वेमुचुकुंदोनराधिपः ॥ गर्हयामासविद्वांसंपुरोहितमरिंदमः ॥
६ ततउग्रंतपस्तप्त्वावसिष्ठोधर्मवित्तमः ॥रक्षांस्युपावधीत्तस्यपंथानंचाप्यविंदत ७ ततोवैश्रवणोराजामुचुकुंदमदर्शयत् ॥ वध्यमानेषुसैन्येषुवचनंचेदमब्रवीत्
॥ धनदउवाच ॥ बलवंतस्त्वयापूर्वेराजानःसपुरोहिताः ॥ नचैवंसमवर्तंतयथात्वमिहवर्तसे ९ तेखल्वपिकृतास्त्राश्चबलवंतश्चभूमिपाः ॥ आगम्यपर्युपासंते
मामीशंसुखदुःखयोः १० यद्यस्तिबाहुवीर्यंतेतद्दर्शयितुमर्हसि ॥ किंब्राह्मणबलेनत्वमतिमात्रंप्रवर्तसे ११ मुचुकुंदस्ततःक्रुद्धःप्रत्युवाचधनेश्वरम् ॥ न्यायपूर्व
मसंरब्धमसंभ्रांतमिदंवचः १२ ब्रह्मक्षत्रमिदंसृष्टमेकयोनिस्वयंभुवा ॥ पृथग्बलविधानंतन्नलोकंपरिपालयेत् १३ तपोमंत्रबलंनित्यंब्राह्मणेषुप्रतिष्ठितम् ॥ अस्त्र
बाहुबलंनित्यंक्षत्रियेषुप्रतिष्ठितम् १४ ताभ्यांसंभूयकर्तव्यंप्रजानांपरिपालनम् ॥ तथाचमांप्रवर्तंतंकिंगर्हस्यलकाधिप १५ ततोऽब्रवीद्वैश्रवणोराजानंसपुरो
हितम् ॥ नाहंराज्यमनिर्दिष्टंकस्मैचिद्विदधाम्युत १६ नाच्छिंदेचाप्यनिर्दिष्टमितिजानीहिपार्थिव ॥ प्रशाधिपृथिवींकृत्स्नांमद्दत्तामखिलामिमाम् ॥ एवमुक्तः
प्रत्युवाचमुचुकुंदोमहीपतिः १७ ॥ मुचुकुंदउवाच ॥ नाहंराज्यंभवद्दत्तंभोक्तुमिच्छामिपार्थिव ॥ बाहुवीर्यार्जितंराज्यमश्नीयामितिकामये १८॥भीष्मउवाच॥
ततोवैश्रवणोराजाविस्मयंपरमंययौ ॥ क्षत्रधर्मेस्थितंदृष्ट्वामुचुकुंदमसंभ्रमम् १९ ततोराजामुचुकुंदःसोऽन्वशासद्वसुंधराम् ॥ बाहुवीर्यार्जितांसम्यक्क्षत्रधर्ममनु
व्रतः २० एवंयोधर्मविद्राजाब्रह्मपूर्वंप्रवर्तते ॥ जयत्यविजितामुर्वींयशश्चमहदश्नुते २१ नित्योदकीब्राह्मणःस्यान्नित्यशस्त्रश्चक्षत्रियः ॥ तयोर्हिसर्वमायत्तंयत्किं
चिज्जगतीगतम् २२ ॥इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिमुचुकुंदोपाख्यानेचतुःसप्ततितमोऽध्यायः ॥७४॥ ॥ युधिष्ठिरउवाच ॥ यया
वृत्त्यामहीपालोविवर्धयतिमानवान् ॥ पुण्यांश्चलोकान्जयतितन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ दानशीलोभवेद्राजायज्ञशीलश्चभारत ॥ उपवासतपः
शीलःप्रजानांपालनेरतः २ सर्वाश्चैवप्रजानित्यंराजाधर्मेणपालयन् ॥ उत्थानेनप्रदानेनपूजयेच्चापिधार्मिकान् ३ राज्ञाहिपूजितोधर्मस्ततःसर्वत्रपूज्यते ॥ य
द्यदाचरतेराजातत्प्रजानांस्मरोचते ४ नित्यमुद्यतदंडश्चभवेन्मृत्युरिवारिषु ॥ निहन्यात्सर्वतोदस्यून्नकामात्कस्यचित्क्षमेत् ५ यंहिधर्मंचरंतीहप्रजाराज्ञासुर
क्षिताः ॥ चतुर्थंतस्यधर्मस्यराजाभारतविंदति ६ यदधीतेयद्ददातियज्जुहोतियदर्चति ॥ राजाचतुर्थभाक्तस्यप्रजाधर्मेणपालयन् ७ ॥६४॥

दामि १६ नाच्छिंदेनहरामिच अखिलांखिलरहितां १७ । १८ । १९ । २० । २१। २२ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥
एवंकृतपुरोहितोराजाकथंप्रजावृद्ध्यापरलोकंजयेदितिपृच्छति ययेति १तत्रप्रजावृद्धिप्रकारमाह दानेति२उत्थानेननित्योद्योगेन ३।४।५ परलोकजयप्रकारमाह यंहीति६यदधीतेब्राह्मणादिः७

विपक्षेदोषमाह यद्राष्ट्रइति अकुशलमितिच्छेदः ८ नृशंसोऽनृतवाक्च यत्कर्मकरोतितस्यकर्मणःसर्वंयत्ततोभूयोवापापमाप्नोतीत्यन्येआहुर्निश्चयस्त्वर्धमित्यर्थः ९ अशक्तेनराज्ञाउपजीवतोधनोप
जीविनोवणिजादेः सार्धः १० । ११। १२ । १३ । १४ नाहमिति अत्रराज्येपुण्यस्यचतुर्थांशःपापस्यत्वर्धंकृत्स्नंवालभ्यतइतिपापाधिक्याद्धर्मोनास्तीत्यर्थः १५ । १६ । १७ आनृशंस्यापरदुः

यद्राष्ट्रेऽकुशलंकिंचिद्राज्ञोरक्षयतःप्रजाः ॥ चतुर्थंतस्यपापस्यराजाभारतविंदति ८ अप्याहुःसर्वमेवेतिभूयोऽर्धमितिनिश्चयः ॥ कर्मणःपृथिवीपालनृशंसोऽनृत
वागपि ९ तादृशात्किल्बिषाद्राजाशृणुयेनप्रमुच्यते ॥ प्रत्याहर्तुमशक्यंस्याद्धनंचोरैर्हृतंयदि ॥ तत्स्वकोशात्प्रदेयंस्यादशक्तेनोपजीवतः १० सर्ववर्णैःसदारक्ष्यं
ब्रह्मस्वंब्राह्मणायथा ॥ नस्थेयंविषयेतेनयोऽपकुर्याद्द्विजातिषु ११ ब्रह्मस्वेरक्ष्यमाणेतुसर्वंभवतिरक्षितम् ॥ तस्मात्तेषांप्रसादेनकृतकृत्योभवेन्नृपः १२ पर्जन्यमि
वभूतानिमहाद्रुममिवद्विजाः ॥ नरास्तमुपजीवंतिनृपंसर्वार्थसाधकम् १३ नहिकामात्मनाराज्ञासततंकामबुद्धिना ॥ नृशंसेनातिलुब्धेनशक्यंपालयितुंप्रजाः
१४ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ नाहंराज्यसुखान्वेषीराज्यमिच्छाम्यपिक्षणम् ॥ धर्मार्थंरोचयेराज्यंधर्मश्चात्रनविद्यते १५ तदलंममराज्येनयत्रधर्मोनविद्य
ते ॥ वनमेवगमिष्यामितस्माद्धर्मचिकीर्षया १६ तत्रमेध्येष्वरण्येषुन्यस्तदंडोजितेंद्रियः ॥ धर्ममाराधयिष्यामिमुनिर्मूलफलाशनः १७ ॥ ॥ भीष्मउवाच ॥
वेदाहंतवयाबुद्धिरानृशंस्याऽगुणैवसा ॥ नचशुद्धानृशंसेनशक्यंराज्यमुपासितुम् १८ अपितुत्वांमृदुप्रज्ञमत्यार्यमतिधार्मिकम् ॥ क्लीबंधर्मघृणायुक्तंनलोकोबहुम
न्यते १९ वृत्तंतुस्वमपेक्षस्वपितृपैतामहोचितम् ॥ नैवराज्ञांतथावृत्तंयथात्वंस्थातुमिच्छसि २० नहिवैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः ॥ प्रजापालनसंभूत
माप्ताधर्मफलंह्यसि २१ नह्येतामाशिषंपांडुर्नचकुंतीत्वयाचत ॥ तथैतत्प्रज्ञयातातयथाचरसिमेधया २२ शौर्यंबलंचसत्यंचपितातवसदाऽब्रवीत् ॥ माहात्म्यंच
महौदार्यंभवतःकुंत्ययाचत २३ नित्यंस्वाहास्वधानित्यंचोभेमानुषदैवते ॥ पुत्रेष्वाशासतेनित्यंपितरोदैवतानिच २४ दानमध्ययनंयज्ञंप्रजानांपरिपालनम् ॥
धर्ममेतदधर्मंवाजन्मनैवाभ्यजायथाः २५ कालेधुरिचयुक्तानांवहतांभारमाहितम् ॥ सीदतामपिकौंतेयनकीर्तिरवसीदति २६ समंततोविनियतोवहत्यस्खलि
तोहयः ॥ निर्दोषःकर्मवचनात्सिद्धिःकर्मणएवसा २७ नैकांतविनिपातेनविचचारेहकश्चन ॥ धर्मीगृहीवाराजावाब्रह्मचारियथापुनः २८ अल्पंहिसारभूयिष्ठं
यत्कर्मोदारमेवतत् ॥ कृतमेवाकृताच्छ्रेयोनपापीयोऽस्त्यकर्मणः २९ यदाकुलीनोधर्मज्ञःप्राप्नोत्यैश्वर्यमुत्तमम् ॥ योगक्षेमस्तदाराज्ञःकुशलायैवकल्प्यते ३०

स्यापहा साचात्रराजधर्मेषुदस्युवधप्रधानेष्वगुणैव १८ घृणाकृपा १९ । २० आप्तासिप्राप्स्यसि २१ । २२ । २३ । २४ एतद्दानादिकंधर्मंमधर्मंवाधर्म्यमधर्म्यंवाऽस्तु तथापितत्कर्तुंजन्मनैवत्वंजा
तोसि तथाचश्रेयान्स्वधर्मोविगुणइतिन्यायेनतवतंविनागतिर्नास्तीत्यर्थः २५ । २६ समंततइति शिक्षितोऽश्वोऽपिसम्यग्वहतिकिमुतत्वंमानुषइत्यर्थः २७ धर्मीधर्मवानेकांतविनिपातेनाऽत्यंता
भिनिवेशेनधर्मंकश्चिदपिनविचचार सूक्ष्मस्याधर्मस्यापरिहार्यत्वादितिभावः २८ अल्पंदुष्टंहिंसामयत्वात्तुच्छमपिबहुजनसुखहेतुत्वात्सारभूयिष्ठं २९ ऐश्वर्यंसाचिव्याद्याधिकारं ३०

प्रतिगृह्णीयाद्यशीर्दुर्यात् ३१ । ३२ । ३३ दरिद्रत्रैचतर्पणाद्दयार्दितत्राणंमहान्धर्मइत्याह यस्मिन्निति ३४ । ३५ । ३६ । ३७ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभार तभावदीपे पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ ७६ ॥ स्वकर्मणीति १ लक्षणानिशमोदमस्तपःशौचमित्यादीनि २ । ३ जन्मकर्मजन्मोचितकर्मतेनविहीनाः ४ बलिकरदानं विष्टिं

दानेनान्यंबलेनान्यमन्यंसूनृतयागिरा ॥ सर्वतःप्रतिगृह्णीयाद्राज्यंप्राप्येहधार्मिकः ३१ यंहिवैद्याःकुलेजाताह्यवृत्तिभयपीडिताः ॥ प्राप्यतृप्ताःप्रतिष्ठंतिधर्मः कोऽभ्यधिकस्ततः ३२ ॥ युधिष्ठिरउवाच ॥ किंतातपरमंस्वर्ग्यंकाततःप्रीतिरुत्तमा ॥ किंततःपरमैश्वर्यंब्रूहिमेयदिपश्यसि ३३ ॥ भीष्मउवाच ॥ यस्मि न्भयार्दितःसम्यक्क्षेमंविंदत्यपिक्षणम् ॥ सस्वर्गजित्तमोऽस्माकंसत्यमेतद्ब्रवीमिते ३४ त्वमेवप्रीतिमांस्तस्मात्कुरूणांकुरुसत्तम ॥ भवराजायजस्वर्गंसतो रक्षाऽसतोजहि ३५ अनुत्वांतातजीवंतुसुहृदःसाधुभिःसह ॥ पर्जन्यमिवभूतानिस्वादुद्रुममिवद्विजाः ३६ धृष्टंशूरंप्रहर्तारमनृशंसंजितेंद्रियम् ॥ वत्सलंसंविभ क्तारमुपजीवंतितंनराः ३७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ युधिष्ठिरउवाच ॥ स्वकर्म ण्यपरेयुक्तास्तथैवाऽन्येविकर्मणि ॥ तेषांविशेषमाचक्ष्वब्राह्मणानांपितामह १ ॥ भीष्मउवाच ॥ ॥ विद्यालक्षणसंपन्नाःसर्वत्रसमदर्शिनः ॥ एतेब्रह्मसमा राजन्ब्राह्मणाःपरिकीर्तिताः २ ऋग्यजुःसामसंपन्नाःस्वेषुकर्मस्ववस्थिताः ॥ एतेदेवसमाराजन्ब्राह्मणानांभवंत्युत ३ जन्मकर्मविहीनायेकदर्याब्रह्मबंधवः ॥ एते शूद्रसमाराजन्ब्राह्मणानांभवंत्युत ४ अश्रोत्रियाःसर्वएवसर्वेचानाहिताग्नयः ॥ तान्सर्वान्धार्मिकोराजाबलिंविष्टिंचकारयेत् ५ आह्वायकादेवलकानाक्षत्राग्रामया जकाः ॥ एतेब्राह्मणचांडालामहापथिकपंचमाः ६ ऋत्विक्पुरोहितोमंत्रीदूतोवार्तानुकर्षकः ॥ एतेक्षत्रसमाराजन्ब्राह्मणानांभवंत्युत ७ अश्वारोहागजारोहा रथिनोऽथपदातयः ॥ एतेवैश्यसमाराजन्ब्राह्मणानांभवंत्युत ८ एतेभ्योबलिमादद्याद्धीनकोशोमहीपतिः ॥ ऋतेब्रह्मसमेभ्यश्चदेवकल्पेभ्यएवच ९ अब्राह्मणानां वित्तस्यस्वामीराजेतिवैदिकम् ॥ ब्राह्मणानांचयेकेचिद्विकर्मस्थाभवंत्युत १० विकर्मस्थाश्चनोपेक्ष्याविप्राराज्ञाकथंचन ॥ नियम्याःसंविभज्याश्चधर्मानुग्रहकार णात् ११ यस्यस्मविषयेराजन्स्तेनोभवतिवैद्विजः ॥ राज्ञएवापराधंतंमन्यंतेतद्विदोजनाः १२ अवृत्त्यायोभवेत्स्तेनोवेदवित्स्नातकस्तथा ॥ राजन्सराज्ञाभर्त व्यइतिवेदविदोविदुः १३ सचेन्नोपरिवर्तेतकृतवृत्तिःपरंतप ॥ ततोनिर्वासनीयःस्यात्तस्माद्देशात्सबांधवः १४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानु शासनपर्वणिषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ युधिष्ठिरउवाच ॥ केषांप्रभवतेराजावित्तस्यभरतर्षभ ॥ कयाचवृत्त्यावर्तेततन्मेब्रूहिपितामह १

विनावेतनंराजसेवां ५ आह्वायकाधर्माधिकारिणः देवलकावेतनेनदेवपूजाकर्तारः महापथिकःसमुद्रेनौयानेनगच्छन् यद्वामहापथिशुल्कग्राहकः ६ । ७ । ८ । ९ । १० । ११ । १२ १३ । १४ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ ७७ ॥ केषामिति १



२ । ३ । ४ येनब्राह्मणानामपालनेन ५ । ६ । ७ मामकांतरमाविशःमदीयाभ्यंतरंत्वमाविष्टवान्कुतइतिशेषः ८ अविद्वानितिच्छेदः ९ । १० । ११ । १२ नयाचंतीति प्रतिग्रहादिजीविको

॥ भीष्मउवाच ॥ ॥ अब्राह्मणानांवित्तस्यस्वामीराजेतिवैदिकम् ॥ ब्राह्मणानांचयेकेचिद्विकर्मस्थाभवंत्युत २ विकर्मस्थाश्चनोपेक्ष्याविप्राराज्ञाकथं चन ॥ इतिराज्ञांपुरावृत्तमभिजल्पंतिसाधवः ३ यस्यस्मविषयेराज्ञःस्तेनोभवतिवैद्विजः ॥ राज्ञएवापराधंतंमन्यंतेकिल्बिषंनृप ४ अभिशस्तमिवात्मा नंमन्यंतेयेनकर्मणा ॥ तस्माद्राजर्षयःसर्वेब्राह्मणानन्वपालयन् ५ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ गीतंकैकेयराजेनह्रियमाणेनरक्षसा ६ के कयानामधिपतिंरक्षोजग्राहदारुणम् ॥ स्वाध्यायेनान्वितंराजन्नरण्येसंशितव्रतम् ७ ॥ ॥ राजोवाच ॥ ॥ नमेस्तेनोजनपदेनकदर्योनमद्यपः ॥ नानाऽऽहिताग्निर्नायज्वामामकांतरमाविशः ८ नचमेब्राह्मणोऽविद्वान्नाव्रतीनाप्यसोमपः ॥ नानाऽऽहिताग्निर्नायज्वामामकांतरमाविशः ९ नानाप्तदक्षिणैर्यज्ञै र्यजंतेविषयेमम ॥ नाधीतेनाऽव्रतीकश्चिन्मामकांतरमाविशः १० अधीयंतेऽध्यापयंतियजंतेयाजयंतिच ॥ ददातिप्रतिगृह्णंतिषट्सुकर्मस्ववस्थिताः ११ पूजिताःसंविभक्ताश्चमृदवःसत्यवादिनः ॥ ब्राह्मणामेस्वकर्मस्थामामकांतरमाविशः १२ नयाचंतिप्रयच्छंतिसत्यधर्मविशारदाः ॥ नाध्यापयंत्यधीयंतेयजंतेया जयंतिन १३ ब्राह्मणान्परिरक्षंतिसंग्रामेष्वपलायिनः ॥ क्षत्रियामेस्वकर्मस्थामामकांतरमाविशः १४ कृषिगोरक्षवाणिज्यमुपजीवंत्यमायया ॥ अप्रमत्ताःक्रिया वंतःसुव्रताःसत्यवादिनः १५ संविभागंदमंशौचंसौहृदंचव्यपाश्रिताः ॥ ममवैश्याःस्वकर्मस्थामामकांतरमाविशः १६ त्रीन्वर्णाननुपजीवंतियथावदनसूयकाः ॥ ममशूद्राःस्वकर्मस्थामामकांतरमाविशः १७ कृपणानाथवृद्धानांदुर्बलातुरयोषिताम् ॥ संविभक्ताऽस्मिसर्वेषांमामकांतरमाविशः १८ कुलदेशादिधर्माणांप्रथि तानांयथाविधि ॥ अव्युच्छेत्ताऽस्मिसर्वेषांमामकांतरमाविशः १९ तपस्विनोमेविषयेपूजिताःपरिपालिताः ॥ संविभक्ताश्चसत्कृत्यमामकांतरमाविशः २० नासंविभज्यभोक्ताऽस्मिनाविशामिपरस्त्रियम् ॥ स्वतंत्रोजातुनक्रीडेमामकांतरमाविशः २१ नाब्रह्मचारीभिक्षावान्भिक्षुर्वाऽब्रह्मचर्यवान् ॥ अनृत्विजाहुतंनास्ति मामकांतरमाविशः २२ नावजानाम्यहंवैद्यान्नवृद्धान्नतपस्विनः ॥ राष्ट्रेस्वपतिजागर्मिमामकांतरमाविशः २३ आत्मविज्ञानसंपन्नस्तपस्वीसर्वधर्मवित् ॥ स्वा मीसर्वस्यराष्ट्रस्यधीमान्ममपुरोहितः २४ दानेनविद्यामभिवांछयामिसत्येनार्थंब्राह्मणानांचगुप्त्या ॥ शुश्रूषयाचापिगुरूनुपैमिनमेभयंविद्यतेराक्षसेभ्यः २५ नमेराष्ट्रेविधवाब्रह्मबंधुर्नब्राह्मणःकितवोनोतचोरः ॥ अयाज्ययाजीनचपापकर्मानमेभयंविद्यतेराक्षसेभ्यः २६ नमेशस्त्रैरनिर्भिन्नंगात्रेद्व्यंगुलमंतरम् ॥ धर्मार्थंयुध्यमानस्यमामकांतरमाविशः २७ गोब्राह्मणेभ्योयज्ञेभ्योनित्यंस्वस्त्ययनंमम ॥ आशासतेजनाराष्ट्रेमामकांतरमाविशः २८

पायाभिवृत्ताः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ स्वपतिस्वापंकुर्वतिसति २३ । २४ वांछयामिवांछामि २५ । २६ । २७ । २८

२९ अध्यायतात्पर्यसंगृह्णाति येषामिति ३० । ३१ । ३२ । ३३ । ३४ ॥ इतिम॰शां॰राजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ व्याख्यातात्राह्मणस्ये
तिशेषः राजधर्मेणेति शस्त्रधारणादिनावृत्तिर्जीविका आपदिविकर्मस्थोऽपिब्राह्मणादिर्नराज्ञःपापायभवतीतिभावः १ वर्तयेद्ब्राह्मणः २ । ३ केसरिणोऽश्वान् पशून्गोजाविमहिषादीन् कृतान्नं

राक्षसउवाच ॥ यस्मात्सर्वास्ववस्थासुधर्ममेवान्ववेक्षसे ॥ तस्मात्प्राप्नुहिकैकेयगृहंस्वस्तिव्रजाम्यहम् २९ येषांगोब्राह्मणंरक्ष्यंप्रजारक्ष्याश्चकेकय ॥ नरक्षोभ्यो
भयंतेषांकुतएवतुपावकात् ३० येषांपुरोगमाविप्रायेषांब्रह्मपरंबलम् ॥ अतिथिप्रियास्तथापौरास्तेवैस्वर्गजितोनृपाः ३१ ॥ भीष्मउवाच ॥ तस्माद्द्विजातीन्
रक्षेततेहिरक्षंतिरक्षिताः ॥ आशीरेषांभवेद्राजन्राज्ञांसम्यक्प्रवर्तताम् ३२ तस्माद्राज्ञाविशेषेणविकर्मस्थाद्विजातयः ॥ नियम्याःसंविभज्याश्चतदनुग्रहकार
णात् ३३ एवंयोवर्ततेराजापौरजानपदेष्विह ॥ अनुभूयेहभद्राणिप्राप्नोतींद्रसलोकताम् ३४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिकेकेयोपा
ख्यानेसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ ॥ युधिष्ठिरउवाच ॥ व्याख्याताराजधर्मेणवृत्तिरापत्सुभारत ॥ कथंस्विद्वैश्यधर्मेणसंजीवेद्ब्राह्मणोनवा १ ॥ भीष्म
उवाच ॥ अशक्तःक्षत्रधर्मेणवैश्यधर्मेणवर्तयेत् ॥ कृषिगोरक्ष्यमास्थायव्यसनेवृत्तिसंक्षये २ ॥ युधिष्ठिरउवाच ॥ कानिपण्यानिविक्रीयस्वर्गलोकान्नहीयते ॥
ब्राह्मणोवैश्यधर्मेणवर्तयन्भरतर्षभ ३ ॥ भीष्मउवाच ॥ सुरालवणमित्येवतिलान्केसरिणःपशून् ॥ वृषभान्मधुमांसंचकृतान्नंचयुधिष्ठिर ४ सर्वास्ववस्थास्वेता
न्ब्राह्मणःपरिवर्जयेत् ॥ एतेषांविक्रयात्तातब्राह्मणोनरकंव्रजेत् ५ अजोऽग्निर्वरुणोमेषःसूर्योऽश्वःपृथिवीविराट् ॥ धेनुर्यज्ञश्चसोमश्चनविक्रेयाःकथंचन ६ पक्वे
नामस्यनिमयंनप्रशंसंतिसाधवः ॥ निमयेत्पक्वमामेनभोजनार्थायभारत ७ वयंसिद्धमशिष्यामोभवान्साधयतामिदम् ॥ एवंसंवीक्ष्यनिमयन्नाधर्मोऽस्तिकथंच
न ८ अत्रतेवर्तयिष्यामिपुराधर्मःसनातनः ॥ व्यवहारप्रवृत्तानांतन्निबोधयुधिष्ठिर ९ भवतेऽहंददानीदंभवानेतत्प्रयच्छतु ॥ रुचितोवर्ततेधर्मोनबलात्संप्रवर्त
ते १० इत्येवंसंप्रवर्तंतेव्यवहाराःपुरातनाः ॥ ऋषीणामितरेषांचसाधुचैतदसंशयम् ११ ॥ युधिष्ठिरउवाच ॥ अथतातयदासर्वाःशस्त्रमाददतेप्रजाः ॥ व्युत्क्रा
मंतिस्वधर्मेभ्यःक्षत्रस्यक्षीयतेबलम् १२ राजात्राताथलोकस्यकथंचस्यात्परायणम् ॥ एतन्मेसंशयंब्रूहिविस्तरेणनराधिप १३ ॥ भीष्मउवाच ॥ दानेनतपसाय
ज्ञैरद्रोहेणदमेनच ॥ ब्राह्मणप्रमुखावर्णाःक्षेममिच्छेयुरात्मनः १४ तेषांयेवेदबलिनस्तेऽभ्युत्थायसमंततः ॥ राज्ञोबलंवर्धयेयुर्महेंद्रस्येवदेवताः १५

पक्वमन्नम् ४ । ५ अजादीनांविक्रयेऽग्न्यादयोदेवताएवविक्रीतास्तत्तच्चायज्ञियोभवतीत्यर्थः विराडन्नमितिश्रुतेः अन्नविक्रयात्पृथिवीविक्रयपापंभवतीतितेषामाशयः पृथिवीविक्रयास्सर्वदेवतास
मष्टिरूपोविराडेवविक्रीतस्तेनतदसंबंधाद्वेदादिरहितोभवतीत्यर्थः ६ पक्वेनामस्यविनिमयेपक्वदोदुष्यतिनत्वामदइत्यर्थः ७ इदमप्यपवदति वयमिति ८ । ९ भवतेऽहमिति रुचितःसर्वे
ऽपिविनिमयायुक्तानतुलाभलोभवदइत्यर्थः १० । ११ प्रजावैश्यशूद्रास्त्यजाः १२ । १३ क्षीणबलोराजाकथमन्यांस्त्रायेतेत्याहद्वाभ्यां दानेनेति १४ । १५



यद्विवाःस्पर्धेरन्नतर्हिराजाब्राह्मणानेवाश्रित्यप्रजावशंकुर्यादित्याहद्वाभ्यां राज्ञोऽपीति १६ । १७ कालविशेषेसर्वेषामपिशस्त्रधारणमुक्तमित्याह उन्मर्यादेइति १८ ब्राह्मणानभिद्विषतःक्ष
त्रियस्यब्रह्मैवपरायणमितिप्रश्नपूर्वकमाह अथेत्यादिना १९ नियंतव्यंक्षत्रंब्राह्मणेनेतिशेषः २० । २१ । २२ । २३ । २४ सर्वैर्वर्णैर्ब्रह्मक्षत्रयोरभिभवेब्राह्मणार्थंशस्त्रेणभर्तव्यमेवेत्याह ।
ब्रह्मेत्यादिना २५ । २६ । २७ अतीति यज्ञाध्ययनतपोयुक्तानामनशनाग्निप्रवेशकारिणामप्यपेक्षयाब्राह्मणार्थंम्रियमाणउत्कृष्टान्लोकानाप्नोतीत्यर्थः २८ एवंयुद्धधर्मेण २९ नोऽस्मा

राज्ञोऽपिक्षीयमाणस्यब्रह्मैवाहुःपारायणम् ॥ तस्माद्ब्रह्मबलेनैवसमुत्थेयंविजानता १६ यदातुविजयीराजाक्षेमंराष्ट्रेऽभिसंदधेत् ॥ तदावर्णायथाधर्मंनिविशेयुः
कथंचन १७ उन्मर्यादेप्रवृत्तेतुदस्युभिःसंकरेकृते ॥ सर्वेवर्णानदुष्येयुःशस्त्रवंतोयुधिष्ठिर १८ ॥ युधिष्ठिरउवाच ॥ अथचेत्सर्वतःक्षत्रंप्रदुष्येद्ब्राह्मणंप्रति ॥
कस्तस्यब्राह्मणस्त्राताकोधर्मःकिंपरायणम् १९ ॥ भीष्मउवाच ॥ तपसाब्रह्मचर्येणशस्त्रेणचबलेनच ॥ अमाययामाययाचनियंतव्यंतदाभवेत् २० क्षत्रियस्या
तिवृत्तस्यब्राह्मणेषुविशेषतः ॥ ब्रह्मैवसंनियंतृस्यात्क्षत्रंहिब्रह्मसंभवम् २१ अद्भ्योऽग्निर्ब्रह्मतःक्षत्रमश्मनोलोहमुत्थितं ॥ तेषांसर्वत्रगंतेजःस्वासुयोनिषुशाम्यति ॥
२२ यदाछिनत्त्ययोऽश्मानमग्निश्चापोऽभिगच्छति ॥ क्षत्रंचब्राह्मणंद्वेष्टितदानश्यंतितेत्रयः २३ तस्माद्ब्रह्मणिशाम्यंतिक्षत्रियाणांयुधिष्ठिर ॥ समुदीर्णान्यजे
यानितेजांसिचबलानिच २४ ब्रह्मवीर्येमृदूभूतेक्षत्रवीर्येचदुर्बले ॥ दुष्टेषुसर्ववर्णेषुब्राह्मणान्प्रतिसर्वशः २५ येतत्रयुद्धंकुर्वंतित्यक्त्वाजीवितमात्मनः ॥ ब्राह्मणान्प
रिरक्षंतोधर्ममात्मानमेवच २६ मनस्विनोमन्युमंतःपुण्यश्लोकाभवंतिते ॥ ब्राह्मणार्थंहिसर्वेषांशस्त्रग्रहणमिष्यते २७ अतिस्विष्टमधीतानांलोकानतितपस्वि
नाम् ॥ अनाशकाग्न्योर्विशतांशूरायांतिपरांगतिम् २८ ब्राह्मणस्त्रिषुवर्णेषुशस्त्रंगृह्णन्नदुष्यति ॥ एवमेवात्मनस्त्यागान्नान्यंधर्मंविदुर्जनाः २९ तेभ्योनमश्चभद्रंच
येशरीराणिजुह्वते ॥ ब्रह्मद्विषोनियच्छंतस्तेषांनोऽस्तुसलोकता ३० ब्रह्मलोकजितःस्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् ॥ यथाऽश्वमेधावभृथेस्नाताःपूताभवं
त्युत ॥ दुष्कृतस्यप्रणाशेनततःशस्त्रहतारणे ३१ भवत्यधर्मोधर्मोहिधर्माधर्मावुभावपि ॥ कारणाद्देशकालस्यदेशकालःसतादृशः ३२ मैत्राःक्रूराणिकुर्वंतोजयं
तिस्वर्गमुत्तमम् ॥ धर्म्याःपापानिकुर्वाणागच्छंतिपरमांगतिम् ३३ ब्राह्मणस्त्रिषुकालेषुशस्त्रंगृह्णन्नदुष्यति ॥ आत्मत्राणेवर्णदोषेदुर्दम्यानियमेषुच ३४
युधिष्ठिरउवाच ॥ अभ्युत्थितेदस्युबलेक्षत्रार्थेवर्णसंकरे ॥ संप्रमूढेषुक्षेत्रेषुयद्यन्योऽभिभवेद्बली ३५

कमस्तु ३० यथेति ततस्तथा ३१ भवतीति धर्मोधर्मोकमादधर्मोधर्मश्चभवतः कारणविशेषात् ३२ मैत्राउतंकपराशरादयः क्रूराणिसर्पराक्षससत्रादीनि । धर्म्याधर्मादनपेताःक्षत्रियाः पापा
निपरराष्ट्रावमर्दादीनि । अधर्मस्यधर्मत्वेउदाहरणद्वयमुक्तं । इदमेवाऽहिंसारूपधर्माश्रयेऽधर्मरूपमपिभवतीतिज्ञेयं ३३ वर्णदोषेक्षत्रियादिषूत्पथगामिषुसत्सु ३४ दास्युदयेसतिक्षत्रार्थेप्रजा
पालननिमित्तंलोकेषुमूढेषुवर्णसंकरेऽन्योन्यंदाराहरणादांप्रवृत्तेसतियद्यन्योऽक्षत्रियोबलीदस्यूनभिभवेत्प्रजाश्चदस्युभ्योरक्षेत्तर्हिसराजाकार्यंकुर्यान्नवा आर्येःस्वाभीत्यभवेन्नवा आद्येअक्षत्रियोऽपि
मान्यःस्यात् अंत्येसर्वनाशइत्याहत्रिभिः अभ्युत्थितइति ३५

२६ । ३७ आत्मैवपक्षमनुपावृते अपारइत्यादिना ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिशांतिप०रा०नी०भारतभावदीपेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ७ ॥ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानांसप्तानांराज्यप्रकृतीनांमध्येस्वामिरूपाप्रकृतिःऋत्विक्पुरोहितनृपभेदेनत्रिविधातत्राभ्यर्हितत्वात्प्रथमंपुरोहितस्ततः शेषित्वाद्राजाचनिरूपितइदानीमृत्विजोनिरूपयति केत्यादिना कसमुत्थाःकस्मिन्निमित्तउदिताः किमेषांकर्तव्यंकर्मेत्यर्थः १ प्रतीति यथायोगशास्त्रेमैत्र्यादिभिश्चित्तप्रसादनाख्यंप्रतिकर्मविधीयतेएवंराज्ञांशांतिकपौष्टिकादिकर्मप्रयोगशुद्ध्याख्यंप्रतिकर्मऋत्विग्भिःकर्तव्यं । तत्रपराचारोऽन्यंतामियोगेनाचरणमृत्विजांविधीयते कीदृशानां छंदोऋचःसाम आदिपदार्थोयजुः श्रुतंमीमांसा तानिविज्ञायस्थितानामितिशेषः २ एवंकस

ब्राह्मणोयदिवावैश्यःशूद्रोवाराजसत्तम ॥ दस्युभ्योऽथप्रजारक्षेद्दंडंधर्मेणधारयन् ३६ कार्यंकुर्यान्नवाकुर्यात्संवार्योवाभवेन्नवा ॥ तस्माच्छस्त्रंग्रहीतव्यमन्यत्रक्षत्रबंधुतः ३७ ॥ भीष्मउवाच ॥ अपारेयोभवेत्पारमप्लवेयःप्लवोभवेत् ॥ शूद्रोवायदिवाऽप्यन्यःसर्वथामानमर्हति ३८ यमाश्रित्यनराराजन्वर्तयेयुर्यथासुखम् ॥ अनाथाःपरिकाल्यंतोदस्युभिःपरिपीडिताः ३९ तमेवपूजयेयुस्तेप्रीत्यास्वमिवबांधवम् ॥ अभीरभीक्ष्णंकौरव्यकर्तासन्मानमर्हति ४० किंतैर्येऽनड्वहोनोह्याःकिंधेन्वावाऽप्यदुग्धया ॥ वंध्ययाभार्ययाकोऽर्थःकोऽर्थोराज्ञाऽप्यरक्षता ४१ यथादारुमयोहस्तीयथाचर्ममयोमृगः ॥ यथाह्यनर्थःषंढोवापार्थक्षेत्रंयथोषरम् ४२ एवंविप्रोऽनधीयानोराजायश्चनरक्षिता ॥ मेघोनवर्षतेयश्चसर्वथातेनिरर्थकाः ४३ नित्यंयस्तुसतोरक्षेदसतश्चनिवर्तयेत् ॥ सएवराजाकर्तव्यस्तेनसर्वमिदंधृतम् ४४ ॥ इतिश्रीमहाभा०शांतिप०राजध०अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ युधिष्ठिरउवाच ॥ कसमुत्थाःकथंशीलाऋत्विजःस्युःपितामह ॥ कथंविधाश्चराजेंद्रतद्ब्रूहिवदतांवर १ ॥ भीष्मउवाच ॥ प्रतिकर्मपराचारऋत्विजांस्मविधीयते ॥ छंदःसामादिविज्ञायद्विजानांश्रुतमेवच २ येत्वेकमतयोनित्यंवीराणांप्रतिवादिनः ॥ परस्परस्यसुहृदःसमंतात्समदर्शिनः ३ अनृशंसाःसत्यवाक्याअकुसीदाअथर्जवः ॥ अद्रोहोऽनभिमानश्चह्रीस्तितिक्षादमःशमः ४ धीमान्सत्यधृतिर्दांतोभूतानामविहिंसकः ॥ अकामद्वेषसंयुक्तस्त्रिभिःशुक्लैःसमन्वितः ५ अहिंसकोज्ञानतृप्तःसब्रह्मासनमर्हति ॥ एतेमहर्त्विजस्तातसर्वेमान्यायथार्हतः ६ ॥ युधिष्ठिरउवाच ॥ यदिदंवेदवचनंदक्षिणासुविधीयते ॥ इदंदेयमिदंदेयंनक्वचिद्व्यवतिष्ठते ७ नेदंप्रतिधनंशास्त्रमापद्धर्मानुशास्त्रतः ॥ आज्ञाशास्त्रस्यघोरेयंनशक्तिंसमवेक्षते ८ श्रद्धावताचयष्टव्यमित्येषावैदिकीश्रुतिः ॥ मिथ्योपेतस्ययज्ञस्यकिमुश्रद्धाकरिष्यति ९

मुत्थाइत्यस्योत्तरमुक्त्वाकिंशीलाइत्यस्योत्तरमाह येत्विति ३ कथंविधाइत्यस्याहत्रिभिः अनृशंसाइति ४ त्रिभिःश्रुतवृत्तवंशैः शुक्लैर्निर्दोषैः ५ महर्त्विजोब्रह्मादयउपर्त्विजोब्राह्मणाच्छंस्यादयस्तेयथार्हतोयथायोग्यंमान्याधनादिनाआराधनीयाः ६ ऋत्विक्प्रसंगात्तद्दानार्थांदक्षिणांविचारयति यदिदमिति नक्वचिद्व्यवतिष्ठतेव्यवस्थांप्राप्नोति अल्पेऽप्यपच्छेदनिमित्तेसर्वस्वदक्षिणाविधानादुत्तरक्रतुकलापलोपप्राप्तेः ७ ततश्चनेदंशास्त्रंप्रतिधनंधनविभागाभिप्रायमपित्वापत्कल्पाभिप्रायं द्वादशशतदक्षिणादानासमर्थस्यसर्वस्वदानंविधेयं अन्यथादरिद्रस्ययागएवनघटेतेत्यर्थः ८ ननुयावतीर्गास्तावंतिवासांसिचरून्वादद्यादितिदरिद्रंप्रत्यनुकल्पोऽप्यस्तीतिचेन्नेत्याह मिथ्येति गोःस्थानेचरुमात्रदानंमिथ्याचारस्तदुपेतोयज्ञःश्रद्धयाऽपिनसंपूर्यतइत्यर्थः ९



सर्वस्वदानशास्त्रंदरिद्रपरंकुर्वतोवेदावज्ञाशाठ्यंचभवतीतिनेदंशास्त्रतात्पर्यमित्याह नेति महत्पदम् १० । ११ पूर्णपात्रेणेति यथासक्तुप्रस्थस्यदानमश्वमेधादप्यधिकं तद्वद्दरिद्रस्यपूर्णपात्रंद्वादशशतसममित्यर्थः १२ सोमविक्रयादिनाऽप्यर्थंप्रसाध्ययष्टव्यमित्याहद्वाभ्यां सोमइति वृथायज्ञादिनिमित्तंविनावृत्तिर्वर्तनंनेष्यते १३ तेनसोमविक्रयलब्धेनधनेनक्रीतोयोयज्ञःसोमस्तेनयज्ञःप्रतायते १४ न्यायवृत्तःशाठ्यादिरहितः १५ शरीरेति देहधारणमात्रमास्थायप्रवृत्तानांब्राह्मणानांप्रणीतानिप्रणीतामिसाध्यानियज्ञादीनिनातिसम्यक्हिंसामयत्वान्नशुभंततः १६ किंतर्हिशुभमतआह तपइति १७ अहिंसेति तपःअध्ययनंवदर्थानुसंधानंच घृणादयात्रपावा १८ । १९ कर्माण्यपिज्ञानपराण्येवेत्याह निबोधेति दशहोतॄणांचितिःस्रुक्चित्तमाज्यमित्यादीनांमंत्राणांचितिःसंधानंजीवब्रह्मणोरेकीकरणसाधनंयोगस्तत्स्थानेऽत्रस्रुक् । होतव्यंद्रव्यंपरात्मनिप्रविलापनीयंचित्तंतत्स्थानेऽत्राज्यमिति । यज्ज्ञानंतदेवात्यंतंपवित्रंनकेवलो

भीष्मउवाच ॥ नवेदानांपरिभवान्नशाठ्येननमायया ॥ कश्चिन्महदवाप्नोतिमातेऽभूद्बुद्धिरीदृशी १० यज्ञांगंदक्षिणातातवेदानांपरिबृंहणम् ॥ नयज्ञादक्षिणाहीनास्तारयंतिकथंचन ११ शक्तिस्तुपूर्णपात्रेणसंमितानसमाऽभवत् ॥ अवश्यंतातयष्टव्यंत्रिभिर्वर्णैर्यथाविधि १२ सोमोराजाब्राह्मणानामित्येषावैदिकीस्थितिः ॥ तंचविक्रेतुमिच्छंतिनवृथावृत्तिरिष्यते १३ तेनक्रीतेनयज्ञेनततोयज्ञःप्रतायते ॥ इत्येवंधर्मतोख्यातमृषिभिर्धर्मचारिभिः १४ पुमान्यज्ञश्चसोमश्चन्यायवृत्तोयदाभवेत् ॥ अन्यायवृत्तःपुरुषोनपरस्यनचात्मनः १५ शरीरवृत्तमास्थायइत्येषाश्रूयतेश्रुतिः ॥ नातिसम्यक्प्रणीतानिब्राह्मणानांमहात्मनाम् १६ तपोयज्ञादपिश्रेष्ठमित्येषापरमाश्रुतिः ॥ तत्तेतपःप्रवक्ष्यामिविद्वंस्तदपिमेशृणु १७ अहिंसासत्यवचनमानृशंस्यंदमोघृणा ॥ एतत्तपोविदुर्धीरानशरीरस्यशोषणम् १८ अप्रामाण्यंचवेदानांशास्त्राणांचाभिलंघनम् ॥ अव्यवस्थाचसर्वत्रतद्वैनाशनमात्मनः १९ निबोधदशहोतॄणांविधानंपार्थयादृशम् ॥ चितिःस्रुक्चित्तमाज्यंचपवित्रंज्ञानमुत्तमम् २० सर्वंजिह्मंमृत्युपदमार्जवंब्रह्मणःपदम् ॥ एतावान्ज्ञानविषयःकिंप्रलापःकरिष्यति २१ ॥ इतिश्रीमहाभारतेशांतिप०राजध० एकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ युधिष्ठिरउवाच ॥ यदप्यल्पतरंकर्मतदप्येकेनदुष्करम् ॥ पुरुषेणासहायेनकिमुराज्ञापितामह १ किंशीलःकिंसमाचारोराज्ञोऽथसचिवोभवेत् ॥ कीदृशेविश्वसेद्राजाकीदृशेनचविश्वसेत् २ ॥ भीष्मउवाच ॥ चतुर्विधानिमित्राणिराज्ञांराजन्भवंत्युत ॥ सहार्थोभजमानश्चसहजःकृत्रिमस्तथा ३ धर्मात्मापंचमश्चापिमित्रंनैकस्यनद्वयोः ॥ यतोधर्मस्ततोवास्याद्धर्मस्थोवाततोभवेत् ४ यस्तस्यार्थोनरोचेतनतंतस्यप्रकाशयेत् ॥ धर्माधर्मेणराजानश्चरंतिविजिगीषवः ५

यज्ञइत्यर्थः २० जिह्मंशाठ्यं आर्जवमवक्रत्वम् २१ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ ७ ॥ एवंस्वामिसंपदंविविच्यामात्यसंपदंविविनक्ति यदपीत्यादिना १ यज्ञवद्राज्यमप्येकाकिनाकर्तुमशक्यमतऋत्विजामिवसचिवानामपिपरीक्षाऽवश्यंकर्तव्येत्यर्थः १ उत्तरमाह चतुर्विधानीति । सहार्थः अयंशत्रुरुभाभ्यामुन्मूलनीयोऽस्यराज्यमुभाभ्यांविभज्यग्राह्यमितिपणपूर्वंकृतः । भजमानः पितृपैतामहक्रमागतः । सहजो मातृष्वस्त्रीयादिः । कृत्रिमो धनादिनाआवर्जितः ३ नैकस्येति पक्षपातशून्यः नद्वयोरित्युभयवेतनत्वेनकपटकारी । योऽस्यार्थितोऽपिधर्मपक्षपातीभवतितस्योदासीनत्वेतुयोधर्मस्थःसतमाश्रयेदित्यर्थः ४ अर्थोधर्मापेतत्वात्स्वयमपिसोऽर्थस्त्याज्यइत्याशंक्याह धर्मेति केवलेनधर्मेणाजिगीषवोनसिद्ध्यंतीत्यर्थः ५

मध्यमीभजमामसहजो। अपरोसहायर्थंकृत्रिमो। अयःऋ त्वमविकालेबलवांश्चेत्सर्वमपजिहीर्षतीतिशंक्यएव। कृत्रिमोविशेषवनलाभारपरकीयोभविष्यतीतिसोऽपिशंक्यएव सर्वेषंचापित्यक्षं कार्यमुद्दिश्य मंत्रितमपिदुष्टामात्यनिग्रहादिकंकार्यंपंचानामपिसमक्षंनकुर्यादित्यर्थः ६ नहीति कुमित्रंसर्वथाहंतव्यमेवेत्यर्थः ७ यस्माद्गुणाश्चलचित्तत्वाद्विपर्यासोमित्रादीनांदृश्यतेतस्मात्क चिदपिविश्वासमकृत्वाकोशदुर्गादिसंरक्षणंस्वप्रत्यक्षमेवकुर्याद्राजेत्याहद्वाभ्यां असाधुरिति ८। ९ अत्यंतंविश्वासाविश्वासावपिविरुद्धावित्याहत्रिभिः एकांतेनेति १०। ११। १२ अ विश्वासस्थानान्याह यमिति मयिमृतेऽयंराजाभविष्यतीतियंमन्येतप्रतिवेशीभ्राताबापुत्रोवाऽस्तुतस्माच्छंकितव्यमेवेत्यर्थः१३ अमित्रस्यलक्षणांतरमाह यस्येतिद्वाभ्यां यथामहातटाकसेतुसमी

चतुर्णांमध्यमौश्रेष्ठौनित्यंशक्यौतथाऽपरौ ॥ सर्वेनित्यंशंकितव्याःप्रत्यक्षंकार्यमात्मनः ६ नहिराज्ञाप्रमादोवैकर्तव्योमित्ररक्षणे ॥ प्रमादिनंहिराजानंलोकाः परिभवंत्युत ७ असाधुःसाधुतामेतिसाधुर्भवतिदारुणः ॥ अरिश्चमित्रंभवतिमित्रंचापिप्रदुष्यति ८ अनित्यचित्तःपुरुषस्तस्मिन्कोजातुविश्वसेत् ॥ तस्मात्प्र धानंयत्कार्यंप्रत्यक्षंतत्समाचरेत् ९ एकांतेनहिविश्वासःकृत्स्नोधर्मार्थनाशकः ॥ अविश्वासश्चसर्वत्रमृत्युनाचविशिष्यते १० अकालमृत्युर्विश्वासोविश्वसन्हिवि पद्यते ॥ यस्मिन्करोतिविश्वासमिच्छतस्तस्यजीवति ११ तस्माद्विश्वसितव्यंचशंकितव्यंचकेषुचित् ॥ एषानीतिगतिस्तात लक्ष्याचैवसनातनी १२ यं मन्येतममाभावादिममर्थागमंस्पृशेत् ॥ नित्यंतस्माच्छंकितव्यममित्रंतद्विदुर्बुधाः १३ यस्यक्षेत्रादप्युदकंक्षेत्रमन्यस्यगच्छति ॥ नतत्रानिच्छतस्तस्यभि द्येरन्सर्वसेतवः १४ तथैवात्युदकाद्भीतस्तस्यभेदनमिच्छति ॥ यमेवंलक्षणंविद्यात्तममित्रंविनिर्दिशेत् १५ यस्समृद्ध्यानतृप्येतक्षयेदीनतरोभवेत् ॥ एतदु त्तममित्रस्यानिमित्तमितिचक्षते १६ यन्मन्येतममाभावादस्याभावोभवेदिति ॥ तस्मिन्कुर्वीतविश्वासंयथापितरिवैतथा १७ तंशक्त्यावर्धमानश्चसर्वतःपरि बृंहयेत् ॥ नित्यंक्षताद्वारयतियोधर्मेष्वपिकर्मसु १८ क्षताद्भीतंविजानीयादुत्तमंमित्रलक्षणम् ॥ येतस्यक्षतमिच्छंतितेतस्यरिपवःस्मृताः १९ व्यसनान्नि त्यभीतोयःसमृद्ध्यायोनदुष्यति ॥ यत्स्यादेवंविधंमित्रंतदात्मसममुच्यते २० रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ॥ कुलीनःकुलसंपन्नःसतस्मात्प्रत्यनंतरः २१ मेधावीस्मृतिमान्दक्षःप्रकृत्याचानृशंस्यवान् ॥ योमानितोमानितोवानचदुष्येत्कदाचन २२ ऋत्विग्वायदिवाऽऽचार्यःसखावाऽत्यंतसंस्तुतः ॥ गृहेवसे दमात्यस्तेसस्यात्परमपूजितः २३ सतेविद्यात्परंमंत्रंप्रकृतिंचार्थधर्मयोः ॥ विश्वासस्तेभवेत्तत्रयथापितरिवैतथा २४ पेयस्यक्षेत्रंसचेत्सेतुंरक्षति

हिततोऽर्वाचीनानिक्षेत्राणिसमोदकानिसम्यक्फलंति। सचेत्सेतुंभिनत्तितदाऽतिजलप्रवाहात्क्षेत्राणामुपघातोभवति। एवंमहतिशत्रोसीमांतपालःसम्यक्सीमांपालयतितदापरराष्ट्रादुत्तमप ण्यागमेनस्वराष्ट्रंसुखभाक्भवति सचेत्सीमांभिनत्तितदास्वंराज्यंविपक्षप्रवेशान्नश्यति। तत्रयस्मात्सीमांतपालाद्भयंसंभावितंसशत्रुरितिज्ञेयम्। यद्वशीनोशत्रुप्रकोपात्प्रकोपोसीऽतपालोऽप्यवि श्वसनीयइत्यर्थः अक्षरार्थःस्पष्टः १४। १५ मित्रलक्षणमाह यस्त्विति वृद्ध्यानतृप्येतएतदुक्तामितिचपाठांतरे इदमेवामित्रलक्षणं अदीनेतिचच्छेदः १६ यन्मित्रंकर्तृ १७।१८ ।१९।२० ।२१।२२ २३ सइति तत्रार्थप्रकृति धर्मप्रकृतिरर्थधर्मप्रकृतिश्चेतित्रेधाप्रकृतिस्तां तत्राद्या'कृषिर्वणिक्पथोदुर्गंसेतुःकुंजरबंधनम्। खन्याकरकरादानंशून्यानांचनिवेशनम्। अष्टौसंधानकर्माणिप्रयुक्तानिम नीषिभिः'इति संधानमर्थप्राप्तिः तथा 'दुर्गाध्यक्षोबलाध्यक्षोधर्माध्यक्षश्चमूपतिः। पुरोधावैद्यदैवज्ञोसप्तप्रकृतयस्त्विमाः' इति तत्रधर्माध्यक्षोधर्मप्रकृतिःअन्येऽर्थधर्मप्रकृतयइतिविवेकः २४

॥६८॥

एकार्थेएकस्मिन्प्रयोजनेएकएवाध्यक्षःकार्यश्चारैस्तुतद्गुणदोषान्संकलयेन्नत्वेकार्थेद्वावध्यक्षौकार्याविस्याह एकार्थेइति २५ समयेनीतिमर्यादायां २६ प्रत्यनंतरःप्रतिनिधिःप्रधानइति यावत् २७ प्रतिपत्तिविशारदःकार्याकार्यविवेककुशलः २८ स्वनुष्ठिताःसुष्ठ्वनुष्ठितंकर्तव्यंयेर्पाते २९ कृत्स्नमप्रतिकंचुकंयथास्यात्तथाविनिक्षिप्ताअधिकृताः प्रतिरूपेष्वनुरूपेषुकर्मस्वायव्ययसं कलनादिषु कार्येषुपराभिभवादिषु ३०। ३१ उपराजासमीपवर्तीसामंतः ३२। ३३। ३४ निकृतस्यलंबितस्यनान्यःपरायणं कथंचकथमपिनसहतेइत्यन्वयः ३५ बांधवैःसंबंधिभिर्निकृतक

नैवद्वौनत्रयःकार्यानमृष्येरन्परस्परम् ॥ एकार्थेह्येवभूतानांभेदोभवतिसर्वदा २५ कीर्तिप्रधानोयस्तुस्याद्यश्चस्यात्समयेस्थितः ॥ समर्थान्यश्चनद्वेष्टिनानर्थान्कु रुतेचयः २६ योनकामाद्भयाल्लोभात्क्रोधाद्वाधर्ममुत्सृजेत् ॥ दक्षःपर्याप्तवचनःसतेस्यात्प्रत्यनंतरः २७ कुलीनःशीलसंपन्नस्तितिक्षुरविकत्थनः ॥ शूरश्चार्यश्च विद्वांश्चप्रतिपत्तिविशारदः २८ एतेह्यमात्याःकर्तव्याःसर्वकर्मस्ववस्थिताः ॥ पूजिताःसंविभक्ताश्चसुसहायाःस्वनुष्ठिताः २९ कृत्स्नमेतेविनिक्षिप्ताःप्रतिरूपेषु कर्मसु ॥ युक्तामहत्सुकार्येषुश्रेयांस्युत्थापयंत्युत ३० एतेकर्माणिकुर्वंतिस्पर्धमानामिथःसदा ॥ अनुतिष्ठंतिचैवार्थमाचक्षाणाःपरस्परम् ३१ ज्ञातिभ्यश्चैवबुध्ये थामृत्योरिवभयंसदा ॥ उपराजेवराजर्धिंज्ञातिर्नसहतेसदा ३२ ऋजोर्मृदोर्वदान्यस्यह्रीमतःसत्यवादिनः ॥ नान्योज्ञातेर्महाबाहोविनाशमभिनंदति ३३ अज्ञा तिनोऽपिनसुखानावज्ञेयास्ततःपरम् ॥ अज्ञातिमंतंपुरुषंपरेचाभिभवंत्युत ३४ निकृतस्यनरैरन्यैर्ज्ञातिरेवपरायणम् ॥ नान्योनिकारंसहतेज्ञातिर्ज्ञातेःकथंचन ३५ आत्मानमेवजानातिनिकृतंबांधवैरपि ॥ तेषुसंतिगुणाश्चैवनैर्गुण्यंचैवलक्ष्यते ३६ नाज्ञातिरनुगृह्णातिनचाज्ञातिर्नमस्यति ॥ उभयंज्ञातिवर्गेषुदृश्यतेसा ध्वसाधुच ३७ संमानयेत्पूजयेच्चवाचानित्यंचकर्मणा ॥ कुर्याच्चप्रियमेतेभ्योनाप्रियंकिंचिदाचरेत् ३८ विश्वस्तवदविश्वस्तस्तेषुवर्तेतसर्वदा ॥ नहिदोषोगुणोवे तिनिरूप्यस्तेषुदृश्यते ३९ अस्यैवंवर्तमानस्यपुरुषस्याप्रमादिनः ॥ अमित्राःसंप्रसीदंतितथाऽमित्रीभवंत्यपि ४० यएवंवर्ततेनित्यंज्ञातिसंबंधिमंडले ॥ मित्रे ष्वमित्रेमध्यस्थेचिरंयशसितिष्ठति ४१ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणिअशीतितमोऽध्यायः ॥ ८० ॥ ॥ युधिष्ठिरउवाच ॥ एवमग्राह्यकेतस्मिन्ज्ञातिसंबंधिमंडले ॥ मित्रेष्वमित्रेष्वपिचकथंभावोविभाव्यते १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ संवादंवासुदे वस्यसुरर्षेर्नारदस्यच २ ॥ वासुदेवउवाच ॥ नासुहृत्परमंमंत्रंनारदार्हतिवेदितुम् ॥ अपंडितोवाऽपिसुहृत्पंडितोवाप्यनात्मवान् ३ सतेसौहृदमास्थाय किंचिद्वक्ष्यामिनारद ॥ कृत्स्नंबुद्धिबलंप्रेक्ष्यसंपृच्छेत्रिदिवंगम ४

२५ र्भिश्चित्पुरुषेतज्ज्ञातिःकृत्स्नाऽऽत्मानमेवनिकृतंजानाति तेषुज्ञातिषु यथोक्तं 'परस्परविरोधेहिवयंपंचचतेशतं ॥ अन्यैःसहविरोधेतुवयंपंचोत्तरंशतम्'इति ३६। ३७। ३८। ३९। ४० ४१ ॥ इतिशांतिपर्वणि राजधर्मानुशासपर्वणिनीलकंठीये भारतभावदीपे अशीतितमोऽध्यायः ॥ ८० ॥ ॥ ८१ ॥ एवमिति अग्राह्यकेवशीकर्तुमशक्ये द्वयोरन्योन्यंस्पर्धमानयोरेकस्यादरे इतरस्यकोपोत्पत्तेरवश्यंमित्रमप्यमित्रतांयात्यतःसर्वेषांभावश्चित्तंकथंविभाव्यतेवशीक्रियतेइतिप्रश्नः १। २। ३। ४

दास्यमेवाह अर्धमिति अर्जितस्यार्धंज्ञातिभ्योदेयंतद्दुरुक्तानिचक्षंतव्यानीत्येवंज्ञातिदास्यं ५ वाशब्दइवार्थः वाचादुरुक्तमाहुकस्नेहारकृष्णोमांद्विष्टीत्यक्रूरदुरुक्तमक्रूरस्नेहात्कृष्णोमांद्विष्टीत्याहुकदु रुक्तं ६ असहायःआहुकाक्रूरयोःसांत्वनेइतिशेषः ७ । ८ तेयस्यपक्षेनस्युःसनस्यात्रइयेदेव यस्यपक्षेतेस्युस्तत्कुलंकृत्स्नमेवपुरुषार्थलभेत ईदृशाअपिममसाहाय्यंनकुर्वंतीतिभावः । द्वाभ्यामाहुका क्रूराभ्यांनिवारितोनिरस्तःसन्नेकतरंनवृणोमीतरस्यकोपोमाभूदिति ९ द्वयोर्मेहिषयोरिवयुध्यतोर्वारणेमध्यस्थस्यममयद्दुःखंतथाद्वयोःसुहृदोस्त्यागेऽपीत्याह स्यातामिति १० द्वयोः

दास्यमैश्वर्यवादेनज्ञातीनांनकरोम्यहम् ॥ अर्धभोक्ताऽस्मिभोगानांवाग्दुरुक्तानिचक्षमे ५ अरणीमग्निकामोवामथ्नातिहृदयंमम ॥ वाचादुरुक्तंदेवर्षेतन्मेदहति नित्यदा ६ बलंसंकर्षणेनित्यंसौकुमार्यंपुनर्गदे ॥ रूपेणमत्तःप्रद्युम्नःसोसहायोऽस्मिनारद ७ अन्येहिसुमहाभागाबलवंतोदुरुत्सहाः ॥ नित्योत्थानेनसंपन्नाना रदांधकवृष्णयः ८ यस्यनस्युर्नवैसस्याद्यस्यस्युःकृत्स्नमेवतत् ॥ द्वाभ्यांनिवारितोनित्यंवृणोम्येकतरंनच ९ स्यातांयस्याहुकाक्रूरौकिंनुदुःखतरंततः ॥ यस्य चापिनतौस्यातांकिंनुदुःखतरंततः १० सोऽहंकितवमातेवद्वयोरपिमहामते ॥ एकस्यजयमाशंसेद्वितीयस्यापराजयम् ११ ममैवंक्लिश्यमानस्यनारदोभयतः सदा ॥ वक्तुमर्हसियच्छ्रेयोज्ञातीनामात्मनस्तथा १२ ॥ ॥ नारदउवाच ॥ ॥ आपदोद्विविधाःकृष्णबाह्याश्चाभ्यंतराश्चह ॥ प्रादुर्भवंतिवार्ष्णेयस्वकृताय दिवाऽन्यतः १३ सेयमाभ्यंतरातुभ्यमापत्कृच्छ्रास्वकर्मजा ॥ अक्रूरभोजप्रभवासर्वेह्येतेतदन्वयाः १४ अर्थहेतोर्हिकामाद्वावाचाबीभत्सयाऽपिवा ॥ आत्मना प्राप्तमैश्वर्यमन्यत्रप्रतिपादितम् १५ कृतमूलमिदानींतज्ज्ञातिशब्दंसहायवत् ॥ नशक्यंपुनरादातुंवांतमन्नमिवत्वया १६ बभ्रूग्रसेनयोराज्यंनाप्तुंशक्यंकथंचन ॥ ज्ञातिभेदभयात्कृष्णत्वयाचापिविशेषतः १७ तच्चसिध्येत्प्रयत्नेनकृत्वाकर्मसुदुष्करम् ॥ महाक्षयंव्ययोवास्याद्विनाशोवापुनर्भवेत् १८ अनायसेनशस्त्रेणमृदुना हृदयच्छिदा ॥ जिह्वामुद्धरसर्वेषांपरिमृज्यानुमृज्यच १९ ॥ ॥ वासुदेवउवाच ॥ ॥ अनायसंमुनेशस्त्रंमृदुविद्यामहंकथम् ॥ येनैषामुद्धरेजिह्वांपरिमृज्यानुमृ ज्यच २० ॥ ॥ नारदउवाच ॥ ॥ शक्त्याऽन्नदानंसततंतितिक्षार्जवमार्दवम् ॥ यथाऽर्हप्रतिपूजाचशस्त्रमेतदनायसम् २१ ज्ञातीनांवक्तुकामानांकटुकानिल घूनिच ॥ गिरात्वंहृदयंवाचंशमयस्वमनांसिच २२ नामहापुरुषःकश्चिन्नानात्मानासहायवान् ॥ महतींधुरमाधत्तेतामुद्यम्योरसावह २३

कितवयोर्द्यूतकारिणोरेकामातेव ११ । १२ अन्यतोबाह्याआपदः स्वकृताज्ज्ञातिकृताभ्यंतराआपदः १३ एतेसंकर्षणादयःतदन्वयाअक्रूरान्वयाः १४ तत्रहेतुरर्थेति तरस्नेहप्रमवेयं तवाऽऽपदितिसार्धः स्वकर्मजेत्युक्तंतद्विवृणोति आत्मनेतिसार्धेन अन्यत्राऽऽहुके १५ तदैश्वर्यंकृतमूलंयतोज्ञातिशब्दंज्ञातित्वादनुच्छेदनीयं हेसहायवन् अतएवपुनरादातुंनशक्यमित्याह नेति १६ तत्रहेतुःज्ञातीति त्वयेतिमहतांदत्तापहारोनोचितो ' विषवृक्षोऽपिसंवर्ध्यस्वयंच्छेतुमसांप्रतम् 'इतिन्यायादित्यर्थः १७ तत्रराज्यस्यपुनरादानंच १८ जिह्वामुद्धरतेषांमूकीभावंसं पादय येनकलहोदयोनस्यात् १९ । २० परिमार्जनंदोषापनयनंतितिक्षार्जवमार्दवैःकार्यं अनुमार्जनंप्रीतिगुणाधानं यथार्हपूजनादित्यर्थः २१ हृदयंकूरनिश्चयं मनांसिकुसंकल्पजाला नि २२ अनात्माअजितचित्तः उरसाअंगीकृत्यक्षमयावहस्वेत्यर्थः २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे एकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥ ॥ एवममा त्यान्मृष्टान्नदानतितिक्षार्जवमार्दवपूजाभिर्मानयेदित्युक्तं कोशवृद्धिकरंतुततोप्यधिकतरंमनयेद्रक्षेच्चेत्याह एषेति १ । २ । ३ । ४ । ५ । ६ प्रवृत्त्यर्थीअमात्यदोषदर्शनेराजानंप्रवर्तयितुकामः

सर्वएवगुरुंभारमनड्वान्वहतेसमे ॥ दुर्गेप्रतीकःसुगवोभारंवहतिदुर्वहम् २४ भेदाद्विनाशःसंघानांसंघमुख्योऽसिकेशव ॥ यथात्वांप्राप्यनोत्सीदेदयंसंघस्तथा कुरु २५ नान्यत्रबुद्धिक्षांतिभ्यांनान्यत्रेंद्रियनिग्रहात् ॥ नान्यत्रधनसंत्यागाद्गणःप्राज्ञेऽवतिष्ठते २६ धन्यंयशस्यमायुष्यंस्वपक्षोद्भावनंसदा ॥ ज्ञातीनाम विनाशःस्याद्यथाकृष्णतथाकुरु २७ आयत्यांचतदात्वेचनतेस्त्यविदितंप्रभो ॥ षाड्गुण्यस्यविधानेनयात्रायानविधौतथा २८ यादवाःकुकुराभोजाःसर्वेचांधक वृष्णयः ॥ त्वय्यासक्तामहाबाहोलोकालोकेश्वराश्चये २९ उपासंतेहित्वद्बुद्धिमृषयश्चापिमाधव ॥ त्वंगुरुःसर्वभूतानांजानीषेत्वंगतागतम् ३० त्वामासाद्ययदु श्रेष्ठमेधंतेयादवाःसुखम् ३१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिवासुदेवनारदसंवादोनामैकाशीतितमोऽध्यायः ॥ ८१ ॥ भीष्मउवाच ॥ एषाप्रथमतोवृत्तिर्द्वितीयांशृणुभारत ॥ यःकश्चिज्जनयेदर्थंराज्ञारक्ष्यःसदानरः १ ह्रियमाणममात्येनभृत्योवायदिवाभृतः ॥ योराजकोशंनश्यंतमाचक्षीतयु धिष्ठिर २ श्रोतव्यमस्यचरहोरक्ष्यश्चामात्यतोभवेत् ॥ अमात्याह्युपहर्तारोभूयिष्ठंघ्नंतिभारत ३ राजकोशस्यगोप्तारंराजकोशविलोपकाः ॥ समेत्यसर्वेबाधंते सविनश्यत्यरक्षितः ४ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ मुनिःकालकवृक्षीयःकौसल्यंयदुवाचह ५ कोसलानामाधिपत्यंसंप्राप्तंक्षेमदर्शिनम् ॥ मुनिः कालकवृक्षीयआजगामेतिनःश्रुतम् ६ सकाकंपंजरेबद्ध्वाविषयंक्षेमदर्शिनः ॥ सर्वंपर्यचरद्युक्तःप्रवृत्त्यर्थीपुनःपुनः ७ अधीध्वंवायसींविद्यांशंसंतिममवायसाः ॥ अनागतमतीतंचयच्चसंप्रतिवर्तते ८ इतिराष्ट्रेपरिपतन्बहुभिःपुरुषैःसह ॥ सर्वेषांराजयुक्तानांदुष्करंपरिदृष्टवान् ९ सबुद्ध्वातस्यराष्ट्रस्यव्यवसायांहिसर्वशः ॥ राजयुक्तापहारांश्चसर्वान्बुद्ध्वाततस्ततः १० ततःसकाकमादायराजानंद्रष्टुमागमत् ॥ सर्वज्ञोऽस्मीतिवचनंब्रुवाणःसंशितव्रतः ११ सस्मकौसल्यमाग म्यराजाऽमात्यमलंकृतम् ॥ प्राहकाकस्यवचनादमुत्रेदंत्वयाकृतम् १२ असौचासौचजानीतेराजकोशस्त्वयाहृतः ॥ एवमस्यातिकाकोऽयंतच्छीघ्रमनु गम्यताम् १३ तथाऽन्यानपिसप्राहराजकोशहरांस्तदा ॥ नचास्यवचनंकिंचिदनृतंश्रूयतेक्वचित् १४ तेनविप्रकृताःसर्वेराजयुक्ताःकुरूद्वह ॥ तमस्य भिप्रसुप्तस्यनिशिकाकमवेधयन् १५ वायसंतुविनिर्भिन्नंदृष्ट्वाबाणेनपंजरे ॥ पूर्वाह्णेब्राह्मणोवाक्यंक्षेमदर्शिनमब्रवीत् १६ राजंस्त्वामभयंयाचेप्रभुंप्राणधने श्वरम् ॥ अनुज्ञातस्त्वयाब्रूयांवचनंभवतोहितम् ॥ मित्रार्थमभिसंतप्तोभक्त्यासर्वात्मनाऽगतः १७

७ । ८ परिपतन्परितोभ्रमन् राजयुक्तानांराज्ञातेषुतेषुकार्येषुनियुक्तानां दुष्करंस्वामिद्रव्यापहाररूपंपापम् ९ राजयुक्तैर्धनस्यापहारान् १० । ११ राजानमागम्यतत्समक्षमेवामात्यंप्राह अमुत्रस्थानेत्वयेदंधनचौर्यंकृतमिति १२ अनुगम्यतामालोच्यतां १३ । १४ अस्यमुनेः तमनादरयेत्यर्थः १५ । १६ आगतोऽहंत्वयाऽनुज्ञातःसन्तवहितंब्रूयामितिसार्धः १७

अर्थोऽहितपत इतियोब्रूयात्तस्यमित्रस्यतथाभूततद्वचनेत्वयाश्रवंतव्यमितिद्वयोःसंबंधः नपुनःकाकवत्तादृशंमित्रमनवहितत्वयापैरीषावनीयमितिभावः सार्धश्लोकद्वयं १८ । १९ । २० । २१ पापानपापांश्चभृत्यान्ज्ञात्वाभृत्यतोभृत्यात्तेतवभयानिचज्ञात्वा २२ अगतीकगतिःश्वद्वृत्तित्वात् श्वद्वृत्तिर्नीचसेवनं २३ । २४ तेभ्योराजकीयमित्रेभ्योऽमित्रेभ्योराजतश्चभयमस्तीत्यर्थः २५ । २६ प्रमादाद्भृत्यकृतात्स्खलेत्पूर्वोपकारंविस्मृत्यद्विषेत् २७ नाहमस्मीतिमत्वाजीवनाशात्यक्त्वेत्यर्थः २८ । २९ । ३० अहमितिपाठेभूयांसंबद्धैश्वर्यवंतंकरिष्यामि ३१ तत्रद्वारमाह

अयंतवार्थोऽहितेयोब्रूयादक्षमान्वितः ॥ संबुबोधयिषुर्मित्रंसदश्वमिवसारथिः १८ अतिमन्युप्रसक्तोहिप्रसह्याहितकारणात् ॥ तथाविधस्यसुहृदाक्षंतव्यंस्वंविजानता ॥ ऐश्वर्यमिच्छतानित्यंपुरुषेणबुभूषता १९ तंराजाप्रत्युवाचेदंयत्किंचिन्माभवान्वदेत् ॥ कस्मादहंनक्षमेयमाकांक्षन्नात्मनोहितम् २० ब्राह्मणप्रतिजानेतेप्रब्रूहियदिहेच्छसि ॥ करिष्यामिहितेवाक्यंयदस्मान्विप्रवक्ष्यसि २१ ॥ मुनिरुवाच ॥ ज्ञात्वापापानपापांश्चभृत्यतस्तेभयानिच ॥ भक्त्याद्वृत्तिंसमाख्यातुंभवतोंतिकमागमम् २२ प्रागेवोक्तस्तुदोषोयमाचार्यैर्नृपसेविनां ॥ अगतीकगतिर्ह्येषापापाराजोपसेविनां २३ आशीविषैश्चतस्याहुःसंगतंयस्यराजभिः ॥ बहुमित्राश्चराजानोबह्वमित्रास्तथैवच २४ तेभ्यःसर्वेभ्यएवाहुर्भयंराजोपजीविनाम् ॥ तथैषांराजतोराजन्मुहूर्तादेवभीर्भवेत् २५ नैकांतेनाप्रमादोहिशक्यःकर्तुंमहीपतौ ॥ नतुप्रमादःकर्तव्यःकथंचिद्भूतिमिच्छता २६ प्रमादाद्धिस्खलेद्राजास्खलितेनास्तिजीवितम् ॥ अग्निंदीप्तमिवासीदेद्राजानमुपशिक्षितः २७ आशीविषमिवक्रुद्धंप्रभुंप्राणधनेश्वरम् ॥ यत्नेनोपचरेन्नित्यंनाहमस्मीतिमानवः २८ दुर्व्याहृताच्छंकमानोदुःस्थिताद्दुरधिष्ठितात् ॥ दुरासिताद्दुर्व्रजितादिंगिताद्दंगचेष्टितात् २९ देवतेवहिसार्वार्थान्कुर्याद्राजाप्रसादितः ॥ वैश्वानरइवक्रुद्धःसमूलमपिनिर्दहेत् ३० इतिराजन्यमःप्राहवर्ततेचतथैवतत् ॥ अथभूयांसमेवार्थंकरिष्यामिपुनःपुनः ३१ ददात्यस्मद्विधोऽमात्योबुद्धिसाहाय्यमापदि ॥ वायसस्त्वेषमेराजन्ननुकार्याभिसंहितः ३२ नचमेऽत्रभवान्गर्ह्योनचयेषांभवान्प्रियः ॥ हिताहितांस्तुबुद्ध्येथामापरोक्षमतिर्भवेः ३३ येत्वादानपराएववसंतिभवतोगृहे ॥ अभूतिकामाभूतानांतादृशैर्मेऽभिसंहितम् ३४ योवाभवद्विनाशेनराज्यमिच्छत्यनंतरम् ॥ आंतरैरभिसंधायराजन्सिद्ध्यतिनान्यथा ३५ तेषामहंभयाद्राजन्गमिष्याम्यन्यमाश्रमम् ॥ तैर्हिमेसंधितोबाणःकाकेनिपतितःप्रभो ३६ छद्मकामैरकामस्यगमितोयमसादनम् ॥ दृष्टंह्येतन्मयाराजंस्तपोदीर्घेणचक्षुषा ३७ बहुनक्रझषग्राहांतिमिंगलगणैर्युताम् ॥ काकेनबालिशेनेमांयामतार्षमहंनदीम् ३८

ददातीति बुद्धिदानेऽप्यनिष्टमाह वायसस्त्विति नन्वितिवितर्के तुशब्दोयथार्थे यथामेवायसःकार्याभिसंहितःकार्यकारीतथाऽहमप्यस्मीतिशेषः तद्वदेवचमांत्वदमात्यामारयिष्यंतीतिवितर्कयेइतिभावः ३२ । ३३ आदानपराःकोशलोपारः भूतानांप्रजानां मेमयितादृशैरभिसंहितमभिसंधिर्वैरंकृतं मदीयकाकहननादितिभावः ३४ आंतरैःसूदादिभिःअभिसंधायाऽन्नादौविषंप्रक्षेप्तव्यमितिस्नेहंकृत्वातेषामभीप्सितोभवद्विनाशःसिध्यतिचाऽन्यथानासिध्यतिच आयुःशेषेसतीतिभावः ३५ तेषांत्वद्वैरिणां काकमिवमामपिमारयिष्यंतीतिध्वनिः ३६ । ३७ इमांराजनीतिनदींसजातीयविजातीयदुर्बलग्रासिभिर्नक्रादितुल्यैरधिकारिपुरुषैर्व्याप्तां काकेनबालिशेन स्वमृत्युंसंपादयतासहायेनाहमतार्षंतीर्णवानस्मि विरुद्धलक्षणयातन्मरणान्मृतोऽस्मीतिभावः ३८



स्थाण्वितिपूर्वनयायवोपमानं ३९ अग्निनादीपिन ४० गहनंकपटं अंधकारमिवतमोन्वितंधर्माधर्मदर्शनशून्यं ४१ । ४२ । ४३ यथाबद्धावर्तायांसीतायांप्लवस्तारणोपायोनिमज्जतितथातवराजनीतौप्लवोमादृशोऽपिनिमज्जति ४४ मध्वितिसार्धः ४५ तीर्थंजलावतरणमार्गः करीरोनिष्पत्रकंटीक्षुपः ४६।४७ ययेति तेनकक्षेणसहैवदावोदावाग्निर्दहतिवृक्षपेवंस्वदाश्रयाद्वृद्धिंप्राप्तास्त्वामतिक्रांताअमात्यास्तैःसहत्वंनाशंप्राप्स्यसीत्यर्थः ४८ । ४९ । ५० उषितंमयेतिशेषः वीरपत्न्याआलयेजारेणेवेतिशेषः मृत्युस्थानेस्वच्छीलजिज्ञासयास्थितमितिसार्धाभिप्रायः ५१ जिज्ञासा

स्थाण्वश्मकंटकवतींसिंहव्याघ्रसमाकुलाम् ॥ दुरासदांदुष्प्रसहांगुहांहैमवतीमिव ३९ अग्निनातामसंदुर्गंनौभिराप्यंचगम्यते ॥ राजदुर्गावतरणेनोपायंपंडिताविदुः ४० गहनंभवतोराज्यमंधकारतमोन्वितम् ॥ नेहविश्वसितुंशक्यंभवताऽपिकुतोमया ४१ अतोनायंशुभोवासस्तुल्येसदसतीइह ॥ वधोह्येवाऽत्रसुकृतेदुष्कृतेनचसंशयः ४२ न्यायतोदुष्कृतेघातःसुकृतेनकथंचन ॥ नेहयुक्तंस्थिरंस्थातुंजवेनैवात्रजेद्बुधः ४३ सीतानामनदीराजन्प्लवोयस्यांनिमज्जति ॥ तथोपमामिमांमन्येवागुरांसर्वघातिनीम् ४४ मधुप्रपातोहिभवान्भोजनंविषसंयुतम् ॥ असतामिवतेभावोवर्ततेनसतामिव ४५ आशीविषैःपरिवृतःकूपस्त्वमसिपार्थिव ॥ दुर्गतीर्थाबृहत्कूलाकारीरावेत्रसंयुता ४६ नदीमधुरपानीयायथाराजंस्तथाभवान् ॥ श्वगृध्रगोमायुयुतोराजहंससमोह्यसि ४७ यथाऽऽश्रित्यमहावृक्षंकक्षःसंवर्धतेमहान् ॥ ततस्तंसंवृणोत्येवतमतीत्यचवर्धते ४८ तेनैवेंधेनेनैनंदावोदहतिदारुणः ॥ तथोपमाह्यमात्यास्तेराजंस्तान्परिशोधय ४९ त्वयाचैवकृताराजन्भवतापरिपालिताः ॥ भवंतमभिसंधायजिघांसंतिभवत्प्रियम् ५० उषितंशंकमानेनप्रमादंपरिरक्षता ॥ अंतःसर्पइवागारेवीरपत्न्याइवालये ॥ शीलंजिज्ञासमानेनराज्ञश्चसहजीविनः ५१ कच्चिज्जितेंद्रियोराजाकच्चिदस्यांतराजिताः ॥ कच्चिदेषांप्रियोराजाकच्चिद्राज्ञःप्रियाःप्रजाः ५२ विजिज्ञासुरिहप्राप्तस्तवाहंराजसत्तम ॥ तस्यमेरोचतेराजन्क्षुधितस्येवभोजनम् ५३ अमात्यामेनरोचंतेवितृष्णस्ययथोदकम् ॥ भवतोऽर्थकृदित्येवंमयिदोषोहितैःकृतः ॥ विद्यतेकारणंनान्यदितिमेनात्रसंशयः ५४ नहितेषामहंद्रुग्धस्तत्तेषांदोषदर्शनम् ॥ अरेर्हिदुर्हृदाद्भेयंभग्नपृष्ठादिवोरगात् ५५ ॥ राजोवाच ॥ भूयसापरिहारेणसत्कारेणचभूयसा ॥ पूजितोब्राह्मणश्रेष्ठभूयोवसगृहेमम ५६ येत्वांब्राह्मणनेच्छंतितेनवत्स्यंतिमेगृहे ॥ भवतैवहितज्ज्ञेयंयत्तेषामनंतरम् ५७ यथास्यात्सुधृतोदंडोयथाचसुकृतंकृतम् ॥ तथासमीक्ष्यभगवन्श्रेयसेविनियुंक्ष्वमाम् ५८ ॥ मुनिरुवाच ॥ अदर्शयन्निमंदोषमेकैकंदुर्बलीकुरु ॥ ततःकारणमाज्ञायपुरुषंपुरुषंजहि ५९ एकदोषाहिबहवोमृद्नीयुरपिकंटकान् ॥ मंत्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमिते ६०

मेवाह कच्चिदिति आंतराःकामादयःषट् एषाममात्यादीनां ५२ रोचतेभवानितिशेषः५३अमात्येष्वरुचौहेतुमाह भवतइति दोषोमित्रध्वंसः ५४ नद्रुग्धोनद्रोहकर्ता एवंसत्यपितद्यमस्मद्रोहीतितेषांमयिदोषदर्शनमस्त्यतोमयाऽत्रनस्थेयमित्यर्थः दुर्हृदाद्दुष्टचित्तात्भेयंभेतव्यं भग्नपृष्ठात्पृष्ठभंगेनकोपितात् ५५। ५६।५७।५८ इमंहितस्यकाकस्यवधेदोषमदर्शयन्नेकमेकममात्यंक्रमेणदुर्बलीकुरु ऐश्वर्याच्च्यावय दुर्बलीकृतस्यकारणंवधहेतुंदोषमाज्ञायसाकल्येनज्ञात्वैकैकमेवजहि ५९ तेषामकस्माद्युगपच्चवधेदोषमाह एकेति संहताः कंटकानपिमृद्नीयुःकिमुतमादृशान्मृदूनित्यर्थः ६०

६१ । ६२ पितरिस्वर्दीये संस्थितेमृते ६३ विभ्रमेदनाशेष्वाशबुद्धिमवाग्माकार्षीदिति ६४ केवलममात्यसंस्थोमाभूरित्याशयेनाह उभेइति ६५ नांदीमंगलपाठः ततस्तस्मिन्मंत्रिणिपु वैसति नंदीतिपाठेहर्षः मंत्रीतिपाठेसूपसायत्रेनसंजज्ञेजातः ६६ कौसल्यायकौसल्यार्थे ६७ । ६८ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे द्व्यशीतितमो ऽध्यायः ॥ ८२ ॥ ॥ ७ ॥ समासदोव्यवहारनिर्णायकाः । सहायायुद्धादावुपयोगिनः । सुहृदोहितकर्तारः । परिच्छदाः सेनान्यादयः । अमात्यामंत्रिणः १ क्रमेणैषांलक्षणान्याह हीति

वयंतुब्राह्मणानामस्त्रंतुदंडाःकपालवः ॥ स्वस्तिचेच्छामभवतःपरेषांचयथाऽऽत्मनः ६१ राजन्नात्मानमाचक्षेसंबंधीभवतोह्यहम् ॥ मुनिःकालकवृक्षीयइत्येवमभिसं ज्ञितः ६२ पितुःसखाचभवतःसंमतःसत्यसंगरः ॥ व्यापन्नेभवतोराज्येराजन्पितरिसंस्थिते ६३ सर्वकामान्परित्यज्यतपस्तप्तंतदामया ॥ स्नेहात्त्वांतुब्रवी म्येतन्माभूयोविभ्रमेदिति ६४ उभेदृष्ट्वादुःखसुखेराज्यंप्राप्ययदृच्छया ॥ राज्येनामात्यसंस्थेनकथंराजन्प्रमाद्यसि ६५ ततोराजकुलेनांदींसंजज्ञेभूयसापुनः ॥ पुरोहितकुलेचैवसंप्राप्तेब्राह्मणर्षभे ६६ एकच्छत्रांमहींकृत्वाकौसल्याययशस्विने ॥ मुनिःकालकवृक्षीयईजेक्रतुभिरुत्तमैः ६७ हितंतद्वचनंश्रुत्वाकौसल्यो ऽप्यजयन्महीम् ॥ तथाचकृतवान्राजायथोक्तंतेनभारत ६८ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजध० अमात्यपरीक्षायांकालकवृक्षीयोपाख्यानेद्व्यशीतितमो ऽध्यायः ॥ ८२ ॥ ॥ युधिष्ठिरउवाच ॥ सभासदःसहायाश्चसुहृदश्चविशांपते ॥ परिच्छदास्तथाऽमात्याःकीदृशाःस्युःपितामह १ ॥ भीष्मउवाच ॥ हीनिषे वास्तथादांताःसत्यार्जवसमन्विताः ॥ शक्ताःकथयितुंसम्यक्तेतवस्युःसभासदः २ अमात्यांश्चातिशूरांश्चब्राह्मणांश्चपरिश्रुतान् ॥ सुसंतुष्टांश्चकौंतेयमहोत्साहां श्चकर्मसु ३ एतान्सहायाँल्लिप्सेथाःसर्वास्वापत्सुभारत ॥ कुलीनःपूजितोनित्यंनहिशक्तिंनिगूहति ४ प्रसन्नमप्रसन्नंवापीडितंहतमेववा ॥ आवर्तयतिभू यिष्ठंतदेवह्यनुपालितम् ५ कुलीनादेशजाःप्राज्ञारूपवंतोबहुश्रुताः ॥ प्रगल्भाश्चानुरक्ताश्चतेतवस्युःपरिच्छदाः ६ दौष्कुलेयाश्चलुब्धाश्चनृशंसानिरपत्रपाः ॥ तेत्वांतातनिषेवेयुर्यावदार्द्रकपाणयः ७ कुलीनान्शीलसंपन्नानिंगितज्ञाननिष्ठुरान् ॥ देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ८ नित्यमर्थेषुसर्वेषुराजाकुर्वी तमंत्रिणः ॥ अर्थमानार्घसत्कारैर्भोगैरुच्चावचैःप्रियैः ॥ यानर्थभाजोमन्येथास्तेतेस्युःसुखभागिनः ९ अभिन्नवृत्ताविद्वांसःसद्वृत्ताश्चरितव्रताः ॥ नत्वां नित्यार्थिनोजह्युरक्षुद्राःसत्यवादिनः १० अनार्यायेनजानंतिसमयंमंदचेतसः ॥ तेभ्यःपरिजुगुप्सेथायेचापिसमयच्युताः ११ नैकमिच्छेद्गणंहित्वास्याच्चे दन्यतरग्रहः ॥ यस्त्वेकोबहुभिःश्रेयान्कामंतेनगणंत्यजेत् १२

कथयितुंन्यायान्यायौवक्तुम् २ अमात्यान्नित्यंसन्निहितान् शूराःपुरोहि तादयश्चसहायाइत्यर्थः ३ सुहृदमाहसार्धेन कुलीनइति ४ । ५ । ६ यावदार्द्रकपाणयः शुष्कहस्तास्तुसद्योविक्रियंतेइत्यर्थः ७ इंगितज्ञान्नेत्रवक्त्रादिचेष्टितज्ञान् ८ अर्थोधनं मानउच्चस्थानेनि वेशादिः अर्घोदिव्यवस्त्रतांबूलादिदानं सत्कारआदरः यान्प्रियान्मन्येथास्तेऽर्थभाजःसुखभागिनश्चस्युः ९ तएवापद्यभिन्नवृत्ताःस्वामिनासहाऽनर्थभाजोदुःखभाजश्चस्युः नित्यमापद्यनापदि चार्थयंतइतिनित्यार्थिनः १० समयंधर्माधर्ममर्यादां जुगुप्सेथारक्षस्व ११ अन्यतरग्रहोगणैकयोरेकतरस्यग्रहणप्रसंगः एकश्चेद्गुणीतदागणंत्यक्त्वासएवग्राह्यः अन्यथागणएवग्राह्यइति १२



श्रेयसःसाधोः १३ । १४ । १५ सत्यःसत्यवान् १६ । १७ भूमिपःपरीक्षेतेतियोजना १८ अभिजातैःकुलीनैःअहार्यैर्लोभादिनावशीकर्तुमशक्यैः संबंधिपुरुषैर्येषांतैःसंबंधोऽस्तितादृशैः १९ यौना उत्तमयोनयः श्रौतावेदपथगाः मौलाःपरंपरागताः अनहंकृताअगर्वाः कर्तव्यामंत्रिणइतिशेषः २० प्रकृतिःपूर्वकर्मजःसंस्कारः । शोभनासत्यार्जवादिमती तेजःपराभिभवसामर्थ्यं । धैर्यंमहत्या मप्यापदिचित्तस्यानवसादः । क्षमामहत्यप्यपकारेसहिष्णुत्वं । शौचंबाह्यमांतरंचनिष्कापट्यं । अनुरागःस्वामिनिप्रीतिः । स्थितिरव्यभिचारिता । धृतिर्धारणसामर्थ्यम् २१ पंचमंत्रिणइति

श्रेयसोलक्षणंचैतद्विक्रमोयस्यदृश्यते ॥ कीर्तिप्रधानोयश्चस्यात्समयेयश्चतिष्ठति १३ समर्थान्पूजयेद्यश्चनास्पर्ध्यैःस्पर्धतेचयः ॥ नचकामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् १४ अमानीसत्यवान्क्षांतोजितात्मामानसंयुतः ॥ सतेमंत्रसहायःस्यात्सर्वावस्थापरीक्षितः १५ कुलीनःकुलसंपन्नस्तितिक्षुर्दक्षआत्मवान् ॥ शूरः कृतज्ञःसत्यश्चश्रेयसःपार्थलक्षणम् १६ तस्यैवंवर्तमानस्यपुरुषस्यविजानतः ॥ अमित्राःसंप्रसीदंतितथामित्रीभवंत्यपि १७ अतऊर्ध्वममात्यानांपरीक्षेतगुणागु णम् ॥ संयतात्माकृतप्रज्ञोभूतिकामश्चभूमिपः १८ संबंधिपुरुषैराप्तैरभिजातैःस्वदेशजैः ॥ अहार्यैरव्यभीचारैःसर्वशःसुपरीक्षितैः १९ यौनाःश्रौतास्तथामौला स्तथैवाप्यनहंकृताः ॥ कर्तव्याभूतिकामेनपुरुषेणबुभूषता २० येषांवैनयिकीबुद्धिःप्रकृतिश्चैवशोभना ॥ तेजोधैर्यंक्षमाशौचमनुरागःस्थितिर्धृतिः २१ परीक्ष्य चगुणान्नित्यंप्रौढभावान्धुरंधरान् ॥ पंचोपधाव्यतीतांश्चकुर्याद्राजार्थकारिणः २२ पर्याप्तवचनान्वीरान्प्रतिपत्तिविशारदान् ॥ कुलीनान्सत्वसंपन्नानिंगितज्ञाननिष्ठु रान् २३ देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ॥ नित्यमर्थेषुसर्वेषुराजन्कुर्वीतमंत्रिणः २४ हीनतेजोऽभिसंसृष्टोनैवजातुव्यवस्यति ॥ अवश्यंजनयत्येवसर्वक र्मसुसंशयम् २५ एवमल्पश्रुतोमंत्रीकल्याणाभिजनोऽप्युत ॥ धर्मार्थकामसंयुक्तोनालंमंत्रंपरीक्षितुम् २६ तथैवानभिजातोऽपिकाममस्तुबहुश्रुतः ॥ अनायक इवाचक्षुर्मुह्यत्यणुषुकर्मसु २७ योवाप्यस्थिरसंकल्पोबुद्धिमानागतागमः ॥ उपायज्ञोऽपिनालंसकर्मप्रापयितुंचिरम् २८ केवलात्पुनरादानात्कर्मणोनोपपद्यते ॥ परामर्शोविशेषाणामश्रुतस्येहदुर्मतेः २९ मंत्रिण्यननुरक्तेतुविश्वासोनोपपद्यते ॥ तस्मादननुरक्तायनैवमंत्रंप्रकाशयेत् ३० व्यथयेद्धिसराजानंमंत्रिभिःसहितो ऽनृजुः ॥ मारुतोपहितच्छिद्रैःप्रविश्याग्निरिवद्रुमम् ३१ संक्रुद्धश्चैकदास्वामीस्थानाच्चैवापकर्षति ॥ वाचाक्षिपतिसंरब्धःपुनःपश्चात्प्रसीदति ३२ तानितान्य नुरक्तेनशक्यानिहितितिक्षितुम् ॥ मंत्रिणांचभवेत्क्रोधोविस्फूर्जितमिवाशनेः ३३

२५ तृतीयेनान्वयः उपधाच्छलंतद्व्यतीतान् २२ पर्याप्तंकृत्स्नस्यविवित्सितस्यार्थस्यनिर्वाहकंवचनंयेषांतान् २३ । २४ वर्ज्यानाह हीनेत्यादिना हीनतेजसामित्रेणाभिसंसृष्टःसंबद्धः नतय वस्यतिनकर्तव्याकर्तव्येनिश्चिनोति २५ बहुगुणयुक्तोऽपिकिंचिद्दोषयुक्तस्त्याज्यइत्याह एवमिति २६ अणुषुसूक्ष्मेषु २७ प्रापयितुंसमापयितुम् २८ केवलादिति आरंभशूरोऽपिमूर्खः कर्मणःफलविशेषानूहितुंनशक्नोतीत्यर्थः २९ । ३० । ३१ अनुरक्तलक्षणमाहत्रिभिः संक्रुद्धइति संक्रुद्धःस्वामीकदाचिदाश्वासितमप्यधिकाराच्च्युतंकरोति कदाचित्परुषमुक्त्वाऽप्यनुगृह्णाति तत्सर्वमनुरक्तेनापिमंत्रिणासोढुमशक्यं मंत्रिकोपश्चवज्रपाततुल्योऽतोनित्यंराजहितार्थीयस्तानिसोढुंशक्नुयात्सएवानुरक्तस्तमेवराजापृच्छेदित्यर्थः ३२ । ३३

३४ । ३५ । ३६ । ३७ आगंतुर्नूतनः सोऽप्यविश्वास्यइत्यर्थः ३८ विधर्मतोऽन्यायेन ३९ आक्षारितोधनग्रहणेनारिकःकृतः ४० उपादेयानाह सर्वेति जानपदःस्वदेशजः ४१ परस्यशत्रोः आत्मनश्चप्रकृतीःस्वाम्यमात्यादिकाजानातीतिप्रकृतिज्ञः ४२ गंभीरोमंत्रगोपनसमर्थः ४३ शौटीरःप्रगल्भः द्वेष्यवद्द्वेष्यंपापंयस्यसद्वेष्यपापकः ४४ आधित्सताआधातुमिच्छता ४५ । ४६ पंचानामभावेत्र्यवराख्रिभ्योन्यूनानकार्याः ४७ प्रकृतिषुस्वाम्यमात्यादिषुमंत्रिणांछिद्रमयथोक्तकारित्वाभावेनपरस्यावसरदानम् ४८ रक्षेद्गोपयेत्पिदध्यात् विवरंछिद्रम्

यस्तुसंहरतेतानिभर्तुःप्रियचिकीर्षया ॥ समानसुखदुःखंतंपृच्छेदर्थेषुमानवम् ३४ अनृजुस्त्वनुरक्तोऽपिसंपन्नश्चेतरैर्गुणैः ॥ राज्ञःप्रज्ञानयुक्तोऽपिनमंत्रंश्रोतुमर्हति ३५ योऽमित्रैःसहसंबद्धोनपौरान्बहुमन्यते ॥ असुहृत्तादृशोज्ञेयोनमंत्रंश्रोतुमर्हति ३६ अविद्वानशुचिःस्तब्धःशत्रुसेवीविकत्थनः ॥ असुहृत्क्रोधनोलुब्धोनमंत्रंश्रोतुमर्हति ३७ आगंतुश्चानुरक्तोऽपिकाममस्तुबहुश्रुतः ॥ सत्कृतःसंविभक्तोवानमंत्रंश्रोतुमर्हति ३८ विधर्मतोविप्रकृतःपितायस्याभवत्पुरा ॥ सत्कृतःस्थापितःसोऽपिनमंत्रंश्रोतुमर्हति ३९ यःस्वल्पेनापिकार्येणसुहृदाक्षारितोभवेत् ॥ पुनरन्यैर्गुणैर्युक्तोनमंत्रंश्रोतुमर्हति ४० कृतप्रज्ञश्चमेधावीबुधोजानपदःशुचिः ॥ सर्वकर्मसुयःशुद्धःसमंत्रंश्रोतुमर्हति ४१ ज्ञानविज्ञानसंपन्नःप्रकृतिज्ञःपरात्मनोः ॥ सुहृदात्मसमोराज्ञःसमंत्रंश्रोतुमर्हति ४२ सत्यवाक्शीलसंपन्नोगंभीरःसत्रपोमृदुः ॥ पितृपैतामहोयःस्यात्समंत्रंश्रोतुमर्हति ४३ संतुष्टःसंमतःसत्यःशौटीरोद्वेष्यपापकः ॥ मंत्रवित्कालविच्छूरःसमंत्रंश्रोतुमर्हति ४४ सर्वंलोकमिमंशक्तःसांत्वेनकुरुतेवशे ॥ तस्मैमंत्रःप्रयोक्तव्योदंडमाधित्सतानृप ४५ पौरजानपदायस्मिन्विश्वासंधर्मतोगताः ॥ योद्धानयविपश्चिच्चसमंत्रंश्रोतुमर्हति ४६ तस्मात्सर्वैर्गुणैरेतैरुपपन्नाःसुपूजिताः ॥ मंत्रिणःप्रकृतिज्ञाःस्युस्त्र्यवरामहदीप्सवः ४७ स्वासुप्रकृतिषुच्छिद्रंलक्षयेरन्परस्यच ॥ मंत्रिणांमंत्रमूलंहिराज्ञोराष्ट्रंविवर्धते ४८ नास्यच्छिद्रंपरःपश्येच्छिद्रेषुपरमन्वियात् ॥ गूहेत्कूर्मइवांगानिरक्षेद्विवरमात्मनः ४९ मंत्रगूढाहिराज्यस्यमंत्रिणोयेमनीषिणः ॥ मंत्रसंहननोराजामंत्रांगानीतरेजनाः ५० राज्यंप्रणिधिमूलंहिमंत्रसारंप्रचक्षते ॥ स्वामिनस्त्वनुवर्ततेवृत्त्यर्थमिहमंत्रिणः ५१ संविनीयमदक्रोधौमानमीर्ष्यांचनिर्वृताः ॥ नित्यंपंचोपधातीतैर्मंत्रयेत्सहमंत्रिभिः ५२ तेषांत्रयाणांविविधंविमर्शंविबुद्ध्यचित्तंविनिवेश्यतत्र ॥ स्वनिश्चयंतत्प्रतिनिश्चयज्ञंनिवेदयेदुत्तरमंत्रकाले ५३ धर्मार्थकामज्ञमुपेत्यपृच्छेदुक्तोगुरुंब्राह्मणमुत्तरार्थम् ॥ निष्ठाकृतातेनयदासहःस्यात्तंमंत्रमार्गंप्रणयेदसक्तः ५४

४९ मंत्रोगूढोयेषांते मंत्रसंहननोमंत्रकवचः इतरेशूरजनादयः५० स्वामिनोमंत्रिणश्चमदादिरहिताःसंतोयद्यन्योन्यमनुवर्ततेतर्हिनिर्वृताःसुखिनोभवंतीत्यर्थः ५१ नित्यमित्यर्थः उपधाश्छलानि तानिपंच तेषुकेवलंवाचिकीद्रोणवधेहतोऽश्वत्थामाकुंजरइत्युक्तिर्युधिष्ठिरस्यमनसिच्छलाभावात् । भीमस्यतुतत्रैवकायिकीवाचिकीच । केवलंमानसिकीपांडवेषुधृतराष्ट्रस्यवाचिक्याअभावात् । तत्रैवधार्तराष्ट्राणांकायवाङ्मनोभावाजतुगृहे । सौप्तिकेऽश्वत्थाम्नःकायिकीतिपंचविधाउपधा तामतीतैः ५१ तेषामितित्रयाणांत्रीणिमतानिस्वनिश्चयंचावधार्यनिश्चयज्ञंगुरुंप्रतितन्मतचतुष्टयंनिवेदयेदितिद्वयोःसंबंधः ५३ तेनगुरुणाऽपिचतुर्भिःसहऊहापोहपूर्वकंयदानिष्ठासिद्धांतःकृतोभवेत्सोऽपियदासहःस्यात्सर्वेषामेकमत्येनस्यात्तदातंमंत्रंप्रणयेत्कार्येनियोजयेत् ५४

५५ अत्रमंत्रस्थाने ५६ वाग्दोषउच्चैर्भाषणादिः अंगदोषोनेत्रवक्त्रविकारादिः तेनान्यंनाधिक्षिपेदित्यर्थः ५७ ॥ इतिशांतिपर्वणिराजध०पर्वणिनीलकंठीये भा० त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ अत्रमंत्रमूलभूतेप्रजासंग्रहणेविषये १ एकपदंयत्रसर्वेगुणाअंतर्भवंतितदेवकर्तव्यंवस्तु प्रमाणंसंमतं २ सांत्वंनिष्कपटंप्रियवचनं ३ । ४ नाभाषतेतूष्णीमास्ते नाचरन्ननाचरन् ५ योराजापूर्वंस्वदुः

एवंसदामंत्रयितव्यमाहुर्येमंत्रतत्त्वार्थविनिश्चयज्ञाः ॥ तस्मात्तमेवंप्रणयेत्सदैवमंत्रंप्रजासंग्रहणेसमर्थम् ५५ नवामनाःकुब्जकृशानखंजानांधोजडःस्त्रीचनपुंसकंच ॥ नचात्रतिर्यङ्नपुरोनपश्चान्नोर्ध्वंनचाधःप्रचरेत्कथंचित् ५६ आरुह्यवावेश्मतथैवशून्यंस्थलंप्रकाशंकुशकाशहीनम् ॥ वागंगदोषान्परिहृत्यसर्वान्संमंत्रयेत्कार्यमहीनकालम् ५७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिसम्यादिलक्षणकथनेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ बृहस्पतेश्चसंवादंशक्रस्यचयुधिष्ठिर १ ॥ शक्रउवाच ॥ किंस्विदेकपदंब्रह्मन्पुरुषःसम्यगाचरन् ॥ प्रमाणंसर्वभूतानांयशश्चैवाप्नुयान्महत् २ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ सांत्वमेकपदंशक्रपुरुषःसम्यगाचरन् ॥ प्रमाणंसर्वभूतानांयशश्चैवाप्नुयान्महत् ३ एतदेकपदंशक्रसर्वलोकसुखावहम् ॥ आचरन्सर्वभूतेषुप्रियोभवतिसर्वदा ४ योहिनाभाषतेकिंचित्सर्वदाभ्रुकुटीमुखः ॥ द्वेष्योभवतिभूतानांससांत्वमिहनाचरन् ५ यस्तुसर्वमभिप्रेक्ष्यपूर्वमेवाभिभाषते ॥ स्मितपूर्वाभिभाषीचतस्यलोकःप्रसीदति ६ दानमेवहिसर्वत्रसांत्वेनानभिजल्पितम् ॥ नप्रीणयतिभूतानिनिर्व्यंजनमिवाशनम् ७ आदानादपिभूतानांमधुरामीरयन्गिरम् ॥ सर्वलोकमिमंशक्रसांत्वेनकुरुतेवशे ८ तस्मात्सांत्वंप्रयोक्तव्यंदंडमाधित्सताऽपिहि ॥ फलंचजनयत्येवंनचास्योद्विजतेजनः ९ सुकृतस्यहिसांत्वस्यश्लक्ष्णस्यमधुरस्यच ॥ सम्यगासेव्यमानस्यतुल्यंजातुनविद्यते १० ॥ ॥ भीष्मउवाच ॥ ॥ इत्युक्तःकृतवान्सर्वंयथाशक्रःपुरोधसा ॥ तथात्वमपिकौंतेयसम्यगेतत्समाचर ११ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिइंद्रबृहस्पतिसंवादेचतुरशीतितमोऽध्यायः ॥ ८४ ॥ युधिष्ठिरउवाच ॥ कथंस्विदिहराजेंद्रपालयन्पार्थिवःप्रजाः ॥ प्रीतिंधर्मविशेषेणकीर्तिमाप्नोतिशाश्वतीम् १ ॥ ॥ भीष्मउवाच ॥ ॥ व्यवहारेणशुद्धेनप्रजापालनतत्परः ॥ प्राप्यधर्मंचकीर्तिंचलोकावाप्नोत्युभौशुचिः २ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ कीदृशैर्व्यवहारैस्तुकैश्चव्यवहरेन्नृपः ॥ एतत्पृष्टोमहाप्राज्ञयथावद्वक्तुमर्हसि ३ येचैवपूर्वंकथितागुणास्तेपुरुषंप्रति ॥ नैकस्मिन्पुरुषेह्येतेविद्यंतइतिमेमतिः ४ ॥ ॥ भीष्मउवाच ॥ ॥ एवमेतन्महाप्राज्ञयथावदसिबुद्धिमन् ॥ दुर्लभःपुरुषःकश्चिदेभिर्युक्तोगुणैःशुभैः ५ किंतुसंक्षेपतःशीलंप्रयत्नेनेहदुर्लभम् ॥ वक्ष्यामितुयथाऽमात्यान्यादृशांश्चकरिष्यसि ६

खनिवेदनात्प्रागेवकिमर्थमागतोऽसीत्यादिभाषते ६ दानमेवदानमपिसांत्वहीनंनप्रीणयतीत्यर्थः ७ सर्वस्वंगृहीत्वाऽपिसांत्वंप्रयुंजतोवशेलोकोभवतीत्याह आदानादपीति ८ । ९ । १० । ११ ॥ इतिशां०रा०नी०भा०चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ कथमिति प्रीतिंस्वर्गं १ व्यवहारेणैकस्मिन्गृहक्षेत्रादौविषयेममेदंममेदमितिद्वयोर्विवदतोर्मध्येऽयंसत्योऽयमनृतइतिविवेकोव्यवहारः तेनशुद्धेनपक्षपातहीनेन २ कीदृशैःकिंस्वरूपैः कैर्व्यवहारनिर्णायकैः व्यवहरेन्निर्णयंकुर्यात् ३ । ४ । ५ । ६

७ पूर्वकेनिरये ८ अष्टाभिर्गुणैःशुश्रूषाश्रवणंग्रहणंधारणमूहनमपोहनंविज्ञानंतत्त्वज्ञानंचेतितैः पंचाशद्वर्षवयसमित्येकैकस्यविशेषणं ९ । १० सप्तभिर्मृगयाक्षाःस्त्रियःपानमितिचतुर्भिःकामजैर्द्ण्डपातनंवाक्पारुष्यमर्थदूषणमितित्रिभिःक्रोधजैरितिसप्तभिः अष्टानांब्राह्मणचतुष्टयंशूद्रत्रयंसूतश्चेतितेषां ११ तेऽत्रयाद्रष्टव्याः १२ गूढंन्यासापहारादिकंतेत्वयानग्राह्यं । अन्योन्यंविवदमानौद्रव्येपरस्परसंबंधंदूषयतस्तयाचोभयोरसंबंधाद्राजकीयमिदमितिबुद्धिनकारयेदित्यर्थःसार्धः १३ परिस्रवेन्मंदंमंदमन्यत्रगच्छेत् १४। १५ अधर्मतइतिच्छेदः धर्ममूलेराज्ये १६ । १७ । १८ ततःसाक्षीति यदोऽपरीक्षायांसामात्यस्यराज्ञोऽधंागतिस्ततोहेतोस्त्वद्व्यवहारजातंपरीक्ष्यं तथाहि अर्थिनाममायंशतंसुवर्णान्धारयतीतिपक्षेउपन्यस्तेयदिप्रत्यर्थीधारयामीतिवदेत्तदानसाक्ष्या

चतुरोब्राह्मणान्वैद्यान्प्रगल्भान्स्नातकान्शुचीन् ॥ क्षत्रियांश्चतथाचाष्टौबलिनःशस्त्रपाणिनः ७ वैश्यान्वित्तेनसंपन्नानेकविंशतिसंख्यया ॥ त्रींश्चशूद्रान्विनीतांश्चशुचीन्कर्मणिपूर्वके ८ अष्टाभिश्चगुणैर्युक्तंसूतंपौराणिकंतथा ॥ पंचाशद्वर्षवयसंप्रगल्भमनसूयकम् ९ श्रुतिस्मृतिसमायुक्तंविनीतंसमदर्शिनम् ॥ कार्येविवदमानानांशक्तमर्थेष्वलोलुपम् १० वर्जितंचैवव्यसनैःसुघोरैःसप्तभिर्भृशम् ॥ अष्टानांमंत्रिणांमध्येमंत्रंराजोपधारयेत् ११ ततःसंप्रेषयेद्राष्ट्रेराष्ट्रीयायचदर्शयेत् ॥ अनेनव्यवहारेणद्रष्टव्यास्तेप्रजाःसदा १२ नचापिगूढंद्रव्यंतेग्राह्यंकार्योपघातकम् ॥ कार्येखलुविपन्नेत्वांसोऽधर्मस्तांश्चपीडयेत् १३ विद्रवेच्चैवराष्ट्रंतेश्येनात्पक्षिगणाइव ॥ परिस्रवेच्चसततंनौर्विशीर्णेवसागरे १४ प्रजाःपालयतोऽसम्यगधर्मेणेहभूपतेः ॥ हार्दंभयंसंभवतिस्वर्गश्चास्यविरुद्ध्यते १५ अथयोधर्मतःपातिराजाऽमात्योऽथवाऽऽत्मजः ॥ धर्मासनेसन्नियुक्तोधर्ममूलेनरर्षभ १६ कार्येष्वधिकृताःसम्यगकुर्वंतोनृपानुगाः ॥ आत्मानंपुरतःकृत्वायांत्यधःसहपार्थिवाः १७ बलात्कृतानांबलिभिःकृपणंबहुजल्पताम् ॥ नाथोवैभूमिपोनित्यमनाथानांनृणांभवेत् १८ ततःसाक्षिबलंसाधु द्वैधवादकृतंभवेत् ॥ असाक्षिकमनाथंवापरीक्ष्यंतद्विशेषतः १९ अपराधानुरूपंचदंडंपापेषुधारयेत् ॥ वियोजयेद्धनैर्ऋद्धानधनानथबंधनैः २० विनयेच्चापिदुर्वृत्तान्प्रहारैरपिपार्थिवः ॥ सांत्वेनोपप्रदानेनशिष्टांश्चपरिपालयेत् २१ राज्ञोवधंचिकीर्षेद्यस्तस्यचित्रोवधोभवेत् ॥ आदीपकस्यस्तेनस्यवर्णसंकरिकस्यच २२ सम्यक्प्रणयतोदंडंभूमिपस्यविशांपते ॥ युक्तस्यवानास्त्यधर्मोऽधर्मएवहिशाश्वतः २३ कामकारेणदंडंतुयःकुर्यादविचक्षणः ॥ सइहाकीर्तिसंयुक्तोमृतोनरकमृच्छति २४

दिप्रयोजनमस्ति यदित्वसौनधारयामीतिवदतितदाद्वैधवादकृतमन्योन्यंविरुद्धोयउभयोर्वादस्तत्रकृतंसाक्षिबलंसाधुभवेत् निर्णायकमितिशेषः तत्रार्थिनाप्रत्यर्थिनिस्वार्थसाधनायसाक्षिपत्रंशपथोवाआस्थेयः । क्षेत्रादिविषयेविवादश्चेद्भोगोऽपिप्रदर्शनीयः । यदातुप्रत्यर्थीवदतिसत्यमस्यमयागृहीतंपरंतुप्रत्यर्पितमितिवा । अस्मिन्नर्थेपूर्वमेवायंमयापराजितोऽस्तिपुनर्निर्लज्जत्वादुपागतइतिवावदति तदाप्रत्यर्पणकालीना अर्थिपराजयकालीना वासाक्ष्यादयःप्रदर्शनीयाः । यत्रार्थिनःप्रत्यर्थिनोवासाक्ष्यादिकंनास्तिशपथंवापरोनानुमन्यतेतदातद्विवादास्पदंद्रव्यमसाक्षिकत्वादनाथंनिःस्वामिकंभवतिअर्थीचतन्नमुंचति तदाविशेषवस्तत्परशुग्रहणादिनातत्परीक्ष्यमिति १९ परीक्षोत्तरमपिकिंकार्यमतआह अपराधेति २० । २१ चित्रोऽनेकधा आदीपकस्यगृहादिदाहकस्य चित्रइतिसर्वत्रानुकृष्यते २२ युक्तस्ययथाशास्त्रमवहितस्य चित्रवधंकुर्वतोऽपिराज्ञोदोषोनास्तिप्रत्युतधर्मएवास्तीत्यर्थः २३ । २४

॥७३॥

नेति पितुरपराधेपुत्रोनदंड्योऽपित्वागमानुगमःकार्यः स्वस्वपितरंपत्रादिद्वाराआनीयोपस्थापयेतितदुपरिपित्रागमनस्यपर्यनुयोगःकार्यः तावत्पर्यंतंपुत्रंबध्नीयात् यदितुसबद्धेऽपिपुत्रेनायातितदापुत्रमपिमोक्षयेदपितुःराष्ट्रान्निर्वासनरूपस्यदंडस्यतेनस्वतएवसंपादितत्वादितिभावः २५ । २६ । २७ । २८ प्रतीहारोद्वारपालः शिरोरक्षःशिरांसीवशिरांसिदुर्गनगरादीनिप्रधानस्थानानित

नपरस्यप्रवादेनपरेषांदंडमर्पयेत् ॥ आगमानुगमंकृत्वाबध्नीयान्मोक्षयीतवा २५ नतुहन्यान्नृपोजातुदूतंकस्यांचिदापदि ॥ दूतस्यहंतानिरयमाविशेत्सचिवैःसह २६ यथोक्तवादिनंदूतंक्षत्रधर्मरतोनृपः ॥ योहन्यात्पितरस्तस्यभ्रूणहत्यामवाप्नुयुः २७ कुलीनःकुलसंपन्नोवाग्मीदक्षःप्रियंवदः ॥ यथोक्तवादीस्मृतिमान्दूतःस्यात्सप्तभिर्गुणैः २८ एतैरेवगुणैर्युक्तःप्रतीहारोऽस्यरक्षिता ॥ शिरोरक्षश्चभवतिगुणैरेतैःसमन्वितः २९ धर्मशास्त्रार्थतत्त्वज्ञःसंधिविग्रहिकोभवेत् ॥ मतिमान्धृतिमान्ह्रीमान्रहस्यविनिगूहिता ३० कुलीनःसत्वसंपन्नःशुक्लोऽमात्यःप्रशस्यते ॥ एतैरेवगुणैर्युक्तस्तथासेनापतिर्भवेत् ३१ व्यूहयंत्रायुधानांचतत्त्वज्ञोविक्रमान्वितः ॥ वर्षशीतोष्णवातानांसहिष्णुःपररंध्रवित् ३२ विश्वासयेत्परांश्चैवविश्वसेच्चनकस्यचित् ॥ पुत्रेष्वपिहिराजेंद्रविश्वासोनप्रशस्यते ३३ एतच्छास्त्रार्थतत्त्वंतुमयाऽऽख्यातंतवाऽनघ ॥ अविश्वासोनरेंद्राणांगुह्यंपरममुच्यते ३४ इतिश्रीमहाभारतेशांतिपर्वणिराजध० अमात्यविभागेपंचाशीतितमोऽध्यायः ८५ ॥ ॥ युधिष्ठिरउवाच ॥ कथंविधंपुरंराजास्वयमावस्तुमर्हति ॥ कृतंवाकारयित्वावातन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ वस्तव्यंयत्रकौंतेयसपुत्रज्ञातिबंधुना ॥ न्याय्यंतत्रपरिप्रष्टुंवृत्तिंगुप्तिंचभारत २ तस्मात्तेवर्तयिष्यामिदुर्गकर्मविशेषतः ॥ श्रुत्वातथाविधातव्यमनुष्ठेयंचयत्नतः ३ षड्विधंदुर्गमास्थायपुराण्यथनिवेशयेत् ॥ सर्वसंपत्प्रधानंयद्बाहुल्यंचापिसंभवेत् ४ धन्वदुर्गंमहीदुर्गंगिरिदुर्गंतथैवच ॥ मनुष्यदुर्गंमृद्दुर्गंवनदुर्गंचतानिषट् ५ यत्पुरंदुर्गसंपन्नंधान्यायुधसमन्वितम् ॥ दृढप्राकारपरिखंहस्त्यश्वरथसंकुलम् ६ विद्वांसःशिल्पिनोयत्रनिचयाश्चसुसंचिताः ॥ धार्मिकश्चजनोयत्रदाक्ष्यमुत्तममास्थितः ७ ऊर्जस्विनरनागाश्वंचत्वरापणशोभितम् ॥ प्रसिद्धव्यवहारंचप्रशांतमकुतोभयम् ८ सुप्रभंसानुनादंचसुप्रशस्तनिवेशनम् ॥ शूराढ्यजनसंपन्नंब्रह्मघोषानुनादितम् ९ समाजोत्सवसंपन्नंसदापूजितदैवतम् ॥ वश्याऽमात्यबलोराजातत्पुरंस्वयमाविशेत् १० तत्रकोशंबलंमित्रंव्यवहारंचवर्धयेत् ॥ पुरेजनपदेचैवसर्वदोषान्निवर्तयेत् ११ भांडागारायुधागारंप्रयत्नेनाभिवर्धयेत् ॥ निचयान्वर्धयेत्सर्वांस्तथायंत्रायुधालयान् १२ काष्ठलोहतुषांगारदारुशृंगास्थिवैणवान् ॥ मज्जास्नेहवसाक्षौद्रमौषधग्राममेवच १३

ब्रह्मणकर्ता २९ । ३० एवंधर्मेत्यादिभिरमात्यगुणैः ३१ सेनापतेर्विशेषगुणानाह व्यूहेति व्यूहःसेनायानिवेशनप्रकारविशेषः । यंत्राणिधनुरादीनि । आयुधानिखड्गादीनि ३२ । ३३ । ३४ ॥ इतिशांतिपर्वणिराजध० नीलकंठीयेभारतभावदीपे पंचाशीतितमोऽध्यायः ॥ ८५ ॥ ॥ कथंविधमिति १ । २ । ३ अथ दुर्गाणामाश्रयेणपुराणिमहानगराणिनिवेशयेत् ४ धन्वानिर्जलदेशस्तद्वेष्टितश्चदुर्गंधन्वदुर्गं महीदुर्गंकोटः ५ दुर्गेणमहीदुर्गेणसंपन्नं अतएवदृढप्राकारपरिखं ६ । ७ । ८ सानुनादंगीतवादित्रध्वनिमत् ९ । १० । ११ निचयान्धान्यादिसंग्रहान् १२ । १३

दंध्वनान्ध्वनिमतोनिःसाणादीन् बंधनानितिपाठांतरेस्पष्टोऽर्थः १४ आशयानिपानानि उदपानाःकूपाः निरोद्धव्यारक्षणीयाः १५ । १६ प्रज्ञाग्रंथार्थग्रहणसामर्थ्यं मेधाऊहापोहकौशलम् १७
१८ । १९ अनुतिष्ठेदालोचयेत् २० । २१ विघातव्यंप्रतिकर्तव्यम् २२ । २३ । २४ । २५ तापसैतपस्विजने २६ । २७ । २८ निधीन्धनर्माद्दानि अभीक्ष्णंनसेवेत दस्यूनांवस्तूचने



शणंसर्जरसंधान्यमायुधानिशरांस्तथा ॥ चर्मस्नायुंतथावेत्रंमुंजबल्वजदंध्वनान् १४ आशयाश्चोदपानाश्चप्रभूतसलिलाकराः ॥ निरोद्धव्याःसदाराज्ञाक्षीरि
णश्चमहीरुहाः १५ सत्कृताश्चप्रयत्नेनआचार्यर्त्विक्पुरोहिताः ॥ महेष्वासाःस्थपतयःसांवत्सरचिकित्सकाः १६ प्राज्ञामेधाविनोदांतादक्षाःशूराबहुश्रुताः ॥
कुलीनाःसत्वसंपन्नायुक्ताःसर्वेषुकर्मसु १७ पूजयेद्धार्मिकान्राजानिगृह्णीयादधार्मिकान् ॥ नियुंज्याच्चप्रयत्नेनसर्ववर्णान्स्वकर्मसु १८ बाह्यमाभ्यंतरंचैवपौरजा ॥८७॥
नपदंतथा ॥ चारैःसुविदितंकृत्वाततःकर्मप्रयोजयेत् १९ चरान्मंत्रंचकोशंचदंडंचैवविशेषतः ॥ अनुतिष्ठेत्स्वयंराजासर्वंह्यत्रप्रतिष्ठितम् २० उदासीनारि
मित्राणांसर्वमेवचिकीर्षितम् ॥ पुरेजनपदेचैवज्ञातव्यंचारचक्षुषा २१ ततस्तेषांविधातव्यंसर्वमेवाप्रमादतः॥भक्तान्पूजयतानित्यंद्विषतश्चनिगृह्णता २२ य
ष्टव्यंक्रतुभिर्नित्यंदातव्यंचाप्यपीडया ॥ प्रजानांरक्षणंकार्यंनकार्यंधर्मबाधकम् २३ कृपणानाथवृद्धानांविधवानांचयोषिताम् ॥ योगक्षेमंचवृत्तिंचनित्यमेवप्र
कल्पयेत् २४ आश्रमेषुयथाकालंचैलभाजनभोजनम् ॥ सदैवोपहरेद्राजासत्कृत्याभ्यर्च्यमान्यच २५ आत्मानंसर्वकार्याणितापसेराष्ट्रमेवच ॥ निवेदयेत्प्रयत्ने
नतिष्ठेत्प्रह्वश्चसर्वदा २६ सर्वार्थत्यागिनंराजाकुलेजातंबहुश्रुतम् ॥ पूजयेत्तादृशंदृष्ट्वाशयनासनभोजनैः २७ तस्मिन्कुर्वीतविश्वासंराजाकस्यांचिदापदि ॥
तापसेषुहिविश्वासमपिकुर्वंतिदस्यवः २८ तस्मिन्निधीनादधीतप्रज्ञांपर्याददीतच ॥ नचाप्यभीक्ष्णंसेवेतभृशंवाप्रतिपूजयेत् २९ अन्यःकार्यःस्वराष्ट्रेषुपरराष्ट्रेषु
चापरः॥ अटवीषुपरःकार्यःसामंतनगरेष्वपि ३० तेषुसत्कारमानाभ्यांसंविभागांश्चकारयेत् ॥ परराष्ट्राटवीस्थेषुयथास्वविषयेतथा ३१ तेकस्यांचिदवस्थायांश
रणंशरणार्थिने ॥ राज्ञेदद्युर्यथाकामंतापसाःसंशितव्रताः ३२ एषतेलक्षणोद्देशःसंक्षेपेणप्रकीर्तितः॥ यादृशेनगरेराजास्वयमावस्तुमर्हति ३३ ॥ इतिश्रीमहाभा
रतेशांतिपर्वणिराजधर्मानुशासनपर्वणिदुर्गपरीक्षायांषडशीतितमोऽध्यायः ८६ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ राष्ट्रगुप्तिंचमेराजन्राष्ट्रस्यै
वतुसंग्रहम् ॥ सम्यग्जिज्ञासमानायप्रब्रूहिभरतर्षभ १ ॥ भीष्मउवाच ॥ राष्ट्रगुप्तिंचतेसम्यग्राष्ट्रस्यैवतुसंग्रहम् ॥ हंतसर्वंप्रवक्ष्यामितत्त्वमेकमनाःशृणु २
ग्रामस्याधिपतिःकार्योदशग्राम्यास्तथापरः ॥ द्विगुणायाःशतस्यैवंसहस्रस्यचकारयेत् ३

तपस्विनाशापत्तेः नप्रतिपूजेयच्च २९ अन्यस्तापसःकार्यःसखित्वेनसंपादनीयः ३० तेषुतत्तरस्थानस्थेषुतापसेषु ३१ । ३२ । ३३ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभा ॥७४॥
रतभावदीपेषडशीतितमोऽध्यायः ॥ ८६ ॥ ॥ ७ ॥ ॥ राष्ट्रस्यगुप्तिःपरिपालनंकथंकर्तव्यमितिपृच्छति नगरगुप्तिश्रवणानंतरंतस्याउद्धिस्थायाउपस्थानात् राष्ट्रेति १ । २
दशानांग्रामाणांसमाहारोदशग्रामीतस्यादशग्राम्याः द्विगुणायाविंशतिग्राम्याः शतस्यसहस्रस्यचाधिपतिंकारयेत् ३

४ । ५ । ६ । ७ तत्रराष्ट्रेशताधिपतिभोग्यंग्राममनेकपायत्तंभवति क्षीबस्वमार्पं सार्धः अन्यथातस्यवदायत्तत्वेघनलोभात्सकृत्स्नंग्रामंपीडयेदितिभावः सहस्रपतिःशाखानगरंतत्रस्थधान्यहैर
ण्यसंबंधीयोभोगोधनंतेनस्वस्यचेतनेनभोक्तुंपालयितुमर्हः तत्रक्षत्रियाणामभावाद्वैश्येभ्योयःकरआयातिवदेवतस्यवेतनमित्यर्थः ८ । ९ । १० । ११ । १२ । १३ कारयेदापयेत् १४ । १५

ग्रामेयान्ग्रामदोषांश्चग्रामिकःप्रतिभावयेत् ॥ तान्ब्रूयादशपायाऽसौसतुविंशतिपायवै ४ सोऽपिविंशत्यधिपतिर्वृत्तंजानपदेजने ॥ ग्रामाणांशतपालायसर्वमेव
निवेदयेत् ५ यानिग्राम्याणिभोज्यानिग्रामिकस्तान्युपाश्नियात् ॥ दशपस्तेनभर्तव्यस्तेनापिद्विगुणाधिपः ६ ग्रामंग्रामशताध्यक्षोभोक्तुमर्हतिसत्कृतः ॥ म
हांतंभरतश्रेष्ठसुस्फीतंजनसंकुलम् ७ तत्रह्यनेकपायत्तंराज्ञोभवतिभारत ॥ शाखानगरमर्हस्तुसहस्रपतिरुत्तमः ८ धान्यहैरण्यभोगेनभोक्तुंराष्ट्रीयसंगतः ॥
तेषांसंग्रामकृत्यंस्याद्ग्रामकृत्यंचतेषुयत् ९ धर्मज्ञःसचिवःकश्चित्तत्प्रपश्येदतंद्रितः ॥ नगरेनगरेवास्यादेकःसर्वार्थचिंतकः १० उच्चैःस्थानेघोररूपोनक्षत्रा
णामिवग्रहः ॥ भवेत्सतान्परिक्रामेत्सर्वानेवसभासदः ११ तेषांवृत्तिंपरिणयेत्कश्चिद्राष्ट्रेषुतच्चरः ॥ जिघांसवःपापकामाःपरस्वादायिनःशठाः १२ रक्षाऽभ्यधिक
तानामतेभ्योरक्षेदिमाःप्रजाः ॥ विक्रयंक्रयमध्वानंभक्तंचसपरिच्छदम् १३ योगक्षेमंचसंप्रेक्ष्यवणिजांकारयेत्करान् ॥ उत्पत्तिंदानवृत्तिंचशिल्पंसंप्रेक्ष्यचास
कृत् १४ शिल्पंप्रतिकरानेवंशिल्पिनःप्रतिकारयेत् ॥ उच्चावचकरादाप्यामहाराज्ञायुधिष्ठिर १५ यथायथानसीदेरंस्तथाकुर्यान्महीपतिः ॥ फलंकर्मचसंप्रे
क्ष्यततःसर्वंप्रकल्पयेत् १६ फलंकर्मचनिर्हेतुनकश्चित्संप्रवर्तते ॥ यथाराजाचकर्ताचस्यातांकर्मणिभागिनौ १७ संवेक्ष्यतुतथाराज्ञाप्रणेयाःसततंकराः ॥ नो
च्छिद्यादात्मनोमूलंपरेषांचापितृष्णया १८ ईहाद्वाराणिसंरुध्यराजासंप्रीतदर्शनः ॥ प्रद्विषंतिपरिख्यातंराजानमतिखादिनम् १९ प्रद्विष्टस्यकुतःश्रेयोना
प्रियोलभतेफलम् ॥ वत्सौपम्येनदोग्धव्यंराष्ट्रमक्षीणबुद्धिना २० भृतोवत्सोजातबलःपीडांसहतिभारत ॥ नकर्मकुरुतेवत्सोभृशंदुग्धोयुधिष्ठिर २१ राष्ट्रम
प्यतिदुग्धंहिनकर्मकुरुतेमहत् ॥ योराष्ट्रमनुगृह्णातिपरिरक्षन्स्वयंनृपः २२ संजातमुपजीवन्सलभतेसुमहत्फलम् ॥ आपदर्थंचनिर्यातंधनंत्विहविवर्धयेत् २३
राष्ट्रंचकोशभूतंस्यात्कोशोवेश्मगतस्तथा ॥ पौरजानपदान्सर्वान्संश्रितोपाश्रितांस्तथा ॥ यथाशक्त्यनुकंपेतसर्वान्स्वल्पधनानपि २४ बाह्यंजनंभेदयित्वा
भोक्तव्योमध्यमःसुखम् ॥ एवंनास्यप्रकुप्यंतिजनाःसुखितदुःखिताः २५ प्रागेवतुधनादानमनुभाष्यततःपुनः ॥ सन्निपत्यस्वविषयेभयंराष्ट्रेप्रदर्शयेत् २६
इयमापत्समुत्पन्नापरचक्रभयंमहत् ॥ अपिचांतायकल्पंतेवेणोरिवफलागमाः २७

२४ फलंधान्यधनवृद्ध्यादिवृद्ध्यनुरूपःकरःकल्प्यइत्यर्थः १६ । १७ आत्मनोमूलंराष्ट्रं परेषांमूलंकृष्यादि १८ ईहालोभः अतिखादिनंबहुभक्षम् १९ । २० । २१ । २२ निर्यातंदत्तं इहराष्ट्रे
२३ संश्रिताः साक्षादाश्रिताः उपाश्रिताव्यवहिताः २४ बाह्यमिति आटविकोदस्युसंघोबाह्यजनस्तं यूयमुपतिष्ठध्वमितिभेदयित्वामध्यमोग्रामीणजनोभोक्तव्यस्ततोबहुलंधनमादद्या
दित्यर्थः २५ तत्रप्रकारमाह प्रागिति चोरनिग्रहार्थंकटकबंधःकर्तव्यस्तदर्थंधनमपेक्षितमितिपूर्वमेवाभाष्यसूचनांकृत्वाततःसन्निपत्यतेषुतेषुग्रामेषुगत्वाऽभयंदर्शयेत् २६ । २७

आत्मवधायेतिप्रजाक्षुब्धस्वसामर्थ्यंयोत्यते २८ । २९ । ३० । ३१ । ३२ पुंगवैर्बलीवर्दैः नचप्रियमित्यादिसार्धः एवंबालेऽपेनवुशिक्षितान्मुक्तांश्चस्वरश्मीन्स्वरस्यरश्मिभूतान्पदातीनधिकारिणः प्रजासूपनमुद्गृहीताम्भ्यवसृजेत्प्रेरयेत्तयोगंधनग्रहणोपायमाधायप्रजाङ्गप्रयोगंधनंगृह्णीयादितिशेषः ३३ । ३४ गोमिनस्वैश्यान्भाषायां 'चारणा' इतिप्रसिद्धान् प्राकारादीन्कर्तव्यान्प्रेक्ष्यसंदर्शयित्वाइदंकार्यमुपस्थितमत्यावश्यकमित्युक्त्वाकरंकारयेत् ३५ । ३६ । ३७ । ३८ । ३९ । ४० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेसप्ताशीतितमोऽध्यायः ॥८७॥



अरयोमेसमुत्थायवहुभिर्दस्युभिःसह ॥ इदमात्मवधायैवराष्ट्रमिच्छंतिबाधितुम् २८ अस्यामापदिघोरायांसंप्राप्तेदारुणेभये ॥ परित्राणायभवतःप्रार्थयिष्येधनानिवः २९ प्रतिदास्येचभवतांसर्वंचाहंभयक्षये ॥ नारयःप्रतिदास्यंतियद्धरेयुर्बलादितः ३० कलत्रमादितःकृत्वासर्वंवोविनशेदिति ॥ अपिचेत्पुत्रदारार्थमर्थसंचयइष्यते ३१ नंदामिवःप्रभावेणपुत्राणामिवचोदये ॥ यथाशक्त्युपगृह्णामिराष्ट्रस्यापीडयाचवः ३२ आपत्स्वेवचवोढव्यंभवद्भिःपुंगवैरिव ॥ नचप्रियतरंकार्यंधनंकस्यांचिदापदि ३३ इतिवाचामधुरयाश्लक्ष्णयासोपचारया ॥ स्वरश्मीनभ्यवसृजेद्योगमाधायकालवित् ३४ प्राकारंभृत्यभरणंव्ययंसंग्रामतोभयम् ॥ योगक्षेमंचसंप्रेक्ष्यगोमिनःकारयेत्करम् ३५ उपेक्षिताहिनश्येयुर्गोमिनोऽरण्यवासिनः ॥ तस्मात्तेषुविशेषेणमृदुपूर्वंसमाचरेत् ३६ सांत्वनंरक्षणंदानमवस्थाचाप्यभीक्ष्णशः ॥ गोमिनांपार्थकर्तव्यःसंविभागःप्रियाणिच ३७ अजस्रमुपयोक्तव्यंफलंगोमिषुभारत ॥ प्रभावयंतिराष्ट्रंचव्यवहारंकृषिंतथा ३८ तस्माद्गोमिषुयत्नेनप्रीतिंकुर्याद्विचक्षणः ॥ दयावानप्रमत्तश्चकरान्संप्रणयन्मृदून् ३९ सर्वत्रक्षेमचरणंसुलभंनामगोमिषु ॥ नह्यतःसदृशंकिंचिद्धनमस्तियुधिष्ठिर ४० ॥ इतिश्रीम०शांतिप०राजध०राष्ट्रगुप्त्यादिकथनेसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ युधिष्ठिरउवाच ॥ यदाराजासमर्थोऽपिकोशार्थीस्यान्महामते ॥ कथंप्रवर्ततेतदातन्मेब्रूहिपितामह १ ॥ ॥ भीष्मउवाच ॥ ॥ यथादेशंयथाकालंयथाबुद्धियथाबलम् ॥ अनुशिष्यात्प्रजाराजाधर्मार्थीतद्धितेरतः २ यथातासांचमन्येतश्रेयआत्मनएवच ॥ तथाकर्माणिसर्वाणिराजाराष्ट्रेषुवर्तयेत् ३ मधुदोहंदुहेद्राष्ट्रंभ्रमराइवपादपम् ॥ वत्सापेक्षीदुहेच्चैवस्तनांश्चनविकुट्टयेत् ४ जलौकावत्पिबेद्राष्ट्रंमृदुनैवनराधिपः ॥ व्याघ्रीवचहरेत्पुत्रान्संदशेन्नचपीडयेत् ५ यथाशल्यकवानाखुःपदंधूनयतेसदा ॥ अतीक्ष्णेनाभ्युपायेनतथाराष्ट्रंसमापिबेत् ६ अल्पेनाल्पेनदेयेनवर्धमानंप्रदापयेत् ॥ ततोभूयस्ततोभूयःक्रमवृद्धिंसमाचरेत् ७ दमयन्निवदम्यानिशश्वद्भारंविवर्धयेत् ॥ मृदुपूर्वंप्रयत्नेनपाशानभ्यवहारयेत् ८



यदेति १ । २ । ३ । ४ । ५ शल्यकवांस्तीक्ष्णतुंडआखुविशेषः सहिनिद्रितस्यमनुष्यस्यपादतलस्थंमांसमतीक्ष्णेनैवोपायेनभक्षयति शयानस्तुईषद्वेदनयापदंकिंचिद्धूनयतेकंपयतेनतुतीव्रवेदनयाप्रबुद्धयन्नाखुंनिवारयति तद्वद्राष्ट्रंसमापिबेत् ६ प्रत्यब्दंशवत्वमेनाधिकेनवांशेनवर्धमानंकरंप्रदापयन्ग्रामद्रव्यस्यवृद्धिंकुर्यादित्याह अल्पेनेति ७ दम्यानिवत्सतरतुल्यानिपयाक्रमेणदमयेत्तद्वत्प्रजाअपीत्याह दमयन्निवेति अभ्यवहारयेद्ग्राहयेत् ८

सकृत्सद्यःपाशावकीर्णाःसंतोनभविष्यंतिमरिष्यंति यतोदुर्दमा अतउचितेनक्रमेणतेभोक्तव्यादम्याःप्रजाश्च ९ पुरुषंप्रतीत्यस्यप्रतिपुरुषमित्यर्थः १० ततोमुख्यद्वारा ताभितरान् विवक्षितान्योद्धुमिष्टान् ११ । १२ । १३ मद्यशालाः संदेशहराःकुट्टन्यः कुत्सितेनशीलेनवर्तितगच्छंतिधर्मादिसंतिवाकुशीलवाविटाः कितवाद्यूतकाराश्चानिग्राह्याइत्याह पानेति १४ भद्रिकाः

सकृत्पाशावकीर्णास्तेनभविष्यंतिदुर्दमाः ॥ उचितेनैवभोक्तव्यास्तेभविष्यंतियत्नतः ९ तस्मात्सर्वसमारंभोदुर्लभःपुरुषंप्रति ॥ यथामुख्यान्सांत्वयित्वाभोक्तव्यइतरोजनः १० ततस्तान्भेदयित्वातुपरस्परविवक्षितान् ॥ भुंजीतसांत्वयंश्चैवयथासुखमयत्नतः ११ नचास्थानेनचाकालेकरांस्तेभ्योनिपातयेत् ॥ आनुपूर्व्येणसांत्वेनयथाकालंयथाविधि १२ उपायान्प्रब्रवीम्येतान्नमेमायाविवक्षिता ॥ अनुपायेनदमयन्प्रकोपयतिवाजिनः १३ पानागारनिवेशाश्चवेश्याःप्रापणिकास्तथा ॥ कुशीलवाःसकितवायेचान्येकेचिदीदृशाः १४ नियम्याःसर्वएवैतेयेराष्ट्रस्योपघातकाः ॥ एतेराष्ट्रेऽभितिष्ठंतोबाधंतेभद्रिकाःप्रजाः १५ नकेनचिद्याचितव्यःकश्चित्किंचिदनापदि ॥ इतिव्यवस्थाभूतानांपुरस्तान्मनुनाकृता १६ सर्वेतथाऽनुजीवेयुर्नकुर्युःकर्मचेदिह ॥ सर्वएवइमेलोकानभवेयुरसंशयम् १७ प्रभुर्नियमनेराजायएतान्ननियच्छति ॥ भुंक्तेसतस्यपापस्यचतुर्भागमितिश्रुतिः १८ भोक्तातस्यतुपापस्यसुकृतस्ययथातथा ॥ नियंतव्याःसदाराज्ञापापायेस्युर्नराधिप १९ कृतपापस्त्वसौराजायएतान्ननियच्छति ॥ तथाकृतस्यधर्मस्यचतुर्भागमुपाश्नुते २० स्थानान्येतानिसंयम्यप्रसंगोभूतिनाशनः ॥ कामेप्रसक्तःपुरुषःकिमकार्यंविवर्जयेत् २१ मद्यमांसपरस्वानितथादाराधनानिच ॥ आहरेद्रागवशगस्तथाशास्त्रंप्रदर्शयेत् २२ आपद्येवतुयाचंतेयेषांनास्तिपरिग्रहः ॥ दातव्यंधर्मतस्तेभ्यस्त्वनुक्रोशाद्दयान्वितु २३ मातेराष्ट्रेयाचनकाभूवन्माचापिदस्यवः ॥ एषांदातारएवैतेनैतेभूतस्यभावकाः २४ येभूतान्यनुगृह्णंतिवर्धयंतिचयेप्रजाः ॥ तेतेराष्ट्रेषुवर्तंतांमाभूतानामभावकाः २५ दंड्यास्तेचमहाराजधनादानप्रयोजकाः ॥ प्रयोगंकारयेयुस्तान्यथावलिकरांस्तथा २६ कृषिगोरक्ष्यवाणिज्यंयच्चान्यत्किंचिदीदृशम् ॥ पुरुषैःकारयेत्कर्मबहुभिःकर्मभेदतः २७ नरश्चेत्कृषिगोरक्ष्यवाणिज्यंचाप्यनुष्ठितः ॥ संशयंलभतेकिंचित्तेनराजाविगर्ह्यते २८ धनिनःपूजयेन्नित्यंपानाच्छादनभोजनैः ॥ वक्तव्याश्चानुगृह्णीध्वंप्रजाःसहमयेतिवै २९ अंगमेतन्महद्राज्येधनिनोनामभारत ॥ ककुदंसर्वभूतानांधनस्थोनात्रसंशयः ३०

कल्याणः १५ याचितव्यःदत्तमृणंकरंवेतिशेषः १६ अनुजीवेयुरनुसरेयुःअन्यथादोषमाह नेति १७ । १८ । १९ तथानियच्छन्नितिशेषः २० स्थानानिमद्यादीनांवक्ष्यमाणानांकिमकार्यंविवर्जयेदपितुसर्वमकार्यंकुर्यादेव २१ अकार्यमेवाह मद्येतिशास्त्रमाज्ञांप्रदर्शयेत्प्रवर्तयेत् २२ आपद्येवमनुशाख्यादिनाअनापद्यपि २३ दातारआच्छेतारः २४ । २५ धन्येस्वधिकधनग्रहणंप्रयोजयंतोऽधिकारिणोदंड्याःअन्येचाऽधिकारिणस्तान्यथावद्बलिकरानुद्दिश्यप्रयोगंकारयेयुः २६ बहुभिःकारयेदन्यथाकर्मभेदतःकर्मणोभेदोनाशःस्यादित्यर्थः २७ संशयंचोरेभ्योराजकीयेभ्योवाभयात् २८ । २९ । ३०

११ । ३२ । ३३ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ ७ ॥ वनस्पतीनिति मूलफलंब्राह्मणानांस्वमितिधर्ममाहुर
तोऽप्येतन्नच्छिद्युः १ ब्राह्मणापराधेनतैरपालनेन २ त्यागंराष्ट्रस्य ३ अवृत्त्याराष्ट्रंत्यजतोराज्ञावृत्तिःकल्प्येतिमर्यादा नतुराजरथाद्यलाभाय्यजतस्तदपिदेयमित्यस्तीतिकास्मिन्निविकाका
सूचयति ४ अतःपरंत्वंवृत्तिंकल्पयसिनपूर्वमित्युपालंभे पूर्वंपरोक्षंकर्तव्यंविस्मर्तव्यंक्षंतव्यमितितंप्रार्थयेदित्यर्थः ५ वृत्तिमात्रंकल्पयेदितिपरमतं भोगार्थीचेद्राष्ट्रंत्यजतितदाभोगैरपिनिमं

प्राज्ञःशूरोधनस्थश्चस्वामीधार्मिकएवच ॥ तपस्वीसत्यवादीचबुद्धिमांश्चापिरक्षति ३१ तस्मात्सर्वेषुभूतेषुप्रीतिमान्भवपार्थिव ॥ सत्यमार्जवमक्रोधमानृशंस्यं
चपालय ३२ एवंदंडंचकोशंचमित्रंभूमिंचलप्स्यसि ॥ सत्यार्जवपरोराजन्मित्रकोशबलान्वितः ३३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्व
णिकोशसंचयप्रकारकथनेअष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ ७ ॥ भीष्मउवाच ॥ वनस्पतीन्भक्ष्यफलान्नच्छिंद्युर्विषयेतव ॥ ब्राह्मणानांमूलफलंधर्म
माहुर्मनीषिणः १ ब्राह्मणेभ्योऽतिरिक्तंचभुंजीरन्नितरेजनाः ॥ नब्राह्मणापराधेनहरेदन्यःकथंचन २ विप्रश्चेत्त्यागमातिष्ठेदात्मार्थेवृत्तिकर्शितः ॥ परिकल्प्या
स्यवृत्तिःस्यात्सदारस्यनराधिप ३ सचेन्नोपनिवर्तेतवाच्योब्राह्मणसंसदि ॥ कस्मिन्निदानींमर्यादामयंलोकःकरिष्यति ४ असंशयंनिवर्तेतनचेद्वक्ष्यत्यतः
परम् ॥ पूर्वंपरोक्षंकर्तव्यमेतत्कौंतेयशाश्वतम् ५ आहुरेतज्जनाब्रह्मन्नचैतच्छ्रद्दधाम्यहम् ॥ निमंत्र्यश्चभवेद्भोगैरवृत्त्याचतदाचरेत् ६ कृषिगोरक्ष्यवाणिज्यंलो
कानामिहजीवनम् ॥ ऊर्ध्वंचैवत्रयीविद्यासाभूतान्भावयत्युत ७ तस्यांप्रपतमानायांयेस्युस्तत्परिपंथिनः ॥ दस्यवस्तद्वधायेहब्रह्माक्षत्रमथासृजत् ८ शत्रून्
जयप्रजारक्षयजस्वक्रतुभिर्नृप ॥ युध्यस्वसमरेवीरोभूत्वाकौरवनंदन ९ संरक्ष्यान्पालयेद्राजासराजाराजसत्तमः ॥ येकेचित्तान्नरक्षंतितैरर्थोनास्तिकश्चन १०
सदेवराज्ञायोद्धव्यंसर्वलोकाद्युधिष्ठिर ॥ तस्माद्धेतोर्हिभुंजीतमनुष्यानेवमानवः ११ आंतरेभ्यःपरान्रक्षन्परेभ्यःपुनरांतरान् ॥ परान्परेभ्यःस्वान्स्वेभ्यःसर्वा
न्पालयनित्यदा १२ आत्मानंसर्वतोरक्षन्राजन्रक्षस्वमेदिनीम् ॥ आत्ममूलमिदंसर्वमाहुर्वैविदुषोजनाः १३ किंछिद्रंकोऽनुसंगोमेकिंवास्त्यविनिपातितम् ॥
कुतोमामाश्रयेद्दोषइतिनित्यंविचिंतयेत् १४ अतीतदिवसेवृत्तंप्रशंसंतिनवापुनः ॥ गुप्तैश्चारैरनुमतैःपृथिवीमनुसारयेत् १५ जानीयुर्यदिमेवृत्तंप्रशंसंति
नवापुनः ॥ कच्चिद्रोचेज्जनपदेकच्चिद्राष्ट्रेचमेयशः १६ धर्मज्ञानांधृतिमतांसंग्रामेष्वपलायिनाम् ॥ राष्ट्रेतुयेऽनुजीवंतियेतुराज्ञोऽनुजीविनः १७ अमात्यानां
चसर्वेषांमध्यस्थानांचसर्वशः ॥ येचत्वामभिप्रशंसेयुर्निंदेयुरथवापुनः १८ सर्वान्सुपरिणीतांस्तान्कारयेथायुधिष्ठिर ॥ एकांतेनहिसर्वेषांनशक्यंतात्तरो
चितुम् ॥ मित्रामित्रमथोमध्यंसर्वभूतेषुभारत १९

ज्यः अवृत्त्याचेत्तदावृत्याऽपिनिमंत्र्यइत्याहाहुरिति
६ ऊर्ध्वंस्वर्गं ७ । ८ । ९ । १० लोकाल्लोकहितार्थंयोद्धव्यं योद्धव्यमितिपाठेस्वपरचरित्रमितिशेषः उत्तरार्धेतुभुंजीतेत्यत्रयुंजीतेतिपाठः मनुष्यांश्चारानितिचार्थः ११ स्वी
यांतराबाह्याश्चपरस्मात्रक्ष्याः स्वीयाःबाह्यास्तुशत्रुभ्योरक्ष्याइत्यर्थः १२ विदुषोविद्वांसः १३ संगोव्यसनम्स्येतिशेषः १४ । १५ । १६ । १७ । १८ सुपरिणीतान्सत्कृतान् १९



तुल्येषुकथमितरइतरंभुंजीतेतिप्रश्नः बलवानेवदुर्बलंभुंजीततुल्यास्त्वात्मानंरक्षेच्छलेनचवंभुंजीतेत्युत्तरमाह तुल्येतिषड्भिः २० । २१भारुंडोगृध्रः २२ । २३ । २४ । २५ । २६ ॥ इतिशांतिपर्व
णिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेएकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥ ॥ एवंस्वाम्यादिप्रकृतिषट्कंनिरूप्यप्रकीर्णकान्राजधर्मान्वक्तुमुतथ्यमांधात्रुसंवादंवामदे

युधिष्ठिरउवाच ॥ तुल्यबाहुबलानांचतुल्यानांचगुणैरपि ॥ कथंस्यादधिकःकश्चित्सचभुंजीतमानवान् २० ॥ भीष्मउवाच ॥ यच्चराह्यचरानद्युरदंष्ट्रान्दंष्ट्रिण
स्तथा ॥ आशीविषाइवक्रुद्धाभुजंगान्भुजगाइव २१ एतेभ्यश्चाप्रमत्तःस्यात्सदाशत्रोर्युधिष्ठिर ॥ भारुंडसदृशाह्येतेनिपतंतिप्रमादतः २२ कच्चित्तेवणिजोराष्ट्रे
नोद्विजंतिकरार्दिताः ॥ क्रीणंतोबहुनाल्पेनकांतारकृतविश्रमाः २३ कच्चित्कृषिकराराष्ट्रंनजहत्यतिपीडिताः ॥ येवहंतिधुरंराज्ञांतेभरंतीतरानपि २४ इतोदत्ते
नजीवंतिदेवाःपितृगणास्तथा ॥ मानुषोरगरक्षांसिवयांसिपशवस्तथा २५ एषातेराष्ट्रवृत्तिश्चराज्ञांगुप्तिश्चभारत ॥ एतमेवार्थमाश्रित्यभूयोवक्ष्यामिपांडव २६
इतिश्रीमहाभारतेशांतिप०राजध०राष्ट्रगुप्तौएकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ भीष्मउवाच ॥ यानंगिराःक्षत्रधर्मानुतथ्योब्रह्मवित्तमः ॥ मांधात्रेयौवना
श्वायप्रीतिमानभ्यभाषत १ सयथाऽनुशशासैनमुतथ्योब्रह्मवित्तमः ॥ तत्तेसर्वंप्रवक्ष्यामिनिखिलेनयुधिष्ठिर २ ॥ उतथ्यउवाच ॥ धर्मायराजाभवतिनकामकर
णायतु ॥ मांधातरितिजानीहिराजालोकस्यरक्षिता ३ राजाचरतिचेद्धर्मंदेवत्वायैवकल्पते ॥ सचेदधर्मंचरतिनरकायैवगच्छति ४ धर्मेतिष्ठंतिभूतानिधर्मोरा
जनितिष्ठति ॥ तंराजासाधुयःशास्तिसराजापृथिवीपतिः ५ राजापरमधर्मात्मालक्ष्मीवान्धर्मउच्यते ॥ देवाश्चगर्हांगच्छंतिधर्मोनास्तीतिचोच्यते ६ स्वध
र्मेवर्तमानानामर्थसिद्धिःप्रदृश्यते ॥ तदेवमंगलंलोकःसर्वःसमनुवर्तते ७ उच्छिद्यतेधर्मवृत्तमधर्मोवर्ततेमहान् ॥ भयमाहुर्दिवारात्रंयदापापोनवार्यते ८ ममेद
मितिनैवैतत्साधूनांतातधर्मतः ॥ नवैव्यवस्थाभवतियदापापोनवार्यते ९ नैवभार्यानपशवोनक्षेत्रंननिवेशनम् ॥ संदृश्येतमनुष्याणांयदापापबलंभवेत् ॥ देवाः
पूजांनजानंतिनस्वधांपितरस्तदा १० नपूज्यंतेह्यतिथयोयदापापोनवार्यते ॥ नवेदानधिगच्छंतिव्रतवंतोद्विजातयः ११ नयज्ञांस्तन्वतेविप्रायदा
पापोनवार्यते ॥ वृद्धानामिवसत्वानांमनोभवतिविह्वलम् १२ मनुष्याणांमहाराजयदापापोनवार्यते ॥ उभौलोकावभिप्रेक्ष्यराजानमृषयःस्वयम् १३ असृजन्सु
महद्भूतमयंधर्मोभविष्यति ॥ यस्मिन्धर्मोविराजेततंराजानंप्रचक्षते १४ यस्मिन्विलीयतेधर्मस्तंदेवावृषलंविदुः ॥ वृषोहिभगवान्धर्मोयस्तस्यकुरुतेह्यलम् ॥
वृषलंतंविदुर्देवास्तस्माद्धर्मंविवर्धयेत् १५ धर्मेवर्धतिवर्धंतिसर्वभूतानिसर्वदा ॥ तस्मिन्ह्रसतिहीयंतेतस्माद्धर्मंनलोपयेत् १६

वनीतांचारमते यानंगिराइत्यादिनाऽध्यायपंचकेन आंगिराअंगिरसः १ । २ । ३ । ४ । ५ देवाइति यदापापोनवार्यतेतदादेवनिंदादयोदोषाःप्रवर्ततइतिसार्धत्रयम् ६ । ७ । ८ । ९ । १०
११ वृद्धानांशस्त्रेणच्छिन्नदेहानाम् १२ । १३ धर्मोधर्मपालः १४ अलंवारणंछेदनमितियावत् तेनवृषंलुनातिच्छिनत्तीतिवृषलइतियोगोदर्शितः १५ । १६

धर्मपदस्यद्वेधाव्युत्पत्तिमाह धनादिति धनवाचीनांतोधनशब्दः अतेर्गत्यर्थान्मक्प्रत्ययेततोनलोपगुणौ धनाद्धिस्रवतीतिधर्मइत्यर्थः धनादितिपंचमीतुधनंप्रापयितुंस्रवतिद्रवतिक्रुपायतइ
तिल्यब्लोपेज्ञेया धारणाद्वाधर्मःधृञोमन्प्रत्ययः सीमांतकरःमर्यादापालकस्तदाधारणाकरइत्यर्थः १७ । १८ । १९ । २० । २१ अमित्रीमर्वतिवर्धते २२ असूयात्वअसूयातः लिंगव्यत्ययआर्षः

धनात्स्रवतिधर्मोहिधारणाद्वेतिनिश्चयः ॥ अकार्याणांमनुष्येंद्रससीमांतकरःस्मृतः १७ प्रभवार्थंहिभूतानांधर्मःसृष्टःस्वयंभुवा ॥ तस्मात्प्रवर्तयेद्धर्मंप्रजाऽनुग्रह
कारणात् १८ तस्माद्धिराजशार्दूलधर्मःश्रेष्ठतरःस्मृतः ॥ सराजायःप्रजाःशास्तिसाधुकृत्पुरुषर्षभ १९ कामक्रोधावनादृत्यधर्ममेवानुपालय ॥ धर्मःश्रेयस्करत
तमोराज्ञांभरतसत्तम २० धर्मस्यब्राह्मणोयोनिस्तस्मात्तान्पूजयेत्सदा ॥ ब्राह्मणानांचमांधातःकुर्यात्कामानमत्सरी २१ तेषांह्यकामकरणाद्राज्ञःसंजायतेभयम् ॥
मित्राणिनचवर्धंतेतथाऽमित्रीभवंत्यपि २२ ब्राह्मणानांसदाऽसूयाद्बाल्याद्वैरोचनोबलिः ॥ अथास्माच्छ्रीरपाक्रामद्याऽस्मिन्नासीत्प्रतापिनी २३ ततस्तस्माद
पाक्रम्यसाऽगच्छत्पाकशासनम् ॥ अथसोन्वतपत्पश्चाच्छ्रियंदृष्ट्वापुरंदरे २४ एतत्फलमसूयायाअभिमानस्यवाविभो ॥ तस्माद्बुध्यस्वमांधातर्मात्वांजह्यात्प्रता
पिनी २५ दर्पोनामश्रियःपुत्रोजज्ञेऽधर्मादितिश्रुतिः ॥ तेनदेवासुराराजन्नीताःसुबहवोव्ययम् २६ राजर्षयश्चबहवस्तथाबुध्यस्वपार्थिव ॥ राजाभवतितंजित्वा
दासस्तेनपराजितः २७ सयथादर्पसहितमधर्मंनानुसेवते ॥ तथावर्तस्वमांधातश्चिरंचेत्स्थातुमिच्छसि २८ मत्तात्प्रमत्तात्पौगंडादुन्मत्ताच्चविशेषतः ॥
तदभ्यासादुपावर्तसंहितानांचसेवनात् २९ निगृहीतादमात्याच्चस्त्रीभ्यश्चैवविशेषतः ॥ पर्वताद्विषमाद्दुर्गाद्धस्तिनोश्वात्सरीसृपात् ३० एतेभ्योनित्ययुक्तः
स्यान्नक्तंचर्यांचवर्जयेत् ॥ अत्यागंचाभिमानंचदंभंक्रोधंचवर्जयेत् ३१ अविज्ञातासुचस्त्रीषुक्लीबासुस्वैरिणीषुच ॥ परभार्यासुकन्यासुनाचरेन्मैथुनंनृप ३२ कु
लेषुपापरक्षांसिजायंतेवर्णसंकरात् ॥ अपुमांसोंगहीनाश्चस्थूलजिह्वाविचेतसः ३३ एतेचान्येचजायंतेयदाराजाप्रमाद्यति ॥ तस्माद्राज्ञाविशेषेणवर्तितव्यं
प्रजाहिते ३४ क्षत्रियस्यप्रमत्तस्यदोषःसंजायतेमहान् ॥ अधर्माःसंप्रवर्धंतेप्रजासंकरकारकाः ३५ अशीतेविद्यतेशीतंशीतेशीतंनविद्यते ॥ अवृष्टिरतिवृ
ष्टिश्चव्याधिश्चाप्याविशेत्प्रजाः ३६ नक्षत्राण्युपतिष्ठंतिग्रहाघोरास्तथागते ॥ उत्पाताश्चात्रदृश्यंतेबहवोराजनाशनाः ३७ अरक्षितात्मायोराजाप्रजाश्चा
पिनरक्षति ॥ प्रजाश्चतस्यक्षीयंतेततःसोऽनुविनश्यति ३८ द्वावाददातेह्येकस्यद्वयोःसुबहवोऽपरे ॥ कुमार्यःसंप्रलुप्यंतेतदाहुर्नृपदूषणम् ३९

असूयया अततिसततंवर्ततइतिवाअसूयात् २३ । २४ । २५ अधर्मादितिच्छेदः २६ तंदर्पं २७ । २८ पौगंडाद्बालकादज्ञादित्यर्थः पाषंडादितिमुख्यःपाठः मत्तादिभ्यउपावर्तपराङ्वर्तिमज
तदभ्यासात्तैःसहपरिचयात् संहितानांमिलितानांचतेषांसेवनाद्बहुतरामुपावर्तेत्यर्थः २९ । ३० अत्यागंबदमुष्टितास् ३१ । ३२ अपुमांसःक्लीबाः स्थूलजिह्वामूकाः ३३ । ३४ । ३५
३६ नक्षत्राणिधूमकेत्वादयः ३७ । ३८ एकस्यधनंद्वावाददतेआच्छिद्यगृह्णीतः ३९



४० ॥ इतिशांतिपर्वणिराजध० नीलकंठीयेभारतभावदीपे नवतितमोऽध्यायः ॥ ९० ॥ ७ ॥ कालेति १ वस्त्राणांशुक्लानांशोधयितुंरंगमविद्याख्यमलमात्रंदूरीकर्तुं २ द्विजानांमध्येयःकश्चि
च्छूद्रोवानानाकर्मस्ववस्थितः स्वकर्मच्युतोमूढः रजकतुल्यइत्यर्थः ३ । ४ । ५ । ६ । ७ अग्नित्रेतागार्हपत्यदक्षिणाग्न्याहवनीयाख्यंवह्नित्रयं त्रयीऋग्यजुःसामवेदाः ८ । ९ । १० । ११ अव

ममेदमितिनैकस्यमनुष्येष्ववतिष्ठति ॥ त्यक्त्वाधर्मंयदाराजाप्रमादमनुतिष्ठति ४० ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध० उतथ्यगीतासुनवतितमोऽ
ध्यायः ॥ ९० ॥ ७ ॥ उतथ्यउवाच ॥ कालवर्षीचपर्जन्योधर्मचारीचपार्थिवः ॥ संपद्यदेषाभवतिसाबिभर्तिसुखंप्रजाः १ योनजानातिहर्तुंवावस्त्राणांरज
कोमलम् ॥ रक्तानांवाशोधयितुंयथानास्तितथैवसः २ एवमेतद्द्विजेंद्राणांक्षत्रियाणांविशांतथा ॥ शूद्रश्चतुर्थोवर्णानांनानाकर्मस्ववस्थितः ३ कर्मशूद्रेकृषिर्वै
श्येदंडनीतिश्चराजनि ॥ ब्रह्मचर्यंतपोमंत्राःसत्यंचापिद्विजातिषु ४ तेषांयःक्षत्रियोवेदवस्त्राणामिवशोधनम् ॥ शीलदोषान्विनिर्हंतुंसपितासप्रजापतिः ५ कृ
तंत्रेताद्वापरंचकलिश्चभरतर्षभ ॥ राजवृत्तानिसर्वाणिराजैवयुगमुच्यते ६ चातुर्वर्ण्यंतथावेदाश्चातुराश्रम्यमेवच ॥ सर्वंप्रमुह्यतेह्येतद्यदाराजाप्रमाद्यति ७ अ
ग्नित्रेतात्रयीविद्यायज्ञाश्चसहदक्षिणाः ॥ सर्वएवप्रमाद्यंतियदाराजाप्रमाद्यति ८ राजैवकर्ताभूतानांराजैवचविनाशकः ॥ धर्मात्मायःसकर्तास्यादधर्मात्माविना
शकः ९ राज्ञोभार्याश्चपुत्राश्चबांधवाःसुहृदस्तथा ॥ समेत्यसर्वेशोचंतियदाराजाप्रमाद्यति १० हस्तिनोऽश्वाश्चगावश्चाप्युष्ट्राश्वतरगर्दभाः ॥ अधर्मभूतेनृपतौ
सर्वेसीदंतिजंतवः ११ दुर्बलार्थंबलंसृष्टंधात्रामांधातरुच्यते ॥ अबलंतुमहद्भूतंयस्मिन्सर्वंप्रतिष्ठितम् १२ यच्चभूतंसंभजतेयेचभूतास्तदन्वयाः ॥ अधर्मस्थे
हिनृपतौसर्वेशोचंतिपार्थिव १३ दुर्बलस्यचयच्चक्षुर्मुनेराशीविषस्यच ॥ अविषह्यतमंमन्येमास्मदुर्बलमासदः १४ दुर्बलांस्तातबुध्येथानित्यमेवाविमानितान्
मात्वांदुर्बलचक्षूंषिप्रदहेयुःसबांधवम् १५ नहिदुर्बलदग्धस्यकुलेकिंचित्प्ररोहति ॥ आमूलंनिर्दहंत्येवमास्मदुर्बलमासदः १६ अबलंवैबलाच्छ्रेयोयच्चातिबलव
द्बलम् ॥ बलस्याबलदग्धस्यनकिंचिदवशिष्यते १७ विमानितोहतःक्रुष्टस्त्रातारंचेन्नविंदति ॥ अमानुषकृतस्तत्रदंडोहंतिनराधिपम् १८ मास्मतातरणे
स्थित्वाभुंजीथादुर्बलंजनम् ॥ मात्वांदुर्बलचक्षूंषिदहंत्वग्निरिवाशयम् १९ यानिमिथ्याभिशस्तानांपतंत्यश्रूणिरोदताम् ॥ तानिपुत्रान्पशून्घ्नंतितेषांमिथ्या
भिशंसनात् २० यदिनात्मनिपुत्रेषुनचेत्पौत्रेषुनप्तृषु ॥ नहिपापंकृतंकर्मसद्यःफलतिगौरिव २१ यत्राबलोवध्यमानस्त्रातारंनाधिगच्छति ॥ महान्दैवकृत
स्तत्रदंडःपततिदारुणः २२ युक्तायदाजानपदाभिक्षंतेब्राह्मणाइव ॥ अभीक्ष्णंभिक्षुरूपेणराजानंघ्नंतिताद्दृशाः २३ राज्ञोयदाजनपदेबहवोराजपूरुषाः ॥
२७ अनयेनोपवर्तंतेतद्राज्ञःकिल्बिषंमहत् २४ यदायुक्त्यानयेदर्थान्कामादर्थवशेनवा ॥ कृपणंयाचमानानांतद्राज्ञोवैशसंमहत् २५

लंतु अबलस्यपालनान्महत्पुण्यमपालनाच्चमहत्पापमित्यर्थः १२ भूतंदुर्बलंसंभजतेऽन्नादिनासेवते तदन्वयादातृसंबंधिनः १३ अबलंतुमहद्भूतमित्येतद्विवृणोति दुर्बलस्येत्यादिना १४ । १५
१६ । १७ । १८ रणेस्थित्वाप्रतिपक्षीभूयभुंजीथाःकरादानेन १९ । २० यद्यात्मनिफलंपापंनफलतितर्हिपुत्रादिषुफलति नतुसद्यःफलतीत्यर्थः २१ । २२ । २३ । २४ नयेदपहरेत् २५

२६ महानितिदृष्टांतमुक्त्वादार्ष्टांतिकमाह यदेति यदाधर्मंचरतितदाराजावर्धतइतिभावः दुष्कृतंचापयातीत्यर्थः २७ राज्ञः नृपान् २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ सारणि

महान्वृक्षोजायतेवर्धतेचतंचैवभूतानिसमाश्रयंति ॥ यदावृक्षश्छिद्यते दह्यतेचतदाश्रयाअनिकेताभवंति २६ यदाराष्ट्रेधर्ममग्र्यंचरंतिसंस्कारंवाराजगुणंब्रुवा
णाः ॥ तैरेवाधर्मश्चरितोधर्ममोहात्तूर्णंजह्यात्सुकृतंदुष्कृतंच २७ यत्रपापाज्ञायमानाश्चरंतिसतांकलिर्विंदतेतत्रराज्ञः ॥ यदाराजाशास्तिनरानशिष्टांस्तदाराज्यं
वर्धतेभूमिपस्य २८ यश्चामात्यान्मानयित्वायथार्थंमंत्रेचयुद्धेचनृपोनियुंज्यात् ॥ विवर्धतेतस्यराष्ट्रंनृपस्यभुंक्तेमहींचाप्यखिलांचिराय २९ यश्चापिसुकृतंकर्म
वाचंचैवसुभाषिताम् ॥ समीक्ष्यपूजयन्राजाधर्मंप्राप्नोत्यनुत्तमम् ३० संविभज्ययदाभुंक्तेनामात्यानवमन्यते ॥ निहंतिबलिनंदृप्तंसराज्ञोधर्मउच्यते ३१ त्राय
तेहियदासर्वंवाचाकायेनकर्मणा ॥ पुत्रस्यापिनमृष्येच्चसराज्ञोधर्मउच्यते ३२ संविभज्ययदाभुंक्तेनृपतिर्दुर्बलान्नरान् ॥ तदाभवंतिबलिनःसराज्ञोधर्मउच्यते ३३
यदारक्षतिराष्ट्राणियदादस्यूनपोहति ॥ यदाजयतिसंग्रामेसराज्ञोधर्मउच्यते ३४ पापमाचरतोयत्रकर्मणाव्याहृतेनवा ॥ प्रियस्यापिनमृष्येतसराज्ञोधर्मउच्यते
३५ यदासारणिकान्राजापुत्रवत्परिरक्षति ॥ भिनत्तिचनमर्यादांसराज्ञोधर्मउच्यते ३६ यदाप्तदक्षिणैर्यज्ञैर्यजतेश्रद्धयाऽन्वितः ॥ कामद्वेषावनादृत्यसराज्ञोधर्म
उच्यते ३७ कृपणानाथवृद्धानांयदाऽश्रुपरिमार्जति ॥ हर्षंसंजनयन्नॄणांसराज्ञोधर्मउच्यते ३८ विवर्धयातिमित्राणितथारींश्चापिकर्षति ॥ संपूजयतिसाधूंश्चस
राज्ञोधर्मउच्यते ३९ सत्यंपालयतिप्रीत्यानित्यंभूमिंप्रयच्छति ॥ पूजयेदतिथीन्भृत्यान्सराज्ञोधर्मउच्यते ४० निग्रहानुग्रहौचोभौयत्रस्यातांप्रतिष्ठितौ ॥
अस्मिन्लोकेपरेचैवराजासप्राप्नुतेफलम् ४१ यमोराजाधार्मिकाणांमांधातःपरमेश्वरः ॥ संयच्छन्भवतिप्राणानसंयच्छंस्तुपातुकः ४२ ऋत्विक्पुरोहिताचार्या
न्सत्कृत्यानवमन्यच ॥ यदासम्यक्प्रगृह्णातिसराज्ञोधर्मउच्यते ४३ यमोयच्छतिभूतानिसर्वाण्येवाविशेषतः ॥ तथाराज्ञाऽनुकर्तव्यंयंतव्याविधिवत्प्रजाः
४४ सहस्राक्षेणराजाहिसर्वथैवोपमीयते ॥ सपश्यतिचयंधर्मंसधर्मःपुरुषर्षभ ४५ अप्रमादेनशिक्षेथाःक्षमांबुद्धिंधृतिंमतिम् ॥ भूतानांचैवजिज्ञासांसाध्वसाधु
चसर्वदा ४६ संग्रहःसर्वभूतानांदानंचमधुरंवचः ॥ पौरजानपदाश्चैवगोप्तव्यास्तेयथासुखम् ४७ नजात्वदक्षोनृपतिःप्रजाःशक्नोतिरक्षितुम् ॥ भारोहिसुमहां
स्तातराज्यंनामसुदुष्करम् ४८ तद्दंडविन्नृपःप्राज्ञःशूरःशक्नोतिरक्षितुम् ॥ नहिशक्यमदंडेनक्लीबेनाबुद्धिनाऽपिवा ४९ अभिरूपैःकुलेजातैर्दक्षैर्भक्तैर्बहुश्रुतैः ॥
सर्वाबुद्धीःपरीक्षेथास्तापसाश्रमिणामपि ५० अतस्त्वंसर्वभूतानांधर्मंवेत्स्यसिवैपरम् ॥ स्वदेशेपरदेशेवानतेधर्मोविनंक्ष्यति ५१

कान्प्रसारिणीप्रधानान्वणिजः शारणिकानितिपाठेशरणागतान् ३६ । ३७ । ३८ । ३९ । ४० । ४१ धार्मिकाणांपरमेश्वरोऽनुग्राहकोऽस्यतःप्राणानिंद्रियाणिनियच्छन्भवतिऐश्वर्यं
प्राप्नोति अनियच्छंस्तुपातुकःपतयालुर्भवति पावकइतिपाठेस्वाश्रयदाहीभवतीत्यर्थः ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ अभिरूपैरमात्यैःसहेतिशेषः ५० । ५१



धर्मोऽर्थादुत्पद्यतइतितत्फलभूतत्वात्ततउत्तरः एवंकामादपिधर्मएवोत्तरस्तन्मूलत्वात् ५२ । ५३ प्रमादिथाःप्रमाद्येथाः ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० ॥ इतिशांतिपर्वणिराजध

तस्मादर्थाच्चकामाच्चधर्मएवोत्तरोभवेत् ॥ अस्मिन्लोकेपरेचैवधर्मात्मासुखमेधते ५२ त्यजंतिदारान्पुत्रांश्चमनुष्याःपरिपूजिताः ॥ संग्रहश्चैवभूतानांदानंच
मधुराचवाक् ५३ अप्रमादश्चशौचंचराज्ञोभूतिकरंमहत् ॥ एतेभ्यश्चैवमांधातःसततंमाप्रमादिथाः ५४ अप्रमत्तोभवेद्राजाछिद्रदर्शीपरात्मनोः ॥ नास्यछि
द्रंपरःपश्येच्छिद्रेषुपरमन्वियात् ५५ एतद्वृत्तंवासवस्ययमस्यवरुणस्यच ॥ राजर्षीणांचसर्वेषांतत्त्वमप्यनुपालय ५६ तत्कुरुष्वमहाराजवृत्तंराजर्षिसेवि
तम् ॥ आतिष्ठदिव्यंपंथानमह्नायभरतर्षभ ५७ धर्मवृत्तंहिराजानंप्रेत्यचेहचभारत ॥ देवर्षिपितृगंधर्वाःकीर्तयंतिमहौजसः ५८ ॥ भीष्मउवाच ॥ सएवमुक्तो
मांधातातेनोतथ्येनभारत ॥ कृतवानविशंकश्चएकःप्रापचमेदिनीं ५९ भवानपितथासम्यङ्मांधातेवमहीपते ॥ धर्मंकृत्वामहींरक्षस्वर्गेस्थानमवाप्स्यसि ६०
॥ इतिश्रीमहा०शांति०राजध० उतथ्यगीतासुएकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ युधिष्ठिरउवाच ॥ कथंधर्मेस्थातुमिच्छन्राजावर्तेतधार्मिकः ॥ पृच्छा
मित्वांकुरुश्रेष्ठतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ गीतंदृष्टार्थतत्त्वेनवामदेवेनधीमता २ राजावसुमनानामज्ञा
नवान्धृतिमान्शुचिः ॥ महर्षिंपरिपप्रच्छवामदेवंतपस्विनम् ३ धर्मार्थसहितैर्वाक्यैर्भगवन्ननुशाधिमां ॥ येनवृत्तेनवैतिष्ठन्नहीयेयंस्वधर्मतः ४ तमब्रवीद्वामदे
वस्तेजस्वीतपतांवरः ॥ हेमवर्णंसुखासीनंययातिमिवनाहुषम् ५ ॥ वामदेवउवाच ॥ धर्ममेवानुवर्तस्वनधर्माद्विद्यतेपरम् ॥ धर्मेस्थिताहिराजानोजयंतिपृ
थिवीमिमाम् ६ अर्थसिद्धेःपरंधर्मंमन्यतेयोमहीपतिः ॥ वृद्धधांचकुरुतेबुद्धिंसधर्मेणविराजते ७ अधर्मदर्शीयोराजाबलादेवप्रवर्तते ॥ क्षिप्रमेवापयातोऽस्मादु
भौप्रथममध्यमौ ८ असत्पापिष्ठसचिवोवध्योलोकस्यधर्महा ॥ सहैवपरिवारेणक्षिप्रमेवावसीदति ९ अर्थानामननुष्ठाताकामचारीविकत्थनः ॥ अपिसर्वांमहींल
ब्ध्वाक्षिप्रमेवविनश्यति १० अथाददानःकल्याणमनसूयुर्जितेंद्रियः ॥ वर्धतेमतिमान्राजास्रोतोभिरिवसागरः ११ नपूर्णोऽस्मीतिमन्येतधर्मतःकामतोऽर्थ
तः ॥ बुद्धितोमित्रतश्चापिसततंवसुधाधिप १२ एतेष्वेवहिसर्वेषुलोकयात्राप्रतिष्ठिता ॥ एतानिशृण्वँल्लभतेयशःकीर्तिंश्रियंप्रजाः १३ एवंयोधर्मसंरंभीधर्मा
र्थपरिचिंतकः ॥ अर्थान्समीक्ष्यभजतेसध्रुवंमहदश्नुते १४ अदाताह्यनतिस्नेहोदंडेनावर्तयन्प्रजाः ॥ साहसप्रकृतीराजाक्षिप्रमेवविनश्यति १५ अथपापकृतं
बुद्ध्यानचपश्यत्यबुद्धिमान् ॥ अकीर्त्याऽभिसमायुक्तोभूयोनरकमश्नुते १६

र्मोनुशासनपर्वणिनीलकंठीये भारतभावदीपेएकनवतितमोऽध्यायः ॥ ९१ ॥ धर्मस्योत्कर्षंश्रुत्वाधर्मेस्थितिप्रकारंपृच्छति कथमिति १ । २ । ३ । ४ तपतांतपःकुर्वतां ५ । ६ अर्थापेक्षयाधर्मश्रे
ष्ठंमत्वाधर्मेवृद्धांबुद्धिंकुर्यादित्याहार्थेति ७ उभौधर्मार्थौ ८ असंतोदुष्टाःपापिष्ठाश्चसचिवायस्यसः ९ । १० । ११ । १२ एतेषुधर्मादिषु १३ । १४ । १५ पापकृतंपापकारिणम् १६

दाम्नोदातुः १० । १८ । १९ ॥ इतिशांति० रा०नी०भा० द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ ७ ॥ यत्रराष्ट्रेप्रणयतेआरोपयति बलवत्तरोराजा १ तंराजानमनुवर्तंतेऽन्ये २ प्रकृतिःस्वध र्मः विषमःकुमार्गः ३ । ४ जितानामापन्नानांअजितानांस्वस्थानां ५ कृतकल्याणंप्रागुपकारंकृतवंतम् ६ शक्तोसुखमनुभवेत्आपदितुकरणंआपन्निवारणंकर्मकुर्यात् । 'करणंहेतुकर्मणोः'इतिमे

॥७१॥ अथमानयितुर्दाम्नःश्लक्ष्णस्यवशवर्तिनः ॥ व्यसनंस्वमिवोत्पन्नंविजिघांसंतिमानवाः १७ यस्यनास्तिगुरुर्धर्मेनचान्यानपिपृच्छति ॥ सुखतंत्रोऽर्थलाभेषुन
चिरंसुखमश्नुते १८ गुरुप्रधानोधर्मेषुस्वयमर्थानवेक्षिता ॥ धर्मप्रधानोलाभेषुसचिरंसुखमश्नुते १९ ॥ इतिश्रीमहाभारतेशांतिप०राज०वामदेवगीतासुद्वि ॥९२॥
नवतितमोऽध्यायः ॥ ९२ ॥ ॥ ७ ॥ ॥ वामदेवउवाच ॥ यत्राधर्मंप्रणयतेदुर्बलेबलवत्तरः ॥ तांवृत्तिमुपजीवंतियेभवंतितदन्वयाः १ राजानमनु
वर्ततेतंपापाभिप्रवर्तकम् ॥ अविनीतमनुष्यंतत्क्षिप्रंराष्ट्रंविनश्यति २ यद्वृत्तमुपजीवंतिप्रकृतिस्थस्यमानवाः ॥ तदेवविषमस्थस्यस्वजनोऽपिनमृष्यते ३
साहसप्रकृतिर्यत्रकिंचिदुल्बणमाचरेत् ॥ अशास्त्रलक्षणोराजाक्षिप्रमेवविनश्यति ४ योऽत्यंताचरितांवृत्तिंक्षत्रियोनानुवर्तते ॥ जितानामजितानांचक्षत्रध
र्मादपैतिसः ५ द्विषंतंकृतकल्याणंगृहीत्वान्नृपतिरणे ॥ योनमानयतेद्वेषात्क्षत्रधर्मादपैतिसः ६ शक्तःस्यात्सुसुखोराजाकुर्यात्करणमापदि ॥ प्रियोभवतिभू
तानांनचविभ्रश्यतेश्रियः ७ अप्रियंयस्यकुर्वीतभूयस्तस्यप्रियंचरेत् ॥ नचिरेणप्रियःसस्याद्योऽप्रियःप्रियमाचरेत् ८ मृषावादंपरिहरेत्कुर्यात्प्रियमयाचितः ॥
नकामान्नचसंरंभान्नद्वेषाद्धर्ममुत्सृजेत् ९ नापत्रपेतप्रश्नेषुनाविभाव्यांगिरंसृजेत् ॥ नत्वरेतनचासूयेत्तथासंगृह्यतेपरः १० प्रियेनातिभृशंहृष्येदप्रियेनचसं
ज्वरेत् ॥ नतप्येदर्थकृच्छ्रेषुप्रजाहितमनुस्मरन् ११ यःप्रियंकुरुतेनित्यंगुणतोवसुधाधिपः ॥ तस्यकर्माणिसिद्ध्यंतिनचसंत्यज्यतेश्रिया १२ निवृत्तंप्रतिकूले
षुवर्तमानमनुप्रिये ॥ भक्तंभजेतनृपतिःसदैवसुसमाहितः १३ अप्रकीर्णेंद्रियग्राममत्यंतानुगतंशुचिं ॥ शक्तंचैवानुरक्तंचयुंज्यान्महतिकर्मणि १४ एवमेतैर्गुणै
र्युक्तोयोऽनुरज्यतिभूमिपम् ॥ भर्तुरर्थेष्वप्रमत्तंनियुंज्यादर्थकर्मणि १५ मूढमैंद्रियकंलुब्धमनार्यचरितंशठम् ॥ अनतीतोपधंहिंस्रंदुर्बुद्धिमबहुश्रुतम् १६ त्य
क्तोदात्तंमद्यरतंद्यूतस्त्रीमृगयापरम् ॥ कार्येमहतियुंजानोहीयतेनृपतिःश्रिया १७ रक्षितात्माचयोराजारक्ष्यान्यश्चानुरक्षति ॥ प्रजाश्चतस्यवर्धंतेध्रुवंचमहद
श्नुते १८ येकेचिद्भूमिपतयःसर्वांस्तानन्ववेक्षयेत् ॥ सुहृद्भिरनभिख्यातैस्तेनराजाऽतिरिच्यते १९ अपकृत्यबलस्थस्यदूरस्थोऽस्मीतिनाश्वसेत् ॥ श्येना
भिपतनैरेतेनिपतंतिप्रमाद्यतः २० दृढमूलस्त्वदुष्टात्माविदित्वाबलमात्मनः ॥ अबलानभियुंजीतनतुयेबलवत्तराः २१

दिनी ७ अप्रियमिति उपकृतःशत्रुरग्रेऽप्युपकरिष्यत्येवेत्यर्थः ८ । ९ नापत्रपेतन्यायनिष्ठुरमुत्तरंदद्यात् अविभाव्यामगंभीरां अभीतिपाठेदूषणार्हां १० । ११ प्रियंमृत्यादीनां १२ । १३ । १४ ॥७१॥
एतैर्निवृत्तमितिश्लोकद्वयोक्तैर्योऽनुरज्यत्यनुरंजयतितंनियुंज्यात् भूमिपः १५ । १६ त्यक्तोदात्तमुदारकर्मत्यागिनम् १७ महत्पदम् १८ सुहृद्भिश्चारैःअनभिख्यातैःस्वेषांपरेषांचाविदितैः १९ । २० । २१

२२ मरणांतमपीदंपालनमनामयंकुशलमेवस्वर्गहेतुत्वादित्यर्थः २३ रक्षाधिकरणंदुर्गादि सुखंसुखप्रदानं २४ गुप्तानिसुरक्षितानि २५ एकेनराज्ञा तेषुदुर्गाद्यधिष्ठातृषुपंचसु २६ । २७ ज्ञानमिदंममनिःश्रेयसमितियज्ज्ञानंतत् २८ अर्थकामस्यसख्युः प्रातिकूल्याद्द्वेषात्शृणोतिवचःश्रुत्वायःसकाशात् २९ अग्राम्यैर्बुद्धिमद्भिः दुर्लिलाभोपायं ३० । ३१ मुख्यानिति गाथंकार्य

विक्रमेणमहींलब्ध्वाप्रजाधर्मेणपालयेत् ॥ आहवेनिधनंकुर्याद्राजाधर्मपरायणः २२ मरणांतमिदंसर्वंनेहकिंचिदनामयम् ॥ तस्माद्धर्मेस्थितोराजाप्रजाधर्मे
णपालयेत् २३ रक्षाधिकरणंयुद्धंतथाधर्मानुशासनम् ॥ मंत्रचिंतासुखंकालेपंचभिर्वर्धतेमही २४ एतानियस्यगुप्तानिसराजाराजसत्तम ॥ सततंवर्तमानोऽत्र
राजाधत्तेमहीमिमां २५ नैतान्येकेनशक्यानिसातत्येनानुवीक्षितुम् ॥ तेषुसर्वंप्रतिष्ठाप्यराजाभुंक्तेचिरंमहीम् २६ दातारंसंविभक्तारंमार्दवोपगतंशुचिम् ॥
असंत्यक्तमनुष्यंचतंजनाःकुर्वतेनृपम् २७ यस्तुनिःश्रेयसंश्रुत्वाज्ञानंतत्प्रतिपद्यते ॥ आत्मनोमतमुत्सृज्यतंलोकोऽनुविधीयते २८ योऽर्थकामस्यवचनंप्राति
कूल्यान्नमृष्यते ॥ शृणोतिप्रतिकूलानिसर्वदाविमनाइव २९ अग्राम्यचरितांवृत्तिंयोनसेवेतानित्यदा ॥ जितानामजितानांचक्षत्रधर्मादपैतिसः ३० निगृहीताद
मात्यात्स्त्रीभ्यश्चैवविशेषतः ॥ पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ॥ एतेभ्योनित्ययुक्तःसन्रक्षेदात्मानमेवतु ३१ मुख्यानमात्यान्योहित्वानिहीना
न्कुरुतेप्रियान् ॥ सवैव्यसनमासाद्यगाधमार्तोनविंदति ३२ यःकल्याणगुणान्ज्ञातीन्प्रद्वेषान्नोबुभूषति ॥ अदृढात्मादृढक्रोधःसमृत्योर्वसतेंऽतिके ३३ अथ
योगुणसंपन्नान्हृदयस्यप्रियानपि ॥ प्रियेणकुरुतेवश्यांश्चिरंयशसितिष्ठति ३४ नाकालेप्रणयेदर्थान्नाप्रियेजातुसंज्वरेत् ॥ प्रियेनातिभृशंतुष्येद्युंजीतारोग्यक
र्मणि ३५ केवाऽनुरक्ताराजानःकेभयात्समुपाश्रिताः ॥ मध्यस्थदोषाःकेचैषामितिनित्यंविचिंतयेत् ३६ नजातुबलवान्भूत्वादुर्बलेविश्वसेत्क्वचित् ॥ भारुंड
सदृशाह्येतेनिपतंतिप्रमाद्यतः ३७ अपिसर्वगुणैर्युक्तंभर्तारंप्रियवादिनम् ॥ अभिद्रुह्यतिपापात्मानतस्माद्विश्वसेज्जनात् ३८ एवंराजोपनिषदंययातिःस्माह
नाहुषः ॥ मनुष्यविषयेयुक्तोहंतिशत्रूननुत्तमान् ३९ ॥ इतिश्रीमहाभारतेशांतिप० राजधर्मा० वामदेवगीतासुत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ ७ ॥
॥ वामदेवउवाच ॥ अयुद्धेनैवविजयंवर्धयेद्वसुधाधिपः ॥ जघन्यमाहुर्विजयंयुद्धेनचनराधिप १ नचाप्यलब्धंलिप्सेतमूलेनातिदृढेसति ॥ नहिदुर्बलमूलस्य
राज्ञोलाभोविधीयते २ यस्यस्फीतोजनपदःसंपन्नप्रियराजकः ॥ संतुष्टपुष्टसचिवोदृढमूलःसपार्थिवः ३ यस्ययोधाःसुसंतुष्टाःसांत्विताःसूपधास्थिताः ॥
अल्पेनापिसदंडेनमहींजयतिपार्थिवः ४ पौरजानपदायस्यभूतेषुचदयालवः ॥ सधनाधान्यवंतश्चदृढमूलःसपार्थिवः ५ प्रतापकालमधिकंयदामन्येतचात्मनः ॥
तदालिप्सेतमेधावीपरभूमिधनान्युत ६ स्यातं ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ राजोपनिषदंराज्ञारहस्यविद्यां ३९ ॥ इतिशांतिप० रा०नी०भारत०
त्रिनवतितमोऽध्यायः ॥ ९३ ॥ अयुद्धेनेति १ नातिदृढे अनतिदृढे २ दृढमूलत्वस्यलक्षणमाह यस्येति ३ सूपधाःपरवंचनास्तत्रस्थितानिष्ठावंतः दंडेनसैन्येन ४ । ५ लिप्सेतविजिगीषेत ६

७ । ८ । ९ । १० कृत्यशेषेणपरकृत्यंकात्स्न्येनसमाप्यैवसमापितेतुपरोऽवमन्यतेस्वस्यचतापोभवतीत्यर्थः ११ । १२ नृपोवसुमनाः १३ ॥ ॥ इतिशांतिप० रा० नी० भा० चतुर्नवतितमोध्यायः ॥ ९४ ॥ ॥ ७ ॥ वामदेवगीतासमाप्ता ॥ यस्यस्वाम्याद्याःसप्तप्रकृतयोदृढाःसपरमहींलिप्सेतेत्युक्तंतत्रयोजिगीषतेजेतुमिच्छतितस्यविजयेविषयेविजयनिमित्तंकोऽनुष्ठेयोधर्मइ

भोगेषूद्यमानस्यभूतेषुचदयावतः ॥ वर्धतेत्वरमाणस्यविषयोरक्षितात्मनः ७ तक्षेदात्मानमेवंसवनंपरशुनायथा ॥ यःसम्यग्वर्तमानेषुस्वेषुमिथ्या प्रवर्तते ८ नैवद्विषंतोहीयंतेराज्ञोनित्यमनिघ्नतः ॥ क्रोधंनिहंतुंयोवेदतस्यद्वेष्टानविद्यते ९ यदार्यजनविद्विष्टंकर्मतन्नाचरेद्बुधः ॥ यत्कल्याणमभिध्यायेत्तत्रात्मानंनियोजयेत् १० नैवमन्येवजानंतिनात्मनापरितप्यते ॥ कृत्यशेषेणयोराजासुखान्यनुबुभूषति ११ इदंवृत्तंमनुष्येषुवर्ततेयोमहीपतिः ॥ उभौलोकौविनिर्जित्यविजयेसंप्रतिष्ठते १२ ॥ भीष्मउवाच ॥ इत्युक्तोवामदेवेनसर्वंतत्कृतवान्नृपः ॥ तथाकुर्वंस्त्वमप्येतौलोकौजेतानसंशयः १३ ॥ इतिश्रीमहाभारते शांतिप०राजध० वामदेवगीतासुचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ युधिष्ठिरउवाच ॥ अथयोविजिगीषेतक्षत्रियःक्षत्रियंयुधि ॥ कस्तस्यविजयेधर्मोह्येतंपृष्टोब्रवीहिमे १ ॥ भीष्मउवाच ॥ ससहायोऽसहायोवाराष्ट्रमागम्यभूमिपः ॥ ब्रूयादहंवोराजेतिरक्षिष्यामिचवःसदा २ ममधर्म्यंबलिंदत्तकिंवामांप्रतिपत्स्यथ ॥ तेचेत्तमागतंतत्रवृणुयुःकुशलंभवेत् ३ तेचेदक्षत्रियाःसंतोविरुध्येरन्कथंचन ॥ सर्वोपायैर्नियंतव्याविकर्मस्थानराधिप ४ अशक्तंक्षत्रियंमत्वाशस्त्रंगृह्णात्यथापरः ॥ त्राणायाप्यसमर्थंतंमन्यमानमतीवच ५ ॥ युधिष्ठिरउवाच ॥ अथयःक्षत्रियोराजाक्षत्रियंप्रत्युपाव्रजेत् ॥ कथंसंप्रतियोद्धव्यस्तन्मेब्रूहिपितामह ६ ॥ भीष्मउवाच ॥ नैवासन्नद्धकवचोयोद्धव्यःक्षत्रियोरणे ॥ एकएकेनवाच्यश्चविसृजेतिक्षिपामिच ७ सचेत्सन्नद्धआगच्छेत्सन्नद्धव्यंततोभवेत् ॥ सचेत्ससैन्यआगच्छेत्ससैन्यस्तमथाह्वयेत् ८ सचेन्निकृत्यायुद्ध्येतनिकृत्याप्रतियोधयेत् ॥ अथचेद्धर्मतोयुद्ध्येद्धर्मेणैवनिवारयेत् ९ नाश्वेनरथिनंयायादुदियाद्रथिनंरथी ॥ व्यसनेनप्रवर्तव्यंनभीतायजितायच १० इषुर्लिप्तोनकर्णीस्यादसतामेतदायुधम् ॥ यथार्थमेवयोद्धव्यंनक्रुद्ध्येतजिघांसतः ११ साधूनांतुयदाभेदात्साधुश्चेद्व्यसनीभवेत् ॥ निष्प्राणोनाभिहंतव्योनानपत्यःकथंचन १२ भग्नशस्त्रोविपन्नश्चकृतज्योहतवाहनः ॥ चिकित्स्यःस्यात्स्वविषयेप्राप्योवास्वगृहेभवेत् १३ निर्व्रणश्चसमोक्तव्यएषधर्मःसनातनः ॥ तस्माद्धर्मेणयोद्धव्यमितिस्वायंभुवोऽब्रवीत् १४ सत्सुनित्यःसतांधर्मस्तमास्थायननाशयेत् ॥ योवैजयत्यधर्मेणक्षत्रियोधर्मसंगरः १५ आत्मानमात्मनाहंतिपापोनिकृतिजीवनः ॥ कर्मचैतदसाधूनामसाधून्साधुनाजयेत् १६

तिपृच्छति अथेति १ जिगीषुर्द्विविधःअनुपस्थितपरिपंथी उपस्थितपरिपंथीच तत्राद्यस्यधर्ममाह ससहायइति योऽकस्माद्राष्ट्रंपरकीयमागत्याऽहंवोरक्षिष्यामीत्यादिब्रूयात्सआद्योविजिगीषमाणइत्यर्थः २ । ३ अशस्त्रमिति त्राणायाप्यसमर्थंपरंचार्तविमन्यमानंक्षत्रियमशस्त्रंज्ञात्वाऽपरोहीनोऽपिशस्त्रंगृह्णात्यतःशस्त्रबलेनैवजितान्ग्रामादीनुल्लंघ्यततदधिपतिमुखेप्यातव्यं जितंराष्ट्रंसामादिनावशीकर्तव्यमितिशेषः ५ । ६ । ७ । ८ । ९ । १० लिप्तोविषदिग्धःइषुर्महान्बाणः कर्णीकर्णसदृशप्रकटकोबाणः ११ । १२ । १३ । १४ । १५ । एतन्निकृत्याजयरूपं असाधूनपि १६



१७ । १८ । १९ । २० महाद्दतिर्महांश्चर्मकोशःआध्मातोवायुनापूरितइवातिपुष्टः सुकृतेसत्कर्मणि २१ । २२ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपे पंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ ७ ॥ ॥ नाधर्मेणेति १ । २ । ३ विप्रणयेद्दासोऽस्मीतिवदेतितावच्छिक्षयेत् ततःसंवत्सरादूर्ध्वंसपवाऽप्युवप्रपितलोजातोजेतुःपुत्रएवमवेततश्चमोक्तव्यइत्यर्थः ॥ विक्रमाहृताकन्यात्वमस्मान्वृणीष्वेतिअन्यंचेतिप्रष्टव्याऽन्यार्थिनीनस्याप्येतिभावः । सहसानिकृत्याआहृतंदासदास्यादिकंवत्सरांतेप्रत्यर्पणीयंतद्दास्वीयमेवतस्मैदत्तंभवति ५

धर्मेणनिधनंश्रेयोनजयःपापकर्मणा ॥ नाधर्मश्चरितोराजन्सद्यःफलतिगौरिव १७ मूलानिचप्रशाखाश्चदहन्समधिगच्छति ॥ पापेनकर्मणावित्तंलब्ध्वापापःप्रहृष्यति १८ सवर्धमानःस्तेयेनपापःपापेप्रसज्जति ॥ नधर्मोस्तीतिमन्वानःशुचीनवहसन्निव १९ अश्रद्दधानश्चभवेद्विनाशमुपगच्छति ॥ संबद्धोवारुणैःपाशैरमर्त्यइवमन्यते २० महादृतिरिवाध्मातःसुकृतेनैववर्तते ॥ ततःसमूलोह्रियतेनदीकूलादिवद्रुमः २१ अथैनमभिनिंदंतिभिन्नंकुंभमिवाश्मनि ॥ तस्माद्धर्मेणविजयंकोशंलिप्सेतभूमिपः २२ ॥ इतिश्रीम०शां०रा० विजिगीषमाणवृत्तेपंचनवतितमोऽध्यायः ॥ ९५ ॥ भीष्मउवाच ॥ नाधर्मेणमहींजेतुंलिप्सेतजगतीपतिः ॥ अधर्मविजयंलब्ध्वाकोऽनुमन्येतभूमिपः १ अधर्मयुक्तोविजयोह्यध्रुवोऽस्वर्ग्यएवच ॥ सादयत्येषराजानंमहींचभरतर्षभ २ विशीर्णकवचंचैवतवास्मीतिचवादिनम् ॥ कृतांजलिंन्यस्तशस्त्रंगृहीत्वानविहिंसयेत् ३ बलेनविजितोयश्चनतंयुध्येतभूमिपः ॥ संवत्सरंविप्रणयेत्तस्माज्जातःपुनर्भवेत् ४ नार्वाक्संवत्सरात्कन्याप्रष्टव्याविक्रमाहृता ॥ एवमेवधनंसर्वंयच्चान्यत्सहसाऽऽहृतं ५ नतुवध्यधनंतिष्ठेत्पिबेयुर्ब्राह्मणाःपयः ॥ युंजीरन्वाप्यनडुहःक्षंतव्यंवातदाभवेत् ६ राज्ञाराजैवयोद्धव्यस्तथाधर्मोविधीयते ॥ नान्योराजानमभ्यस्येदराजन्यःकथंचन ७ अनीकयोःसंहतयोर्यदीयाद्ब्राह्मणोंतरा ॥ शांतिमिच्छन्नुभयतोनयोद्धव्यंतदाभवेत् ८ मर्यादांशाश्वतींभिंद्याद्ब्राह्मणंयोभिलंघयेत् ॥ अथचेल्लंघयेदेवमर्यादांक्षत्रियब्रुवः ९ असंख्येयस्तदूर्ध्वंस्यादनादेयश्चसंसदि ॥ यस्तुधर्मविलोपेनमर्यादाभेदनेनच १० तांवृत्तिंनानुवर्तेतविजिगीषुर्महीपतिः ॥ धर्मलब्धाद्धिविजयाल्लाभःकोऽभ्यधिकोभवेत् ११ सहसाऽनार्यभूतानिक्षिप्रमेवप्रसादयेत् ॥ सांत्वेनभोगदानेनसराज्ञांपरमोनयः १२ भुज्यमानाह्ययोगेनस्वराष्ट्रादभितापिताः ॥ अमित्रास्तमुपासीरन्व्यसनौघप्रतीक्षिणः १३ अमित्रोपग्रहंचास्यतेकुर्युःक्षिप्रमापदि ॥ संतुष्टाःसर्वतोराजन्राजव्यसनकांक्षिणः १४ नामित्रोविनिकर्तव्योनातिच्छेद्यःकथंचन ॥ जीवितंह्यप्यतिच्छिन्नःसंत्यजेच्चकदाचन १५ अल्पेनापिचसंयुक्तस्तुष्यत्येवनराधिपः ॥ शुद्धंजीवितमेवापिताद्दशोबहुमन्यते १६ यस्यस्फीतोजनपदःसंपन्नःप्रियराजकः ॥ संतुष्टभृत्यसचिवोदृढमूलःसपार्थिवः १७

 वध्याश्चोरादयःतद्धनंनतिष्ठेदपितुव्ययितव्यमेव वध्योऽप्यचोरश्चेत्तदाक्षंतव्यं पूर्ववत्तद्धनंप्रतिदेयमित्यर्थः ६ अभ्यस्येदभिमुखंशस्त्रंक्षिपेत् ७ । ८ क्षत्रियब्रुवःक्षत्रियाधमः । ९ असंख्येयःक्षत्रियेषुनगणनीयः जातिबाह्यःकर्तव्यइत्यर्थः १० । ११ अनार्यभूतानिजयादीनिकृत्वाप्रसादयेत् १२ अयोगेनासांत्वेन १३ अमित्रोपग्रहंतद्वैरिणामानुकूल्यं तेबलाद्भुज्यमानाः १४ विनिकर्तव्योनिकृत्यावंचयितव्यः १५ । १६ । १७

१८।१९ भूमीति धान्यान्यपिशत्रोर्हर्तव्यानीतिकिमुस्वर्णादिकमितिभावः २० अग्निशेषंयज्ञांगभूतंहविः भोजनंसिद्धान्नं एतन्नहर्तव्यमित्यर्थः विप्रकृतोवंचितः २१।२२ उच्चेति राज्ञासर्वंहर्तव्य मित्यर्थः २३। २४ ॥ इतिशांतिप०रा०नीलकंठीये भारतभाव०षण्णवतितमोऽध्यायः ॥ ९६ ॥ ७ ॥ क्षत्रेति महाजनंकटकाश्रितंनैश्यादिजनम् १ केनतद्वधप्रायश्चित्तंकृत्वापुण्यफलमाप्नोती

ऋत्विक्पुरोहिताचार्यायेचान्येश्रुतसत्तमाः ॥ पूजार्हाःपूजितायस्यसवैलोकविदुच्यते १८ एतेनैवचवृत्तेनमहींप्रापसुरोत्तमः ॥ अनेनचैंद्रविषयंविजिगीषंतिपार्थिवाः १९ भूमिवर्जंधनंराजाजित्वाराजन्महाहवे ॥ अपिचान्नौषधीःशश्वदाजहारप्रतर्दनः २० अग्निहोत्राग्निशेषंचहविर्भोजनमेवच ॥ आजहारदिवोदासस्ततोविप्रकृतोऽभवत् २१ सराजकानिराष्ट्राणिनाभागोदक्षिणांददौ ॥ अन्यत्रश्रोत्रियस्वाच्चतापसार्थाच्चभारत २२ उच्चावचानिवित्तानिधर्मज्ञानांयुधिष्ठिर ॥ आसन्राज्ञांपुराणानांसर्वंतन्ममरोचते २३ सर्वविद्यातिरेकेणजयमिच्छेन्महीपतिः ॥ नमायायानदंभेनयइच्छेद्भूतिमात्मनः २४ ॥ इतिश्रीमहाभारतेशां० रा० विजिगीषमाणवृत्तेषण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ युधिष्ठिरउवाच ॥ क्षत्रधर्मोद्विपापीयान्नधर्मोस्तिनराधिप ॥ अपयानेनयुद्धेनराजाहंतिमहाजनम् १ अथस्मकर्मणाकेनलोकान्जयतिपार्थिवः ॥ विद्वन्जिज्ञासमानायप्रब्रूहिभरतर्षभ २ ॥ भीष्मउवाच ॥ निग्रहेणचपापानांसाधूनांसंग्रहेणच ॥ यज्ञैर्दानैश्चराजानोभवंतिशुचयोऽमलाः ३ उपरुंधंतिराजानोभूतानिविजयार्थिनः ॥ तएवविजयंप्राप्यवर्धयंतिपुनःप्रजाः ४ अपविध्यंतिपापानिदानयज्ञतपोबलैः ॥ अनुग्रहायभूतानांपुण्यमेषांविवर्धते ५ यथैवक्षेत्रनिर्याताानिर्यातंक्षेत्रमेवच ॥ हिनस्तिधान्यंकक्षंचनचधान्यंविनश्यति ६ एवंशस्त्राणिमुंचंतोघ्नंतिवध्याननेकधा ॥ तस्यैषानिष्कृतिःकृत्स्नाभूतानांभावनंपुनः ७ योभूतानिधनाक्रांत्यावधात्क्लेशाच्चरक्षति ॥ दस्युभ्यःप्राणदानात्सधनदःसुखदोविराट् ८ ससर्वयज्ञैरीजानोराजास्थाभयदक्षिणैः ॥ अनुभूयेहभद्राणिप्राप्नोतींद्रसलोकताम् ९ ब्राह्मणार्थेसमुत्पन्नेयोऽरिभिःसृत्ययुध्यति ॥ आत्मानंयूपमुत्सृज्यसयज्ञोऽनंतदक्षिणः १० अभीतोविकिरन्शत्रून्प्रतिगृह्यशरांस्तथा ॥ नतस्मात्रिदशाःश्रेयोभुविपश्यंतिकिंचन ११ तस्यशस्त्राणियावंतित्वचंभिंदंतिसंयुगे ॥ तावतःसोश्नुतेलोकान्सर्वकामदुहोऽक्षयान् १२ यदस्यरुधिरंगात्रादाहवेसंप्रवर्तते ॥ सहतेनैवपापेनसर्वपापैःप्रमुच्यते १३ यानिदुःखानिसहतेक्षत्रियोयुधितापितः ॥ तेनतेनतपोभूयइतिधर्मविदोविदुः १४ पृष्ठतोभीरवःसंख्येवर्ततेधर्मपूरुषाः ॥ शूराच्छरणमिच्छंतःपर्जन्यादिवजीवनम् १५ यदिशूरस्तथाक्षेमंप्रतिरक्षेद्यथाऽभये ॥ प्रतिरूपंजनंकुर्यान्नचेत्तद्वर्ततेतथा १६ यदितेकृतमाज्ञायनमस्कुर्युःसदैवतम् ॥ युक्तंन्याय्यंचकुर्युस्तेनचतद्वर्ततेतथा १७

स्यर्थः २ उत्तरमाह निग्रहेणेति ३ उपरुंधंतिपीडयंति ४ अपविध्यंतिदूरीकुर्वंति ५ निर्यातातृणाद्यपनयेनशोधकः । निर्दातेतिपाठेदेशशोधनेइत्यस्यरूपं कक्षंतृणम् ६ भावनंवर्धनम् ७।८।९ अत्मानंदेहयूपंयज्ञस्तंभमुत्सृज्योच्छ्रित्य यज्ञोयुद्धयज्ञः १०।११। १२ पापेनदुःखेन १३।१४। १५ यदीति रक्षित्वाप्रतिरूपंयुद्धाभिमुखंजनंचेन्नकुर्यात्किंतर्हिस्वयंपुरतोभूत्वार्ताश्चेद्यद्यतःकुर्यात्तर्हितत्तथापूर्ववत्पुण्यंवर्ततेनान्यथेत्यर्थः १६ यदितेरक्षितारःसंवत्सरंनमस्कुर्युःअथचन्याय्यंयुद्धंचपराह्यस्यकुर्युस्तदपितथान १७



अनीकवेलायामनीकानांसंघट्टकाले अभिपतंत्येके प्रत्यऽपिचनेत्यन्यइत्यर्थात् १८ तदेवाह पततीति विषमेप्राणसंकटेत्यजेत् देहमितिशेषः १९।२० तेभ्यस्तस्मै २१ तस्यदंडमाह तंहन्युरिति तृणमयेकटेवत्ध्वादहनंकटाग्निनादाहः २२ । २३ । २४ शौंटीराणांशूरत्वाभिमानवतां २५ निष्टनन्काऽक्रंदंकुर्वन् पूतिर्दुर्गंधिः अमात्यान्पुत्रान् २६ । २७ । २८ । २९ । ३० । ३१ । ३२

पुरुषाणांसमानानांदृश्यतेमहदंतरम् ॥ संग्रामेऽनीकवेलायामुत्क्रुष्टेऽभिपतंत्युत १८ पतत्यभिमुखःशूरःपरान्भीरुःपलायते ॥ आस्थायस्वर्ग्यमध्वानंसहायान्विषमेत्यजेत् १९ मास्मतांस्तादृशांस्तातजनिष्ठाःपुरुषाधमान् ॥ येसहायान्रणेहित्वास्वस्तिमंतोगृहान्ययुः २० अस्वस्तितेभ्यःकुर्वंतिदेवाइंद्रपुरोगमाः ॥ त्यागेनयःसहायानांस्वान्प्राणांस्त्रातुमिच्छति २१ तंहन्युःकाष्ठलोष्टैर्वादहेयुर्वाकटाग्निना ॥ पशुवन्मारयेयुर्वाक्षत्रियायेस्युरीदृशाः २२ अधर्मःक्षत्रियस्यैषयच्छय्यामरणंभवेत् ॥ विसृजन्श्लेष्ममूत्राणिकृपणंपरिदेवयन् २३ अविक्षतेनदेहेनप्रलयंयोऽधिगच्छति ॥ क्षत्रियोनास्यतत्कर्मप्रशंसंतिपुराविदः २४ नगृहेमरणंतातक्षत्रियाणांप्रशस्यते ॥ शौटीराणामशौटीर्यमधर्म्यंकृपणंचतत् २५ इदंदुःखमहत्कष्टंपापीयइतिनिष्टनन् ॥ प्रतिध्वस्तमुखःपूतिरमात्याननुशोचयन् २६ अरोगाणांस्पृहयतेमुहुर्मृत्युमपीच्छति ॥ वीरोदृप्तोऽभिमानीचनेदृशंमृत्युमर्हति २७ रणेषुकदनंकृत्वाज्ञातिभिःपरिवारितः ॥ तीक्ष्णैःशस्त्रैरभिक्लिष्टःक्षत्रियोमृत्युमर्हति २८ शूरोहिकाममन्युभ्यामाविष्टोयुध्यतेभृशम् ॥ हन्यमानानिगात्राणिपरैर्नैवावबुध्यते २९ ससंख्येनिधनंप्राप्यप्रशस्तंलोकपूजितम् ॥ स्वधर्मंविपुलंप्राप्यशक्रस्यैतिसलोकताम् ३० सर्वोपायैरणमुखमातिष्ठंस्त्यक्तजीवितः ॥ प्राप्नोतींद्रस्यसालोक्यंशूरःपृष्ठमदर्शयन् ३१ यत्रयत्रहतःशूरःशत्रुभिःपरिवारितः ॥ अक्षयान्लभतेलोकान्यदिदैन्यंनसेवते ३२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिसप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ ७ ॥ युधिष्ठिरउवाच ॥ ॥ केलोकायुध्यमानानांशूराणामनिवर्तिनाम् ॥ भवंतिनिधनंप्राप्यतन्मेब्रूहिपितामह १ ॥ ॥ भीष्मउवाच ॥ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ अंबरीषस्यसंवादमिंद्रस्यचयुधिष्ठिर २ अंबरीषोहिनाभागिःस्वर्गंगत्वासुदुर्लभम् ॥ ददर्शसुरलोकस्थंशक्रेणसचिवंसह ३ सर्वतेजोमयंदिव्यंविमानवरमास्थितम् ॥ उपर्युपरिगच्छंतंस्वंवैसेनापतिंप्रभुम् ४ सदृष्ट्वोपरिगच्छंतंसेनापतिमुदारधीः ॥ ऋद्धिंदृष्ट्वासुदेवस्यविस्मितःप्राहवासवम् ५ अंबरीषउवाच ॥ ॥ सागरांतांमहींकृत्स्नामनुशास्ययथाविधि ॥ चातुर्वर्ण्येयथाशास्त्रंप्रवृत्तोधर्मकाम्यया ६ ब्रह्मचर्येणघोरेणगुर्वाचारेणसेवया ॥ वेदानधीत्यधर्मेणराजशास्त्रंचकेवलम् ७ अतिथीनन्नपानेनपितॄंश्चस्वधयातथा ॥ ऋषीन्स्वाध्यायदीक्षाभिर्देवान्यज्ञैरनुत्तमैः ८ क्षत्रधर्मेस्थितोभूत्वायथाशास्त्रंयथाविधि ॥ उदीक्षमाणःपृतनांजयामियुधिवासव ९ देवराजसुदेवोऽयंममसेनापतिःपुरा ॥ आसीद्योधःप्रशांतात्मासोऽयंकस्मादतीवमाम् १०

॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेसप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ ७ ॥ ॥ अक्षयाँल्लभतेलोकानित्युक्तंतत्प्रश्नपूर्वकंविवृणोति केइति १ । २ नाभागिर्नाभागपुत्रः शक्रेणसहस्थितंसचिवं ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ यश्चान्योक्षत्रियोऽपियुध्यतेनरस्तस्याप्ययंयज्ञोऽस्ति यश्चान्योविद्यतेनवइतिपाठेयोयस्मादन्योयज्ञोवोयुष्माकंक्षत्रियाणांनविद्यतइत्यर्थः १२ । १३ । १४ । १५ । १६ निशिताः

अनेनक्रतुभिर्मुख्यैर्नेष्टंनापिद्विजातयः ॥ तर्पिताविधिवच्छक्रसोऽयंकस्मादतीवमाम् ११ ॥ ॥ इंद्रउवाच ॥ ॥ एतस्यविततस्तातसुदेवस्यबभूवह ॥ संग्राम यज्ञःसुमहान्यश्चान्योयुद्ध्यतेनरः १२ सन्नद्धोदीक्षितःसर्वोयोधःप्राप्यचमूमुखम् ॥ युद्धयज्ञाधिकारस्थोभवतीतिविनिश्चयः १३ ॥ ॥ अंबरीषउवाच ॥ ॥ कानियज्ञेहवींष्यस्मिन्किमाज्यंकाचदक्षिणा ॥ ऋत्विजश्चात्रकेप्रोक्तास्तन्मेब्रूहिशतक्रतो १४ ॥ ॥ इंद्रउवाच ॥ ॥ ऋत्विजःकुंजरास्तत्रवाजिनोऽध्वर्यवस्तथा ॥ हवींषिपरमांसानिरुधिरंत्वाज्यमुच्यते १५ शृगालगृध्रकाकोलाःसदस्यास्तत्रपत्रिणः ॥ आज्यशेषंपिबंत्येतेहविःप्राश्नंतिचाध्वरे १६ प्रासतोमरसंघाताःखड्गशक्तिपरश्वधाः ॥ ज्वलंतोनिशिताःपीताःस्रुचस्तस्याथसत्रिणः १७ चापवेगायतस्तीक्ष्णःपरकायावभेदनः ॥ ऋजुःसुनिशितःपीतःसायकश्चस्रुवोमहान् १८ द्वीपिचर्मावनद्धश्चनागदंतकृतत्सरुः ॥ हस्तिहस्तगरःखड्गःस्फिग्भवेत्तस्यसंयुगे १९ ज्वलितैर्निशितैःप्रासशक्त्यृष्टिसपरश्वधैः ॥ शैक्यायसमयैस्तीक्ष्णैरभिघातोभवेद्वसु २० संख्यासमयविस्तीर्णमभिजातोद्भवंबहु ॥ आवेगाद्यत्तुरुधिरंसंग्रामेस्रवतेभुवि २१ साऽस्यपूर्णाहुतिर्होमेसमृद्धासर्वकामधुक् ॥ छिंधिभिंधीतियःशब्दःश्रूयतेवाहिनीमुखे २२ सामानिसामगास्तस्यगायंतियमसादने ॥ हविर्धानंतुतस्याहुःपरेषांवाहिनीमुखम् २३ कुंजराणांहयानांचवर्मिणांचसमुच्चयः ॥ अग्निःश्येनचितोनामसचयज्ञेविधीयते २४ उत्तिष्ठतेकबंधोऽत्रसहस्रेनिहतेतुयः ॥ सयूपस्तस्यशूरस्यखादिरोष्टास्रिरुच्यते २५ इडोपहूताःक्रोशंतिकुंजरास्त्वंकुशेरिताः ॥ व्याघुष्टतलनादेनवषट्कारेणपार्थिव २६ उद्गातातत्रसंग्रामेत्रिसामादुंदुभिर्नृप ॥ ब्रह्मस्वेह्रियमाणेतुत्यक्त्वायुद्धेप्रियांतनुम् २७ आत्मानंयूपमुत्सृज्यसयज्ञोऽनंतदक्षिणः ॥ भर्तुरर्थेचयःशूरोविक्रमेद्वाहिनीमुखे २८ नभयाद्विनिवर्तेततस्यलोकायथामम ॥ नीलचर्मावृतैःखड्गैर्बाहुभिःपरिघोपमैः २९ यस्यवेदिरुपस्तीर्णातस्यलोकायथामम ॥ यस्तुनापेक्षतेकंचित्सहायंविजयेस्थितः ३० विगाह्यवाहिनीमध्यंतस्यलोकायथामम ॥ यस्यशोणितसंघाताभेरीमंडूककच्छपा ३१ वीरास्थिशर्करादुर्गामांसशोणितकर्दमा ॥ असिचर्मप्लवाघोराकेशशैवलशाद्वला ३२ अश्वनागरथैश्चैवसंछिन्नैःकृतसंक्रमा ॥ पताकाध्वजवानीराहतवारणवाहिनी ३३ शोणितोदासुसंपूर्णादुस्तरापारगैर्नरैः ॥ हतनागमहानक्रापरलोकवहाशिवा ३४ ऋष्टिखड्गमहानौकागृध्रकंकबलप्लवा ॥ पुरुषादानुचरिताभीरूणांकश्मलावहा ३५ नदीयोधस्यसंग्रामेतदस्यावभृथंस्मृतम् ॥ वेदिर्यस्यत्वमित्राणांशिरोभ्यश्चप्रकीर्यते ३६ अश्वस्कंधैर्गजस्कंधैस्तस्यलोकायथामम ॥ पत्नीशालाकृतायस्यपरेषांवाहिनीमुखम् ३७

शाणघृष्टाः पीताःक्षारपानीयेनसंभाविताः १७ । १८ । १९ शैक्यायसमयैःसर्वलोहमयैः वसुयत्किंचिदग्नियंद्रव्यं २० । २१ । २२ हविर्धानंहविषःस्थापनस्थलं २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० शोणितसंघाताशोणितौघमयी ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेअष्टनवतितमोऽध्यायः ॥ ९८ ॥

हविर्धानंस्ववाहिन्यास्तदस्याहुर्मनीषिणः ॥ सदस्यादक्षिणायोधाआग्नीध्रश्चोत्तरांदिशम् ३८ शत्रुसेनाकलत्रस्यसर्वलोकानदूरतः ॥ यदातूभयतोव्यूहेभवत्याकाशमग्रतः ३९ साऽस्यवेदिस्तदायज्ञैर्नित्यंवेदास्त्रयोऽग्नयः ॥ यस्तुयोधःपरावृत्तःसंत्रस्तोहन्यतेपरैः ४० अप्रतिष्ठःसनरकंयातिनास्त्यत्रसंशयः ॥ यस्यशोणितवेगेनवेदिःस्यात्संपरिप्लुता ४१ केशमांसास्थिसंपूर्णासगच्छेत्परमांगतिम् ॥ यस्तुसेनापतिंहत्वातद्यानमधिरोहति ४२ सविष्णुविक्रमक्रामीबृहस्पतिसमःप्रभुः ॥ नायकंतत्कुमारंवायोवास्यात्तत्रपूजितः ४३ जीवग्राहंप्रगृह्णातितस्यलोकायथामम ॥ आहवेतुहतंशूरंनशोचेतकथंचन ४४ अशोच्योहिहतःशूरःस्वर्गलोकेमहीयते ॥ नह्यन्नंनोदकंतस्यनस्नानंनाप्यशौचकम् ४५ हतस्यकर्तुमिच्छंतितस्यलोकाञ्शृणुष्वमे ॥ वराप्सरःसहस्राणिशूरमायोधनेहतम् ४६ त्वरमाणाभिधावंतिममभर्ताभवेदिति ॥ एतत्तपश्चपुण्यंचधर्मश्चैवसनातनः ४७ चत्वारश्चाश्रमास्तस्ययोयुद्धमनुपालयेत् ॥ वृद्धबालौनहंतव्यौनचस्त्रीनैवपृष्ठतः ४८ तृणपूर्णमुखश्चैवतवास्मीतिचयोवदेत् ॥ जंभंवृत्रंबलंपाकंशतमायंविरोचनम् ४९ दुर्वार्यंचैवनमुचिंनैकमायंचशंबरम् ॥ विप्रचित्तिंचदैतेयंदनोःपुत्रांश्चसर्वशः ५० प्रह्लादंचनिहत्याजौततोदेवाधिपोऽभवम् ॥ भीष्मउवाच ॥ इत्येतच्छक्रवचनंनिशम्यप्रतिगृह्यच ॥ योधानामात्मनःसिद्धिमंबरीषोऽभिपन्नवान् ५१ ॥ इतिश्रीमहाभारतेशांतिप०राजध०इंद्रांबरीषसंवादेअष्टनवतितमोऽध्यायः ॥ ९८ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रतर्दनोमैथिलश्चसंग्रामंयत्रचक्रतुः १ यज्ञोपवीतीसंग्रामेजनकोमैथिलोयथा ॥ योधानुद्धर्षयामासतन्निबोधयुधिष्ठिर २ जनकोमैथिलोराजामहात्मासर्वतत्त्ववित् ॥ योधान्स्वान्दर्शयामासस्वर्गंनरकमेवच ३ अभीरूणामिमेलोकाभास्वंतोहंतपश्यत ॥ पूर्णागंधर्वकन्याभिःसर्वकामदुहोऽक्षयाः ४ इमेपलायमानानांनरकाःप्रत्युपस्थिताः ॥ अकीर्तिःशाश्वतीचैवपतितव्यमनंतरम् ५ तान्दृष्ट्वाऽरीन्विजयतभूत्वासंत्यागबुद्धयः ॥ नरकस्याप्रतिष्ठस्यमाभूतवशवर्तिनः ६ त्यागमूलंहिशूराणांस्वर्गद्वारमनुत्तमम् ॥ इत्युक्तास्तेनृपतिनायोधाःपरपुरंजय ७ अजयंतरणेशत्रून्हर्षयंतोनरेश्वरम् ॥ तस्मादात्मवतानित्यंस्थातव्यंरणमूर्धनि ८ गजानांरथिनोमध्येरथानामनुसादिनः ॥ सादिनामंतरेस्थाप्यंपादातमपिदंशितम् ९ यएवंव्यूहतेराजासनित्यंजयतिद्विषः ॥ तस्मादेवंविधातव्यंनित्यमेवयुधिष्ठिर १० सर्वेस्वर्गतिमिच्छंतिसुयुद्धेनातिमन्यवः ॥ क्षोभयेयुरनीकानिसागरंमकरायथा ११ हर्षयेयुर्विषण्णांश्चव्यवस्थाप्यपरस्परम् ॥ जितांचभूमिंरक्षेतभग्नान्नात्यनुसारयेत् १२ पुनरावर्तमानानांनिराशानांचजीविते ॥ वेगःसुदुःसहोराजंस्तस्मान्नात्यनुसारयेत् १३

अत्रशूरप्रोत्साहनेविषये मैथिलोजनकः १ यज्ञोपवीतीत्यनेनसंग्रामस्ययज्ञत्वात्तत्रप्रायत्येनभाव्यमितिदर्शितम् २ दर्शयामासयोगबलेन ३ । ४ । ५ । ६ । ७ । ८ गजानांमध्येरथिनः रथिनांमध्येसादिनः सादिनांमध्येपदातं ९ । १० । ११ नात्यनुसारयेन्नातिद्रावयेत्पराहृत्तिभयात् १२ तदेवाहपुनरिति १३

१४ । १५ । १६ । १७ । १८ ॥ इतिशांतिपर्वणिराजध॰नीलकंठीयेभारतभावदीपेनवनवतितमोऽध्यायः ॥ ९९ ॥ ॥ ७ ॥ ॥ यथेति नयंतिमीतानपिराजभयप्रदर्शनेनपुरस्कुर्वंति १ स त्यंक्षत्रधर्मः उपपत्तिर्मरणनिश्चयः साध्वाचारःशिष्टाचारः औपयिकउक्तमयप्रदर्शनजाप्रवृत्तिः एतैश्चतुर्भिर्हेतुभिर्धर्मःस्थितःस्थिरोभवति २ सिद्धार्थान्सत्यःफलात् तेषांचयेऽर्थधर्मयोर्निर्मर्या

॥८३॥ नहिप्रहर्तुमिच्छंतिशूराःप्रद्रवतोभृशम् ॥ तस्मात्पलायमानानांकुर्यान्नात्यनुसारणम् १४ चराणामचराह्यन्नमदंष्ट्रादंष्ट्रिणामपि ॥ आपःपिपासतामन्नमन्नंशूर
स्यकातराः १५ समानपृष्ठोदरपाणिपादाःपराभवंभीरवोवैव्रजंति ॥ अतोभयार्ताःप्रणिपत्यभूयःकृत्वांजलीनुपतिष्ठंतिशूरान् १६ शूरबाहुषुलोकोऽयंलंबतेपुत्र ॥१००॥
वत्सदा ॥ तस्मात्सर्वास्ववस्थासुशूरःसंमानमर्हति १७ नहिशौर्यात्परंकिंचित्त्रिषुलोकेषुविद्यते ॥ शूरःसर्वंपालयतिसर्वंशूरेप्रतिष्ठितम् १८ ॥ इतिश्रीमहाभारते
शांतिपर्वणिराजधर्मानुशासनपर्वणिविजिगीषमाणवृत्तेनवनवतितमोऽध्यायः ॥ ९९ ॥ युधिष्ठिरउवाच ॥ यथाजयार्थिनःसेनांनयंतिभरतर्षभ ॥ ईषद्धर्मंप्रपी
डचापितन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ सत्येनहिस्थितोधर्मउपपत्त्यातथाऽपरे ॥ साध्वाचारतयाकेचित्तथैवौपयिकादपि २ उपायधर्मान्वक्ष्यामिसि
द्धार्थानर्थधर्मयोः ॥ निर्मर्यादादस्यवस्तुभवंतिपरिपंथिनः ३ तेषांप्रतिविघातार्थंप्रवक्ष्याम्यथनैगमम् ॥ कार्याणांसर्वसिद्ध्यर्थंतानुपायान्निबोधमे ४ उभेप्रज्ञेवे
दितव्येऋज्वीवक्राचभारत ॥ जानन्वक्रांनसेवेतप्रतिबाधेतचागताम् ५ अमित्राएवराजानंभेदेनोपचरंत्युत ॥ तांराजानिकृतिंजानन्यथाऽमित्रान्प्रबाधते ६
गजानांपार्थवर्माणिगोवृषाजगराणिच ॥ शल्यकंटकलोहानितनुत्रचमराणिच ७ सितपीतानिशस्त्राणिसन्नाहाःपीतलोहिताः ॥ नानारंजनरक्ताःस्युःपताकाः
केतवश्चह ८ ऋष्टयस्तोमराःखड्गानिशिताश्चपरश्वधाः ॥ फलकान्यथचर्माणिप्रतिकल्प्यान्यनेकशः ९ अभिनीतानिशस्त्राणियोधाश्चकृतनिश्चयाः ॥ चैत्र्यांवा
मार्गशीर्ष्यांवासेनायोगःप्रशस्यते १० पक्कसस्याहिपृथिवीभवत्यंबुमतीतदा ॥ नैवातिशीतोनात्युष्णःकालोभवतिभारत ११ तस्मात्तदायोजयेतपरेषांव्यसनेऽ
थवा ॥ एतेहियोगाःसेनायाःप्रशस्ताःपरबाधने १२ जलवांस्तृणवान्मार्गःसमोगम्यःप्रशस्यते ॥ चारैःसुविदिताभ्यासःकुशलैर्वनगोचरैः १३ नह्यरण्येनशक्ये
तगंतुंमृगगणैरिव ॥ तस्मात्सेनासुतानेवयोजयंतिजयार्थिनः १४ अग्रतःपुरुषानीकंशक्तंचापिकुलोद्भवम् ॥ आवासस्तोयवान्दुर्गःपर्याकाशःप्रशस्यते १५
परेषामुपसर्पाणांप्रतिषेधस्तथाभवेत् ॥ आकाशात्तुवनाभ्यासंमन्यंतेगुणवत्तरम् १६ बहुभिर्गुणजातैश्चयेयुद्धकुशलाजनाः ॥ उपन्यासोभवेत्तत्रबलानांनातिदूर
तः १७ उपन्यासावतरणंपदातीनांचगूहनम् ॥ अथशत्रुप्रतीघातमापदर्थंपरायणम् १८

दास्तेपरिपंथिनोनाशकाभवंति ३ तेषांदस्यूनां नैगमंवेदोक्तमुपायं ४ प्रतीति वक्रांवक्रयैवनाशयेत् ५ अमित्रानिवर्तानिकृतिंप्रबाधतेबाधेत ६ गजानांवर्माणिबाणघातत्राणानि गवादीनांश ॥८३॥
ल्यादीनि७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ उपन्यासंन्यासस्यधननिक्षेपस्यसमीपेऽवतरणंपदातीनांगूहनंचन्यासस्यैवकार्यं । उपास्याःसवितरणमितिपाठे सदानं
यथास्यात्तथाजनाउपास्याइतिपूर्वान्वयि पदातीनांगूहनंपरवंचनार्थं अथनिलीयाऽऽगतशत्रुप्रतिघातंकुर्यात् १८

२५ । २६ । २७
१९ । २० अमर्यादांसेतुप्राकारादिहीनां २१ । २२ । २३ सुदिनेषुवृष्टिवर्जितदिनेषु २४ प्रसंख्यायसम्यग्विचार्य तिथौनक्षत्रेचपूजितआशीर्भिर्योजितः २५ । २६ । २७
उपन्यासात्सुरुंगादिगुप्तोपायात् बहिस्तृणाद्यर्थंचरतोबहिश्चरानल्पान् उपन्यासान्तृणाद्याहर्तॄन्हन्‌ २८ राजद्वारेऽमात्यद्वारेवायेवर्गिणःसमुदायाधिपतयस्तान्नाभिघातयेदितिप्रपूर्वेणसंबंधः

पूर्वंपूर्वंज्यायएषांसप्त्रि
सप्तर्षीन्पृष्ठतःकृत्वायुध्येयुरचलाइव ॥ अनेनविधिनाशत्रून्जिगीषेतापिदुर्जयान् १९ यतोवायुर्यतःसूर्योयतःशुक्रस्ततोजयः ॥ पूर्वंपूर्वंज्यायएषांसन्नि
पातेयुधिष्ठिर २० अकर्दमामनुदकाममर्यादामलोष्टकाम् ॥ अश्वभूमिंप्रशंसंतियेयुद्धकुशलाजनाः २१ अपंकागर्तरहितारथभूमिःप्रशस्यते ॥ नीचद्रुमामहाक
क्षासोदकाहस्तियोधिनां २२ बहुदुर्गामहाकक्षावेणुवेत्रसमाकुला ॥ पदातीनांक्षमाभूमिःपर्वतोऽपवनानिच २३ पदातिबहुलासेनादृढाभवतिभारत ॥ रथाश्व
बहुलासेनासुदिनेषुप्रशस्यते २४ पदातिनागबहुलाप्रवृट्कालेप्रशस्यते ॥ गुणानेतान्प्रसंख्यायदेशकालौप्रयोजयेत् ॥ एवंसंचिंत्ययोयातितिथिनक्षत्रपूजि
तः २५ विजयंलभतेनित्यंसेनांसम्यक्प्रयोजयन् ॥ प्रसुप्तांस्तृषितान्श्रांतान्प्रकीर्णान्नाभिघातयेत् २६ मोक्षेप्रयाणेचलनेपानभोजनकालयोः ॥ अतिक्षिता
न्व्यतिक्षिप्तान्निहतान्प्रतनूकृतान् २७ अविश्रब्धान्कृतारंभानुपन्यासात्प्रतापितान् ॥ बहिश्चरानुपन्यासान्कृतवेश्मानुसारिणः २८ पारंपर्यागतेद्वारेयेकें
चिदनुवर्तिनः ॥ परिचर्यावतोद्वारेयेचकेचनवर्गिणः २९ अनीकंयेविभिंदंतिभिन्नंसंस्थापयंतिच ॥ समानाशनपानास्तेकार्याद्विगुणवेतनाः ३० दशा
धिपतयःकार्याःशताधिपतयस्तथा ॥ ततःसहस्राधिपतिंकुर्याच्छूरमतंद्रितम् ३१ यथामुख्यान्सन्निपात्यवक्तव्याःसंशयामहे ॥ विजयार्थंहिसंग्रामेनत्य
क्ष्यामःपरस्परम् ३२ इहैवतेनिवर्तंतांयेचकेचनभीरवः ॥ येघातयेयुःप्रवरंकुर्वाणास्तुमुलंप्रति ३३ नसन्निपातेप्रदरंवधंवाकुर्युरीदृशाः ॥ आत्मानंचस्वपक्षंच
पालयन्हंतिसंयुगे ३४ अर्थनाशोवधोऽकीर्तिरयशश्चपलायने ॥ अमनोज्ञाऽसुखावाचःपुरुषस्यपलायने ३५ प्रतिध्वस्तोष्ठदंतस्यन्यस्तसर्वायुधस्यच ॥
अमित्रैरवरुद्धस्यद्विषतामस्तुनःसदा ३६ मनुष्यापसदाह्येतेयेभवंतिपराङ्मुखाः ॥ राशिवर्धनमात्रास्तेनैवतेप्रेत्यनोइह ३७ अमित्राहृष्टमनसःप्रत्युद्यां
तिपलायिनम् ॥ जयिनस्तुनरास्तातचंदनैर्मंडनेनच ३८ यस्यस्मसंग्रामगतायशोविघ्नंतिशत्रवः ॥ तदसह्यतरंदुःखमहंमन्येवधादपि ३९ ज
यंजानीतधर्मस्यमूलंसर्वसुखस्यच ॥ याभीरूणांपराग्लानिःशूरस्तामधिगच्छति ४० तेवयंस्वर्गमिच्छंतःसंग्रामेत्यक्तजीविताः ॥ जयंतोवध्यमानावाप्राप्नुया
मचसद्गतिम् ४१ एवंसंशप्तशपथाःसमभित्यक्तजीविताः ॥ अमित्रवाहिनींवीराःप्रतिगाहंत्यभीरवः ४२ अग्रतःपुरुषानीकमसिचर्मवतांभवेत् ॥ पृष्ठतःशकटा
८९ नीकंकलत्रंमध्यतस्तथा ४३

२९ अनीकंपरकीयं भिन्नंस्वीयं ३० । ३१ सन्निपात्यैकीकृत्य ३२ । ३३ प्रदरंभंगं 'प्रदरःशरभं
गयोः' इतिविश्वः प्रदरंपलायनमित्येके वधंवास्वीयानां ३४ । ३५ नोऽस्मत्संबंधिनांद्विषतांपुरुषस्यद्रव्यनाशादिकमस्त्वितिपूर्वेणसहद्वयोःसंबंधः ३६ राशियौंधसंख्याशरीरंवातस्यवर्धनाः
वृथाजन्मानइत्यर्थः ३७ पलायिनंजयिनःप्रत्युद्यांति यत्तदसह्यतरमित्यपकृष्यते ३८ । ३९ पराग्लानिर्मृत्युःप्रहारोवा ४० । ४१ । ४२ चर्मवतांपुरुषाणामनीकं विभक्तिलोपआर्षः ४३

येपुरोगमामवेयुस्तेपदातीनांबृंहणंकुर्युः ४४ । ४५ 'स्कंधःस्यात्प्रकृतावंसेसंपरायसमूहयोः' इतिमेदिनी समूहमात्रार्थंत्रातिष्ठेयुः ४६ संहतानन्योन्यंश्लिष्टान्स्वान्परैःसहयोधयेत्सेनापतिःतदेवाह सूचीति ४७ । ४८ । ४९ । ५० ॥ ॥ इतिशांति० रा० नी० भारतभावदीपेशततमोऽध्यायः ॥ १०० ॥ ॥ किंशीलाइति १ आचरितंकुलदेशाचारागतं पत्रंवाहनं २ । ३ । ४ नियुद्धं

॥८४॥ परेषांप्रतिघातार्थंपदातीनांचबृंहणम् ॥ अपितस्मिन्पुरेवृद्धाभवेयुर्येपुरोगमाः ४४ येपुरस्तादभिमताःसत्ववंतोमनस्विनः ॥ तेपूर्वमभिवर्तेरंश्चैतानेवेतरे अ०
जनाः ४५ अपिचोद्धर्षणंकार्यंभीरूणामपियत्नतः ॥ स्कंधदर्शनमात्रात्तुतिष्ठेयुर्वासमीपतः ४६ संहतान्योधयेदल्पान्कामंविस्तारयेद्बहून् ॥ सूचीमुखम
नीकंस्यादल्पानांबहुभिःसह ४७ संप्रयुक्तेनिकृष्टेवासत्यंवायदिवाऽनृतम् ॥ प्रगृह्यबाहून्क्रोशेतभग्नाभग्नाःपरेइति ४८ आगतंमेमित्रबलंप्रहरध्वमभीतवत् ॥ ॥१०१॥
सत्ववंतोऽभिधावेयुःकुर्वंतोभैरवान्रवान् ४९ क्ष्वेडाःकिलकिलाशब्दाःक्रकचागोविषाणिकाः ॥ भेरीमृदंगपणवान्नादयेयुःपुरश्चरान् ५० ॥ इतिश्रीमहाभारते
शांतिप० राजध० सेनानीतिकथनेशततमोऽध्यायः ॥ १०० ॥ ॥ युधिष्ठिरउवाच ॥ किंशीलाःकिंसमाचाराःकथंरूपाश्चभारत ॥ किंसन्नाहाःकथंश
स्त्राजनाःस्युःसंगरेक्षमाः १ ॥ भीष्मउवाच ॥ यथाऽऽचरितमेवात्रशस्त्रंपत्रंविधीयते ॥ आचाराद्वीरपुरुषस्तथाकर्मसुवर्तते २ गांधाराःसिंधुसौवीरानखरप्रास
योधिनः ॥ अभीरवःसुबलिनस्तद्बलंसर्वपारगम् ३ सर्वशस्त्रेषुकुशलाःसत्ववंतोह्युशीनराः ॥ प्राच्यामातंगयुद्धेषुकुशलाःकूटयोधिनः ४ तथायवनकांबोजाम
थुरामभितश्चये ॥ एतेनियुद्धकुशलादाक्षिणात्याऽसिपाणयः ५ सर्वत्रशूराजायंतेमहासत्वामहाबलाः ॥ प्रायएवसमुद्दिष्टालक्षणानितुमेशृणु ६ सिंहशार्दूलवा
ङ्नेत्राःसिंहशार्दूलगामिनः ॥ पारावतकुलिंगाक्षाःसर्वेशूराःप्रमाथिनः ७ मृगस्वराद्वीपिनेत्राऋषभाक्षास्तरस्विनः ॥ प्रमादिनश्चमंदाश्चक्रोधनाःकिंकिणीस्व
नाः ८ मेघस्वनाःक्रोधमुखाःकेचित्करभसन्निभाः ॥ जिह्मनासाग्रजिह्वाश्चदूरगादूरपातिनः ९ बिडालकुब्जतनवस्तनुकेशास्तनुत्वचः ॥ शीघ्राश्चपलवृत्ता
श्चतेभवंतिदुरासदाः १० गोधानिमीलिताःकेचिन्मृदुप्रकृतयस्तथा ॥ तुरंगगतिनिर्घोषास्तेनराःपारयिष्णवः ११ सुसंहताःसुतनवोव्यूढोरस्काःसुसंस्थिताः ॥
प्रवादितेषुकुप्यंतिहृष्यंतिकलहेषुच १२ गंभीराक्षानिःसृताक्षाःपिंगाक्षाभ्रुकुटीमुखाः ॥ नकुलाक्षास्तथाचैवसर्वेशूरास्तनुत्यजः १३ जिह्माक्षाःप्रललाटाश्चनिर्मांस
हनवोऽपिच ॥ वज्रबाहंगुलीचक्राःकृशाधमनिसंतताः १४ प्रविशंतिचवेगेनसांपरायेह्युपस्थिते ॥ वारणाइवसंमत्तास्तेभवंतिदुरासदाः १५ दीप्तस्फुटितकेशां
ताःस्थूलपार्श्वहनूमुखाः ॥ उन्नतांसापृथुग्रीवाविकटाःस्थूलपिंडिकाः १६ उद्वृत्ताइवसुग्रीवाविनताविहगाइव ॥ पिंडशीर्षाऽतिवक्राश्चवृषदंशमुखास्तथा १७

बाहुयुद्धं दाक्षिणात्याअसिपाणयइतिच्छेदः संधिरार्षः ५ सर्वत्रसर्वदेशे समुद्दिष्टाःप्रख्याताः ६ पारावतकुलिंगाक्षाः'कुलिंगोभूमिकूष्मांडेमतंजमभुजंगयोः'इतिमेदिनी सर्पाक्षस्वंशूरलक्षणं कुलिं दाक्षाइतिपाठेऽपिकुलिंदःपक्षिविशेषः ७ । ८ । करभउष्ट्रः ९ । १० । ११ । १२ । १३ जिह्माक्षाःकुटिलदृशः प्रललाटाउन्नतकपालाः १४ । १५ दीप्तःपिंगलः स्थूलादीर्घाःपिंडिकाजानुनोरधः पश्चाद्भागाःयेषां १६ सुग्रीवावासुदेवाश्वाइवउद्धताः विनताविहगागरुडास्तद्वदुद्धताउत्पतंतः पिंडशीर्षावृत्तशिरसः अतिवक्त्राविस्तीर्णमुखाः संधिरार्षः समासोवा वृषदंशोमार्जारः १७ ॥८४॥

॥ ७ ॥

१८ अंत्यजाःप्रांतदेशोद्भवाःकैवर्तभिल्लादयः १९ । २० ॥ इतिशांतिपर्वणिराजधर्मानुशासनप०नीलकंठीये भारतभावदीपे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

उग्रस्वरामन्युमंतोयुद्धेष्वारावसारिणः ॥ अधर्मज्ञाऽवलिप्ताश्चघोरारौद्रप्रदर्शनाः १८ त्यक्तात्मानःसर्वएतेअंत्यजाह्यनिवर्तिनः ॥ पुरस्कार्याःसदासैन्येहन्यंते
घ्नंतिचापिये १९ अधार्मिकाभिन्नवृत्ताःसांत्वेनैषांपराभवः ॥ एवमेवप्रकुप्यंतिराज्ञोऽप्येतेह्यभीक्ष्णशः २० ॥ इतिश्रीमहाभारतेशांतिप० राजधर्मानुशासन०
विजीगीषमाणवृत्तेएकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ युधिष्ठिरउवाच ॥ जयित्र्याःकानिरूपाणिभवंतिभरतर्षभ ॥ पृतनायाःप्रशस्तानितानिचे
च्छामिवेदितुम् १ ॥ भीष्मउवाच ॥ जयिन्यायानिरूपाणिभवंतिभरतर्षभ ॥ पृतनायाःप्रशस्तानितानिवक्ष्यामिसर्वशः २ दैवेपूर्वंप्रकुपितेमानुषेकाल
चोदिते ॥ तद्विद्वांसोऽनुपश्यंतिज्ञानदिव्येनचक्षुषा ३ प्रायश्चित्तविधिंचात्रजपहोमांश्चतद्विदः ॥ मंगलानिचकुर्वंतिशमयंत्यहितानिच ४ उदीर्णमनसोयो
धावाहनानिचभारत ॥ यस्यांभवंतिसेनायांध्रुवंतस्यांपरोजयः ५ अन्वेतान्वायवोयांतितथैवेंद्रधनूंषिच ॥ अनुप्लवंतेमेघाश्चतथाऽऽदित्यस्यरश्मयः ६ गो
मायवश्चानुकूलाबलगृध्राश्चसर्वशः ॥ अर्हयेयुर्यदासेनांतदासिद्धिरनुत्तमा ७ प्रसन्नभाःपावकश्चोर्ध्वरश्मिःप्रदक्षिणावर्तशिखोविधूमः ॥ पुण्यागंधाश्चाहुतीनां
भवंतिजयस्यैतद्भाविनोरूपमाहुः ८ गंभीरशब्दाश्चमहास्वनाश्चशंखाश्चभेर्यश्चनदंतियत्र ॥ युयुत्सवश्चाप्रतीपाभवंतिजयस्यैतद्भाविनोरूपमाहुः ९ इष्टामृ
गाःपृष्ठतोवामतश्चसंप्रस्थितानांचगमिष्यतांच ॥ जिघांसतांदक्षिणाःसिद्धिमाहुर्येत्वग्रतस्तेप्रतिषेधयंति १० मांगल्यशब्दान्शकुनावदंतिहंसाःक्रौंचाःशत
पत्राश्चचाषाः ॥ हृष्टायोधाःसत्ववंतोभवंतिजयस्यैतद्भाविनोरूपमाहुः ११ शस्त्रैर्यंत्रैःकवचैःकेतुभिश्चसुभानुभिर्मुखवर्णैश्चयूनाम् ॥ भ्राजिष्मतीदुष्प्रतिवीक्ष
णीयायेषांचमूस्तेभिभवंतिशत्रून् १२ शुश्रूषवश्चानभिमानिनश्चपरस्परंसौहृदमास्थिताश्च ॥ येषांयोधाःशौचमनुष्ठिताश्चजयस्यैतद्भाविनोरूपमाहुः १३
शब्दाःस्पर्शास्तथागंधाविचरंतिमनःप्रियाः ॥ धैर्यंचाविशतेयोधान्विजयस्यमुखंचतत् १४ इष्टोवामःप्रविष्टस्यदक्षिणःप्रविविक्षतः ॥ पश्चात्संसाधयत्यर्थंपुर
स्ताच्चनिषेधति १५ संभृत्यमहतींसेनांचतुरंगांयुधिष्ठिर ॥ साम्नैववर्तयेःपूर्वंप्रयतेथास्ततोयुधि १६ जघन्यएषविजयोयद्युद्धंनामभारत ॥ यादृच्छिकोयु
धिजयोदैवोवेतिविचारणम् १७ अपामिवमहावेगस्त्रस्ताइवमहामृगाः ॥ दुर्निवार्यतमाचैवप्रभग्नामहतीचमूः १८ भग्नाइत्येवभज्यंतेविद्वांसोऽपिनकारणम् ॥
उदारसारामहतीरुरुसंघोपमाचमूः १९ परस्परज्ञाःसंहृष्टास्त्यक्तप्राणाःसुनिश्चिताः ॥ अपिपंचाशतंशूरानिघ्नंतिपरवाहिनीम् २० अपिवापंचषट्सप्तसं
हताःकृतनिश्चयाः ॥ कुलीनाःपूजिताःसम्यग्विजयंतीहशात्रवान् २१

जयित्र्याइति १ । २ दैवज्ञसंपत्तिः पुरोहितसंपत्तिश्च जयलक्षणमित्याहद्वाभ्यां दैवेइति ३ । ४ । ५ अनुयांतीतिसंबंधः ६ । ७ । ८ अप्रतीपाअनुकूलाः ९ । १० । ११ । १२ । १३ । १४ इष्टःकाकइतिशेषः १५ । १६ । १७ । १८ । १९ पंचाशतंपंचाशत् २० । २१

सन्निपातोयुद्धं २२ प्रबाधतेभीरून् २३ समितिंसंग्रामं स्यंदंतिस्विद्यंति विजयस्यविजिगीषमाणस्यचगात्राणिस्विद्यंति २४ विषयोदेशः २५ योगंसंधिं २६ आंतराणांशत्रोःसखीनांत स्माच्छत्रोःपरःश्रेउस्तेनसंधिंचकुर्यात् मयेसंधिनाशत्रूत्तेजनेनचयुगपत्प्रयुक्तेनत्रयेणपरंजयेदिंतिसमुदायार्थः २७। २८ नन्वेवंपरंक्षमापयेदेवांकिकपटेनेत्याशंक्याह क्षमेति २९ अस्मिन्क्षमा

सन्निपातोनमंतव्यःशक्येसतिकथंचन ॥ सांत्वभेदप्रदानानांयुद्धमुत्तरमुच्यते २२ संदर्शनेनैवसेनायाभयंभीरून्प्रबाधते ॥ वज्रादिवप्रज्वलितादियंकनुपतिष्य ति २३ अभिप्रयातांसमितिंज्ञात्वायेप्रतियांत्यथ ॥ तेषांस्यंदंतिगात्राणियोधानांविजयस्यच २४ विषयोव्यथतेराजन्सर्वःसस्थाणुजंगमः ॥ अस्त्रप्रतापत प्तानांमज्जासीदतिदेहिनाम् २५ तेषांसांत्वंक्रूरमिश्रंप्रणेतव्यंपुनःपुनः ॥ संपीड्यमानाहिपरैर्योगमायांतिसर्वतः २६ आंतराणांचभेदार्थंचरानभ्यवचार येत् ॥ यश्चतस्मात्परोराजातेनसंधिःप्रशस्यते २७ नहितस्यान्यथापीडाशक्याकर्तुंतथाविधा ॥ यथासार्धममित्रेणसर्वतःप्रतिबाधनम् २८ क्षमावैसाधुमाया तिनह्यसाधून्क्षमासदा ॥ क्षमायाश्चाक्षमायाश्चपार्थविद्धिप्रयोजनम् २९ विजित्यक्षममाणस्ययशोराज्ञोविवर्धते ॥ महापराधेह्यप्यस्मिन्विश्वसंत्यपिशत्र वः ३० मन्यतेकर्षयित्वातुक्षमासाध्वीतिशंबरः ॥ असंतप्तंतुयद्दारुप्रत्येतिप्रकृतिंपुनः ३१ नैतत्प्रशंसंत्याचार्यानचसाधुनिदर्शनम् ॥ अक्रोधेनाविनाशेन नियंतव्याःस्वपुत्रवत् ३२ द्वेष्योभवतिभूतानामुग्रोराजायुधिष्ठिर ॥ मृदुमप्यवमन्यंतेतस्मादुभयमाचरेत् ३३ प्रहरिष्यन्प्रियंब्रूयात्प्रहरन्नपिभारत ॥ प्रहृत्य चकृपायीतशोचन्निवरुदन्निव ३४ नमेप्रियंयन्निहताःसंग्रामेमामकैर्नरैः ॥ नचकुर्वंतिमेवाक्यमुच्यमानाःपुनःपुनः ३५ अहोजीवितमाकांक्षेन्नेदृशोवधमर्हति ॥ सुदुर्लभाःसुपुरुषाःसंग्रामेष्वपलायिनः ३६ कृतंममाप्रियंतेनयेनायंनिहतोमृधे ॥ इतिवाचावदन्हंतॄन्पूजयेतरहोगतः ३७ हंतॄणामाहतानांचयत्कुर्युरपराधि नः ॥ क्रोशेद्बाहुंप्रगृह्यापिचिकीर्षन्जनसंग्रहम् ३८ एवंसर्वास्ववस्थासुसांत्वपूर्वंसमाचरेत् ॥ प्रियोभवतिभूतानांधर्मज्ञोवीतभीर्नृपः ३९ विश्वासंचात्रगच्छं तिसर्वभूतानिभारत ॥ विश्वस्तःशक्यतेभोक्तुंयथाकाममुपस्थितः ४० तस्माद्विश्वासयेद्राजासर्वभूतान्यमायया ॥ सर्वतःपरिरक्षेच्चयोमहींभोक्तुमिच्छति ४१ ॥ इतिश्रीमहाभारते शांतिपर्वणिराजधर्मानुशासनपर्वणिसेनानीतिकथनेद्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ युधिष्ठिरउवाच ॥ कथंमृदौकथंतीक्ष्णे महापक्षेचपार्थिव ॥ आदौवर्तेतनृपतिस्तन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ बृहस्पतेश्चसंवादमिंद्रस्यचयु धिष्ठिर २ बृहस्पतिंदेवपतिरभिवाद्यकृतांजलिः ॥ उपसंगम्यपप्रच्छवासवःपरवीरहा ३

वति ३० असंताप्यऋजूकृतवंशादिपुनर्वक्रीभवत्यतःशत्रुंसंताप्यक्षमांकुर्यादितिशंबरस्यदैत्यस्यमतम् ३१ स्वमतमाह नैतादिति ३२। ३३। ३४। ३५। ३६। ३७ स्वीयान्वंधून्हतानिवलो कयीत्यर्थंशोचेदित्याह हंतॄणामिति ३८। ३९ विश्वस्तोजनः ४०। ४१ ॥ इतिशांतिपर्वणिनीलकंठीयेभारतभावदीपे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ ७३ ॥ कथमिति १। २। ३



४ व्यतिषंगेणमिश्रणेनयुद्धेनेत्यर्थः साधारणोनियतः ५ प्रत्युवाचगुरुः ६। ७ विवृतःसावधानः सार्धःश्लोकः ८। ९ कंठायासान्मुखरत्वं वितंसःपक्षिबंधनोपायस्तदुपजीवीवैतंसिकः १० ११ स्वपितिमहीपतिरित्यन्वयः 'संकरोऽग्निचटत्कारः'इतिमेदिनी १२ सामान्येअनिश्चिते रिपुर्वशेकृत्वाउपसन्नार्थोलंभितार्थःकृतश्चेत्सएनंकालेप्रहरेदितिसार्धयोर्द्वयोःसंबंधः १३। १४ किंचास्यदंडंसेनांचभेदेनदूषयेत्सः १५ प्रच्छन्नंयथास्यात्तथाविचारयेन्मनसिविषमंधारयेत् १६ औषधैर्विषादिभिः फलितमाह नन्विति १७ यथाविश्रंभंविश्वासमाप्नुयुस्तथाकुर्यात् १८ प्राप्ते

इंद्रउवाच ॥ अहितेषुकथंब्रह्मन्प्रवर्तेयमतंद्रितः ॥ असमुच्छिद्यचैवैतान्नियच्छेयमुपायतः ४ सेनयोर्व्यतिषंगेणजयःसाधारणोभवेत् ॥ किंकुर्वाणंनमांजह्या ज्ज्वलिताश्रीःप्रतापिनी ५ ततोधर्मार्थकामानांकुशलःप्रतिभानवान् ॥ राजधर्मविधानज्ञःप्रत्युवाचपुरंदरम् ६ ॥ बृहस्पतिरुवाच ॥ नजातुकलहेनेच्छेन्नियं तुमपकारिणः ॥ बालैरासेवितंह्येतद्यदमर्षोयदक्षमा ७ नशत्रुर्विवृतःकार्योवधमस्याभिकांक्षता ॥ क्रोधंभयंचहर्षंचनियम्यस्वयमात्मनि ८ अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ॥ प्रियमेववदेन्नित्यंनाप्रियंकिंचिदाचरेत् ९ विरमेच्छुष्कवैरेभ्यःकंठायासांश्चवर्जयेत् ॥ यथावैतंसिकोयुक्तोद्विजानांसदृशस्वनः १० तान् द्विजान्कुरुतेवश्यांस्तथायुक्तोमहीपतिः ॥ वशंचोपनयेच्छत्रून्निहन्याच्चपुरंदर ११ ननित्यंपरिभूयारीन्सुखंस्वपितिवासव ॥ जागर्त्येवहिदुष्टात्मासंकरेऽग्नि रिवोत्थितः १२ नसन्निपातःकर्तव्यःसामान्येविजयेसति ॥ विश्वास्यैवोपसन्नार्थोवशेकृत्वारिपुःप्रभो १३ संप्रधार्यसहामात्यैर्मंत्रविद्भिर्महात्मभिः ॥ उपेक्ष्यमा णोऽवज्ञातोहृदयेनापराजितः १४ अथास्यप्रहरेत्कालेकिंचिद्विचलितेपदे ॥ दंडंचदूषयेदस्यपुरुषैराप्तकारिभिः १५ आदिमध्यावसानज्ञःप्रच्छन्नंचविचार येत् ॥ बलानिदूषयेदस्यजानन्नेवप्रमाणतः १६ भेदेनोपप्रदानेनसंसृजेदौषधैस्तथा ॥ नत्वेवंखलुसंसर्गंरोचयेदरिभिःसह १७ दीर्घकालमपीक्षेतनिहन्यादेव शात्रवान् ॥ कालाकांक्षीहिक्षपयेद्यथाविश्रंभमाप्नुयुः १८ नसद्योऽरीन्विहन्याच्चद्रष्टव्योविजयोध्रुवः ॥ नशल्यंवाघटयतिनवाचाकुरुतेव्रणम् १९ प्राप्तेचप्र हरेत्कालेनचसंवर्ततेपुनः ॥ हंतुकामस्यदेवेंद्रपुरुषस्यरिपून्प्रति २० योहिकालोव्यतिक्रामेत्पुरुषंकालकांक्षिणम् ॥ दुर्लभःसपुनस्तेनकालःकर्मचिकीर्षुणा २१ ओजश्चविनयेदेवसंगृह्णन्साधुसंमतम् ॥ अकालेसाधयेन्मित्रंनचप्राप्तेप्रपीडयेत् २२ विहायकामंक्रोधंचतथाऽहंकारमेवच ॥ युक्तोविवरमन्विच्छेदहितानां पुनःपुनः २३ मार्दवंदंडआलस्यंप्रमादश्चसुरोत्तम ॥ मायाःसुविहिताःशक्रसादयंत्यविचक्षणम् २४ निहत्यैतानिचत्वारिमायांप्रतिविहायच ॥ ततःशक्रो तिशत्रूणांप्रहर्तुमविचारयन् २५ यदेवैकेनशक्येतगुह्यंकर्तुंतदाचरेत् ॥ यच्छंतिसचिवागुह्यंमिथोविश्रावयंत्यपि २६

व्यःप्रदर्शनीयः नेतिसार्धः १९ रिपून्प्रतिहंतुकामस्यपुनःकालोनसंवर्ततेनोपसंपद्यतेऽतःप्राप्तेकालेप्रहरेदेवनतुकालांतरंप्रतीक्षेतेत्यर्थः २०। २१ ओजःसामर्थ्यं शत्रावकालेप्राप्तेसतिस्वकार्यं नसाधयेत् नापितंप्रपीडयेत् कालेचनातिक्रामेतेत्यर्थः २२। २३। २४ चत्वारिमार्दवादीनि २५ मंत्रविस्रवभयाद्यदेकेनैवकर्तुंशक्यंतत्तंप्रतिवक्तव्यंनबहून्प्रतीत्याह यदिति यच्छंतिनिगृह्णंतिकर्तुंनप्रयच्छंतीत्यर्थः २६

अन्यैःसहसंविदंसंमतिंचरेद्यदिपूर्वोमंत्रंविप्रयेदित्यर्थः ततश्चादृष्टेषुदूरस्थेषुब्रह्मदंडंपुरोहितद्वारमभिचारंप्रयुंज्यात् । दृष्टेप्रत्यक्षशत्रौचतुरंगिणीमपिप्रयुंज्यादित्याह ब्रह्मेति २७ । २८ । २९ नविशंकयेच्छंकायत्तंनकुर्यात् ३० तदेवाह स्थानानीति निराकृताःस्वशत्रुभिःसहप्रीतिंकुर्वाणानन्यान्शत्रुत्वेनपश्यंतितदीयमित्रत्वेचनविश्वसंतीत्यर्थः ३१ विविधवृत्तानामस्थिराणां स्थिरचित्तएवमवंदित्यर्थः ३२ । ३३ । ३४ वेगवतिपूरेसतिवप्रेतटेविवरणाद्विदारणाद्वाधइतियोजना ३५ । ३६ निपुणंकुशलं आरभेद्दष्टुमितिशेषः ३७ षडंगिनीरथतुरगमातं गपदातिकोशवणिक्पथवती ३८ प्रतिलोमतःशत्रोरपेक्षया विवृत्यप्रकटीभूय दस्यूनांदस्यून् ३९ उक्तमेवार्थसंगृह्णाति नसामेति बलवतिशत्रौसामनप्रशस्यतेकिंतर्हिदंडोपनिषद्रहस्यदंडः नशत्रुर्विवृत'कार्यइत्यादिनाप्रागुक्तरीत्याछलेनैवसनाशनीयइत्यर्थः । अतएवशत्रुषुमार्दवंपार्यंतिकंनकार्यं नापियात्रिकंसदाकार्यं जयस्यानियतत्वात् यात्रायांहिसस्यानांघातः संकर

अशक्यमितिकृत्वावाततोऽन्यैःसंविदंचरेत् ॥ ब्रह्मदंडमदृष्टेषुदृष्टेषुचतुरंगिणीम् २७ भेदंचप्रथमंयुंज्यात्तूष्णीमपितथैवच ॥ कालेप्रयोजयेद्राजातस्मिंतस्मिंस्तदातदा २८ प्रणिपातंचगच्छेतकालेशत्रोर्बलीयसः ॥ युक्तोऽस्यवधमन्विच्छेदप्रमत्तःप्रमाद्यतः २९ प्रणिपातेनदानेनवाचामधुरयाब्रुवन् ॥ अमित्रमपिसेवेतनचजातुविशंकयेत् ३० स्थानानिशंकितानांचनित्यमेवविवर्जयेत् ॥ नचतेष्वाश्वसेद्राजाजाग्रतीहनिराकृताः ३१ नह्यतोदुष्करंकर्मकिंचिदस्तिसुरोत्तम ॥ यथाविविधवृत्तानामैश्वर्यममराधिप ३२ तथाविविधवृत्तानामपिसंभवउच्यते ॥ यततेयोगमास्थायमित्रामित्रंविचारयेत् ३३ मृदुमप्यवमन्यंतेतीक्ष्णादुद्विजतेजनः ॥ मातीक्ष्णोमामृदुर्भूस्त्वंतीक्ष्णोभवमृदुर्भव ३४ यथावप्रेवेगवतिसर्वतःसंप्लुतोदके ॥ नित्यंविवरणाद्बाधस्तथाराज्यंप्रमाद्यतः ॥ नबहूनभियुंजीतयौगपद्येनशात्रवान् ॥ साम्नादानेनभेदेनदंडेनचपुरंदर ३६ एकैकमेषांनिष्पिष्यशिष्टेषुनिपुणंचरेत् ॥ नतुशक्तोऽपिमेधावीसर्वानेवारभेन्नृप ३७ यदास्यान्महतीसेनाहयनागरथाकुला ॥ पदातियंत्रबहुलाअनुरक्ताषडंगिनी ३८ यदाबहुविधांवृद्धिंमन्येतप्रतिलोमतः ॥ तदाविवृत्यप्रहरेद्दस्यूनामविचारयन् ३९ नसामदंडोपनिषत्प्रशस्यतेनमार्दवंशत्रुषुयात्रिकंसदा ॥ नसस्यघातोनचसंकरक्रियानचापिभूयःप्रकृतेर्विचारणा ४० मायाविभेदानुपसर्जनानितथैवपापंनयशःप्रयोगात् ॥ आप्तैर्मनुष्यैरुपचारयेतपुरेपुराष्ट्रेषुचसंप्रयुक्तान् ४१ पुराऽपिचैषामनुसृत्यभूमिपाःपुरेषुभोगानखिलान्जयंति ॥ पुरेषुनीतिंविहितांयथाविधिप्रयोजयंतोबलवृत्रसूदन ४२ प्रदायगूढानिवसूनिराजन्प्रच्छिद्यभोगानवधायचस्वान् ॥ दुष्टान्स्वदोषैरितिकीर्तयित्वापुरेपुराष्ट्रेषुचयोजयंति ४३

क्रियाविषादिनाजलादीनांनाशनं भूयःपुनःपुनःप्रकृतेःसप्तविधायाविचारणाकथंदंडःकथंकोशःकथममात्यइत्यादिसंदेहश्चापतति तत्त्रयमपिनकार्यंहिंसामूलत्वाच्चिंताबुद्धिकरत्वाच्चतस्मात्कपटपूर्वकोदंडएवश्रेयानित्यर्थः ४० एतदेवविवृणोति मायेति मायाविभेदान्नानाविधामायाःप्रयुंजीत तत्तउपसर्जनानिपरस्परंमितरेषांशत्रूणामुत्थापनादीनि तत्तथैवशत्रुषुपापंकपटं चप्रयुंज्यात् कथंयशसःप्रयोगात् प्रयोगेहियशोननाशनीयंप्राक्फलोदयाद्यथनेनास्मास्वपकारश्चिंतितआसीदित्यकीर्तिंगूढमंत्रतयानकुर्यात् किंतर्हिकुर्यात्तत्राह आप्तैरिति ४१ एषामेतान्शत्रून्पुरेषुतत्तत्स्थानेष्वनुसृत्यभोगांस्तदीयान्जयंति नीतिंपुरेषुस्वीयेषु ४२ अनुसरणमेवाह प्रदायेति एतेनममामात्यादुष्टामात्यकारात्तंवरमतिगताइतिलोकमुखात्कीर्तयित्वा परेषांपुरेपुराष्ट्रेषुचतान्योजयंति ४२

कस्यामिवकस्यांमृत्युकारिणींदेवतां ४४ । ४५ । ४६ । ४७ संसृष्टंसंसर्गं असंसृष्टश्चपरइवभाषते अदृष्टितःपरोक्षेप्रतिश्रुतमपिकार्यंनकुरुते ४८ । ४९ । ५० । ५१ । ५२ ५३ ॥ इतिशांतिपर्वणि राजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ ७ ॥ ॥ ७ ॥ अधार्मिकस्यच्छलादिकंविधेयमित्युक्तंधार्मि

तथैवचान्यैरपिशास्त्रवेदिभिःस्वलंकृतैःशास्त्रविधानदृष्टिभिः ॥ सुशिक्षितैर्भाष्यकथाविशारदैःपरेषुकृत्यामुपधारयेच्च ४४ ॥ इंद्रउवाच ॥ कानिलिंगानिदुष्टस्यभवंतिद्विजसत्तम ॥ कथंदुष्टंविजानीयामेतत्पृष्टोब्रवीहिमे ४५ ॥ बृहस्पतिरुवाच ॥ परोक्षमगुणानाहसद्गुणानभ्यसूयते ॥ परैर्वाकीर्त्यमानेषुतूष्णीमास्तेपराङ्मुखः ४६ तूष्णींभावेऽपिविज्ञेयंनचेद्भवतिकारणम् ॥ विश्वासंचोष्ठसंदंशंशिरसश्चप्रकंपनम् ४७ करोत्यभीक्ष्णंसंसृष्टमसंसृष्टश्चभाषते ॥ अदृष्टितोनकुरुतेदृष्टोनैवाभिभाषते ४८ पृथगेत्यसमश्नातिनेदमद्ययथाविधि ॥ आसनेशयनेयानेभावालक्ष्याविशेषतः ४९ आर्तिरार्तेप्रियेप्रीतिरेतावन्मित्रलक्षणम् ॥ विपरीतंतुबोद्धव्यमरिलक्षणमेवतत् ५० एतान्येवयथोक्तानिबुध्येथास्त्रिदशाधिप ॥ पुरुषाणांप्रदुष्टानांस्वभावोबलवत्तरः ५१ इतिदुष्टस्यविज्ञानमुक्तंतेसुरसत्तम ॥ निशम्यशास्त्रतत्त्वार्थंयथावदमरेश्वर ५२ ॥ भीष्मउवाच ॥ सतद्वचःशत्रुनिर्बर्हणेरतस्तथाचकारावितथंबृहस्पतेः ॥ चचारकालेविजयायचारिहावशंचशत्रूननयत्पुरंदरः ५३ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणि इंद्रबृहस्पतिसंवादे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ ७ ॥

॥ युधिष्ठिरउवाच ॥ धार्मिकोऽर्थानसंप्राप्यराजाऽमात्यैःप्रबाधितः ॥ च्युतःकोशाच्चदंडाच्चसुखमिच्छन्कथंचरेत् १ ॥ भीष्मउवाच ॥ अत्रायंक्षेमदर्शीयइतिहासोऽनुगीयते ॥ तत्तेऽहंसंप्रवक्ष्यामितन्निबोधयुधिष्ठिर २ क्षेमदर्शीनृपसुतोयत्रक्षीणबलःपुरा ॥ मुनिंकालकवृक्षीयमाजगामेतिनःश्रुतम् ॥ तंपप्रच्छानुसंगृह्यकृच्छ्रामापदमास्थितः ३ ॥ राजोवाच ॥ अर्थेषुभागीपुरुषईहमानःपुनःपुनः ॥ अलब्ध्वामद्विधोराज्यंब्रह्मन्किंकर्तुमर्हति ४ अन्यत्रमरणाद्दैन्यादन्यत्रपरसंश्रयात् ॥ क्षुद्रादन्यत्रचाचारात्तन्ममाचक्ष्वसत्तम ५ व्याधिनाचाभिपन्नस्यमानसेनेतरेणवा ॥ धर्मज्ञश्चकृतज्ञश्चत्वद्विधःशरणंभवेत् ६ निर्विद्यतिनरःकामान्निर्विद्यसुखमेधते ॥ त्यक्त्वाप्रीतिंचशोकंचलब्ध्वाबुद्धिमयंवसु ७ सुखमर्थाश्रयंयेषामनुशोचामितानहम् ॥ ममह्यर्थाःसुबहवोनष्टाःस्वप्नइवागताः ८ दुष्करंबतकुर्वंतिमहतोर्थांस्त्यजंतिये ॥ वयंत्वेतान्परित्यक्तुमसतोऽपिनशक्नुमः ९ इमामवस्थांसंप्राप्तंदीनमार्तंश्रियाच्युतम् ॥ यदन्यत्सुखमस्तीहतद्ब्रह्मन्ननुशाधिमाम् १० कौसल्येनैवमुक्तस्तुराजपुत्रेणधीमता ॥ मुनिःकालकवृक्षीयःप्रत्युवाचमहाद्युतिः ११ ॥ मुनिरुवाच ॥ पुरस्तादेवतेबुद्धिरियंकार्याविजानता ॥ अनित्यंसर्वमेवैतदहंचममचास्तियत् १२

कस्यहीनसंपदोविजिगीषमाणस्यकर्तव्यंपृच्छति धार्मिकइति १ । २ । ३ भागीभागार्हः ईहमानोयतमानः ४ । ५ इतरेणशारीरेण ६ निर्विद्यतिविरज्यते कामाद्विषयभोगात् बुद्धिमयं वसुज्ञानरूपंधनं ७ । । ८ । ९ । १० । ११ इयंनिर्विद्यतीतिश्लोकेनत्वयाप्रोक्ता अहंचयच्चममाऽस्त्येतत्सर्वमनित्यमितिजानता १२

नास्तितुच्छत्वात् १३ सर्वतन्नाभून्नभविष्यति इतिसमसमर्थेत्रप्लुद्धिरितिभावः १४ यत्रपूर्वंप्राचीनंसमाहारैरार्जितंमुद्रापेवाम्यादिकं यत्रपूर्वंपरंपरेपूर्वस्मिन्पूर्वस्मिन्राज्ञितस्सर्वंतेतवनास्त्येवे
तितज्ज्ञात्वासर्वत्रममतांत्यक्त्वेतिभावः १५ सामर्थ्यंधनार्जनवीर्यं कथंचकथमपिनकुर्याच्छोकं १६ । १७ आत्मनोदेहस्यअध्रुवतामितिच्छेदः नमविष्यसिमरिष्यसि १८ । १९ । २०

यत्किंचिन्मन्यसेऽस्तीति सर्वंनास्तीतिविद्धितत् ॥ एवंनव्यथतेप्राज्ञःकृच्छ्रामप्यापदंगतः १३ यद्धिभूतंभविष्यंचसर्वंतन्नभविष्यति ॥ एवंविदितवेद्यस्त्वमधर्मे
भ्यःप्रमोक्ष्यसे १४ यच्चपूर्वंसमाहारेयच्चपूर्वंपरेपरे ॥ सर्वंतन्नास्तितच्चैवतज्ज्ञात्वाकोऽनुसंज्वरेत् १५ भूत्वाचनभवत्येतदभूत्वाचभविष्यति ॥ शोकेनह्य
स्तिसामर्थ्यंशोकंकुर्यात्कथंचन १६ क्वनुतेऽद्यपिताराजन्क्वनुतेऽद्यपितामहः ॥ नत्वंपश्यसितानद्यनत्वांपश्यंतितेऽपिच १७ आत्मनोऽध्रुवतांपश्यंस्तां
स्त्वंकिमनुशोचसि ॥ बुद्ध्याचैवानुबुद्ध्यस्वध्रुवंहिनभविष्यसि १८ अहंचत्वंचनृपतेसुहृदःशत्रवश्चते ॥ अवश्यंनभविष्यामःसर्वंचनभविष्यति १९ ये
तुविंशतिवर्षावैत्रिंशद्वर्षाश्चमानवाः ॥ अर्वागेवहितेसर्वेमरिष्यंतिशरच्छतात् २० अपिचेन्महतोवित्तान्नप्रमुच्येतपूरुषः ॥ नैतन्ममेतितन्मत्वाकुर्वीत
प्रियमात्मनः २१ अनागतंयन्नममेतिविद्यादतिक्रांतंयन्नममेतिविद्यात् ॥ दिष्टंबलीयइतिमन्यमानास्तेपंडितास्तत्सतांस्थानमाहुः २२ अनाढ्या
श्चापिजीवंतिराज्यंचाप्यनुशासति ॥ बुद्धिपौरुषसंपन्नास्त्वयातुल्याऽधिकाजनाः २३ नचत्वमिवशोचंतितस्मात्त्वमपिमाशुचः ॥ किंनत्वंतैर्नरैःश्रेयां
स्तुल्योवाबुद्धिपौरुषैः २४ ॥ राजोवाच ॥ यादृच्छिकंसर्वमासीत्तद्राज्यमितिचिंतये ॥ ह्रियतेसर्वमेवेदंकालेनमहताद्विज २५ तस्यैवंह्रियमाणस्य
स्रोतसेवतपोधन ॥ फलमेतत्प्रपश्यामियथालब्धेनवर्तयन् २६ ॥ मुनिरुवाच ॥ अनागतमतीतंचयाथातथ्यविनिश्चयात् ॥ नानुशोचेतकौस
ल्यसर्वार्थेषुतथाभव २७ अवाप्यान्कामयन्नर्थान्नानवाप्यान्कदाचन ॥ प्रत्युत्पन्नाननुभवन्माशुचस्त्वमनागतान् २८ यथालब्धोपपन्नार्थैस्तथाकौसल्यरं
स्यसे ॥ कच्चिच्छुद्धस्वभावेनश्रियाहीनोनशोचसि २९ पुरस्ताद्भूतपूर्वत्वाद्धीनभोग्योहिदुर्मतिः ॥ धातारंगर्हतेनित्यंलब्धार्थश्चनमृष्यते ३० अनर्हानपिचै
वान्यान्मन्यतेश्रीमतोजनान् ॥ एतस्मात्कारणादेतद्दुःखंभूयोऽनुवर्तते ३१ ईर्ष्याभिमानसंपन्नाराजन्पुरुषमानिनः ॥ कच्चित्त्वंनतथाराजन्मत्सरीकोसलाधि
प ३२ सहस्वश्रियमन्येषांयद्यपित्वयिनास्तिसा ॥ अन्यत्रापिसतींलक्ष्मींकुशलाभुंजतेसदा ॥ अभिनिस्यंदतेश्रीर्हिसत्यपिद्विषतोजनम् ३३ श्रियंचपुत्रपौ
त्रंचमनुष्याधर्मचारिणः ॥ योगधर्मविदोधीराःस्वयमेवत्यजंत्युत ३४

नप्रमुच्येतप्रत्यक्षेणत्यागोनसंभवतिचेन्ममत्वंबाधवादीत्याज्यमित्याह अपीति २१ विद्याद्विद्युःतन्निर्ममत्वं २२ । २३ । २४ यादृच्छिकमयत्नादागतं २५ एतच्छोकाख्यंफलंयथाल
ब्धेनवर्तयन् जीवन्नपिपश्यामियादृच्छिकस्यनाशेनजीवनालोपेऽपिशोकोपनश्यतीत्यर्थः २६ । २७ । २८ । २९ नमृष्यतेतैर्नसंतुष्यति ३० अनर्हान्म्लेच्छादीन्नीचान् ३१ । ३२
सहस्वेतिसार्धं अन्यत्रशत्रौ कुशलानिर्मत्सराः जनंद्विषतःसकाशात् अभिनिस्यंदतेप्रस्रवति ३३ । ३४

विधित्साक्रियाणामनुपरमस्तेनसाधनेनसंकुसुकमस्थिरंनित्यंनवंनवमारंभंकुर्वाणंदृष्ट्वाऽन्येप्राकृतास्तस्संत्यजंत्येव ३५ उपद्रवानस्थिरान् ३६ अर्थरूपेणभासमानाः ३७ आद्यस्योदाहरणं
अर्थायेति ३८ द्वितीयस्योदाहरणंरममाणइति ३९ परिभ्रमक्रमोनष्टारंभः ४० । ४१ । ४२ । ४३ विप्रणयेद्वयात् ४४ । ४५ अन्येषामपीतिसार्धः बुद्ध्याकल्पितामापदंपश्य कथमतआह
नियच्छेति यथाक्रमेणान्वयः इंद्रियादीनांनिरोधेहिजगतस्स्वसम्यक्स्फुरतितेनापदांकल्पितत्वंस्फुटीभवतीतिभावः ४६ प्रतीति भावेष्वर्थेषुप्राप्तिसृष्टेषुदर्शनमात्रोत्पन्नेषु प्रतिषेद्धानविद्यतेअप्रत्या

बहुसंकुसुकंदृष्ट्वाविधित्सासाधनेनच ॥ तथाऽन्येसंत्यजंत्येवमत्वापरमदुर्लभम् ३५ त्वंपुनःप्राज्ञरूपःसन्कृपणंपरितप्यसे ॥ अकाम्यान्कामयानोऽर्थान्पराधी
नानुपद्रवान् ३६ तांबुद्धिमुपजिज्ञासुस्त्वमेवैतान्परित्यज ॥ अनर्थाश्चार्थरूपेणह्यर्थाश्चानर्थरूपिणः ३७ अर्थायैवहिकेषांचिद्धननाशोभवत्युत ॥ आनंत्यंतत्सु
खंमत्वाश्रियमन्यःपरीप्सति ३८ रममाणःश्रियाकश्चिन्नान्यच्छ्रेयोऽभिमन्यते ॥ तथातस्येहमानस्यसमारंभोविनश्यति ३९ कृच्छ्राल्लब्धमभिप्रेतंयदिकौसल्य
नश्यति ॥ तदानिर्विद्यतेसोऽर्थात्परिभग्नक्रमोनरः ४० धर्ममेकेऽभिपद्यंतेकल्याणाभिजनानराः ॥ परत्रसुखमिच्छंतोनिर्विद्येयुश्चलौकिकात् ४१ जीवितं
संत्यजंत्येकेधनलोभपराजनाः ॥ नजीवितार्थंमन्यंतेपुरुषाहिधनादृते ४२ पश्यतेषांकृपणतांपश्यतेषामबुद्धिताम् ॥ अध्रुवेजीवितेमोहादर्थदृष्टिमुपाश्रिताः
४३ संचयेचविनाशांतेमरणांतेचजीविते ॥ संयोगेचवियोगांतेकोऽनुविप्रणयेन्मनः ४४ धनंवापुरुषोराजन्पुरुषंवापुनर्धनम् ॥ अवश्यंप्रजहात्येवतद्विद्वान्कोऽ
नुसंज्वरेत् ४५ अन्येषामपिनश्यंतिसुहृदश्चधनानिच ॥ पश्यबुद्ध्यामनुष्याणांराजन्नापदमात्मनः ॥ नियच्छयच्छसंयच्छइंद्रियाणिमनोगिरम् ४६ प्रतिषे
द्धानचाप्येषुदुर्बलेष्वाहितेष्वपि ४७ प्राप्तिसृष्टेषुभावेषुव्यपकृष्टेष्वसंभवे ॥ प्रज्ञानतृप्तोविक्रांतस्त्वद्विधोनानुशोचति ४८ अल्पमिच्छन्नचपलोमृदुर्दांतःसुनिश्चि
तः ॥ ब्रह्मचर्योपपन्नश्चत्वद्विधोनैवशोचति ४९ नत्वेवजाल्मींकापालींवृत्तिमेषितुमर्हसि ॥ नृशंसवृत्तिंपापिष्ठांदुष्टांकापुरुषोचिताम् ५० अपिमूलफलाजी
वोरमस्वैकोमहावने ॥ वाग्यतःसंगृहीतात्मासर्वभूतदयान्वितः ५१ सदृशंपंडितस्यैतदीषादंतेनदंतिना ॥ यदेकोरमतेऽरण्येष्वारण्येनैवतुष्यति ५२ महाह्रदः
संक्षुभितआत्मनैवप्रसीदति ॥ एतदेवंगतस्याहंसुखंपश्यामिजीवितुम् ५३ असंभवेश्रियोराजन्हीनस्यसचिवादिभिः ॥ दैवेप्रतिनिविष्टेचकिंश्रेयोमन्यतेभ
वान् ५४ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणि कालकवृक्षीये चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ मुनिरुवाच ॥ अथचे
त्पौरुषंकिंचित्क्षत्रियात्मनिपश्यसि ॥ ब्रवीमितांतुतेनीतिंराज्यस्यप्रतिपत्तये १

त्ययेयदर्शनाःसर्वेवर्तमानाःपदार्थाइत्यर्थःव्यपकृष्टेषुदेशतःकालतश्चव्यवहितेष्वतीतानागतदूरस्थेषु दर्शनस्यासंभवेचज्ञातेसतित्वद्विधोनानुशोचतीष्टानिष्टसंयोगवियोगयोरितिसार्धोर्थः ४७ । ४८
४९ । ५० । ५१ । ५२ । ५३ । ५४ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेचतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ एवंदुर्बलस्यहीनसं
पदःपरैर्निर्जितस्यनिवृत्तिधर्मएवश्रेयानित्युक्तं प्रबलस्यतुतादृशस्यनिकृत्याख्यंजयोपायंवक्तुमध्यायमारभते अथचेदिति १

२ । ३ उपपन्नोऽस्मिपौरुषेणेतिशेषः ४ । ५ । ६ वित्तंवेतनरूपं प्रमाणंविश्वासं प्रग्रहमिवप्रग्रहंभुजत्वं तस्यबाहुस्थानीयोभविष्यसीत्यर्थः 'प्रग्रहस्तुतुलासूत्रेबंद्यांनियमनेभुजे'इतिमेदिनी ७ स्वशास्त्रेणनीतिशास्त्रेण ८ । ९ ग्रहणमादरं । 'ग्रहणंस्वीकारादरकरोपरागोपलब्धिबंदिषु'इतिमेदिनी १० बिल्वंबिल्वेनेति अन्यपराजयोऽभीष्टइतिमत्वाजनकेनान्यंविपरीतंवाघातय अस्य वैदेहस्य ११ । १२ । १३ प्रतिषेधस्यानेतदकरणेऽयंमांनप्रतिषिद्धवानितिमयमशत्रुरितिविहृतत्वंभवतितद्रक्ष्यमित्यर्थः १४ हेपरम अमित्रेशत्रुसमीपे श्वेतकाकीयैःश्वाचएतश्चकाकश्चतेषामिमे

तांचिच्छक्नोषिनिर्मातुंकर्मचैवकरिष्यसि ॥ शृणुसर्वमशेषेणयत्त्वांवक्ष्यामितत्त्वतः २ आचरिष्यसिचेत्कर्ममहतोऽर्थानवाप्स्यसि ॥ राज्यंराज्यस्यमंत्रंवामहतींवा पुनःश्रियम् ३ अथैतद्रोचतेराजन्पुनर्ब्रूहिब्रवीमिते ॥ राजोवाच ॥ ब्रवीतुभगवान्प्रीतिमुपपन्नोऽस्म्यहंप्रभो ४ अमोघोयंभवत्वद्यत्वयासहसमागमः ॥ मुनिरुवाच ॥ हित्वादंभंचकामंचक्रोधंहर्षंभयंतथा ५ अप्यमित्राणिसेवस्वप्रणिपत्यकृतांजलिः ॥ तमुत्तमेनशौचेनकर्मणाचाभिधारय ६ दातुमर्हतितेवित्तंवैदेहःसत्यसंगरः ॥ प्रमाणंसर्वभूतेषुप्रग्रहंचभविष्यसि ७ ततःसहायान्सोत्साहाँल्लप्स्यसेऽव्यसनाञ्शुचीन् ॥ वर्तमानःस्वशास्त्रेणसंयतात्माजितेंद्रियः ८ अभ्युद्धरतिचात्मानंप्रसादयतिचप्रजाः ॥ तेनैवत्वंधृतिमताश्रीमताचाभिसत्कृतः ९ प्रमाणंसर्वभूतेषुगत्वाचग्रहणंमहत् ॥ ततःसुहृद्बलंलब्ध्वामंत्रयित्वासुमंत्रिभिः १० आंतरैर्भेदयित्वारीन्बिल्वंबिल्वेनभेदय ॥ परैर्वासंविदंकृत्वाबलमप्यस्यघातय ११ अलभ्यायेशुभाभावाःस्त्रियश्चाच्छादनानिच ॥ शय्यासनानियानानिमहार्हाणिगृहाणिच १२ पक्षिणोमृगजातानिरसगंधाःफलानिच ॥ तेष्वेवसज्जयेथास्त्वंयथानश्येत्स्वयंपरः १३ यद्येवंप्रतिषेद्धव्योयद्युपेक्षणमर्हति ॥ नजातुविवृतंकार्यःशत्रुःसुनयमिच्छता १४ रमस्वपरमामित्रेविषयेप्राज्ञसंमतः ॥ भजस्वश्वेतकाकीयैर्मित्रधर्ममनर्थकैः १५ आरंभांश्चास्यमहतोदुश्चरांश्चप्रयोजय ॥ नदीबंधविरोधांश्चबलवद्भिर्विरुध्यताम् १६ उद्यानानिमहार्हाणिशयनान्यासनानिच ॥ प्रतिभोगसुखेनैवकोशमस्यविरेचय १७ यज्ञदानेप्रशाध्यस्मैब्राह्मणाननुवर्ण्यताम् ॥ तेत्वांप्रतिकरिष्यंतितंभोक्ष्यंतिवृकाइव १८ असंशयंपुण्यशीलःप्राप्नोतिपरमांगतिम् ॥ त्रिविष्टपेपुण्यतमंस्थानंप्राप्नोतिमानवः १९ कोशक्षयेत्वमित्राणांवशंकौशल्यगच्छति ॥ उभयत्रप्रयुक्तस्यधर्मेचाधर्मएवच २० फलार्थमूलंव्युच्छिद्येततेननंदंतिशत्रवः ॥ नचास्यैमानुषंकर्मदैवमस्योपवर्णय २१ असंशयंदैवपरःक्षिप्रमेवविनश्यति ॥ याजयैनंविश्वजितासर्वस्वेनवियुज्यतम् २२ ततोगच्छसिसिद्धार्थंपीड्यमानंमहाजनम् ॥ योगधर्मविदंपुण्यंकंचिदस्योपवर्णयेत् २३

धर्माः क्रमेण नित्यंजागरूकत्वमयचकितत्वपरेंगितज्ञत्वानि तैरुपायैर्मित्रधर्मंभजस्व श्वेतइत्यत्रोमाङ्ोश्चेतिपररूपं एतोमृगः १५ आरंभान्विरोधांश्चमहानदीबंधुस्तरान् १६ । १७ प्रतिकरिष्यंतिप्रत्युपकारेणस्वस्त्ययनादिनोपकरिष्यंति १८ । १९ धर्माधर्माभ्यांकोशक्षयेसति २० फलस्यस्वर्गादेरर्थस्यजयादेर्मूलकारणंकोशोव्युच्छिद्येद्विशेषतउच्छेदंगच्छेत् दैवंजयादिकम् २१ २२ गच्छसिअवगच्छसि सिद्धार्थंकृतयज्ञादिप्रयोजनं महाजनपीडांतस्मैनिवेदयेत् तत्परिहारार्थमाचार्यंचवर्णयेत् २३



तद्वाराराज्यंत्याजयेदित्याह अपीति यद्वाऔषधाद्यैरस्यनागादीन्घातयेदितिसार्धः २४ । २५ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ ७ ॥ ॥ निकृतिंकपटंचकर्तुमनिच्छोर्धर्मिष्ठस्यक्षीणस्यसामाख्यंजयोपायमाह नत्विकृत्येत्यादिना १ । २ । ३ । ४ वायुवयोः तस्यविदेहस्य ५ त्वादृशंराजानं

अपित्यागंबुभूषेतकच्चिद्गच्छेदनामयम् ॥ सिद्धेनौषधियोगेनसर्वशत्रुविनाशिना ॥ नागानश्वान्मनुष्यांश्चकृतकैरुपघातयेत् २४ एतेचान्येचबहवोदंभयोगाःसुचिंतिताः ॥ शक्याविषहताकर्तुंपुरुषेणकृतात्मना २५ ॥ इतिश्रीम० शां० रा० कालकवृक्षीयेपंचाधिकशततमोऽध्यायः ॥ १०५ ॥ राजोवाच ॥ ननिकृत्यानदंभेनब्रह्मन्निच्छामिजीवितुम् ॥ नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोऽप्यहम् १ पुरस्तादेवभगवन्मयैतदपवर्जितम् ॥ येनमांनाभिशंकेतयेनकृत्स्नंहितंभवेत् २ आनृशंस्येनधर्मेणलोकेह्यस्मिन्नजिजीविषुः ॥ नाहमेतदलंकर्तुंनैतत्त्वय्युपपद्यते ३ ॥ मुनिरुवाच ॥ उपपन्नस्त्वमेतेनयथाक्षत्रियभाषसे ॥ प्रकृत्याह्युपपन्नोसिबुद्ध्याचाबहुदर्शनः ४ उभयोरेववामर्थंयतिष्येतवतस्यच ॥ संश्लेषंवाकरिष्यामिशाश्वतंह्यनपायिनम् ५ त्वादृशंहिकुलेजातमनृशंसंबहुश्रुतम् ॥ अमात्यंकोनकुर्वीतराज्यप्रणयकोविदम् ६ यस्त्वंप्रव्यावितोराज्याद्व्यसनंचोत्तमंगतः ॥ आनृशंस्येनवृत्तेनक्षत्रियेच्छसिजीवितुम् ७ आगंतामद्गृहंतातवैदेहःसत्यसंगरः ॥ अथाहंतंनियोक्ष्यामितत्करिष्यत्यसंशयम् ८ ततआहूयवैदेहंमुनिर्वचनमब्रवीत् ॥ अयंराजकुलेजातोविदिताभ्यंतरोमम ९ आदर्शइवशुद्धात्माशारदश्चंद्रमायथा ॥ नास्मिन्पश्यामिवृजिनंसर्वतोमेपरीक्षितः १० तेनतेसंधिरेवास्तुविश्वसास्मिन्यथामयि ॥ नराज्यमनमात्येनशक्यंशास्तुमपित्र्यहम् ११ अमात्यःशूरएवस्याद्बुद्धिसंपन्नएववा ॥ ताभ्यांचैवोभयंराजन्पश्यराज्यप्रयोजनम् १२ धर्मात्मनांक्वचिल्लोकेनान्यास्तिगतिरीदृशी ॥ महात्माराजपुत्रोऽयंसतांमार्गमनुष्ठितः १३ सुसंगृहीतस्त्वेवैषत्वयाधर्मपुरोगमः ॥ संसेव्यमानःशत्रूंस्तेगृह्णीयान्महतोगणान् १४ यद्यहंप्रतियुद्धेच्चेत्स्वंकर्मक्षत्रियस्यतत् ॥ जिगीषमाणस्त्वांयुद्धेपितृपैतामहेपदे १५ त्वंचापिप्रतियुद्धेथाविजिगीषुव्रतेस्थितः ॥ अयुद्धेवनियोगान्मेवशेकुरुहितेस्थितः १६ सत्वंधर्ममवेक्षस्वहित्वालोभमसांप्रतं ॥ नचकामान्नचद्रोहात्स्वधर्मंहातुमर्हसि १६ नैवनित्यंजयस्तातनैवनित्यंपराजयः ॥ तस्माद्भोजयितव्यश्चभोक्तव्यश्चपरोजनः १८ आत्मन्यपिचसंदृश्याबुभौजयपराजयौ ॥ निःशेषकारिणांतातनिःशेषकरणाद्भयम् १९ इत्युक्तःप्रत्युवाचेदंवचनंब्राह्मणर्षभम् ॥ प्रतिपूज्याभिसत्कृत्यपूजार्हमनुमान्यच २० यथाब्रूयान्महाप्राज्ञोयथाब्रूयान्महाश्रुतः ॥ श्रेयस्कामोयथाब्रूयादुभयोरेवतत्क्षमं २१ यद्यद्वचनमुक्तोऽस्मिकरिष्यामिचतत्तथा ॥ एतद्धिपरमंश्रेयोनमेत्रास्तिविचारणा २२

लब्ध्वाअमात्यकर्मकोनकुर्वीताऽपितुसर्वोऽपिमादृशःकुर्वीतैवेत्यर्थः ६ उत्तमंमहत् ७ । ८ । ९ । १० । ११ ताभ्यांशौर्यबुद्धिभ्यां उभयंलोकद्वयम् १२ । १३ गणान्शत्रुसंघान् १४ । १५ १६ असांप्रतमनुचितम् १७ परोजनःशत्रुजनोभोजनादिनासंधेयः वृद्धापेक्षयास्मैवश्रेयइत्यर्थः १८ । १९ । २० । २१ । २२

२३ अहमिति जितवत्प्राप्तजयइव २४ । २५ । २६ । २७ । २८ ॥ इतिशांतिपर्वणिराज०नीलकंठीयेभारतभावदीपेषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ गणवृत्तंबुभुत्सुःपूर्वोक्तमनुवद

ततःकौसल्यमाहूयमैथिलोवाक्यमब्रवीत् ॥ धर्मतोनीतितश्चैवलोकश्चविजितोमया २३ अहंत्वयाचात्मगुणैर्जितःपार्थिवसत्तम ॥ आत्मानमनवज्ञायजितवद्वर्ततां भवान् २४ नावमन्यामितेबुद्धिंनावमन्येचपौरुषम् ॥ नावमन्येजयामीतिजितवद्वर्ततांभवान् २५ यथावत्पूजितोराजन्गृहंगंताऽसिमेभृशम् ॥ ततःसंपूज्यतौ विप्रविश्वस्तौजग्मतुर्गृहान् २६ वैदेहस्त्वथकौसल्यंप्रवेश्यगृहमंजसा ॥ पाद्यार्घ्यमधुपर्कैस्तंपूजार्हंप्रत्यपूजयत् २७ ददौदुहितरंचास्मैरत्नानिविविधानिच ॥ एषराज्ञांपरोधर्मोनित्यौजयपराजयौ ॥ २८ ॥ इतिश्रीमहाभारतेशांतिप० राजधर्मानु० कालकवृक्षीयेषडधिकशततमोऽध्यायः ॥ १०६ ॥ ॥ युधिष्ठिरउवाच ॥ ब्राह्मणक्षत्रियविशांशूद्राणांचपरंतप ॥ धर्मवृत्तंचवित्तंचवृत्त्युपायाःफलानिच १ राज्ञांवित्तंचकोशंचकोशसंचयनंजयः ॥ अमात्यगुणवृत्तिश्च प्रकृतीनांचवर्धनम् २ षाड्गुण्यगुणकल्पश्चसेनावृत्तिस्तथैवच ॥ परिज्ञानंचदुष्टस्यलक्षणंचसतामपि ३ समहीनाधिकानांचयथावल्लक्षणंचयत् ॥ मध्यमस्यच तुष्टयर्थंयथास्थेयंविवर्धता ४ क्षीणग्रहणवृत्तिश्चयथाधर्मंप्रकीर्तितम् ॥ लघुनादेशरूपेणग्रंथयोगेनभारत ५ विजिगीषोस्तथावृत्तमुक्तंचैवतथैवते ॥ गणानांवृत्ति मिच्छामिश्रोतुंमतिमतांवर ६ यथागणाःप्रवर्धंतेनभिद्यंतेचभारत ॥ अरींश्चविजिगीषंतेसुहृदःप्राप्नुवंतिच ७ भेदमूलोविनाशोहिगणानामुपलक्षये ॥ मंत्रसंवर णंदुःखंबहूनामितिमेमतिः ८ एतदिच्छाम्यहंश्रोतुंनिखिलेनपरंतप ॥ यथाचतेनभिद्येरंस्तच्चमेवदपार्थिव ९ ॥ भीष्मउवाच ॥ गणानांचकुलानांचराज्ञांभरत सत्तम ॥ वैरसंदीपनावेतौलोभामर्षौनराधिप १० लोभमेकोहिवृणुतेततोऽमर्षमनंतरम् ॥ तौक्षयव्ययसंयुक्तावन्योन्यंचविनाशिनौ ११ चारमंत्रबलादानैःसा मदानविभेदनैः ॥ क्षयव्ययभयोपायैःप्रकर्षंतीतरेतरम् १२ तत्रादानेनभिद्यंतेगणाःसंघातवृत्तयः ॥ भिन्नाविमनसःसर्वेगच्छंत्यरिवशंभयात् १३ भेदेगणाविन श्युर्हिभिन्नास्तुसुजयाःपरैः ॥ तस्मात्संघातयोगेनप्रयतेरन्गणाःसदा १४ अर्थाश्चैवाधिगम्यंतेसंघातबलपौरुषैः ॥ बाह्याश्चमैत्रींकुर्वंतितेषुसंघातवृत्तिषु १५ ज्ञा नवृद्धाःप्रशंसंतिशुश्रूषंतःपरस्परम् ॥ विनिवृत्ताभिसंधानाःसुखमेधंतिसर्वशः १६ धर्मिष्ठान्व्यवहारांश्चस्थापयंतश्चशास्त्रतः ॥ यथावत्प्रतिपश्यंतोविवर्धंतेग णोत्तमाः १७ पुत्रान्भ्रातॄन्निगृह्णंतोविनयंतश्चतान्सदा ॥ विनीतांश्चप्रगृह्णंतोविवर्धंतेगणोत्तमाः १८ चारमंत्रविधानेषुकोशसंनिचयेषुच ॥ नित्ययुक्तामहाबा होवर्धंतेसर्वतोगणाः १९ प्राज्ञान्शूरान्महोत्साहान्कर्मसुस्थिरपौरुषान् ॥ मानयंतःसदायुक्ताविवर्धंतेगणान्नृप २०

ति ब्राह्मणेति १ । २ । ३ । ४ क्षीणस्यग्रहणंवृत्तिर्जीविकाचलघुनाखुगमेनआदेशरूपेणोपदेशात्मकेन ५ गणानांशूरजनस्तोमानां ६ । ७ । ८ । ९ । १० एकोराजालोभंवृणुते गणस्तद्वाऽस्म भ्यंषद्दावीत्यमर्षंवृणुते ११ इतरेतरंगणाराजानश्चप्रकर्षंति १२ । १३ संघातयोगेनैकमत्यप्रयोगेण १४ । १५ विनिवृत्ताभिसंधाना विधदिवसंधाः १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ ३० । ३१ । ३२ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥

द्रव्यवंतश्चशूराश्चशस्त्रज्ञाःशास्त्रपारगाः ॥ कृच्छ्रास्वापत्सुसंमूढान्गणाःसंतारयंतिते २१ क्रोधोभेदोभयंदंडःकर्षणंनिग्रहोवधः ॥ नयत्यरिवशंसद्योगणान्भरत सत्तम २२ तस्मान्मानयितव्यास्तेगणमुख्याःप्रधानतः ॥ लोकयात्रासमायत्ताभूयसीतेषुपार्थिव २३ मंत्रगुप्तिःप्रधानेषुचारश्चामित्रकर्षण ॥ नगणाःकृत्स्नशो मंत्रंश्रोतुमर्हंतिभारत २४ गणमुख्यैस्तुसंभूयकार्यंगणहितंमिथः ॥ पृथग्गणस्यभिन्नस्यविततस्यततोऽन्यथा २५ अर्थाःप्रत्यवसीदंतितथाऽनर्थाभवंतिच ॥ ते षामन्योन्यभिन्नानांस्वशक्तिमनुतिष्ठताम् २६ निग्रहःपंडितैःकार्यःक्षिप्रमेवप्रधानतः ॥ कुलेषुकलहाजाताःकुलवृद्धैरुपेक्षिताः २७ गोत्रस्यनाशंकुर्वंतिगणभे दस्यकारकम् ॥ आभ्यंतरंभयंरक्ष्यमसारंबाह्यतोभयम् २८ आभ्यंतरंभयंराजन्सद्योमूलानिकृंतति ॥ अकस्मात्क्रोधमोहाभ्यांलोभाद्वापिस्वभावजात् २९ अ न्योन्यंनाभिभाषंतेतत्पराभवलक्षणम् ॥ जात्याचसदृशाःसर्वेकुलेनसदृशास्तथा ३० नचोद्योगेनबुद्ध्यावारूपद्रव्येणवापुनः ॥ भेदाच्चैवप्रदानाच्चभिद्यंतेरिपुभि र्गणाः ३१ तस्मात्संघातमेवाहुर्गणानांशरणंमहत् ॥ ३२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानु० गणवृत्तेसप्ताधिकशततमोऽध्यायः ॥ १०७ ॥ ॥ युधिष्ठिरउवाच ॥ महानयंधर्मपथोबहुशाखश्चभारत ॥ किंस्विदेवेहधर्माणामनुष्ठेयतमंमतम् १ किंकार्यंसर्वधर्माणांगरीयोभवतोमतम् ॥ यथाऽहंपरमंधर्ममिह चप्रेत्यचाप्नुयाम् २ ॥ भीष्मउवाच ॥ मातापित्रोर्गुरूणांचपूजाबहुमताामम ॥ इहयुक्तोनरोलोकान्यशश्चमहदश्नुते ३ यच्चतेभ्यनुजानीयुःकर्मतातसुपूजि ताः ॥ धर्माधर्मविरुद्धंवातत्कर्तव्यंयुधिष्ठिर ४ नचतैरभ्यनुज्ञातोधर्ममन्यंसमाचरेत् ॥ यंचतेभ्यनुजानीयुःसधर्मइतिनिश्चयः ५ एतएवत्रयोलोकाएतएवाश्र माख्रयः ॥ एतएवत्रयोवेदाएतएवत्रयोऽग्नयः ६ पितावैगार्हपत्योऽग्निर्माताऽग्निर्दक्षिणःस्मृतः ॥ गुरुराहवनीयस्तुसाऽग्नित्रेतागरीयसी ७ त्रिष्वप्रमाद्यन्नेतेषुत्रीं ल्लोकांश्चविजेष्यसि ॥ पितृवृत्त्यात्विमंलोकंमातृवृत्त्यातथाऽपरम् ८ ब्रह्मलोकंगुरोर्वृत्त्यानियमेनतरिष्यसि ॥ सम्यगेतेषुवर्तस्वत्रिषुलोकेषुभारत ९ यशःप्राप्स्य सिभद्रंतेधर्मंचसुमहत्फलम् ॥ नैतानतिशयेज्जातुनात्यश्नीयान्नदूषयेत् १० नित्यंपरिचरेच्चैवतद्वैसुकृतमुत्तमम् ॥ कीर्तिंपुण्यंयशोलोकान्प्राप्स्यसेराजसत्तम ११ सर्वेतस्यादृतालोकायस्यैतेत्रयआदृताः ॥ अनादृतास्तुयस्यैतेसर्वास्तस्याफलाःक्रियाः १२ नचायंनपरोलोकस्तस्यचैवपरंतप ॥ अमानितानित्यमेवयस्यैते गुरवस्त्रयः १३ नचास्मिन्नपरेलोकेयशस्तस्यप्रकाशते ॥ नचान्यदपिकल्याणंपरत्रसमुदाहृतम् १४ तेभ्यएवहियत्सर्वंकृत्वाचविसृजाम्यहम् ॥ तदासीन्मेशतगुणं सहस्रगुणमेवच १५ तस्मान्मेसंप्रकाशंतेत्रयोलोकायुधिष्ठिर ॥ दशैवतुसदाऽऽचार्यःश्रोत्रियानतिरिच्यते १६

नीतिप्रधानान्राजधर्मान्श्रुत्वातदनुग्राहकान्शुद्धधर्मानाह महानित्यादिना १ । २ । ३ । ४ । ५ । ६ । ७ हृत्यापूजया ८ । ९ नातिशयेद्भोगेषुक्रियासुवास्वस्याधिक्यंनदर्शयेत् १० । ११ । १२ । १३

१७ । १८ । १९ जातिर्जन्म अवध्येत्यादिसार्धः चाद्गुरुः १० तद्वध्यानामपितेषामवधंकृत्वातेअपराधिनोऽपिपितृमातृगुरवःअवधेनराजानमिवनैनंदूषयंति । राजाहिवध्यानामवधेदुष्यतितद्व न्नात्रेत्यर्थः । धर्मायदुष्टानामपिपित्रादीनांपालनाययतमानानांयतमानान्देवाअप्यनुग्राह्यत्वेनविदुः ११ आवृणोत्यनुगृह्णातिकर्मणामवचनेन ऋतंवेदम् १२ नाद्रियंतेयेतेप्रत्यासन्नाःविपर्ययेण

दशाचार्याानुपाध्यायउपाध्यायान्पितादश ॥ पितॄन्दशतुमातैकासर्वावापृथिवीमपि १७ गुरुत्वेनातिभवतिनास्तिमातृसमोगुरुः ॥ गुरुर्गरीयान्पितृतोमातृ तश्चेतिमेमतिः १८ उभौहिमातापितरौजन्मन्येवोपयुज्यतः ॥ शरीरमेवसृजतःपितामाताचभारत १९ आचार्यशिष्टायाजातिःसादिव्यासाऽजरामरा ॥ अ वध्याहिसदामातापिताचाप्यपकारिणौ २० नसंदुष्यतितत्कृत्वानचतेदूषयंतितम् ॥ धर्माययतमानानांविदुर्देवामहर्षिभिः २१ यश्चावृणोत्यवितथेनकर्मणा ऋतंब्रुवन्नमृतंसंप्रयच्छन् ॥ तंवैमन्येतपितरंमातरंचतस्मैनद्रुह्येत्कृतमस्यजानन् २२ विद्यांश्रुत्वायेगुरुंनाद्रियंतेप्रत्यासन्नामनसाकर्मणावा ॥ तेषांपापंभ्रूणह त्याविशिष्टंनान्यस्तेभ्यःपापकृदस्तिलोके ॥ यथैवतेगुरुभिर्भावनीयास्तथातेषांगुरवोप्यर्चनीयाः २३ तस्मात्पूजयितव्याश्चसंविभज्याश्चयत्नतः ॥ गुरवो र्चयितव्याश्चपुराणंधर्ममिच्छता २४ येनप्रीणातिपितरंतेनप्रीतःप्रजापतिः ॥ प्रीणातिमातरंयेनपृथिवीतेनपूजिता २५ येनप्रीणात्युपाध्यायंतेनस्याद्ब्रह्म पूजितम् ॥ मातृतःपितृतश्चैवतस्मात्पूज्यतमोगुरुः २६ ऋषयश्चहिदेवाश्चप्रीयंतेपितृभिःसह ॥ पूज्यमानेषुगुरुषुतस्मात्पूज्यतमोगुरुः २७ केनाचिन्नचवृत्ते नह्यवज्ञेयोगुरुर्भवेत् ॥ नचमातानचपितामन्यतेयादृशोगुरुः २८ नतेऽवमानमर्हंतिनतेषांदूषयेत्कृतम् ॥ गुरूणामेवसत्कारंविदुर्देवामहर्षिभिः २९ उपाध्या यंपितरंमातरंचयेऽभिद्रुह्यंतिमनसाकर्मणावा ॥ तेषांपापंभ्रूणहत्याविशिष्टंतस्मान्नान्यःपापकृदस्तिलोके ३० भृतोवृद्धोयोनबिभर्तिपुत्रः स्वयोनिजःपितरंमा तरंच ॥ तद्वैपापंभ्रूणहत्याविशिष्टंतस्मान्नान्यःपापकृदस्तिलोके ३१ मित्रद्रुहःकृतघ्नस्यस्त्रीघ्नस्यगुरुघातिनः ॥ चतुर्णांवयमेतेषांनिष्कृतिंनाऽनुशुश्रुम ३२ एतत्सर्वमनिर्देशेनैवमुक्तंयत्कर्तव्यंपुरुषेणेहलोके ॥ एतच्छ्रेयोनान्यदस्माद्विशिष्टंसर्वाननुधर्माननुसृत्यैतदुक्तं ३३ ॥ इतिश्रीमहाभारतेशांतिप०राजध०मातृपितृ गुरुमाहात्म्येअष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ॥ युधिष्ठिरउवाच ॥ कथंधर्मेस्थातुमिच्छन्नरोवर्तेतभारत ॥ विद्वन्जिज्ञासमानायप्रब्रूहिभरतर्षभ १ सत्यंचैवानृतंचोभेलोकानावृत्यतिष्ठतः ॥ तयोःकिमाचरेद्राजन्पुरुषोधर्मनिश्चितः २ किंस्वित्सत्यंकिमनृतंकिंस्विद्धर्म्यंसनातनम् ॥ कस्मिन्कालेवदेत्सत्यंक स्मिन्कालेऽनृतंवदेत् ३ ॥ भीष्मउवाच ॥ सत्यस्यवचनंसाधुनसत्याद्विद्यतेपरम् ॥ यत्तुलोकेषुदुर्ज्ञानंतत्प्रवक्ष्यामिभारत ४

विशीर्णानष्टाभवंति २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ अनिर्देशेनविस्तरेणनतुनिर्देशमात्ररूपेणसंक्षेपेण अनुसृत्यैकीकृत्य एतत्सारभूतम् ३३ ॥ इतिशांतिप० राजधर्मानुशासनपर्वणिनीलकंठीयेभारतभा०अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥ ॥ छ ॥ ॥ कथमिति सत्यानृतयोर्धर्माधर्मरूपत्वेहिंसाऽहिंसायुक्तयोस्तयोर्वैपरीत्यदर्शनात्संशय इत्यर्थः १ उभयोस्त्यागस्त्वतिदुष्करइत्याह सत्यमिति लोकान्संसारिणः २ । ३ । ४

५ तादृशःसत्यानृतयोस्तत्त्वमजानन्बालत्वाद्बध्यते यत्रविषयेअहिंसोपकारादौसत्यमनिष्ठितंननिष्ठायुक्तंतेसत्यानृतेबहुप्रकारप्रधानेनिश्चिन्वन्धर्मविद्भवति ६ अंधस्यघ्राणचक्षुषःसर्वप्राणिवधायो द्यतस्यवधाद्बलाकोव्याधोहिंस्रस्वभावोऽपिस्वर्गंजगामेतिकर्णपर्वकथाऽनुसंधेया ७ मूढःकर्णपर्वोक्तःसत्यवादीचोरेभ्यःसत्यवचनाभिमानित्वान्मार्गंसुपदिश्यकार्पटिकान्घातितवान्असौधर्मवित्रे त्यर्थः कौशिकउलूकोगंगातीरेसहस्रशःसर्पिण्यास्थापितान्यंडानिभित्त्वामहत्पुण्यंप्राप तदभेदनेतुतीक्ष्णविषाणांसर्पाणांवृद्ध्यासद्योलोकनाशःसंभवेत् ८ सुदुर्लभोदुर्विवेकः अत्रधर्मलक्षणे व्यव स्यातिनिश्चिनोति ९ प्रभवोऽभ्युदयः अहिंसाअपीडनं धारणंसंरक्षणं एतत्रयंयेनसत्येनानृतेनवामृदुनातीक्ष्णेनवायतोभवतिसधर्मइत्याह त्रिभिःप्रभवेति १० । ११ । १२ श्रुतीति श्रुत्युक्तोऽर्थः सर्वोधर्मइत्यपिन श्येनादेर्धर्मत्वाभावात् 'फलतोऽपिचयत्कर्मनानर्थेनानुबध्यते ॥ केवलंप्रीतिहेतुत्वात्तद्धर्मइतिकथ्यते' इतिवचनात्श्येनादिफलस्यशत्रुवधादेरनर्थत्वादुक्तलक्षणएवधर्मइत्यर्थः

भवेत्सत्यंनवक्तव्यंवक्तव्यमनृतंभवेत् ॥ यत्रानृतंभवेत्सत्यंसत्यंवाप्यनृतंभवेत् ५ तादृशोबध्यतेबालोयत्रसत्यमनिष्ठितम् ॥ सत्यानृतेविनिश्चित्यततोभवतिध र्मवित् ६ अप्यनार्योकृतप्रज्ञःपुरुषोऽप्यतिदारुणः ॥ सुमहत्प्राप्नुयात्पुण्यंबलाकोंधवधादिव ७ किमाश्चर्यंचयन्मूढोधर्मकामोप्यधर्मवित् ॥ सुमहत्प्राप्नुयात्पु ण्यंगंगायामिवकौशिकः ८ तादृशोऽयमनुप्रश्नोयत्रधर्मःसुदुर्लभः ॥ दुष्करःप्रतिसंख्यातुंतत्केनात्रव्यवस्यति ९ प्रभवार्थायभूतानांधर्मप्रवचनंकृतम् ॥ यः स्यात्प्रभवसंयुक्तःसधर्मइतिनिश्चयः १० धारणाद्धर्ममित्याहुर्धर्मेणविधृताःप्रजाः ॥ यःस्याद्धारणसंयुक्तःसधर्मइतिनिश्चयः ११ अहिंसार्थायभूतानांधर्मप्रवच नंकृतम् ॥ यःस्यादहिंसासंयुक्तःसधर्मइतिनिश्चयः १२ श्रुतिधर्मइतिह्येकेनेत्याहुरपरेजनाः ॥ नचतत्प्रत्यसूयामोनहिसर्वंविधीयते १३ येऽन्यायेनजिहीर्षं तोधनमिच्छंतिकस्यचित् ॥ तेभ्यस्तुनतदाख्येयंसधर्मइतिनिश्चयः १४ अकूजनेनचेन्मोक्षोनावकूजेत्कथंचन ॥ अवश्यंकूजितव्येवाशंकेरन्वाप्यकूज नात् १५ श्रेयस्तत्रानृतंवक्तुंसत्यादितिविचारितम् ॥ यःपापैःसहसंबंधान्मुच्यतेशपथादपि १६ नतेभ्योऽपिधनंदेयंशक्येसतिकथंचन ॥ पापेभ्योहिधनं दत्तंदातारमपिपीडयेत् १७ स्वशरीरोपरोधेनधनमादातुमिच्छतः ॥ सत्यसंप्रतिपत्त्यर्थंयद्ब्रूयुःसाक्षिणःक्वचित् १८ अनुक्त्वातत्रतद्वाच्यंसर्वेतेऽनृतवादिनः ॥ प्राणात्ययेविवाहेचवक्तव्यमनृतंभवेत् १९ अर्थस्यरक्षणार्थायपरेषांधर्मकारणात् ॥ परेषांसिद्धिमाकांक्षन्नीचःस्याद्धर्मभिक्षुकः २०

सर्वंश्येनाद्यपिविधीयतेधर्मत्वेनचोद्यते १३ यइति अन्यायेनैतिच्छेदः बुभुक्षितेभ्यश्चोरेभ्योधनिकंनज्ञापयेत्भिक्षुभ्यस्तुज्ञापयेदेवेत्यर्थः १४ अकूजनेनेति चोरेषुधनिकंपृच्छत्सुनवदेत् अव दतोमोक्षाभावेनवेद्यांतिशपथपूर्वकमपिवदेत्तादृशस्थलेऽनृतेदोषोनास्तीतिश्लोकद्वयार्थः १५ । १६ नेति तेभ्यःस्तेनेभ्यः अपिहेत्वर्थे १७ स्वेतिसार्धः यदाधनंत्वदीयंश्रमोमदीयोलाभ स्तूभाभ्यांविभज्यग्राह्यइतिनियमपूर्वकंप्रवृत्तेऽधमर्णेचोरादिनाधननाशःस्यात्तदोत्तमर्णोऽधमर्णस्यशरीरोपरोधेनदासीकरणेनधनमादातुमिच्छतिचेत्तस्यवाक्येसत्यसंप्रतिपत्त्यर्थंसंवादार्थमाहूताः साक्षिणोवाच्यंवक्तुंयोग्यंवचोऽनुक्त्वाशतंरूप्याणिधारयत्येवेतिनिश्चयवादित्वादनृतवादिनइतिभावः १८ यद्वात्वधमर्णोधनवानुत्तमर्णस्तुक्षीणस्तदातदप्यनृतंनदोषायेत्याह प्राणेति १९ ईदृशस्थलेवेषांतरेणापिपरकीयमर्थंरक्षेदित्याह अर्थस्येति २०

यदितूक्तविषयेप्रबलाभालाभीसमातुभाभ्यांविभज्यग्राह्यमितिप्रतिश्रुतंतदानाशितोर्थोऽधर्मेणनयथाभागंप्रदातव्यः । अथवास्वकारीधनार्जनकार्यंधमर्णोबलात्कृतउक्तरीत्यादासीकृतोऽप्यस्तु सचेत्कपटंकरोत्यनष्टमपिधनंनष्टमितिवदतिचेत्तत्राह यइत्यादिना २१ अमानवधासुरं २२ शठोवंचकः तममानवं २३ धनमेवश्रेयोनधर्मइत्यर्थः २४ मासंगमःसंगंमाकार्षीः २५ तत्रहेतुर्धनेनेति विप्रयोजनंवियोगः एतदपिपापाःकुर्वंतीत्यर्थः अयमिति पापानांपापिनांमध्येवाचाउपदेशार्हःकश्चिदपिनास्तिकिंतुसर्वधर्मइत्येवतेषांनिश्चयइत्यन्वयः अधर्मकोटिस्फुरणाभावादित्याशयः

॥९१॥ प्रतिश्रुत्यप्रदातव्यःस्वकार्यस्तुबलात्कृतः ॥ यःकश्चिद्धर्मसमयात्प्रच्युतोधर्मसाधनः २१ दंडेनैवसहंतव्यस्तंपंथानंसमाश्रितः ॥ च्युतःसदैवधर्मेभ्योऽमानवंध ॥११०॥
र्ममास्थितः २२ शठःस्वधर्ममुत्सृज्यतमिच्छेदुपजीवितुम् ॥ सर्वोपायैर्निहंतव्यःपापोनिकृतिजीवनः २३ धनमित्येवपापानांसर्वेषामिहनिश्चयः ॥ अवि
षह्याह्यसंभोज्यानिकृत्यापतनंगताः २४ च्युतादेवमनुष्येभ्योयथाप्रेतास्तथैवते ॥ निर्यज्ञास्तपसाहीनामास्मतैःसहसंगमः २५ धननाशाडुःखतरंजीविता
द्विप्रयोजनम् ॥ अयंतेरोचतांधर्मइतिवाच्यःप्रयत्नतः २६ नकश्चिदस्तिपापानांधर्मइत्येषनिश्चयः ॥ तथागतंचयोहन्यान्नासौपापेनलिप्यते २७ स्वकर्म
णाहतंहंतिहतएवसहन्यते ॥ तेषुयःसमयंकश्चित्कुर्वीतहतबुद्धिषु २८ यथाकाकाश्चगृध्राश्चतथैवोपधिजीविनः ॥ ऊर्ध्वंदेहविमोक्षांतिभवंत्येतासुयोनिषु २९ य
स्मिन्यथावर्ततेयोमनुष्यस्तस्मिंस्तथावर्तितव्यंसधर्मः ॥ मायाचारोमाययाबाधितव्यःसाध्वाचारःसाधुनाप्रत्युपेयः ३० ॥ ॥ इति श्रीमहाभारते शां
तिपर्वणि राजधर्मानुशासनपर्वणि सत्यानृतकविभागेनवाधिकशततमोऽध्यायः ॥ १०९ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ क्लिश्यमानेषुभूतेषुतैस्तैर्भावैस्त
तस्ततः ॥ दुर्गाण्यतितरेद्येनतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ आश्रमेषुयथोक्तेषुयथोक्तंयेद्विजातयः ॥ वर्तंतेसंयतात्मानोदुर्गाण्यतितरंतिते २ येदंभा
न्नाचरंतिस्मयेषांवृत्तिश्चसंयता ॥ विषयांश्चनिगृह्णंतिदुर्गाण्यतितरंतिते ३ प्रत्याहुर्नोच्यमानायेनहिंसंतिचहिंसिताः ॥ प्रयच्छंतिनयाचंतेदुर्गाण्यतितरंतिते
४ वासयंत्यतिथीन्नित्यंनित्यंयेचानसूयकाः ॥ नित्यंस्वाध्यायशीलाश्चदुर्गाण्यतितरंतिते ५ मातापित्रोश्चयेवृत्तिंवर्ततेधर्मकोविदाः ॥ वर्जयंतिदिवास्वप्नंदुर्गा
ण्यतितरंतिते ६ येवापापंनकुर्वंतिकर्मणामनसागिरा ॥ निक्षिप्तदंडाभूतेषुदुर्गाण्यतितरंतिते ७ येनलोभान्नयंत्यर्थान्राजानोरजसान्विताः ॥ विषयान्परिरक्षं
तिदुर्गाण्यतितरंतिते ८ स्वेषुदारेषुवर्ततेन्यायवृत्तिमृतावृतौ ॥ अग्निहोत्रपराःसंतोदुर्गाण्यतितरंतिते ९ आहवेषुचयेशूरास्त्यक्त्वामरणजंभयम् ॥ धर्मेणजय
मिच्छंतिदुर्गाण्यतितरंतिते १० येवदंतीहसत्यानिप्राणत्यागेप्युपस्थिते ॥ प्रमाणभूताभूतानांदुर्गाण्यतितरंतिते ११

२६ । २७ समयमेतान्नहनिष्यामीतिव्रतंयश्चिकीर्षेत्सकुर्वीत ताहशानांवधेपुण्यमस्तीतिभावः २८ । २९ । ३० ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेनवा ॥९१॥
धिकशततमोऽध्यायः ॥ १०९ ॥ ॥ ७ ॥ ॥ क्लिश्यमानेष्विति भूतेषुप्राणिषु दुर्गाणिदुस्तराणि १ । २ विषयान्विषयार्थानींद्रियाणि ३ उच्यमानानिंद्यमानाः ४ । ५ । ६ । ७
रजसाऽन्विताःसंतोऽर्थान्नयंतिनहरंति ८ । ९ । १० । ११

अकुहकार्थान्यदंभार्थानि १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ यात्रार्थंजीवनार्थं २३ । २४ । २५ । २६ तवचहितेस्थितः २७ । २८ । २९ कृत्यसमुद्देशःकर्तं

कर्माण्यकुहकार्थानियेषांवाचश्चसूनृताः ॥ येषामर्थाश्चसंबद्धादुर्गाण्यतितरंतिते १२ अनध्यायेषुयेविप्राःस्वाध्यायंनेहकुर्वते ॥ तपोनिष्ठाःसुतपसोदुर्गाण्यति
तरंतिते १३ येतपश्चतपस्यंतिकौमारब्रह्मचारिणः ॥ विद्यावेदव्रतस्नातादुर्गाण्यतितरंतिते १४ येचसंशांतरजसःसंशांततमसश्चये ॥ सत्वेस्थितामहात्मानोदु
र्गाण्यतितरंतिते १५ येषांनकश्चिन्त्रसतिनत्रसंतिहिकस्यचित् ॥ येषामात्मसमोलोकोदुर्गाण्यतितरंतिते १६ परश्रियानतप्यंतियेसंतःपुरुषर्षभाः ॥ ग्राम्याद
र्थान्निवृत्ताश्चदुर्गाण्यतितरंतिते १७ सर्वान्देवान्नमस्यंतिसर्वधर्मांश्चशृण्वते ॥ येश्रद्दधानाःशांताश्चदुर्गाण्यतितरंतिते १८ येनमानित्वमिच्छंतिमानयंतिचयेप
रान् ॥ मान्यमानान्नमस्यंतिदुर्गाण्यतितरंतिते १९ येचश्राद्धानिकुर्वंतितिथ्यांतिथ्यांप्रजार्थिनः ॥ सुविशुद्धेनमनसादुर्गाण्यतितरंतिते २० येक्रोधंसंनियच्छं
तिक्रुद्धान्संशमयंतिच ॥ नचकुप्यंतिभूतानांदुर्गाण्यतितरंतिते २१ मधुमांसंचयेनित्यंवर्जयंतीहमानवाः ॥ जन्मप्रभृतिमद्यंचदुर्गाण्यतितरंतिते २२ यात्रार्थं
भोजनंयेषांसंतानार्थंचमैथुनम् ॥ वाक्सत्यवचनार्थायदुर्गाण्यतितरंतिते २३ ईश्वरंसर्वभूतानांजगतःप्रभवाप्ययम् ॥ भक्तानारायणंदेवंदुर्गाण्यतितरंतिते २४
यएषपद्मरक्ताक्षःपीतवासामहाभुजः ॥ सुहृद्भ्राताचमित्रंचसंबंधीचतथाऽच्युतः २५ यइमान्सकलाँल्लोकांश्चर्मवत्परिवेष्टयेत् ॥ इच्छन्प्रभुरचिंत्यात्मागोविंदःपु
रुषोत्तमः २६ स्थितःप्रियहितेजिष्णोःसएषपुरुषोत्तमः ॥ राजंस्तवचदुर्धर्षोवैकुंठःपुरुषर्षभ २७ यएनंसंश्रयंतीहभक्तानारायणंहरिम् ॥ तेतरंतीहदुर्गाणिन
चात्रास्तिविचारणा २८ दुर्गातितरणंयेचपठंतिश्रावयंतिच ॥ कथयंतिचविप्रेभ्योदुर्गाण्यतितरंतिते २९ इतिकृत्यसमुद्देशःकीर्तितस्तेमयाऽनघ ॥ तरंतेयेन
दुर्गाणिपरत्रेहचमानवाः ३० ॥ इतिश्रीम०शां०रा०दुर्गातितरणंनामदशाधिकशततमोऽध्यायः ॥ ११० ॥ युधिष्ठिरउवाच ॥ असौम्याःसौम्यरूपेणसौम्या
श्चासौम्यदर्शनाः ॥ ईदृशान्पुरुषांस्तातकथंविद्यामहेवयम् १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ व्याघ्रगोमायुसंवादंतंनिबोधयुधि
ष्ठिर २ पुरिकायांपुरिपुराश्रीमत्यांपौरिकोनृपः ॥ परहिंसारतिःक्रूरोबभूवपुरुषाधमः ३ सत्वायुषिपरिक्षीणेजगामानीप्सितांगतिम् ॥ गोमायुत्वंचसंप्राप्तोदू
षितःपूर्वकर्मणा ४ संस्मृत्यपूर्वभूतिंचनिर्वेदंपरमंगतः ॥ नभक्षयतिमांसानिपरैरुपहृतान्यपि ५ अहिंस्रःसर्वभूतेषुसत्यवाक्सुदृढव्रतः ॥ सचकारयथाकालमा
हारंपतितैःफलैः ६ श्मशानेतस्यचावासोगोमायोःसंमतोऽभवत् ॥ जन्मभूम्यनुरोधाच्चनान्यवासमरोचयत् ७ तस्यशौचममृष्यंतस्तेसर्वेसहजातयः ॥ चालयं
तिस्मतांबुद्धिंवचनैःप्रश्रयोत्तरैः ८ वसन्पितृवनेरौद्रेशौचेवर्तितुमिच्छसि ॥ इयंविप्रतिपत्तिस्तेयदात्वंपिशिताशनः ९

व्यलेशः ३० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभा०दशाधिकशततमोऽध्यायः ॥ ११० ॥ असौम्याइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ विप्रतिपत्तिर्विपरीताबुद्धिः ९

१० प्रसृतैर्विस्तृतैः ११ । १२ । १३ । १४ अनुबंधेपरिणामे १५ अप्रत्ययोऽसंतोषस्तेनकर्ता अर्थापनयोधर्महानिः १६ । १७ यात्राराजकार्यगच्छप्राप्तुहि परिहार्याश्चामीप्सिताः परिहार्याः परिच्छेद्याइत्यन्ये १८ ज्ञापयामहेसूचयामहे १९ ।२० मदंतरेमन्निमित्तं २१ नशक्यंराज्ञोतिशेषः २२ ।२३ ।२४।२५ योक्ष्यतियोगंप्राप्स्यति मदंतरेमन्निमित्तंदुःशीलाश्चमविष्यंति २६ अत्रहे

तत्समानोभवास्माभिर्भोज्यंदास्यामहेवयम् ॥ भुंक्ष्वशौचंपरित्यज्ययद्विभुक्तंसदाऽस्तुते १० इतितेषांवचःश्रुत्वाप्रत्युवाचसमाहितः ॥ मधुरैःप्रसृतैर्वाक्यैर्हेतुम
द्भिरनिष्ठुरैः ११ अप्रमाणाप्रसूतिर्मेशीलतःक्रियतेकुलम् ॥ प्रार्थयामिचतत्कर्मयेनविस्तीर्यतेयशः १२ श्मशानेयदिमेवासःसमाधिर्मेनिशम्यताम् ॥ आत्मा
फलतिकर्माणिनाश्रमोधर्मकारणम् १३ आश्रमेयोद्विजंहन्याद्गांवादद्यादनाश्रमे ॥ किंतुतत्पातकंनस्यात्तद्वादत्तंवृथाभवेत् १४ भवंतःस्वार्थलोभेनकेवलंभक्षणे
रताः ॥ अनुबंधेत्रयोदोषास्तान्नपश्यंतिमोहिताः १५ अप्रत्ययकृतांगर्ह्यामर्थापनयदूषिताम् ॥ इहचामुत्रचानिष्टांतस्माद्वृत्तिंनरोचये १६ तंशुचिंपंडितंम
त्वाशार्दूलःख्यातविक्रमः ॥ कृत्वाऽऽत्मसदृशींपूजांसाचिव्येऽवरयत्स्वयम् १७ ॥ शार्दूलउवाच ॥ सौम्यविज्ञातरूपस्त्वंगच्छयात्रांमयासह ॥ व्रियंतामीप्सि
ताभोगाःपरिहार्याश्चपुष्कलाः १८ तीक्ष्णाइतिवयंख्याताभवंतंज्ञापयामहे ॥ मृदुपूर्वंहितंचैवश्रेयश्चाधिगमिष्यसि १९ अथसंपूज्यतद्वाक्यंमृगेंद्रस्यमहात्मनः॥
गोमायुःसंश्रितंवाक्यंबभाषेकिंचिदानतः २० ॥ गोमायुरुवाच ॥ सदृशंमृगराजैतत्तववाक्यंमदंतरे ॥ यत्सहायान्मृगयसेधर्मार्थकुशलान्शुचीन् २१ नशक्यं
ह्यनमात्येनमहत्त्वमनुशासितुम् ॥ दुष्टामात्येनवावीरशरीरपरिपंथिना २२ सहायाननुरक्तांश्चनयज्ञानुपसंहितान् ॥ परस्परमसंसृष्टान्विजिगीषूनलो
लुपान् २३ अनतीतोपदान्प्राज्ञानहितेयुक्तान्मनस्विनः ॥ पूजयेथामहाभागयथाऽऽचार्यान्यथापितॄन् २४ नत्वेवममसंतोषाद्रोचतेऽन्यन्मृगाधिप ॥
नकामयेसुखान्भोगानैश्वर्यंचतदाश्रयम् २५ नयोक्ष्यतिहिमेशीलंतवभृत्यैःपुरातनैः ॥ तेत्वांविभेदयिष्यंतिदुःशीलाश्चमदंतरे २६ नसंश्रयःश्लाघनीयोऽहमेषाम
पिभास्वताम् ॥ कृतात्मासुमहाभागःपापकेष्वप्यदारुणः २७ दीर्घदर्शीमहोत्साहःस्थूललक्ष्योमहाबलः ॥ कृतीचामोघकर्ताऽस्मिभोग्यैश्चसमलंकृतः २८ न
स्वल्पेनास्मिसंतुष्टोदुःखाद्वृत्तिरनुष्ठिता ॥ सेवायांचापिनाभिज्ञःस्वच्छंदेनवनेचरः २९ राजोपक्रोशदोषाश्चसर्वेसंश्रयवासिनाम् ॥ व्रतचर्यातुनिःसंगानिर्भया
वनवासिनाम् ३० नृपेणाहूयमानस्ययत्तिष्ठतिभयंहृदि ॥ नतत्तिष्ठतितुष्टानांवनेमूलफलाशिनाम् ३१ पानीयंवानिरायासंस्वाद्वन्नंवाऽभयोत्तरम् ॥ विचार्यखलु
पश्यामितत्सुखंयत्रनिर्वृतिः ३२ अपराधैर्नतावंतोभृत्याःशिष्टानराधिपैः ॥ उपघातैर्यथाभृत्यादूषितानिधनंगताः ३३ यदित्वेतन्मयाकार्यंमृगेंद्रयदिमन्यसे ॥
समयंकृतमिच्छामिवर्तितव्यंयथामयि ३४ तुमाह नेति एषामहंश्लाघनीयोनास्मीतिद्वयोःसंबंधः २७ स्थूललक्ष्योबहुप्रदः २८ दुःखाद्वृत्तिसेवाद्वृत्तिश्चनानुष्ठिता २९ राजसमीपेउपक्रोशो
निंदातज्जादोषाराजोपक्रोशदोषाःसंति ३०। ३१ यत्रनिर्वृतिसुखंतत्खलुसुखंस्वर्गंपश्यामि निर्वृतिःसुस्थितिरितिवा 'सुखंशर्मणिनाकेच निर्वृतिःसुस्थिताविति'चमेदिनी ३२ शिष्टाःकृतदंडाः ३३ 

३५ । ३६ । ३७ । ३८ व्याघ्रयोनिर्वोव्याघ्रयोनेःव्याघ्रस्येत्यर्थः ३९। ४०। ४१ । ४२। ४३। ४४ तस्यगोमायोर्वेश्मनि ४५ तस्यगोमायोस्तद्विदितंतेनचतन्मर्षितंकारणार्थंस्वस्यवधविच्छेदोभव

मदीयामाननीयास्तेश्रोतव्यंचहितंवचः ॥ कल्पितायाचमेवृत्तिःसाभवेत्त्वयिसुस्थिरा ३५ नमंत्रयेयमन्यैस्तेसचिवैःसहकर्हिचित् ॥ नीतिमंतःपरीप्संतोवृथा
ब्रूयुःपरेमयि ३६ एकएकेनसंगम्यरहोब्रूयांहितंवचः ॥ नचतेज्ञातिकार्येषुप्रष्टव्योऽहंहिताहिते ३७ मयासंमंत्र्यपश्चाच्चनहिंस्याःसचिवास्त्वया ॥ मदीयानांच
कुपितोमात्वंदंडंनिपातयेः ३८ एवमस्त्वितितेनासौमृगेंद्रेणाभिपूजितः ॥ प्राप्तवान्मतिसाचिव्यंगोमायुर्व्याघ्रयोनितः ३९ तंतथासुकृतंदृष्ट्वापूज्यमानंस्वकर्म
सु ॥ प्राद्विषन्कृतसंघाताःपूर्वभृत्यामुहुर्मुहुः ४० मित्रबुद्ध्याचगोमायुंसांत्वयित्वाप्रसाद्यच ॥ दोषैस्तुसमतांनेतुमैच्छन्नशुभबुद्धयः ४१ अन्यथाह्युषिताःपूर्वं
परद्रव्याभिहारिणः ॥ अशक्ताःकिंचिदादातुंद्रव्यंगोमायुयंत्रिताः ४२ व्युत्थानंचविकांक्षद्भिःकथाभिःप्रतिलोभ्यते ॥ धनेनमहताचैवबुद्धिरस्यविलोभ्यते ४३
नचापिसमहाप्राज्ञस्तस्माद्धैर्याच्चचालह ॥ अथास्यसमयंकृत्वाविनाशायतथाऽपरे ४४ ईप्सितंतुमृगेंद्रस्यमांसंयत्तत्रसंस्कृतम् ॥ अपनीयस्वयंतद्धितैर्न्यस्तं
तस्यवेश्मनि ४५ यदर्थंचाप्यपहृतंयेनतच्चैवमंत्रितम् ॥ तस्यतद्विदितंसर्वंकारणार्थंचमर्षितम् ४६ समयोऽयंकृतस्तेनसाचिव्यमुपगच्छता ॥ नोपघातस्त्व
याकार्योराजन्मैत्रीमिहेच्छता ४७ ॥ भीष्मउवाच ॥ क्षुधितस्यमृगेंद्रस्यभोक्तुमभ्युत्थितस्यच ॥ भोजनायोपहर्तव्यंतन्मांसंनोपदृश्यते ४८ मृगराजेनचाज्ञप्तं
दृश्यतांचोरइत्युत ॥ कृतकैश्चापितन्मांसंमृगेंद्रायोपवर्णितम् ४९ सचिवेनापनीतंतेविदुषाप्राज्ञमानिना ॥ सरोषस्त्वथशार्दूलःश्रुत्वागोमायुचापलम् ५० बभू
वामर्षितोराजावधंचास्यव्यरोचयत् ॥ छिद्रंतुतस्यतदृष्ट्वाप्रोचुस्तेपूर्वमंत्रिणः ५१ सर्वेषामेवसोऽस्माकंवृत्तिभंगेप्रवर्तते ॥ निश्चित्यैवपुनस्तस्यतेकर्माण्यपि
वर्णयन् ५२ इदंतस्येदृशंकर्मकिंतेननकृतंभवेत् ॥ श्रुतश्चस्वामिनापूर्वंयादृशोनैवतादृशः ५३ वाङ्मात्रेणैवधर्मिष्ठःस्वभावेनतुदारुणः ॥ धर्मच्छद्माह्ययंपापो
वृथाचारपरिग्रहः ५४ कार्यार्थंभोजनार्थेषुव्रतेषुकृतवान्श्रमम् ॥ यदिविप्रत्ययोह्येषतदिदंदर्शयामते ५५ तन्मांसंचैवगोमायोस्तैःक्षणादाशुढौकितम् ॥ मांसा
पनयनंज्ञात्वाव्याघ्रःश्रुत्वाचतद्वचः ५६ आज्ञापयामासतदागोमायुर्वध्यतामिति ॥ शार्दूलस्यवचःश्रुत्वाशार्दूलजननीततः ५७ मृगराजंहितैर्वाक्यैःसंबोध
यितुमागमत् ॥ पुत्रनैतत्त्वयाग्राह्यंकपटारंभसंयुतम् ५८ कर्मसंघर्षजैर्दोषैर्दुष्येताशुचिभिःशुचिः ॥ नोच्छ्रितंसहतेकश्चित्प्रक्रियावैरकारिका ५९ शुचेरपिहियुक्त
स्यदोषएवनिपात्यते ॥ मुनेरपिवनस्थस्यस्वानिकर्माणिकुर्वतः ६० उत्पाद्यंतेत्रयःपक्षामित्रोदासीनशत्रवः ॥ लुब्धानांशुचयोद्वेष्याःकातराणांतरस्विनः ६१
मूर्खाणांपंडिताद्वेष्यादरिद्राणांमहाधनाः ॥ अधार्मिकाणांधर्मिष्ठाविरूपाणांसुरूपिणः ६२ त्वितिहेतोरित्यर्थः ४८ ।४७।४८ ।४९ ।५० ।५१ वर्णयन्नवर्णयन् ५२ । ५३ । ५४
विप्रत्ययोऽविश्वासः ५५ गोमायोर्गृहेढौकितंप्रवेशितं मांसंप्रदर्शयामासुरित्यर्थः ५६ । ५७ कर्मनग्राह्यमित्युत्तरश्लोकेनसंबंधः ५८ संघर्षजैःस्पर्धोत्थैः प्रक्रियाप्रकृष्टंकर्म ५९ । ६० । ६१ । ६२

६२ । ६४ । ६५ तत्वदवाङ्मुखकठाहमर्भवत् ६६ प्रमवतांप्रमूर्णा ६७।६८ । ६९ । ७० गोमायोश्चारः ७१ । ७२ प्रायंवरणार्थमुपवेशनं आसितुमाचरितुं ७३ । ७४ । ७५। ७६ उपहितावंचि
ताः ७७ मतारिताः क्षारिताः ७८ अपरसाश्चाञ्चनाश्चेत्यपरसाधनाः प्रीतिशून्यानिर्धनाश्चेत्यर्थः ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ कश्चिदेवकश्चिदपिमर्तुर्हितेनदश्यतेकिंतुवाणि

बहवःपंडितामूर्खालुब्धामायोपजीविनः ॥ कुर्युर्दोषमदोषस्यबृहस्पतिमतेरपि ६३ शून्यात्तचगृहान्मांसंयदप्यपहृतंतव ॥ नेच्छतेदीयमानंचसाधुतावद्वि
मृश्यताम् ६४ असभ्याःसभ्यसंकाशाःसभ्याश्चासभ्यदर्शनाः ॥ दृश्यंतेविविधाभावास्तेषुयुक्तंपरीक्षणम् ६५ तलवद्दृश्यतेव्योमखद्योतोहव्यवाडिव ॥
नचैवास्तितलंव्योम्निखद्योतेनहुताशनः ६६ तस्मात्प्रत्यक्षदृष्टोऽपियुक्तोह्यर्थःपरीक्षितुम् ॥ परीक्ष्यज्ञापयत्र्यर्थान्नपश्चात्परितप्यते ६७ नदुष्करमिदंपुत्रय
त्प्रभुर्घातयेत्परम् ॥ श्लाघनीयायशस्याचलोकेप्रभवतांक्षमा ६८ स्थापितोऽयंत्वयापुत्रसामंतेष्वपिविश्रुतः ॥ दुःखेनासाद्यतेपात्रंधार्यतामेषतेसुहृत् ६९
दूषितंपरदोषैर्हिगृह्णीतेयोऽन्यथाशुचिम् ॥ स्वयंसंदूषितामात्यःक्षिप्रमेवविनश्यति ७० तस्मादप्यरिसंघाताद्गोमायोःकश्चिदागतः ॥ धर्मात्मातेनचाख्या
तंयथैतत्कपटंकृतम् ७१ ततोविज्ञातचारित्रःसत्कृत्यसविमोक्षितः ॥ परिष्वक्तश्चसस्नेहंमृगेंद्रेणपुनःपुनः ७२ अनुज्ञाप्यमृगेंद्रंतुगोमायुर्नीतिशास्त्रवित् ॥
तेनामर्षेणसंतप्तःप्रायमासितुमैच्छत ७३ शार्दूलस्तंतुगोमायुंस्नेहात्प्रोत्फुल्ललोचनः ॥ अवारयत्सधर्मिष्ठंपूजयाप्रतिपूजयन् ७४ तंसगोमायुरालोक्यस्नेहादा
गतसंभ्रमम् ॥ उवाचप्रणतोवाक्यंबाष्पगद्गदयागिरा ७५ पूजितोऽहंत्वयापूर्वंपश्चाच्चैवविमानितः ॥ परेषामास्पदंनीतोवस्तुंनार्हाम्यहंत्वयि ७६ असंतुष्टा
श्च्युताःस्थानान्मानात्प्रत्यवरोपिताः ॥ स्वयंचापहृताभृत्यायेचाप्युपहिताःपरैः ७७ परिक्षीणाश्चलुब्धाश्चक्रुद्धाभीताःप्रतारिताः ॥ हृतस्वामानिनोयेचत्य
क्तादानामहेप्सवः ७८ संतापिताश्चयेकेचिद्व्यसनौघप्रतीक्षिणः ॥ अंतर्हिताःसोपहितास्तेसर्वेऽपरसाधनाः ७९ अवमानेनयुक्तस्यस्थानभ्रष्टस्यवापुनः ॥
कथंयास्यसिविश्वासमहंतिष्ठामिवाकथम् ८० समर्थइतिसंगृह्यस्थापयित्वापरीक्षितः ॥ कृतंचसमयंभित्त्वात्वयाऽहमवमानितः ८१ प्रथमंयःसमाख्यातःशी
लवानितिसंसदि ॥ नवाच्यंतस्यवैगुण्यंप्रतिज्ञांपरिरक्षता ८२ एवंचावमतस्येहविश्वासंमेनयास्यसि ॥ त्वयिचापेतविश्वासेममोद्वेगोभविष्यति ८३ शंकित
स्त्वमहंभीतःपरच्छिद्रानुदर्शिनः ॥ अस्निग्धाश्चैवदुस्तोषाःकर्मचैतद्बहुच्छलम् ८४ दुःखेनश्लिष्यतेभिन्नंश्लिष्टंदुःखेनभिद्यते ॥ भिन्नाश्लिष्टातुयाप्रीतिर्नसा
स्नेहेनवर्तते ८५ कश्चिदेवहितेभर्तुर्दृश्यतेनपरात्मनोः ॥ कार्यापेक्षाहिवर्ततेभावास्निग्धास्सुदुर्लभाः ८६ सुदुःखंपुरुषज्ञानंचित्तंह्येषांचलाचलम् ॥ समर्थो
वाप्यशंकोवाशतेष्वेकोऽधिगम्यते ८७ अकस्मात्प्रक्रियानृणामकस्माच्चापकर्षणम् ॥ शुभाशुभेमहत्त्वंचप्रकर्तुंबुद्धिलाघवम् ८८ एवंविधंसान्त्वमुक्त्वाधर्मकामार्थ
हेतुमत् ॥ प्रसादयित्वाराजानंगोमायुर्वनमभ्यगात् ८९ ज्यवद्नुमयार्थः स्नेहोनकेवलंमर्तुःकार्यांपेक्षइत्यर्थः ८६
पुरुषज्ञानंसुदुःखंदुर्लभंयतएषांनृपाणांचित्तंचलाचलमस्थिरंगम्यतेज्ञायते सुपुरुषज्ञानंदुर्घटमित्यर्थः ८७ प्रक्रियामहीकरणं अकस्मादकर्तुंबुद्धेर्लाघवंतुच्छत्वमेवहेतुः ८८ प्रसादयित्वामसाद्य ८९

अगृह्यऽगृहीत्वा ९० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥ किंपार्थिवेनेत्यध्यायोनीचोमहत्पदंप्राप्यापिमौर्ख्यांदा
लस्याच्चनश्यतीतिदर्शयति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ योगेनोपायेन एवंविधमालस्यं १७ बाह्वितिबाहूपलक्षितंशौर्यं जंघोपलक्षि

अगृह्यानुनयंतस्यमृगेंद्रस्यचबुद्धिमान् ॥ गोमायुःप्रायमास्थायत्यक्त्वादेहंदिवंययौ ९० ॥ इतिश्रीम० शांतिप० राजध० व्याघ्रगोमायुसंवादेएकादशाधि
कशततमोऽध्यायः ॥ १११ ॥ ॥ युधिष्ठिरउवाच ॥ किंपार्थिवेनकर्तव्यंकिंचकृत्वासुखीभवेत् ॥ एतदाचक्ष्वतत्त्वेनसर्वधर्मभृतांवर १ ॥ भीष्मउवाच ॥
हंततेऽहंप्रवक्ष्यामिशृणुकार्यैकनिश्चयम् ॥ यथाराज्ञेहकर्तव्यंयच्चकृत्वासुखीभवेत् २ नचैवंवर्तितव्यंस्मयथेदमनुशुश्रुम ॥ उष्ट्रस्यतुमहद्वृत्तंतन्निबोधयुधिष्ठिर
३ जातिस्मरोमहानुष्ट्रःप्राजापत्येयुगेऽभवत् ॥ तपःसुमहदातिष्ठदरण्येसंशितव्रतः ४ तपसस्तस्यचांतेऽथप्रीतिमानभवद्विभुः ॥ वरेणच्छंदयामासततश्चै
नंपितामहः ५ ॥ उष्ट्रउवाच ॥ भगवंस्त्वत्प्रसादान्मेदीर्घाग्रीवाभवेदियम् ॥ योजनानांशतंसाग्रंगच्छामिचरितुंविभो ६ एवमस्त्वितिचोक्तःसवरदेनमहात्म
ना ॥ प्रतिलभ्यवरंश्रेष्ठंययावुष्ट्रःस्वकंवनम् ७ सचकारतदाऽऽलस्यंवरदानात्सुदुर्मतिः ॥ नचैच्छच्चरितुंगंतुंदुरात्माकालमोहितः ८ सकदाचित्प्रसार्यैवतांग्रीवां
शतयोजनाम् ॥ चचारश्रांतहृदयोवातश्चागात्ततोमहान् ९ सगुहायांशिरोग्रीवांनिधायपशुरात्मनः ॥ आस्तेतुवर्षमभ्यागात्सुमहत्प्लावयज्जगत् १० अथ
शीतपरीतांगोजंबुकःक्षुच्छ्रमान्वितः ॥ सदारस्तांगुहामाशुप्रविवेशजलार्दितः ११ सदृष्ट्वामांसजीवीतुसुभृशंक्षुच्छ्रमान्वितः ॥ अभक्षयत्ततोग्रीवामुष्ट्रस्यभर
तर्षभ १२ यदात्वबुध्यतात्मानंभक्ष्यमाणंसवैपशुः ॥ तदासंकोचनेयत्नमकरोद्भृशदुःखितः १३ यावदूर्ध्वमधश्चैवग्रीवांसंक्षिपतेपशुः ॥ तावत्तेनसदारेणजंबुके
नसभक्षितः १४ सहत्वाभक्षयित्वाचतमुष्ट्रंजंबुकस्तदा ॥ विगतेवातवर्षेतुनिश्चक्रामगुहामुखात् १५ एवंदुर्बुद्धिनाप्राप्तमुष्ट्रेणनिधनंतदा ॥ आलस्यस्यक्रमा
त्पश्यमहांतंदोषमागतम् १६ त्वमप्येवंविधंहित्वायोगेननियतेंद्रियः ॥ वर्तस्वबुद्धिमूलंतुविजयंमनुरब्रवीत् १७ बुद्धिश्रेष्ठानिकर्माणिबाहुमध्यानिभारत ॥
तानिजंघाजघन्यानिभारप्रत्यवराणिच १८ राज्यंतिष्ठतिदक्षस्यसंगृहीतेंद्रियस्यच ॥ आर्तस्यबुद्धिमूलंहिविजयंमनुरब्रवीत् ॥ गुह्यमंत्रंश्रुतवतःसुसहायस्य
चानघ १९ परीक्ष्यकारिणोह्यर्थास्तिष्ठंतीहयुधिष्ठिर ॥ सहाययुक्तेनमहीकृत्स्नाशक्याप्रशासितुम् २० इदंहिसद्भिःकथितंविधिज्ञैःपुरामहेंद्रप्रतिमप्रभाव ॥
मयाऽपिचोक्तंतवशास्त्रदृष्ट्याचायथैवबुद्ध्याप्रचरस्वराजन् २१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणि उष्ट्रग्रीवोपाख्यानेद्वादशाधिकशततमो
ऽध्यायः ॥ ११२ ॥ ॥ ध ॥ ॥ युधिष्ठिरउवाच ॥ राजाराज्यमनुप्राप्यदुर्लभंभरतर्षभ ॥ अमित्रस्यातिवृद्धस्यकथंतिष्ठेदसाधनः १ ॥ भीष्मउवाच ॥
अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ सरितांचैवसंवादंसागरस्यचभारत २ तंपादविहरणं भारोभारवहनं १८ आर्तस्याऽतिलिप्सावतः १९ । २० । २१ ॥ इतिशां
तिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ ध ॥ ॥ राजाराज्यमित्यध्यायोबलवतिरिपौविनयएवश्रेयानित्यर्थकः १ । २

 ३ निह ॥ सुन्मूलितान् काथिनोमहाशरीरान् अन्यान्वृक्षान्आनीतानितिशेषः ४ अकायोऽल्पकायः ५ । ६ । ७ एकनिकेतनाःस्तब्धाइत्यर्थः प्रातिलोम्यादस्माकंप्रातिकूल्यात् 
८ । ९ । १० । ११ । १२ । १३ वैतसींवृत्तिमस्तब्धत्वं १४ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ 

 सुरारिनिलयःशश्वत्सागरःसरितांपतिः ॥ पप्रच्छसरितःसर्वाःसंशयंजातमात्मनः २ ॥ सागरउवाच ॥ समूलशाखान्पश्यामिनिहतान्कायिनोद्रुमान् ॥
युष्माभिरिहपूर्णाभिर्नद्यस्तत्रनवेतसम् ४ अकायश्चाल्पसारश्चवेतसःकूलजश्चवः ॥ अवज्ञयावानानीतःकिंचवातेनवःकृतम् ५ तदहंश्रोतुमिच्छामिसर्वासा 
मेवचोमतम् ॥ यथाचेमानिकूलानिहित्वानायातिवेतसः ६ तत्रप्राहनदीगंगावाक्यमुत्तममर्थवत् ॥ हेतुमद्ग्राहकंचैवसागरंसरितांपतिं ७ ॥ गंगोवाच ॥ ति
ष्ठंत्येतेयथास्थानंनगाह्येकनिकेतनाः ॥ तेत्यजंतिततःस्थानंप्रातिलोम्यान्नवेतसः ८ वेतसोवेगमायांतंदृष्ट्वानमतिनापरे ॥ सरिद्वेगेऽभ्यतिक्रांतेस्थानमासा
द्यतिष्ठति ९ कालज्ञःसमयज्ञश्चसदावश्यश्चनोद्धतः ॥ अनुलोमस्तथास्तब्धस्तेननाभ्येतिवेतसः १० मारुतोदकवेगेनयेनमंत्युन्नमंतिच ॥ ओषध्यःपादपा
गुल्मानतेषांविपराभवम् ११ ॥ भीष्मउवाच ॥ योहिशत्रोर्विवृद्धस्यप्रभोर्वधविनाशने ॥ पूर्वंनसहतेवेगंक्षिप्रमेवविनश्यति १२ सारासारंबलंवीर्यमात्मनो
द्विषतश्चयः ॥ जानन्विचरतिप्राज्ञोनसयातिपराभवम् १३ एवमेवयदाविद्वान्मन्यतेऽतिबलंरिपुम् ॥ संश्रयेद्वैतसींवृत्तिमेतत्प्रज्ञानलक्षणम् १४
॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणिसरित्सागरसंवादे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ ध ॥ ॥ युधिष्ठिरउवाच ॥
विद्वान्मूर्खप्रगल्भेनमृदुतीक्ष्णेनभारत ॥ आक्रुश्यमानःसदसिकथंकुर्यादरिंदम १ ॥ भीष्मउवाच ॥ श्रूयतांपृथिवीपालयथैषोऽर्थोनुगीयते ॥ सदासु
चेताःसहतेनरस्येहाल्पमेधसः २ अरुष्यन्क्रुश्यमानस्यसुकृतंनामविंदति ॥ दुष्कृतंचात्मनोऽमर्षीरुष्यत्येवापमार्ष्टिवै ३ टिट्टिभंतमुपेक्षेतवाशमानमिवातु
रम् ॥ लोकविद्वेषमापन्नोनिष्फलंप्रतिपद्यते ४ इतिसंश्लाघतेनित्यंतेनपापेनकर्मणा ॥ इदमुक्तोमयाकश्चित्संमतोजनसंसदि ५ सतत्रव्रीडितःशुष्कोमृतक
ल्पोऽवतिष्ठते ॥ श्लाघन्नश्लाघनीयेनकर्मणानिरपत्रपः ६ उपेक्षितव्योयत्नेनतादृशःपुरुषाधमः ॥ यद्यद्ब्रूयादल्पमतिस्तत्तदस्यसहेद्बुधः ७ प्राकृतोहिप्रशंसन्वा
निंदन्वाकिंकरिष्यति ॥ वनेकाकइवाबुद्धिर्वाशमानोनिरर्थकम् ८ यदिवाग्भिःप्रयोगःस्यात्प्रयोगेपापकर्मणः ॥ वागेवार्थोभवेत्तस्यनह्येवार्थोजिघांसतः ९

विद्वानिति मूर्खश्चासौप्रगल्भश्चतेन १ सहतेदुरुक्तं २ क्रुश्यमानस्याक्रोशतः मर्षीतितिक्षुः रुष्यतिक्रोधयति ३ टिट्टिभमिवटिट्टिभवद्वृथाश्रवंवाशमानंरटंतं ४ । ५ । ६ । ७ 
८ यदीति पापकर्मणःप्रयोगेअनेनेदंकुकर्मकृतमितिशब्दोच्चारणेकृतेसतिवाग्भिर्वाङ्मात्रेणप्रयोगःपरत्रदोषसिद्धिःस्याद्यदिवागेवार्थःप्रयोजनंस्यात्तत्रपुत्रोम्रियतामितिशब्देनैवपुत्रमृत्युःस्याज्जि
घांसतस्त्वर्थोव्यापारोनहिस्यात् यथावाचाहतोनहन्यतेएवंवाचादूषितोनदुष्यतीत्यर्थः ९

निषेकमिति सएवंवदन्वृत्तेनक्रियया चेष्टयावागादिव्यापारेणचलिंगेननिषेकंस्वमातरिरेतःसेकंविपरीतंपितुरन्येनकृतमित्याचष्टेव्यक्तंकथयति । कौपीनंगुह्यप्रदेशंसंदर्शयन्निवनृत्यंकुर्वन्मयूरोय
थाश्लाघतेसम्यङ्नृत्यापीतिमन्यतेनतुममगुह्यंलोकाःपश्यंतीतित्रपते एवंखलोऽपिमयासमहानसुकसमायांदुरुक्तमुक्तइतिश्लाघतेनत्वनेनममपातुर्दोषःस्पष्टीक्रियतेमयैवेतिनत्रपतेइत्यर्थः १० । ११
नष्टोलोकःपरंज्ञानमवरोधर्मश्चयस्यसनष्टलोकपरावरः १२ तादृक्पुमान् १३ सारमेयामिषंशुनोमांसं १४ निषेकमित्युक्तंव्याचष्टे परिवादमिति दोषान्जारजत्वादीन् १५ भस्मकूटेभस्म

निषेकंविपरीतंसआचष्टेवृत्तचेष्टया ॥ मयूरइवकौपीनंनृत्यंसंदर्शयन्निव १० यस्यावाच्यंनलोकेऽस्तिनाकार्यंचापिकिंचन ॥ वाचंतेननसंदध्याच्छुचिःसंश्लिष्टकर्म
णः ११ प्रत्यक्षंगुणवादीयःपरोक्षेचापिनिंदकः ॥ समानवःश्ववल्लोकेनष्टलोकपरावरः १२ तादृग्जनशतस्यापियद्ददातिजुहोतिच ॥ परोक्षेणापवादीयस्तंनाश
यतितत्क्षणात् १३ तस्मात्प्राज्ञोनरःसद्यस्तादृशंपापचेतसम् ॥ वर्जयेत्साधुभिर्वर्ज्यंसारमेयामिषंयथा १४ परिवादंब्रुवाणोहिदुरात्मावैमहाजने ॥ प्रकाशयति
दोषांस्तुसर्पःफणमिवोच्छ्रितम् १५ तंस्वकर्माणिकुर्वाणंप्रतिकर्तुंयइच्छति ॥ भस्मकूटइवाबुद्धिःखरोरजसिमज्जति १६ मनुष्यशालावृकमप्रशांतंजनापवा
देसततंनिविष्टम् ॥ मातंगमुन्मत्तमिवोन्नदंतंत्यजेततंश्वानमिवातिरौद्रम् १७ अधीरजुष्टेपथिवर्तमानंदमादपेतंविनयाच्चपापम् ॥ अरिव्रतंनित्यमभूतिकामंधि
गस्तुतंपापमतिंमनुष्यम् १८ प्रत्युच्यमानस्त्वभिभूयएभिर्निशाम्यमाभूस्त्वमथार्तरूपः ॥ उच्चस्यनीचेनहिसंप्रयोगंविगर्हयंतिस्थिरबुद्धयोये १९ क्रुद्धोदशा
र्धेनहिताडयेद्वासपांसुभिर्वाविकिरेत्तुषैर्वा ॥ विवृत्यदंतांश्चविभीषयेद्वासिद्धंहिमूढेकुपितेनृशंसे २० विगर्हणांपरमदुरात्मनाकृतांसहेतयःसंसदिदुर्जनान्नरः ॥ प
ठेदिदंचापिनिदर्शनंसदानवाङ्मयंसलभतेकिंचिदप्रियम् २१ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिटिट्टिभकंनामचतुर्दशाधिकशतत
मोऽध्यायः ॥ ११४ ॥ ॥ ध ॥ ॥ युधिष्ठिरउवाच ॥ पितामहमहाप्राज्ञसंशयोमेमहानयम् ॥ संछेत्तव्यस्त्वयाराजन्भवान्कुलकरोहिनः १ पुरु
षाणामयंतातदुर्वृत्तानांदुरात्मनाम् ॥ कथितोवाक्यसंचारस्ततोविज्ञापयामिते २ यद्धितंराज्यतंत्रस्यकुलस्यचसुखोदयम् ॥ आयत्यांचतदात्वेचक्षेमवृद्धिकरं
चयत् ३ पुत्रपौत्राभिरामंचराष्ट्रवृद्धिकरंचयत् ॥ अन्नपानेशरीरेचहितंयत्तद्ब्रवीहिमे ४ अभिषिक्तोहियोराजाराष्ट्रस्थोमित्रसंवृतः ॥ असुहृत्ससुपेतोवासकथंर
ञ्जयेत्प्रजाः ५ योह्यसत्प्रग्रहरतिःस्नेहरागबलात्कृतः ॥ इंद्रियाणामनीशत्वादसज्जनबुभूषकः ६

राशौखरइवाबुद्धीरजसिदुःखेनिमज्जति १६ शालावृकंश्वानमेवमनुष्यत्वेनलोकेगृहीतमित्यर्थः १७ । १८ प्रत्युच्यमानआक्षिप्यमाणएभिरसद्भिर्निशाम्याऽभिभूयोऽस्मैप्रत्युत्तरंमादेहीति
निवारणीयः तदेवाह मामूरिति १९ दशार्धेनसंहतांगुलिपंचकेनपाणिना इदंसर्वंकुपितमूढेसिद्धमेव २० । २१ ॥ इतिशांतिं०रा०चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ पितामहेति १ अयंनि
र्वाक्यः १ हितमनिंद्यं आयत्यामुत्तरकालेतदात्वेवर्तमानकाले ३ । ४ मित्रसुहृदांप्रत्युपकारमपेक्ष्यानपेक्ष्यचोपकर्तारौतद्वान् समुपेतःशौर्यादिनेतिशेषः ५ तथापिजितेंद्रियत्वाद्विगुणितभृत्यः
सन्राज्येसुखंलभतेनवेतिप्रश्नार्थः सत्यपिसाधनांतरेमुख्यानामानुकूल्याभावेराज्यंनश्यतितत्सत्रविचसर्वान्कामान्फलतीत्युत्तरमाह योहीत्यादिना असत्प्रग्रहरतिरिंद्रियाणामनिग्रहशीलः ६

भृत्यफलैर्भृत्यबलप्राप्त्यैर्धनादिभिः ७ । ८ क्षत्ताविदुरः ९ । १० । ११ । १२ । १३ लब्धुंलब्धाश्वरक्षितुंशक्याइतिशेषः १४ । १५ असंहार्याउत्कोचादिनाअभेद्याः १६ । १७ । १८ १९ पटलंसमूहम् २० कोष्ठागारंधान्यादिसामग्रीगृहं गुणीभवेद्बहुगुणिभावंगच्छेत् २१ व्यवहारोऽर्थिप्रत्यर्थिनोर्विवादेनिर्णयः फलोदयोऽर्थिन्यनृतेसत्यर्थेनद्विगुणोदंडोराज्ञाग्राह्यः प्रत्यर्थिन्यनृ



॥१९५॥ तस्यभृत्याविगुणतांयांतिसर्वेकुलोद्गताः ॥ नचभृत्यफलैरर्थैःसराजासंप्रयुज्यते ७ एतन्मेसंशयस्यास्यराजधर्मान्सुदुर्विदान् ॥ बृहस्पतिसमोबुध्याभवान्शं
सितुमर्हति ८ शंसितापुरुषव्याघ्रत्वन्नःकुलहितेरतः ॥ क्षत्ताचैकोमहाप्राज्ञोयोनःशंसातिसर्वदा ९ त्वत्तःकुलहितंवाक्यंश्रुत्वाराज्यहितोदयम् ॥ अमृतस्याव्य ॥११६॥
यस्येवतृप्तःस्वप्स्याम्यहंसुखम् १० कीदृशाःसंनिकर्षस्थाभृत्याःसर्वगुणान्विताः ॥ कीदृशैःकिंकुलीनैर्वासहयात्राविधीयते ११ नह्येकोभृत्यरहितोराजाभवति
रक्षिता ॥ राज्यंचेदंजनःसर्वस्तत्कुलीनोऽभिकांक्षति १२ ॥ भीष्मउवाच ॥ नचप्रशास्तुंराज्यंहिशक्यमेकेनभारत ॥ असहायवतातातनैवार्थाःकेचिदप्युत १३
लब्धुंलब्धाह्यपिसदारक्षितुंभरतर्षभ ॥ यस्यभृत्यजनःसर्वोज्ञानविज्ञानकोविदः १४ हितैषीकुलजःस्निग्धःसराज्यफलमश्नुते १५ मंत्रिणोयस्यकुलजाअसंहा
र्याःसहोषिताः ॥ नृपतेर्मतिदाःसंतःसंबंधज्ञानकोविदाः १६ अनागतविधातारःकालज्ञानविशारदाः ॥ अतिक्रांतमशोचंतःसराज्यफलमश्नुते १७ समदुःखसु
खायस्यसहायाःप्रियकारिणः ॥ अर्थचिंतापराःसत्याःसराज्यफलमश्नुते १८ यस्यनार्तोजनपदःसन्निकर्षगतःसदा ॥ अक्षुद्रःसत्पथालंबीसराजाराज्यभाग्भ
वेत् १९ कोशाख्यपटलंयस्यकोशवृद्धिकरैर्नरैः ॥ आप्तैस्तुष्टैश्चसततंचीयतेसनृपोत्तमः २० कोष्ठागारमसंहार्यैराप्तैःसंचयतत्परैः ॥ पात्रभूतैरलुब्धैश्चपाल्यमा
नंगुणीभवेत् २१ व्यवहारश्चनगरेयस्यकर्मफलोदयः ॥ दृश्यतेशंखलिखितःस्वधर्मफलभाङ्नृपः २२ संगृहीतमनुष्यश्चयोराजाराजधर्मवित् ॥ षड्वर्गंप्रतिगृह्णा
तिसधर्मफलमश्नुते २३ ॥ इतिश्रीमहाभारतेशांति०राजध०पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपु
रातनम् ॥ निदर्शनंपरंलोकेसज्जनाचरितेसदा १ अस्यैवार्थस्यसदृशंयच्छ्रुतंमेतपोवने ॥ जामदग्न्यस्यरामस्ययदुक्तमृषिसत्तमैः २ वनेमहतिकस्मिंश्चिदमनु
ष्यनिषेविते ॥ ऋषिर्मूलफलाहारोनियतोनियतेंद्रियः ३ दीक्षादमपरःशांतःस्वाध्यायपरमःशुचिः ॥ उपवासविशुद्धात्मासततंसत्वमास्थितः ४ तस्यसंदृश्य
सद्भावमुपविष्टस्यधीमतः ॥ सर्वेसत्वाःसमीपस्थाभवंतिवनचारिणः ५ सिंहव्याघ्रगणाःक्रूरामत्ताश्चैवमहागजाः ॥ द्वीपिनःखड्गभल्लूकायेचान्येभीमदर्शनाः ६

तेसतियावदर्थ्यमानमर्थिनेदाप्यंतावानेवराजदंडश्चफलपर्यंतः तत्रदृष्टांतःशंखलिखितइति यथाफलमात्रस्तेनेशंखेनलिखितस्यहस्तच्छेदोराजानंप्रतिषेधयित्वाकारितस्तद्वदित्यर्थः २२ षड्वर्गंसं ॥१९॥
धिविग्रहादिकम् २३ ॥ इतिशांतिप० रा०नी०भा० पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥ ॥ ७ ॥ अत्रेति अत्रवक्ष्यमाणेउत्तमाधममध्यमस्थानेषु क्रमादुत्तमाधममध्यमापुरुषा
ज्यानुरूपस्थानेनीचोनियोज्यइत्यस्मिन्नर्थेनिदर्शनंश्वदृष्टांतरूपमितिहासमुदाहरंति १ अस्यैववक्ष्यमाणस्य २ । ३ । ४ सत्वाःप्राणिनः ५ । ६

सुखप्रश्नदाःसुखिनःस्थइतिप्रश्नस्योत्तरंसुखिनःस्मइतितत्प्रदाइत्यर्थः न्यग्भूतादासभूताः ७ । ८ । ९ भावंचित्तं १० द्वीपीक्षुद्रव्याघ्रः ११ । १२ । १३ । १४ । १५ द्वीपिनोद्वीपिरूपान्नृ
तेसुखप्रश्नदाःसर्वेभवंतिक्षतजाशनाः ॥ तस्यर्षेःशिष्यवच्चैवन्यग्भूताःप्रियकारिणः ७ दत्वाचतेसुखप्रश्नंसर्वेयांतियथागतम् ॥ ग्राम्यस्त्वेकःपशुस्तत्रनाजहा
त्समहामुनिं ८ भक्तोऽनुरक्तःसततमुपवासकृशोऽबलः ॥ फलमूलोदकाहारःशांतःशिष्टाकृतिर्यथा ९ तस्यर्षेरुपविष्टस्यपादमूलेमहामते ॥ मनुष्यवद्गतोभावं
स्नेहबद्धोऽभवद्भृशम् १० ततोऽभ्ययान्महावीर्योद्वीपीक्षतजभोजनः ॥ स्वार्थमत्यंतसंतुष्टःक्रूरकालइवांतकः ११ लेलिह्यमानस्तृषितःपुच्छास्फोटनतत्परः ॥
व्यादितास्यःक्षुधाभुग्नःप्रार्थयानस्तदामिषम् १२ दृष्ट्वातंक्रूरमायांतंजीवितार्थीनराधिप ॥ प्रोवाचश्वामुनिंतत्रतच्छृणुष्वविशांपते १३ श्वशत्रुर्भगवन्नेषद्वी
पीमांहंतुमिच्छति ॥ त्वत्प्रसादाद्भयंनस्यादस्मान्ममहामुने १४ तथाकुरुमहाबाहोसर्वज्ञस्त्वंनसंशयः ॥ समुनिस्तस्यविज्ञायभावज्ञोभयकारणम् ॥ रुतज्ञः
सर्वसत्वानांतमैश्वर्यसमन्वितः १५ ॥ मुनिरुवाच ॥ नभयंद्वीपिनःकार्यंमृत्युतस्तेकथंचन ॥ एषश्वरूपरहितोद्वीपीभवसिपुत्रक १६ ततःश्वाद्वीपितांनीतो
जांबूनदनिभाकृतिः ॥ चित्रांगोविस्फुरद्दंष्ट्रोवनेवसतिनिर्भयः १७ तंदृष्ट्वासंमुखेद्वीपीआत्मनःसदृशंपशुम् ॥ अविरुद्धस्ततस्तस्यक्षणेनसमपद्यत १८ ततो
ऽभ्ययान्महारौद्रोव्यादितास्यःक्षुधान्वितः ॥ द्वीपिनंलेलिहद्वक्त्रोव्याघ्रोरुधिरलालसः १९ व्याघ्रंदृष्ट्वाक्षुधाभुग्नंदंष्ट्रिणंवनगोचरम् ॥ द्वीपीजीवितरक्षार्थमृषिं
शरणमेयिवान् २० संवासजंपरंस्नेहमृषिणाकुर्वतातदा ॥ सद्वीपीव्याघ्रतांनीतोरिपूणांबलवत्तरः २१ ततोदृष्ट्वासशार्दूलोनाहनत्तंविशांपते ॥ सतुश्वाव्याघ्रतां
प्राप्यबलवान्पिशिताशनः २२ नमूलफलभोगेषुस्पृहामप्यकरोत्तदा ॥ यथामृगपतिर्नित्यंप्रकांक्षतिवनौकसः ॥ तथैवसमहाराजव्याघ्रःसमभवत्तदा २३ ॥ इति
श्रीमहाभारतेशां०रा०श्वर्षिसंवादेषोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ भीष्मउवाच ॥ व्याघ्रश्चोटजमूलस्थस्तृप्तःसुप्तोहतैर्मृगैः ॥ नागश्चा
गात्तमुद्देशंमत्तोमेघइवोद्धतः १ प्रभिन्नकरटःप्रांशुःपद्मीविततकुंभकः ॥ सुविषाणोमहाकायोमेघगंभीरनिःस्वनः २ तंदृष्ट्वाकुंजरंमत्तमायांतंबलगर्वितम् ॥ व्या
घ्रोहस्तिभयात्रस्तस्तमृषिंशरणंययौ ३ ततोऽनयत्कुंजरत्वंव्याघ्रंतमृषिसत्तमः ॥ महामेघनिभंदृष्ट्वासभीतोह्यभवद्गजः ४ ततःकमलषंडानिशल्लकीगहनानिच ॥
व्यचरत्समुदायुक्तःपद्मरेणुविभूषितः ५ कदाचिद्भ्रममाणस्यहस्तिनःसंमुखंतदा ॥ ऋषेस्तस्योटजस्थस्यकालोगच्छन्निशानिशम् ६ अथाजगामतंदेशंकेसरी
केसरारुणः ॥ गिरिकंदरजोभीमःसिंहोनागकुलांतकः ७ तंदृष्ट्वासिंहमायांतंनागःसिंहभयार्दितः ॥ ऋषिंशरणमापेदेवेपमानोभयातुरः ८ सततःसिंहतांनीतो
३३ नागेंद्रोमुनिनातदा ॥ वन्यंनागणयत्सिंहंतुल्यजातिसमन्वयात् ९ दृष्ट्वाचसोऽभवत्सिंहोवन्योभयसमन्वितः ॥ सचाश्रमेऽवसत्सिंहस्तस्मिन्नेवमहावने १०
स्युतः श्वरूपरहितःश्वरूपहीनः १६ । १७ । १८ । १९ क्षुधाभुग्नंपीडितम् २० । २१ । २२ । २३ इतिशां०नी०भा०षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ व्याघ्रश्चेति मृगैस्तृप्तः १ । २ । ३
४ कमलषंडानिकमलसमूहान् ५ निशानिशंबहुरात्रम् ६ । ७ । ८ समन्वयात्संबंधात् ९ । १०

११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ अकृतज्ञस्त्वेहेतुःश्वयोनिजइति १९ । २० मदपटुःप्रवहन्मदः २१ विसृष्टोविविधेनरूपेणत्वंसृष्टः नतुत्वंकुलान्वयःतेनतेनकुलेनान्वयःसंबंधोयस्य सकुलान्वयस्ताहगस्त्वंनभवासि २२ । २३ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ ॥ ७ ॥ सश्वेति १ दृष्टांतमुप

तद्भयात्पशवोनान्येतपोवनसमीपतः ॥ व्यदृश्यंततदात्रस्ताजीविताकांक्षिणस्तथा ११ कदाचित्कालयोगेनसर्वप्राणिविहिंसकः ॥ बलवान्क्षतजाहारोनानास त्वभयंकरः १२ अष्टपादूर्ध्वनयनःशरभोवनगोचरः ॥ तंसिंहंहंतुमागच्छन्मुनेस्तस्यनिवेशनम् १३ तंमुनिःशरभंचक्रेबलोत्कटमरिंदम ॥ ततःसशरभोवन्योमु नेःशरभमग्रतः १४ दृष्ट्वाबलिनमत्युग्रंद्रुतंसंप्राद्रवद्वनात् ॥ सएवंशरभस्थानेसंन्यस्तोमुनिनातदा १५ मुनेःपार्श्वगतोनित्यंशरभःसुखमाप्तवान् ॥ ततःशरभसंत्र स्ताःसर्वेमृगगणास्तदा १६ दिशःसंप्राद्रवन्राजन्भयाज्जीवितकांक्षिणः ॥ शरभोऽप्यतिसंहृष्टोनित्यंप्राणिवधेरतः १७ फलमूलाशनंकर्तुंनैच्छत्सपिशिताशनः ॥ ततोरुधिरतर्षेणबलिनाशरभोन्वितः १८ इयेषतंमुनिंहंतुमकृतज्ञःश्वयोनिजः ॥ ततस्तेनतपःशक्त्याविदितोज्ञानचक्षुषा १९ विज्ञायसमहाप्राज्ञोमुनिःश्वानंत मुक्तवान् ॥ श्वात्वंद्वीपित्वमापन्नोद्वीपीव्याघ्रत्वमागतः २० व्याघ्रान्नागोमदपटुर्नागःसिंहत्वमागतः ॥ सिंहस्त्वंबलमापन्नोभूयःशरभतांगतः २१ मयास्नेहपरीतेन विसृष्टोनकुलान्वयः ॥ यस्मादेवमपापंमांपापहिंसितुमिच्छसि २२ तस्मात्स्वयोनिमापन्नःश्वैवत्वंहिभविष्यसि ॥ ततोमुनिजनद्वेष्टादुष्टात्माप्राकृतोऽबुधः ॥ ऋषिणा शरभःशप्तस्तद्रूपंपुनराप्तवान् २३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिश्वर्षिसंवादेसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ भीष्मउवाच ॥ सश्वाप्रकृतिमापन्नःपरंदैन्यमुपागतः ॥ ऋषिणाहुंकृतःपापस्तपोवनबहिष्कृतः १ एवंराज्ञामतिमताविदित्वासत्यशौचताम् ॥ आर्जवंप्रकृतिंसत्त्वंश्रुतंवृत्तंकुलं दमम् २ अनुक्रोशंबलंवीर्यंप्रभावंप्रश्रयंक्षमाम् ॥ भृत्यायेयत्रयोग्याःस्युस्तत्रस्थाप्याःसुरक्षिताः ३ नापरीक्ष्यमहीपालःसचिवंकर्तुमर्हति ॥ अकुलीननराकी र्णोनराजासुखमेधते ४ कुलजःप्राकृतोराज्ञास्वकुलीनतयासदा ॥ नपापेकुरुतेबुद्धिंभिद्यमानोऽप्यनागसि ५ अकुलीनस्तुपुरुषःप्राकृतःसाधुसंश्रयात् ॥ दुर्लभै श्वर्यतांप्राप्तोनिंदितःशत्रुतांव्रजेत् ६ कुलीनंशिक्षितंप्राज्ञंज्ञानविज्ञानपारगम् ॥ सर्वशास्त्रार्थतत्त्वज्ञंसहिष्णुंदेशजंतथा ७ कृतज्ञंबलवंतंचक्षांतंदांतंजितेंद्रियम् ॥ अलुब्धंलब्धसंतुष्टंस्वामिमित्रबुभूषकम् ८ सचिवंदेशकालज्ञंसत्त्वसंग्रहणेरतम् ॥ सततंयुक्तमनसंहितैषिणमतंद्रितम् ९ युक्ताचारंस्वविषयेसंधिविग्रहकोवि दम् ॥ राज्ञस्त्रिवर्गवेत्तारंपौरजानपदप्रियम् १० खातकव्यूहतत्त्वज्ञंबलहर्षणकोविदम् ॥ इंगिताकारतत्त्वज्ञंयात्राज्ञानविशारदम् ११ हस्तिशिक्षासुतत्त्वज्ञमहंकार विवर्जितम् ॥ प्रगल्भंदक्षिणंदांतंबलिनंयुक्तकारिणम् १२ चौक्षंचौक्षजनाकीर्णंसुमुखंसुखदर्शनम् ॥ नायकंनीतिकुशलंगुणचेष्टासमन्वितम् १३

पाद्यदार्ष्टांतिकमाह एवमित्यादीना २ । ३ । ४ राज्ञाअनागसिभिद्यमानोऽपिकुलीनःपापेबुद्धिंनकुरुतइत्यन्वयः ५ अकुलीनस्तुनिंदामात्रेणशत्रुतांव्रजेत् ६ । ७ स्वामिनोमित्राणांबुभूषकमै श्वर्यलिप्सुम् ८ सत्त्वसंग्रहणेप्राणिमात्ररंजने ९ । १० खातकाःपरसैन्यावदारकायेव्यूहाइयस्तेषांतत्त्वज्ञम् ११ । १२ चौक्षंशुद्धम् १३

प्रसूतंसूक्ष्मार्थंगामिनं १४ । १५ । १६ मर्षीक्षमी १७ विपर्यये‍ऽक्षमावत्स्यपकारिणिक्षमावान् १८ दानस्या-च्छेदेविषयेस्वयमविच्छेदकर्ता १९ ननिर्द्वंद्वोननिष्परिग्रहः कर्ताउपकर्ता २० । २१ २२ गुणशतंकुलीनत्वादयएकपंचाशदमात्यगुणास्तत्सहितः धर्मपरमत्वादयएकचत्वारिंशदेवमष्टोनंगुणशतं एतेषांसंधिविग्रहकोविदमित्यादिरीत्याऽन्यद्गुणाष्टकमूहयित्वापूर्णंशतंज्ञेयं २३ । २४

अस्तब्धंप्रसृतंश्लक्ष्णंमृदुवादिनमेवच ॥ धीरंशूरंमहर्द्धिंचदेशकालोपपादकम् १४ सचिवंयःप्रकुरुतेनचैनमवमन्यते ॥ तस्यविस्तीर्यतेराज्यंज्योत्स्नाग्रहपते रिव १५ एतैरेवगुणैर्युक्तोराजाशास्त्रविशारदः ॥ एष्टव्योधर्मपरमःप्रजापालनतत्परः १६ धीरोमर्षीशुचिस्तीक्ष्णःकालेपुरुषकालवित् ॥ शुश्रूषुःकृतवान्श्रोता ऊहापोहविशारदः १७ मेधावीधारणायुक्तोयथान्यायोपपादकः ॥ दांतःसदाप्रियाभाषीक्षमावांश्चविपर्यये १८ दानाच्छेदेस्वयंकारीश्रद्धालुःसुखदर्शनः ॥ आ र्तहस्तप्रदोनित्यममात्योहिहितेरतः १९ नाहंवादीननिर्द्वंद्वोनयत्किंचनकारकः ॥ कृतेकर्मण्यमात्यानांकर्ताभक्तजनप्रियः २० संगृहीतजनोऽस्तब्धःप्रसन्नवद नःसदा ॥ सदाभृत्यजनापेक्षीनक्रोधीसुमहामनाः २१ युक्तदंडोननिर्दंडोधर्मकार्यानुशासनः ॥ चारनेत्रःप्रजावेक्षीधर्मार्थकुशलःसदा २२ राजागुणशताकीर्णए ष्टव्यस्तादृशोभवेत् ॥ योधाश्चैवमनुष्येंद्रसर्वेगुणगणैर्वृताः २३ अन्वेष्टव्याःसुपुरुषाःसहायाराज्यधारणे ॥ नविमानयितव्यास्तेराज्ञावृद्धिमभीप्सता २४ यो धाःसमरशौटीराःकृतज्ञाःशस्त्रकोविदाः ॥ धर्मशास्त्रसमायुक्ताःपदातिजनसंवृताः २५ अभयागजपृष्ठस्थारथचर्याविशारदाः ॥ इष्वस्त्रकुशलायस्यतस्येयंनृपते मही २६ सर्वसंग्रहणेयुक्तोनृपोभवतियःसदा ॥ उत्थानशीलोमित्राढ्यःसराजाराजसत्तमः २७ शक्याचाश्वसहस्रेणवीरारोहेणभारत ॥ संगृहीतमनुष्येणकृत्स्ना जेतुंवसुंधरा २८ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिश्वर्षिसंवादेअष्टादशाधिकशततमोऽध्याय ॥ ११८ ॥ भीष्मउवाच ॥ एवंशुनासमा न्भृत्यान्स्वेस्वेस्थानेनराधिपः ॥ नियोजयतिकृत्येषुसराज्यफलमश्नुते १ नश्वास्वंस्थानमुत्क्रम्यप्रमाणमभिसत्कृतः ॥ आरोप्यःश्वास्वकात्स्थानादुत्क्रम्यान्य त्प्रमाद्यति २ स्वजातिगुणसंपन्नाःस्वेषुकर्मसुसंस्थिताः ॥ प्रकर्तव्याह्यमात्यास्तुनास्थानेप्रक्रियाक्षमा ३ अनुरूपाणिकर्माणिभृत्येभ्योयःप्रयच्छति ॥ सभृत्य गुणसंपन्नोराजाफलमुपाश्नुते ४ शरभःशरभस्थानेसिंहःसिंहइवोर्जितः ॥ व्याघ्रोव्याघ्रइवस्थाप्योद्वीपीद्वीपीयथातथा ५ कर्मस्विहानुरूपेषुन्यस्याभृत्यायथा विधि ॥ प्रतिलोमंनभृत्यास्तेस्थाप्याःकर्मफलैषिणा ६ यःप्रमाणमतिक्रम्यप्रतिलोमंनराधिपः ॥ भृत्यान्स्थापयतेऽबुद्धिर्नसरंजयतेप्रजाः ७ नबालिशानचक्षु द्रानाप्राज्ञानाजितेंद्रियाः ॥ नाकुलीनानराःसर्वेस्थाप्यागुणगणैषिणा ८ साधवःकुलजाःशूराज्ञानवंतोऽनसूयकाः ॥ अक्षुद्राःशुचयोदक्षाःस्युर्नराःपारिपार्श्व काः ९ न्यग्भूतास्तत्पराःशांताश्चौक्षाःप्रकृतिजैःशुभाः ॥ स्वस्थानानपकृष्टायेतेस्यूराज्ञांबहिश्चराः १०

२५ । २६ । २७ । २८ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेअष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥ एवमिति एवंनीचाननीचैनैवयोजयेत् १ विपरीतेदोष माह नश्वेति स्वंस्थानंप्रमाणंचोत्क्रम्योच्चस्थानेनाऽऽरोप्यः आरोपितश्चेत्प्रमाद्यतीतियोजना २ । ३ । ४ । ५ । ६ अबुद्धिरितिच्छेदः ७ । ८ । ९ बहिश्चराःप्राणाइवेतिशेषः १०

११ । १२ । १३ । १४ विसृताअपरावर्तिनः १५ । १६ । १७ । १८ । १९ । २० ॥ इतिशांतिप० राजध० नीलकंठीयेभारभा० एकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥ ॥ ७ ॥
राजवृत्तानीत्यध्यायःपूर्वोक्तानांराजधर्माणांसर्वेषामुपसंहारार्थः १ राजधर्माणांराजधर्मविदांमतंयद्विस्तरेणोक्तंतदेवप्रणेयंप्रकर्षेणनेतुंवोढुंशक्यंसंक्षिप्तमित्यर्थः प्रब्रूहि २ सर्वभूतरक्षणेकृत्स्नो
राजधर्मःपरिसमाप्तइत्याह रक्षणमिति ३ एतदेवमयूरदृष्टांतेनोपपादयति यथेति बर्हाणिपक्षान् भुजगाशनोमयूरः ४ तैक्ष्ण्यंक्रूरत्वं जिह्मत्वंकौटिल्यं आदाल्भ्यंदल्भोभयंतदभावोऽदल्भोऽभयं

सिंहस्यसततंपार्श्वेसिंहएवानुगोभवेत् ॥ असिंहःसिंहसहितःसिंहवल्लभतेफलम् ११ यस्तुसिंहःश्वभिःकीर्णःसिंहकर्मफलेरतः ॥ नससिंहफलंभोक्तुंशक्तःश्वभिरुपासितः १२ एवमेतन्मनुष्येंद्रशूरैःप्राज्ञैर्बहुश्रुतैः ॥ कुलीनैःसहशक्येतकृत्स्नाजेतुंवसुंधरा १३ नाविद्योनानृजुःपार्श्वेनाप्राज्ञोनामहाधनः ॥ संग्राह्योवसुधापालैर्भृत्योभृत्यवतांवर १४ बाणवद्विसृतायांतिस्वामिकार्यपरानराः ॥ येभृत्याःपार्थिवहितास्तेषांसांत्वंप्रयोजयेत् १५ कोशश्चसततंरक्ष्योयत्नमास्थायराजभिः ॥ कोशमूलाहिराजानःकोशोवृद्धिकरोभवेत् १६ कोष्ठागारंचतेनित्यंस्फीतैर्धान्यैःसुसंवृतम् ॥ सदाऽस्तुसत्सुसंन्यस्तंधनधान्यपरोभव १७ नित्ययुक्ताश्चतेभृत्याभवंतुरणकोविदाः ॥ वाजिनांचप्रयोगेषुवैशारद्यमिहेष्यते १८ ज्ञातिबंधुजनावेक्षीमित्रसंबंधिसंवृतः ॥ पौरकार्यहितान्वेषीभवकौरवनंदन १९ एषातेनैष्ठिकीबुद्धिःप्रजास्वभिहितामया ॥ शुनोनिदर्शनंतातकिंभूयःश्रोतुमिच्छसि २० ॥ इतिश्रीमहाभारतेशांतिप० राजध० ऋषिसंवादेएकोनविंशाधिकशततमोऽध्यायः ॥ ११९ ॥ युधिष्ठिरउवाच ॥ राजवृत्तान्यनेकानित्वयाप्रोक्तानिभारत ॥ पूर्वैःपूर्वनियुक्तानिराजधर्मार्थवेदिभिः १ तदेवविस्तरेणोक्तंपूर्वदृष्टंसतांमतम् ॥ प्रणेयंराजधर्माणांप्रब्रूहिभरतर्षभ २ ॥ भीष्मउवाच ॥ रक्षणंसर्वभूतानामितिक्षात्रंपरंमतम् ॥ तद्यथारक्षणंकुर्यात्तथाशृणुमहीपते ३ यथाबर्हाणिचित्राणिबिभर्तिभुजगाशनः ॥ तथाबहुविधंराजारूपंकुर्वीतधर्मवित् ४ तैक्ष्ण्यंजिह्मत्वमादाल्भ्यंसत्यमार्जवमेवच ॥ मध्यस्थःसत्वमातिष्ठंस्तथावैसुखमृच्छति ५ यस्मिन्नर्थेहितंयत्स्यात्तद्वर्णंरूपमादिशेत् ॥ बहुरूपस्यराज्ञोहिसूक्ष्मोप्यर्थोनसीदति ६ नित्यंरक्षितमंत्रःस्याद्यथामूकःशरच्छिखी ॥ श्लक्ष्णाक्षरतनुःश्रीमान्भवेच्छास्त्रविशारदः ७ आपद्द्वारेषुयुक्तःस्याज्जलप्रस्रवणेष्विव ॥ शैलवर्षोदकानीवद्विजान्सिद्धान्समाश्रयेत् ॥ अर्थकामःशिखांराजाकुर्याद्धर्मध्वजोपमाम् ८ नित्यमुद्यतदंडःस्यादाचरेदप्रमादतः ॥ लोकेचायव्ययौदृष्ट्वाबृहद्वृक्षामिवास्रवत् ९

तस्यभावआदाल्भ्यंअभयप्रदत्वमित्यर्थः रलयोःसावर्ण्याद्दर्भीभयेइरबस्यरूपं आदानमितिपाठांतरेस्पष्टोऽर्थः ५ यस्मिन्नर्थेदंडेऽनुग्रहेवाहितंक्रूरंशांतंवारूपमादिशेद्दर्शयेत् ६ । ७ आपद्द्वारेषुमंत्रभेदादिषुयुक्तोऽवहितःस्यात् शैलवर्षोदकानिपर्वतप्रदेशेवृष्टयाजनितानिमहानदीजलानि शिखांयोग्यलिंगंक्रूरत्वादिकंकुर्यात्प्रकाशयेत् ८ नित्यमिति आचरेद्यथायोग्यंदंडं तत्रदृष्टांतःबृहदिति बृहंतोवृक्षायत्रतद्बृहद्वृक्षंतालवनं आस्रवद्रसंप्रस्रवत् यथारसग्राहीप्रदेशविशेषेप्वप्रहृत्यरसंगृह्णातिनतुक्रूरमवृक्षच्छेदेनेक्षुकांडादिवत्तथोरसांजिघृक्षति एवंप्रजानामायव्ययौज्ञात्वाताजीवयंस्ताभ्योधनरसमादद्यादित्यर्थः ९

मृजाशुद्धिस्तद्वान् भौमानिपरेषांसस्यानिचरणैरश्वादिगमनैः क्षिपेन्नाशयेत् १० अर्थात्मृगयादिव्याजात्परराष्ट्रंसमाचरन्परपक्षान्विधूनयेत् ११ छायांपरदुर्गाधिपतिनासांधिकृत्वादेवतादर्शनादिव्याजेनाकस्मात्परदुर्गंगत्वाप्रविश्यतन्नाशयेदित्याह उच्छ्रितानिति १२ असितग्रीवोमयूरोनिशीथप्राद्दृषिमज्जेत अदृश्योऽतःपुरचरएवस्यात् १३ तत्रापिचारैर्दर्शितासुभूमिषुधात्रीसौविदल्लसूपकारादिषुपरैर्भेदितेषुअभिगतान्विषादीन्पाशान्परिवर्जयेदात्मानंरक्षेच्चेत्याह नेति १४ ननुकुतस्तत्रापिपाशप्रसक्तिरतआह प्रणयेदिति गहनेदुर्बोधेपाशज्ञानेसतितांकपटभूमिंप्रतिपद्यात्मानंप्रणयेत्प्रापयेत्तदानश्येदेव वाशब्दएवार्थे प्रयोजयंतिहिराजानोविषमयींकन्यांकृत्वाद्वीपांतरग्रामेयंपद्मिनीजातीयाकन्याअस्याःस्पर्शमात्राद्दशीतिवार्षिकोऽपिषोडशवर्षोभवतीतिसेयमतिश्रेष्ठरत्नतयाश्रीमतामर्थेकल्पिताऽनुग्राह्याचेयंवयंचेतिब्रुवाणाः तत्रचारमुखात्कपटंश्रुत्वातांनप्रणयेत् ऊहितान्केनचिन्निमित्तेनतर्कितांस्तानतिविषान्कन्यादीन्स्पर्शमात्रेणोच्छ्वासमात्रेणवासंगतमात्रकामशकादिमरणलिंगेनज्ञातान्हन्यादेव १५ नाशयेदितिसार्धः बलबर्हाणिस्थूलान्पक्षान्सैन्यस्यपक्षस्थानीयान्महाशिबिरवारवनितानटनर्तकादींश्चनाशयेत् मयूरइवदूरीकुर्यात् । 'बलंगंध

मृजावान्स्यात्स्वयूथ्येषुभौमानिचरणैःक्षिपेत् ॥ जातपक्षःपरिस्पंदेप्रेक्षेद्वैकल्यमात्मनः १० दोषान्विवृणुयाच्छत्रोःपरपक्षान्विधूनयेत् ॥ काननेष्विवपुष्पाणिबहिरर्थान्समाचरन् ११ उच्छ्रितान्नाशयेत्स्फीतान्नरेंद्रानचलोपमान् ॥ श्रयेच्छायामविज्ञातांगुप्तंरणमुपाश्रयेत् १२ प्रावृषीवासितग्रीवोमज्जेतनिशिनिर्जने ॥ मायूरेणगुणेनैवस्त्रीभिश्चावेक्षितश्चरेत् १३ नजह्याच्चतनुत्राणंरक्षेदात्मानमात्मना ॥ चारभूमिष्वभिगतान्पाशांश्चपरिवर्जयेत् १४ प्रणयेद्वापितांभूमिंप्रणश्येद्गहनेपुनः ॥ हन्यात्क्रुद्धानतिविषांस्तान्जिह्मगतयोऽहितान् १५ नाशयेद्बलबर्हाणिसन्निवासान्निवासयेत् ॥ सदाबर्हिनिभःकामंप्रशस्तंकृतमाचरेत् ॥ सर्वतश्चाददेत्प्रज्ञांपतंगंगहनेष्विव १६ एवंमयूरवद्राजास्वराज्यंपरिपालयेत् ॥ आत्मबुद्धिकरींनीतिंविदधीतविचक्षणः १७ आत्मसंयमनंबुद्ध्यापरबुद्ध्याऽवधारणम् ॥ बुद्ध्याचात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् १८ परंविश्वासयेत्साम्नास्वशक्तिंचोपलक्षयेत् ॥ आत्मनःपरिमर्शेनबुद्धिंबुद्ध्याविचारयेत् १९ सांत्वयोगमतिःप्राज्ञःकार्याकार्यप्रयोजकः ॥ निगूढबुद्धेर्धीरस्यवक्तव्येवाकृतंतथा २० सनिकृष्टांकथांप्राज्ञोयदिबुद्ध्याबृहस्पतिः ॥ स्वभावमेष्यतेतप्तंकृष्णायसमिवोदके २१ अनुयुंजीतकृत्यानिसर्वाण्येवमहीपतिः ॥ आगमैरुपदिष्टानिस्वस्यचैवपरस्यच २२

रसेरूपेस्थामनिस्थौल्यसैन्ययोः'इतिमेदिनी सन्निवासान्दृढमूलान्पक्षानमात्यादीन्शूरांश्चवासयेत्स्थापयेत् बर्हिनिभःमयूरतुल्यःकामंयथेष्टंप्रशस्तंकृतंप्रशस्तांक्रियांपक्षाणांविस्फारणमाचरेत् अनेनैवक्रमेणसर्वतश्चजातिमात्रात्प्रज्ञांआददीत यथोक्तं । 'बकवच्चिंतयेदर्थान्सिंहवच्चपराक्रमेत्'इत्यादि । पतंगंशलभसमूहोयथागहनेषुपततिगहनंचनिष्पत्रंकरोतिएवंसंभूयशत्रुराष्ट्रेपतितव्यमित्यर्थः । पन्नगंगहनेष्विवेतिपाठेपन्नगग्राहीपन्नगमिवाकस्माच्छत्रुंगृह्णीयादित्यर्थः १६ । १७ बुद्ध्याआत्मनःसंयमनंइत्थमेवकर्तुंयुक्तंनियमंकुर्यात् । परबुद्ध्याचतत्रैवार्थेसंवादितयातस्यार्थस्यावधारणंदृढतरोनिश्चयःकार्यः । बुद्ध्याशास्त्रोत्थधियाआत्मगुणस्यपूर्वोक्तनिश्चयहेतोःप्राप्तिर्भवतिएतदेवशास्त्रस्यनिदर्शनंप्रयोजनंयत्कार्यक्षोदक्षमतावुद्धेरित्यर्थः १८ आत्मनःस्वस्यपरिमर्शेनसर्वतोऽतीतानागतविचारेणबुद्धिंकार्यनिश्चयंबुद्ध्याऊहापोहकौशलरूपयाप्रमेययाविचारयेत्साधकबाधकभूमौसंचारयेत् १९ तमेवाह सांत्वेति वक्तव्येउपदेशेकर्तव्येकृतंअलं तस्योपदेशापेक्षानास्तीत्यर्थः २० सोऽनंतरश्लोकोक्तःप्राज्ञोबुद्ध्याबृहस्पतिसमोऽपिसन्नयदिनिकृष्टांकथांनिर्बुद्धिस्ववादंप्रागुपात्तहिंसयएवयुक्तयास्वभावंस्वास्थ्यंएष्यते उदकेप्रक्षिप्तंतप्तायसंशैत्यमिव २१ । २२

२१ । २२ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ गोभिःरश्मिभिः चरान्चारान्स्वनुचरान्समाचारान् ३२ नअर्थप्रसूचयेत्अर्थवशान्नज्ञापयेत् ३३ । ३४ संचयात्र विसर्गीस्यात्कोशाद्धनंनदद्यादपितुपर्याहृतमेवेत्यर्थः ३५। ३६ आत्मादेहः देशेकालेवाऽप्रमादइत्येकं ३७ ।३८ अबालःअहीनः अन्यःसंपन्नः ३९ शत्रोःशत्रुंप्राप्यनैवहीयेतैत्रप्रमादीस्यात् ४०



मृदुशीलंतथाप्राज्ञंशूरंचार्थविधानवित् ॥ स्वकर्मणिनियुंजीतयेचान्येचबलाधिकाः २३ अथदृष्टानियुक्तानिस्वानुरूपेषुकर्मसु ॥ सर्वांस्ताननुवर्तेतस्वरांस्तं त्रीरिवायता २४ धर्माणामविरोधेनसर्वेषांप्रियमाचरेत् ॥ ममायमितिराजायःसपर्वतइवाचलः २५ व्यवसायंसमाधायसूर्योरश्मीनिवायतान् ॥ धर्ममेवाभिर क्षेतकृत्वातुल्येप्रियाप्रिये २६ कुलप्रकृतिदेशानांधर्मज्ञान्मृदुभाषिणः ॥ मध्येवयसिनिर्दोषान्हितेयुक्तानविक्लवान् २७ अलुब्धान्शिक्षितान्दांतान्धर्मेषुपरि निष्ठितान् ॥ स्थापयेत्सर्वकार्येषुराजाधर्मार्थरक्षिणः २८ एतेनचप्रकारेणकृत्यानामागतिंगतिं ॥ युक्तःसमनुतिष्ठेततुष्टश्चारैरुपस्कृतः २९ अमोघक्रोधह र्षस्यस्वयंकृत्यान्ववेक्षितुः ॥ आत्मप्रत्ययकोशस्यवसुदैववसुंधरा ३० व्यक्तश्चानुग्रहोयस्ययथार्थश्चापिनिग्रहः ॥ गुप्तात्मागुप्तराष्ट्रश्चसराजाराजधर्मवित् ३१ नि त्यंराष्ट्रमवेक्षेतगोभिःसूर्यइवोदितः ॥ चरान्स्वनुचरान्विद्यात्तथाबुद्ध्यास्वयंचरेत् ३२ कालंप्राप्तमुपादद्यान्नार्थंराजाप्रसूचयेत् ॥ अहन्यहनिसंदुह्यान्महींगा मिवबुद्धिमान् ३३ यथाक्रमेणपुष्पेभ्यश्चिनोतिमधुषट्पदः ॥ तथाद्रव्यमुपादायराजाकुर्वीतसंचयं ३४ यद्धिगुप्तावशिष्टंस्यात्तद्वित्तंधर्मकामयोः ॥ संचयात्र विसर्गीस्याद्राजाशास्त्रविदात्मवान् ३५ नार्थमल्पंपरिभवेन्नावमन्येतशात्रवान् ॥ बुद्ध्यात्तुबुद्ध्येदात्मानंनचाबुद्धिषुविश्वसेत् ३६ धृतिर्दाक्ष्यंसंयमोबुद्धिरात्मा धैर्यंशौर्यंदेशकालाप्रमादः ॥ अल्पस्यवाबहुनोवाविवृद्धौधनस्यैतान्यष्टसमिंधनानि ३७ अग्निःस्तोकोवर्धतेप्याज्यसिक्तोबीजंचैकंरोहसहस्रमेति ॥ आयव्य यौविपुलौसन्निशाम्यतस्मादल्पंनावमन्येतवित्तम् ३८ बालोऽप्यबालःस्थविरोरिपुर्यःसदाप्रमत्तंपुरुषंनिहन्यात् ॥ कालेनान्यस्तस्यमूलंहरेतकालज्ञातापा र्थिवानांवरिष्ठः ३९ हरेत्कीर्तिंधर्ममस्योपरुंध्यादर्थेदीर्घंवीर्यमस्योपहन्यात् ॥ रिपुर्द्वेष्टादुर्बलोवाबलीवातस्माच्छत्रोर्नैवहीयेद्यतात्मा ४० क्षयंवृद्धिंपालनंसंचयं वाबुद्ध्वाऽप्युभौसंहतौसर्वकामौ ॥ ततश्चान्यन्मतिमान्संदधीततस्माद्राजाबुद्धिमत्तांश्रयेत ४१ बुद्धिर्दीप्ताबलवंतंहिनस्तिबलंबुद्ध्याचापाल्यतेवर्धमानम् ॥ शत्रु र्बुद्ध्यासीदतेवर्धमानोबुद्धेःपश्चात्कर्मयत्तत्प्रशस्तम् ४२ सर्वान्कामान्कामयानोहिधीरःसत्वेनाल्पेनाप्नुतेहीनदोषः ॥ यश्चात्मानंप्रार्थयतेऽर्थ्यमानैःश्रेयःपात्रंपू रयतेचनाल्पम् ४३ तस्माद्राजाप्रगृहीतःप्रजासुमूलंलक्ष्म्याःसर्वशोह्याददीत ॥ दीर्घकालंह्यपिसंपीड्यमानोविद्युत्संपातमपिवानोर्जितःस्यात् ४४

क्षयमैश्वर्यंसर्वमैश्वर्यादि कामोविजिगीषादिस्तौसर्वकामौबुद्ध्वावासंदधीतसंधिंवाकुर्यात् अन्यद्विग्रहादिकंकुर्यात् ४१ वर्धमानंक्षीयमाणं बुद्धेःपश्चात्बुद्ध्यनुसारि ४२ अल्पेनापिसत्वेन बलेनअर्थ्यमानैर्धुकमात्मानंप्रार्थयते लुब्धोदत्तश्चभवतीत्यर्थः श्रेयःपात्रंनपूरयतेततःश्रेयोऽस्यसर्वंतीत्यर्थः ४३ प्रगृहीतःस्निग्धः लक्ष्म्यामूलमर्थंसर्वशःसर्वाभ्यःसंपीड्यमानःसंपीडयन्प्रजाश्चवि द्युद्वत्संपातंसम्यक्पतित्वाप्यूर्जितःस्यात् अत्रवृद्धवृक्षदृष्टांतःप्रागेवोक्तः ४४



व्यवसायेनोद्योगेनविद्यालभेत् ४५ अनुद्योगेनजन्मननाशयेदित्याह यत्रेति ४६ कर्मयज्ञादिगुणोऽर्थयस्यतत्फलंसुखंतदुपभोगेसर्वोऽपिलुब्धः सचेदर्थैर्हीनस्तर्हिसुखलोभाद्धर्मंकामंद्रव्यादिवि षयंचजहाति ४७ समृद्धिंचप्राप्यापीतिशेषः धनमुत्कोचरूपं नप्रगृह्णीतनसंगृह्णीत ४८। ४९ धर्मान्वितेषुब्राह्मणमंडलेषु विज्ञाताज्ञाततत्त्वः राजसंग्रहेसामंतवशीकरणे ५० निबोधबुद्ध्यस्व व्य तिसृत्यगुरुमनुसृत्य विदध्यात्वद्धदिकुर्यात् ५१ विधानजंदैवप्राप्तंराजधर्मोज्ञानेप्राप्तोऽप्यर्थःसद्योनश्यतीत्यर्थः ५२ गुणोपपन्नान्शौर्यादियुक्तान् गुणेषुसंधिविग्रहादिषु आत्मवानप्रमत्तः

विद्यातपोवाविपुलंधनंवासर्वंह्येतद्व्यवसायेनशक्यम् ॥ बुद्ध्यायत्तंतन्निवसेद्देहवत्सुतस्माद्विद्याद्व्यवसायंप्रभूतम् ४५ यत्रासतेमतिमंतोमनस्विनःशक्रोविष्णुर्यत्र सरस्वतीच ॥ वसंतिभूतानिचयत्रनित्यंतस्माद्विद्वान्नावमन्येतदेहम् ४६ लुब्धंहन्यात्संप्रदानेननित्यंलुब्धस्तृप्तिंपरवित्तस्यनैति ॥ सर्वोलुब्धःकर्मगुणोपभोगेयो ऽर्थैर्हीनोधर्मकामौजहाति ४७ धनंभोगंपुत्रदारंसमृद्धिंसर्वंलुब्धःप्रार्थयतेपरेषाम् ॥ लुब्धेदोषाःसंभवंतीहसर्वेतस्माद्राजानप्रगृह्णीतलुब्धम् ४८ संदर्शनेनपुरुषं जघन्यमपिचोदयेत् ॥ आरंभान्द्विषतांप्राज्ञःसर्वार्थांश्चप्रसूदयेत् ४९ धर्मान्वितेषुविज्ञातामंत्रीगुप्तश्चपांडव ॥ आप्तोराजाकुलीनश्चपर्याप्तोराजसंग्रहे ५० वि विप्रयुक्तान्नरदेवधर्मानुक्तान्समासेननिबोधबुद्ध्या ॥ इमान्विदध्याद्व्यतिसृत्ययोवैराजामहींपालयितुंसशक्तः ५१ अनीतिजंयस्यविधानजंसुखंहठप्रणीतंविवि वत्प्रदृश्यते ॥ नविद्यतेतस्यगतिर्महीपतेर्नविद्यतेराज्यसुखंह्यनुत्तमम् ५२ धनैर्विशिष्टान्मतिशीलपूजितान्गुणोपपन्नान्युधिदृष्टविक्रमान् ॥ गुणेषुदृष्ट्वानचि रादिवात्मवान्यतोभिसंधायनिहंतिशात्रवान् ५३ पश्येदुपायान्विविधैःक्रियापथैर्नचानुपायेनमतिंनिवेशयेत् ॥ श्रियंविशिष्टांविपुलंयशोधनंनदोषदर्शीपुरुषः समश्नुते ५४ प्रीतिप्रवृत्तौविनिवर्तितौयथासुहृत्सुविज्ञायनिवृत्यचोभयोः ॥ यदेवमित्रंगुरुभारमावहेत्तदेवसुस्निग्धमुदाहरेद्बुधः ५५ एतान्मयोक्तांश्चरराजध र्मान्नृणांचगुप्तौमतिमादधत्स्व ॥ अवाप्स्यसेपुण्यफलंसुखेनसर्वोहिलोकोनृपधर्ममूलः ५६ ॥ इतिश्रीमहाभारतेशांति० रा० राजधर्मकथनेविंशाधिकशतत मोऽध्यायः ॥ १२० ॥ ॥ युधिष्ठिरउवाच ॥ अयंपितामहेनोक्तोराजधर्मःसनातनः ॥ ईश्वरश्चमहादंडोदंडेसर्वंप्रतिष्ठितम् १ देवतानामृषीणांचपितृ णांचमहात्मनाम् ॥ यक्षरक्षःपिशाचानांसाध्यानांचविशेषतः २ सर्वेषांप्राणिनांलोकेतिर्यग्योनिनिवासिनाम् ॥ सर्वव्यापीमहातेजादंडःश्रेयानितिप्रभो ३ इत्येवमुक्तंभवतादंडेवैसचराचरम् ॥ पश्यतालोकमासक्तंससुरासुरमानुषम् ४ एतदिच्छाम्यहंज्ञातुंतत्त्वेनभरतर्षभ ॥ कोदंडःकीदृशोदंडःकिंरूपःकिंपरायणः ५ किमात्मकःकथंभूतःकथंमूर्तिःकथंप्रभो ॥ जागर्तिचकथंदंडःप्रजास्ववहितात्मकः ६



यतउत्थानंकुर्वाणान्शात्रवानभिसंधायलक्षीकृत्यनिहंति ५३ दोषदर्शीनिर्दोषेष्वप्रीतिशेषः ५४ सुहृत्सुविज्ञायज्ञानपूर्वंकर्मप्रीतिःप्रवृत्तौसत्यांयौसुहृदौनिवृत्तस्यनितरांवृत्त्वाएकस्मिन्कार्येविनिव र्तितावभिमुखीकृतौतयोरुभयोर्मध्येयदेवगुरुभारमावहेत्तदेवोदाहरेत्प्रशंसेत् ५५ चराधुःतिष्ठ आदधत्स्वआधत्स्व दधधारणेइत्यस्यरूपं ५६ ॥ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनी लकंठीयेभारतभावदीपेविंशाधिकशततमोऽध्यायः ॥ १२० ॥ ॥ ७ ॥ अयंपितामहेनेत्यध्यायद्वयेनदंडस्वरूपादिकमुच्यते १ । २ । ३ । ४ । ५ । ६

७ । ८ कोदंडइत्यादयएकादशप्रश्नास्तत्रकोदंडइत्यस्योत्तरमाह धर्मेति धर्मस्यसंख्यासम्यक्ख्यानंप्रकाशनंदंडापरपर्यायव्यवहारशब्दवाच्यं व्यवहारपदंनिर्वक्ति तस्येतिसार्धेन अव हितात्मनोराज्ञः तस्यधर्मस्यलोपःकथंकेनप्रकारेणनस्यात्सप्रकारोव्यवहारोविगतोऽवहारोनीचमार्गेणपरस्वादिहरणंयस्मात्सइतिव्युत्पत्त्यासिद्धः ९ अपिचेति एतदेतस्यव्यवहारस्य १० प्रजारक्षकत्वाद्व्यवहारएवधर्मपदवाच्योऽपीत्याह सुप्रणीतेनेति ११ यथेति सुप्रणीतेनेतिश्लोकेनयन्मनुवचनमुक्तंतद्ब्रह्मणएववचनंमनुमुखाच्छ्रुतमित्यर्थः १२ प्रागिति दंडएवउक्तवचनाद्धर्मशब्दे नव्यवहारशब्देनचोच्यतइत्यर्थः प्राग्वचनंधर्मवचनम् १३ रूपतोऽग्निरिवोत्थितइतितस्यांतरंरूपंदुष्टसंतापकत्वात्क्रूरमग्नितुल्यमित्युक्तम् १४ बाह्यंरूपंवर्णयति नीलेति दंडाधिष्ठात्र्यादे वतायाइदंध्यानादिकंअज्ञानादद्दंड्यदंडजंदोषंनिराकर्तुंदंडकर्तृभिरमात्यादिभिर्ध्येयमित्येवमर्थमुक्तं यदितुलौकिकानिदंडधर्मव्यवहारांगाण्यत्रोत्प्रेक्ष्यंतेतर्हिएवंव्याख्येयम्। तत्रदंडःसंहर्तृत्वाद्रौद्रो रुद्रश्चनीललोहितइतितस्याग्निरिवोत्थितइतिलोहितंरूपमुक्तं । नीलंचनीलोत्पलेतिनिरुक्तं तत्रराज्ञोदंड्येद्वेषात्तद्धनेचलोभात्प्रणेयस्यदंडस्यमालिन्यरागोत्पन्नत्वान्नीललोहितंदंडस्यरूपं चतस्रोदंष्ट्राइवप्राणिनांवधसाधनानियत्रसः । तथाहि केचिन्मानभंगेनकेचिद्धनहरणेनकेचिदंगवैकल्येनकेचित्प्राणव्यापादनेनचवध्यंतेऽतस्तान्येवतद्दंष्ट्राः । चत्वारोभुजाःअर्थादानकर्तारो

कश्चपूर्वापरमिदंजागर्तिप्रतिपालयन् ॥ कश्चविज्ञायतेपूर्वंकोवरोदंडसंज्ञितः ॥ किंसंस्थश्चभवेद्दंडःकावाऽस्यगतिरुच्यते ७ ॥ भीष्मउवाच ॥ श्रृणुकौरव्ययोदंडो व्यवहारोयथाचसः ॥ यस्मिन्हिसर्वमायत्तंसदंडइहकेवलः ८ धर्मसंख्यामहाराजव्यवहारइतीष्यते ॥ तस्यलोपःकथंनस्याल्लोकेष्ववहितात्मनः ९ इत्येवंव्यवहा रस्यव्यवहारत्वमिष्यते ॥ अपिचैतत्पुराराजन्मनुनाप्रोक्तमादितः १० सुप्रणीतेनदंडेनप्रियाप्रियसमात्मना ॥ प्रजारक्षतियःसम्यग्धर्मएवसकेवलः ११ यथोक्त मेतद्वचनंप्रागेवमनुनापुरा ॥ यन्मयोक्तंमनुष्येंद्रब्रह्मणोवचनंमहत् १२ प्रागिदंवचनंप्रोक्तमतःप्राग्वचनंविदुः ॥ व्यवहारस्यचाख्यानाद्व्यवहारइहोच्यते १३ दंडे त्रिवर्गःसततंसुप्रणीतेप्रवर्तते ॥ दैवंहिपरमोदंडोरूपतोऽग्निरिवोत्थितः १४ नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ॥ अष्टपान्नैकनयनःशंकुकर्णोर्ध्वरोमवान् १५

यस्यसः तथाहि । प्रजाभ्यःसामंतेभ्यश्चकरादानम् । अनृतादर्थिनोऽर्थ्यमानद्रव्याद्द्विगुणधनादानम् । अनृतात्प्रत्यर्थिनस्तत्समद्रव्यादानं । धनवतःकदर्याद्ब्राह्मणात्सर्वस्वादानंचेति । अथतस्यैवव्यवहाररूपिणोरूपंवर्णयति अष्टपान्नैकनयनःशंकुकर्णोर्ध्वरोमवान्जटीद्विजिह्वइति आवेदनं भाषासंप्रतिपत्तिर्मिथ्योत्तरंकारणोत्तरंप्राङ्न्यायंप्रतिभूःक्रियाफलसिद्धिश्चेत्यष्टौ पादाः एतैर्हिनिमित्तैर्दंडश्चरतिनान्यथेत्येतेपादास्तत्रआवेदनंअर्थिनासभ्यान्प्रतिगत्वादेवदत्तोमदीयंशतंसुवर्णानांअमुकस्मिन्देशेकालेसाक्षिणिचगृहीत्वानददातीतिवद्धस्तेनलेखनं पुन रपिप्रत्यर्थिनमाहूयतत्समक्षंतथैवलेखनंभाषा । तत्रप्रत्यर्थिनाऽहमेतस्यधारयामीत्युक्तेनकस्यापिदंडइतितदिदंसंप्रतिपत्तिरूपमुत्तरंनदंडपादत्वेनगण्यते नाहमेतस्यधारयामीतिमिथ्योत्तरं मयागृहीतमासीत्तत्पुनःपरावृत्त्यदत्तमितिकारणोत्तरं अस्मिन्नर्थेऽनेनपूर्वमहमभियुक्तस्तत्रपराजितोमयेतिप्राङ्न्यायोत्तरं त्रिविधेऽप्यस्मिन्नुत्तरेअर्थिप्रत्यर्थिभ्यांप्रतिभूर्देयःअहमेतस्मिन्परा जितइदंद्रव्यंदास्यामीति क्रिया स्वमतसाधकानांसाक्षिमंत्रभोगशपथादीनांप्रदर्शनं ततोऽन्यतरेणैतस्यजयइतिअष्टभ्यःपादेभ्योनंतरमपराधीदंड्यइत्येतेदंडस्यपादाः यदाहयाज्ञवल्क्यः । 'निह्नवेभावितोदद्याद्धनंराज्ञेचतत्समम् ॥ मिथ्याभियोगीद्विगुणमभियोगाद्धनंवहेत्' इति । नैकनयनःनैकानिबहूनिनयनस्थानीयानिराजामात्यपुरोहितपर्षदाख्यानिदर्शनसाधनानियस्मिन् । शंकुकर्णःतीक्ष्णकर्णःअवश्यंश्राव्यः । ऊर्ध्वरोमवान्अत्यंतउत्फुल्लः शंकुकर्णश्चासौऊर्ध्वरोमवांश्चेतिसमासः १५

जटीतिजटीजनैकसंदेहजटिलः । द्विजिह्वःअर्थिप्रत्यर्थिनोर्वाक्यद्वयमस्यास्तीतिद्वैजिह्व्यस्यसतथा । एवंव्यवहाररूपिणोदंडस्यरूपमुक्त्वाधर्माख्यदंडरूपमाह ताम्रास्योमृगराजतनुच्छदइति ताम्रोव ह्निराहवनीयादिरास्यंयस्यसतथा मृगराजःकृष्णमृगस्तत्संबंधीचर्मतनुच्छदःशरीराच्छादकंप्रावरणमस्य । एतेनदीक्षाप्रधानोयज्ञउक्तः । एतच्चसर्वेषांदानोपवासहोमादीनामुपलक्षणम् १६ । १७ १८ । १९ । २० । २१ । २२ मुख्यंदंडस्यरूपमाह दंडोहीति २३ तत्पत्न्यारूपमाहतथेति दंडेनसहितानीतिर्दंडनीतिः २४ किंपरायणइत्यस्योत्तरमर्थानर्थादिविवेकएवतस्यपरायण

जटीद्विजिह्वस्ताम्रास्योमृगराजतनुच्छदः ॥ एतद्रूपंबिभर्त्युग्रंदंडोनित्यंदुराधरः १६ असिर्धनुर्गदाशक्तिस्त्रिशूलंमुद्गरःशरः ॥ मुशलंपरशुश्चक्रंपाशोदंडर्ष्टितोमराः १७ सर्वप्रहरणीयानिसंतियानीहकानिचित् ॥ दंडएवससर्वात्माлोकेचरतिमूर्तिमान् १८ भिंदंश्छिंदन्रुजन्कृंतन्दारयन्पाटयंस्तथा ॥ घातयन्नभिधा वंश्चदंडएवचरत्युत १९ असिर्विशसनोधर्मस्तीक्ष्णवर्मादुराधरः ॥ श्रीगर्भोविजयःशास्ताव्यवहारःसनातनः २० शास्त्रंब्राह्मणमंत्राश्चशास्ताप्राग्वदतांवरः ॥ ध र्मपालोऽक्षरोदेवःसत्यगोनित्यगोऽग्रजः २१ असंगोरुद्रतनयोमनुर्ज्येष्ठःशिवंकरः ॥ नामान्येतानिदंडस्यकीर्तितानियुधिष्ठिर २२ दंडोहिभगवान्विष्णुर्दंडो नारायणःप्रभुः ॥ शश्वद्रूपंमहद्बिभ्रन्महान्पुरुषउच्यते २३ तथोक्ताब्रह्मकन्येतिलक्ष्मीर्वृत्तिःसरस्वती ॥ दंडनीतिर्जगद्धात्रीदंडोहिबहुविग्रहः २४ अर्थानर्थौ सुखंदुःखंधर्माधर्मौबलाबले ॥ दौर्भाग्यंभागधेयंचपुण्यापुण्येगुणागुणौ २५ कामाकामावृतुर्मासःशर्वरीदिवसःक्षणः ॥ अप्रमादःप्रमादश्चहर्षक्रोधौशमोदमः २६ दैवंपुरुषकारश्चमोक्षामोक्षौभयाभये ॥ हिंसाहिंसेतपोयज्ञःसंयमोऽथविषाविषम् २७ अंतश्चादिश्चमध्यंचकृत्यानांचप्रपंचनम् ॥ मदःप्रमादोदर्पश्चदंभोधैर्यंनया नयौ २८ अशक्तिःशक्तिरित्येवंमानस्तंभौव्ययाव्ययौ ॥ विनयश्चविसर्गश्चकालाकालौचभारत २९ अनृतंज्ञानितासत्यंश्रद्धाश्रद्धेतथैवच ॥ क्लीबताव्यवसाय श्चलाभालाभौजयाजयौ ३० तीक्ष्णतामृदुतामृत्युरागमानागमौतथा ॥ विरोधश्चाविरोधश्चकार्याकार्येबलाबले ३१ असूयाचानसूयाचधर्माधर्मौतथैवच ॥ अपत्रपानपत्रपेह्रीश्चसंपद्विपत्पदम् ३२ तेजःकर्माणिपांडित्यंवाक्शक्तिस्तत्त्वबुद्धिता ॥ एवंदंडस्यकौरव्यलोकेस्मिन्बहुरूपता ३३ नस्याद्यदीहदंडो वैप्रमथेयुःपरस्परम् ॥ भयाद्दंडस्यनान्योन्यंघ्नंतिचैवयुधिष्ठिर ३४ दंडेनरक्ष्यमाणाहिराजन्नहरहःप्रजाः ॥ राजानंवर्धयंतीहतस्माद्दंडःपरायणम् ३५ व्यवस्थापयतिक्षिप्रमिमंलोकंनरेश्वर ॥ सत्येव्यवस्थितोधर्मोब्राह्मणेष्ववतिष्ठते ३६ धर्मयुक्ताद्द्विजश्रेष्ठादेवयुक्ताभवंतिच ॥ बभूवयज्ञोदेवेभ्योयज्ञःप्रीणा तिदेवताः ३७ प्रीताश्चदेवतानित्यमिंद्रेपरिवदंत्यपि ॥ अन्नंददातिशक्रश्चाप्यनुगृह्णन्निमाःप्रजाः ३८

मित्याह अर्थानर्थावित्यादिना तस्माद्दंडःपरायणमित्यंतेन २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ किमात्मकःकथंभूतःकथंमूर्तिरितिप्रश्नत्रयस्योत्तरमाह व्यवस्थापयतीति लोकपालनात्मकःसत्यपक्षपातीब्राह्मणमूर्तिस्वरूपइत्यर्थः ३६ दंडस्यब्राह्मणमूर्तित्वंविवृण्वन्कथंजागर्तीत्यस्योत्तरमाह धर्मयुक्ताइत्यादिना ब्राह्मणमूर्तिर्दंडोयज्ञा दिद्वारान्नवृष्टिहेतुतयाभूतानिपालयन्जागर्तीतिश्लोकत्रयार्थः ३७ । ३८

३९ कश्चपूर्वापरमिदंजागर्तिप्रतिपालयन्नित्यस्योत्तरमाह एवंप्रयोजनइत्यादिना ज्ञेयोनःसनरेंद्रस्योदंडःप्रत्ययएवचेत्यंतेन ४० । ४१ अददर्दीश्वरइतिशेषः अस्मैराज्ञे दंडंदंडनीतिं अतएवा यंबलेनसंयुक्तःपंचविधमात्मायस्यसतथा । धर्मव्यवहारदंडेश्वरजीवरूपेणपंचप्रकारात्मकोराजा ४२ बहुधनसहिता अमात्याःबहुधनामात्याः । बलानितुतेजओजःसहआख्यानिदेहेंद्रियबु द्धिसामर्थ्यानि । अष्टकैरष्टसंख्याकैरनंतरश्लोकेवक्ष्यमाणैर्हस्त्यादिभिराहार्यमर्जनीयं । अन्यद्बलंकोशवृद्धिरूपं ४३ । ४४ अंगस्यसैन्यस्य राजस्यदंडमेवांगमितिवाक्यशेषात् । युक्तस्यसन्नद्ध स्यरथादिकंशरीरंविदुरितितृतीयेनान्वयः रसदावैद्याः ४५ प्राड्विवाकाःपृच्छतीतिप्राट्सचासौविवाकश्चविवदमानयोर्द्वयोःप्रवृत्तिनिमित्तवेत्ता ४६ दंडःसैन्यं दंडःप्रसिद्धः ४७ दंडोदंडाधीनं ४८ प्रदर्शितोदंडः स्थापनायचप्रदर्शिताब्राह्मणाः ४९ भर्तृप्रत्ययोभर्तारौद्वौविवदमानौप्रत्ययःकारणंयस्यसतथावादिप्रविवादिभ्यांप्रवर्तितोव्यवहारः। तयोरन्यतरस्यप्रत्ययोऽभ्युपगमोलक्षणंयस्य

प्राणाश्चसर्वभूतानांनित्यमन्नेप्रतिष्ठिताः ॥ तस्मात्प्रजाःप्रतिष्ठंतेदंडोजागर्तितासुच ३९ एवंप्रयोजनश्चैवदंडःक्षत्रियतांगतः ॥ रक्षन्प्रजाःसजागर्तिनित्यंस्व वहितोऽक्षरः ४० ईश्वरःपुरुषःप्राणःसत्वंचित्तंप्रजापतिः ॥ भूतात्माजीवइत्येवंनामभिःप्रोच्यतेऽष्टभिः ४१ अददद्दंडमेवास्मैधृतमैश्वर्यमेवच ॥ बलेनयश्चसं युक्तःसदापंचविधात्मकः ४२ कुलंबहुधनामात्याःप्रज्ञाप्रोक्ताबलानितु ॥ आहार्यमष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ४३ हस्तिनोऽश्वारथाःपत्तिर्नावोविष्टिस्तथैवच ॥ दैशिकाश्चाविकाश्चैवतदष्टांगंबलंस्मृतम् ४४ अथवांगस्ययुक्तस्यरथिनोहस्तियायिनः ॥ अश्वारोहाःपदाताश्चमंत्रिणोरसदाश्चये ४५ भिक्षुकाःप्राड्विवाका श्चमौहुर्तादैवचिंतकाः ॥ कोशोमित्राणिधान्यंचसर्वोपकरणानिच ४६ सप्तप्रकृतिचाष्टांगंशरीरमिहयद्विदुः ॥ राज्यस्यदंडमेवांगंदंडःप्रभवएवच ४७ ईश्वरेण प्रयत्नेनकारणात्क्षत्रियस्यच ॥ दंडोदत्तःसमानात्मादंडोहीदंसनातनम् ४८ राज्ञांपूज्यतमोनान्योयथाधर्मःप्रदर्शितः ॥ ब्रह्मणालोकरक्षार्थंस्वधर्मस्थापनाय च ४९ भर्तृप्रत्ययउत्पन्नोव्यवहारस्तथाऽपरः ॥ तस्माद्यःसहितोदृष्टोभर्तृप्रत्ययलक्षणः ५० व्यवहारस्तुवेदात्मावेदप्रत्ययउच्यते ॥ मौलश्चनरशार्दूलशा स्त्रोक्तश्चतथाऽपरः ५१ उक्तोयश्चापिदंडोऽसौभर्तृप्रत्ययलक्षणः ॥ ज्ञेयोनःसनरेंद्रस्थोदंडःप्रत्ययएवच ५२ दंडप्रत्ययदृष्टोऽपिव्यवहारात्मकःस्मृतः ॥ व्यवहारःस्मृतोयश्चसवेदविषयात्मकः ५३ यश्चवेदप्रसूतात्मासधर्मोगुणदर्शनः ॥ धर्मप्रत्ययउद्दिष्टोयथाधर्मंकृतात्मभिः ५४

सभर्तृप्रत्ययलक्षणः अन्यतरपराजयादित्यर्थः सहितोहितमिष्टंतेनयुक्तःसहितः अन्यतरजयावहइत्यर्थः ५० वेदात्मावेदोक्तोदोषःपारदार्यादिस्तन्निवृत्त्यर्थंपर्षदंप्रतिगतश्चेत्तत्रप्रायश्चित्तात्मको वेदहेतुकएवदंडः । मौलःकुलाचारप्रयुक्तोयोव्यवहारस्तत्रापिशास्त्रोक्तोदंडः । यथाशूद्रस्यसुरापानेप्रायश्चित्तंनास्त्यथापिकस्मिंश्चिच्छूद्रकुलेएवंनियमोयोऽस्माकंमध्येसुरांपिबतिसज्ञाति बाह्यइति तस्योल्लंघनेशूद्रस्यसुरापानोक्तंप्रायश्चित्तंभवति । तथाचशास्त्रविदामनुक्रमणंधर्मज्ञानांसमयःप्रमाणंवेदाश्चेति ५१ तेषांत्रयाणांदंडानांमध्येआद्यःक्षत्रियाधीनइत्याह उक्तइति नोऽस्माभिःक्षत्रियैर्दंडोऽपिज्ञेयः तत्रप्रत्ययोऽपिज्ञेयः ५२ अस्यापिवेदमूलत्वमाह दंडइति विविधोऽवहारोऽन्योन्यंपरपक्षक्षेपेणस्वपक्षसाधनंव्यवहारस्तदात्मकोन्यायः सयद्यपिदंडः प्रत्ययदृष्टस्तथापिसव्यवहारपदार्थोमन्वादिभिःस्मृतोऽस्ति अतःसोऽपिवैदिकप्रणीतत्वाद्वेदविषयात्मकोवेदार्थगोचरोऽस्तीत्यर्थः ५३ इतरौद्वौव्यवहारौवेदमूलत्वाद्धर्मरूपावित्याह यश्चे ति द्वाभ्यां यथाधर्ममुद्दिष्टोममपारदार्यजेनाधर्मेणधर्मलोपोमाभूदितिपश्चात्तापवत्युद्दिष्टप्रायश्चित्तरूपोदंडोधर्मएवेत्यर्थः ५४



प्रजागोप्ताप्रजाकृतस्यनियमस्यरक्षिताशूद्रस्यापिसुरापानप्रायश्चित्तादिरूपःसोऽपिधर्मएवेत्यर्थः ५५ दंडव्यवहारधर्मवेदसत्पथप्रजापतीनामैकात्म्यमाहद्वाभ्यां यइति ५६ । ५७ । ५८ यतः प्रजापतिर्भूतकृत्ततोहेतोःअयमस्मदीयोभर्तृप्रत्ययलक्षणोव्यवहारःप्रवृत्तस्तस्मादस्मिन्विषयेसइदंनिदर्शनंवाक्यमुवाच ५९ तदेववाक्यंपठति मातेति योराजास्वधर्मेणतिष्ठतितस्यराज्ञइतिसं

व्यवहारःप्रजागोप्ताब्रह्मदिष्टोयुधिष्ठिर ॥ त्रीन्धारयतिलोकान्वैसत्यात्माभूतिवर्धनः ५५ यश्चदंडःसदृष्टोनोव्यवहारःसनातनः ॥ व्यवहारश्चदृष्टोयःसवेदइतिनि श्चितम् ५६ यश्चवेदःसवैधर्मोयश्चधर्मःससत्पथः ॥ ब्रह्मापितामहःपूर्वंबभूवाथप्रजापतिः ५७ लोकानांसहिसर्वेषांससुरासुररक्षसाम् ॥ समनुष्योरगवतांकर्ता चैवसभूतकृत् ५८ ततोऽन्योव्यवहारोऽयंभर्तृप्रत्ययलक्षणः ॥ तस्मादिदमथोवाचव्यवहारनिदर्शनम् ५९ मातापिताचभ्राताचभार्याचैवपुरोहितः ॥ नादं ड्योविद्यतेराज्ञोयःस्वधर्मेणतिष्ठति ६० ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिदंडस्वरूपादिकथनेएकविंशाधिकशततमोऽध्यायः॥१२१॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ अंगेषुराजाद्युतिमान्वसुहोमइतिश्रुतः १ सराजाधर्मविन्नित्यंसहपत्न्यामहातपाः ॥ मुंजपृष्ठंजगामा थपितृदेवर्षिपूजितम् २ तत्रशृंगेहिमवतोमेरौकनकपर्वते ॥ यत्रमुंजावटेरामोजटाहरणमादिशत् ३ तदाप्रभृतिराजेंद्रऋषिभिःसंशितव्रतैः ॥ मुंजपृष्ठइतिप्रो क्तःसदेशोरुद्रसेवितः ४ सतत्रबहुभिर्युक्तस्तदाश्रुतिमयैर्गुणैः ॥ ब्राह्मणानामनुमतोदेवर्षिसदृशोऽभवत् ५ तंकदाचिददीनात्मासखाशक्रस्यमानिता ॥ अ भ्यगच्छन्महीपालोमांधाताशत्रुकर्शनः ६ सोपसृत्यतुमांधातावसुहोमंनराधिपम् ॥ दृष्ट्वाप्रकृष्टतपसंविनतोऽग्रेऽभ्यतिष्ठत ७ वसुहोमोऽपिराज्ञोवैपाद्यमर्घ्यं न्यवेदयत् ॥ सप्तांगस्यतुराज्यस्यपप्रच्छकुशलाव्यये ८ सद्भिराचरितंपूर्वंयथावदनुयायिनम् ॥ अपृच्छद्वसुहोमस्तंराजन्किंकरवाणिते ९ सोऽब्रवीत्परम प्रीतोमांधाताराजसत्तमम् ॥ वसुहोमंमहाप्राज्ञमासीनंकुरुनंदन १० ॥ मांधातोवाच ॥ बृहस्पतेर्मतंराजन्नधीतंसकलंत्वया ॥ तथैवौशनसंशास्त्रंविज्ञाततेनरो त्तम ११ तदहंज्ञातुमिच्छामिदंडउत्पद्यतेकथम् ॥ किंचास्यपूर्वंजागर्तिकिंवापरममुच्यते १२ कथंक्षत्रियसंस्थश्चदंडःसंप्रत्यवस्थितः ॥ ब्रूहिमेसुमहाप्राज्ञ ददाम्याचार्यवेतनम् १३ ॥ वसुहोमउवाच ॥ शृणुराजन्यथादंडःसंभूतोलोकसंग्रहः ॥ प्रजाविनयरक्षार्थंधर्मस्यात्मासनातनः १४ ब्रह्मायियक्षुर्भगवान्सर्व लोकपितामहः ॥ ऋत्विजंनात्मनस्तुल्यंददर्शेतिहिनःश्रुतम् १५ सगर्भंशिरसादेवोबहुवर्षाण्यधारयत् ॥ पूर्णेवर्षसहस्रेतुसगर्भःक्षुवतोऽपतत् १६ सक्षुपोनाम संभूतःप्रजापतिररिंदम ॥ ऋत्विगासीन्महाराजयज्ञेतस्यमहात्मनः १७



बंधः ६० ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीयेभारतभावदीपेएकविंशाधिकशततमोऽध्यायः ॥ १२१ ॥ ॥ छ ॥ ॥ अत्रदंडोत्पत्तौविषये १ । २ । ३ । ४ ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ आचार्यवेतनंगुरुदक्षिणां १३ । १४ यियक्षुर्यष्टुमिच्छुः १५ क्षुवतःक्षुतवतः १६ । १७

दृष्टरूपप्रधानत्वात्दृष्टरूपंदीक्षापरिग्रहःप्रजानियंतादीक्षांप्रविष्टइतिनियमनरूपोदंडोऽदर्हितोऽभवदित्यर्थः १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३०

॥१०१॥ तस्मिन्प्रवृत्तेसत्रेतुब्रह्मणःपार्थिवर्षभ ॥ दृष्टरूपप्रधानत्वाद्दंडःसोंतर्हितोभवत् १८ तस्मिन्नंतर्हितेचापिप्रजानांसंकरोऽभवत् ॥ नैवकार्यंनवाकार्यंभोज्याभोज्यंन
विद्यते १९ पेयापेयेकुतःसिद्धिर्हिंसंतिचपरस्परम् ॥ गम्यागम्यंतदानासीत्स्वंपरस्वंचवैसमम् २० परस्परंविलुंपंतिसारमेयायथाऽऽमिषम् ॥ अबलान्बलिनो
घ्नंतिनिर्मर्यादमवर्तत २१ ततःपितामहोविष्णुंभगवंतंसनातनम् ॥ संपूज्यवरदंदेवंमहादेवमथाब्रवीत् २२ अत्रत्वमनुकंपांवैकर्तुमर्हसिकेशव ॥ संकरोनभवेदत्रय ॥१२२॥
थातद्वैविधीयताम् २३ ततःसभगवान्ध्यात्वाचिरंशूलवरायुधः ॥ आत्मानमात्मनादंडंससृजेदेवसत्तमः २४ तस्माच्चधर्मचरणान्नीतिर्देवीसरस्वती ॥ ससृजेदंड
नीतिंसात्रिषुलोकेषुविश्रुता २५ भूयःसभगवान्ध्यात्वाचिरंशूलवरायुधः ॥ तस्यतस्यनिकायस्यचकारैकैकमीश्वरम् २६ देवानामीश्वरंचक्रेदेवंदशशतेक्षणम् ॥
यमंवैवस्वतंचापिपितॄणामकरोत्प्रभुम् २७ धनानांराक्षसानांचकुबेरमपिचेश्वरम् ॥ पर्वतानांपतिंमेरुंसरितांचमहोदधिम् २८ अपांराज्येसुराणांचविदधेवरुणं
प्रभुम् ॥ मृत्युंप्राणेश्वरमथोतेजसांचहुताशनम् २९ रुद्राणामपिचेशानंगोप्तारंविदधेप्रभुम् ॥ महात्मानंमहादेवंविशालाक्षंसनातनम् ३० वसिष्ठमीशंविप्राणां
वसूनांजातवेदसम् ॥ तेजसांभास्करंचक्रेनक्षत्राणांनिशाकरम् ३१ वीरुधामंशुमंतंचभूतानांचप्रभुंवरम् ॥ कुमारंद्वादशभुजंस्कंदंराजानमादिशत् ३२ कालंसर्वे
शमकरोत्संहारविनयात्मकम् ॥ मृत्योश्चतुर्विभागस्यदुःखस्यचसुखस्यच ३३ ईश्वरःसर्वदेवस्तुराजराजोनराधिपः ॥ सर्वेषामेवरुद्राणांशूलपाणिरितिश्रुतिः ३४
तमेनंब्रह्मणःपुत्रमनुजातंक्षुपंददौ ॥ प्रजानामधिपंश्रेष्ठंसर्वधर्मभृतामपि ३५ महादेवस्तवस्तस्मिन्वृत्तेयज्ञेयथाविधि ॥ दंडंधर्मस्यगोप्तारंविष्णवेसत्कृतंददौ ३६
विष्णुरंगिरसेप्रादादंगिरामुनिसत्तमः ॥ प्रादादिंद्रमरीचिभ्यांमरीचिर्भृगवेददौ ३७ भृगुर्ददावृषिभ्यस्तुदंडंधर्मसमाहितम् ॥ ऋषयोलोकपालेभ्योलोकपालाः
क्षुपायच ३८ क्षुपस्तुमनवेप्रादादादित्यतनयायच ॥ पुत्रेभ्यःश्राद्धदेवस्तुसूक्ष्मधर्मार्थकारणात् ३९ विभज्यदंडःकर्तव्योधर्मेणनयदृच्छया ॥ दुष्टानांनि
ग्रहोदंडोहिरण्यंबाह्यतःक्रिया ४० व्यंगत्वंचशरीरस्यवधोनाल्पस्यकारणात् ॥ शरीरपीडास्तास्ताश्चदेहत्यागोविवासनम् ४१ तंददौसूर्यपुत्रस्तुमनुर्वै
रक्षणार्थकम् ॥ आनुपूर्व्याच्चदंडोयंप्रजाजागर्तिपालयन् ४२ इंद्रोजागर्तिभगवानिंद्रादग्निर्विभावसुः ॥ अग्नेर्जागर्तिवरुणोवरुणाच्चप्रजापतिः ४३
प्रजापतेस्ततोधर्मोजागर्तिविनयात्मकः ॥ धर्माच्चब्रह्मणःपुत्रोव्यवसायःसनातनः ४४

३१ । ३२ विनयोविवृद्धिः चत्वारोविभागायस्यतस्यशस्त्रंशत्रुर्यमःकर्मच रोगोपथ्याशनप्रयोजकोरागोयमःकर्मचेविधा ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ विभज्यन्यायंन्यायाभा ॥१०१॥
संचविविच्य दुष्टनिग्रहएवदंडस्यमुख्यंप्रयोजनं हिरण्यादिग्रहणंतुलोकानांबिभीषिकार्थंनतुकोशवृद्धयर्थमित्यर्थः ४० देहत्यागःप्रपातादौ विवासनंस्वदेशाद्दूरीकरणम् ४१ । ४२ । ४३ । ४४

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीयेभारतभावदीपेद्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥
तातेति १ किंमूलाःकिमुद्दिश्यक्रियंतइत्यर्थः प्रभवत्यस्मादितिप्रभवःकिमेषामुत्पत्तिस्थानं तेषांसाहित्यंकथंपृथक्पृथक्त्वंचकथमितिचत्वारःप्रश्नाः २ सूचीकटाहन्यायेनसाहित्यमाह यदेति सुमनसः
शोभनचित्ताःपुमांसोयदास्युस्तदालोकेभूमौधर्मपूर्वकेऽर्थनिश्चयेअहंगर्भाधानोक्तविधिनाऋतौभार्यांगत्वासुपुत्रंलप्स्याम्येवेत्येवंरूपेप्रवृत्तेसति । तेषुधर्मार्थकामास्त्रयोऽपिकालोऋतुवेलाप्रभावोजाया

व्यवसायात्ततस्तेजोजागर्तिपरिपालयत् ॥ ओषध्यस्तेजसस्तस्मादोषधीभ्यश्चपर्वताः ४५ पर्वतेभ्यश्चजागर्तिरसोरसगुणात्तथा ॥ जागर्तिनिर्ऋतिर्देवीज्योत
षिनिर्ऋतेरपि ४६ वेदाःप्रतिष्ठाज्योतिर्भ्यस्ततोहयशिराःप्रभुः ॥ ब्रह्मापितामहस्तस्माज्जागर्तिप्रभुरव्ययः ४७ पितामहान्महादेवोजागर्तिभगवान्शिवः ॥
विश्वेदेवाःशिवाच्चापिविश्वेभ्यश्चतथर्षयः ४८ ऋषिभ्योभगवान्सोमःसोमाद्देवाःसनातनाः ॥ देवेभ्योब्राह्मणालोकेजाग्रतीत्युपधारय ४९ ब्राह्मणेभ्यश्चराजन्या
लोकान्रक्षंतिधर्मतः ॥ स्थावरंजंगमंचैवक्षत्रियेभ्यःसनातनम् ५० प्रजाजाग्रतिलोकेऽस्मिन्दंडोजागर्तितासुच ॥ सर्वंसंक्षिपतेदंडःपितामहसमप्रभः ५१ जा
गर्तिकालःपूर्वंचमध्येचांतेचभारत ॥ ईश्वरःसर्वलोकस्यमहादेवःप्रजापतिः ५२ देवदेवःशिवःसर्वोजागर्तिसततंप्रभुः ॥ कपर्दीशंकरोरुद्रःशिवःस्थाणुरुमापतिः
५३ इत्येषदंडोविख्यातआदौमध्येतथाऽवरे ॥ भूमिपालोयथान्यायंवर्तेतानेनधर्मवित् ५४ ॥ भीष्मउवाच ॥ इतीदंवसुहोमस्यशृणुयाद्योमतंनरः ॥ श्रुत्वासम्य
क्प्रवर्तेतसर्वान्कामानवाप्नुयात् ५५ इतितेसर्वमाख्यातंयोदंडोमनुजर्षभ ॥ नियंतासर्वलोकस्यधर्माक्रांतस्यभारत ५६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध०
दंडोत्पत्त्युपाख्यानेद्वाविंशाधिकशततमोऽध्यायः ॥ १२२ ॥ युधिष्ठिरउवाच ॥ तातधर्मार्थकामानांश्रोतुमिच्छामिनिश्चयम् ॥ लोकयात्राहिकात्स्न्येनतिष्ठे
त्केषुप्रतिष्ठिता १ धर्मार्थकामाःकिंमूलास्त्रयाणांप्रभवश्चकः ॥ अन्योन्यंचानुषज्जंतेवर्ततेचपृथक्पृथक् २ ॥ भीष्मउवाच ॥ यदातेस्युःसुमनसोलोकेधर्मार्थनि
श्चये ॥ कालप्रभवसंस्थासुसज्जंतेचत्रयस्तदा ३ धर्ममूलःसदैवार्थःकामोऽर्थफलमुच्यते ॥ संकल्पमूलास्तेसर्वेसंकल्पोविषयात्मकः ४ विषयाश्चैवकात्स्न्येनसर्व
आहारसिद्धये ॥ मूलमेतत्त्रिवर्गस्यनिवृत्तिर्मोक्षउच्यते ५ धर्माच्छरीरसंगुप्तिर्धर्मार्थंचार्थउच्यते ॥ कामोरतिफलश्चात्रसर्वेतेचरजस्वलाः ६

संस्थासम्यक्कर्मनिष्पत्तिस्तासुसर्वेषुसज्जंतेयुगपदुत्पद्यंते । योनिसंस्काररूपोधर्मःपुत्ररूपोऽर्थःस्त्रीसंगरूपःकामश्चभवतीत्यर्थः ३ आद्यस्यप्रश्नद्वयस्योत्तरमाह धर्मेति दिव्यदेवतादिशरीरप्राप्ति
३५ मर्थाश्चहव्यादीनुद्दिश्यधर्मःक्रियतेऽतोदैवेनसहितोऽर्थोधर्ममूलः । अर्थस्यभोगार्थत्वंप्रसिद्धमितिकाममूलोऽर्थइतिनोक्तं । कामोऽर्थफलंकामस्यमूलंइंद्रियप्रीतिरित्यर्थः । संकल्पमूलाःसंकल्पप्रभ
वास्तेसर्वेऽपीतिद्वितीयस्योत्तरंएतदेवोपपादयतिसंकल्पइति रूपादिविषयःसंकल्पोरूपाद्याश्चभोगार्थाइतिसर्वेऽप्येतेसंकल्पमूलाः । मोक्षस्तुतद्विलक्षणोनिःसंकल्परूपइत्यर्थः ४ । ५ किमेवं
त्रिवर्गःसर्वेणापिनसेव्यइत्याशंक्यरजस्वलोरजःप्रधानःसनसेव्यःसत्त्वप्रधानस्तुसेव्यएवेत्याह धर्मादिति आरोग्यार्थोधर्मःकाम्यधर्मार्थंइंद्रियप्रीत्यर्थंकामइत्येतेहेयाइत्यर्थः ६

स्वर्गादिकंबाह्यंफलंविप्रकृष्टंतदर्थाएतेविप्रकृष्टाः । आत्मज्ञानरूपंफलंतुसन्निकृष्टं तदर्थाएतेसन्निकृष्टास्तांश्चरेत्सेवेत । धर्मश्चित्तशुद्ध्यर्थोऽर्थोनिष्कामकर्मार्थःकामोदेहधारणमात्रार्थइत्ये वमेतेसेव्याइत्यर्थः । धर्मादीन्कामनैष्ठिकान्कामांतान्धर्मार्थकामान्सर्वानपिमनसाऽपिनत्यजेत्किमुतस्वरूपेणनत्यजेदित्यर्थः । कथंतर्हितांस्त्यजेदित्याह तपसाविमुक्तइति विचारेणैवतेभ्यो विमुक्तोभवेत्संगफलत्यागपूर्वकंधर्मादीननुतिष्ठेदितिभावः ७ ततश्चकिमतआह श्रेष्ठेइत्यर्धेन त्रिवर्गस्यबुद्धिर्निष्ठाश्रेष्ठेमोक्षएवास्ति यत्यदिअयंकर्तातंश्रेष्ठंप्राप्नुयात् इतस्तुनिष्कामस्यतस्यदौ र्लभ्यमेवेतिभावः । काम्यंधर्मंनिंदति कर्मणेति अस्मात्कर्मणइदंफलंप्राप्स्येइतिबुद्धिपूर्वकृतेनापिकर्मणाऽर्थःकदाचिद्भवतिकदाचिन्नेतिव्यभिचारः ८ अर्थार्थंधर्मादपिअन्यत्सेवाकृष्यादिकंभ वतीतिनधर्मैकलभ्योऽर्थइत्यर्थार्थंधर्मोनकार्यः । प्रत्युतविपरीतमपिअपरंमतमस्ति । केचिद्धठेनैवार्थोभवतिस्वभावेनवादैवेनवेतिमन्यंतइतितदर्थंमलंधर्मेणेत्यर्थः । एवंधर्मस्यार्थहेतुत्वंदूरी कृत्यार्थस्यापिधर्महेतुत्वंदूषयति अर्थमवाप्यापिजगदनर्थार्थमपायार्थंभवति । तथाहि धनमत्तःसर्वंपापंकरोतीतिनार्थेनधर्मोत्पत्तिर्नित्याऽस्ति । अर्थंविनाऽपिधर्मोत्पत्तिरस्तीत्याहान्यत्राद्योप

सन्निकृष्टांश्चरेदेतान्नचैतान्मनसात्यजेत् ॥ विमुक्तस्तपसासर्वान्धर्मादीन्कामनैष्ठिकान् ७ श्रेष्ठेबुद्धिस्त्रिवर्गस्ययदयंप्राप्नुयान्नरः ॥ कर्मणाबुद्धिपूर्वेणभवत्यर्थोन वापुनः ८ अर्थार्थमन्यद्भवतिविपरीतमथापरम् ॥ अनर्थार्थमवाप्यार्थमन्यत्राद्योपकारकम् ॥ बुद्ध्याबुद्धिरिहार्थेनतदज्ञाननिकृष्टया ९ अपध्यानमलोधर्मो मलोऽर्थस्यनिगूहनम् ॥ संप्रमोदमलःकामोभूयःस्वगुणवर्जितः १० अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ कामंदकस्यसंवादमांगरिष्ठस्यचोभयोः ११ कामंदमृषिमासीनमभिवाद्यनराधिपः ॥ आंगरिष्ठोऽथपप्रच्छकृत्वासमयपर्ययम् १२ यःपापंकुरुतेराजाकाममोहबलात्कृतः ॥ प्रत्यासन्नस्यतस्यर्षेकिंस्यात्पापप्र णाशनम् १३ अधर्मंधर्मइतिचयोऽज्ञानादाचरेन्नरः ॥ तंचापिप्रथितंलोकेकथंराजानिवर्तयेत् १४ ॥ कामंदउवाच ॥ योधर्मार्थौपरित्यज्यकाममेवानुवर्तते॥ स धर्मार्थपरित्यागात्प्रज्ञानाशमिहार्छति १५ प्रज्ञानाशात्मकोमोहस्तथाधर्मार्थनाशकः॥तस्मान्नास्तिकताचैवदुराचारश्चजायते १६ दुराचारान्यदाराजाप्रदुष्टान्न नियच्छति ॥ तस्मादुद्विजतेलोकःसर्पाद्वेश्मगतादिव १७ तंप्रजानानुवर्ततेब्राह्मणानचसाधवः ॥ ततःसंशयमाप्नोतितथावध्यत्वमेतिच १८ अपध्वस्तस्त्ववम तोदुःखंजीवितमृच्छति ॥ जीवेच्चयदपध्वस्तस्तच्छुद्धंमरणंभवेत् १९ अत्रैतदाहुराचार्याःपापस्यपरिगर्हणम् ॥ सेवितव्यात्रयीविद्यासत्कारोब्राह्मणेषुच २०

कारकं स्वार्थेन्नलृ अन्यत्रान्यदेवोपवासव्रतादिकंआद्यस्यधर्मस्योपकारकंवर्धकंभवति इहार्थेअस्मिन्नर्थेधर्मादयोऽर्थतोधर्मइतिविषयेअज्ञाननिकृष्टयाबुद्ध्याउपलक्षितःअबुद्धिर्विमूढःतत्उक्तरू पंधर्मार्थयोःफलंनप्राप्नुयात्उभयत्रापिव्यभिचारस्यान्यथासिद्धेःप्रदर्शितत्वात्तस्माच्छ्रेष्ठमेवतयोःफलमव्यभिचारीतिज्ञेयं ९ धर्मादीनांरजस्वलत्वमुक्तंतदेवरजोदर्शयतिअपेति अपध्यानंफ लाभिसंधिः । निगूहनंदानभोगयोरप्रतिपादनं । संप्रमोदःप्रीतिविशेषः सत्वत्रिवर्गः स्वगुणवर्जितःसुतरांअगुणोदुर्गुणोऽपध्यानादिस्तेनवर्जितःसन्भूयःबहुतरंफलंचित्तशुद्धिद्वाराब्रह्मानंद रूपंप्रयच्छतीतिशेषः १० एवंपूर्वोक्तस्यप्रश्नत्रयस्योत्तरमुक्त्वावर्ततेचपृथक्पृथगितिचतुर्थप्रश्नस्योत्तरमितिहासमुखेनाह अत्रापीति ११ समयपर्ययंमर्यादाभंगं १२ प्रत्यासन्नस्यपश्चात्त प्तस्य १३ । १४ अत्रआपस्तंभाम्रनिदर्शनात् तद्यथाम्रेफलार्थेनिर्मितेच्छायागंधइत्यनूत्पद्येते एवंधर्मंचर्यमाणमर्थाअनूत्पद्यंतइत्येवंरूपाद्धर्मोऽर्थकामाभ्यामविनाभूतोऽर्थश्चकामेनाविना भूतःसर्वत्रास्तिपरिशेषात्कामएवधर्मार्थौअविक्रम्यास्तितत्परंनिंदति यइति १५ । १६ । १७ । १८ । १९ एवंनिंदितस्यकर्तव्यमाह अत्रेति २०



२१ । २२ । २३ । २४ । २५ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे त्रयोविंशाधिकशततमोऽध्यायः ॥ १२३ ॥ इमेजनाइतिशीलाध्यायःधर्मस्यकारण

महामनाभवेद्धर्मेविवहेच्चमहाकुले ॥ ब्राह्मणांश्चापिसेवेतक्षमायुक्तान्मनस्विनः २१ जपेदुदकशीलःस्यात्सततंसुखमास्थितः ॥ धर्मान्वितान्संप्रविशेद्बहिःकृत्वे हदुष्कृतीन् २२ प्रसादयेन्मधुरयावाचाप्यथकर्मणा ॥ तवास्मीतिवदेन्नित्यंपरेषांकीर्तयन्गुणान् २३ अपापोह्येवमाचारःक्षिप्रंबहुमतोभवेत् ॥ पापान्यपिहि कृच्छ्राणिशमयेन्नात्रसंशयः २४ गुरवोहिपरंधर्मंयंब्रूयुस्तंतथाकुरु ॥ गुरूणांहिप्रसादाद्धिश्रेयःपरमवाप्स्यसि २५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मा नुशासनपर्वणिकामंदांगरिष्ठसंवादेत्रयोविंशाधिकशततमोऽध्यायः ॥ १२३ ॥ ॥ ५ ॥ ॥ युधिष्ठिरउवाच ॥ इमेजनानरश्रेष्ठप्रशंसंतिसदाभुवि ॥ ध र्मस्यशीलमेवादौततोमेसंशयोमहान् १ यदितच्छक्यमस्माभिर्ज्ञातुंधर्मभृतांवर ॥ श्रोतुमिच्छामितत्सर्वंयथैतदुपलभ्यते २ कथंतत्प्राप्यतेशीलंश्रोतुमिच्छा मिभारत ॥ किंलक्षणंचतत्प्रोक्तंब्रूहिमेवदतांवर ३ ॥ भीष्मउवाच ॥ पुरादुर्योधनेनेहधृतराष्ट्रायमानद ॥ आख्यातंतप्यमानेनश्रियंदृष्ट्वातथागताम् ४ इंद्र प्रस्थेमहाराजतवसभ्रातृकस्यह ॥ सभायांचाहवचनंतत्सर्वंशृणुभारत ५ भवतस्तांसभांदृष्ट्वासमृद्धिंचाप्यनुत्तमाम् ॥ दुर्योधनस्तदाऽऽसीनःसर्वंपित्रेन्यवेदय त् ६ श्रुत्वाहिधृतराष्ट्रश्चदुर्योधनवचस्तदा ॥ अब्रवीत्कर्णसहितंदुर्योधनमिदंवचः ७ ॥ धृतराष्ट्रउवाच ॥ किमर्थंतप्यसेपुत्रश्रोतुमिच्छामितत्त्वतः ॥ श्रुत्वा त्वामनुनेष्यामियदिसम्यग्भविष्यति ८ त्वयाचमहदैश्वर्यंप्राप्तंपरपुरंजय ॥ किंकराभ्रातरःसर्वेमित्रसंबंधिनःसदा ९ आच्छादयसिप्रावारानश्नासिपिशितौद नम् ॥ आजानेयावहंत्यश्वाःकेनासिहरिणःकृशः १० ॥ दुर्योधनउवाच ॥ दशतानिसहस्राणिस्नातकानांमहात्मनां ॥ भुंजतेरुक्मपात्रीभिर्युधिष्ठिरनिवेश ने ११ दृष्ट्वाचतांसभांदिव्यांदिव्यपुष्पफलान्विताम् ॥ अश्वांस्तित्तिरकल्माषान्वस्त्राणिविविधानिच १२ दृष्ट्वातांपांडवेयानामृद्धिंवैश्रवणींशुभाम् ॥ अमि त्राणांसुमहतीमनुशोचामिभारत १३ ॥ धृतराष्ट्रउवाच ॥ यदीच्छसिश्रियंतातयादृशीसायुधिष्ठिरे ॥ विशिष्टांवानरव्याघ्रशीलवान्भवपुत्रक १४ शीलेनहित्र योलोकाःशक्याजेतुंनसंशयः ॥ नहिकिंचिदसाध्यंवैलोकेशीलवतांभवेत् १५ एकरात्रेणमांधाताञ्यहेणजनमेजयः ॥ सप्तरात्रेणनाभागःपृथिवीप्रतिपेदिरे १६ एतेहिपार्थिवाःसर्वेशीलवंतोदयान्विताः ॥ अतस्तेषांगुणक्रीतावसुधास्वयमागता १७ ॥ दुर्योधनउवाच ॥ कथंतत्प्राप्यतेशीलंश्रोतुमिच्छामिभारत ॥ ये नशीलेनतैःप्राप्ताक्षिप्रमेववसुंधरा १८ ॥ धृतराष्ट्रउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ नारदेनपुराप्रोक्तंशीलमाश्रित्यभारत १९ प्रह्लादेनहृतं राज्यंमहेंद्रस्यमहात्मनः ॥ शीलमाश्रित्यदैत्येनत्रैलोक्यंचवशेकृतम् २० ततोबृहस्पतिंशक्रःप्रांजलिःसमुपस्थितः ॥ तमुवाचमहाप्राज्ञःश्रेयइच्छामिवेदितुं २१

मितिशेषः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ गुणाक्रीतेतिपाठेगुणारामा १७ । १८ । १९ । २० । २१

नैःश्रेयसंमोक्षोपयोगि २२ कोविशेषःनैःश्रेयसादपिकिंश्रेयइत्यर्थः २३ । २४ । २५ । २६ । २७ । २८ । २९ आचर्यमाचरणीयम् ३० । ३१ । ३२ । ३३ काव्यानिशुक्रप्रोक्तानिनीतिशास्त्रा

ततोबृहस्पतिस्तस्मैज्ञानंनैःश्रेयसंपरम् ॥ कथयामासभगवान्देवेंद्रायकुरूद्वह २२ एतावच्छ्रेयइत्येवबृहस्पतिरभाषत ॥ इंद्रस्तुभूयःपप्रच्छकोविशेषोभवेदि
ति २३ ॥ बृहस्पतिरुवाच ॥ विशेषोऽस्तिमहांस्तातभार्गवस्यमहात्मनः ॥ अत्रागमयभद्रंतेभूयएवसुरर्षभ २४ आत्मानस्तुततःश्रेयोभार्गवात्सुमहातपाः ॥
ज्ञानमागमयत्प्रीत्यापुनःसपरमद्युतिः २५ तेनापिसमनुज्ञातोभार्गवेणमहात्मना ॥ श्रेयोऽस्तीतिपुनर्भूयःशुक्रमाहशतक्रतुः २६ भार्गवस्त्वाहसर्वज्ञःप्रह्लादस्य
महात्मनः ॥ ज्ञानमस्तिविशेषेणेत्युक्तोहृष्टश्चसोऽभवत् २७ सततोब्राह्मणोभूत्वाप्रह्लादंपाकशासनः ॥ गत्वाप्रोवाचमेधावीश्रेयइच्छामिवेदितुम् २८ प्रह्लाद
स्त्वब्रवीद्विप्रंक्षणोनास्तिद्विजर्षभ ॥ त्रैलोक्यराज्यसक्तस्यततोनोपदिशामिते २९ ब्राह्मणस्त्वब्रवीद्राजन्यस्मिन्कालेक्षणोभवेत् ॥ तदोपादेष्टुमिच्छामियदा
ऽऽचर्यमनुत्तमम् ३० ततःप्रीतोऽभवद्राजाप्रह्लादोब्रह्मवादिनः ॥ तथेत्युक्त्वाशुभेकालेज्ञानतत्त्वंददौतदा ३१ ब्राह्मणोऽपियथान्यायंगुरुवृत्तिमनुत्तमाम् ॥ च
कारसर्वभावेनयदस्यमनसेप्सितम् ३२ पृष्टश्चतेनबहुशःप्राप्तंकथमनुत्तमम् ॥ त्रैलोक्यराज्यंधर्मज्ञकारणंतद्ब्रवीहिमे ॥ प्रह्लादोऽपिमहाराजब्राह्मणंवाक्यमब्र
वीत् ३३ ॥ प्रह्लादउवाच ॥ नासूयामिद्विजान्विप्रराजाऽस्मीतिकदाचन ॥ काव्यानिवदतांतेषांसंयच्छामिवहामिच ३४ तेविश्रब्धाःप्रभाषंतेसंयच्छंतिच
मांसदा ॥ तेमांकाव्यपथेयुक्तंशुश्रूषुमनसूयकम् ३५ धर्मात्मानंजितक्रोधंनियतंसंयतेंद्रियम् ॥ समासिंचंतिशास्तारःक्षौद्रंमध्विवमक्षिकाः ३६ सोऽहंवाग
ग्रविद्यानांरसानामवलेहिता ॥ स्वजात्यानधितिष्ठामिनक्षत्राणीवचंद्रमाः ३७ एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ॥ यद्ब्राह्मणमुखेकाव्यमेतच्छ्रुत्वाप्रवर्तते
३८ एतावच्छ्रेयइत्याहप्रह्लादोब्रह्मवादिनम् ॥ शुश्रूषितस्तेनतदादैत्येंद्रोवाक्यमब्रवीत् ३९ यथावद्गुरुवृत्त्यातेप्रीतोऽस्मिद्विजसत्तम ॥ वरंवृणीष्वभद्रंतेप्रदा
ताऽस्मिनसंशयः ४० कृतमित्येवदैत्येंद्रमुवाचसचवैद्विजः ॥ प्रह्लादस्त्वब्रवीत्प्रीतोगृह्यतांवरइत्युत ४१ ॥ ॥ ब्राह्मणउवाच ॥ ॥ यदिराजन्प्रसन्नस्त्वं
ममचेदिच्छसिप्रियम् ॥ भवतःशीलमिच्छामिप्राप्तुमेषवरोमम ४२ ततःप्रीतस्तुदैत्येंद्रोभयमस्याभवन्महत् ॥ वरेप्रदिष्टेविप्रेणनाल्पतेजाऽयमित्युत
४३ एवमस्त्वितिसप्राहप्रह्लादोविस्मितस्तदा ॥ उपाकृत्यतुविप्रायवरंदुःखान्वितोऽभवत् ४४ दत्तेवरेगतेविप्रेचिंताऽऽसीन्महतीतदा ॥ प्रह्लादस्यम
हाराजनिश्चयंनचजग्मिवान् ४५ तस्यचिंतयतस्तावच्छायाभूतंमहाद्युति ॥ तेजोविग्रहवत्तातशरीरमजहात्तदा ४६ तमपृच्छन्महाकायंप्रह्लादःकोभवा
निति ॥ प्रत्याहतंतुशीलोऽस्मित्यक्तोगच्छाम्यहंत्वया ४७

णिसर्वज्ञत्वाभिमानेननासूयामि ३४ तेमुनयःतेत्वांसंयच्छामिनियमयामीतिमांप्रभाषंते ३५ क्षुद्राभिर्मधुमक्षिकाभिर्निर्मितंक्षौद्रंमधु तत्रमक्षिकामध्विवमांतेशास्त्रेणसिंचंति ३६ सइति वागग्रवि
द्यानांवागग्रेएवनतुपुस्तकेविद्यायेषांतेषां ३७ । ३८ । ३९ । ४० । ४१ । ४२ तेजाऽयमितिविसंधिरार्षः ४३ । ४४ । ४५ तेजोविग्रहवत्तेजोमयशरीरंशीलम् ४६ । ४७



४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१

तस्मिन्द्विजोत्तमेराजन्वत्स्याम्यहमनिंदिते ॥ योऽसौशिष्यत्वमागम्यत्वयिनित्यंसमाहितः ४८ इत्युक्त्वांतर्हितंतद्वैशक्रंचान्वाविशत्प्रभो ॥ तस्मिंस्तेजसियाते
तुतादृग्रूपस्ततोपरः ४९ शरीरान्निःसृतस्तस्यकोभवानितिचाब्रवीत् ॥ धर्मंप्रह्लादमांविद्धियत्रासौद्विजसत्तमः ५० तत्रयास्यामिदैत्येंद्रयतःशीलंततोह्यहम् ॥
ततोऽपरोमहाराजप्रज्वलन्निवतेजसा ५१ शरीरान्निःसृतस्तस्यप्रह्लादस्यमहात्मनः ॥ कोभवानितिपृष्टश्चतमाहसमहाद्युतिः ५२ सत्यंविद्ध्यसुरेंद्राद्यप्रयास्ये
धर्ममन्वहम् ॥ यस्मिन्ननुगतेसत्येमहान्वैपुरुषोऽपरः ५३ निश्चक्रामततस्तस्मात्पृष्टश्चाहमहाबलः ॥ वृत्तंप्रह्लादमांविद्धियतःसत्यंततोह्यहम् ५४ तस्मिन्गते
महाशब्दःशरीरात्तस्यनिर्ययौ ॥ पृष्टश्चाहबलंविद्धियतोवृत्तमहंततः ५५ इत्युक्त्वाप्रययौतत्रयतोवृत्तंनराधिप ॥ ततःप्रभामयीदेवीशरीरात्तस्यनिर्ययौ ॥ ताम
पृच्छत्सदैत्येंद्रःसाश्रीरित्येनमब्रवीत् ५६ उषिताऽस्मिस्वयंवीरत्वयिसत्यपराक्रम ॥ त्वयात्यक्तागमिष्यामिबलंह्यनुगताह्यहम् ५७ ततोभयंप्रादुरासीत्प्रह्लादस्य
महात्मनः ॥ अपृच्छत्सततोभूयःक्वयासिकमलालये ५८ त्वंहिसत्यव्रतादेवीलोकस्यपरमेश्वरी ॥ कश्चासौब्राह्मणश्रेष्ठस्तत्त्वमिच्छामिवेदितुम् ५९ ॥श्रीरुवाच॥
सशक्रोब्रह्मचारीयस्त्वत्तश्चैवोपशिक्षितः ॥ त्रैलोक्येतेयदैश्वर्यंतत्तेनापहृतंप्रभो ६० शीलेनहित्रयोलोकास्त्वयाधर्मज्ञनिर्जिताः ॥ तद्विज्ञायसुरेंद्रेणतवशीलंह
तंप्रभो ६१ धर्मःसत्यंतथावृत्तंबलंचैवतथाऽप्यहम् ॥ शीलमूलामहाप्राज्ञसदानास्त्यत्रसंशयः ६२ ॥ भीष्मउवाच ॥ एवमुक्त्वागताश्रीस्तुतेचसर्वेयुधिष्ठिर ॥
दुर्योधनस्तुपितरंभूयएवाब्रवीद्वचः ६३ शीलस्यतत्त्वमिच्छामिवेत्तुंकौरवनंदन ॥ प्राप्यतेचयथाशीलंतंचोपायंवदस्वमे ६४ ॥ धृतराष्ट्रउवाच ॥ सोपायंपू
र्वमुद्दिष्टंप्रह्लादेनमहात्मना ॥ संक्षेपेणतुशीलस्यशृणुप्राप्तिंनरेश्वर ६५ अद्रोहःसर्वभूतेषुकर्मणामनसागिरा ॥ अनुग्रहश्चदानंचशीलमेतत्प्रशस्यते ६६ यद
न्येषांहितंनस्यादात्मनःकर्मपौरुषम् ॥ अपत्रपेतवायेननतत्कुर्यात्कथंचन ६७ तत्तुकर्मतथाकुर्याद्येनश्लाघ्येतसंसदि ॥ शीलंसमासेनैतत्तेकथितंकुरुसत्तम
६८ यद्यप्यशीलान्नृपतेप्राप्नुवंतिश्रियंक्वचित् ॥ नभुंजतेचिरंतातसमूलाश्चनसंतिते ६९ ॥ धृतराष्ट्रउवाच ॥ एतद्विदित्वातत्त्वेनशीलवान्भवपुत्रक ॥
यदीच्छसिश्रियंतातसुविशिष्टांयुधिष्ठिरात् ७० ॥ भीष्मउवाच ॥ एतत्कथितवान्पुत्रेधृतराष्ट्रोनराधिपः ॥ एतत्कुरुष्वकौंतेयततःप्राप्स्यसितत्फलम् ७१
॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणि शीलवर्णनंनाम चतुर्विंशाधिकशततमोऽध्यायः ॥ १२४ ॥ ॥ ४ ॥ ॥ युधिष्ठिरउवाच ॥
शीलप्रधानंपुरुषेकथितंतेपितामह ॥ कथंत्वाशासमुत्पन्नायाचाशातद्वदस्वमे १

॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे चतुर्विंशाधिकशततमोऽध्यायः ॥१२४॥ ॥ ७ ॥ ॥ ७ ॥ शीलमिति १

२ युक्तंयुद्धंविनैवराज्यार्थदानंकर्ताकरिष्यति ३ । ४ । ५ पर्वतान्महत्तरामविचाल्यत्वेन द्रुमान्महत्तरांनिष्फलप्रदर्शकत्वेन ६ दुर्लभादुर्जया ७ । ८ । ९ । १० । ११ बाणासनभृद्धनुर्धरः १२



संशयोमेमहानेषसमुत्पन्नःपितामह ॥ छेत्ताचतस्यनान्योऽस्तित्वत्तःपरपुरंजय २ पितामहाशामहतीममासीद्विसुयोधने ॥ प्राप्तेयुद्धेतुतद्युक्तंतत्कर्ताऽयमिति
प्रभो ३ सर्वस्याशासुमहतीपुरुषस्योपजायते ॥ तस्यांविहन्यमानायांदुःखोमृत्युर्नसंशयः ४ सोऽहंहताशोदुर्बुद्धिःकृतस्तेनदुरात्मना ॥ धार्तराष्ट्रेणराजेंद्रपश्य
मंदात्मतांमम ५ आशांमहत्तरांमन्येपर्वतादपिसद्रुमात् ॥ आकाशादपिवाराजन्नप्रमेयैववापुनः ६ एषाचैवकुरुश्रेष्ठदुर्विचिंत्यासुदुर्लभा ॥ दुर्लभत्वाच्चपश्यामि
किमन्यद्दुर्लभंततः ७ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामियुधिष्ठिरनिबोधतत् ॥ इतिहासंसुमित्रस्यनिर्वृत्तमृषभस्यच ८ सुमित्रोनामराजर्षिर्हैहयोमृगयां
गतः ॥ ससारसमृगंविद्ध्वाबाणेनानतपर्वणा ९ समृगोबाणमादायययावमितविक्रमः ॥ सचराजाबलात्तूर्णंससारमृगयूथपम् १० ततोनिम्नंस्थलंचैवसमृगोऽद्रव
दाशुगः ॥ मुहूर्तमिवराजेंद्रसमेनसपथाऽगमत् ११ ततःसराजातारुण्यादौरसेनबलेनच ॥ ससारबाणासनभृत्सखड्गोऽसौतनुत्रवान् १२ ततोनदान्नदीश्चैवपल्व
लानिवनानिच ॥ अतिक्रम्याभ्यतिक्रम्यससारैकोवनेचरः १३ सतुकामान्मृगोराजन्नासाद्यासाद्यतंनृपम् ॥ पुनरभ्येतिजवनोजवेनमहताततः १४ सतस्यबा
णैर्बहुभिःसमभ्यस्तोवनेचरः ॥ प्रक्रीडन्निवराजेंद्रपुनरभ्येतिचांतिकम् १५ पुनश्चजवमास्थायजवनोमृगयूथपः ॥ अतीत्यातीत्यराजेंद्रपुनरभ्येतिचांतिकम् १६
तस्यमर्मच्छिदंघोरंतीक्ष्णंचामित्रकर्शनः ॥ समादायशरंश्रेष्ठंकार्मुकेतुतथाऽसृजत् १७ ततोगव्यूतिमात्रेणमृगयूथपयूथपः ॥ तस्यबाणपथंमुक्त्वातस्थिवान्प्र
हसन्निव १८ तस्मिन्निपतितेबाणेभूमौज्वलिततेजसि ॥ प्रविवेशमहारण्यंमृगोराजाऽप्यथाद्रवत् १९ ॥ इतिश्रीमहाभारतेशांति०राजध०ऋषभगीतासुपंचवि
शाधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ ॥ भीष्मउवाच ॥ प्रविश्यसमहारण्यंतापसानामथाश्रमम् ॥ आससादततोराजाश्रांतश्चोपाविशत्तदा १ तंकार्मुकध
रंदृष्ट्वाश्रमार्तंक्षुधितंतदा ॥ समेत्यऋषयस्तस्मिन्पूजांचकुर्यथाविधि २ सपूजामृषिभिर्दत्तांसंप्रगृह्यनराधिपः ॥ अपृच्छत्तापसान्सर्वांस्तपसोवृद्धिमुत्तमाम् ३
तेतस्यराज्ञोवचनंसंप्रगृह्यतपोधनाः ॥ ऋषयोराजशार्दूलंतमपृच्छन्प्रयोजनम् ४ केनभद्रसुखार्थेनसंप्राप्तोऽसितपोवनम् ॥ पदातिर्बद्धनिस्त्रिंशोधन्वीबाणीन
रेश्वर ५ एतदिच्छामहेश्रोतुंकुतःप्राप्तोऽसिमानद ॥ कस्मिन्कुलेतुजातस्त्वंकिंनामाचासिब्रूहिनः ६ ततःसराजासर्वेभ्योद्विजेभ्यःपुरुषर्षभ ॥ आचचक्षेयथा
न्यायंपरिचर्यांचभारत ७ हैहयानांकुलेजातःसुमित्रोमित्रनंदनः ॥ चरामिमृगयूथानिनिघ्नन्बाणैःसहस्रशः ८

१३ । १४ समभ्यस्तोविद्धः १५ । १६ । १७ । १८ । १९ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणि नीलकंठीये भारतभावदीपे पंचविंशाधिकशततमोऽध्यायः ॥ १२५ ॥ ॥ ७ ॥
प्रविश्येति १ । २ । ३ । ४ हेमद्र ५ । ६ । ७ । ८



९ । १० । ११ पुरस्यचरयागइविपद्वैकदेशोऽपिनिष्क्रम्यते आशामृगाशा १२ हिमवान्पुत्रत्वेनमहोदधिर्विततत्वे नचगगनांतंनान्वपद्येतां तस्यततोऽप्युच्चत्वाद्विततत्वाच अर्वांतरंपकोशमपि १३

बलेनमहतागुप्तःसामात्यःसावरोधनः ॥ मृगस्तुविद्धोबाणेनमयासरतिशल्यवान् ९ तंद्रवंतमनुप्राप्तोवनमेतद्यदृच्छया ॥ भवत्सकाशंनष्टश्रीर्हताशःश्रमकर्शि
तः १० किंनुदुःखमतोऽन्यद्वैयदहंश्रमकर्शितः ॥ भवतामाश्रमंप्राप्तोहताशोभ्रष्टलक्षणः ११ नराजलक्षणत्यागोनपुरस्यतपोधनाः ॥ दुःखंकरोतितत्तीव्रंयथा
ऽशाविहतामम १२ हिमवान्वामहाशैलःसमुद्रोवामहोदधिः ॥ महत्त्वान्नान्वपद्येतांनभसोवांतरंतथा १३ आशायास्तपसिश्रेष्ठास्तथानांतमहंगतः ॥ भवतां
विदितंसर्वंसर्वज्ञाहितपोधनाः १४ भवंतःसुमहाभागास्तस्मात्पृच्छामिसंशयम् ॥ आशावान्पुरुषोयःस्यादंतरिक्षमथापिवा १५ किंनुज्यायस्तरंलोकेमहत्वा
त्प्रतिभातिवः ॥ एतदिच्छामितत्त्वेनश्रोतुंकिमिहदुर्लभम् १६ यदिगुह्यंनवोनित्यंतदाप्रब्रूतमाचिरम् ॥ नगुह्यंश्रोतुमिच्छामियुष्मत्तोद्विजसत्तमाः १७ भवत्त
पोविघातोवायदिस्याद्विरमेततः ॥ यदिवाऽस्तिकथायोगोयोऽयंप्रश्नोमयेरितः १८ एतत्कारणसामर्थ्यंश्रोतुमिच्छामितत्त्वतः ॥ भवंतोऽपितपोनित्याब्रूयुरे
तत्समन्विताः १९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजध० ऋषभगीतासुषड्विंशाधिकशततमोऽध्यायः ॥ १२६ ॥ भीष्मउवाच ॥ ततस्तेषांसमस्ताना
मृषीणामृषिसत्तमः ॥ ऋषभोनामविप्रर्षिर्विस्मयन्निदमब्रवीत् १ पुराऽहंराजशार्दूलतीर्थान्यनुचरन्प्रभो ॥ समासादितवान्दिव्यंनरनारायणाश्रमम् २ यत्रसा
बदरीरम्याह्रदोवैहायसस्तथा ॥ यत्रचाश्वशिराराजन्वेदान्पठतिशाश्वतान् ३ तस्मिन्सरसिकृत्वाऽहंविधिवत्तर्पणंपुरा ॥ पितॄणांदेवतानांचततोऽऽश्रममियां
तदा ४ रेमातेयत्रतौनित्यंनरनारायणावृषी ॥ अदूरादाश्रमंकंचिद्वासार्थमगमंतदा ५ तत्रचीराजिनधरंकृशमुच्चमतीवच ॥ अद्राक्षमृषिमायांतंतनुंनामतपो
धनम् ६ अन्यैर्नरैर्महाबाहोवपुषाऽष्टगुणान्वितम् ॥ कृशताचापिराजर्षेनदृष्टातादृशीक्वचित् ७ शरीरमपिराजेंद्रतस्यकानिष्ठिकासमम् ॥ ग्रीवाबाहूतथापा
दौकेशाश्चाद्भुतदर्शनाः ८ शिरःकायानुरूपंचकर्णौनेत्रेतथैवच ॥ तस्यवाक्चैवचेष्टाचसामान्येराजसत्तम ९ दृष्ट्वाऽहंतंकृशंविप्रंभीतःपरमदुर्मनाः ॥ पादौतस्या
भिवाद्याथस्थितःप्रांजलिरग्रतः १० निवेद्यनामगोत्रंचपितरंचनरर्षभ ॥ प्रदिष्टेचासनेतेनशनैरहमुपाविशम् ११ ततःसकथयामासकथांधर्मार्थसंहिताम् ॥
ऋषिमध्येमहाराजतनुर्धर्मभृतांवरः १२ तस्मिंस्तुकथयत्येवराजाराजीवलोचनः ॥ उपायाज्जवनैरश्वैःसबलःसावरोधनः १३ स्मरन्पुत्रमरण्येवैनष्टंपरमदुर्म
नाः ॥ भूरिद्युम्नपिताश्रीमान्वीरद्युम्नोमहायशाः १४ इहद्रक्ष्यामितंपुत्रंद्रक्ष्यामीहेतिपार्थिवः ॥ एवमाशाहतोराजाचरन्वनमिदंपुरा १५

१४ आशावान्आशायामहत्त्वेनतद्वतोऽपिमहत्त्वमंतरिक्षवत् १५ । १६ । १७ । १८ । १९ ॥ इतिशांतिपर्वणिराज०नीलकंठीयेभारतभावदीपेषड्विंशाधिकशततमोऽध्यायः ॥ १२६ ॥ तत
इति १ । २ वैहायसःविहायसागच्छंत्यामंदाकिन्याविहायस्याअयंवैहायसः ३ ततोश्रमंततआश्रमंमंडपंइयांगतवानहम् ४ । ५ । ६ । ७ । ८ कायानुरूपंस्थूलम् ९ । १० । ११ । १२ । १३ । १४ । १५

१६ । १७ । १८ । १९ । २० तेनतवपुत्रेणभूरिद्युम्नेन २१ एवंमुनिनाउक्तःवीरद्युम्नःअवसीदत्नष्टप्रायोऽभूदित्यर्थः २२ । २३ । २४ ततएवंमुनिनाराजपूजानंतरंआगताः किमर्थंआश्रमेत्वंम
विष्टोऽसीत्यपृच्छन् २५ । २६ ॥ इतिशांतिपर्वणि राजधर्मानुशासनपर्वणिनीलकंठीये भारतभावदीपे सप्तविंशाधिकशततमोऽध्यायः ॥ १२७ ॥ ॥ ७ ॥ वीरेति १ । २ । ३

दुर्लभःसमयाद्रष्टुंनूनंपरमधार्मिकः ॥ एकःपुत्रोमहारण्येनष्टइत्यसकृत्तदा १६ दुर्लभःसमयाद्रष्टुमाशाचमहतीमम ॥ तयापरीतगात्रोऽहंमुमूर्षुर्नात्रसंशयः १७
एतच्छ्रुत्वातुभगवांस्तनुर्मुनिवरोत्तमः ॥ अवाक्शिराध्यानपरोमुहूर्तमिवतस्थिवान् १८ तमनुध्यांतमालक्ष्यराजापरमदुर्मनाः ॥ उवाचवाक्यंदीनात्मामंदंमं
दमिवासकृत् १९ दुर्लभंकिंनुदेवर्षेआशायाश्चैवकिंमहत् ॥ ब्रवीतुभगवानेतद्यदिगुह्यंनतेमयि २० ॥ मुनिरुवाच ॥ महर्षिर्भगवांस्तेनपूर्वमासीद्विमानितः ॥
बालिशांबुद्धिमास्थायमंदभाग्यतयाऽऽत्मनः २१ अर्थयन्कलशंराजन्कांचनंवल्कलानिच ॥ अवज्ञापूर्वकेनापिनसंपादितवांस्ततः २२ निर्विण्णःसतुराजर्षि
निराशःसमपद्यत ॥ एवमुक्तोऽभिवाद्याथतमृषिंलोकपूजितम् ॥ श्रांतोऽन्वसीदद्धर्मात्मायथात्वंनरसत्तम २३ अर्घंततःसमानीयपाद्यंचैवमहानृषिः ॥ आरण्ये
नैवविधिनाराज्ञेसर्वंन्यवेदयत् २४ ततस्तेमुनयःसर्वेपरिवार्यनरर्षभम् ॥ उपाविशन्नरव्याघ्रसप्तर्षयइवध्रुवम् २५ अपृच्छंश्चैवतंतत्रराजानमपराजितम् ॥
प्रयोजनमिदंसर्वमाश्रमस्यनिवेशने २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणि राजधर्मानुशासनपर्वणि ऋषभगीतासुसप्तविंशाधिकशततमोऽध्यायः ॥ १२७ ॥
राजोवाच ॥ वीरद्युम्नइतिख्यातोराजाऽहंदिक्षुविश्रुतः ॥ भूरिद्युम्नंसुतंनष्टमन्वेष्टुंवनमागतः १ एकःपुत्रःसविप्राग्र्यबालएवचमेऽनघ ॥ नदृश्यतेवनेचास्मिंस्त
मन्वेष्टुंचराम्यहम् २ ॥ ऋषभउवाच ॥ इत्येवमुक्तेवचनेराज्ञामुनिरधोमुखः ॥ तूष्णीमेवाभवत्तत्रनचप्रत्युक्तवान्नृपम् ३ सहितेनपुराविप्रोराज्ञानात्यर्थमा
नितः ॥ आशाकृतश्चराजेंद्रतपोदीर्घंसमाश्रितः ४ प्रतिग्रहमहंराज्ञांनकरिष्येकथंचन ॥ अन्येषांचैववर्णानामितिकृत्वाधियंतदा ५ आशाहिपुरुषंबालमुत्थाप
यतितस्थुषी ॥ तामहंव्यपनेष्यामिइतिकृत्वाव्यवस्थितः ॥ वीरद्युम्नस्तुतंभूयःपप्रच्छमुनिसत्तमम् ६ ॥ राजोवाच ॥ आशायाःकिंकृशत्वंचकिंचेहभुवि
दुर्लभम् ॥ ब्रवीतुभगवानेतत्त्वंहिधर्मार्थदर्शिवान् ७ ततःसंस्मृत्यतत्सर्वंस्मारयिष्यन्निवाब्रवीत् ॥ राजानंभगवान्विप्रस्ततःकृशतनुस्तदा ८ ॥ ऋषिरुवाच ॥
कृशत्वेनसमंराजन्नाशायाविद्यतेनृप ॥ तस्यावैदुर्लभत्वाच्चप्रार्थितापार्थिवामया ९ ॥ राजोवाच ॥ कृशाकृशेमयाब्रह्मन्गृहीतेवचनात्तव ॥ दुर्लभत्वंचतस्यैववे
दवाक्यमिवद्विज १० संशयस्तुमहाप्राज्ञसंजातोहृदयेमम ॥ तन्मुनेममतत्त्वेनवक्तुमर्हसिपृच्छतः ११ त्वत्तःकृशतरंकिंनुब्रवीतुभगवानिदम् ॥ यदिगुह्यंनते
किंचिद्विद्यतेमुनिसत्तम १२ ॥ ॥ कृशउवाच ॥ ॥ दुर्लभोऽप्यथवानास्तियोऽर्थीधृतिमवाप्नुयात् ॥ सदुर्लभतरस्तातयोऽर्थिनंनावमन्यते १३

आशयाकृशोहतःकृहिंसायामित्यस्यरूपम् ४ । ५ । ६ । ७ । ८ आशायाआशावतःसममन्यत्कृशत्वेनसमंकिमपिनास्तितस्यास्तद्गृहीतार्थस्य ९ कृशाकृशेयआशाजितःसकृशः
येनाशाजितासपुष्टइत्यर्थः तस्यैवाऽऽशाविषयस्यैव १० । ११ । १२ दुर्लभंकिंन्विितिपूर्वप्रश्नस्योत्तरमाह दुर्लभइति १३



त्वत्तःकृशतरमित्यनुपदोक्तस्योत्तरमाह सत्कृत्येति आदरेणाशांप्रदर्श्ययोऽर्थिनंनोपकुरुते तत्रयाआशासाऽतिकृशा मयामत्तःदीनत्वसंपादकत्वात् १४ । १५ । १६ । १७ तथायुक्ताःप्रदानंस्थि
तमितिशब्दयुक्ताः १८ । १९ । २० । २१ उपालभ्यतत्रापराधंस्थापयित्वा २२ । २३ । २४ । २५ । २६ ममतः २७ ॥ इतिशांतिपर्वणिराजधर्मानुशासनपर्वणिनी०भारत०अष्टाविंशत्य

सत्कृत्यनोपकुरुतेपरंशक्त्यायथार्हतः ॥ यासक्तासर्वभूतेषुसाऽऽशाकृशतरीमया १४ कृतघ्नेषुचयासक्तानृशंसेष्वलसेषुच ॥ अपकारिषुचासक्तासाऽऽशाकृशतरी
मया १५ एकपुत्रःपितापुत्रेनष्टेवाप्रोषितेऽपिवा ॥ प्रवृत्तिंयोनजानातिसाऽऽशाकृशतरीमया १६ प्रसवेचैवनारीणांवृद्धानांपुत्रकारिता ॥ तथानरेंद्रधनिनांसा
ऽऽशाकृशतरीमया १७ प्रदानकांक्षिणीनांचकन्यानांवयसिस्थिते ॥ श्रुत्वाकथास्तथायुक्ताःसाऽऽशाकृशतरीमया १८ एतच्छ्रुत्वाततोराजन्सराजासावरोध
नः ॥ संस्पृश्यपादौशिरसानिपपातद्विजर्षभम् १९ ॥ राजोवाच ॥ प्रसादयेत्वांभगवन्पुत्रेणेच्छामिसंगमम् ॥ यदेतदुक्तंभवतासंप्रतिद्विजसत्तम २० सत्यमे
तन्नसंदेहोयदेतद्व्याहृतंत्वया ॥ ततःप्रहस्यभगवांस्तनुर्धर्मभृतांवरः २१ पुत्रमस्यानयत्क्षिप्रंतपसाचश्रुतेनच ॥ ससमानीयतत्पुत्रंतमुपालभ्यपार्थिवम् २२
आत्मानंदर्शयामासधर्मंधर्मभृतांवरः ॥ सदर्शयित्वाचात्मानंदिव्यमद्भुतदर्शनम् ॥ विपाप्माविगतक्रोधश्चचारवनमंतिकात् २३ एतद्दृष्टंमयाराजंस्तथाचवचनं
श्रुतम् ॥ आशामपनयस्वाशुततःकृशतरीमिमाम् २४ ॥ भीष्मउवाच ॥ सतथोक्तस्तदाराजनृषभेणमहात्मना ॥ सुमित्रोऽपनयत्क्षिप्रमाशांकृशतरींततः
२५ एवंत्वमपिकौंतेयश्रुत्वावाणीमिमांमम ॥ स्थिरोभवमहाराजहिमवानिवपर्वतः २६ त्वंहिप्रष्टाचश्रोताचकृच्छ्रेष्वनुगतेष्विह ॥ श्रुत्वाममममहाराजनसंतप्तु
मिहार्हसि २७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणिऋषभगीतासुअष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥ युधिष्ठिरउवाच ॥ नामृत
स्येवपर्याप्तिर्ममास्तिब्रुवतित्वयि ॥ यथाहिस्वात्मवृत्तिस्थस्तथातृप्तोऽस्मिभारत १ तस्मात्कथयभूयस्त्वंधर्ममेवपितामह ॥ नहितृप्तिमहंयामिपिबन्धर्मामृतंहिते
२ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ गौतमस्यचसंवादंयमस्यचमहात्मनः ३ पारियात्रंगिरिंप्राप्यगौतमस्याश्रमोमहान् ॥ उवासगौ
तमोयंचकालंतमपिमेशृणु ४ षष्टिंवर्षसहस्राणिसोऽतप्यद्गौतमस्तपः ॥ तमुग्रतपसायुक्तंभावितंसुमहामुनिम् ५ उपयातोनरव्याघ्रलोकपालोयमस्तदा ॥ तम
पश्यत्सुतपसमृषिंवैगौतमंतदा ६ सतंविदित्वाब्रह्मर्षिर्यममागतमोजसा ॥ प्रांजलिःप्रयतोभूत्वाउपविष्टस्तपोधनः ७ तंधर्मराजोदृष्ट्वैवसत्कृत्यैवद्विजर्षभम् ॥
न्यमंत्रयतधर्मेणक्रियतांकिमितिब्रुवन् ८ ॥ गौतमउवाच ॥ मातापितृभ्यामानृण्यंकिंकृत्वासमवाप्नुयात् ॥ कथंचलोकानाप्नोतिपुरुषोदुर्लभान्शुचीन् ९
यमउवाच ॥ तपःशौचवतानित्यंसत्यधर्मरतेनच ॥ मातापित्रोरहरहःपूजनंकार्यमंजसा १०

धिकशततमोऽध्यायः ॥ १२८ ॥ ॥ ७ ॥ ॥ नामृतस्येति शीलवतोजिताशस्ययत्कर्तव्यंतदत्रोच्यते पर्याप्तिरलंभावस्तृप्तिरितियावत् स्वात्मवृत्तिस्थःसमाधिसुखेनेवाहमपित्वद्वागमृ
तेनतृप्तोऽस्मीत्यर्थः १ । २ । ३ । ४ । ५ । ६ । ७ धर्मेणमयातवकिमिष्टंक्रियतामितिब्रुवन्यमोन्यमंत्रयततंसंमुखीकृतवान् ८ । ९ । १०

अश्वमेधैरितिस्वधर्ममात्रस्योपलक्षणं ११ इतिशांतिपर्वणिराजधर्मानु०नीलकंठीयेभारतभावदीपेएकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ ७ ॥ ॥ मित्रैरित्यध्यायोवक्ष्यमाणाना मापद्धर्माणांसूत्रभूतस्तत्रसर्वप्रकारैरापद्यागतायामधर्मेणप्रजापीडनेनापिकोशवृद्धिःकर्तव्यातेनैवसर्वाआपदस्तरतीत्यध्यायार्थः १ सर्वतःसर्वैः २ परस्यचक्रंराष्ट्रमत्यभियातस्यबलीयसासार्धं ३ असंविहितमसम्यग्रक्षितंराष्ट्रंयेनतस्य अतिपीडनात्परकीयामात्यादीनामेवोऽप्यप्राप्यः तत्राऽर्थसाध्यंजीवितंवासुकृतमर्थश्चामार्गेणापिग्राह्यउतार्थंविनामरणंवाश्रेयइतिसार्धेनप्रश्नः ४ मामा मप्राक्षीःपृष्टवानसि ५ वचनाच्छास्त्राद्धर्मंश्रुत्वोपास्यचक्वचिद्देशेकश्चिदेवसाधुर्भवति ६ आपत्कालेधनार्थंप्रजाःकर्षन्नपिधनंलभतेचेदापदंनिस्तीर्यप्रजाअनुकंपयेत् । नवालभतेचेत्स्वस्यप्रजानांच

अश्वमेधैश्चयष्टव्यंबहुभिःस्वाप्तदक्षिणैः ॥ तेनलोकानवाप्नोतिपुरुषोऽद्भुतदर्शनान् ११ ॥ इतिश्रीमहाभारतेशांतिपर्वणिराजधर्मानुशासनपर्वणियमगौतमसंवादे एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ युधिष्ठिरउवाच ॥ मित्रैःप्रहीयमाणस्यबह्वमित्रस्यकागतिः ॥ राज्ञःसंक्षीणकोशस्यबलहीनस्यभारत १ दुष्टा मात्यसहायस्यच्युतमंत्रस्यसर्वतः ॥ राज्यात्प्रच्यवमानस्यगतिमश्यामपश्यतः २ परचक्राभियातस्यपरराष्ट्राणिमृद्नतः ॥ विग्रहेवर्तमानस्यदुर्बलस्यबलीयसा ३ असंविहितराष्ट्रस्यदेशकालावजानतः ॥ अप्राप्यंचभवेत्सांत्वंभेदोवाऽप्यतिपीडनात् ॥ जीवितंत्वर्थहेतुर्वातत्रकिंसुकृतंभवेत् ४ ॥ भीष्मउवाच ॥ गुह्यंधर्मज माप्राक्षीरतीवभरतर्षभ ॥ अपृष्टोनोत्सहेवक्तुंधर्ममेतंयुधिष्ठिर ५ धर्मोह्यणीयान्वचनाद्बुद्धिश्चभरतर्षभ ॥ श्रुत्वोपास्यसदाचारैःसाधुर्भवतिसक्वचित् ६ कर्मणाबु द्धिपूर्वेणभवत्याढ्योनवापुनः ॥ तादृशोऽयमनुप्रश्नःसंव्यवस्यःस्वयाधिया ७ उपायंधर्मबहुलंयात्रार्थंशृणुभारत ॥ नाहमेतादृशंधर्मंबुभूषेधर्मकारणात् ८ दुः खादानइहह्येषस्यात्तुपश्चात्क्षयोपमः ॥ अभिगम्यमतीनांहिसर्वासामेवनिश्चयः ९ यथायथाहिपुरुषोनित्यंशास्त्रमवेक्षते ॥ तथातथाविजानातिविज्ञानमथरोचते १० अविज्ञानादयोगोहिपुरुषस्योपजायते ॥ विज्ञानादपियोगश्चयोगोभूतिकरःपरः ११ अशंकमानोवचनमनसूयुरिदंशृणु ॥ राज्ञःकोशक्षयादेवजायतेबल संक्षयः १२ कोशंचजनयेद्राजानिर्जलेभ्योयथाजलम् ॥ कालंप्राप्यानुगृह्णीयादेषधर्मःसनातनः ॥ उपायधर्मंप्राप्येमंपूर्वैराचरितंजनैः १३ अन्योधर्मःसमर्था नामापत्स्वन्यश्चभारत ॥ प्राक्कोशात्प्राप्यतेधर्मोवृत्तिर्धर्माद्गरीयसी १४ धर्मंप्राप्यन्यायवृत्तिंनबलीयान्नविंदति ॥ यस्माद्बलस्योपपत्तिरेकांतेननविद्यते १५

नाशोभवतीतिविचार्यस्वस्यप्रश्नस्योत्तरंस्वयमेवचिंतनीयमित्यर्थः ७ यात्रार्थंराज्ञांव्यवहारनिर्वाहार्थंधर्मोराज्ञामापद्धर्मस्तदर्थत्वेनबहुलमुपायंशृणु अहंतुनबुभूषइतितस्यशब्दैरनादरणी यत्वंदर्शितं बुभूषेप्राप्तुमिच्छामि ८ एषउपायोदुःखादानःप्रजानांदुःखेनाऽऽदीयतेऽङ्गीक्रियतेऽतएवपश्चात्क्षयोपधोमरणतुल्यः 'प्रजापीडनसंतापात्समुद्भूतोहुताशनः । राज्ञःप्राणान्बलंकोशंनाद ग्ध्वाविनिवर्तते'इति अभिगम्याश्वतामतयश्चतासांसर्वासांप्रजानामितिवा ९ । १० अयोगउपायाभावः ११ । १२ अनुगृह्णीयात्प्राक्कर्षिताःप्रजाइतिशेषः उपायधर्ममुपधर्मंअमुख्यधर्ममिति यावत् सार्धः १३ प्राक्कोशात्विनाऽपिकोशंतपआदिनाधर्मः वृत्तिर्जीवनं तल्लोपमसक्तौतुकोशसंचयविरोधीधर्मोनादर्तव्यइत्यर्थः १४ नबलीयान्नैकधेतिवत्समासः दुर्बलोधर्मंप्राप्याऽनुरुध्य न्यायवृत्तिंन्यायोपेतांश्रेष्ठांजीविकांनविंदति यस्माद्यत्नाच्चावश्यंबलंभवतीतिनियमोनास्तियस्मात्तस्मादापद्यधर्मोऽपिकर्तव्यत्वेनश्रूयतेतत्रचयोऽधर्मलक्षणोधर्मःसोऽधर्मएवभवतीतिशास्त्रमर्यादे तिश्लोकद्वयार्थः प्रजाकर्षणादिरधर्मोऽप्यापदिधर्मएव अकृतश्चेत्सएवाधर्मइतिभावः १५ ॥१०६॥

१६ अनंतरमापन्निवृत्त्युत्तरंतत्रपूर्वोक्ताधर्मेकिंविचिकित्स्यतेप्रायश्चित्तादिकंकराग्रहणादिकंचविधीयतेदोषपरिहारार्थमित्यर्थः फलितमाह यथेति १७ धर्मस्येतिकर्मणिषष्ठी परस्यधर्मेणोज्जिहीर्षं त्राप्यात्मनोधर्ममुज्जिहीर्षेदपित्वात्मानमेवोज्जिहीर्षेत्स्वपरधर्मलोपेऽप्यात्मानमेवोद्धर्तुमिच्छेदित्यर्थः १८ । १९ । २० । २१ विप्लवस्यनिरुद्धस्यकउत्पथोनकोऽपिकिंतुयथाऽपथेनापिप्रद्रवति तथायतितव्यमितिशेषः २२ । २३ नविहितायस्येत्यनुषज्यते स्वधर्मोविजयेनक्षत्रियस्यधनार्जनंतस्यानंतरामत्यासन्नास्वपरराष्ट्रावमर्दनधनार्जनंतेनवृत्तिस्तस्यविहितेत्यनुषंगः । जात्या न्सजातीयाननुपजीवतोऽयाचमानस्यनित्यंप्रथमंकल्पंवहतोऽप्यापद्यनुकल्पेनजीवनंयुक्तमित्यर्थः २४ अन्यायेनविपर्ययेण 'बुभुक्षितस्त्र्यहंविप्रोधान्यमब्राह्मणाद्धरेत्'इतिप्रतिग्रहालाभेब्राह्मणस्य यथाचौर्यंविहितम् २५ एवंक्षत्रियोऽप्यापदिविशिष्टेभ्योबलादाददीतेत्यत्रसंदेहएवनयुक्तइत्यर्थः २६ । २७ अस्यापवादमाहान्यत्रेति अन्यत्रहिंसायाःकृशजनपीडामकृत्वेत्यर्थः । इहहिंसायां

तस्मादापत्स्वधर्मोऽपिश्रूयतेधर्मलक्षणः ॥ अधर्मोजायतेतस्मिन्निितिवैकवयोविदुः १६ अनंतरंक्षत्रियस्यतत्रकिंविचिकित्स्यते ॥ यथाऽस्यधर्मोनग्लायेन्नेया च्छत्रुवशंयथा ॥ तत्कर्तव्यमिहेत्याहुर्नात्मानमवसादयेत् १७ सर्वात्मनैवधर्मस्यनपरस्यनचात्मनः ॥ सर्वोपायैरुज्जिहीर्षेदात्मानमितिनिश्चयः १८ तत्रधर्मवि दांतातनिश्चयोधर्मनैपुणम् ॥ उद्यमोनैपुणंक्षात्रेबाहुवीर्यादितिश्रुतिः १९ क्षत्रियोवृत्तिसंरोधेकस्यनादातुमर्हति ॥ अन्यत्रतापसस्वाच्चब्राह्मणस्वाच्चभारत २० यथावैब्राह्मणःसीदन्नयाज्यमपियाजयेत् ॥ अभोज्यान्नानिचाश्नीयात्तथेदंनात्रसंशयः २१ पीडितस्यकिमद्वारमुत्पथोविधृतस्यच ॥ अद्वारतःप्रद्रवतियथाभवति पीडितः २२ यस्यकोशबलग्लान्यासर्वलोकपराभवः ॥ भैक्ष्यचर्यानविहितानचविट्शूद्रजीविका २३ स्वधर्मानंतरावृत्तिर्जात्याननुपजीवतः ॥ वहतःप्रथमंकल्प मनुकल्पेनजीवनम् २४ आपद्गतेनधर्माणामन्यायेनोपजीवनम् ॥ अपिह्येतद्ब्राह्मणेषुदृष्टंवृत्तिपरिक्षये २५ क्षत्रियेसंशयःकस्मादित्येवंनिश्चितंसदा ॥ आददीत विशिष्टेभ्योनावसीदेत्कथंचन२६हंतारंरक्षितारंचप्रजानांक्षत्रियंविदुः॥ तस्मात्संरक्षताकार्यमादानंक्षत्रबंधुना २७ अन्यत्रराजन्हिंसायावृत्तिर्नेहास्तिकस्यचित् ॥ अप्यरण्यसमुत्थस्यएकस्यचरतोमुनेः २८ नशंखलिखितांवृत्तिंशक्यमास्थायजीवितुम् ॥ विशेषतःकुरुश्रेष्ठप्रजापालनमीप्सया २९ परस्परंहिसंरक्षाराज्ञाराष्ट्रेण चापदि ॥ नित्यमेवहिकर्तव्याएषधर्मःसनातनः ३० राजाराष्ट्रंयथाऽऽपत्सुद्रव्यौघैरपिरक्षति ॥ राष्ट्रेणराजाव्यसनेरक्षितव्यस्तथाभवेत् ३१ कोशंदंडंबलंमित्रंयद न्यदपिसंचितम् ॥ नकुर्वीतांतरंराष्ट्रेराजापरिगतःक्षुधा ३२ बीजंभक्तेनसंपाद्यमितिधर्मविदोविदुः ॥ अत्रैतच्छंबरस्याहुर्महामायस्यदर्शनम् ३३ धिक्तस्यजी वितंराज्ञोराष्ट्रंयस्यावसीदति ॥ अवृत्त्यान्यमनुष्योऽपियोवैदेशिकइत्यपि ३४ राज्ञःकोशबलंमूलंकोशमूलंपुनर्बलम् ॥ तन्मूलंसर्वधर्माणांधर्ममूलाःपुनःप्रजाः ३५

कस्यचिदपिवृत्तिर्हिंसापूर्विकानविहिताऽस्तीतिनेत्यर्थः अरण्यसमुत्थस्यवनेप्रवर्तितः २८ शंखेललाटास्थिनलिखितांवृत्तिं दिष्टमात्रालंबिनाराज्ञाजीवितुंनशक्यम् ।'शंखःकंबुललाटास्थि'इतिवि श्वलोचनः । ईप्सयाऔत्कंठ्येनप्रजापालनंचिकीर्षेतेतिशेषः २९ । ३० । ३१ अंतरंवृत्तः ३२ बीजंभक्तेनासंपादितंचेदग्रेभक्तदौर्बल्यंयथाभवतिएवमल्पधनोराजाप्रजाभिर्नरक्षितोनश्यति नष्टेचतस्मिन्सर्वाःप्रजाअपिनश्यंतीत्यर्थः । एतत्पूर्वार्धोक्तं दर्शनंशास्त्रम् ३३ अवृत्त्याजीविकायाअभावेनयस्यराष्ट्रमवसीदतियोवाऽन्यमनुष्यः अल्पेतिपाठेऽल्पपरीवारः योवावैदेशिकोदे शांतरोपजीवीतस्यराज्ञोजीवितंधिक् ३४ राज्ञोमूलंदीर्घकारणंकोशोबलंचतत्रापिकोशोबलस्यमूलंतद्बलंधर्माणांमूलंधर्मश्चप्रजानांमूलमतःसर्वस्यमूलभूतंकोशंवर्धयेत ३५

३६ कारणात्तद्दृष्टांतात् राजारक्षार्थंप्रजाःकर्षन्नदोषंप्राप्नोति ३७ अन्यदाऽऽपदिप्रजापीडनमप्यर्थार्थंभवतिअपरमपीडनंविपरीतमनर्थार्थंभवति यदप्यन्यदनर्थार्थमर्थाभावार्थंकुंजरपाल नादिभवति तदेवेहार्थस्यकारणमुत्पादकंभवति एवमेतदपीत्याहार्थेन एवमिति सार्धः ३८ यज्ञार्थमिति यथापश्वादिकंयज्ञार्थंयज्ञश्चचित्तसंस्कारार्थः पश्वादिकंयज्ञःसंस्कारश्चेतित्रयमर्थार्थंमो क्षार्थंभवति । एवंदंडःकोशार्थंकोशोबलार्थं बलंशत्रुपराभवार्थं कोशोबलंजयश्चेतित्रयंराष्ट्रपुष्ट्यर्थमितिभावः ३९ । ४० सामंताःप्रतिपक्षभूताः ४१ । ४२ यथानास्त्यधनस्तथेतिजीवन्मृत त्वमधनस्योक्तं ४३ यज्ञार्थंधनंसर्वैरप्यनिषिद्धैरुपायैराददीत परंतुकार्याकार्येषुविहितनिषिद्धेषुआपदिप्रजापीडनंविहितंतदेवानापदिनिषिद्धंतथाभूतेष्वर्थेषुतुल्यदोषोनस्यादेशकालानुसारेणकार्य

नान्यानपीडयित्वेहकोशःशक्यःकुतोबलम् ॥ तदर्थंपीडयित्वाचदोषंप्राप्तुंनसोऽर्हति ३६ अकार्यमपियज्ञार्थंक्रियतेयज्ञकर्मसु ॥ एतस्मात्कारणाद्राजानदोषं प्राप्तुमर्हति ३७ अर्थार्थमन्यद्भवतिविपरीतमथापरम् ॥ अनर्थार्थमथाप्यन्यत्तत्सर्वंह्यर्थकारणम् ॥ एवंबुद्ध्यासंप्रपश्येन्मेधावीकार्यनिश्चयम् ३८ यज्ञार्थमन्य द्भवतियज्ञोऽन्यार्थस्तथापरः ॥ यज्ञस्यार्थार्थमेवान्यत्तत्सर्वंयज्ञसाधनम् ३९ उपमामत्रवक्ष्यामिधर्मतत्त्वप्रकाशिनीम् ॥ यूपंछिंदंतियज्ञार्थंतत्रयेपरिपंथिनः ४० द्रुमाःकेचनसामंताध्रुवंछिंदंतितानपि ॥ तेचापिनिपतंतोऽन्यान्निघ्नंत्येववनस्पतीन् ४१ एवंकोशस्यमहतोयेनराःपरिपंथिनः ॥ तानहत्वानपश्यामिसिद्धिमत्र परंतप ४२ धनेनजयतेलोकावुभौपरमिमंतथा ॥ सत्यंचधर्मवचनंयथानास्त्यधनस्तथा ४३ सर्वोपायैराददीतधनंयज्ञप्रयोजनम् ॥ नतुल्यदोषःस्यादेवंकार्या कार्येषुभारत ४४ नैतौसंभवतोराजन्कथंचिदपिपार्थिव ॥ नह्यरण्येषुपश्यामिधनवृद्धानहंकचित् ४५ यदिदंदृश्यतेवित्तंपृथिव्यामिहकिंचन ॥ ममेदंस्यान्ममेदं स्यादित्येवंकांक्षतेजनः ४६ नचराज्यसमोधर्मःकश्चिदस्तिपरंतप ॥ धर्मःसंशब्दितोराज्ञामापदर्थमतोऽन्यथा ४७ दानेनकर्मणाचान्येतपसाऽन्येतपस्विनः ॥ बुद्ध्यादाक्ष्येणचैवान्येविंदंतिधनसंचयान् ४८ अधनंदुर्बलंप्राहुर्धनेनबलवान्भवेत् ॥ सर्वंधनवताप्राप्यंसर्वंतरतिकोशवान् ४९ कोशेनधर्मःकामश्चपरलो कस्तथाह्ययम् ॥ तंचधर्मेणलिप्सेतनाधर्मेणकदाचन ५० ॥ इतिश्रीमहाभारते शतसाहस्र्यांसंहितायां वैयासिक्यांशांतिपर्वणि राजधर्मानुशासनपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ समाप्तंचराजधर्मानुशासनपर्व ॥ ७ ॥ ॥ ७ ॥ ॥ अथापद्धर्मपर्व ॥

मप्यकार्यमत्यकार्यमपिकार्यंभवति तत्रविपरीतंनप्रतिपद्येतेतिभावः ४४ एतौधनसंग्रहत्यागावेकस्मिन्पुरुषेनसंभवतः युगपत्तयोर्वृत्तिर्नसिध्यति विरक्तेषुसंग्रहासंभवात् ४५ अन्येषुत्या गासंभवमाह यदिदमिति तस्मादविरक्तत्वाद्राज्ञोधनमेष्टव्यमेवेतिभावः ४६ ननुकिंपापमूलेनधनेनकिंचतन्मूलेनराज्येनेत्याशंक्याह नचेति अनापद्येवराज्ञोबहुकरादानंपापमूलमापदि तुनतत्तथाभवति । अतोनपापमूलंधनंनापितन्मूलराज्यस्यहेयत्वमपितुधर्महेतुत्वादवश्यंकर्तव्यत्वमेवेत्यर्थः ४७ । ४८ । ४९ । ५० ॥ इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्ध रवंशावतंसश्रीगोविंदसूरिसूनोर्नीलकंठस्यकृतौ भारतभावदीपे राजधर्मानुशासनपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ ७ ॥ ॥ ७ ॥



॥ श्रीगणेशायनमः ॥ ॥ गोपालनारायणलक्ष्मणार्यान्धर्मेशगंगाधरनीलकंठान् ॥ चिंतामणिंसांबशिवंचनत्वाविष्णुमापद्गतराजधर्मान् ॥ १ ॥ पूर्वस्मिन्नध्यायेयानिआपदिआगतायां प्रजापीडनेनापिकोशंसंपाद्यापदंतरेदित्युक्तं इदानींस्यादिनएवापद्यामतायांपृच्छति क्षीणस्येत्यादिना । क्षीणस्यधान्यकोशादिसंग्रहराहितस्य । दीर्घसूत्रस्यालसस्य । सानुक्रोशस्यबंधु क्षयभयाद्दुर्गाद्बहिर्निर्गत्ययुद्धंदातुमसमर्थस्य । परिशंकितवृत्तस्यामात्येषुशंकावतः । यतः श्रुतमंत्रस्य लोकैरितिशेषः अगुप्तमंत्रस्येत्यर्थः १ विभक्तानिशत्रुभिर्विभज्यगृहीतानि पुरराष्ट्राणियस्य । अतएवनिर्द्रव्यनिचयस्य द्रव्याभावादेवनसंभावितानिआवर्जितानिमित्राणियेनतस्य । मित्रबलहीनत्वादेवमित्राःशत्रुभिर्वशीकृताअमात्यायस्य २ परचक्रमभिजातंसंमुखं यस्यपरचक्रेणाभिभूतस्येत्यर्थः । बलीयसाशत्रुणाआपन्नंव्याकुलीकृतंचेतोयस्य ३ बाह्योपायीयदिधर्मपूर्वकेअर्थार्जनेकुशलस्तर्हिशीघ्रंसंधिःकर्तव्यः । स्वीयपूर्वैर्भुक्तान्ग्रामनगरादीन्तेनाक्रां

॥ श्रीगणेशायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींव्यासंततोजयमुदीरयेत् ॥ १ ॥ ॥ अथापद्धर्मपर्व ॥ ॥ युधिष्ठिरउवाच ॥ क्षीणस्यदीर्घसूत्रस्यसानुक्रोशस्यबंधुषु ॥ परिशंकितवृत्तस्यश्रुतमंत्रस्यभारत १ विभक्तपुरराष्ट्रस्यनिर्द्रव्यनिचयस्यच ॥ असंभावितमित्रस्यभिन्नामात्य स्यसर्वशः २ परचक्राभिजातस्यदुर्बलस्यबलीयसा ॥ आपन्नचेतसोब्रूहिकिंकार्यमवशिष्यते ३ ॥ ॥ भीष्मउवाच ॥ ॥ बाह्यश्चेद्विजिगीषुःस्याद्धर्मार्थकुशलः शुचिः ॥ जवेनसंधिंकुर्वीतपूर्वभुक्तान्विमोचयेत् ४ योऽधर्मविजिगीषुःस्याद्बलवान्पापनिश्चयः ॥ आत्मनःसन्निरोधेनसंधिंतेनापिरोचयेत् ५ अपास्यराज धानींवातरेद्द्रव्येणचापदम् ॥ तद्भावयुक्तोद्रव्याणिजीवन्पुनरुपार्जयेत् ६ यास्तुकोशबलत्यागाच्छक्यास्तरितुमापदः ॥ कस्तत्राधिकमात्मानंसंत्यजेदर्थ धर्मवित् ७ अवरोधाञ्जुगुप्सेतकासपत्नधनेदया ॥ नत्वेवात्माप्रदातव्यःशक्येसतिकथंचन ८ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ आभ्यंतरेप्रकुपितेबाह्येचोपनिपी डिते ॥ क्षीणेकोशेश्रुतेमंत्रेकिंकार्यमवशिष्यते ९ ॥ ॥ भीष्मउवाच ॥ ॥ क्षिप्रंवासंधिकामःस्यात्क्षिप्रंवातीक्ष्णविक्रमः ॥ तदापनयनंक्षिप्रमेतावत्सांपराथि कम् १० अनुरक्तेनचेष्टेनहृष्टेनजगतीपतिः ॥ अल्पेनापिहिसैन्येनमहींजयतिभूमिपः ११ हतोवादिवमारोहेद्धत्वावाक्षितिमावसेत् ॥ युद्धेहिसंत्यजन्प्राणान् शक्रस्यैतिसलोकताम् १२ सर्वलोकागमंकृत्वामृदुत्वंगंतुमेवच ॥ विश्वासाद्विनयंकुर्याद्विश्वसेच्चाप्युपायतः १३

तान्क्रमशः ततोमोचयेत्साम्नैवेत्यर्थः ४ सचेद्दुष्टात्मातर्हिसंनिरोधेनकतिपयग्रामदानेनापिसंधिमेवकुर्यादित्याह यइति । अधर्मेतिच्छेदः । अधर्मप्रधानोविजिगीषुरधर्मविजिगीषुः ५ सचेद्दुष्टत रस्तदाकिंकर्तव्यंतत्राह अपास्येति तद्भावयुक्तोराजत्वगुणयुक्तश्चेत् ६ दुष्टतमेतुराज्यधनंत्यक्त्वाआत्मानंरक्षेदित्याह यास्त्विति ७ अवरोधान्अंतःपुराणिजुगुप्सेतपलायितुमिच्छेत् तत्राशक्तौते षुशत्रुसाद्भूतेषुदयास्नेहोनकार्यः तानुपेक्ष्यापिकेवलमात्मानमेवरक्षेदित्यर्थः ८ आभ्यंतरेऽमात्यादौबाह्येदुर्गराष्ट्रादौउपनिपीडितेआक्रांते ९ धर्मिष्ठेबाह्येक्षिप्रंसंधिःअधर्मिष्ठेतुतीक्ष्णःपराक्रमःकर्त व्यः । यदात्वेवंतदाअपनयनंशत्रोर्दूरीकरणंक्षिप्रमेवभवति । अथवासांपरायिकंधर्मयुद्धेनमरणेपरलोकहितंभवति १० विक्रमेपक्षद्वयमपिसंभावितमित्याह द्वाभ्यां अनुरक्तेनेति ११ । १२ यस्मि न्कालेमृदुत्वंगंतुंयुद्धपक्षंत्यक्तुं सर्वलोकागमंसर्वस्यलोकस्यप्रसिद्धमागमंशपथाद्युपायंछलंमाभूदितिबुद्ध्याकृत्वा विश्वासात्विश्वासंप्राप्यविनयंकुर्यात्मृदुर्भवेत् । नतुयुद्धमेवहठेनआश्रयेत् १३

यद्याभ्यंतरप्रकोपाद्युद्धंकर्तुमशक्यं । बाह्यप्रकोपात्सामचाशक्यं । तदासाम्ना अपचिक्रमिषुर्दुर्गादपक्रांतुमिच्छुःस्यात् । अपक्रम्यकंचित्कालंदेशंचविलंघयित्वा मंत्रेणमंत्रबलेनपुनःपृथ्वींजेतुमुप क्रमेत् ॥ १४ ॥ इतिशांतिप० आप० नीलकंठीयेभा० एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ ॥ ७ ॥ ॥ हीनेचधर्मेराज्ञामितिशेषः परमकेसर्वोपायेनब्राह्मणारक्ष्याइत्यस्मिन् १ जघन्ये आपद्रहूले ब्राह्मणःकेनजीवेदित्यस्यब्राह्मणंकथंरक्षेदित्यर्थः २ सर्वधनादिकंसाध्यर्थसतामर्थं ३ एवंहेतुमुक्त्वाविधेयमाह असाधुभ्यइति संक्रममागमनमार्गं ४ स्थितिपालनधर्मं दातुःपालयितुः देहपालनेइत्यस्यरूपं । स्थानभ्रष्टस्यराज्ञोब्राह्मणपालनार्थसर्वस्वहरणेऽपिदोषोनास्तीत्यर्थः ५ वर्तुंनिर्दितुं ६ । ७ प्राकृतंप्राकृतापद्धर्मेपयोगिशास्त्रं । स्वराष्ट्रात्परराष्ट्राच्चकोशंसंजनयेन्नृपइति

॥ १ ॥ अपचिक्रमिषुःक्षिप्रंसाम्नावापरिसांत्वयन् ॥ विलंघयित्वामंत्रेणततःस्वयमुपक्रमेत् १४ ॥ इतिश्रीम० शां० आपद्धर्मपर्वणिएकत्रिंशदधिकशततमोऽध्यायः॥१३१॥ ॥१३२॥

अ०

युधिष्ठिरउवाच ॥ हीनेपरमकेधर्मेसर्वलोकाभिसंहिते ॥ सर्वस्मिन्दस्युसाद्भूतेपृथिव्यामुपजीवने १ केनस्विद्ब्राह्मणोजीवेज्जघन्येकालआगते ॥ असंत्यजन्पुत्र पौत्राननुक्रोशात्पितामह २ ॥ भीष्मउवाच ॥ विज्ञानबलमास्थायजीवितव्यंतथागते ॥ सर्वसाध्वर्थमेवेदमसाध्वर्थनकिंचन ३ असाधुभ्योर्थमादायसाधुभ्योयः प्रयच्छति ॥ आत्मानंसंक्रमंकृत्वाकृत्स्नधर्मविदेवसः ४ आकांक्षन्नात्मनोराज्यंराज्येस्थितिमकोपयन् ॥ अदत्तमेवाददीतदातुर्वित्तंममेतिच ५ विज्ञानबलपूतोयो वर्ततेनिंदितेष्वपि ॥ वृत्तिविज्ञानवान्धीरःकस्तंवावक्तुमर्हति ६ येषांबलकृतावृत्तिस्तेषामन्यानरोचते ॥ तेजसाऽभिप्रवर्ततेबलवंतोयुधिष्ठिर ७ यदेवप्राकृतंशास्त्रम विशेषेणवर्तते ॥ तदेवमभ्यसेदेवंमेधावीवाप्यथोत्तरम् ८ ऋत्विक्पुरोहिताचार्यान्सत्कृतानभिसत्कृतान् ॥ नब्राह्मणान्घातयीतदोषान्प्राप्नोतिघातयन् ९ एतत्प्र माणंलोकस्यचक्षुरेतत्सनातनम् ॥ तत्प्रमाणोऽवगाहेततेनतत्साध्वसाधुवा १० बहवोग्रामवास्तव्यारोषाद्ब्रूयुःपरस्परम् ॥ नतेषांवचनाद्राजासत्कुर्याद्घातयीत वा ११ नवाच्यःपरिवादोऽयंनश्रोतव्यःकथंचन ॥ कर्णौवथापिधातव्यौप्रस्थेयंवान्यतोभवेत् १२ असतांशीलमेतद्वैपरिवादोऽथपैशुनम् ॥ गुणानामेववक्तारः संतःसत्सुनराधिप १३ यथासमधुरौदम्यौसुदांतौसाधुवाहिनौ ॥ धुरमुद्यम्यवहतस्तथावर्तेतवैनृपः १४ यथायथाऽस्यवहवःसहायाःस्युस्तथाऽपरे ॥ आचारमे वमन्यंतेगरीयोधर्मलक्षणम् १५ अपरेनैवमिच्छंतियेशंखलिखितप्रियाः ॥ मात्सर्यादथवालोभान्नब्रूयुर्वाक्यमीदृशम् १६ आर्षमप्यत्रपश्यंतिविकर्मस्थस्यपात नम् ॥ नतादृक्सदृशंकिंचित्प्रमाणंदृश्यतेक्वचित् १७ देवताश्चविकर्मस्थंपातयंतिनराधमम् ॥ व्याजेनविंदन्वित्तंहिधर्मात्सपरिहीयते १८

सामान्यशास्त्रमेवापन्नोराजाउपजीवेत् । मेधावीतुतत्रापियैराष्ट्रद्वयस्याधनिकाःकदर्यत्वेनदंडार्हास्तादृशेभ्यएवाददीतेत्युत्तरंशास्त्रमभ्यसेत् ८ ऋत्विगिति अत्यंतापद्यपिऋत्विगादीन्धनवतो ऽपिनघातयीतधनहरणेननहिंस्यादित्यर्थः ९ । १० ग्रामवास्तव्याग्रामवासिनः ११ ऋत्विगादीनांनिंदाऽपिनश्रोतव्येत्याह नवाच्यइति १२ । १३ । १४ । १५ अपरेइति एवंऋत्विगादीनाम दंडनंशंखेनलिखितस्यभ्रातुरपिहस्तच्छेदःकृतस्तादृशधर्मपराः इदमपिवाक्यंमात्सर्यादिनानब्रूयात् धर्मेणतुब्रूयादितिस्यपरेइच्छंति १६ आर्षं 'गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः ॥ उत्पथंप्रति पन्नस्यकार्यंभवतिशासनम्'इति तादृग्विकर्मस्थंनपातयेदित्येवंरूपम् १७ स्वमतमाह देवताइति दैवमेवपापिष्ठंऋत्विगादिदंडयति । राजातुतत्रोदासीतेतिभावः १८ ॥ १ ॥

सर्वतःसर्वात्मनासत्कृतःआदृतःश्रौतोधर्मः । सद्भिर्मन्वादिभिःसत्कृतःस्मार्तधर्मः । भूतिप्रवरकारणैःभूतिप्रवराईश्वराःकारणानिपारंपर्यागतानिकुलदेशग्रामादिपरिगृहीतानितैरपिनिमित्तैः सत्कृतःमन्वादिभिरनुक्तोऽपिशिष्टैरादृतइत्यर्थः । हेतुत्रयाभावेऽपिस्वयंचयोधर्मत्वेननिश्चितः । एवंचतुर्भिःकारणैर्धर्मःसिध्यति नतदनुमतिकंऋत्विगादीनांदंडेदृश्यतइतिभावः १९ चत्वारोगुणाः आन्वीक्षिकीत्रयीवार्तादंडनीतिश्चेतियएषामविरुद्धश्चतुर्गुणसंपन्नः २० पदंभूमौनिहितंपदंस्थानं लक्षेल्लक्षयेत् नयेत्अन्याम्प्रापयेत् युक्त्येतिशेषः २१ । २२ ॥ इतिशां० आप० नी० भार० द्वात्रिं

सर्वतःसत्कृतःसद्भिर्भूतिप्रवरकारणैः ॥ हृदयेनाभ्यनुज्ञातोयोधर्मस्तंव्यवस्यति १९ यश्चतुर्गुणसंपन्नंधर्मंब्रूयात्सधर्मवित् ॥ अहेरिवहिधर्मस्यपदंदुःखंगवेषितुम् २० यथामृगस्यविद्धस्यपदमेकपदंनयेत् ॥ लक्षेद्रुधिरलेपेनतथाधर्मपदंनयेत् २१ यथासद्भिर्विनीतेनयथागंतव्यमित्युत ॥ राजर्षीणांवृत्तमेतदेवंगच्छयुधिष्ठिर २२ ॥ इतिश्रीमहाभारतेशां० आप० राजर्षिवृत्तंनामद्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ भीष्मउवाच ॥ स्वराष्ट्रात्परराष्ट्राच्चकोशंसंजनयेन्नृपः ॥ कोशा द्धिधर्मःकौंतेयराज्यमूलंचवर्धते १ तस्मात्संजनयेत्कोशंसंकृत्यपरिपालयेत् ॥ परिपाल्यानुतनुयादेषधर्मःसनातनः २ नकोशःशुद्धशौचेननतृशंसेनजातुचित् ॥ मध्यमंपदमास्थायकोशसंग्रहणंचरेत् ३ अबलस्यकुतःकोशोह्यकोशस्यकुतोबलम् ॥ अबलस्यकुतोराज्यमराज्ञःश्रीर्भवेत्कुतः ४ उच्चैर्वृत्तेःश्रियोहानिर्यथैवमरणं तथा ॥ तस्मात्कोशंबलंमित्रमथराजाविवर्धयेत् ५ हीनकोशंहिराजानमवजानंतिमानवाः ॥ नचास्याल्पेनतुष्यंतिकार्यमप्युत्सहंतिच ६ श्रियोहिकारणाद्राजा सत्क्रियांलभतेपराम् ॥ सास्यगूहतिपापानिवासोगुह्यमिवस्त्रियाः ७ ऋद्धिमस्यानुतप्यंतेपुराविप्रकृतानराः ॥ शालावृकाइवाजस्रंजिघांसुमेवविंदति ८ ईदृश स्यकुतोराज्ञःसुखंभवतिभारत ॥ उद्यच्छेदेवननमेदुद्यमोह्येवपौरुषम् ९ अप्यपर्वणिभज्येतननमेतेहकस्यचित् ॥ अथारण्यंसमाश्रित्यचरेन्मृगगणैःसह १० नत्वेवोज्झितमर्यादैर्दस्युभिःसहितश्चरेत् ॥ दस्यूनांसुलभासेनारौद्रकर्मसुभारत ११ एकांततोह्यमर्यादात्सर्वोप्युद्विजतेजनः ॥ दस्यवोप्यभिशंकंतेनिरनुक्रोश कारिणः १२ स्थापयेदेवमर्यादांजनचित्तप्रसादिनीम् ॥ अल्पेप्यर्थेचमर्यादालोकेभवतिपूजिता १३ नायंलोकोऽस्तिनपरइतिव्यवसितोजनः ॥ नालंगंतुंहि विश्वासंनास्तिकेभयशंकिते १४ यथासद्भिःपरादानमहिंसादस्युभिःकृता ॥ अनुरज्यंतिभूतानिसमर्यादेषुदस्युषु १५ अयुद्ध्यमानस्यवधोदारामर्षःकृतघ्न ता ॥ ब्रह्मवित्तस्यचादानंनिःशेषकरणंतथा १६

शदधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ ७ ॥ ॥ स्वराष्ट्रादिति राजधर्मैवउक्तस्यापन्नस्ययायिनउक्तास्थितिदृढीकर्तुमयमध्यायः १ अनुतनुयादनुवृद्धीयात् २ । ३ । ४ उच्चैर्वृत्तेःमहतः ५ कार्यमपिकर्तुंनोत्सहंति ६ । ७ विप्रकृताःकृतविरोधाः शालावृकवज्जिघांसुमेनमेवविंदंतिआश्रयंतिकपटेनहंतुं प्राप्स्यर्थस्यविंदतेरूपं आर्षोवचनव्यत्ययः ८ । ९ । १० दस्युभिःदस्युमा यैरमात्यैः अत्यंतापन्नस्यवनस्थादस्यवोऽपिकार्यकराइत्याह दस्यूनामिति ११ तेष्वपिसत्येनमार्दवेनचस्थेयमित्याह एकांततइति १२ । १३ जनःप्राकृतः अलंपर्याप्तंयुक्तमित्यर्थः १४ सद्भिर्द स्युभिःपरादानंपरस्वहरणमपिकृतंअहिंसाभवति तथावक्ष्येइतिशेषः १५ तदेवाह अयुध्यमानस्येति निःशेषकरणंसर्वहरणं १६

स्त्रियाःकन्यायाःमोषश्चौर्यं दारामर्षस्यप्रागुक्तेः पतिस्थानंग्रामादीनाक्रम्यवत्पतित्वेनावस्थानंआस्यंति कपरद्रव्यनिरोधात् संश्लेषंसख्योऽविभागेनूषणं १७ येमानवाःनिःशेषीकृतास्तेऽस्यद स्योर्विश्वासायाभिसंदधतेदस्युनासहविश्वासःकर्तव्यइतिव्यवस्यंति ततश्चविश्वासेजातेदस्योःस्थानादिकमुपलभ्य अशेषंदस्योरपिनिःशेषंधनसंतानादिकंकुर्वंति १८ यस्मादेवंतस्मात्सशेष मेवपरलुंपनंकर्तव्यं १९ योयथाकरोतितथैवप्रजाःकुर्वंतीत्याह सशेषेति २० ॥ इतिशांतिपर्वणिआ०नीलकंठीयेभा०त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ ७ ॥ अत्रेति प्रत्यक्षो दुःखस्यकारणंसर्वस्वादानमपिदुःखस्यकारणंस्तेयमपिधर्मः १ तस्माद्यथानंशाखोक्तधर्माधर्मविचारेणादृष्टसुखेऽत्रायोनकर्तव्यः धर्मयापनाधर्मोपदेशःपरोक्षोदृष्टफलस्याभावादविश्वास्य

स्त्रियामोषःपतिस्थानंदस्युष्वेतद्विगर्हितम् ॥ संश्लेषंचपरस्त्रीभिर्दस्युरेतानिवर्जयेत् १७ अभिसंदधतेयेचविश्वासायास्यमानवाः ॥ अशेषमेवोपलभ्यकुर्वंतीतिविनिश्चयः १८ तस्मात्सशेषंकर्तव्यंस्वाधीनमपिदस्युभिः ॥ नबलस्थोऽहमस्मीतिनृशंसानिसमाचरेत् १९ सशेषकारिणस्तत्रशेषंपश्यंतिसर्वशः ॥ निःशेषकारिणोनित्यंनिःशेषकरणाद्भयम् २० ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणित्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ भीष्मउवाच ॥ अत्रधर्मानुवचनंकीर्तयंतिपुराविदः ॥ प्रत्यक्षावेवधर्माथौक्षत्रियस्यविजानतः १ तत्रनव्यवधातव्यंपरोक्षाधर्मयापना ॥ अधर्मोधर्मइत्येतद्यथावृकपदंतथा २ धर्माधर्मफलेजातुददर्शेहनकश्चन ॥ बुभूषेद्बलमेवैतत्सर्वंबलवतोवशे ३ श्रियोबलममात्यांश्चबलवानिहविंदति ॥ योह्यनाढ्यःसपतितस्तदुच्छिष्टंयदल्पकम् ४ बह्वपथ्यंबलवतिनकिंचित्क्रियतेभयात् ॥ उभौसत्याधिकारस्थौत्रायेतेमहतोभयात् ५ अतिधर्माद्बलंमन्येबलाद्धर्मःप्रवर्तते ॥ बलेप्रतिष्ठितोधर्मोधरण्यामिवजंगमम् ६ धूमोवायोरिववशेबलंधर्मोऽनुवर्तते ॥ अनीश्वरोबलेधर्मोद्रुमेवल्लीवसंश्रिता ७ वशेबलवतांधर्मःसुखंभोगवतामिव ॥ नास्त्यसाध्यंबलवतांसर्वंबलवतांशुचि ८ दुराचारःक्षीणबलःपरित्राणंनगच्छति ॥ अथतस्मादुद्विजतेसर्वोलोकोवृकादिव ९ अपध्वस्तोह्यवमतोदुःखंजीवतिजीवितम् ॥ जीवितंयदपकृष्टंयथैवमरणंतथा १० यदेवमाहुःपापेनचारित्रेणविवर्जितः ॥ सुभृशंताप्यतेनैववाक्शल्येनपरिक्षतः ११ अत्रैतदाहुराचार्याःपापस्यपरिमोक्षणे ॥ त्रयींविद्यामवेक्षेततथोपासीतवैद्विजान् १२ प्रसादयेच्चक्षुषाचवाचाचाप्यथकर्मणा ॥ महामनाश्चापिभवेद्विवहेच्चमहाकुले १३ इत्यस्मीतिवदेदेवंपरेषांकीर्तयेद्गुणान् ॥ जपेदुदकशीलःस्यात्पेशलोनातिजल्पकः १४ ब्रह्मक्षत्रंसंप्रविशेद्बहुकृत्वासुदुष्करम् ॥ उच्यमानोहिलोकेनबहुतत्तदचिंतयन् १५

इत्यर्थः वृकपदंयथावधेदंकिमिदंभूमौवृकस्यपदंउतशुनःउतचित्रव्याघ्रस्येत्ययंविचारोऽव्यर्थस्तथाऽयंधर्मोऽधर्मोवेतिविचारोऽपि २ धर्मेति अदृष्टफलौधर्माधर्मावपास्य । 'विद्याभिजनमित्राणिबुद्धिसत्त्वधनानिच ॥ तपःसहायवीर्याणिदैवंचदशमंबलम्' इतिविशालोक्तंदशविधंबलमेवाश्रयेदित्यर्थः ३ श्रियोधनानिबलंविंदति बलवांश्चामात्यादीन्विंदत्यतःश्रीरेवसर्वमूलं तद्राहितएवपतितोमत्वधर्मकारीत्यर्थमात्रमिदंआततायिश्रोत्रियस्मृतिवत् ४ बलवतिबहुअपथ्यंदृष्ट्वाऽपिभयात्सनकिंचित्क्रियतेपतितोऽयमितिनबहिःक्रियतेउभौबलधर्मौ ५ अनयोर्मध्येबलमेवश्रेयइत्याह अतीति ६ । ७ । ८ । ९ अपध्वस्तःऐश्वर्याच्च्युतः अपकृष्टंनिंदितं १० वर्जितस्त्यक्तोबाधवैरितिशेषः ताप्यतापयित्वापरिक्षतःक्रियतइतिशेषः ११ अत्रधर्मेणधनार्जनेकृतेसति १२।१३ । १४।१५

१६ । १७ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेचतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ननु 'प्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंवरम्' इतिन्यायेनदस्युकर्मैवराज्ञानकर्तव्यंकृतेऽपिप्रायश्चित्तकालावधिजीवनानियमादंतरामरणेसत्यक्षय्यनरकप्राप्तिरित्याशंक्यदस्यूनामपिस्वर्गोऽस्तीत्याह अत्रापीत्यादिना प्रेत्यभावेमरणेननअपापोह्येवमाचारःक्षिप्रंबहुमतोभवेत् ॥ सुखंचचित्रंभुंजीतकृतेनैकेनगोपयेत् १६ लोकेचलभतेपूजांपरत्रेहमहत्फलम् १७ ॥ इतिश्रीमहाभा०शां०आप० चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ यथादस्युःसमर्यादःप्रेत्यभावेननश्यति १ प्रहर्तामतिमान्शूरःश्रुतवान्सुनृशंसवान् ॥ रक्षन्नाश्रमिणांधर्मंब्रह्मण्योगुरुपूजकः २ निषाद्यांक्षत्रियाज्जातःक्षत्रधर्मानुपालकः ॥ कायव्योनामनैषादिर्दस्युत्वात्सिद्धिमाप्तवान् ३ अरण्येसायंपूर्वाह्णेमृगयूथप्रकोपिता ॥ विधिज्ञोमृगजातीनांनैषादानांचकोविदः ४ सर्वकालप्रदेशज्ञःपारियात्रचरःसदा ॥ धर्मज्ञःसर्वभूतानाममोघेषुर्दृढायुधः ५ अप्यनेकशतासेनामेकएवजिगायसः ॥ सवृद्धावंधबधिरौमहारण्येऽभ्यपूजयत् ६ मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि ॥ सत्कृत्यभोजयामासमान्यान्परिचचारच ७ आरण्यकान्प्रव्रजितान्ब्राह्मणान्परिपूजयन् ॥ अपितेभ्योमृगान्हत्वानिनायसततंवने ८ येऽस्मान्नप्रतिगृह्णंतिदस्युभोजनशंकया ॥ तेषामासज्यगेहेषुकल्यएवसगच्छति ९ बहूनिचसहस्राणिग्रामणित्वेऽभिवव्रिरे ॥ निर्मर्यादानिदस्यूनांनिरनुक्रोशवर्तिनाम् १० ॥ दस्यवऊचुः ॥ मुहूर्तदेशकालज्ञःप्राज्ञःशूरोदृढव्रतः ॥ ग्रामणीर्भवनोमुख्यःसर्वेषामेवसंगतः ११ यथायथावक्ष्यसिनःकरिष्यामस्तथातथा ॥ पालयास्मान्यथान्यायंयथामातायथापिता १२ ॥ कायव्यउवाच ॥ मावधीस्त्वंस्त्रियंभीरुंमाशिशुंमातपस्विनम् ॥ नायुध्यमानोहंतव्योनचग्राह्याबलात्स्त्रियः १३ सर्वथास्त्रीनहंतव्यासर्वसत्त्वेषुकेनचित् ॥ नित्यंतुब्राह्मणेस्वस्तियोद्धव्यंचतदर्थतः १४ सत्यंचनापिहर्तव्यंसारविघ्नंचमाकृथाः ॥ पूज्यंतेयत्रदेवाश्चपितरोऽतिथयस्तथा १५ सर्वभूतेष्वपिचवैब्राह्मणोमोक्षमर्हति ॥ कार्याचोपचितिस्तेषांसर्वस्वेनापियाभवेत् १६ यस्यह्येतेसंप्ररुष्टामंत्रयंतिपराभवम् ॥ नतस्यत्रिषुलोकेषुत्राताभवतिकश्चन १७ योब्राह्मणान्परिवदेद्विनाशंचापिरोचयेत् ॥ सूर्योदयइवध्वांतेध्रुवंतस्यपराभवः १८ इहैवफलमासीनःप्रत्याकांक्षेतसर्वशः ॥ येयेनोनप्रदास्यंतितांस्तांस्तेनाभियास्यसि १९ शिष्ट्यर्थंविहितोदंडोनवृद्ध्यर्थंविनिश्चयः ॥ येचशिष्टान्प्रबाधंतेदंडस्तेषांवधःस्मृतः २० येचराष्ट्रोपरोधेनवृद्धिंकुर्वंतिकेचन ॥ तदैवतेऽनुमार्यंतेकुणपेकृमयोयथा २१ येपुनर्धर्मशास्त्रेणवर्तेरन्निहदस्यवः ॥ अपितेदस्यवोभूत्वाक्षिप्रंसिद्धिमवाप्नुयुः २२

इयतिननिरयंप्राप्नोति १ । २ । ३ । ४ पारियात्रःपर्वतविशेषः ५ वृद्धौमातापितरौ ६ । ७ । ८ आसज्यकंचिन्निधाय कल्येप्रातः ९ वव्रिरेतमितिशेषः १० । ११ । १२ मावधीस्त्वमित्येकवचनंगणाभिप्रायेण १३ स्वस्तिकल्याणंचिंतनीयं १४ सारोविवाहादिकार्यंतत्रविघ्नंमाकृथाः १५ उपचितिर्वृद्धिः १६ । १७ ध्वांतेध्वांतस्य १८ येयेवणिजादयःनःअस्मभ्यं १९ शिष्ट्यर्थंदुष्टानांशासनार्थम् २० कुणपेकृमयोयथादुःखदत्वात्सद्योमार्यंते एवंतेऽपिवध्याइत्यर्थः २१ । २२

२३ । २४ । २५ । २६ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेपंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ॥ ७ ॥ अत्रगाथाइति १ । २ । ३ औषधीश्छित्वाताभि रिषनीकृत्वाभिर्मोग्यात्रीह्याद्याः दुष्टान्हिंसित्वासाधून्पालयेदितिभावः ४ । ५ । ६ द्वितीयाउपमा शुक्रजीवाःबभ्रीसंज्ञाः उद्भिद्यभुवंजायंतेइत्युद्भिज्जाःपिपीलिकादयोयथाशनैर्दूरमपिगच्छंत्ये

भीष्मउवाच ॥ तेसर्वमेवानुचक्रुःकायव्यस्यानुशासनम् ॥ वृद्धिंचलेभिरेसर्वेपापेभ्यश्चाप्युपारमम् २३ कायव्यःकर्मणातेनमहतींसिद्धिमाप्तवान् ॥ साधूनामा चरन्क्षेमंदस्यून्पापान्निवर्तयन् २४ इदंकायव्यचरितंयोनित्यमनुचिंतयेत् ॥ नारण्येभ्योहिभूतेभ्योभयंप्राप्नोतिकिंचन २५ नभयंतस्यभूतेभ्यःसर्वेभ्यश्चैवभा रत ॥ नासतोविद्यतेराजन्सह्यरण्येषुगोपतिः २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिकायव्यचरितेपंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ ॥ 
भीष्मउवाच ॥ अत्रगाथाब्रह्मगीताःकीर्तयंतिपुराविदः ॥ येनमार्गेणराजावैकोशंसंजयनयत्युत १ नधनंयज्ञशीलानांहार्यंदेवस्वमेवच ॥ दस्यूनांनिष्क्रियाणांच क्षत्रियोहर्तुमर्हति २ इमाःप्रजाःक्षत्रियाणांराज्यभोगाश्चभारत ॥ धनंहिक्षत्रियस्यैवद्वितीयस्यनविद्यते ३ तदस्यस्याद्बलार्थंवाधनंयज्ञार्थमेवच ॥ अभोग्यश्चौष धीश्छित्वाभोग्याएवपचंत्युत ४ योवैनदेवान्नपितॄन्नमर्त्यान्हविषार्चति ॥ अनर्थकंधनंतत्रप्राहुर्धर्मविदोजनाः ५ हरेतद्द्रविणंराजन्धार्मिकःपृथिवीपतिः ॥ ततः प्रीणयतेलोकंनशोकंतद्विधंनृपः ६ असाधुभ्योर्थमादायसाधुभ्योयःप्रयच्छति ॥ आत्मानंसंक्रमंकृत्वाकृत्स्नधर्मविदेवसः ७ तथातथाजयल्लोकान्शक्त्याचैवयथा यथा ॥ उद्भिज्जाजंतवोयद्वच्छुक्लजीवायथायथा ८ अनिमित्तात्संभवंतितथाऽयज्ञःप्रजायते ९ यथैवदंशमशकंयथाचांडपिपीलिकम् ॥ सैवहृत्तिरयज्ञेषुयथाधर्मो विधीयते १० यथाह्यकस्माद्भवतिभूमौपांसुर्विलोलितः ॥ तथैवेहभवेद्धर्मःसूक्ष्मःसूक्ष्मतरस्तथा ११ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिषट्त्रिंशद धिकशततमोऽध्यायः ॥ १३६ ॥ ॥ भीष्मउवाच ॥ अनागतविधाताचप्रत्युत्पन्नमतिश्चयः ॥ द्वावेवसुखमेधेतेदीर्घसूत्रीविनश्यति १ अत्रैवचेदमव्यग्रं शृणुष्वाख्यानमुत्तमम् ॥ दीर्घसूत्रमुपाश्रित्यकार्याकार्यविनिश्चये २ नातिगाधेजलाधारेसुहृदःकुशलास्त्रयः ॥ प्रभूतमत्स्येकौंतेयबभूवुःसहचारिणः ३ तत्रैको दीर्घकालज्ञउत्पन्नप्रतिभोऽपरः ॥ दीर्घसूत्रश्चतत्रैकस्त्रयाणांसहचारिणाम् ४ कदाचित्तंजलस्थायंमत्स्यबंधाःसमंततः ॥ निस्रावयामासुरथोनिम्नेषुविविधैर्मुखैः ५ प्रक्षीयमाणंतंदृष्ट्वाजलस्थायंभयागमे ॥ अब्रवीद्दीर्घदर्शीतुताउभौसुहृदौतदा ६ इयमापत्समुत्पन्नासर्वेषांसलिलौकसाम् ॥ शीघ्रमन्यत्रगच्छामःपंथायावन्नदुष्य ति ७ अनागतमनर्थंहिसुनयैर्यःप्रबाधयेत् ॥ सनसंशयमाप्नोतिरोचतांवोव्रजामहे ८

वंपरलोकमाक्रमेत् ७।८ अयज्ञइतिच्छेदः ९ सैवै यथादंशाद्यायागवादिभ्योऽपोह्यंते एवंराष्ट्रादयज्ञाअपिअपोह्याःअयमेवधर्मइतिभावः १० विलोलितः शिलायांशिलयापिष्टःसूक्ष्मःसूक्ष्मतरश्चभव स्येवंधर्मोऽपि ११ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेषट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ ॥ ७ ॥ ॥ अनागतेति १ । २ । ३ सहचारिणोऽन्येप्यासन्निति शेषः ४ जलस्थायंक्षुद्रजलाशयं निम्नेषुप्रदेशेषु विविधैर्मुखैर्जलनिर्गमनमार्गैर्निस्रावयामासुः ५ । ६ । ७ । ८ 

९ । १० श्रुत्वातयोर्वचनेइतिशेषः तेनरेचनमार्गेणसलिलाशयंजलाशयांतरम् ११ योगैर्जलस्याकुलीकरणादिभिरुपायैः १२ । १३ उद्यानेग्रथनेएतेषांग्रथितानांमत्स्यानामंतरंप्रविश्यास्थि तः १४ ग्रह्यमिति तदुद्यानंग्रथनसूत्रंगृह्यंगृह्णातीतिगृह्यंसूत्रंमुखेनावलंब्यावस्थितंतंमत्स्यंकेमत्स्यवेधाःगृहीत्वासर्वानेवग्रथितान्विदुः सचमत्स्यकवचैवगृहीतवदेवतत्रास्तेइतिशेषः १५ । १६

दीर्घसूत्रस्तुयस्तत्रसोऽब्रवीत्सम्यगुच्यते ॥ नतुकार्यात्वरातावदितिमेनिश्चितामतिः ९ अथसंप्रतिपत्तिज्ञःप्राब्रवीद्दीर्घदर्शिनम् ॥ प्राप्तेकालेनमेकिंचिन्न्यायतःप रिहास्यते १० एवंश्रुत्वानिराक्रम्यदीर्घदर्शीमहामतिः ॥ जगामस्रोतसातेनगंभीरंसलिलाशयम् ११ ततःप्रसृततोयंतंप्रसमीक्ष्यजलाशयम् ॥ बबंधुर्विविधैर्यो गैर्मत्स्यान्मत्स्योपजीविनः १२ विलोड्यमानेतस्मिंस्तुस्रुततोयेजलाशये ॥ अगच्छद्ग्रहणंतत्रदीर्घसूत्रःसहापरैः १३ उद्यानेक्रियमाणेतुमत्स्यानांतत्ररज्जुभिः॥ प्रविश्यांतरमेतेषांस्थितःसंप्रतिपत्तिमान् १४ गृह्यमेवतदुद्यानंगृहीत्वातंतथैवसः ॥ सर्वानेवचतांस्तत्रतेविदुर्ग्रथितानिति १५ ततःप्रक्षाल्यमानेषुमत्स्येषुविपु लेजले ॥ मुक्त्वारज्जुंप्रमुक्तोऽसौशीघ्रंसंप्रतिपत्तिमान् १६ दीर्घसूत्रस्तुमंदात्माहीनबुद्धिरचेतनः ॥ मरणंप्राप्तवान्मूढोयथैवोपहतेंद्रियः १७ एवंप्राप्ततमंकालंयो मोहान्नावबुद्ध्यते ॥ सविनश्यतिवैक्षिप्रंदीर्घसूत्रोयथाझषः १८ आदौनकुरुतेश्रेयःकुशलोऽस्मीतियःपुमान् ॥ ससंशयमवाप्नोतियथासंप्रतिपत्तिमान् १९ अ नागतविधाताचप्रत्युत्पन्नमतिश्चयः ॥ द्वावेवसुखमेधेतेदीर्घसूत्रोविनश्यति २० काष्ठाकलामुहूर्ताश्चदिवारात्रिस्तथालवाः ॥ मासाःपक्षाःषडृतवःकल्पःसंव त्सरास्तथा २१ पृथिवीदेशइत्युक्तःकालःसचनदृश्यते ॥ अभिप्रेतार्थसिद्ध्यर्थंध्यायतेयच्चतत्तथा २२ एतौधर्मार्थशास्त्रेषुमोक्षशास्त्रेषुचार्षिभिः ॥ प्रधानावितिनि र्दिष्टौकामेचाभिमतौनृणाम् २३ परीक्ष्यकारीयुक्तश्चससम्यगुपपादयेत् ॥ देशकालावभिप्रेतौताभ्यांफलमवाप्नुयात् २४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्ध र्मपर्वणिशाकुलोपाख्यानेसप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ युधिष्ठिरउवाच ॥ सर्वत्रबुद्धिःकथिताश्रेष्ठातेभरतर्षभ ॥ अनागतातथोत्पन्नादी र्घसूत्राविनाशिनी १ तदिच्छामितदाश्रोतुंबुद्धिंतेभरतर्षभ ॥ यथाराजानमुह्येतशत्रुभिःपरिवारितः २ धर्मार्थकुशलोराजाधर्मशास्त्रविशारदः ॥ पृच्छामित्वांकुरु श्रेष्ठतन्मेव्याख्यातुमर्हसि ३ शत्रुभिर्बहुभिर्ग्रस्तोयथावर्तेतपार्थिवः ॥ एतदिच्छाम्यहंश्रोतुंसर्वमेवयथाविधि ४ विषमस्थंहिराजानंशत्रवःपरिपंथिनः ॥ बहवोप्येकमुद्धर्तुंयतंतेपूर्वतापिताः ५ सर्वत्रप्रार्थ्यमानेनदुर्बलेनमहाबलैः ॥ एकेनैवासहायेनशक्यंस्थातुंभवेत्कथम् ६ कथंमित्रमरिंचापिविंदतेभरतर्षभ ॥ चेष्टितव्यंकथंचात्रशत्रोर्मित्रस्यचांतरे ७

१७ । १८ । १९ । २० काष्ठेति कालस्यदेशस्यचसूक्ष्मतांअवहितोजानीयादितिश्लोकद्वयार्थः २१ । २२ एतौदीर्घदर्शिसंप्रतिपत्तिमंतौ २३ ताभ्यांपंचमीं तदपेक्षयाऽपिपरीक्ष्यकारीयुक्तश्चविशिष्टइत्यर्थः २४ शाकुलंमीनसंबंध्युपाख्यानम् ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ ७ ॥ ॥ सर्वत्रेति १ । २ । ३ । ४ उद्धर्तुमुन्मूलयितुम् ५ सर्वत्रसर्वदिक्स्थैःप्रार्थ्यमानेनग्रसितुमितिशेषः ६ । ७

८ प्राकृतकृत्रिममित्रयोर्मध्येकेनसंधिःकर्तव्यःकेनवावैरम् ९ । १० । ११ । १२ । १३ । १४ व्यवस्यनिश्चित्य १५ । १६ । १७ अत्रपूर्वश्लोकोक्तेऽर्थे १८ । १९ । २० । २१ । २२

प्रज्ञातलक्षणेमित्रेतथैवामित्रतांगते ॥ कथंनुपुरुषःकुर्यात्किंवाकिंवासुखीभवेत् ८ विग्रहंकेनवाकुर्यात्संधिंवाकेनयोजयेत् ॥ कथंवाशत्रुमध्यस्थोवर्तेतबलवानपि ९
एतदैसर्वकृत्यानांपरंकृत्यंपरंतप ॥ नैतस्यकश्चिद्वक्तास्तिश्रोतावाऽपिसुदुर्लभः १० ऋतेशांतनवाद्भीष्मात्सत्यसंधाज्जितेंद्रियात् ॥ तदन्विष्यमहाभागसर्वंमे
तद्ब्रवीहिमे ११ ॥ भीष्मउवाच ॥ त्वद्युक्तोऽयमनुप्रश्नोयुधिष्ठिरसुखोदयः ॥ शृणुमेपुत्रकार्त्स्न्येनगुह्यमापत्सुभारत १२ अमित्रोमित्रतांयाति मित्रंचापिप्रदु
ष्यति ॥ सामर्थ्ययोगात्कार्याणामनित्यावैसदागतिः १३ तस्माद्विश्वसितव्यंचविग्रहंचसमाचरेत् ॥ देशंकालंचविज्ञायकार्याकार्यविनिश्चिये १४ संधातव्यंबुधैर्नि
त्यंव्यवस्यचहितार्थिभिः ॥ अमित्रैरपिसंधेयंप्राणारक्ष्याहिभारत १५ योह्यमित्रैर्नरोनित्यंनसंदध्यादपंडितः ॥ नसोऽर्थंप्राप्नुयात्किंचित्फलान्यपिचभारत १६
यस्त्वमित्रेणसंदध्यान्मित्रेणचविरुद्ध्यते ॥ अर्थयुक्तिंसमालोक्यसुमहद्विंदतेफलम् १७ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ मार्जारस्यचसंवादंन्यग्रोधे
मूषिकस्यच १८ वनेमहतिकस्मिंश्चिन्न्यग्रोधःसुमहानभूत् ॥ लताजालपरिच्छन्नोनानाद्विजगणान्वितः १९ स्कंधवान्मेघसंकाशःशीतच्छायोमनोरमः ॥ अ
रण्यमभितोजातःसतुव्यालमृगाकुलः २० तस्यमूलंसमाश्रित्यकृत्वाशतमुखंबिलम् ॥ वसतिस्ममहाप्राज्ञःपलितोनाममूषिकः २१ शाखांतस्यसमाश्रित्यव
सतिस्मसुखंपुरा ॥ लोमशोनाममार्जारःपक्षिसंघातखादकः २२ तत्रचागत्यचांडालोह्यरण्येकृतकेतनः ॥ प्रयोजयतिचोन्माथंनित्यमस्तंगतेरवौ २३ तत्र
स्नायुमयान्पाशान्यथावत्संविधायसः ॥ गृहंगत्वासुखंशेतेप्रभातामेतिशर्वरीम् २४ तत्रस्मनित्यंबध्यंतेनक्तंबहुविधामृगाः ॥ कदाचिदत्रमार्जारस्त्वप्रमत्तोऽप्यब
ध्यत २५ तस्मिन्बद्धेमहाप्राणेशत्रौनित्याततायिनि ॥ तंकालंपलितोज्ञात्वाप्रचचारसुनिर्भयः २६ तेनानुचरतातस्मिन्वनेविश्वस्तचारिणा ॥ भक्ष्यंमृगय
माणेनचिराद्दृष्टंतदामिषम् २७ सतमुन्माथमारुह्यतदामिषमभक्षयत् २८ तस्योपरिसपत्नस्यबद्धस्यमनसाहसन् ॥ आमिषेतुप्रसक्तःसकदाचिदवलोकयन्
२९ अपश्यदपरंघोरमात्मनःशत्रुमागतम् ॥ शरप्रसूनसंकाशंमहीविवरशायिनम् ३० नकुलंहरिणंनामचपलंताम्रलोचनम् ॥ तेनमूषिकगंधेनत्वरमाणमुपा
गतम् ३१ भक्ष्यार्थंसंलिहानंतंभूमावूर्ध्वमुखंस्थितम् ॥ शाखागतमरिंचान्यमपश्यत्कोटरालयम् ३२ उलूकंचंद्रकंनामतीक्ष्णतुंडंक्षपाचरम् ॥ गतस्यविषयं
तत्रनकुलोलूकयोस्तथा ३३ अथास्यासीदियंचिंतातत्प्राप्यसुमहद्भयम् ॥ आपद्यस्यांसुकष्टायांमरणेप्रत्युपस्थिते ३४ समंताद्भयउत्पन्नेकथंकार्यंहितै
षिणा ॥ सतथासर्वतोरुद्धःसर्वत्रभयदर्शनः ३५ अभवद्भयसंतप्तश्चक्रेचपरमांमतिम् ॥ आपद्विनाशंभूयिष्ठंगतैःकार्यंहिजीवितम् ३६

उन्माथंकूटयंत्रंपशुमृगपक्षिबंधनम् २३ । २४ । २५ पलितोमूषिकः २६ । २७ तदामिषंतस्यउन्माथेधृतमामिषम् २८ सपत्नस्यसपत्नंबद्धमनादृत्य २९ शरस्तृणविशेषस्तत्प्रसूनंपुष्पं ३० ३१ । ३२ । ३३ । ३४ । ३५ गतैरापन्नैर्जीवितमापद्विनाशेनभूयिष्ठंप्रशस्तंकार्यं ३६

स्पष्टोऽध्यायशेषः ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६

समंतात्संशयात्सैषातस्मादापदुपस्थिता ॥ गतंमांसहसाभूमिंनकुलोभक्षयिष्यति ३७ उलूकश्चेहतिष्ठंतंमार्जारःपाशसंक्षयात् ॥ नत्वेवास्मद्विधःप्राज्ञःसंमोहं
गंतुमर्हति ३८ करिष्येजीवितेयत्नंयावद्युक्त्याप्रतिग्रहात् ॥ नहिबुद्ध्यान्वितःप्राज्ञोनीतिशास्त्रविशारदः ३९ निमज्जत्यापदंप्राप्यमहतींदारुणामपि ४० नत्व
न्यामिहमार्जाराद्गतिंपश्यामिसांप्रतम् ॥ विषमस्थोह्ययंशत्रुःकृत्यंचास्यमहन्मया ४१ जीवितार्थीकथंत्वद्यशत्रुभिःप्रार्थितस्त्रिभिः ॥ तस्मादेनमहंशत्रुंमार्जा
रंसंश्रयामिवै ४२ नीतिशास्त्रंसमाश्रित्यहितमस्योपवर्णये ॥ येनेमंशत्रुसंघातंमतिपूर्वेणवंचये ४३ अयमत्यंतशत्रुर्मेवैषम्यंपरमंगतः ॥ मूढोग्राहयितुंस्वार्थंसं
गत्यायदिशक्यते ४४ कदाचिद्व्यसनंप्राप्यसंधिंकुर्यान्मयासह ॥ बलिनासन्निकृष्टस्यशत्रोरपिपरिग्रहः ४५ कार्यइत्याहुराचार्याविषमेजीवितार्थिना ॥ श्रेष्ठो
हिपंडितःशत्रुर्नचमित्रमपंडितः ४६ ममत्वमित्रेमार्जारजीवितंसंप्रतिष्ठितम् ॥ हंतास्मैसंप्रवक्ष्यामिहेतुमात्माभिरक्षणे ४७ अपीदानीमयंशत्रुःसंगत्यापंडितो
भवेत् ॥ एवंविचिंतयामासमूषिकःशत्रुचेष्टितम् ४८ ततोऽर्थगतितत्त्वज्ञःसंधिविग्रहकालवित् ॥ सांत्वपूर्वमिदंवाक्यंमार्जारंमूषिकोऽब्रवीत् ४९ सौहृदेनाभि
भाषेत्वांकच्चिन्मार्जारजीवसि ॥ जीवितंहितवेच्छामिश्रेयःसाधारणंहिनौ ५० नतेसौम्यभयंकार्यंजीविष्यसियथासुखम् ॥ अहंत्वामुद्धरिष्यामियदिमांनजिघां
ससि ५१ अस्तिकश्चिदुपायोऽत्रदुष्करःप्रतिभातिमे ॥ येनशक्यस्त्वयामोक्षःप्राप्तुंश्रेयस्तथामया ५२ मयाप्युपायोदृष्टोऽयंविचार्यमतिमात्मनः ॥ आत्मार्थं
चत्वदर्थंचश्रेयःसाधारणंहिनौ ५३ इदंहिनकुलोलूकंपापबुद्ध्याऽभिसंस्थितम् नधर्षयतिमार्जारतेनमेस्वस्तिसांप्रतम् ५४ कूजंश्चपलनेत्रोयंकौशिकोमांनिरी
क्षते ॥ नगशाखाग्रगःपापस्तस्याहंभृशमुद्विजे ५५ सतांसाप्तपदंमैत्रंससखामेऽसिपंडितः ॥ सांवास्यकंकरिष्यामिनास्तितेभयमद्यवै ५६ नहिशक्तोऽसिमार्जा
रपाशंछेत्तुंमयाविना ॥ अहंछेत्स्यामिपाशांस्तेयदिमांत्वंनहिंससि ५७ त्वमाश्रितोद्रुमस्याग्रंमूलंत्वहमुपाश्रितः ॥ चिरोषितावुभावावांवृक्षेऽस्मिन्विदितंचते ५८
यस्मिन्नाश्वासतेकश्चिद्यश्चनाश्वसितिक्वचित् ॥ नतौधीराःप्रशंसंतिनित्यमुद्विग्नमानसौ ५९ तस्माद्विवर्धतांप्रीतिर्नित्यंसंगतमस्तुनौ ॥ कालातीतमिहार्थंतुन
प्रशंसंतिपंडिताः ६० अर्थयुक्तिमिमांतत्रयथाभूतांनिशामय ॥ तवजीवितमिच्छामित्वंममेच्छसिजीवितम् ६१ कश्चित्तरतिकाष्ठेनसुगंभीरांमहानदीम् ॥
सतारयातितत्काष्ठंसचकाष्ठेनतार्यते ६२ ईदृशोनौसमायोगोभविष्यतिसुविस्तरः ॥ अहंत्वांतारयिष्यामिमांचत्वंतारयिष्यसि ६३ एवमुक्त्वातुपलितस्तमर्थ
मुभयोर्हितम् ॥ हेतुमद्ग्रहणीयंचकालापेक्षीन्यवेक्षयच ६४ अथसुव्याहृतंश्रुत्वातस्यशत्रोर्विचक्षणः ॥ हेतुमद्ग्रहणीयार्थंमार्जारोवाक्यमब्रवीत् ६५

५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५

६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७

बुद्धिमान्वाक्यसंपन्नस्तद्वाक्यमनुवर्णयन् ॥ स्वामवस्थांसमीक्ष्याथसाम्नैवप्रत्यपूजयत् ६६ ततस्तीक्ष्णाग्रदशनोमणिवैदूर्यलोचनः ॥ मूषिकंमंदमुद्वीक्ष्यमा
र्जारोलोमशोऽब्रवीत् ६७ नंदामिसौम्यभद्रंतेयोमांजीवितुमिच्छसि ॥ श्रेयश्चयदिजानीषेक्रियतांमाविचारय ६७ अहंहिभृशमापन्नस्त्वमापन्नतरोमम ॥ द्व
योरापन्नयोःसंधिःक्रियतांमाचिरायच ६९ विधास्येप्राप्तकालंयत्कार्यंसिद्धिकरंविभो ॥ मयिकृच्छ्राद्विनिर्मुक्तेनविनंक्ष्यतितेकृतम् ७० न्यस्तमानोऽस्मिभक्तो
स्मिशिष्यस्त्वद्धितकृत्तथा ॥ निदेशवशवर्तीचभवंतंशरणंगतः ७१ इत्येवमुक्तःपलितोमार्जारंवशमागतम् ॥ वाक्यंहितमुवाचेदमभिनीतार्थमर्थवित् ७२ उदा
रंयद्भवानाहनैतच्चित्रंभवद्विधे ॥ विहितोयस्तुमार्गोमेहितार्थंशृणुतंमम ७३ अहंत्वाऽनुप्रवेक्ष्यामिनकुलान्मेमहद्भयम् ॥ त्रायस्वभोमावधीस्त्वंशक्तोऽस्मितव
रक्षणे ७४ उलूकाच्चैवमांरक्षक्षुद्रःप्रार्थयतेहिमाम् ॥ अहंछेत्स्यामितेपाशान्सखेसत्येनतेशपे ७५ तद्वचःसंगतंश्रुत्वालोमशोयुक्तमर्थवत् ॥ हर्षादुद्वीक्ष्यप
लितंस्वागतेनाभ्यपूजयत् ७६ तंसंपूज्याथपलितंमार्जारःसौहृदेस्थितः ॥ सविचिंत्याब्रवीद्धीरःप्रीतस्त्वरितएवच ७७ शीघ्रमागच्छभद्रंतेत्वंमेप्राणसमःस
खा ॥ तवप्राज्ञप्रसादाद्धिप्रायःप्राप्स्यामिजीवितम् ७८ यद्यदेवंगतेनाथशक्यंकर्तुंमयातव ॥ तदाज्ञापयकर्ताऽस्मिसंधिरेवास्तुनौसखे ७९ अस्मात्तुसंकटा
न्मुक्तःसमित्रगणबांधवः ॥ सर्वकार्याणिकर्ताऽहंप्रियाणिचहितानिच ८० मुक्तश्चव्यसनादस्मात्सौम्याहमपिनामते ॥ प्रीतिमुत्पादयेयंचप्रीतिकर्तुश्चसत्क्रि
याम् ८१ प्रत्युपकुर्वन्बह्वपिनभातिपूर्वोपकारिणातुल्यः ॥ एकःकरोतिहिकृतेनिष्कारणमेवकुरुतेऽन्यः ८२ ॥ भीष्मउवाच ॥ ग्राहयित्वातुतंस्वार्थंमार्जारं
मूषिकस्तथा ॥ प्रविवेशतुविश्रम्यक्रोडमस्यकृतागसः ८३ एवमाश्वासितोविद्वान्मार्जारेणसमूषिकः ॥ मार्जारोरसिविस्रब्धःसुष्वापपितृमातृवत् ८४ लीनंतु
तस्यगात्रेषुमार्जारस्यचमूषिकम् ॥ दृष्ट्वातौनकुलोलूकौनिराशौप्रत्यपद्यताम् ८५ तथैवतौसुसंत्रस्तौदृढमागततंद्रितौ ॥ दृष्ट्वातयोःपरांप्रीतिंविस्मयंपरमंगतौ
८६ बलिनौमतिमंतौचसुवृत्तौचाप्युपासितौ ॥ अशक्तौतुनयात्तस्मात्संप्रधर्षयितुंबलात् ८७ कार्यार्थंकृतसंधीतौदृष्ट्वामार्जारमूषिकौ ॥ उलूकनकुलौतूर्णं
जग्मतुस्तौस्वमालयम् ८८ लीनःसतस्यगात्रेषुपलितोदेशकालवित् ॥ चिच्छेदपाशान्नृपतेकालापेक्षीशनैःशनैः ८९ अथबंधपरिक्लिष्टोमार्जारोवीक्ष्यमूषि
कम् ॥ छिंदंतंवैतदापाशानत्वरंतंत्वरान्वितः ९० तमत्वरंतंपलितंपाशानांछेदनेतथा ॥ संचोदयितुमारेभेमार्जारोमूषिकंतदा ९१ किंसौम्यनातित्वरसेकिं
कृतार्थोऽवमन्यसे ॥ छिंधिपाशानमित्रघ्नपुराश्वपचएतिच ९२ इत्युक्तस्त्वरतातेनमतिमान्पलितोऽब्रवीत् ॥ मार्जारमकृतप्रज्ञंपथ्यमात्महितंवचः ९३
तूष्णींभवनतेसौम्यत्वराकार्यानसंभ्रमः ॥ वयमेवात्रकालज्ञानकालःपरिहास्यते ९४

८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४

९५ । ९६ । ९७ । ९८ । ९९ । १०० । १०१ । १०२ । १०३ । ४ । ५ । ६ । ७ ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

अकालेकृत्यमारब्धंकर्तुर्नार्थायकल्पते ॥ तदेवकालआरब्धंमहतेऽर्थायकल्पते ९५ अकालेविप्रमुक्तान्मेत्वत्तएवभयंभवेत् ॥ तस्मात्कालंप्रतीक्षस्वकिमितित्वरसेस
खे ९६ यदापश्यामिचांडालमायांतंशस्त्रपाणिनम् ॥ ततश्छेत्स्यामितेपाशान्प्राप्तेसाधारणेभये ९७ तस्मिन्कालेप्रमुक्तस्त्वंतरुमेवाधिरोक्ष्यसे ॥ नहितेजी
वितादन्यत्किंचित्कृत्यंभविष्यति ९८ ततोभवत्यपक्रांतेत्रस्तेभीतेचलोमश ॥ अहंबिलंप्रवेक्ष्यामिभवान्शाखांभजिष्यति ९९ एवमुक्तस्तुमार्जारोमूषिकेणात्म
नोहितम् ॥ वचनंवाक्यतत्त्वज्ञोजीवितार्थीमहामतिः १०० अथात्मकृत्येत्वरितःसम्यक्प्रश्रितमाचरन् ॥ उवाचलोमशोवाक्यंमूषिकंचिरकारिणम् १०१ नह्ये
वंमित्रकार्याणिप्रीत्याकुर्वंतिसाधवः ॥ यथात्वंमोक्षितःकृच्छ्रात्त्वरमाणेनवैमया १०२ तथाहित्वरमाणेनत्वयाकार्यंहितंमम ॥ यत्नंकुरुमहाप्राज्ञयथारक्षाऽऽवयो
र्भवेत् १०३ अथवापूर्ववैरंत्वंस्मरन्कालंजिहीर्षसि ॥ पश्यदुष्कृतकर्मैस्त्वंव्यक्तमायुःक्षयंतव ४ यदिकिंचिन्मयाऽज्ञानात्पुरस्ताद्दुष्कृतंकृतम् ॥ नतन्मनसिकर्त
व्यंक्षामयेत्वांप्रसीदमे ५ तमेवंवादिनंप्राज्ञःशास्त्रबुद्धिसमन्वितः ॥ उवाचेदंवचःश्रेष्ठंमार्जारंमूषिकस्तदा ६ श्रुतंमेतवमार्जारस्वमर्थंपरिगृह्णतः ॥ ममापित्वंवि
जानासिस्वमर्थंपरिगृह्णतः ७ यन्मित्रंभीतवत्साध्यंयन्मित्रंभयसंहितम् ॥ सुरक्षितव्यंतत्कार्यंपाणिःसर्पमुखादिव ८ कृत्वाबलवतासंधिमात्मानंयोनरक्षति ॥
अपथ्यमिवतद्भुक्तंतस्यनार्थायकल्पते ९ नकश्चित्कस्यचिन्मित्रंनकश्चित्कस्यचित्सुहृत् ॥ अर्थतस्तुनिबध्यंतेमित्राणिरिपवस्तथा १० अर्थरर्थानिबध्यंतेगजैर्व
नगजाइव ॥ नचकश्चित्कृतेकार्येकर्तारंसमवेक्षते ११ तस्मात्सर्वाणिकार्याणिसावशेषाणिकारयेत् ॥ तस्मिन्कालेऽपिचभवान्दिवाकीर्तिभयार्दितः १२ ममनग्र
हणेशक्तःपलायनपरायणः ॥ छिन्नंतुतंतुबाहुल्यंतंतुरेकोवशेषितः १३ छेत्स्याम्यहंतमप्याशुनिर्वृतोभवलोमश ॥ तयोःसंवदतोरेवंतथैवापन्नयोर्द्वयोः १४ क्षयं
जगामसारात्रिर्लोमशंत्वाविशद्भयम् ॥ ततःप्रभातसमयेविकृतःकृष्णपिंगलः १५ स्थूलस्फिग्विकृतोरूक्षःश्वयूथपरिवारितः ॥ शंकुकर्णोमहावक्त्रोमलिनोघो
रदर्शनः ॥१६ परिघोनामचांडालःशस्त्रपाणिरदृश्यत ॥ तंदृष्ट्वायमदूताभंमार्जारस्त्रस्तचेतनः १७ उवाचवचनंभीतःकिमिदानींकरिष्यसि ॥ अथतावपिसंत्र
स्तौतंदृष्ट्वाघोरसंकुलम् १८ क्षणेननकुलोलूकौनैराश्यमुपजग्मतुः ॥ बलिनौमतिमंतौचसंघातेचाप्युपागतौ १९ अशक्तौसुनयात्तस्मात्संप्रधर्षयितुंबलात् ॥
कार्यार्थंकृतसंधानौदृष्ट्वामार्जारमूषिकौ २० उलूकनकुलौतत्रजग्मतुःस्वंस्वमालयम् ॥ ततश्चिच्छेदतंपाशंमार्जारस्यचमूषिकः २१ विप्रमुक्तोऽथमार्जा
रस्तमेवाभ्यपतद्द्रुमम् ॥ सतस्मात्संभ्रमावर्तान्मुक्तोघोरेणशत्रुणा २२ बिलंविवेशपलितःशाखांलेभेसलोमशः ॥ उन्माथमप्यथादायचांडालोवीक्ष्यस
र्वशः ॥ विहताशःक्षणेनास्तेतस्माद्देशादपाक्रमत् ॥ जगामसस्वभवनंचांडालोभरतर्षभ २४

ततस्तस्माद्भयान्मुक्तोदुर्लभंप्राप्यजीवितम् ॥ बिलस्थंपादपाग्रस्थःपलितंलोमशोऽब्रवीत् २५ अकृत्वासंविदंकांचित्सहसासमवप्लुतः ॥ कृतज्ञंकृतकर्माणंक
च्चिन्मांनाभिशंकसे २६ गत्वाचममविश्वासंदत्वाचममजीवितम् ॥ मित्रोपभोगसमयेकिंमांत्वंनोपसर्पसि २७ कृत्वाहिपूर्वंमित्राणियःपश्चान्नानुतिष्ठति ॥ न
समित्राणिलभतेकृच्छ्रास्वापत्सुदुर्मतिः २८ सत्कृतोहंत्वयामित्रसामर्थ्यादात्मनःसखे ॥ समांमित्रत्वमापन्नमुपभोक्तुंत्वमर्हसि २९ यानिमेसंतिमित्राणियेच
संबंधिबांधवाः ॥ सर्वेत्वांपूजयिष्यंतिशिष्यागुरुमिवप्रियम् ३० अहंचपूजयिष्येत्वांसमित्रगणबांधवम् ॥ जीवितस्यप्रदातारंकृतज्ञःकोनपूजयेत् ३१
ईश्वरोमेभवानस्तुस्वशरीरगृहस्यच ॥ अर्थानांचैवसर्वेषामनुशास्ताचमेभव ३२ अमात्योमेभवप्राज्ञपितेवेहप्रशाधिमाम् ॥ नतेऽस्तिभयमस्मत्तोजीवितेना
त्मनःशपे ३३ बुद्ध्यात्वमुशनासाक्षाद्बलेनाधिकृतावयम् ॥ त्वंमंत्रबलयुक्तोहिदत्वाजीवितमद्यमे ३४ एवमुक्तःपरांशांतिंमार्जारेणसमूषिकः ॥ उवाचपर
मंत्रज्ञःश्लक्ष्णमात्महितंवचः ३५ यद्भवानाहतत्सर्वंमयातेलोमशश्रुतम् ॥ ममापितावद्ब्रुवतःशृणुयत्प्रतिभातिमे ३६ वेदितव्यानिमित्राणिविज्ञेयाश्चापिशत्रवः ॥
एतत्सुसूक्ष्मंलोकेस्मिन्दृश्यतेप्राज्ञसंमतम् ३७ शत्रुरूपाहिसुहृदोमित्ररूपाश्चशत्रवः ॥ संधितास्तेनबुध्यंतेकामक्रोधवशंगताः ३८ नास्तिजातुरिपुर्नाम
मित्रंनामनविद्यते ॥ सामर्थ्ययोगाज्जायंतेमित्राणिरिपवस्तथा ३९ योयस्मिन्जीवतिस्वार्थंपश्येत्पीडांनजीवति ॥ सतस्यमित्रंतावत्स्याद्यावन्नस्याद्विपर्ययः
४० नास्तिमैत्रीस्थिरानामनचध्रुवमसौहृदम् ॥ अर्थयुक्त्यानुजायंतेमित्राणिरिपवस्तथा ४१ मित्रंचशत्रुतामेतिकस्मिंश्चित्कालपर्यये ॥ शत्रुश्चमित्रतामे
तिस्वार्थोहिबलवत्तरः ४२ योविश्वसितिमित्रेषुनविश्वसितिशत्रुषु ॥ अर्थयुक्तिमविज्ञाययःप्रीतौकुरुतेमनः ४३ मित्रेवायदिवाशत्रौतस्यापिचलितामति
तिः ॥ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ॥ विश्वासाद्भयमुत्पन्नमपिमूलानिकृंतति ४४ अर्थयुक्त्याहिजायंतेपितामातासुतस्तथा ॥ मातु
लाभागिनेयाश्चतथासंबंधिबांधवाः ४५ पुत्रंहिमातापितरौत्यजतःपतितंप्रियम् ॥ लोकोरक्षतिचात्मानंपश्यस्वार्थस्यसारताम् ४६ सामान्यानिष्कृतिः
प्राज्ञयोमोक्षात्प्रत्यनंतरम् ॥ कृतंमृगयसेशत्रुंसुखोपायमसंशयम् ४७ अस्मिन्निलयएवत्वंन्यग्रोधादवतारितः ४८ पूर्वंनिविष्टमुन्माथंचपलत्वान्नबुद्धवान् ॥
आत्मनश्चपलोनास्तिकुतोऽन्येषांभविष्यति ४९ तस्मात्सर्वाणिकार्याणिचपलोहंत्यसंशयम् ॥ ब्रवीषिमधुरंयच्चप्रियोमेऽद्यभवानिति ५० तन्मित्रकारणं
सर्वंविस्तरेणापिमेशृणु ॥ कारणात्प्रियतामेतिद्वेष्योभवतिकारणात् ५१ अर्थार्थीजीवलोकोऽयंनकश्चित्कस्यचित्प्रियः ॥ सख्यंसोदर्ययोर्भ्रात्रोर्दंपत्योर्वापर ॥ ६ ॥
स्परम् ५२ कस्यचिन्नाभिजानामिप्रीतिंनिष्कारणामिह ॥ यद्यपिभ्रातरःकुद्धाभार्यावाकारणांतरे १५३



स्वभावतस्तेप्रीयंतेनेतरःप्रीयतेजनः ॥ प्रियोभवतिदानेनप्रियवादेनचापरः १५४ मंत्रहोमजपैरन्यःकार्यार्थंप्रीयतेजनः ॥ उत्पन्नाकारणेप्रीतिरासीन्नौकारणां
तरे ५५ प्रध्वस्तेकारणस्थानेसाप्रीतिर्विनिवर्तते ॥ किंतुतत्कारणंमन्येयेनाहंभवतःप्रियः ५६ अन्यत्राभ्यवहारार्थंतत्रापिचबुधावयम् ॥ कालोहेतुंविकुरु
तेस्वार्थस्तमनुवर्तते ५७ स्वार्थंप्राज्ञोऽभिजानातिप्राज्ञंलोकोऽनुवर्तते ॥ नत्वीदृशंत्वयावाच्यंविदुषिस्वार्थपंडिते ५८ अकालेहिसमर्थस्यस्नेहहेतुरयंतव ॥
तस्मान्नाहंचलेस्वार्थात्सुस्थिरःसंधिविग्रहे ५९ अभ्राणामिवरूपाणिविकुर्वंतिक्षणेक्षणे ॥ अद्यैवहिरिपुर्भूत्वापुनरद्यैवमेसुहृत् ६० पुनश्चरिपुरद्यैवयुक्तीनां
पश्यचापलम् ॥ आसीन्मैत्रीतुतावन्नौयावद्धेतुरभूत्पुरा ६१ सागतासहतेनैवकालयुक्तेनहेतुना ॥ त्वंहिमेजातितःशत्रुःसामर्थ्यान्मित्रतांगतः ६२ तत्कृ
त्यमभिनिर्वर्त्यप्रकृतिःशत्रुतांगता ॥ सोऽहमेवंप्रणीतानिज्ञात्वाशास्त्राणितत्त्वतः ६३ प्रविशेयंकथंपाशंत्वत्कृतेतद्वदस्वमे ॥ त्वद्वीर्येणप्रमुक्तोऽहंमद्वीर्येणतथा
भवान् ६४ अन्योन्यानुग्रहेवृत्तेनास्तिभूयःसमागमः ॥ त्वंहिसौम्यकृतार्थोऽद्यनिवृत्तार्थास्तथावयम् ६५ नतेस्त्यद्यमयाकृत्यंकिंचिदन्यत्रभक्षणात् ॥ अ
हमन्नंभवान्भोक्तादुर्बलोऽहंभवान्बली ६६ नावयोर्विद्यतेसंधिर्वियुक्तेविषमेबले ॥ समन्येऽहंतवप्रज्ञांयन्मोक्षात्प्रत्यनंतरम् ६७ भक्ष्यंप्रशंससेनूनंसुखोपायेन
कर्मणा ॥ भक्ष्यार्थंह्यवबद्धस्त्वंसमुक्तःपीडितःक्षुधा ६८ शास्त्रजांमतिमास्थायनूनंभक्षयिताऽद्यमाम् ॥ जानामिक्षुधितंतुत्वामाहारसमयश्चते ६९ सत्वंमाम
भिसंधायभक्ष्यंमृगयसेपुनः ॥ त्वंचापिपुत्रदारस्थोयत्संधिंसृजसेमयि ७० शुश्रूषांयतसेकर्तुंसखेममनतत्क्षमम् ॥ त्वयामांसहितंदृष्ट्वाप्रियाभार्यासुताश्चते ७१
कस्मात्तेमांनखादेयुर्हृष्टाःप्रणयिनस्त्वयि ॥ नाहंत्वयासमेष्यामिवृत्तोहेतुःसमागमे ७२ शिवंध्यायस्वमेस्वस्थःसुकृतंस्मरसेयदि ॥ शत्रोरनार्यभूतस्यक्लिष्टस्यक्षु
धितस्यच ७३ भक्ष्यंमृगयमाणस्यकःप्राज्ञोविषयंव्रजेत् ॥ स्वस्तितेऽस्तुगमिष्यामिदूरादपितवोद्विजे ७४ विश्वस्तंवाप्रमत्तंवाएतदेवकृतंभवेत् ॥ बलव
त्संनिकर्षोहिनकदाचित्प्रशस्यते ७५ नाहंत्वयासमेष्यामिनिवृत्तोभवलोमश ॥ यदित्वंसुकृतंवेत्सितत्सख्यमनुसारय ७६ प्रशांतादपिमेपापात्भेतव्यंब
लिनःसदा ॥ यदिस्वार्थंनतेकार्यंब्रूहिकिंकरवाणिते ७७ कामंसर्वंप्रदास्यामिनत्वाऽऽत्मानंकदाचन ॥ आत्मार्थेसंततिस्त्याज्याराज्यंरत्नंधनानिच ७८ अपिसर्वं
 समुत्सृज्यरक्षेदात्मानमात्मना ॥ ऐश्वर्यधनरत्नानांप्रत्यमित्रेनिवर्तताम् ७९ दृष्टाहिपुनरावृत्तिर्जीवतामितिनःश्रुतम् ॥ नत्वात्मनःसंप्रदानंधनरत्नवदिष्यते
८० आत्माहिसर्वदारक्ष्योदारैरपिधनैरपि ॥ आत्मरक्षणतंत्राणांसुपरीक्षितकारिणाम् ८१ आपदोनोपपद्यंतेपुरुषाणांस्वदोषजाः ॥ शत्रुंसम्यग्विजानंतिदुर्ब
लायेबलीयसम् ८२ नतेषांचाल्यतेबुद्धिःशास्त्रार्थकृतनिश्चया ॥ इत्यभिव्यक्तमेवंसपलितेनाभिभर्त्सितः १८३

१८४ । ८५ । ८६ । ८७ । ८८ । ८९ । १९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ । ९८ । ९९ । २०० । १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । २१० । ११ । १२ । २१३



मार्जारोवीडितोभूत्वामूषिकंवाक्यमब्रवीत् १८४ ॥ लोमशउवाच ॥ सत्यंशपेत्वयाऽहंवैमित्रद्रोहोविगर्हितः ॥ तन्मन्येऽहंतवप्रज्ञांयस्त्वंममहितेरतः ८५
उक्तवानर्थतत्त्वेनमयासंभिन्नदर्शनः ॥ नतुमामन्यथासाधोत्वंग्रहीतुमिहार्हसि ८६ प्राणप्रदानजंत्वत्तोमयिसौहृदमागतम् ॥ धर्मज्ञोऽस्मिगुणज्ञोस्मिकृतज्ञोऽस्मि
विशेषतः ८७ मित्रेषुवत्सलश्चास्मित्वद्भक्तश्चविशेषतः ॥ तस्मादेवंपुनःसाधोमय्याचरितुमर्हसि ८८ त्वयाहिवाच्यमानोऽहंजह्यांप्राणान्सबांधवः ॥ विश्रंभोहिबुधै
र्दृष्टोमद्विधेषुमनस्विषु ८९ तदेतद्धर्मतत्त्वज्ञनत्वंशंकितुमर्हसि ॥ इतिसंस्तूयमानोऽपिमार्जारेणसमूषिकः ९० मनसाभावगंभीरोमार्जारंवाक्यमब्रवीत् ॥ साधुर्भ
वान्श्रुतार्थोऽस्मिप्रियेचनचविश्वसे ९१ संस्तवैर्वाधनौघैर्वानाहंशक्यःपुनस्त्वया ॥ नह्यमित्रवशंयांतिप्राज्ञानिष्कारणंसखे ९२ अस्मिन्नर्थेचगाथेद्वेनिबोधोशन
साकृते ॥ शत्रुसाधारणेकृत्येकृत्वासंधिंबलीयसा ९३ समाहितश्चरेद्युक्त्याकृतार्थश्चनविश्वसेत् ॥ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ९४ नित्यंविश्वा
सयेदन्यान्परेषांतुनविश्वसेत् ॥ तस्मात्सर्वास्ववस्थासुरक्षेज्जीवितमात्मनः ९५ द्रव्याणिसंततिश्चैवसर्वंभवतिजीवतः ॥ संक्षेपोनीतिशास्त्राणामविश्वासःपरो
मतः ९६ नृषुतस्मादविश्वासःपुष्कलंहितमात्मनः ॥ वध्यंतेनह्यविश्वस्ताःशत्रुभिर्दुर्बलाअपि ९७ विश्वस्तास्तेषुवध्यंतेबलवंतोऽपिदुर्बलैः ॥ त्वद्विधेभ्यो
मयाह्यात्मारक्ष्योमार्जारसर्वदा ९८ रक्षत्वमपिचात्मानंचांडालाज्जातिकिल्बिषात् ॥ सतस्यब्रुवतस्त्वेवंसंत्रासाज्जातसाध्वसः ९९ शाखांहित्वाजवेनाशुमा
जाऽ(र्जारः)प्रययौततः ॥ ततःशास्त्रार्थतत्त्वज्ञोबुद्धिसामर्थ्यमात्मनः २०० विश्राव्यपलितःप्राज्ञोबिलमन्यज्जगामह ॥ एवंप्रज्ञावताबुद्ध्यादुर्बलेनमहाबलाः १ ए
केनबहवोऽमित्राःपलितेनाभिसंधिताः ॥ अरिणापिसमर्थेनसंधिंकुर्वीतपंडितः २ मूषिकश्चबिडालश्चमुक्तावन्योन्यसंश्रयात् ॥ इत्येवंक्षत्रधर्मश्चमयामार्गेषुदर्शि
तः ३ विस्तरेणमहाराजसंक्षेपमपिमेशृणु ॥ अन्योन्यकृतवैरौतुचक्रतुःप्रीतिमुत्तमाम् ४ अन्योन्यमभिसंधातुंसंबभूवतयोर्मतिः ॥ तत्रप्राज्ञोऽभिसंधत्तेसम्य
ग्बुद्धिसमाश्रयात् ५ अभिसंधीयतेप्राज्ञःप्रमादादपिवाबुधैः ॥ तस्मादभीतवद्भीतोविश्वस्तवदविश्वसन् ६ नह्यप्रमत्तश्चलतिचलितोवाविनश्यति ॥ कालेन
रिपुणासंधिःकालेमित्रेणविग्रहः ७ कार्यइत्येवसंधिज्ञाःप्राहुर्नित्यंनराधिप ॥ एतज्ज्ञात्वामहाराजशास्त्रार्थमभिगम्यच ८ अभियुक्तःप्रसन्नश्चप्राग्भयाद्भीतवच्चरे
त् ॥ भीतवत्संनिधिःकार्यःप्रतिसंधिस्तथैवच ९ मयाद्युत्पद्यतेबुद्धिरप्रमत्ताभियोगतः ॥ नभयंविद्यतेराजन्भीतस्यानागतेभये २१० अभीतस्यचविश्रंभात् ॥ ७ ॥
सुमहज्जायतेभयम् ॥ अभीश्चरतियोनित्यंमंत्रोदेयःकथंचन ११ अविज्ञानाद्धिविज्ञातोगच्छेदास्पददर्शिषु ॥ तस्मादभीतवद्भीतोविश्वस्तोबहुविश्वसन् १२
कार्याणांगुरुतांप्राप्यनानृतंकिंचिदाचरेत् ॥ एवमेतन्मयाप्रोक्तमितिहासंयुधिष्ठिर २१३

२१४ । १५ । १६ । १७ । १८ । १९ । २० । २२१ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनैलकंठीये भारतभावदीपे अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ ७ ॥ उक्तोमं
त्रोइति १ । २ । ३ अविश्वस्तंयथास्यात्तथाबहुविश्वसेदित्युक्तंतत्रसर्वत्राविश्वासेकार्यस्यासिद्धिरेवस्यादित्याशंक्यपूजनीब्रह्मदत्तपूर्वकृतापकारोनविश्वसेदितिनिरूपयति उक्तइत्यध्यायेन

श्रुत्वात्वंसुहृदांमध्येयथावत्समुपाचर ॥ उपलभ्यमतिंचाग्र्यामरिमित्रांतरंतथा २१४ संधिविग्रहकालेचमोक्षोपायस्तथैवच ॥ शत्रुसाधारणेकृत्येकृत्वासंधिंबली
यसा १५ समागमेचरेद्युक्त्याकृतार्थोनचविश्वसेत् ॥ अविरुद्धांत्रिवर्गेणनीतिमेतांमहीपते १६ अभ्युत्तिष्ठश्रुतादस्माद्भूयःसंरक्षयन्प्रजाः ॥ ब्राह्मणैश्चापितेसार्धं
यात्राभवतुपांडव १७ ब्राह्मणावैपरंश्रेयोदिविचेहचभारत ॥ एतेधर्मस्यवेत्तारःकृतज्ञाःसततंप्रभो १८ पूजिताःशुभकर्तारःपूजयेत्तान्नराधिप ॥ राज्यंश्रेयःपरंरा
जन्यशःकीर्तिंचलप्स्यसे १९ कुलस्यसंततिंचैवयथान्यायंयथाक्रमम् २० द्वयोरिमंभारतसंधिविग्रहंसुभाषितंबुद्धिविशेषकारकम् ॥ यथात्ववेक्ष्यक्षितिपेनसर्व
दानिषेवितव्यंनृपशत्रुमंडले २२१ ॥ इतिश्रीमहाभारतेशांतिप०आप०मार्जारमूषिकसंवादेअष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ युधिष्ठिरउवाच ॥
उक्तोमंत्रोमहाबाहोविश्वासोनास्तिशत्रुषु ॥ कथंहिराजावर्तेतयदिसर्वत्रनाश्वसेत् १ विश्वासाद्धिपरंराजन्राज्ञामुत्पद्यतेभयम् ॥ कथंहिनाश्वसन्राजाशत्रूञ्जयति
पार्थिवः २ एतन्मेसंशयंछिंधिमतिर्मेसंप्रमुह्यति ॥ अविश्वासकथामेतामुपश्रुत्यपितामह ३ ॥ भीष्मउवाच ॥ शृणुष्वराजन्यद्वृत्तंब्रह्मदत्तनिवेशने ॥ पूजन्या
सहसंवादंब्रह्मदत्तस्यभूपतेः ४ कांपिल्येब्रह्मदत्तस्यत्वंतःपुरनिवासिनी ॥ पूजनीनामशकुनिर्दीर्घकालंसहोषिता ५ रुतज्ञासर्वभूतानांयथावैजीवजीवकः ॥ सर्व
ज्ञासर्वतत्त्वज्ञातिर्यग्योनिंगताऽपिसा ६ अभिप्रजातासातत्रपुत्रमेकंसुवर्चसम् ॥ समकालंचराज्ञोऽपिदेव्यांपुत्रोव्यजायत ७ तयोरर्थेकृतज्ञासाखेचरीपूजनी
सदा ॥ समुद्रतीरंसागत्वाआजहारफलद्वयम् ८ पुष्ट्यर्थंचस्वपुत्रस्यराजपुत्रस्यचैवह ॥ फलमेकंसुतायादाद्राजपुत्रायचापरम् ९ अमृतास्वादसदृशंबलतेजो
भिवर्धनम् ॥ आदायादायसैवाशुतयोःप्रादात्पुनःपुनः १० ततोगच्छत्परांवृद्धिंराजपुत्रःफलाशनात् ॥ ततःसधात्र्याकक्षेणउह्यमानोनृपात्मजः ११ ददर्शतं
पक्षिसुतंबाल्यादागत्यबालकः ॥ ततोबाल्याच्चयत्नेनतेनाक्रीडतपक्षिणा १२ शून्येचतमुपादायपक्षिणंसमजातकम् ॥ हत्वाततःसराजेंद्रधात्र्याहस्तमुपा
गतः १३ अथसापूजनीराजन्नागमत्फलहारिणी ॥ अपश्यन्निहतंपुत्रंतेनबालेनभूतले १४ बाष्पपूर्णमुखीदीनादृष्ट्वातंरुदतीसुतम् ॥ पूजनीदुःखसंतप्तारुदती
वाक्यमब्रवीत् १५ क्षत्रियेसंगतंनास्तिनप्रीतिर्नचसौहृदम् ॥ कारणात्सांत्वयंत्येतेकृतार्थाःसंत्यजंतिच १६ क्षत्रियेषुनविश्वासःकार्यःसर्वापकारिषु ॥ अपकृत्या
पिसततंसांत्वयंतिनिरर्थकम् १७ अहमस्यकरोम्यद्यसदृशींवैरयातनाम् ॥ कृतघ्नस्यनृशंसस्यभृशंविश्वासघातिनः १८

पूजन्याचटकया ४ । ५ जीवजीवकःशाकुनिकः सह्ययंपक्षीअस्यांदिशिलाभमस्यामलाभंदिशतीतिवर्णयति जीवजीवकइतिपक्षिविशेषइत्यन्ये ६ अभिप्रजाताप्रसूतवती देव्यांराजभार्यायाम्
७ । ८ । ९ । १० । ११ । १२ समजातकंसमानवयसम् १३ । १४ । १५ । १६ । १७ । १८

१९ । २० इच्छयाबुद्धिपूर्वकंउपसर्पतिफलदंपणकर्तारम् २१ कर्तर्यदृष्टेतत्पुत्रादावपिपापंदृश्यतएवेत्याह पापमिति तेषांमहतांपापमपराधकृतमेनः २२ । २३ मागमःमास्मगमः २४ परिलंब तःविश्वासंकुर्वतः २९ । २६ नियच्छतिमृत्युर्नाशयतितत्तोनष्टसंततित्वात्परलोकंचनियच्छति २७ । २८ । २९ जराग्रीर्यहरत्वात् । बीजमात्रंप्रसवरूपत्वात् । शत्रुःरिक्थहरत्वात् ।

सहसंजातवृद्धस्यतथैवसहभोजिनः ॥ शरणागतस्यचवधस्त्रिविधंह्येवपातकम् १९ इत्युक्त्वाचरणाभ्यांतुनेत्रेनृपसुतस्यसा ॥ भित्त्वाखस्थाततइदंपूजनीवाक्य मब्रवीत् २० इच्छयेहकृतंपापंसद्यस्तंचोपसर्पति ॥ कृतंप्रतिकृतंयेषांननश्यतिशुभाशुभम् २१ पापंकर्मकृतंकिंचिद्यदितस्मिन्नदृश्यते ॥ नृपतेतस्यपुत्रेषुपौत्रे ष्वपिचनप्तृषु २२ ब्रह्मदत्तःसुतंदृष्ट्वापूजन्याहृतलोचनम् ॥ कृतेप्रतिकृतंमत्वापूजनीमिदमब्रवीत् २३ ॥ ब्रह्मदत्तउवाच ॥ अस्तिवैकृतमस्माभिरस्तिप्रतिकृतं त्वया ॥ उभयंतत्समीभूतंवसपूजनिमाऽगमः २४ ॥ पूजन्युवाच ॥ सकृत्कृतापराधस्यतत्रैवपरिलंबतः ॥ नतद्बुधाःप्रशंसंतिश्रेयस्तत्रापसर्पणम् २५ सांत्वे प्रयुक्तेसततंकृतवैरेनविश्वसेत् ॥ क्षिप्रंसबध्यतेमूढोनहिवैरंप्रशाम्यति २६ अन्योन्यकृतवैराणांपुत्रपौत्रंनियच्छति ॥ पुत्रपौत्रविनाशेचपरलोकंनियच्छति २७ सर्वेषांकृतवैराणामविश्वासःसुखोदयः ॥ एकांततोनविश्वासःकार्योविश्वासघातकैः २८ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ॥ विश्वासाद्भयमुत्पन्नमपिमूलं निकृंतति ॥ कामंविश्वासयेदन्यान्परेषांचनविश्वसेत् २९ मातापिताबांधवानांवरिष्ठौभार्याजराबीजमात्रंतुपुत्रः ॥ भ्राताशत्रुःक्लिन्नपाणिर्वयस्यआत्माह्येकःसु खदुःखस्यभोक्ता ३० अन्योन्यकृतवैराणांनसंधिरुपपद्यते ॥ सचहेतुरतिक्रांतोयदर्थमहमावसम् ३१ पूजितस्यार्थमानाभ्यांजंतोःपूर्वापकारिणः ॥ मनोभव त्यविश्वस्तंकर्मत्रासयतेऽबलान् ३२ पूर्वंसंमाननायत्रपश्चाच्चैवविमानना ॥ जह्यात्तत्सत्ववान्स्थानंशत्रोःसंमानितोऽपिसन् ३३ उपितास्मितवागारेदीर्घकालंसम र्चिता ॥ तदिदंवैरमुत्पन्नंसुखमाशुव्रजाम्यहम् ३४ ॥ ब्रह्मदत्तउवाच ॥ यःकृतेप्रतिकुर्याद्वैनसतत्रापराध्नुयात् ॥ अनृणस्तेनभवतिवसपूजनिमाऽगमः ३५ पूजन्युवाच ॥ नकृतस्यतुकर्तुश्चसख्यंसंधीयतेपुनः ॥ हृदयंतत्रजानातिकर्तुश्चैवकृतस्यच ३६ ॥ ब्रह्मदत्तउवाच ॥ कृतस्यचैवकर्तुश्चसख्यंसंधीयतेपुनः ॥ वैरस्योपशमोदृष्टःपापंनोपाश्नुतेपुनः ३७ ॥ पूजन्युवाच ॥ नास्तिवैरमतिक्रांतंसांत्वितोऽस्मीतिनाश्वसेत् ॥ विश्वासाद्बध्यतेलोकेतस्माच्छ्रेयोऽप्यदर्शनम् ३८ तरसायेनशक्यंतेशस्त्रैःसुनिशितैरपि ॥ साम्नातेऽपिनिगृह्यंतेगजाइवकरेणुभिः ३९ ॥ ब्रह्मदत्तउवाच ॥ संवासाज्जायतेस्नेहोजीवितांतकरेष्वपि ॥ अन्यो न्यस्यचविश्वासःश्वपचेनशुनोयथा ४० अन्योन्यकृतवैराणांसंवासान्मृदुतांगतम् ॥ नैवतिष्ठतितद्वैरंपुष्करस्थमिवोदकम् ४१

क्लिन्नपाणिः उपक्रियमाणः । धनादिनापूज्यमानमेवमित्रंनान्यदित्यर्थः ३० हेतुःपुत्ररक्षास्नेहोवा ३१ कर्मस्वकृतं अबलान्मादृशान् ३१ । ३३ । ३४ । ३५ नेति अन्योन्यस्यापकार मुभावपिनित्यंस्मरतइत्यर्थः ३६ प्रतिकृतंप्रायश्चित्तंजातमितिमन्वानःसाधुःपुनर्नापकरोतीत्याशयेनाह कृतस्येति ३७ । ३८ नशक्यंतेजेतुमितिशेषः ३९ श्वपचश्चांडालःश्वमांसाहारो ऽपिशुनासहसख्यमेति संवासादेवंमामपिजानीहीत्यर्थः ४० । ४१

वैरंस्त्रीकृतंकृष्णशिशुपालयोः । वास्तुगृहादिकंस्थानंतज्जंकौरवपांडवानां । वाग्जंद्रोणद्रुपदयोः । सापत्नंजातिवैरंमूषकमार्जारयोः । अपराधजमावयोःतच्चतद्वेतिद्वंद्वः ताभ्यांसहितंससापत्ना पराधजं ४२ कृतवैरोऽपिदाताऽर्थादिनामानयिताअर्थाशावतारान्नानहंतव्यः ४३ यद्यप्येवंनित्यंफलद्वयप्रदानात्त्वंमांनहनिष्यसीतिजानामितथाऽपिकृतवैरेविश्वासोनीतिविरुद्धइत्याह कृतेति ४४ पारुष्यैर्मुरुशिक्षार्थंगुरुभिरुक्तैः ४५ वैराग्निरदग्ध्वानशाम्यत्यपराधजंकर्मैकतरक्षयाद्विनानशाम्यतीतियोजना ४६ । ४७ कस्मिंश्चिदन्यतरेअपकार्येऽन्यतरेणबाध्येसति अहंचत्वयितथाच

॥ पूजन्युवाच ॥ वैरंपंचसमुत्थानंतच्चबुध्यंतिपंडिताः ॥ स्त्रीकृतंवास्तुजंवाग्जंससापत्नापराधजम् ४२ तत्रदातानहंतव्यःक्षत्रियेणविशेषतः ॥ प्रकाशंवाऽप्रकाशं वाबुद्ध्वादोषबलाबलम् ४३ कृतवैरेनविश्वासःकार्यस्त्विहसुहृद्यपि ॥ छन्नंसंतिष्ठतेवैरंगूढोऽग्निरिवदारुषु ४४ नवित्तेननपारुष्यैर्नचसांत्वेनवाऽऽश्रितैः ॥ कोपा ग्निःशाम्यतेराजंस्तोयाग्निरिवसागरे ४५ नहिवैराग्निरुद्भूतःकर्मचाप्यपराधजम् ॥ शाम्यत्यदग्ध्वानृपतेविनाह्येकतरक्षयात् ४६ सत्कृतस्यार्थमानाभ्यामनुपूर्वा पकारिणः ॥ नादेयोऽमित्रविश्वासःकर्मत्रासयतेबलान् ४७ नैवापकार्येकस्मिंश्चिदहंत्वयितथाभवान् ॥ उषिताऽस्मिगृहेऽहंतेनेदानींविश्वसाम्यहम् ४८ ॥ ब्रह्म दत्तउवाच ॥ कालेनक्रियतेकार्यंतथैवविविधाःक्रियाः ॥ कालेनैतेप्रवर्तंतेकःकस्येहापराध्यति ४९ तुल्यंचोभेप्रवर्तेतेमरणंजन्मचैवह ॥ कार्यंतेचैवकालेनतन्निमि त्तंनजीवति ५० बध्यंतेयुगपत्केचिदेकैकस्यनचापरे ॥ कालोदहतिभूतानिसंप्राप्याग्निरिवेंधनम् ५१ नाहंप्रमाणंनैवत्वमन्योन्यंकारणंशुभे ॥ कालोनित्यमुपा दत्तेसुखंदुःखंचदेहिनाम् ५२ एवंवसेहसस्नेहायथाकाममहिंसिता ॥ यत्कृतंतत्तुमेक्षांतंत्वंचवैक्षमपूजनि ५३ ॥ पूजन्युवाच ॥ यदिकालःप्रमाणंतेनवैरंकस्य चिद्भवेत् ॥ कस्मात्त्वपचितिंयांतिबांधवाबांधवैर्हतैः ५४ कस्माद्देवासुराःपूर्वमन्योन्यमभिजघ्निरे ॥ यदिकालेननिर्याणंसुखंदुःखंभवाभवौ ५५ भिषजोभैषजं कर्तुंकस्मादिच्छंतिरोगिणः ॥ यदिकालेनपच्यंतेभेषजैःकिंप्रयोजनम् ५६ प्रलापःसुमहान्कस्मात्क्रियतेशोकमूर्छितैः ॥ यदिकालःप्रमाणंतेकस्माद्धर्मोऽस्तिक र्तृषु ५७ तवपुत्रोममापत्यंहतवान्सहतोमया ॥ अनंतरंत्वयाऽहंचहंतव्याहिनराधिप ५८ अहंहिपुत्रशोकेनकृतपापातवात्मजे ॥ यथात्वयाप्रहर्तव्यंतथातत्त्वं चमेशृणु ५९ भक्षार्थंक्रीडनार्थंचनरावाञ्छंतिपक्षिणः ॥ तृतीयोनास्तिसंयोगोवधबंधादृतेक्षमः ६० वधबंधभयादेतेमोक्षतंत्रमुपाश्रिताः ॥ मरणोत्पातजंदुः खंप्राहुर्वेदविदोजनाः ६१ सर्वस्यदयिताःप्राणाःसर्वस्यदयिताःसुताः ॥ दुःखादुद्विजतेसर्वःसर्वस्यसुखमीप्सितम् ६२ दुःखंजराब्रह्मदत्तदुःखमर्थविपर्ययः ॥ दुःखंचानिष्टसंवासोदुःखमिष्टवियोजनम् ६३ वधबंधकृतंदुःखंस्त्रीकृतंसहजंतथा ॥ दुःखंसुतेनसततंजनान्विपरिवर्तते ६४

स्म्येवंभवानपिमयितथास्तीतियोज्यं अतोनावयोरन्योन्यंविश्वासःसंभवतीत्यर्थः ४८ कालाधीनंजगत्यावयोर्मध्येकस्यापिदोषोनास्तीत्याह कालेनेत्यादिना ४९ कार्यंतेजायते तन्निमित्तंकाल निमित्तं नजीवतिम्रियते ५० एकैकस्यएकैकेन ५१ । ५२ क्षमक्षमस्व ५३ । ५४ । ५५ । ५६ कस्माद्धर्मोऽस्तिकर्तृषुवदाविधिनिषेधकथाव्यर्थास्यादितिभावः ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ सुतेननष्टेनदुष्टेनवा ६४

६५ । ६६ । ६७ कृतंअलंपर्याप्तंसख्यमितिशेषः ६८ । ६९ । ७० वैरिणोवाक्येइतिशेषः शत्रुणादर्शितंपुरःस्थितंमधुश्रद्दधानाः शुष्कतृणैश्छन्नेप्रपातेयथापतंतितद्वदेवेत्यर्थः ७१ । ७२ ७३ । ७४ सर्वथाऽनाश्वासिनृणांजीवनमेवनस्यादित्याह नेति ७५ स्वयंदोषवतीअहंनिर्दोषमपित्वयासहवासंकर्तुंनशक्नोमीत्याहदृष्टांतमुखेन यस्येत्यादिना ७६ । ७७ । ७८ । ७९ । ८०

॥ १ ॥ नदुःखंपरदुःखेवैकेचिदाहुरबुद्धयः ॥ योदुःखंनाभिजानातिसजल्पतिमहाजने ६५ यस्तुशोचातिदुःखार्तःसकथंवक्तुमुत्सहेत ॥ रसज्ञःसर्वदुःखस्ययथात्मनित थाऽपरे ६६ यत्कृतंतेमयाराजंस्त्वयाचममयत्कृतम् ॥ नतद्वर्षशतैःशक्यंव्यपोहितुमरिंदम ६७ आवयोःकृतमन्योन्यंपुनःसंधिर्नविद्यते ॥ स्मृत्वास्मृत्वा हितेपुत्रंनवंवैरंभविष्यति ६८ वैरमंतिकमासाद्ययःप्रीतिंकर्तुमिच्छति ॥ मृन्मयस्येवभग्नस्ययथासंधिर्नविद्यते ६९ निश्चयःस्वार्थशास्त्रेषुविश्वासश्चासुखोद यः ॥ उशनाचैवगाथेद्वेप्रह्लादायाब्रवीत्पुरा ७० येवैरिणःश्रद्दधतेसत्येसत्येतरेऽपिवा ॥ वध्यंतेश्रद्दधानास्तुमधुशुष्कतृणैर्यथा ७१ नहिवैराणिशाम्यंतिकुलेदुः खगतानिच ॥ आख्यातारश्चविद्यंतेकुलेवैम्रियतेपुमान् ७२ उपगृह्यतुवैराणिसांत्वयंतिनराधिप ॥ अथैनंप्रतिपिंषंतिपूर्णंघटमिवाश्मनि ७३ सदानविश्वसे द्राजापापंकृत्वेहकस्यचित् ॥ अपकृत्यपरेषांहिविश्वासाद्दुःखमश्नुते ७४ ॥ ब्रह्मदत्तउवाच ॥ नाविश्वासाद्विंदतेऽर्थानीहतेचापिकिंचन ॥ भयात्त्वेकतरान्नि त्यंमृतकल्पाभवंतिच ७५ ॥ पूजन्युवाच ॥ यस्येहव्रणिनौपादौपद्भ्यांचपरिसर्पति ॥ खन्येतेतस्यतौपादौसुगुप्तमिहधावतः ७६ नेत्राभ्यांसरुजाभ्यांयः प्रतिवातमुदीक्षते ॥ तस्यवायुरुजात्यर्थंनेत्रयोर्भवतिध्रुवम् ७७ दुष्टंपंथानमासाद्ययोमोहादुपपद्यते ॥ आत्मनोबलमज्ञायतदंतंतस्यजीवितम् ७८ यस्तुवर्षम विज्ञायक्षेत्रंकर्षतिकर्षकः ॥ हीनःपुरुषकारेणसस्यंनैवाश्नुतेततः ७९ यस्तुतिक्तंकषायंवास्वादुवामधुरंहितम् ॥ आहारंकुरुतेनित्यंसोऽमृतत्वायकल्पते ८० पथ्यंमुक्त्वातुयोमोहाद्दुष्टमश्नातिभोजनम् ॥ परिणाममविज्ञायतदंतंतस्यजीवितम् ८१ दैवंपुरुषकारश्चस्थितावन्योन्यसंश्रयात् ॥ उदाराणांतुसत्कर्मदैवंक्ली बाउपासते ८२ कर्मचात्महितंकार्यंतीक्ष्णंवायदिवामृदु ॥ ग्रस्यतेऽकर्मशीलस्तुसदाऽनर्थैरकिंचनः ८३ तस्मात्सर्वंव्यपोह्यार्थंकार्यएवपराक्रमः ॥ सर्वस्वम पिसंत्यज्यकार्यमात्महितंनरैः ८४ विद्याशौर्यंचदाक्ष्यंचबलंधैर्यंचपंचमम् ॥ मित्राणिसहजान्याहुर्वर्तयंतीहतैर्बुधाः ८५ निवेशनंचकुप्यंचक्षेत्रंभार्यासुहृज्जनः ॥ एतान्युपहितान्याहुःसर्वत्रलभतेपुमान् ८६ सर्वत्ररमतेप्राज्ञःसर्वत्रचविराजते ॥ नविभीषयतेकंचिद्भीषितोनबिभेतिच ८७ नित्यंबुद्धिमतोऽप्यर्थःस्वल्पको ऽपिविवर्धते ॥ दाक्ष्येणाकुर्वतःकर्मसंयमात्प्रतितिष्ठति ८८ गृहस्नेहावबद्धानांनराणामल्पमेधसाम् ॥ कुस्त्रीखादतिमांसानिमाघमांसेगवाइव ८९

८१ । ८२ अकर्मशीलइतिच्छेदः ८३ अर्थंकालदैवस्वभावाख्यम् ८४ बलंवैराग्यम् ८५ कुप्यंताम्रादि यावत्कुप्यंस्वर्णरत्नादि उपहितान्युपमित्राणि ८६ विद्यादीनांफलानिक्रमेणाह ॥ १ ॥ सर्वत्रेति कश्चित्तमितिशेषः ८७ दाक्ष्येणवर्धतेसंयमाद्दाक्ष्यसंकोचात् प्रतितिष्ठतिप्रतिष्ठांस्थितिमेवगच्छति वर्धतइत्यर्थः ८८ कलहिनस्यावस्थामाह गृहेति स्वादविस्वापराधैस्तंसंतापयति शुष्कंकरोति माघमांकर्कटी सेगवास्तदपत्यानि कर्कटयानाशहेतुर्गर्भएवेतिप्रसिद्धम् ८९

निर्धयस्याह गृहमिति ९० । ९१ मेमया ९२ । ९३ । ९४ । ९५ । ९६ यत्रेति यत्रदेशेबलात्कारोनास्तितत्र भीरेवनास्ति याराजादारिद्र्यंजनंबुभूषतिपालयितुमिच्छति सएवतेनसहपाल्यपाल

गृहंक्षेत्राणिमित्राणिस्वदेशइतिचापरे ॥ इत्येवमवसीदंतिनराबुद्धिविपर्यये ९० उत्पतेत्सहजाद्देशाद्व्याधिदुर्भिक्षपीडितात् ॥ अन्यत्रवस्तुंगच्छेद्वावसेद्वानि त्यमानितः ९१ तस्मादन्यत्रयास्यामिवस्तुंनाहमिहोत्सहे ॥ कृतमेतदनार्यंमेतवपुत्रेचपार्थिव ९२ कुभार्यांचकुपुत्रंचकुराजानंकुसौहृदम् ॥ कुसंबंधंकुदेशंच दूरतःपरिवर्जयेत् ९३ कुपुत्रेनास्तिविश्वासःकुभार्यायांकुतोरतिः ॥ कुराज्येनिर्वृतिर्नास्तिकुदेशेनास्तिजीविका ९४ कुमित्रेसंगतिर्नास्तिनित्यमस्थिरसौहृ दे ॥ अवमानःकुसंबंधेभवत्यर्थविपर्यये ९५ साभार्यायाप्रियंब्रूतेसपुत्रोयत्रनिर्वृतिः ॥ तन्मित्रंयत्रविश्वासःसदेशोयत्रजीव्यते ९६ यत्रनास्तिबलात्कारःसराजातीव्रशासनः ॥ भीरेवनास्तिसंबंधोदरिद्रंयोबुभूषते ९७ भार्यादेशोऽथमित्राणिपुत्रसंबंधिबांधवाः ॥ एतेसर्वेगुणवतिधर्मनेत्रेमहीपतौ ९८ अधर्मज्ञस्यवि लयंप्रजागच्छंतिनिग्रहात् ॥ राजामूलंत्रिवर्गस्यस्वप्रमत्तोऽनुपालयेत् ९९ बलिषड्भागमुद्धृत्यबलिंसमुपयोजयेत् ॥ नरक्षतिप्रजाःसम्यग्यःसपार्थिवतस्करः १०० दत्वाऽभयंयःस्वयमेवराजानतत्प्रमाणंकुरुतेऽर्थलोभात् ॥ ससर्वलोकादुपलभ्यपापंसोऽधर्मबुद्धिर्निरयंप्रयाति १ दत्वाऽभयंस्वयंराजाप्रमाणंकुरुतेयदि ॥ ससर्वसुखकृज्ज्ञेयःप्रजाधर्मेणपालयन् २ मातापितागुरुर्गोप्तावह्निर्वैश्रवणोयमः ॥ सप्तराज्ञोगुणानेतान्मनुराहप्रजापतिः ३ पिताहिराजाराष्ट्रस्यप्रजानांयोऽनुकं पनः ॥ तस्मिन्मिथ्याविनीतोहितिर्यग्गच्छतिमानवः ४ संभावयतिमातेवदीनमप्युपपद्यते ॥ दहत्यग्निरिवानिष्टान्यमयन्नसतोयमः ५ इष्टेषुविसृजन्नर्थान्कु बेरइवकामदः ॥ गुरुर्धर्मोपदेशेनगोप्ताचपरिपालयन् ६ यस्तुरंजयतेराजापौरजानपदान्गुणैः ॥ नतस्यभ्रमतेराज्यंस्वयंधर्मानुपालनात् ७ स्वयंसमुपजान न्हिपौरजानपदार्चनम् ॥ ससुखंप्रेक्षतेराजाइहलोकेपरत्रच ८ नित्योद्विग्नाःप्रजायस्यकरभारप्रपीडिताः ॥ अनर्थैर्विप्रलुप्यंतेसगच्छतिपराभवम् ९ प्रजा यस्यविवर्धंतेसरसीवमहोत्पलम् ॥ ससर्वफलभाग्राजास्वर्गलोकेमहीयते ११० बलिनाविग्रहोराजन्नकदाचित्प्रशस्यते ॥ बलिनाविग्रहोयस्यकुतोराज्यंकुतः सुखम् ११ ॥ भीष्मउवाच ॥ सैवमुक्त्वाशकुनिकाब्रह्मदत्तंनराधिपम् ॥ राजानंसमनुज्ञाप्यजगामाभीप्सितांदिशम् १२ एतत्तेब्रह्मदत्तस्यपूजन्यासहभाषि तम् ॥ मयोक्तंनृपतिश्रेष्ठकिमन्यच्छ्रोतुमिच्छसि ११३ ॥ इतिश्रीमहाभारते शांतिपर्वणिआपद्धर्मपर्वणि ब्रह्मदत्तपूजन्योःसंवादे एकोनचत्वारिंश दधिकशततमोऽध्यायः ॥ १३९ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ युगक्षयात्परिक्षीणेधर्मेलोकेचभारत ॥ दस्युभिःपीड्यमानेचकथंस्थेयंपितामह १

कभावलक्षणःसंबंधइतियोज्यं ९७ धर्मनेत्रोधर्मनेता ९८ निग्रहाद्वंदीकरणात् नतुस्वेच्छया स्वप्रमत्तःसुतरामप्रमत्तः ९९ समुपयोजयेद्भक्षयेत् अथचनरक्षति १०० अभयमितिच्छेदः १। २। ३ ४ संभावयतिइष्टंचिंतयति उपपद्यतेपालयति ५ । ६ । ७ । ८ । ९ । ११० । ११ । १२ । ११३ ॥ इतिशां० आप० नी०भा० भा० एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ युगेति १

घृणांदयाम् १ । ३ । ४ ।५ । ६ । ७ । ८ ।९ । १० । ११ ।१२ । १३ । १४ । १५ । १६ । १७ । १८ नित्यमुद्यतदंडःस्यादित्यायेतदंतोग्रंथआदिपर्वणिव्याख्यातः १९ नानार्थिकोबहुप्रयोजनवान् कृतघ्नेपुरुषेऽर्थसंबंधंनसमाचरेत् मानार्थिकइतिपाठेमानीयथाचरेतहिंतत्कार्यसमाप्तेःप्रागेवाचरेदित्याह अर्थीति फलितमाह तस्मादिति सार्द्धः २० 'कोकिलस्यवराहस्यमेरोःशून्यस्यवेश्मनः ॥ नटस्यभक्तिमित्रस्ययच्छ्रेयस्तत्समाचरेत्' कोकिलस्यश्रेयःस्वपोष्याणांपरैःपोषणं तथाहि । 'कृषिर्वणिक्पथोदुर्गसेतुःकुंजरबंधनम् ॥ खन्याकरकरादानंसंचयार्थाष्टकंमतं'॥ यःकीनाशःशतंनिवर्तनानिभूमेःकर्षतितेनविष्टिरूपेणराजकीयमपिनिवर्तनदशकंकर्षणीयंस्वीयवद्रक्षणीयंच तदुत्पन्नंधान्यादिकंराज्ञेदेयं एवमेवयोवणिक्शतेनबलीवर्दैःपण्यमाहरति तेनराजकीयाअपि

॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामिनीतिमापत्सुभारत ॥ उत्सृज्यापिघृणांकालेयथावर्तेतभूमिपः २ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ भारद्वाजस्यसंवादंराज्ञःशत्रुंजयस्यच ३ राजाशत्रुंजयोनामसौवीरेषुमहारथः ॥ भारद्वाजमुपागम्यपप्रच्छार्थविनिश्चयम् ४ अलब्धस्यकथंलिप्सालब्धंकेनविवर्द्धते ॥ वर्द्धितंपाल्यतेकेनपालितंप्रणयेत्कथम् ५ तस्मैविनिश्चितार्थायपरिपृष्टोऽर्थनिश्चयम् ॥ उवाचब्राह्मणोवाक्यमिदंहेतुमदुत्तमम् ६ नित्यमुद्यतदंडःस्यान्नित्यंविवृतपौरुषः ॥ अच्छिद्रश्छिद्रदर्शीचपरेषांविवरानुगः ७ नित्यमुद्यतदंडस्यभृशमुद्विजतेनरः ॥ तस्मात्सर्वाणिभूतानिदंडेनैवप्रसाधयेत् ८ एवंदंडंप्रशंसंतिपंडितास्तत्त्वदर्शिनः ॥ तस्माच्चतुष्टयेतस्मिन्प्रधानोदंडउच्यते ९ छिन्नमूलेत्वधिष्ठानेसर्वेषांजीवनंहतम् ॥ कथंहिशाखास्तिष्ठेयुश्छिन्नमूलेवनस्पतौ १० मूलमेवादितश्छिंद्यात्परपक्षस्यपंडितः ॥ ततःसहायान्पक्षंचमूलमेवानुसाधयेत् ११ सुमंत्रितंसुविक्रांतंसुयुद्धंसुपलायितम् ॥ आपदास्पदकालेतुकुर्वीतनविचारयेत् १२ वाङ्मात्रेणविनीतःस्याद्धृदयेनयथाक्षुरः ॥ श्लक्ष्णपूर्वाभिभाषीचकामक्रोधौविवर्जयेत् १३ सपत्नसहितेकार्येकृत्वासंधिंनविश्वसेत् ॥ अपक्रामेत्ततःशीघ्रंकृतकार्योविचक्षणः १४ शत्रुंचमित्ररूपेणसांत्वेनैवाभिसांत्वयेत् ॥ नित्यशश्चोद्विजेत्तस्मात्गृहात्सर्पयुतादिव १५ यथाबुद्धिःपरिभवेत्तमतीतेनसांत्वयेत् ॥ अनागतेनदुष्प्रज्ञंप्रत्युत्पन्नेनपंडितम् १६ अंजलिंशपथंसांत्वंप्रणम्यशिरसावदेत् ॥ अश्रुप्रमार्जनंचैवकर्तव्यंभूतिमिच्छता १७ वहेदमित्रंस्कंधेनयावत्कालस्यपर्ययः ॥ प्राप्तकालंतुविज्ञायभिंद्याद्घटमिवाश्मनि १८ मुहूर्तमपिराजेंद्रतिंदुकालातवज्ज्वलेत् ॥ नतुषाग्निरिवानर्चिर्धूमायेतचिरंनरः १९ नानार्थिकोऽर्थसंबंधंकृतघ्नेनसमाचरेत् ॥ अर्थीतुशक्यतेभोक्तुंकृतकार्योऽवमन्यते ॥ तस्मात्सर्वाणिकार्याणिसावशेषाणिकारयेत् २० कोकिलस्यवराहस्यमेरोःशून्यस्यवेश्मनः ॥ नटस्यभक्तिमित्रस्ययच्छ्रेयस्तत्समाचरेत् २१

दशबलीवर्दावोढव्याःपोषणीयाश्च । दुर्गेऽटव्यादौमार्गरक्षामइतिव्यपदेशेनपांथेभ्योवेतनंग्राह्यम् । एवंसेतौनदीतरणे । प्रतिग्रामंकुंजरान्निमज्यबध्नीयात् ग्रामीणैरेवतेषांपोषणंकर्तव्यमित्येवमादियथायथमूह्यम् । एवंसर्वोऽपिराजकीयःकुटुंबार्थःप्रजाद्वारैवनिर्वोढव्यः । षड्भागहारस्तुकोशार्थमुपयुज्यते कोशश्चधर्मायपरावमर्दायवोपयुज्यतेइत्यन्यत् । वराहस्यश्रेयः वराहस्यश्रेयोमूलोत्खननम् तद्वराजाशत्रूणांकुर्यात् मेरोरचंचलत्वमनुलंघनीयत्वंचतत्स्वयमात्मनइच्छेत् । शून्यस्यवेश्मनःसंपदागमइष्टस्तमिच्छेत् । नटस्यनानारूपत्वमिष्टं एवंराजास्निग्धप्रसन्नादीन्गुणान्बिभृयात् । व्यालस्येतिपाठेसर्पवदवंध्यकोपत्वमिष्टं भक्तिमित्रस्यस्वाराध्योदयइष्टएवंस्वप्रतिपाल्यानांप्रजानामुदयोराज्ञानित्यमेष्टव्यइत्यर्थः २१



२२ । २३ । २४ बकादीनामेकाग्रत्वंनिर्भयत्वंशीघ्रकारित्वंअपरावृत्तित्वंचगुणास्तान्परार्थादानेराजाऽऽश्रयेदित्यर्थः २५ । २६ । २७ । २८ । २९ अश्वतरीगर्दभजाऽश्वाउदरभेदेनैवप्रसूतइतिप्रसिद्धं ३० । ३१ । ३२ । ३३ । ३४ निगृहीतमपिभयंपुनर्विवृद्धिभयादनिवृत्तमिवनिशामयेज्जानीयात् सर्वदाऽप्रहितस्तिष्ठेदितिभावः ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

उत्थायोत्थायगच्छेतनित्ययुक्तोरिपोर्गृहान् ॥ कुशलंचास्यपृच्छेतयद्यप्यकुशलंभवेत् २२ नालसाःप्राप्नुवंत्यर्थान्नक्लीबानाभिमानिनः ॥ नचलोकरवाद्भीतानवैशश्वत्प्रतीक्षिणः २३ नात्मच्छिद्रंरिपुर्विद्याद्विद्याच्छिद्रंपरस्यतु ॥ गूहेत्कूर्मइवांगानिरक्षेद्विवरमात्मनः २४ बकवच्चिंतयेदर्थान्सिंहवच्चपराक्रमेत् ॥ वृकवच्चाप्यलुंपेतशरवच्चविनिष्पतेत् २५ पानमक्षास्तथानार्योमृगयागीतवादितम् ॥ एतानियुक्त्यासेवेतप्रसंगोह्यत्रदोषवान् २६ कुर्यात्तृणमयंचापंशयीतमृगशायिकाम् ॥ अंधःस्यादंधवेलायांबाधिर्यमपिसंश्रयेत् २७ देशकालौसमासाद्यविक्रमेतविचक्षणः ॥ देशकालव्यतीतोहिविक्रमोनिष्फलोभवेत् २८ कालाकालौसंप्रधार्यबलाबलमथात्मनः ॥ परस्परंबलंज्ञात्वातत्रात्मानंनियोजयेत् २९ दंडेनोपनतंशत्रुंयोराजानंनियच्छति ॥ समृत्युमुपगृह्णातिगर्भमश्वतरीयथा ३० सुपुष्पितःस्यादफलःफलवान्स्याद्दुरारुहः ॥ आमःस्यात्पक्वसंकाशोनचशीर्येतकस्यचित् ३१ आशांकालवतींकुर्यात्तांचविघ्नेनयोजयेत् ॥ विघ्नंनिमित्ततोब्रूयान्निमित्तंचापिहेतुतः ३२ भीतवत्संविधातव्यंयावद्भयमनागतम् ॥ आगतंतुभयंदृष्ट्वाप्रहर्तव्यमभीतवत् ३३ नसंशयमनारुह्यनरोभद्राणिपश्यति ॥ संशयंपुनरारुह्ययदिजीवतिपश्यति ३४ अनागतंविजानीयाद्यच्छेद्भयमुपस्थितम् ॥ पुनर्वृद्धिभयात्किंचिदनिवृत्तंनिशामयेत् ३५ प्रत्युपस्थितकालस्यसुखस्यपरिवर्जनम् ॥ अनागतसुखाशाचनैवबुद्धिमतांनयः ३६ योऽरिणासहसंधायसुखंस्वपितिविश्वसन् ॥ सवृक्षाग्रेप्रसुप्तोवापतितःप्रतिबुध्यते ३७ कर्मणायेनतेनैवमृदुनादारुणेनच ॥ उद्धरेद्दीनमात्मानंसमर्थोधर्ममाचरेत् ३८ येसपत्नाःसपत्नानांसर्वांस्तानुपसेवयेत् ॥ आत्मनश्चापिबोद्धव्याश्चाराविनिहिताःपरैः ३९ चारस्त्वविदितःकार्यआत्मनोऽथपरस्यच ॥ पाषंडांस्तापसादींश्चपरराष्ट्रेप्रवेशयेत् ४० उद्यानेषुविहारेषुप्रपास्वावसथेषुच ॥ पानागारेप्रवेशेषुतीर्थेषुचसभासुच ४१ धर्माभिचारिणःपापाश्चौरालोकस्यकंटकाः ॥ समागच्छंतितान्बुद्ध्वानियच्छेच्छमयीतच ४२ नविश्वसेदविश्वस्तेविश्वस्तेनातिविश्वसेत् ॥ विश्वासाद्भयमभ्येतिनापरीक्ष्यचविश्वसेत् ४३ विश्वासयित्वातुपरंतत्त्वभूतेनहेतुना ॥ अथास्यप्रहरेत्कालेकिंचिद्विचलितेपदे ४४ अशंक्यमपिशंकेतनित्यंशंकेतशंकितात् ॥ भयंह्यशंकिताज्जातंसमूलमपिकृंतति ४५ अवधानेनमौनेनकाषायेणजटाजिनैः ॥ विश्वासयित्वाद्वेष्टारमवलुंपेद्यथावृकः ४६ पुत्रोवायदिवाभ्राता पितावायदिवासुहृत् ॥ अर्थस्यविघ्नंकुर्वाणाहंतव्याभूतिमिच्छता ४७ गुरोरप्यवलिप्तस्यकार्याकार्यमजानतः ॥ उत्पथंप्रतिपन्नस्यदंडोभवतिशासनं ४८ अभ्युत्थानाभिवादाभ्यांसंप्रदानेनकेनचित् ॥ प्रतिपुष्पफलाघातीतीक्ष्णतुंडइवद्विजः ४९

४३ । ४४ । ४५ । ४६ । ४७ । ४८ अभ्युत्थानादिभिर्मृदूपायैःशत्रोःप्रतिपुष्पफलाघातीस्यात् पुष्पफलंपुष्पफलंप्रतीतिप्रतिपुष्पफलं सर्वपुष्पंपुरुषार्थसाधनं सर्वफलंपुरुषार्थरूपंच तद्विनाशयेत् तीक्ष्णतुंडोद्विजःपक्षीयथासर्ववृक्षस्यपुष्पंफलंचनाशयतितद्वत् ४९

५० नास्तीति समर्थस्यतेजीयांसोरिपवोभवंत्यन्येमित्राणिभवंतीत्यर्थः ५१ । ५२ । ५३ । ५४ । ५५ शुष्कंलाभशून्यं तत्रदृष्टांतोगोविषाणस्यभक्षणमिति शत्रोरियंश्रीरितितद्विषाणचर्वणे
प्रवृत्तस्यायासोऽव्यर्थस्तद्वदित्यर्थः सार्धः ५६ त्रिवर्गःधर्मार्थकामाः तत्रत्रिविधापीडा धर्मेणार्थस्यपीडा अर्थेनधर्मस्य कामेनतयोरिति अनुबंधाःफलानि धर्मस्यार्थोऽर्थस्यकामःकामस्यें
द्रियप्रीतिरितिक्षुद्राः । धर्मस्यचित्तशुद्धिरर्थस्ययज्ञः कामस्यजीवनमात्रमितिप्राज्ञाः । तत्रबलाबलंज्ञात्वाऽनुबंधानलिप्सेतपीडांतुपरिवर्जयेदेवेत्यर्थः ५७ । ५८ । ५९ । ६० । ६१ गृध्रदृ

नाच्छित्त्वापरमर्माणिनाकृत्वाकर्मदारुणम् ॥ नाहत्वामत्स्यघातीवप्राप्नोतिमहतींश्रियम् ५० नास्तिजात्यारिपुर्नाममित्रंवापिनविद्यते ॥ सामर्थ्ययोगाज्जायंते
मित्राणिरिपवस्तथा ५१ अमित्रंनैवमुंचेतवदंतंकरुणान्यपि ॥ दुःखंतत्रनकर्तव्यंहन्यात्पूर्वापकारिणम् ५२ संग्रहानुग्रहेयत्नःसदाकार्योऽनसूयता ॥ निग्रहश्चा
पियत्नेनकर्तव्योभूतिमिच्छता ५३ प्रहरिष्यन्प्रियंब्रूयात्प्रहृत्यैवप्रियोत्तरम् ॥ असिनापिशिरश्छित्त्वाशोचेतचरुदेतच ५४ निमंत्रयीतसांत्वेनसंमानेनतितिक्ष
या ॥ लोकाराधनमित्येतत्कर्तव्यंभूतिमिच्छता ५५ नशुष्कवैरंकुर्वीतबाहुभ्यांननदींतरेत् ॥ अनर्थकमनायुष्यंगोविषाणस्यभक्षणम् ॥ दंताश्चपरिमृज्यंतेरस
श्चापिनलभ्यते ५६ त्रिवर्गस्त्रिविधापीडाअनुबंधास्तथैवच ॥ अनुबंधंतथाज्ञात्वापीडांचपरिवर्जयेत् ५७ ऋणशेषमग्निशेषंशत्रुशेषंतथैवच ॥ पुनःपुनःप्रवर्धंते
तस्माच्छेषंनधारयेत् ५८ वर्धमानमृणंतिष्ठेत्परिभूताश्चशत्रवः ॥ जनयंतिभयंतीव्रंव्याधयश्चाप्युपेक्षिताः ५९ नासम्यक्कृतकारीस्यादप्रमत्तःसदाभवेत् ॥ कंटको
पिहिदुश्छिन्नोविकारंकुरुतेचिरम् ६० वधेनचमनुष्याणांमार्गाणांदूषणेनच ॥ अगाराणांविनाशैश्चपरराष्ट्रंविनाशयेत् ६१ गृध्रदृष्टिर्बकालीनःश्वचेष्टःसिंहविक्र
मः ॥ अनुद्विग्नःकाकशंकीभुजंगचरितंचरेत् ६२ शूरमंजलिपातेनभीरुंभेदेनभेदयत् ॥ लुब्धमर्थप्रदानेनसमंतुल्येनविग्रहः ६३ श्रेणीमुख्योपजापेषुवल्लभानुनये
षुच ॥ आमात्यान्परिरक्षेतभेदसंघातयोरपि ६४ मृदुरित्यवजानंतितीक्ष्णइत्युद्विजंतिच ॥ तीक्ष्णकालेभवेत्तीक्ष्णोमृदुकालेमृदुर्भवेत् ६५ मृदुनैवमृदुंछिंधिमृदु
नाहंतिदारुणम् ॥ नसाध्यंमृदुनाकिंचित्तस्मात्तीक्ष्णतरोमृदुः ६६ कालेमृदुर्योभवतिकालेभवतिदारुणः ॥ प्रसाधयतिकृत्यानिशत्रुंचाप्याधितिष्ठति ६७ पंडितेन
विरुद्धःसन्दूरस्थोऽस्मीतिनाश्वसेत् ॥ दीर्घौबुद्धिमतोबाहूयाभ्यांहिंसतिहिंसितः ६८ नतत्तरेद्यस्यनपारमुत्तरेन्नतद्धरेद्यत्पुनराहरेत्परः ॥ नतत्खनेद्यस्यनमूलमु
द्धरेन्नतंहन्याद्यस्यशिरोनपातयेत् ६९ इतीदमुक्तंवृजिनाभिसंहितंनचैतदेवंपुरुषःसमाचरेत् ॥ परप्रयुक्तेनकथंविभावयेदतोमयोक्तंभवतोहितार्थिना ७०

ष्टिर्गृध्रवद्दूरदर्शी । बकवदालीनोनिश्चलोबकालीनः । श्वचेष्टःशुनकवज्जागरूकश्चोरसूचकश्च । सिंहवद्विक्रमोयस्यानिर्दयस्यतद्वदेव । काकवच्छंकीपरेंगितज्ञः । भुजंगचरितंअकस्मा
त्परकृतेदुर्गादौप्रवेशनं तत्कुर्यात् ६२ । ६३ श्रेणीमुख्यःनानाजातीयाःसंतएककार्येनिविष्टाःश्रेणयस्तासांमुख्यस्योपजापोभेदः । उपतापेष्वितिपाठेउपतापःक्लेशोवा । वल्लभानांमित्राणा
मनुनयेष्वन्यैःक्रियमाणेष्वमात्यान्पारंरक्षेत । भेदात्संघातात्संभूयकार्यकारित्वाच संहताह्यमात्याःसद्योराजानमराजानंकुर्युर्विपरीतंवाकुर्युरित्यर्थः ६४ । ६५ । ६६ । ६७ । ६८ । ६९
वृजिनाभिसंहितमापत्कालाभिप्रायेणैवउक्तं नत्वेतदेवंपुरुषःसमाचरेत् । परप्रयुक्तंपरेणाभियोगेकृतेसतिइदंमदुक्तंकथंनभावयेदपितुभावयेदेव आपदिएतदनुष्ठानादधर्मोनास्तीतिभावः ७०

७१ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणि नीलकंठीयेभारतभावदीपे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ७ ॥ हीनेइति आपद्यकार्यमपिकणिकेनोक्तंतत्रविश्वामित्रश्वजाघनीपचनरूपं
शिष्टाचारंप्रमाणयति १ । २ । ३ । ४ । ५ । ६ अतितिक्षुरस्यक्षुधमनिच्छुः अनुक्रोशाद्दयातः ब्राह्मणान्पालयितुमशक्तोराजाकिंकुर्यादित्यर्थः ७ । ८ आमात्प्रापणंयोगः प्राप्तसंरक्षणंक्षेमः

यथावदुक्तंवचनंहितार्थिनानिशम्यविप्रेणसुवीरराष्ट्रपः ॥ तथाऽकरोद्वाक्यमदीनचेतनःश्रियंचदीप्तांबुभुजेसबांधवः ७१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआप
द्धर्मपर्वणि कणिकोपदेशेचत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ युधिष्ठिरउवाच ॥ हीनेपरमकेधर्मेसर्वलोकाभिलंघिते ॥ अधर्मेधर्मतांनीतेधर्मेचाध
र्मतांगते १ मर्यादासुविनष्टासुक्षुभितेधर्मनिश्चये ॥ राजभिःपीडितेलोकेपरैर्वापिविशांपते २ सर्वाश्रयेषुमूढेषुकर्मसूपहतेषुच ॥ कामाल्लोभाच्चमोहाच्चभयंप
श्यत्सुभारत ३ अविश्वस्तेषुसर्वेषुनित्यंभीतेषुपार्थिव ॥ निकृत्याहन्यमानेषुवंचयत्सुपरस्परम् ४ संप्रदीप्तेषुदेशेषुब्राह्मणेचातिपीडिते ॥ अवर्षतिचपर्जन्ये
मिथोभेदेसमुत्थिते ५ सर्वस्मिन्दस्युसाद्भूतेपृथिव्यामुपजीवने ॥ केनस्विद्ब्राह्मणोजीवेज्जघन्येकालआगते ६ अतितिक्षुःपुत्रपौत्राननुक्रोशान्नराधिप ॥ कथ
मापत्सुवर्तेततन्मेब्रूहिपितामह ७ कथंचराजावर्तेतलोकेकलुषतांगते ॥ कथमर्थाच्चधर्माच्चनहीयेतपरंतप ८ ॥ भीष्मउवाच ॥ राजमूलामहाबाहोयोगक्षेमसु
वृष्टयः ॥ प्रजासुव्याधयश्चैवमरणंचभयानिच ९ कृतंत्रेताद्वापरंचकलिश्चभरतर्षभ ॥ राजमूलाइतिमतिर्ममनास्त्यत्रसंशयः १० तस्मिंस्त्वभ्यागतेकालेप्र
जानांदोषकारके ॥ विज्ञानबलमास्थायजीवितव्यंभवेत्तदा ११ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ विश्वामित्रस्यसंवादंचांडालस्यचपक्कणे १२ त्रेता
द्वापरयोःसंधौतदादैवविधिक्रमात् ॥ अनावृष्टिरभूद्घोरालोकेद्वादशवार्षिकी १३ प्रजानामतिवृद्धानांयुगांतेसमुपस्थिते ॥ त्रेताविमोक्षसमयेद्वापरप्रतिपाद
ने १४ नववर्षसहस्राक्षःप्रतिलोमोऽभवद्गुरुः ॥ जगामदक्षिणंमार्गंसोमोव्यावृत्तलक्षणः १५ नावश्यायोऽपितत्राभूत्कुतएवाभ्रजातयः ॥ नद्यःसंक्षिप्ततोयौघाः
किंचिदंतर्गतास्ततः १६ सरांसिसरितश्चैवकूपाःप्रस्रवणानिच ॥ हतत्विषोनलक्ष्यंतेनिसर्गाद्दैवकारितात् १७ उपशुष्कजलस्थायाविनिवृत्तसभाप्रपा ॥ नि
वृत्तयज्ञस्वाध्यायानिर्वषट्कारमंगला १८ उच्छिन्नकृषिगोरक्षानिवृत्तविपणापणा ॥ निवृत्तयूपसंभाराविप्रनष्टमहोत्सवा १९ अस्थिसंचयसंकीर्णामहाभूतरवा
कुला ॥ शून्यभूयिष्ठनगरादग्धग्रामनिवेशना २० क्वचिच्चोरैःक्वचिच्छस्त्रैःक्वचिद्राजभिरातुरैः ॥ परस्परभयाच्चैवशून्यभूयिष्ठनिर्जना २१ गतदैवतसंस्थानावृद्ध
लोकनिराकृता ॥ गोजाविमहिषीहीनापरस्परपराहृता २२ हतविप्रहतारक्षाप्रनष्टौषधिसंचया ॥ सर्वभूततरुप्रायाबभूववसुधातदा २३

सुवृष्टिश्चतः ब्राह्मणादीनांविपदागमेराज्ञएवदोषइत्यर्थः ९ । १० । ११ पक्कणेचांडालागारे १२ दैवविधिर्दैवविहितः १३ । १४ प्रतिलोमोवक्री व्यावृत्तमन्यथाभूतंलक्षणंचिन्हंयस्य
१५ अवश्यायोधूमिका १६ । १७ जलस्थायाः क्षुद्रजलाशयाः १८ विपणोविक्रयादिः आपणोहट्टः १९ । २० । २१ । २२ हताआरक्षारक्षाकर्तारोयस्यांसा भूततरुः
श्मशानवृक्षस्तद्वदगम्याभूततरुप्राया भूतनरप्रायेतिपाठेभूतप्रायनरेत्यर्थः शावभूतनरप्रायेतिप्राचांपाठःस्पष्टार्थः शवएवशावः २३

२४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ दृशया अन्नं विना ३६ कुवंत्रीं इंडिकां ३७ । ३८ । ३९ । ४० प्रतिग्रहात्तव्वदोषात् स्तैन्यदोषमधिकं न पश्यामीत्यर्थः



तस्मिन्प्रतिभयेकालेक्षतेधर्मेयुधिष्ठिर ॥ बभूवुःक्षुधितामर्त्याःखादमानाःपरस्परम् २४ ऋषयोनियमांस्त्यक्त्वापरित्यज्याग्निदेवताः ॥ आश्रमान्संपरित्यज्यप र्यधावन्नितस्ततः २५ विश्वामित्रोऽथभगवान्महर्षिरनिकेतनः ॥ क्षुधापरिगतोधीमान्समंतात्पर्यधावत २६ त्यक्त्वादारांश्चपुत्रांश्चकस्मिंश्चजनसंसदि ॥ भक्ष्या भक्ष्यसमोभूत्वानिरग्निरनिकेतनः २७ सकदाचित्परिपतन्श्वपचानांनिवेशनम् ॥ हिंस्राणांप्राणिघातानामाससादवनेक्वचित् २८ विभिन्नकलशाकीर्णंश्वचर्म च्छेदनायुतम् ॥ वराहखरभग्नास्थिकपालघटसंकुलम् २९ मृतचैलपरिस्तीर्णंनिर्माल्यकृतभूषणम् ॥ सर्पनिर्मोकमालाभिःकृतचिह्नकुटीमठम् ३० कुक्कुटारा वबहुलंगर्धभध्वनिनादितम् ॥ उद्घोषद्भिःखरैर्वाक्यैःकलहद्भिःपरस्परम् ३१ उलूकपक्षिध्वनिभिर्देवतायतनैर्वृतम् ॥ लोहघंटापरिष्कारंश्वयूथपरिवारितम् ३२ तत्प्रविश्यक्षुधाऽऽविष्टोविश्वामित्रोमहानृषिः ॥ आहारान्वेषणेयुक्तःपरंयत्नंसमास्थितः ३३ नचक्वचिदविंदत्सभिक्षमाणोऽपिकौशिकः ॥ मांसमन्नंफलंमूलमन्य द्वातत्रकिंचन ३३ अहोकृच्छ्रंमयाप्राप्तमितिनिश्चित्यकौशिकः ॥ पपातभूमौदौर्बल्यात्तस्मिंश्चांडालपक्कणे ३५ सचिंतयामासमुनिःकिंनुमेसुकृतंभवेत् ॥ कथं वृथानमृत्युःस्यादितिपार्थिवसत्तम ३६ सददर्शश्वमांसस्यकुतंत्रींविततांमुनिः ॥ चांडालस्यगृहेराजन्सद्यःशस्त्रहतस्यवै ३७ सचिंतयामासतदास्तैन्यंकार्य मितोमया ॥ नहीदानीमुपायोमेविद्यतेप्राणधारणे ३८ आपत्सुविहितंस्तैन्यंविशिष्टंचमहीयसः ॥ विप्रेणप्राणरक्षार्थंकर्तव्यमितिनिश्चयः ३९ हीनादादेयमा दौस्यात्समानात्तदनंतरम् ॥ असंभवेवाऽऽददीतविशिष्टादपिधार्मिकात् ४० सोऽहमंत्यावसायानांहराम्येनांप्रतिग्रहात् ॥ नस्तैन्यदोषंपश्यामिहरिष्यामिश्वजा घनीम् ४१ एतांबुद्धिंसमास्थायविश्वामित्रोमहामुनिः ॥ तस्मिन्देशेससुष्वापश्वपचोयत्रभारत ४२ सविगाढांनिशांदृष्ट्वासुप्तेचांडालपक्कणे ॥ शनैरुत्थायभगवा न्प्रविवेशकुटीमतः ४३ ससुप्तइवचांडालःश्लेष्मापिहितलोचनः ॥ परिभिन्नस्वरोरूक्षःप्रोवाचाप्रियदर्शनः ४४ ॥ श्वपचउवाच ॥ कःकुतंत्रींघट्टयतिसुप्तेचां डालपक्कणे ॥ जागर्मिनात्रसुप्तोऽस्मिहतोऽसीतिचदारुणः ४५ विश्वामित्रस्ततोभीतःसहसातमुवाचह ॥ तत्रव्रीडाकुलमुखःसोद्वेगस्तेनकर्मणा ४६ विश्वामि त्रोऽहमायुष्मन्नागतोऽहंबुभुक्षितः ॥ मावधीर्ममसद्बुद्धेयदिसम्यक्प्रपश्यसि ४७ चांडालस्तद्वचःश्रुत्वामहर्षेर्भावितात्मनः ॥ शयनादुपसंभ्रांतउद्ययौप्रतितं ततः ४८ सविसृज्याश्रुनेत्राभ्यांबहुमानात्कृतांजलिः ॥ उवाचकौशिकंरात्रौब्रह्मन्किंतेचिकीर्षितम् ४९ विश्वामित्रस्तुमातंगमुवाचपरिसांत्वयन् ॥ क्षुधितोऽहंगतप्राणोहरिष्यामिश्वजाघनीम् ५० क्षुधितःकलुषंयातोनास्तिह्रीरशनार्थिनः ॥ क्षुच्चमांदूषयत्यत्रहरिष्यामिश्वजाघनीम् ५१ ॥१२॥

श्वजाघनीं शुनोजंघां ४१ । ४२ । ४३ । ४४ घट्टयति चालयति ४५ । ४६ ममवाम ४७ । ४८ नेत्राभ्यांश्लेष्मपिहिताभ्याम् ४९ । ५० कलुषं यातः पापकर्मानुसृतः ५१

५२ । ५३ अग्निर्देवानांमुखंचपुरोधाश्चसः शुचिषात्शुचिमेध्यमेवसहतेनामेध्यं ५४ तस्यापियथासर्वभुक्त्वंतथाऽहंब्रह्मा ब्राह्मणोऽपितत्तुल्यत्वात्सर्वभुग्भविष्यामीत्यर्थः ५५ । ५६ । ५७ । ५८

अवसीदंतिमेप्राणाःश्रुतिर्मेनश्यतिक्षुधा ॥ दुर्बलोनष्टसंज्ञश्चभक्ष्याभक्ष्यविवर्जितः ५२ सोऽधर्मंबुद्ध्यमानोऽपिहरिष्यामिश्वजाघनीम् ॥ अटन्भैक्ष्यंनविंदामि यदायुष्माकमालये ५३ तदाबुद्धिःकृतापापेहरिष्यामिश्वजाघनीम् ॥ अग्निर्मुखंपुरोधाश्चदेवानांशुचिषाड्विभुः ५४ यथावत्सर्वभुग्ब्रह्मातथामांविद्धिधर्मतः ॥ तमुवाचसचांडालोमहर्षेशृणुमेवचः ५५ श्रुत्वातत्त्वंतथाऽऽतिष्ठयथाधर्मोनहीयते ॥ धर्मंतवापिविप्रर्षेशृणुयत्तेब्रवीम्यहम् ५६ शृगालादधमंश्वानंप्रवदंतिमनी षिणः ॥ तस्याप्यधमउद्देशःशरीरस्यश्वजाघनी ५७ नेदंसम्यग्व्यवसितंमहर्षेधर्मगर्हितम् ॥ चांडालस्वस्यहरणमभक्ष्यस्यविशेषतः ५८ साध्वन्यमनुपश्य त्वमुपायंप्राणधारणे ॥ नमांसलोभात्तपसोनाशस्तेस्यान्महामुने ५९ जानताविहितंधर्मंनकार्योधर्मसंकरः ॥ मास्मधर्मंपरित्याक्षीस्त्वंहिधर्मभृतांवरः ६० विश्वामित्रस्ततोराजन्नित्युक्तोभरतर्षभ ॥ क्षुधार्तःप्रत्युवाचेदंपुनरेवमहामुनिः ६१ निराहारस्यसुमहान्ममकालोऽभिधावतः ॥ नविद्यतेऽप्युपायश्चकश्चिन्मेप्रा णधारणे ६२ येनयेनविशेषेणकर्मणायेनकेनचित् ॥ अभ्युज्जीवेत्सादमानःसमर्थोधर्ममाचरेत् ६३ ऐंद्रोधर्मःक्षत्रियाणांब्राह्मणानामथाग्निकः ॥ ब्रह्मवह्निर्ममबलं भक्ष्यामिशमयन्क्षुधाम् ६४ यथायथैवजीवेद्धितत्कर्तव्यमहेलया ॥ जीवितंमरणाच्छ्रेयोजीवन्धर्ममवाप्नुयात् ६५ सोऽहंजीवितमाकांक्षन्नभक्ष्यस्यापिभक्षणम् ॥ व्यवस्येबुद्धिपूर्वंवैतद्भवाननुमन्यताम् ६६ बलवंतंकरिष्यामिप्रणोत्स्याम्यशुभानितु ॥ तपोभिर्विद्ययाचैवज्योतींषीवमहत्तमः ६७ ॥ श्वपचउवाच ॥ नैत त्खादन्प्राप्स्यतेदीर्घमायुर्नैवप्राणान्नामृतस्येवतृप्तिः ॥ भिक्षामन्यांभिक्षमातेमनोऽस्तुश्वभक्षणेश्वाह्यभक्ष्योद्विजानाम् ६८ ॥ विश्वामित्रउवाच ॥ नदुर्भिक्षेसुलभं मांसमन्यच्छ्वपाकमन्येनचमेस्तिवित्तम् ॥ क्षुधार्तश्चाहमगतिर्निराशःश्वमांसेचास्मिन्षड्रसान्साधुमन्ये ६९ ॥ श्वपचउवाच ॥ पंचपंचनखाभक्ष्याब्रह्मक्षत्रस्य वैविशः ॥ यथाशास्त्रंप्रमाणंतेमाऽभक्ष्येमानसंकृथाः ७० ॥ विश्वामित्रउवाच ॥ अगस्त्येनासुरोजग्धोवातापिःक्षुधितेनवै ॥ अहमापद्गतःक्षुत्तोभक्षयिष्येश्वजाघ नीम् ७१ ॥ श्वपचउवाच ॥ भिक्षामन्यामाहरेतिनचकर्तुमिहार्हसि ॥ ननूनंकार्यमेतद्वैहरकामंश्वजाघनीम् ७२ ॥ विश्वामित्रउवाच ॥ शिष्टावैकारणंधर्मेत द्वृत्तमनुवर्तये ॥ परांमेध्याशनादेनांभक्ष्यांमन्येश्वजाघनीम् ७३ ॥ श्वपचउवाच ॥ असतायत्समाचीर्णंनचधर्मःसनातनः ॥ नाकार्यमिहकार्यंवैमाछलेनाशुभं कृथाः ७४ ॥ विश्वामित्रउवाच ॥ नपातकंनावमतमृषिःसन्कर्तुमर्हति ॥ समौचश्वमृगौमन्येतस्माद्भोक्ष्येश्वजाघनीम् ७५

५९ । ६० । ६१ । ६२ । ६३ ऐंद्रः पालनात्मकः आग्निकः सर्वभुक्त्वरूपः ब्रह्मवेदः सएववह्निः ६४ । ६५ । ६६ ज्योतींषीवतपईधनेनबलवंतंकरिष्यामि आत्मानमितिशेषः ६७ । ६८ । ६९ पंचशशशल्यकादयः पंचैवभक्ष्यानान्येइतिहेतोरभक्ष्येश्वमांसेमनोमाकृथाः ७० । ७१ इतिकर्तुंनार्हसीतियोजना ७२ शिष्टाःअगस्त्यादयः ७३ । ७४ समौपशुत्वादितिभावः ७५

यदिति तेनागस्त्येनब्राह्मणानामर्थेऽर्थितेनप्रार्थितेनाऽर्थाद्ब्राह्मणैरेववातापिभक्षणंकृतंनस्वार्थं तदप्यवस्थाधिकारेसतादृशएवसमयोनान्यत्रकिंचित्कर्तुंशक्यमित्यर्थः नृशंसमपिभक्षित्वातेनवाता
पिनाभक्ष्यमाणाब्राह्मणारक्षिताइतिधर्मएवेत्यर्थः ७६ तर्ह्ययमात्मादेहोममभित्रमेतस्यरक्षणार्थंमयाऽप्येतद्भक्ष्यंचेन्नकश्चिद्दोषोऽस्तीत्याह मित्रंचेति ७७ क्षुधैवजितयासर्वान्कामानन्येआप्नुवंतिअत
स्त्वमपिक्षुधैवसहितोऽनाहारेणैवकामंप्रियस्वपूरयस्व ७८ स्थानेइति,सकामःप्रेत्यभावेमरणेसतियशःयशस्करोमवेदितिरथानेयुक्तं अनशनेनमरणंश्रेयइतिसत्यमित्यर्थः जीवतस्त्वनश्नतोधर्मलोपः
प्रत्यक्षः मूलंधर्मस्यशरीरंरक्ष्यंतस्यवैकल्येनधर्मविरोधोभवतीत्यर्थः ७९ बुद्ध्यात्मकेप्रमातरिविचारितेश्वजाघनीभक्षणेऽपिपुण्यमस्तीतिजाने । ज्ञानोत्पत्तियोग्यंशरीरमपथेनापिरक्ष्यमेवेतिभावः
मोहात्मकेकर्तृत्वाद्यभिमानमाजियथाश्वभक्षणेदोषस्तथैवतत्रविषयेऽस्ति संशयात्मा अन्यतरस्यात्मनोदृढपरिग्रहामावात् । तथापिश्वभक्षणमात्रेणत्वादृशःश्वपचोऽहंनभविष्यामि तपसादोषंदूरी ॥१४१॥

श्वपचउवाच ॥ यद्ब्राह्मणार्थेकृतमर्थितेनतेनर्षिणातदवस्थाऽधिकारे ॥ सर्वेधर्मोयत्रनपापमस्तिसर्वैरुपायैर्गुरवोहिरक्ष्याः ७६ विश्वामित्रउवाच ॥ मित्रंचमेब्रा
ह्मणस्यायमात्माप्रियश्चमेपूज्यतमश्चलोके ॥ तंभर्तुकामोहमिमांजिहीर्षेनृशंसानामीदृशानांनबिभ्ये ७७ ॥ श्वपचउवाच ॥ कामंनराजीवितंसंत्यजंतिनचाभ
क्ष्येक्वचित्कुर्वंतिबुद्धिम् ॥ सर्वान्कामान्प्राप्नुवंतीहविद्वन्प्रियस्वकामंसहितःक्षुधैव ७८ ॥ विश्वामित्रउवाच ॥ स्थानेभवेत्संयशःप्रेत्यभावेनिःसंशयःकर्मणांवैविना
शः ॥ अहंपुनर्व्रतनित्यःशमात्मामूलंरक्ष्यंभक्षयिष्याम्यभक्ष्यम् ७९ बुद्ध्यात्मकेव्यक्तमस्तीतिपुण्यंमोहात्मकेयत्रयथाश्वभक्ष्ये ॥ यद्यप्येतत्संशयात्माचरामिनाहं
भविष्यामियथात्वमेव ८० ॥ श्वपचउवाच ॥ गोपनीयमिदंदुःखमितिमेनिश्चितामतिः ॥ दुष्कृतोब्राह्मणःसन्यस्त्वामहमुपालभे ८१ ॥ विश्वामित्रउवाच ॥
पिबंत्येवोदकंगावोमंडूकेषुरुवत्स्वपि ॥ नतेऽधिकारोधर्मेऽस्तिमाभूरात्मप्रशंसकः ८२ ॥ श्वपचउवाच ॥ सुहृद्भूत्वानुशासेत्वांकृपाहित्वयिमेद्विज ॥ यदिदंश्रेय
आधत्स्वमालोभात्पातकंकृथाः ८३ ॥ विश्वामित्रउवाच ॥ सुहृन्मेत्वंसुखेप्सुश्चेदापदोमांसमुद्धर ॥ जानेऽहंधर्मतोऽऽत्मानंशौनीमुत्सृजजाघनीम् ८४
श्वपचउवाच ॥ नैवोत्सहेभवतोदातुमेतांनोपेक्षितुंह्रियमाणंस्वमन्नम् ॥ उभौस्यावःपापलोकावलिप्तौदाताचाहंब्राह्मणस्त्वंप्रतीच्छन् ८५ ॥ विश्वामित्रउवाच ॥
अद्याहमेतद्वृजिनंकर्मकृत्वाजीवंश्चरिष्यामिमहापवित्रम् ॥ सपूतात्माधर्ममेवाभिपत्स्येयदेतयोर्गुरुतद्वैब्रवीहि ८६ ॥ श्वपचउवाच ॥ आत्मैवसाक्षीकुलधर्मकृत्ये
त्वमेवजानासियदत्रदुष्कृतम् ॥ योह्याद्रियाद्भक्ष्यमितिश्वमांसंमन्येनतस्यास्तिविवर्जनीयम् ८७ ॥ विश्वामित्रउवाच ॥ उपादानेखादनेचास्तिदोषःकार्ये
त्यायेनित्यमत्रापवादः ॥ यस्मिन्नहिंसानानृतंवाच्यलेशोभक्ष्यक्रियायत्रनतद्गरीयः ८८

कर्तुंशक्तोऽस्मीतिभावः ८० इदंश्वजाघनीभक्षणजंदुःखंपापंगोपनीयं
गूहनीयंत्वयाक्रियमाणंनिरसनीयमितिमेबुद्धिर्निश्चिताऽस्ति ततोऽहंदुष्कृतःपापीयानप्यब्राह्मणोऽपित्वामुपालभेयःसोऽहंसन्नेकैववकारीअस्मि । सत्वमितिपाठेसत्वंप्रसिद्धोविश्वामित्रस्त्वांयद
ब्राह्मणोऽहमुपालभेऽतःदुष्कृतोऽस्मीतियोजना ८१ धर्मेधर्मानुशासने ८२ । ८३ । ८४ पापलोकौचतावलिप्तौचेतिसमासः प्रतीच्छन्प्रतिगृह्णन् ८५ । ८६ । ८७ कार्येत्यायेप्राणात्ययेऽभक्ष्य ॥१३॥
मपिभक्षणीयमितिभक्ष्याभक्ष्यविधेरपवादोऽस्ति तथाचसूत्रं । सर्वान्नानुमतिश्चप्राणात्ययेतद्दर्शनादिति । यत्राभक्ष्यक्रियाऽभक्ष्यतापादकंवाक्यंतच्छास्त्रंगरीयोनयतःयस्मिन्नभक्ष्यभक्षणे
हिंसानृतंचनइदमेवद्वयमधर्मस्यज्ञापकंकिंतर्हिभक्ष्याभक्ष्यशास्त्रमनर्थकंनेत्याह वाच्यलेशइतिभावप्रधानोनिर्देशः तत्रवाच्यत्वस्यनिंद्यत्वस्यलेशमात्रंनतुतद्धिंसानृतवदत्यंतंनिंद्यमित्यर्थः ८८

हेतुःप्राणपोषणेच्छाऽस्ति कारणंप्रमाणं भक्ष्येभक्षणे अभक्षणेइतिच्छेदः ८९ अतिपापंहिंसावदभक्ष्यंभक्षमाणस्यनदृष्टं पततीतिशब्दःशब्दशास्त्रस्याज्ञामात्रं परंतुपापहेतुर्मुख्योहिंसाख्योऽत्रनदृ
श्यतइतिभावः । अन्योन्यकार्याणिमैथुनानि पापमात्रेणकृतंपुण्यंहिनस्तिनाशयति तेनईषत्पापोत्पत्तिरस्तुनतुब्राह्मण्यादिधर्महानिरस्तीतिभावः ९० अस्थानतश्चांडालगृहात् हीनतश्चौर्यतः
कुत्सितात्अदित्सतःकदर्यात् अभिषंगादत्याग्रहात् श्वानंलभतेतेनापितेनैवदंडःसहितव्यःसोढव्यएव नतुदातुर्ममदोषोस्तीतिभावः ९१ । ९२ । ९३ । ९४ । ९५ । ९६ । ९७ । ९८ । ९९

श्वपचउवाच ॥ यद्येषहेतुस्तवखादनेस्यान्नतेवेदःकारणंनार्यधर्मः ॥ तस्माद्भक्ष्येऽभक्षणेवाद्विजेंद्रदोषंनपश्यामियथेदमत्र ८९ ॥ विश्वामित्रउवाच ॥ नैवाति
पापंभक्षमाणस्यदृष्टंसुरांतुपीत्वापततीतिशब्दः ॥ अन्योन्यकार्याणियथातथैवनपापमात्रेणकृतंहिनस्ति ९० ॥ श्वपचउवाच ॥ अस्थानतोहीनतःकुत्सिताद्वा
तद्विद्वांसंबाधतेसाधुवृत्तम् ॥ श्वानंपुनर्योलभतेऽभिषंगात्तेनापिदंडःसहितव्यएव ९१ ॥ भीष्मउवाच ॥ एवमुक्त्वानिववृतेमातंगःकौशिकंतदा ॥ विश्वामित्रो
जहारैवकृतबुद्धिःश्वजाघनीम् ९२ ततोजग्राहसश्वांगंजीवितार्थीमहामुनिः ॥ सदारस्तामुपाहृत्यवनेभोक्तुमियेषसः ९३ अथास्यबुद्धिरभवद्विधिनाहंश्वजाघ
नीम् ॥ भक्षयामियथाकामंपूर्वंसंतर्प्यदेवताः ९४ ततोऽग्निमुपसंहृत्यब्राह्मेणविधिनामुनिः ॥ ऐंद्राग्नेयेनविधिनाचरुंश्रपयतस्वयम् ९५ ततःसमारभत्कर्मदैवं
पित्र्यंचभारत ॥ आहूयदेवानिंद्रादीन्भागंभागंविधिक्रमात् ९६ एतस्मिन्नेवकालेतुप्रववर्षसवासवः ॥ संजीवयन्प्रजाःसर्वाजनयामासचौषधीः ९७ विश्वामि
त्रोऽपिभगवांस्तपसादग्धकिल्बिषः ॥ कालेनमहतासिद्धिमवापपरमाद्भुताम् ९८ ससंहृत्यचतत्कर्मअनास्वाद्यचतद्धविः ॥ तोषयामासदेवांश्चपितॄंश्चद्विजस
त्तमः ९९ एवंविद्वानदीनात्माव्यसनस्थोजिजीविषुः ॥ सर्वोपायैरुपायज्ञोदीनमात्मानमुद्धरेत् १०० एतांबुद्धिंसमास्थायजीवितव्यंसदाभवेत् ॥ जीवन्पुण्यम
वाप्नोतिपुरुषोभद्रमश्नुते १०१ तस्मात्कौंतेयविदुषाधर्माधर्मविनिश्चये ॥ बुद्धिमास्थायलोकेऽस्मिन्वर्तितव्यंकृतात्मना १०२ ॥ इतिश्रीमहाभारतेशांतिपर्व
णिआपद्धर्मप०विश्वामित्रश्वपचसंवादेएकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ ॥ ॥ युधिष्ठिरउवाच ॥ यदिघोरंसमुद्दिष्टमश्रद्धेयमिवानृतम् ॥ अ
स्तिस्विद्दस्युमर्यादायामहंपरिवर्जये १ संमुह्यामिविषीदामिधर्मोमेशिथिलीकृतः ॥ उद्यमंनाधिगच्छामिकदाचित्परिसांत्वयन् २ ॥ भीष्मउवाच ॥ नैतच्छु
त्वागमादेवतवधर्मानुशासनम् ॥ प्रज्ञासमवहारोऽयंकविभिःसंभृतंमधु ३ बह्व्यःप्रतिविधातव्याःप्रज्ञाराज्ञाततस्ततः ॥ नैकशाखेनधर्मेणयात्रैषासंप्रवर्तते ४

१०० । १०१ । १०२ ॥ इतिशां०आ०नी०भा०एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ ॥ यदिमहद्भिरपिघोरंकर्मकर्तव्यत्वेनसमुद्दिष्टंयदश्रद्धेयमिवानृतमिवचतर्हिदस्यूनामकार्यका
रिणामपिमर्यादाकाचिदस्तिइतोऽधिकंदस्यूनांनकर्तव्यमिति १ अस्मिन्श्वाकृत्येकर्तव्येसंमोहादिकंप्राप्तोऽप्यात्मानंसांत्वयन्नप्युद्यममध्यवसायंनाधिगच्छामि एतान्धर्मान्कर्तुमहंनशक्नोमीत्यर्थः
२ एतदागमादेवश्रुत्वातवधर्मानुशासनंमयाकृतमितिनास्तिकिंतुप्रज्ञायाःसमवहारःनिग्राकल्पितेयमित्यर्थः । एतदग्निहोत्रादिवद्विधेयंन अपितुकविभिरकरणेमहांतंदोषंपश्यद्भिःकल्पितमि
तिभावः ३ ततस्ततः कोकिलवराहवृकसिंहादिभ्यःशिक्षित्वायत्रयाप्रज्ञास्त्वनुष्ठेयाप्रुरुषातवबुद्धिःऐकशाखेनैकदेशिनाधर्मेणोपलक्षितानसंप्रवर्ततेताःप्रज्ञाःबह्व्यःप्रतिविधातव्याःसंति ४

धर्मादिर्ज्ञेयःतत्तत्रविषयेमेममवचोविद्धि ५ प्रतिविधातव्यश्चिकित्सनीयः ६ यतःपुरस्तादध्ययनकालेऽनुपाहृताशिक्षिताऽतोदुर्बलस्यैकदेशाध्ययनवतःप्रज्ञाकुतः नकुतश्चिदित्यर्थः ७ द्वैध मेकस्यैवकर्मणःकचित्कालेधर्मत्वंकचिदधर्मत्वमितिद्विप्रकारत्वं तस्मिन्प्राप्तेतदनभिज्ञःसंशयंसंकटंप्राप्नोति अहिंसायाधर्मत्वेऽपिचोररक्षयापापंभवतितद्वदिदंज्ञेयं ८ पार्श्वतःपश्चात् करणंक रणीयं विद्धंभित्वानिश्चित्याग्रिमवर्षेप्रजाभ्यःषड्भागस्यार्धमंशत्रयंवाग्रहीष्यामीत्यभिसंधाय प्रकारयेदापत्कालेतमेवषड्भागंसार्धगुणंसपादगुणंवाप्रकर्षेणगृह्णीयात्तत्कुर्वन्मूढदृष्ट्याऽधर्मीभवति नतुप्राज्ञदृष्टचेत्यर्थः ९ सतांमतमितिशेषः १० मुष्णंतिधर्मंशास्त्रविरुद्धमर्थंशास्त्रंनादर्तव्यमितिवदंति वैषम्यमप्रामाण्यमधर्मत्वंवा ११ शास्त्रचोरनिंदाप्रसंगात्तदुपजीविनोऽपिनिंदति आजि जीविषवइतिसार्धैश्चतुर्भिः १२ । १३ । १४ । १५ दंभिनंनिंदत्यर्धेन व्याजेनेति कृतइतिशेषः वेतव १६ प्रकृतमाह नेति वाचाकेवलया बुद्धचातर्केणवाकेवलेन धर्मवचनंधर्मनिश्चयोनास्त्यपितु

बुद्धिसंजननोधर्मआचारश्चसतांसदा ॥ ज्ञेयोभवतिकौरव्यसदातद्विद्धिमेवचः ५ बुद्धिश्रेष्ठाहिराजानश्चरंतिविजयैषिणः ॥ धर्मःप्रतिविधातव्योबुद्धयाराज्ञात स्ततः ६ नैकशाखेनधर्मेणराज्ञोधर्मोविधीयते ॥ दुर्बलस्यकुतःप्रज्ञापुरस्तादनुपाहृता ७ अद्वैधज्ञःपथिद्वैधेसंशयंप्राप्तुमर्हति ॥ बुद्धिद्वैधंवेदितव्यंपुरस्ता द्भवभारत ८ पार्श्वतःकरणंप्राज्ञोविद्धंभित्वाप्रकारयेत् ॥ जनस्तच्चरितंधर्मंविजानात्यन्यथान्यथा ९ अमिथ्याज्ञानिनःकेचिन्मिथ्याविज्ञानिनःपरे ॥ तद्वै थायथंबुद्ध्वाज्ञानमाददतेसताम् १० परिमुष्णंतिशास्त्राणिधर्मस्यपरिपंथिनः ॥ वैषम्यमर्थविद्यानांनिरर्थाःख्यापयंतिते ११ आजिजीविषवोविद्यांयशःकामाः समंततः ॥ तेसर्वेनृपपापिष्ठाधर्मस्यपरिपंथिनः १२ अपक्कमतयोमंदानजानंतियथातथम् ॥ यथाह्यशास्त्रकुशलाःसर्वत्रायुक्तिनिष्ठिताः १३ परिमुष्णंतिशा स्त्राणिशास्त्रदोषानुदर्शिनः ॥ विज्ञातमर्थविद्यानांसम्यगितिवर्तते १४ निंदयापरविद्यानांस्वविद्यांख्यापयंतिच ॥ वागस्त्रावाक्छुरीभूतादुग्धविद्याफलाइव १५ तान्विद्यावणिजोविद्धिराक्षसानिवभारत ॥ व्याजेनसद्भिर्विहितोधर्मस्तेपरिहास्यति १६ नधर्मवचनंवाचानैवबुद्धचेतिनःश्रुतम् ॥ इतिबार्हस्पतंज्ञानं प्रोवाचमघवास्वयम् १७ नत्वेववचनंकिंचिदनिमित्तादिहोच्यते ॥ सुविनीतेनशास्त्रेणनव्यवस्यंत्यथापरे १८ लोकयात्रामिहैकेतुधर्मंप्राहुर्मनीषिणः ॥ समु द्दिष्टंसतांधर्मंस्वयमूहेतपंडितः १९ अमर्षाच्छास्त्रसंमोहादविज्ञानाच्चभारत ॥ शास्त्रंप्राज्ञस्यवदतःसमूहेयात्यदर्शनम् २०

समुच्चिताभ्यामुभाभ्यांधर्मनिर्णयइत्यर्थः १७ नत्विति आततायीब्राह्मणोऽपिहंतव्यइत्यादिवचनंकामतोब्राह्मणंहत्वाप्रायश्चित्तंनविद्यतइत्यनेनविरुद्धमपिनिष्कारणंनप्रवर्तते । कोहितद्वेदय द्यमुष्मिँल्लोकेऽस्तिवानवेतिवचनंयथादिक्प्रतीकाशान्करोतीत्यतीकाशविधिपरंनतुपरलोकफलेसंदेहोपन्यासपरं । एवमाततायिब्राह्मणवधवाक्यमपिअततायिसर्वथाहंतव्यइत्येवंपरंनतुब्राह्म णरूपोऽप्याततायीहंतव्यइत्येवंपरमितिकैश्चिदुच्यते अपरेतुसुविनीतेनयुक्तिमताऽपिशास्त्रेणशिक्षितं आततायिवधंनव्यवस्यंतिकर्तव्यत्वेननिश्चिन्वंतिअहिंसाशास्त्रप्राबल्यात् । आरम्भ वधार्थमुद्यताद्गुरोरिवाततायिनोऽप्यात्मानंरक्षेन्नगामिवतंहन्यादितितेषांभावः १८ इहलोकेतुएकेमुख्यास्त्वाचार्याः लोकयात्रांतन्निर्वाहमेवधर्मंप्राहुः । साचचोरादीनांवधमंतरेणनसंभवती त्यवश्यंहिंसाऽपिकर्तव्येतितेषामाशयः । तथाहिकल्पकाराःश्रुतिमुदाहरंति अन्नादेर्भ्रूणहामार्ष्टिअनेनाअभिशंसति स्तेनःप्रमुक्तोराजनियाचन्नृतसंगरे पुरोयाजश्चशिष्यश्चस्त्रियश्चभर्तुर्व्यभिचा रिणीति मार्ष्टिपापमितिशेषः एवंसत्यपिमतभेदेयुक्त्यैवधर्ममूहेतेत्याह समिति १९ तस्मादमर्षादीँस्त्यक्त्वासमूहेसमायांशास्त्रंवदेदित्याशयेनाहामर्षादिति २०

॥१४॥

अ।गतागमयाबुद्धयाश्रुत्युपगृहीतेनतर्केणसहितंयद्वचनंतेनप्रशस्यतेशास्त्रंनान्यतरेण । अन्यस्तुज्ञानहेतुत्वात् अज्ञातज्ञापकतयावचनंतर्केणहीनंशब्दमेवसाधुमन्यतेकुतःअज्ञानात् २१ अन्यः पुनःअनयायुक्त्याइदंशास्त्रंहतंदूषितमितिहेतोरपार्थकंव्यर्थमितिमन्यतेतदप्यज्ञानादेव । तस्मात्तर्केणशास्त्रस्यशास्त्रेणतर्कस्यवाबाधमकृत्वायदुभयसंमतंतदेवानुष्ठेयमित्युशनसोमतंपूर्वोक्तेनबार्ह स्पत्येनज्ञानेनैक्यंगतमितिदर्शितं २२ किंचअपदिश्यंदिशोर्मध्येस्थितंकोविद्वयस्पर्शिज्ञानंसंशयरूपंतद्यथानास्तितथैवव्यर्थमित्यर्थः । अतस्तंसंशयंछिन्नमूलेनमूलोच्छेदेनयथास्यात्तथासन्नोद यितुंदूरीकर्तुमर्हसि निःसंशयंयत्ज्ञानंतदेवाश्रयस्वेत्यर्थः २३ योवामवान्ममेदंनीतिवाक्यंनउपाश्नुतेनांगीकरोतितदनव्यवहितमयुक्तं । व्यवहितपदंनशब्देनसमस्तंचेन्नव्यवहितशब्दःस न्निकृष्टवचनस्तदभावोऽनव्यवहितमितियोगोऽत्रज्ञेयः । कुतोयुक्तमतआह उग्रायेति यतःउग्रायहिंस्रकर्मायमेवत्वंसृष्टोऽसितत्त्वंनसमीक्षसेऽतोममवचनंतवचेतसिनकिंचिल्लग्नमित्यर्थः २४

आगतागमयाबुद्धयावचनेनप्रशस्यते ॥ अज्ञानाज्ज्ञानहेतुत्वाद्वचनंसाधुमन्यते २१ अनयाहतमेवेदमितिशास्त्रमपार्थकम् ॥ दैतेयानुशनाप्राहसंशयच्छेदनं पुरा २२ ज्ञानमप्यपदिश्यंहियथानास्तितथैवतत् ॥ तंतथाछिन्नमूलेनसन्नोदयितुमर्हसि २३ अनव्यवहितंयोवानेदंवाक्यमुपाश्नुते ॥ उग्रायैवहिसृष्टोऽसि कर्मणेनत्वमीक्षसे २४ अंगमामन्ववेक्षस्वराजन्यायबुभूषते ॥ यथाप्रमुच्यतेत्वन्योयदर्थंनप्रमोदते २५ अजोऽश्वःक्षत्रमित्येतत्सदृशंब्रह्मणाकृतम् ॥ तस्माद भीक्ष्णंभूतानांयात्राकाचित्प्रसिद्धयति २६ यस्त्ववध्यवधेदोषःसवध्यस्यावधेस्मृतः ॥ साचैवखलुमर्यादायामयंपरिवर्जयेत् २७ तस्मात्तीक्ष्णःप्रजाराजा स्वधर्मेस्थापयेत्ततः ॥ अन्योन्यंभक्षयंतोहिप्रचरेयुर्वृकाइव २८ यस्यदस्युगणाराष्ट्रेध्वांक्षामत्स्यान्जलादिव ॥ विहरंतिपरस्वानिसवैक्षत्रियपांसनः २९ कुली नान्सचिवान्कृत्वावेदविद्यासमन्वितान् ॥ प्रशाधिपृथिवींराजन्प्रजाधर्मेणपालयन् ३० विहीनंकर्मणान्यायंयःप्रगृह्णातिभूमिपः ॥ उपायस्याविशेषज्ञंतद्वै क्षत्रंनपुंसकम् ३१ नैवोग्रंनैवचानुग्रंधर्मेणेहप्रशस्यते ॥ उभयंनव्यतिक्रामेदुग्रोभूत्वामृदुर्भव ३२ कष्टःक्षत्रियधर्मोयंसौहृदंत्वयिमेस्थितम् ॥ उग्रकर्मणिसृष्टोऽ सितस्माद्राज्यंप्रशाधिवै ३३ अशिष्टनिग्रहोनित्यंशिष्टस्यपरिपालनम् ॥ एवंशुक्रोऽब्रवीद्धीमानापत्सुभरतर्षभ ३४ ॥ युधिष्ठिरउवाच ॥ ॥ अस्तिचे दिहमर्यादायामन्योनाभिलंघयेत् ॥ पृच्छामित्वांसतांश्रेष्ठतन्मेब्रूहिपितामह ३५ ॥ ॥ भीष्मउवाच ॥ ॥ ब्राह्मणानेवसेवेतविद्यावृद्धांस्तपस्विनः ॥ श्रुतचारित्रवृत्ताढ्यान्पवित्रंह्येतदुत्तमम् ३६ यादेवतासुवृत्तिस्तेसाऽस्तुविप्रेषुनित्यदा ॥ क्रुद्धैर्हिविप्रैःकर्माणिकृतानिबहुधानृप ३७

हेअंगमामन्ववेक्षस्व बुभूषतेऐश्वर्यलिप्सवे राजन्यायराजसमूहाय तदर्थंयथात्वंप्रमुच्यते तथाकुर्वाणंमामन्ववेक्षस्वेत्यध्याहृत्वयोज्यं । अन्योलोकोयदर्थंवमर्थंनप्रमोदतेनानुमोदते हिंस्रोऽयमि तिमांनिंदतोऽपिमूलोकार्थिनोराजानःस्वहितमजानानाअपिमयास्वलोकंप्रापिताउपकारायैवनस्वार्थाय । एवंत्वमप्युग्रेणकर्मणाप्रजास्तद्धितायैवशाधीतिभावः २५ अजइति यथाऽजोयज्ञार्थंनी यतेतद्धितायैवमश्वक्षत्रियावपिसंग्रामार्थंनीयेतेतद्धितायैव । 'हतोवाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीम्'इत्युक्तेः । तथायज्ञेहन्यमानस्यपशोरपिस्वर्गप्राप्तिर्दृष्टा । 'पशुर्वैनीयमानः समृत्युंप्राप श्यत्सदेवान्नान्वकामयततुंदेवाअब्रुवन्नेहिस्वर्गंवैत्वालोकंगमयिष्यामइति' २६ एवंसंमुद्यामीत्यादेरुत्तरमुक्त्वाऽस्तिस्विदिहस्वमर्यादाइत्यस्योत्तरमाह यस्त्विति २७।२८।२९।३० अन्यायंन्यायव र्जितंयथास्यात्तथाप्रगृह्णातिषड्भागमादवेकर्मणापालनात्मकेनविहीनंसन्नयः ३१।३२।३३।३४।३५ ब्राह्मणादर्पाणिवदंडस्यमर्यादा ब्राह्मणस्तुनैवदंड्योऽपितुपूज्यएवेत्याह ब्राह्मणानेवेति ३६ । ३७

३८ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेद्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ॥ ७ ॥ ॥ पितामहेति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९

प्रीत्यायशोभवेन्मुख्यमप्रीत्यापरमंभयम् ॥ प्रीत्याह्यस्तवद्विप्राःकुद्धाश्चैवविषंयथा ३८ ॥ इतिश्रीमहाभारतेशांति०आप०द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ युधिष्ठिरउवाच ॥ पितामहमहाप्राज्ञसर्वशास्त्रविशारद ॥ शरणंपाल्यमानस्ययोधर्मस्तंब्रवीहिमे १ ॥ भीष्मउवाच ॥ महान्धर्मोमहाराज शरणागतपालने ॥ अर्हःप्रष्टुंभवांश्चैवप्रश्नंभरतसत्तम २ शिबिप्रभृतयोराजन्राजानःशरणागतान् ॥ परिपाल्यमहात्मानःसंसिद्धिंपरमांगताः ३ श्रूयतेचकपोतेनशत्रुःशरणमागतः ॥ पूजितश्चयथान्यायंस्वैश्चमांसैर्निमंत्रितः ४ ॥ युधिष्ठिरउवाच ॥ कथंकपोतेनपुराशत्रुःशरणमागतः ॥ स्वमांसंभोजितःकांचगतिंलेभेसभारत ५ ॥ भीष्मउवाच ॥ शृणुराजन्कथांदिव्यांसर्वपापप्रणाशिनीम् ॥ नृपतेर्मुचुकुंदस्यकथितांभार्गवेणवै ६ इममर्थंपुरापार्थमुचुकुंदोनराधिपः ॥ भार्गवंपरिपप्रच्छप्रणतःपुरुषर्षभ ७ तस्मैशुश्रूषमाणायभार्गवोऽकथयत्कथाम् ॥ इमांयथाकपोतेनसिद्धिःप्राप्तानराधिप ८ ॥ मुनिरुवाच ॥ धर्मनिश्चयसंयुक्तांकामार्थसहितांकथाम् ॥ शृणुष्वावहितोराजन्गदतोमेमहाभुज ९ कश्चित्क्षुद्रसमाचारःपृथिव्यांकालसंमितः ॥ विचचारमहारण्येघोरःशकुनिलुब्धकः १० काकोलइवकृष्णांगोरक्ताक्षःकालसंमितः ॥ दीर्घजंघोह्रस्वपादोमहावक्त्रोमहाहनुः ११ नैवतस्यसुहृत्कश्चिन्नसंबंधीनबांधवाः ॥ सहितैःसंपरित्यक्तस्तेनरौद्रेणकर्मणा १२ नरःपापसमाचारस्त्यक्तव्योदूरतोबुधैः ॥ आत्मानंयोऽभिसंधत्तेसोऽन्यस्यस्यात्कथंहितः १३ येनृशंसादुरात्मानःप्राणिप्राणहरानराः ॥ उद्वेजनीयाभूतानांव्यालाइवभवंतिते १४ सवैक्षारकमादायद्विजान्हत्वावनेसदा ॥ चकारविक्रयंतेषांपतंगानांजनाधिप १५ एवंतुवर्तमानस्यतस्यवृत्तिंदुरात्मनः ॥ अगमत्सुमहान्कालोनचाधर्ममबुध्यत १६ तस्यभार्यासहायस्यरममाणस्यशाश्वतम् ॥ दैवयोगविमूढस्यनान्यावृत्तिररोचत १७ ततःकदाचित्तस्याथवनस्थस्यसमंततः ॥ पातयन्निवृक्षांस्तान्सुमहान्वातसंभ्रमः १८ मेघसंकुलमाकाशंविद्युन्मंडलमंडितम् ॥ संछन्नस्तुमुहूर्तेननौसार्थैरिवसागरः १९ वारिधारासमूहेनसंप्रविष्टःशतक्रतुः ॥ क्षणेनपूरयामाससलिलेनवसुंधराम् २० ततोधाराकुलेकालेसंभ्रमन्नष्टचेतनः ॥ शीतार्तस्तद्वनंसर्वमाकुलेनांतरात्मना २१ नैवनिम्नंस्थलंवाऽपिसोऽविंदतविहंगहा ॥ पूरितोहिजलौघेनतस्यमार्गोवनस्यतु २२ पक्षिणोवर्षवेगेनहतालीनास्तदाऽभवन् ॥ मृगसिंहवराहाश्चस्थलमाश्रित्यशेरते २३ महतावातवर्षेणत्रासितास्तेवनौकसः ॥ भयार्ताश्चक्षुधार्ताश्चबभ्रमुःसहितावने २४ सतुशीतहतैर्गात्रैर्जगामनतस्थिवान् ॥ ददर्शपतितांभूमौकपोतींशीतविह्वलाम् २५ दृष्ट्वाऽर्तोपिहिपापात्मासतांपंजरकेऽक्षिपत् ॥ स्वयंदुःखाभिभूतोऽपिदुःखमेवाकरोत्परे २६ पापात्मापापकारित्वात्पापमेवचकारसः ॥ सोऽपश्यत्तरुषंडेषुमेघनीलंवनस्पतिम् २७ ॥१५॥

१० काकोलःकाकविशेषः ११ । १२ अभिसंधत्तेविषोद्वंधनादिनाहंतुमितिशेषः १३ । १४ क्षारकंजालं १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेत्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ ७ ॥ ॥ अथेति १ । २

सेव्यमानंविहंगौघैश्छायावासफलार्थिभिः ॥ धात्रापरोपकारायससाधुरिवनिर्मितः २८ अथाभवत्क्षणेनैवियद्विमलतारकम् ॥ महत्सरइवोत्फुल्लंकुमुदच्छुरितोदकम् २९ ताराढ्यंकुमुदाकारमाकाशंनिर्मलंबहु ॥ घनैर्मुक्तंनभोदृष्ट्वालुब्धकःशीतविह्वलः ३० दिशोविलोकयामासविगाढांप्रेक्ष्यशर्वरीम् ॥ दूरतोमेनिवेशश्चअस्माद्देशादितिप्रभो ३१ कृतबुद्धिर्द्रुमेतस्मिन्वस्तुंतांरजनींततः ॥ सांजलिःप्रणतिंकृत्वावाक्यमाहवनस्पतिम् ३२ शरणंयामियान्यस्मिन्दैवतानिवनस्पतौ ॥ साशिलायांशिरःकृत्वापर्णान्यास्तीर्यभूतले ३३ दुःखेनमहताऽऽविष्टस्ततःसुष्वापपक्षिहा ३४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिकपोतलुब्धकसंवादोपक्रमेत्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ भीष्मउवाच ॥ अथवृक्षस्यशाखायांविहंगःससुहृज्जनः ॥ दीर्घकालोषितोराजंस्तत्रचित्रतनूरुहः १ तस्यकल्पगताभार्याचरितुंनाभ्यवर्तत ॥ प्राप्तांचरजनींदृष्ट्वासपक्षीपर्यतप्यत २ वातवर्षमहच्चासीन्नचागच्छतिमेप्रिया ॥ किंनुतत्कारणंयेनसाऽद्यापिननिवर्तते ३ अपिस्वस्तिभवेत्तस्याःप्रियायाममकानने ॥ तयाविरहितंहीदंशून्यमद्यगृहंमम ४ पुत्रपौत्रवधूभृत्यैराकीर्णमपिसर्वतः ॥ भार्याहीनंगृहस्थस्यशून्यमेवगृहंभवेत् ५ नगृहंगृहमित्याहुर्गृहिणीगृहमुच्यते ॥ गृहंतुगृहिणीहीनमरण्यसदृशंमतम् ६ यदिसारक्तनेत्रांताचित्रांगीमधुरस्वरा ॥ अद्यनायातिमेकांतानकार्यंजीवितेनमे ७ नभुंक्तेमय्यभुक्तेयानास्नातेस्नातिसुव्रता ॥ नातिष्ठत्युपतिष्ठेतशेतेचशयितेमयि ८ हृष्टेभवतिसाहृष्टादुःखितेमयिदुःखिता ॥ प्रोषितेदीनवदनाक्रुद्धेचप्रियवादिनी ९ पतिव्रतापतिगतिःपतिप्रियहितेरता ॥ यस्यस्यात्तादृशीभार्याधन्यःसपुरुषोभुवि १० साहिश्रांतंक्षुधार्तंचजानीतेमांतपस्विनी ॥ अनुरक्तास्थिराचैवभक्तास्निग्धायशस्विनी ११ वृक्षमूलेऽपिदयितायस्यतिष्ठतितद्गृहम् ॥ प्रासादोऽपितयाहीनःकांतारइतिनिश्चितम् १२ धर्मार्थकामकालेषुभार्यापुंसःसहायिनी ॥ विदेशगमनेचास्यसैवविश्वासकारिका १३ भार्याहिपरमोह्यर्थःपुरुषस्येहपठ्यते ॥ असहायस्यलोकेऽस्मिँल्लोकयात्रासहायिनी १४ तथारोगाभिभूतस्यनित्यंकृच्छ्रगतस्यच ॥ नास्तिभार्यासमंकिंचिन्नरस्यार्तस्यभेषजम् १५ नास्तिभार्यासमोबंधुर्नास्तिभार्यासमागतिः ॥ नास्तिभार्यासमोलोकेसहायोधर्मसंग्रहे १६ यस्यभार्यागृहेनास्तिसाध्वीचप्रियवादिनी ॥ अरण्यंतेनगंतव्यंयथाऽरण्यंतथागृहम् १७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिभार्याप्रशंसायांचतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ भीष्मउवाच ॥ एवंविलपतस्तस्यश्रुत्वातुकरुणंवचः ॥ गृहीताशकुनिघ्नेनकपोतीवाक्यमब्रवीत् १

३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ ॥ इति शांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ ७ ॥ ॥ एवामिति १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भा० भा० पंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ सपत्न्या

॥ कपोत्युवाच ॥ अहोऽतीवसुभाग्याहंयस्यामेदयितःपतिः ॥ असतोवासतोवाऽपिगुणानेवंप्रभाषते २ नसास्त्री ह्यभिमंतव्यायस्यांभर्तानतुष्यति ॥ तुष्टेभ
र्तरिनारीणांतुष्टाःस्युःसर्वदेवताः ३ अग्निसाक्षिकमित्येवभर्ताविदैवतंपरम् ॥ दावाग्निनेवनिर्दग्धासपुष्पस्तबकालता ४ भस्मीभवतिसानारीयस्याभर्तानतु
ष्यति ॥ इतिसंचिंत्यदुःखार्ताभर्तारंदुःखितंतदा ५ कपोतीलुब्धकेनापिगृहीतावाक्यमब्रवीत् ॥ हंतवक्ष्यामितेश्रेयःश्रुत्वातुकुरुतत्तथा ६ शरणागतसंत्राता
भवकांतविशेषतः ॥ एषशाकुनिकःशेतेतववासंसमाश्रितः ७ शीतार्तश्चक्षुधार्तश्चपूजामस्मैसमाचर ॥ योहिकश्चिद्द्विजंहन्यात्गांचलोकस्यमातरम् ८ शर
णागतंचयोहन्यात्तुल्यंतेषांचपातकम् ॥ अस्माकंविहितावृत्तिःकापोतीज्ञातिधर्मतः ९ सान्याय्यात्मवतानित्यंत्वद्विधेनानुवर्तितुम् ॥ यस्तुधर्मंयथाशक्ति
गृहस्थोह्यनुवर्तते १० सप्रेत्यलभतेलोकानक्षयानितिशुश्रुम ॥ सत्वंसंतानवानद्यपुत्रवानसिचद्विज ११ तत्स्वदेहेदयांत्यक्त्वाधर्मार्थौपरिगृह्यच ॥ पूजामस्मै
प्रयुंक्ष्वत्वंप्रीयेतास्यमनोयथा १२ शरीरेमाचसंतापंकुर्वीथास्त्वंविहंगम ॥ शरीरयात्राकृत्यर्थमन्यान्दारानुपैष्यसि १३ इतिसाशकुनीवाक्यंपंजरस्थातपस्वि
नी ॥ अतिदुःखान्वितप्रोक्त्वाभर्तारंसमुदैक्षत १४ ॥ इतिश्रीमहाभारते शांतिपर्वणिआपद्धर्मपर्वणिकपोतंप्रतिकपोतीवाक्ये पंचचत्वारिंशदधिकशतत
मोऽध्यायः ॥ १४५ ॥ ॥ छ ॥ ॥ भीष्मउवाच ॥ सपत्न्यावचनंश्रुत्वाधर्मयुक्तिसमन्वितम् ॥ हर्षेणमहतायुक्तोवाक्यंव्याकुललोचनः १ तंवैशाकुनिकं
दृष्ट्वाविधिदृष्टेनकर्मणा ॥ सपक्षीपूजयामासयत्नात्तंपक्षिजीविनम् २ उवाचस्वागतंतेऽद्यब्रूहिकिंकरवाणिते ॥ संतापश्चनकर्तव्यःस्वगृहेवर्ततेभवान् ३ तद्ब्रवी
तुभवान्क्षिप्रंकिंकरोमिकिमिच्छसि ॥ प्रणयेनब्रवीमित्वांत्वंहिनःशरणागतः ४ अरावप्युचितंकार्यमातिथ्यंगृहमागते ॥ छेत्तुमप्यागतेछायांनोपसंहरतेद्रुमः
५ शरणागतस्यकर्तव्यमातिथ्यंहिप्रयत्नतः ॥ पंचयज्ञप्रवृत्तेनगृहस्थेनविशेषतः ६ पंचयज्ञांस्तुयोमोहान्नकरोतिगृहाश्रमे ॥ तस्यनायंनचपरोलोकोभवति
धर्मतः ७ तद्ब्रूहिमांसुविश्रब्धोयत्त्वंवाचावदिष्यसि ॥ तत्करिष्याम्यहंसर्वंमात्वंशोकेमनःकृथाः ८ तस्यतद्वचनंश्रुत्वाशकुनेर्लुब्धकोऽब्रवीत् ॥ बाधतेखलुमे
शीतंसंत्राणंहिविधीयताम् ९ एवमुक्तस्ततःपक्षीपर्णान्यास्तीर्यभूतले ॥ यथाशक्त्याहिपर्णेनज्वलनार्थंद्रुतंययौ १० सगत्वांगारकर्मांतंगृहीत्वाग्निमथागमत् ॥
ततःशुष्केषुपर्णेषुपावकंसोप्यदीपयत् ११ ससंदीप्तंमहत्कृत्वातमाहशरणागतम् ॥ प्रतापयस्वविश्रब्धःस्वगात्राण्यकुतोभयः १२ सतथोक्तस्तथेत्युक्त्वालुब्धो
गात्राण्यतापयत् ॥ अग्निप्रत्यागतप्राणस्ततःप्राहविहंगमम् १३ हर्षेणमहताऽऽविष्टोवाक्यंव्याकुललोचनः ॥ तथेमंशकुनिंदृष्ट्वाविधिदृष्टेनकर्मणा १४

वचनमित्यध्यायत्रयंमायमस्पष्टार्थं १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० अंगारकर्मांतंकार्यारगृहसमीपम् ११ । १२ । १३ । १४

१५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ २६ ॥ इतिशांतिपर्वणिनीलकंठीयेभारतभावदीपे षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ ततइति १

दत्तमाहारमिच्छामित्वयाक्षुद्बाधतेहिमां ॥ सतद्वचःप्रतिश्रुत्यवाक्यमाहविहंगमः १५ नमेऽस्तिविभवोयेननाशयेयंक्षुधांतव ॥ उत्पन्नेनहिजीवामोवयंनित्यंव
नौकसः १६ संचयोनास्तिचास्माकंमुनीनामिवभोजने ॥ इत्युक्त्वातंतदातत्रविवर्णवदनोऽभवत् १७ कथंनुखलुकर्तव्यमितिचिंतापरस्तदा ॥ बभूवभरत
श्रेष्ठगर्हयन्वृत्तिमात्मनः १८ मुहूर्ताल्लब्धसंज्ञस्तुसपक्षीपक्षिघातिनम् ॥ उवाचतर्पयिष्येत्वांमुहूर्तंप्रतिपालय १९ इत्युक्त्वाशुष्कपर्णैस्तुसमुज्ज्वाल्यहुताश
नम् ॥ हर्षेणमहताऽविष्टःसपक्षीवाक्यमब्रवीत् २० ऋषीणांदेवतानांचपितृणांचमहात्मनाम् ॥ श्रुतःपूर्वंमयाधर्मोमहानतिथिपूजने २१ कुरुष्वानुग्रहंसौम्य
सत्यमेतद्ब्रवीमिते ॥ निश्चिताखलुमेबुद्धिरतिथिप्रतिपूजने २२ ततःकृतप्रतिज्ञोवैसपक्षीप्रहसन्निव ॥ तमग्निंत्रिःपरिक्रम्यप्रविवेशमहामतिः २३ अग्निमध्ये
प्रविष्टंतुलुब्धोदृष्ट्वातुपक्षिणम् ॥ चिंतयामासमनसाकिमिदंवैमयाकृतम् २४ अहोममनृशंसस्यगर्हितस्यस्वकर्मणा ॥ अधर्मःसुमहान्घोरोभविष्यतिनसंशयः
२५ एवंबहुविधंभूरिविललापसलुब्धकः ॥ गर्हयन्स्वानिकर्माणिद्विजंदृष्ट्वातथाऽगतम् २६ ॥ इतिश्रीमहाभारतेशांति०आपद्धर्मपर्वणिकपोतलुब्धकसंवादे
षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ भीष्मउवाच ॥ ततःसलुब्धकःपश्यन्क्षुधयाऽपिपरिप्लुतः ॥ कपोतमग्निपतितंवाक्यंपुनरुवाचह
१ किमीदृशंनृशंसेनमयाकृतमबुद्धिना ॥ भविष्यतिहिमेनित्यंपातकंकृतजीविनः ॥ सविनिंदंस्तथाऽऽत्मानंपुनःपुनरुवाचह २ अविश्वास्यःसुदुर्बुद्धिःसदानि
कृतिनिश्चयः ॥ शुभंकर्मपरित्यज्यसोऽहंशकुनिलुब्धकः ३ नृशंसस्यममाद्यायंप्रत्यादेशोनसंशयः ॥ दत्तःस्वमांसंदहताकपोतेनमहात्मना ४ सोऽहंत्यक्ष्येप्रि
यान्प्राणान्पुत्रान्दारांस्तथैवच ॥ उपदिष्टोहिमेधर्मःकपोतेनमहात्मना ५ अद्यप्रभृतिदेहंस्वंसर्वभोगैर्विवर्जितम् ॥ यथास्वल्पंसरोग्रीष्मेशोषयिष्याम्य
हंतथा ६ क्षुत्पिपासातपसहःकृशोधमनिसंततः ॥ उपवासैर्बहुविधैश्चरिष्येपारलौकिकम् ७ अहोदेहप्रदानेनदर्शिताऽतिथिपूजना ॥ तस्माद्धर्मंचरिष्यामि
धर्मोहिपरमागतिः ८ दृष्टोधर्मोहिधर्मिष्ठेयादृशोविहगोत्तमे ॥ एवमुक्त्वाविनिश्चित्यरौद्रकर्मासलुब्धकः ९ महाप्रस्थानमाश्रित्यप्रययौसंशितव्रतः १० ततो
यष्टिंशलाकांचक्षारकंपंजरंतथा ॥ तांचबद्धांकपोतींसप्रमुच्यविससर्जह ११ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिलुब्धकोपरतौ सप्तचत्वारिंशदधिक
शततमोध्यायः ॥ १४७ ॥ ॥ भीष्मउवाच ॥ ततोगतेशाकुनिकेकपोतीप्राहदुःखिता ॥ संस्मृत्यसाचभर्तारंरुदतीशोककर्शिता १ नाहंतेविप्रियंका
न्तकदाचिदपिसंस्मरे ॥ सर्वाऽपिविधवानारीबहुपुत्राऽपिशोचते २ शोच्याभवतिबंधूनांपतिहीनातपस्विनी ॥ लालिताऽहंत्वयानित्यंबहुमानाच्चपूजिता ३

२ प्रत्यादेशोधिक्कारपूर्वकउपदेशः ३ । ४ । ५ । ६ । ७ । ८ । ९ यष्टिंदंडं यष्टिशलाकमितिपाठेपक्षिसंश्लेषार्थंचिक्कणद्रव्यलेपितंदीर्घदंडंयथेष्टंवर्धयितुंशक्यं षट्चाशलाकाभिःसंचितंपंजरंस्प
ष्टम् १० ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेसप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥ ॥ ततइति १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ॥ ७ ॥ ॥ ७ ॥ 

 वचनैर्मधुरैःस्निग्धैरसंक्लिष्टमनोहरैः ॥ कंदरेषुचशैलानांनदीनांनिर्झरेषुच ४ द्रुमाग्रेषुचरम्येषुरमिताऽहंत्वयासह ॥ आकाशगमनेचैवविहृताऽहंत्वयासुखम् ५ 
रमामिस्मपुराकांततन्मेनास्त्यद्यकिंचन ॥ मितंददातिहिपितामितंभ्रातामितंसुतः ६ अमितस्यहिदातारंभर्तारंकानपूजयेत् ॥ नास्तिभर्तृसमोनाथोना
स्तिभर्तृसमंसुखम् ७ विसृज्यधनसर्वस्वंभर्तावैशरणंस्त्रियाः ॥ नकार्यमिहमेनाथजीवितेनत्वयाविना ८ पतिहीनातुकानारीसतीजीवितुमुत्सहेत् ॥ एवंविल 
प्यबहुधाकरुणंसासुदुःखिता ९ पतिव्रतासंप्रदीप्तंप्रविवेशहुताशनम् ॥ ततश्चित्रांगदधरंभर्तारंसान्वपश्यत १० विमानस्थंसुकृतिभिःपूज्यमानंमहात्मभिः ॥
चित्रमाल्यांबरधरंसर्वाभरणभूषितम् ११ विमानशतकोटीभिरावृतंपुण्यकर्मभिः ॥ ततःस्वर्गगतःपक्षीविमानवरमास्थितः ॥ कर्मणापूजितस्तत्ररेमेससह
भार्यया १२ ॥ इतिश्रीमहाभारते शांतिपर्वणिआपद्धर्मपर्वणिकपोतस्वर्गगमने अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ ॥ ७ ॥ ॥ ७ ॥
॥ भीष्मउवाच ॥ विमानस्थौतुतौराजन्लुब्धकःखेददर्शह ॥ दृष्ट्वातौदंपतीराजन्व्यचिंतयततांगतिम् १ ईदृशेनैवतपसागच्छेयंपरमांगतिं ॥ इतिबुद्ध्याविवि
निश्चित्यगमनायोपचक्रमे २ महाप्रस्थानमाश्रित्यलुब्धकःपक्षिजीवकः ॥ निश्चेष्टोमरुदाहारोनिर्ममःस्वर्गकांक्षया ३ ततोपश्यत्सुविस्तीर्णंहृद्यंपद्माभिभू
षितम् ॥ नानापक्षिगणाकीर्णंसरःशीतजलंशिवम् ४ पिपासार्तोऽपितद्दृष्ट्वातृप्तःस्यान्नात्रसंशयः ॥ उपवासकृशोऽत्यर्थंसतुपार्थिवलुब्धकः ५ अनवेक्ष्यैवसं
हृष्टःश्वापदाध्युषितंवनम् ॥ महांतंनिश्चयंकृत्वालुब्धकःप्रविवेशह ६ प्रविशन्नेवसवनंनिगृहीतःसकंटकैः ॥ सकंटकैर्विभिन्नांगोलोहितार्द्रीकृतच्छविः ७ बभ्राम
तस्मिन्विजनेनानामृगसमाकुले ॥ ततोद्रुमाणांमहतापवनेनवनेतदा ८ उदतिष्ठतसंघर्षात्सुमहान्हव्यवाहनः ॥ तद्वनंवृक्षसंपूर्णंलताविटपसंकुलम् ९ ददाह
पावकःक्रुद्धोयुगांताग्निसमप्रभः ॥ सज्वालैःपवनोद्भूतैर्विस्फुलिंगैःसमंततः १० ददाहतद्वनंघोरंमृगपक्षिसमाकुलम् ॥ ततःसदेहमोक्षार्थंसंप्रहृष्टेनचेतसा ११
अभ्यधावतवर्धंतंपावकंलुब्धकस्तदा ॥ ततस्तेनाग्निनादग्धोलुब्धकोनष्टकल्मषः ॥ जगामपरमांसिद्धिंततोभरतसत्तम १२ ततःस्वर्गस्थमात्मानमपश्य
द्विगतज्वरः ॥ यक्षगंधर्वसिद्धानांमध्येभ्राजंतमिंद्रवत् १३ एवंखलुकपोतश्चकपोतीचपतिव्रता ॥ लुब्धकेनसहस्वर्गंगताःपुण्येनकर्मणा १४ याऽपिचैवंविधा
नारीभर्तारमनुवर्तते ॥ विराजतेहिसाक्षिप्रंकपोतीवादिविस्थिता १५ एवमेतत्पुरावृत्तंलुब्धकस्यमहात्मनः ॥ कपोतस्यचधर्मिष्ठागतिःपुण्येनकर्मणा १६ य
श्चेदंशृणुयान्नित्यंयश्चेदंपरिकीर्तयेत् ॥ नाशुभंविद्यतेतस्यमनसाऽपिप्रमादतः १७युधिष्ठिरमहानेषधर्मोधर्मभृतांवर॥गोघ्नेष्वपिभवेदस्मिन्निष्कृतिःपापकर्मणः १८ 

विमानस्थाविति॥ध्यायोस्पष्टार्थः १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपेएकोनपंचाशदधिकशततमोऽध्यायः ॥ १४९ ॥ ॥ ७ ॥ ॥ लुब्धकदृष्टांतेनबुद्धिपूर्वकृतस्यापिपापस्यमहतातपसापरि
हारोदृष्टस्तत्प्रसंगादबुद्धिपूर्वस्यापिपरिहारस्तत्तुल्ययत्नसाध्यइत्याशयवान्पृच्छति अबुद्धीति १ । २ पारिक्षितिःपारिक्षितः ३ । ४ । ५ । ६ पापकृत्यापापक्रियया ७ । ८ । ९ । १० । ११

ननिष्कृतिर्भवेत्तस्ययोहन्याच्छरणागतम् ॥ इतिहासमिमंश्रुत्वापुण्यंपापप्रणाशनम् ॥ नदुर्गतिमवाप्नोतिस्वर्गलोकंचगच्छति १९ इतिश्रीमहाभारतेशांति
पर्वणिआपद्धर्मपर्वणिलुब्धकस्वर्गगमनेएकोनपंचाशदधिकशततमोध्यायः ॥ १४९ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ अबुद्धिपूर्वंयत्पापंकुर्याद्भरतसत्त
म ॥ मुच्यतेसकथंतस्मादेतत्सर्वंब्रवीहिमे १ ॥ भीष्मउवाच ॥ ॥ अत्रतेवर्तयिष्यामिपुराणमृषिसंस्तुतम् ॥ इंद्रोतःशौनकोविप्रोयदाहजनमेजयम् २
आसीद्राजामहावीर्यःपरिक्षिज्जनमेजयः ॥ अबुद्धिपूर्वामागच्छद्ब्रह्महत्यांमहीपतिः ३ ब्राह्मणाःसर्वएवैतेतत्यजुःसपुरोहिताः ॥ सजगामवनंराजादह्यमानोदि
वानिशम् ४ प्रजाभिःसपरित्यक्तश्चकारकुशलंमहत् ॥ अतिवेलंतपस्तेपेदह्यमानःसमन्युना ५ ब्रह्महत्यापनोदार्थमपृच्छद्ब्राह्मणान्बहून् ॥ पर्यटन्पृथिवींकृ
त्स्नांदेशेदेशेनराधिपः ६ तत्रेतिहासंवक्ष्यामिधर्मस्यास्योपबृंहणम् ॥ दह्यमानःपापकृत्याजगामजनमेजयः ७ चरिष्यमाणइंद्रोतंशौनकंसंशितव्रतम् ॥ समासा
द्योपजग्राहपादयोःपरिपीडयन् ८ ऋषिर्दृष्ट्वानृपंतत्रजगर्हेसुभृशंतदा ॥ कर्तापापस्यमहतोभ्रूणहाकिमिहागतः ९ किंत्वयाऽस्मासुकर्तव्यंमामास्माक्षीःकथंच
न ॥ गच्छगच्छनतेस्थानंप्रीणात्यस्मानितिब्रुवन् १० रुधिरस्येवतेगंधःशवस्येवचदर्शनम् ॥ अशिवःशिवसंकाशोमृतोजीवन्निवाटसि ११ ब्रह्ममृत्युरशुद्धा
त्मापापमेवानुचिंतयन् ॥ प्रबुध्यसेप्रस्वपिषिवर्तसेपरमेसुखे १२ मोघंतेजीवितंराजन्परिक्लिष्टंचजीवसि ॥ पापायैवहिसृष्टोसिकर्मणेहयवीयसे १३ बहुकल्या
णमिच्छंतिईहंतेपितरःसुतान् ॥ तपसादैवतेज्याभिर्वंदनेनतितिक्षया १४ पितृवंशमिमंपश्यत्वत्कृतेनरकंगतम् ॥ निरर्थाःसर्वएवैषामाशाबंधास्त्वदाश्रयाः १५
यान्पूजयंतोविंदंतिस्वर्गमायुर्यशःप्रजाः ॥ तेषुत्वंसततंद्वेष्टाब्राह्मणेषुनिरर्थकः १६ इमंलोकंविमुच्यत्वमवाङ्मूर्धापतिष्यसि ॥ अशाश्वतीःशाश्वतीश्चसमाः
पापेनकर्मणा १७ अर्द्यमानोयत्रगृध्रैःशितिकंठैरयोमुखैः॥ ततश्चपुनरावृत्तःपापयोनिंगमिष्यसि १८ यदिदंमन्यसेराजन्नायमस्तिकुतःपरः ॥ प्रतिस्मारयिता
रस्त्वांयमदूतायमक्षये १९ ॥ इतिश्रीमहाभारतेशांति०आप०इंद्रोतपारिक्षितीयसंवादेपंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ भीष्मउवाच ॥ एवमुक्तः
प्रत्युवाचतंमुनिंजनमेजयः ॥ गर्ह्यंभवान्गर्हयतेनिंद्यंनिंदतिमांपुनः १ धिक्कार्यंमांधिक्कुरुतेतस्मात्त्वाऽहंप्रसादये ॥ सर्वंहीदंदुष्कृतंमेज्वलाम्यग्नाविवाहितः २ स्वक
र्माण्यभिसंधायनाभिनंदतिमेमनः ॥ प्राप्यघोरंभयंनूनंमयावैवस्वतादपि ३ ततुशल्यमनिर्हृत्यकथंशक्ष्यामिजीवितुम् ॥ सर्वंमन्युंविनीयत्वमभिमांवदशौनक ४

१२ यवीयसेहीनाय १३ । १४ । १५ । १६ अशाश्वतीःसर्वस्यापिकर्मणोऽनवत्त्वादशाश्वतीर्बहुत्वात् १७ । १८ । १९ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपे
पंचाशदधिकशततमोऽध्यायः ॥ १५० ॥ ॥ ७ ॥ एवमिति १ त्वाऽहंत्वामहं सार्द्धः दुष्कृतमभिसंधायेतिसंबंधः २ प्राप्येति यमयातनाभोगाते दुष्कृतजंशल्यंममगमिष्यतीत्यर्थः ३ । ४

ब्राह्मणानांभक्तइतिशेषः ५ ब्रह्मशस्तैर्हिसितैर्यैस्तेषां संविदमैकमत्यंसजातीयैःसहालभमानानामितिपूर्वान्वयि वेदनिश्चितान्युष्मान्प्रतिभूयोवक्ष्यामि ६ निर्जनाःनिष्परिग्रहाःयोगिनोयथा निर्धनान्दीनान्रक्षंतिएवंमांभवंतोदययैवस्वसामर्थ्येनरक्षंत्वित्यर्थः ७ आपाताःनरकान् पुलिंदाःशबराःम्लेच्छभेदाः ८ सपंडितःयोमद्दोषान्जानातिनत्वंतस्यामज्ञाशरणागतोऽहमित्येवं रूपांसत्वपंडितः ब्रह्मन्ब्राह्मण ९ ब्रह्मन्ब्राह्मणजातिःकुपितासति असांप्रतमयुक्तमपिकुर्यात् अत्रकिमाश्चर्यंनकिमपीत्यर्थः यतएवमतःप्राज्ञोबुद्धिमान् इत्येवंप्रकारेणपंडितोविवेकवान् भूत्वाभूतानांभूतेषुनानुकुप्यतेऽनुकोपंनकरोति १० नकेवलमकोपएवप्रज्ञाफलं अपितुमहत्त्वमप्यस्तीत्याह प्रज्ञेति ११ यःसाधुषुनिर्विण्णात्माविरक्तःपरोक्षस्तदृष्टिपथादपेतस्तैश्चविकृतस्तेनप्रज्ञा

महानासंब्राह्मणानांभूयोवक्ष्यामिसांप्रतम् ॥ अस्तुशेषंकुलस्यास्यमापराभूदिदंकुलम् ५ नहिनोब्रह्मशस्तानांशेषंभवितुमर्हति ॥ स्तुतीरलभमानानांसंवि
देवेदनिश्चितान् ६ निर्विद्यमानस्त्वात्मानंभूयोवक्ष्यामिशाश्वतम् ॥ भूयश्चैवाभिरक्षंतुनिर्धनान्निर्जनाइव ७ नह्ययज्ञाअमुंलोकंप्राप्नुवंतिकथंचन ॥ आपाता
न्प्रतितिष्ठंतिपुलिंदशबराइव ८ अविज्ञायैवमेप्रज्ञांबालस्येवसपंडितः ॥ ब्रह्मन्पितेवपुत्रस्यप्रीतिमान्भवशौनक ९ ॥ शौनकउवाच ॥ किमाश्चर्यंयतःप्राज्ञो
ब्रह्मकुर्यादसांप्रतं ॥ इतिवैपंडितोभूत्वाभूतानांनानुकुप्यते १० प्रज्ञाप्रासादमारुह्यअशोच्यःशोचतेजनान् ॥ जगतीस्थानिवाद्रिस्थःप्रज्ञयाप्रतिपत्स्यति ११
नचोपलभ्यतेतेननचाश्चर्याणिकुर्वते ॥ निर्विण्णात्मापरोक्षोवाधिकृतःपूर्वसाधुषु १२ विदितंभवतोवीर्यंमाहात्म्यंवेदआगमे ॥ कुरुष्वेहयथाशांतिब्रह्मशरणम
स्तुते १३ तद्वैपारत्रिकंतातब्राह्मणानामकुप्यताम् ॥ अथवातप्यसेपापेधर्ममेवानुपश्यवै १४ ॥ जनमेजयउवाच ॥ अनुतप्येचपापेननचधर्मंविलोपये ॥
बुभूषुंभजमानंचप्रीतिमान्भवशौनक १५ ॥ शौनकउवाच ॥ छित्वादंभंचमानंचप्रीतिमिच्छामितेनृप ॥ सर्वभूतहितंतिष्ठधर्मंचैवप्रतिस्मरन् १६ नभयान्न
चकार्पण्यान्नलोभात्त्वामुपाह्वये ॥ तामिदैवींगिरंसत्यांशृणुत्वंब्राह्मणैःसह १७ सोऽहंनकेनचिच्चार्थीत्वांचधर्मादुपाह्वये ॥ क्रोशतांसर्वभूतानांहाहाधिगितिजल्प
ताम् १८ वक्ष्यंतिमामधर्मज्ञंत्यक्ष्यंतिसुहृदोजनाः ॥ तावाचःसुहृदःश्रुत्वासंज्वरिष्यंतिमेभृशम् १९ केचिदेवमहाप्राज्ञाःप्रतिज्ञास्यंतितत्त्वतः ॥ जानीहिम
त्कृतंतातब्राह्मणान्प्रतिभारत २० यथातेमत्कृतेक्षेमंलभंतेतेतथाकुरु ॥ प्रतिजानीहिचाद्रोहंब्राह्मणानांनराधिप २१ ॥ जनमेजयउवाच ॥ नैववाचानमनसा
पुनर्जातुनकर्मणा ॥ द्रोग्धास्मिब्राह्मणान्विप्रचरणावपितेस्पृशे २२ ॥ इतिश्रीम०शां०आप० इंद्रोतपारिक्षितीयेएकपंचाशदधिकशततमोऽध्यायः ॥ १५१॥

नचोपलभ्यते तादृशस्यवदलाभेऽन्येआश्चर्यमपिनकुर्वते अतःसत्संगंविनाप्रज्ञादुर्लभैवेत्यर्थः १२ वीर्यंब्राह्मणस्येतिशेषः वेदेऋग्वेदादौ आगमेसर्वार्थद्योतके ब्रह्माब्राह्मणःशरणंरक्षिता यथा शांतिःशांतिमनतिक्रम्य १३ यत्कृतंतद्वैपारत्रिकमित्यध्याहृत्ययोज्यं १४ बुभूषुंश्रेयोलिप्सुंभजमानंमामितीतिशेषः १५ सर्वभूतहितंहितरूपंधर्मंतिष्ठानुतिष्ठ हितेइतिसप्तम्यंतपाठोऽप्य त्रार्थः १६ उपाह्वयेशिष्यंकरोमीत्यर्थः १७ शौनकंपापिष्ठसंग्रहीतारंधिगितिजल्पतांतामनादृत्यउपाह्वयेइत्यर्थः १८ । १९ प्रतिज्ञास्यंतिमदभिप्रायंकृतमेवजानीहीति २० तेब्राह्मणाम त्कृतेमन्निमित्तं वेत्वत्तः २१ । २२ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे एकपंचाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ॥ ७ ॥ ॥ ७ ॥

---

तस्मादिति यस्माच्छ्रीमान्विद्यावानसितस्मात् १ । २ समदान्तादृशस्तापकः ३ अभिभूतानामधर्मेणेतिशेषः ४ नास्तिदुर्लभंयस्यसोऽदुर्लभःसंपन्नः ५ यदसमीक्षितंपौर्वापर्येणानालोचितं एतदेकंसमग्रंकृत्स्नंकार्पण्यंचेत्कार्येसमीक्ष्यैवस्यात् तस्मिन्कार्येततःसमीक्षातःगुणःस्यात् ६ समीक्षामेवाह यज्ञइति ७ । ८ । ९ एकांततोऽतियत्नेन १० तपएवाह पुण्यमिति ११ । १२ मानसइ तिपुंस्त्वमार्षं १३ पवित्राणांपावनानांमध्येत्यागधर्मःदानात्मकोधर्मःपवित्रतरः संन्यासंतुपरंधर्मंततोऽप्यधिकंमनुरब्रवीत् १४ कुमारोबालःसत्योरागद्वेषशून्यत्वात् तथातिष्ठेदित्यर्थः १५ नहीति

॥ शौनकउवाच ॥ तस्मात्तेऽहंप्रवक्ष्यामिधर्ममावृत्तचेतसे ॥ श्रीमान्महाबलस्तुष्टःस्वयंधर्ममवेक्षसे १ पुरस्ताद्दारुणोभूत्वासुचित्रतरमेवतत् ॥ अनुगृह्णातिभू
तानिस्वेनवृत्तेनपार्थिवः २ कृत्स्नंनूनंसदहतिइतिलोकोव्यवस्यति ॥ यत्रत्वंतादृशोभूत्वाधर्ममेवानुपश्यसि ३ हित्वातुसुचिरंभक्ष्यंभोज्यांश्चतपआस्थितः ॥ इ
त्येतदभिभूतानामद्भुतंजनमेजय ४ योऽदुर्लभोभवेद्दाताकृपणोवातपोधनः ॥ अनाश्चर्यंतदित्याहुर्नातिदूरेणवर्तते ५ एतदेवहिकार्पण्यंसमग्रमसमीक्षितम् ॥ य
च्चेत्समीक्ष्यैवस्याद्भवेत्तस्मिंस्ततोगुणः ६ यज्ञोदानंदयावेदाःसत्यंचपृथिवीपते ॥ पंचैतानिपवित्राणिषष्ठंसुचरितंतपः ७ तदेवराज्ञांपरमंपवित्रंजनमेजय ॥ तेनस
म्यग्गृहीतेनश्रेयांसंधर्ममाप्स्यसि ८ पुण्यदेशाभिगमनंपवित्रंपरमंस्मृतम् ॥ अत्राप्युदाहरंतीमांगाथांगीतांययातिना ९ योमर्त्यःप्रतिपद्येतआयुर्जीवितमात्मनः ॥
यज्ञमेकांततःकृत्वातत्संन्यस्यतपश्चरेत् १० पुण्यमाहुःकुरुक्षेत्रंकुरुक्षेत्रात्सरस्वतीम् ॥ सरस्वत्याश्चतीर्थानितीर्थेभ्यश्चपृथूदकम् ११ यत्रावगाह्यपीत्वाचनैनंश्वोमर
णंतपेत् ॥ महासरःपुष्कराणिप्रभासोत्तरमानसे १२ कालोदकंचगंताऽसिलब्धायुर्जीवितेपुनः ॥ सरस्वतीदृषद्वत्योःसंगमोमानसःसरः १३ स्वाध्यायशीलःस्थानेषु
सर्वेष्वेवमुपस्पृशेत् ॥ त्यागधर्मःपवित्राणांसंन्यासंमनुरब्रवीत् १४ अत्राप्युदाहरंतीमागाथाःसत्यवताकृताः ॥ यथाकुमारःसत्योवैनैवपुण्योनपापकृत् १५ नह्य
स्तिसर्वभूतेषुदुःखमस्मिन्कुतःसुखम् ॥ एवंप्रकृतिभूतानांसर्वसंसर्गयायिनाम् १६ त्यजतांजीवितंश्रेयोनिवृत्तेपुण्यपापके ॥ यत्त्वेवराज्ञोज्यायिष्ठंकार्याणांतद्ब्रवी
मिते १७ बलेनसंविभागैश्चजयस्वर्गंजनेश्वर ॥ यस्यैवबलमोजश्चसधर्मस्यप्रभुर्नरः १८ ब्राह्मणार्थंसुखार्थंहित्वंपाहिवसुधांनृप ॥ यथैवैतान्पुराक्षेप्सीस्तथैवैतान्प्र
सादय १९ अपिविक्रममाणोपित्यजमानोऽप्यनेकधा ॥ आत्मनोदर्शनाद्विप्रान्नहंतास्मीतिमार्गय ॥ घटमानःस्वकार्येषुकुरुनिःश्रेयसंपरम् २० हिमाग्निघोरसदृ
शोराजाभवतिकश्चन ॥ लांगलाशनिकल्पोवाभवेदन्यःपरंतप २१ नविशेषेणगंतव्यमविच्छिन्नेनवापुनः ॥ नजातुनाहमस्मीतिसुप्रसक्तमसाधुषु २२

सार्धः सुखंदुःखंचोभयमपिकल्पितमित्यर्थः प्रकृतिर्ब्रह्मतद्भूतानांब्रह्मस्वरूपाणांसर्वाणियानिसंसर्गरूपाणिपापानियांतितद्ब्रह्मआविद्यकसंगमात्राद्दुःखादिभाजामित्यर्थः १६ । १७ बलेनवीर्येण संविभागैर्दानैः ओजइंद्रियपाटवम् १८ । १९ विक्रममाणःकर्मणिशानन् नीचैःक्रियमाणइत्यर्थः त्यजमानःदूरीक्रियमाणः आत्मनोदर्शनादात्मैवापम्येनमार्गयनिश्चिनु २० हिमवच्छीतलःअग्नि वत्क्रूरः घोरोयमस्तद्वद्गुणदोषविचारकः लांगलवद्दुष्टमूलोन्मूलनपरः अशनिवदाकस्मिकपातोदुष्टेषु २१ असाधुषुसुप्रसक्तंप्रीतिविशेषेण विशेषेणविद्वत्त्वादिनाहेतुनाअविच्छिन्नेनसामान्येनब्राह्म णत्वादिनाधर्मेणवानगंतव्यंनप्राप्तव्यं केनापिहेतुनाखलेषुसंगोनकर्तव्यइत्यर्थः तत्रहेतुमाहनेतिजातुकदाचित्अहंनअस्मीतिन अपित्वस्मीत्येवमत्वेतिशेषः स्वनाशार्थिखलसंगंनकुर्यादितिभावः २२

विकर्मणेति सकृत्कृतात्पापात्पश्चात्तापमात्रेणमुच्यते । द्विरावृत्तात्पुनर्नकरिष्यामीतिनियमग्रहणमात्रेण । त्रिरावृत्ताद्यस्किंचिद्धर्मस्वीकारमात्रेणबहुकृत्वोतितदभ्यस्तात्तुतीर्थादिनामुक्तपत्वंइति श्लोकद्वयार्थः २३ । २४ । २५ । २६ । २७ । २८ यावतइतिप्रकृतोपयोगि २९ अघमर्षणमृतंचसत्यंचेतिऋक्त्रयम् ३० । ३१ अनुयुज्यअत्यादरपूर्वकमुपेत्यापृच्छन्निति शेषः धर्म्यधर्मोद्भवं फलंसुखरूपंवेत्थजानीषे तथानरकेफलंदुःखंतदपिवेत्थ ३२ यस्ययोगिनउभेअपिसुखदुःखेसदृशेयस्यचतयोर्द्वयोस्तुल्योजयोऽस्तिउतनसामान्याभावेऽपिकिंपुण्यस्यफलंकथंदानपुण्येनपापंनुद

विकर्मणातप्यमानःपापाद्विपरिमुच्यते ॥ नैतत्कार्यंपुनरितिद्वितीयात्परिमुच्यते २३ चरिष्येधर्ममेवेतितृतीयात्परिमुच्यते ॥ शुचिस्तीर्थान्यनुचरन्बहु त्वात्परिमुच्यते २४ कल्याणमनुकर्तव्यंपुरुषेणबुभूषता ॥ येसुगंधीनिसेवंतेतथागंधाभवंतिते २५ येदुर्गंधीनिसेवंतेतथागंधाभवंतिते ॥ तपश्चर्यापरःसद्यः पापाद्विपरिमुच्यते २६ संवत्सरमुपास्याग्निमभिशस्तःप्रमुच्यते ॥ त्रीणिवर्षाण्युपास्याग्निंभ्रूणहाविप्रमुच्यते २७ महासरःपुष्कराणिप्रभासोत्तरमानसे ॥ अभ्येत्ययोजनशतंभ्रूणहाविप्रमुच्यते २८ यावतःप्राणिनोहन्यात्तज्जातीयांस्तुतावतः ॥ प्रमीयमाणान्उन्मोच्यप्राणिहाविप्रमुच्यते २९ अपिचाप्सुनिमज्जेतजपंस्त्रिरघमर्षणम् ॥ यथाऽश्वमेघावभृथस्तथातन्मनुरब्रवीत् ३० तत्क्षिप्रंनुदतेपापंसत्कारंलभतेतथा ॥ अपिचैनंप्रसीदंतिभूतानिजडमूकवत् ३१ बृहस्पतिं देवगुरुंसुरासुराःसर्वेसमेत्याभ्यनुयुज्यराजन् ॥ धर्म्यंफलंवेत्थफलंमहर्षेतथैवतस्मिन्नरकेपारलोक्ये ३२ उभेतुयस्यसदृशेभवेतांकिंस्वित्तयोस्तत्रजयोऽथनस्यात् ॥ आचक्ष्वनःपुण्यफलंमहर्षेकथंपापंनुदतेधर्मशीलः ३३ ॥ बृहस्पतिरुवाच ॥ कृत्वापापंपूर्वमबुद्धिपूर्वंपुण्यानिचेत्कुरुतेबुद्धिपूर्वम् ॥ सतत्पापंनुदतेकर्मशीलो वासोयथामलिनंक्षारयुक्तम् ३४ पापंकृत्वाऽभिमन्येतनाहमस्मीतिपूरुषः ॥ तच्चिकीर्षतिकल्याणंश्रद्दधानोऽनसूयकः ३५ छिद्राणिविवृतान्येवसाधूनांवावृणोतियः ॥ यःपापंपुरुषःकृत्वाकल्याणमभिपद्यते ३६ यथाऽऽदित्यःप्रातरुद्यंस्तमःसर्वंव्यपोहति ॥ कल्याणमाचरन्नेवंसर्वपापंव्यपोहति ३७ ॥ भीष्म उवाच ॥ एवमुक्त्वातुराजानमिंद्रोतोजनमेजयम् ॥ याजयामासविधिवद्वाजिमेधेनशौनकः ३८ ततःसराजाव्यपनीतकल्मषःश्रियोवृतःप्रज्वलिताग्निरूपवान् ॥ विवेशराज्यंस्वममित्रकर्षणोयथादिवंपूर्णवपुर्निशाकरः ३९ ॥ इति श्रीमहाभारते शांतिपर्वणि आपद्धर्मपर्वणि इंद्रोतपारिक्षितीये द्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ ध ॥ ॥ युधिष्ठिरउवाच ॥ कच्चित्पितामहेनासीच्छ्रुतंवादृष्टमेवच ॥ कच्चिन्मर्त्योमृतोराजन्पुनरुज्जीवितोऽभवत् १

तितदाचक्ष्वेतिद्वयोःसंबंधः ३३ अबुद्धिपूर्वमित्यस्यप्रश्नस्योत्तरमाह कृत्वेति ३४ पापमिति कर्तृत्वाभिमानशून्यःपापंकुर्वन्नपिनकरोत्येवेत्यर्द्धस्यार्थः ३५ आवृणोतिपिधत्ते सकल्याणंचिकीर्षतीतिसंबंधः ३६ । ३७ । ३८ । ३९ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे द्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ ध ॥ ॥ तदेवंव्यापन्नस्यराज्ञो बुद्धिपूर्वमबुद्धिपूर्वंवाकृतंपापंसत्कर्मणाधर्माध्यवसायेनचनश्यतीतिपरलोकभयाभावोदर्शितः इहलोकेऽप्यत्यंतापन्नस्यमृतकल्पस्यद्वाभ्यामहमहमिकयाग्रसितुमवेक्षितस्यकेनचित्कारणेनकंचित्कालमवस्थितस्यकाचिन्नविरस्तिनवेतिपृच्छति कच्चिदिति तादृशस्याप्युज्जीवनंकचिद्दृष्टमस्तीतिप्रष्टुराशयः १ 

अत्रोत्तरंगृध्रगोमायुभ्यांयुगपत्प्रार्थ्यमानस्यशिशोःस्वजननिरोधात्किंचित्कालमवस्थितस्येश्वरेणयथाजीवनंदत्तंएवमेवेश्वरोऽनुगृह्णातीत्याख्यायिकामुखेनैवाह शृणुपार्थेत्यादिना स्पष्टार्थोऽध्या

भीष्मउवाच ॥ शृणुपार्थयथावृत्तमितिहासंपुरातनम् ॥ गृध्रजंबुकसंवादंयोवृत्तोनैमिषेपुरा २ कस्यचिद्ब्राह्मणस्यासीद्दुःखलब्धःसुतोमृतः ॥ बालएवविशालाक्षोबालग्रहनिपीडितः ३ दुःखिताःकेचिदादायबालमप्राप्तयौवनम् ॥ कुलसर्वस्वभूतंवैरुदंतःशोकविह्वलाः ४ बालंमृतंगृहीत्वाऽथश्मशानाभिमुखाःस्थिताः ॥ अंकेनैवचसंक्रम्यरुरुदुर्भृशदुःखिताः ५ शोचंतस्तस्यपूर्वोक्तान्भाषितांश्चासकृत्पुनः ॥ तंबालंभूतलेक्षिप्यप्रतिगंतुंनशक्नुयुः ६ तेषांरुदितशब्देनगृध्रोऽभ्येत्यवचोऽब्रवीत् ॥ एकात्मजमिमंलोकेत्यक्त्वागच्छतमाचिरम् ७ इहपुंसांसहस्राणिस्त्रीसहस्राणिचैवह ॥ समानीतानिकालेनहित्वावैयांतिबांधवाः ८ संपश्यतजगत्सर्वंसुखदुःखैरधिष्ठितम् ॥ संयोगोविप्रयोगश्चपर्यायेणोपलभ्यते ९ गृहीत्वायेचगच्छंतियेनयांतिचतान्मृतान् ॥ तेऽप्यायुषःप्रमाणेनस्वेनगच्छंतिजंतवः १० अलंस्थित्वाश्मशानेऽस्मिन्गृध्रगोमायुसंकुले ॥ कंकालबहुलेरौद्रेसर्वप्राणिभयंकरे ११ नपुनर्जीवितःकश्चित्कालधर्ममुपागतः ॥ प्रियोवायदिवाद्वेष्यःप्राणिनांगतिरीदृशी १२ सर्वेणखलुमर्तव्यंमर्त्यलोकेप्रसूयता ॥ कृतांतविहितेमार्गेमृतंकोजीवयिष्यति १३ कर्मांतविरतेलोकेअस्तंगच्छतिभास्करे ॥ गम्यतांस्वमधिष्ठानंसुतस्नेहंविसृज्यवै १४ ततोगृध्रवचःश्रुत्वाप्राक्रोशंतस्तदानृप ॥ बांधवास्तेऽभ्यगच्छंतपुत्रमुत्सृज्यभूतले १५ विनिश्चित्याथचतदाविक्रोशंतस्ततस्ततः ॥ मृतमित्येवगच्छंतोनिराशास्तस्यदर्शने १६ निश्चितार्थाश्चतेसर्वेसंत्यजंतःस्वमात्मजम् ॥ निराशाजीवितेतस्यमार्गमावृत्यधिष्ठिताः १७ ध्वांक्षपक्षसवर्णस्तुबिलान्निसृत्यजंबुकः ॥ गच्छमानान्स्मतानाहनिर्घृणाःखलुमानुषाः १८ आदित्योऽयंस्थितोमूढाःस्नेहंकुरुतमाभयम् ॥ बहुरूपोमुहूर्तश्चजीवेत्यपिकदाचन १९ यूयंभूमौविनिक्षिप्यपुत्रस्नेहविनाकृताः ॥ श्मशानेसुतमुत्सृज्यकस्माद्गच्छतनिर्घृणाः २० नवोऽस्त्यस्मिन्सुतेस्नेहोबालेमधुरभाषिणि ॥ यस्यभाषितमात्रेणप्रसादमधिगच्छत २१ तेपश्यतसुतस्नेहोयादृशःपशुपक्षिणाम् ॥ नतेषांधारयित्वातान्कश्चिदास्तिफलागमः २२ चतुष्पात्पक्षिकीटानांप्राणिनांस्नेहसंगिनाम् ॥ परलोकगतिस्थानांमुनियज्ञक्रियामिव २३ तेषांपुत्राभिरामाणामिहलोकेपरत्रच ॥ नगुणोदृश्यतेकश्चित्प्रजाःसंधारयंतिच २४ अपश्यतांप्रियान्पुत्रांस्तेषांशोकोनातिष्ठति ॥ नचपुष्णंतिसंवृद्धास्तेमातापितरौक्वचित् २५ मानुषाणांकुतःस्नेहोयेषांशोकोभविष्यति ॥ इमंकुलकरंपुत्रंत्यक्त्वाक्वऽनुगमिष्यथ २६ चिरंमुंचतबाष्पंचचिरंस्नेहेनपश्यत ॥ एवंविधानिहीष्टानिदुस्त्यजानिविशेषतः २७ क्षीणस्यार्थाभियुक्तस्यश्मशानाभिमुखस्यच ॥ बांधवायत्रतिष्ठंतितत्रान्योनाधितिष्ठति २८ सर्वस्यदयिताःप्राणाःसर्वःस्नेहंचविंदति ॥ तिर्यग्योनिष्वपिसतांस्नेहंपश्यतयादृशम् २९

यशेषः २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ कृथाइतिवचनव्यत्ययश्छांदसः ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७

त्यक्त्वाकथंगच्छथेमंपद्मलोलायताक्षिकम् ॥ यथानवोद्वाहकृतंस्नानमाल्यविभूषितम् ३० जंबुकस्यवचःश्रुत्वाकृपणंपरिदेवतः ॥ न्यवर्ततंतदासर्वेशवार्थेतेस्ममा
नुषाः ३१ ॥ गृध्रउवाच ॥ अहोबतनृशंसेनजंबुकेनाल्पमेधसा ॥ क्षुद्रेणोक्ताहीनसत्वामानुषाःकिंनिवर्तथ ३२ पंचभूतपरित्यक्तंशून्यंकाष्ठत्वमागतम् ॥ कस्मा
च्छोचथतिष्ठंतमात्मानंकिंनशोचथ ३३ तपःकुरुतवैतीव्रंमुच्यध्वंयेनकिल्बिषात् ॥ तपसालभ्यतेसर्वंविलापःकिंकरिष्यति ३४ अनिष्टानिचभाग्यानिजातानि
सहमूर्तिना ॥ येनगच्छतिबालोऽयंदत्वाशोकमनंतकम् ३५ धनंगावःसुवर्णंचमणिरत्नमथापिच ॥ अपत्यंचतपोमूलंतपोयोगाच्चलभ्यते ३६ यथाकृताच
भूतेषुप्राप्यतेसुखदुःखिता ॥ गृहीत्वाजायतेजंतुर्दुःखानिचसुखानिच ३७ नकर्मणापितुःपुत्रःपितावापुत्रकर्मणा ॥ मार्गेणान्येनगच्छंतिबद्धाःसुकृतदुष्कृतैः
३८ धर्मंचरतयत्नेननचाधर्मेमनःकृथाः ॥ वर्तध्वंचयथाकालंदैवतेषुद्विजेषुच ३९ शोकंत्यजतदैन्यंचसुतस्नेहान्निवर्तत ॥ त्यज्यतामयमाकाशेततःशीघ्रंनिवर्तत
४० यत्करोतिशुभंकर्मतथाकर्मसुदारुणम् ॥ तत्कर्तैवसमश्नातिबांधवानांकिमत्रह ४१ इहत्यक्त्वानतिष्ठंतिबांधवाबांधवंप्रियम् ॥ स्नेहमुत्सृज्यगच्छंतिबाष्पपूर्णा
विलेक्षणाः ४२ प्राज्ञोवायदिवामूर्खःसधनोनिर्धनोपिवा ॥ सर्वःकालवशंयातिशुभाशुभसमन्वितः ४३ किंकरिष्यथशोचित्वामृतंकिमनुशोचथ ॥ सर्वस्यहिप्रभुः
कालोधर्मतःसमदर्शनः ४४ यौवनस्थांश्चबालांश्चवृद्धान्गर्भगतानपि ॥ सर्वानाविशतेमृत्युरेवंभूतमिदंजगत् ४५ ॥ जंबुकउवाच ॥ अहोमंदीकृतःस्नेहोगृध्रेणेहा
ल्पबुद्धिना ॥ पुत्रस्नेहाभिभूतानांयुष्माकंशोचतांभृशम् ४६ शमैःसम्यक्प्रयुक्तैश्चवचनैःप्रत्ययोत्तरैः ॥ यद्गच्छतिजनश्चायंस्नेहमुत्सृज्यदुस्त्यजम् ४७ अहोपुत्रवि
योगेनमृतशून्योपसेवनात् ॥ क्रोशतांसुभृशंदुःखंविवत्सनांगवामिव ४८ अद्यशोकंविजानामिमानुषाणांमहीतले ॥ स्नेहंहिकारणंकृत्वाममाप्यश्रूण्यथापतन् ४९
यत्नोहिसततंकार्यस्ततोदैवेनसिद्ध्यति ॥ दैवंपुरुषकारश्चकृतांतेनोपपद्यते ५० अनिर्वेदःसदाकार्योनिर्वेदाद्धिकुतःसुखम् ॥ प्रयत्नात्प्राप्यतेह्यर्थःकस्माद्गच्छथ
निर्दयम् ५१ आत्ममांसोपवृत्तंचशरीरार्धमयींतनुम् ॥ पितॄणांवंशकर्तारंवनेत्यक्त्वाक्वयास्यथ ५२ अथवाऽस्तंगतेसूर्येसंध्याकालउपस्थिते ॥ ततोनेष्यथवापुत्रंइ
हस्थावाभविष्यथ ५३ ॥ गृध्रउवाच ॥ अद्यवर्षसहस्रंमेसाग्रंजातस्यमानुषाः ॥ नचपश्यामिजीवंतंमृतंस्त्रीपुंनपुंसकम् ५४ मृतागर्भेषुजायंतेजातमात्राम्रियंतिच ॥
चंक्रमंतोम्रियंतेचयौवनस्थास्तथाऽपरे ५५ अनित्यानीहभाग्यानिचतुष्पात्पक्षिणामपि ॥ जंगमानांनगानांवाप्यायुरग्रेऽवतिष्ठते ५६ इष्टदारवियुक्ताश्चपुत्रशो
कान्वितास्तथा ॥ दह्यमानाःस्मशोकेनगृहंगच्छंतिनित्यशः ५७ अनिष्टानांसहस्राणितथेष्टानांशतानिच ॥ उत्सृज्येहप्रयाताविबांधवाभृशदुःखिताः ५८

४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८



५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७

त्यज्यतामेषनिस्तेजाःशून्यःकाष्ठत्वमागतः ॥ अन्यदेहविषक्तंहिशावंकाष्ठत्वमागतम् ५९ त्यक्तजीवस्यचैवास्यकस्माद्धित्वानगच्छत ॥ निरर्थकोह्ययंस्नेहोनिष्फल
श्चपरिश्रमः ६० चक्षुर्भ्यांनचकर्णाभ्यांसंशृणोतिसमीक्षते ॥ कस्मादेनंसमुत्सृज्यनगृहान्गच्छताशुवै ६१ मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिःसुनिष्ठुरैः ॥ मयोक्तागच्छ
तक्षिप्रंस्वंस्वमेवनिवेशनम् ६२ प्रज्ञाविज्ञानयुक्तेनबुद्धिसंज्ञाप्रदायिना ॥ वचनंश्रावितानूनंमानुषाःसंन्यवर्तत ६३ शोकोद्विगुणतांयातिदृष्ट्वास्मृत्वाचचेष्टितम् ॥
इत्येतद्वचनंश्रुत्वासंनिवृत्तास्तुमानुषाः ॥ अपश्यत्तंतदासुधृतमागत्यजंबुकः ६४ ॥ जंबुकउवाच ॥ इमंकनकवर्णाभंभूषणैःसमलंकृतम् ॥ गृध्रवाक्यात्कथंपु
त्रंत्यक्ष्यध्वंपितृपिंडदम् ६५ नस्नेहस्यचविच्छेदोविलापरुदितस्यच ॥ मृतस्यास्यपरित्यागात्तापोवैभविताधुवम् ६६ श्रूयतेशंबुकेशूद्रेहतेब्राह्मणदारकः ॥ जीवि
तोधर्ममासाद्यरामात्सत्यपराक्रमात् ६७ तथाश्वेतस्यराजर्षेर्बालोदिष्टांतमागतः ॥ श्वेतेनधर्मनिष्ठेनमृतःसंजीवितःपुनः ६८ तथाकश्चिद्भवेत्सिद्धोमुनिर्वादेवता
पिवा ॥ कृपणानामनुक्रोशंकुर्याद्वोरुदतामिह ६९ इत्युक्तास्तेन्यवर्ततशोकार्ताःपुत्रवत्सलाः ॥ अंकेशिरःसमाधायरुरुदुर्बहुविस्तरम् ॥ तेषांरुदितशब्देनगृध्रो
भ्येत्यवचोऽब्रवीत् ७० ॥ गृध्रउवाच ॥ अश्रुपातपरिक्लिन्नःपाणिस्पर्शप्रपीडितः ॥ धर्मराजप्रयोगाच्चदीर्घनिद्रांप्रवेशितः ७१ तपसाऽपिहिसंयुक्ताधनवंतोमहाधियः ॥
सर्वेमृत्युवशंयांतितदिदंप्रेतपत्तनम् ७२ बालवृद्धसहस्राणिसदासंत्यज्यबांधवाः ॥ दिनानिचैवरात्रींश्चदुःखंतिष्ठंतिभूतले ७३ अलंनिर्बंधमागत्यशोकस्यपरिधा
रणे ॥ अप्रत्ययंकुतोह्यस्यपुनरद्येहजीवितम् ७४ मृतस्योत्सृष्टदेहस्यपुनर्देहोनविद्यते ॥ नैवमूर्तिप्रदानेनजंबुकस्यशतैरपि ७५ शक्यंजीवयितुंह्येषबालोवर्षशतै
रपि ॥ अथरुद्रःकुमारोवाब्रह्मावाविष्णुरेवच ७६ वरमस्मैप्रयच्छेयुस्ततोजीवेदयंशिशुः ॥ नैवबाष्पविमोक्षेणनवाश्वासकृतेनच ७७ नदीर्घरुदितेनायंपुनर्जीवं
गमिष्यति ॥ अहंचक्रोष्टुकश्चैवयूयंयेचास्यबांधवाः ७८ धर्माधर्मौगृहीत्वेहसर्वेवर्तामहेऽध्वनि ॥ अप्रियंपरुषंचापिपरद्रोहंपरस्त्रियम् ७९ अधर्ममनृतंचैवदूराद्प्रा
ज्ञोविवर्जयेत् ॥ धर्मंसत्यंश्रुतंन्याय्यंमहतींप्राणिनांदयाम् ८० अजिह्मत्वमशाठ्यंचयत्नतःपरिमार्गत ॥ मातरंपितरंवाऽपिबांधवान्सुहृदस्तथा ८१ जीवतोये
नपश्यंतितेषांधर्मविपर्ययः ॥ योनपश्यतिचक्षुर्भ्यांनेंगतेचकथंचन ८२ तस्यनिष्ठावसानांतेरुदंतःकिंकरिष्यथ ॥ इत्युक्तास्तेसुतंत्यक्त्वाभूमौशोकपरिप्लुताः ॥
दह्यमानाःसुतस्नेहात्प्रययुर्बांधवागृहम् ८३ ॥ जंबुकउवाच ॥ दारुणोमर्त्यलोकोऽयंसर्वप्राणिविनाशनः ॥ इष्टबंधुवियोगश्चतथेहाल्पंचजीवितम् ८४ बह्वलीकम
सत्यंचाप्यतिवादाप्रियंवदम् ॥ इमंप्रेक्ष्यपुनर्भावंदुःखशोकविवर्धनम् ८५ नमेमानुषलोकोऽयंमुहूर्तमपिरोचते ॥ अहोधिग्गृध्रवाक्येनयथैवाबुद्धयस्तथा ८६
कथंगच्छथनिःस्नेहाःसुतस्नेहंविसृज्यच ॥ प्रदीप्ताःपुत्रशोकेनसन्निवर्तत्तमानुषाः ८७

८८ । ८९।९० । ९१ । ९२ ।९३। ९४।९५ ।९६ ।९७ ।९८।९९। १००। ११२ ।३। ४ ।५। ६।७ ।८।९।१०।११।१२।१३।१४।१५ ।११६



श्रुत्वागृध्रस्यवचनंपापस्येहाकृतात्मनः ॥ सुखस्यानंतरंदुःखंदुःखस्यानंतरंसुखम् ८८ सुखदुःखावृतेलोकेनेहास्त्येकमनंतरम् ॥ इमंक्षितितलेत्यक्त्वाबालं
रूपसमन्वितम् ८९ कुलशोभाकरंमूढाःपुत्रंत्यक्त्वाक्वयास्यथ ॥ रूपयौवनसंपन्नंद्योतमानमिवश्रिया ९० जीवंतमेवपश्यामिमिमनसानात्रसंशयः ॥ विनाशोना
स्यनहिवैसुखंप्राप्स्यथमानुषाः ९१ पुत्रशोकाभितप्तानांमृतानामद्यवःक्षमम् ॥ सुखसंभावनंकृत्वाधारयित्वासुखंस्वयं ॥ त्यक्त्वागमिष्यथक्वाद्यसमुत्सृज्याल्पबु
द्धिवत् ९२ ॥ भीष्मउवाच ॥ तथाधर्मविरोधेनप्रियमिथ्याभिधायिना ॥ श्मशानवासिनानित्यंरात्रिंमृगयतान्नृप ९३ ततोमध्यस्थतांनीतावचनैरमृतोपमैः ॥
जंबुकेनस्वकार्यार्थिबांधवास्तस्यधिष्ठिताः ९४ ॥ गृध्रउवाच ॥ अयंप्रेतसमाकीर्णोयक्षराक्षससेवितः ॥ दारुणःकाननोद्देशःकौशिकैरभिनादितः ९५ भीमःसु
घोरश्चतथानीलमेघसमप्रभः ॥ अस्मिञ्छवंपरित्यज्यप्रेतकार्याण्युपासत ९६ भानुर्यावत्प्रयात्यस्तंयावच्चविमलादिशः ॥ तावदेनंपरित्यज्यप्रेतकार्याण्युपास
त ९७ नदंतिपरुषंश्येनाःशिवाःक्रोशंतिदारुणम् ॥ मृगेंद्राःप्रतिनंदंतिरविरस्तंचगच्छति ९८ चिताधूमेननीलेनसंरज्यंतेचपादपाः ॥ श्मशानेचनिराहाराः
प्रतिनर्दंतिदेवताः ९९ सर्वेविकृतदेहाश्चाप्यस्मिन्देशेसुदारुणे ॥ युष्मान्प्रधर्षयिष्यंतिविकृतामांसभोजिनः १०० क्रूरश्चायंवनोद्देशोभयमद्यभविष्यति ॥ त्यज्य
तांकाष्ठभूतोयंमृष्यतांजांबुकंवचः १ यदिजंबुकवाक्यानिनिष्फलान्यनृतानिच ॥ श्रोष्यथभ्रष्टविज्ञानास्ततःसर्वेविनंक्ष्यथ २ ॥ जंबुकउवाच ॥ स्थीयतांनेहभे
तव्यंयावत्तपतिभास्करः ॥ तावदस्मिन्सुतेस्नेहादनिर्वेदेनवर्तत ३ स्वैरंरुदंतोविश्रब्धाश्चिरंस्नेहेनपश्यत ॥ स्थीयतांयावदादित्यःकिंचक्रव्यादभाषितैः ४
यदिगृध्रस्यवाक्यानितीव्राणिरभसानिच ॥ गृह्णीतमोहितात्मानःसुतोवोनभविष्यति ५ ॥ भीष्मउवाच ॥ गृध्रोस्तमित्याहगतोगतोनेतिचजंबुकः ॥ मृतस्यतं
परिजनमूचतुस्तौक्षुधान्वितौ ६ स्वकार्यबद्धकक्षौतौराजन्गृध्रोऽथजंबुकः ॥ क्षुत्पिपासापरिश्रांतौशास्त्रमालंब्यजल्पतः ७ तयोर्विज्ञानविदुषोर्द्वयोर्मृगपतत्रिणोः ॥
वाक्यैरमृतकल्पैस्तैःप्रातिष्ठंतिव्रजंतिच ८ शोकदैन्यसमाविष्टारुदंतस्तस्थिरेतदा ॥ स्वकार्यकुशलाभ्यांतिसंभ्राम्यंतेहनैपुणात् ९ तथातयोर्विवदतोर्विज्ञानविदुषो
र्द्वयोः ॥ बांधवानांस्थितानांचाप्युपातिष्ठतशंकरः ११० देव्याप्रणोदितोदेवःकारुण्यार्द्रीकृतेक्षणः ॥ ततस्तानाहमनुजान्वरदोऽस्मीतिशंकरः ११ तेप्रत्यूचु
रिदंवाक्यंदुःखिताःप्रणताःस्थिताः ॥ एकपुत्रविहीनानांसर्वेषांजीवितार्थिनाम् १२ पुत्रस्यनोजीवदानाज्जीवितंदातुमर्हसि ॥ एवमुक्तःसभगवान्वारिपूर्णेन
चक्षुषा १३ जीवितंस्मकुमारायप्रादाद्वर्षशतानिवै ॥ तथागोमायुगृध्राभ्यांप्राददत्क्षुद्विनाशनम् १४ वरंपिनाकीभगवान्सर्वभूतहितेरतः ॥ ततःप्रणम्यतेदे
वंप्रायोहर्षसमन्विताः १५ कृतकृत्याःसुखंहृष्टाःप्रातिष्ठंततदाविभो ॥ अनिर्वेदेनदीर्घेणनिश्चयेनध्रुवेणच ११६ ॥२१॥

१७ । १८ । १९। २० ।२१ । २२ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे त्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ बलिनःप्रत्यमित्रस्येति १ । २। ३ । ४ यद्यापन्नो

देवदेवप्रसादाच्चक्षिप्रंफलमवाप्यते ॥ पश्यदैवस्यसंयोगंबांधवानांचनिश्चयम् ११७ कृपणानांतुरुदतांकृतमश्रुप्रमार्जनम् ॥ पश्यचाल्पेनकालेननिश्चयान्वेषणे
नच १८ प्रसादंशंकरात्प्राप्यदुःखिताःसुखमाप्नुवन् ॥ तेविस्मिताःप्रहृष्टाश्चपुत्रसंजीवनात्पुनः १९ बभूवुर्भरतश्रेष्ठप्रसादाच्छंकरस्यवै ॥ ततस्तेत्वरिताराजं
स्त्यक्त्वाशोकंशिशुद्भवम् २० विविशुःपुत्रमादायनगरंहृष्टमानसाः ॥ एषाबुद्धिःसमस्तानांचातुर्वर्ण्येनदर्शिता २१ धर्मार्थमोक्षसंयुक्तमितिहासमिमंशृणु ॥
श्रुत्वामनुष्यःसततमिहामुत्रप्रमोदते १२२ ॥ इतिश्रीम० शां० आप०गृध्रगोमायुसंवादेकुमारसंजीवनेत्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥ ७ ॥
॥ युधिष्ठिरउवाच ॥ बलिनःप्रत्यमित्रस्यनित्यमासन्नवर्तिनः ॥ उपकारापकाराभ्यांसमर्थस्योद्यतस्यच १ मोहाद्विकत्थनामात्रैरसारोऽल्पबलोलघुः ॥ वाग्भि
रप्रतिरूपाभिरभिद्रुह्यपितामह २ आत्मनोबलमास्थायकथंवर्तेतमानवः ॥ आगच्छतोऽतिक्रुद्धस्यतस्योद्धरणकाम्यया ३ ॥ भीष्मउवाच ॥ अत्राप्युदाह
रंतीममितिहासंपुरातनम् ॥ संवादंभरतश्रेष्ठशाल्मलेःपवनस्यच ४ हिमवंतंसमासाद्यमहानासीद्वनस्पतिः ॥ वर्षपूगाभिसंवृद्धःशाखीस्कंधीपलाशवान् ५
तत्रस्मभत्तमातंगाघर्मार्ताःश्रमकर्शिताः ॥ विश्रम्यंतिमहाबाहोतथाऽन्यामृगजातयः ६ नल्वमात्रपरीणाहोघनच्छायोवनस्पतिः ॥ सारिकाशुकसंजुष्टःपु
ष्पवान्फलवानपि ७ सार्थिकावणिजश्चापितापसाश्चवनौकसः ॥ वसंतितत्रमार्गस्थाःसुरम्येनगसत्तमे ८ तस्यताविपुलाःशाखादृष्ट्वास्कंधंचसर्वशः ॥ अभिगम्या
ब्रवीदेनंनारदोभरतर्षभ ९ अहोनुरमणीयस्त्वमहोचासिमनोहरः ॥ प्रियामहेत्वयानित्यंतरुप्रवरशाल्मले १० सदैवशकुनास्तातमृगाश्चाथतथागजाः ॥ वसं
तितवसंहृष्टामनोहरमनोहराः ११ तवशाखामहाशाखस्कंधांश्चविपुलांस्तथा ॥ नैवप्रभग्नान्पश्यामिमारुतेनकथंचन १२ किंनुतेपवनस्तातप्रीतिमानथवा
सुहृत् ॥ त्वांरक्षतिसदायेनवनेऽत्रपवनोध्रुवं १३ भगवान्पवनःस्थानाद्वृक्षानुच्चावचानपि ॥ पर्वतानांचशिखराण्याचालयतिवेगवान् १४ शोषयत्येवपातालंवहन्
गंधवहःशुचिः ॥ सरांसिसरितश्चैवसागरांश्चतथैवच १५ संरक्षतित्वांपवनःसखित्वेननसंशयः ॥ तस्मात्त्वंबहुशाखोऽपिपर्णवान्पुष्पवानपि १६ इदंचरमणीयंते
प्रतिभातिवनस्पते ॥ यदिमेविहगास्तातरमंतेमुदितास्त्वयि १७ एषांपृथक्समस्तानांश्रूयतेमधुरस्वरः ॥ पुष्पसंमोदनेकालेवाशतांसुमनोहरम् १८ तथेमेगर्जि
तानागाःस्वयूथकुलशोभिताः ॥ घर्मार्तास्त्वांसमासाद्यसुखंविंदंतिशाल्मले १९ तथैवमृगजातीभिरन्याभिरभिशोभसे ॥ तथासर्वाधिवासैश्चशोभसेमेरुवद्द्रुम २०

राजादैवेननानुगृह्यतेतदातमेवशरणीकुर्यात् । यदितुत्राकृगुरतयातेनसहविरोधंकरोतितदाकृत्स्नंस्वपरिग्रहंस्वयमेवत्यक्त्वास्वात्ममात्रंरक्षेत् एतत्पवनशाल्मलिसंवादाख्यायिकयादर्शयति
अत्रापीत्यादिना ५ । ६ नल्वःहस्तानांशतचतुष्टयं परीणाहःस्थूलत्वंवैपुल्यमितियावत् शेषंसुगमं ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणि नीलकंठीयेभारतभावदीपे चतुष्पंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अत्रबंधुत्वादिति एवमुक्त्वाद्रिवीति ततो



ब्राह्मणैश्चतपःसिद्धैस्तापसैःश्रमणैस्तथा ॥ त्रिविष्टपसमंमन्येतवायतनमेवहि २१ ॥ इतिश्रीमहा० शां० आप०पवनशाल्मलिसंवादेचतुष्पंचाशदधिकशत
तमोऽध्यायः ॥ १५४ ॥ ॥ नारदउवाच ॥ बंधुत्वादथवासख्याच्छाल्मलेनात्रसंशयः ॥ पालयत्येवसततंभीमःसर्वत्रगोऽनिलः १ न्यग्भावंपरमंवायोः
शाल्मलेत्वमुपागतः ॥ तवाहमस्मीतिसदायेनरक्षतिमारुतः २ नतंपश्याम्यहंवृक्षंपर्वतंवेश्मचेदृशम् ॥ यंनवायुबलाद्भग्नंपृथिव्यामितिमेमतिः ३ त्वंपुनःका
रणैर्नूनंरक्ष्यसेशाल्मलेयथा ॥ वायुनासपरीवारस्तेनतिष्ठस्यसंशयम ४ ॥ शाल्मलिरुवाच ॥ नमेवायुःसखाब्रह्मन्नबंधुर्नचमेसुहृत् ॥ परमेष्ठीतथानैवयेनर
क्षतिवाऽनिलः ५ ममतेजोबलंभीमंवायोरपिहिनारद ॥ कलामष्टादशींप्राणैर्नमेप्राप्नोतिमारुतः ६ आगच्छन्परुषोवायुर्मयाविष्टंभितोबलात् ॥ भंजनद्रुमान्
पर्वतांश्चयच्चान्यदपिकिंचन ७ समयाबहुशोभग्नःप्रभंजन्वैप्रभंजनः ॥ तस्मान्नबिभ्येदेवर्षेक्रुद्धादपिसमीरणात् ८ ॥ नारदउवाच ॥ शाल्मलेविपरीतंतेदर्शनं
नात्रसंशयः ॥ नहिवायोर्बलेनास्तिभूतंतुल्यबलंक्वचित् ९ इंद्रोयमोवैश्रवणोवरुणश्चजलेश्वरः ॥ नैतेऽपितुल्यामरुतःकिंपुनस्त्वंवनस्पते १० यच्चकिंचिदिहप्रा
णीचेष्टतेशाल्मलेभुवि ॥ सर्वत्रभगवान्वायुश्चेष्टाप्राणकरःप्रभुः ११ एषचेष्टयतेसम्यक्प्राणिनःसम्यगायतः ॥ असम्यगायतोभूयश्चेष्टतेविकृतंनृषु १२ सत्वमे
वंविधंवायुंसर्वसत्वभृतांवरम् ॥ नपूजयसिपूज्यंतंकिमन्यद्बुद्धिलाघवात् १३ असारश्चापिदुर्मेधाःकेवलंबहुभाषसे ॥ क्रोधादिभिरवच्छन्नोमिथ्यावदसिशाल्मले १४
ममरोषःसमुत्पन्नस्त्वय्येवंसंप्रभाषति ॥ ब्रवीम्येषस्वयंवायोस्तवदुर्भाषितंबहु १५ चंदनैःस्यंदनैःशालैःसरलैर्देवदारुभिः ॥ वेतसैर्धन्वनैश्चापियेचान्येबलवत्तराः
१६ तैश्चापिनैवंदुर्बुद्धेक्षिप्तोवायुःकृतात्मभिः ॥ तेऽपिजानंतिवायोश्चबलमात्मनएवच १७ तस्मात्तेवैनमस्यंतिश्वसनंतरुसत्तमाः ॥ त्वंतुमोहान्नजानीषेवायोर्ब
लमनंतकम् १८ एवंतस्माद्गमिष्यामिसकाशंमातरिश्वनः १९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणि पवनशाल्मलिसंवादे पंचपंचाशदधिकशत
तमोऽध्यायः ॥ १५५ ॥ ॥ भीष्मउवाच ॥ एवमुक्त्वातुराजेंद्रशाल्मलिंब्रह्मवित्तमः ॥ नारदःपवनेसर्वंशाल्मलेर्वाक्यमब्रवीत् १ ॥ नारदउवाच ॥
हिमवत्पृष्ठजःकश्चिच्छाल्मलिःपरिवारवान् ॥ बृहन्मूलोबृहच्छायःसत्वांवायोऽवमन्यते २ बहुव्याक्षेपयुक्तानित्वामाहवचनानिसः ॥ नयुक्तानिमयावायोतानि
वक्तुंतवाग्रतः ३ जानामित्वामहंवायोसर्वप्राणभृतांवरम् ॥ वरिष्ठंचगरिष्ठंचक्रोधेवैवस्वतंयथा ४



निश्चित्येतिचाध्यायत्रयंस्पष्टार्थं १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये
भारतभावदीपेपंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ एवमिति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे षट्पंचाशदधिकशततमो

भीष्मउवाच ॥ एतत्तुवचनंश्रुत्वानारदस्यसमीरणः ॥ शाल्मलिंतमुपागम्यक्रुद्धोवचनमब्रवीत् ५ ॥ वायुरुवाच ॥ शाल्मलेनारदोमच्छंस्त्वयोक्तोमद्विगर्हणम् ॥
अहंवायुःप्रभावंतेदर्शयाम्यात्मनोबलम् ६ अहंत्वामभिजानामिविदितश्चासिमेद्रुम ॥ पितामहःप्रजासर्गेत्वयिविश्रांतवान्प्रभुः ७ तस्यविश्रमणादेषप्रसादोम
त्कृतस्तव ॥ रक्ष्यसेतेनदुर्बुद्धेनात्मवीर्याद्द्रुमाधम ८ यन्मांत्वमवजानीषेयथाऽन्यंप्राकृतंतथा ॥ दर्शयाम्येषचात्मानंयथामांनावमन्यसे ९ ॥ भीष्मउवाच ॥
एवमुक्तस्ततःप्राहशाल्मलिःप्रहसन्निव ॥ पवनत्वंचमेक्रुद्धोदर्शयात्मानमात्मना १० मयिवैत्यज्यतांक्रोधःकिंमेक्रुद्धःकरिष्यसि ॥ नतेबिभेमिपवनयद्यपित्वंस्व
यंप्रभुः ११ बलाधिकोऽहंत्वत्तश्चनभीःकार्यामयातव ॥ येतुबुद्ध्याहिबलिनस्तेभवंतिबलीयसः १२ प्राणमात्रबलायेवैनैवतेबलिनोमताः ॥ इत्येवमुक्तःपवनःश्व
इत्येवाब्रवीद्वचः १३ दर्शयिष्यामितेतेजस्ततोरात्रिरुपागमत् ॥ अथनिश्चित्यमनसाशाल्मलिर्वातकारितम् १४ पश्यमानस्तदाऽऽत्मानमसमंमातरिश्वना ॥
नारदेयन्मयाप्रोक्तंवचनंप्रतितन्मृषा १५ असमर्थोह्यहंवायोर्बलेनबलवान्हिसः ॥ मारुतोबलवान्नित्यंयथावैनारदोऽब्रवीत् १६ अहंतुदुर्बलोऽन्येभ्योवृक्षेभ्योनात्र
संशयः ॥ किंतुबुद्ध्यासमोनास्तिमयाकश्चिद्वनस्पतिः ॥ तदहंबुद्धिमास्थायभयंमोक्ष्येसमीरणात् ॥ यदितांबुद्धिमास्थायतिष्ठेयुःपर्णिनोवने १८ अरिष्टाःस्युः
सदाक्रुद्धात्पवनान्नात्रसंशयः ॥ तेतुबालानजानंतियथावैतान्समीरणः ॥ समीरयतिसंक्रुद्धोयथाजानाम्यहंतथा १९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआप
द्धर्मपर्वणि पवनशाल्मलिसंवादेषट्पंचाशदधिकशततमोऽध्यायः ॥ १५६ ॥ ॥ भीष्मउवाच ॥ ततोनिश्चित्यमनसाशाल्मलिःक्षुभितस्तदा ॥ शाखाःस्कं
धान्प्रशाखाश्चस्वयमेवव्यशातयत् १ सपरित्यज्यशाखाश्चपत्राणिकुसुमानिच ॥ प्रभातेवायुमायांतंप्रत्यैक्षतवनस्पतिः २ ततःक्रुद्धःश्वसन्वायुःपातयन्वैमहा
द्रुमान् ॥ आजगामाथतंदेशमास्तेयत्रसशाल्मलिः ३ तंहीनपर्णंपतिताग्रशाखंविशीर्णपुष्पंप्रसमीक्ष्यवायुः ॥ उवाचवाक्यंस्मयमानएवंमुदायुतःशाल्मलिमुग्र
शाखम् ४ ॥ वायुरुवाच ॥ अहमप्येवमेवत्वांकुर्वाणःशाल्मलेरुषा ॥ आत्मनायत्कृतंकृच्छ्रंशाखानामपकर्षणम् ५ हीनपुष्पाग्रशाखस्त्वंशीर्णांकुरपलाशकः
आत्मदुर्मंत्रितेनेहमद्वीर्यवशगःकृतः ६ ॥ भीष्मउवाच ॥ एतच्छ्रुत्वावचोवायोःशाल्मलिर्व्रीडितस्तदा ॥ अतप्यतवचःस्मृत्वानारदोयत्तदाऽब्रवीत् ७ एवंहि
राजशार्दूलदुर्बलःसन्बलीयसा ॥ वैरमारभतेबालस्तप्यतेशाल्मलिर्यथा ८ तस्माद्वैरंनकुर्वीतदुर्बलोबलवत्तरैः ॥ शोचेद्धिवैरंकुर्वाणोयथावैशाल्मलिस्तथा ९
नहिवैरंमहात्मानोविवृण्वंत्यपकारिषु ॥ शनैःशनैर्महाराजदर्शयंतिस्मतेबलम् १०वैरंनकुर्वीतनरोदुर्बुद्धिर्बुद्धिजीविना॥ बुद्धिर्बुद्धिमतोयातितृणेष्विवहुताशनः ११

ऽध्यायः ॥ १५६ ॥ ॥ ७ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११

१२ । १३ । १४ । १५ । १६ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे सप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ तदेवमापद्धर्मानुक्त्वाराज्ञामराज्ञांचसर्वापन्मूल
भूतान्दोषानुत्पत्तिप्रतिबंधकान्गुणांश्चलोभाज्ञानदमतपःसत्यादीन्हेयानुपादेयांश्चक्रमेणाध्यायसप्तकेनाह पापस्ययदधिष्ठानमित्यादिना १ ग्राहइवग्राहोग्रासकर्ता २ येनलोभेनजनाःपापकृतो

॥२३॥ नहिबुद्ध्यासमंकिंचिद्विद्यतेपुरुषेनृप ॥ तथाबलेनराजेंद्रनसमोऽस्तीहकश्चन १२ तस्मात्क्षमेतबालायजडांधबधिरायच ॥ बलाधिकायराजेंद्रतद्दृष्टंत्वयिश अ०
त्रुहन् १३ अक्षौहिण्योदशैकाचसप्तचैवमहाद्युते ॥ बलेननसमाराजन्नर्जुनस्यमहात्मनः १४ निहताश्चैवभग्नाश्चपांडवेनयशस्विना ॥ चरताबलमास्थायपा
कशासनिनामृधे १५ उक्ताश्चतेराजधर्माआपद्धर्माश्चभारत ॥ विस्तरेणमहाराजकिंभूयःश्रोतुमिच्छसि १६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणि ॥१५८॥
पवनशाल्मलिसंवादेसप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ युधिष्ठिरउवाच ॥ पापस्ययदधिष्ठानंयतःपापंप्रवर्तते ॥ एतदिच्छाम्यहंश्रोतुंतत्त्वे
नभरतर्षभ १ ॥ भीष्मउवाच ॥ पापस्ययदधिष्ठानंतच्छृणुष्वनराधिप ॥ एकोलोभोमहाग्राहोलोभात्पापंप्रवर्तते २ अतःपापमधर्मश्चतथादुःखमनुत्तमम् ॥
निकृत्यामूलमेतद्धियेनपापकृतोजनाः ३ लोभात्क्रोधःप्रभवतिलोभात्कामःप्रवर्तते ॥ लोभान्मोहश्चमायाचमानःस्तंभःपरासुता ४ अक्षमाह्रीःपरित्यागःश्रीना
शोधर्मसंक्षयः ॥ अभिध्याऽप्रख्यताचैवसर्वंलोभात्प्रवर्तते ५ अत्यागश्चातितर्षश्चविकर्मसुचयाःक्रियाः ॥ कुलविद्यामदश्चैवरूपैश्वर्यमदस्तथा ६ सर्वभूतेष्व
भिद्रोहःसर्वभूतेष्वसत्कृतिः ॥ सर्वभूतेष्वविश्वासःसर्वभूतेष्वनार्जवम् ७ हरणंपरवित्तानांपरदाराभिमर्शनम् ॥ वाग्वेगोमनसोवेगोनिंदावेगस्तथैवच ८ उप
स्थोदरयोर्वेगोमृत्युवेगश्चदारुणः ॥ ईर्ष्यावेगश्चबलवान्मिथ्यावेगश्चदुर्जयः ९ रसवेगश्चदुर्वार्यःश्रोत्रवेगश्चदुःसहः ॥ कुत्साविकत्थामात्सर्यंपापंदुष्करकारिता १०
साहसानांचसर्वेषामकार्याणांक्रियास्तथा ॥ जातौबाल्येचकौमारेयौवनेचापिमानवाः ११ नसंत्यजंत्यात्मकर्मयोनजीर्यतिजीर्यतः ॥ योनपूरयितुंशक्योलोभः
प्राप्त्याकुरूद्वह १२ नित्यंगंभीरतोयाभिरापगाभिरिवोदधिः ॥ नप्रहृष्यतियोलाभैःकामैर्यश्चनतृप्यति १३ योनदेवैर्नगंधर्वैर्नासुरैर्नमहोरगैः ॥ ज्ञायतेनृपतत्त्वेन
सर्वैर्भूतगणैस्तथा १४ सलोभःसहमोहेनविजेतव्योजितात्मना ॥ दंभोद्रोहश्चनिंदाचपैशुन्यंमत्सरस्तथा १५ भवंत्येतानिकौरव्यलुब्धानामकृतात्मनाम् ॥ सुम
हांत्यपिशास्त्राणिधारयंतिबहुश्रुताः १६ छेत्तारःसंशयानांचक्लिश्यंतीहाल्पबुद्धयः ॥ द्वेषक्रोधप्रसक्ताश्चशिष्टाचारबहिष्कृताः १७ अंतःक्रूरावाङ्मधुराःकूपा
श्छन्नास्तृणैरिव ॥ धर्मवैतंसिकाःक्षुद्रामुष्णंतिध्वजिनोजगत् १८ कुर्वतेचबहून्मार्गांस्तान्हेतुबलमाश्रिताः ॥ सर्वान्मार्गान्विलुंपंतिलोभज्ञानेष्ववस्थिताः १९ ॥२३॥

भवंति ३ परासुतापराधीनप्राणत्वं ४ अभिध्याचिंता अप्रख्यता अपकीर्तिः ५ अत्यागादयोऽकार्यक्रियांताः सर्वेदोषाःलोभात्प्रवर्तंतइतिपूर्वेणान्वयः ६ । ७ । ८ । ९ । १० जातौजन्मनि ११ यो
नपूरयितुंशक्यइत्यादीनांसलोभोजेतव्यइतितृतीयेनान्वयः १२ । १३ । १४ । १५ । १६ अल्पेऽपिधनादौबुद्धिर्येषांतेऽल्पबुद्धयोलुब्धाइत्यर्थः १७ धर्मवैतंसिकाःधर्मव्याजेनेतरान्हिंसंतः
ध्वजिनोधर्मख्यापकाः १८ हेतुबलं 'येनकेनाप्युपायेनयस्यकस्यापिदेहिनः॥ संतोषंजनयेत्प्राज्ञस्तदेवेश्वरपूजनम्'इत्यागमबलेनान्योन्यसंतोषहेतुतयापारदार्यादेरपिधर्मत्वंवर्णयंतीतिभावः १९

संस्थास्थितिःविक्रियतेऽन्यथाभवतिसातथैवप्रपद्यतेप्रथांयाति २० । २१ । २२ । २३ । २४ । २५ सर्वप्राणपर्यंतमपिदेयंपरार्थेदातुंयोग्यंयेषांते २६ । २७ । २८ पृच्छचधर्ममितिशेषः २९
क्रियाआहारादयः ३० गुह्यंगोपनीयंकंचित्पाखंडधर्मं ३१ अमोहइतिच्छेदः येषांवृत्तमितिशेषः ३२ । ३३ । ३४ हेशुभहेभद्र सर्वेवाक्प्रलापाःगुणवंतोभवंतितान्देवान्प्रधानान् अन्येतुमूढानां

धर्मस्यह्रियमाणस्यलोभग्रस्तैर्दुरात्मभिः ॥ यायाविक्रियतेसंस्थाततःसाऽपिप्रपद्यते २० दर्पःक्रोधोमदःस्वप्नोहर्षःशोकोऽतिमानिता ॥ एतएवहिकौरव्यदृश्यं
तेलुब्धबुद्धिषु २१ एतानशिष्टान्बुध्यस्वनित्यंलोभसमन्वितान् ॥ शिष्टांस्तुपरिपृच्छेथायान्वक्ष्यामिशुचिव्रतान् २२ येष्वावृत्तिभयंनास्तिपरलोकभयंनच ॥
नामिषेषुप्रसंगोऽस्तिनप्रियेष्वप्रियेषुच २३ शिष्टाचारःप्रियोयेषुदमोयेषुप्रतिष्ठितः ॥ सुखंदुःखंसमंयेषांसत्यंयेषांपरायणम् २४ दातारोनग्रहीतारोदयावंतस्त
थैवच ॥ पितृदेवातिथेयाश्चनित्योद्युक्तास्तथैवच २५ सर्वोपकारिणोवीराःसर्वधर्मानुपालकाः ॥ सर्वभूतहिताश्चैवसर्वदेयाश्चभारत २६ नतेचालयितुंशक्याध
र्मव्यापारकारिणः ॥ नतेषांभिद्यतेवृत्तंयत्पुरासाधुभिःकृतम् २७ नत्रासिनोनचपलानरौद्राःसत्पथेस्थिताः ॥ तेसेव्याःसाधुभिर्नित्यंयेष्वहिंसाप्रतिष्ठिता २८
कामक्रोधव्यपेतायेनिर्ममानिरहंकृताः ॥ सुव्रताःस्थिरमर्यादास्तानुपास्वचपृच्छच २९ नधनार्थंयशोर्थंवाधर्मस्तेषांयुधिष्ठिर ॥ अवश्यंकार्यइत्येवशरीरस्य
क्रियास्तथा ३० नभयंक्रोधचापल्येनशोकस्तेषुविद्यते ॥ नधर्मध्वजिनश्चैवनगुह्यंकंचिदास्थिताः ३१ येष्वलोभस्तथाऽमोहोयेचसत्यार्जवेस्थिताः ॥ तेषुकौं
तेयरज्येथायेषांनभ्रश्यतेपुनः ३२ येनहृष्यंतिलाभेषुनालाभेषुव्यथंतिच ॥ निर्ममानिरहंकाराःसत्वस्थाःसमदर्शिनः ३३ लाभालाभौसुखदुःखेचतातप्रियाप्रि
येमरणंजीवितंच ॥ समानियेषांस्थिरविक्रमाणांबुभुत्सतांसत्पथेस्थितानाम् ३४ धर्मप्रियांस्तान्सुमहानुभावान्दांतोऽप्रमत्तश्चसमर्चयेथाः ॥ दैवात्सर्वेगुणवंतो
भवंतिशुभाशुभेवाक्प्रलापास्तथाऽन्ये ३५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिआपन्मूलभूतदोषकथनेअष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८॥
युधिष्ठिरउवाच ॥ अनर्थानामधिष्ठानमुक्तोलोभःपितामह ॥ अज्ञानमपिवैतातश्रोतुमिच्छामितत्त्वतः १ ॥ भीष्मउवाच ॥ करोतिपापंयोऽज्ञानान्नात्मनो
वेत्तिचक्षयम् ॥ प्रद्वेष्टिसाधुवृत्तांश्चसलोकस्यैतिवाच्यताम् २ अज्ञानान्निरयंयातितथाज्ञानेनदुर्गतिम् ॥ अज्ञानात्क्लेशमाप्नोतितथाऽऽपत्सुनिमज्जति ३
युधिष्ठिरउवाच ॥ अज्ञानस्यप्रवृत्तिंचस्थानंवृद्धिक्षयोदयौ ॥ मूलंयोगंगतिंकालंकारणंहेतुमेवच ४ श्रोतुमिच्छामितत्त्वेनयथावदिहपार्थिव ॥ अज्ञानप्रसवंही
दंयद्दुःखमुपलभ्यते ५ ॥ भीष्मउवाच ॥ रागोद्वेषस्तथामोहोहर्षःशोकोभिमानिता ॥ कामःक्रोधश्चदर्पश्चतंद्रीचालस्यमेवच ६ इच्छाद्वेषस्तथातापः
परवृद्ध्युपतापिता ॥ अज्ञानमेतन्निर्दिष्टंपापानांचैवयाःक्रिया ७

वाक्प्रलापाअशुभेअशुभार्थमेवभवंतीतिशेषः
लोभंजेतुकामेनसत्संगःकर्तव्यइत्यर्थः ३५ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेटीकायामष्टपंचाशदधिकशततमोऽध्यायः ॥ १५८ ॥ ॥७॥ ॥ अनर्थानामिति
१ वाच्यतांनिंद्यताम् २ । ३ अज्ञानस्यस्वरूपेणसहप्रवृत्त्यादयोद्वादशप्रश्नाः ४ । ५ स्वरूपमाहद्वाभ्यां रागइति ६ कार्येकारणोपचाराद्रागादयएवाज्ञानं पापानांक्रियाःहिंसादयः ७

एतस्येतत्प्रवृत्तेः प्रवृत्तिंतत्रयंशृणुः ८ मुख्यमज्ञानस्वरूपमाह उभाविति अत्रापिपूर्ववत्कारणेकार्योपचारः ९ लोभप्रभवंलोभात्तस्यप्रवृत्तिः लोभवृद्धौवृद्धिलोभस्यानेसाम्येस्थानंसमता लोभेक्षी
णेक्षीणंभवतिउपैतिउदेतिलोभस्योदयेउदेतीत्यर्थः विविधांगतिंदुःखसंतापमोहादिरूपांप्रापयितुमितिशेषः तदेवंषण्णांप्रश्नानामुत्तरमुक्तम् १० लोभस्याज्ञानात्मकस्यमूलंमोहोवैचित्र्यंका
र्याकार्यप्रविपत्तिरूपम् । एतेनैवमोहसंयोगएवाज्ञानयोगइत्यष्टमस्याप्युत्तरम् । कालात्मनामितितेनाज्ञानस्यगतिःस्वर्गनरकनरसुरतिर्यग्रूपेतिनवमस्योत्तरम् । लोभस्यच्छेदभेदादि

एतस्यवाप्रवृत्तेश्चवृद्ध्यादीन्यांश्चपृच्छसि ॥ विस्तरेणमहाराजशृणुतत्त्वविशेषतः ८ उभावेतौसमफलौसमदोषौचभारत ॥ अज्ञानंचातिलोभश्चाप्येकंजानीहिपा
र्थिव ९ लोभप्रभवमज्ञानंवृद्धंभूयःप्रवर्द्धते ॥ स्थानेस्थानेभवेत्क्षीणमुपैतिविविधांगतिम् १० मूलंलोभस्यमोहोवैकालात्मगतिरेवच ॥ छिन्नेभिन्नेतथालोभेकारणं
कालएवच ११ तस्याज्ञानाद्धिलोभोहिलोभादज्ञानमेवच ॥ सर्वदोषास्तथालोभात्तस्माल्लोभंविवर्जयेत् १२ जनकोयुवनाश्वश्चवृषादर्भिःप्रसेनजित् ॥ लोभक्षया
द्दिवंप्राप्तास्तथैवान्येनराधिपाः १३ प्रत्यक्षंतुकुरुश्रेष्ठत्यजलोभमिहात्मना ॥ त्यक्त्वालोभंसुखंलोकेप्रेत्यचानुचरिष्यसि १४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआप
द्धर्मपर्वणिआज्ञानमाहात्म्येएकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥ ॥ युधिष्ठिरउवाच ॥ स्वाध्यायेकृतयत्नस्यनरस्यचपितामह ॥ धर्मकामस्यध
र्मात्मन्किंनुश्रेयइहोच्यते १ बहुधादर्शनेलोकेश्रेयोयदिहमन्यसे ॥ अस्मिँल्लोकेपरेचैवतन्मेब्रूहिपितामह २ महानयंधर्मपथोबहुशाखश्चभारत ॥ किंस्विदेवेहध
र्माणामनुष्ठेयतमंमतम् ३ धर्मस्यमहतोराजन्बहुशाखस्यतत्त्वतः ॥ यन्मूलंपरमंताततत्सर्वंब्रूह्यशेषतः ४ ॥ भीष्मउवाच ॥ हंततेकथयिष्यामियेनश्रेयोह्यवा
प्स्यसि ॥ पीत्वाऽमृतमिवप्राज्ञोज्ञानतृप्तोभविष्यसि ५ धर्मस्यविधयोनैकेयेवैप्रोक्तामहर्षिभिः ॥ स्वंस्वंविज्ञानमाश्रित्यदमस्तेषांपरायणम् ६ दमंनिःश्रेयसंप्राहु
र्वृद्धानिश्चितदर्शिनः ॥ ब्राह्मणस्यविशेषेणदमोधर्मःसनातनः ७ दमात्तस्यक्रियासिद्धिर्यथावदुपलभ्यते ॥ दमोदानंतथायज्ञानधीतंचातिवर्तते ८ दमस्तेजोवर्ध
यतिपवित्रंचदमःपरम् ॥ विपाप्मातेजसायुक्तःपुरुषोविंदतेमहत् ९ दमेनसदृशंधर्मनान्यंलोकेषुशुश्रुम ॥ दमोहिपरमोलोकेप्रशस्तःसर्वधर्मिणाम् १० प्रेत्यचा
त्रमनुष्येंद्रपरमंविंदतेसुखम् ॥ दमेनहिसमायुक्तोमहांतंधर्ममश्नुते ११ सुखंदांतःप्रस्वपितिसुखंचप्रतिबुध्यते ॥ सुखंपर्येतिलोकांश्चमनश्चास्यप्रसीदति १२ अदां
तःपुरुषःक्लेशमभीक्ष्णंप्रतिपद्यते ॥ अनर्थांश्चबहूनन्यान्प्रसृजत्यात्मदोषजान् १३ आश्रमेषुचतुर्ष्वाहुर्दममेवोत्तमंव्रतम् ॥ तस्यलिंगानिवक्ष्यामियेषांसमुदयोदमः १४

स्तस्यकालःयदालिप्स्यमानोऽर्थोविघ्नितोभवति तदैववैचित्र्यरूपस्याज्ञानस्यकालःइतिदशमस्योत्तरं । कारणंनिदानं हेतुःफलम् ११ तस्यकालस्यमूढस्यवा तदुभयमाह अज्ञानकारणाल्लो
भःकार्यफलं एवंलोभादज्ञानमित्यंतयोरुत्तरम् १२ । १३ । १४ ॥ इतिशांतिपर्वणि आपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥ ॥ ७ ॥
स्वाध्यायेइति १ । २ । ३ । ४ । ५ दमःइंद्रियनियमः परायणंपराकाष्ठा अत्रैवसर्वेधर्माअंतर्भूताइत्यर्थः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४



१५ । १६ पैशुनंदांतोनैवनिषेवतइत्युत्तरेणान्वयः स्तुतिनिंदयोरविसर्जनम् १७ दर्पगर्वस्तंभमविनयम् १८ अल्पेषुअनित्यसुखेषु कथंचनब्रह्मलोकलाभेपिनपूर्यतेनतृप्तोभवति १९ । २०
२१ । २२ । २३ वर्त्मस्वाभाविकःपंथाः यदन्येषांविहितंतज्ज्ञानिनःस्वभावसिद्धमित्यर्थः २४ निष्क्रम्यगृहादितिशेषः संन्यस्येत्यर्थः २५ । २६ अवाचिनोतिभोगेनव्ययीकरोति नचसं
चिनोति नसंगृह्णातितत्त्वज्ञस्यकर्माश्लेषस्मरणात् मैत्रायणंसर्वभूतेभ्योऽभयदानम् २७ अनेनदेवयानेनान्येनवापथागतइतिनज्ञायतेउत्क्रमणाभावात् । 'नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनी

क्षमाधृतिरहिंसाचसमतासत्यमार्जवम् ॥ इंद्रियाभिजयोदाक्ष्यंमार्दवंह्रीरचापलम् १५ अकार्पण्यमसंरंभःसंतोषःप्रियवादिता ॥ अविहिंसाऽनसूयाचाप्येषांसमु
दयोदमः १६ गुरुपूजाचकौरव्यदयाभूतेष्वपैशुनम् ॥ जनवादंमृषावादंस्तुतिनिंदाविसर्जनम् १७ कामंक्रोधंचलोभंचदर्पंस्तंभंविकत्थनम् ॥ रोषमीर्ष्याऽवमानं
चनैवदांतोनिषेवते १८ अनिंदितोह्यकामात्मानाल्पेष्वर्थ्यनसूयकः ॥ समुद्रकल्पःसनरोनकथंचनपूर्यते १९ अहंत्वयिममत्वंचमयितेषुतथाप्यहम् ॥ पूर्वसंबंधि
संयोगंनैतद्दांतोनिषेवते २० सर्वाग्राम्यास्तथाऽरण्यायाश्चलोकेप्रवृत्तयः ॥ निंदांचैवप्रशंसांचयोनाश्रयतिमुच्यते २१ मैत्रोऽथशीलसंपन्नःप्रसन्नात्मात्मविच्चयः ॥
मुक्तस्यविविधैःसंगैस्तस्यप्रेत्यफलंमहत् २२ सुवृत्तःशीलसंपन्नःप्रसन्नात्माऽऽत्मविद्बुधः ॥ प्राप्येहलोकेसत्कारंसुगतिंप्रतिपद्यते २३ कर्मयच्छुभमेवेहसद्भिराचरि
तंचयत् ॥ तदेवज्ञानयुक्तस्यमुनेर्वर्त्मनहीयते २४ निष्क्रम्यवनमास्थायज्ञानयुक्तोजितेंद्रियः ॥ कालाकांक्षीचरत्येवंब्रह्मभूयायकल्पते २५ अभयंयस्यभूतेभ्यो
भूतानामभयंयतः ॥ तस्यदेहाद्विमुक्तस्यभयंनास्तिकुतश्चन २६ अवाचिनोतिकर्माणिनचसंप्रचिनोतिह ॥ समःसर्वेषुभूतेषुमैत्रायणगतिश्चरेत् २७ शकुनीना
मिवाकाशेजलेवारिचरस्यच ॥ यथागतिर्नदृश्येततथातस्यनसंशयः २८ गृहानुत्सृज्ययोराजन्मोक्षमेवाभिपद्यते ॥ लोकास्तेजोमयास्तस्यकल्पंतेशाश्वतीःस
माः २९ संन्यस्यसर्वकर्माणिसंन्यस्यविधिवत्तपः ॥ संन्यस्यविविधाविद्यासर्वंसंन्यस्यचैवह ३० कामेशुचिरनावृत्तःप्रसन्नात्माऽऽत्मविच्छुचिः ॥ प्राप्येहलोकेस
त्कारंस्वर्गंसमभिपद्यते ३१ यच्चपैतामहंस्थानंब्रह्मराशिसमुद्भवम् ॥ गुहायांपिहितंनित्यंतद्दमेनाभिगम्यते ३२ ज्ञानारामस्यबुद्धस्यसर्वभूताविरोधिनः ॥ नावृत्ति
भयमस्तीहपरलोकभयंकुतः ३३ एकएवदमेदोषोद्वितीयोनोपपद्यते ॥ यदेनंक्षमयायुक्तमशक्तंमन्यतेजनः ३४ एकोऽस्यसुमहाप्राज्ञदोषःस्यात्सुमहान्गुणः ॥
क्षमयाविपुलालोकाःसुलभाहिसहिष्णुता ३५ दांतस्यकिमरण्येनतथाऽदांतस्यभारत ॥ यत्रैवनिवसेद्दांतस्तदरण्यंसचाश्रमः ३६ ॥ वैशंपायनउवाच ॥ एत
द्भीष्मस्यवचनंश्रुत्वाराजायुधिष्ठिरः ॥ अमृतेनेवसंतृप्तःप्रहृष्टःसमपद्यत ३७ पुनश्चपरिपप्रच्छभीष्मंधर्मभृतांवरम् ॥ ततःप्रीतःसचोवाचतस्मैसर्वंकुरूद्वहः ३८
९ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिदमकथनेषष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ यंतेब्रह्मैवसन्ब्रह्माप्येति'इतिश्रुतेरितिभावः २८ । २९ ३० कामेशुचिःसत्य
कामइत्यर्थः अनावृत्तःसर्वत्रकामाचारभाक् । 'तस्यसर्वेषुलोकेषुकामचारोभवति'इतिश्रुतेः शुचिस्त्यक्तकामःसत्कारंसत्यसंस्कारत्वादिगुणयोगेनसंमानमिहप्राप्यस्वर्गमभिपद्यतेविदेहकैवल्यकाले
३१ गुहायांहृत्पुंडरीके पैतामहंब्रह्मलोकाख्यम् ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणि नीलकंठीयेभारतभावदीपे षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

सर्वमिति १।२।३।४।५।६।७।८ नेति मातरमतिक्रम्याश्रमोन सर्वेष्वप्याश्रमेषुमातापालनीयैव तत्त्यागस्यसंन्यासिनोऽप्ययोगात् नास्तिदानसमागतिरितिपाठांतरेस्पष्टएवार्थः

॥ भीष्मउवाच ॥ सर्वमेततपोमूलंकवयःपरिचक्षते ॥ नह्यतप्ततपामूढःक्रियाफलमवाप्नुते १ प्रजापतिरिदंसर्वंतपसैवासृजत्प्रभुः ॥ तथैववेदानृषयस्तपसाप्र
तिपेदिरे २ तपसैवससर्जान्नंफलमूलानियानिच ॥ त्रीँल्लोकांस्तपसासिद्धाःपश्यंतिसुसमाहिताः ३ औषधान्यगदादीनिक्रियाश्चविविधास्तथा ॥ तपसैवहि
सिद्ध्यंतितपोमूलंहिसाधनम् ४ यद्दुरापंभवेत्किंचित्तत्सर्वंतपसोभवेत् ॥ ऐश्वर्यमृषयःप्राप्तास्तपसैवनसंशयः ५ सुरापोसंमतादायीभ्रूणहागुरुतल्पगः ॥ तप
सैवसुतप्तेननरःपापात्प्रमुच्यते ६ तपसोबहुरूपस्यतैस्तैर्द्वारैःप्रवर्ततः ॥ निवृत्त्यावर्तमानस्यतपोनानशनात्परम् ७ अहिंसासत्यवचनंदानमिंद्रियनिग्रहः ॥
एतेभ्योहिमहाराजतपोनानशनात्परम् ८ नदुष्करतरंदानान्नातिमातरमाश्रमः ॥ त्रैविद्येभ्यःपरंनास्तिसंन्यासःपरमंतपः ९ इंद्रियाणीहरक्षंतिस्वर्गधर्मा
भिगुप्तये ॥ तस्मादर्थेचधर्मेचतपोनानशनात्परम् १० ऋषयःपितरोदेवामनुष्यामृगपक्षिणः ॥ यानिचान्यानिभूतानिस्थावराणिचराणिच ११ तपःपरा
यणाःसर्वेसिध्यंतितपसाचते ॥ इत्येवंतपसादेवामहत्त्वंप्रतिपेदिरे १२ इमानीष्टविभागानिफलानितपसःसदा ॥ तपसाशक्यतेप्राप्तुंदेवत्वमपिनिश्चयात् १३
॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणितपःप्रशंसायांएकषष्टयधिकशततमोऽध्यायः ॥ १६१ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ सत्यंधर्मंप्रशंसंति
विप्रर्षिपितृदेवताः ॥ सत्यमिच्छाम्यहंश्रोतुंतन्मेब्रूहिपितामह १ सत्यंकिंलक्षणंराजन्कथंवातदवाप्यते ॥ सत्यंप्राप्यभवेत्किंचकथंचैवतदुच्यताम् २ भीष्म
उवाच ॥ चातुर्वर्ण्यस्यधर्माणांसंकरोनप्रशस्यते ॥ अविकारितमंसत्यंसर्ववर्णेषुभारत ३ सत्यंसत्सुसदाधर्मःसत्यंधर्मःसनातनः ॥ सत्यमेवनमस्येतसत्यंहिपरमा
गतिः ४ सत्यंधर्मस्तपोयोगःसत्यंब्रह्मसनातनम् ॥ सत्यंयज्ञःपरःप्रोक्तःसर्वंसत्येप्रतिष्ठितम् ५ आचारानिहसत्यस्ययथावदनुपूर्वशः ॥ लक्षणंचप्रवक्ष्यामि
सत्यस्येहयथाक्रमम् ६ प्राप्यतेचयथासत्यंतच्चश्रोतुमिहार्हसि ॥ सत्यंत्रयोदशविधंसर्वलोकेषुभारत ७ सत्यंचसमताचैवदमश्चैवनसंशयः ॥ अमात्सर्यंक्षमाचैव
ह्रीस्तितिक्षाऽनसूयता ८ त्यागोध्यानमथार्यत्वंधृतिश्चसततंदया ॥ अहिंसाचैवराजेंद्रसत्याकारास्त्रयोदश ९ सत्यंनामाव्ययंनित्यमविकारितथैवच ॥ सर्वध
र्माविरुद्धेनयोगेनैतदवाप्यते १० आत्मनीष्टेतथाऽनिष्टेरिपौचसमतातथा ॥ इच्छाद्वेषक्षयंप्राप्यकामक्रोधक्षयंतथा ११ दमोनान्यस्पृहानित्यंगांभीर्यंधैर्यमेव
च ॥ अभयंरोगशमनंज्ञानेनैतदवाप्यते १२ अमात्सर्यंबुधाःप्राहुर्दानेधर्मेचसंयमः ॥ अवस्थितेननित्यंचसत्येनामत्सरीभवेत् १३

९।१०।११।१२ इमानिनक्षत्रादीनि।'सुकृतांवाएतानिज्योतींषियन्नक्षत्राणि'इतिश्रुतेः १३ ॥ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेएकषष्टयधिकशततमो
ऽध्यायः ॥ १६१ ॥ ॥ ७ ॥ ॥ सत्यधर्ममिति १।२।३।४।५।६।७।८।९ सत्यादीनांपदानांत्रयोदशानामर्थान्व्याचष्टे सत्यंनामेत्यादिना १०।११।१२।१३

अक्षमायाविषयेतथाक्षमायाइतिद्दष्टांतार्थम् १४।१५।१६ असूयापरगुणेषुदोषदर्शनं तद्वत्तितिक्षाया अर्समवात्तितिक्षाव्याख्यानेनैवतद्व्याख्यानंसिद्धमितिनसापृथगुक्ता तद्व्याख्यान
श्लोकोलुप्तइतिवा तांव्याख्यायत्यागंव्याख्याति त्यागइति मूत्रश्लोकेत्यागोध्यानमितित्यागानुसंधानाख्यःपदद्वयोपात्तएकःपदार्थः १७।१८।१९ । सर्वथेतिश्लोकेधृतिशब्दंनोद्दे

अक्षमायाःक्षमायाश्चप्रियाणीहाऽप्रियाणिच ॥ क्षमतेसंमतःसाधुःसाध्वाप्नोतिचसत्यवाक् १४ कल्याणंकुरुतेबाढंधीमान्नग्लायतेक्वचित् ॥ प्रशांतवाङ्मनानि
त्यंह्रीस्तुधर्माद्वाप्यते १५ धर्मार्थहेतोःक्षमतेतितिक्षाक्षांतिरुच्यते ॥ लोकसंग्रहणार्थंवैसातुधैर्येणलभ्यते १६ त्यागःस्नेहस्ययत्त्यागोविषयाणांतथैवच ॥ रा
गद्वेषप्रहीणस्यत्यागोभवतिनान्यथा १७ आर्यतानामभूतानांयःकरोतिप्रयत्नतः ॥ शुभंकर्मनिराकारोवीतरागस्तथैवच १८ धृतिर्नामसुखेदुःखेयथानाप्नो
तिविक्रियाम् ॥ तांभजेतसदाप्राज्ञोयइच्छेद्भूतिमात्मनः १९ सर्वथाक्षमिणाभाव्यंतथासत्यपरेणच ॥ वीतहर्षभयक्रोधोधृतिमाप्नोतिपंडितः २० अद्रोहःसर्व
भूतेषुकर्मणामनसागिरा ॥ अनुग्रहश्चदानंचसतांधर्मःसनातनः २१ एतेत्रयोदशाकाराःपृथक्सत्यैकलक्षणाः ॥ भजंतेसत्यमेवेहबृंहयंतेचभारत २२ नांतःश
क्योगुणानांचवक्तुंसत्यस्यपार्थिव ॥ अतःसत्यंप्रशंसंतिविप्राःसपितृदेवताः २३ नास्तिसत्यात्परोधर्मोनानृतात्पातकंपरम् ॥ श्रुतिर्हिसत्यंधर्मस्यतस्मात्सत्यं
नलोपयेत् २४ उपैतिसत्याद्दानंहितथायज्ञाःसदक्षिणाः ॥ त्रेताग्निहोत्रंवेदाश्चयेचान्येधर्मनिश्चयाः २५ अश्वमेधसहस्रंचसत्यंचतुलयाधृतम् ॥ अश्वमेधस
हस्राद्धिसत्यमेवविशिष्यते २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिसत्यप्रशंसायांद्विषष्टयधिकशततमोऽध्यायः ॥ १६२ ॥ युधिष्ठिरउवाच ॥
यतःप्रभवतिक्रोधःकामोवाभरतर्षभ ॥ शोकमोहौविधित्साचपरासुत्वंचतद्वद १ लोभोमात्सर्यमीर्ष्याचकुत्सासूयाकृपाभयम् ॥ एतत्सर्वंमहाप्राज्ञयाथा
तथ्येनमेवद २ ॥ भीष्मउवाच ॥ त्रयोदशैतेतिबलाःशत्रवःप्राणिनांस्मृताः ॥ उपासंतेमहाराजसमंतात्पुरुषानिह ३ एतेप्रमत्तंपुरुषमप्रमत्तास्तुदंति
च ॥ वृकाइवविलुंपंतिदृष्ट्वैवपुरुषंबलात् ४ एभ्यःप्रवर्ततेदुःखमेभ्यःपापंप्रवर्तते ॥ इतिमर्त्योविजानीयात्सततंपुरुषर्षभ ५ एतेषामुदयंस्थानंक्षयंचपृथिवी
पते ॥ हंततेकथयिष्यामिक्रोधस्योत्पत्तिमादितः ६ यथातत्त्वंक्षितिपतेतदिहैकमनाःशृणु ॥ लोभात्क्रोधःप्रभवतिपरदोषैरुदीर्यते ७ क्षमयातिष्ठतेराजन्क्ष
मयाविनिवर्तते ॥ संकल्पाज्जायतेकामःसेव्यमानोविवर्धते ८ यदाप्राज्ञोविरमतेतदासद्यःप्रणश्यति ॥ पराऽसूयाक्रोधलोभावंतराप्रतिमुच्यते ९

शक्रममाशादयाग्राह्या २०।२१।२२।२३।२४।२५।२६ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपेद्विषष्टयधिकशततमोऽध्यायः ॥ १६२ ॥
यतोऽज्ञानात् १ कृपाऽभयमित्यंतास्त्रयोदश २।३।४।५।६ क्रोधादीनामुत्पत्तिस्थितिलक्षणानिव्याख्याति लोभादित्यादिना लोभात्केनचिन्निमित्तेनोपहवात्क्रोधोभवति
सचपरदोषैर्दृष्टैरुदीर्यतेउद्दीप्तोभवति ७ सक्षमयातिष्ठतेनिरुध्यतेविनिवर्ततेचेति एवंसर्वत्रद्रष्टव्यम् ८।९

परस्मिन्नसूयादोषदर्शनंतत्क्रोधाल्लोभाद्वाभवति दययानिवर्तते अत्रक्रोधादीनांव्युत्पादनप्रसंगेउद्देशक्रमोनादर्तव्यः असूयाचअवद्यदर्शनात्परस्मिन्दोषदर्शनादोतिउदेति तत्त्वज्ञानाद्वस्तुनो निर्दोषत्वज्ञानादसूयाधीमतांनिवर्ततइत्यनुषंगः सार्द्धश्लोकोऽयं १० मोहोविपरीतबुद्धिः ११ मोहइत्याकृष्यते विधित्साआरंभमावर्ण्य इदमुभयंविरुद्धानिकौलिकादिशास्त्राणियेपश्यंतितेषां जायते तत्त्वज्ञानात्सम्यग्वैदिकार्थज्ञानात्तत्रविश्वासाच्चनिवर्तते १२ पुत्रादिप्रियवस्तुनाशेशोकोजायते सचशोचतोऽपिपुनर्दुर्लभइतिनिरर्थकइतिज्ञानान्नश्यतीत्याह प्रीत्येति १३ परासुतात्यं तमकार्यपारवश्यं अभ्यासादसकृदावृत्तेःदययाक्रोधपरासुतानिवर्तते निर्वेदाद्वैराग्याल्लोभादिजेतिमेदः १४ । १५ । १६ । १७ । १८ इतिकर्तुंययायोग्यंप्रतीकारंकर्तुं १९ कृपाऽपिचित्तोन्माथ करीतिद्वेषवद्धेयैवेत्यभिप्रेत्याह कृपणानिति २० अज्ञानप्रभवोलोभइत्यत्रलोभपदेनमयंग्राह्यं लोभस्यप्राग्व्याख्यातत्वात् कृपाभयमितिमयस्यापिप्रागुद्दिष्टत्वाच्च २१ । २२ ॥ इतिशांतिपर्वणि



दययासर्वभूतानांनिर्वेदाद्विनिवर्तते ॥ अवद्यदर्शनादितितत्त्वज्ञानाच्चधीमताम् १० अज्ञानप्रभवोमोहःपापाभ्यासात्प्रवर्तते ॥ यदाप्राज्ञेषुरमतेतदासद्यः प्रणश्यति ११ विरुद्धानीहशास्त्राणियेपश्यंतिकुरूद्वह ॥ विधित्साजायतेतेषांतत्त्वज्ञानान्निवर्तते १२ प्रीत्याशोकःप्रभवतिवियोगात्तस्यदेहिनः ॥ यदानिर र्थकंवेत्तितदासद्यःप्रणश्यति १३ परासुताक्रोधलोभादभ्यासाच्चप्रवर्तते ॥ दययासर्वभूतानांनिर्वेदात्सानिवर्तते १४ सत्यत्यागात्तुमात्सर्यमहितानांचसेवया ॥ एतत्तुक्षीयतेतातसाधूनामुपसेवनात् १५ कुलाज्ज्ञानात्तथैश्वर्यान्मदोभवतिदेहिनाम् ॥ एभिरेवतुविज्ञातैःसचसद्यःप्रणश्यति १६ ईर्ष्याकामात्प्रभवतिसंहर्षा च्चैवजायते ॥ इतरेषांतुसत्त्वानांप्रज्ञयासाप्रणश्यति १७ विभ्रमाल्लोकबाह्यानांद्वेष्यैर्वाक्यैरसंमतैः ॥ कुत्सासंजायतेराजन्लोकान्प्रेक्ष्याभिशाम्यति १८ इतिक र्तुंनशक्तायेबलस्थायापकारिणे ॥ असूयाजायतेतीव्राकारुण्याद्विनिवर्तते १९ कृपणान्सततंदृष्ट्वाततःसंजायतेकृपा ॥ धर्मनिष्ठांयदावेत्तितदाशाम्यतिसाकृ पा २० अज्ञानप्रभवोलोभोभूतानांदृश्यतेसदा ॥ अस्थिरत्वंचभोगानांदृष्ट्वाज्ञात्वानिवर्तते २१ एतान्येवजितान्याहुःप्रशमाच्चत्रयोदश ॥ एतेहिधार्तराष्ट्रा णांसर्वेदोषास्त्रयोदश ॥ त्वयासत्यार्थिनानित्यंविजिताज्येष्ठसेवनात् २२ ॥ इतिश्रीम० शांतिप० आप० लोभनिरूपणेत्रिषष्ट्यधिकशततमोऽध्यायः ॥१६३॥ ॥ युधिष्ठिरउवाच ॥ आनृशंस्यंविजानामिदर्शनेनसतांसदा ॥ नृशंसान्नविजानामितेषांकर्मचभारत १ कंटकान्कूपमग्निंचवर्जयंतियथानराः ॥ तथानृशंसक र्माणंवर्जयंतिनरानरम् २ नृशंसोहिदहत्यक्तंप्रेत्यचेहचभारत ॥ तस्मात्त्वंब्रूहिकौरव्यतस्यधर्मंविनिश्चयम् ३ ॥ भीष्मउवाच ॥ स्पृहास्याद्गर्हिताचैववि धित्साचैवकर्मणाम् ॥ आक्रोष्टाक्रुश्यतेचैववंचितोबुध्यतेसच ४ दत्तानुकीर्तिर्विषमःक्षुद्रोनैकृतिकःशठः ॥ असंविभागीमानीचतथासंगीविकत्थनः ५

आपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ॥ ७ ॥ ॥ ७ ॥ आनृशंस्यंसतांधर्मइतियद्यपिसामान्यतोजानामितथाऽपिनृशंसस्त्वेज्ञाते तदभावरूपमानृशंस्यंविशेषतःसुज्ञेयमतोनृशंसस्यैवस्वरूपादिकंब्रूहीतिप्रश्नः १ । २ । ३ यस्यस्पृहाविधित्साचनध्यइयेनादिविषयागर्हितास्यात् योनिंदकोनिंद्यश्चदैवेनाहंवंचितोस्मियदीदृशं कुकर्मकरोमीतिबुध्यतेकरोतिवाकृत्यंसआत्महानृशंसकृदितिचतुर्थेनान्वयः ४ दत्तमनुकीर्तयतीतिदत्तानुकीर्तिःस्वस्यवदान्यत्वप्रकाशकः विषमोविद्वेषकर्ता क्षुद्रोनीचकर्मकारी नैकृतिकः खेदंप्रदर्श्यवंचकः शठःसत्यपिसामर्थ्येदारिद्र्यव्यंजकः ५ 

बलीशःकाकइववंचकदृष्टिः आश्रमद्वेषःसंकरश्चास्यास्तीत्याश्रमद्वेषसंकरी ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणि नीलकंठीये भारतभावदीपे चतुःषष्ट्य धिकशततमोध्यायः ॥ १६४ ॥ ७ ॥ ॥ एवमापदांनिदानमतीकारादिकमुक्तमिदानींसामान्यतःसर्वासामापदांमूलंपापंतच्चाकृतप्रायश्चित्तानामापद्रूपेणवाधतइतिसाधारणासाधारणंप्रा

सर्वातिशंकीपुरुषोबलीशःकृपणोऽथवा ॥ वर्गप्रशंसीसततमाश्रमद्वेषसंकरी ६ हिंसाविहारःसततमविशेषगुणागुणः ॥ बह्वलीकोमनस्वीचलुब्धोऽत्यर्थंनृशंस कृत् ७ धर्मशीलंगुणोपेतंपापमित्यवगच्छति ॥ आत्मशीलप्रमाणेननविश्वसितिकस्यचित् ८ परेषांयत्रदोषःस्यात्तद्गुह्यंसंप्रकाशयेत् ॥ समानेष्वेवदोषेषुवृ त्त्यर्थमुपघातयेत् ९ तथोपकारिणंचैवमन्यतेवंचितंपरं ॥ दत्त्वाऽपिचधनंकालेसंतपत्युपकारिणे १० भक्ष्यंपेयमथालेह्यंयच्चान्यत्साधुभोजनं ॥ प्रेक्षमाणेषुयो ऽश्रीयान्नृशंसमितितंवदेत् ११ ब्राह्मणेभ्यःप्रदायाग्रंयःसुहृद्भिःसहाश्नुते ॥ सप्रेत्यलभतेस्वर्गमिहचानंत्यमश्नुते १२ एषतेभरतश्रेष्ठनृशंसःपरिकीर्तितः ॥ स दाविवर्जनीयोहिपुरुषेणविजानता १३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिनृशंसाख्यानेचतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥ भीष्मउवाच ॥ हृता र्थोयक्ष्यमाणश्चसर्ववेदांतगश्चयः ॥ आचार्यपितृकार्यार्थंस्वाध्यायार्थमथाऽपिच १ एतेवैसाधवोदृष्टाब्राह्मणाधर्मभिक्षवः ॥ निःस्वेभ्योदेयमेतेभ्योदानंविद्याच भारत २ अन्यत्रदक्षिणादानंदेयंभरतसत्तम ॥ अन्येभ्योऽपिबहिर्वेदिचाकृतान्नंविधीयते ३ सर्वरत्नानिराजाहियथार्हंप्रतिपादयेत् ॥ ब्राह्मणाएववेदाश्चयज्ञा श्चबहुदक्षिणाः ४ अन्योन्यंविभवाचारायजंतेगुणतःसदा ॥ यस्यत्रैवार्षिकंभक्तंपर्याप्तंभृत्यवृत्तये ॥ अधिकंचापिविद्येतससोमंपातुमर्हति ५ यज्ञश्चेत्प्रतिरु द्धःस्यादंशेनैकेनयज्वनः ॥ ब्राह्मणस्यविशेषेणधार्मिकेसतिराजनि ६ योवैश्यःस्याद्बहुपशुर्हीनक्रतुरसोमपः ॥ कुटुंबात्तस्यतद्वित्तंयज्ञार्थंपार्थिवोहरेत् ७ आ हरेदधनोकिंचित्कामंशूद्रस्यवेश्मनः ॥ नहियज्ञेषुशूद्रस्यकिंचिदस्तिपरिग्रहः ८ योनाहिताग्निःशतगुरयज्वाचसहस्रगुः ॥ तयोरपिकुटुंबाभ्यामाहरेदविचार यन् ९ अदातृभ्योहरेद्वित्तंविख्याप्यनृपतिःसदा ॥ तथैवाचरतोधर्मोनृपतेःस्यादथाखिलः १० तथैवशृणुमेभक्तंभक्तानिषडनश्नतः ॥ अश्वस्तनविधानेनह र्तव्यंहीनकर्मणः ११ खलात्क्षेत्रात्तथाऽऽरामाद्यतोवाप्युपपद्यते ॥ आख्यातव्यंनृपस्यैतत्पृच्छतेऽपृच्छतेपिवा १२ नतस्मैधारयेद्दंडंराजाधर्मेणधर्मवित् ॥ क्षत्रियस्यतुबालिश्याद्ब्राह्मणःक्लिश्यतेक्षुधा १३ श्रुतशीलेसमाज्ञायवृत्तिमस्यप्रकल्पयेत् ॥ अथैनंपरिरक्षेतपितापुत्रमिवौरसम् १४ इष्टिंवैश्वानरींनित्यंनिर्व पेदब्दपर्यये ॥ अनुकल्पःपरोधर्मोधर्मवादैस्तुकेवलम् १५ विश्वैर्देवैश्चसाध्यैश्चब्राह्मणैश्चमहर्षिभिः ॥ आपत्सुमरणाद्भीतैर्विधिःप्रतिनिधीकृतः १६

यश्चित्तमाह हृतार्थइत्यध्यायेन हृतार्थश्चोरैर्लुंठितः १ । २ निःस्वोनिर्धनः अन्यत्रोक्तेभ्योऽन्यत्रापिब्राह्मणेषुअभ्येभ्योऽब्राह्मणेभ्यःअकृतान्नमपक्वान्नंविधीयते तेभ्योऽप्यकृतान्नंदेयमितिभावः ३ । ४ । ५ ब्राह्मणस्ययज्ञःएकेनांशेनरुद्धश्चेदनेनांशेनप्रतिरुद्धःस्यात्तर्हितस्यवैश्यस्यतद्धनंपार्थिवोयज्ञार्थंहरेदितिद्वितीयेनसंबंधः ६।७।८।९। १० भक्तमेकाहपर्याप्तंधान्यं भक्तानिषडनश्नतःत्र्यहमु पोषितस्य ११।१२बालिश्यादित्यनेनक्षत्रियस्यैवसदोषइत्युक्तम् १३।१४अब्दपर्ययेप्रत्यब्दंकर्तव्यस्याऽऽग्रयणपशुसोमादेरकरणे धर्मवादैर्धर्मज्ञैरुक्तइतिशेषः १५ अनुकल्पेमानमाह विश्वैरिति १६

सांपरायिकंपारलौकिकंशठत्वात् १७ ननिवेदेताऽहंब्राह्मणोऽस्मीतिनानिवेदयेत् १८ । १९ । २० । २१ परिवेष्टाआहुतिमक्षेप्ता कन्यायुवत्योःस्मार्ताग्निहोमे'स्वयंपत्न्यपिवापुत्रःकुमार्यंते
वासीवा'इत्याश्वलायनवचनादधिकृतयोरत्रापिप्रसक्तेर्निषेधउक्तः २२ । २३ । २४ । २५ आसतेमिथुनीभवंति संग्रामदाडिमेत्यालिंगानुशासनसूत्राद्धोमशब्दस्यनपुंसकत्वं सर्वत्रयोऽपि २६
उदपानःकूपस्तदेकोदकेएककूपोपजीव्येइत्यर्थः २७ अभार्यामपरिणीतांशयनेविभ्रद्ब्राह्मणस्तथाशूद्रंवृद्धंमहानितिमन्यमानस्तथाऽब्राह्मणंक्षत्रियंवैश्यंवावृद्धंमन्यामानस्तृणेषुयद्यासीतोपविष्टः

प्रभुःप्रथमकल्पस्ययोऽनुकल्पेनवर्तते ॥ नसांपरायिकंतस्यदुर्मतेर्विद्यतेफलम् १७ नब्राह्मणोनिवेदेतकिंचिद्राजनिवेदवित् ॥ स्ववीर्याद्राजवीर्याच्चस्ववीर्यं 
बलवत्तरम् १८ तस्माद्राज्ञःसदातेजोदुःसहंब्रह्मवादिनाम् ॥ कर्ताशास्ताविधाताचब्राह्मणोदेवउच्यते १९ तस्मिन्नाकुशलंब्रूयान्नशुष्कामीरयेद्गिरम् ॥ क्षत्रि
योबाहुवीर्येणतरेदापदमात्मनः २० धनेनवैश्यःशूद्रश्चमंत्रैर्होमैश्चवैद्विजः ॥ नैवकन्यानयुवतिर्नामंत्रज्ञोनबालिशः २१ परिवेष्टाऽग्निहोत्रस्यभवेन्नासंस्कृतस्त
था ॥ नरकंनिपतंत्येतेजुह्वानाःसचयस्यतत् ॥ तस्माद्वैतानकुशलोहोतास्याद्वेदपारगः २२ प्राजापत्यमदत्वाश्वमग्न्याधेयस्यदक्षिणाम् ॥ अनाहिताग्निरि
तिसप्रोच्यतेधर्मदर्शिभिः २३ पुण्यानियानिकुर्वीतश्रद्दधानोजितेंद्रियः ॥ अनाप्तदक्षिणैर्यज्ञैर्नयजेतकथंचन २४ प्रजाःपशूंश्चस्वर्गंचहंतियज्ञोह्यदक्षिणः ॥
इंद्रियाणियशःकीर्तिमायुश्चाप्यवकृंतति २५ उदक्यामासतेयेचद्विजाःकेचिदनग्नयः ॥ होमंचाश्रोत्रियंयेषांतेसर्वेपापकर्मिणः २६ उदपानोदकेग्रामेब्राह्म
णोवृषलीपतिः ॥ उषित्वाद्वादशसमाःशूद्रकर्मैवगच्छति २७ अभार्यांशयनेबिभ्रच्छूद्रंवृद्धंचवैद्विजः ॥ अब्राह्मणंमन्यमानस्तृणेष्वासीतपृष्ठतः ॥ तथासं
शुध्यतेराजन्शृणुचात्रवचोमम २८ यदेकरात्रेणकरोतिपापंनिकृष्टवर्णंब्राह्मणःसेवमानः ॥ स्थानासनाभ्यांविहरन्व्रतीसत्रिभिर्वर्षैःशमयेदात्मपापम् २९
ननर्मयुक्तमनृतंहिनस्तिनस्त्रीषुराजन्नविवाहकाले ॥ नगुर्वर्थेनात्मनोजीवितार्थेपंचानृतान्याहुरपातकानि ३० श्रद्दधानःशुभांविद्यांहीनादपिसमाप्नुयात् ॥
सुवर्णमपिचामेध्यादाददीताविचारयन् ३१ स्त्रीरत्नंदुष्कुलाच्चापिविषादप्यमृतंपिबेत् ॥ अदूष्याहिस्त्रियोरत्नमापइत्येवधर्मतः ३२ गोब्राह्मणहितार्थंचवर्णा
नांसंकरेषुच ॥ वैश्योगृह्णीतशस्त्राणिपरित्राणार्थमात्मनः ३३ सुरापानंब्रह्महत्यागुरुतल्पमथापिवा ॥ अनिर्देश्यानिमन्यंतेप्राणांतमितिधारणा ३४ सुवर्ण
हरणंस्तैन्यंविप्रस्वंचेतिपातकम् ॥ विहरन्मद्यपानाच्चअगम्यागमनादपि , ३५ पतितैःसंप्रयोगाच्चब्राह्मणीयोनितस्तथा ॥ अचिरेणमहाराजपतितोवैभवत्युत
३६ संवत्सरेणपततिपतितेनसहाचरन् ॥ याजनाध्यापनाद्यौनात्रतुयानासनाशनात् ३७ एतानिहित्वाऽतोऽन्यानिनिर्देश्यानीतिभारत ॥ निर्देश्यानेनवि
धिनाकालेनाव्यसनीभवेत् ३८ सयथासंशुध्येत्तथाशृण्वितिसार्द्धार्थः २८ विहरन्नकरोतीतिसंबंधः २९ । ३० । ३१ । ३२ । ३३ अनिर्दे 
श्यानिबुद्धिपूर्वकानिचेदत्रप्रायश्चित्तंनास्तीत्यर्थः किंतर्हिमरणांतमेवप्रायश्चित्तमितिधारणानिश्चयः ३४ । ३५ ब्राह्मणीयोनितःअब्राह्मणोब्राह्मणीगमनादित्यर्थः ३६ याजनादित्रयेणसद्यः
पतति नतुयानादिना तेनतुवर्षेणपततीत्यर्थः यौनंविवाहादिनासंबंधः ३७ एतानिपंचमहापापानि अन्यानितुनिर्देश्यानिसप्रायश्चित्तानि निर्देश्यविशोध्याव्यसनीपुनःपापरुचिर्नस्यात् ३८

अन्नमिति पूर्वेषुत्रिषुसुरापब्रह्मघ्नगुरुतल्पगेषुमृतेषु प्रेतकर्मण्यपातितेऽपिदाहाद्यकरणेऽप्यन्नंवीर्यंहिरण्यंचगृहीतव्यं तेषुमृतेषुसपिंडानामाशौचाभावात्तेषांप्रेतकर्मनिषेधाच्चेतिभावः ३९ अमात्यादी
न्पतितान्जह्याद्देवधार्मिकस्तैःसहसंविदंनकुर्यात् यतस्तेप्रायश्चित्तानिनार्हंतीतियोजना प्रायश्चित्तान्यकुर्वाणैर्नैवैरर्हतिसंविदमितिपाठांतरेतुसुगमं ४० ब्रुवन्निति उपलक्षणमिदंदोषांतराणां
४१ दुष्यतीअप्रत्ताऽपिमैथुनमिच्छंती ४२ शेषंभागद्वयं अवगर्ह्यगालयित्वा विनियस्पृष्ट्वाऽर्धचंद्रादिनाऽपनोद्य गुरुतरंशेषादप्यधिकंपातकंतस्यफलं ४३ तावदशेषकालपर्यंतंप्रतिष्ठांनाधिग

अन्नंवीर्यंगृहीतव्यंप्रेतकर्मण्यपातिते ॥ त्रिषुत्वेतेषुपूर्वेषुनकुर्वीतविचारणम् ३९ अमात्यान्वागुरून्वापिजह्याद्धर्मेणधार्मिकः ॥ प्रायश्चित्तानिकुर्याच्चनतैरर्हं
तिसंविदम् ४० अधर्मकारीधर्मेणतपसाहंतिकिल्बिषम् ॥ ब्रुवंस्तेनइतिस्तेनंतावत्प्राप्नोतिकिल्बिषम् ४१ अस्तेनंस्तेनइत्युक्त्वाद्विगुणंपापमाप्नुयात् ॥
त्रिभागंब्रह्महत्यायाःकन्याप्राप्नोतिदुष्यती ४२ यस्तुदूषयितातस्याःशेषंप्राप्नोतिपाप्मनः ॥ ब्राह्मणानवगर्ह्येहस्पृष्ट्वागुरुतरंभवेत् ४३ वर्षाणांहिशतंताव
त्प्रतिष्ठांनाधिगच्छति ॥ सहस्रंचैववर्षाणांनिपत्यनरकेवसेत् ४४ तस्मान्नैवावगर्ह्येतनैवजातुनिपातयेत् ॥ शोणितंयावतःपांसून्संगृह्णीयाद्द्विजक्षतात् ४५
तावतीःससमाराजन्नरकेप्रतिपद्यते ॥ भ्रूणहाऽऽहवमध्येतुशुध्यतेशस्त्रपाततः ४६ आत्मानंजुहुयादग्नौसमिद्धेतेनशुद्ध्यते ॥ सुरापोवारुणीमुष्णांपीत्वापापा
द्विमुच्यते ४७ तयासकायेनिर्दग्धेमृत्युंवाप्राप्यशुद्ध्यति ॥ लोकांश्चलभतेविप्रोनान्यथालभतेहिसः ४८ गुरुतल्पमधिष्ठायदुरात्मापापचेतनः ॥ रूयाकारां
प्रतिमांलिंग्यमृत्युनासोऽभिशुद्ध्यति ४९ अथवाशिश्नवृषणावादायांजलिनास्वयम् ५० नैर्ऋतींदिशमास्थायनिपतेत्सत्वजिह्मगः ॥ ब्राह्मणार्थेऽपिवाप्राणान्
संत्यजेत्तेनशुद्ध्यति ५१ अश्वमेधेनवाऽपीष्ट्वाअथवागोसवेनवा ॥ अग्निष्टोमेनवासम्यगिहप्रेत्यचपूज्यते ५२ तथैवद्वादशसमाःकपालीब्रह्महाभवेत् ॥ ब्रह्म
चारीभवेन्नित्यंस्वकर्मख्यापयन्मुनिः ५३ एवंवातपसायुक्तोब्रह्महासवनीभवेत् ॥ एवंतुसमभिज्ञातामात्रेयींवानिपातयेत् ५४ द्विगुणाब्रह्महत्यावैआत्रेयीनिध
नेभवेत् ॥ सुरापोनियताहारोब्रह्मचारीक्षितीशयः ५५ ऊर्ध्वंत्रिभ्योऽपिवर्षेभ्योयजेताग्निष्टुतापरम् ॥ ऋषभैकसहस्रंवागादत्वाशौचमाप्नुयात् ५६ वैश्यंहत्वा
तुवर्षेद्वेऋषभैकशतंचगाः ॥ शूद्रंहत्वाऽब्दमेवैकमृषभंचशतंचगाः ५७ श्ववराहखरान्हत्वाशौद्रमेवव्रतंचरेत् ॥ मार्जारचाषमंडूकान्काकंव्यालंचमूषिकम् ५८
उक्तःपशुसमोदोषोराजन्प्राणिनिपातनात् ॥ प्रायश्चितान्यथाऽन्यानिप्रवक्ष्याम्यनुपूर्वशः ५९ अल्पेवाप्यथशोचेतपृथक्संवत्सरंचरेत् ॥ त्रीणीश्रोत्रियभा
र्यायांपरदारेचद्वेस्मृते ६० कालेचतुर्थेभुंजानोब्रह्मचारीव्रतीभवेत् ॥ स्थानासनाभ्यांविहरेत्रिरह्नोभ्युपयन्नपः ॥ एवमेवनिराकर्तायश्चाग्नीनपविध्यति ६१
१० च्छति प्रेतत्वान्नमुच्यते ब्रह्महत्यायास्तृतीयांशद्वयस्ययावान्भोगस्तावंतंकालमित्यर्थः ४४ । ४५ आहवमध्येगोब्राह्मणरक्षार्थंसंग्रामेशस्त्रेणहतश्चेद्ब्रह्महाशुद्ध्यते ४६ । ४७ । ४८ रूयाकारां
प्रतिमांसंतप्तामितिशेषः लिंग्यआलिंग्य ४९ । ५० । ५१ । ५२ । ५३ सवनीत्रिषवणस्नायी आत्रेयींप्राप्तगर्भांस्त्रियम् ५४ । ५५ । ५६ । ५७ । ५८ । ५९ अल्पेपापेअबुद्धिपूर्वंकृतेकीटवधादौ
शोचेतपश्चात्तापंकुर्यात् तावतैवतत्रशुद्धिरितिभावः ६० अन्यत्रतुगोवधात् पृथगेकैकस्योपपातकस्यप्रायश्चित्तंसंवत्सरंचरेत् ६१

पूर्वश्लोकोक्तंनिराकर्तुंपदंव्याचष्टे त्यजतीति ६१ ग्रासेतिसार्धः ६३ श्रेयांसंब्राह्मणंस्वपतिंहित्वायापापंस्त्रवर्णान्त्रीन्चवर्णंप्रतिशयनंशय्यांनिगच्छतितस्याःदंडः श्वभिरिति ६४ । ६५ अभिश
स्तस्यप्रायश्चित्तंसद्योऽकुर्वतः ६६ तस्यपतितस्यसहसेविनिसंसर्गेणिप्रायश्चित्तंतुकुचरःपृथिवींपर्यटन् ६७ । ६८ । ६९ परिवेत्ताकनिष्ठः परिवित्तयेज्येष्ठायभार्यांस्नुषात्वेनप्रयच्छेत् एतांत्वनाभु
क्तां तवैवेयंस्नुषेतिमानपूर्वकंसमर्पयेत् तदाज्येष्ठानुज्ञातोयवीयाननंतरंतांस्वीकुर्यात् पाणिग्राहेणस्वदोषेक्षमापितेत्रयोऽपिपापान्मुच्यंतइतिसार्धश्लोकार्थः ७० अमानुषीषुपशुजातिषु अनावृष्टिर

त्यजत्यकारणेयश्चपितरंमातरंगुरुम् ॥ पतितःस्यात्सकौरव्ययथाधर्मेषुनिश्चयः ६२ ग्रासाच्छादनमात्रंतुदद्यादितिनिदर्शनम् ॥ भार्यायांव्यभिचारिण्यांनि
रुद्धायांविशेषतः ॥ यत्पुंसःपरदारेषुतदेनांचारयेद्व्रतम् ६३ श्रेयांसंशयनंहित्वायाऽन्यंपापंनिगच्छति ॥ श्वभिस्तामर्दयेद्राजासंस्थानेबहुविस्तरे ६४ पु
मांसमुन्नयेत्प्राज्ञःशयनेतप्तआयसे ॥ अप्यादधीतदारूणितत्रदह्येतपापकृत् ६५ एषदंडोमहाराजस्त्रीणांभर्तृष्वतिक्रमात् ॥ संवत्सरोभिशस्तस्यदुष्टस्यद्विगुणो
भवेत् ६६ द्वेतस्यत्रीणिवर्षाणिचत्वारिसहसेविनि ॥ कुचरःपंचवर्षाणिचरेद्भैक्ष्यंमुनिव्रतः ६७ परिवित्तिःपरिवेत्तायाचैवपरिविद्यते ॥ पाणिग्राहस्त्वधर्मेणसर्वे
तेपतिताःस्मृताः ६८ चरेयुःसर्वएवैतेवीरहायद्व्रतंचरेत् ॥ चांद्रायणंचरेन्मासंकृच्छ्रंवापापशुद्धये ६९ परिवेत्ताप्रयच्छेततांस्नुषांपरिवित्तये ॥ ज्येष्ठेनत्वभ्य
नुज्ञातोयवीयानप्यनंतरम् ॥ एवंचमोक्षमाप्नोतितौचसाचैवधर्मतः ७० अमानुषीषुगोवर्ज्यमनावृष्टिर्नदुष्यति ॥ अधिष्ठातारमंतारंपशूनांपुरुषंविदुः ७१ प
रिधायोर्ध्ववालंतुपात्रमादायमृन्मयम् ॥ चरेत्सप्तगृहान्नित्यंस्वकर्मपरिकीर्तयन् ७२ तत्रैवलब्धभोजीस्याद्द्वादशाहात्सशुद्ध्यति ॥ चरेत्संवत्सरंचापितद्व्रतंये
नकृंतति ७३ भवेत्तुमानुषेष्वेवंप्रायश्चित्तमनुत्तमम् ॥ दानंवादानशक्तेषुसर्वमेतत्प्रकल्पयेत् ७३ अनास्तिकेषुगोमात्रंदानमेकंप्रचक्षते ॥ श्ववराहमनुष्याणां
कुक्कुटस्यखरस्यच ७५ मांसंमूत्रंपुरीषंचप्राश्यसंस्कारमर्हति ॥ ब्राह्मणस्तुसुरापस्यगंधमादायसोमपः ७६ अपस्त्र्यहंपिबेदुष्णंत्र्यहमुष्णंपयःपिबेत् ॥ त्र्यह
मुष्णंपयःपीत्वावायुभक्षोभवेत्त्र्यहम् ७७ एवमेतत्समुद्दिष्टंप्रायश्चित्तंसनातनम् ॥ ब्राह्मणस्यविशेषेणयदज्ञानेनसंभवेत् ७८ ॥ इतिश्रीमहाभारतेशांतिपर्वणि
आपद्धर्मपर्वणिप्रायश्चित्तीयेपंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ ध ॥ ॥ वैशंपायनउवाच ॥ ॥ कथांतरमथासाद्यखड्गयुद्धविशारदः ॥
नकुलःशरतल्पस्थमिदमाहपितामहम् १ ॥ ॥ नकुलउवाच ॥ ॥ धनुःप्रहरणंश्रेष्ठमतीवाऽत्रपितामह ॥ मनस्तुममधर्मज्ञखड्गएवसुसंशितः २

जीवनंहिंसेत्यर्थः वृश्चतेश्छिदिकर्मणइदंरूपं अनावृष्टिरितिपाठेऽपिसएवार्थः ७१ ऊर्ध्ववालंचमरीपुच्छंपरिधायरंगेष्वटन्ब्राह्मणएवैतत्प्रायश्चित्तंकुर्यात् ७२ तत्रैवसप्तसुगृहेषु येनपरिधानेन
हेतुभूतेनऊर्ध्ववालंयःकृंततिछिनत्तिसउक्तंव्रतंसंवत्सरंचरेत् ७३ । ७४ अनास्तिकेष्वास्तिकेषु ७५ । ७६ । ७७ । ७८ ॥ ॥ इतिशांतिपर्वणि आपद्धर्मपर्वणि नीलकंठीये भारतभावदीपे
पंचषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥ ॥ ध ॥ ॥ ध ॥ ॥ कथांतरमिति कथांतरमापद्धर्माणांसांगानांसमाप्तत्वात्कथाया अवसानंआसाद्यप्राप्य १ ममतुमनःखड्गेऽस्ति
यतःसुसंशितःसम्यग्विनीतआत्माखड्गेनपरिरक्षितुंशक्यतेइतिद्वितीयेनान्वयः २



३ । ४ । ५ । ६ । ७ । ८ । ९ धातुमान्गैरिकवान्रुधिरोक्षितत्वात् १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

विशीर्णेकार्मुकेराजन्प्रक्षीणेषुचवाजिषु ॥ खड्गेनशक्यतेयुद्धेसाध्वात्मा परिरक्षितुम् ३ शरासनधरांश्चैवगदाशक्तिधरांस्तदा ॥ एकःखड्गधरोवीरःसमर्थःप्रति
बाधितुम् ४ अत्रमेसंशयश्चैवकौतूहलमतीवच ॥ किंस्वित्प्रहरणंश्रेष्ठंसर्वयुद्धेषुपार्थिव ५ कथंचोत्पादितःखड्गःकस्मैचार्थायकेनच ॥ पूर्वाचार्यंचखड्गस्यप्रब्रू
हिप्रपितामह ६ ॥ वैशंपायनउवाच ॥ तस्यतद्वचनंश्रुत्वामाद्रीपुत्रस्यधीमतः ॥ सतुकौशलसंयुक्तंसूक्ष्मचित्रार्थसंमतम् ७ ततस्तस्योत्तरंवाक्यंस्वरवर्णोप
पादितम् ॥ शिक्षयाचोपपन्नायद्रोणशिष्यायभारत ८ उवाचसतुधर्मज्ञोधनुर्वेदस्यपारगः ॥ शरतल्पगतोभीष्मोनकुलायमहात्मने ९ ॥ भीष्मउवाच ॥ तत्त्वं
शृणुष्वमाद्रेययदेतत्परिपृच्छसि ॥ प्रबोधितोऽस्मिभवताधातुमानिवपर्वतः १० सलिलैकार्णवंतातपुरासर्वमभूदिदम् ॥ निष्प्रकंपमनाकाशमनिर्देश्यमहीतलम्
११ तमसाऽऽवृतमस्पर्शमतिगंभीरदर्शनम् ॥ निःशब्दंचाप्रमेयंचतत्रजज्ञेपितामहः १२ सोऽसृजद्वातमग्निंचभास्करंचापिवीर्यवान् ॥ आकाशमसृजच्चोर्ध्वम
धोभूमिंचनैर्ऋतिं १३ नभःसचंद्रतारंचनक्षत्राणिग्रहांस्तथा ॥ संवत्सरानृतून्मासान्पक्षानथलवान्क्षणान् १४ ततःशरीरंलोकस्थंस्थापयित्वापितामहः ॥ जन
यामासभगवान्पुत्रानुत्तमतेजसः १५ मरीचिमृषिमत्रिंचपुलस्त्यंपुलहंक्रतुम् ॥ वसिष्ठांगिरसौचोभौरुद्रंचप्रभुमीश्वरम् १६ प्राचेतसस्तथादक्षःकन्याःषष्टिम
जीजनत् ॥ ताविब्रह्मर्षयःसर्वाःप्रजार्थंप्रतिपेदिरे १७ ताभ्योविश्वानिभूतानिदेवाःपितृगणास्तथा ॥ गंधर्वाप्सरसश्चैवरक्षांसिविविधानिच १८ पतत्रिमृगमी
नाश्चप्लवंगाश्चमहोरगाः ॥ तथापक्षिगणाःसर्वेजलस्थलविचारिणः १९ उद्भिदःस्वेदजाश्चैवसांडजाश्चजरायुजाः ॥ जज्ञेतातजगत्सर्वंतथास्थावरजंगमम् २०
भूतसर्गमिमंकृत्वासर्वलोकपितामहः ॥ शाश्वतंवेदपठितंधर्मंप्रयुयुजेततः २१ तस्मिन्धर्मेस्थितादेवाःसहाचार्यपुरोहिताः ॥ आदित्यावसवोरुद्राःससाध्यामरु
दश्विनः २२ भृग्वत्र्यंगिरसःसिद्धाःकाश्यपाश्चतपोधनाः ॥ वसिष्ठगौतमागस्त्यास्तथानारदपर्वतौ २३ ऋषयोवालखिल्याश्चप्रभासाःसिकतास्तथा ॥ घृतपाः
सोमवायव्याविश्वानरमरीचिपाः २४ अकृष्टाश्चैवहंसाश्चऋषयोवाऽग्नियोनयः ॥ वानप्रस्थाःपृश्नयश्चस्थिताब्रह्मानुशासने २५ दानवेंद्रास्त्वतिक्रम्यतत्पितामह
शासनम् ॥ धर्मस्यापचयंचक्रुःक्रोधलोभसमन्विताः २६ हिरण्यकशिपुश्चैवहिरण्याक्षोविरोचनः ॥ शंबरोविप्रचित्तिश्चप्रह्लादोनमुचिर्बलिः २७ एतेचान्येचब
हवःसगणादैत्यदानवाः ॥ धर्मसेतुमतिक्रम्यरेमिरेधर्मनिश्चयाः २८ सर्वेतुल्याभिजातीयायथादेवास्तथावयम् ॥ इत्येवंधर्ममास्थायस्पर्धमानाःसुरर्षिभिः २९
नप्रियंनाप्यनुक्रोशंचक्रुर्भूतेषुभारत ॥ त्रीनुपायानुपाक्रम्यदंडेनरुरुधुःप्रजाः ३० नजग्मुःसंविदंतैश्चदर्पादसुरसत्तमाः ॥ अथवैभगवान्ब्रह्माब्रह्मर्षिभिरुपस्थितः
३१ तदाहिमवतःशृंगेसुरम्येपद्मतारके ॥ शतयोजनविस्तारेमणिरत्नचयाचिते ३२ ३० । ३१ पद्मानीवतारकायत्रजलप्रस्तस्मिन्पद्मतारके अत्यंतमुच्छ्रितइत्यर्थः ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० त्रिकूटंत्रीणिकूटानिकपटानिपार्श्वयोरग्रेचतीक्ष्णधाररूपाणिपरविदार

तस्मिन्नगिरिवरेपुत्रपुष्पितद्रुमकानने ॥ तस्थौसविबुधश्रेष्ठोब्रह्मालोकार्थसिद्धये ३३ ततोवर्षसहस्रांतेवितानमकरोत्प्रभुः ॥ विधिनाकल्पदृष्टेनयथावच्चोपपादि
तम् ३४ ऋषिभिर्यज्ञपट्टभिर्यथावत्कर्मकर्तृभिः ॥ समिद्भिःपरिसंकीर्णदीप्यमानैश्चपावकैः ३५ कांचनैर्यज्ञभांडैश्चभ्राजिष्णुभिरलंकृतम् ॥ वृतंदेवगणैश्चैवप्रव
रैर्यज्ञमंडलम् ३६ तथाब्रह्मर्षिभिश्चैवसदस्यैरुपशोभितम् ॥ तत्रघोरतमंवृत्तमृषीणांमेपरिश्रुतम् ३७ चंद्रमाविमलंव्योमयथाभ्युदिततारकम् ॥ विकीर्याग्निं
तथाभूतमुत्थितंश्रूयतेतदा ३८ नीलोत्पलसवर्णाभंतीक्ष्णदंष्ट्रंकृशोदरम् ॥ प्रांशुंसुदुर्धर्षतरंतथैवह्यमितौजसम् ३९ तस्मिन्नुत्पतमानेचप्रचचालवसुंधरा ॥
महोर्मिकलितावर्तश्चुक्षुभेसमहोदधिः ४० पेतुरुल्कामहोत्पाताःशाखाश्चमुमुचुर्द्रुमाः ॥ अप्रशांतादिशःसर्वाःपवनश्चाशिवोववौ ४१ मुहुर्मुहुश्चभूतानिप्राव्यथं
तभयात्तथा ॥ ततःसतुमुलंदृष्ट्वातंचभूतमुपस्थितम् ४२ महर्षिसुरगंधर्वानुवाचेदंपितामहः ॥ मयैवंचिंतितंभूतमसिर्नामैषवीर्यवान् ४३ रक्षणार्थायलोकस्य
वधायचसुरद्विषां ॥ ततस्तद्रूपमुत्सृज्यबभौनिस्त्रिंशएवसः ४४ विमलस्तीक्ष्णधारश्चकालांतकइवोद्यतः ॥ ततःसशितिकंठायरुद्रायार्षभकेतवे ।४५ ब्रह्माददा
वसिंतीक्ष्णमधर्मप्रतिवारणम् ॥ ततःसभगवान्रुद्रोमहर्षिजनसंस्तुतः ४६ प्रगृह्यासिममेयात्मारूपमन्यच्चकारह ॥ चतुर्बाहुःस्पृशन्मूर्ध्नाभूस्थितोऽपिदिवा
करम् ४७ ऊर्ध्वदृष्टिर्महालिंगोमुखाज्ज्वालाःसमुत्सृजन् ॥ विकुर्वन्बहुधावर्णान्नीलपांडुरलोहितान् ४८ बिभ्रत्कृष्णाजिनंवासोहेमप्रवरतारकम् ॥ नेत्रंचैकंलला
टेनभास्करप्रतिमंवहन् ४९ शुशुभातेऽतिविमलेद्वेनेत्रेकृष्णपिंगले ॥ ततोदेवोमहादेवःशूलपाणिर्भगाक्षिहा ५० संप्रगृह्यतुनिस्त्रिंशंकालाग्निसमवर्चसम् ॥ त्रिकू
टंचर्मचोद्यम्यसविद्युतमिवांबुदम् ॥ चचारविविधान्मार्गान्महाबलपराक्रमः ५१ विधुन्वन्नसिमाकाशेतथायुद्धचिकीर्षया ॥ तस्यनादंविनदतोमहाहासंचमुंचतः
५२ बभौप्रतिभयंरूपंतदारुद्रस्यभारत ॥ तद्रूपधारिणंरुद्रंरौद्रकर्मचिकीर्षया ५३ निशम्यदानवाःसर्वेहृष्टाःसमभिदुद्रुवुः ॥ अश्मभिश्चाभ्यवर्षंतप्रदीप्तैश्चतथो
ल्मुकैः ५४ घोरैःप्रहरणैश्चान्यैःक्षुरधारैरयोमयैः ॥ ततस्तुदानवानीकंसंप्रणेतारमच्युतम् ५५ रुद्रंदृष्ट्वाबलोद्भूतंप्रमुमोहचचालच ॥ चित्रंशीघ्रपदत्वाच्चचरं
तमसिपाणिनम् ५६ तमेकमसुराःसर्वेसहस्रमितिमेनिरे ॥ छिंदन्भिंदन्रुजन्कृंतन्दारयन्पोथयन्नपि ५७ अचरद्वैरिसंघेषुदावाग्निरिवकक्षगः ॥ असिवेगप्र
भग्नास्तेछिन्नबाहूरुवक्षसः ५८ संप्रकीर्णांत्रगात्राश्चपेतुरुर्व्यांमहाबलाः ॥ अपरेदानवाभग्नाःखड्गपातावपीडिताः ५९ अन्योन्यमभिनर्दंतोदिशःसंप्रतिपेदिरे ॥
भूमिंकेचित्प्रविविशुःपर्वतानपरेतथा ६० अपरेजग्मुराकाशमपरेंभःसमाविशन् ॥ तस्मिन्महतिसंवृत्तेसमरेभृशदारुणे ६१ बभूवभूःप्रतिभयामांसशोणितकर्द
मा ॥ दानवानांशरीरैश्चपतितैःशोणितोक्षितैः ६२

काणियस्मिन् ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२

६३ । ६४ । ६५ । ६६ । ६७ । ६८ स्थूलसूक्ष्मात्मकारणात्स्थूलआत्माशरीरंसूक्ष्मआत्मामनः तयोःप्रीणनार्थं ६९ । ७० । दुर्वारादीनीत्यत्रदुर्वाचादीनीतिसाधीयान्पाठः ७१ । ७२

समाकीर्णामहाबाहोशैलैरिवसकिंशुकैः ॥ सरुद्रोदानवान्हत्वाकृत्वाधर्मोत्तरंजगत् ६३ रौद्रंरूपमथोत्क्षिप्यचक्रेरूपंशिवंशिवः ॥ ततोमहर्षयःसर्वेसर्वेदेवगणास्त
था ६४ जयेनाद्भुतकल्पेनदेवदेवंतथार्चयन् ॥ ततःसभगवान्रुद्रोदानवक्षतजोक्षितम् ६५ असिंधर्मस्यगोप्तारंददौसत्कृत्यविष्णवे ॥ विष्णुर्मरीचये
प्रादान्मरीचिर्भगवानपि ६६ महर्षिभ्योददौखड्गमृषयोवासवायच ॥ महेंद्रोलोकपालेभ्योलोकपालास्तुपुत्रक ६७ मनवेसूर्यपुत्रायददुःखड्गंसुवि
स्तरम् ॥ ऊचुश्चैनंतथावाक्यंमानुषाणांत्वमीश्वरः ६८ असिनाधर्मगर्भेणपालयस्वप्रजाइति ॥ धर्मसेतुमतिक्रांताःस्थूलसूक्ष्मात्मकारणात् ६९ विभज्यदंडं
रक्ष्यास्तुधर्मतोनयदृच्छया ॥ दुर्वाचानिग्रहोदंडोहिरण्यबहुलस्तथा ७० व्यंगताचशरीरस्यवधोवाऽनल्पकारणात् ॥ असेरेतानिरूपाणिदुर्वारादीनिनिर्दिशेत्
७१ असेरेवंप्रमाणानिपरिपाल्यव्यतिक्रमात् ॥ सविसृज्याथपुत्रंस्वंप्रजानामधिपंततः ७२ मनुःप्रजानांरक्षार्थंक्षुपायप्रददावसिं ॥ क्षुपाज्जग्राहचेक्ष्वाकुरिक्ष्वाको
श्चपुरूरवाः ७३ आयुश्चतस्माल्लेभेतंनहुषश्चततोभुवि ॥ ययातिर्नहुषाच्चापिपूरुस्तस्माच्चलब्धवान् ७४ अमूर्तरयसस्तस्मात्ततोभूमिशयोनृपः ॥ भरतश्चा
पिदौष्यंतिर्लेभेभूमिशयादसिं ७५ तस्माल्लेभेचधर्मज्ञोराजन्नैलविलस्तथा ॥ ततस्त्वैलविलाल्लेभेधुंधुमारोनरेश्वरः ७६ धुंधुमाराच्चकांबोजोमुचुकुंदस्ततोऽलभत्॥
मुचुकुंदान्मरुत्तश्चमरुत्तादपिरैवतः ७७ रैवताद्युवनाश्वश्चयुवनाश्वात्ततोरघुः ॥ इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वःप्रतापवान् ७८ हरिणाश्वादसिंलेभेशुनकःशुनका
दपि ॥ उशीनरोवैधर्मात्मातस्माद्भोजःसयादवः ७९ यदुभ्यश्चशिविर्लेभेशिवेश्चापिप्रतर्दनः ॥ प्रतर्दनादष्टकश्चपृषदश्वोऽष्टकादपि ८० पृषदश्वाद्भरद्वाजोद्रोणस्त
स्मात्कृपस्ततः ॥ ततस्त्वंभ्रातृभिःसार्धंपरमासिमवाप्तवान् ८१ कृत्तिकास्तस्यनक्षत्रमसेरग्निश्चदैवतम् ॥ रोहिणींगोत्रमास्थाप्यरुद्रश्चगुरुरुत्तमः ८२ असेर
ष्टौहिनामानिरहस्यानिनिबोधमे ॥ पांडवेयसदायानिकीर्तयन्लभतेजयम् ८३ असिर्विशसनःखड्गस्तीक्ष्णधारोदुरासदः ॥ श्रीगर्भोविजयश्चैवधर्मपालस्तथै
वच ८४ अग्र्यःप्रहरणानांचखड्गोमाद्रवतीसुत ॥ महेश्वरप्रणीतश्चपुराणेनिश्चयंगतः ८५ पृथुस्तूत्पादयामासधनुराद्यमरिंदमः ॥ तेनेयंपृथिवीदुग्धासस्या
निसुबहून्यपि ॥ धर्मेणचयथापूर्वंवैन्येनपरिरक्षिता ८६ तदेतदार्षमाद्रेयप्रमाणंकर्तुमर्हसि ॥ असेश्चपूजाकर्तव्यासदायुद्धविशारदैः ८७ इत्येषप्रथमःकल्पो
व्याख्यातस्तेसुविस्तरात् ॥ असेरुत्पत्तिसंसर्गोयथावद्भरतर्षभ ८८ सर्वथैतदिदंश्रुत्वाखड्गसाधनमुत्तमम् ॥ लभतेपुरुषःकीर्तिंप्रेत्यचानंत्यमश्नुते ८९ ॥ इति
श्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिखड्गोत्पत्तिकथनेषट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ ॥ ५ ॥ ॥ ५ ॥

७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ ॥ इतिशांतिप० आप० नी० भारतभावदीपेषट्षष्ट्यधिकशततमोऽध्यायः॥१६६॥

एवंगूराणांसर्वापन्निवारणहेतुःखड्गःइतिखड्गोत्पत्त्यंताकथासंवैःश्रुता । अथेदानींमेकरूपेऽप्युपदेष्टरिशिष्याःस्वस्वाभिप्रायानुसारेणैवशास्त्रतत्त्वंगृह्णंतीत्येतमर्थमाख्यायिकामुखेनदर्शयति इत्युक्तव
तीत्यादिना आवसथंगृहं विदुरःपंचमोयेषुतान्स्वयंषष्ठःषड्योगजागीताइत्ययंषड्जगीताध्यायः १ । २ त्रिवर्गविजयायकामक्रोधलोभानांजयाय ३ । ४ धर्मावतारत्वाद्धर्मशास्त्रानुसारिवाक्यं

वैशंपायनउवाच ॥ इत्युक्तवतिभीष्मेतुतूष्णींभूतेयुधिष्ठिरः ॥ पप्रच्छावसथंगत्वाभ्रातॄन्विदुरपंचमान् १ धर्मेचार्थेचकामेचलोकवृत्तिःसमाहिता ॥ तेषांगरीया
न्कतमोमध्यमःकोलघुश्चकः २ कस्मिंश्चात्मानियंतव्यस्त्रिवर्गविजयायवै ॥ संहृष्टानैष्ठिकंवाक्यंयथावद्वक्तुमर्हथ ३ ततोर्थगतितत्त्वज्ञःप्रथमंप्रतिभानवान् ॥
जगादविदुरोवाक्यंधर्मशास्त्रमनुस्मरन् ४ ॥ विदुरउवाच ॥ बाहुश्रुत्यंतपस्त्यागःश्रद्धायज्ञक्रियाक्षमा ॥ भावशुद्धिर्दयासत्यंसंयमश्चात्मसंपदः ५ एतदे
वाभिपद्यस्वमातेभूच्चलितंमनः ॥ एतन्मूलौहिधर्मार्थावेतदेकपदंहिमे ६ धर्मेणैवर्षयस्तीर्णाधर्मेलोकाःप्रतिष्ठिताः ॥ धर्मेणदेवावृद्धुर्धर्मेचार्थःसमाहितः ७
धर्मोराजन्गुणःश्रेष्ठोमध्यमोह्यर्थउच्यते ॥ कामोयवीयानितिचप्रवदंतिमनीषिणः ८ तस्माद्धर्मप्रधानेनभवितव्यंयतात्मना ॥ तथाचसर्वभूतेषुवर्तितव
व्यंयथाऽऽत्मनि ९ ॥ वैशंपायनउवाच ॥ समाप्तवचनेतस्मिन्नर्थशास्त्रविशारदः ॥ पार्थोधर्मार्थतत्त्वज्ञोजगौवाक्यंप्रचोदितः १० ॥ अर्जुनउवाच ॥
कर्मभूमिरियंराजन्निहवार्ताप्रशस्यते ॥ कृषिर्वाणिज्यगोरक्षंशिल्पानिविविधानिच ११ अर्थइत्येवसर्वेषांकर्मणामव्यतिक्रमः ॥ नहृतेऽर्थेनवर्ततेधर्मकामा
वितिश्रुतिः १२ विषयैरर्थवान्धर्ममाराधयितुमुत्तमम् ॥ कामंचचरितुंशक्तोदुष्प्रापमकृतात्मभिः १३ अर्थस्यावयवावेतौधर्मकामावितिश्रुतिः ॥ अर्थसिद्ध्या
विनिर्वृत्तावुभावेतौभविष्यतः १४ तद्गतार्थंहिपुरुषंविशिष्टतरयोनयः ॥ ब्रह्माणमिवभूतानिसततंपर्युपासते १५ जटाजिनधरादांताःपंकदिग्धाजितेंद्रियाः ॥
मुंडानिस्तंतवश्चापिवसंत्यर्थार्थिनःपृथक् १६ काषायवसनाश्चान्येश्मश्रुलाह्रीनिषेविणः ॥ विद्वांसश्चैवशांताश्चमुक्ताःसर्वपरिग्रहैः १७ अर्थार्थिनःसंतिकेचिदपरे
स्वर्गकांक्षिणः ॥ कुलप्रत्यागमाश्चैकेस्वंस्वंधर्ममनुष्ठिताः १८ आस्तिकानास्तिकाश्चैवनियताःसंयमेपरे ॥ अप्रज्ञानंतमोभूतंप्रज्ञानंतुप्रकाशिता १९ भृत्यान्
भोगैर्द्विषोदंडैर्योयोजयतिसोऽर्थवान् ॥ एतन्मतिमतांश्रेष्ठमतंममयथातथम् ॥ अनयोस्तुनिबोधत्वंवचनंवाक्यकंठयोः २० ॥ वैशंपायनउवाच ॥
ततोधर्मार्थकुशलौमाद्रीपुत्रावनंतरम् ॥ नकुलःसहदेवश्चवाक्यंजगदतुःपरम् २१ नकुलसहदेवावूचतुः ॥ आसीनश्चशयानश्चविचरन्नपिवास्थितः ॥
अर्थयोगंदृढंकुर्याद्योगैरुच्चावचैरपि २२

विदुरउवाच बाहुश्रुत्यमिति बाहुश्रुत्यंबह्वध्ययनं । तपःस्वधर्माचरणं । त्यागोदानं । श्रद्धाआस्तिक्यं । यज्ञक्रियासोमसंस्थादिः । क्षमाआकुष्टस्यताडितस्यवानिर्विकारित्वं । भावशुद्धिर्नि ॥३०॥
ष्कपटत्वं । दयादीनेष्वनुजिघृक्षा । सत्यंहिंसाशून्यंयथार्थवचनं । संयमइंद्रियनिग्रहः । एतादृशआत्मनोधर्मस्यसंपदः ऐश्वर्याणि ५ । ६ । ७ । ८ । ९ । १० एवंधर्मश्रैष्ठ्येविदुरेणप्रतिपादितेऽर्थ
श्रैष्ठ्यमर्जुनआह कर्मभूमिरिति ११ अव्यतिक्रमः मर्यादा १२ । १३ । १४ । १५ निस्तंतवः नैष्ठिकब्रह्मचारिणः १६ । १७ । १८ प्रज्ञानमर्थश्रैष्ठ्यविषयं १९ अनयोर्नकुलसहदेवयोः २० । २१ । २२

२३ तद्विनिश्चितंत्वात्त्वांप्रतिअमृतसमंयथास्यात्तथामतौआवयोरितिशेषः २४ अनर्थस्यअर्थहीनस्यअधार्मिणःधर्महीनस्य २५ धर्मरूपेणप्रदानेनविश्वस्तेषु अस्मद्वाक्येविश्वासवत्सु २६ धर्म
मिति अत्रधर्मार्थयोःसमत्वेऽपिधर्मस्यपूर्वत्वाद्विदुरमतमेवैतदीषद्भेदेनदर्शितं २७ । २८ कामस्यैवप्राधान्यंमन्वानोभीमसेनउवाच नकामइति २९ । ३० । ३१ । ३२ । ३३ । ३४ उदश्वितः

अस्मिंस्तुवैविनिर्वृत्तेदुर्लभेपरमप्रिये ॥ इहकामानवाप्नोतिप्रत्यक्षंनात्रसंशयः २३ योऽर्थोधर्मेणसंयुक्तोधर्मोयश्चार्थसंयुतः ॥ तद्धित्वाऽमृतसंवादंतस्मादेतौमता
विह २४ अनर्थस्यनकामोऽस्तितथाऽर्थोधर्मिणःकुतः ॥ तस्मादुद्विजतेलोकोधर्मार्थाद्योबहिष्कृतः २५ तस्माद्धर्मप्रदानेनसाध्योऽर्थःसंयतात्मना ॥ विश्वस्ते
षुहिभूतेषुकल्पतेसर्वमेवहि २६ धर्मंसमाचरेत्पूर्वंततोऽर्थंधर्मसंयुतम् ॥ ततःकामंचरेत्पश्चात्सिद्धार्थःसहितत्परम् २७ ॥ वैशंपायनउवाच ॥ विरेमतुस्तुतद्वा
क्यमुक्त्वातावश्विनोःसुतौ ॥ भीमसेनस्तदावाक्यमिदंवक्तुंप्रचक्रमे २८ ॥ भीमसेनउवाच ॥ नाकामःकामयत्यर्थंनाकामोधर्ममिच्छति ॥ नाकामःकामया
नोऽस्तितस्मात्कामोविशिष्यते २९ कामेनयुक्ताऋषयस्तपस्येवसमाहिताः ॥ पलाशफलमूलादावायुभक्षाःसुसंयताः ३० वेदोपवेदेष्वपरेयुक्ताःस्वाध्याय
पारगाः ॥ श्राद्धयज्ञक्रियायांचतथादानप्रतिग्रहे ३१ वणिजःकर्षकागोपाःकारवःशिल्पिनस्तथा ॥ देवकर्मकृतश्चैवयुक्ताःकामेनकर्मसु ३२ समुद्रंवाविशंत्य
न्येनराःकामेनसंयुताः ॥ कामोहिविविधाकारःसर्वंकामेनसंततम् ३३ नास्तिनासीन्नाभविष्यद्भूतंकामात्मकात्परम् ॥ एतत्सारंमहाराजधर्मार्थावत्रसंस्थितौ
३४ नवनीतंयथादध्नस्तथाकामोऽर्थधर्मतः ॥ श्रेयस्तैलंहिपिण्याकाद्घृतंश्रेयउदश्वितः ३५ श्रेयःपुष्पफलंकाष्ठात्कामोधर्मार्थयोर्वरः ॥ पुष्पतोमध्विवरसःका
मआभ्यांतथास्मृतः ॥ कामोधर्मार्थयोर्योनिःकामश्चाथतदात्मकः ३६ नाकामतोब्राह्मणाःस्वन्नमर्थान्नाकामतोददतिब्राह्मणेभ्यः ॥ नाकामतोविविधालोकचेष्टा
तस्मात्कामःप्राक्त्रिवर्गस्यदृष्टः ३७ सुचारुवेषाभिरलंकृताभिर्मदोत्कटाभिःप्रियदर्शनाभिः ॥ रमस्वयोषाभिरुपेत्यकामंकामोहिराजन्परमोभवेन्नः ३८ बुद्धिर्म
मैषापरिखास्थितस्यमाभूद्विचारस्तवधर्मपुत्र ॥ स्यात्संहितंसद्भिरफल्गुसारंसमेतिवाक्यंपरमानृशंसम् ३९ धर्मार्थकामाःसममेवसेव्यायोह्येकभक्तःसनरोजघ
न्यः ॥ तयोस्तुदाक्ष्यंप्रवदंतिमध्यंसउत्तमोयोऽभिरतस्त्रिवर्गे ४० प्राज्ञःसुहृच्चंदनसारलिप्तोविचित्रमाल्याभरणैरुपेतः ॥ ततोवचःसंग्रहविस्तरेणप्रोक्त्वाथवीरान्
विरराममभीमः ४१ ततोमुहूर्तादथधर्मराजोवाक्यानितेषामनुचिंत्यसम्यक् ॥ उवाचवाचावितथंस्मयन्वैलब्धश्रुतोधर्मभृतांवरिष्ठः ४२ ॥ युधिष्ठिरउवाच ॥ निःसं
शयंनिश्चितधर्मशास्त्राःसर्वेभवंतोविदितप्रमाणाः ॥ विज्ञातुकामस्यममेहवाक्यमुक्तंयदैनैष्ठिकंतच्छ्रुतंमे ॥ इदंत्ववश्यंगदतोममापिवाक्यंनिबोधध्वमनन्यभावाः ४३


तक्रात् ३५ । ३६ अकामतःकामंविना केवलार्थात्स्वन्नंमृष्टान्नमस्तिनहिधनमस्तीतिमृष्टंभुज्यतेअपितुरुच्यात्मकःकामोऽस्तीति अन्ययाज्वरितस्यापिमृष्टंदीयेत ३७ । ३८ परिखा
स्थितस्यपरितःखातापरिखासर्वतोमूलशोषइत्यर्थः तत्रस्थितस्यअनृशंसमनिष्ठुरं ३९ दाक्ष्यंअर्थहेतुत्वान्मध्यंमध्यमं अर्थात्कामउत्तमोधर्मोजघन्यइतिफलितं ४० लब्धंश्रुतंश्रवणंयैस्ते
षांलब्धश्रुतां ४१ । ४२ नैष्ठिकंसिद्धांतरूपं एतेनपूर्वेसर्वेपूर्वपक्षाएवेत्युक्तम् ४३

यः पापादिपंचकेननिरतः सदुःखसुखादिसिद्धिर्यस्यतस्मात्सर्वकर्मद्वंद्वाद्विमुच्यते ४४ जातिर्जन्मस्मरणमतीतार्थस्मरणंतेनातीतत्वमात्रंलक्ष्यते जन्ममरणात्मकानीत्यर्थः ४५ स्नेहेनेतिरा
गद्वेषयोरुपलक्षणं एतेनमुक्तेर्दुर्लभत्वमाह नचेति तथापिप्राप्याचसेत्याह बुधाइति ४६ एतत्पदार्थमाह यथेत्यादिना ४७ अर्थमोक्षं वित्तजानीत लोकहितायमोक्षाय त्रिवर्गहीनोऽपिगुह्यमर्थ
रहस्यंज्ञानंविंदतेलभतेपूर्वोक्तोऽधिकारी ४८ ततोयुधिष्ठिरात् ततःपूर्वोक्तात्सर्वेषांवाक्यात् हेतुमदितिवा ४९ । ५० । ५१ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणि नीलकंठीयेभारतभावदीपे

योवैनपापेनिरतोनपुण्येनार्थेनधर्मेमनुजोनकामे ॥ विमुक्तदोषःसमलोष्टकांचनोविमुच्यतेदुःखसुखार्थसिद्धेः ४४ भूतानिजातिस्मरणात्मकानिजराविकारैश्चस
मन्वितानि ॥ भूयश्चतैस्तैःप्रतिबोधितानिमोक्षंप्रशंसंतिनतंचविद्मः ४५ स्नेहेनयुक्तस्यनचास्तिमुक्तिरितिस्वयंभूर्भगवानुवाच ॥ बुधाश्चनिर्वाणपराभवंतित
स्मान्नकुर्यात्प्रियमप्रियंच ४६ एतत्प्रधानंचनकामकारोयथानियुक्तोऽस्मितथाकरोमि ॥ भूतानिसर्वाणिविधिर्नियुंक्तेविधिर्बलीयानितिवित्तसर्वे ४७ नकर्मणा
ऽऽप्नोत्यनवाप्यमर्थंयद्भावितद्वैभवतीतिवित्त ॥ त्रिवर्गहीनोऽपिहिविंदतेऽर्थंतस्मादहोलोकहितायगुह्यम् ४८ ॥ वैशंपायनउवाच ॥ ततस्तदग्र्यंवचनंमनोनुगंस
मस्तमाज्ञायततोहिहेतुमत् ॥ तदाप्रणेदुश्चजहर्षिरेचतेकुरुप्रवीरायचचक्रिरेंऽजलिम् ४९ सुचारुवर्णाक्षरचारुभूषितांमनोनुगांनिर्धुतवाक्यकंटकाम् ॥ निशम्यतां
पार्थिवपार्थभाषितांगिरंनरेंद्राःप्रशशंसुरेवते ५० सचापितान्धर्मसुतोमहामनास्तदाप्रतीतान्प्रशशंसवीर्यवान् ॥ पुनश्चपप्रच्छसरिद्वरासुतंततःपरंधर्ममहीनचे
तसम् ५१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिषड्जगीतायांसप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ॥ छ ॥ ॥ युधिष्ठिरउवाच ॥
पितामहमहाप्राज्ञकुरूणांप्रीतिवर्धन ॥ प्रश्नंकंचित्प्रवक्ष्यामितन्मेव्याख्यातुमर्हसि १ कीदृशामानवाःसौम्याःकैःप्रीतिःपरमाभवेत् ॥ आयत्यांचतदात्वेचकेक्ष
मास्तान्वदस्वमे २ नहितत्रधनंस्फीतंनचसंबंधिबांधवाः ॥ तिष्ठंतियत्रसुहृदस्तिष्ठंतीतिमतिर्मम ३ दुर्लभोहिसुहृच्छ्रोताडुर्लभश्चहितःसुहृत् ॥ एतद्धर्मभृतां
श्रेष्ठसर्वंव्याख्यातुमर्हसि ४ ॥ भीष्मउवाच ॥ संधेयान्पुरुषान्राजन्नसंधेयांश्चतत्त्वतः ॥ वदतोमेनिबोधत्वंनिखिलेनयुधिष्ठिर ५ लुब्धःक्रूरस्त्यक्तध
र्मानिकृतिःशठएवच ॥ क्षुद्रःपापसमाचारःसर्वशंकीतथाऽलसः ६ दीर्घसूत्रोऽनृजुःकुष्टोगुरुदारप्रधर्षकः ॥ व्यसनेयःपरित्यागीदुरात्मानिरपत्रपः ७
सर्वतःपापदर्शीचनास्तिकोवेदनिंदकः ॥ संप्रकीर्णेंद्रियोलोकेयःकामंनिरतश्चरेत् ८ असत्योलोकविद्विष्टःसमयेचानवस्थितः ॥ पिशुनोथाकृतप्रज्ञोमत्सरी
पापनिश्चयः ९ दुःशीलोथाकृतात्माचनृशंसःकितवस्तथा ॥ मित्रैरपकृतिर्नित्यमिच्छतेर्थपरस्ययः १०

सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ यद्यपिसर्वेषयामन्नमुपदेशार्थंमुद्धंतितथाऽपिसन्मित्रलाभःसर्वासांसंपदांहेतुर्दुर्भित्रसंबंधःसर्वासामाप
दांहेतुरितिसर्वपुरुषसाधारणोऽर्थःकृत्स्नायाराजनीतेश्चसारभूतइतितमेवव्युत्पादयतिप्रश्नोत्तरमुखेन पितामहमहाप्राज्ञेत्यादिना १ आयत्यांपरिणामकालेतदात्वेचवर्तमानकालेःक्षमाःहिताये
विशेषः २ मित्रस्यार्थादिभ्योऽन्तरंगत्वमाह नहीति ३ । ४ संधेयान्मित्रीकर्तुंयोग्यान् ५ अलसोऽनुद्योगी ६ दीर्घसूत्रश्चिरकारी कुष्टोलोकनिंदितः ७ । ८ । ९ । १०

११ अयुक्तःअनवहितः १२ अज्ञानात्कृतेऽपकृतेकार्यार्थमेवसेवतेनतुधर्मार्थमितिकार्यसेवी १३ । विलोचनःविपरीतदृष्टिः १४ । १५ । १६ । १७ । १८ । १९ । २० वासोरक्तमिवाविकंमेषकं
बलः २१ अनर्थेनिर्धनेक्रोधाद्विरागंनदर्शयंति युवतीषुचलोभमोहाभ्यांविरागंनदर्शयंतीतियोजना विरज्यंतीतिपूर्वश्लोकाद्विपरिणामेनानुषज्यते दोषांश्चलोभमोहादीनर्थेषुयुवतीषुचेतिपा
ठांतरंतुस्पष्टार्थम् २२ अभिमानानिसर्वतःप्रमाणानिशास्त्रादीनिसृष्टार्थंप्रारब्धकर्मप्रापितंचार्थंचरंतिअनुसरंतिअनुषंगिणःआत्ममानरहिताः २३ । २४ । २५ । २६ कृतंउपकारंप्रतिबाधाऽपला

ददतश्चयथाशक्तियोनतुष्यतिमंदधीः ॥ अधैर्यमपियोयुंक्तेसदामित्रंनरर्षभ ११ अस्थानक्रोधनोऽयुक्तोयश्चाकस्माद्विरुध्यते ॥ सुहृदश्चैवकल्याणानाशुत्यजति
किल्बिषी १२ अल्पेप्यपकृतेमूढस्तथाज्ञानात्कृतेऽपिच ॥ कार्यसेवीचमित्रेषुमित्रद्वेषीनराधिप १३ शत्रुर्मित्रमुखोयश्चजिह्मप्रेक्षीविलोचनः ॥ नविरज्यतिकल्या
णेयःकुर्यात्तादृशंनरम् १४ पानपोद्वेषणःक्रोधीनिर्घृणःपरुषस्तथा ॥ परोपतापीमित्रध्रुक्तथाप्राणिवधेरतः १५ कृतघ्नश्चाधमोलोकेनसंधेयःकदाचन ॥ छिद्रान्वे
षीह्यसंधेयःसंधेयानपिमेशृणु १६ कुलीनावाक्यसंपन्नाज्ञानविज्ञानकोविदाः ॥ रूपवंतोगुणोपेतास्तथाऽलुब्धाजितश्रमाः १७ सन्मित्राश्चकृतज्ञाश्चसर्वज्ञालोभव
र्जिताः ॥ माधुर्यगुणसंपन्नाःसत्यसंधाजितेंद्रियाः १८ व्यायामशीलाःसततंकुलपुत्राःकुलोद्वहाः ॥ दोषैःप्रमुक्ताःप्रथितास्तेग्राह्याःपार्थिवैर्नराः १९ यथाशक्तिस
माचाराःसंप्रतुष्यंतिहिप्रभो ॥ नास्थानेक्रोधवंतश्चनचाकस्माद्विरागिणः २० विरक्ताश्चनदुष्यंतिमनसाप्यर्थकोविदाः ॥ आत्मानंपीडयित्वापिसुहृत्कार्यपराय
णाः ॥ विरज्यंतिनमित्रेभ्योवासोरक्तमिवाविकम् २१ क्रोधाच्चलोभमोहाभ्यांनानर्थेयुवतीषुच ॥ नदर्शयंतिसुहृदोविश्वस्ताधर्मवत्सलाः २२ लोष्टकांचनतुल्या
र्थाःसुहृत्सुदृढबुद्धयः ॥ येचरंत्यभिमानानिसृष्टार्थमनुषंगिणः २३ संगृह्णंतःपरिजनंस्वाम्यर्थपरमाःसदा ॥ ईदृशैःपुरुषश्रेष्ठैर्यःसंधिंकुरुतेनृपः २४ तस्यविस्तीर्य
तेराज्यंज्योत्स्नाग्रहपतेरिव ॥ शास्त्रनित्याजितक्रोधाबलवंतोरणेसदा २५ जन्मशीलगुणोपेताःसंधेयाःपुरुषोत्तमाः ॥ येचदोषसमायुक्तानराःप्रोक्तामयाऽनघ
२६ तेषामप्यधमाराजन्कृतघ्नामित्रघातकाः ॥ त्यक्तव्यास्तुदुराचाराःसर्वेषामितिनिश्चयः २७ ॥ युधिष्ठिरउवाच ॥ विस्तरेणाथसंबंधंश्रोतुमिच्छामितत्त्व
तः ॥ मित्रद्रोहीकृतघ्नश्चयःप्रोक्तस्तद्वदस्वमे २८ ॥ भीष्मउवाच ॥ हंततेवर्तयिष्येहमितिहासंपुरातनम् ॥ उदीच्यांदिशियद्वृत्तंम्लेच्छेषुमनुजाधिप २९ ब्रा
ह्मणोमध्यदेशीयःकश्चिद्वैब्रह्मवर्जितः ॥ ग्रामंवृद्धियुतंवीक्ष्यप्राविशद्भैक्ष्यकांक्षया ३० तत्रदस्युर्धनयुतःसर्ववर्णविशेषवित् ॥ ब्रह्मण्यःसत्यसंधश्चदानेचनिरतोऽभवत्
३१ तस्यक्षयमुपागम्यततोभिक्षामयाचत ॥ प्रतिश्रयंचवासार्थंभिक्षांचैवाथवार्षिकीम् ३२ प्रादात्तस्मैसविप्रायवस्त्रंचसदशंनवम् ॥ नारींचापिवयोपेतांभर्त्रावि
रहितांतथा ३३ एतत्संप्राप्यहृष्टात्मादस्योःसर्वंद्विजस्तथा ॥ तस्मिन्गृहवरेराजंस्तयारेमेसगौतमः ३४

येनवातेकृतघ्नाःतएवउपकर्तुर्नाशकराःमित्रद्रुहः २७ संबंधंसंबध्यतेसज्जतेहातुमुपादातुंवाश्रुतमर्थंयेनतंइतिहासम् २८ । २९ ब्रह्मवेदस्तदुक्तंकर्मचतद्विवर्जितः ३० । ३१ क्षयंगृहम् ३२
वयोपेतांयुवतीं सांधिरार्थः भर्त्राविरहितांदासीमित्यर्थः ३३ । ३४

३५ चक्रांगान्हंसान् ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणि नीलकंठीयेभारतभावदी

कुटुंबार्थंचदास्याश्चसाहाय्यंचाप्यथाकरोत् ॥ तत्रावसत्सवर्षाश्चसमृद्धेशबरालये ३५ बाणवेधेपरंयत्नमकरोच्चैवगौतमः ॥ चक्रांगान्सचनित्यंवैसर्वतोवनगोचरा
न् ३६ जघानगौतमोराजन्यथादस्युगणास्तथा ॥ हिंसापटुर्घृणाहीनःसदाप्राणिवधेरतः ३७ गौतमःसन्निकर्षेणदस्युभिःसमतामियात् ॥ तथातुवसतस्तस्यद
स्युग्रामेसुखंतदा ३८ अगमन्बहवोमासानिघ्नतःपक्षिणोबहून् ॥ ततःकदाचिदपरोद्विजस्तंदेशमागतः ३९ जटाचीराजिनधरःस्वाध्यायपरमःशुचिः ॥ विनी
तोनियताहारोब्रह्मण्योवेदपारगः ४० सब्रह्मचारीतदेश्यःसखातस्यैवसुप्रियः ॥ तंदस्युग्राममगमद्यत्रासौगौतमोऽवसत् ४१ सतुविप्रगृहान्वेषीशूद्रान्नपरिवर्ज
कः ॥ ग्रामेदस्युसमाकीर्णेव्यचरत्सर्वतोदिशम् ४२ ततःसगौतमगृहंप्रविवेशद्विजोत्तमः ॥ गौतमश्चापिसंप्राप्तस्तावन्योन्येनसंगतौ ४३ चक्रांगभारस्कंधंतंधनु
ष्पाणिंघृतायुधम् ॥ रुधिरेणावसिक्तांगंगृहद्वारमुपागतम् ४४ तंदृष्ट्वापुरुषादाभमपध्वस्तंक्षयागतम् ॥ अभिज्ञायद्विजोव्रीडन्निदंवाक्यमथाब्रवीत् ४५ किमिदं
कुरुषेमोहाद्विप्रस्त्वंहिकुलोद्वहः ॥ मध्यदेशपरिज्ञातोदस्युभावंगतःकथम् ४६ पूर्वान्स्मरद्विजज्ञातीन्प्रख्यातान्वेदपारगान् ॥ तेषांवंशेऽभिजातस्त्वमीदृशःकु
लपांसनः ४७ अवबुध्यात्मनात्मानंसत्वंशीलंश्रुतंदमम् ॥ अनुक्रोशंचसंस्मृत्यत्यजवासमिमंद्विज ४८ सएवमुक्तःसुहृदातेनतत्रहितैषिणा ॥ प्रत्युवाचततोराज
न्विनिश्चित्यतदार्तवत् ४९ निर्धनोऽस्मिद्विजश्रेष्ठनापिवेदविदप्यहम् ॥ वित्तार्थमिहसंप्राप्तंविद्धिमांद्विजसत्तम ५० त्वद्दर्शनात्तुविप्रेंद्रकृतार्थोऽस्म्यद्यवैद्विज ॥
आवांहिसहयास्यावःश्वोवसस्वाद्यशर्वरीम् ५१ सतत्रन्यवसद्विप्रोघृणीकिंचिदसंस्पृशन् ॥ क्षुधितश्छंद्यमानोऽपिभोजनंनाभ्यनंदत ५२ ॥ इतिश्रीमहाभारते
शां०आप०कृतघ्नोपाख्यानेअष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ ॥ भीष्मउवाच ॥ तस्यांनिशायांव्युष्टायांगतेतस्मिन्द्विजोत्तमे ॥ निष्क्रम्यगौत
मोगच्छत्समुद्रंप्रतिभारत १ सामुद्रिकान्सवणिजस्ततोपश्यत्स्थितान्पथि ॥ सतेनसहसार्थेनप्रययौसागरंप्रति २ सतुसार्थोमहान्राजन्कस्मिंश्चिद्गिरिगह्वरे ॥
मत्तेनद्विरदेनाथनिहतःप्रायशोऽभवत् ३ सकथंचिद्भयात्तस्माद्विमुक्तोब्राह्मणस्तथा ॥ कांदिग्भूतोजीवितार्थीप्रदुद्रावोत्तरांदिशम् ४ सतुसार्थपरिभ्रष्टस्तस्माद्दे
शात्तथाच्युतः ॥ एकाकीव्यचरत्तत्रवनेकिंपुरुषोयथा ५ सपंथानमथासाद्यसमुद्राभिसरंतदा ॥ अससादवनंरम्यंदिव्यंपुष्पितपादपम् ६ सर्वर्तुकैराम्रवणैःपुष्पितैरुप
शोभितम् ॥ नंदनोद्देशसदृशंयक्षकिन्नरसेवितम् ७ शालैस्तालैस्तमालैश्चकालागुरुवनैस्तथा ॥ चंदनस्यचमुख्यस्यपादपैरुपशोभितम् ॥ गिरिप्रस्थेषुरम्येषु ॥३२॥
तेषुतेषुसुगंधिषु ८ समंततोद्विजश्रेष्ठास्तत्राकूजंतवैतदा ॥ मनुष्यवदनाश्चान्येभारुंडाइतिविश्रुताः ९

पेअष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ ॥ ७ ॥ ॥ तस्यामिति १ सामुद्रिकान्समुद्रोपांतगवान् २ । ३ कांदिशंमयाभीत्याकुलःकांदिग्भूतः ४ । ५ । ६ । ७ । ८ । ९

१० रम्येषुप्रदेशेषुमध्येएकत्र ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभावदीपे एको

भूलिंगशकुनाश्चान्येसामुद्राःपर्वतोद्भवाः ॥ सतान्यतिमनोज्ञानिविहगानांरुतानिवै १० शृण्वन्सुरमणीयानिविप्रोऽगच्छतगौतमः ॥ ततोऽपश्यत्सुरम्येषु
सुवर्णसिकताचिते ११ देशेसमेसुखेचित्रेस्वर्गोद्देशसमेनृप ॥ श्रियाजुष्टंमहावृक्षंन्यग्रोधंचसुमंडलम् १२ शाखाभिरनुरूपाभिर्भूषितंछत्रसन्निभम् ॥ तस्यमू
लंचसंसिक्तंवरचंदनवारिणा १३ दिव्यपुष्पान्वितंश्रीमत्पितामहसभोपमम् ॥ तंदृष्ट्वागौतमःप्रीतोमनःकांतमनुत्तमम् १४ मेध्यंसुरगृहप्रख्यंपुष्पितैःपादपैर्वृ
तम् ॥ तमासाद्यमुदायुक्तस्तस्याधस्तादुपाविशत् १५ तत्रासीनस्यकौंतेयगौतमस्यसुखःशिवः ॥ पुष्पाणिसमुपस्पृश्यप्रववावानिलःशुभः ॥ ह्लादयन्सर्व
गात्राणिगौतमस्यतदानृप १६ सतुविप्रःप्रशांतश्चस्पृष्टःपुण्येनवायुना ॥ सुखमासाद्यसुष्वापभास्करश्चास्तमभ्ययात् १७ ततोऽस्तंभास्करेयातेसंध्याकाल
उपस्थिते ॥ आजगामस्वभवनंब्रह्मलोकात्खगोत्तमः १८ नाडीजंघइतिख्यातोदयितोब्रह्मणःसखा ॥ बकराजोमहाप्राज्ञःकश्यपस्यात्मसंभवः १९ राजधर्मे
तिविख्यातोबभूवाप्रतिमोभुवि ॥ देवकन्यासुतःश्रीमान्विद्वान्देवसमप्रभः २० मृष्टाभरणसंपन्नोभूषणैरर्कसन्निभैः ॥ भूषितःसर्वगात्रेषुदेवगर्भःश्रियाज्वलन्
२१ तमागतंखगंदृष्ट्वागौतमोविस्मितोऽभवत् ॥ क्षुत्पिपासापरिश्रांतोहिंसार्थीचाभ्यवैक्षत २२ ॥ राजधर्मोवाच ॥ स्वागतंभवतोविप्रादिष्ट्याप्राप्तोऽसिमेगृहम्
अस्तंचसवितायातःसंध्येयंसमुपस्थिता २३ ममत्वंनिलयंप्राप्तःप्रियातिथिरनिंदितः ॥ पूजितोयास्यसिप्रातर्विधिदृष्टेनकर्मणा २४ ॥ इतिश्रीमहाभारतेशां
तिपर्वणि आपद्धर्मपर्वणि कृतघ्नोपाख्यानेएकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ ॥ भीष्मउवाच ॥ गिरंतांमधुरांश्रुत्वागौतमोविस्मितस्तदा ॥ कौ
तूहलान्वितोराजन्राजधर्माणमैक्षत १ ॥ ॥ राजधर्मोवाच ॥ ॥ भोःकश्यपस्यपुत्रोऽहंमातादाक्षायणीचमे ॥ अतिथिस्त्वंगुणोपेतःस्वागतंतेद्विजोत्तम २
भीष्मउवाच ॥ तस्मैदत्वाससत्कारंविधिदृष्टेनकर्मणा ॥ शालपुष्पमयींदिव्यांबृसींवैसमकल्पयत् ३ भगीरथरथाक्रांतदेशान्गंगानिषेवितान् ॥ येचरंतिमहामी
नास्तांश्चतस्यान्वकल्पयत् ४ वह्निंचापिसुसंदीप्तंमीनांश्चापिसुपीवरान् ॥ सगौतमायातिथयेन्यवेदयतकाश्यपिः ५ भुक्तवंतंचतंविप्रंप्रीतात्मानंमहातपाः ॥
क्लमापनयनार्थंसपक्षाभ्यामभ्यवीजयत् ६ ततोविश्रांतमासीनंगोत्रप्रश्नमपृच्छत ॥ सोऽब्रवीद्गौतमोऽस्मीतिब्रह्मनान्यदुदाहरत् ७ तस्मैपर्णमयंदिव्यंदिव्यपु
ष्पाधिवासितम् ॥ गंधाढ्यंशयनंप्रादात्सशिश्येतत्रवैसुखम् ८ अथोपविष्टंशयनेगौतमंधर्मराट्तदा ॥ पप्रच्छकाश्यपोवाग्मीकिमागमनकारणम् ९ ततोऽब्र
वीद्गौतमस्तंदरिद्रोऽहंमहामते॥समुद्रगमनाकांक्षीद्रव्यार्थमितिभारत१०तंकाश्यपोऽब्रवीत्प्रीतोनोत्कंठांकर्तुमर्हसि॥कृतकार्योद्विजश्रेष्ठसद्रव्योयास्यसेगृहान्११
चतुर्विधाह्यर्थसिद्धिर्बृहस्पतिमतंयथा ॥ पारंपर्यंतथादैवंकाम्यंमैत्रमितिप्रभो १२ नसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ गिरमिति १ । २ । ३ । ४।५।६।७।८।९।१०।११।१२

१३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ श्येनचेष्टनाः श्येनवदुत्पतंतः शीघ्रा इत्यर्थः २२ । २३ । २४ । २५ । २६ ॥ इतिशांतिपर्वणिआपद्धर्मपर्वणिनीलकंठीये भारतभाव

प्रादुर्भूतोऽस्मितेमित्रंसुहृत्त्वंचममत्वयि ॥ सोऽहंतथायतिष्यामिभविष्यसियथाऽर्थवान् १३ ततःप्रभातसमयेसुखंदृष्ट्वाऽब्रवीदिदम् ॥ गच्छसौम्यपथाऽनेन
कृतकृत्योभविष्यसि १४ इतस्त्रियोजनंगत्वाराक्षसाधिपतिर्महान् ॥ विरूपाक्षइतिख्यातःसखाममहाबलः १५ तंगच्छद्विजमुख्यत्वंसमद्वाक्यप्रचोदितः ॥
कामानभीप्सितांस्तुभ्यंदातानास्त्यत्रसंशयः १६ इत्युक्तःप्रययौराजन्गौतमोविगतक्लमः ॥ फलान्यमृतकल्पानिभक्षयन्सयथेष्टतः १७ चंदनागुरुमुख्यानि
त्वक्पत्राणांवनानिच ॥ तस्मिन्पथिमहाराजसेवमानोद्रुतंययौ १८ ततोमेरुव्रजंनामनगरंशैलतोरणम् ॥ शैलप्राकारवप्रंचशैलयंत्राकुलंतथा १९ विदितश्चा
भवत्तस्यराक्षसेंद्रस्यधीमतः ॥ प्रहितःसुहृदाराजन्प्रीयमाणःप्रियातिथिः २० ततःसराक्षसेंद्रःस्वान्प्रेष्यानाहयुधिष्ठिर ॥ गौतमोनगरद्वाराच्छीघ्रमानीयता
मिति २१ ततःपुरवरात्तस्मात्पुरुषाःश्येनचेष्टनाः ॥ गौतमेत्यभिभाषंतःपुरद्वारमुपागमन् २२ तेतमूचुर्महाराजराजप्रेष्यास्तदाद्विजम् ॥ त्वरस्वतूर्णमाग
च्छराजात्वांद्रष्टुमिच्छति २३ राक्षसाधिपतिर्वीरोविरूपाक्षइतिश्रुतः ॥ सत्वांत्वरतिवैद्रष्टुंतत्क्षिप्रंसंविधीयताम् २४ ततःसमाद्रवद्विप्रोविस्मयाद्विगतक्लमः ॥
गौतमःपरमार्द्धितांपश्यन्परमविस्मितः २५ तैरेवसहितोराज्ञोवेश्मतूर्णमुपाद्रवत् ॥ दर्शनंराक्षसेंद्रस्यकांक्षमाणोद्विजस्तदा २६ ॥ इतिश्रीमहाभारतेशां
तिपर्वणिआपद्धर्मपर्वणि कृतघ्नोपाख्यानेसप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ॥ भीष्मउवाच ॥ ततःसविदितोराज्ञःप्रविश्यगृहमुत्तमम् ॥ पूजितोराक्षसें
द्रेणनिषसादासनोत्तमे १ पृष्टश्चगोत्रचरणंस्वाध्यायंब्रह्मचारिकम् ॥ नतत्रव्याजहारान्यद्गोत्रमात्राद्दतेद्विजः २ ब्रह्मवर्चसहीनस्यस्वाध्यायोपरतस्यच ॥
गोत्रमात्रविदोराजानिवासंसमपृच्छत ३ ॥ ॥ राक्षसउवाच ॥ ॥ क्वतेनिवासःकल्याणकिंगोत्राब्राह्मणीचते ॥ तत्त्वंब्रूहिनभीःकार्याविश्वसस्वयथासुखम् ४
गौतमउवाच ॥ मध्यदेशप्रसूतोऽहंवासोमेशबरालये ॥ शूद्रापुनर्भूर्भार्यामेसत्यमेतद्ब्रवीमिते ५ ॥ भीष्मउवाच ॥ ततोराजाविमम्रशेकथंकार्यमिदंभवेत् ॥
कथंवासुकृतंमेस्यादितिबुद्ध्याऽन्वचिंतयत् ६ अयंवैजन्मनाविप्रःसुहृत्तस्यमहात्मनः ॥ संप्रेषितश्चतेनायंकाश्यपेनममांतिकम् ७ तस्यप्रियंकरिष्यामिसहि
मामाश्रितःसदा ॥ भ्रातामेबांधवश्चासौसखाचहृदयंगमः ८ कार्तिक्यामद्यभोक्तारःसहस्रंमेद्विजोत्तमाः ॥ तत्रायमपिभोक्ताचदेयमस्मैचमेधनम् ९ सचाद्य
दिवसःपुण्योह्यतिथिश्चायमागतः ॥ संकल्पितंचैवधनंकिंविचार्यमतःपरम् १० ततःसहस्रंविप्राणांविदुषांसमलंकृतम् ॥ स्नातानामनुसंप्राप्तंसुमहत्क्षौमवास
साम् ११ तानागतान्द्विजश्रेष्ठान्विरूपाक्षोविशांपते ॥ यथार्हंप्रतिजग्राहविधिदृष्टेनकर्मणा १२ बृस्यस्तेषांतुसंन्यस्ताराक्षसेंद्रस्यशासनात् ॥ भूमौवरकु
शास्तीर्णाःप्रेष्यैर्भरतसत्तम १३

दीपे सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३

१४ विलिप्ताश्चंदनेन १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ इष्टतःइष्टदेशं २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥ इतिशांतिपर्वणि

तासुतेपूजिताराज्ञाविषण्णाद्विजसत्तमाः ॥ तिलदर्भोदकेनाथअर्चिताविधिवद्द्विजाः १४ विश्वेदेवाःसपितरःसाग्नयश्चोपकल्पिताः ॥ विलिप्ताःपुष्पवंतश्चसुप्र
चाराःसुपूजिताः १५ व्यराजंतमहाराजनक्षत्रपतयोयथा ॥ ततोजांबूनदीःपात्रीर्वज्रांकाविमलाःशुभाः १६ वरान्नपूर्णाविप्रेभ्यःप्रादान्मधुघृतप्लुताः ॥ त
स्यनित्यंसदाऽऽषाढ्यांमाघ्यांचबहवोद्विजाः १७ ईप्सितंभोजनवरंलभंतेसत्कृतंसदा ॥ विशेषतस्तुकार्तिक्यांद्विजेभ्यःसंप्रयच्छति १८ शरद्व्यपायेरत्नानि
पौर्णमास्यामितिश्रुतिः ॥ सुवर्णंरजतंचैवमणीनथचमौक्तिकान् १९ वज्रान्महाधनांश्चैववैदूर्याजिनरांकवान् ॥ रत्नराशीन्विनिक्षिप्यदक्षिणार्थेसभारत २० त
तःप्राहद्विजश्रेष्ठान्विरूपाक्षोमहाबलः ॥ गृह्णीतरत्नान्येतानियथोत्साहंयथेष्टतः २१ येषुयेषुचभांडेषुभुक्तंवोद्विजसत्तमाः ॥ तान्येवादायगच्छध्वंस्ववेश्मानी
तिभारत २२ इत्युक्तवचनेतस्मिन्राक्षसेंद्रेमहात्मनि ॥ यथेष्टंतानिरत्नानिजगृहुर्ब्राह्मणर्षभाः २३ ततोमहार्हास्तेसर्वेरत्नैरभ्यर्चिताःशुभैः ॥ ब्राह्मणामृष्टवस
नाःसुप्रीताःस्मततोऽभवन् २४ ततस्तान्राक्षसेंद्रश्चद्विजानाहपुनर्वचः ॥ नानादेशगतान्राजन्राक्षसान्प्रतिषिध्यवै २५ अद्यैकंदिवसंविप्रानवोऽस्तीहभयं
क्वचित् ॥ राक्षसेभ्यःप्रमोदध्वमिष्टतोयातमाचिरम् २६ ततःप्रदुद्रुवुःसर्वेविप्रसंघाःसमंततः ॥ गौतमोऽपिसुवर्णस्यभारमादायसत्वरः २७ कृच्छ्रात्समुद्वहन्
भारंन्यग्रोधंसमुपागमत् ॥ न्यषीदच्चपरिश्रांतःक्लांतश्चक्षुधितश्चसः २८ ततस्तमभ्यगाद्राजन्राजधर्माखगोत्तमः ॥ स्वागतेनाभिनंदंश्चगौतमंमित्रवत्सलः २९
तस्यपक्षाग्रविक्षेपैःक्लमंव्यपनयत्खगः ॥ पूजांचाप्यकरोद्धीमान्भोजनंचाप्यकल्पयत् ३० सभुक्तवान्सुविश्रांतोगौतमोऽचिंतयत्तदा ॥ हाटकस्याभिरूपस्य
भारोऽयंसुमहान्मया ३१ गृहीतोलोभमोहाभ्यांदूरंचगमनंमम ॥ नचास्तिपथिभोक्तव्यंप्राणसंधारणंमम ३२ किंकृत्वाधारयेयंवैप्राणानित्यभ्यचिंतयत् ॥ त
तःसपथिभोक्तव्यंप्रेक्षमाणोनकिंचन ३३ कृतघ्नःपुरुषव्याघ्रमनसेदमचिंतयत् ॥ अयंबकपतिःपार्श्वेमांसराशिःस्थितोमहान् ३४ इमंहत्वागृहीत्वाचयास्येऽहं
सममिहतम् ३५ ॥ इतिश्रीमहाभारतेशांतिपर्वणि आपद्धर्मपर्वणिकृतघ्नोपाख्याने एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ॥ भीष्मउवाच ॥
अथतत्रमहार्चिष्माननलोवातसारथिः ॥ तस्य विदूरेरक्षार्थंखगेंद्रेणकृतोऽभवत् १ सचापिपार्श्वेसुप्वापनिःश्वस्तोबकराट्तदा ॥ कृतघ्नस्तुसदुष्टात्मातंजिघां
सुरथाग्रतः २ ततोऽलातेनदीप्तेननिःश्वस्तंनिजघानतम् ॥ निहत्यचमुदायुक्तःसोऽनुबंधंनदृष्टवान् ३ सतंविपक्षरोमाणंकृत्वाग्नावपचत्तदा ॥ तंगृही
त्वासुवर्णंचययौद्रुततरंद्विजः ४ ततोऽन्यस्मिन्गतेचाह्निविरूपाक्षोऽब्रवीत्सुतम् ॥ नप्रेक्षेराजधर्माणमद्यपुत्रखगोत्तमम् ५

आपद्धर्मपर्वणिनीलकंठीयेभारतभावदीपे एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥ ७ ॥ ॥ ७ ॥ ॥ अथेति १ । २ अनुबंधंपापदोषं ३ । ४ । ५

६ । ७ तद्गतोहिंस्रधर्मा ८ । ९ । १० । ११ कंकालंअस्थि १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ ॥ इतिशांतिपर्वणिआपद्धर्मे

सपूर्वसंध्यांब्रह्माणंवंदितुंयातिसर्वदा ॥ मांचाप्यदृष्ट्वाकदाचित्सनगच्छतिगृहंखगः ६ उभेद्विरात्रिसंध्येवैनाभ्यगात्सममालयम् ॥ तस्मान्नशुद्ध्यतेभावोममसज्ञा
यतांसुहृत् ७ स्वाध्यायेनवियुक्तोहिब्रह्मवर्चसवर्जितः ॥ तद्गतस्तत्रमेशंकाहन्यात्तंसद्विजाधमः ८ दुराचारस्तुदुर्बुद्धिरिंगितैर्लक्षितोमया ॥ निष्करुणोदारुणा
कारोदुष्टोदस्युरिवाधमः ९ गौतमःसगतस्तत्रतेनोद्विग्नंमनोमम ॥ पुत्रशीघ्रमितोगत्वाराजधर्मनिवेशनम् १० ज्ञायतांसविशुद्धात्मायदिजीवतिमाचिरम् ॥ स
एवमुक्तस्त्वरितोरक्षोभिःसहितोययौ ११ न्यग्रोधंतत्रचापश्यत्कंकालंराजधर्मणः ॥ सरुदन्नगमत्पुत्रोराक्षसेंद्रस्यधीमतः १२ त्वरमाणःपरंशक्त्यागौतमग्रह
णायवै ॥ ततोऽविदूरेजगृहुर्गौतमंराक्षसास्तदा १३ राजधर्मशरीरंचपक्षास्थिचरणोज्झितम् ॥ तमादायाथरक्षांसिद्रुतंमेरुव्रजंययुः १४ राज्ञश्चदर्शयामासुःश
रीरंराजधर्मणः ॥ कृतघ्नंपुरुषंतंचगौतमंपापकारिणम् १५ रुरोदराजातंदृष्ट्वासामात्यःसपुरोहितः ॥ आर्तनादश्चसुमहानभूत्तस्यनिवेशने १६ सस्त्रीकुमारंच
पुरंबभूवास्वस्थमानसम् ॥ अथाब्रवीन्नृपःपुत्रंपापोऽयंवध्यतामिति १७ अस्यमांसैरिमेसर्वेविहरंतुयथेष्टतः ॥ पापाचारःपापकर्मापापात्मापापसाधनः १८
हंतव्योऽयंममातिर्भवद्भिरितिराक्षसाः ॥ इत्युक्ताराक्षसेंद्रेणराक्षसाघोरविक्रमाः १९ नैच्छंततंभक्षयितुंपापकर्माणमित्युत ॥ दस्यूनांदीयतामेषसाध्वद्यपुरु
षाधमः २० इत्यूचुस्तेमहाराजराक्षसेंद्रंनिशाचराः ॥ शिरोभिःप्रणताःसर्वेव्याहरन्राक्षसाधिपम् २१ नदातुमर्हसित्वंनोभक्षणायास्यकिल्बिषम् ॥ एवमस्त्वि
तितानाहराक्षसेंद्रोनिशाचरान् २२ दस्यूनांदीयतामेषकृतघ्नोऽद्यैवराक्षसाः ॥ इत्युक्ताराक्षसास्तेनशूलपट्टिशपाणयः २३ कृत्वातंखंडशःपापंदस्युभ्यःप्रद
दुस्तदा ॥ दस्यवश्चापिनैच्छंततमत्तुंपापकारिणम् ॥ क्रव्यादाअपिराजेंद्रकृतघ्नंनोपभुंजते २४ ब्रह्मघ्नेचसुरापेचचौरेभग्नव्रतेतथा ॥ निष्कृतिर्विहिताराजन्
कृतघ्नेनास्तिनिष्कृतिः २५ मित्रद्रोहीकृतघ्नश्चनृशंसश्चनराधमः ॥ क्रव्यादैःकृमिभिश्चैवनभुज्यंतेहिताद्दृशाः २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्म
पर्वणिकृतघ्नोपाख्यानेद्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥ ॥ भीष्मउवाच ॥ ततश्चितांबकपतेःकारयामासराक्षसः ॥ रत्नैर्गंधैश्चबहुभिर्वस्त्रैश्च
समलंकृताम् १ ततःप्रज्वाल्यनृपतिर्बकराजंप्रतापवान् ॥ प्रेतकार्याणिविधिवद्राक्षसेंद्रश्चकारह २ तस्मिन्कालेचसुरभिर्देवीदाक्षायणीशुभा ॥ उपरिष्टात्तत
स्तस्यसाबभूवपयस्विनी ३ तस्यावक्त्राच्युतःफेनःक्षीरमिश्रस्तदाऽनघ ॥ सोपतद्वैततस्तस्यांचितायांराजधर्मणः ४ ततःसंजीवितस्तेनबकराजस्तदाऽ
नघ ॥ उत्पत्यचसमीयायविरूपाक्षंबकाधिपः ५ ततोऽभ्ययाद्देवराजोविरूपाक्षपुरंतदा ॥ प्राहचेदंविरूपाक्षंदिष्ट्यासंजीवितस्त्वया ६

पर्वणिनीलकंठीये भारतभावदीपे द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥ ॥ ७ ॥ ततइति १ । २ । ३ । ४ । ५ । ६

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ कथातात्पर्यमाह परित्याज्यइति २४ । २५ । २६ ॥ इतिश्रीमत्पदवाक्यप्रमाणम

श्रावयामासचेंद्रस्तंविरूपाक्षंपुरातनम् ॥ यथाशापःपुरादत्तोब्रह्मणाराजधर्मणः ७ यदाबकपतीराजन्ब्रह्माणंनोपसर्पति ॥ ततोरोषादिदंप्राहखगेंद्रायपिता
महः ८ यस्मान्मूढोममसभांनागतोऽसौबकाधमः ॥ तस्माद्वधंसदुष्टात्मानचिरात्समवाप्स्यति ९ तदयंतस्यवचनान्निहतोगौतमेनवै ॥ तेनैवामृतसिक्तश्चपुनः
संजीवितोबकः १० राजधर्माबकःप्राहप्रणिपत्यपुरंदरम् ॥ यदितेऽनुग्रहकृतामयिबुद्धिःसुरेश्वर ११ सखायंमेसुदयितंगौतमंजीवयेत्युत ॥ तस्यवाक्यंसमा
दायवासवःपुरुषर्षभ १२ सिक्त्वाऽमृतेनतंविप्रंगौतमंजीवयत्तदा ॥ सभांडोपस्करंराजंस्तमासाद्यबकाधिपः १३ संपरिष्वज्यसुहृदंप्रीत्यापरमयायुतः ॥ अथ
तंपापकर्माणंराजधर्माबकाधिपः १४ विसर्जयित्वासधनंप्रविवेशस्वमालयम् ॥ यथोचितंचसबकोययौब्रह्मसदस्तथा १५ ब्रह्मचैनंमहात्मानमातिथ्येनाभ्यपू
जयत् ॥ गौतमश्चापिसंप्राप्यपुनस्तंशबरालयम् ॥ शूद्रायांजनयामासपुत्रान्दुष्कृतकारिणः १६ शापश्चसुमहांस्तस्यदत्तःसुरगणैस्तदा ॥ कुक्षौपुनर्भ्वांःपा
पोऽयंजनयित्वाचिरात्सुतान् १७ निरयंप्राप्स्यतिमहत्कृतघ्नोऽयमितिप्रभो ॥ एतत्प्राहपुरासर्वंनारदोममभारत १८ संस्मृत्यचापिसुमहदाख्यानंभरतर्षभ ॥
मयाऽपिभवतेसर्वंयथावदनुवर्णितम् १९ कुतःकृतघ्नस्ययशःकुतःस्थानंकुतःसुखम् ॥ अश्रद्धेयःकृतघ्नोहिकृतघ्नेनास्तिनिष्कृतिः २० मित्रद्रोहोनकर्तव्यःपुरु
षेणविशेषतः ॥ मित्रध्रुङ्नरकंघोरमनंतंप्रतिपद्यते २१ कृतज्ञेनसदाभाव्यंमित्रकामेनचैवह ॥ मित्राच्चलभतेसर्वंमित्रात्पूजांलभेतच २२ मित्राद्भोगांश्चभुं
जीतमित्रेणापत्सुमुच्यते ॥ सत्कारैरुत्तमैर्मित्रंपूजयेतविचक्षणः २३ परित्याज्योबुधैःपापःकृतघ्नोनिरपत्रपः ॥ मित्रद्रोहीकुलांगारःपापकर्मानराधमः २४
एषधर्मभृतांश्रेष्ठप्रोक्तःपापोमयातव ॥ मित्रद्रोहीकृतघ्नोवैकिंभूयःश्रोतुमिच्छसि २५ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वातदावाक्यंभीष्मेणोक्तंमहात्म
ना ॥ युधिष्ठिरःप्रीतमनाबभूवजनमेजय २६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणिकृतघ्नोपाख्यानेत्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
समाप्तंचापद्धर्मपर्व ॥ अथमोक्षधर्मपर्व ॥ ॥ ७ ॥ ॥ ७ ॥

यींद्रापुरंदरवर्धुरवंशावतंसगोविंदसूरिसूनोर्नीलकंठस्यकृतौ भारतभावदीपे शांतिपर्वणि आपद्धर्मार्थप्रकाशःसमाप्तिमगमत् ॥ १७३ ॥ ॥ शुभंभूयात् ॥

॥ श्रीगणेशायनमः ॥ श्रीगुरुभ्योनमः ॥ ॥ तरणिमुकुरनेत्रीतेजनामांशरीरप्रतिकृतिमनुमायीभूम्निचंद्रांतरामः ॥ स्थिरद्दगणुमसंगंयन्नयत्यन्यपात्वंतदमयममृतंसत्प्रत्यगीडेगवेंद्रम् ॥ १ ॥
कणभक्षमक्षचरणंजैमिनिकपिलौपतंजलिंचनुमः ॥ श्रीमद्व्यासवचोंबुधिनयसीकरवर्षिणोमुदिरान् ॥ २ ॥ सर्वविद्येशतामाविश्चिकीर्षुपूर्वपूरुषौ ॥ श्रीनारायणधीरेशरूपौहरिहरौनुमः ॥ ३ ॥
बहून्समाहृत्यविभिन्नदेश्यान्कोशान्विनिश्चित्यचपाठमग्र्यम् ॥ प्राचांगुरूणामनुसृत्यवाचंव्याकुर्महेभारतमोक्षधर्मान् ॥ ४ ॥ उत्तानेष्विहकोशविग्रहबलंपद्येषुनैवाश्रितंगंभीरेषुनसेतवोनविहिताः
कूटाननस्फोटिताः ॥ नच्छिन्नानतमध्वराननतिर्भक्तानन्नाह्लादितानोदीनाश्चविभीषणानविहिताःश्रीलक्ष्मणार्यश्रितैः ॥५॥ ननुमोक्षोनामशरीरनाशादन्योनास्ति 'अशरीरंवावसंतंनप्रियाप्रिये
स्पृशतः'इतिश्रुतेः सचस्वयमेवोपनमतीतिकिंतदर्थंशास्त्रेणेतिचेन्न 'कर्तव्यमेवकर्मेहजानताऽमित्रकर्शन ॥ अकर्माणोहिजीवंतिस्थावरानेतरेजनाः ॥ यावद्गोस्तनपानाद्ययावच्छायोपसेवनात् ॥
प्राणिनःकर्मणावृत्तिमाप्नुवंतिनरर्षभ'इत्यारण्यकप्राक्कर्मसद्भावसाधनात् स्थूलदेहनाशेऽपिकर्माश्रयलिंगदेहनाशायोगात्। तत्रश्लोकार्थः नजीवंतीतिसंबंधः इतरेजनाइतिदृष्टांतः तथाचायंप्रयोगः
स्थावरजीविकाप्राक्कर्मपूर्विकाजीविकात्वात्पाकादिक्रियापूर्वकाऽस्मदादिजीविकावदिति । यावदितिकात्स्न्र्ये ल्यब्लोपेपंचम्यौ गोस्तनपानमारभ्यच्छायोपसेवनंप्रतिमाद्वारकंभोमंचारभ्य
सर्वावृत्तिंजीविकांकर्मणैवाप्नुवंतीतियोजना सद्योजातस्यहिगोवत्सस्यस्तनपानेप्रवृत्तिःप्राग्भवीयेष्टसाधनताज्ञानजन्यसंस्कारपूर्विकाऽस्मदादिपाकादिप्रवृत्तिवद्दृश्यते । एवंमरणात्त्रासोऽपिप्राची
नमरणजदुःखानुभवसंस्कारात्प्राणिमात्रस्यसिद्धोऽतोऽस्तिप्राचीनंकर्म । किंच कौलिकशास्त्रप्रसिद्धचायथाचैत्रःस्वदेहेकंटकेनतुन्नेसाऽव्यथतेएवंगत्रुकृतायांस्वदेहप्रतिमायामपिकंटकेनतुन्नायां
व्यथते तत्रव्यथाहेतुर्नांतरंधातुवैषम्यंदृश्यतेबाह्यंवाकंटकवेधादिदृष्टंद्वारमस्तिकिंतुकेवलमदृष्टमेव । एवंप्राक्कर्मसद्भावसिद्धेस्तत्तत्पूर्वपूर्वजन्मकल्पनयाऽनादिःसंसारः । एवमनादित्वादानंत्यंचा

॥ श्रीगणेशायनमः ॥ ॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ १ ॥ युधिष्ठिरउवाच ॥ धर्माःपितामहेनोक्ताराजधर्मा
श्रिताःशुभाः ॥ धर्ममाश्रमिणांश्रेष्ठंवक्तुमर्हसिपार्थिव १ ॥ भीष्मउवाच ॥ सर्वत्रविहितोधर्मःसत्यंप्रेत्यतपःफलम् ॥ बहुद्वारस्यधर्मस्यनेहास्तिविफलाक्रिया २

स्यसिद्धम् । तर्ह्यनादिभावस्यध्वंसायोगात्पुनरनर्थकंशास्त्रमितिचेत्सत्यम् । नवयमात्मनिकर्तृत्वभोक्तृत्वादेःसंसारस्यसंबंधंसत्यंवदामः । यक्षस्यपरशरीरइवचितोलिंगशरीरेआभिमानिकतादा
त्म्यादपितद्धर्मभाक्त्वोपपत्तेः । अभिमंतृत्वमपिनवास्तवं अनुपदोक्तच्छायोपसेवनन्यायेनपरकल्पितसंबंधेन।पिव्यवहार।निर्वाहेसतितत्सत्यत्वकल्पनानानौचित्यात्।संसारस्यसुप्तिमूर्च्छादावदर्शने
नकादाचित्कप्रतीतिविषयतयारज्जूरगवत्कल्पितत्वेनात्मनितत्संबंधस्यसत्यत्वायोगाच्च । यथावोकास्थस्तीरतरौचांचल्यमारोपयति । यथावाप्रत्यग्भूतमपिमुखंमुकुरःपरागिवदर्शयति । यथावा
सूक्ष्ममपिपुस्तकाक्षरमुपनेत्रमहिम्नास्थूलमिवभाति । तद्वत्कूटस्थेदृङ्मात्रेसूक्ष्मेप्रतीचिद्वितीयेंदुतुल्येश्वरसृष्टदेहप्रतिमाद्वाराचंचलत्वद्वैतत्वस्थूलत्वाद्यारोपोयुज्यतएवेतिनास्माकंकिंचिदवद्यं ।
यस्यत्वनादिःसत्यश्चसंसारस्तस्यैवपूर्वोक्तोदोषोऽपरिहार्यः । तस्मात्संसारकालिकायाअविद्यायाआत्मविद्ययानिवृत्तौसमूलस्यसंसारस्योच्छेदोऽवश्यंभावीतिविद्योत्पत्तयेशास्त्रमारंभणीय
मितिसिद्धम् । तत्रनानाविधान्दुरनुष्ठेयान्क्षुद्रफलान्राजधर्मानापद्धर्मांश्चश्रुत्वाऽत्यंतमुद्विग्नःसर्वापन्निवारणमात्यंतिकश्रेयोहेतुंधर्मंजिज्ञासमानोराजायुधिष्ठिरउवाच । धर्माःपितामहेनोक्तारा
जधर्माश्रिताःशुभाः॥ धर्ममाश्रमिणांश्रेष्ठंवक्तुमर्हसिपार्थिव इति । पितामहेनेतिश्रैष्ठ्यंवात्सल्यंचसूचितं राजधर्माश्रिताराजधर्मांगत्वेनोपस्थिताधर्माआपद्धर्माउक्ताः श्रेष्ठंप्रशस्यतमोमोक्षधर्मस्तं
१३ आश्रमिणामित्युक्तेर्गृहस्थादीनांसर्वेषामप्यत्राधिकारोदर्शितः तथाचयाज्ञवल्क्यः 'सह्याश्रमैर्विजिज्ञास्यःसमस्तैरेवमेवतु ' इति १ कर्मज्ञानफलेविभजतिद्वाभ्यांश्रैष्ठ्यंवक्तुं सर्वत्रेति सर्वत्राश्रमे
षुधर्मोविहितोवेदेनअग्निहोत्रंजुहुयात्स्वर्गकामइत्यादिना अदृष्टफलःसइत्यर्थः सत्यंप्रेत्यतपःफलम् सतिसद्वस्तुनिविषये तपआलोचनंश्रवणमनननिदिध्यासनात्मकंतस्यफलंसाक्षात्कारःसोऽ
प्रेत्यमरणात्प्रागेवभवति ज्ञानंदृष्टफलमित्यर्थः । ननुतर्हितपएवक्रियतांकिंधर्मेणेत्याशंक्याह बह्विति अयमर्थः विविदिषंतियज्ञेनेत्यादिश्रुतेरश्वेनजिगमिषतीतिवत्करणस्यधात्वर्थेनान्वयाद्वि-

यार्थत्वंकर्मणाम् । यद्वा सन्प्रत्ययस्यप्राधान्यात्तज्ज्ञानेच्छैवकर्मसाध्या यथोक्तम् । 'प्रत्यग्विविदिषासिद्धेःकर्माण्युत्पाद्यशुद्धितः ॥ कृतार्थान्यस्तमायांतिप्रावृडंतेघनाइव'इति । तथा'योवैदेदंमेऽने नांगंसंस्क्रियते'इतिस्मृतेश्चित्तशुद्ध्यर्थमेवकर्माणीतित्रेधाविभागः। तत्राद्यपक्षे विशिष्टगुर्वादिलाभोनिष्प्रत्यूहंश्रवणादिसिद्धिश्चकर्मभिरेवजन्या । द्वितीये इच्छोत्पत्तिरेवकर्मफलमितरत्तुयत्नांतरसा ध्यं । तृतीये चित्तशुद्धिरेवकर्मफलंज्ञानेच्छादिकंसर्वंयत्नांतरसाध्यमितिविवेकः । एवंज्ञानाद्यर्थमपिकृतात्कर्मणस्तद्यथाऽऽम्रेफलार्थंनिर्मितेछायागंधइत्यनूत्पद्यतेएवंधर्मंचर्यमाणमर्था अनूत्पद्यंते इत्यापस्तंबोक्तामनिदर्शनादानुषंगिकंस्वर्गाद्यपिभवतितथास्वर्गार्थमपिकृतंतद्विशुद्धदेवतादिदेहोत्पादनद्वारामोक्षायभवति यथाऽऽहुः 'विष्णुराहादिदेहेनरुद्रैर्भुज्यतेपदम्'इति । 'भोगमंगुर मोक्षंतेबुद्धिशुद्ध्यनुरोधतः'इतिच । तथादृष्टफलःपुत्रकामेष्ट्यादिरपिधर्मःसद्यःफलप्रदर्शनेनवैदिकधर्मेश्रद्धोत्पादनद्वाराश्रेयोहेतुरितिनधर्मक्रियाविफला सर्वथाऽपिकृतोधर्मोमोक्षदएवेत्यर्थः । स्वर्ग्यःसत्यफलोदयइतिपाठे स्वर्गार्थंतैस्तैर्वाक्यैर्विहितोऽपिधर्मःसत्यमबाधितंफलंमोक्षाख्यंतदुदयायभवति । विविदिषंतियज्ञेनेत्यादिश्रुत्यासंगप्रयत्नन्यायेनदग्धेंद्रियकामस्यजुहुयादिति

यस्मिन्यस्मिंस्तुविषयेयोयोयातिविनिश्चयम् ॥ सतमेवाभिजानातिनान्यंभरतसत्तम ३ यथायथाचपर्येतिलोकतंत्रमसारवत् ॥ तथातथाविरागोऽत्रजायते नात्रसंशयः ४ एवंव्यवसितेलोकेबहुदोषेयुधिष्ठिर ॥ आत्ममोक्षनिमित्तं वैयतेतमतिमान्नरः ५ ॥ युधिष्ठिरउवाच ॥ नष्टेधनेवादारेवापुत्रेपितरिवामृते ॥ ययाबुद्ध्यानुदेच्छोकंतन्मेब्रूहिपितामह ६ ॥ भीष्मउवाच ॥ नष्टेधनेवादारेवापुत्रेपितरिवामृते ॥ अहोदुःखमितिध्यायन्शोकस्यापचितिंचरेत् ७ अत्राप्युदाह रंतीममितिहासंपुरातनम् ॥ यथासेनजितंविप्रःकश्चिदेत्याब्रवीत्सुहृत् ८ पुत्रशोकाभिसंतप्तंराजानंशोकविह्वलम् ॥ विषण्णमनसंदृष्ट्वाविप्रोवचनमब्रवीत् ९ किंनुमुह्यसिमूढस्त्वंशोच्यःकिमनुशोचसि ॥ यदात्वामपिशोचंतःशोच्यायास्यंतितांगतिम् १० त्वंचैवाहंचयेचान्येत्वामुपासंतिपार्थिव ॥ सर्वेतत्रगमिष्या मोयतएवागतावयम् ११ ॥ सेनजिदुवाच ॥ काबुद्धिःकिंतपोविप्रकःसमाधिस्तपोधन ॥ किंज्ञानंकिंश्रुतंचैवयत्प्राप्यनविषीदसि १२ ॥ ब्राह्मणउवाच ॥ पश्यभूतानिदुःखेनव्यतिषिक्तानिसर्वशः ॥ उत्तमाधममध्यानितेषुतेष्विहकर्मसु १३

वाक्यांतरेणनित्यस्यापिदग्धइंद्रियार्थत्वमिवस्वर्गाद्यर्थानामपियज्ञादीनांविद्यार्थत्वमिष्टं । केवलकाम्यस्याविधर्मस्यपरंपरयापरमपुरुषार्थत्वमाह बाढ़िति । पाठांतरंतुनादरणीयम् २ यस्मिन्निति विद्यातदिच्छाचित्तसंस्कारस्वर्गपुत्रादिकामेषुयस्मिन्विषयेद्वारभूतेकामे अभिजानातिश्रेयस्त्वेन ३ पर्येतिपर्यालोचयति तेनैवद्वारेणचित्तशुद्धौसत्यां असारंतृणादितद्वत्तुच्छं ४ व्यवसितेनि श्चिते लोकेस्थावरादिसत्यलोकपर्यंते । बहुदोषेऐश्वर्यतारतम्यक्षयिष्णुत्वादिदोषबहुले । दोषदर्शननिश्चयेनवैराग्येसतीत्यर्थः । व्यवस्थितेइतिपाठेविविधरूपेणावस्थितेसति ५ तन्मेतांमे ६ ध्यायन्नतोऽन्यदार्तमितिश्रुतेरात्मनोऽन्यत्सर्वंदुःखस्वरूपमितिश्रुत्यनुमानादिनाआलोचयन्नपचितिंचरेत् । 'तरतिशोकमात्मवित्'इतिश्रुतेरात्मज्ञानार्थंशोकप्रतीकारहेतुंशमादिकमनुतिष्ठेदित्य र्थः ७ । ८ सतंशोकेत्यत्रपुत्रशोकेत्येवपाठः संतापोंऽतर्बहिर्दाहः विह्वलत्वंबाह्येंद्रियचलनशून्यत्वं विषण्णंमूढंमनोयस्य ९ किंन्विति मूढाःसर्वेऽपिशोच्याःशोकाक्रांताश्चेत्यतोनिःशोकंपदमन्वेष्ट व्यमित्यर्थः १० तदेवाह त्वमिति त्वंचाहंचेतिभोक्तृवर्गउक्तः । येचेतिदेहेंद्रियविषयादिर्भोग्यवर्गः । तद्वयंयतआगतंयत्रलवणोदकवल्लीयतेतदद्वैतमशोकंपदंद्वैतंतुसशोकमित्यर्थः तथाचश्रुती भवतः । तत्रकोमोहःकःशोकएकत्वमनुपश्यतइति द्वितीयाद्वैभयंभवतीतिच ११ तत्रबुद्धिरुपपत्तिः । तपस्तदालोचनं । समाधिर्बुद्धेरेकत्रपर्यवसानं । ज्ञानंसाक्षात्कारः । श्रुतमेतेष्वर्थेषुप्रमाणम् १२ तत्रबुद्धिमाहसार्धद्वयेन पश्येति व्यतिषिक्तानिव्याप्तान्युत्तमाधममध्यानिदेवतिर्यङ्मनुष्यादीनि कर्मसुनिमित्तभूतेषु १३

एवंकर्मजंदुःखंदेवादीनामप्यस्तीतिदृश्यमानमूतदृष्टांतेनोपपाद्यतन्निवृत्तावप्युपपत्तिमाह आत्मेति योऽयमहमितिप्रतीतिगोचरआत्मासोऽपिनममचिन्मात्रस्यस्वरूपंचिद्भास्यत्वात्तस्यभास्यभास कयोश्चघटालोकयोःप्रसिद्धोभेदः । एवमहमर्थाद्विविच्यात्मानंविविच्यतत्रैवपृथिव्याद्यध्यस्तमितिसर्वस्यतदनन्यत्वमाह सर्वावापृथिवीममस्वरूपमिति एतदेवाभ्यासेनद्रढयति यथाममेति अयं भावः यथादर्पणप्रतिबिंबितंमुखंनस्वरूपतःस्वमुखंदृश्यत्वात् नाप्यन्यत्तद्व्यतिरेकेणाभावात् । एवंमायाकल्पितेष्विंद्रियमनोविद्यादर्पणेषुस्थूलसूक्ष्मसूक्ष्मतरेषुप्रतिफलितश्चिदात्माविराट्सूत्रां तर्यामिभावेनदृश्योनप्रत्यगात्मानापितदतोऽन्यइति । एवमुपपन्नमात्मैकत्वंचिंत्यध्यानेनसाक्षात्कृत्यनमेव्यथेतितत्फलमुक्तं तद्व्याचष्टे एतामित्यर्धेन हर्षोऽपिव्यथैवेतिभावः १४ बुद्धिमुक्त्वातपआह यथेत्यादिना १५ तपःफलमाह एवमिति १६ अदर्शनादिति नास्तिदर्शनंदृश्यत्वेनद्रष्टृत्वेनवाप्रकाशोयस्यतददर्शनंशुद्धचिन्मात्रंतस्मादापतितस्तवपुत्रइतिशेषः स्वात्वांचिन्मात्रमसौपुत्रोनवेद स्वप्नोपलब्धपुरुषवत्स्वरकल्पनामात्रत्वात्तस्य । तथात्वमपितंचिन्मात्रंनवेत्थ चितश्चिद्गोचरत्वायोगात् । किमनुशोचसीत्यस्यायंभावः शोच्यःपुत्रः किंस्विदात्माउताचिद्रूपोदेहोवा । नाद्यः चितएकत्वादविनाशित्वाच्चकःकेनशोच्यः । नांत्यः लोष्टादेरपिशोच्यतापत्तेरिति १७ कुतस्तर्ह्ययंशोकउल्लसतीत्याशंक्याह तृष्णेतित्रिभिः । तृष्णार्तिर्विषयेषुप्रःप्यमाणेष्व

आत्माऽपिचायंनममसर्वावापृथिवीमम ॥ यथाममतथाऽन्येषामितिचिंत्यनमेव्यथा ॥ एतांबुद्धिमहंप्राप्यनप्रहृष्येनचव्यथे १४ यथाकाष्ठंचकाष्ठंचसमेयातां महोदधौ ॥ समेत्यचव्यपेयातांतद्वद्भूतसमागमः १५ एवंपुत्राश्चपौत्राश्चज्ञातयोबांधवास्तथा ॥ तेषांस्नेहोनकर्तव्योविप्रयोगोध्रुवोहितैः १६ अदर्शनादाप तितःपुनश्चादर्शनंगतः ॥ नत्वाऽसौवेदनत्वंतंकःसन्किमनुशोचसि १७ तृष्णार्तिप्रभवंदुःखंदुःखार्तिप्रभवंसुखम् ॥ सुखात्संजायतेदुःखंदुःखमेवंपुनःपुनः १८ सुखस्यानंतरंदुःखंदुःखस्यानंतरंसुखम् ॥ सुखदुःखेमनुष्याणांचक्रवत्परिवर्ततः १९ सुखात्त्वंदुःखमापन्नःपुनरापत्स्यसेसुखम् ॥ ननित्यंलभतेदुःखंननित्यंल भतेसुखम् २० शरीरमेवायतनंसुखस्यदुःखस्यचाप्यायतनंशरीरम् ॥ यद्यच्छरीरेणकरोतिकर्मतेनैवदेहीसमुपाश्नुतेतत् २१ जीवितंचशरीरेणतेनैवसहजाय ते ॥ उभेसहविवर्तेतेउभेसहविनश्यतः २२ स्नेहपाशैर्बहुविधैराविष्टविषयाजनाः ॥ अकृतार्थाश्चसीदंतेजलैःसैकतसेतवः २३ 

पिमोहादतृप्तिरूपापीडा । दुःखार्तिर्दुःखनाशस्तज्जंसुखम् । तेनदुःखार्तिःवसुखमितिवदन्परास्तः १८ । १९ । २० शरीरंस्थूलसूक्ष्मभेदेनद्विविधम् । तदेवसुखादेरायतनमाश्रयो नत्वात्मा । तदभावेसुप्तिसमाध्योरात्मनिदुःखाद्यनुपलंभात् । जाग्रत्स्वप्नयोस्तत्रतदुपलंभस्तुदेहोपाधिकः जलचांचल्यमिवजलचंद्रे । दुःखादेरात्मधर्मत्वेवह्न्यौष्ण्यवदाश्रयनाशमंतरे णात्यंतिकदुःखोच्छेदायोगात् । घटेयावद्रूपनाशादर्शनादितिभावः यद्यदित्यत्राद्योयच्छब्दोहेत्वर्थः । यस्माच्छरीरमेव दुःखाद्याश्रयस्तस्माद्देहीदेहाभिमानीयेनयत्कर्मकरोतितेनै वतत्फलमश्नुते । तेनयःकर्तासएवचिदाभासोभोक्तानतुमकृतिःकर्त्रीचिदात्माभोक्तेतिवदतःसांख्यस्यावकाशोऽस्ति २१ जीवितंजीवनहेतुर्लिंगशरीरं शरीरेणस्थूलेन । पाठांतरे जात्यास्वभावेनैवसहजायतेतेनैवेतिस्थूलस्यलिंगादनन्यत्वमुक्तम् लिंगमेवहिचिरभावितंस्थूलंभवतीत्यर्थः तथाचोक्तंवासिष्ठे । 'आतिवाहिकएवायंत्वाद्दशैश्चित्तदेहकः ॥ आधिभौति कयाबुद्ध्यागृहीतश्चिरभावनात्' इति । विवर्तेतेसंसारकालेविविधेनरूपेणवर्तेते विनश्यतश्चमोक्षे स्थूलदेहवत्कर्त्रादिधर्मकंलिंगमपिनश्यतीत्यर्थः २२ आविष्टाश्चित्तेमग्नाविषयायेषांते सेतवइवेतिलुप्तोपमा सीदंतेसीदंति चित्तस्थैर्विषयैरितिशेषः २३

स्नेहेननिमित्तेनतिलपीडैस्तैलिकैः क्लेशैरविद्यादिभिरनित्याऽशुचिदुःखानात्मसुदेहादिषुनित्यत्वशुचित्वसुखत्वात्मत्वारोपप्रभृतिभिरज्ञानमूलैः । ततश्चाज्ञाननाशात्क्लेशोच्छेदेप्रवृत्त्याद्यभावेनदेहदुःखाद्यभावान्निष्प्रत्यूहोमोक्षःसिद्धः । तथाचाक्षपादचरणाः । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायेतदनंतरापायादपवर्गइति २४ अशुभंचौर्यादि कलत्रापेक्षयाभार्यादिपोषणार्थं धनसुखभागिनःसर्वे पापफलभागीत्वेकएवायमित्यर्थः २५ । २६ पुत्रेति यथाजीवनाशेमरणेदुःखंप्राप्यतेतथापुत्रस्यज्ञात्यादेश्चनाशेपीतितेषुममतानकार्येत्यर्थः भवाभवावैश्वर्यानैश्वर्ये २७ सुहृत्प्रत्युपकारमनपेक्ष्योपकारकर्ता । मित्रंप्रत्युपकारमपेक्ष्योपकारकर्तृ । तयोःप्रज्ञायाश्चभावेऽभावेवाशत्रुयोगेऽपिवादैवादेवसुखंलभते । निर्देवाःसत्यपिसुखसाधनेदुःखिनएव तृष्णाधिक्यात् सदैवास्तुतदभावात्सुखिनएवतृष्णात्यागादित्यर्थः २८ सुखायसुखंदातुंनालंपर्याप्ताः अर्थानांलाभेइतिशेषः २९ जाड्यंमूढता असमृद्धयेधनादिनाशाय लोकोभोग्यप्रपंचस्तस्यपर्यायोनिर्माणंतत्रविषयेवृत्तांतंसिद्धांतं प्राज्ञस्तत्त्ववित् । 'पर्यायस्तुप्रकारेस्यान्निर्माणेऽवसरेक्रमे'इतिविश्वः । तत्त्ववित्तुमरीचिकोदकवल्लोकंपश्यन्नसुखेदुःखेवाहर्षविषादौलभतेइत्यर्थः ३० मूढंनिर्बुद्धिं जडमलसं कविंदीर्घदर्शिनं भागिनंसर्वेभजतेस्वयमेवोपनमते नतुतदर्थंयत्नोऽपेक्ष्यइत्यर्थः ३१ धेनुरिति पयःपातुरेवधेनुरितरेषांतुतत्रममताऽपार्था तस्मादाढ्यकादपिकेस्पृहानकार्येत्यर्थः यथोक्तम् । 'गो

स्नेहेनतिलवत्सर्वंसर्गचक्रेनिपीड्यते ॥ तिलपीडैरिवाक्रम्यक्लेशैरज्ञानसंभवैः २४ संचिनोत्यशुभंकर्मकलत्रापेक्षयानरः ॥ एकःक्लेशानवाप्नोतिपरत्रेहचमानवः २५ पुत्रदारकुटुंबेषुप्रसक्ताःसर्वमानवाः ॥ शोकपंकार्णवेमग्नाजीर्णावनगजाइव २६ पुत्रनाशेवित्तनाशेज्ञातिसंबंधिनामपि ॥ प्राप्यतेसुमहद्दुःखंदावाग्निप्रतिमंविभो ॥ दैवायत्तमिदंसर्वंसुखदुःखेभवाभवौ २७ असुहृत्ससुहृच्चापिसशत्रुर्मित्रवानपि ॥ सप्रज्ञःप्रज्ञयाहीनोदैवेनलभतेसुखम् २८ नालंसुखायसुहृदोनालंदुःखायशत्रवः ॥ नचप्रज्ञानमर्थानांनसुखानामलंधनम् २९ नबुद्धिर्धनलाभायनजाड्यमसमृद्धये ॥ लोकपर्यायवृत्तांतंप्राज्ञोजानातिनेतरः ३० बुद्धिमंतंचशूरंचमूढंभीरुंजडंकविम् ॥ दुर्बलंबलवंतंचभागिनंभजतेसुखम् ३१ धेनुर्वत्सस्यगोपस्यस्वामिनस्तस्करस्यच ॥ पयःपिबतियस्तस्याधेनुस्तस्येतिनिश्चयः ३२ येचमूढतमालोकेयेचबुद्धेःपरंगताः ॥ तेनराःसुखमेधंतेक्लिश्यत्यंतरितोजनः ३३ अंत्येषुरेमिरेधीरानतेमध्येषुरेमिरे ॥ अंत्यप्राप्तिंसुखामाहुर्दुःखमंतरमंत्ययोः ३४ येचबुद्धिसुखंप्राप्ताद्वंद्वातीताविमत्सराः ॥ तान्नैवार्थानचानर्थाव्यथयंतिकदाचन ३५ अथयेबुद्धिमप्राप्ताव्यतिक्रांताश्चमूढताम् ॥ तेऽतिवेलंप्रहृष्यंतिसंतापमुपयांतिच ३६ नित्यंप्रमुदितामूढादिविदेवगणाइव ॥ अवलेपेनमहतापरिभूत्याविचेतसः ३७

शतादपिगोक्षीरंप्रस्थंधान्यशतादपि ॥ प्रसादादपिखट्वार्धंशेषाःपरविभूतयः'इति ३२मूढतमाःसुषुप्तिस्थाःबुद्धेःपरंगतानिर्विकल्पसमाधिस्थाः एषंतेवृद्धिंब्रह्मभावाख्यांप्राप्नुवंति । 'सताषोम्यतदासंपन्नोभवति ब्रह्मविद्ब्रह्मैवभवति'इतिसुषुप्तिसमाध्योर्ब्रह्मभावश्रुतेः । अत्रसुषुप्त्युपन्यासोदृष्टांतार्थः । अतएवमाध्यंदिनाःयद्वैतन्नपश्यतिइत्यादिनासुषुप्तिसमाध्योर्द्वैतादर्शनंतुल्यवदामनंति । सूत्रमपिस्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीतिस्वाप्ययेसुषुप्तौसंपत्तौकैवल्येऽप्यद्वैतादर्शनंस्पष्टीकृतमितिसूत्रार्थः । अंतरभेदःसंजातोऽस्यजाग्रत्स्वप्नसविकल्पसमाधिस्थस्यसोऽतारितोभेददर्शीक्लिश्यति । 'अथयत्रान्यत्पश्यतितदल्पंनाल्पेसुखमस्तीत्यतोऽन्यदार्तम्'इत्यादिश्रुतिभ्यः ३३ अंत्येष्विति बहुवचनंसुप्तिसमाधिव्यक्त्यभिप्रायं अंत्ययोरितिद्विवचनंतुतज्जात्यभिप्रायं अंतरंमध्यम ३४ विवेकिनस्त्वंतरस्थाअपिनक्लिश्यंतीत्याह येचेति बुद्धिसुखंबुद्धेःपरंसुखंस्वरूपसुखंप्राप्ताः अतएवद्वंद्वातीताःसुखदुःखाद्यतीताः मत्सरःपरोत्कर्षासहिष्णुत्वंतद्वर्जिताः अर्थाःरूप्यादयः अनर्थास्तद्वियोगाः ३५ अल्पज्ञंप्रतिप्राह अथयेइति अतिवेलमत्यंतम् ३६ अत्यज्ञंप्रतिप्राह नित्यमिति अवलेपेनगर्वेण मूढाःसदसद्विवेकहीनाः विचेतसःकामादिभिर्ग्रस्तचित्ताः परिभूत्यापरपराभवेन३७



तर्हिमौढ्यमेवसुखदमित्याशंक्याह सुखमिति दुःखमंतेयस्य उदर्केदुःखंमौढ्यसुखंनश्रेयइत्यर्थः । आलक्ष्यदुःखंवापिसुखोदयमितिपाठे सुखेप्सक्तोदुःखादनुद्विग्नोदाक्ष्यंज्ञानसाधनानुष्ठानेउत्साहंश्रयेदित्यर्थः । आलस्यंदुःखंदाक्ष्यंसुखोदयमितिपाठेत्वालस्यंज्ञानसाधनेष्वप्रवृत्तिः दुःखंदुःखकरं भूतिरणिमाद्यैश्वर्यं श्रिया 'ऋचःसामानियजूंषिसाहिश्रीरमृतासताम्' इतिश्रुत्युक्तयाविद्यया ३८ सुखदुःखसाधनेप्रियाप्रिये हृदयेनहर्षशोकमयेनाऽपराजितोऽवशीकृतः ३९ शोकेति शोकमूलानीष्टवियोगादीनिभयमूलान्यनिष्टसंयोगादीनि आविशंतिस्वकार्योत्पादनेनव्याप्नुवंति ४० नपंडितमित्येतद्विवृणोति बुद्धीति बुद्धिर्ग्रंथधारणसामर्थ्यंतद्वंतं । कृतास्वतःसिद्धाप्रज्ञाऊहापोहकौशलंयस्यतं । शुश्रूषुंशास्त्राभ्यासपरं । अनसूयकंशास्त्रीयेषुदोषदृष्टिरसूयातद्रहितं दांतंजितबाह्येंद्रियं । जितेंद्रियंजितचित्तं ४१ गुप्तंकामादिभ्योरक्षितंचित्तंयेनसगुप्तचित्तः । युक्तचित्तइतिपाठे प्रतीचियोजितचित्तइत्यर्थः । अतएवोदयास्तमयज्ञंजगदुत्पत्तिलयस्थानंब्रह्मतज्ज्ञं युक्तचित्तत्वात् । एतेन'तरतिशोकमात्मवित्'इतिश्रुत्यर्थोदर्शितः । उदयास्तमयेत्यतःप्राक् 'शुक्लकृष्णगतिज्ञंतंदेवासुरविनिर्गमं'इत्यर्धंगौडाःपठंति तस्यार्थः । शुक्लंसत्त्वंकृष्णंतमस्ताभ्यांमाप्येगतीप्रकाशावरणकार्येमुक्तिसंसाराख्येतज्ज्ञं । देवादानदयादिरूपाःसात्त्विकस्यश्वेतोद्वृत्तयः असुराराजसस्यस्तामस्योलोभमोहाद्यास्ताएवतासामुभयीनामपिविशेषेणनिर्गमोबाहि

सुखंदुःखांतमालक्ष्यदुःखंदाक्ष्यंसुखोदयम् ॥ भूतिस्त्वेवंश्रियासार्धंदक्षेवसतिनालसे ३८ सुखंवायदिवादुःखंप्रियंवायदिवाऽप्रियम् ॥ प्राप्तंप्राप्तमुपासीतहृदयेनापराजितः ३९ शोकस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् ४० बुद्धिमंतंकृतप्रज्ञंशुश्रूषुमनसूयकम् ॥ दांतंजितेंद्रियंचापिशोकोनस्पृशतेनरम् ४१ एतांबुद्धिंसमास्थायगुप्तचित्तश्चरेद्बुधः ॥ उदयास्तमयज्ञंहिनशोकःस्प्रष्टुमर्हति ४२ यन्निमित्तंभवेच्छोकस्तापोवादुःखमेवच ॥ आयासोवायतोमूलमेकांगमपितत्त्यजेत् ४३ किंचिदेवममत्वेनयदाभवतिकल्पितम् ॥ तदेवपरितापार्थंसर्वंसंपद्यतेतथा ४४ यद्यत्त्यजतिकामानांतत्सुखस्याभिपूर्यते ॥ कामानुसारीपुरुषःकामाननुविनश्यति ४५ यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखम् ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलाम् ४६ पूर्वदेहकृतंकर्मशुभंवायदिवाऽशुभम् ॥ प्राज्ञंमूढंतथाशूरंभजतेयादृशंकृतम् ४७ एवमेवकिलैतानिप्रियाण्येवाप्रियाणिच ॥ जीवेषुपरिवर्तंतेदुःखानिचसुखानिच ४८ एतांबुद्धिंसमास्थायसुखमास्तेगुणान्वितः ॥ सर्वान्कामाञ्जुगुप्सेतकामात्कुर्वीतपृष्ठतः ४९ वृत्तएषहृदिप्रौढोमृत्युरेषमनोभवः ॥ क्रोधानामशरीरस्थोदेहिनांप्रोच्यतेबुधैः ५० यदासंहरतेकामान्कूर्मोंगानीवसर्वशः ॥ तदाऽऽत्मज्योतिरात्माऽयमात्मन्येवप्रपश्यति ५१

र्भावोयस्मात्तं । युक्तचित्तोहियोगबलेनमुक्तिसंसारयोस्तत्त्वंजानन् निरुद्धसदसद्वृत्तिर्ब्रह्मभूतोभवत्यतस्तंशोकोनस्पृशतीति ४२ यतआयसस्तन्मूलंकारणमायासादेरेकांगंशरीरैकदेशभूतमपित्यजेत् किमुतधनदारादि ४३ दारादौममतैवानर्थहेतुः प्रत्युततत्त्यागएवसुखकरइत्याहद्वाभ्यां किंचिदेवेति ४४ कामानांविषयाणांमध्ये ४५ वैराग्यंस्तौति यच्चेति लोकेमानुषे दिव्यंस्वर्गभवंतृष्णाक्षयोवैराग्यं ४६ नन्वेवंधनादित्यागेकथंदेहनिर्वाहइत्याशंक्याह पूर्वेति दृष्टसुखार्थमैहिकोयत्नोव्यर्थइत्यर्थः ४७ ननुपूर्वकर्मापिदृष्टयत्नापेक्षमतआह एवमिति यथारोगारोग्यादिजानिदुःखसुखान्यप्रार्थितान्येवलभ्यंते एवमेवप्रियाप्रियसंबंधादीनिलाभनाशादीनिचलभ्यंतेइत्यनर्थकोयत्नइत्यर्थः ४८ एतांयच्चकामसुखमित्यादिनोक्तां सुखंनिरुद्योगंयथास्यात्तथा गुणान्वितोवैतृष्ण्यान्वितः जुगुप्सेतनिंदेत कामान्विषयान् कामाद्धठात् क्रोधंकुर्वीतेत्यपिवापाठः ४९ वृत्तोनित्यनिष्पन्नमृत्युर्जन्ममरणाख्यसंसारद्वारभूतः मनोभवःकामः सएवकेनचिन्निमित्तेनप्रतिहतःक्रोधरूपेणपरिणमतेइत्यर्थः ५० यदेति त्रिविधाःकामाःस्थूलसूक्ष्मकारणोपाधिभोग्याविषयाः । तत्रस्थूलानांत्यागःसंगवर्जनेनस्वधीयानेव । सूक्ष्माणांवासनामयानांत्यागोवैराग्यदार्ढ्यात्सर्वविषय—

स्मरणस्याप्यभावः । एतानपिशुरूकयुक्त्यापरित्यज्यहार्दाकाशाख्यंकारणंब्रह्मप्रविष्टोयोगी । 'अत्रहिसर्वेकामाःसमाहितायच्चास्येहास्तियच्चनास्तिसर्वंतदत्रगत्वाविंदते ' इतिश्रुतेर्वर्तमानंत्रिलो
क्यंतर्गतमतीतानागतंचकामजातंसंकल्पसमकालोत्थितंपुरोवर्तमानमेवपश्यन्नकदाचिद्वैराग्यमांद्यान्मुह्येत्तावस्तानपिसंहरेत् । तथाचसूत्रंभगवतःपतंजलेः स्थान्युपनिमंत्रणेसंगस्मयाकरणंपुनर
निष्टप्रसंगादिति । व्याख्यातंचैतद्भगवताबादरायणेन तत्रमधुमतीभूमिंसाक्षात्कुर्वतोब्राह्मणस्यस्थानिनोदेवाःसत्त्वशुद्धिमनुपश्यंतःस्थानैरुपनिमंत्रयंते भोइहास्यतांकमनीयोऽयंभोगः कमनी
येयंकन्या रसायनमिदंजरामृत्यूबाधते वैहायसमिदंयानं अमीकल्पद्रुमाः पुण्यामंदाकिनी सिद्धामहर्षयः उत्तमाःअनुकूलाश्चाऽप्सरसः दिव्येश्रोत्रचक्षुषी वज्रोपमःकायः स्वगुणैःसर्व
मिदमप्यर्जितमायुष्मताप्रतिपद्यतामिदमक्षयमजरममरस्थानंदेवानांप्रियमित्येवमभिधीयमानःसंगदोषान्भावयेत् घोरेषुसंसारांगारेपच्यमानेनमया जननमरणांधकारेविवर्तमानेनकथंचिदासा
दितः क्लेशतिमिरविनाशीयोगप्रदीपः तस्यचैतेतृष्णायोनयोविषयवायवःप्रतिपक्षाः सखल्वहंलब्धालोकःकथमनयाविषयमृगतृष्णयावंचितस्तस्यैवपुनःप्रदीप्तस्यसंसाराग्नेरात्मानमिंधनी
कुर्यामिति । स्वस्तिवःस्वप्नोपमेभ्यःकृपणजनप्रार्थनीयेभ्योविषयेभ्यइत्येवंनिश्चितमतिःसमाधिंभावयेत्संगमकृत्वास्मयंकुर्यात् एवमहंदेवानामपिप्रार्थनीयइतिस्मयादयंसुस्थितंमन्यतयामृत्युना
केशगृहीतमात्मानंनभावयिष्यति । तथाचास्यच्छिद्रांतरप्रेक्षीनित्यंयत्नोपचर्यःप्रमादोलब्धविवरःक्लेशानुत्तंभयिष्यतिततश्चपुनरनिष्टप्रसंगइति । तस्मात्सर्वशःसर्वांस्त्रिविधानपि

नविभेतियदाचायंयदाचास्मान्नबिभ्यति ॥ यदानेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा ५२ उभेसत्यानृतेत्यक्त्वाशोकानंदौभयाभये ॥ प्रियाप्रिये
परित्यज्यप्रशांतात्माभविष्यति ५३ यदानकुरुतेधीरःसर्वभूतेषुपापकम् ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा ५४ यादुस्त्यजादुर्मतिभि
र्यानजीर्यतिजीर्यतः ॥ योऽसौप्राणांतिकोरोगस्तांतृष्णांत्यजतःसुखम् ५५ अत्रपिंगलयागीतागाथाःश्रूयंतिपार्थिव ॥ यथासाकृच्छ्रकालेऽपि
लेभेधर्मंसनातनम् ५६ संकेतेपिंगलावेश्याकांतेनासीद्विनाकृता ॥ अथकृच्छ्रगताशांतांबुद्धिमास्थापयत्तदा ५७

कामान्संहरेत् कूर्मोंगानीतिदृष्टांतः । कामानांस्वरूपादनन्यत्वंस्वाधीनोत्पत्तिप्रलयत्वंचदर्शयति यदाकामान्सर्वान्संहरेत्तदाऽयमात्माऽहंप्रत्ययगोचरोजीवः आत्मन्येवअपेतसर्वोपाधौस्व
स्वरूपेएवाऽऽत्मज्योतिःप्रत्यगभिन्नंचिन्मात्रंपश्यति अयमर्थः । यथाजागरेवहंसूर्यादिनाज्योतिषापश्यति । गाढांधकारेतुवाचैवज्योतिषापश्यति । स्वप्नेत्वालोकेंद्रियज्योतिषोरभावाद्वा
सनामयस्यघटस्यप्रत्यगात्मज्योतिषैवप्रकाशइतिप्रसाधितंज्योतिर्ब्राह्मणे । अत्रायंपुरुषःस्वयंज्योतिरिति । तेनतत्रकारणाभावेसिद्धेसुषुप्तौवासनामयस्यप्रपंचस्यापिनाशेदृश्याभावाद्दृ
ङ्मात्रंप्रकाशते । एवंसमाधावपिसंप्रज्ञातेकरणाभावः । असंप्रज्ञातेकर्मकरणयोरभावाद्द्रष्टृत्वनिवृत्तौदृङ्मात्रंशिष्यतेइति । प्रसीदतीतिपाठेकार्यकरणसंपर्कजंकालुष्यंत्यजतीत्यर्थः । किंचिदे
वममत्वेनेतिश्लोकंकेचिदितउत्तरंपठंति । तदामधुमत्यांयोगभूमावुपस्थितेषुविषयेषुवैराग्यार्थमिदंवचनमितिज्ञेयं ५१ असंप्रज्ञातावस्थामेवप्रपंचयतिद्वाभ्यां नबिभेतीति । ' ह्रीर्धीर्भीरित्येतत्सर्वं
मनएव'इतिश्रुतेर्भयादेर्मनोधर्मत्वान्मनसश्चलीनत्वाद्यदामयादिरहितःस्थाणुवदचंचलोभवतितदाऽस्मादन्येजनानबिभ्यति अयंचब्रह्मसंपद्यते तथाचश्रुतिः । 'यदापंचावतिष्ठंतेज्ञानानिमन
सासह । बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिम्'इति ५२ सत्यंव्यावहारिकंदेहादि अनृतंस्वप्नसबीजसमाधिकालिकंप्रातिभासिकंचदेहादि प्रशांतात्माप्रकर्षेणशांतउपरतआत्माचित्तंयस्य
सप्रशांतात्मा ५३ व्युत्थानावस्थामाह यदानेति पापकंहिंसनं ५४ एषास्थितिस्तृष्णात्यागेनैवलभ्येत्याख्यायिकापूर्वकमाह यादुस्त्यजेत्यादिना ५५ कृच्छ्रकालेदुःखकाले सनातनं
धर्मंनित्यमसिद्धंयोगं ५६ संकेतेइति आस्थापयत्व्यवस्थापितवती तीव्रदुःखमेववैराग्यहेतुरितिभावः ५७

उन्मत्ताविकारवती अनुन्मत्तंनिर्विकारंकांतंस्वामिनमंतर्यामिणं अन्ववसं वसआच्छादने आर्षःपदव्यत्ययः अहंकारधर्मकामादिकमनुलक्षीकृत्याऽऽच्छादितवती अंतिकेहृदयकोशेरमणमानंद
मदं । 'एषह्येवानंदयाति'इतिश्रुतेः मरणमित्यपपाठः ५८ एकाअविद्यैवस्थूणेवविधारिकायस्यतदेकस्थूणं । नव श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोबुद्धिकामकर्माणिविषयप्राप्तिद्वाराणियस्यतन्नवद्वारं
अपिधास्यामिविद्याबलेनाच्छादयामि । अगारमिवचिदात्मोपलब्धिस्थानंदेहादिसंघातं काहीति । 'विभेदजनकेऽज्ञानेनाशमात्यंतिकंगते ॥ आत्मनोब्रह्मणोभेदमसंतंकःकरिष्यति'इतिविष्णु
पुराणोक्तेर्दर्पणापगमेबिंबप्रतिबिंबयोरिवाविद्यानाशेईशजीवयोर्भेदाभावात् । इहहार्दाकाशेआयांतंचिन्मात्ररूपेणाविर्भवंतमत्यगनन्यमीशमयंकांतंइतिकामंस्यतेनकाऽपीत्यर्थः तथाचश्रुतिः ।
'यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्'इतिविद्यावस्थायांमंतृमंतव्यभावाभावेनभेदमपवदति कांतेतिसंधिरार्षः ५९ अकामामात्मलाभेनसर्वकामावाप्तेर्निरिच्छां कामरूपेणकामुकरूपेण प्रति

॥पिंगलोवाच॥ उन्मत्ताऽहमनुन्मत्तंकांतमन्ववसंचिरम् ॥ अंतिकेरमणंसंतंनैनमध्यगमंपुरा ५८ एकस्थूणंनवद्वारमपिधास्याम्यगारकम् ॥ काहिकांतमिहायां
तमयंकांतेतिमंस्यते ५९ अकामांकामरूपेणधूर्तानरकरूपिणः ॥ नपुनर्वंचयिष्यंतिप्रतिबुद्धाऽस्मिजागृमि ६० अनर्थोहिभवेदर्थोदैवात्पूर्वकृतेनवा ॥ संबुद्धाऽहं
निराकारानाहमद्याजितेंद्रिया६१ सुखंनिराशःस्वपितिनैराश्यंपरमंसुखम् ॥ आशामनाशांकृत्वाहिसुखंस्वपितिपिंगला६२ ॥भीष्मउवाच॥एतैश्चान्यैश्चविप्र
स्यहेतुमद्भिःप्रभाषितैः॥पर्यवस्थापितोराजासेनजिन्मुमुदेसुखी६३ ॥इतिश्रीम०शां०मो०ब्राह्मणसेनजित्संवादकथनेचतुःसप्तत्यधिकशततमोऽध्यायः॥१७४॥
॥ युधिष्ठिरउवाच ॥ अतिक्रामतिकालेऽस्मिन्सर्वभूतक्षयावहे ॥ किंश्रेयःप्रतिपद्येततन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरा
तनम् ॥ पितुःपुत्रेणसंवादंतंनिबोधयुधिष्ठिर २ द्विजातेःकस्यचित्पार्थस्वाध्यायनिरतस्यवै ॥ बभूवपुत्रोमेधावीमेधावीनामनामतः ३ सोऽब्रवीत्पितरंपुत्रःस्वा
ध्यायकरणेरतम् ॥ मोक्षधर्मार्थकुशलोलोकतत्त्वविचक्षणः ४ ॥ पुत्रउवाच ॥ धीरःकिंस्वित्तातकुर्यात्प्रजानन्क्षिप्रंह्यायुर्भ्रश्यतेमानवानाम् ॥ पितस्तदाचक्ष्व
यथार्थयोगंममानुपूर्व्यायेनधर्मंचरेयम् ५॥ पितोवाच ॥ वेदानधीत्यब्रह्मचर्येणपुत्रपुत्रानिच्छेत्पावनार्थंपितॄणाम् ॥ अग्नीनाधायविधिवच्चेष्टयज्ञोवनंप्रविश्या
थमुनिर्बुभूषेत् ६ ॥ पुत्रउवाच ॥ एवमभ्याहतेलोकेसमंतात्परिवारिते ॥ अमोघासुपतंतीषुकिंधीरइवभाषसे ७॥ पितोवाच ॥ कथमभ्याहतोलोकःकेनवाप
रिवारितः ॥ अमोघाःकाःपतंतीहकिंनुभीषयसीवमाम् ८॥ पुत्रउवाच ॥ मृत्युनाऽभ्याहतोलोकोजरयापरिवारितः ॥ अहोरात्राःपतंत्येतेननुकस्मान्नबुद्ध्यसे ९

बुद्धाज्ञातात्मतत्त्वा जागृमिजागर्मि अविद्यानिद्रोच्छेदात् ज्ञाततत्त्वोनविषयैराकृष्यतइत्यर्थः ६० अनर्थोधनाद्याशयाविक्रव्यंतदेवार्थोभवेत् आशायानिरन्वयोच्छेदहेतुत्वेनसुखायापिस्यात्
तत्रहेतुः दैवादीश्वरस्यानुग्रहात् । निरीश्वरवादिमतमनुरुध्याह पूर्वकृतेनवेति निराकारानिर्विषयज्ञानरूपा ६१ सुखमिति नैराश्यमेवपरंसुखंमोक्षाख्यपरसुखप्रापकं अशनंभोजनमाशोविषय
भोगस्तद्रहितामनाशां भोगार्थंहिधनाद्याशाभोगत्यागादुच्छिद्यतेइत्यर्थः ६२ पर्यवस्थापितआत्मतत्त्वेनिष्ठांप्रापितः ६३ ॥ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेच
तुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥ ॥ पूर्वंजिताशोमोक्षमिच्छेदित्युक्तंसंप्रतितत्रकालविलंबोनकर्तव्यइत्याहाध्यायेन अतीति अतिक्रामतिजरारोगादिभिर्नॄणांपरामर्वकुर्वति श्रेयःप्र
शस्ततरं १ । २ । ३ मोक्षधर्माणामर्थेषुकुशलः विचक्षणऊहापोहकुशलः ४ यथार्थयोगंफलसंबंधमनतिक्रम्य ५ मुनिर्ध्यानभिक्षुः ६ अभ्याहतेमृत्युनाऽभितस्ताडिते परिवारिते
जरयाव्याप्ते परितापितेइतिजीर्णपाठः । अमोघास्वायुर्हरणेनसफलासुरात्रिषु ७ । ८ । ९

अहोवारात्रयश्चापीतिपाठेअहोइतिखेदे वाशब्दएवार्थे भिन्नक्रमः स्यात्येवनतुतिष्ठतीत्यर्थः नतिष्ठत्यपितुक्षणेक्षणेअर्वागायाति ज्ञानेनाऽपिहितः अनाच्छादितज्ञानकवचस्यहिमृत्युभयंनास्ति अहंतुतद्रहितःकथंनोद्विजेयमित्यर्थः अपिशब्दस्यभागुरिमतेनअकारलोपेकृत्वानञ्समासः । जालेनापिहितइतिपाठेतुनाकारलोपादि जालेनमायावरणेनअपिहितआच्छादितः १० वंध्यंनि ष्फलं ११ यदामृत्युरभ्येतितदाकःसुखंविंदेतेतिसंबंधः १२ पुष्पाणिकाम्यकर्मफलानिमेषीणामातेवानिवा आर्तवंविनापशूनांस्त्रीसंगेप्रवृत्त्यदर्शनात् विचिन्वंतंशास्त्रदृष्ट्याआघ्राणेनच उरणमेषं १३ । १४ । १५ अनित्यंखल्वित्यत्रानिमित्तमितिपाठे आयुरियत्तावधारणकारणहीनम् १६ मोहेनेति एषांपुत्रादीनां १७ सुसंव्याघ्रंमहौघेवेतिपाठे सुप्तंसैकते महौघामहानदीअकालपूरवती १८ संचिन्वानकंकुत्सितंसंचिन्वानंसंग्रहीतारं १९ कार्यकर्तुमिष्टं कृताकृतमर्धकृतं ईहातृष्णा २० फलंनप्राप्तंयेनतंफलमप्राप्तंनरंअप्राप्तकर्मफलमित्यर्थः कर्मसंज्ञितंवणिगित्यादिकर्मानुरूपसंज्ञावंतं

अमोघारात्रयश्चापिनित्यमायांतियांतिच ॥ यदाऽहमेतज्जानामिनमृत्युस्तिष्ठतीतिह ॥ सोऽहंकथंप्रतीक्षिष्येज्ञानेनापिहितश्चरन् १० रात्र्यांरात्र्यांव्यती तायामायुरल्पतरंयदा ॥ तदेववंध्यं दिवसमितिविद्याद्विचक्षणः ११ गाधोदकेमत्स्यइवसुखंविंदेतकस्तदा ॥ अनवाप्तेषुकामेषुमृत्युरभ्येतिमानवम् १२ पु ष्पाणीवविचिन्वंतमन्यत्रगत मानसम् ॥ वृकीवोरणमासाद्यमृत्युरादा यगच्छति १३ अद्यैवकुरुयच्छ्रेयोमात्वांकालोऽत्यगादयं ॥ अकृतेष्वेवकार्येषुमृत्युर्वैसंप्रक र्षति १४ श्वःकार्यमद्यकुर्वीतपूर्वाह्णेचापराह्णिकम् ॥ नहिप्रतीक्षतेमृत्युःकृतमस्यनवाकृतम् १५ कोहिजानातिकस्याद्यमृत्युकालोभविष्यति ॥ युवैवधर्मशी लःस्यादनित्यंखलुजीवितम् ॥ कृतेधर्मेभवेत्कीर्तिरिहप्रेत्यचवैसुखम् १६ मोहेनहिसमाविष्टःपुत्रदारार्थमुद्यतः ॥ कृत्वाकार्यमकार्यंवापुष्टिमेषांप्रयच्छति १७ तंपुत्र पशुसंपन्नंव्यासक्तमनसंनरम् ॥ सुप्तंव्याघ्रोमृगमिवमृत्युरादायगच्छति १८ संचिन्वानकमेवैनंकामानामवितृप्तकम् ॥ व्याघ्रःपशुमिवादायमृत्युरादायगच्छति १९ इदंकृतमिदंकार्यमिदमन्यत्कृताकृतम् ॥ एवमीहासुखासक्तंकृतांतःकुरुतेवशे २० कृतानांफलमप्राप्तंकर्मणांकर्मसंज्ञितम् ॥ क्षेत्रापणगृहासक्तंमृत्युरादाय गच्छति २१ दुर्बलंवलवंतंचशूरंभीरुंजडंकविम् ॥ अप्राप्तसर्वकामार्थान्मृत्युरादायगच्छति २२ मृत्युर्जराचव्याधिश्चदुःखंचानेककारणम् ॥ अनुषक्तंयदा देहेकिंस्वस्थइवतिष्ठसि २३ जातमेवांतकोऽतायजराचान्वेतिदेहिनम् ॥ अनुषक्ताद्वयेनैतेभावाःस्थावरजंगमाः २४ मृत्योर्वामुखमेतद्वैयाग्रामेवसतोरतिः ॥ देवानामेषवैगोष्ठोयदरण्यमितिश्रुतिः २५ निबंधनीरज्जुरेषायाग्रामेवसतोरतिः ॥ छित्त्वैतांसुकृतोयातिनैनांछिंदंतिदुष्कृतः २६ नहिंसयतियोजंतून्मनोवा क्कायहेतुभिः ॥ जीवितार्थापनयनैःप्राणिभिर्नसहिंस्यते २७

२१ । २२ । २३ द्वयेनांतकजराख्येन २४

एवंपुत्रादिषुवैराग्यमुक्त्वातेषांत्यागमप्याह मृत्योरिति ग्रामेख्यादिसंवेरतिरासक्तिरेवमृत्योर्मुखंनतुवासमात्रं गोष्ठमिवगोष्ठंवासस्थानं अरण्यंविविक्तदेशः तद्धिदेवानामिंद्रियाणांगवांगोष्ठमिवबं धनस्थानं गृहंत्यक्त्वैकांतिध्यानपरोभवेदित्यर्थः लिंगव्यत्ययआर्षः २५ यातिमुक्तिमितिशेषः २६ नहिंसयतिहिंसांनकारयतिनकरोतिचेत्यर्थः हेतुःश्राद्धादिनिमित्तैः कर्महेतुभिरितिपाठे ऽपिसएवार्थः जीवितमर्थाश्चाऽपनयंतितैर्हिंस्रस्तेनादिभिःप्राणिभिःसनहिंस्यतेनिमित्ताभावात् यथोक्तंवैष्णवे । 'यःपरस्यनपापानिचिंतयत्यात्मनोयथा ॥ तस्यपापागमस्तातहेत्वभावान्नवि द्यते'इति । कर्मभिर्नसबध्यतइतिपाठे मनोवाक्कायजैरपध्यानपरुषोक्तिशस्त्रपातनादिभिःकरणभूतैर्नबध्यतेसंबंधनमाप्नोति वध्यतइतिस्पष्टार्थःपाठः योहिंसयच्छतिप्राणानित्यपपाठः २७



मृत्युसेनांजराव्याधिरूपां सत्यमब वितात्मतत्त्वप्रापकत्वाद्योगधर्मं अमृतंमरणाभावः एतेन'नतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरं'इतिश्रुतेरर्थउक्तः । ऋतेसत्यमसत्याद्यमिति पाठे असत्यमज्ञानमद्यंभक्ष्यंयस्येत्यर्थः २८ सत्यव्रताचारोब्रह्मप्राप्त्यर्थानिव्रतानियमनियमरूपाण्याचरतीतितथा सत्ययोगश्चिदाभासरूपस्यजीवस्यप्रविलापनंतत्परायणः । सत्यःप्रमाण भूतआगमोगुरुवेदवाक्ययस्यससत्यागमःश्रद्धावान् २९ देहेचित्ते मोहाद्विषयपारवश्यात् सत्येनतद्वर्जनात्मकेनयोगेन तथाच । 'मनएवमनुष्याणांकारणंबंधमोक्षयोः ॥ बंधायविषयासक्तंमुक्त्यै निर्विषयंस्मृतं'इतिश्रुत्यर्थउक्तः ३० क्षेमीपरसुखार्थो अमर्त्यवत् हिरण्यगर्भवत् ३१ शांतियज्ञोनिवृत्तिमार्गाभ्यासः ब्रह्मयज्ञोनित्यमुपनिषदर्थचिंतनं । वाग्यज्ञःप्रणवजपः । मनोयज्ञःअका रोकारमकारार्धमात्राणांपूर्वपूर्वस्योत्तरोत्तरत्रप्रविलापनं कर्मयज्ञःस्नानशौचगुरुशुश्रूषाद्यावश्यकधर्मानुष्ठानम् । उदगायनेइतिदेवयानपथनिमित्तं उक्तपंचयज्ञपरोभविष्यामि दैर्घ्यमार्षम् ३२

नमृत्युसेनामायांतींजातुकश्चित्प्रबाधते ॥ ऋतेसत्यमसत्त्याज्यंसत्येह्यमृतमाश्रितम् २८ तस्मात्सत्यव्रताचारःसत्ययोगपरायणः ॥ सत्यागमःसदादांतःस त्येनैवांतकंजयेत् २९ अमृतंचैवमृत्युश्चद्वयंदेहेप्रतिष्ठितम् ॥ मृत्युरापद्यतेमोहात्सत्येनापद्यतेऽमृतम् ३० सोऽहंह्यहिंस्रःसत्यार्थीकामक्रोधबहिष्कृतः ॥ समदुःखसुखःक्षेमीमृत्युंहास्याम्यमर्त्यवत् ३१ शांतियज्ञरतोदांतोब्रह्मयज्ञेस्थितोमुनिः ॥ वाङ्मनःकर्मयज्ञश्चभविष्याम्युदगायने ३२ पशुयज्ञैःकथंहिंस्रैर्मा दृशोयष्टुमर्हति ॥ अंतवद्भिरिवप्राज्ञःक्षेत्रयज्ञैःपिशाचवत् ३३ यस्यवाङ्मनसीस्यातांसम्यक्प्रणिहितेसदा ॥ तपस्त्यागश्चसत्यंचसवैसर्वमवाप्नुयात् ३४ नास्तिविद्यासमंचक्षुर्नास्तिसत्यसमंतपः ॥ नास्तिरागसमंदुःखंनास्तित्यागसमंसुखम् ३५ आत्मन्येवात्मनाजातआत्मनिष्ठोऽप्रजोऽपिवा ॥ आत्मन्येव भविष्यामिनमांतारयतिप्रजा ३६ नैतादृशंब्राह्मणस्यास्तिवित्तंयथैकतासमतासत्यताच ॥ शीलंस्थितिर्दंडनिधानमार्जवंततस्ततश्चोपरमःक्रियाभ्यः ३७ किंतेधनैर्बांधवैर्वापिकिंतेकिंतेदारैर्ब्राह्मणयोमरिष्यसि ॥ आत्मानमन्विच्छगुहांप्रविष्टंपितामहास्तेक्वगताःपिताच ३८ ॥ ॥ भीष्मउवाच ॥ ॥ पुत्रस्यै तद्वचःश्रुत्वायथाऽकार्षीत्पितानृप ॥ तथात्वमपिवर्तस्वसत्यधर्मपरायणः ॥ ३९ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्म० पितापुत्रसंवादकथनेपंचस प्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ धनिनश्चाधनायेचवर्तयंतेस्वतंत्रिणः ॥ सुखदुःखागमस्तेषांकःकथंवापितामह १

अंतवद्भिरनित्यफलैः क्षेत्रयज्ञैःशरीरत्यागैः यथाकश्चित्पिशाचःप्राप्तंप्राप्तंशरीरंपूर्वपूर्ववासनावशाद्विषाग्न्युद्बंधनादिनापुनःपुनर्हिनस्तितद्वदहंपश्वादिशरीरमात्मदेहत्वेनपश्यन्कथंनाशयेयमि त्यर्थः । क्षत्रैरित्यपिपाठः क्षत्रियाणामुचितैर्युद्धयज्ञतुल्यैरित्यर्थः ३३ यस्यवागादिपंचकंब्रह्मणिप्रणिहितंसमर्पितंससर्वंब्रह्मप्राप्नुयात् । सत्यंचसवैपरमवाप्नुयादितिमूलपाठः ३४ विद्याग्रंथ ज्ञानंब्रह्माकाराचरमांतःकरणवृत्तिश्चज्ञानापरपर्याया ३५ आश्रमकर्मपित्राप्रोक्तंनिरस्यति आत्मनीति आत्मनिब्रह्मण्यात्मनाब्रह्मरूपेणजातोनपित्रामातरि आत्मनिष्ठोब्रह्मभूतः अप्रजो ऽनपत्यः वाशब्दएवार्थे आत्मन्येवब्रह्मण्येवभविष्यामिनजायायांपुत्ररूपेण प्रजासंततिः ३६ एकताएकाकित्वं शीलंश्लाघनीयंवृत्तं दंडनिधानंवाङ्मनःकायैर्हिंसात्यागः ३७ गुहांबुद्धिम् ३८ । ३९ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपेपंचसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥ ॥ युवैवमोक्षार्थंयतेतेत्युक्तंतत्रमोक्षसाधनंयज्ञादिद्वाराधनमेवनिर्ध नानांदुर्लभोमोक्षइतिमन्वानःपृच्छति धनिनइति धनिनांकःकिंरूपःकेनप्रकारेणसुखदुःखयोर्मुक्तिसंसारयोरागमः कथंचनिर्धनानांसुखदुःखागमइत्यर्थः स्वतंत्रिणःस्वशास्त्रानुसारिणः १

अमृतत्वस्यतुनाशास्तिवित्तेन । त्यागेनैकेअमृतत्वमानशुरितिश्रुत्यनुसारादकिंचनाएवमुच्यंतेनतुधनिनइत्युत्तरयति अत्रापीति शमात्मसुखंतेनपाकोरागद्वेषादिराहित्यान्निर्मलः । 'शंपाकस्त्वर्ककेघृष्टिमुनिभिश्चतुरंगुले' इत्यनेकार्थः । तेनशंपाकेनयद्गीतंतन्मांप्रतिकश्चिदब्रवीदितिद्वयोःसंबंधः २ कुचैलेनकुवस्त्रेण निर्धनत्वादन्नाच्छादनहीनइत्यर्थः ३ । ४ अभिसंनयेदेवंयदिप्राप्येतर्हिनसंहृष्येदित्यादिनासंबंधः मार्गइतिप्रथमांतपाठेतुसंनयेत्संप्राप्नुयात् ५ नवेइति कामादिधर्मवानात्माचित्तंकामात्मा । 'कामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनएव'इतिश्रुतेः त्वंतुस्वरूपेणाऽकामात्माऽपिमनस्तादात्म्याद्भ्रांत्यातप्तायःपिंडवत्कामात्मेवसन्धुरमुद्यम्यधैर्येणयोगाख्यगमनभारंचोढाश्रेयोमोक्षंप्रतिनचरसिनाभिमुखोभवसियत्तत्रकिंहेतुरात्म

॥ भीष्मउवाच ॥ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ शंपाकेनेहमुक्तेनगीतंशांतिगतेनच २ अब्रवीन्मांपुराकश्चिद्ब्राह्मणस्त्यागमाश्रितः ॥ क्लिश्यमानःकुदारेणकुचैलेनबुभुक्षया ३ उत्पन्नमिहलोकेवैजन्मप्रभृतिमानवम् ॥ विविधान्युपवर्तंतेदुःखानिचसुखानिच ४ तयोरेकतरेमार्गेयदेनमभिसन्नयेत् ॥ नसुखंप्राप्यसंहृष्येन्नासुखंप्राप्यसंज्वरेत् ५ नवैचरसियच्छ्रेयआत्मनोवायदीशिषे ॥ अकामात्माऽपिहिसदाधुरमुद्यम्यचैवह ६ अकिंचनःपरिपतन्सुखमास्वादयिष्यसि ॥ अकिंचनःसुखंशेतेसमुत्तिष्ठतिचैवह ७ आकिंचन्यंसुखंलोकेपथ्यंशिवमनामयम् ॥ अनमित्रपथोह्येषदुर्लभःसुलभोमतः ८ अकिंचनस्यशुद्धस्यउपपन्नस्यसर्वतः ॥ अवेक्षमाणस्त्रींल्लोकान्नतुल्यमिहलक्षये ९ आकिंचन्यंचराज्यंचतुलयासमतोलयम् ॥ अत्यरिच्यतदारिद्र्यंराज्यादपिगुणाधिकम् १० आकिंचन्येचराज्येचविशेषःसुमहानयम् ॥ नित्योद्विग्नोहिधनवान्मृत्योरास्यगतोयथा ११ नैवास्याग्निर्नचारिष्टोनमृत्युर्नचदस्यवः ॥ प्रभवंतिधनत्यागाद्विमुक्तस्यनिराशिषः १२ तंवैसदाकामचरमनुपस्तीर्णशायिनम् ॥ बाहूपधानंशाम्यंतंप्रशंसंतिदिवौकसः १३ धनवान्क्रोधलोभाभ्यामाविष्टोनष्टचेतनः ॥ तिर्यगीक्षःशुष्कमुखःपापकोभ्रुकुटीमुखः १४ निर्दशन्नधरोष्ठंचक्रुद्धोदारुणभाषिता ॥ कस्तमिच्छेत्परिद्रष्टुंदातुमिच्छतिचेन्महीम् १५ श्रियाह्यभीक्ष्णंसंवासोमोहयत्यविचक्षणम् ॥ सातस्यचित्तंहरतिशारदाभ्रमिवानिलः १६ अथैनंरूपमानश्चधनमानश्चविंदति ॥ अभिजातोऽस्मिसिद्धोऽस्मिनाऽस्मिकेवलमानुषः १७ इत्येभिःकारणैस्तस्यत्रिभिश्चित्तंप्रमाद्यति ॥ संप्रसक्तमनाभोगान्विसृज्यपितृसंचितान् ॥ परिक्षीणःपरस्वानामादानंसाधुमन्यते १८ तमतिक्रांतमर्यादमाददानंततस्ततः ॥ प्रतिषेधंतिराजानोलुब्धामृगमिवेषुभिः १९ एवमेतानिदुःखानितानितानीहमानवम् ॥ विविधान्युपपद्यंतेगात्रसंस्पर्शजान्यपि २०

नश्चित्तस्यनईशिषेनईश्वरोभवसि उपालंभोयं तेनचित्तस्यस्वाधीनत्वाच्छ्रेयआचरेदित्यर्थः ६ नास्तिकिंचनधनदारादिकंयस्यसोऽकिंचनः परितःपतन्गच्छन् अनिकेतश्चरन्नित्यर्थः ७ पथ्यंमोक्षमार्गादनपेतं अनामयंनिर्विघ्नं अनमित्रपथःशत्रुवर्जितःपंथाः दुर्लभःकामिनां सुलभःपारतंत्र्याभावात् ८ उपपन्नस्यवैराग्यसंपन्नस्य ९ । १० गुणाधिक्यमेवाह आकिंचन्येचेति ११ नचारिष्टइत्यत्रनचादित्यइत्यपपाठः अरिष्टश्चोराद्युपद्रवः १२ अनुपस्तीर्णंशय्याहीनेभूतलेशेतेतं उपधानंशीर्षोपधानं १३ । १४ । १५ । १६ अभिजातउत्तमवंशजः १७ त्रिभिर्धनरूपकुलैः भोगान्भोग्यधनादीन्विसृज्यव्ययीकृत्येतिसार्धश्लोकः परस्वानामादानंचौर्यं १८ प्रतिषेधंतिदंडयंति लुब्धाव्याधाः १९ संस्पर्शजानिदाहच्छेदादीनि २०



तेषांध्रुवाणामवश्यंभाविनांपरमदुःखानांबुद्ध्याज्ञानेनभैषज्यंप्रतीकारमाचरेत्कुर्यात् । किंकृत्वा अध्रुवैर्देहादिभिःसह लोकधर्मपुत्रैषणादिरूपमवज्ञायाधिकृत्य २१ । २२ । २३ ॥ इति शां० मो० नी० भा० षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ पूर्वंधनस्यमोक्षहेतुत्वंनिरस्तंजीवनहेतुत्वंतुप्रत्यक्षमतोजीवनायसमारंभान्कृषिवाणिज्ययज्ञदानाद्यारंभानीहमानःकर्तुमिच्छन्यो धनमलभमानस्तृष्णाभिभूतश्चसकिंकुर्यात् यतेतैवबाधनार्थमुपरमेतैववाऽऽरंभादित्यर्थः । आद्येवैयर्थ्यादंत्येदेहनाशापाताच्चमोक्षसाधनंविघ्नितंभवत्यतस्तयोर्मध्येकिंश्रेयइतिभावः १ सर्वत्रलाभालाभमानापमानादौसाम्यमवैषम्यंसर्वसाम्यं । अनायासोधनाद्यर्थश्रमाभावः । निर्वेदोवैराग्यं । अविविधित्साकर्मणीच्छाभावः विविधित्सेतिपाठेश्रवणादीच्छा लाभादावैषम्येरागादिस्ततःप्रवृत्तिस्ततआयासस्ततःसत्यत्यागइत्येतानित्यक्त्वैवसुखीस्यान्नत्वस्यक्ता देहनिर्वाहस्त्वारब्धकर्मोपनतैरेवान्नादिभिर्भविष्यति । तस्मादुपरमएवश्रेयानित्यर्थः २ पदानिपदनीयान्याश्रयणीयानिप्रशांतयेमोक्षायएषइतिविधेयापेक्षेलिंगैकत्वे एषस्वर्गादिस्तत्साधनत्वात् १ । ४ मंक्रिर्नामब्राह्मणोव्यर्थचेष्टोवा दम्यौदमनयोग्यौगावौवत्सतरौताभ्यांसहितंयुगंशकटादिधुरियोजितंतिर्यक्काष्ठंयस्यां

तेषांपरमदुःखानांबुद्ध्याभैषज्यमाचरेत् ॥ लोकधर्ममवज्ञायध्रुवाणामध्रुवैःसह २१ नात्यक्त्वासुखमाप्नोतिनात्यक्त्वाविंदतेपरम् ॥ नात्यक्त्वाचाभयःशेतेत्यक्त्वासर्वंसुखीभव २२ इत्येतद्धास्तिनपुरेब्राह्मणेनोपवर्णितम् ॥ शंपाकेनपुरामह्यंतस्मात्त्यागःपरोमतः ॥ २३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमो०शंपाकगीतायांषट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ ईहमानःसमारंभान्यदिनासादयेद्धनम् ॥ धनतृष्णाभिभूतश्चकिंकुर्वन्सुखमाप्नुयात् १ ॥ ॥ भीष्मउवाच ॥ ॥ सर्वसाम्यमनायासंसत्यवाक्यंचभारत ॥ निर्वेदश्चाविधित्साचयस्यस्यात्ससुखीनरः २ एतान्येवपदान्याहुःपंचवृद्धाःप्रशांतये ॥ एषस्वर्गश्चधर्मश्चसुखंचानुत्तमंमतम् ३ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ निर्वेदान्मंकिनागीतंतन्निबोधयुधिष्ठिर ४ ईहमानोधनंमंकिर्भग्नेहश्चपुनःपुनः ॥ केनचिद्धनशेषेणक्रीतवान्दम्यगोयुगम् ५ सुसंबद्धौतुतौदम्यौदमनायाभिनिःसृतौ ॥ आसीनमुष्ट्रंमध्येनसहसैवाभ्यधावताम् ६ तयोःसंप्राप्तयोरुष्ट्रःस्कंधदेशममर्षणः ॥ उत्थायोत्क्षिप्यतौदम्यौप्रससारमहाजवः ७ ह्रियमाणौतुतौदम्यौतेनोष्ट्रेणप्रमाथिना ॥ म्रियमाणौचसंप्रेक्ष्यमंकिस्तत्राब्रवीदिदम् ८ नचैवाविहितंशक्यंदक्षेणापीहितुंधनम् ॥ युक्तेनश्रद्धयासम्यगीहांसमनुतिष्ठता ९ कृतस्यपूर्वंचानर्थैर्युक्तस्याप्यनुतिष्ठतः ॥ इमंपश्यतसंगत्याममदैवमुपप्लवम् १० उद्यम्योद्यम्यमेदम्यौविषमेणेवगच्छतः ॥ उत्क्षिप्यकाकतालीयमुत्पथेनैवधावतः ११

तयोर्गावौयुज्येते ५ सुसंबद्धौयुगेतयोःसम्यग्योजितौदमनाय असंबद्धाविविपाठेदम्यविप्राअसंयतौ ६ स्कंधदेशंसंप्राप्तयोःसतोरितिसंबंधः उत्क्षिप्यतुलाभाजनद्वयवदुपरिभूमेर्नीत्वा ७ । ८ अविहितंदैवेनानुपस्थापितंईहितुमेष्टुं ईहितमितिपाठेआप्तुमित्यध्याहारः श्रद्धयाफलप्राप्तिनिश्चयेन ईहांचेष्टां ९ कृतस्यपूर्वंनानार्थैरितिपाठेअर्थैर्नानाकृतस्यपृथक्कृतस्य । युक्तस्याविहितविहितस्य । अनुतिष्ठतोऽर्थप्राप्त्युपायान् । संगत्यादम्योष्ट्रसंबंधेन दैवंदेवेनेश्वरेणनिर्मितं १० उपप्लवमेवाह उद्यम्येति उद्यम्योद्यम्योष्ट्रगतिवेगादुत्प्लुत्योत्प्लुत्यविषमेणकृच्छ्रेणदम्यौगच्छतः काकतालीयंदैवकृतंसंगमं उत्क्षिप्योत्थाप्यधावतउष्ट्रस्येत्यग्रिमेणसंबंधः । उन्माथेनेवजंबुकमित्यपिपाठः । तालःकरतलयोःशब्दजनकःसंयोगस्तस्मिन्क्रियमाणेउत्पतन्काकोदैवात्तत्रतालाभ्यामाक्रांतोऽमृतदेतत्काकतालीयमित्युच्यते । काकस्पर्शसमकालंतालफलस्यतत्रस्थस्यवापतनंतदित्यन्ये । मेषयोर्युध्यतोःपरस्परशिरःसंघट्टउन्माथस्तेनदैवान्मध्यप्रविष्टोजंबुकोतिपीडनान्ममारतद्वदपिकाकतालीयोत्थानमेवतयेदमित्यर्थः ११

मणीवेति वाशब्दइवार्थे हठेनैवमूढानिर्बंधेनैवपौरुषमस्तिनतुतद्विद्वद्दृष्टचेत्यर्थः नैवेतिपदविभागोवा १२ उपपद्येतयदिलोकदृष्टांतेनपौरुषास्तित्वंयुज्येततर्हिफलव्यभिचारात्तदपिदैवायत्तमेवो पपद्यतेनस्वातंत्र्येणेत्यर्थः १३ निर्वेदमितिपाठेक्लीबत्वमार्षं वैराग्यंगंतव्यंअनुवर्तितव्यं निराशःनिरस्ताशः अर्थश्चतत्साधनंचेतिसमाहारस्तस्मिन् १४।१५।१६ विविदिषानाबनाद्यर्थ प्रवृत्तीनां गतपूर्वःपूर्वंगतःप्राप्तोगतपूर्वः १७ हेकामुककामादिषुर्मवत्तेमनः मानसेत्यपिपाठः निर्विद्यवराग्यंप्राप्य शाम्यशमंगच्छ निकृतःवंचितः प्रवृत्तिनैष्फल्यात् १८। १९ मोक्ष्यसेत्य क्षसे २० क्रीडनकःक्रीडामृगः जातुकदाचित् प्रेष्यतांदास्यं कामाभावेकोऽपिकस्यचिदपिनप्रेष्यःस्यादित्यर्थः २१ अंतंनाप्नुवन्अतोहेतोस्त्यक्त्वा २२। २३ प्रियंजायादि २४ नभविष्यसि

मणीवोष्ट्रस्यलंबेतेप्रियौवत्सतरौमम ॥ शुद्धंहि दैवमेवेदंहठेनैवास्तिपौरुषम् १२ यदिवाऽप्युपपद्येतपौरुषंनामकर्हिचित् ॥ अन्विष्यमाणंतदपिदैवमेवावतिष्ठते १३ तस्मान्निर्वेदएवेहगंतव्यःसुखमिच्छता ॥ सुखंस्वपितिनिर्विण्णोनिराशश्चार्थसाधने १४ अहोसम्यक्शुकेनोक्तंसर्वतःपरिमुच्यता ॥ प्रतिष्ठतामहारण्यंजन कस्यनिवेशनात् १५ यःकामानाप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ॥ प्रापणात्सर्वकामानांपरित्यागोविशिष्यते १६ नांतंसर्वविविदिषानांगतपूर्वोऽस्तिकश्चन ॥ शरीरेजीवितेचैवतृष्णामंदस्यवर्धते १७ निवर्तस्वविविदिषाभ्यःशाम्यनिर्विद्यकामुक ॥ असकृच्चासिनिकृतोनचनिर्विद्यसेततः १८ यदिनाहंविनाश्यस्तेयद्येवं रमसेमया ॥ मामांयोजयलोभेनवृथात्वंवित्तकामुक १९ संचितंसंचितंद्रव्यंनष्टंतवपुनःपुनः ॥ कदाचिन्मोक्ष्यसेमूढधनेहांधनकामुक २० अहोनुममबालिश्यं योऽहंक्रीडनकस्तव ॥ किंनैवंजातुपुरुषःपरेषांप्रेष्यतामियात् २१ नपूर्वेनापरेजातुकामानामंतमाप्नुवन् ॥ त्यक्त्वासर्वसमारंभान्प्रतिबुद्धोऽस्मिजागृमि २२ नूनंतेहृदयंकामवज्रसारमयंदृढम् ॥ यदनर्थशताविष्टंशतधानविदीर्यते २३ जानामिकामत्वांचैवयच्चकिंचित्प्रियंतव ॥ तवाहंप्रियमन्विच्छन्नात्मन्युपलभेसुखम् २४ कामजानामितेमूलंसंकल्पात्किलजायसे ॥ नत्वांसंकल्पयिष्यामिसमूलोनभविष्यसि २५ ईहाधनस्यनसुखालब्ध्वाचिंताचभूयसी ॥ लब्धनाशेयथामृत्यु र्लब्धंभवतिवानवा २६ परित्यागेनलभतेततोदुःखतरंनुकिम् ॥ नचतुष्यतिलब्धेनभूयएवचमार्गति २७ अनुतर्षुलएवार्थःस्वादुगांगमिवोदकम् ॥ मद्विलाप नमेतत्तुप्रतिबुद्धोऽस्मिसंत्यज २८ यइमंमामकंदेहंभूतग्रामःसमाश्रितः ॥ सयात्वितोयथाकामंवसतांवायथासुखम् २९ नयुष्मास्विहमेप्रीतिःकामलो भानुसारिषु ॥ तस्मादुत्सृज्यकामान्वैसत्वमेवाश्रयाम्यहम् ३० सर्वभूतान्यहं देहेपश्यन्मनसिचात्मनः ॥ योगेबुद्धिंश्रुतेसत्वंमनोब्रह्मणिधारयन् ३१

विनशिष्यसि २५ ईहालिप्सा चेष्टावा तदाधनस्यधनायेत्यर्थः लब्ध्वार्पितानाशभयात् यथामृत्युस्तथादुःखकृत् श्रमेऽपिफलंसंदिग्धं २६ परित्यागेदेहस्यपरस्वत्वापादनेऽपिनलभते मार्गति मृगयते परेभ्योयोनलभतइतिपाठे परेभ्यःसेव्यमानेभ्योऽपि २७ अनुतर्षुलस्तृष्णावृद्धिकृत् मद्विलापनंमन्नाशः एतत्तृष्णावृद्ध्याख्यं प्रतिबुद्धोऽस्मि अतोमांसंत्यज हेकामेतिशेषः २८ भूतग्रामोयातुस्वकारणंप्रति पंचत्वमस्त्वित्यर्थः २९ युष्मास्वनात्मस्वहंकारादिषुराजसतामसेषु सत्वंसत्वगुणं वनमेवेतिपाठे वनंब्रह्मपारिव्राज्यंवा ३० देहेतत्रापिमनसिहृत्पुंडरीकस्थेपश्यन् हेतौशतृप्रत्ययः एकात्मदर्शनायेत्यर्थः योगेविषयेबुद्धिंकरिष्यामीतिनिश्चयंकुर्वन्श्रुतेश्रवणादौसत्वमेकाग्रचित्तंधारयन्मनश्चब्रह्मणिलवणोदकन्यायेनधारयन्विहरिष्यामीत्यग्रिमेणसंबंधः ३१



अनासक्तोनिरामयइतिरागद्वेषराहित्यमुक्तं ३२ अभ्यायोगेबुद्धिमित्युक्तमतेरभ्या ३३। ३४ अधनेइतिच्छेदः संधिरार्षः ३५ धनमस्यास्तीति ३६। ३७ अनलोऽग्निरित्यर्थः ३८। ३९ ४० सहामिइतःपूर्वंसोढवानस्मि ४१ मनोगतीःमनसोवृत्तीः एतेनसमाधिमनुष्ठास्येइत्युक्तंभवति तत्रैवसर्वकामाभावात् ४२ क्षिपमाणानांधिक्कुर्वतांशब्दादीन् ४३ सकामंलब्धमनोरथं हेका मेतिशेषः ४४ निर्वृतिसुखं तृप्तिपूर्णकामता ४५ प्रतिष्ठंतंमोक्षायगंतुं ४६। ४७। ४८ रजःप्रवर्तकोगुणः तच्चकामेनानुबध्नातीतिकामानुबंधंदुःखादिकंचकामाद्युद्भवं अतःसर्वानर्थमूलंरजस्त्या

विहरिष्याम्यनासक्तःसुखीलोकान्निरामयः ॥ यथामांत्वंपुनर्नैवंदुःखेषुप्रणिधास्यसि ३२ त्वयाहिमेप्रणुन्नस्यगतिरन्यानाविद्यते ॥ तृष्णाशोकश्रमाणांहित्वंका मप्रभवःसदा ३३ धननाशेऽधिकंदुःखंमन्येसर्वमहत्तरम् ॥ ज्ञातयोह्यवमन्यंतेमित्राणिचधनाच्च्युतम् ३४ अवज्ञानसहस्रैस्तुदोषाःकष्टतराधने ॥ धनेसुख कलायातुसाऽपिदुःखैर्विधीयते ३५ धनमस्येतिपुरुषंपुरोनिघ्नंतिदस्यवः ॥ क्लिश्यंतिविविधैर्दंडैर्नित्यमुद्वेजयंतिच ३६ अर्थलोलुपतादुःखमितिबुद्धंचिरा न्मया ॥ यद्यदालंबसेकामंतत्तदेवानुरुध्यसे ३७ अतत्त्वज्ञोऽसिबालश्चदुस्तोषोऽपूरणोऽनलः ॥ नैवत्वंवेत्थसुलभंनैवत्वंवेत्थदुर्लभम् ३८ पातालइवदुष्पूरोमां दुःखैर्योक्तुमिच्छसि ॥ नाहमद्यसमावेष्टुंशक्यःकामपुनस्त्वया ३९ निर्वेदमहमासाद्यद्रव्यनाशाद्यदृच्छया ॥ निर्वृतिंपरमांप्राप्यनाद्यकामान्विचिंतये ४० अतिक्लेशान्सहामीहनाहंबुद्ध्याम्यबुद्धिमान् ॥ निकृतोधननाशेनशयेसर्वांगविज्वरः ४१ परित्यजामिकामत्वांहित्वासर्वमनोगतीः ॥ नत्वंमयापुनःकामवत्स्य सेनचरंस्यसे ४२ क्षमिष्येक्षिपमाणानांनहिंसिष्येविहिंसितः ॥ द्वेष्ययुक्तःप्रियंवक्ष्याम्यनादृत्यतदप्रियम् ४३ तृप्तःस्वस्थेंद्रियोनित्यंयथालब्धेनवर्तयन् ॥ नसकामंकरिष्यामित्वामहंशत्रुमात्मनः ४४ निर्वेदंनिर्वृतिंतृप्तिंशांतिंसत्यंदमंक्षमाम् ॥ सर्वभूतदयांचैवविद्धिमांसमुपागतम् ४५ तस्मात्कामश्चलोभश्चतृष्णा कार्पण्यमेवच ॥ त्यजंतुमांप्रतिष्ठंतंसत्वस्थोह्यस्मिसांप्रतम् ४६ प्रहायकामंलोभंचसुखंप्राप्तोऽस्मिसांप्रतम् ॥ नाद्यलोभवशंप्राप्तोदुःखंप्राप्स्याम्यनात्मवान् ॥ ४७ यद्यत्त्यजतिकामानांतत्सुखस्याभिपूर्यते ॥ कामस्यवशगोनित्यंदुःखमेवप्रपद्यते ४८ कामानुबंधंनुदतेयत्किंचित्पुरुषोरजः ॥ कामक्रोधोद्भवंदुःखमह्री ररतिरेवच ४९ एषब्रह्मप्रतिष्ठोऽहंग्रीष्मेशीतमिवह्रदम् ॥ शाम्यामिपरिनिर्वामिसुखंमामेतिकेवलम् ५० यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखम् ॥ तृष्णाक्ष यसुखस्यैतेनार्हतःषोडशींकलाम् ५१ आत्मनासप्तमंकामंहत्वाशत्रुमिवोत्तमम् ॥ प्राप्यावध्यंब्रह्मपुरंराजेवस्यामहंसुखी ५२

ज्यमित्यर्थः ४९ शाम्यामिकर्मभ्यउपरतिंगच्छामि परिनिर्वामिनिर्दुःखोभवामि सुखंस्वरूपसुखं केवलंनिर्विषयं ५०। ५१ आत्मनास्थूलदेहेनसहगणनायांसप्तमःकामः तथाहि अन्नमयप्राणम यमनोमयविज्ञानमयाश्चत्वारःकोशाःप्रवृत्तिमत्त्वाद्रजःप्रधानाः। आनंदमयआवरणरूपत्वात्तमःप्रधानःपंचमः। ततःशुद्धसत्वप्राधान्यात्सबीजसमाधिःसानंदाख्यःषष्ठः। तस्यापिमूलमस्मीतिप्रत्य यमात्रशरीरोमहत्तत्त्वाख्यःसर्वानर्थबीजभूतश्चरमःकामःसप्तमः। तंहत्वाब्रह्मैवपुरंब्रह्मपुरंप्रविष्ठास्यापतस्तदवध्यं कुतः। 'नास्यजरयैतज्जीर्यते नवधेनास्यहन्यतएतत्सत्यंब्रह्मपुरं'इतिश्रुतेः ५२

कामान्प्रथमाध्यायोक्तरीत्याजाग्रत्स्वप्नसंप्रज्ञातावस्थागतान्विषयान् १३ काममूलमविद्यां १४ ॥ इतिशांति० मो० नी० भा० सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ मंकिवदुपरमेतैवे
त्युक्तम् तेनैवयोगक्षेमसिद्धिंसदृष्टांतामाह अत्रेत्यादिना १ अनंतंदेशतःकालतोवस्तुतश्चापरिच्छिन्नं । वित्तमिवनिगूढंकोशपंचकलक्षणगुहायांप्रत्यक्स्वमेवास्यमेस्वरूपभूतं । अतएवसर्वस्यम
दन्यत्वान्मज्जूरगवन्मयिकल्पितत्वाच्चमेममनकिंचन अतएवाह मिथिलायामिति नह्यध्यस्तदोषैरधिष्ठानंस्पृश्यते मरीचिजलयाऽपिमरुभूमेरार्द्रत्त्वापत्तेरितिभावः २ पदसंचयंश्लोकं वैराग्यार्थमुप
न्यस्तं ३ । ४ । ५ तस्योपदेशस्यलक्षणंज्ञापकं तवज्ञाप्यं ६ सारंगोभ्रमरस्तस्याऽन्वेषणमनुगमनं इषगतौदिवादिः ७ यस्माद्यस्मात्पुरोर्यद्यदुपात्तंतत्तदाहभीष्मः आशेति राजन्हेयुधिष्ठिर ८

एतांबुद्धिंसमास्थायमंकिर्निर्वेदमागतः ॥ सर्वान्कामान्परित्यज्यप्राप्यब्रह्ममहत्सुखम् ५३ दम्यनाशकृतेमंकिरमृतत्वंकिलागमत् ॥ अच्छिनत्काममूलंसतेन
प्रापमहत्सुखम् ५४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणि मंकिगीतायांसप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ भीष्मउवाच ॥ अत्राप्युदा
हरंतीममितिहासंपुरातनम् ॥ गीतंविदेहराजेनजनकेनप्रशाम्यता १ अनंतमिवमेवित्तंयस्यमेनास्तिकिंचन ॥ मिथिलायांप्रदीप्तायांनमेदह्यतिकिंचन २ अ
त्रैवोदाहरंतीमंबोध्यस्यपदसंचयम् ॥ निर्वेदंप्रतिविन्यस्तंतंनिबोधयुधिष्ठिर ३ बोध्यंशांतमृषिंराजानाहुषःपर्यपृच्छत ॥ निर्वेदाच्छांतिमापन्नंशास्त्रप्रज्ञान
तर्पितम् ४ उपदेशंमहाप्राज्ञशमस्योपदिशस्वमे ॥ कांबुद्धिंसमनुध्यायशांतश्चरसिनिर्वृतः ५ ॥ बोध्यउवाच ॥ उपदेशेनवर्तामिनानुशास्मीहकंचन ॥ ल
क्षणंतस्यवक्ष्येऽहंतत्स्वयंपरिमृश्यताम् ६ पिंगलाकुररःसर्पःसारंगान्वेषणंवने ॥ इषुकारःकुमारीचषडेतेगुरवोमम ७ ॥ भीष्मउवाच ॥ आशाबलवतीराजन्नै
राश्यंपरमंसुखम् ॥ आशांनिराशांकृत्वातुसुखंस्वपितिपिंगला ८ सामिषंकुररंदृष्ट्वावध्यमानंनिरामिषैः ॥ आमिषस्यपरित्यागात्कुररःसुखमेधते ९ गृहारं
भोहिदुःखायनसुखायकदाचन ॥ सर्पःपरकृतंवेश्मप्रविश्य सुखमेधते १० सुखंजीवंतिमुनयोभैक्ष्यवृत्तिंसमाश्रिताः ॥ अद्रोहेणैवभूतानांसारंगाइवपक्षिणः
११ इषुकारोनरःकश्चिदिषावासक्तमानसः ॥ समीपेनापिगच्छंतंराजानंनावबुद्धवान् १२ बहूनांकलहोनित्यंद्वयोःसंकथनंध्रुवम् ॥ एकाकीविचरिष्यामिकु
मारीशंखकोयथा १३ ॥ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि बोध्यगीतायां अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥ ॥ ॥ ७ ॥
॥ युधिष्ठिर उवाच ॥ ॥ केनवृत्तेनवृत्तज्ञवीतशोकश्चरेन्महीम् ॥ किंचकुर्वन्नरोलोकेप्राप्नोतिगतिमुत्तमाम् १

९ पिंगलावत्कुररवच्चाशांगृहधनरूपामामिषंचत्यक्त्वाकथंजीवेतेत्याशंक्यान्यथासिद्धिमाह गृहेतिद्वाभ्यां १० । ११ एवमारंभांतरवर्जितेनब्रह्मण्यैकाग्र्यंचित्तस्यसंपादनीयमित्याह इष्विति १२
ऐकाग्र्यमेकाकितयैवसिद्ध्यतीत्याह बहूनामिति काचित्कुमारीपित्रादिपरवशागृहागतानतिथीन्प्रच्छन्नंभोजयितुमिच्छंतीव्रीहीनवहंतुंप्रचक्रमेतस्याःप्रकोष्ठस्थाःशंखाःशुक्रुशुः सापरेषांसूचनामा
भूदितिशंखान्भंक्त्वाएकैकमवशेषितवतीतिश्रीमद्भागवतेदृष्टांतोऽयंव्याख्यातः १३ ॥ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टसप्तत्यधिकशततमो
ऽध्यायः ॥ १७८ ॥ ॥ ७ ॥ ॥ केनेत्याक्षेपे केनवृत्तेनवीतशोकोभूत्वामहींचरेत् नतादृशंवृत्तमस्तीत्यर्थः यतःसर्पसारंगवृत्त्यागृहाहारसंपादनेऽपिप्रतिपक्षबाहुल्यंदृश्यते द्विषंतिहिभिक्षुका
भिक्षुकांतरंस्वाध्यासितस्थानागतमतएकाकित्वैकाग्र्ययोश्चासंभवः अन्नचिंतयाधनाशावियोगस्यापिदुष्करत्वादितिभावः अतःकिंतादृशमुपायांतरंहिंसाशून्यमुत्तममतिप्रदमस्तीतिप्रश्नार्थः १



उत्तरमाह अत्रेति आजगरस्याऽजगरवृत्त्याजीवतः २ कल्पचित्तंदृढचित्तं अनामयंरागद्वेषाननुविद्धं ३ स्वस्थोविषयैरनाकृष्टः । शुद्धोदंभादिहीनः मृदुर्दयावान् । दांतोजितेंद्रियः । निर्विधि
त्सोनिरारंभः अनसूयकःसर्वत्रादोषदर्शी । सुवाक्सत्यवाक् प्रगल्भःप्रतिभानवान् । मेधावीऊहापोहकुशलः । प्राज्ञःज्ञाततत्त्वः ४ मन्यसेइष्टत्वेनानिष्टत्वेनवा अवमन्यसेइतिपाठेत्रीतद्वर्पोऽसी
त्यर्थः ५ स्रोतसाकामादिवेगेन विमनाःनिर्मनस्कः । स्थाणुरिवकूटस्थोनिर्व्यापारः । अविमनाइतिपाठेत्वव्याकुलचित्तः ६ कौटस्थ्यमेवाह नेति इंद्रियार्थान्गंधरसादीननाद्दत्यचरसिशुन्विर्व
हमात्रार्थीअश्नासि साक्षिवन्मुक्तःकर्तृत्वादिना ७ प्रज्ञातत्त्वदर्शनं श्रुतंतन्मूलभूतंशास्त्रं वृत्तिस्तदर्थानुष्ठानं । श्रेयोममेतिशेषः ८ अनुयुक्तःपृष्टः लोकस्यधर्मोजन्मजरादिस्तस्यविधानंकारणम
विद्याकामकर्मादितदभिज्ञःलोकधर्मविधानवित् ९ भूतानामुत्पत्त्यादिकमनिमित्ततःकारणहीनादेकादद्वितीयादितिपश्यआलोचयश्रुतियुक्तिभ्यां श्रुतिस्तावत् । 'सदेवसोम्येदमग्रआसीदेकमे
वाद्वितीयंतदैक्षतबहुस्यांप्रजायेय'इति । सजातीयविजातीयस्वगतभेदशून्यादेकरसाद्वस्तुनोजगदुत्पत्तिमाह युक्तिरपिशून्याज्जगदुत्पत्त्ययोगात् अचेतनानांचप्रधानपरमाण्वादीनामधिष्ठातारमं
तरेणसंघातकर्तृत्वायोगात् विकरणस्येश्वरस्याधिष्ठातृत्वायोगात्संसारस्यस्वाभाविकत्वेमुक्त्ययोगात्स्वप्नमायेंद्रजालवदविद्याकल्पितत्वमवश्यंवाच्यं । अविद्यानाशस्यचसर्वतंत्रसिद्धत्वादविद्या

भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रह्रादस्यचसंवादंमुनेराजगरस्यच २ चरंतंब्राह्मणंकंचित्कल्पचित्तमनामयम् ॥ पप्रच्छराजाप्र
ह्रादोबुद्धिमान्बुद्धिसंमतम् ३ ॥ प्रह्रादउवाच ॥ स्वस्थःशक्तोमृदुर्दांतोनिर्विधित्सोऽनसूयकः ॥ सुवाक्प्रगल्भोमेधावीप्राज्ञश्चरसिबालवत् ४ नैवप्रार्थयसेला
भंनालाभेष्वनुशोचसि ॥ नित्यतृप्तइवब्रह्मन्नकिंचिदिवमन्यसे ५ स्रोतसाह्रियमाणासुप्रजासुविमनाइव ॥ धर्मकामार्थकार्येषुकूटस्थइवलक्ष्यसे ६ नानुतिष्ठ
सिधर्मार्थौनकामेचापिवर्तसे ॥ इंद्रियार्थाननादृत्यमुक्तश्चरसिसाक्षिवत् ७ कानुप्रज्ञाश्रुतंवाकिंवृत्तिर्वाकानुतेमुने ॥ क्षिप्रमाचक्ष्वमेब्रह्मन्श्रेयोयदिहमन्यसे ८
॥ भीष्मउवाच ॥ अनुयुक्तःसमेधावीलोकधर्मविधानवित् ॥ उवाचश्लक्ष्णयावाचाप्रह्रादमनपार्थया ९ पश्यप्रह्रादभूतानामुत्पत्तिमनिमित्ततः ॥ ह्रासंवृद्धिंवि
नाशंचनप्रहृष्येनचव्यथे ॥ स्वभावादेवसंदृश्यावर्तमानाःप्रवृत्तयः ॥ स्वभावनिरताःसर्वाःपरितुष्येन्नकेनचित् ११ पश्यप्रह्रादसंयोगान्विप्रयोगपरायणान् ॥
संचयांश्चविनाशांतान्नक्वचिद्विदधेमनः १२ अंतवंतिचभूतानिगुणयुक्तानिपश्यतः ॥ उत्पत्तिनिधनज्ञस्यकिंकार्यमवशिष्यते १३

मिथ्याअनादिभावत्वेसत्यनित्यत्वाद्यतिरेकेणाकाशवदित्यविद्यामिथ्यात्वसिद्धेरेकाद्वितीयादेवजगदुत्पत्तिंसाधयति । ततश्चयन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिश्रुतेरात्मज्ञस्यममाद्वितीयाभा
वान्नहर्षव्यथेभवतः १० एवमेकाद्वितीयाद्वस्तुनउत्पत्तिमुक्त्वातत्रैवस्थितिलयावप्याह स्वेति स्वभावात्स्वस्यभावःस्वभावःस्वरूपसत्तातत एववर्तमानाःप्रवृत्तयोऽपिसंदृश्याःसम्यग्द्रष्टव्याःस्वभावे
एवनिरताःसर्वाःप्रजास्तासामेतासांस्वभावादन्यत्परायणंनास्तीत्यर्थः । तस्मादेवंजानन्केनचिद्ब्रह्मलोकैश्वर्यलाभेनापिनतुष्येत्तुच्छमेवैतद्दृश्यमितिविजानीयादित्यर्थः ११ एवंतत्त्वदृष्ट्यास्वा
स्थ्यमुपपाद्यबाह्यदृष्ट्याऽपिलोकस्यानित्यत्वाच्चदुपपादयति पश्येति तस्मादहंमनोनकचिद्विषयेविदधेधारयामि तद्विनाशेशोकोत्पत्तिंजानन् यद्वा अश्रौतयोरारंभसंघातवादयोरपिजगद

नित्यत्वमस्तीतिस्वास्थ्यमेवोचितमित्याह पश्येति १२ एवमादीन्यश्रौतानिमतानिदूषयति अंतवंतीति भूतानिपरमतेनित्यसिद्धानिपरमाणुप्रधानादीनीतिपक्षनिर्देशः । जरायुजादिशरी
राणिदृष्टांतोवाअंतवत्त्वंसाध्यं गुणयुक्तत्वंहेतुः । यत्संहतंघटादितदनित्यंपरमाण्वादयश्चगुणगुणिभावेनप्रधानंचगुणत्रयात्मत्वेनसंहताइतित्रुवमनित्याः । तस्मात्पूर्वोक्तमुत्पत्तिनिधनहे
तुभूतंवस्तुजानतःकिंकार्यंकर्तव्यमवशिष्यतेनकिमपीत्यर्थः तथाचश्रुतिः । 'एतद्धस्मवैतद्विद्वांसःपूर्वेमहाशालामहाश्रौत्रियाअग्निहोत्रंनजुहवांचक्रिरे'इति १३

पामरदृष्ट्याऽपिजगतोविनाशित्वमाह जलजानामित्यादिपंचभिः १४ पार्थिवानांपृथिवीस्थानां १५ । १६ । १७ सर्वसामान्यगःयथावटत्वादिसामान्यंपटादिभ्योव्यावृत्तं पृथिवीत्वसामा
न्यंतूभयसमं तदुपादानत्वात् एवंसर्वस्यसत्सदितिसदभेदेनप्रतीयमानस्योपादानंसत्तासामान्यंसर्वसामान्यंनवुतार्किकाभिमतं । तस्यसत्तासमवायादिभ्योव्यावृत्तत्वेनसर्वसामान्यत्वाभावात् ।
तच्चशुद्धंब्रह्मतद्गतःसर्वसामान्यगः । सर्वसामान्यतांविद्वानित्यपपाठः १८ आजगरींवृत्तिंप्रपंचयति सुमहांतमित्यादिना सुमहांतंरसाधिक्यात् १९ आशयंतिभोजयंति अल्पंरसाल्प
त्वात् २० कणमतिसूक्ष्मंधान्यांशं पिण्याकंतिलखलिं २१ । २२ क्षौमाणिक्षुमाअतसीतत्सूत्रमयानि २३ धर्म्यंधर्मादनपेतं यथेष्टाचरणेतत्त्वविदामपिश्वसूकरादितुल्यतापत्तेः २४ अ
चलंदृढं अनिधनंमृत्युविरोधि शुचि आपोविभक्तपल्कू विदुषांमतेब्रह्मणिप्रविष्टंतत्प्रापकमित्यर्थः अनभिमतत्वादेवासेवितंमूढैः आजगरमजगरोह्ययत्नेनैवजीवतितस्येदं २५ कषायःक्रो

जलजानामपिह्यंतंपर्यायेणोपलक्षये ॥ महतामपिकायानांसूक्ष्माणांचमहोदधौ १४ जंगमस्थावराणांचभूतानामसुराधिप ॥ पार्थिवानामपिव्यक्तंमृत्युंपश्या
मिसर्वशः १५ अंतरिक्षचराणांचदानवोत्तमपक्षिणाम् ॥ उत्तिष्ठतेयथाकालंमृत्युर्बलवतामपि १६ दिविसंचरमाणानिह्रस्वानिचमहांतिच ॥ ज्योतींष्यपिय
थाकालंपतमानानिलक्षये १७ इतिभूतानिसंपश्यन्ननुषक्तानिमृत्युना ॥ सर्वसामान्यगोविद्वान्कृतकृत्यःसुखंस्वपे १८ सुमहांतमपिग्रासंग्रसेलब्धंयदृच्छया ॥
शयेपुनरभुंजानोदिवसानिबहून्यपि १९ आशयंत्यपिमामन्नंपुनर्बहुगुणंबहु ॥ पुनरल्पंपुनस्तोकंपुनर्नैवोपपद्यते २० कणंकदाचित्खादामिपिण्याकमपिच
ग्रसे ॥ भक्षयेशालिमांसानिभक्षांश्चोच्चावचान्पुनः २१ शयेकदाचित्पर्यंकेभूमावपिपुनःशये ॥ प्रासादेचापिमेशय्याकदाचिदुपपद्यते २२ धारयामिचचीरा
णिशाणक्षौमाजिनानिच ॥ महार्हाणिचवासांसिधारयाम्यहमेकदा २३ नसन्निपतितंधर्म्यमुपभोगंयदृच्छया ॥ प्रत्याचक्षेनचाप्येनमनुरुध्येसुदुर्लभम् २४
अचलमनिधनंशिवंविशोकंशुचिमतुलंविदुषांमतेप्रविष्टम् ॥ अनभिमतमसेवितंविमूढैर्व्रतमिदमाजगरंशुचिश्चरामि २५ अचलितमतिरच्युतःस्वधर्मात्परिमि
तसंसरणःपरावरज्ञः ॥ विगतभयकषायलोभमोहोव्रतमिदमा० २६ अनियतफलभक्ष्यभोज्यपेयंविधिपरिणामविभक्तदेशकालम् ॥ हृदयसुखमसेवितंकदर्यैर्व्रत
मिदमाजगरंशुचिश्चरामि २७ इदमिदमितितृष्णयाऽभिभूतंजनमनवाप्तधनंविषीदमानम् ॥ निपुणमनुनिशम्यतत्त्वबुद्ध्याव्रतमिद० २८ बहुविधमनुदृश्य
चार्थहेतोःकृपणमिहार्यमनार्यमाश्रयंतम् ॥ उपशमरुचिरात्मवान्प्रशांतोव्रतमिदमाजगरंशुचिश्चरामि २९ सुखमसुखमलाभमर्थलाभंरतिमरतिंमरणंचजीवितं
चविधिनियतमवेक्ष्यतत्त्वतोऽहंव्रतमिद० ३० अपगतभयरागमोहदर्पोधृतिमतिबुद्धिसमन्वितःप्रशांतः ॥ उपगतफलभोगिनोनिशम्यव्रतमिदमाजगरं० ३१
अनियतशयनासनःप्रकृत्यादमनियमव्रतसत्यशौचयुक्तः ॥ अपगतफलसंचयःप्रहृष्टोव्रतमिदमाजगरंशुचिश्चरामि ३२ धाद्यावेशेनस्तिमितचित्ततारागद्वेषादिर्वा २६
अनियतमकृतंफलादियत्र विधिरदृष्टंतस्यपरिणामः परिपाकस्तेनैवदेशकालव्यवस्थयाप्रापितं कदर्यैर्विषयलुब्धैः २७ धनप्राप्तौकर्मैवकारणंनपौरुषमितिधियानिशम्याऽऽलोच्य २८ अर्थहेतो
रनार्यंनीचं अर्थस्वामिनमाश्रयतिपःकृपणोदीनजनस्तमनुदृश्योपशमरुचिः आत्मवान्जितचित्तः २९ विधिनियतंदैवाधीनं ३० धृतिर्धैर्यं मतिरालोचनं बुद्धिर्निश्चयः उपगतंसमीपागतंफलंप्रियं
येषांतान् भोगिनःसर्पान्अजगरान् निशम्यदृष्ट्वा फलभोगिनइतिशाकपार्थिवादिवन्मध्यमपदलोपः ३१ प्रकृत्यादमादियुक्तःसिद्धत्वान्नतुसाधकवद्यत्नेन अपगतफलसंचयस्त्यक्तयोगफलसमूहः ३२



ईहनार्थैरिच्छाविषयैरूपादिभिरेषणाविषयैर्वापुत्रवित्तादिभिर्हेतुभिः असुखार्थंपरिणामेदुःखार्थं अपगतमात्मनःपराङ्मुखंतृषितमनियतंचमनोऽवेक्ष्य उपगतबुद्धिर्लब्धालोकः आत्मसंस्थमा
त्मनिसंस्थासमाप्तिर्यस्यतत्तथानियंतुंव्रतंचरामि । अभिहतमसुखैरिहार्थनाशैरित्याद्यःपाठः ३३ हृदयंतात्स्थ्याद्बुद्धिर्मनश्च ताभ्यांतद्धर्माःकर्तृत्वभोक्तृत्वकामसंकल्पादयोलक्ष्यंते तानन
रुद्ध्यापेक्ष्य पाठांतरे नानुरुध्येतिसंबंधात्स्पष्टार्थः ततत्रवृद्धौ सुदुर्लभतांसुखानित्यतांचोभयमुपलक्षयन्निितियोजना ३४ इदमाजगरंव्रतंसर्वैवादिवृद्धैमभिस्याह बहिति गहनमा
त्मतत्त्वंतर्कागोचरमपि तत्रतत्रशास्त्रे हंतेत्यालोचने इदमिदमितिस्वमतैःपरमतैश्चस्वकर्कयद्भिरुन्नयद्भिः तथाहि । शून्यंवानिर्विषयज्ञानधारावाजडोवाबुद्ध्यादिविशेषगुणहीनस्वरूपम
पिवचिन्मात्रंवाऽनृतजडदुःखादिव्यावृत्तमेकरसंसच्चिदानंदानंतस्वरूपंवेतिवादिनांविकल्पाआत्मनिदृश्यंते । तथापिसर्वैर्वास्वस्वाऽभिमतात्मतत्त्वदर्शनायाऽऽजगरंव्रतमेवोपेयमितिभावः ३५
तदिदमिति इदमितिप्रत्यक्षादिप्रमाणप्रमितंजगत् अबुधैःपृथगात्मातिरिक्तत्वेनाभिपन्नंगृहीतंसत् विप्रपातंविशिष्टःप्रपातोभृगुस्तद्वन्नाशकरमितिअनुनिशम्यशास्त्रयुक्तिभ्यामन्वालोच्यनृपुविहरा

अपगतमसुखार्थमीहनार्थैरुपगतबुद्धिरवेक्ष्यचात्मसंस्थम् ॥ तृषितमनियतंमनोनियंतुंव्रतमिदमाजगरंशुचि० ३३ हृदयमनुरुध्यवाङ्मनोवाप्रियसुखदुर्लभता
मनित्यतांच ॥ तदुभयमुपलक्षयन्निवाहंव्रतमिदमाजगरं० ३४ बहुकथितमिदंहिबुद्धिमद्भिःकविभिरपिप्रथयद्भिरात्मकीर्तिम् ॥ इदमिदमितितत्रतत्रहंतस्वपर
मतैर्गहनंप्रतर्कयद्भिः ३५ तदिदमनुनिशम्यविप्रपातंपृथगभिपन्नमिहाबुधैर्मनुष्यैः ॥ अनवसितमनंतदोषपारंनृपुविहरामिविनीतदोषतृष्णः ३६ ॥भीष्मउवाच॥
अजगरचरितंव्रतंमहात्मायइहनरोऽनुचरेद्विनीतरागः ॥ अपगतभयलोभमोहमन्युःसखलुसुखीविचरेदिमंविहारम् ३७ ॥ इतिश्रीमहाभारतेशां०मोक्षधर्मप
र्वणिअजगरप्रह्लादसंवादेएकोनाशीत्यधिकशततमोऽध्यायः ॥१७९॥ ॥ युधिष्ठिरउवाच ॥ बांधवाःकर्मवित्तंवाप्रज्ञावेहपितामह ॥ नरस्यकाप्रतिष्ठास्यादेत
त्पृष्टोवदस्वमे १ ॥ भीष्मउवाच ॥ प्रज्ञाप्रतिष्ठाभूतानांप्रज्ञालाभःपरोमतः ॥ प्रज्ञानिःश्रेयसीलोकेप्रज्ञास्वर्गोमतःसताम् २ प्रज्ञयाप्रापितार्थोहिबलिरैश्वर्यसं
क्षये ॥ प्रह्लादोनमुचिर्मंकिस्तस्याःकिंविद्यतेपरम् ३ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ इंद्रकाश्यपसंवादंतन्निबोधयुधिष्ठिर ४ वैश्यःकश्चिदृषिसुतंका
श्यपंसंशितव्रतम् ॥ रथेनपातयामासश्रीमान्दृप्तस्तपस्विनम् ५ आर्तःसपतितःक्रुद्धस्त्यक्त्वाऽऽत्मानमथाब्रवीत् ॥ मरिष्याम्यधनस्येहजीवितार्थोनविद्यते ६
तथामुमूर्षुमासीनमकूजंतमचेतसम् ॥ इंद्रःसृगालरूपेणबभाषेलुब्धमानसम् ७ मनुष्ययोनिमिच्छंतिसर्वभूतानिसर्वशः ॥ मनुष्यत्वेचविप्रत्वंसर्वएवाभिनंदति ८

मि । किंतर्हिजगतस्तत्त्वंत्वयानिश्चितमित्यतआह अनवसितंनास्तिकालतोगुणतोदेशतश्चावसितमवसानंपरिच्छेदोयस्यतत्तथा । यतोऽनंतदोषपारं अंतोनाशःदोषोविषमसृष्टिहेतुत्वेननैर्घृ
ण्यादिःपारोदेशपरिच्छेदश्चनास्तियस्यतत्तथा ३६ यइमंविहारमिमामजगरव्रतरूपांक्रीडामनुचरेत्ससुखीविहरेदितिसंबंधः ३७ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदी
पेएकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥ ॥ ७ ॥ बांधवाइति आजगरव्रतरूपांस्वास्थ्यलक्षणांप्रतिष्ठांकिंबांधवशब्दोपलक्षिताजातिरेवसमर्पयतिपक्षिणामाकाशगमनवत् । किं
कर्ममणिमंत्रौषधिसाधनादि । किंवित्तंवित्तसाध्ययज्ञादि । उतप्रज्ञेवेतिप्रश्नः १।२ । ३ प्रज्ञाहीनःस्वल्पेनापिनिमित्तेननश्यतिप्रज्ञावांस्तुनकदाचिदित्याहात्रेति ४ रथेनरथघातेन ५ आत्मानं
धैर्यंत्यक्त्वा 'आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्म च' इतिकोशः जीवितार्थाजीवितप्रयोजनं ६ अकूजंतंमूर्च्छया।निःशब्दं मोत्कूजंतमितिपाठेप्रकर्षेणोच्छ्वसंतं ७ सर्वोदेवादिरप्यभिनंदतिविप्रत्वमभिलक्षयनंदति ८

श्रोत्रियोऽधीतवेदः एतन्मनुष्यत्वादित्रयम् दोषात्मौढ्यात् ९ साभिमानामयेदंधनंलब्धमित्यभिमानएवधनलाभोनतुवस्तुतःकस्यापिधनेनसंबंधोऽस्ति । माग्रधःकस्यस्विद्धनमितिश्रुतेः गृधःगर्धंलोभंमाकार्षीः । यत्संतोपणीयंरूपंत्वंस्वस्याऽभिमन्यसेअवमन्यसेमरिष्यामीतिनिर्बंधेनेननाशयसेइतिवा । यदिवाएनमभिमंस्येकनीयोऽन्नंकरिष्यइत्यभिपूर्वस्यमन्यतेर्हिंसार्थत्वदर्शनात् । यन्नाभिमन्यसइतिपाठेस्पष्टोऽर्थः १० । ११ । १२ नकपामननाशयाम १३ निकर्षंतिकंडूयनेन १४ । १५ अधिष्ठायाऽध्यास्यगांपृथिवींबलीवर्दादिवा आत्मनिआत्मभोगानिमित्तम् १६ अल्पप्राणाअल्पबलाः १७ । १८ । १९ अर्दंतिदशंति २० अकार्यमिति तिरश्चामपिदेहत्यागःपापायकिमुतविदुषांसमर्थानांनृणामितिभावः २१ मध्येस्थितानातिनीचेत्यर्थः २२ एकेदेवाद्याः

मनुष्योब्राह्मणश्चासिश्रोत्रियश्चाऽसिकाश्यप ॥ सुदुर्लभमवाप्यैतन्नदोषान्मर्तुमर्हसि ९ सर्वेलाभाःसाभिमानाइतिसत्यवतीश्रुतिः ॥ संतोषणीयरूपोसिलोभाद्यदभिमन्यसे १० अहोसिद्धार्थतातेषांयेषांसंतीहपाणयः ॥ अतीवस्पृहयेतेषांयेषांसंतीहपाणयः ११ पाणिमद्भ्यःस्पृहाऽस्माकंयथातवधनस्यवै ॥ नपाणिलाभादधिकोलाभःकश्चनविद्यते १२ अपाणित्वाद्वयंब्रह्मन्कंटकंनोद्धरामहे ॥ जंतूनुच्चावचानंगेदशतोनकषामवा १३ अथयेषांपुनःपाणीदेवदत्तौदशांगुली ॥ उद्धरंतिकृमीनंगाद्दशतोनिकर्षंतिच १४ वर्षाहिमातपानांचपरित्राणानिकुर्वते ॥ चैलमन्नंसुखंशय्यांनिवातंचोपभुंजते १५ अधिष्ठायचगांलोकेभुंजतेवाहयंतिच ॥ उपायैर्बहुभिश्चैववश्यानात्मनिकुर्वते १६ येखल्वजिह्वाःकृपणाःअल्पप्राणाअपाणयः ॥ सहंतेतानिदुखानिदिष्ट्यात्वंनतथामुने १७ दिष्ट्यात्वंनशृगालोवैनकृमिर्नचमूषकः ॥ नसर्पोनचमंडूकोनचान्यःपापयोनिजः १८ एतावतापिलाभेनतोष्टुमर्हसिकाश्यप ॥ किंपुनर्योसिसत्वानांसर्वेषांब्राह्मणोत्तमः १९ इमेमांकृमयोऽदंतियेषामुद्धरणायवै ॥ नास्तिशक्तिरपाणित्वात्पश्यावस्थामिमांमम २० अकार्यमितिचैवेमंनात्मानंसंत्यजाम्यहम् ॥ नातःपापीयसींयोनिंपतेयमपरामिति २१ मध्येवैपापयोनीनांशार्गाल्यामहंगतः ॥ पापीयस्योबहुतराइतोन्याःपापयोनयः २२ जात्यैवैकेसुखितराःसंत्यन्येभृशदुःखिताः ॥ नैकांतंसुखमेवेहक्वचित्पश्यामिकस्यचित् २३ मनुष्याह्याढ्यतांप्राप्यराज्यमिच्छंत्यनंतरम् ॥ राज्याद्देवत्वमिच्छंतिदेवत्वादिंद्रतामपि २४ भवेस्त्वंयद्यपित्वाढ्योनराजानचदैवतम् ॥ देवत्वंप्राप्यचेंद्रत्वंनैवतुष्येस्तथासति २५ नतृप्तिःप्रियलाभेऽस्तितृष्णानाद्भिःप्रशाम्यति ॥ संप्रज्वलतिसाभूयःसमिद्भिरिवपावकः २६ अस्त्येवत्वयिशोकोऽपिहर्षश्चापितथात्वयि ॥ सुखदुःखेतथाचोभेतत्रकापरिदेवना २७ परिच्छिद्यैवकामानांसर्वेषांचैवकर्मणाम् ॥ मूलंबुद्धींद्रियग्रामंशकुंतानिवपंजरे २८

अन्येपश्वाद्याः एकांतमत्यंतंसुखंकस्यापिनास्ति तृष्णायानिरवधित्वात् २३ तदेवाह मनुष्याइत्यादिना २४ त्वमाढ्योभूत्वापिब्राह्मणत्वान्नराजाभवेर्नापिदैवतम् यदिकदाचिद्भवेस्तथापिनतुष्येरितियोज्यम् । परिच्छिद्यैवकामान्वैइतिपाठेराजानैवभवेरितिशेषः २५ । २६ अस्तीति शोकादिकंत्वय्येवास्त्यतःस्वगतंनैवहर्षेणशोकंमार्जयितुंशक्यस्यवेदृष्टैवेयंपरिदेवनेत्यर्थः २७ हर्षोदीपनप्रकारमाह परीत कामादीनांमूलंबुद्धींद्रियग्रामंशकुंतानिवशरीरपंजरेपरिच्छिद्यनिरुध्यस्थितस्यभयंनास्तीत्युत्तरेणसंबंधः २८



भयाभावोऽपिकिंद्वैतादर्शनाद्वाद्वैताभावाद्वेत्याशंक्यतत्रद्वैताभावेहेतुंदृष्टांतमुखेनाह नेति यथाद्वितीयस्यशिरसस्तृतीयस्यपाणेर्वास्वरूपेणाभावाज्जातुकदाचिच्छेदनंतज्जंदुःखंनास्तितथायद्वैतंकालत्रयेऽपिनास्तिततोभयमपिनास्तीत्यर्थः तथाच । अतोऽन्यदार्तंनेहनानाऽस्तिकिंचनयन्मदन्यन्नास्तिकस्मान्नुबिभेमीत्यादिद्वैताभावप्रतिपादिकाश्रुतिरबाधिताभवति । दुःखप्रतीतिस्तुस्वप्नवदप्युपपद्यतइतिनकश्चिद्दोषः २९ ननुप्रत्यक्षेणशीतोष्णादिभयंस्वप्नवद्बाधितंदृश्यतेतत्कथंभयंनास्तीतिलोकदृष्ट्याऽप्याशंक्याह नेति स्पर्शसुखाभिज्ञस्यैवानुभूतेविषयेकामोजायते । बुद्ध्यादिनिरोधेनरसज्ञानाभावान्नकचिदपिविषयेकामोजायतेऽतोबुद्ध्यादिकंतंशीतोष्णाद्यपितन्निरोधेननास्त्येवेत्यर्थः ३० अरसज्ञस्यकामोननजायतइत्यत्रदृष्टांतमाह नेति वारुण्यामद्यस्यलड्वाख्यप

नद्वितीयस्यशिरसश्छेदनंविद्यतेक्वचित् ॥ नचपाणेस्तृतीयस्ययन्नास्तिनततोभयम् २९ नखल्वप्यरसज्ञस्यकामःक्वचनजायते ॥ संस्पर्शाद्दर्शनाद्वापिश्रवणाद्वापिजायते ३० नत्वंस्मरसिवारुण्यालड्वाकानांचपक्षिणाम् ॥ ताभ्यांचाभ्यधिकोभक्ष्योनकश्चिद्विद्यतेक्वचित् ३१ यानिचान्यानिभूतेषुभक्ष्यजातानिकस्यचित् ॥ येषामभुक्तपूर्वाणितेषामस्मृतिरेवते ३२ अप्राशनमसंस्पर्शमसंदर्शनमेवच ॥ पुरुषस्यैषनियमोमन्येश्रेयोनसंशयः ३३ पाणिमंतोबलवंतोधनवंतोनसंशयः ॥ मनुष्यामानुषैरेवदासत्वमुपपादिताः ३४ वधबंधपरिक्लेशैःक्लिश्यंतेचपुनःपुनः ॥ तेखल्वपिरमंतेचमोदंतेचहसंतिच ३५ अपरेबाहुबलिनःकृतविद्यामनस्विनः ॥ जुगुप्सितांचकृपणांपापवृत्तिमुपासते ३६ उत्सहंतेचतेवृत्तिमन्यामप्युपसेवितुम् ॥ स्वकर्मणातुनियतंभवितव्यंतुतत्तथा ३७ नपुल्कसोनचांडालआत्मानंत्यक्तुमिच्छति ॥ तयातुष्टःस्वयायोन्यामायांपश्यस्वयादृशीम् ३८ दृष्ट्वाकुणीन्पक्षहतान्मनुष्यानामयाविनः ॥ सुसंपूर्णःस्वयायोन्यालब्धलाभोसिकाश्यप ३९ यदिब्राह्मणदेहस्तेनिरातंकोनिरामयः ॥ अंगानिचसमग्राणिनचलोकेषुधिक्कृतः ४० नकेनचित्प्रवादेनसत्येनैवापहारिणा ॥ धर्मायोत्तिष्ठविप्रर्षेनात्मानंत्यक्तुमर्हसि ४१ यदिब्रह्मञ्शृणोष्येतच्छ्रद्दधासिचमेवचः ॥ वेदोक्तस्यैवधर्मस्यफलंमुख्यमवाप्स्यसि ४२ स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय ॥ सत्यंदमंचदानंचस्पर्धिष्ठामाचकेनचित् ४३ येकेचनस्वध्ययनाःप्राप्तायजनयाजनम् ॥ कथंतेचानुशोचेयुर्ध्यायेयुर्वाप्यशोभनम् ४४ इच्छंतस्तेविहारायसुखंमहदवाप्नुयुः ॥ उतजाताःसुनक्षत्रेसुतिथौसुमुहूर्तजाः ॥ यज्ञदानप्रजेहायांयतंतेशक्तिपूर्वकम् ४५ नक्षत्रेष्वासुरेष्वन्येदुस्तिथौदुर्मुहूर्तजाः ॥ संपतंत्यासुरींयोनिंयज्ञप्रसववर्जिताः ४६

क्षिमांसस्यच कर्मणिषष्ठ्यौ त्वंनस्मरसिब्राह्मणत्वेनतवतद्रसग्रहाभावात् । भक्ष्योरस्योविषयस्ताभ्यामन्योनविद्यतेतयापित्वंतद्द्वयंनस्मरसि ३१ कस्यचिद्राजादेः येषांयान्यभुक्तपूर्वाणि तेत्वया ३२ उपसंहरति अप्राशनमिति प्राशनादिवर्जनंनियमएवपुरुषस्यश्रेयः ३३ दैवाधीनत्वाद्दुःखादेर्नत्वयाशोकःकार्यइत्याह पाणिमंतइत्यादिना दासत्वंवधबंधादिकं हीनवृत्तिः सत्यपिसामर्थ्येतदस्यागंचांडालादिदेहंनियतरमनिष्टमपिदैवबलात्कारादेवप्राणिनामपरिहार्यमितिश्लोकपंचकस्यभावः ३४ । ३५ । ३६ । ३७ । ३८ तवास्वितरापेक्षयादैवमनुकूलमस्तीत्याह दृष्ट्वेति कुणीन्हस्तविकलान् पक्षहतानर्धांगवातादिनानष्टान् आमयाविनोरोगाक्रांतान् अधिकदुःखानन्यान्दृष्ट्वास्वयमात्मानंसुखिनंमन्येतेत्यर्थः ३९ । ४० प्रवादेनकलंकेन अपहारिणाजातिभ्रंशकरेण ४१ मुख्यंविवेकंचित्तशुद्धिंवा ४२ । ४३ । ४४ विहारायपयोचितेनयज्ञादिनाविहर्तुं सुनक्षत्रेपुष्यादौ सार्धश्लोकः ४५ आसुरेषुमूलाश्लेषादिषु ४६

पंडितकःकुत्सितःपंडितः यतोहैतुकोऽनारब्धद्रव्यत्वादित्यादिभिर्हेतुभिराकाशादेरपिनित्यत्वसाधनपरः । वेदनिंदकोऽतोऽन्यदार्तमितितदनित्यत्वप्रतिपादकस्यवेदस्याप्रामाण्यकर्ता इक्षा प्रत्यक्षं तामनुप्रवृत्ताईक्षाअन्वीक्षाधूमादिदर्शनेनवन्हयाद्यनुमानंतत्प्रधानामान्वीक्षिकीतर्कविद्याकणभक्षाक्षचरणादिप्रणीतंशास्त्रम् । निरर्थिकांपुरुषार्थचतुष्टयशून्यांश्रुत्येकगम्यस्यवस्तुतत्त्वस्यनिर्णयानुपयोगिनीम् ४७ प्रवदिताप्रकर्षेणवदिताश्रुतेरनुमानाविरोधेनैवप्रामाण्यंनस्वतइतिवदिता । ननुनास्तिकान्प्रत्येतद्वक्तुंयुक्तंयुक्तिबलेनैववेदाप्रामाण्यवादिनांतेषानिरसनीयत्वादिति नायंदोषइत्यतआह संसत्सुसमीचीनेषुसाधुष्वपिहेतुमदेववक्तानश्रुतिमत् । आक्रोष्टापरुषवाक् । अभिवक्ताऽभिक्रम्यवक्ता । ब्रह्मवाक्येषुवेदवाक्येषुविचार्यमाणेषु ४८ नास्तिकोवेदप्रामाण्यनिंदकः । सर्वशंकीस्वर्गादृष्टादिसद्भावेऽविशंकावान् । स्वभाववादेनचाभिताआकृष्यमाणोऽनवस्थितइत्यर्थः । कुतर्कमनादृत्यवेदमार्गेरवस्थयास्यातथ्यमितिभावः ४९ ममतुएतदत्यंतप्राध्यमित्याह अपीति तस्माद्धीनयोनिदात्पापान्मुक्तइतिशेषः ५० । ५१ । ५२ समवैक्षतेति दिव्यज्ञानवताकाश्यपादीनामपिदेहाभिमानवैशादीदृशीबुद्धिर्भवतिकिमुतप्राकृतानामितिदेहावेशोवर्ज्यइतिभावः यथोक्तं । देहावेशात्प्रमाद्यतीति ५३ हरिवाहनमिंद्रम् ५४ ॥ इतिशां०मो०नी०भा०अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ७ ॥ आजगरव्रतलाभेप्रज्ञैवदेहावेशनि

अहमासंपंडितकोहैतुकोवेदनिंदकः ॥ आन्वीक्षिकींतर्कविद्यामनुरक्तोनिरर्थिकाम् ४७ हेतुवादान्प्रवदितावक्तासंसत्सुहेतुमत् ॥ आक्रोष्टाचाऽभिवक्ताचब्रह्मवाक्येषुचद्विजान् ४८ नास्तिकःसर्वशंकीचमूर्खःपंडितमानिकः ॥ तस्येयंफलनिर्वृत्तिःसृगालत्वंममद्विज ४९ अपिजातुतथातस्मादहोरात्रशतैरपि ॥ यदहं मानुषींयोनिंसृगालःप्राप्नुयांपुनः ५० संतुष्टश्चाप्रमत्तश्चयज्ञदानतपोरतिः ॥ ज्ञेयज्ञाताभवेयंवैवर्ज्यंवर्जयितातथा ५१ ततःसमुनिरुत्थायकाश्यपस्तमुवाचह ॥ अहोवतासिकुशलोबुद्धिमांश्चेतिविस्मितः ५२ समवैक्षततंविप्रोज्ञानदीर्घेणचक्षुषा ॥ ददर्शचैनंदेवानांदेवमिंद्रंशचीपतिम् ५३ ततःसंपूजयामासकाश्यपोहरिवाहनम् ॥ अनुज्ञातस्तुतेनाथप्रविवेशस्वमालयम् ५४ ॥ इतिश्रीमहाभारते शा०मोक्षधर्मपर्वणिसृगालकाश्यपसंवादेअशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
॥ युधिष्ठिरउवाच ॥ यद्यस्तिदत्तमिष्टंवातपस्तप्तंतथैवच ॥ गुरूणांवापिशुश्रूषातन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ आत्मनाऽनर्थयुक्तेनपापेनिविशतेमनः ॥ स्वकर्मकलुषंकृत्वाकृच्छ्रेलोकेविधीयते २ दुर्भिक्षादेवदुर्भिक्षंक्लेशात्क्लेशंभयाद्भयम् ॥ मृतेभ्यःप्रमृतंयांतिदरिद्राःपापकारिणः ३ उत्सवादुत्सवंयांतिस्वर्गात्स्वर्गंसुखात्सुखम् ॥ श्रद्दधानाश्चदांताश्चधनाढ्याःशुभकारिणः ४

वृत्तिद्वारेणहेतुरित्युक्तं तत्रप्रज्ञाबुद्धेःपरिणामविशेषः सचक्षीरदधिवत्स्वभावादेवकालक्रमेणभविष्यतीतिदत्तेष्टादेर्वैयर्थ्यमन्वानःशंकते यदीति । 'शरणागतसंत्राणंभूतानामप्यहिंसनं । बहिर्वेदिचयद्दानंदत्तमित्यभिधीयते । अग्निहोत्रंतपःशौचंवेदानांचानुशासनम् । आतिथ्यंवैश्वदेवंचइष्टमित्यभिधीयते' । दत्तेष्टेगृहस्थस्यधर्मः । तपोवानप्रस्थस्य । गुरुशुश्रूषाब्रह्मचारिणः यदिदत्तादिकंशुभादृष्टोत्पादनद्वाराकालांतरीयप्रज्ञाहेतुर्भवतितत्तर्हिमेमह्यमनुष्ठेयमेतदितिब्रूहि नोचेत्स्वभावएवशरणंममेत्यर्थः १ स्वभाववादेसर्वेषांभौतिकानामुत्पत्त्यादावेकरूपैवसामग्री तथाचहस्वदीर्घताब्धसाधुसुखदुःखादिवैचित्र्यंजगतिदृश्यमानंनोपपद्यतेऽतस्तत्रावश्यंकर्मजन्यमदृष्टंकारणमभ्युपेयमितिमत्वा'पुण्योवैपुण्येनकर्मणाभवतिपापःपापेन बुद्धिःकर्मानुसारिणी'इतिश्रुतिस्मृतिसिद्धंकर्मणःसदसत्प्रज्ञाहेतुत्वमाह आत्मनेति आत्मनाबुद्ध्या अनर्थःकामक्रोधादिस्तद्युक्तेन कृच्छ्रेदुःखदेनरकादौ विधीयतेभोक्तुमधिक्रियते २ मृतेभ्योमरणेभ्यः प्रमृतंमरणांतरं अविलंबेनपुनःपुनर्म्रियंतइत्यर्थः । 'अथैतयोःपथोर्नकतरेणचनतानीमानिक्षुद्राण्यसकृदावर्तीनि'इतिश्रुतेः ३।४

हस्तावावाप्येतेप्रवेश्यंतेयस्मिन्निति हस्तावापोहस्तनिगडस्तेननिगाडिताःसंतोनास्तिकाराष्ट्राद्दूरीकृताव्यालादिमत्सुवनेषुगच्छंतिनिगाडितहस्तत्वाच्चव्यालादीन्वारयितुमशक्ताअत्यंतमुद्वेगंप्राप्नुवंतीत्यर्थः व्यालोदुष्टगजः ५ आतिथेयमातिथिहितंमृष्टान्नदानादि आत्मवतांजितचित्तानांयोगिनां मार्गंदेवयानं हस्तदक्षिणंहस्तोपलक्षितेनतत्कर्तव्येनदानादिनाकर्मणादाक्षिणमनुकूलं ६ पुलाकागतोष्मणाभक्तसिक्थवन्नष्टबीजभावाः पूतिधान्यमितियावत् पुत्तिकामशकाः कारणंसुखादिहेतुः ७ शुभप्रज्ञाहेतुरपिधर्मएवचेत्तत्प्रवृत्तिरपिपूर्वकर्मायत्तेतिकिंपुरुषकारेणेत्याशंक्याह सुशीघ्रमिति विधानंप्राक्कर्मधावंतंयतमानमनुधावतिफलप्रदानेनानुसरति अन्वयमुक्त्वाव्यतिरेकमाह शेतेइति येनयेनयथाकृतंतंतंप्रतितथाप्राक्कर्मफलदमफलदंचभवति ८ कर्मप्राचीनंछायेवानुविधीयतेपुरुषेणस्वस्यानुकूलंक्रियते अनादौसंसारेऽनंतानांसतामसर्वाकर्मणामहंपूर्वमहंपूर्वमितिस्पर्धयास्वस्वफलदानाययुगपदुपस्थितानांयदेवकर्मोऽविकलःपुरुषकारोऽनुगृह्णातितदेवप्रभवतीत्यर्थः ९

व्यालकुंजरदुर्गेषुसर्पचोरभयेषुच ॥ हस्तावापेनगच्छंतिनास्तिकाःकिमतःपरम् ५ प्रियदेवातिथेयाश्चवदान्याःप्रियसाधवः ॥ क्षेम्यमात्मवतांमार्गमास्थिताहस्तदक्षिणम् ६ पुलाकाइवधान्येषुपुत्तिकाइवपक्षिषु ॥ तद्विधास्तेमनुष्याणांयेषांधर्मोनकारणम् ७ सुशीघ्रमपिधावंतंविधानमनुधावति ॥ शेतेसहशयानेनयेनयेनयथाकृतम् ८ उपतिष्ठतितिष्ठंतंगच्छंतमनुगच्छति ॥ करोतिकुर्वतःकर्मच्छायेवानुविधीयते ९ येनयेनयथायद्यत्पुराकर्मसमीहितम् ॥ तत्तदेकतरोभुंक्तेनित्यंविहितमात्मना १० स्वकर्मफलनिक्षेपंविधानपरिरक्षितम् ॥ भूतग्राममिमंकालःसमंतात्परिकर्षति ११ अचोद्यमानानियथापुष्पाणिचफलानिच ॥ स्वंकालंनातिवर्तंतेतथाकर्मपुराकृतम् १२ संमानश्चाऽवमानश्चलाभालाभौक्षयोदयौ ॥ प्रवृत्तानिविवर्तंतेविधानांतेपुनःपुनः १३ आत्मनाविहितंदुःखमात्मनाविहितंसुखं ॥ गर्भशय्यामुपादायभुज्यतेपौर्वदेहिकम् १४ बालोयुवाचवृद्धश्चयत्करोतिशुभाशुभम् ॥ तस्यांतस्यामवस्थायांतत्फलंप्रतिपद्यते १५ यथाधेनुसहस्रेषुवत्सोविंदतिमातरम् ॥ तथापूर्वकृतंकर्मकर्तारमनुगच्छति १६ समुन्नमग्रतोवस्त्रंपश्चाच्छुध्यतिकर्मणा ॥ उपवासैःप्रतप्तानांदीर्घंसुखमनंतकम् १७ दीर्घकालेनतपसासेवितेनतपोवने ॥ धर्मनिर्धूतपापानांसंपद्यंतेमनोरथाः १८ शकुनानामिवाऽऽकाशेमत्स्यानामिवचोदके ॥ पदंयथानदृश्येततथाज्ञानविदांगतिः १९ अलमन्यैरुपालंभैःकीर्तितैश्चव्यतिक्रमैः ॥ पेशलंचानुरूपंचकर्तव्यंहितमात्मनः २० ॥ इति० शां० मो० एकाशीत्यधिकशततमोऽध्यायः ॥१८१॥

येनेति भुंक्तेइतिवर्तमानार्थलट्प्रयोगेणैहिकभोगेष्वमाकर्मणःप्राबल्यंनत्वामुष्मिकभोगार्थायांयज्ञादिप्रवृत्तौ विधिप्रतिषेधशास्त्रानर्थक्यापत्तेरित्यर्थः नित्यमपरिहार्यं १० स्वकर्मणःफलंस्वर्गपश्वादितदेवनिक्षेपरूपंविधानेनकर्मजन्यादृष्टेनरक्षितंगौणकर्मीभूतंभूतग्रामंप्रतिकालःसमनुकर्षति ११ । १२ । १३ । १४ । १५ । १६ समुन्नंजलेनक्लिन्नं उंदीक्लेदनेऽस्यनिष्ठारूपं संयुक्तमितिपाठेमलेनेतिशेषः संस्विन्नमितिपाठेस्वेदेनमलिनं कर्मणाक्षालनेन उपवासोविषयत्यागः अनंतकंसुखंमोक्षः १७ मनोरथाज्ञानलाभविषयाः १८ प्राप्तज्ञानानकार्यब्रह्मलोकंगच्छंतिकिंतुनतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतइतितत्त्वविदःप्राणादीनांप्रलयस्यश्रुद्धेमर्त्यगात्मन्येवश्रवणादात्माचनद्रष्टुंयोग्यइत्याशयेनाह शकुनानामिति ज्ञानविदांब्रह्मविदांगतिःपरायणंब्रह्मैवेत्यर्थः । ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः १९ उपालंभैराक्षेपवाक्यैः व्यतिक्रमैरपराधैः अलमुक्तैःपर्याप्तं पेशलंकौशलयुक्तंयथास्यात्तथासत्कर्मभिःसद्वासनोदयात्साध्वीप्रज्ञासमुदेतीतिभावः २० ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

एवमष्टभिरध्यायैःक्रमादाशांजित्वापूर्वास्मिन्नेववयसिनिष्परिग्रहोनिरीहोहिंसाशून्यआजगरींवृत्तिमास्थितःप्रज्ञावान्सुकृतीब्रह्मविद्याधिकारीनिरूपितः । तत्रप्रसंगात्तत्रसंक्षेपेणात्मतत्त्वंचसूचितं । यथाआजगरेऽनवसितमनंतदोषपारमित्यनेनाऽऽकाशस्येवानित्यत्वाद्विभुत्वाच्चात्मनःकालतोदेशतश्चपरिच्छेदाभावःपरेषांसंमतः । अस्माकंत्वात्मनित्रिविधभेदरूपोवस्तुपरिच्छेदोऽपिनास्ति । यथापरेषामात्मांतरस्यपृथिव्यादेरात्मगतबुध्यादिगुणानांचपृथक्सत्त्वेनाऽऽत्मनिसजातीयविजातीयस्वगतभेदरूपोवस्तुपरिच्छेदोऽस्तिनतथाऽस्माकमित्यखंडैकरसमेकाद्वितीयंकूटस्थंवस्तुनिर्दिष्टं । तथासृगालीये 'नाद्वितीयस्यशिरसश्छेदनंविद्यतेक्वचित् । नचपाणेस्तृतीयस्ययन्नास्तिनततोभयं'इत्यात्मातिरिक्तस्यद्वितीयशिरआदिवदत्यंतासत्त्वमुक्त्वातदेवदृढीकृतं । तथा'शकुनानामिवाकाशेमत्स्यानामिवचोदके ॥ पदंयथानदृश्येततथाज्ञानविदांगतिः'इति'ब्रह्मविद्ब्रह्मैवभवति'इतिचप्रतिपादितं । ततश्चनिकारिकारणाभावाज्जगज्जन्माद्यसंभवंमन्वानःपृच्छति कुतइति तत्रकुतइतिकालादृष्टेश्वरेच्छादिनिमित्तप्रश्नः । कमभ्येतीत्युपादानप्रश्नः तत्रैवकार्यलयनियमात् १ केनेत्यवांतरकारणप्रश्नः २ कथमितिसृष्टिप्रकारप्रश्नः विभक्तयोविभागाः ३ जीवःकीदृशइतिजी

॥ युधिष्ठिरउवाच ॥ कुतःसृष्टमिदंविश्वंजगत्स्थावरजंगमम् ॥ प्रलयेचकमभ्येतितन्मेब्रूहिपितामह १ ससागरःसगगनःसशैलःसबलाहकः ॥ सभूमिःसाग्निपवनोलोकोऽयंकेननिर्मितः २ कथंसृष्टानिभूतानिकथंवर्णविभक्तयः ॥ शौचाशौचंकथंतेषांधर्माधर्मविधिःकथम् ३ कीदृशोजीवतांजीवःक्ववागच्छंतियेमृताः ॥ अस्माल्लोकादमुंलोकंसर्वंशंसतुनोभवान् ४ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ भृगुणाऽभिहितंशास्त्रंभरद्वाजायपृच्छते ५ कैलासशिखरेदृष्ट्वादीप्यमानंमहौजसम् ॥ भृगुंमहर्षिमासीनंभरद्वाजोन्वपृच्छत ६ ससागरःसगगनःसशैलःसबलाहकः ॥ सभूमिःसाग्निपवनोलोकोऽयंकेननिर्मितः ७ कथंसृष्टानिभूतानिकथंवर्णविभक्तयः ॥ शौचाशौचंकथंतेषांधर्माधर्मविधिःकथम् ८ कीदृशोजीवतांजीवःक्ववागच्छंतियेमृताः ॥ परलोकमिमंचापिसर्वंशंसितुमर्हसि ९ एवंसभगवान्पृष्टोभरद्वाजेनसंशयम् ॥ ब्रह्मर्षिर्ब्रह्मसंकाशःसर्वंतस्मैततोऽब्रवीत् १० ॥ भृगुरुवाच ॥ मानसोनामयःपूर्वोविश्रुतोवैमहर्षिभिः ॥ अनादिनिधनोदेवस्तथाऽभेद्योऽजरामरः ११ अव्यक्तइतिविख्यातःशाश्वतोऽथाऽक्षयोऽव्ययः ॥ यतःसृष्टानिभूतानिजायंतेचम्रियंतिच १२

वतत्त्वप्रश्नः अमृतामुक्ताःकाऽधिष्ठानेलीयंतइतिमुक्तिप्राप्यवस्तुप्रश्नः । अस्माल्लोकादिमंलोकंमुक्त्वा अमुंलोकं सर्वंचपूर्वपृष्टंनोऽस्मभ्यंभवान्कथयतु ४ । ५ । ६ । ७ । ८ । ९ । १० पूर्वोक्तब्रह्माद्वैतसिद्ध्येकस्मास्यजगतोब्रह्मोपादानकत्वंप्रतिपादयिष्यन्'असतोधिमनोऽसृजत । मनःप्रजापतिमसृजत । प्रजापतिःप्रजाअसृजत । तद्वाइदंमनस्येवपरमंप्रतिष्ठितं यदिदंकिंच'इतिश्रुतिमनुसरन्नुत्तरमाह मानसइति सत्त्वासत्त्वाभ्यांनिर्वक्तुमशक्यादज्ञानान्मनउत्पन्नं । तच्चचित्प्रतिबिंबविशिष्टंमानसोनामजगतोमूलकारणंसर्वश्रुतिस्मृतिप्रसिद्धं । अनादिनिधनआदिनिधनंजन्मलयस्तानंतद्धीनः तत्कारणस्याऽसतोज्ञानस्यानिर्वचनीयस्यस्वरूपेणासत्त्वात् । कूटस्थस्यचशुद्धब्रह्मणस्तंप्रत्यनुपादानत्वादभेद्योभेत्तुमनर्हएकत्वात् । अजरामरइति'यआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासःसत्यकामःसत्यसंकल्प'इतिश्रुत्युक्तानांगुणानांसंग्रहः ११ अक्षयोऽव्ययइतिलक्षणयावृद्धिजन्महीनत्वमुक्तं । अतएवशाश्वतःसदैकरूपः । अव्यक्तइतिसंज्ञामात्रंयोगिनांप्रत्यक्षत्वात्मूढान्प्रत्यप्रकाशत्वाद्वाऽव्यक्तः । सृष्टानिजन्मवंतिभूतान्याकाशादीनिजायंतेम्रियंतिव्ययवंतिचयत्रैवमवंति । सृष्टानीतिविशेषणादसृष्टाश्चेतनानजायंतइतिदर्शितम् १२ ॥ ४९ ॥

'सदहरोऽस्मिन्नंतराकाशःआकाशोहवैनामरूपयोर्निर्वहिते'त्यादिश्रुतिष्वाकाशइतिविख्यातःसन्महांतंसमष्टिजीवंहैरण्यगर्भंबुद्धिंवाऽसृजदितियोजना । महानप्यहंकारंहैरण्यगर्भंमनः । सचाहंकारोभगवानाकाशंशब्दतन्मात्राख्यमसृजत् १३ आकाशादभवद्वारीत्यादिपाठक्रमोनविवक्षितः किंतु आकाशाद्वायुःवायोरग्निःअग्नेरापःअद्भ्यःपृथिवीतिश्रौतएवज्ञेयः । तत्रवाय्वादिशब्दैःस्पर्शतन्मात्रंरूपतन्मात्रंरसतन्मात्रंगंधतन्मात्रंचसूक्ष्ममपंचीकृतंभूतजातमुच्यते १४ ततस्तेजोमयंलिंगशरीरं दिव्यंपरलोकगमनार्हं स्थूलभूतानिचपंचीकृतानितत्कर्दममयंब्रह्मांडापरनामवेयंपद्मंचासृजत् ब्रह्माविराट् वेदमयोवेदपूर्णोनिधिरखिलज्ञानैश्वर्यादीनां १५ 'ख्यातःसोऽहमित्यग्रेव्याहरत्ततोऽहंनामाऽभवत्'इत्यादिश्रुतिप्रसिद्धः । सर्वभूतानिस्थूलवियदादीनितदात्मातच्छरीरःसचासौभूतकृच्चतुर्विधभूतग्रामस्रष्टाचेतिसमासः येएतेपंचआकाशादयोधातवोधारणकर्माणःसएवब्रह्मा १६ 'अग्निर्मूर्द्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः । वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मा'इतिभगवतोविश्वरूप्यप्रतिपादिकांश्रुतिमुपबृंहयतिशैलाइत्यादिपंचभिः १७ अग्नीषोमावेवचंद्रार्कौ १८।१९ सर्वभूतानामात्मभूतोऽहंकारस्तत्स्थः २० भूतभवाय

सोऽसृजत्प्रथमंदेवोमहांतंनामनामतः ॥ महान्ससर्जाऽहंकारंसचापिभगवानथ ॥ आकाशमितिविख्यातंसर्वभूतधरःप्रभुः १३ आकाशादभवद्वारिसलिलादग्निमारुतौ ॥ अग्निमारुतसंयोगात्ततःसमभवन्मही १४ ततस्तेजोमयंदिव्यंपद्मंसृष्टंस्वयंभुवा ॥ तस्मात्पद्मात्समभवद्ब्रह्मावेदमयोनिधिः १५ अहंकारइतिख्यातःसर्वभूतात्मभूतकृत् ॥ ब्रह्मावैसमहातेजायएतेपंचधातवः १६ शैलास्तस्यास्थिसंज्ञास्तुमेदोमांसंचमेदिनी ॥ समुद्रास्तस्यरुधिरमाकाशमुदरंतथा १७ पवनश्चैवनिःश्वासस्तेजोऽग्निर्निम्नगाःशिराः ॥ अग्नीषोमौतुचंद्रार्कौनयनेतस्यविश्रुते १८ नभश्चोर्ध्वंशिरस्तस्यक्षितिःपादौभुजौदिशः ॥ दुर्विज्ञेयोह्यचिंत्यात्मासिद्धैरपिनसंशयः १९ सएषभगवान्विष्णुरनंतइतिविश्रुतः ॥ सर्वभूतात्मभूतस्थोदुर्विज्ञेयोऽकृतात्मभिः २० अहंकारस्ययःस्रष्टासर्वभूतभवायवै ॥ यतःसमभवद्विश्वंपृष्टोऽहंयदिहत्वया २१ ॥ भरद्वाजउवाच ॥ गगनस्यदिशांचैवभूतलस्यानिलस्यवा ॥ कान्यत्रपरिमाणानिसंशयंछिंधितत्त्वतः २२ ॥ भृगुरुवाच ॥ अनंतमेतदाकाशंसिद्धदैवतसेवितम् ॥ रम्यंनानाश्रयाकीर्णंयस्यांतोनाधिगम्यते २३ ऊर्ध्वंगतेरधस्तात्तुचंद्रादित्यौनदृश्यतः ॥ तत्रदेवाःस्वयंदीप्ताभास्वराभाऽग्निवर्चसः २४ तेचाप्यंतंनपश्यंतिनभसःप्रथितौजसः ॥ दुर्गमत्वादनंतत्वादितिमेविद्धिमानद २५ उपरिष्टोपरिष्टात्तुप्रज्वलद्भिःस्वयंप्रभैः ॥ निरुद्धमेतदाकाशमप्रमेयंसुरैरपि २६ पृथिव्यंतेसमुद्रास्तुसमुद्रांतेतमःस्मृतम् ॥ तमसोंतेजलंप्राहुर्जलस्यांतेऽग्निरेवच २७

भूतोत्पत्तये स्रष्टाऽहंकारस्येतिसंबंधः यतोविश्वंसमभवद्यच्चत्वयाऽहंपृष्टस्तत्तुभ्यमुक्तमितिशेषः २१ कुतःसृष्टमिदंविश्वमित्यस्यप्रश्नस्योत्तरंब्रह्मैवईशसूत्रविराड्रूपेणसन्निविष्टमस्तीत्युक्तं तत्किमेकदेशेनोतकार्त्स्न्येन नाद्यः ब्रह्मणःसांशतापत्तेर्निष्कलत्वश्रुतिव्याकोपः । नांत्यः कार्यस्यपरिच्छिन्नत्वेनव्याप्यत्वाद्ब्रह्मणोऽपिपरिच्छेदापत्तिस्ततश्चानंत्यश्रुतिव्याकोपइतिशंकते गगनस्येति २२ कार्यस्यानंत्यंकारणानंत्यायोपपादयन्नुक्तांशंकांपरिहरति अनंतमेतदिति आश्रयाश्चतुर्दशभुवनानि २३ गतेःसूर्यरश्मिगतेरपिऊर्ध्वमधस्ताच्चचंद्रादित्यौनदृश्येतेमध्यमपरिमाणयोस्तयोरनंताकाशव्याप्तियोगात् यत्रतौनदृश्येतेतत्र संधिरार्षः २४ तेऽपिसूर्यादिगतेरूर्ध्वस्थाअनंतमेवाकाशंपश्यंतिनतुपरिच्छिन्नमितिभेमद्वचनाद्विद्धि २५ एवंतत्तदुपर्यपीत्याह उपरिष्टेति आर्षोवर्णलोपः प्रज्वलद्भिर्लोकैरितिशेषः २६ तिर्यक्प्रमाणतोऽप्यानंत्यमाह पृथिव्यंतइति २७

११ । १३ । १४ । १५ कथंवनस्त्वमुपपद्यतेइत्यतआह तस्येतिषष्ठीसप्तम्यर्थे तस्मिन्मारुतयुक्तेऽग्नावाकाशमध्येभ्रमतिय'स्नेहाअपीजलंतत्संघातस्त्वमितिस्पष्टं । पूर्वमानसस्यसृष्टिर्मानस्यैव तरसामान्यादस्मदादीनामपीयंसृष्टिःस्वप्नवन्मानसस्यैवेत्यध्यायतात्पर्यम् । अतएवद्वितीयशिरोऽत्रदस्याअसत्त्वंप्रागुक्तंसंगच्छते १६ । १७ इति शांति०मो०नीलकंठीयेत्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ननुचतुर्मुखेनमनसासृष्टाःपंचधातवआकाशादयस्त्वाप्राकाशादिवदांतराःसंतःकथंबाह्यलोकानामावरकाइत्युपपद्यतेइत्याह तएतेइति यान्ब्रह्माऽसृजत्तेएतेइतिकथमित्यग्रिमेणसंबंधः । एतंकेयेमहाभूतसंज्ञाःयैश्चलोकाआवृताइतियोजना १ तथाब्रह्मणासृष्टानांजरायुजादीनांचैवंप्रत्येकंमानसानिपंचभूतानिसंति स्वप्नेतद्दर्शनात् ततश्चकथंब्रह्मसृष्टानामेवपंचानांभूतानांमहाभूतत्वंनास्मदादिसृष्टानाभूतत्वंयतःसर्वेषांमानसत्वाविशेषात् प्रातिभासिकत्वेनक्षुद्रभूतत्वं ईशसृष्टानांतुमहाभूतत्वं तथाचप्रातिभासिकव्यावहारिकयोर्बाध्याबाध्ययोःप्रपंचयोर्भेदएष्टव्यइ

तथासलिलसंरुद्धेनभसोंतेनिरंतरे ॥ भित्त्वार्णवतलंवायुःसमुत्पततिघोषवान् १२ सएषचरतेवायुरर्णवोत्पीडसंभवः ॥ आकाशस्थानमासाद्यप्रशांतिंनाधिगच्छति १३ तस्मिन्वाय्वंबुसंघर्षेदीप्ततेजामहाबलः ॥ प्रादुरभूदूर्ध्वशिखःकृत्वानिस्तिमिरंनभः १४ अग्निःपवनसंयुक्तःखंसमाक्षिपतेजलम् ॥ सोऽग्निर्मारुतसंयोगाद्घनत्वमुपपद्यते १५ तस्याकाशेनिपतितःस्नेहस्तिष्ठतियोऽपरः ॥ ससंघातत्वमापन्नोभूमित्वमनुगच्छति १६ रसानांसर्वगंधानांस्नेहानांप्राणिनांतथा ॥ भूमिर्योनिरिहज्ञेयायस्यांसर्वंप्रसूयते ॥ १७ ॥ इतिश्रीमहाभारते शां०मो०भृगुभरद्वाजसंवादेमानससृष्टोत्पत्तिकथने त्र्यशीत्यधिकशततमोऽध्यायः ॥१८३॥

भरद्वाजउवाच ॥ तएतेधातवःपंचब्रह्मायानसृजत्पुरा ॥ आवृतायैरिमेलोकामहाभूताभिसंज्ञिताः १ यदासृजत्सहस्राणिभूतानांसमहामतिः ॥ पंचानामेवभूतत्वंकथंसमुपपद्यते २ ॥भृगुरुवाच॥ अमितानांमहाशब्दोयांतिभूतानिसंभवम् ॥ ततस्तेषांमहाभूतशब्दोऽप्युपपद्यते ३ चेष्टावायुःखमाकाशमूष्माग्निःसलिलंद्रवः ॥ पृथिवीचात्रसंघातःशरीरंपांचभौतिकम् ४ इत्येतैःपंचभिर्भूतैर्युक्तंस्थावरजंगमम् ॥ श्रोत्रंघ्राणंरसःस्पर्शोदृष्टिश्चेंद्रियसंज्ञिताः ५ ॥ भरद्वाजउवाच ॥ पंचभिर्यदिभूतैस्तुयुक्ताःस्थावरजंगमाः ॥ स्थावराणांनदृश्यंतेशरीरेपंचधातवः ६ अनूष्मणामचेष्टानांघनानांचैवतत्त्वतः ॥वृक्षाणांनोपलभ्यंतेशरीरेपंचधातवः ७नशृण्वंतिनपश्यंतिनगंधरसवेदिनः ॥ नचस्पर्शंविजानंतितेकथंपांचभौतिकाः ८ अद्रवत्वादनग्नित्वादभूमित्वादवायुतः ॥ आकाशस्याप्रमेयत्वाद्वृक्षाणांनास्तिभौतिकम् ९

त्याक्षेपुरभिप्रायः २ अमितत्वमेवमहच्छब्दार्थोनत्वबाध्यत्वमित्याह अमितानामिति अमितेष्वमितत्वादित्यर्थः । यतःसंभवंयांतिततोहेतोर्भूतानीत्यर्थः । ततश्चानंतरत्वोत्पन्नत्वयोरुभयत्राविशेषान्नव्यावहारिकप्रातिभासिकयोर्महाभूतसंघयोर्भेदइत्यर्थः ३ कार्यमात्रेऽप्यग्निप्रदर्शयन्नमितत्वमेवाह चेष्टेति खंशुषिरं अत्रशरीरेद्रवोलोहितादिसंघातः । कठिनंमांसास्थ्यादि ४ श्रोत्रंखंघ्राणंपृथिवी रसोरसनेंद्रियंजलं स्पर्शःस्पर्शनेंद्रियंत्वग्वायुः दृष्टिश्चक्षुरिंद्रियंतेजः श्रोत्रादीनांखादिगुणान्शब्दादीन्प्रतिग्राहकत्वात्खाद्यात्मकत्वं श्रोत्रादीनांखाद्यात्मत्वोपपादनंदृष्टांतासिद्ध्यर्थम् तथाचायंप्रयोगः । मेयमात्रंरौसमानजातीयैर्ग्राह्यग्राहकत्वाच्छब्दश्रोत्रादिवदिति । तथाचप्रमातुश्चेतनाभिन्नत्वेनप्रमेयस्यापितथात्वमित्यद्वैतसिद्धिः ५ ननुवृक्षाणांप्रमेयत्वेऽपिनचेतनाभिन्नत्वंदृश्यतेऽस्मदादिवत्तेषांगत्याद्यभावेनानिंद्रियत्वात्ततश्चाभौतिकत्वमिति नन्नप्रमत्वमपीत्यद्वैतासिद्धिरित्यभिप्रेत्यवृक्षाणांभौतिकत्वंतावन्निरस्यति पंचभिरित्यादिना ६ ऊष्माद्यभावादस्याद्यभावमाहानूष्मणामिति ७ । ८ अप्रमेयत्वादप्रतीयमानत्वात् ९

वृक्षाणामभौतिकत्वानिंद्रियत्वादिकंपरिहरंश्चेतनत्वमुपपादयति घनानामित्यादिभिर्नवभिः १० शीर्यतइत्यनेनवज्रमणेरपिमत्कुणशोणितस्पर्शाच्छीर्यमाणस्यचेतनत्वंव्याख्यातं एवमेकदेशेकंपादिदर्शनाद्गोरिवभूमेरपिद्रष्टव्यं ११ । १२ । १३ । १४ । १५ नालेननलिकया एतेनक्षीरादिपायिनःपारदादेरपिचेतनत्वंव्याख्यातं १६ । १७ तेनवृक्षेण जरयतिजरयतः १८ । १९ २० शरीरिणोंऽतर्गतोऽग्निस्तेजःक्रोधचक्षुरूष्मजाठररूपइतिपंचाग्नेयाः २१ श्रोत्रमिंद्रियं घ्राणंनासारंध्रे कोष्ठमन्नादिस्थानं २२ । २३ प्राणात्प्राणमाश्रित्यप्रणीयतेगमनादिकार्यंते व्याय

॥ भृगुरुवाच ॥ ॥ घनानामपिवृक्षाणामाकाशोऽस्तिनसंशयः ॥ तेषांपुष्पफलव्यक्तिर्नित्यंसमुपपद्यते १० ऊष्मतोम्लायतेवर्णंत्वक्फलंपुष्पमेवच ॥ म्लायतेशीर्यतेचापिस्पर्शस्तेनात्रविद्यते ११ वाय्वग्न्यशनिनिर्घोषैःफलंपुष्पंविशीर्यते ॥ श्रोत्रेणगृह्यतेशब्दस्तस्माच्छृण्वंतिपादपाः १२ वल्लीवेष्टयतेवृक्षंसर्वतश्चैवगच्छति ॥ नह्यदृष्टेश्चमार्गोस्तितस्मात्पश्यंतिपादपाः १३ पुण्यापुण्यैस्तथागंधैर्धूपैश्चविविधैरपि ॥ अरोगाःपुष्पिताःसंतितस्माज्जिघ्रंतिपादपाः १४ पादैःसलिलपानाच्चव्याधीनांचापिदर्शनात् ॥ व्याधिप्रतिक्रियत्वाच्चविद्यतेरसनंद्रुमे १५ वक्त्रेणोत्पलनालेनयथोर्ध्वंजलमाददेत् ॥ तथापवनसंयुक्तःपादैःपिबतिपादपः १६ सुखदुःखयोश्चग्रहणाच्छिन्नस्यचविरोहणात् ॥ जीवंपश्यामिवृक्षाणामचैतन्यंनविद्यते १७ तेनतज्जलमादत्तंजरयत्यग्निमारुतौ ॥ आहारपरिणामाच्चस्नेहोवृद्धिश्चजायते १८ जंगमानांचसर्वेषांशरीरेपंचधातवः ॥ प्रत्येकशःप्रभिद्यंतेयैःशरीरंविचेष्टते १९ त्वक्चमांसंतथाऽस्थीनिमज्जास्नायुश्चपंचमम् ॥ इत्येतदिहसंघातंशरीरेपृथिवीमयम् २० तेजोह्यग्निस्तथाक्रोधश्चक्षुरूष्मातथैवच ॥ अग्निर्जरयतेयच्चपंचाग्नेयाःशरीरिणः २१ श्रोत्रंघ्राणंतथाऽऽस्यंचहृदयंकोष्ठमेवच ॥ आकाशात्प्राणिनामेतेशरीरेपंचधातवः २२ श्लेष्मापित्तमथस्वेदोवसाशोणितमेवच ॥ इत्यापःपंचधादेहेभवंतिप्राणिनांसदा २३ प्राणात्प्रणीयतेप्राणीव्यानाद्व्यायच्छतेतथा ॥ गच्छत्यपानोऽधश्चैवसमानोहृद्यवस्थितः २४ उदानादुच्छ्वसितिचप्रतिभेदाच्चभाषते ॥ इत्येतेवायवःपंचचेष्टयंतीहदेहिनम् २५ भूमेर्गंधगुणान्वेत्तिरसंचाद्भ्यःशरीरवान् ॥ ज्योतिषाचक्षुषारूपंस्पर्शंवेत्तिचवाहिना २६ गंधस्पर्शौरसोरूपंशब्दश्चात्रगुणाःस्मृताः ॥ तस्यगंधस्यवक्ष्यामिविस्तराभिहितान्गुणान् २७ इष्टश्चानिष्टगंधश्चमधुरःकटुरेवच ॥ निर्हारीसंहतःस्निग्धोरूक्षोविशदएवच २८ एवंनवविधोज्ञेयःपार्थिवोगंधविस्तरः॥ ज्योतिःपश्यतिचक्षुर्भ्यांस्पर्शंवेत्तिचवायुना २९ शब्दःस्पर्शश्चरूपंचरसश्चापिगुणाःस्मृताः ॥ रसज्ञानंतुवक्ष्यामितन्मेनिगदतःशृणु ३०

च्छतेबलसाध्यमुद्यमंकरोति २४ प्रतिभेदादुरःकंठशिरःस्थानभेदात् २५ भूमेर्भूम्याघ्राणरूपया अद्भ्यइतिरसनेन वाहिनावहनशीलेनवायुना चकारेणाऽऽकाशेनश्रोत्ररूपेणशब्दंगुणंवेत्तीत्यपिद्रष्टव्यं २६ अत्रगंधादिकरणेगंधेवाऽधिकरणस्यतन्मात्रत्वात् विस्तरेणाभिहितान्वृद्धैः गुणान्भेदान् २७ इष्टःकस्तूरिकादौ । अनिष्टःशवादौ । मधुरोमधुपुष्पादौ । कटुर्मरीच्यादौ । निर्हारीसर्वगंधाभिभावकोहिंग्वादौ । संहतश्चित्रगंधोऽनेकद्रव्यकल्कगतः । स्निग्धःसद्यस्तप्तघृतादौ । रूक्षःसर्षपतैलादौ । विशदःशालपत्रादौ २८ पार्थिवःपृथिव्याश्रितोमुख्योगुणः ज्योतिःपृथिव्यादिरूपं वायुनात्वगिंद्रियेण २९ गुणाअप्रधानभूताः एवंजलादावप्येकैकोमुख्यइतरेऽप्रधानाइतिद्रष्टव्यं ३०

कषायोविभीतकफलादौ ३१ । ३२ । ३३ कृष्णःकाचकज्जलादेः । नीलारुणोमयूरपिच्छादेः । कठिनादयःस्पर्शभेदाअपिचक्षुषाऽपिनिर्णेतुंशक्याइतिरूपमध्येपठिताः तथाहिलोष्टपाषाणसंघ ट्टेतन्नाशानाशाभ्यांबालस्तयोर्मृदुत्वकाठिनत्वेनिश्चिनोति एवमन्यत्रापिज्ञेयं ३४ ज्योतिरात्मकोरूपगुणः द्वौगुणौयस्मिन्निति द्विगुणः ३५ उष्णशीतावातपतुहिनयोः । सुखदुःखेतेएवकालभेदेन स्निग्धःपुत्रादेः । विशदउत्तमवस्त्रादेः ३६ खरमृदुपाषाणतूलादेः रूक्षःकंटकादेः लघुत्वगुरुत्वेतर्कमतेपतनानुमेयेअपिपौराणिकमतेत्वग्राह्येएव तथाहि । तमस्यपिपरीक्षकाःपाणिनाउत्तोल्यैवप लिकसपादपलिकयोरायतानायतयोरपिप्रमाणंनिश्चिन्वंति । गुरुतरइतितरप्प्रत्ययेनगुरुरप्याक्षिप्यते तेनद्वादशविधःएवमेकादशविधइत्यपिपठंति ३७ । ३८ । ३९ ऐश्वर्येणव्यापकत्वेनास्थितो ऽपिपटहादिषु अभिव्यज्यतेइतिशेषः ४० एतेषांषड्जादीनां ४१ एवमिति बहुविधः षड्जादिभेदेनतारमंद्रादिभेदेन वायुगुणैःखरमृदुस्पर्शैः अयमर्थः । विवक्षुप्रयत्नाभिहतःकोष्ठ्योऽग्निस्तत्र स्थंवायुंप्रेरयति सचयत्नतारतम्येनहृदयकंठशिरोदेशंप्राप्यमंद्रंमध्यमंतारंवाध्वनिमुत्पाद्यहृदयादिदेशाज्जिह्वामूलादीनिस्थानानिप्राप्यनित्यानभिव्यक्तवर्णान्मंद्रत्वादिभिर्धर्मैरनुरंजिता

रसोवहुविधःप्रोक्तऋषिभिःप्रथितात्मभिः ॥ मधुरोलवणस्तिक्तःकषायोऽम्लःकटुस्तथा ३१ एषषड्विधविस्तारोरसोवारिमयःस्मृतः ॥ शब्दःस्पर्शश्चरूपंचत्रिगुणं ज्योतिरुच्यते ३२ ज्योतिःपश्यतिरूपाणिरूपंचवहुधास्मृतं ॥ ह्रस्वोदीर्घस्तथास्थूलश्चतुरस्रोणुवृत्तवान् ३३ शुक्लःकृष्णस्तथारक्तःपीतोनीलारुणस्तथा ॥ कठिनश्चिक्कणःश्लक्ष्णःपिच्छिलोमृदुदारुणः ३४ एवंषोडशविस्तारोज्योतीरूपगुणःस्मृतः ॥ शब्दस्पर्शौचविज्ञेयौद्विगुणोवायुरित्युत ३५ वायव्यस्तुगुणःस्प र्शःस्पर्शश्चवहुधास्मृतः ॥ उष्णःशीतःसुखोदुःखःस्निग्धोविशदएवच ३६ तथाखरोमृदूरूक्षोलघुर्गुरुतरोऽपिच ॥ एवंद्वादशधास्पर्शोवायव्योगुणउच्यते ३७ तत्रैकगुणमाकाशंशब्दइत्येवतत्स्मृतं ॥ तस्यशब्दस्यवक्ष्यामिविस्तरंविविधात्मकं ३८ षड्जऋषभगांधारौमध्यमोधैवतस्तथा ॥ पंचमश्चापिविज्ञेयस्त थाचापिनिषादवान् ३९ एषसप्तविधःप्रोक्तोगुणआकाशसंभवः ॥ ऐश्वर्येणतुसर्वत्रस्थितोऽपिपटहादिषु ४० मृदंगभेरीशंखानांस्तनयित्नोरथस्यच ॥ यःकश्चि च्छ्रूयतेशब्दःप्राणिनोऽप्राणिनोऽपिवा ॥ एतेषामेवसर्वेषांविषयेसंप्रकीर्तितः ४१ एवंवहुविधाकारःशब्दआकाशसंभवः ॥ आकाशजंशब्दमाहुरेभिर्वायुगुणैःसह ४२ अव्याहतैश्चेतयतेनवेत्तिविषमस्थितैः ॥ अप्याय्यंतेचतेनित्यंधातवस्तैस्तुधातुभिः ४३

नकारादीनभिव्यज्यवेगवत्त्वस्वाभाव्यान्मुखाद्वहिर्निर्गतोजनकर्णविवरमनुप्रविशतितेनचसंस्कृतेनतत्प्रत्यश्रोत्रेणतंशब्दमनुभवति सचसंस्कारोमुखजस्यवायोर्बाह्यवायुनाऽनुकूल्याद्दूरतोवाप्रातिकू ल्यात्समीपएववाभित्यादिनाप्रतिघाताभावेवागिरिगुहादिगतवायुनाप्रतिस्रोतःप्रवर्तनेनद्विर्वाभवतितदनुसारेणशब्दंदूरतोऽप्यनुभवति समीपतएववानैववाद्विर्वाशब्दप्रतिशब्दरूपेणानुभवति । एवंवाय्वभिघाततारतम्याद्भेर्यादिशब्दोऽपिमंद्रादिभेदेनानुभूयतेतदिदमुक्तं । अव्याहतैरप्रतिहतैर्वायुगुणैःस्पर्शैश्चेतयतेशब्दंजानाति नवेत्तिवाशब्दं विषमस्थितैर्भित्त्यादिनाप्रतिघातेनवाऽभि भवात् । तंचैभिर्वायुगुणैःसहसंतंचेतयतेइत्यध्याहृत्यसंबंधनीयं । विषमागतैरितिपाठेऽपिसएवार्थः विषमागतीरितिगौडपाठस्तुप्रामादिकः । तदेवंशब्दाभिव्यक्तिप्रज्ञप्त्योर्भिन्नकालत्वानुभवान्म ध्येवीचीतरंगन्यायेनशब्दसंततिरुत्पद्यते । तत्रांत्यशब्दएवगृह्यतेइतिक्षणिकवादिबौद्धवोवदंति । भेरीशब्दोमयाश्रुतःसएवायंप्रपाठकइत्यभेदप्रत्यभिज्ञाबाधकप्रत्ययंविनाऽपिभ्रांतइतिवदंतिव द्विद्वांसएवालोचयंतु । तेशब्दाद्युत्पादकाधातवोदेहारंभकास्त्वग्आदिगोलकाः धातुभिरप्येभिर्विषयैराप्याय्यंतआदितआरभ्यसंवर्ध्यंतेऽन्नसुखस्पर्शाद्यर्पणेन श्लोकद्वयमेकंवाक्यं ४२ । ४३



तदेवाह आपइति एतेऽबादयःशरीरस्यमूलं कथंप्राणान्व्याप्यप्राप्य शुक्रशोणितसंयोगेहिप्राणोलब्धवृत्तिश्चेत्शरीरंनिष्पद्यते । अन्यथायोनिनिषिक्तमपिरेतोव्यर्थंभवति ४४ ॥ इतिशांतिप र्वणिमोक्षपर्वणिनीलकंठीये भारतभावदीपे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ शरीरेंद्रियादीनांभौतिकत्वमुक्तम् विज्ञानप्राणयोरपिज्ञानक्रियाशक्तिमतोर्भौतिकत्वंचिदात्मनोव्यति रिक्तत्वापादनायाह पार्थिवमित्यादिनाऽध्यायेन अग्निस्तेजः पार्थिवंपृथिवीबाहुल्यात्पांचभौतिकंदेहमासाद्यशारीरःशरीराभिमानीप्रकाशात्माविज्ञानधातुःकथंकेनप्रकारेणभवेत् । तथा ऽनिलोवायुः सोऽपिपार्थिवंधातुमासाद्यकथंकेनप्रकारेणवर्तयतेदेहंचेष्टयते १ अत्रोत्तरमाग्निर्मूर्धेतिमंत्रार्थमनुसरन्नाह वायोरित्यादिना कथयिष्यामि अग्नेःशारीरत्वमुक्तेतिभावः १ मूर्ध्निसह स्रारेस्थितत्वात्श्रेष्ठत्वाद्वामूर्धानंचिदात्मानमग्निर्विज्ञानात्माश्रितस्तदुपाधितांप्राप्तःसन्शरीरंपरिपालयंश्चित्प्रतिबिंबंप्राप्यविज्ञानात्माशरीरंचेतयतीत्यर्थः प्राणरूपउपाधिस्तुतावुभावपिव्या प्नोतीत्यर्थः ३ सःचिद्विज्ञानप्राणानांसंघातोजंतुर्जीवःसर्वेषांभूतानांकार्यकारणरूपाणामात्माचेतयितासनातनःपुरुषःपरंब्रह्मचसएवनिरस्तोपाधिःसन्सएवोपाधिपक्षपातीसन्भूतानांमनआदि

आपोग्निर्मारुतश्चैवनित्यंजाग्रतिदेहिषु ॥ मूलमेतेशरीरस्यव्याप्यप्राणानिहस्थिताः ४४ ॥ इतिश्रीम०शांतिपर्वणिमोक्ष० भृगुभारद्वाजसंवादे चतुरशीत्यधि कशततमोऽध्यायः ॥ १८४ ॥ ॥ भरद्वाजउवाच ॥ पार्थिवंधातुमासाद्यशारीरोऽग्निःकथंप्रभो ॥ अवकाशविशेषेणकथंवर्तयतेऽनिलः १ ॥ भृगुरुवाच ॥ वायोर्गतिमहंब्रह्मन्कथयिष्यामितेऽनघ ॥ प्राणिनामनिलोदेहान्यथाचेष्टयतेवली २ श्रितोमूर्धानमग्निस्तुशरीरंपरिपालयन् ॥ प्राणोमूर्धनिचाग्नौचवर्तमानोविचे ष्टते ३ सजंतुःसर्वभूतात्मापुरुषःससनातनः ॥ मनोबुद्धिरहंकारोभूतानिविषयश्चसः ४ एवंत्विहससर्वत्रप्राणेनपरिचाल्यते ॥ पृष्ठतस्तुसमानेनस्वांस्वांगति मुपाश्रितः ५ वस्तिमूलंगुदंचैवपावकंसमुपाश्रितः ॥ वहन्मूत्रंपुरीषंचाप्यपानःपरिवर्तते ६ प्रयत्नेकर्मणिवलेयएकस्त्रिषुवर्तते ॥ उदानइतितंप्राहुरध्यात्म विदुषोजनाः ७ संधिष्वपिचसर्वेषुसंनिविष्टस्तथाऽनिलः ॥ शरीरेषुमनुष्याणांव्यानइत्युपदिश्यते ८ धातुष्वग्निस्तुविततःसमानेनसमीरितः ॥ रसान्धातूं श्चदोषांश्चवर्तयन्नवतिष्ठते ९ अपानप्राणयोर्मध्येप्राणापानसमाहितः ॥ समन्वितस्त्वधिष्ठानंसम्यक्पचतिपावकः १० आस्यंहिपायुपर्यंतमंतेस्याद्गुदसंज्ञि तम् ॥ स्रोतस्तस्मात्प्रजायंतेसर्वस्रोतांसिदेहिनाम् ११

रूपोभवति विषयश्चशब्दादिःसएव ४ एवमिति सर्वत्रांतर्बहिश्चस्थितंसर्वंप्राणेनदेहलीदीपवन्मध्यस्थेनांतरंविज्ञानंबाह्यं देहेंद्रियादिकंचचाल्यतइत्यर्थः । पृष्ठतोजीवत्वप्राप्त्यनंतरं समानेन इत्थंभावेतृतीया समानवायुत्वंप्राप्तः ५ पावकंजाठरमाश्रितःसन्वस्तिमूलंमूत्राशयंगुदंपुरीषाशयंचस्वांस्वांपृथग्गम्यांगतिमाश्रि तोभवति । जाठरस्थःसमानोऽशितपीतादिकंपाचयित्वास्वंस्वंस्थानंनयतीत्यर्थः । मूत्रंशरीरंचेतिपाठेतुमूत्रशब्देनैवपुरीषमप्युपलक्षणीयम् ६ कर्मगमनादि प्रयत्नस्तदनुकूलाचेष्टावलंभारोद्यमना दौसामर्थ्यं विदुषःसकाशाच्छ्रुत्वेतिशेषः ७ । ८ धातुष्विति धातुषुत्वगादिषुविततोव्याप्तोऽग्निर्जाठरः रसादीन्वर्तयन्परिणमयन् रसानन्नादीन् धातूंस्त्वगादीन् दोषान्पित्तादीन् ९ कथंवर्त यतीतितत्राहापानेति नाभेरधोऽपानऊर्ध्वंप्राणस्तयोर्मध्येनाभौप्राणापानाभ्यांमिथःसंसर्गेणसमानसंज्ञत्वंप्राप्ताभ्यांसमाहितःसमुद्दीपितोऽधिष्ठानेनाभिमंडलंसमन्वितःसमाश्रितःपचति अन्नादिक मितिशेषः यद्वा । समन्वितएकीभावेनयुक्तः समानत्वंगतइत्यर्थः अधितिष्ठतिव्यापारवान्भवत्यनेनेतिजीवनमन्नमधिष्ठानं १० पक्वमन्नंकथंदेहंव्याप्नोतीत्यतआह आस्यमिति आस्यमारभ्यआ स्यादीत्यपिपाठः पायुपर्यंतंयथामहत्तरंस्रोतःप्राणप्रवहणमार्गःप्रसिद्धस्तच्चांतेगुदसंज्ञितंस्यात् तस्मान्महास्रोतसः अन्यानिसर्वाणिस्रोतांसिप्राणमार्गानाडीसंज्ञाःशरीरंव्याप्यतिष्ठंतीत्यर्थः ११

तैःश्रोतोभिःसर्वेष्वंगेषुप्राणानांसन्निपातात्तत्सहचारिणोजाठरवह्नेरपिसन्निपातःसंगमोभवति तत्रानुभवंप्रमाणयति ऊष्माचेति १२ प्राणाग्न्योःपरस्परोद्दीपकत्वमाहाग्नीति अग्नेर्वेगेनवहतीत्य ग्निवेगवहःप्राणः एवंप्राणोप्यग्निरोगहेतुरित्याह गुदांतइत्यादिना दृष्टंचलोके‌ऽग्निवर्गाद्बाष्पवायुवृद्धिर्वायुवेगाच्चाग्निवृद्धिरिति । तथाचप्राणरोधेप्रतिजाठरमयनिवृत्तेःप्राणोरोद्धव्यइतिभावः १३ जाठरनिरोधेनसर्वेषामिंद्रियाणांनिरोधोभवतीत्याशयेनाह पक्वेति पक्वाशयःपक्वस्थानं आमाशयोऽपक्वस्थानं नाभिमध्येइतितात्स्थ्याज्जाठरे सर्वेप्राणाःसर्वाणींद्रियाणि १४ सर्वेरसाहृदया त्तद्द्वयंप्राप्यदशभिःप्राणैःप्रेरिताः । तेचप्राणादयःपंच नागकूर्मकृकलदेवदत्तधनंजयाश्चपंच १५ एषआस्यादिपायुपर्यंतोयोगानांयोगिनांमार्गः किमनेनतिर्यगपिगंतव्यंनेत्याह येनेति केगच्छं ति येमूर्धनिसुषुम्नयानाडयासहस्रारंप्राप्यतत्रात्मानमादधन्नाहितवंतः १६ अध्यायार्थमुपसंहरति एवमिति देहिनांसर्वेषुप्रचारेषुबुद्धिमनःकार्येंद्रियनिर्वर्त्येषुविषयेषुप्राणादिपुनिमित्तभूतेषुसत्सुवि हितःप्राणनिरोधरूपोयोगस्तस्मिन्ननुष्ठितेसतिनित्यंसद्रूपंब्रह्मसमिध्यतेसम्यग्बुद्धयायुपाधिजनितकालुष्यत्यागेनदीप्यतेप्रकाशते मंत्रार्थस्तु । अग्निर्विज्ञानं मूर्धाचितिच्छाययाचिद्रूपःसन् दिवोऽव्यवहरतःप्राणवायोरपिककुत्स्थूलः अयंप्राणाग्निश्चितासंघातःपृथिव्यादेहस्यपतिर्जीवःअपरेतासिशरीराण्यन्नादिप्राणादिरूपेणजाठररूपेणचपाचयन्जिन्वतिपुष्णाति । तेनप्राणविज्ञा

प्राणानांसन्निपाताच्चसन्निपातःप्रजायते ॥ ऊष्माचाग्निरितिज्ञेयोयोऽन्नंपचतिदेहिनाम् १२ अग्निवेगवहःप्राणोगुदांतेप्रतिहन्यते ॥ सऊर्ध्वमागम्यपुनःसमुत्क्षि पतिपावकम् १३ पक्वाशयस्त्वधोनाभ्यामूर्ध्वमामाशयःस्थितः ॥ नाभिमध्येशरीरस्यसर्वेप्राणाश्चसंस्थिताः १४ प्रस्थिताहृदयात्सर्वेतिर्यगूर्ध्वमधस्तथा ॥ वहंत्यन्नरसान्नाड्योदशप्राणप्रचोदिताः १५ एषमार्गोऽथयोगानांयेनगच्छंतितत्पदम् ॥ जितक्लमाःसमाधीरामूर्धन्यात्मानमादधन् १६ एवंसर्वेषुविहितः प्राणापानेषुदेहिनाम् ॥ तस्मिन्समिध्यतेनित्यमग्निःस्थाल्यामिवाहितः १७ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि पंचाशीत्यधिकशततमोऽ ध्यायः ॥ १८५ ॥ ॥ भरद्वाजउवाच ॥ यदिप्राणयतेवायुर्वायुरेवविचेष्टते ॥ श्वसित्याभाषतेचैवतस्माज्जीवोनिरर्थकः १ यदूष्मभावआग्नेयोवह्निनापच्य तेयदि ॥ अग्निर्जरयतेचैतत्तस्माज्जीवोनिरर्थकः २ जंतोःप्रमीयमाणस्यजीवोनैवोपलभ्यते ॥ वायुरेवजहात्येनमूष्मभावश्चनश्यति ३ यदिवायुमयोजीवःसंश्ले षोयदिवायुना ॥ वायुमंडलवद्दृश्योगच्छेत्सहमरुद्गणैः ४ संश्लेषोयदिवातेनयदितस्मात्प्रणश्यति ॥ महार्णवविमुक्तत्वादन्यत्सलिलभाजनम् ५

नयोर्निरोधेयद्वशिष्यतेतद्ब्रह्मेत्यर्थः १७ ॥ इति मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपेपंचाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ नित्यंसमिध्यतइतिजीवस्यानौपाधिकंरूपंदी प्यतइत्युक्तंतल्लोकायतमतेस्थित्वाआक्षिपति यदीति प्राणयतेजीवयते १ आग्नेयोऽग्निगुणऊष्मभावऔष्ण्यंवह्निनाजाठरेणांतःस्थेनपच्यतेस्पष्टीक्रियते इदित्वभावेऽपिनलोपः अग्निर्जा ठरएवएतदन्नम् २ एवंनित्यस्यवस्तुनःसत्त्वेकार्यलिंगकमनुमानंनिरस्यप्रत्यक्षमपिनिरस्यति जंतोरिति जंतोर्देहेंद्रियबुद्धिसंघातस्य प्रमीयमाणस्यनश्यमानस्य नैवोपलभ्यतेपलालपृथक रणेबीजमिव तस्माद्वायुवियोगएवमरणं ३ वायुमयोवायुप्रधानोवायोरन्यः वायुमंडलवद्बाह्यस्याचक्रवद्वायुनासहदृश्यःस्यादित्यर्थः ४ यथापाषाणबद्धंतुंबीफलंजलेमज्जतिच्युतबंधंतून्मज्जतित द्वज्जीवः ज्ञानान्मोक्षोनास्तीतिज्ञानावरणीयम् । आर्हतेमतेमोक्षोनास्तीतिदर्शनावरणीयम् । स्वशास्त्रस्यपरशास्त्रेणसमत्वदर्शनंमोहनीयम् । परोक्षज्ञानादपिकृतकृत्यत्वबुद्धिरंतरीयमि तिघातिकर्मचतुष्टयम् । शुक्रशोणितसंयोगआयुष्कम् । तयोःकललावस्थागौत्रिकम् । तस्यादार्ढ्यंनामिकम् । ततोदेहाकारपरिणामोवेदनीयमित्यघातिकर्मचतुष्टयम् । एतेनकर्माष्टकेनबद्धो नपृथगुपाधेर्दृश्यतेइतिदिगंबरमतेनपरिहारमाशंक्याह संश्लेषइति यदिवातेनवातप्रधानेनसंघातेनजीवस्यसंश्लेषोऽस्तितस्मात्संघातादन्योजीवस्तर्हिसंघातेप्रणश्यतिसतिमहार्णवेपाषाणादि नाविमुक्तस्यभावस्तत्त्वंतस्माद्धेतोर्जलभाजनमिवजीवोऽन्यत्पृथक्स्यादित्यर्थः ५



ब्रह्मांशोजीवइतिपक्षमाशंक्याह कूपेइति संघातनाशेब्रह्मांतर्गतस्यजीवस्यस्वरूपनाशएवसमुद्रेनदीनामिवेत्यर्थः ६ इष्टापत्तिमाशंक्याह पंचेति पंचधारणकेपंचभिरेवधारणंयस्य पंचसा धारणेइत्याद्यःपाठः जीवितंजीवः मंचारूढपुरुषवदतिरिक्तंकुतोनकुतश्चिदित्यर्थः तत्रहेतुः तेषामिति अतिरिक्तश्चेत्संघातैकदेशनाशेऽपिदृश्येतमंचैकदेशनाशेपुरुषइव नचदृश्यते तस्मा त्संघातात्मैवजीवस्तदेकदेशनाशेनश्यतिमंचैकदेशनाशेमंचइवेत्यर्थः । चतुर्णामभावेनास्तिसंशयोजीवोनष्टइति संग्रहइतिपाठःस्वच्छः ७ कोष्ठभेदाद्वाग्व्यादिनाकोष्ठनिरोधात् ८ वर्णो विस्तारःउच्छूनतेत्यर्थः ९ तस्मिन्निति संघाताद्व्यतिरिक्तेधावनजीवनाद्यदर्शनात्संघातएवजीवइत्यर्थः १० ततश्चपरलोकादिकंनास्तीतिदानादेर्वैयर्थ्यमित्याह एषेति ११ । १२ । १३ लीनमूलश्छिन्नोवृक्षोयथापुनःप्ररोहत्येवंलीनकर्मासंघातोनष्टोऽपिपुनरुत्पत्स्यतेबीजसत्त्वादित्याशंक्याह छिन्नस्येति वृक्षमूलंबीजभूतमुपलभ्यतेनदेहमूलंकर्मेत्यर्थः १४ शरीरमूलंतुबीजमात्रं

कूपेवासलिलंदद्यात्प्रदीपंवाहुताशने ॥ क्षिप्रंप्रविश्यनश्येतयथानश्यत्यसौतथा ६ पंचधारणकेह्यस्मिन्शरीरेजीवितंकुतः ॥ तेषामन्यतराभावाच्चतुर्णांनास्ति संशयः ७ नश्यंत्यापोह्यनाहाराद्वायुरुच्छ्वासनिग्रहात् ॥ नश्यतेकोष्ठभेदात्खमग्निर्नश्यत्यभोजनात् ८ व्याधिवर्णपरिक्लेशैर्मेदिनीचैवशीर्यते ॥ पीडितेऽन्यतरे ह्येषांसंघातोयातिपंचधा ९ तस्मिन्पंचत्वमापन्नेजीवःकिमनुधावति ॥ किंवेदयतिवाजीवःकिंशृणोतिब्रवीतिच १० एषागौःपरलोकस्थंतारयिष्यतिमामिति ॥ योदत्वाम्रियतेजंतुःसागौःकंतारयिष्यति ११ गौश्चप्रतिग्रहीताचदाताचैवसमंयदा ॥ इहैवविलयंयांतिकुतस्तेषांसमागमः १२ विहगैरुपभुक्तस्यशैलाग्रात्पति तस्यच ॥ अग्निनाचोपयुक्तस्यकुतःसंजीवनंपुनः १३ छिन्नस्ययदिवृक्षस्यनमूलंप्रतिरोहति ॥ बीजान्यस्यप्रवर्तंतेमृतःक्वपुनरेष्यति १४ बीजमात्रंपुरासृष्टं यदेतत्परिवर्तते ॥ मृतामृताःप्रणश्यंतिबीजाद्बीजंप्रवर्तते ॥ १५ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि भृगुभरद्वाजसंवादेजीवस्वरूपाक्षेपे षडशी त्यधिकशततमोऽध्यायः ॥ १८६ ॥ ॥ भृगुरुवाच ॥ ॥ नप्रणाशोऽस्तिजीवस्यदत्तस्यचकृतस्यच ॥ यातिदेहांतरंप्राणीशरीरंतुविशीर्यते १ नशरीराश्रि तोजीवस्तस्मिन्नष्टेप्रणश्यति ॥ समिधामिवदग्धानांयथाग्निर्दृश्यतेतथा २ ॥ भरद्वाजउवाच ॥ ॥ अग्नेर्यथातथातस्ययदिनाशोनविद्यते ॥ इंधनस्योपयोगां तेसचाग्निर्नोपलभ्यते ३ नश्यतीत्येवजानामिशांतमग्निमनिंधनम् ॥ गतिर्यस्यप्रमाणंवासंस्थानंवानविद्यते ४ ॥ भृगुरुवाच ॥ ॥ समिधामुपयोगांतेयथाऽग्नि र्नोपलभ्यते ॥ आकाशानुगतत्वाद्धिदुर्ग्राह्योहिनिराश्रयः ५ तथाशरीरसंत्यागेजीवोह्याकाशवत्स्थितः ॥ नगृह्यतेतुसूक्ष्मत्वाद्यथाज्योतिर्नसंशयः ६

प्रत्यक्षदृष्टैरेतएवनत्वदृष्टमकृतत्वात् प्रवर्ततेदेहरूपेणपरिणमते तथाचबीजरुहतरुवन्नष्टानांनाशएवेतरेषामुद्भवइतितस्मान्नित्यंसमिध्यतेइत्यनुपपन्नं ॥ १५ ॥ इति शांति० मोक्ष० नीलकंठी येभारतभावदीपे षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ एतद्दूषयति नप्रणाशइति १ नप्रणश्यति नदृश्यतेइतिविसंबंधः अदर्शनमात्रान्नवस्तुनोनाशावधारणं दग्धेंधनस्याग्नेरपि नाशापत्तेरित्यर्थः २ इष्टापत्तिमाशंकतेअग्नेरिति अनुपलब्धेरुभयत्रापितुल्यत्वादग्नेरपिनाशएवेत्यर्थः ३ एतदेवद्रढयति नश्यतीत्येवेति ४ समिधामिति दग्धेंधनाग्निवत्सन्नेवात्मा देहनाशेसतिसौक्ष्म्यान्नोपलभ्यतइत्यर्थः ५ आकाशवत्सर्वगतोनित्यश्च ज्योतिररणिस्थोऽग्निः नचतत्रासन्नेवाग्निर्मथनादुत्पद्यतइतिवाच्यं असत्त्वाविशेषेणसर्वतःसर्वोत्पत्तिप्रसंगात् । तस्मात्तिलेषुतैलमिवारण्याद्विष्वग्निःसन्नेवबलेनाभिव्यज्यतेनचप्रयत्नाद्दृश्यतेसूक्ष्मत्वादित्यर्थः ६

प्राणानिति अग्निर्विज्ञानंसएवविज्ञानमयोजीवः वायुनैवसंधारणमवस्थानंयस्य नश्यतिअदर्शनंगच्छति उच्छ्वासस्यवायोर्निग्रहात् ७ अयनंलयस्थानं ८ निगृहीतःपवनः द्वयंजलभूम्याख्यं ९ अमूर्तयःअदृश्याः अतस्तेषामप्यभावावधारणंदुःशकंकिमुतसूक्ष्मस्यजीवस्येतिभावः १० ननुसत्त्ववत्सत्त्वमपिनिश्चेतुमशक्यं नित्यस्यवस्तुनोलक्षणाद्यभावादितिशंकते यदीति शरीरिषुशरीराकारपरिणामवत्सुसंघातेषु ११ पंचेति पंचभूतात्मके पंचविषयरता पंचविज्ञानानिज्ञानकारणानिपंचचेतनानिज्ञानानिचयत्रतस्मिन्पंचविज्ञानचेतने १२ नैवोपलभ्यते व्रीहितंडुलवत् १३ अजीवंचेतनाशून्यं अन्यस्याभावाच्छरीरमेवचेतनमित्यर्थः १४ माऽस्तुदेहेंद्रियसंघातश्चेतनो यस्मिन्व्यग्रेसतिसंघातःसन्निकृष्टोऽपिशब्दादीन्नगृह्णातितन्मनएवआत्माऽस्त्वित्याहचतुर्भिः शृणोतीति १५ । १६ । १७ । १८ उत्तरमाह नपंचेति यथाश्रोत्रादीनांशब्दादिग्राहकत्वेनग्राह्यसजातीयगुणाश्रयत्वेनाऽऽकाशादिरूपत्वं । एवंमनोऽपिसर्वगुणग्राहकत्वात्सर्वगुणाश्रयत्वेनपांचभौति

प्राणान्धारयतेह्यग्निःसजीवउपधार्यताम् ॥ वायुसंधारणोह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ७ तस्मिन्नष्टेशरीराग्नौततोदेहमचेतनम् ॥ पतितंयातिभूमित्वमयनंतस्यहिक्षितिः ८ जंगमानांहिसर्वेषांस्थावराणांतथैवच ॥ आकाशंपवनोन्वेतिज्योतिस्तमनुगच्छति ॥ तेषांत्रयाणामेकत्वाद्द्वयंभूमौप्रतिष्ठितम् ९ यत्रखंतत्रपवनस्तत्राग्निर्यत्रमारुतः ॥ अमूर्तयस्तेविज्ञेयामूर्तिमंतःशरीरिणाम् १० ॥ ॥ भरद्वाजउवाच ॥ ॥ यद्यग्निमारुतौभूमिःखमापश्चशरीरिषु ॥ जीवःकिंलक्षणस्तत्रेत्येतदाचक्ष्वमेऽनघ ११ पंचात्मकेपंचरतौपंचविज्ञानचेतने ॥ शरीरेप्राणिनांजीवंवेत्तुमिच्छामियादृशम् १२ मांसशोणितसंघातेमेदःस्नाय्वस्थिसंचये ॥ भिद्यमानेशरीरेतुजीवोनैवोपलभ्यते १३ यद्यजीवंशरीरंतुपंचभूतसमन्वितम् ॥ शारीरेमानसेदुःखेकस्तांवेदयतेरुजम् १४ शृणोतिकथितंजीवःकर्णाभ्यांनशृणोतितत् ॥ महर्षेमनसिव्यग्रेतस्माज्जीवोनिरर्थकः १५ सर्वंपश्यतियद्दृश्यंमनोयुक्तेनचक्षुषा ॥ मनसिव्याकुलेचक्षुःपश्यन्नपिनपश्यति १६ नपश्यतिनचाघ्रातिनशृणोतिनभाषते ॥ नचस्पर्शरसौवेत्तिनिद्रावशगतःपुनः १७ हृष्यतिक्रुध्यतेकोऽत्रशोचत्युद्विजतेचकः ॥ इच्छतिध्यायतिद्वेष्टिवाचमीरयतेचकः १८ ॥ भृगुरुवाच ॥ नपंचसाधारणमत्रकिंचिच्छरीरमेकोवहतेंऽतरात्मा ॥ सवेत्तिगंधांश्चरसान्श्रुतीश्चस्पर्शंचरूपंचगुणांश्चयेऽन्ये १९ पंचात्मकेपंचगुणप्रदर्शीससर्वगात्रानुगतोंऽतरात्मा ॥ सवेत्तिदुःखानिसुखानिचात्रतद्विप्रयोगात्तुनवेत्तिदेहः २० यदानरूपंनस्पर्शोनोष्मभावश्चपावके ॥ तदाशांतेशरीराग्नौदेहत्यागेननश्यति २१ आपोमयमिदंसर्वमापोमूर्तिःशरीरिणाम् ॥ तत्रात्मामानसोब्रह्मासर्वभूतेषुलोककृत् २२

कमतस्तन्नकिंचिद्भूतेभ्योऽन्यत्तस्यांतरंपंचसाधारणत्वात् । अतस्तन्नशरीरनिर्वाहकंकिंत्वेकोऽन्तरात्मैवशरीरंस्थूलसूक्ष्मभेदेनद्विविधंवहतेचालयति १९ यदुक्तंमनसोऽनवधानान्नशृणोतितत्राह पंचात्मकेइति पंचभूतात्मकेशरीरे पंचगुणायस्मिन्तत्तथामनस्तस्यद्रष्टा मममनःखिन्नमित्यनुभवात् । सएवमनोद्वारासर्वगात्रानुगतः । व्यतिरेकमाह तद्विप्रयोगात्सुषुप्तौसमाधौवादेहःसबुद्धिमनस्कोनवेत्तिदेहादेश्चेतनत्वेसुप्त्यादावपिवेदनमपरिहार्यंस्यात् । ततश्चक्षुषइवमनसाऽप्युन्मीलनाददर्शनेऽपिनतस्यकरणत्वव्याहतिरित्यर्थः २० यदानिर्वातप्रदीपइवदेहाग्नौशांतेरूपादिकंनोपलभ्यतेतदानश्यतिम्रियतेदेहएवनतुचेतनइत्यर्थः २१ स्थूलदेहनाशमुक्त्वासूक्ष्मस्याविनाशमाह आपइति आपोमयमंबुमयं अत्राप्शब्देनसूक्ष्मभूतसंघातोगृह्यते तन्मयंसूत्रात्मनाव्याप्तमित्यर्थः । तस्माद्देहिनामप्याप एवमूर्तिराकृतिः तत्राप्स्वात्माचिद्रूपःपुरुषः मानसस्तदंतर्गतेमनस्यभिव्यक्तः सएवोपाधियोगाज्जीवः सएवब्रह्मापूर्वोक्तश्चतुर्मुखोमुख्यजीवः सार्वज्ञ्यादिमत्त्वात् २२



सएवात्माप्राकृतैस्त्रिगुणात्मकमूलप्रकृतेर्विकारैर्गुणैरिंद्रियमनोभिःसंयुक्तःसन्क्षेत्रज्ञोजीवइत्युच्यते तथाचश्रुतिः । 'आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः'इति । अथनेवपरमात्मेत्याह तैरेवेति २३ तंपरमं सर्वलोकस्यहितंसुखंतदात्मकं । ' एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंति'इतिश्रुतेः तस्मिन्पूर्वोक्तस्थूलसूक्ष्मरूपे २४ क्षेत्रज्ञंप्रत्यगात्मानंत्वमर्थंतंपरमात्मानंतदर्थंजानीहि । क्षेत्रज्ञस्यलौकिकस्वरूपमाह तमइति योऽयमावरणप्रवृत्तिप्रकाशाद्यभिमानीक्षेत्रज्ञःसपरमात्मैवेत्यर्थः २५ सचेतनंचेतनेनसहितं जीवगुणंजीवस्यभोगोपकरणंदेहेंद्रियमनांसिसजीवगुणश्चेष्टतेतंचसर्वंसर्वात्मकंब्रह्म । 'सर्वंसमाप्नोषिततोसिसर्वः'इतिनिर्वचनात् । चेष्टयतेदारुपुत्रिकामिवसूत्रधारः कीदृशंसर्वं अतःपरंसंसारिणोजीवादन्यमसंसारिणम् २६ एवंनित्यस्यवस्तुनःस्वतःसिद्धेजातोदेवदत्तोमृतोदेवदत्तइत्यादिव्यवहारोदेहोत्पत्तिनाशमात्रपरइत्याह नजीवेति दशार्धतांपंचत्वं शरीरनाशएवजीवस्यमरणमित्युच्यते । 'जीवापेतंवावकिलेदंम्रियतेनजीवोम्रियते'इतिश्रुतेः २७ गूढोदेहेंद्रियादिषुलीनः संवृतोयतोऽज्ञानेनावृतः सोऽग्र्ययासूच्यग्रसदृशयासूक्ष्मयाबुद्ध्याऽहंब्रह्मास्मीतिवाक्यकरणकबुद्धिवृत्त्यादृश्यते । आवरकाज्ञाननाशपूर्वकंदेहादिभ्योविविक्तःसाक्षात्क्रियते

आत्माक्षेत्रज्ञइत्युक्तःसंयुक्तःप्राकृतैर्गुणैः ॥ तैरेवतुविनिर्मुक्तःपरमात्मेत्युदाहृतः २३ आत्मानंतंविजानीहिसर्वलोकहितात्मकम् ॥ तस्मिन्यःसंश्रितोदेहेह्यब्बिंदुरिवपुष्करे २४ क्षेत्रज्ञंतंविजानीहिनित्यंलोकहितात्मकम् ॥ तमोरजश्चसत्त्वंचविद्धिजीवगुणानिमान् २५ सचेतनंजीवगुणंवदंतिसचेष्टतेचेष्टयतेचसर्वम् ॥ अतःपरंक्षेत्रविदोवदंतिप्रावर्तयद्योभुवनानिसप्त २६ नजीवनाशोऽस्तिहिदेहभेदेमिथ्यैतदाहुर्मृतइत्यबुद्धाः ॥ जीवस्तुदेहांतरितःप्रयातिदशार्धतैवास्यशरीरभेदः २७ एवंसर्वेषुभूतेषुगूढश्चरतिसंवृतः ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयातत्त्वदर्शिभिः २८ तंपूर्वापररात्रेषुयुंजानःसततंबुधः ॥ लघ्वाहारोविशुद्धात्मापश्यत्यात्मानमात्मनि २९ चित्तस्यहिप्रसादेनहित्वाकर्मशुभाशुभम् ॥ प्रसन्नात्मात्मनिस्थित्वासुखमानंत्यमश्नुते ३० मानसोग्निःशरीरेषुजीवइत्यभिधीयते ॥ सृष्टिःप्रजापतेरेषाभूताध्यात्मविनिश्चये ३१ ॥ इतिश्रीमहाभारते शां० मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादेजीवस्वरूपनिरूपणेसप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

॥ भृगुरुवाच ॥ ॥ असृजद्ब्राह्मणानेवपूर्वंब्रह्माप्रजापतीन् ॥ आत्मतेजोभिनिर्वृत्तान्भास्कराग्निसमप्रभान् १ ततःसत्यंचधर्मंचतपोब्रह्मचशाश्वतम् ॥ आचारंचैवशौचंचस्वर्गायविदधेप्रभुः २ देवदानवगंधर्वादैत्यासुरमहोरगाः ॥ यक्षराक्षसनागाश्चपिशाचामनुजास्तथा ३

२८ । २९ प्रसादेनांतर्मुखत्वरुच्या सुखंदुःखाभिन्नं आनंत्यंमोक्षं ३० कुतःसृष्टमिदंविश्वमित्यादिप्रश्नद्वयस्यतात्पर्यमाह मानसइति यःशरीरेषुजरायुजादिषुमानसोमनस्याविर्भूतोऽग्निरग्निरिवप्रकाशात्मापुरुषोजीवइत्यभिधीयतेलौकिकैः । तस्मादेवप्रजापतेःसर्वेश्वरादेषासर्वभूतप्रत्यक्षासृष्टिर्भूतासमुत्पन्ना । किंव्यवहारतइदमुच्यतेनेत्याह अध्यात्मविनिश्चयेसत्यात्मानमधिकृत्यप्रवृत्तोविशिष्टोब्रह्मविद्याजन्यसाक्षात्कारेणपरोक्षज्ञानादधिकोऽहंब्रह्मास्मीतिनिश्चयोऽसंदिग्धाविपर्यस्तंज्ञानंतस्मिन्सति । तत्त्वविदःस्वप्नसमेयादृष्टिसमसमयासृष्टिर्मूढैर्वेजपंजरवद्दृश्यमानाभ्यासात्।त्रिकयैवेतिनिश्चितेतिभावः ३१ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ कथंसृष्टानिभूतानीत्यस्योत्तरमुक्त्वाकथंवर्णविभक्तयइत्यस्योत्तरमाह असृजदित्यादि तत्रपूर्वंचित्तप्रसादेनाऽऽनंत्यमश्नुतइत्युक्तंचित्तप्रसादश्चस्वधर्मफलमतोधर्मंनिरूपयति ब्राह्मणान्ब्रह्मनिष्ठान्प्रजापतीन्मरीच्यंगिरआदीन् । आत्मनस्तेजःसत्यसंकल्पत्वादिसामर्थ्यंतेननिर्वृत्तानुत्पादितान्ब्रह्मणा १ धर्मंयज्ञादिं तपःकृच्छ्रचान्द्रायणादि शाश्वतंब्रह्मनित्यंवेदं आचारंस्नानादिं शौचंप्रायश्चित्तादि २ । ३

वर्णाःसात्त्विकंराजसंतामसंमिश्रंचेतिस्वच्छत्वादिसाम्याद्गुणत्रयंवर्णशब्देनोच्यते १ सितःस्वच्छःसत्त्वगुणःप्रकाशात्माशमदमादिस्वभावः । लोहितोरजोगुणःप्रवृत्यात्माशौर्यतेजआदिस्वभावः । पीतकःरजस्तमोव्यामिश्रःकृष्यादिनिहीनकर्मप्रवर्तकः । असितःकृष्णःआवरणात्मातमोगुणःस्वतःप्रकाशप्रवृत्तिहीनःशकटवत्परप्रेर्यः ५ इदमाक्षिपति चातुर्वर्ण्यस्येति वर्णनजात्यावर्णःसात्त्विकत्वादिर्यदिभिद्यतेतन्नेतिशेषः तत्रहेतुः सर्वेषामिति ६ नोऽस्माकंब्राह्मणानामपिकामक्रोधादिरजस्तमःकार्यनिग्रहायप्रभवतिसमर्थभवति । अतःसत्त्वादिव्यमिचारात्रतत्प्रयुक्ताजात्यादिव्यवस्थेत्यर्थः ७ । ८ जंगमानांपश्वादीनां तस्मात्सर्वेषांसमानधर्मत्वात्पशुवृक्षादिष्विवमनुष्येष्वपिनजातिभेदनिश्चयइत्यर्थः ९ ब्राह्मंब्राह्मणजाति

ब्राह्मणाःक्षत्रियविश्याःशूद्राश्चद्विजसत्तम ॥ येचान्येभूतसंघानांवर्णास्तांश्चापिनिर्ममे ४ ब्राह्मणानांसितोवर्णःक्षत्रियाणांतुलोहितः ॥ वैश्यानांपीतकोवर्णःशूद्राणामसितस्तथा ५ ॥ ॥ भरद्वाजउवाच ॥ ॥ चातुर्वर्ण्यस्यवर्णेनयदिवर्णोविभिद्यते ॥ सर्वेषांखलुवर्णानांदृश्यतेवर्णसंकरः ६ कामःक्रोधोभयंलोभःशोकश्चिंताक्षुधाश्रमः ॥ सर्वेषांनःप्रभवतिकस्माद्वर्णोविभिद्यते ७ स्वेदमूत्रपुरीषाणिश्लेष्मापित्तंसशोणितम् ॥ तनुःक्षरतिसर्वेषांकस्माद्वर्णोविभज्यते ८ जंगमानामसंख्येयाःस्थावराणांचजातयः ॥ तेषांविविधवर्णानांकुतोवर्णविनिश्चयः ९ ॥ ॥ भृगुरुवाच ॥ ॥ नविशेषोऽस्तिवर्णानांसर्वंब्राह्ममिदंजगत् ॥ ब्रह्मणापूर्वसृष्टंहिकर्मभिर्वर्णतांगतम् १० कामभोगप्रियास्तीक्ष्णाःक्रोधनाःप्रियसाहसाः ॥ त्यक्तस्वधर्मारक्तांगास्तेद्विजाःक्षत्रतांगताः ११ गोभ्योवृत्तिंसमास्थायपीताःकृष्युपजीविनः ॥ स्वधर्मान्नानुतिष्ठंतितेद्विजावैश्यतांगताः १२ हिंसानृतप्रियालुब्धाःसर्वकर्मोपजीविनः ॥ कृष्णाःशौचपरिभ्रष्टास्तेद्विजाःशूद्रतांगताः १३ इत्येतैःकर्मभिर्व्यस्ताद्विजावर्णांतरंगताः ॥ धर्मोयज्ञक्रियातेषांनित्यंनप्रतिषिध्यते १४ इत्येतेचतुरोवर्णायेषांब्राह्मीसरस्वती ॥ विहिताब्रह्मणापूर्वंलोभात्त्वज्ञानतांगताः १५ ब्राह्मणाब्रह्मतंत्रस्थास्तपस्तेषांननश्यति ॥ ब्रह्मधारयतांनित्यंव्रतानिनियमांस्तथा १६ ब्रह्मचैवपरंसृष्टंयेनजानंतितेऽद्विजाः ॥ तेषांबहुविधास्त्वन्यास्तत्रतत्रहिजातयः १७ पिशाचाराक्षसाःप्रेताविविधाम्लेच्छजातयः ॥ प्रनष्टज्ञानविज्ञानाःस्वच्छंदाचारचेष्टिताः १८ प्रजाब्राह्मणसंस्काराःस्वकर्मकृतनिश्चयाः ॥ ऋषिभिःस्वेनतपसासृजंतेचापरेपरैः १९

मत् तत्रहेतुः ब्रह्मणेति वर्णतांक्षत्रियादिभावम् १० रक्तांगारजोगुणमयाः ११ पीतारजस्तमोमयाः १२ कृष्णाःकेवलतमोमयाः १३ व्यस्ताःपृथक्कृताः द्विजाब्राह्मणाः तेषांचतुर्णामपिवर्णानाम् १४ चतुरश्चत्वारः ब्राह्मीवेदमयी चतुर्णामपिवर्णानांब्रह्मणापूर्वविहिता । लोभदोषेणत्वज्ञानतातमोभावंगताःशूद्राअनधिकारिणोवेदेजाताइत्यर्थः १५ ब्रह्मतंत्रंवेदोक्तानुष्ठानंतस्यास्तत्पराः अतस्तेषांब्रह्मआत्मानंधारयतांपुरुषार्थत्वेननिश्चिन्वताजिज्ञासूनांतपआदिकंननश्यति १६ ब्रह्मचैवेति सृष्टंसर्वकार्यं परंब्रह्माभेदेनयेअद्विजाहीनद्विजास्तेनजानंतीतियोजना तत्रतत्रयोनिषु जातयोजन्मानि १७ तानेवाह पिशाचाइति १८ ब्राह्मणोब्रह्मणिवेदेविहितोब्राह्मणःसंस्कारोयासांतावेदोक्तसंस्कारवत्यः । अपरेऽर्वाचीनाऋषयःपरैःप्राचीनैःसृज्यंते १९



एवंप्रासंगिमीमांसत्वसंमतामनवस्थांनिवारयति आदीति अक्षयानाशहीना अव्ययाअपचयहीना यतोमानसीरज्जुरगवन्मनोमात्रजन्या नहिरज्जुरगोनश्यत्यपचीयतेवा अनुत्पन्नत्वात् धर्मतंत्रंयोगानुष्ठानंतदेवपरमयनंविलयस्थानंयस्याःसातथा २० ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनैलकंठीयेभारतभावदीपेअष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ ७ ॥ ॥ इत्येतैःकर्मभिर्व्यस्ताद्विजावर्णांतरंगताइत्युक्तंतत्प्रश्नपूर्वकंविवृणोति ब्राह्मणइत्यादिना १ जातकर्मादिभिरष्टाचत्वारिंशता । 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराःसब्राह्मणःसायुज्यतांसरूपतांगच्छति'इतिस्मृतेः षट्कर्माणि'संध्यास्नानंजपोहोमोदेवतानांचपूजनम् । आतिथ्यंवैश्वदेवंचषट्कर्माणिदिनेदिने'इति २ विघसंब्राह्मणादिभुक्तशेषंतद्देवाश्नातीतिविघसाशी ३ अथाद्रोहइत्यत्रतपोऽक्रोधइत्यपिपाठः आनृशंस्यंनैष्ठुर्याभावः त्रपालज्जा घृणाकारुण्यं ४ क्षत्रंहिंसातदर्थंजातंक्षत्रजंयुद्धात्मकंकर्म दानंविप्रेभ्यः आदानंप्रजाभ्यः ५ वणिज्यापशुरक्षा

आदिदेवसमुद्भूताब्रह्ममूलाक्षयाव्यया ॥ सासृष्टिर्मानसीनामधर्मतंत्रपरायणा २० ॥ इति श्रीमहाभारतेशां०मो०भृगुभर०वर्णविभागकथनेअष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ॥ भरद्वाजउवाच ॥ ब्राह्मणःकेनभवतिक्षत्रियोवाद्विजोत्तम ॥ वैश्यःशूद्रश्चविप्रर्षेतद्ब्रूहिवदतांवर १ ॥ भृगुरुवाच ॥ जातकर्मादिभिर्यस्तुसंस्कारैःसंस्कृतःशुचिः ॥ वेदाध्ययनसंपन्नःषट्सुकर्मस्ववस्थितः २ शौचाचारस्थितःसम्यग्विघसाशीगुरुप्रियः ॥ नित्यव्रतीसत्यपरःसवैब्राह्मणउच्यते ३ सत्यंदानमथाद्रोहआनृशंस्यंत्रपाघृणा ॥ तपश्चदृश्यतेयत्रसब्राह्मणइतिस्मृतः ४ क्षत्रजंसेवतेकर्मवेदाध्ययनसंगतः ॥ दानादानरतिर्यस्तुसवैक्षत्रियउच्यते ५ वणिज्यापशुरक्षाचकृष्यादानरतिःशुचिः ॥ वेदाध्ययनसंपन्नःसवैश्यइतिसंज्ञितः ६ सर्वभक्षरतिर्नित्यंसर्वकर्मकरोऽशुचिः ॥ त्यक्तवेदस्त्वनाचारःसवैशूद्रइतिस्मृतः ७ शूद्रेचैतद्भवेल्लक्ष्यंद्विजेतच्चनविद्यते ॥ नवैशूद्रोभवेच्छूद्रोब्राह्मणोनचब्राह्मणः ८ सर्वोपायैस्तुलोभस्यक्रोधस्यचविनिग्रहः ॥ एतत्पवित्रंज्ञानानांतथाचैवात्मसंयमः ९ वार्यौसर्वात्मनातौहिश्रेयोघातार्थमुच्छ्रितौ १० नित्यंक्रोधाच्छ्रियंरक्षेत्तपोरक्षेच्चमत्सरात् ॥ विद्यांमानापमानाभ्यामात्मानंतुप्रमादतः ११ यस्यसर्वेसमारंभानिराशीर्बंधनाद्विज ॥ त्यागेयस्यहुतंसर्वंसत्यागीचसबुद्धिमान् १२ अहिंस्रःसर्वभूतानांमैत्रायणगतश्चरेत् ॥ परिग्रहान्परित्यज्यभवेद्बुद्ध्याजितेंद्रियः ॥ अशोकंस्थानमातिष्ठेदिहचामुत्रचाभयम् १३ तपोनित्येनदांतेनमुनिनासंयतात्मना ॥ अजितंजेतुकामेनभाव्यंसंगेष्वसंगिना १४

चेत्यत्रविशत्याशुपशुभ्यश्चेतिपाठेपशुभ्यइतिल्यब्लोपेपंचमी । पशून्वाणिज्याद्युपयोगिनोलब्ध्वाविशतिप्रतितिष्ठांलभतेइत्यर्थः ६ । ७ शूद्रेचेति एतत्सत्यादिसप्तकं द्विजेत्रैवर्णिकेधर्मएववर्णविभागकारणंनजातिरित्यर्थः ८ तमेवब्राह्मण्यहेतुंधर्ममाह सर्वोपायैरित्यादिना तौक्रोधलोभौ सार्धःश्लोकः ९ । १० । ११ आशीःइष्टकाम्यातदेवबंधनंतद्वर्जितानिराशीर्बंधनाःसमारंभाःसम्यगारभ्यंतइतियज्ञादयः काम्यकर्मत्यागीत्यर्थः । हुतमग्नौब्राह्मणेवादत्तमग्निहोत्रनित्यश्राद्धादि । त्यागेफलत्यागनिमित्तं । 'सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाः'इति १२ अहिंस्रःअहिंसाशीलः मैत्रंमित्रभावस्तदेवायनंपरंमार्गःस्थानंतत्रगतः । अशोकंस्थानमात्मानमातिष्ठेत्आभिमुख्येनतिष्ठेत् आत्मध्यानपरोभवेदित्यर्थः सार्धःश्लोकः १३ संगेषुभेदमितिसंगहेतुपुत्रदारादिषु १४

एवंभूतस्यानुष्ठेयंयोगमाह इंद्रियैरिति इतिअव्यक्तमितिसंबंधः इतिअनेनप्रकारेणयदिंद्रियैर्गृह्यतेतदव्यक्तंतत्रविज्ञेयंसाक्षात्कर्तव्यंलिंगग्राह्यंलिंगंचतद्ग्राह्यंचेतिसूक्ष्मशरीरंयोगिदृश्यंचेत्यर्थः । यद्वा लोकदृष्ट्यानुमानगम्यं यतःअतींद्रियंइंद्रियागोचरं १५ अविस्रंभेअविश्वासेनिमित्तेसतिनगंतव्यंनप्राप्यं । अतःविस्रंभेएवगुरुवेदवाक्येषुयाथार्थ्यनिश्चयेमनोधारयेत् । अविस्रंभेणेतिसमूर्धन्यपाठेतु यथायोषितमग्निंवारयीतेत्यादौयोषित्स्वरूपमग्नित्वेनयद्द्रष्टव्यंतद्विश्वासेनैवनतुतत्रवस्तुतस्त्वंतथाऽस्ति इहतुअनुभववत्प्रमाणमित्यर्थः । एवंचसर्वाणींद्रियाणिप्रत्याहृत्यस्वप्नइवमनोमात्रेणावतिष्ठेतमनोऽपिप्राणेप्राणोपाधिकेजीवात्मनिशुद्धस्वंपदार्थेधारयेत् । तमपिब्रह्मणितत्पदलक्ष्येधारयेत् १६ एतच्चब्रह्मात्मनावस्थानंनिर्वाणाख्यंपदंयत्रकिंचिद्ध्येयध्यानध्यातृविभागंयोगीनचिंतयेत् । तन्निर्वेदात्परवैराग्यादेवप्राप्नोतीत्याह निर्वेदादिति । यदाहुर्योगभाष्यकाराःवैराग्यंप्रस्तूय एतस्यैवहिनांतरीयकंफलंकैवल्यमिति

इंद्रियैर्गृह्यतेयद्यत्तत्तद्व्यक्तमितिस्थितिः ॥ अव्यक्तमितिविज्ञेयंलिंगग्राह्यमतींद्रियम् १५ अविस्रंभेनगंतव्यंविस्रंभेधारयेन्मनः ॥ मनःप्राणेनिगृह्णीयात्प्राणंब्रह्मणिधारयेत् १६ निर्वेदादेवनिर्वाणंनचकिंचिद्विचिंतयेत् ॥ सुखंवैब्राह्मणोब्रह्मनिर्वेदेनाधिगच्छति १७ शौचेनसततंयुक्तःसदाचारसमन्वितः ॥ सानुक्रोशश्चभूतेषुतद्द्विजातिषुलक्षणम् १८ ॥ इतिश्रीमहाभारते शांति० मो० भृगुभरद्वाजसंवादेवर्णस्वरूपकथनेएकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ ॥ भृगुरुवाच ॥ ॥ सत्यंब्रह्मतपःसत्यंसत्यंविसृजतेप्रजाः ॥ सत्येनधार्यतेलोकःस्वर्गंसत्येनगच्छति १ अनृतंतमसोरूपंतमसानीयतेह्यधः ॥ तमोग्रस्तानपश्यंतिप्रकाशंतमसावृताः २ स्वर्गःप्रकाशइत्याहुर्नरकंतमएवच ॥ सत्यानृतंतदुभयंप्राप्यतेजगतीचरैः ३ तत्राप्येवंविधालोकेवृत्तिःसत्यानृतेभवेत् ॥ धर्माधर्मौप्रकाशश्चतमोदुःखंसुखंतथा ४ तत्रयत्सत्यंसधर्मोयोधर्मःसप्रकाशोयःप्रकाशस्तत्सुखमिति ॥ तत्रयदनृतंसोऽधर्मोयोऽधर्मस्तत्तमोयत्तमस्तद्दुःखमिति ५॥ अत्रोच्यते ॥ शारीरैर्मानसैर्दुःखैःसुखैश्चाप्यसुखोदयैः ॥ लोकसृष्टिंप्रपश्यंतोनमुह्यंतिविचक्षणाः ६ तत्रदुःखविमोक्षार्थंप्रयतेतविचक्षणः ॥ सुखंह्यनित्यंभूतानामिहलोकेपरत्रच ७ राहुग्रस्तस्यसोमस्ययथाज्योत्स्नानभासते ॥ तथातमोभिभूतानांभूतानांनश्यतेसुखम् ८

सुखंब्रह्मेत्यभेदेसामानाधिकरण्यं १७ संक्षेपेणयोगाधिकारिणंनिरूपयति शौचेनेति १८ ॥ इतिशांतिप० मो.क्ष० नी० भा० एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ शुक्लोब्राह्मणधर्मःकृष्णःशूद्रधर्मइतिप्रागुक्तंतत्रशुक्लकृष्णयोःस्वरूपेविविनक्ति सत्यमिति सत्यंसत्यवस्तुप्रापकं ब्रह्मवेदः तपःस्वधर्मानुष्ठानं सत्येनब्रह्मतपोरूपेण १ अनृतंतद्विपरीतमवैदिकंयथेष्टाचरणं प्रकाशंस्वर्गं तमःअविद्यादिरूपोविपर्ययस्तेनग्रस्ताः तमसामूलाज्ञानेन २ स्वर्गोदेवत्वं प्रकाशःसत्त्वप्राप्यः नरकंतिर्यक्त्वंतमोगुणेन सत्य.नृतंमानुषत्वंतदुभयामिश्रणेन ३ सत्यानृतेइतिधर्माधर्मौप्रकाशतमसीसुखदुःखेइतिसंबंधः ४ श्लोकंव्याचष्टे तत्रेति ५। ६ भूतानांसंसारिणांयत्सुखंपुत्रपरिष्वंगादिजंतदनित्यंअतःसुखार्थंनयतेत । किंतुदुःखस्योपाधिकस्यविमोक्षार्थमेवयतेत ७ तत्किंनित्यंसुखंनास्त्येवेत्याशंक्यसदपिनप्रकाशतइतिसदृष्टांतमाह राह्विति नश्यतेअंतर्हितंभवति ८



प्रवृत्तयःदृष्टादृष्टफलाःअभिधीयंतेवेदे नह्यतस्त्रिवर्गफलात्परं सत्त्वानित्यसुखमेव आरंभगुणविशेषस्तात्त्विकाभिमतः । धर्मार्थौगुणभूतौयस्यप्रधानभूतस्यसुखस्यतदर्थंआरंभआरभ्यतइतिगुणस्त्वाश्रमादिः अनुष्ठेयइतिशेषः । यतस्तद्धेतुःधर्महेतुःअस्यसुखस्योत्पत्तिरभिव्यक्तिः आरंभस्त्रिवर्गस्य राहुग्रस्तेंदुप्रकाशवत्सतोऽपितमसाअप्रकाशमानस्यसुखस्याभिव्यक्त्येसर्वोऽप्यारंभइत्यर्थः ९ सुखार्थआरंभइत्यत्रशंकते यदेतदिति सुखानांपरमास्थितिर्नित्यंसत्त्वं । सुखान्नपरमस्तीतिपाठांतरंनोपगृह्णीमोनित्यसुखस्यानुपलंभात् । अनित्यस्यसुखस्यतुच्छत्वमाह नहीति महतियोगश्वर्ये १० नित्यस्यसुखस्यानुपलंभेहेतुपूर्वपक्षस्यैवतन्निराकरोति अत्रोच्यतइत्यादिना अनृतावसत्त्वासत्त्वाभ्यामनिर्वचनीयादज्ञानात् । तमःअविद्याअनित्याशुचिदुःखरूपेषुदेहादिषुनित्यत्वशुचित्वसुखत्वबुद्धिरूपोविपर्यासः ११ अस्यविपर्यासस्याभावेनित्यंसुखंप्रकाशतइत्याह यस्त्वेतैरिति एतदेवस्वर्गपदाभिधेयमित्याह नचतइत्यादिना तस्मात्स्वर्गा

तत्खलुद्विविधंसुखमुच्यतेशारीरंमानसंच ॥ इहखल्वमुष्मिंश्चलोकेवस्तुंप्रवृत्तयःसुखार्थमभिधीयंतेनह्यतःपरंत्रिवर्गफलंविशिष्टतरमस्तिसएवकाम्योगुणविशेषोधर्मार्थगुणारंभस्तद्धेतुरस्योत्पत्तिःसुखप्रयोजनार्थआरंभः ९ ॥ भरद्वाजउवाच ॥ यदेतद्भवताऽभिहितंसुखानांपरमास्थितिरितिनतदुपगृह्णीमोनह्येषामृषीणांमहतिस्थितानामप्राप्यएषकाम्योगुणविशेषोनचैनमभिलषंतिचतपसिश्रूयतेत्रिलोककृद्ब्रह्माप्रभुरेकाकीतिष्ठति ॥ ब्रह्मचारीनकामसुखेष्वात्मानमवदधाति ॥ अपिचभगवान्विश्वेश्वरउमापतिःकाममभिवर्तमानमनंगत्वेनशममनयत् ॥ तस्माद्ब्रूमोनतुमहात्मभिरयंप्रतिगृहीतोनत्वेषांतावद्विशिष्टोगुणविशेषइति ॥ नैतद्भगवतःप्रत्येमिभगवतातूक्तंसुखान्नपरमस्तीतिलोकप्रवादोहिद्विविधःफलोदयःसुकृतात्सुखमवाप्यतेदुष्कृताद्दुःखमिति १० ॥ भृगुरुवाच ॥ अत्रोच्यते ॥ अनृतात्खलुतमःप्रादुर्भूतंततस्तमोग्रस्ताअधर्ममेवानुवर्ततेनधर्मम् ॥ क्रोधलोभहिंसाऽनृतादिभिरवच्छन्नानखल्वस्मिँल्लोकेनामुत्रसुखमाप्नुवंति ॥ विविधव्याधिरुजोपतापैरवकीर्यंते ॥ वधबंधनपरिक्लेशादिभिश्चक्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यंते ॥ वर्षवातात्युष्णातिशीतकृतैश्चप्रतिभयैःशारीरैर्दुःखैरुपतप्यंते ॥ बंधुधनविनाशविप्रयोगकृतैश्चमानसैःशोकैरभिभूयंतेजरामृत्युकृतैश्चान्यैरिति ११ यस्त्वेतैःशारीरमानसैर्दुःखैर्नसंस्पृश्यतेससुखंवेद ॥ नचैतेदोषाःस्वर्गेप्रादुर्भवंति तत्रखलुभवंति १२ सुसुखःपवनःस्वर्गेगंधश्चसुरभिस्तथा ॥ क्षुत्पिपासाश्रमोनास्तिनजरानचपापकम् १३ नित्यमेवसुखंस्वर्गेसुखंदुःखमिहोभयम् ॥ नरकेदुःखमेवाहुःसुखंतत्परमंपदम् १४ पृथिवीसर्वभूतानांजनित्रीतद्विधाःस्त्रियः ॥ पुमान्प्रजापतिस्तत्रशुक्रंतेजोमयंविदुः १५

र्थिनाप्रवृत्तिःसुखार्थैवेतियुक्तमुक्तंसुखान्नपरमस्तीति १२ । १३ । १४ ऐहिकंसुखंतुच्छीकृत्ययथास्वर्गार्थंसर्वेबुद्धिमंतःप्रवर्ततेएवंस्वर्गमपिक्षयिष्णुत्वेनतुच्छीकृत्यबुद्धिमत्तरामोक्षसुखार्थंयतंतइत्याह पृथिवीति सर्वभूतानांजनित्रीअविद्यापृथिवीवपृथिवीसर्वेषांक्लेशानांक्षेत्रभूतायथाऽत्रानुभूयतेतद्विधाअनंतक्लेशसंतातिक्षेत्रभूतास्तत्रस्वर्गेस्त्रियःसंति । यथाऽत्रपुमानविद्यावाननेकक्लेशभाजनंतथातत्रप्रजापतिः । 'तस्यापिसोऽबिभेत् सनारमत प्रजापतिर्वैस्वांदुहितरमभ्यध्यायत्तस्यरुद्रःशिरोऽहरत् मधुकैटभौतंहंतुमुद्यतौ यक्षराक्षसास्तंयभितुमुद्यताः'इत्यादिश्रुतिस्मृतिभिस्तस्यापिभयारत्यादिप्रतिपादनात् । एतावांस्तुविशेषः अत्रशुक्रंजन्मांतरबीजवासनाजालंपुण्यापुण्यमयम् । तत्रतुतेजोमयंकेवलंपुण्यमयमिति । एवंचनिरुपाधिसुखमेवपरमःपुरुषार्थोनस्वर्गइतिसाधयतामोक्षस्यनिर्विषयसुखात्मत्वमुक्तम् १५

१९ ॥ इतिशांतिपर्वणीमोक्षपर्वणी नीलकंठीयेभारतभावदीपे नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ७ ॥ एवमनृतात्सत्ततमःप्रादुर्भूतमित्यादिग्रंथश्रवणेनदुःखादुद्विग्नोमोक्षंचदुर्लभंमन्वा नश्चित्तशुद्धिद्वारामोक्षप्रापकंपुण्यमेवश्रेयइतिनिश्चिन्वंस्तद्विशेषफलानिपृच्छतिसारासारविवेकार्थं दानस्येत्यादिना दानस्यदानरूपस्यधर्मस्येत्येकःप्रश्नः १ शांतिरुपरतिः २ । ३ । ४ कस्याधिकारिणःकिंरूपंधर्माचरणं ५ स्वधर्मोवर्णाश्रमनियतधर्मस्तस्याचरणेयुक्ता अवहिताः योऽन्यथाविपरीताचारःसविमुह्यते ६ स्वोचितमेवधर्मंपृच्छति यदिति चतुर्णामाश्रमाणांधर्मश्चातु अ०

॥ ५४ ॥ इत्येतल्लोकनिर्माणंब्रह्मणाविहितंपुरा ॥ प्रजाःसमनुवर्ततेस्वैःस्वैःकर्मभिरावृताः ॥ १६ ॥ ॥ इतिश्रीमहाभारतेशांति०मोक्ष०भृगुभरद्वाजसंवादेनवत्यधिकशत
तमोऽध्यायः ॥ १९० ॥ ॥ भरद्वाजउवाच ॥ ॥ दानस्यकिंफलंप्राहुर्धर्मस्यचरितस्यच ॥ तपसश्चसुतप्तस्यस्वाध्यायस्यहुतस्यवा १ ॥ भृगु ॥१९१॥
रुवाच ॥ हुतेनशाम्यतेपापंस्वाध्यायैःशांतिरुत्तमा ॥ दानेनभोगानित्याहुस्तपसास्वर्गमाप्नुयात् २ दानंतुद्विविधंप्राहुःपरत्रार्थमिहैवच ॥ सद्भ्योयद्दीयतेकिंचि
त्तत्परत्रोपतिष्ठते ३ असद्भ्योदीयतेयत्तुतद्दानमिहभुज्यते ॥ यादृशंदीयतेदानंतादृशंफलमश्नुते ४ ॥ ॥ भरद्वाजउवाच ॥ ॥ किंकस्यधर्माचरणंकिंवाधर्म
स्यलक्षणं ॥ धर्मःकतिविधोवाऽपितद्भवान्वक्तुमर्हति ५ ॥ भृगुरुवाच ॥ स्वधर्माचरणेयुक्तायेभवंतिमनीषिणः ॥ तेषांस्वर्गफलावाप्तिर्योऽन्यथासविमुह्यते ६
॥ भरद्वाजउवाच ॥ यदेतच्चातुराश्रम्यंब्रह्मर्षिविहितंपुरा ॥ तेषांस्वेस्वेसमाचारास्तान्मेवक्तुमिहार्हसि ७ ॥ भृगुरुवाच ॥ पूर्वमेवभगवताब्रह्मणालोकहितमनु
तिष्ठताधर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः ॥ तत्रगुरुकुलवासमेवप्रथममाश्रममुदाहरंति ॥ सम्यगत्रशौचसंस्कारनियमव्रतविनियतात्माउभेसंध्येभास्क
राग्निदैवतान्युपस्थायविहायतंद्राऽऽलस्येगुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतांतरात्मात्रिषवणमुपस्पृश्यब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यभिक्षाभैक्ष्या
दिसर्वनिवेदितांतरात्मागुरुवचननिर्देशानुष्ठानाप्रतिकूलोगुरुप्रसादलब्धस्वाध्यायतत्परःस्यात् ८ ॥ भवतिचात्रश्लोकः ॥ गुरुंयस्तुसमाराध्यद्विजोवेदमवाप्नुया
त् ॥ तस्यस्वर्गफलावाप्तिःसिध्यतेचास्यमानसमिति ९ गार्हस्थ्यंखलुद्वितीयमाश्रमंवदंति ॥ तस्यसमुदाचारलक्षणंसर्वमनुव्याख्यास्यामः ॥ समावृत्तानांस
दाचाराणांसहधर्मचर्यफलार्थिनांगृहाश्रमोविधीयते ॥ धर्मार्थकामावाप्तिर्ह्यत्रत्रिवर्गसाधनमपेक्ष्यागर्हितेनकर्मणाधनान्यादायस्वाध्यायोपलब्धप्रकर्षेणवाब्रह्मर्षि
निर्मितेनवाअद्रिसारगतेनवा ॥ हव्यकव्यनियमाभ्यासदैवतप्रसादोपलब्धेनवाधनेनगृहस्थोगार्हस्थ्यंवर्तयेत् ॥ तद्धिसर्वाश्रमाणांमूलमुदाहरंति ॥ गुरुकुलनिवा
सिनःपरिव्राजकायेचान्येसंकल्पितव्रतनियमधर्मानुष्ठायिनस्तेषामप्यतएवभिक्षाबलिसंविभागाःप्रवर्तंते १०

राश्रम्यं तपामाश्रमाणां ७ तंद्रघर्षनिद्रा आल स्यमनुद्योगः अभ्यासोऽक्षरग्रहणं श्रवणंतदर्थविचारः ८ मानसमनःसिध्यतेसत्यसंकल्पादिसिद्धिमाप्नोति ९ सम्यगुदितआचारःसमुदाचारस्तस्यलक्षणं । समावृत्तानांसमापितगुरुकुलवासानां स्नातकानां सहधर्मचर्यंसहोभौचरतांधर्ममितिदंपत्योःसहाधिकारिकंधर्मंतच्चर्याफलंपुत्रजन्मप्रकर्षोयथाउषस्तस्यचाक्रायणस्यसर्वैर्ब्राह्मणैरज्ञाताःप्रस्तावादिदेवताउपदिशतोराज्ञासर्वर्त्विकुल्यद क्षिणाप्रदानहेतुः । निर्मितंयाजनमध्यापनंप्रतिग्रहश्च । अद्रिसारामणिदिव्यौषधिस्वर्णाद्याकारास्तेभ्योप्रलब्धेनप्राप्तेन । भिक्षाऽतिथिभ्यः । बलिर्भूतोहोमः । संविभागःपुत्रादिभ्योविभजनं १० ॥ ५४ ॥

द्रव्योपस्कारोधनवर्जनं द्रव्योपस्करइतिपाठेद्रव्याणांफलमूलनीवारादीनामुपस्करःसंपादनं सुखशक्यासुखवत्याशक्त्यानतुदेहपीडयासत्क्रियापकर्तव्येतिशेषः ११ । १२ निवापेनपितृतर्पणेन १३ । १४ । १५ अपिचात्रवात्सल्यादिधर्मेमाल्यादिकाभःसंकल्पसमकालंसिद्धयतीत्यर्थः १६ त्रिवर्गोधर्मार्थकामास्तैःसहितागुणानांसत्वरजस्तमसांनिर्वृत्तिःकृतार्थता मुक्तिहेतोःसत्वपुरुषान्य

वानप्रस्थानांचद्रव्योपस्कारइतिप्रायशःखल्वेतेसाधवःसाधुपथ्यौदनाःस्वाध्यायप्रसंगिनस्तीर्थाभिगमनदेशदर्शनार्थंपृथिवींपर्यटंतितेषांप्रत्युत्थानाभिगमना
भिवादनानसूयवाक्प्रदानसुखशक्त्यासनसुखशयनाभ्यवहारसत्क्रियाचेति ११ भवतिचात्रश्लोकः ॥ अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिवर्तते ॥ सदत्वादुष्कृ
तंतस्मैपुण्यमादायगच्छति १२ अपिचात्रयज्ञक्रियाभिर्देवताःप्रीयंते निवापेनपितरोविद्याभ्यासश्रवणधारणेनऋषयः अपत्योत्पादनेनप्रजापतिरिति
१३ श्लोकौचात्रभवतः ॥ वात्सल्यात्सर्वभूतेभ्योवाच्याःश्रोत्रसुखागिरः ॥ परितापोपघातश्चपारुष्यंचात्रगर्हितम् १४ अवज्ञानमहंकारोदंभश्चैवविगर्हितः ॥
अहिंसासत्यमक्रोधःसर्वाश्रमगतंतपः १५ अपिचात्रमाल्याभरणवस्त्राभ्यंगनित्योपभोगनृत्यगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानांप्राप्तिर्भक्ष्यभोज्यलेह्यपे
यचोष्याणामभ्यवहार्याणांविविधानामुपभोगःस्वविहारसंतोषःकामसुखावाप्तिरिति १६ त्रिवर्गगुणनिर्वृत्तिर्यस्यनित्यंगृहाश्रमे ॥ ससुखान्यनुभूयेहशिष्टानांग
तिमाप्नुयात् १७ उंछवृत्तिर्गृहस्थोयःस्वधर्माचरणेरतः ॥ त्यक्तकामसुखारंभःस्वर्गस्तस्यनदुर्लभः १८ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिभृगुभरद्वा
जसंवादेएकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ॥ भृगुरुवाच ॥ वानप्रस्थाःखल्वपिधर्ममनुसरंतःपुण्यानितीर्थानिनदीप्रस्रवणानिसुविविक्तेष्वरण्येषुमृग
महिषवराहशार्दूलवनगजाकीर्णेषुतपस्यंतोऽनुसंचरंतित्यक्तग्राम्यवस्त्राभ्यवहारोपभोगावन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराःस्थानासनिनोभूमि
पाषाणसिकताशर्करावालुकाभस्मशायिनः काशकुशचर्मवल्कलसंवृतांगाः केशश्मश्रुनखरोमधारिणोनियतकालोपस्पर्शना अस्कंदितकालबलिहोमानुष्ठा
यिनःसमित्कुशकुसुमापहारसंमार्जनलब्धविश्रामाः शीतोष्णवर्षपवनविष्टंभविभिन्नसर्वत्वचो विविधनियमोपयोगचर्यानुष्ठानविहितपरिशुष्कमांसशोणितत्वग
स्थिभूताधृतिपराःसत्वयोगाच्छरीराण्युद्वहंते १ यस्त्वेतांनियतश्चर्यांब्रह्मर्षिविहितांचरेत् ॥ सदहेदग्निवद्दोषान्जयेल्लोकांश्चदुर्जयान् २

१९ ताख्यातेर्जननान्नष्टाधिकारत्वेत्यर्थः शिष्टानांतत्त्वमसीत्यादिवाक्यैर्गुरुभिरनुशिष्टानां १७ उंछःकणशआदानंतेनवृत्तिर्जीवनमस्य कामसुखमारंभाश्चेतिद्वंद्वः १८ ॥ ॥ इतिशांतिपर्वणि मो०नीलकंठीयेभारतभावदीपेएकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥ ॥ सिकताःसूक्ष्मपाषाणपांसवः शर्कराःकर्करसहितामृद् वालुकाःलघूपलमिश्राः सिकतादयउपस्पर्शनंस्नानं बलिर्भूमावाहुतिः होमोवह्नौबलिहोमयोःकालेऽनुष्ठायिनः विष्टंभोहेलनयासहनं नियमःपंचाग्न्यादिसाधनं उपयोगआहारसंकोचः चर्यापर्यटनं त्रिदिवंविधानम् १ । २

परिव्राजकानामिति परिबर्हणंशय्यादिभोगसामग्री ३ । ४ कृत्वेति आत्मन्यग्नीन्समारोप्याऽग्निमुद्दिश्यस्वमुखेहविर्भिर्जुहोतिहोमंकुर्यात् । चिताग्निर्नाधिरग्निचयनंकृतंमुनिर्निर्द्वंदस्तेषांलोकंप्राजाप त्यपदं यद्वा स्वशरीरसंस्थमग्निहोत्रंप्राणाग्निहोत्रंभैक्ष्योपगतैर्हविर्भिःकृत्वेतिसंबंधः भिक्षुर्भूत्वेत्यर्थः । शारीरंशरीरस्थं अग्निमिवप्रकाशमानंजीवं स्वमुखेनिर्ममस्थानेपरमात्मनिजुहोतिजीवं ब्रह्मणिप्रविलापयतियोगंकरोतीत्यर्थः । सवितानांनष्टानामग्निनां ऽहस्वत्वमार्षं लोकमव्यक्तभावं भूयतेच 'यथानिरिंधनोवह्निःस्वयोनावुपशाम्यति । तथावृत्तिक्षयेचित्तंस्वयोनावुपशाम्यति'इति उक्तंच ।'शकुनीनामिवाकाशेपदंनदृश्यते'इति । चिशतोनीशार्थेस्त्यंयोवैभागिनंभागाद्नुदतेचयतेवैनंसयदिवैनंनचयतेऽथपुत्रमथपौत्रंचयतइत्यादौदृष्टं चयतेक्षिणोति ५ एवदेवाह मोक्षेति सुतरांसंकल्पितमुक्तासंकल्पहीनाबुद्धिर्यस्य ब्रह्मैवलोकोब्रह्मलोकस्तं ६ एवंससाधनांब्रह्मविद्यांश्रुत्वाब्रह्मसाक्षात्कारोपायंजिज्ञासमानःपृच्छति अस्मादिति परोलोकःपरमात्मा ज्ञातुं साक्षात्कर्तुं ७ उत्तरेइति अत्रेदमवधेयं किमिहश्रौतोहिमवदुत्तरभागएवपरलोकत्वेनप्रतिपाद्यतेउतश्रुतिप्रसिद्धःपरमात्मेति । तत्रश्रौतार्थलाभेसंभवतिलाक्षणिकार्थस्याग्राह्यत्वात् । स्वर्गसदृशःपुण्यकृज्जनप्राप्योभूभागएवआश्रमत्रयधर्मफलस्योपसंहार्यत्वादितिप्राप्तेब्रूमः । 'अनिधनंज्योतिरिवप्रशांतंसब्रह्मलोकंश्रयतेमनुष्यः'इत्येतद्वाक्यसमनंतरमुत्थितयोःप्रश्नोत्तरयोर्ब्रह्मविद्या

परिव्राजकानांपुनराचारः ॥ तद्यथा विमुच्याग्निधनकलत्रपरिबर्हणंसंगेष्वात्मनःस्नेहपाशानवधूयपरिव्रजंतिसमलोष्टाश्मकांचनास्त्रिवर्गप्रवृत्तेष्वसक्तबुद्धयोऽरिमित्रोदासीनानांतुल्यदर्शनाः स्थावरजरायुजांडजस्वेदजोद्भिज्जानांभूतानांवाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूलदेवतायतनान्यनुचरंतोवासार्थमुपेयुर्नगरंग्रामंवा नगरेपंचरात्रिकाःग्रामेचैकरात्रिकाः प्रविश्यचप्राणधारणार्थंद्विजातीनांभवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः पात्रपतितायाचितभैक्ष्याः कामक्रोधदर्पलोभमोहकार्पण्यदंभपरिवादाभिमानहिंसानिवृत्ताइति ३॥ भवंतिचात्रश्लोकाः ॥ अभयंसर्वभूतेभ्योदत्वायश्चरतेमुनिः ॥ नतस्यसर्वभूतेभ्योभयमुत्पद्यतेकचित् ४ कृत्वाऽग्निहोत्रंस्वशरीरसंस्थंशारीरमग्निंस्वमुखेजुहोति ॥ विप्रस्तुभैक्ष्योपगतैर्हविर्भिश्चिताग्निनांसोव्रजतेहिलोकम् ५ मोक्षाश्रमंयश्चरतेयथोक्तंशुचिःसुसंकल्पितमुक्तबुद्धिः ॥ अनिंधनंज्योतिरिवप्रशांतंसब्रह्मलोकंश्रयतेमनुष्यः ६ ॥ भरद्वाजउवाच ॥ अस्माल्लोकात्परोलोकःश्रूयतेनोपलभ्यते ॥ तमहंज्ञातुमिच्छामितद्भवान्वक्तुमर्हति ७ ॥ भृगुरुवाच ॥ उत्तरेहिमवत्पार्श्वेपुण्येसर्वगुणान्विते ॥ पुण्यःक्षेम्यश्चकाम्यश्चसपरोलोकउच्यते ८

प्रकरणस्थयोस्तत्परत्वेसंभवत्यसन्निहितप्रकृतप्राचीनाश्रमत्रयधर्मफलोपसंहारपरत्वकल्पनंनयुज्यते । तेषांतत्रतत्रतस्यस्वर्गफलावाप्तिः सिध्यतेचास्यमानसमितिस्वर्गस्तस्यनदुर्लभइति'सर्वहेदाग्निवदोषान्नजयेल्लोकांश्चदुर्जयान्'इतिफलस्योपसंहारेणतदनपेक्षणात् ततश्चानर्थक्यप्रविहतानांविपरीतंबलाबलमितिन्यायेनसन्निधिप्रकरणाभ्यांश्रुतिरेवबाध्यते । यथाआकाशस्तल्लिंगादित्यत्रसर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंतेइतिसर्वभूतोत्पादिलिंगाद्वाकाशश्रुतिर्भूताकाशपराऽपिब्रह्मपरतयाव्यवस्थाप्यतेतद्वदिहापिद्रष्टव्यं । नचपूर्वानुसंधानमंत्रवदितउत्कृष्टस्यास्ययोग्यतयाप्राचीनाश्रमत्रयधर्मफलत्वेनान्वयोपविष्यतीतियुक्तं । प्रकरणानुगुणार्थसमर्पकत्वेसंभवत्युत्कर्षायोगात् तस्मादन्यार्थत्वेसत्यन्यार्थतयाप्रतीयमानमेतत्प्रश्नोत्तरमितिव्यासकष्टमवहितहृदयैरालोचनीयमितिदिक् श्रुतियुक्तिभ्यांज्ञातोऽपिपरमात्मानसाक्षात्क्रियतेइतितत्साक्षात्कारोपायंब्रूहीतिप्रार्थितोभृगुराह उत्तरेइति उत्तरेआत्मोपलब्धिस्थानत्वादुत्कृष्टतरेहिमवत्पार्श्वेहिमवत्तुल्योऽन्यत्रमेरुशब्दोदितोनासावंशस्तस्यपार्श्वेसमीपेभ्रूघ्राणमध्ये पुण्येबहुपुण्यगम्ये । सर्वैर्गुणैरमणीयत्वादिभिर्युतेदेशेपुण्यःअपहतपाप्मात्क्षेम्यःसत्यकामःसत्यसंकल्पःकाम्यःसर्वकामोपभोगयोग्यश्चपरोलोकःपरमात्माऽस्तीत्युच्यते । तथाहिमंत्रशास्त्रेभ्रूमध्यदेशस्यरम्यत्वादिकमुक्तं । 'हिमकूपोद्भवोर्मध्येमेरुस्तिष्ठतिपर्वतः ॥ तस्याभितोमहीपार्श्वेपंचाशत्कोटियोजना ॥-

-लवणेक्षुसुरासर्पिर्दधिक्षीरजलात्मभिः ॥ सिंधुभिःसप्तभिर्द्वीपैस्तत्संख्यैर्द्विगुणोत्तरैः ॥ मंदरःपारियात्रश्च'इत्यादिना । श्रुतावपि यएषोऽनंतो व्यक्तआत्मातंकथमहंविजानीयामित्युपक्रम्यसोऽविमुक्तेप्रतिष्ठितःसोविमुक्तःकस्मिन्प्रतिष्ठितइत्यादिनाभ्रुवोर्घ्राणस्यचयःसंधिरित्यंतेनतस्यदेशस्यनिरुपाधिब्रह्मव्यापकविमुक्ताख्यसोपाधिकब्रह्मस्थानत्वोक्तेः । सोपाधिकब्रह्मगुणाश्च'यआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासःसत्यकामःसत्यसंकल्पः'इतिश्रुतिप्रसिद्धाः । तदिदमुक्तंहिमवत्पार्श्वेपरोलोकइति ८ तत्रेति अपापकर्मत्वादिगुणचतुष्टयवंतोमानवास्तत्रगताःसंतोनिरुपद्रवाभवंतीतियोजना तथाचश्रुतिः । 'तंवाएतंसेतुंतीर्त्वांऽधःसन्ननंधोभवत्युपतापीसन्ननुपतापीभवति'इति सेतुमात्मानं तीर्त्वाप्राप्यसमाधिकाले ९ तत्रकालेइतिसंबंधः अमृत्युरात्मासमाधिकालेप्रभवतिईश्वरोभवति । संकल्पादेवास्यपितरःसमुत्तिष्ठंतीतितस्यसत्यसंकल्पत्वश्रवणात् । अतएवचानन्याधिपतिरितिसूत्राच्च सत्यसंकल्पत्वादेवविद्वाननन्याधिपतिरस्यईश्वरोऽन्योनास्तिकिंत्वयमेवसर्वेश्वरइतिसूत्रार्थः । अतएवसदेशःहिमवत्पार्श्वाख्योभ्रुवोर्मध्यदेशःस्वर्गसदृशः सत्यसंकल्पादिगुणाविर्भावसाम्यात् । निरुपद्रवाइत्यस्यविवरणंव्याधयोनस्पृशंतीति १० आत्ममिथुनआत्मक्रीडाआत्मरतिरित्यादिश्रुतेरर्थसंगृह्णाति नलोभइति परेअनात्मभूताश्चतेदाराश्चेतिसमासः । स्वआत्मैवदारास्तत्रनिरतः यतःअजनःबाधितबाह्यलोकःनान्योन्यंबध्यते तत्रभेदाभावात् द्रव्येषुसंकल्पमात्रोपनतेषुनविस्मयआश्चर्यबुद्धिर्नास्ति इदंसर्वंयदयमात्मेत्यादिश्रुतिभ्यःसर्वस्याऽत्ममात्रत्वावधारणात् द्वितः तत्रपरोऽनात्मभूतःअध

तत्रह्यपापकर्माणःशुचयोत्यंतनिर्मलाः ॥ लोभमोहपरित्यक्तामानवानिरुपद्रवाः ९ सस्वर्गसदृशोदेशस्तत्रह्युक्ताःशुभागुणाः ॥ कालेमृत्युःप्रभवतिस्पृशंतिव्याधयोनच १० नलोभःपरदारेषुस्वदारनिरतोजनः ॥ नान्योन्यंवध्यतेतत्रद्रव्येषुचनविस्मयः ॥ परोह्यधर्मोनैवाऽस्तिसंदेहोनापिजायते ११ कृतस्यतुफलंतत्रप्रत्यक्षमुपलभ्यते ॥ पानासनाशनोपेताप्रासादभवनाश्रयाः १२ सर्वकामैर्वृताःकेचिद्धेमाभरणभूषिताः ॥ प्राणधारणमात्रंतुकेषांचिदुपपद्यते १३ श्रमेणमहताकेचित्कुर्वंतिप्राणधारणम् ॥ इहधर्मपराःकेचित्केचिन्नैकृतिकानराः ॥ सुखितादुःखिताःकेचिन्निर्धनाधनिनोऽपरे १४ इहश्रमोभयंमोहःक्षुधातीव्राचजायते ॥ लोभश्चार्थकृतोनॄणांयेनमुह्यंत्यपंडिताः १५ इहवार्ताबहुविधाधर्माधर्मस्यकारिणः ॥ यस्तद्वेदोभयंप्राज्ञःपाप्मनानसलिप्यते १६

र्मःअनृतादिर्नास्ति एवंब्रह्मलोकंनर्विदस्यनृतेनाहिप्रत्यूढाइतिश्रुतेरनृतस्याज्ञानस्यतत्पिधायकत्वादनृतामावेएवतदाविर्भावसंभवात् । संदेहःकिंदेहादिरात्माउताऽन्योऽन्योऽपिकर्ताऽकर्तावाअकर्ताऽपिएकोऽनेकोवेत्येवंरूपःसंशयःनजायते । तत्त्वापरोक्षीकरणाच्छिद्यंतेसर्वसंशयाइतिश्रुतेः ११ कृतस्याऽनुष्ठितस्ययोगस्यकर्ममात्रस्यवा एनंसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतीतिब्रह्मविद्यायांसर्वकर्मफलांतर्भावश्रवणात् १२ सर्वकामैरितिसार्धश्लोकद्वयमेकंवाक्यं इहाऽस्मिन्भुवोःसंधौस्थिताःकेचिद्योगिनःसर्वकामैर्वृताआवृताःसंतोभुञ्जतेवर्ततइतिभावः प्राणेपरमात्मनिधारणंसर्वेषांकामानांप्रविलापनंतन्मात्रमेवकेषांचिद्दिव्यभोगेऽपिविरक्तानामुपपद्यतेयुज्यतेनतुकामभोगः १३ बध्यमानांत्वेतत्क्लेशसाध्यमित्याह श्रमेणेति केचिद्योगैश्वर्यंप्राप्यधर्मपराव्यासनारदादयः परोपकारार्थंवहितेषांसिद्धिर्नस्वभोगाय । केचिन्नैकृतिकाआत्मवंचनपराबाह्यभोगेष्वयोगजंधर्मंनाशयंतः । अतएवान्येधर्मपराःसुखितानैकृतिकास्तुदुःखिताः यतोनिर्धनाःक्षीणपुण्याः । अपरेधर्मपरास्तुधनिनोयोगजधर्मेणपरोपकारजंवर्मधनंवर्धयंतः १४ इहेति नैकृतिकानामिहलोकेश्रमादिकंभवतीत्यर्थः १५ वार्ताःकुशलाःधर्माधर्मस्यधर्माधर्मयोरितिपूर्वेणसहसार्धश्लोकः । यइति उभयंधर्माधर्मावुपादेयहेयतयावेद १६

सोपधंसदंमं १७ तपोयोगजवर्मः १८ तस्मादिहैवधर्माधर्मविचारःकार्यइत्याहसार्धेन इहेति चिंताविचारः तमेवाह कर्मेति १९ इहमाप्ततमंतपोयेषां ब्रह्मलोकंहिमवत्पार्श्वे २० तत्रैवतत्रैवजायंतेआविर्भवंति २१ सत्कारंयोगेआदरंऋच्छंतिप्राप्नुवंति अन्यथादोषमाह तिर्यगिति २२ इहेवसंसारे उत्तरांदिशंहिमवत्पार्श्वे २३ योगकलालामेसदाऽऽचार्यएवशरणीकरणीयः । 'आचार्यवान् पुरुषोवेद नैषातर्केणमतिरापनेया'इत्यादिश्रुतिभ्यइत्याह येगुरूनिति नियताःशमदमोपरत्यादियुक्ताः । ब्रह्मचारिणःब्रह्मण्येवचारःकायवाङ्मनसांप्रवृत्तिर्येषां । पंथानंगमनागमनमार्गं । सगुणं ब्रह्मनिर्गुणवस्तुप्राप्तिद्वारंजानंति २४ ब्रह्मनिर्मितोवेदप्रकाशितः धर्माधर्मौलोकस्यकर्तव्याकर्तव्यार्थौ २५ विस्मितःप्रत्यगद्वैतश्रवणेन २६ एवप्रत्यगात्माजगतःप्रसवःकारणं निखिलेनसाकल्ये

सोपधंनिकृतिस्तेयंपरीवादोह्यसूयिता ॥ परोपघातोहिंसाचपैशुन्यमनृतंतथा १७ एतानासेवतेयस्तुतपस्तस्यप्रहीयते ॥ यस्त्वेतान्नाचरेद्विद्वांस्तपस्तस्यप्रवर्धते १८ इहचिंताबहुविधाधर्माधर्मस्यकर्मणः ॥ कर्मभूमिरियंलोकेइहकृत्वाशुभाशुभम् ॥ शुभैःशुभमवाप्नोतितथाऽशुभमथान्यथा १९ इहप्रजापतिःपूर्वंदेवाःसर्षिगणास्तथा ॥ इष्टेष्टतपसःपूताब्रह्मलोकमुपाश्रिताः २० उत्तरःपृथिवीभागःसर्वपुण्यतमःशुभः ॥ इहस्थास्तत्रजायंतेयेवैपुण्यकृतोजनाः २१ यदिसत्कारमृच्छंतितिर्यग्योनिषुचापरे ॥ क्षीणायुषस्तथाचान्येनश्यंतिपृथिवीतले २२ अन्योन्यभक्षणासक्तालोभमोहसमन्विताः ॥ इहैवपरिवर्ततेनतेयांत्युत्तरांदिशम् २३ येगुरून्पर्युपासंतेनियताब्रह्मचारिणः ॥ पंथानंसर्वलोकानांविजानंतिमनीषिणः २४ इत्युक्तोऽयंमयाधर्मःसंक्षिप्तोब्रह्मनिर्मितः ॥ धर्माधर्मौहिलोकस्ययोवैवेत्तिसबुद्धिमान् २५ ॥ भीष्मउवाच ॥ इत्युक्तोभृगुणाराजन्भरद्वाजःप्रतापवान् ॥ भृगुंपरमधर्मात्माविस्मितःप्रत्यपूजयत् २६ एषतेप्रसवोराजन्जगतःसंप्रकीर्तितः ॥ निखिलेनमहाप्राज्ञकिंभूयःश्रोतुमिच्छसि २७ ॥ ॥ इतिश्री० शांति० मोक्ष० भृगुभरद्वाजसंवादेद्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ युधिष्ठिरउवाच ॥ आचारस्यविधिंतातप्रोच्यमानंत्वयाऽनघ ॥ श्रोतुमिच्छामिधर्मज्ञसर्वज्ञोह्यसिमेमतः १ ॥ भीष्मउवाच ॥ दुराचारादुर्विचेष्टादुष्प्रज्ञाःप्रियसाहसाः ॥ असंतस्त्वितिविख्याताःसंतश्चाचारलक्षणाः २ पुरीषंयदिवामूत्रंयेनकुर्वंतिमानवाः ॥ राजमार्गेगवांमध्येधान्यमध्येचतेशुभाः ३ शौचमावश्यकंकृत्वादेवतानांचतर्पणम् ॥ धर्ममाहुर्मनुष्याणामुपस्पृश्यनदींतरेत् ४ सूर्यंसदोपतिष्ठेतनचसूर्योदयेस्वपेत् ॥ सायंप्रातर्जपेत्संध्यांतिष्ठन्पूर्वांतथेतराम् ५ पंचार्द्रोभोजनंभुंज्यात्प्राङ्मुखोमौनमास्थितः ॥ ननिंद्यादन्नभक्ष्यांश्चस्वादुस्वादुचभक्षयेत् ६

नसंकीर्तितः । 'परैरदर्शितःपंथाःश्रुतियुक्तिबलान्मया ॥ यथाकथंचिदुन्नीतःपंडिताःशोधयंतुतम्' २७ ॥ इतिशांतिपर्वणिमोक्षपर्वणि नीलकंठीये भारतभावदीपे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥ ॥ ७ ॥ ॥ संक्षेपेणप्रागुक्तमाचारंयोगंचविस्तरेणप्रतिपादयितुमध्यायत्रयमारभ्यते आचारस्यविधिंतातेत्यादि १ आचारोलक्षणंज्ञापकंयेषां यतआचारंजिज्ञाससेऽतःसाधुरसीतिभावः २ । ३ शौचंकृत्वाउपस्पृश्यआचम्यनदींतरेदवगाहेत ततस्तर्पणमितिसंबंधः ४ जपेत्सावित्रीं संध्यामुपलक्ष्यतिष्ठन्नुपतिष्ठेतचस्वगृह्योक्तैर्मंत्रैः इतरांपश्चिमाम् ५ पंचपादौपाणीमुखंचेतिपंचआर्द्राणियस्य भोजनमन्नं अन्नभक्ष्यान्ओदनमपूपादींश्च ६

आर्द्रपाणिः कृतोत्तरापोशनइत्यर्थः नार्द्रपाणिरित्यपपाठः ७ शुचिंदेशंयज्ञादिशालां चैत्यंदेवतायतनं ८ सामान्यंसाधारणं पाकभेदंनकुर्यादित्यर्थः ९ तथाकुर्वन्यथाकालभोजीउपवासफलंलभेतेत्यर्थः १० । ११ ब्राह्मणभुक्तावशिष्टंमातृवद्धृदयमिवहितकरंकृतंधात्रातद्येउपासतेतेसत्यंब्रह्मसमासतेआसादयंति आहारशुद्धौसत्त्वशुद्धिःसत्त्वशुद्धौध्रुवास्मृतिः स्मृतिलंभेसर्वग्रंथीनांविप्रमोक्षइतिक्रमेणआहारशुद्धेर्ब्रह्मप्रापकत्वश्रुतेः १२ शंकुशुकःकीलबद्धशुकवत्पराधीनोवृथापंडितोवा । इत्यादिपाठेसंश्लेषकः कामलोभादिवशः कुशकुससंश्लेषणार्थौदेवादिकौ इत्यद्वयवानेवमुख्यःपाठः । संकुसुकोविकुसुकइतिमंत्रवर्णात् । अस्थिरःपापोवा यद्वाऽमृतंब्राह्मणोच्छिष्टमित्यस्यप्रशंसार्थंहिसामयंयागादिकर्मनिंद्यते लोष्टेति लोष्टमर्दीयज्ञियवेदिकरणार्थं । तृणच्छेदीबर्हिराहरणार्थं । नखखादीनखैश्छित्त्वाछित्त्वायज्ञशेषंमांसंखादतीतितथा नित्योच्छिष्टंनित्यसोमपानं । 'पितापितामहोवापिसोमंयस्यनपीतवान् ॥सवैदुर्ब्राह्मणोनाम'इत्युक्तेः तेनउच्छिष्टःसोमपायी संकु

आर्द्रपाणिःसमुत्तिष्ठेन्नार्द्रपादःस्वपेन्निशि ॥ देवर्षिर्नारदःप्राहएतदाचारलक्षणम् ७ शुचिंदेशमनड्वाहंदेवगोष्ठंचतुष्पथम् ॥ ब्राह्मणंधार्मिकंचैत्यंनित्यंकुर्यात्प्रदक्षिणम् ८ अतिथीनांचसर्वेषांप्रेष्याणांस्वजनस्यच ॥ सामान्यंभोजनंभृत्यैःपुरुषस्यप्रशस्यते ९ सायंप्रातर्मनुष्याणामशनंवेदनिर्मितम् ॥ नांतराभोजनंदृष्टमुपवासीतथाभवेत् १० होमकालेतथाजुह्वन्नृतुकालेतथाव्रजन् ॥ अनन्यस्त्रीजनःप्राज्ञोब्रह्मचारीतथाभवेत् ११ अमृतंब्राह्मणोच्छिष्टंजनन्याहृदयंकृतम् ॥ तज्जनाःपर्युपासंतेसत्यंसंतःसमासते १२ लोष्टमर्दीतृणच्छेदीनखखादीतुयोनरः ॥ नित्योच्छिष्टःशंकुशुकोनेहायुर्विंदतेमहत् १३ यजुषासंस्कृतंमांसंनिवृत्तोमांसभक्षणात् ॥ नभक्षयेद्वृथामांसंपृष्ठमांसंचवर्जयेत् १४ स्वदेशेपरदेशेवाअतिथिंनोपवासयेत् ॥ काम्यकर्मफलंलब्ध्वागुरूणामुपपादयेत् १५ गुरुभ्यआसनंदेयंकर्तव्यंचाभिवादनम् ॥ गुरूनभ्यर्च्ययुज्यंतेआयुषायशसाश्रिया १६ नेक्षेतादित्यमुद्यंतंनचनग्नांपरस्त्रियम् ॥ मैथुनंसततंधर्म्यंगुह्येचैवसमाचरेत् ॥ १७ तीर्थानांहृदयंतीर्थंशुचीनांहृदयंशुचिः ॥ सर्वमार्यकृतंचौक्ष्यंवालसंस्पर्शनानिच १८ दर्शनेदर्शनेनित्यंसुखप्रश्नमुदाहरेत् ॥ सायंप्रातश्चविप्राणांप्रदिष्टमभिवादनम् १९ देवागारेगवांमध्येब्राह्मणानांक्रियापथे ॥ स्वाध्यायेभोजनेचैवदक्षिणंपाणिमुद्धरेत् २० सायंप्रातश्चविप्राणांपूजनंचयथाविधि ॥ पण्यानांशोभतेपण्यंकृषीणांबाध्यतेकृषिः ॥ बहुकारंचसस्यानांवाह्येवाहोगवांतथा २१

सुकःफलाभिष्वंगी महदायुर्ब्रह्म १३ यजुषायजुर्वेदविदाऽध्वर्युणा मांसंयज्ञियमपि निवृत्तोनभक्षयेत् । वृथामांसमसंस्कृतमांसं पृष्ठमांसंचरममांसंश्राद्धशेषमित्यर्थः । 'पृष्ठंचरममात्रेस्यात्'इतिविश्वः । एतेनहिंसायुक्तोधर्मोनकर्तव्यइत्युक्तम् १४ किंतर्हिगृहस्थेनकर्तव्यमतआह स्वेति काम्यंकमनीयंकर्मभिक्षाचर्यंतस्यफलमन्नादि गुरूणांपित्रादीनां १५ । १६ धर्म्यंऋतुकालिकं गुह्येरहसि १७ हृदयंरहस्यं तीर्थंगुरुः शुचिरग्निः आर्यकृतंशिष्टाचरितंसर्वंचौक्ष्यंप्रशस्तं स्वार्थोक्षयन् वालंगोपुच्छम् १८ प्रदिष्टंकर्तव्यत्वेनोपदिष्टम् १९ क्रियापथेश्रौतस्मार्तकर्मानुष्ठाने दक्षिणंपाणिमुद्धरेत् यज्ञोपवीतीभवेत् । 'अजिनंवासोवादक्षिणतउपवीयदक्षिणबाहुमुद्धरतेऽवधत्तेसव्यमितियज्ञोपवीतमेतदेवविपरीतंप्राचीनावीतं'इतिश्रुतेः २० सायमितिसार्धःश्लोकः विप्राणांपूजनमेवोत्तमंपण्यमुत्माकधिश्चतद्दृष्टफलमित्यर्थः । बाध्यतेस्थिरीक्रियते बदस्थैर्येइतिधातुः सधकारःपाठःप्रामादिकः । सस्यानांधान्यानांबहुकारंबहुलीकरणंचतदेवगवामिंद्रियाणांवाह्येप्राप्येवाहःप्रापणंदिव्यरूपान्नपानादीष्टप्राप्तिरपिविप्राणांपूजनमेवपण्यादिवदेष्टव्यमित्यर्थः २१

पूजनप्रकारमाहसंपन्नमिति भोजनेदीयमानेसंपन्नमितिब्रूयाद्दाता सुसंपन्नमितिप्रतिग्रहीता ब्रूयादित्यर्थोज्ञेयं एवमुत्तरत्र । सुतर्पणमितिप्रतिग्रहीता शृतमितिदाता सुश्रुतमित्यन्यः । यवाग्वांवृतौदने कृसरेद्विदलेनसहपाचितेओदने २२ संप्राप्तेकृतेसति विप्राणामभिनंदनंवदनादिनासंतोषणंकार्यमितिशेषः । कीदृशमभिनंदनंव्याधितानामायुष्यमायुष्करम् २३ प्रत्यादित्यमादित्याभिमुखोनमेहेतनमूत्रमुत्सृजेत् शकृत्पुरीषं २४ अवराणांकनिष्ठानां समानानांतुल्यानां २५ आर्यवृत्तंसेव्यमित्युक्तंतत्राभिवादनादिरूपंदंभेनाविकर्तुंशक्यमितिकथमार्यत्वनिश्चयस्तत्राह हृदयमिति वैकृतंनेत्रादिविकारः पापंहृदयमाख्याति यथोक्तं । 'नेत्रवक्त्रविकारेणज्ञायतेऽन्तर्गतंमनः'इति गूहमानानांपापं २६ । २७ पापेनेति पापंपापिनं पापंप्रकाशनीयंधर्मस्तुगोपनीयइत्यर्थः २८ निवर्तमानस्याऽशास्त्रस्थस्य अद्बुधमितिच्छेदः २९ मरणंकर्तृ ३० मानसंमनोनिर्वर्त्यं मनसाशिवमित्यस्यसर्वंभूतेभ्योऽभयंदद्यादित्यर्थः ३१ एकइति धर्मध्यानयोगं ननुसहो

संपन्नंभोजनेनित्यंपानीयेतर्पणंतथा ॥ सुश्रृतंपायसेब्रूयाद्यवाग्वांकृसरेतथा २२ श्मश्रुकर्मणिसंप्राप्तेक्षुतेस्नानेऽथभोजने ॥ व्याधितानांचसर्वेषामायुष्यमभिनंदनम् २३ प्रत्यादित्यंनमेहेतनपश्येदात्मनःशकृत् ॥ सहस्त्रियाऽथशयनंसहभोज्यंचवर्जयेत् २४ त्वंकारंनामधेयंचज्येष्ठानांपरिवर्जयेत् ॥ अवराणांसमानानामुभयेषांनदुष्यति २५ हृदयंपापवृत्तानांपापमाख्यातिवैकृतम् ॥ ज्ञानपूर्वंविनश्यंतिगूहमानामहाजने २६ ज्ञानपूर्वंकृतंपापंछादयंत्यबहुश्रुताः ॥ नैनंमनुष्याःपश्यंतिपश्यंत्येवदिवौकसः २७ पापेनापिहितंपापंपापमेवानुवर्तते ॥ धर्मेणापिहितोधर्मोधर्ममेवानुवर्तते ॥ धार्मिकेणकृतोधर्मोधर्ममेवानुवर्तते २८ पापंकृतंनस्मरतीहमूढोविवर्तमानस्यतदेतिकर्तुः ॥ राहुर्यथाचंद्रमुपैतिचापितथाऽबुधंपापमुपैतिकर्म २९ आशयासंचितंद्रव्यंदुःखेनैवोपभुज्यते ॥ तद्बुधानप्रशंसंतिमरणंनप्रतीक्षते ३० मानसंसर्वभूतानांधर्ममाहुर्मनीषिणः ॥ तस्मात्सर्वेषुभूतेषुमनसाशिवमाचरेत् ३१ एकएवचरेद्धर्मंनास्तिधर्मेसहायता ॥ केवलंविधिमासाद्यसहायःकिंकरिष्यति ३२ धर्मोयोनिर्मनुष्याणांदेवानाममृतंदिवि ॥ प्रेत्यभावेसुखंधर्माच्छश्वत्तैरुपभुज्यते ३३ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० भीष्मयुधिष्ठिरसंवादे आचारविधौत्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ ५ ॥ ॥ युधिष्ठिरउवाच ॥ अध्यात्मंनामयदिदंपुरुषस्येहचिंत्यते ॥ यदध्यात्मंयथाचैतत्तन्मेब्रूहिपितामह १

र्मांचरतांधर्मंमितिविधेर्दंपत्योरग्निहोत्रादिधर्मोविहितस्तत्कथमुच्यतेएकएवेतीत्याशंक्याह नास्तिधर्मेसहायतेतिरूपादेरितिशेषः । कातर्हिविधेर्गतिरित्यतआह केवलमिति मनसिधर्मशून्येबाह्यसहायोविधिप्राप्तोऽप्यनर्थकइत्यर्थः यथोक्तं । 'मनसैवकृतं रामनशरीरकृतंकृतं । येनैवालिंग्यतेकांतातेनैवालिंग्यतेसुता'इति । तस्मादरूपादिसापेक्षंधर्ममनादृत्यमानसिकेयोगधर्मेएवमनोदध्यादितिभावः ३२ एतमेवस्तौति धर्मइति योनिरुत्पत्तिप्रलयस्थानं । देवत्वमनुष्यत्वादिमापकोधर्मइत्यर्थः । तेषामेवदेवमनुष्याणांदिविहार्दाकाशाख्येब्रह्मलोकेऽमृतंकैवल्यकारणंधर्मएव । तथाप्रेत्यभावेअपूर्वदेहप्राप्तौधर्मादेवसुखंतैर्धर्मकर्तृभिः ३३ ॥ इतिशांतिपर्व० मोक्षधर्म० नीलकंठीये भारतभावदीपे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ ५ ॥ पूर्वंमानसिकोधर्मोदेवादीनांयोनिरित्युक्तंतत्रकिंस्वरूपोऽसौधर्मःकथंचदेवादिहेतुत्वंतस्येतिपृच्छति अध्यात्ममिति आत्मानंचित्तमधिकृत्यप्रवृत्तोयोगधर्मोऽध्यात्मं । यदिदंपुरुषस्यकर्तव्यत्वेनचिंत्यतेशास्त्रेविचार्यतेतदध्यात्मं । किंलक्षणंकिंप्रकारकंचेति यद्यथाशब्दाभ्यांप्रश्नद्वयंकृतम् १



तथाब्रह्मैवप्रजानांयोनिरितिप्रसिद्धंत्वयातुमानसोधर्मोयोनिरित्युक्तंतत्कथमित्याशयवानाह कुतइति २ श्रेयस्करंधर्मादि श्रेयस्करतरोधर्मः श्रेयस्करतमोध्यानयोगः सुखंस्वरूपसुखाविर्भावहेतुत्वात् ३ सृष्टीति सृष्टिप्रलयव्याख्याऽध्यात्मव्याख्यायामेवांतर्भूता तथाहि । यदिज्ञेयआत्माप्रतीचोऽन्यःस्यात्तर्हितस्योपासनाशेषत्वात् तस्मिन्श्रुतंजगज्जन्मादिहेतुत्वंपर्णमयीफलवदर्थवादःस्यात् । द्रव्यसंस्कारकर्मसुपरार्थत्वात्फलश्रुतिरर्थवादःस्यादितिचंद्राघोषः योपिदग्नित्ववदारोपितैरपिनोलप्रोवत्वपीतांबरत्वसत्यकामत्वसत्यसंकल्पत्वजगज्जन्मादिहेतुत्वादिगुणैरुपास्तिस्वरूपसिद्धेःसंभवात्तत्रानारोपिताएवगुणास्तथापितस्यसर्वगुणविशिष्टस्यज्ञेयत्वेनघटादिवज्जडत्वापत्तिर्दुर्वारा । ननुचिन्मयएवास्यविग्रहश्चिन्मयाएवगुणाइतिनतेषांजडत्वमितिचेदत्रपृच्छामः । चिन्मयत्वंचिद्विकारत्वंचिद्रूपत्वंवा नाद्यः वाचारंभणंविकारोनामधेयमितिविकारस्यानृतत्वश्रवणेनतेषांतुच्छत्वापत्तेः । नांत्यः स्वात्मनिवृत्तिविरोधात् । नहिचिदेवचिदंतरग्राह्योतिसंभवति ग्राह्यचितःअचित्वापत्तेः तस्माज्ज्ञेयआत्माप्रतीचोऽनन्यएव । तथाचसृष्ट्यादेस्तदुपादानकत्वोक्तिस्तदद्वयत्वप्रतिपत्त्यर्थेति । अध्यात्मव्याख्यायामेवसृष्टिप्रलयव्युत्पादनंसंगतमितितत्प्रसंगेप्रश्नोत्तरयोःसृष्ट्याद्युपन्यासोयुक्ततरइतिसिद्धं । अत्रमानमाह आचार्यैःपरिदर्शितमिति आत्मैवेदंसर्वंब्रह्मैवेदंसर्वमित्यादिवेदवाक्यैरित्यर्थः । प्रीतिंदृष्टसुखं सौख्यंसुखात्मकंभावंसत्तां प्रकृतिप्रत्यययाभ्यांसुखात्मकसन्मात्रमित्यर्थावगमात्सुखस्यभावइतिविग्रहेषष्ठीतुराहोःशिरइतिवदौपचारिकीव्यक्तमाकरे तथाचश्रुतयः । 'योवेदनिहितंगुहायांपरमेव्योमन् । सो

कुतःसृष्टमिदंविश्वंब्रह्मन्स्थावरजंगमम् ॥ प्रलयेकथमभ्येतितन्मेवक्तुमिहार्हसि २ ॥ ॥ भीष्मउवाच ॥ ॥ अध्यात्ममितिमांपार्थयदेतदनुपृच्छसि ॥ तद्व्याख्यास्यामितेतातश्रेयस्करतमंसुखम् ३ सृष्टिप्रलयसंयुक्तमाचार्यैःपरिदर्शितम् ॥ यज्ज्ञात्वापुरुषोलोकेप्रीतिंसौख्यंचविंदति ॥ फललाभश्चतस्यस्यात्सर्वभूतहितंचतत् ४ पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् ॥ महाभूतानिभूतानांसर्वेषांप्रभवाप्ययौ ५ यतःसृष्टानितत्रैवतानियांतिपुनःपुनः ॥ महाभूतानिभूतेभ्यःसागरस्योर्मयोयथा ६ प्रसार्यचयथांगानिकूर्मःसंहरतेपुनः ॥ तद्वद्भूतानिभूतात्मासृष्टानिहरतेपुनः ७ महाभूतानिपंचैवसर्वभूतेषुभूतकृत् ॥ अकरोत्तेषुवैषम्यंतत्तुजीवोनपश्यति ८

ऽश्नुतेसर्वान्कामान्सह । निष्क्रियंनिष्कलंशांतम्'इत्याद्याः । तस्याऽऽत्मविदःफलंसर्वकामावाप्तिस्तल्लाभःस्यात् हितंचतत्ज्ञानं ४ अध्यारोपापवादन्यायेनज्ञेयस्यब्रह्मणस्तटस्थलक्षणंतावदाह पृथिवीति भूतानांजरायुजादीनांप्रभवाप्ययावुत्पत्तिलयस्थानभूतानि ५ यतआनंदात्मनः । 'आनंदाद्ध्येवखल्विमानिभूतानिजायंते । आनंदेनजातानिजीवंति । आनंदंप्रयंत्यभिसंविशंति'इतिश्रुतेः । सृष्टानितत्रैवलयंयांति यतइतियच्छब्दार्थमाह महाभूतानिपृथिव्यादीनिभूतेभ्योजरायुजादिभ्यउत्पद्यंते सागरस्योर्मयोयथेति । अत्रजरायुजादिभ्यःखाद्युत्पत्तिलयौवदतातेषामानंदरूपत्वमुक्तं । खादीनांचस्वप्नाकाशादिवत्कल्पनामात्रत्वंचोक्तम् ६ प्रसार्येति भूतानिखादीनि भूतात्माजीवः यतोभूतान्येवदेहाद्याकारेणपरिणतान्यात्मत्वेनमन्यमानः । अस्तिखल्वन्योऽपरोभूतात्मायोऽयंसितासितैःकर्मफलैरभिभूयमानःसदसद्योनिमापद्यतइतिश्रुतिप्रसिद्धेश्च । एतेनकूर्मादंगादीनीवचियदादीनिप्रतीचोऽनन्यानीत्युक्तं ७ ननुकथंभौतिकेभ्योभूतोत्पत्तिर्नहिपुत्रात्पितोत्पद्यतइतिचेत् । अत्रब्रूमः बीजाद्वटोवटात्बीजानिबीजेभ्योवटाइतिवद्द्रष्टव्यतीति । ननुतत्रप्रतिबीजंसूक्ष्मरूपेणवटोऽस्ति अंकुरोन्मुखांतितिणीबीजोदरेकेसरवर्तिविपाटितेनिवेशदर्शनात् तर्हिप्रत्यगभेदेनग्रहीतेदेहेसूक्ष्मरूपेणमहाभूतानिसंतीतितुल्यमित्यभिप्रेत्याह महाभूतानीति भूतकृदीश्वरःसर्वभूतेषुशरीरेषुचपंचमहाभूतान्यकरोदेव । कृतेषुचतेषु-

–वैपम्यंवैलक्षण्यंपार्थक्येनावस्थितत्वंयत्तत्तुजीवोदेहाद्यात्माभिमानीनपश्यतिदेहेकःपार्थिवोंऽशःकआप्यइतिनजानाति । अयंभावः जीवस्त्वाभिमानस्यागेखलुस्वस्यसर्वकारणत्वंग्राह्यं तद भावात्तुस्वप्नेगृह्यमाणमपितन्नश्रद्धत्ते । ततश्चनबाह्यांतरसृष्ट्योःसत्यत्वमिथ्यात्वेनिश्चिनोतिततोभेददृष्टेरबाधाद्बध्यतइति ८ जीवस्यजगदुपादानत्वप्रथनायतस्यात्मभूतेदेहेखाद्यंशान्वि भजते शब्दइत्यादिना खानिच्छिद्राणि आकाशएवयोनिःकारणंतज्जम् ९ पाकःअन्नादिपक्तिस्तद्धेतुः १० पंचैवदेहस्थानीतिशेषः ११ इंद्रियाणिभूतेष्वंतर्भूतानि मनइतिकर्तांजीवउ च्यते । अस्यविज्ञानानिवृत्तिरूपाणि एतदुभयात्मिकाबुद्धिःसप्तमी क्षेत्रज्ञःसाक्षी १२ चक्षुरितिपंचानामुपलक्षणं आलोचनायविषयग्रहणाय अध्यवसानायनिश्चयाय क्षेत्रज्ञःसाक्षिवदुदासीन बोधरूपत्वात् साक्षित्वस्यापिसाक्ष्योपाधिकत्वान्नात्मधर्मत्वमितिवत्करणेनदर्शितम् १२ ऊर्ध्वमिति पादतलद्वयमारभ्यऊर्ध्वस्थितंशरीरमुपर्यधश्चयत्साक्षिचैतन्यंपश्यति एतेनइदंबहिर्दृश्यमा नमंतरंव्योमोदरंकृत्स्नंव्याप्तम् १४ एवंबुद्ध्यादिसाक्षिणोब्रह्मभावमुक्त्वाऽस्यबुद्ध्याद्युपाहितस्यपूर्वंमहाभूतस्रष्टृत्वमुक्तंतद्युक्त्याश्रुत्याचालोचनीयमित्याह पुरुषैरिति कृत्स्नशःकात्स्न्र्येन वे दितव्यानिपरीक्षणीयानि इंद्रियाणीतिमनोबुद्ध्योरप्युपलक्षणं तथाहि किमिंद्रियाणिप्राक्संतमेवघटादिकंगोचरयंत्युतदृष्टिसमसमयमात्रसिद्धं । आद्येऽपि किंसत्त्वंसत्तासामान्यसमवायोवा अर्थक्रियाकारितावा नाद्यःसत्तायांसत्तासामान्यांतराभ्युपगमेऽनवस्थापातात् अनभ्युपगमेतस्याअप्यसत्त्वापत्तेश्च । नद्वितीयः रज्ज्वांकल्पितस्यापिसर्पस्यभयकंपादिजनकत्वलक्षणार्थक्रिया

शब्दःश्रोत्रंतथाखानित्रयमाकाशयोनिजम् ॥ वायोःस्पर्शस्तथाचेष्टात्वक्चैवत्रितयंस्मृतम् ९ रूपंचक्षुस्तथापाकस्त्रिविधंतेजउच्यते ॥ रसः क्लेदश्चजिह्वाचत्रयोजलगुणाःस्मृताः १० घ्रेयंघ्राणंशरीरंचएतेभूमिगुणास्त्रयः ॥ महाभूतानिपंचैवषष्ठंचमनउच्यते ११ इंद्रियाणिमनश्चै वविज्ञानान्यस्यभारत ॥ सप्तमीबुद्धिरित्याहुःक्षेत्रज्ञःपुनरष्टमः १२ चक्षुरालोचनायैवसंशयंकुरुतेमनः ॥ बुद्धिरध्यवसानायक्षेत्रज्ञःसाक्षि वत्स्थितः १३ ऊर्ध्वंपादतलाभ्यांयदर्वाक्चोर्ध्वंचपश्यति ॥ एतेनसर्वमेवेदंविद्ध्यभिव्याप्तमंतरम् १४ पुरुषैरिंद्रियाणीहवेदितव्यानिकृ त्स्नशः ॥ तमोरजश्चसत्त्वंचतेऽपिभावास्तदाश्रिताः १५ एतांबुद्ध्वानरोबुद्ध्याभूतानामागतिंगतिम् ॥ समवेक्ष्यशनैश्चैवलभतेशममुत्तमम् १६

कारित्वदर्शनात् । नचतत्रपुष्कलार्थक्रियाकारित्वंदृष्टंप्रसर्पणाद्यदर्शनादितिशंक्यं ताक्ष्योंऽहमितिस्वस्मिंस्ताक्ष्र्यत्वकल्पनायाःसत्यविषनिवर्तकत्वदर्शनात् । तथाचैत्रोऽयमितिप्रतिमा यांकल्पितचैत्रत्वस्यप्रतिमापीडनाच्चैत्रपीडाकरत्वदर्शनाच्च । ननुतत्रताक्ष्यात्वस्यभेदेगृह्यमाणेएवशास्त्रप्राप्तस्यध्यानादेःसत्यविषनिवर्तकत्वंयुक्तं गारुडशास्त्रप्रमाणात् देहेंद्रियादीनांत्वा त्मन्यभेदेनदृश्यमानानांकथंकल्पितत्वमितिचेत्श्लाघनीयप्रज्ञोदेवानांप्रियः । भेदग्रहेसत्यपियत्रकल्पनायाःपुष्कलार्थक्रियाकारित्वंदृष्टंकिमुताभेदग्रहे । बाधोत्तरकालीनार्थक्रियाकारित्वा भावस्यरज्जुसर्पादौदेहेंद्रियादौचतुल्यवद्दर्शनात् तस्मात्परिशेषाद्रज्जूरगवद्दृष्टिसमसमयसिद्धंघटादिकमिंद्रियाणिगोचरयंतीतिसिद्धं इंद्रियाण्यपिमनसोऽनवहिततायांसन्निहितमपिरूपादिकं नगोचरयंतीतिमनोमात्राण्येव स्वप्नेतेषांतन्मात्रत्वानुभवात् मनोऽपिप्रमात्राप्रयुक्तंसन्नावहितंभवतीतिप्रमात्रात्मकमेव । प्रमातृत्वंचात्मनिबुद्धिव्यतिरेकेणसुषुप्त्यादौनदृष्टमितिबुद्धेरेवधर्मः । बुद्धिश्चत्रिगुणात्मकस्याज्ञानस्यकार्यमतस्त्रिगुणात्मकानेवभावान्विषयीकरोति । तदिदमुक्तं इंद्रियाणितमआदिकमेव तेऽपिइंद्रियग्राह्याभावाअपितदाश्रिताइंद्रियाश्रिताइंद्रियजाःपरंप रयातमआद्याश्रिताएवेति १५ एतदेवप्रपंचयिष्यन्प्ररोचनायतज्ज्ञानफलमाह एतामिति एतांत्रिगुणात्मिकांमूलप्रकृतिंबुद्धिंवाभूतानांखादीनांजरायुजादीनांचाऽऽगतिमुद्भवस्थानंगतिं लयस्थानंचेतिबुद्ध्वाविचारेणावेक्ष्यशनैर्वैराग्यविवेकदृढिक्रमेणोत्तमंशमंमुख्यंप्रत्यगानंदंलभते । कंठगतविस्मृतचामीकरवन्नित्यप्राप्तमप्यज्ञानादप्राप्तमिवतत्त्वमस्यादिवाक्याल्लभते १६

भूतानांगत्यागतीएवाह गुणैरिति तमआदिभिर्गुणैर्बुद्धिर्नेनीयतेपुनःपुनरतिशयेनविषयात्मतांनीयते । अतोबुद्धिरेवमनःषष्ठानींद्रियाणिभूतानिचद्विविधानिसैव । तदभावेबुद्धेरभावेगुणाःकुतः स्वरूपेणतेषांबाधान्नकापिसंतीत्यर्थः । एतेनसांख्याभिमतंतेषामबाध्यत्वंनित्यानुमेयत्वंचनिरस्तं । अयमर्थः रज्ज्वज्ञानेसतितत्कार्यंसर्पस्तज्जंभयादिकंचदृश्यते । परीक्षादशायांतुसर्पाभावे सतिरज्ज्वज्ञानंतन्मूलमज्ञानमुपलभ्यतेनापितज्जंभयादिकं । एवंबुद्ध्यभावेबुद्धेःकार्यंकारणंचनश्यतीतिगुणशब्देनसत्त्वादयोमनइंद्रियविषयादयश्चगृह्यंते १७ इतीति यतएवंतस्मात् तन्मयंबुद्धिमयं प्रलीयतेबुद्धौलीनायांउद्भवतिबुद्ध्युद्भवे तस्मात्तथाबुद्धिमयत्वेनानिर्दिश्यतेवेदे । 'मनसाह्येवपश्यति मनसाशृणोतीति । प्राणेभ्योदेवादेवेभ्योलोकाः'इतिच । बुद्धिमनसोरभेदाद्बुद्धिरेवश्रवणादि साधनंश्रोत्रादिरूपेण प्राणेभ्यश्चक्षुरादिभ्यइंद्रियेभ्यः देवास्तदनुग्राहकाआदित्यादयः लोकाभूतभौतिकाइतिश्रुत्यर्थः १८ एतदेवाहद्वाभ्यां येनेति साबुद्धिर्येनद्वारेणपश्यतितच्चक्षुरि त्यर्थः जिह्वयात्वचेतिइत्थंभावेतृतीया जिह्वारूपयाबुद्ध्याबुद्धिःकर्त्रीरसंजानाति १९ तत्रहेतुः विक्रियतेबुद्धिरेवचिदाभासविशिष्टाजीवापरसंज्ञाकर्तृत्वंकरणत्वंचापद्यते तथाचश्रूयते 'सप्राणन्नेवप्राणोनामभवतिवदन्वाक्पश्यंश्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनस्तान्यस्यकर्मनामान्येव'इति । सकृदितियौगपद्यमुच्यतेकर्त्रादिभावस्य ततश्चाकाशाद्वायुर्वायोरग्निरितिक्रमोनवि

गुणैर्नेनीयतेबुद्धिर्बुद्धिरेवेंद्रियाण्यपि ॥ मनःषष्ठानिभूतानितदभावेकुतोगुणाः १७ इतितन्मयमेवैतत्सर्वंस्थावरजंगमम् ॥ प्रलीयतेचोद्भवतितस्मान्निर्दिश्यतेतथा १८ येनपश्यतितच्चक्षुःशृणोतिश्रोत्रमुच्यते ॥ जिघ्रतिघ्राणमित्याहूरसंजानातिजि ह्वया १९ त्वचास्पर्शयतेस्पर्शंबुद्धिर्विक्रियतेसकृत् ॥ येनप्रार्थयतेकिंचित्तदाभवतितन्मनः २० अधिष्ठानानिबुद्धेर्हिपृथग र्थानिपंचधा ॥ इंद्रियाणीतियान्याहुस्तान्यदृश्योऽधितिष्ठति २१ पुरुषेतिष्ठतीबुद्धिस्त्रिषुभावेषुवर्तते ॥ कदाचिल्लभतेप्रीतिं कदाचिदनुशोचति २२ नसुखेननदुःखेनकदाचिदपिवर्तते ॥ एवंनराणांमनसित्रिषुभावेष्ववस्थिता २३ सेयंभावात्मिकाभा वांस्त्रीनेतान्नातिवर्तते ॥ सरितांसागरोभर्तामहावेलामिवोर्मिमान् २४

वक्षितःकिंतुज्ञातृज्ञानज्ञेयानांसहैवोत्पत्तिरित्यर्थः २० अधितिष्ठतिरूपादीनिबुद्धिःप्रकाशयत्येतैरित्यधिष्ठानानिकरणानि बुद्धेःकर्त्र्याः अदृश्यश्चिदात्माधितिष्ठतिस्वरूपसत्तामात्रेणेंद्रि याणिव्यापारयत्ययस्कांतइवलोहम् २१ एतदेवाह पुरुषेइति त्रिषुभावेषुसत्त्वरजस्तमोमयेषुसुखदुःखमोहात्मकेषु तानेवक्रमेणाह कदाचिदिति २१ एवंत्रिषुभावेष्ववस्थिताबुद्धिर्मनसिवर्तते मनो द्वाराइंद्रियविषयेष्वपीतिद्रष्टव्यम् २३ सेयमिति सेयंसर्वात्मिकाऽपिबुद्धिर्भावान्सुखदुःखमोहान्तदात्मिकाऽपिसतीअतिक्रम्यवर्तते तत्रयोग्योदृष्टांतः । सरितांभर्तापूरयिताऊर्मिमान्सागरोमहा वेलामिवेति अयमर्थः यथासमुद्रप्रभवानांनदीनांसमुद्रंप्राप्तानांवीचयःसमुद्रोर्मिभिस्तिरोधीयंते । एवंबुद्धिप्रभवाणांदेहेंद्रियविषयाणांयोगेनबुद्धौलीयमानानांसंस्काराबुद्धेर्ब्रह्माकारतयातिरोधीयं तइतिबुद्धेर्गुणातीतत्वमुच्यते । यथाघटप्रकाशेचक्षुरालोकसहकारेणसमर्थंदीपप्रकाशेतुतन्निरपेक्षं विषयस्यैवप्रकाशात्मकत्वात् एवंधीवृत्तिश्चिदाभाससहकारेणैवघटादीन्प्रकाशयति यथोक्तं 'बुद्धितत्स्थचिदाभासौद्वावेतौव्याप्नुवतोघटं ॥ तत्राज्ञानंधियानश्येदाभासेनघटःस्फुरेत्'इति । आत्मनितुधीवृत्तिरेवापेक्षिताविषयस्यप्रकाशात्मकत्वात् । प्रकाशमानेत्वानंदेधीवृत्तिःकतकरजोवत्स जातीयद्वृत्त्यंतरंविनाशयंतीस्वयमपिविलीयते । तदाचसंस्कारात्मनासतीप्रागुक्तवादिकार्याणिसुखदुःखमोहाख्यान्यतिक्रम्यगतामवति सुषुप्तौतुमोहस्याविनाशात्सुप्तिसमाध्योर्भेदइति २४

नन्वात्माकारवृत्तिमत्यावुद्धेर्गुणातीतत्वोपंगमेज्ञानसमकालमेवदेहपातःस्यान्नद्रष्टायास्तस्यामूलकारणस्याज्ञानस्यनाशेनपुनरुत्पादायोगादित्याशंक्याह अतिभावेति सुखादिभावानतिक्रांतापिबु द्धिर्भावेमनसिनिर्वृत्तिकतयासत्तामात्रेमनसिवर्ततेज्ञानकालेसूक्ष्मरूपेणास्तीत्यर्थः । पुनश्चादभ्युत्थानकालेप्रवर्तमानंरजस्तद्भावंबुद्धिभावमनुवर्ततेघृतकाठिन्यवद्विलीनापिबुद्धीरजोगुणेनशीतेनघृत मिवपुनर्घनीक्रियतइत्यर्थः । अयंभावः सत्यप्यज्ञाननाशेक्षालितलशुनभांडगंधवत्क्लेशतोनुवर्तमानाऽविद्याप्रारब्धकर्मपराधीनापुनःपुनर्देहादीनुत्थापयति । प्रारब्धकर्मोपरमेतुनिरन्वयनाशान्निष्प्र त्यूहंकैवल्यमिति २५ साबुद्धिर्यदाराजसात्मिकाभवतितदाहिप्रसिद्धानिंद्रियाणिप्रवर्तयतिततश्चविषयसंबंधादसत्वंसत्वात्मिकाबुद्धिर्विषययाथात्म्यज्ञानंप्रवर्तते । तथातमोभावस्तमसाविषया ज्ञानेनजनितोभावोविपर्ययःसरूपःशुक्तिरजतादिःप्रीतियोगात्पुत्रगतरागादिदोषात्प्रवर्तते प्रथारूपंविपर्ययरूपंवाज्ञानंविषयेंद्रियसंबंधाज्जायतइत्यर्थः २६ ततश्चप्रीत्यादयःसत्वाद्यात्मा

अतिभावगताबुद्धिर्भावेमनसिवर्तते ॥ प्रवर्तमानंतुरजस्तद्भावमनुवर्तते २५ इंद्रियाणिहिसर्वाणिप्रवर्तयतिसातदा ॥ ततःसत्वंतमोभावःप्रीतियोगात्प्रवर्तते २६ प्रीतिःसत्वंरजःशोकस्तमोमोहस्तुतेत्रयः ॥ येयेचभावालोकेऽस्मिन्सर्वेष्वेतेषुवैत्रिषु २७ इतिबुद्धिगतिःसर्वाव्याख्यातातवभारत ॥ इंद्रियाणिचसर्वाणि विजेतव्यानिधीमता २८ सत्वंरजस्तमश्चैवप्राणिनांसंश्रिताःसदा ॥ त्रिविधावेदनाचैवसर्वसत्वेषुदृश्यते २९ सात्विकीराजसीचैवतामसीचेतिभारत ॥ सुखस्प र्शःसत्वगुणोदुःखस्पर्शोरजोगुणः ॥ तमोगुणेनसंयुक्तौभवतोऽव्यावहारिकौ ३० तत्रयत्प्रीतिसंयुक्तंकायेमनसिवाभवेत् ॥ वर्ततेसात्विकोभावइत्याचक्षीततत्तथा ३१ अथयद्दुःखसंयुक्तमप्रीतिकरमात्मनः ॥ प्रवृत्तंरजइत्येवतन्नसंरभ्यचिंतयेत् ३२ अथयन्मोहसंयुक्तमव्यक्तविषयंभवेत् ॥ अप्रतर्क्यमविज्ञेयंतमस्तदुपधार येत् ३३ प्रहर्षःप्रीतिरानंदःसुखंसंशांतचित्तता ॥ कथंचिदभिवर्ततइत्येतेसात्विकागुणाः ३४ अतुष्टिःपरितापश्चशोकोलोभस्तथाक्षमा ॥ लिंगानिरजसस्तानि दृश्यंतेहेत्वहेतुभिः ३५ अवमानस्तथामोहःप्रमादःस्वप्नतंद्रिता ॥ कथंचिदभिवर्ततेविविधास्तामसागुणाः ३६ दूरगंबहुधागामिप्रार्थनासंशयात्मकम् ॥ मनः सुनियतंयस्यससुखीप्रेत्यचेहच ३७ सत्वक्षेत्रज्ञयोरेतदंतरंपश्यसूक्ष्मयोः ॥ सृजतेतुगुणानेकएकोनसृजतेगुणान् ३८

नःप्रवर्तंते भावाःशमदमकामक्रोधभयविषादादयः २७ बुद्धिव्याख्यानंसप्रयोजनमुपसंहरति इतीति २८ प्रीतिःसत्वमित्युक्तमर्थंप्रपंचयति सत्वंरजइत्यादिना २९ त्रैविध्यमेवाह सात्विकीति सार्धेन तमोगुणेप्रादुर्भूतेसतितिसंयुक्तौपूर्वोक्तौसुखदुःखस्पर्शौनभवतःकिंतमोहएवेत्यर्थः ३० । ३१ संरभ्यभीत्वा दुःखानुसंधानाद्दुःखमेववर्धिष्यतइतिभीत्यादुःखंनचिंतयेन्नगणयेदित्यर्थः ३२ । ३३ इष्टवस्तुश्रवणदर्शनप्राप्त्युपभोगजानिसुखानिप्रहर्षप्रीत्यानंदसुखाख्यानिप्रियमोदप्रमोदानंदापरपर्यायाणिप्रशांतचित्ततानिर्विकल्पसुखतापुच्छब्रह्माख्या कथंचिदितिदौर्लभ्यमुक्तम् ३४ हेत्वहेतु भिर्हेतुभिरहेतुभिश्चाऽहाराद्यपूर्तौसत्यामतुष्टिः क्षुद्बाधाद्यनिवृत्तिहेतुभिःसर्वसंपत्तिमतस्तुयाऽतुष्टिःसानिर्हेतुकाकेवलमोहकार्यमित्यर्थः ३५ स्वप्नोनिद्रातत्सहितातंद्रितातंद्रायुक्तत्वं कथंचिदभाग्या तिशयात् ३६ दूरगंदुर्लभेऽपिवस्तुन्यासक्तं । बहुधागाम्यनेकेषुविषयेषुयुगपन्निपतितुंशीलं प्रार्थनादेहीतिदैन्यभाषणं । सुनियतंनिरुद्धवृत्तिकम् ३७ वृत्तिनिरोधफलंसत्वपुरुषान्यताख्यातिमाह सत्वेति सत्वंबुद्धिसत्वं क्षेत्रज्ञःसाक्षी तयोरंतरंभेदंतप्तायःपिंडवदितरेतराविवेकात्मानमगृहीतं एकःसत्वं गुणानहंकारादीन् ३८

एतौमशकोदुंबरौ तयोःसत्वक्षेत्रज्ञयोः ३९ प्रकृत्यास्वभावेन ४० ननुमशकोदुंबरवज्जलमत्स्यवद्वातयोःसंयोगश्चेदुभयोरपिविभुत्वादपरिहार्यःसंयोगःस्यादित्याशंक्याह नेति नविदुरितिगुणा नांजडत्वमुक्तं वेत्तीतिक्षेत्रज्ञस्यचिदात्मत्वमुक्तं अतश्चिज्जडयोर्वास्तवःसंबंधोनोपपद्यते । दृष्टांतेतुजडयोरेवमीनादिशरीरयोर्जलादिनाजडेनैवसंबंधः । एतदेवाह परिद्रष्टेति पुरुषोगुणानदेहाहं कारादीन्द्रष्टाऽपिसंसृतान्संसृष्टान्स्वतादात्म्यापन्नान्मन्यते नहिद्रष्टृदृश्ययोःपुंगुणयोरभेदःसंभवति प्रतीयतेचाभेदः अहंगौरोऽहंकाणोऽहंसुखप्यहंकर्तेति । तस्मान्मरुमहान्हृदयोरिवानयो राध्यासिकःसंबंधइत्यर्थः । संस्रष्टेतिपाठेसभित्यैकीभावेइतियास्कवचनादात्मन्येकीभावेनतादात्म्येनगुणानांस्रष्टाकल्पकःसंस्रष्टाचिदात्माविद्ययामन्यतेऽभिमानंकरोति ४१ ननुचिदात्मागु णसंगीचेद्घटपिहितप्रदीपवन्नकिंचित्प्रकाशयेदित्याशंक्याह इंद्रियैरिति प्रदीपार्थमर्थप्रकाशनंघटच्छिद्रैरिवघटपिहितोदीपइत्यर्थः । इंद्रियैर्मनसासहषड्भिः ४१ संप्रयोगःसंबंधः ध्रुवोऽनादिः ४३ सत्वक्षेत्रज्ञयोःसंप्रयोगोऽनिर्वचनीयइत्याह आश्रयइति आत्मनोऽसंगत्वान्निर्गुणत्वाच्चजतुकाष्ठवद्रूपरूपिवद्वानतयोराश्रिताश्रयभावोऽस्तीत्यर्थः । क्षेत्रज्ञस्यकश्चनाऽऽश्रयोनास्ति स्वमहिमप्रतिष्ठत्वात् । गुणःसत्वस्यचेतनेतिप्राचीनपाठेतुसत्वस्याश्रयःप्रकृतिःशाखायाइवतरुःसनास्तिप्रकृतेस्तुच्छत्वात् । 'तुच्छ्येनाभ्वपिहितंयदासीत् । अमृतेनहिप्रत्यूढा'इत्यादिश्रु तिभ्यस्तस्यास्तुच्छत्वावगतेः । कथंतर्हिसत्वस्यात्मलाभइत्यत आह चेतनासत्वस्यगुणइति शुक्तीदंतायथातत्राध्यस्तरजतस्यविशेषणंभवतितद्वच्चेतनास्वस्मिन्नध्यस्तस्यसत्वस्यविशेष

मशकोदुंबरौवाऽपिसंप्रयुक्तौयथासदा ॥ अन्योन्यमेतौस्यातांचसंप्रयोगस्तथातयोः ३९ पृथग्भूतौप्रकृत्यातौसंप्रयुक्तौचसर्वदा ॥ यथामत्स्योजलंचैवसंप्र युक्तौतथैवतौ ४० नगुणाविदुरात्मानंसगुणान्वेत्तिसर्वशः ॥ परिद्रष्टागुणानांतुसंसृष्टान्मन्यतेतथा ४१ इंद्रियैस्तुप्रदीपार्थंकुरुतेबुद्धिसप्तमैः ॥ निर्विचेष्टैरजा नद्भिःपदमात्माप्रदीपवत् ४२ सृजतेहिगुणान्सत्वंक्षेत्रज्ञःपरिपश्यति ॥ संप्रयोगस्तयोरेषसत्वक्षेत्रज्ञयोर्ध्रुवः ४३ आश्रयोनास्तिसत्वस्यक्षेत्रज्ञस्यचकश्चन ॥ सत्वंमनःसंसृजतेनगुणान्वैकदाचन ४४ रश्मींस्तेषांसमनसायदासम्यङ्नियच्छति ॥ तदाप्रकाशतेऽस्यात्माघटेदीपोज्वलन्निव ४५ त्यक्त्वायःप्राकृतंकर्मनि त्यमात्मरतिर्मुनिः ॥ सर्वभूतात्मभूस्तस्मात्सगच्छेदुत्तमांगतिम् ४६ यथावारिचरःपक्षीसलिलेननलिप्यते ॥ एवमेवकृतप्रज्ञोभूतेषुपरिवर्तते ४७ एवंस्व भावमेवैतत्स्वबुद्ध्याविहरेन्नरः॥ अशोचन्नप्रहृष्यंश्चसमोविगतमत्सरः४८ स्वभावयुक्त्यायुक्तस्तुसनित्यंसृजतेगुणान्॥ ऊर्णनाभिर्यथासूत्रंविज्ञेयास्तंतुवद्गुणाः४९

णंभवति । तमिमंसत्वेचैतनानुवेधमालक्ष्याऽस्माजडश्चेतनात्तद्गुणःसाक्षणावस्थायिनी।तिबुद्धबंधवःप्रजल्पंति । उक्तेर्थेहेतुमाह सत्वमिति संसृजतेनिर्दिशति प्रकाशयतीत्यर्थः वैपासिद्धं । मनआदिकमेवसत्वस्यकार्यंप्रथतेनतन्मूलभूतागुणाअतस्तेषांसकार्याणांमृषात्वमित्यर्थः । नाहिनिपुणैरपिपरीक्ष्यमाणंरज्जूरगोपादानमज्ञानंदृष्टिपथमवतरतीतिभावः ४४ अध्यासनिवृत्त्युपा यमाह रश्मीनिति वृत्तिबहुत्वापेक्षयाबहुवचनं तेषांतस्यतत्त्वस्यरश्मीनिंद्रियाणि ४५ प्राकृतंस्वाभाविकंकर्मत्यक्त्वासंन्यस्येत्यर्थः । आत्मरतिरनन्यनिष्ठोमुनिर्ध्यानशीलः सर्वेषां भूतानामात्मैवभवतीतिसर्वभूतात्मभूः । 'यएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवति । आत्माह्येषांसभवति'इत्यादिश्रुतिभ्यआत्मनःसार्वात्म्यावगतेः तस्मात्संन्यासादेः ४६ एवंविदःकर्माले पंसदृष्टांतमाह यथेति वारिचरोहंसः तथाचश्रुतिः । 'तंविदित्वानकर्मणालिप्यतेपापकेन'इति ४७ एवंस्वभावमलेपस्वभावं एवदात्मस्वरूपंस्वबुद्ध्यानिश्चित्येतिशेषः ४८ एवंवि दोजीवन्मुक्तिमाह स्वेति स्वभावेस्वरूपेयुक्तियोगस्तयादेहेंद्रियादितादात्म्याध्यासकृतांपररूपतांपरित्यज्यस्वरूपावस्थित्यायुक्तश्चसविद्वान्नित्यंगुणान्भूतमौतिकान्योगैश्वर्यबलेनसृजते । यस्यानुवित्तःप्रतिबुद्धआत्मेत्युपक्रम्य सविश्वकृत्सहिविश्वस्यकर्तेतिश्रुतेः । ऊर्णनाभिदृष्टांतोऽभिन्ननिमित्तत्वोपपादनायदर्शितः ४९

एवंजीवन्मुक्तःप्रारब्धकर्मावष्टब्धदेहःप्राक्संस्कारवशात्प्रत्युपस्थितैर्गुणैर्दृष्टिसमसमर्थासृष्टिपदप्रत्ययोगैश्वर्येणाणिमादिनावानिर्विकल्पध्यानेनवावर्तयतीत्युक्तं प्रारब्धकर्मसमाप्तौतुकिंगुणाघट्वात्रि वर्ततउतरज्जूरगवद्वाध्यंतेइतिमीमांसते प्रध्वस्ताइतिद्वाभ्यां तत्रकृतार्थंप्रतिनष्टमप्यनष्टंतदन्यसाधारणत्वादितियोगाः । प्रधानंत्रिगुणात्मकंविदेहकैवल्यभाजंप्रतिनष्टंध्वस्तमप्यनष्टमध्वस्तंय तोऽन्यसाधारणं । निरन्वयनाशेइदानींतनानांसंसारोपलंभोनस्यात् । नचकश्चिन्मुक्तएवनास्तीतिवक्तुंशक्यं । इदानींतनानामपिमुक्तावनाश्वासप्रसंगादित्याहुस्तदनुवदति प्रध्वस्तानिवर्ततइ ति प्रध्वस्ताअपिगुणानिवर्ततइति तदेतद्दूषयति निवृत्तिःप्रत्यक्षेणनोपलभ्यतइति अयंभावः । सतःपदार्थस्यादर्शनंसान्निध्याभावाद्वाद्दृष्टिलोपाद्वालोकेऽवगतं । तत्रनाद्यः प्रधानस्यविभुत्वा त् । नांत्यःपुरुषस्यालुप्तदृष्टित्वात् । तथाचज्ञानादेवतुकैवल्यमितिज्ञाननिवर्त्यत्वश्रुत्यन्यथानुपपत्त्यारज्जूरगवत्प्रधानस्यबुद्धाबुद्धदृष्टिभेदेननष्टत्वानष्टत्वेबोद्धव्येनतुघटवत्सत्यत्वपक्षेतद्युज्यतेप्रत्यक्ष विरोधादितिभावः । परोक्षंतदनुमानेनासिद्ध्यति अनुभावनारूढंतत्प्रधानस्यसत्यस्यापिदृष्टिभेदेननाशानाशवचनंकिंतुकेवलानुमानेनबंधमोक्षव्यवस्थान्यथानुपपत्त्याप्रधानस्यप्रत्यक्षादिप्रमाण सिद्धप्रपंचकारणस्यनित्यानुमेयस्यसर्वप्रमाणविरोधापाताम्मिथ्यात्वमपिनाध्यवसातुंशक्यमतोऽगत्याकृतार्थंप्रतिनष्टमनष्टंतदित्युपेयमिति । यद्वाप्रत्यक्षंश्रुतिःप्रामाण्यंप्रतिनिरपेक्षत्वात् । अनु मानंस्मृतिःप्रामाण्यंप्रतिसापेक्षत्वात् । तथाचनेहनानास्तिकिंचनेतिप्रपंचस्यबाधःप्रत्यक्षसिद्धः नष्टमप्यनष्टमितिध्वंसपक्षःस्मृतिसिद्धः तेनविरोधेत्वनपेक्षंस्यादितिन्यायेनध्वंसस्मृतिरप्रमा णमितिभावः ५० एवमेकेनानाजीववादिनोव्यवहारानुरोधाद्व्यवस्यंतिनिश्चिन्वंति । अपरेएकजीववादिनोनिवृत्तिरेवस्वाज्ञानकृतःप्रपंचस्तन्नाशेकात्स्न्येंननिवर्तते । नहिचैत्रेणस्वप्नेदृष्टोगजश्चैत्र

प्रध्वस्तानिवर्ततेनिवृत्तिर्नोपलभ्यते ॥ प्रत्यक्षेणपरोक्षंतदनुमानेनसिद्ध्यति ५० एवमेकेऽध्यवस्यंतिनिवृत्तिरितिचापरे ॥ उभयंसंप्रधार्यैतद्व्यवस्येतयथाम ति ५१ इतीमंहृदयग्रंथिंबुद्धिभेदमयंदृढम् ॥ विमुच्यसुखमासीतनशोचेच्छिन्नसंशयः ५२ मलिनाःप्राप्नुयुःसिद्धिंयथापूर्णांनदींनराः ॥ अवगाह्यसुविद्वांसोविद्धि ज्ञानमिदंतथा ५३ महानद्यांहिपारज्ञस्तप्यतेनतदन्यथा ॥ नतुतप्यतितत्त्वज्ञःफलेज्ञातेतरत्युत ५४ एवंयेविदुराध्यात्मंकेवलंज्ञानमुत्तमम् ५५ एतांबुद्धानरः सर्वांभूतानामागतिंगतिम् ॥ अवेक्ष्यचशनैर्बुद्ध्यालभतेशमनंततः ५६ त्रिवर्गोयस्यविदितःप्रेक्ष्ययश्चविमुंचति ॥ अन्विष्यमनसायुक्तस्तत्त्वदर्शीनिरुत्सुकः ५७

प्रबोधेनबाधितोऽपिमैत्रदृष्टयारज्जूरगवदस्तीतिशक्यंवक्तुंकिंतुनिरन्वयनाशएवतस्येत्यपिकेचिद्व्यवस्यंति । एवमेवद्धमयंदर्शितं तन्मध्येऽन्यतरन्मतंसंप्रधार्यसम्यक्शास्त्रान्निश्चित्ययथामतिव्यव स्येतध्यानेनसाक्षात्कुर्यात् ५१ हृदयग्रंथिमन्योन्याध्यासंतत्प्रायःपिंडवद्बुद्धिक्षेत्रज्ञयोरेकलोलीभावं तथाहि । क्षेत्रज्ञेबुद्धिधर्मादुःखादयोबुद्धौचक्षेत्रज्ञधर्माःसत्त्वचित्त्वादयोदृश्यंते । बुद्धिकृतो योभेदस्तन्मयंतत्प्रधानंतंविमुच्यसत्त्वपुरुषयोःपृथक्त्वज्ञानेनत्यक्त्वा तथाचश्रुतिः । 'भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः'इति ५२ नदीभिवेदंज्ञानमवगाह्यमलिनाःशुद्धिंप्राप्नुयुरितिविद्धि यथो क्तं । 'नहिज्ञानेनसदृशंपवित्रमिहविद्यते'इति ५३ महेति नहिपारदर्शनमात्रात्कृतकृत्यतार्किंतुनौकादिनापारप्राप्त्यैवफलमात्मनितुज्ञानमात्रादेवनपुनरनुष्ठानांतरापेक्षेतिभावः ५४ उपसंहरति एवमित्यर्धेन अध्यात्ममात्मनिहृदयाकाशे । केवलंनिर्विषयंकैवल्यमितिपाठेस्वार्थेष्यञ् वेज्ञानंलभंतइतिशेषः ५५ एतामिति स्त्रीत्वंविधेयलिंगापेक्षया इदमेवज्ञानंसर्वप्रत्यग्भूतंभूतानांल योदयस्थानमितिशास्त्रतोबुद्ध्वाध्यानेनसूक्ष्मयाबुद्ध्याचावेक्ष्य । शंसुखंअनंततःअनंतं । शममंततइतिपाठःस्पष्टार्थः ५६ शमंकोलभतइत्यतआह त्रिवर्गइति विदितःक्षयिष्णुत्वेनज्ञातः प्रेक्ष्य यत्कृतकंतदनित्यंकार्यत्वाद्घटवदित्यनुमानोपग्रहीतया । 'तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयते' इतिश्रुत्याधर्मफलस्यप्रत्यक्षेणैवार्थकामसुखयोश्चानित्यत्वंनिश्चित्य विमुंचतित्यजति संन्यस्यतीत्यर्थः । अन्विष्यश्रवणमननाभ्यांनिश्चित्य युक्तोध्यानशीलः निरुत्सुकआत्मदर्शनेनैवसर्वकामावाप्तेरन्यत्रास्थाशून्यः ५७

नन्वेति तत्रतत्ररूपादौ । 'अकरणोहिसः'इतिश्रुतेः इंद्रियैर्वस्तुतआत्मैवगृह्यतेपरंतुपृथक्त्वेनदर्पणेनेवमुखं । अतोऽभेदस्यमेवग्रहेणतिरोधानादकृतार्थतानाशहेतुताचतेषामितितानिनिरोद्धव्यान्ये वेतिभावः ५८ इतोऽपेक्षयाऽधिकंज्ञातव्यंनास्तीत्याह एतदिति ५९ ज्ञानफलंदृष्टादृष्टमयनिवृत्तिकमाह नभवतीतिद्वाभ्यां भयंसंसारदुःखंयतोयस्माद्धेतोरज्जूरगादिवद्द्वैतादविदुषांमहद्भयं ततएव बाधितादिद्विदुषांभयंनभवति हियस्मादज्ञानसंसर्गासंसर्गाविवबंधमोक्षावतःसर्वेषांगतिर्मुक्तिःस्वरूपात्मिकातुल्यैव । हियतःगुणेआधेयेअपनेयेवासतिगुणानामाधानापकर्षतारतम्यात्तुल्यतां प्रवदंतिनतुनिर्गुणेइत्यर्थः ६० यइति निष्कामंकर्मप्राचीनदोषापहमितिपूर्वार्धार्थः । ततुभयंप्राचीनमैहिकंचकर्मतस्यविदुषःकुर्वतोऽपिनाप्रियंबंधंजनयाति । तद्यथेषीकातूलमग्नौप्रोतंप्रदूयेतैवंहास्य सर्वेपाप्मानःप्रदूयंते । तद्यथापुष्करपलाशआपोनाश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यतइतितयोर्दाहाश्लेषश्रवणात्कुतःप्रियमिति । मोक्षंप्रतितुकर्मणःकारणत्वंदूरनिरस्तमितिभावः । 'नास्त्य कृतःकृतेन'इतिश्रुतेः अकृतोमोक्षः कृतेनकर्मणा ६१ अज्ञानफलंदृष्टादृष्टमयमित्याहार्धेन लोकमिति आतुरंकामक्रोधादिव्यसनैर्जर्जरीकृतंलोकंजनःपरीक्षकोऽसूयतेधिक्करोति तस्य कर्मणिषष्ठी तमातुरंतन्निंद्यंकर्मसर्वतःसर्वासुयोनिष्विहलोकेजनयतिजन्मददाति । आतुरोजीवन्निंद्यतेमृतश्चतिर्यक्षुजायतइत्यर्थः ६२ तस्माल्लोकतत्त्वमालोच्ययद्धितंतत्कर्तव्यमित्याह लोकइति लोकेनि

नचात्माशक्यतेद्रष्टुमिंद्रियैश्चविभागशः ॥ तत्रतत्रविसृष्टैश्चदुर्वार्यैश्चाकृतात्मभिः ५८ एतद्बुद्ध्वाभवेद्बुद्धःकिमन्यद्बुद्धलक्षणम् ॥ विज्ञायतद्धिमन्यंतेकृतकृत्यामनीषिणः ५९ नभवतिविदुषांततोभयंयदविदुषांसुमहद्भयंभवेत् ॥ नहिगतिरधिकास्तिकस्यचित्सतिहिगुणेप्रवदंत्यतुल्यताम् ६० यःकरोत्यनभिसंधिपूर्वकंतच्च निर्णुदतियत्पुराकृतम् ॥ नाप्रियंतदुभयंकुतःप्रियंतस्यतज्जनयतीहसर्वतः ६१ लोकमातुरमसूयतेजनस्तस्यतज्जनयतीहसर्वतः ६२ लोकआतुरजनान्निरावि शंस्तत्तदेवबहुपश्यशोचतः ॥ तत्रपश्यकुशलानशोचतोयेविदुस्तदुभयंपदंसताम् ॥ ६३ ॥ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि अध्यात्मक थनेचतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ भीष्मउवाच ॥ हंतवक्ष्यामितेपार्थध्यानयोगंचतुर्विधम् ॥ यंज्ञात्वाशाश्वतींसि द्धिंगच्छंतीहमहर्षयः १ यथास्वनुष्ठितंध्यानंतथाकुर्वंतियोगिनः ॥ महर्षयोज्ञानतृप्तानिर्वाणगतमानसाः २ नावर्ततेपुनःपार्थमुक्ताःसंसारदोषतः ॥ जन्मदोष परिक्षीणाःस्वभावेपर्यवस्थिताः ३ निर्द्वंद्वानित्यसत्त्वस्थाविमुक्तानियमस्थिताः ॥ असंगान्यविवादीनिमनःशांतिकराणिच ४

राविशन्सम्यगभिनिवेशंकुर्वन्नातुरान्पश्य कीदृशान् तत्तदेवनष्टंनष्टंपुत्रदारादिकंशोचतोहाकष्टमितीष्टंशोचमानान् । तथातत्रैवपुत्रादिनाशविषयेकुशलान्सारासारविवेकनिपुणान् । अशो चतःशोकहीनान्पश्यउभयंकर्ममुक्तिसद्योमुक्तिंच सतामुपासकानांज्ञानिनांचपदंपदनीयं ॥ ६३ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुर्नवत्यधिकशत तमोऽध्यायः ॥ १९४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ निर्णीतमात्मतत्त्वंतत्साक्षात्कारोपायंयोगमाह हंतेत्यादिना चतुर्विधमालंबनभेदाच्चतुष्प्रकारं आलंबनानिचयोगशास्त्रेप्रोक्तानि । प्रच्छर्दनविधारणाभ्यांवाप्राणस्य । विषयवतीवाप्रवृत्तिः । स्वप्ननिद्राज्ञानालंबनंवा । यथाऽभिमतध्यानाद्वेति । आलंबनांतराणामप्यत्रैवांतर्भावः अयमर्थः रेचकस्यपूरकस्यवाभ्यासा द्वायुंस्थिरीकृत्यतदालंबनंमनःकुर्यात् वायुस्थैर्येमनःस्थैर्यावश्यंभावात् । यद्वाबाह्यंसूर्यचंद्रनक्षत्ररश्मिप्रतिमादिकंवा । आभ्यंतरंनासिकाग्रजिह्वाग्रादिवाचित्तालंबनंकुर्यात् । यद्वा जाग्रन्निद्रयो रंतरालेयदस्मितामात्रंभातितन्मात्रालंबनंवा । यथाभिमतंनीलग्रीवपीतांबरादिविग्रहंपट्चक्रदेवतादिकंवाआलंब्यचित्तंस्थिरीकुर्यात् । अत्रबहुवक्तव्यंतदग्रेवक्ष्यते १ । २ स्वभावेस्वरूपे ३ सर्वासुविद्यासुसाधारणीमितिकर्तव्यतामाह निर्द्वंद्वाइति निर्द्वंद्वाःशीतोष्णादिसहाः नित्यंसत्त्वेप्रकाशेस्थिताः विमुक्ताःलोभादिभिरितिशेषः नियमेषुशौचसंतोषादिषुस्थितानिष्ठावंतः । निष्परिग्रहाइत्यपिपाठः असंगानि रूपादिसंगहीनानिअविवादीनिप्रतिपक्षशून्यानि शांतिःप्रसादः एवंविधानिस्थानानि ४

तत्रतेषुस्थानेषु ध्यानेन कर्मणिल्युट् ध्येयवस्तुनासंश्लिष्टमेकीभावंगतं । अध्ययनसंश्लिष्टमितिप्राचीनपाठेप्रणवेनघंटानादवदतिदीर्घोच्चारितेनैकीभूतं । एकाग्रमेकंध्येयमेवाग्रेविषयतया ऽस्यस्फुरतिनतुशब्दादयस्तदेकाग्रं तत्रोपायः पिंडीकृत्येति । मनसाह्येवपश्यतिमनसाशृणोतीत्यादिश्रुतेर्मनःकूर्मस्येवहींद्रियाण्यंगानितेनप्रसारितानिविषयान्स्पृशंति । तेनैवगुरूक्तयु क्तिबलेनाकुंचितानिनस्पृशंति । सेयमिंद्रियाणांमनोमध्यात्मनाऽवस्थितिःपिंडीकारः ५ एतमेवस्पष्टयति शब्दमिति ६ पंचानांश्रोत्रादीनांवर्गःप्रमथ्नंतिव्याकुलयंतीतितथा एतानिश ब्दादीनि ७ इंद्रियैःसहसंभूयभ्रांतंमनःसमादध्याद्ध्येयैकप्रवणंकुर्यात् किंकृत्वा पंचवर्गंमनसिसंगृह्य तवइतिपूर्वोक्तप्रत्याहारानंतर्यमुच्यते ८ विसंचारिविषयसंचारशीलं । पंचेंद्रियाणि विषयदेशेप्रापकाणिनिर्गमद्वाराणियस्यतत्पंचद्वारं । चलाचलंचलेष्वपिविषयेष्वचलं । नित्यमव्यग्रं । अंतराहार्दाकाशे निरालंबंदेहाद्यालंबनशून्यंकृत्वाध्यानपथेचतुर्विधेध्यानालंबनेमनः समादध्यात् ९ इंद्रियाणीति एवंसमनस्केंद्रियपिंडीकरणलक्षणोध्यानपथःपूर्वोमुख्योविधित्सितः आलंबनंत्वविवक्षितमित्यर्थः १० एतावताऽविनाकृतकृत्यतेत्याह तस्येति तस्यमनोबुद्धींद्रि यपंचकाख्यसप्तांगस्याऽऽत्मनोजीवस्यषष्ठमांतरमंगंमनःपूर्वंसन्निरुद्धमपिस्फुरिष्यति अतिचांचल्येदृष्टांतोविद्युत् ११ । १२ वायुपथंनाडीमार्गंप्राप्येतिशेषः । मनोभ्रांतंभवतिनाप्रविधानिरूपा

तत्रध्यानेनसंश्लिष्टमेकाग्रंधारयेन्मनः ॥ पिंडीकृत्येंद्रियग्राममासीनःकाष्ठवन्मुनिः ५ शब्दंनविंदेच्छ्रोत्रेणस्पर्शंत्वचानवेदयेत् ॥ रूपंनचक्षुषाविद्याज्जिह्वयान रसांस्तथा ६ घ्रेयाण्यपिचसर्वाणिजह्याद्ध्यानेनयोगवित् ॥ पंचवर्गप्रमाथीनिनेच्छेच्चैतानिवीर्यवान् ७ ततोमनसिसंगृह्यपंचवर्गंविचक्षणः ॥ समादध्यान्मनो भ्रांतमिंद्रियैःसहपंचभिः ८ विसंचारिनिरालंबंपंचद्वारंचलाचलम् ॥ पूर्वेध्यानपथेधीरःसमादध्यान्मनोंतरा ९ इंद्रियाणिमनश्चैवयदापिंडीकरोत्ययम् ॥ ए षध्यानपथःपूर्वोमयासमनुवर्णितः १० तस्यतत्पूर्वसंरुद्धमात्मनःषष्ठमांतरम् ॥ स्फुरिष्यतिसमुद्भ्रांताविद्युदंबुधरेयथा ११ जलबिंदुर्यथालोलःपर्णस्थःसर्वत श्चलः ॥ एवमेवास्यचित्तंचभवतिध्यानवर्त्मनि १२ समाहितंक्षणंकिंचिद्ध्यानवर्त्मनितिष्ठति ॥ पुनर्वायुपथंभ्रांतंमनोभवतिवायुवत् १३ अनिर्वेदोगतक्लेशो गततंद्रिरमत्सरी ॥ समादध्यात्पुनश्चेतोध्यानेनध्यानयोगवित् १४ विचारश्चविवेकश्चवितर्कश्चोपजायते ॥ मुनेःसमादधानस्यप्रथमंध्यानमादितः १५

णिदृष्टेतिशेषः । तस्मिञ्छुक्लमुतनीलमाहुःपिंगलंहरितंलोहितंचेतियोगमार्गेऽनेकनाडीरूपश्रवणात् १३ गतक्लेशःप्राप्तश्रमोऽप्यनिर्वेदोयोगेनिर्वेदशून्यःस्यात् । तथागततंद्रिर्निरालस्यः । अमत्सरीपरोत्कर्षसहःस्यात् । ध्यानेनध्येयाकारप्रत्ययप्रवाहेण १४ विचारश्चेति प्रथमंसमादधानस्यप्रागननुष्ठितयोगस्ययोगिनआदितआदौविचारोविचाराख्यंध्यानंविवेकाख्यंवितर्काख्यं वाउपजायतेऽधिकारभेदेन । तथाहि मध्यमानासूक्ष्मेमनःकल्पितेपीतांबरादिविग्रहेचेतसःप्रणिधानंविचारः सोऽपिद्विविधः सविचारनिर्विचारभेदात् तत्रयदाशब्दतदर्थोल्लेखपूर्वकंभावनाप्रवर्त तेसआद्यः । तदुल्लेखंविनाद्वितीयः । अयमेवस्थूलालंबनस्यवितर्कस्यसवितर्कनिर्वितर्काख्यस्यद्वैविध्येप्रकारेभेदोऽधमाधिकारियोग्यः । ननुविचारोवितर्कोवामानसिकीभौतिकीवामूर्तिरेवाऽलं बनंतस्याश्चध्यानेनकीटभृंगवत्तत्सारूप्यमेवप्राप्यंनतुकैवल्यमितितावनुपायावितिचेत् । सत्यंद्विविधंध्यानं भावनाप्रणिधानंच तत्राद्यंसिद्धंकल्पितंवाविषयमधिकृत्यप्रवर्ततेनवस्तुतत्त्वम पेक्षते । द्वितीयंतुयथागृह्यमाणेमणौपरोपदिष्टस्वाज्ञाततद्गतविशेषावगतयेतदेवचक्षुर्यत्नेनप्रणिधीयतइतिप्रणिधानंवस्तुतत्त्वविषयंतत्रयथास्फटिकःस्वतःशुद्धोजपाकुसुमसान्निध्यान्मध्य मस्यतत्रैवरक्तःस्फटिकइत्यध्यासः । अधमस्यस्फटिकांशप्रमोषेणतत्रैवपद्मरागत्वाध्यासः । तत्रैवमूढतमस्यचंद्रिकायामिंद्रनीलत्वाध्यासः । एवंचिदात्मास्वतःशुद्धोमायासान्निध्यादीशः ।–

–तत्रैवब्रह्मभावप्रमोषेसत्यविद्ययासूत्रात्माध्यासः । तत्राप्यविद्याप्राबल्येसविराडध्यासः । तत्रवस्तुनिचित्तंप्रणिधित्सतःक्रमेणोत्तरोत्तराध्यासनिवृत्तौपूर्वपूर्वोऽध्यासोऽवतिष्ठते । सर्वा त्मनात्वज्ञाननिवृत्तौस्फटिकमणिवदनुपाध्यात्मतत्त्वंप्रकाशते । तत्रविचारेणमूर्त्याकारतानीतेचित्तेमूर्तेरेकैकावयवत्यागेनस्मितमात्रंपदनखचंद्रमात्रंवाभावयेत् । ततस्तदपित्यक्त्वागुरूक्तयुक्त्या विराजिमनोधारयेत् । ततउक्तक्रमेणनिर्गुणप्रतिपत्तिः । तथावितर्कालंबनेस्थूलप्रतिमायांप्रणिधीयमानेचित्तंतत्त्वोपगंभवति । तथाहि प्रतिमायाविराड्रूपेचेतनेपुंसिस्थाणुवदध्यस्तत्त्वेना चेतनतांगतायास्तत्त्वंचैतन्यमेव । तद्यथा तीव्राभिनिवेशेननिरीक्ष्यमाणंशुक्तिरजतंतिरोधीयते शुक्तिश्चप्रकाशते एवमीश्वरत्वेनचिंत्यमानायामूर्तेर्जडत्वंतिरोधीयतेचैतन्यंचाविर्भवति । अतएवबाणादयःस्वाराध्यैःशिवादिभिःसहव्यवहरंतीतिबहुलमुपाख्यायते । तथाचेतनमूर्तेरपितत्त्वंविश्वरूपमेव । तन्निरीक्षणेतदेवविश्वरूपमाविर्भवतियदपश्यद्यशोदाकृष्णमुखे यच्चार्जुनः कृष्णशरीरे । तदिदंवितर्कजंप्रत्यक्षंप्रकृत्योक्तंयोगभाष्येतत्परंप्रत्यक्षंतच्चश्रुतानुमानयोर्बीजमिति । तथानिर्विचारपरिपाकेऽपिसार्वज्ञ्यंसूत्रितं । निर्विचारवैशारद्येऽध्यात्मप्रसादः । ऋतंभरातत्रप्रज्ञेत्यादिना । ततःपुनरुक्तक्रमेणनिर्गुणप्रतिपत्तिः । तत्रयदादेहविस्मरणेनबाह्यमूर्त्याकारंचेतःस्वात्मनाभवतितदाभृंगीभूतस्यकीटस्यकीटभावइवास्यजीवभावोनिवर्ततेकेवल मूर्त्याकारोभवति सेयंमहाविदेहानामधारणा । यांप्रकृत्यसूत्रितं बहिरकल्पितावृत्तिर्महाविदेहाततःप्रकाशावरणक्षयइति । उक्तौविचारवितर्कौव्यक्तालंबनौमध्यमाधमयोग्यौ । अ व्यक्तालंबनावपिद्वौसानंदसास्मितावुत्तमोत्तमयोग्यौ । तत्रगुरूक्तयुक्त्याऽव्यक्तेचित्तंधारयतोऽस्यंतंदेहविस्मरणेसत्यहमेवेदंसर्वोऽस्मीतिश्रुतिप्रसिद्धाःसार्वात्म्यसार्वकाम्यादयईश्वरगुणाउपति

मनसाक्लिश्यमानस्तुसमाधानंचकारयेत् ॥ ननिर्वेदंमुनिर्गच्छेत्कुर्यादेवाऽऽत्मनोहितम् १६ पांसुभस्मकरीषाणांयथावैराशय श्रिताः ॥ सहसावारिणासिक्तानयांतिपरिभावनम् १७ किंचित्स्निग्धंयथाचस्याच्छुष्कचूर्णमभावितम् ॥ क्रमशस्तुशनैर्गच्छेत्स र्वंतत्परिभावनम् १८ एवमेवेंद्रियग्रामंशनैःसंपरिभावयेत् ॥ संहरेत्क्रमशश्चैवससम्यक्प्रशमिष्यति १९

ष्ठंतेउत्तमस्यसोऽयंसानंदः । तेषांप्रविलापनेनास्मितामात्रमवशिष्यतेसोऽयंसास्मितः सत्वपुरुषान्यताख्यातिसंज्ञोहृदयग्रंथिभेदोऽत्रविवेकशब्देनोच्यते सचात्युत्तमस्यपरवैराग्यवतोनष्टाशेषभो गवासनस्यैश्वर्याविर्भावंविनाऽपिभवतीतिमुख्यः । सानंदस्याप्यत्रैवांतर्भावंविवक्षित्वावितयमेवोक्तंविचारश्चविवेकश्चवितर्कश्चेति । तदेतदव्यक्तमालंबनं । 'निद्रादौजागरस्यांतेयोभावउ पजायते ॥ तंभावंभावयन्प्राज्ञःसुखमक्षय्यमश्नुते'इतिशास्त्रेस्पष्टमुक्तमपिगुरूपदेशंविनादुर्गमंक्लेशसाध्यंचदेहाभिमानवतां । यथोक्तं 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसां'इति । एतेन प्राणालंबनागतिर्व्यक्ताव्यक्तोभयालंबनाज्ञेया । एतासुचतसृष्वपियोगविधासुवितर्कस्थूलसूक्ष्मकारणचैतन्यैरनुगतोविचारःसूक्ष्मकारणचैतन्यैस्त्रिभिरेव । विवेकःकारणचैतन्याभ्यामेव । निर्बीजस्तुकैवल्यरूपःफलभूतइतिसाधनरूपेष्वेषुनगणितइत्यलंपल्लवितेन १५ मनसेति तुरप्यर्थे समाधानंसमाधिकारयेत्कुर्यादेव स्वार्थेणिच् तदेवाह नेति निर्वेदोयोगोनसेत्स्यतीत्युपरमोयोगात् १६ सउपरमोनकर्तव्यःकालक्रमेणावश्यंभावात्फलस्येतिसदृष्टांतमाह पांस्विति करीषंशुष्कगोमयचूर्णं एतेषांराशयोजलेनासिक्तमात्राःसंतःपरिभावनंमूर्त्याद्याकारेणकल्पनं नयांतिनप्राप्नुवंति १७ बहुकालंजलेक्लिन्नाःसंतश्चिक्कणतांप्राप्यमूर्त्याद्याकारंग्रहीतुंशक्तास्तद्वच्चित्तंचिरकालयोगेहृदयप्रंतत्वाकारंकर्तुंशक्यमित्याह किंचिदिति अल्पस्नेहादभावितमपि चिरकालक्लेदात्संजातबहुलस्नेहंभावितुंशक्यमित्यर्थः १८ दार्ष्टांतिकेयोजयति एवमेवेति संपरिभावयेन्मूर्त्याद्याकारंनयेत् क्रमशश्चमूर्तेरेकैकावयवत्यागक्रमेणतमपिचित्तस्याकारंसंहरेत् । अयंभावः यत्रयत्रालंबनेस्थिरीभूतंचित्तंभवतितंतमाकारंपरित्यज्यसोपानारोहक्रमेणोत्तरमाकारंप्रविशेत् । सर्वाकारोपरमेतुप्रशमिष्यतिप्रशाम्यतिप्रकर्षेणशमंगच्छति निर्विकल्पंभवतीत्यर्थः । तथाहि वितर्काद्विचारंगच्छेद्विचारादानंदमानंदादस्मितांततःकैवल्यमितिक्रमोयोगशास्त्रेप्रसिद्धः १९

स्वयमितितुद्धिर्गृह्यते धीर्मनःपंचेंद्रियगणंचध्यानपथेपूर्वोक्तेनित्याभ्यस्तेनयोगेनस्याप्यप्रविलाप्यदुग्धेंधनानलवत्स्वयमपिशाम्यति । यथोक्तं येनत्यज्यसितंत्यजेति । ब्रह्माकाराचेतो वृत्तिःकतकरजोवद्वृत्त्यंतराणिशमयंतीस्वयमपिशाम्यतीत्यर्थः २० नतदिति ऐहिकात्परमसुखात्सर्वांगसंपन्नात्सार्वभौमपदादामुष्मिकाद्धिरण्यगर्भपदाद्वानतस्माप्यंयत्संयतात्मनोनिरुद्ध चित्तस्ययोगिनोभवति तथाचश्रुतिः । 'समाधिनिर्धूतमलस्यचेतसोनिवेशितस्यात्मनियत्सुखंभवेत् ॥ नशक्यतेवर्णयितुंगिरातदास्वयंतदंतःकरणेनगृह्यते'इति २१ रंस्यतेतद्व्रुचिज्ञःस्वयमेवत त्ररतिंप्राप्स्यति नतत्प्राप्तौहठापेक्षेत्यर्थः । निर्वाणंकवल्यं निरामयंनिर्द्वंद्वं २२ ॥ इतिशांति०मो०नी०भा०पंचनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ तत्रपूर्वतत्राध्ययनसंक्षि प्तमेकाग्रेधारयेन्मनइत्येकांतेजप्यसहितंमनएकाग्रंकृत्वानिरुंध्यादित्युक्तं तत्रजपस्यश्रेष्ठत्वंविज्ञायतद्विधिफलादिकंश्रुतानुवादपूर्वकंपृच्छति चातुराश्रम्येति चतुर्णामाश्रमाणांहितंचातुराश्र म्यं तेतवउक्तंवचनंश्रुतमित्युत्तरश्लोकाद्विपरिणामेनापकृष्यते । तेइतिसंबंधेषष्ठीनकर्तृषष्ठी येननलोकाव्ययनिष्ठेतिप्रतिषेधप्रसक्तिःस्यात् इतिहासाःपुरावृत्तानि १ कथातत्त्वावबोधकोवा क्यप्रबंधः २ । ३ सांख्यंवेदांतविचारः योगाश्चित्तवृत्तिनिरोधः क्रियाःकर्माणि एतेषांविधिःप्रकाशनं किंजापकशब्देनविचारकृद्योगकृत्कर्मठोवाउच्यतइत्यर्थः ४ यज्ञविधिर्ब्रह्मयज्ञ

स्वयमेवमनश्चैवंपंचवर्गंचभारत ॥ पूर्वंध्यानपथेस्थाप्यनित्ययोगेनशाम्यति २० नतत्पुरुषकारेणनचदैवेनकेनचित् ॥ सुखमेष्यतितत्तस्ययदेवंसंयतात्मनः २१ सुखेनतेनसंयुक्तोरंस्यतेध्यानकर्मणि ॥ गच्छंतियोगिनोह्येवंनिर्वाणंतन्निरामयम् २२ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्ष० ध्यानयोगकथनेपंचनव त्यधिकशततमोऽध्यायः ॥ १९५ ॥ ॥ युधिष्ठिरउवाच ॥ चातुराश्रम्यमुक्तंतेराजधर्मास्तथैवच ॥ नानाश्रयाश्चबहवइतिहासाःपृथग्विधाः १ श्रुता स्त्वत्तःकथाश्चैवधर्मयुक्तामहामते ॥ संदेहोऽस्तितुकश्चिन्मेतद्भवान्वक्तुमर्हति २ जापकानांफलावाप्तिंश्रोतुमिच्छामिभारत ॥ किंफलंजपतामुक्तंक्वातिष्ठंति जापकाः ३ जप्यस्यचविधिंकृत्स्नंवक्तुमर्हसिमेऽनघ ॥ जापकाइतिकिंचैतत्सांख्ययोगक्रियाविधिः ४ किंयज्ञविधिरेवैषकिमेतज्जप्यमुच्यते ॥ एतन्मेसर्वमाच क्ष्वसर्वज्ञोह्यसिमेमतः ५ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ यमस्ययत्पुरावृत्तंकालस्यब्राह्मणस्यच ६ सांख्ययोगौतु यावुक्तौमुनिभिर्मोक्षदर्शिभिः ॥ सन्यासएववेदांतेवर्ततेजपनंप्रति ॥ वेदवादाश्चनिर्वृत्ताःशांताब्रह्मण्यवस्थिताः ७ सांख्ययोगौतुयावुक्तौमुनिभिः समदर्शिभिः ॥ मार्गौतावप्युभावेतौसंश्रितौनचसंश्रुतौ ८

विधिः ५ अत्रेति अत्रजपविषये चकारान्मृत्युप्रभृतीनांग्रहणं पुरावृत्तंमत्राभ्रेवक्ष्यमाणं ६ सांख्ययोगौयावुक्तौतयोर्मध्येसांख्येजपक्रियात्यागएवेत्याह सांख्येतिसार्धेन संन्यासइति वेदांतेसांख्याख्ये तत्रहेतुमाह वेदेति चकारोहेत्वर्थः यतोवेदवादाःसर्वेब्रह्मण्यवस्थिताःपर्यवसन्नानतूपास्त्यादिविधिपराः । यतःशांतानिवृत्तिप्रधानाः । उपासनायाश्चमानसक्रियात्वा त्तत्परत्वेवेदांतानांशांतत्वंनयुज्येतेत्यर्थः । नन्वाम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानामितिपरमार्षिणाऽक्रियार्थानांसिद्धार्थावबोधकानांराजाऽसौगच्छतीत्यादिवाक्यानामानर्थक्योक्त्याऽ प्रामाण्याभिधानादितितत्राह निर्वृत्ताइति रज्जुरियंनसर्पइत्यादिवत्सिद्धार्थबोधकस्यापिवाक्यस्यभयकंपाद्यनर्थनिवर्तकत्वेनार्थवत्त्वोपपत्त्याप्रवृत्तिनैराकांक्ष्येणकृतार्थत्वोपपत्तेः तथाचमा नांतरानवगतब्रह्मात्मैक्यरूपसिद्धार्थपरत्वाद्वेदांतानांनतत्रजपापेक्षाऽस्तीत्यर्थः ७ एवंब्रह्मात्मैक्यप्रमितौजपानपेक्षामुक्त्वाद्वयोरपिमार्गयोर्जपस्याऽऽरादुपकारित्वेनापेक्षांसाक्षात्कारोत्पत्तावनपे क्षांचाह सांख्येति संश्रितौजपमितिशेषः । तथाहि चित्तशुद्धिद्वारातत्त्वमसीतिवाक्यार्थज्ञानेआलंबनरूपत्वेनचयोगेप्र धानजपउपकारोतिनपरतःसाक्षात्काररूपफलेोपकारित्वेन ८

एतदेवाह यथेत्यादिना अत्रापिमार्गद्वयेऽपि मनःसमाधिर्मनोनिग्रहइंद्रियजयः ९ सत्यंप्रसिद्धं अग्निपरिचारोऽग्निपरिचर्या । विविक्तानांशुद्धानामाहारादीनामेकांतदेशानांवा । ध्या नंध्येयाकारप्रत्ययप्रवाहः । तपआलोचनंविषयदोषदर्शनात्मकं । दमोजितानामिंद्रियाणांतत्त्वप्रतिपत्तियोग्यता १० विषयाणांविशेषेणबध्नतांकामादीनांप्रतिसंहारोजयः । शमोनिगृ हीतस्यमनसोविक्षेपराहित्यं । एषइति एषमनःसमाध्यादिर्जपतःप्रवर्तकः कामनावतःस्वर्गादिजनकोजपांगभूतोधर्मइत्यर्थः ११ निवर्तकंजपतोयज्ञंव्याचष्टे यथेति कर्मनिवृत्तिर्मोक्षःसय थासंपद्यतेसयज्ञोनिवर्तकइत्यर्थः । कर्मनिवृत्तिप्रकारमाह एतदिति एतन्मनःसमाध्यादिपरिवर्तयेन्निष्कामानुष्ठानेनविपरीतंकुर्यात् १२ एतदेवाहार्धेन निवृत्तमिति विरक्तमित्यपिपाठः मार्गंविशिनष्टि व्यक्तंबाह्यमाभ्यंतरंवाऽलंबनंयाह्वितर्कविचारयोःप्रागुक्तंसूक्ष्मंस्थूलंच अव्यक्तंसानंदसास्मितयोरालंबनं ततोऽनाश्रयंनिर्विषयंशुद्धचिन्मात्रमित्यर्थः १३ मार्गप्राप्तौहेतुमाह कु शेति कदंबमुकुलसदृशाद्धृदयपिंडात्प्रस्थितानाड्यःकुशवत्स्थूलमूलाःसूक्ष्माग्रा अग्रैर्हृदयपिंडंस्पृशंत्योमूलैर्ब्रह्मांडमापूर्यतिष्ठंति । तदिदमुक्तं कुशोच्चयनिषण्णइत्यधस्तात् कुशहस्तइतिपुर स्तात् । कुशैःशिखीत्युपरिष्टात् । कुशैःपरिवृतइतिसमंतात् । तस्मिन्कुशजालमध्येइतिहृदयपिंडेऽपिकुशैश्छन्नोऽयंपुरुषइतिप्रभाद्वारामदीपस्येवास्यपुरुषस्यनाडीद्वाराब्रह्मांडव्याप्तिर स्तीति श्रुतावपितावाअस्यैताहितानामनाड्यइत्युपक्रम्यतस्यवाएतस्यपुरुषस्यप्राचीदिक्प्राञ्चःप्राणादक्षिणादिग्दक्षिणेप्राणाइत्यादिनाऽयमेवार्थोदर्शितः तथाचैतद्व्याख्यातंवार्तिके । 'क

यथासंश्रूयतेराजन्कारणंचात्रवक्ष्यते ॥ मनःसमाधिरत्रापितथेंद्रियजयःस्मृतः ९ सत्यमग्निपरीचारोविविक्तानांचसेवनम् ॥ ध्यानंतपोदमःक्षांतिरन सूयामिताशनम् १० विषयप्रतिसंहारोमितजल्पस्तथाशमः ॥ एषप्रवर्तकोयज्ञोनिवर्तकमथोशृणु ११ यथानिवर्ततेकर्मजपतोब्रह्मचारिणः ॥ एत त्सर्वमशेषेणयथोक्तंपरिवर्तयेत् १२ निवृत्तंमार्गमासाद्यव्यक्ताव्यक्तमनाश्रयम् १३ कुशोच्चयनिषण्णःसन्कुशहस्तःकुशैःशिखी ॥ कुशैःपरिवृतस्तस्मि न्मध्येछन्नःकुशैस्तथा १४ विषयेभ्योनमस्कुर्याद्विषयान्नचभावयेत् ॥ साम्यमुत्पाद्यमनसामनस्येवमनोदधत् १५ तद्धियाध्यायतिब्रह्मजपन्वैसंहितां हिताम् ॥ संन्यस्यत्यथवातांवैसमाधौपर्यवस्थितः १६ ध्यानमुत्पादयत्यत्रसंहिताबलसंश्रयात् ॥ शुद्धात्मातपसादांतोनिवृत्तद्वेषकामवान् १७ अ रागमोहोनिर्द्वंद्वोनशोचतिनसज्जते ॥ नकर्ताकारणानांचनकार्याणामितिस्थितिः १८

दंबपुष्पवत्सैषादेवताहृदयाश्रया ॥ बहिर्गतासुनाडीषुविविक्ताहृदयादधि ॥ यथाऽस्यनाड्यःपुंसःस्युरध्यात्मंसर्वतोगताः ॥ अधिभूतंतथैवास्यवायुमय्यःसमंतगाः ॥ एतस्मादेवनिःसृत्य शरीरात्सर्वतोगताः ॥ अविभूतात्मनैवायंनाडीलक्षणवर्त्मना ॥ आपूर्येदंजगत्सर्वंस्थितआध्यात्मिकःपुमान्'इति । तथाचशरावपिहितप्रभावत्सर्वद्वारापिधानेहार्दाकाशेएकीभूतंप्रज्ञानम नादौसंसारेसमनुभूतनिखिलप्रपंचवासनावासितंतत्सर्वमवभासयतीतिचितःसार्वात्म्यमुक्तंभवति १४ नमइति बाह्यान्नचभावयेदित्यांतरांश्चविषयांस्त्यजेदित्युक्तं साम्यंजीवब्रह्मणोरैक्यं तत्र हेतुः मनस्येवमनःप्रविलापनं मनोहिनकूटस्थेलीयते तस्यतद्विकारत्वाभावात् । नापिमायायांतस्यास्तुच्छत्वात् । अतःपरिशेषात्स्वस्मिन्नेवतस्यलयइत्युक्तं १५ तद्धियासाम्यधिया प्रत्यगभेदेनेत्यर्थः । ब्रह्मशुद्धबुद्धमुक्तत्वादिलक्षणं अहंदेहेंद्रियादिभिन्नोविशुद्धोऽस्मीतिभावयेदित्यर्थः । संहितांयथायोग्यंप्रणवगायत्र्यादिरूपां संन्यस्यतिचित्तस्थैर्यसंपत्तौसत्यां अथेत्यानं तर्ये वेत्यवधारणे १६ ध्यानमितिसार्धःश्लोकः ध्यानंध्येयाकारप्रत्ययप्रवाहं । संहितायास्तदुत्पादकत्वेद्वारमाह शुद्धात्माशुद्धचित्तः तपसाविचारेण दांतोजितेंद्रियः निवृत्तद्वेषाणांतर्व भूताभयप्रदानांयोगिनांयःकामोब्रह्मावाप्तिविषयस्तद्वान् १७ कारणानांकर्मणां कार्याणांफलभोगानाम् १८

प्रस्थापयेत्तत्सज्जीकुर्यात् क्वचित्कर्मकर्तृत्वेभोगकर्तृत्वेवा १९ ध्यानक्रियैवपरोत्कृष्टत्वेनाभिमतायस्य ध्यानेश्रद्धावानित्यर्थः । अतएवध्यानवान्ध्याननिष्ठः ध्यानद्वारकस्तत्त्वनिश्चयो
यस्यसध्याननिश्चयः ध्यानेध्यानालंबनेसमाधिंचित्तैकाग्र्यमुत्पाद्य तदप्यालंबनम् २० तस्यांत्यक्तसर्वालंबनायां सर्वत्यागकृतोनिर्बीजसमाधिस्तत्स्यसुखंप्रत्यगानंदं विशतेइत्यप
कृष्यते कोविशते योनिरिच्छोयोगफलेऽणिमादावपीच्छारहितः प्राणान्प्राणमनोबुद्धींद्रियात्मकंलिंगशरीरंलोकांतरगतिसाधनंयस्त्यजतिसब्राह्मींतनुं सुखमितिसामानाधिकरण्यं
तत्प्रविशतिनतूत्क्रामति तथाचश्रुतिः 'योकामोनिष्कामआप्तकामोनतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंते'इति तस्यशुद्धब्रह्मविदःअत्रात्मनिसमवनीयंतेएकीभावेनविलीयंतेइतिश्रुतिपदा
नामर्थः २१ ब्रह्मकायोब्रह्मस्वरूपसुखंतस्यनिषेवणंचेत्रेच्छतितर्ह्युत्क्रामति नजायतेनैवजन्मप्राप्नोति योगीस्वेच्छयाकैवल्यंवाब्रह्मलोकंवागच्छतिनतुसंसारंप्राप्नोतीत्यर्थः मार्गस्थो
देवयानमार्गस्थः श्रीमद्भागवतेप्येतद्दर्शितंयदिप्रयास्यन्नृपपारमेष्ठ्यमित्यादिना २२ आत्मबुद्ध्यातत्त्वसाक्षात्कारेण विरजःरजोगुणयुक्तंकार्यब्रह्मभावरूपमापेक्षिकममृतं यथाऽऽहुः 'आ

नचाहंकारयोगेनमनःप्रस्थापयेत्क्वचित् ॥ नचार्थग्रहणेयुक्तोनावमानीनचाक्रियः १९ ध्यानक्रियापरोयुक्तोध्यानवान्ध्याननिश्चयः ॥ ध्यानेसमाधिमुत्पाद्य
तदपित्यजतिक्रमात् २० सवैतस्यामवस्थायांसर्वत्यागकृतःसुखम् ॥ निरिच्छस्त्यजतिप्राणान्ब्राह्मींसंविशतेतनुम् २१ अथवानेच्छतेतत्रब्रह्मकायनिषे
वणम् ॥ उत्क्रामतिचमार्गस्थोनैवक्वचनजायते २२ आत्मबुद्ध्यासमास्थायशांतीभूतोनिरामयः ॥ अमृतंविरजःशुद्धमात्मानंप्रतिपद्यते २३ ॥ इतिश्रीम
हाभारते शांतिपर्वणि मोक्षधर्मपर्वणि जापकोपाख्याने षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ ॥ युधिष्ठिरउवाच ॥ गतीनामुत्तमाप्राप्तिःकथिताजापके
ष्विह ॥ एकैवैषागतिस्तेषामुतयांत्यपरामपि १ ॥ भीष्मउवाच ॥ शृणुष्वावहितोराजन्जापकानांगतिंविभो ॥ यथागच्छंतिनिरयाननेकान्पुरुषर्षभ २ यथो
क्तपूर्वंपूर्वंयोनानुतिष्ठतिजापकः ॥ एकदेशक्रियश्चात्रनिरयंसचगच्छति ३ अवमानेनकुरुतेनप्रीयतिनहृष्यति ॥ ईदृशोजापकोयातिनिरयंनात्रसंशयः ४
अहंकारकृतश्चैवसर्वेनिरयगामिनः ॥ परावमानीपुरुषोभवितानिरयोपगः ५ अभिध्यापूर्वकंजप्यंकुरुतेयश्चमोहितः ॥ यत्रास्यरागःपततितत्रतत्रोपपद्यते ६
अथैश्वर्यप्रवृत्तेषुजापकस्तत्ररज्यते ॥ सएवनिरयस्तस्यनासौतस्मात्प्रमुच्यते ७ रागेणजापकोजप्यंकुरुतेतत्रमोहितः ॥ यत्रास्यरागःपततितत्रतत्रोपपद्यते ८

मृतसंप्लवंस्थानममृतत्वंहिभाष्यते'इति तदन्यद्विरजःआत्यंतिकममृतंसमास्थायसम्यगास्थायविषयीकृत्यशांतीभूतोनिष्कामोनिरामयोजरामरणवर्जितोविशुद्धंनिष्कलमात्मानंप्रतिपद्यते २३
॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेषण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥ जापकानांयोगसिद्धिप्राप्तिद्वाराजरामरणराहित्यमिच्छयादेहत्यागोब्रह्मलोकंप्रतिगमनंवि
शुद्धकैवल्यंचेत्युक्तमितोप्यन्याकाचित्तेषांगतिरस्तीतिपृच्छति गतीनामिति प्राप्तिर्गतिः १ इतोऽन्यामतयःपूर्वोक्तगतितोहीनाइतिसूचयंस्तासुनिरयपदंप्रयुंजानएवोत्तरयति शृणुष्वेति २ एकदे
शेति अपूर्णांगजपपरइत्यर्थः ३ अवमानेनाश्रद्धया जपेप्रीत्यादिरहितः ४ अहंकारकृतोदर्पवंतः पुरुषोजापकः ५ अभिध्याफलाभिसंधिः यत्रफलेरागःप्रीतिस्तत्रतत्फलभोगनिमित्तमुपपद्य
तेयोग्यंदेहंप्राप्नोति ६ ऐश्वर्यमणिमादिकंतस्यप्रवृत्तानिप्रवृत्तयस्तेषुप्रवर्तमानेष्वणिमादिष्वित्यर्थः सएवतत्ररागएव ७ तत्रैश्वर्यविषयेरागेणमोहितः ८ ॥६३॥

दुष्टाभोगासक्ताबुद्धिर्यस्यसदुर्बुद्धिः अकृतप्रज्ञोभोगानांदुरंतताज्ञानशून्यः ९ । १० नसंपूर्णोनसंयुक्तइत्यस्याऽविरक्तोपिहठेनत्यक्तभोगइत्यर्थः ११ अनिवृत्तंस्वाभाविकंअनागंतुकत्वात् । अनि
मित्तमितिपाठेऽपिसएवार्थः । अव्यक्तंवाङ्मनसातीतं ब्रह्मणिप्रणवेस्थितं तद्द्वाराप्राप्यं तद्भूतोब्रह्मभावंगतः १२ दुष्प्रज्ञानेनकामाक्रांततयाबुद्ध्या दोषारागादयः तदात्मकादुष्प्रज्ञानात्मकाः
१३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ ७ ॥ निरयपदार्थप्रसिद्धंगृहीत्वापृच्छति कीदृशमिति कौतूहलंशुभकर्तु
रप्यशुभनिरयप्राप्तिरित्याश्चर्यम् १ धर्ममूलंवेदःपरमात्मावतावाश्रयौयस्य २ अमूनिवक्ष्यमाणानि परमात्मनांमहाबुद्धीनां देवानांदिव्यदेहानां संस्थानान्याकृतयः वर्णाःश्वेतपीता
द्याः नानारूपाण्यनेकविधानि ३ आक्रीडाःक्रीडास्थानान्युद्यानानि ४ । ५ परमात्मनःस्थानस्येतिपरमात्माभिन्नंस्थानमपेक्ष्येत्यर्थः ६ एतदेववर्णयतित्रिभिः अभयमिति अभयं
नाशभयशून्यं यतोऽनिमित्तंस्वभावसिद्धं क्लेशाअविद्यास्मितारागद्वेषाभिनिवेशास्तैःसमावृतंचन असंगत्वादागंतुकमपिभयंतत्रनास्तीत्यर्थः । द्वाभ्यांप्रियाप्रियाभ्यामुक्तं । 'अशरीरंवावसंतं

दुर्बुद्धिरकृतप्रज्ञश्चलेमनसितिष्ठति ॥ चलामेवगतिंयातिनिरयंवानियच्छति ९ अकृतप्रज्ञकोबालोमोहंगच्छतिजापकः ॥ समोहान्निरयंयातितत्रगत्वाऽनुशो
चति १० दृढग्राहीकरोमीतिजाप्यंजपतिजापकः ॥ नसंपूर्णोनसंयुक्तोनिरयंसोऽनुगच्छति ११ ॥ युधिष्ठिरउवाच ॥ अनिवृत्तंपरंयत्तदव्यक्तंब्रह्मणिस्थितम् ॥
तद्भूतोजापकःकस्मात्सशरीरमिहाविशेत् १२ ॥ भीष्मउवाच ॥ दुष्प्रज्ञानेननिरयाबहवःसमुदाहृताः ॥ प्रशस्तंजापकत्वंचदोषाश्चैतेतदात्मकाः १३ ॥ इति
श्रीम०शां०मो०जापकोपाख्यानेसप्तनवत्यधिकशततमोऽध्यायः ॥१९७ ॥युधिष्ठिरउवाच॥ कीदृशंनिरयंयातिजापकोवर्णयस्वमे॥ कौतूहलंहिराजन्मेतद्भवान्व
क्तुमर्हति १ ॥भीष्मउवाच॥ धर्मस्यांशप्रसूतोऽसिधर्मिष्ठोऽसिस्वभावतः ॥ धर्ममूलाश्रयंवाक्यंशृणुष्वावहितोऽनघ २ अमूनियानिस्थानानिदेवानांपरमात्मनाम् ॥
नानासंस्थानवर्णानिनानारूपफलानिच ३ दिव्यानिकामचारीणिविमानानिसभास्तथा ॥ आक्रीडाविविधाराजन्पद्मिन्यश्चैवकांचनाः ४ चतुर्णांलोकपालानां
शुक्रस्याथबृहस्पतेः ॥ मरुतांविश्वेदेवानांसाध्यानामश्विनोरपि ५ रुद्रादित्यवसूनांचतथाऽन्येषांदिवौकसाम् ॥ एतेवैनिरयास्तातस्थानस्यपरमात्मनः ६ अभयं
चानिमित्तंचनतत्क्लेशसमावृतम् ॥ द्वाभ्यांमुक्तंत्रिभिर्मुक्तमष्टाभिस्त्रिभिरेवच ७ चतुर्लक्षणवर्जंतुचतुष्कारणवर्जितम् ॥ अप्रहर्षमनानंदमशोकंविगतक्लमम् ८

नप्रियाप्रियेस्पृशते'इतिश्रुतेः । यतस्त्रिभिर्गुणैःप्रियाप्रियहेतुभिर्मुक्तं गुणातीतत्वमपिकुतः यतोऽष्टाभिःपुरीभिः'भूतेंद्रियमनोबुद्धिर्वासनाकर्मवायवः ॥ अविद्याचेत्यमुंवर्गमाहुःपुर्यष्टकंबुधाः'इत्युक्ता
भिर्मुक्तं कार्यनिवृत्त्याकारणनिवृत्तिर्लक्ष्यतइत्यर्थः । एतदपिकुतः त्रिभिर्ज्ञेयज्ञानज्ञातृभावैर्मुक्तं ७ इदमपिकुतः यतश्चतुर्लक्षणवर्जंलक्ष्यतेज्ञायतेविषयस्वरूपमेभिस्तानिलक्षणानिदृष्टिश्रु
तिमतिविज्ञातयः । रूपादिहीनत्वान्नप्रत्यक्षस्यविषयः । गुणजातिक्रियाहीनत्वान्नशब्दस्य । असंगत्वेनसंबंधाग्रहान्नानुमानस्य । सर्वसाक्षित्वेनाजडत्वाच्चनबुद्धेः तथाचश्रुतिः । 'नदृष्टेर्द्रष्टारं
 पश्येर्नश्रुतेःश्रोतारंशृणुयानमतेर्मंतारमन्वीथानविज्ञातेर्विज्ञातारंविजानीया'इति चतुष्कारणवर्जितमुक्तैरेवदृष्ट्यादिविषयस्वकारणैरूपादिमत्त्वादिभिर्वर्जितं । तथाचश्रुतयः अस्थूलमनण्वि
त्याद्याःपरमात्मनिसर्वविशेषान्निषेधंति । पूर्वत्रद्वाभ्यांयुक्तमितिपाठेतुपूर्वार्धेनप्रियाप्रियादिभोगमात्मन्यध्यारोप्योत्तरार्धेनतदपवादइतिध्येयं भ्रांत्याप्रियादियुक्तमपितत्त्वतोनदर्शनादिवि
षयइत्यर्थः । प्रहर्षइष्टविषयलाभजंसुखं आनंदस्तद्भोगजंसुखं ताभ्यांहीनमप्रहर्षमनानंदं । शोकआंतरंदुःखं क्लमोबाह्यंदुःखं ताभ्यांहीनमशोकंविगतक्लमम् ८

कालइति संपद्यतेउत्पद्यते। यस्त्वतीतानागतादिव्यवहारहेतुरखंडदंडायमानःकालोनामनित्यंतत्त्वांतरमस्ति। तस्यचोपाधिर्जन्यवस्तुमात्रमितिवदंति। तत्रउपाधयएवस्वस्यातीतत्वादिव्य वहारहेतवोभवंति। किमंतर्गडुनाकालेनेत्यभिप्रेत्योक्तं कालःसंपद्यतइति नप्रभुरित्यायंतशून्यंतद्ब्रह्मस्त्वितिदर्शितम् ९ आत्मनःप्रतीचःकेवलतांत्रिपुट्याअभावेनैकाकितां तत्रपरमेस्थाने १० स्थानवरस्यस्थानवरापेक्षया ११ ॥ इतिशांतिपर्वणि मोक्षपर्वणि नीलकंठीये भारतभावदीपे अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ॥ आख्यायिकामुखेनजापकस्यवश्यायमादयो भवंतिसचस्वंपरंचतारयतितेनचसत्यादिकंरक्षणीयंदमादिकंचत्याज्यमितिनिरूपयत्यध्यायद्वयेन कालेत्यादिना आयुःपरिच्छेदिकादेवताकालः प्राणवियोजिकामृत्युः। पुण्यापुण्यफल

कालःसंपद्यतेतत्रकालस्तत्रनवैप्रभुः ॥ सकालस्यप्रभूराजन्स्वर्गस्यापितथेश्वरः ९ आत्मकेवलतांप्राप्तस्तत्रगत्वानशोचति ॥ ईदृशंपरमंस्थानंनिरयास्तेच तादृशाः १० एतेतेनिरयाःप्रोक्ताःसर्वएवयथातथम् ॥ तस्यस्थानवरस्येहसर्वेनिरयसंज्ञिताः ॥ ११ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षपर्वणि जापकोपा ख्यानेअष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ॥ युधिष्ठिरउवाच ॥ कालमृत्युयमानांतिइक्ष्वाकोर्ब्राह्मणस्यच ॥ विवादोव्याहृतःपूर्वंतद्भवान्वक्तुमर्हति १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ इक्ष्वाकोःसूर्यपुत्रस्ययद्वृत्तंब्राह्मणस्यच २ कालस्यमृत्योश्चतथायद्वृत्तंतन्निबोधमे ॥ यथासतेषां संवादोयस्मिन्स्थानेऽपिचाभवत् ३ ब्राह्मणोजापकःकश्चिद्धर्मवृत्तोमहायशाः ॥ षडंगविन्महाप्राज्ञःपैप्पलादिःसकौशिकः ४ तस्यापरोक्षंविज्ञानंषडंगेषुबभूवह॥ वेदेषुचैवनिष्णातोहिमवत्पादसंश्रयः ५ सोंत्यंब्राह्मंतपस्तेपेसंहितांसंयतोजपन् ॥ तस्यवर्षसहस्रंतुनियमेनतथागतम् ६ सदेव्यादर्शितःसाक्षात्प्रीताऽस्मीति तदाकिल ॥ जप्यमावर्तयंस्तूष्णींनसतांकिंचिदब्रवीत् ७ तस्यानुकंपयादेवीप्रीतासमभवत्तदा ॥ वेदमातातततस्तस्यतज्जप्यंसमपूजयत् ८ समाप्तजप्यस्तू त्थायशिरसापादयोस्तदा ॥ पपातदेव्याधर्मात्मावचनंचेदमब्रवीत् ९ दिष्ट्यादेविप्रसन्नात्वंदर्शनंचागतामम ॥ यदिचापिप्रसन्नाऽसिजप्येमेरमतांमनः १० ॥ सावित्र्युवाच ॥ ॥ किंप्रार्थयसिविप्रर्षेकिंचेष्टंकरवाणिते ॥ प्रब्रूहिजपतांश्रेष्ठसर्वंतत्तेभविष्यति ११ इत्युक्तःसतदादेव्याविप्रःप्रोवाचधर्मवित् ॥ जप्यंप्रति ममेच्छेयंवर्धत्वितिपुनःपुनः १२ मनसश्चसमाधिर्मेवर्धताहरहःशुभे ॥ तत्तथेतिततोदेवीमधुरंप्रत्यभाषत १३ इदंचैवापरंप्राहदेवीतत्प्रियकाम्यया ॥ निरयंनैवयातात्वंयत्रयाताद्विजर्षभाः १४ यास्यसिब्रह्मणःस्थानमनिमित्तमनिंदितम् ॥ साधयेभवितांचैतद्यत्त्वयाऽहमिहार्थिता १५ नियतोजपचैकाग्रो धर्मस्त्वांसमुपैष्यति ॥ कालोमृत्युर्यमश्चैवसमायास्यंतितेंऽतिकम् १६

दायिकाययमः तद्वतं १ सूर्यपुत्रस्ययमस्य २। ३ जापकोमं त्राध्ययनपरः षडंगानिशिक्षादीनिहृदयादीनिवावेत्तीतिषडंगवित् ४ अपरोक्षंतत्त्वदर्शनात्मकं ५ सोंत्यंवादोऽर्थज्ञानं भासनोपसंभाषितिसूत्रेवेदज्ञानार्थत्वानुवादात् तेनसहसोत्यं वदःसुपि कयप्रत्ययेतिक्यप्यजादित्वात्संप्रसारणं ब्राह्मंब्राह्मणयोग्यं तपःस्वधर्मानुष्ठानं। सोंत्यमितिपाठेंत्यमुत्तमम् ६ देव्यासाविक्यादर्शितोदर्शनदानेनानुगृहीतः ७। ८। ९। १०। ११ १२ समाधिर्नियमः १३ निरयंस्वर्गक्षयिणं यातायास्यसि यातागताः १४ अविमित्तमजन्यं यज्जप्येमेरमतांमनइति १५ जपनपंकुरु तेनकालादीनांतवभयंनास्तीत्यर्थः १६



१७। १८ दर्शयामासद्विजायात्मानंदर्शितवान् १९। २०। २१। २२ किंत्विति त्यक्त्वाऽत्मनःशरीरमित्यमुचज्ज्यते अत्रतेशब्दंकरोतीत्युत् उहशब्दे जापकोऽहंबहुनादुःखेनमिश्रंसु खंयत्रतंदेहंदेहांतरंनसृजेयंकिंत्वनेनैवदेहेनमुक्तःस्यामित्यर्थः। तस्योदितिनामसएषसर्वेभ्यःपाप्मभ्यउदितइतिश्रौतनिर्वचनादुत्सर्वपापहीनोऽहंदेहंनसृजेयमितिवा कैवल्याधिकारित्वान्मे

भविताचविवादोऽत्रतवतेषांचधर्मतः ॥ भीष्मउवाच ॥ एवमुक्त्वाभगवतीजगामभवनंस्वकम् १७ ब्राह्मणोऽपिजपन्नास्तेदिव्यंवर्षशतंतथा ॥ सदादांतोजित क्रोधःसत्यसंधोऽनसूयकः १८ समाप्तेनियमेतस्मिन्नथविप्रस्यधीमतः ॥ साक्षात्प्रीतस्तदाधर्मोदर्शयामासतंद्विजम् १९ ॥ धर्मउवाच ॥ द्विजातेपश्यमां धर्ममहंत्वांद्रष्टुमागतः ॥ जप्यस्यास्यफलंयत्तत्संप्राप्तंतच्चमेशृणु २० जितालोकास्त्वयासर्वेयेदिव्यायेचमानुषाः॥ देवानांनिलयान्साधोसर्वानुत्क्रम्ययास्यसि २१ प्राणत्यागंकुरुमुनेगच्छलोकान्यथेप्सितान् ॥ त्यक्त्वाऽऽत्मनःशरीरंचततोलोकानवाप्स्यसि २२ ॥ ब्राह्मणउवाच ॥ किंनुलोकैर्हिमेधर्मगच्छत्वंचयथा सुखम् ॥ बहुदुःखसुखंदेहंनोत्सृजेयमहंविभो २३ ॥ धर्मउवाच ॥ अवश्यंभोःशरीरंतेत्यक्तव्यंमुनिपुंगव ॥ स्वर्गमारोहभोविप्रकिंवावैरोचतेऽनघ २४ ॥ ब्राह्मणउवाच ॥ नरोचतेस्वर्गवासोविनादेहमहंविभो॥ गच्छधर्मनमेश्रद्धास्वर्गंगंतुंविनाऽऽत्मना २५ ॥ धर्मउवाच ॥ अलंदेहेमनःकृत्वात्यक्त्वादेहंसुखीभव ॥ गच्छलोकानरजसोयत्रगत्वानशोचसि २६ ॥ ब्राह्मणउवाच ॥ रमेजपन्महाभागकिंनुलोकैःसनातनैः ॥ सशरीरेणगंतव्योमयास्वर्गोनवाविभो २७ ॥ धर्मउवाच ॥ यदित्वंनेच्छसेत्यक्तुंशरीरंपश्यवैद्विज ॥ एषकालस्तथामृत्युर्यमश्चत्वामुपागताः २८ ॥ भीष्मउवाच ॥ अथवैवस्वतःकालोमृत्युश्चत्रितयं विभो ॥ ब्राह्मणंतंमहाभागमुपगम्येदमब्रुवन् २९ ॥ यमउवाच ॥ तपसोऽस्यसुतप्तस्यतथासुचरितस्यच ॥ फलप्राप्तिस्तवश्रेष्ठायमोऽहंत्वामुपब्रुवे ३० ॥ कालउवाच ॥ यथावदस्यजप्यस्यफलंप्राप्तमनुत्तमम् ॥ कालस्तेस्वर्गमारोढुंकालोऽहंत्वामुपागतः ३१ ॥ मृत्युरुवाच ॥ मृत्युंमांविद्धिधर्मज्ञरूपिणं स्वयमागतम् ॥ कालेनचोदितोविप्रत्वामितोनेतुमद्यवै ३२ ॥ ब्राह्मणउवाच ॥ स्वागतंसूर्यपुत्रायकालायचमहात्मने ॥ मृत्यवेचाथधर्मायकिंकार्यंकर वाणिवः ३३ ॥ भीष्मउवाच ॥ अर्घ्यंपाद्यंचदत्वासतेभ्यस्तत्रसमागमे ॥ अब्रवीत्परमप्रीतःस्वशक्त्याकिंकरोमिवः ३४ तस्मिन्नेवाथकालेतुतीर्थयात्रामुपाग तः ॥ इक्ष्वाकुरगमत्तत्रसमेतायत्रतेविभो ३५ सर्वानेवतुराजर्षिःसंपूज्याऽथप्रणम्यच ॥ कुशलप्रश्नमकरोत्सर्वेषांराजसत्तमः ३६ तस्मैसोऽथासनंदत्वापाद्यम र्घ्यंतथैवच ॥ अब्रवीद्ब्राह्मणोवाक्यंकृत्वाकुशलसंविदम् ३७ स्वागतंतेमहाराजब्रूहियद्यदिहेच्छसि ॥ स्वशक्त्याकिंकरोमीहतद्भवान्प्रब्रवीतुमाम् ३८

तिभावः २३। २४ अदेहमशरीरमात्मानंविनातंपरित्यज्यानात्मसुखेममरुचिःश्रद्धावानास्तीत्यहमिदंशरीरंनत्यक्ष्यामीत्यर्थः २५ कृत्वाऽलंमाकुर्वित्यर्थः। अलंखल्वोःप्रतिषेधयोःप्रा चांक्त्वेतिक्त्वाप्रत्यक्त्वा २६ मवेति देहनापिसहस्वर्गंविरलैवजपफलमितिभावः २७। २८। २९। ३०। ३१। ३२। ३३। ३४। ३५। ३६। ३७। ३८

जापकस्यामुष्मिकसुखेनिःस्पृहत्वंप्रदर्श्यैहिकसुखेऽपिनिस्पृहत्वमाख्यायिकयैवज्ञापयति राजाऽहमिति प्रथितंस्वर्णरत्नादि वदस्वआज्ञापय यजनयाजनेअध्ययनाध्यापनेदानप्रतिग्रहौ चेतिषट्कर्माणितेषांमध्येप्रतिग्रहस्यांतर्भावादित्याशयः ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० कृतमलं सर्वेणजपफलेन ५१ यज्जपितंजप्यंतस्येतिशेषः ५२

राजोवाच ॥ राजाऽहंब्राह्मणश्चत्वंयदाषट्कर्मसंस्थितः ॥ ददानिवसुकिंचित्तेप्रथितंतद्वदस्वमे ३९ ॥ ब्राह्मणउवाच ॥ द्विविधाब्राह्मणाराजन्धर्मश्चद्विविधःस्मृतः ॥ प्रवृत्ताश्चनिवृत्ताश्चनिवृत्तोऽहंप्रतिग्रहात् ४० तेभ्यःप्रयच्छदानानियेप्रवृत्तानराधिप ॥ अहंनप्रतिगृह्णामिकिमिष्टंकिंददामिते ॥ ब्रूहित्वंनृपतिश्रेष्ठतपसासाधयामिकिम् ४१ ॥ राजोवाच ॥ क्षत्रियोऽहंनजानामिदेहीतिवचनंक्वचित् ॥ प्रयच्छयुद्धमित्येवंवादिनःस्मोद्विजोत्तम ४२ ब्राह्मणउवाच ॥ तुष्यसित्वंस्वधर्मेणतथातुष्टावयंनृप ॥ अन्योन्यस्यांतरंनास्तियदिष्टंतत्समाचर ४३ ॥ राजोवाच ॥ स्वशक्त्याऽहंददानीतित्वयापूर्वमुदाहृतम् ॥ याचेत्वांदीयतांमह्यंजप्यस्यास्यफलंद्विज ४४ ॥ ब्राह्मणउवाच ॥ युद्धंममसदावाणीयाचतीतिविकत्थसे ॥ नचयुद्धंमयासार्धंकिमर्थंयाचसेपुनः ४५ राजोवाच ॥ वाग्वज्राब्राह्मणाःप्रोक्ताःक्षत्रियाबाहुजीविनः ॥ वाग्युद्धंतदिदंतीव्रंममविप्रत्वयासह ४६ ॥ ब्राह्मणउवाच ॥ सैवाऽद्यापिप्रतिज्ञामेस्वशक्त्याकिंप्रदीयताम् ॥ ब्रूहिदास्यामिराजेंद्रविभवेसतिमाचिरम् ४७ ॥ राजोवाच ॥ यत्तद्वर्षशतंपूर्णंजप्यंवैजपतात्वया ॥ फलंप्राप्तंतत्प्रयच्छममदित्सुर्भवान्यदि ४८ ब्राह्मणउवाच ॥ परमंगृह्यतांतस्यफलंयज्जपितंमया ॥ अर्धंत्वमविचारेणफलंतस्यह्यवाप्नुहि ४९ अथवासर्वमेवेहमामकंजापकंफलम् ॥ राजन्प्राप्नुहिकामंत्वंयदिसर्वमिहेच्छसि ५० ॥ राजोवाच ॥ कृतंसर्वेणभद्रंतेजप्यंयद्याचितंमया ॥ स्वस्तितेऽस्तुगमिष्यामिकिंचतस्यफलंवद ५१ ॥ ब्राह्मणउवाच ॥ फलप्राप्तिंनजानामिदत्तंयज्जपितंमया ॥ अयंधर्मश्चकालश्चयमोमृत्युश्चसाक्षिणः ५२ ॥ राजोवाच ॥ अज्ञातमस्यधर्मस्यफलंकिंमेकरिष्यति ॥ फलंब्रवीषिधर्मस्यनचेज्जप्यकृतस्यमाम् ॥ प्राप्नोतुतत्फलंविप्रोनाहमिच्छेससंशयम् ५३ ॥ ब्राह्मणउवाच ॥ नाददेऽपरवक्तव्यंदत्तंचास्यफलंमया ॥ वाक्यंप्रमाणंराजर्षेममाद्यतवचैवहि ५४ नाभिसंधिर्मयाजप्येकृतपूर्वःकदाचन ॥ जप्यस्यराजशार्दूलकथंवेत्स्याम्यहंफलम् ५५ ददस्वेतित्वयाचोक्तंददानीतिमयातथा ॥ नवाचंदूषयिष्यामिसत्यंरक्षस्थिरोभव ५६ अथैवंवदतोमेऽद्यवचनंनकरिष्यसि ॥ महानधर्मोभवितातवराजन्मृषाकृतः ५७ नयुक्तंतुमृषावाणीत्वयावक्तुमरिंदम ॥ तथामयाप्यभिहितंमिथ्याकर्तुंनशक्यते ५८ संश्रुतंचमयापूर्वंददानीत्यविचारितम् ॥ तद्गृह्णीष्वाविचारेणयदिसत्येस्थितोभवान् ५९ इहागम्यहिमांराजन्जाप्यंफलमयाचथाः ॥ तन्मेनिसृष्टंगृह्णीष्वभवसत्येस्थिरोऽपिच ६० 

३९ अपरवक्तव्यंवाक्यांतरंनाददेनांगीकुर्वे ५४ अभिसंधिःकामः निष्कामस्यजपस्यानंतंफलमितिभावः ५५ दूषयिष्यामि अन्यथाकरिष्यामि ५६ । ५७ । ५८ । ५९ मेमयानिसृष्टंदत्तं ६०

६१ । ६२ नविशिष्यतेनविशेषःक्रियते ६३ एकःअतुल्यः अक्षरःअविनाशी ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० देहीतिवक्ष्वेतिशेषः ७१ । ७२ । ७३ । ७४ नच्छंदयामिप्रतिगृह्णीष्वेतिनप्रार्थितवानस्मि ७५ अविवादइति राजूपरागादौप्रतिग्रहमनिच्छतिब्राह्मणेयत्प्रकारांतरेणदानंतद्दातुःफलावहंप्रतिग्रहीतुश्चनदोषकरमितिभावः तथाचस्मृतिः । 'मनसापात्रमुद्दिश्यजलम्

नायंलोकोऽस्तिनपरोनचपूर्वान्सतारयेत् ॥ कुतएवजनिष्यांस्तुमृषावादपरायणः ६१ नयज्ञफलदानानिनियमास्तारयंतिहि ॥ यथासत्यंपरेलोकेतथेहपुरुषर्षभ ६२ तपांसियानिचीर्णानिचरिष्यंतिचयत्तपः ॥ शतैःशतसहस्रैश्चतैःसत्यान्नविशिष्यते ६३ सत्यमेकाक्षरंब्रह्मसत्यमेकाक्षरंतपः ॥ सत्यमेकाक्षरोयज्ञःसत्यमेकाक्षरंश्रुतम् ६४ सत्यंवेदेषुजागर्तिफलंसत्येपरंस्मृतम् ॥ सत्याद्धर्मोदमश्चैवसर्वंसत्येप्रतिष्ठितम् ६५ सत्यंवेदास्तथांगानिसत्यंविद्यास्तथाविधिः ॥ व्रतचर्यातथासत्यमोंकारःसत्यमेवच ६६ प्राणिनांजननंसत्यंसत्यंसंततिरेवच ॥ सत्येनवायुरभ्येतिसत्येनतपतेरविः ६७ सत्येनचाग्निर्दहतिस्वर्गःसत्येप्रतिष्ठितः ॥ सत्यंयज्ञस्तपोवेदाःस्तोभामंत्राःसरस्वती ६८ तुलामारोपितोधर्मःसत्यंचैवेतिनःश्रुतम् ॥ समकक्षांतुलयतोयतःसत्यंततोऽधिकम् ६९ यतोधर्मस्ततःसत्यंसर्वंसत्येनवर्धते ॥ किमर्थमनृतंकर्मकर्तुंराजंस्त्वमिच्छसि ७० सत्येकुरुस्थिरंभावंमाराजन्ननृतंकृथाः ॥ कस्मात्त्वमनृतंवाक्यंदेहीतिकुरुषेऽशुभम् ७१ यदिजप्यफलंदत्तंमयानेच्छसिनृप ॥ धर्मेभ्यःसंपरिभ्रष्टोलोकाननुचरिष्यसि ७२ संश्रुत्ययोनदित्सेतयाचित्वायश्चनेच्छति ॥ उभावानृतिकावेतौनमृषाकर्तुमर्हसि ७३ ॥ राजोवाच ॥ योद्धव्यंरक्षितव्यंचक्षत्रधर्मःकिलद्विज ॥ दातारःक्षत्रियाःप्रोक्तागृह्णीयांभवतःकथम् ७४ ॥ ब्राह्मणउवाच ॥ नच्छंदयामितेराजन्नापितेगृहमाव्रजम् ॥ इहाऽऽगम्यतुयाचित्वानगृह्णीषेपुनःकथम् ७५ ॥ धर्मउवाच ॥ अविवादोऽस्तुयुवयोर्वित्तंमांधर्ममागतम् ॥ द्विजोदानफलैर्युक्तोराजासत्यफलेनच ७६ ॥ स्वर्गउवाच ॥ स्वर्गंमांविद्धिराजेंद्ररूपिणंस्वयमागतम् ॥ अविवादोऽस्तुयुवयोरुभौतुल्यफलौयुवाम् ७७ ॥ राजोवाच ॥ कृतंस्वर्गेणमेकार्यंगच्छस्वर्गयथागतम् ॥ विप्रोयदीच्छतेगंतुंचीर्णंगृह्णातुमेफलम् ७८ ॥ ब्राह्मणउवाच ॥ बाल्येयदिस्यादज्ञानान्मयाहस्तःप्रसारितः ॥ निवृत्तलक्षणंधर्ममुपासेसंहितांजपन् ७९ निवृत्तंमांचिराद्राजन्विप्रलोभयसेकथम् ॥ स्वेनकार्यंकरिष्यामित्वत्तोनेच्छेफलंनृप ८० तपःस्वाध्यायशीलोऽहंनिवृत्तश्चप्रतिग्रहात् ॥ राजोवाच ॥ यदिविप्रविसृष्टंतेजप्यस्यफलमुत्तमम् ॥ आवयोर्यत्फलंकिंचित्सहितंनौतदस्त्विह ८१ द्विजाःप्रतिग्रहेयुक्तादातारोराजवंशजाः ॥ यदिधर्मःश्रुतोविप्रसहैवफलमस्तुनौ ८२ मावाऽभूत्सहभोज्यंनौमदीयंफलमाप्नुहि ॥ प्रतीच्छमत्कृतंधर्मंयदितेमय्यनुग्रहः ८३ ॥ भीष्मउवाच ॥ ततोविकृतवेषौद्वौपुरुषौसमुपस्थितौ ॥ गृहीत्वाऽन्योन्यमावेष्टयकुचैलावूचतुर्वचः ८४ नमेधारयसीत्येकोधारयामीतिचापरः ॥ इहास्तिनौविवादोऽयमयंराजानुशासकः ८५

ध्येजलंक्षिपेत् । दातातत्फलमाप्नोतिप्रतिग्राहीनदोषभाक्' इति ७६ स्वर्गमिति पुण्यस्यदानेनपुण्यंबर्धतेनतुधनमिवदानेनहीयतइत्यर्थः ७७।७८।७९।८०।८१।८२।८३ द्वौपुरुषौकामक्रोधौ८४।८५

 ८६ । ८७ प्रार्थनाहिराज्ञोऽननुरूपेतितस्यकामोविकृतसंज्ञः शांतिस्वभावस्यापिजापकस्ययाचित्वाऽपिदीयमानेनग्रहणातीतिराजानंप्रतियःक्रोधःसविरूपसंज्ञः । गोःफलंवार्धेनुपासतीति 

सत्यंब्रवीम्यहमिदंनमेधारयतेभवान् ॥ अनृतंवदसहित्वमृणंतेधारयाम्यहम् ८६ तावुभौसुभृशंतप्तौराजानमिदमूचतुः ॥ परीक्ष्यत्वंयथास्यावोनावामिह 
 विगर्हितौ ८७ ॥ विरूपउवाच ॥ धारयामिनरव्याघ्रविकृतस्येहगोःफलम् ॥ ददतश्चनगृह्णातिविकृतोमेमहीपते ८८ ॥ विकृतउवाच ॥ नमेधारयतेकिंचिद्विरूपोऽयंनराधिप ॥ मिथ्याब्रवीत्ययंहित्वांसत्याभासंनराधिप ८९ ॥ राजोवाच ॥ विरूपकिंधारयतेभवानस्यब्रवीतुमे ॥ श्रुत्वातथाकरिष्येऽहमिति 
मेधीयतेमनः ९० ॥ विरूपउवाच ॥ शृणुष्वावहितोराजन्यथैतद्धारयाम्यहम् ॥ विकृतस्यास्यराजर्षेनिखिलेननराधिप ९१ अनेनधर्मप्राप्त्यर्थंशुभादत्तापुराऽनघ ॥ धेनुर्विप्रायराजर्षेतपःस्वाध्यायशीलिने ९२ तस्याश्चायंमयाराजन्फलमभ्येत्ययाचितः ॥ विकृतेनचमेदत्तंविशुद्धेनांतरात्मना ९३ ततोमेसुकृतंकर्मकृतमात्मविशुद्धये ॥ गावौचकपिलेक्रीत्वावत्सलेबहुदोहने ९४ तेचौञ्छवृत्तयेराजन्मयासमयवर्जिते ॥ यथाविधियथाश्रद्धंतदस्याहंपुनःप्रभो ९५ इहाद्यैवगृहीत्वातुप्रयच्छेद्विगुणंफलम् ॥ एवंस्यात्पुरुषव्याघ्रकःशुद्धःकोऽत्रदोषवान् ९६ एवंविवदमानौस्वस्त्वामिहाऽभ्यागतौनृप ॥ कुरुधर्ममधर्मंवाविनयेनौसमादध ९७ यदिनेच्छतिमेदानंयथादत्तमनेनवै ॥ भवानत्रस्थिरोभूत्वामार्गेस्थापयिताऽद्यनौ ९८ ॥ राजोवाच ॥ दीयमानंनगृह्णासिऋणंकस्मात्त्वमद्यवै ॥ यथैवतेऽभ्यनुज्ञातंतथागृह्णीष्वमाऽचिरम् ९९ ॥ विकृतउवाच ॥ धारयामीत्यनेनोक्तंददानीतितथामया ॥ नाऽयंमेधारयत्यद्यगच्छतांयत्रवांछति १०० ॥ राजोवाच ॥ ददतोऽस्यनगृह्णासिविषमंप्रतिभातिमे ॥ दंड्योहित्वंममतोनास्त्यत्रखलुसंशयः १ ॥ विकृतउवाच ॥ मयाऽस्यदत्तंराजर्षेगृह्णीयांतत्कथंपुनः ॥ काममत्रापराधोमेदंडमाज्ञापयप्रभो २ ॥ विरूपउवाच ॥ दीयमानंयदिमयानेषिष्यसिकथंचन ॥ नियंस्यतित्वांनृपतिरयंधर्मानुशासकः ३ ॥ विकृतउवाच ॥ स्वंमयायाचितेनेहदत्तंकथमिहाद्यतत् ॥ गृह्णीयांगच्छतुभवानभ्यनुज्ञांददानिते ४ ॥ ब्राह्मणउवाच ॥ श्रुतमेतत्त्वयाराजन्ननयोःकथितंद्वयोः ॥ प्रतिज्ञातंमयायत्तेतद्गृहाणाविचारितम् ५ ॥ राजोवाच ॥ प्रस्तुतंसुमहत्कार्यमनयोर्गह्वरंयथा ॥ जापकस्यदृढीकारःकथमेतद्भविष्यति ६ यदितावन्नगृह्णामिब्राह्मणेनापवर्जितम् ॥ कथंनलिप्येयमहंपापेनमहताऽद्यवै ७ तौचोवाचसराजर्षिःकृतकार्यौगमिष्यथः ॥ नेदानींमामिहासाद्यराजधर्मोभवेन्मृषा ८ स्वधर्मःपरिपाल्यस्तुराज्ञामितिविनिश्चयः ॥ विप्रधर्मश्चगहनोमामनात्मानमाविशत् १०९ 

श्रुतेर्धेनुसरूपायावाचः जपस्यफलमित्यर्थः ८८ । ८९ । ९० । ९१ धेनुर्वांकृविप्रायपरमेश्वराय धर्मप्राप्त्यर्थंनतुस्वार्थं ९३ । ९३ ततोमेमया पश्चद्वयदानेनमयाजपयज्ञफलंप्राप्तमिदानीमस्मात्तदहंनेच्छामीत्यर्थः ९४ । ९५ इहेति गृह्यापिपुनःप्रतिदानंकरिष्यामीत्यर्थः ९६ । ९७ । ९८ । ९९ धारयामीति अप्रतिग्रहेणैवाहमेतमनृणंकरोमीत्यर्थः १०० । १।२।३।४।५।६। ७ । ८ । ९

१० निक्षेपार्थंप्रतिग्रहप्रदानार्थं ११ । १३ समंदानस्यप्रतिदानेनतुल्यमस्तु सहैवेति तवैवपुण्यंमयाप्रतिदत्तमित्यर्थः १४ कामक्रोधाविति अप्रतिग्रहीतुरनधिकारित्वाद्दातुर्दानसममेवपुण्यं अन्यथापुण्यप्रदानेनबहुगुणापुण्यवृद्धिरेवस्यादितिभावः कारितःप्रवर्तितःत्वंपदार्थोराजाऽत्रसंबोध्यः १५ नायमिति आख्यायिकातात्पर्यमाह स्वस्कृतेराज्ञोबोधार्थं १६ निघृष्टंपरीक्षितम् १७ जापकानामिति गतिर्मुक्तिः स्थानंब्रह्मलोकः लोकाःसूर्यादिस्थानानि एतेयथाजितास्तथाकीर्तयिष्येइतिशेषः १८ तेषुस्थानमाह प्रयातीति विरक्तस्यफलमुक्त्वारागिणांलोकानाह अथवेति अग्निमग्निलोकं एवमुत्तरत्र १९ तैजसेनतेजोमयेनस्वप्रकृपेण ११० भूमिशरीरेघनेऽपिगच्छति तथाआकाशशरीरेनिरालंबेपिगच्छति तेषांसूर्यादिलोकपाला

॥ ब्राह्मणउवाच ॥ गृहाणधारयेऽहंचयाचितंसंश्रुतंमया ॥ नचेद्ग्रहीष्यसेराजञ्छपिष्येत्वांनसंशयः ११० ॥ राजोवाच ॥ धिग्राजधर्मंयस्यायंकार्यस्येहविनिश्चयः ॥ इत्यर्थंमेग्रहीतव्यंकथंतुल्यंभवेदिति ११ एषपाणिरपूर्वंमेनिक्षेपार्थंप्रसारितः ॥ यन्मेधारयसेविप्रतदिदानींप्रदीयताम् १२ ॥ ब्राह्मणउवाच ॥ संहितांजपतायावान्गुणःकश्चित्कृतोमया ॥ तत्सर्वंप्रतिगृह्णीष्वयदिकिंचिदिहास्तिमे १३ ॥ राजोवाच ॥ जलमेतन्निपतितंममपाणौद्विजोत्तम ॥ सममस्तुसहैवास्तुप्रतिगृह्णातुवैभवान् १४ ॥ विरूपउवाच ॥ कामक्रोधौविद्धिनौत्वमावाभ्यांकारितोभवान् ॥ सहेतिचयदुक्तंतेसमालोकास्तवास्यच १५ नायंधारयतेकिंचिज्जिज्ञासात्वत्कृतेकृता ॥ कालोधर्मस्तथामृत्युःकामक्रोधौतथायुवाम् १६ सर्वमन्योन्यनिष्कर्षेनिघृष्टंपश्यतस्तव ॥ गच्छलोकान्जितान्स्वेनकर्मणायत्रवांछसि १७ ॥ भीष्मउवाच ॥ जापकानांफलावाप्तिर्मयातेसंप्रदर्शिता ॥ गतिःस्थानंचलोकाश्चजापकेनयथाजिताः १८ प्रयातिसंहिताध्यायीब्रह्माणंपरमेष्ठिनम् ॥ अथवाऽग्निंसमायातिसूर्यमाविशतेऽपिवा १९ सतैजसेनभावेनयदितत्ररमत्युत ॥ गुणांस्तेषांसमाधत्तेरागेणप्रतिमोहितः १२० एवंसोमेतथावायौभूम्याकाशशरीरगः ॥ सरागस्तत्रवसतिगुणांस्तेषांसमाचरन् २१ अथतत्रविरागीसगच्छतित्वथसंशयम् ॥ परमव्ययमिच्छन्सतमेवाविशतेपुनः २२ अमृताच्चामृतंप्राप्तःशांतीभूतोनिरात्मवान् ॥ ब्रह्मभूतःसनिर्द्वंद्वःसुखीशांतोनिरामयः २३ ब्रह्मस्थानमनावर्तमेकमक्षरसंज्ञकम् ॥ अदुःखमजरंशांतंस्थानंतत्प्रतिपद्यते २४ चतुर्भिर्लक्षणैर्हीनंतथापड्भिःसषोडशैः ॥ पुरुषंतमतिक्रम्यआकाशंप्रतिपद्यते १२५

नांगुणान्प्रकाशकत्वादीन् २१ अथेति तत्राग्न्यादौ तमेवपरमेष्ठिनमेव परमुत्कृष्टं अव्ययंमोक्षं क्रमतइच्छन् २१ अमृतात्परमेष्ठिभावात्आपेक्षिकामृतादमृतंकैवल्याख्यंमुख्यामृतं । शांतीभूतःनिष्कामः निरात्मवान्आत्माबुद्धिस्तद्वान्अहंकारस्तद्वर्जितः । अतएवब्रह्मभूतःनिर्द्वंद्वःसुखदुःखाद्यतीतः । निरामयःद्वैतदर्शनहीनः ९३ ब्रह्मैवस्थानंब्रह्मस्थानं अनावर्तंआवृत्तिशून्यम् २४ जापकानांपार्यंतिकफलमाह चतुर्भिरिति चतुर्भिःप्रत्यक्षागमानुमानचेतोभिःलक्षणैःलक्ष्यतेऽनेनेतिव्युत्पत्त्याज्ञापकैर्हीनंरूपगुणसंबंधजडत्वादिभिःपूर्वोक्तैर्विरहितं । अतएवषड्भिरूर्मिभिःअशनापिपासाभ्यांप्राणधर्माभ्यांशोकमोहाभ्यांचित्तधर्माभ्यांजरामृत्युभ्यांदेहधर्माभ्यांचहीनंच तदन्यत्वात् । अतएवप्राणाद्यात्मकषोडशकगणेनैवतेऽशनादयःसहितास्तैः ।
 प्राणाद्याश्चप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवीइंद्रियंमनोन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकेषुनामचेतिश्रुत्युक्ताः आकाशंकारणंब्रह्माविक्रम्यपुरुषमनुपाधिचिन्मात्रंप्रतिपद्यतइतिसंबंधः १२५

नेच्छतिपुरुषमात्रमितिशेषः सर्वसर्वात्मकंतत् आकाशाख्यंकारणं अधितिष्ठतितदभिमानीभवति । यद्वेत्स्वनेन 'सयदिपितृलोककामोभवति संकल्पादेवास्यपितरःसमुत्तिष्ठंति' इत्यादिश्रुतेरर्थः सत्यकामःसत्यसंकल्पश्चविद्वानितिदर्शितं २६ अथवेति परवैराग्यवतःसर्वलोकत्यागोऽपिभवतीत्याह तत्रनिर्गुणे २७ । २८ ॥ इति शांतिपर्व० मोक्षधर्मपर्व० नीलकंठीयेभारतभावदीपेनवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ ॥ किमिति उत्तरंसमालोकास्तवास्यचेतिविरूपवाक्यश्रवणानंतरं तौइक्ष्वाकुपैप्पलादीतस्यविरूपस्यभाषितेवचनेविषये १ यदेतत्तस्योमुक्तिक



अथनेच्छतिरागात्मासर्वंतदधितिष्ठति ॥ यच्चप्रार्थयतेतच्चमनसाप्रतिपद्यते २६ अथवाचेक्षतेलोकान्सर्वान्निरयसंज्ञितान् ॥ निस्पृहःसर्वतोमुक्तस्तत्रैवरमतेसुखम् २७ एवमेषामहाराजजापकस्यगतिर्यथा ॥ एतत्तेसर्वमाख्यातंकिंभूयःश्रोतुमर्हसि १२८ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणिजापकोपाख्यानेनवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ ॥ ५ ॥ ॥ युधिष्ठिरउवाच ॥ किमुत्तरंतदातौस्मचक्रतुस्तस्यभाषिते ॥ ब्राह्मणोवाऽथवाराजात न्मेब्रूहिपितामह १ अथवातौगतौतत्रयदेतत्कीर्तितंत्वया ॥ संवादोवातयोःकोभूत्किंवातौतत्रचक्रतुः २ ॥ भीष्मउवाच ॥ तथेत्येवंप्रतिश्रुत्यधर्मंसंपूज्यच प्रभो ॥ यमंकालंचमृत्युंचस्वर्गंसंपूज्यचार्हतः ३ पूर्वंयेचापरेतत्रसमेताब्राह्मणर्षभाः ॥ सर्वान्संपूज्यशिरसाराजानंसोऽब्रवीद्द्विजः ४ फलेनानेनसंयुक्तोराजर्षेगच्छमुख्यताम् ॥ भवताचाभ्यनुज्ञातोजपेयंभूयएवह ५ वरश्चममपूर्वंहिदत्तोदेव्यामहाबल ॥ श्रद्धातेजपतोनित्यंभवत्वितिविशांपते ६ ॥ राजोवाच ॥ यद्येवमफलासिद्धिःश्रद्धाचजपितुंतव ॥ गच्छविप्रमयासार्धंजापकंफलमाप्नुहि ७ ॥ ब्राह्मणउवाच ॥ कृतःप्रयत्नःसुमहान्सर्वेषांसन्निधाविह ॥ सहतुल्यफलावावांगच्छावोयत्रनौगतिः ८ व्यवसायंतयोस्तत्रविदित्वात्रिदशेश्वरः ॥ सहदेवैरुपययौलोकपालैस्तथैवच ९ साध्याश्वविश्वेमरुतोवाद्यानिसुमहांतिच ॥ नद्यःशैलाःसमुद्राश्चतीर्थानिविविधानिच १० तपांसिसंयोगविधिर्वेदास्तोभाःसरस्वती ॥ नारदःपर्वतश्चैवविश्वावसुर्हहाहूहूः ११ गंधर्वश्चित्रसेनश्चपरिवारगणैर्युतः ॥ नागाःसिद्धाश्चमुनयोदेवदेवःप्रजापतिः १२ विष्णुःसहस्रशीर्षश्चदेवोऽचिंत्यःसमागमत् ॥ अवाद्यंतांतरिक्षेचभेर्यस्तूर्याणिवाविभो १३ पुष्पवर्षाणिदिव्यानितत्रतेषांमहात्मनाम् ॥ ननृतुश्चाप्सरःसंघास्तत्रतत्रसमंततः १४ अथस्वर्गस्तथारूपीब्राह्मणंवाक्यमब्रवीत् ॥ संसिद्धस्त्वंमहाभागस्त्वंचसिद्धस्तथानृप १५ अथतौसहितौराजन्नन्योन्यविधिनाततः ॥ विषयप्रतिसंहारमुभावेवप्रचक्रतुः १६



ममुक्तिलोकांतरमाप्निरितित्रयं २ अर्हतःपूज्यान् ३।४।५। ६ यदीति अफलातवयदियद्यपिमह्यंफलस्यदत्तत्वात् तथापिजपप्रदानजपुण्येनैवतवफलवृद्धेर्जातत्वात्जापकंजपार्जितंफलंत्वमपिप्राप्नुहीत्यर्थः ७ प्रयत्नःतुभ्यंजपदानार्थं नौआवयोः ८ व्यवसायंनिश्चयं ९ । १० संयोगविधिःजीवब्रह्मैक्यप्रतिपादकावेदांताः स्तोभाःसामगीतिपूरणार्थानिअक्षराणिहाइहावुइत्यादीनि १२ । १२ । १३ । १४ । १५ अथेति अन्योन्यविधिनापरस्परोपकारेणसहितौ एककालएवविषयाणांरूपादीनांप्रतिसंहारंप्रवीपसंहारंविषयकारणीभूतेंद्रियसंहारेणैवसंहारम् १६

तत्रक्रममाह प्राणेति मूलाधारात्कुंडलिनीमुत्थाप्यऊर्ध्वोर्ध्वचक्रजयक्रमेणमनसिहृदयेऽनाहतचक्रेस्थाप्यनिरुध्यतत्रस्थंमनःएकीभूतयोःप्राणापानयोःस्थाप्यवशीकृत्वादधतुःधारयतइत्यर्थः १७ उपस्थितंउपस्थंकुरुतः तौउपस्थितकृतौ बद्धपद्मासनावित्यर्थः । भ्रुवोरधः नासिकाग्रंपश्यंताविति शेषः । स्वनासिकाग्रंस्वेनद्रष्टुमशक्यमतोयरवायमादर्शेपुरुषएतमेवाहंब्रह्मोपासेइतिश्रुतेःआदर्शस्यनासिकाग्रदर्शनंमात्रसंज्ञीतिभ्रुवोरधइतिविशेषणं । तेननात्यंतंनिमीलिताक्षःस्यात्निद्राप्राप्तेः । नापिउद्घाटिताक्षःस्यात्लोकदर्शनेनविक्षेपादित्युक्तं । उपस्थाप्योदरेतौचेतिपाठेतौप्राणापानौ उदरेस्वाधिष्ठानेउपस्थाप्यमनसिचस्थाप्येतिपूर्वेणान्वयः । ततश्चमनसासहतौप्राणापानौभ्रुकुट्यांभ्रुवोर्मध्येआज्ञाचक्रेधारयतः १८ तथाउक्तप्रकारेणजि

प्राणापानौतथोदानंसमानंव्यानमेवच ॥ एवंतौमनसिस्थाप्यदधतुःप्राणयोर्मनः १७ उपस्थितकृतौतौचनासिकाग्रमधोभ्रुवोः ॥ भ्रुकुट्याचैवमनसाशनैर्धारयतस्तदा १८ निश्चेष्टाभ्यांशरीराभ्यांस्थिरदृष्टीसमाहितौ ॥ जितात्मानौतथाऽऽधायमूर्धन्यात्मानमेवच १९ तालुदेशमथोद्दाल्यब्राह्मणस्यमहात्मनः ॥ ज्योतिर्ज्वालासुमहतीजगामत्रिदिवंतदा २० हाहाकारस्तथादिक्षुसर्वेषांसुमहानभूत् ॥ तज्ज्योतिःस्तूयमानंस्मब्रह्माणंप्राविशत्तदा २१ ततःस्वागतमित्याहतत्तेजःप्रपितामहः ॥ प्रादेशमात्रंपुरुषंप्रत्युद्गम्यविशांपते २२ भूयश्चैवापरंप्राहवचनंमधुरंतदा ॥ जापकैस्तुल्यफलतायोगानांमात्रसंशयः २३ योगस्यतावदेतेभ्यःप्रत्यक्षंफलदर्शनम् ॥ जापकानांविशिष्टंतुप्रत्युत्थानंसमाहितम् २४ उष्यतांमयिचेत्युक्त्वाऽचेतयत्सततंपुनः ॥ अथास्यंप्रविवेशास्यब्राह्मणोविगतज्वरः २५ राजाऽप्येतेनविधिनाभगवंतंपितामहम् ॥ यथैवद्विजशार्दूलस्तथैवप्राविशत्तदा २६ स्वयंभुवमथोदेवाअभिवाद्यततोऽब्रुवन् ॥ जापकानांविशिष्टंतुप्रत्युत्थानंसमाहितम् २७ जापकार्थमयंयत्नोयदर्थंवयमागताः ॥ कृतपूजाविमौतुल्यौत्वयातुल्यफलाविमौ २८ योगजापकयोर्दृष्टंफलंसुमहदद्यवै ॥ सर्वांल्लोकानतिक्रम्यगच्छेतांयत्रवांछितम् २९ ॥ ब्रह्मोवाच ॥ महास्मृतिंपठेद्यस्तुतथैवानुस्मृतिंशुभाम् ॥ तावप्येतेनविधिनागच्छेतांमत्सलोकताम् ३० यश्चयोगेभवेद्भक्तःसोपिनास्त्यत्रसंशयः ॥ विधिनाऽनेनदेहांतेममलोकानवाप्नुयात् ॥ साधयेगम्यतांचैवयथास्थानानिसिद्धये ३१ ॥ भीष्मउवाच ॥ इत्युक्त्वासतदादेवस्तत्रैवांतरधीयत ॥ आमंत्र्यचततोदेवाययुःस्वंस्वंनिवेशनम् ३२ तेचसर्वेमहात्मानोधर्मंसत्कृत्यतत्रवै ॥ पृष्ठतोनुययूराजन्सर्वेसुप्रीतचेतसः ३३

तात्मानौजितचित्तौआत्मानंचित्तंप्राणसहितंमूर्धनिधारयतइतिपूर्वेणान्वयः सुषुम्नामार्गेणेतिशेषः १९ तालुदेशंब्रह्मरंध्रं २० । २१ । २२ योगानांयोगिनां २३ योगस्ययोगिनः एतेभ्यएतेषांसभ्यानां समाहितंविहितं २४ उष्यतामिति अत्रचतुर्मुखास्येप्रवेशोक्त्यादुःखहेतुव्यष्टिलिंगवियोगोजापकस्यब्रह्मलोकंगतस्यसद्यएवभवतीत्युक्तं तत्रहेतुरचेतयदिति तस्यब्रह्मात्मैक्यंबोधितवानित्यर्थः । अयमर्थोभगवद्गीतासुसंगृहीतः ' सर्वद्वाराणिसंयम्यमनोहृदिनिरुध्यच ॥ मूर्ध्न्याधायात्मनःप्राणमास्थितोयोगधारणां ॥ ओमित्येकाक्षरंब्रह्मव्याहरन्मामनुस्मरन् ॥ यःप्रयातित्यजन्देहंसयातिपरमांगतिम् ॥' इत्यादौ । ... तिसमद्भावंयातिनास्त्यत्रसंशयः'इति इतरेषु । 'ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदं' इतिस्मृतेःकल्पांतेव्यष्टिलिंगान्मुच्यंतेइतिभेदः२५। २६।२७ वयंत्रिदशेश्वरादयः त्वयाचतुर्मुखेन २८ वांछितमनंतंसुखं २९ संहिताध्यायिनांफलमुक्त्वापदंगाध्यायिनांमन्वादिस्मृत्यध्यायिनांचफलमाह महास्मृतिमिति ३० साधयेयुष्मदिष्टमितिशेषः ३१ । ३२ । ३३

३४ ॥ इतिशांति०मो०नी०भा०द्विशततमोऽध्यायः ॥ २०० ॥ ७ ॥ पूर्वंप्रजापकप्रसंगाद्योगस्यापिश्रेयस्त्वमुक्तंयोगजापकयोर्दृष्टंफलंतुमहदद्यवाइति । तथाउष्यतामयिचेत्युक्त्वाचेतयस्सततं
पुनरितिजपफलकालेब्रह्मबोधस्यापिद्वारत्वमुक्तमेवंयोगोपिज्ञानसहायएवेतिज्ञानफलकदितिमत्वापृच्छति किमिति ज्ञानंविचारस्तत्सहितोयोगोज्ञानयोगस्तस्य । विद्यामेतांयोगविधिंच
कृत्स्नंतत्कारणंसांख्ययोगाभिपन्नमित्यादिलिंगादनयोःसमुच्चयावगमात् वेदानांचकिंफलं । तथानियमस्याग्निहोत्रादेः भूतात्माजीवः १ । २ । ३ कारणंजगतइतिशेषः यत्रयन्निमित्तंविधिः
कर्मकांडः ज्ञानेसतियत्फलंप्राप्यं मंत्रशब्दैर्वेदवाक्यैर्वाङ्मनसातीतत्वादप्रकाशितं ४ अर्थशास्त्रंत्रिवर्गशास्त्रं आगमोवेदः मंत्राइषेत्वादयोवेदांतर्गतास्तद्विद्भिर्नरैर्यज्ञादिभिःफलंतुसमुपा
स्यतेतत्किंवस्तुकथंकेनप्रकारेणवातस्माविर्भविताकवावस्तुत्वंदेशांतरेवाप्रत्यमात्मन्येववा ५ महीजाःस्थावरजंगमाः ६ ज्ञानंयतोयस्मिन्विषये ततोज्ञानात् तदर्थाज्ञानार्था मिथ्याप्रवृत्तिस्तद्

एतत्फलंजापकानांगतिश्चैषाप्रकीर्तिता ॥ यथाश्रुतंमहाराजकिंभूयःश्रोतुमिच्छसि ३४ इतिश्रीमहाभारतेशां०मो०जापकोपाख्यानेद्विशततमोध्यायः॥२००॥
॥ युधिष्ठिरउवाच ॥ किंफलंज्ञानयोगस्यवेदानांनियमस्यच ॥ भूतात्माचकथंज्ञेयस्तन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरा
तनं ॥ मनोःप्रजापतेर्वादंमहर्षेश्चबृहस्पतेः २ प्रजापतिंश्रेष्ठतमंप्रजानांदेवर्षिसंघप्रवरोमहर्षिः ॥ बृहस्पतिःप्रश्नमिमंपुराणंपप्रच्छशिष्योऽथगुरुंप्रणम्य ३ यत्का
रणंयत्रविधिःप्रवृत्तोज्ञानेफलंयत्प्रवदंतिविप्राः ॥ यन्मंत्रशब्दैरकृतप्रकाशंतदुच्यतांमेभगवन्यथावत् ४ यच्चार्थशास्त्रागममंत्रविद्भिर्यज्ञैरनेकैरथगोप्रदानैः ॥ फलं
महद्भिर्यदुपास्यतेचकिंतत्कथंवाभविताक्ववातत् ५ महीमहीजाःपवनोंतरिक्षंजलौकसश्चैवजलंदिवंच ॥ दिवौकसश्चापियतःप्रसूतास्तदुच्यतांमेभगवन्पुराणम् ६
ज्ञानंयतःप्रार्थयतेनरोवैततस्तदर्थाभवतिप्रवृत्तिः ॥ नचाप्यहंवेदपरंपुराणंमिथ्याप्रवृत्तिंचकथंनुकुर्याम् ७ ऋक्सामसंघांश्चयजूंषिचापिच्छंदांसिनक्षत्रगतिंनि
रुक्तम् ॥ अधीत्यचव्याकरणंसकल्पंशिक्षांचभूतप्रकृतिंनवेद्मि ८ समेभवाञ्शंसतुसर्वमेतत्सामान्यशब्दैश्चविशेषणैश्च ॥ समेभवाञ्शंसतुतावदेतज्ज्ञानेफलंकर्मणि
वायदस्ति ९ यथाचदेहाच्च्यवतेशरीरीपुनःशरीरंचयथाऽभ्युपैति ॥ मनुरुवाच ॥ यद्यत्प्रियंयस्यसुखंतदाहुस्तदेवदुःखंप्रवदंत्यनिष्टम् १० इष्टंचमेस्यादितरच्च
नस्यादेतत्कृतेकर्मविधिःप्रवृत्तः ॥ इष्टंत्वनिष्टंचनमांभजेतेत्येतत्कृतेज्ञानविधिःप्रवृत्तः ११ कामात्मकाश्छंदसिकर्मयोगाएभिर्विमुक्तःपरमश्नुवीत ॥ नानाविधे
कर्मपथेसुखार्थीनरःप्रवृत्तोनिरयंप्रयाति ॥ बृहस्पतिरुवाच ॥ इष्टंत्वनिष्टंचसुखासुखेचसाऽऽशिस्त्ववच्छंदातिकर्मभिश्च १२

ज्ञात्वाप्रवृत्तिंतदर्थाप्रयेकथंनुकुर्यां ७ सोहंभगवोमंत्रविदेवास्मिनात्मविदितिश्रुतेर्ऋक्सामादिज्ञानेऽपिभूतप्रकृतिंवियदाद्युपादानमात्मानंनवेद्मि ८ सामान्यशब्दैरस्तीत्येवोपलब्धव्यइत्या
दिभिः विशेषणैःसत्यंज्ञानमनंतंविज्ञानमानंदमित्यादिभिः ९ यत्रविधिप्रवृत्तइत्यस्योत्तरमाह यदिति १० ज्ञानेफलंयदित्यस्योत्तरमाह इष्टमिति ११ यच्चार्थशास्त्रेत्यस्योत्तरमाह कामेति
कामात्मकाःकामप्रधानाः छंदसिवेदे एभिःकामैः कर्मपथेवेदोक्तेलौकिकेवा निरयंस्वर्गनरकंवा एतदाक्षिपत्यर्धेन इष्टमिति इष्टानिष्टेप्रियाप्रिये सुखदुःखे ततःसुखमिष्टंग्राह्यंदुःखमनिष्टं
त्याज्यं साआशीःप्रार्थना साचकर्मभिरेवंप्रार्थयितारमवच्छंदतिपूरयतित्याप्नोति एतावदेवपुरुषःप्रार्थयतेनान्यत्कर्मफलमस्तीत्यर्थः । स्वर्गकामोयजेतश्येनेनाभिचरन्यजेतेत्यादेरुत्पत्ति
शिष्टस्यतस्यैवफलत्वेनश्रवणात् १२

विविदिषंतियज्ञेनेत्यादिवाक्यादेभिःकामैर्विमुक्तःसन्कर्माण्यनुष्ठायपरंब्रह्मविविदिषोत्पत्त्यादिद्वारामाविशेत् एतदर्थमेवकर्मविधिःप्रवृत्तः स्वर्गादिफलश्रवणंतुकामात्मकानेवच्छंदतिआवृणो
ति अतएभिःकार्यैर्विमुक्तःपरमेवाददीत मुमुक्षुर्ज्ञानार्थमेवकर्माण्यनुतिष्ठेन्नक्षुद्रफलार्थमित्यर्थः १३ किंइयेनादीन्यपिज्ञानार्थमनुष्ठेयानिनेत्याह आत्मेति आत्माचित्तं आदिभिःप्रथमैर्नित्यैरि
त्यर्थः । इध्यमानोरागादिदोषापनयेनाऽऽदर्शवद्दीप्यमानोद्युतिमान्सद्वस्तुविषयप्रकाशवानतएवसुखार्थीमुमुक्षुःपरमत्यंतकर्मागोचरं । निराशिषमित्यनेनसाशीस्त्ववच्छंदतीतिपरोक्तिर्निरस्ता
अवैरगुपैतिस्वइत्याप्नोति १४ ननुबंधकानांकर्मणांकथंबंधनिवर्तकत्वंनहिपुरपाआचांतःशुद्ध्यतीत्याशंक्याह प्रजाःसृष्टाइति एतौमनःकर्मणीसंसारप्रदेअपिसत्पथौब्रह्मप्राप्तिमार्गौ । कथं
तदाह दृष्टमिति दृष्टंप्रत्यक्षंश्रुतिबोधितमित्यर्थः शाश्वतंचमोक्षहेतुरपि अंतवत्क्षुद्रफलमपि तत्रमनसाक्रियमाणस्त्यागःफलत्यागएवशाश्वतत्वेकर्मणांकारणंनान्यत् स्वरूपेणत्यागइ
त्यर्थः १५ स्वेनेति यथाचक्षूरूपःप्रणेतानायकोनिशात्ययेराज्यंतेतमसाऽसंवृतात्माऽनावृतस्वरूपःसन्स्वेनात्मनातेजसेनवाआलोकेनवर्जनीयंकंटकादिकंपश्यत्येवंज्ञानंबुद्धिर्विज्ञानगुणेनविवेकेन
युक्तंसदशुभंपश्यति १६ दृष्टांतंवृण्वन्ज्ञानफलस्यश्रैष्ठ्यमाह सर्पानिति उदपानंकूपं १७ ज्ञानपूर्वकंकृतंकर्मपरमफलमित्याह कृत्स्नइति कर्मपंचात्मकं पंचमंत्रादयआत्मानोनिष्पादकायस्य

॥ मनुरुवाच ॥ एभिर्विमुक्तःपरमाविवेशएतत्कृतेकर्मविधिःप्रवृत्तः ॥ कामात्मकांश्छंदतिकर्मयोगएभिर्विमुक्तःपरमाददीत १३ आत्मादिभिःकर्मभिरिध्यमानो
धर्मेप्रवृत्तोद्युतिमान्सुखार्थी ॥ परंहितत्कर्मपथादपेतंनिराशिषंब्रह्मपरंह्यवैति १४ प्रजाःसृष्टामनसाकर्मणाचद्वावेवैतौसत्पथौलोकजुष्टौ ॥ दृष्टंकर्मशाश्वतंचांतवच्च
मनस्त्यागःकारणंनान्यदस्ति १५ स्वेनात्मनाचक्षुरिवप्रणेतानिशात्ययेतमसासंवृतात्मा ॥ ज्ञानंतुविज्ञानगुणेनयुक्तंकर्माशुभंपश्यतिवर्जनीयम् १६ सर्पान्कु
शाग्राणितथोदपानंज्ञात्वामनुष्याःपरिवर्जयंति ॥ अज्ञानतस्तत्रपतंतिकेचिज्ज्ञानेफलंपश्ययथाविशिष्टम् १७ कृत्स्नस्तुमंत्रोविधिवत्प्रयुक्तोयज्ञायथोक्तास्त्विह
दक्षिणाश्च ॥ अन्नप्रदानंमनसःसमाधिःपंचात्मकंकर्मफलंवदंति १८ गुणात्मकंकर्मवदंतिवेदास्तस्मान्मंत्रोमंत्रपूर्वंहिकर्म ॥ विधिर्विधेयंमनसोपपत्तिःफलस्यभो
क्तातुतथाशरीरी १९ शब्दाश्चरूपाणिरसाश्चपुण्याःस्पर्शाश्चगंधाश्चशुभास्तथैव ॥ नरोनसंस्थानगतःप्रभुःस्यादेतत्फलंसिद्ध्यतिकर्मलोके २० यद्यच्छरीरेण
करोतिकर्मशरीरयुक्तःसमुपाश्नुतेतत् ॥ शरीरमेवायतनंसुखस्यदुःखस्यचाप्यायतनंशरीरम् २१

तथासमाधिरेकाग्र्यंदेवताध्यानादौ । यस्यैदेवतायैहविर्गृहीतंस्यात्तांध्यायेदितिश्रुतेः फलंफलवत् १८ कर्तृस्वभावभेदात्कर्मणांफलभेदमाह गुणेति गुणात्मकंसात्विकंराजसंतामसंचत्रिविधं
कर्मेत्यर्थः । तस्माद्धेतोर्मंत्रोऽपित्रिगुणात्मकस्तत्रहेतुर्मंत्रपूर्वंहिकर्म तत्रसात्विकोमंत्रोऽग्निमीळे । राजसइषेत्वोर्जेत्वा । तामसःसर्वंप्रविध्यहृदयंप्रविध्येत्यादिः । एवंविधिरपित्रिविधः आत्म
कामोयजेत । स्वर्गकामोयजेत । अभिचरन्यजेतेत्यादिः । कर्तृस्वभावभेदादपितद्भेदमाह मनसोपपत्तिःफलस्येति । तथाहि यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिविद्या
दिमान्सात्विकःकर्ता । विद्यादिहीनः केवलं प्रवृत्तिमात्रपरोराजसः । दंभाभिसंधिस्तामसः । तेषांकर्मक्रमेणवीर्यवत्तरवीर्यवन्निर्वीर्यंचभवति । यथाफलस्योपपत्तिस्तथाफलस्यभोक्ताऽपिसुखी
दुःखीमूढश्चभवति १९ शब्दादयःकर्मफलंकर्मप्राप्येलोकेस्वर्गेसिद्ध्यति नरःप्रभुरधिकारीज्ञानफलेइतिशेषः । नसंस्थानगतइत्येकंपदं मरणप्राप्तोजीवन्नेवस्यात् इहकृत्वाऽमुत्रभोक्तव्यमित्य
दृष्टफलात्कर्मणोऽपेक्षयादृष्टफलंज्ञानमेवश्रेयइतिभावः २० ननुकर्मण्यपवमोक्षःसिद्ध्येत्किंज्ञानेनेत्यतआह यद्यदिति शरीरवताकृतंकर्मशरीरयुक्तेनैवभोक्तव्यंयतःकर्मफलस्यदुःखादेरायतनमा
श्रयःशरीरंनत्वशरीरआत्माऽतोऽशरीरत्वलक्षणोमोक्षोनशारीरेणकर्मणासिद्ध्यतीत्यर्थः २१

तर्हिवाचिकेनजपादिनामानसिकेनध्यानादिनावामोक्षःसिद्धयतीत्याह वाचेति वाङ्मनसाभ्यांकृतंकर्मतद्वतैवभोक्तव्यंनतुतदतीतंवस्तुगोचरयेदित्यर्थः २१ कर्मणिगुणःसत्वंरजस्तमोवाकर्म गुणस्तं २३ अयथाप्रतिकूलंस्रोतःप्रवाहंजलवेगेनाभिपातीभवतिनत्विच्छया तथाकर्मपुरुषोऽप्युपैत्यनुवर्तते तत्रैवंसतिशुभेतोषोनत्वशुभेइतिमौढ्यमेवेत्यर्थः २४ एवंकर्मगतिमुक्त्वाज्ञानंवक्ष्या मीतिप्रतिजानीते यतइति आत्मवंतोजितचित्ताजगद्यतिक्रम्ययत्तत्पदंयांति परंश्रेष्ठंयत् २५ यत्प्रसादिहीनमपितान्पंचप्रकारान्प्रसादीन्जनानांभोक्तृणामर्थेसस्तृजेउत्पादितवत् अवर्णं लोहितशुक्लकृष्णवर्णप्रधानंरजःसत्वतमोमयंतदन्यत् २६ सत्प्रधानपरमाण्वादि असत्शून्यंसदसदनिर्वचनीयं मायाशबलं अतएवाक्षरमपरिणामि । 'नासदासीन्नोसदासीत्तदानींनासी द्रजोनोव्योमापरोयत्'इतिश्रुतावपिसृष्टेःप्राक्सदसद्रजःशब्दोदितानांप्रधानशून्यपरमाणूनांयुक्तिमसक्तानांपरव्योमशब्दितस्यमायाशबलस्यचजगत्कारणश्रुतिप्रसक्तस्यनिषेधात् २७ ॥ इतिशां तिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ अक्षरान्मायासहायात् ननुनोव्योमापरोयदितिसृष्टेःप्राङ्मायाशबलस्यनिषेधात्कथमक्षरेमाया

वाचातुयत्कर्मकरोतिकिंचिद्वाचैवसर्वंसमुपाश्नुतेतत् ॥ मनस्तुयत्कर्मकरोतिकिंचिन्मनःस्थएवायमुपाश्नुतेतत् २२ यथायथाकर्मगुणंफलार्थीकरोत्ययंकर्मफले निविष्टः ॥ तथातथाऽयंगुणसंप्रयुक्तःशुभाशुभंकर्मफलंभुनक्ति २३ मत्स्योऽयथास्रोतइवाभिपातितथाकृतंपूर्वमुपैतिकर्म ॥ शुभेत्वसौतुष्यतिदुष्कृतेतुनतुष्यते वैपरमःशरीरी २४ यतोजगत्सर्वमिदंप्रसूतंज्ञात्वाऽऽत्मवंतोव्यतियांतियत्तत् ॥ यन्मंत्रशब्दैरकृतप्रकाशंतदुच्यमानंशृणुमेपरंयत् २५ रसैर्वियुक्तंविविधैश्चगंधैरश ब्दमस्पर्शमरूपवच्च ॥ अग्राह्यमव्यक्तमवर्णमेकंपंचप्रकारान्ससृजेप्रजानाम् २६ नस्त्रीपुमान्नापिनपुंसकंचनसन्नचासत्सदसच्चतन्न ॥ पश्यंतियद्ब्रह्मविदोमनुष्यास्त दक्षरंनक्षरतीतिविद्धि २७ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमनुबृहस्पतिसंवादेएकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ ॥ मनुरुवाच ॥ अक्षरात्खं ततोवायुस्ततोज्योतिस्ततोजलम् ॥ जलात्प्रसूताजगतीजगत्यांजायतेजगत् १ एतैःशरीरैर्जलमेवगत्वाजलाच्चतेजःपवनोंतरिक्षम् ॥ खाद्वैनिवर्ततिनभाविनस्ते मोक्षंचतेवैपरमाप्नुवंति २ नोष्णंनशीतंमृदुनापितीक्ष्णंनाम्लंकषायंमधुरंनतिक्तम् ॥ नशब्दवन्नापिचगंधवत्तन्नरूपवत्तत्परमस्वभावम् ३ स्पर्शंतनुर्वेदरसंच जिह्वाघ्राणंचगंधान्श्रवणौचशब्दान् ॥ रूपाणिचक्षुर्नचतत्परंयद्गृह्णंत्यनध्यात्मविदोमनुष्याः ४

सहायादितिविशेषणंदीयते सत्यं । तुच्छयेनाभ्वपिहितंयदासीदितितत्रैववाक्यशेषेतुच्छेनमिथ्याभूतेनतमसाआभुव्यापकमपिहितमाच्छादितमित्युक्तेस्तमसश्चतुच्छत्वाभिधानात् । सर्पेण रज्ज्वाइवनपरमार्थतोऽक्षरस्यसद्वितीयत्वमितिज्ञेयं एवंचतुच्छज्ञानावृताच्छुक्तिखंडाद्रजतमिवाक्षरात्खाद्युत्पद्यतेइतिनकश्चिद्दोषः १ एवमक्षरेजगदारोप्यापवदति एतैरिति पार्थिवैःशरी रैर्लवणोदकन्यायेनशरीरिणः जलंगत्वेतिसृष्टिविपरीतक्रमेणसंहारउक्तः तेजसःपवनंततोंऽतरिक्षंगत्वेतियोज्यं अंतरिक्षंभूताकाशं । खात्ल्यब्लोपेपंचमी मायाशबलंखशब्दोदितमतीत्यये भाविनोभावोऽक्षरंतद्येषामात्मत्वेनास्तिसोनिर्विशेषंप्रत्यगात्मानंप्राप्तास्तेननिवर्ततिनसंसरंतिकिंतुतेपरंमोक्षंप्राप्नुवंति । येभाविनस्तेपरमाप्नुवंतीतिपाठेतु येनभाविनस्तेखात्खंप्राप्यनिवर्तंति येतु भाविनस्तेखादपिपरंयत्तदाप्नुवंतीतियोजना २ एवंज्ञातस्यापिपरस्ययोगैकगम्यत्ववक्तुंलक्षणमाह नोष्णमिति नशीतंनमृद्वितिनाम्लंनकषायंनमधुरमितिचसंबंधः स्वभावःप्रमातृत्वादिस्तद्वर्जं ३ कस्तर्हिरसादीनावेदितेत्यतआह स्पर्शमिति तनुस्त्वगिंद्रियं त्वगादिभिस्तत्परंवस्तुनचगृह्णंति । यद्यतोऽनध्यात्मविदआत्मानमधिकृत्यप्रवृत्तोयोगोऽध्यात्मंतदनभिज्ञाः ४

योगमेवाह निवर्तयित्वेति गुरूक्तयुक्त्येतिशेषः नहिपुरुषकारेणशब्दात्श्रोत्रंनिवर्तयितुंशक्यं । यथोक्तंवार्तिके'शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्मन्येवात्मानंपश्येत्'इतिश्रुतेर्व्याख्याने । 'स्वातंत्र्यंयेषुकर्तुःस्यात्करणाकरणंप्रति ॥ तान्येवतुनिषिद्धानिकर्माणीहशमादिभिः ॥ अस्वातंत्र्यंतुयेषुस्यात्कर्तुःकर्मसुसर्वदा ॥ समाहितोक्त्याऽथेदानींतन्निरोधोविधीयते ॥ पिंडीकृत्येंद्रिय ग्रामंबुद्धावारोप्यनिश्चलं ॥ विषयांस्तत्स्मृतींस्त्यक्त्वातिष्ठेच्चिदनुरोधतः ॥ एषोऽभ्युपायःसर्वत्रवेदांतेषुप्रतिष्ठितः ॥ तत्त्वमस्यादिवाक्योत्थज्ञानोत्पत्त्यर्थमादरात्'इति । ततोनिवर्तकात्प्रमातुः परंतदुपाधिभूतबुद्ध्यादेःपरंस्वंप्रत्यगभिन्नंस्वभावंस्वरूपसत्तांपश्यति ५ कोऽसौस्वभावइत्यतआह यतइति तेमुनयःसमुदायंकर्त्रादिसंघातंयत्कारणंयद्धेतुकमाहुस्तंस्वभावंपश्यतीतिपूर्वेणान्वयः समुदायमाह यःकर्ताप्रमातायेनज्ञानकर्मकरणेनयत्प्राप्यमुद्दिश्ययस्मिन्देशेकालेचयस्मिन्सुखेदुःखेवानिमित्तभूते तावदनुकूलांप्रवृत्तिंयत्नमारभतेयच्चारभ्यतत्कर्मदर्शनगमनादिकंकरोति किंकृत्वा करोति यतोरागद्वेषादितःअदृष्टादीश्वरेच्छातोवागृहीत्वाऽवलंब्येतियोजना । ततश्चकर्ताकर्मकरणंदेशकालौसुखदुःखप्रवृत्त्यारंभाख्यौयत्नोगत्यादिकंरागादृष्टेश्वरादिकंचसमुदायस्तस्ययद्धेतु श्चिन्मात्रंतदेवस्वभावइत्यर्थः ६ ननुकिंतत्कारणंयदपेक्ष्यनित्ययोरपिजीवेशयोःकार्यत्वमुच्यतेइत्याशंक्याह यद्वेति वाशब्दएवार्थे यदेवव्यापकमीश्वराख्यंसाधकंव्याप्यंजीवाख्यंचाभूत् उभ

निवर्तयित्वारसनांरसेभ्योघ्राणंचगंधाच्छ्रवणौचशब्दात् ॥ स्पर्शात्त्वचंरूपगुणात्तुचक्षुस्ततःपरंपश्यतिस्वंस्वभावम् ५ यतोगृहीत्वाहिकरोतियच्चयस्मिंश्चता मारभतेप्रवृत्तिम् ॥ यस्मिंश्चयद्येनचयश्चकर्तायत्कारणंतेसमुदायमाहुः ६ यद्वाऽप्यभूद्व्यापकंसाधकंचयन्मंत्रवत्स्थास्यतिचापिलोके ॥ यःसर्वहेतुःपरमात्म कारीतत्कारणंकार्यमतोयदन्यत् ७ यथाहिकश्चित्सुकृतैर्मनुष्यःशुभाशुभंप्राप्नुतेऽथाविरोधात् ॥ एवंशरीरेषुशुभाशुभेषुस्वकर्मजैर्ज्ञानमिदंनिबद्धम् ८ यथाप्रदीप्तः पुरतःप्रदीपःप्रकाशमन्यस्यकरोतिदीप्यन् ॥ तथेहपंचेंद्रियदीपवृक्षाज्ञानप्रदीप्ताःपरवंतएव ९ यथाचराज्ञाबहवोह्यमात्याःपृथक्प्रमाणंप्रवदंतियुक्ताः ॥ तद्वच्छ रीरेषुभवंतिपंचज्ञानैकदेशाःपरमःसतेभ्यः १०यथार्चिषोग्नेःपवनस्यवेगोमरीचयोर्कस्यनदीषुचापः ॥ गच्छंतिचायांतिचसंचरंत्यतस्तद्वच्छरीराणिशरीरिणांतु ११

योर्विभुत्वेनित्यत्वेचतुल्यत्वेननियम्यनियामकभावोनस्यात् । 'तथाचांतःप्रविष्टःशास्ताजनानांसर्वात्मा'इत्यादयःश्रुतयोनोपरुध्येरन् । एकस्योभयात्मत्वेमानमाह मंत्रवदिति 'एकएव तुभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवत्'इतिमंत्रएवात्रप्रमाणमित्यर्थः भूतात्मानिखात्माएकधेतिव्यापकत्वेन बहुधेतिसाधकत्वेन स्थास्यतीतिस्थाणुत्वंकूटस्थत्वापर पर्यायमुच्यते । यश्चात्मकारीआत्मनैवैकाद्वितीयेनकरोतिसर्वमित्यात्मकारी । 'तदात्मानंस्वयमकुरुत'इत्यादिश्रुतेः तत्परंकारणं । 'आनंदाद्ध्येवखल्विमानिभूतानिजायंते' इत्या दिश्रुतेरानंदमयाख्यईश्वरस्त्ववांतरकारणंशुद्धापेक्षयाकार्यमित्यर्थः तदिदमुक्तंकार्यमतोयदन्यदिति ७ एवंस्वभावस्यपरमकारणत्वमुक्त्वाज्ञानात्मतामप्याहत्रिभिः यथाहीति सुकृतैः सम्यगनुष्ठितैःपुण्यपापैः कर्मजैःपुण्यपापैःशुभाशुभेषुशरीरेषुजडेषु इदमजडंस्वभावाख्यंपरमकारणं ज्ञानंनित्यज्ञप्तिमात्रं निबद्धंशुभाशुभवज्जडाजडेअपिसहभवतोऽविरोधादित्यर्थः ८ यथेति यथावृक्षाग्रस्थोदीपोभूयांसंविषयमवभासयतिनतथावृक्षमूलस्थः एवंपंचेंद्रियरूपाश्चेतन्यप्रदीपयुक्तावृक्षाइवाप्रकाशाज्ञानदीपेनप्रदीप्ताःपरवंतश्चित्प्रकाशाधीनतयाप्रकाशकृतः नस्वतइ त्यर्थः तथाचश्रुतयः । 'येनवागभ्युद्यतेयेनचक्षूंषिपश्यंतियेनाहुर्मनोमतम्'इत्याद्याः ९ तेभ्यइंद्रियेभ्यःसज्ञानरूपःस्वभावःपरमः १० अस्यज्ञानस्यनित्यत्वंसाधयति यथार्चिषइति शरीरेषुमनोद्वाराज्ञानंनिबद्धमपिशरीराण्येवनश्यंतिनज्ञानमित्यर्थः ११

उपाध्युपधेययोर्धान्नानयोरदृश्यत्वंसदृष्टांतमाहद्वाभ्यां यथाचेति गृहीत्वाव्यापारयित्वा १२ योगादुपायात्पश्यामीत्यनुभवांत्रिद्रियात्माजीवःसबुद्धिःपरंबुद्धिंचसममेककालंपश्यतीत्यर्थः १३ देहनाशोऽपत्यादिनाबुध्युपाधिश्चिदात्मानबाध्यतेइत्याहद्वाभ्यां यथाऽऽत्मन्दति अंगंशरीरमन्यदात्मनःपृथक्स्वप्नांतरेस्वप्नमध्येयथापश्यति समनाःसबुद्धिःमनोबुद्धियुक्तः श्रोत्रादिभिर्दश भिरिंद्रियैःपंचभिःप्राणैश्चसहितःसप्तदशात्मा मरणेआत्मनःशरीरंपृथक्स्वस्मात्पश्यन्नपितत्रारमनोभिन्नत्वमजानन्नशरीरांतरयुक्तोभवति लिंगात्स्थूलदेहात् लिंगंतदेवदेहांतरं १४ सन्निपातो मरणं फलसन्नियोगात्सुखदुःखप्रदकर्मसंबंधात् अनेनलिंगेनशवीभूतेन अदृष्टोऽलक्षितः १५ एवमात्मनोबुद्धितादात्म्यभ्रांतिकृतंसंसारमुक्तावस्तुतोऽसंगत्वमाह नचक्षुषेतींद्रियाग्राह्यत्व मुक्त्वानस्पर्शमुपैतीत्यभोक्तृत्वद्वाराऽसंगत्वमुक्तंनचापीत्यकर्तृत्वद्वारा तेचक्षुराद्याः सपश्यतेतानितिसाक्षित्वमुक्तं साक्षिणोऽपिबुद्धिवृत्तिग्राह्यत्वात् कर्मव्यतिहारेतङ् फलद्वाराऽनुपश्यंती त्युक्तम् १६ असंगस्यापितप्तायःपिंडवद्धीतादात्म्यभ्रांत्यासंसारप्रतीतिरित्याह यथेति रूपंपैमल्यादिकं कश्चिदयःपिंडादिः तथापिसत्वस्तुवृत्त्यादग्धत्वपिंगलत्वाख्यमपरंरूपंगुणंवायथान बिभर्तितथैवतदस्याऽऽत्मनोरूपंचैतन्यंदेहेदृश्यते नतुदेहोवस्तुतश्चेतनः तथापिलोहमतंचतुष्कोणत्वादिकंवह्नाविवात्मनिदेहगतंदुःखादिकंप्रतीयतइत्यर्थः १७ उक्तदृष्टांतेनैवयद्यच्छरीरमात्मा

यथाचकश्चित्परशुंगृहीत्वाधूमंनपश्येज्ज्वलनंचकाष्ठे ॥ तद्वच्छरीरोदरपाणिपादंछित्वानपश्यंतिततोयदन्यत् १२ तान्येवकाष्ठानियथाविमथ्यधूमंचपश्येज्ज्वलनंचयोगात् ॥ तद्वत्सबुद्धिःसममिंद्रियात्माबुद्धिंपरंपश्यतितंस्वभावम् १३ यथाऽऽत्मनोंऽगंपतितंपृथिव्यांस्वप्नांतरेपश्यतिचात्मनोऽन्यत् ॥ श्रोत्रादियुक्तः समनाःसबुद्धिर्लिंगात्तथागच्छतिलिंगमन्यत् १४ उत्पत्तिवृद्धिव्ययसन्निपातैर्नयुज्यतेऽसौपरमःशरीरी ॥ अनेनलिंगेनतुलिंगमन्यद्गच्छत्यदृष्टःफलसन्नियोगात् १५ नचक्षुषापश्यतिरूपमात्मनोनचापिसंस्पर्शमुपैतिकिंचित् ॥ नचापितैःसाधयतेतुकार्यंतेतंनपश्यंतिसपश्यतेतान् १६ यथासमीपेज्वलतोऽनलस्यसंतापजंरूपमुपैतिकश्चित् ॥ नचापरंरूपगुणंबिभर्तितथैवतदृश्यतिरूपमस्य १७ तथामनुष्यःपरिमुच्यकायमदृश्यमन्यद्विशतेशरीरम् ॥ विसृज्यभूतेषुमहत्सुदेहंतदाश्रयंचैवबिभर्तिरूपम् १८ खंवायुमग्निंसलिलंतथोर्वींसमंततोऽभ्याविशतेशरीरी ॥ नानाश्रयाःकर्मसुवर्तमानाःश्रोत्रादयःपंचगुणान्श्रयंते १९ श्रोत्रंखतोघ्राणमथोपृथिव्यास्तेजोमयंरूपमथोविपाकः ॥ जलाश्रयंतेजउक्तंरसंचवाय्वात्मकःस्पर्शकृतोगुणश्च २०

प्राप्नोतितस्यतस्यधर्मानात्मन्यभिमन्यतइत्याह तथेति अदृश्यंतदस्यैः तदाश्रयंदेहांतराश्रयं १८ अत्रप्रसंगात्पूर्वदेहत्यागंदेहांतरोपादानंचसप्रकारमाह खमितित्रिभिः शरीरीम्रियमाणःखाद्युपादानकैर्देहांशैःखादीनाविशते । एवंश्रोत्रादयोपिसप्तदशनानाश्रयाःस्वस्वोपादानगाःसंतोऽपिकर्मसुपूर्वप्रज्ञासहितेषुवर्तमानाःश्लिष्टाःपंचगुणान्शब्दादीन्श्रयंते अयमर्थः । स्थूलदेहनाशेऽपिकर्मणाबद्धंसप्तदशात्मकंलिंगंननश्यतिकिंतुदेहांतरंप्रविशतितृणजलायुकान्यायेन तथाचश्रुतिः । ‘तमुत्क्रामंतंप्राणोनूत्क्रामतिप्राणमनूत्क्रामंतंसर्वेप्राणाअनूत्क्रामंतीति तंविद्या कर्मणीसमन्वारभेतेपूर्वप्रज्ञाचेति । तद्यथातृणजलायुकातृणस्यांतंगत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरतीति’ १९ तत्रकिमिंद्रियंकस्यभूतस्यगुणंश्रयतेइतिव्यवस्थामाह श्रोत्रंखतःखस्यगुणंशब्दंश्रयतेइत्यनुषंगः पृथिव्यागुणंगंधंघ्राणंसंश्रयते । विपाकश्चक्षूरूपतेजःपरिणामस्तेजोमयंरूपंश्रयते । जलाश्रयंतेजोरसप्रकाशकंरसनेंद्रियंरसंसंश्रयते । वाय्वात्मकःस्पर्शकृतःस्पर्शार्थकृदइंद्रियविशेषस्त्वक्तमेवंवाय्वात्मकंगुणंस्पर्शंश्रयते । शब्दादिवासनासहिताएवश्रोत्रादयःकर्मसुश्लिष्टाभवंतीत्यर्थः २०

पंचानामिंद्रियाणामर्थाःशब्दादयोभूतेषुखादिषुवसंति । तानिचपंचखादीनींद्रियेषुवसंति । सर्वाणिचैतानिशब्दादीनि खादीनींद्रियाणिचमनोनुगानि । मनोबुद्धिमन्वेतिबुद्धिःस्वभावमन्वेति तेन ‘इंद्रियाणिपराण्याहुरिंद्रियेभ्यःपरंमनः ॥ मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसः’ इतिगीतासंगता । ततश्चार्थानांकारणमिंद्रियाणितेषांमनस्तस्यबुद्धिस्तस्याश्चिदात्मेतिक्रमात्सर्ववासनावासितायांबुद्धौसर्वमस्तीतितदवियोगाच्चिदात्मापुनःपुनःसंसरतीत्यर्थः २१ एतदेवाह शुभेति स्वदेहेस्वकर्मार्जितेनूतनदेहेइंद्रियादीनितदेवकर्माऽऽददते यदैहिकादन्यत्पूर्वजन्मकृतं परावराण्यंबुद्ध्यादीनि पूर्वसंस्कारादुत्तरोत्तरदेहेकर्माणिकुर्वन्नमुच्यतइत्यर्थः २२ नन्वेवमपरिहार्यत्वाद्वासनासंततेरलंमोक्षाशयेत्याशंक्यानादिकालागतमपिभ्रमंतत्त्वधीःसमूलमुन्मूलयितुंक्षमतेइतिप्रतिपादयितुंसदृष्टांतंसंसारस्यभ्रमपूर्वकत्वमाह चलमिति यथादृष्टिपथंदृष्टिज्ञानमनतिक्रांतंसम्यक्प्रमितंवस्तुतस्यपंथाइवपंथाहानोपादानादिमार्गोयस्यतद्यथादृष्टिपथंभ्रांतिज्ञानंतच्चंचलंवाचविषयतयाऽस्थिरंजनःपरैतिपराकृत्यैत्यवगच्छतिवस्तुतत्त्वं । यथानौस्थोनौचाचलंतीरतरावारोपयतिनौस्थैर्यंचतद्बाधितंभवत्येवंपरंपरमात्मानंकूटस्थमपिबुद्ध्युपधानादकूटस्थमिवभासमानंबुद्धिमार्गभ्रांतिजनकस्वरूपंधीनिरोधेनपराकृत्यपरतत्त्वमभ्येति । एवंयथासूक्ष्मंपुस्तकाक्षरंमहद्रूपमिवमहत्तररूपमिवलोचनोत्तेजनबलेनाभितोभाति तथासूक्ष्ममपिचिदात्मतत्त्वंबुद्धियोगात्स्थूलप्रपंचात्मनाभाति । एवंयथारूपंस्वमुखप्रतिबिंबंस्वरूपंस्वस्यमुखस्यतत्त्वंस्वदृष्टचयोग्यमपिदर्पणआलोचयतेदर्शयत्येवमेकमेवाप्रत्यग्वस्तुस्वाज्ञानकल्पितधीदर्पणःपराग्भूतवियदाद्याकारेणावभा

महत्सुभूतेषुवसंतिपंचपंचेंद्रियार्थाश्चतथेंद्रियेषु ॥ सर्वाणिचैतानिमनोऽनुगानिबुद्धिंमनोऽन्वेतिमतिःस्वभावम् २१ शुभाशुभंकर्मकृतंयदन्यत्तदेवप्रत्याददते स्वदेहे ॥ मनोऽनुवर्ततिपरावराणिजलौकसःस्रोतइवानुकूलम् २२ चलंयथादृष्टिपथंपरैतिसूक्ष्मंमहद्रूपमिवाभिभाति ॥ स्वरूपमालोचयतेचरूपंपरंतथाबुद्धिपथंपरैति २३ ॥ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि मनुबृहस्पतिसंवादे द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ मनुरुवाच ॥ ॥ यदिंद्रियैस्तूपहितंपुरस्तात्प्राप्तान्गुणान्संस्मरतेचिराय ॥ तेष्विंद्रियेषूपहतेषुपश्चात्सबुद्धिरूपःपरमःस्वभावः १

सयति । तत्रयथाउपनेत्रदर्पणयोरपायेऽक्षरस्थौल्यंमुखस्यदृश्यत्वंचापैत्येवंधीनिग्रहेचितःस्थूलत्वंदृश्यत्वंचापैति । तदेवंकूटस्थस्यात्मनोविकारित्वेसूक्ष्मस्यस्थूलत्वेदृग्रूपस्यदृश्यत्वेचक्रमेणदृष्टांतत्रयं । एवंचानादिरपिभ्रांतिस्तत्त्वज्ञानेनपाश्चात्येनापिबाधितुंशक्या । नचभ्रांतेरुन्मज्जनंसंभवति बुद्धेस्तत्त्वपक्षपातित्वात् । तस्माद्भ्रांतिज्ञानापनयायाऽऽत्मज्ञानेयतितव्यमितिभावः ॥ २३ ॥ ॥ इति शांतिपर्वणि मो०नी०मा०भा० द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ननुयदुक्तंनिर्विकारस्यविकारित्वंसूक्ष्मस्यस्थूलत्वमदृश्यस्यदृश्यत्वंचबुद्धियोगादितितन्न बुद्ध्यतिरिक्तस्यात्मनोऽनुपलंभादित्याशंक्याह यदिति । ‘आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः’इतिश्रुतेः । समनस्केंद्रियैरुपहितंयज्जीवचैतन्यंतच्चिरायबहुकालंपुरस्तात्पूर्वंप्राप्तान्गुणान्विषयान्कालांतरेसंस्मरतेवाल्येऽहमिदमन्वभवमिति । तदामनोरथकालेविषयेंद्रियसन्निकर्षाद्यभावाज्ज्ञेयज्ञानज्ञातृवासनावासिताबुद्धिरेवसर्वात्मतांप्राप्तातदन्येनचैतन्येनावभास्यतेइत्यस्तिबुद्ध्यधिकश्चेतनइत्यर्थः । ननुतदाइंद्रियाण्येवविषयवासनावासितानिबुद्ध्याप्रकाश्यंतइत्याशंक्याह तेष्विति इंद्रियेष्वप्युपहतेषुविलीनेषुशब्दाद्यग्रहात् पश्चात्स्वप्नकाले बुद्धेरूपंत्रिपुटीज्ञेयज्ञानज्ञात्रात्मिकातद्रूपमस्यसबुद्धिरूपः । ‘ससमानःसन्नुभौलोकावनुसंचरतिध्यायतीवलेलायतीव’इतिश्रुतेः । समानोबुद्धितादात्म्यंप्राप्तः परमःसर्वोत्कृष्टःस्वभावश्चिद्रूपआत्माबुद्धेरन्योऽस्त्येव अयंभावः । यथाजाग्रत्कालेघटचक्षुषोर्भास्यभासकयोर्व्यतिरिक्तःकूटस्थोनिर्विकारआदित्यःसत्तामात्रेणचक्षुषोऽनुग्रहंघटस्यचप्रकाशंकरोत्येवंस्वप्नेऽपिमातृमेयात्मनास्थितांबुद्धितदन्यउदासीनः प्रकाशोऽवभासयेदिति । तस्मादस्तिबुद्धेरन्यस्तत्तादात्म्यभ्रांत्याविकारित्वाद्याक्रांतआत्मेतिसिद्धम् ।

ननुमनोरथइवस्वप्नेऽपिवासनामयानींद्रियाणिसंत्येवातस्तत्राप्यविशिष्टंबुद्धेरेवभासकत्वं तथाचश्रुतिःस्वप्नावस्थांप्रकृत्याह।'अथोखल्वाहुर्जागरितदेशएवास्यैति' तच्चस्वप्नस्यजागररूपत्वमिंद्रियाणामसत्त्वेऽनुपपन्नं इंद्रियैरर्थोपलब्धिर्जागरितमितिप्रसिद्धेरतोनमनोरथइवस्वप्नेऽपिबुद्ध्यतिरिक्तचेतनासिद्धिरित्याशंक्याह यथेति सचरमः युगपदेककालं अतुल्यकालमनेककालंच अतीतानागतंपदार्थजातंकृत्स्नमिहपरत्रवाजन्मनिदृष्टं। अविशेषात्समंतात्सम्यगंतःसन्निधिर्येषांतान्सन्निहितानींद्रियार्थान्शब्दादीन्नोपेक्षतेकिंतुप्रकाशयत्येव यथेतिहेतौ। तथाचलंपरस्परव्यभिचार्येव स्यात्रयंसंचरते यतोविद्वान्साक्षीतस्मात्सव्यावृत्तेभ्योऽनुवृत्तंभिन्नंकुसुमेभ्यःसूत्रमिवेतिन्यायादेकइत्यर्थः अयमर्थः। स्वप्नावस्थायांह्यतीतमनागतंचवस्तुजातंयुगपत्सन्निहितमिवदृश्यते। तदेंद्रियाणांसत्त्वेऽतीतादिज्ञानंनस्यान्नह्यतीतादिनातेषांसन्निकर्षोऽस्ति असन्निकृष्टज्ञानेतुतदानीमिंद्रियसद्भावकल्पनाव्यर्था। नहिरज्जूरगादिष्विवाधिष्ठानज्ञानार्थंतदाइंद्रियापेक्षास्त्यात्मनोबुद्धेर्वाऽधिष्ठानत्वेनाभिमतस्येंद्रियायोग्यत्वात् तस्मात्स्वप्नेधीरेवैकामातृमानमेयात्मनासतीतदन्येनसाक्षिणाभास्यते तस्याश्चावस्थात्रयेचलमित्यविशेषात्जागरेऽपिसैवमातृाद्याकारेतिपरिशिष्ट एकएवसाक्षीशरीरीशरीरदर्शीतिज्ञेयमिति। अथोखल्वितिश्रुतिस्तुपूर्वपक्षविषयैवेतिश्रुत्यर्थविदांप्रसिद्धं। अन्यथाचायंपुरुषःस्वयंज्योतिरितिस्वप्नेआत्मनःस्वयंज्योतिष्ट्वज्ञापनार्थंप्रवृत्तस्यज्योतिर्ब्राह्मणस्यानिर्विषयत्वंस्यादितिदिक् २ चलंसंचरतेइत्येतद्व्याचष्टे रजइति प्रत्येकंत्रिगुणात्मकानिजाग्रदादीनिबुद्धेःस्थानानितेषांगुणान्तद्गतसुखदुःखादीन् विरूपान्परस्परविलक्षणान् गच्छतिजानात्येव नभुंक्ते अवस्थांतरगतस्यदुःखादेरन्यत्रादर्शनात् तथाचश्रुतिः।'सयत्तत्रपश्यत्यतिपुण्यंचपापंचानन्वागतस्तेनभवत्यसंगोह्ययंपुरुषः'इति। अतोबुद्धेरेवदुःखादिमत्त्वंततएवचकर्तृ

यथेंद्रियार्थान्युगपत्समंतान्नोपेक्षतेकृत्स्नमतुल्यकालम् ॥ तथाचलंसंचरतेसविद्वांस्तस्मात्सएकःपरमःशरीरी २
रजस्तमःसत्वमथोतृतीयंगच्छत्यसौस्थानगुणान्विरूपान् ॥ तथेंद्रियाण्याविशतेशरीरीहुताशनंवायुरिवेंधनस्थम् ३
नचक्षुषापश्यतिरूपमात्मनोनपश्यतिस्पर्शनमिंद्रियेंद्रियम् ॥ नश्रोत्रलिंगंश्रवणेनदर्शनंतथाकृतंपश्यतितद्विनश्यति ४

त्वंनत्वात्माभोक्ताकर्तावाकिंतूदासीनबोधमात्रएवेत्यर्थः। इममेवन्यायमिंद्रियसंचारेऽप्यतिदिशति तथेति अवस्थापथेनेवेंद्रियपथेनापिबुद्धिरेवसुखादिभोक्त्रीत्यर्थः अत्रदृष्टांतः हुतेति यथाकाष्ठस्थोऽग्निरेवकाष्ठंदहतिनवायुः सत्वग्निंदीपयत्येव एवमिंद्रियस्थाधीरेवेंद्रियजंसुखादिकंभुंक्तेचितिस्तुबुद्धिंचेतयतएवनतुतद्वीयंसुखादिकंभुंक्तेइत्यर्थः ३ एवंबुद्धेःपृथक्प्रसाधितमात्मतत्त्वंचक्षुराद्यगोचरमित्याह नचक्षुषेति रूपंस्वरूपंचक्षुवानपश्यति स्पर्शनंत्वगिंद्रियंनपश्यतिनस्पृशति रूपस्पर्शराहित्यात् अत्रहेतुः यतइंद्रियेंद्रियं। 'प्राणस्यप्राणमुतचक्षुषश्चक्षुःश्रोत्रस्यश्रोत्रंमनसोयमनोविदुः'इतिश्रुतेरिंद्रियप्रकाशकंनेंद्रियप्रकाश्यत्वंप्राप्नोतीत्यर्थः नहिदारुदाहकोऽग्निर्दारुदाह्योभवति। इंद्रियाणामितिपाठेनिर्धारणेषष्ठी इंद्रियाणांमध्येस्पर्शनंयत्तदपिनपश्यतीतियोज्यं श्रोत्रेणलिंग्यतेगम्यतइतिश्रोत्रगम्यमपिनअशब्दत्वात् एतच्चप्रमाणांतराणामप्युपलक्षणं। कथंतर्हितस्यतंत्वौपनिषदंपुरुषंपृच्छामीत्युपनिषद्गम्यत्वं दृश्यतेत्वग्र्ययाबुद्ध्येतिधीगम्यत्वंचश्रूयतइत्याशंक्याहश्रवणेनदर्शनंतथाकृतमिति तथाकृतं येनपश्यतितद्विनश्यतीति तच्छब्दयोगाद्येनेत्यध्याहार्यं अयमर्थः। 'आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यः' इत्यात्मदर्शनार्थत्वेनश्रवणादिकंविधीयते। तत्रविदिततत्त्वंपदार्थस्यतत्त्वमसीतिवाक्यादात्मनोब्रह्मभावावगतौविद्वाअवेदाइतिवेदांतानामपिबाधःश्रूयते। अन्यस्यतुवाक्यार्थध्यानेनतदवगतौमनसोऽपिलयःश्रूयते तावन्मनोनिरोद्धव्यंहृदियावत्क्षयंगतमितितदिदमुक्तंयेनकरणेनशब्देनमनसावासर्वंपश्यत्यात्मानंतद्विनश्यतीति। एवंश्रवणेनवेदांतवाक्यविचारेणाऽऽत्मनोदर्शनंतथावादृशंप्रत्यस्तमितसमस्तक्रियाकारकादिद्वैतंकृतंविहितं तथाचश्रुतिः। 'यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्'इत्यादि ४



श्रोत्रेति स्वंस्वमात्मानंनपश्यंतितत्रकिमुवक्तव्यंपरमात्मानंनपश्यंतीत्यर्थः। सर्वश्चासौज्ञश्चेत्यद्वयचिन्मात्रत्वमुक्तं। सर्वदर्शीतिसर्वदृश्यद्रष्टात्मत्वमुक्तं। पुनःसर्वज्ञइतिदृश्यद्रष्ट्रोर्नित्यसंबंधश्चोक्तंइत्यपौनरुक्त्यं ५ एवमात्मनिसाधकंप्रमाणंप्रदर्श्यबाधकाभावमप्याह। यथेत्यादिना ६ ज्ञानात्मवान्ज्ञानेनैवस्वरूपवान्ज्ञानस्वरूपइत्यर्थः ७ आत्माप्रतीयमानोऽपिनप्रतीयतइतिसदृष्टांतमाह पश्यन्निति सोमेआदर्शतुल्येप्रतिबिंबितंजगल्लक्ष्मकलंकबुध्यापश्यन्नपिनविंदतिइदंजगदेवचंद्रेदृश्यतइतिनजानाति एवमात्मज्ञानमस्ति यद्वाहुः। नचायमेकांतेनाविषयः अस्मत्प्रत्ययविषयत्वादित्यपरोक्षत्वाच्चप्रत्यगात्मप्रसिद्धेरितिच। तथापिब्रह्माभिन्नत्वेनाज्ञातत्वान्नचोत्पन्नंज्ञानमस्ति। ननुयद्यात्मैवब्रह्मतर्हिसज्ञातएव नचतज्ज्ञानेऽपिशोकादिनिवृत्तिरूपंफलंदृश्यतेऽतःकिंशास्त्रेणेत्याशंक्याह नचतत्रपरायणं तदात्मवेदनंनपरायणमितिनच तदेवपरायणमित्यर्थः तथाचश्रुतिः। 'यदाचर्मवदाकाशंवेष्टयिष्यंतिमानवाः॥ तदादेवमविज्ञायदुःखस्यांतोभविष्यति'इतिज्ञातोऽपिभर्तृवदन्यथात्वेनगृहीतत्वात्सम्यग्ज्ञानायशास्त्रापेक्षास्तीत्यर्थः। भर्तुःकिलराजवल्लभोदूरदेशस्थोऽमूत्सोऽन्यैरमात्यैर्भर्तुर्मृतोब्रह्मराक्षसोजातइतिराज्ञेज्ञापितंतंचसमीपगतंराजापश्यन्नपिधीदोषान्नपश्यतीत्याचक्षतेवृद्धाः ८ अपिचादृष्टमपिपदार्थमनुमानेनजानंतीत्याह रूपेति स्थूलदृष्टयाऽरूपवंतमपिदृक्षमुदयास्तमनेआद्यंतेमृन्मात्रत्वेनाऽरूपत्वाद्बुधाधिया

श्रोत्रादीनिनपश्यंतिस्वंस्वमात्मानमात्मना ॥ सर्वज्ञःसर्वदर्शीचसर्वज्ञस्तानिपश्यति ५ यथाहिमवतःपार्श्वंपृष्ठंचंद्रमसोयथा ॥ नदृष्टपूर्वं
मनुजैर्नचतन्नास्तिताववता ६ तद्वद्भूतेषुभूतात्मासूक्ष्मोज्ञानात्मवानसौ ॥ अदृष्टपूर्वश्चक्षुर्भ्यांनचासौनास्तितावता ७ पश्यन्नपियथालक्ष्मजगत्सोमेनविंदति ॥ एवमस्तिनचोत्पन्नंनचतन्नपरायणम् ८ रूपवंतमरूपत्वादुदयास्तमनेबुधाः॥धियासमनुपश्यंतितद्गताःसवितुर्गतिम् ॥
९ तथाबुद्धिप्रदीपेनदूरस्थंसुविपश्चितः ॥ प्रत्यासन्नंनिनीषंतिज्ञेयंज्ञानाभिसंहितम् १० नहिखल्वनुपायेनकश्चिदर्थोऽभिसिद्ध्यति ॥ सूत्रजालैर्यथामत्स्यान्बध्नंतिजलजीविनः ११ मृगैर्मृगाणांग्रहणंपक्षिणांपक्षिभिर्यथा ॥ गजानांचगजैरेवंज्ञेयंज्ञानेनगृह्यते १२ अहिरेवह्यहेःपादान्पश्यतीतिहिनःश्रुतम् ॥ तद्वन्मूर्तिषुमूर्तिस्थंज्ञेयंज्ञानेनपश्यति १३ नोत्सहंतेयथावेत्तुमिंद्रियैरिंद्रियाण्यपि ॥ तथैवेहपराबुद्धिःपरंबोध्यंनपश्यति १४

रूपंमृन्मात्रमेवसमनुपश्यंति यथाहुः। 'आदावंतेचयन्नास्तिवर्तमानेऽपितत्तथा'इति। तथातद्गताउदयास्तमयगतास्तद्दर्शिनःसवितुर्गतिंदूरत्वदोषात्प्रत्यक्षेणागृह्यमाणामपिदेशांतरप्राप्तिलिंगेनधियापश्यंति। एवंदृश्यमानस्यासत्त्वे दृश्यमानस्यसत्त्वेचदृष्टांतद्वयमुक्तं ९ दार्ष्टांतिकमाह तथेति यथेदंतथादूरस्थंरविगतिवदुर्लक्ष्यंप्रकरणादात्मानंबुद्धिप्रदीपेनपूर्वोक्तरीत्यासमनुपश्यंतीत्यनुषज्यते। प्रत्यासन्नंनिकटस्थमपिज्ञेयंप्रपंचंनिनीषंतिनेतुमिच्छंति किंप्रति ज्ञानाभिसंहितंज्ञानशब्देनाभिसंहितंज्ञानशब्दाभिधेयंब्रह्म। 'सत्यंज्ञानमनंतंब्रह्म विज्ञानमानंदंब्रह्म'इत्यादिश्रुतिभ्यस्तत्प्रति ब्रह्मणिप्रविलापयितुमिच्छंतीत्यर्थः १० एतच्चोपायेनैवसिध्यतीतिसदृष्टांतमाह नहीति ११ उपादानोपादेययोरभेदान्मृगेणमृगइवज्ञानेनस्वसजातीयेनज्ञेयंगृह्यतेवशीक्रियतेभूम्येववृक्षइत्यर्थः १२ मूर्तिषुस्थूलदेहेषु मूर्तिस्थंलिंगदेहस्थं ज्ञेयमात्मानं ज्ञानेनधीवृत्त्या १३ नन्वात्मनोधीवृत्तिविषयत्वेजडत्वापत्तिरित्याशंक्याह नोत्सहंतइति पराबुद्धिश्चरमाधीवृत्तिःपरंशुद्धंबोध्यंनपश्यतिघटवत्। तथाचवृत्तिव्याप्तिरेवब्रह्मण्यस्तिनतुफलव्याप्तिरित्यर्थः। यथोक्तं'फलव्याप्यत्वमेवेहशास्त्रकृद्भिर्निराकृतं॥ ब्रह्मण्यज्ञाननाशायवृत्तिव्याप्तिरपेक्ष्यते'इति १४

वृत्तिरूपोपाधिलयेऽपिब्रह्मास्तिनतुशून्यशेषइतिसदृष्टांतमाह यथेति अमावास्यांसूर्येणसहवासंप्राप्य अलिंगत्वात्ज्ञापकोपाधिशून्यत्वात् तथाऽनष्टंशरीरिणंविद्धि १९ कोशःस्थूलशरीरं मूर्त्यावृत्त्याविमुक्तः १६ एवंसुषुप्तिसमाध्योरात्मनःसत्त्वमुक्त्वाव्युत्थानलिंगेनापितदाह यथेति आकाशांतरमवकाशभेदं लिंगांतरमित्युक्तेःसमाधौपूर्वलिंगनाशउक्तः तथाहष्टिसृष्टिन्यायेनलिं गांतरोत्पत्तिरित्यर्थः १७ जन्मेति चांद्रमसीचंद्रमंडलस्यवृत्तिर्धर्मः । एवंशरीरस्यैवजन्मादिर्नात्मनइत्यर्थः १८ तत्रपरमतेनयुक्तिमाह उत्पत्तीति उत्पत्त्यादिकालभेदात्परिमाणादिभे देनशरीरभेदेऽपिसएवायंदेवदत्तइतिशरीरिणऐक्यंप्रत्यभिज्ञायतेएवममावास्यामित्यदर्शनंलक्ष्यते तद्दर्शनंगतोऽपिमूर्तिमान्लब्धदेहश्चंद्रोऽप्येकएव बाल्याद्यवस्थांतरप्राप्ताविवदेहांतरप्रा प्तावपिएकएवदेहीत्यर्थः १९ देहदेहिनोःसंबंधोऽयंप्रतीयमानोऽपिकालत्रयेऽपिनास्तीत्याह नेति चिद्रूपंदेहिनमचिद्रूपोदेहःप्रकाशमंधकारइवस्प्रष्टुंत्यक्तुंवानशक्नोतीत्यर्थः २० एवंसत्यपि देहंविनानदेहिनःप्रकाशोनापिदेहिनंविनादेहप्रकाशइतिसदृष्टांतमाहद्वाभ्यां यथेति तयोराहुरदृश्योऽपिदृश्येनार्कादिनायुक्तएवप्रकाशते एवमात्मादेहेनेत्ययमहमस्मीतिप्रकाशते । देहाभा वेतुसुषुप्तौनस्पष्टंप्रकाशतइत्यर्थः । विनाशमेवापीवोभवतीत्यादिश्रुतेः २१ यथेति दृष्टांतदार्ष्टांतिकयोर्व्यत्ययः यथाऽर्कवियुक्तोराहुर्नप्रकाशतेएवंचैतन्यमंतरेणजडोदेहोनप्रकाशतइत्यर्थः ।

यथाचंद्रोह्यमावास्यामलिंगत्वान्नदृश्यते ॥ नचनाशोऽस्यभवतितथाविद्धिशरीरिणम् १५ क्षीणकोशोह्यमावास्यांचंद्रमानप्रकाशते ॥ तद्वन्मूर्तिविमुक्तो ऽसौशरीरीनोपलभ्यते १६ यथाकाशांतरंप्राप्यचंद्रमाभ्राजतेपुनः ॥ तद्वल्लिंगांतरंप्राप्यशरीरीभ्राजतेपुनः १७ जन्मवृद्धिःक्षयश्चास्यप्रत्यक्षेणोपलभ्यते ॥ सातुचांद्रमसीवृत्तिर्नतुतस्यशरीरिणः १८ उत्पत्तिवृद्धिव्ययसायथासइतिगृह्यते ॥ चंद्रएवत्वमावास्यांतथाभवतिमूर्तिमान् १९ नोपसर्पद्विमुंचद्वाशशिनं दृश्यतेतमः ॥ विसृजंश्चोपसर्पंश्चतद्वत्पश्यशरीरिणम् २० यथाचंद्रार्कसंयुक्तंतमस्तदुपलभ्यते ॥ तद्वच्छरीरसंयुक्तःशरीरीत्युपलभ्यते २१ यथाचंद्रार्क निर्मुक्तःसराहुर्नोपलभ्यते ॥ तद्वच्छरीरनिर्मुक्तःशरीरीनोपलभ्यते २२ यथाचंद्रोह्यमावास्यांनक्षत्रैर्युज्यतेगतः ॥ तद्वच्छरीरनिर्मुक्तःफलैर्युज्यतिकर्मणः २३ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि मनुबृहस्पतिसंवादेत्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥ ॥ ४ ॥ ॥ ॥ ४ ॥ ॥
॥ मनुरुवाच ॥ यथाव्यक्तमिदंशेतेस्वप्नेचरतिचेतनम् ॥ ज्ञानमिंद्रियसंयुक्तंतद्वत्प्रेत्यभवाभवौ १

दार्ष्टांतिकेऽक्षरयोजनातुतद्वद्राहुवदप्रकाशमानंशरीरंस्वीयत्वेनयस्यास्तीतितद्वच्छरीरश्चिदात्मातेनविनिर्मुक्तःशरीरीनोपलभ्यतइति स्वर्भाणवस्तइत्यादौस्वर्भमात्रध्वंसइवशरीरमात्रानुपलं भोविवक्षितः अनयैवरीत्यापूर्वश्लोकेऽपिशरीरोपलंभेआत्मनोऽन्वयःप्रदर्शनीयः तथाश्रुतरीत्याचोभयोरपिश्लोकयोरात्मोपलंभेशरीरान्वयव्यतिरेकौदर्शनीयौ २२ नन्वेवंमरणेशरीराभावा दात्मनोऽप्यभावःस्यादित्याशंक्यतत्रापिशरीरांतरसंबंधोऽस्तीतिसदृष्टांतमाह यथेति अमावास्यांसूर्येणसहत्वासंगतश्चंद्रोऽस्माभिर्नक्षत्रयुक्तत्वेनसमयांतरेइवादृश्यमानोऽपितद्युक्तोऽस्त्येव एव मेकशरीरनिर्मुक्तआत्माकर्मणःफलभूतैःशरीरांतरैर्युज्यतएवेतिनशरीराभावादात्माभावोऽस्तिदेहत्वमात्रादित्यर्थः २३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीयेभारतभावदीपेत्र्यधिक द्विशततमोऽध्यायः ॥ २०३ ॥ ४ ॥ देहसंबंधस्यापरिहार्यत्वंश्रुत्वामुमुक्षोरुद्वेगोमाभूदितितन्निवृत्तिसाधनंयोगंवक्ष्यन्सदृष्टांतंदेहवियोगप्रकारमाह यथेति यथाव्यक्तंस्थूलशरीरंशेते स्वप्ने चेतनंलिंगशरीरमेवव्यक्ताद्वियुज्यचरतितद्वद्ध्रुवःसंसारस्तथाइंद्रियसंयुक्तंलिंगमपिशेते सुषुप्तौकेवलंज्ञानमेवलिंगाद्वियुज्यचरतितद्वद्भवोमोक्षइत्यर्थः १ ॥७२॥

ज्ञेयमात्मानंज्ञानेनबुद्ध्याआत्मज्ञानान्मुच्यते तच्चेंद्रियजयाद्भवतीत्यर्थः २ विपर्ययेबंधमाह सइति ज्ञानेबुद्धौनपश्यति ३ अबुद्धिरविद्याअनित्याशुचिदुःखानात्मसुदेहादिषुनित्यसुखशुचित्वा त्मबुद्धिर्विपर्ययरूपासाचाज्ञानजातयामनआकृष्यतेरागाद्याक्रांतंभवति पंचश्रोत्रादयः मानसाःमनःप्रधानाः ४ अज्ञानतृप्तोमोहपूर्णः अवगाढोऽत्यंतमग्नः अदृष्टवद्धर्माधर्मयुक्तंयथास्यात्तथा भूतात्माजीवोविषयेभ्यःशब्दादिभ्योभोगार्थंनिवर्ततेमृतःपुनर्जायते ५ अंतंनाशंगतमंतगतं द्वितीयाश्रितेतिसमासः तर्षस्तृष्णा ६ शाश्वतस्येतिभावप्रधानोनिर्देशः अन्यथासुखदुःखसाधनयोर्विप रीतम् ७ प्रख्येस्वच्छे आत्मनिबुद्धौ ८ प्रसृतैर्विषयेष्वनुगतैर्नियतैर्निगृहीतैःइंद्रियैरूप्यंतेनिरूप्यंतेइतिइंद्रियरूपेभ्यःशब्दादिभ्योयच्छेत् आत्मानंइंद्रियसंज्ञंमनसैवनिगृह्णीयात् ९ लवणोदक न्यायेनकारणेकार्यलयनियमादिंद्रियमनोबुद्धिज्ञानमहतांपूर्वपूर्वस्योत्तरोत्तरस्मिन्प्रविलयायतेषांकार्यकारणभावमाह इंद्रियेभ्यइति पूर्वंकारणं ज्ञानंजीवात्मा महत्परमात्मा तथाचानेनैवक्रमेण श्रुतावपिइंद्रियादीनांप्रविलापनंदृश्यते 'यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि ॥ ज्ञानमात्मनिमहतिनियच्छेत्तद्यच्छेच्छांतआत्मनि'इति । श्रुत्यर्थस्तुवाक्त्वाचंवागादिग्राह्येंद्रियाणिमन सिनियच्छेत् मनसीतिदैर्घ्यंछांदसं वागादिव्यापारमुत्सृज्यमनोमात्रेणावतिष्ठेतेत्यर्थः मनोऽपिविषयविकल्पाभिमुखंज्ञानशब्दोदितायांबुद्धौनियच्छेत् । तांचमहत्यात्मनिभोक्तरिनियच्छेत्

यथांभसिप्रसन्नेतुरूपंपश्यतिचक्षुषा ॥ तद्वत्प्रसन्नेंद्रियत्वाज्ज्ञेयंज्ञानेनपश्यति २ सएवलुलितेतस्मिन्यथारूपंनपश्यति ॥ तथेंद्रियाकुलीभावेज्ञेयंज्ञानेनपश्यति ३ अबुद्धिरज्ञानकृताअबुद्ध्याऽऽकृष्यतेमनः ॥ दुष्टस्यमनसःपंचसंप्रदुष्यंतिमानसाः ४ अज्ञानतृप्तोविषयेष्ववगाढोनतृप्यते ॥ अदृष्टवच्चभूतात्माविषयेभ्योनि वर्तते ५ तर्षच्छेदोनभवतिपुरुषस्येहकल्मषात् ॥ निवर्ततेतदातर्षःपापमंतगतंयदा ६ विषयेषुतुसंसर्गाच्छाश्वतस्यतुसंश्रयात् ॥ मनसाचान्यथाकांक्षन्परंनप्र तिपद्यते ७ ज्ञानमुत्पद्यतेपुंसांक्षयात्पापस्यकर्मणः ॥ यथाऽऽदर्शतलेप्रख्येपश्यत्यात्मानमात्मनि ८ प्रसृतैरिंद्रियैर्दुःखीतैरेवनियतैःसुखी ॥ तस्मादिंद्रियरूपे भ्योयच्छेदात्मानमात्मना ९ इंद्रियेभ्योमनःपूर्वंबुद्धिःपरतराततः ॥ बुद्धेःपरतरंज्ञानंज्ञानात्परतरंमहत् १० अव्यक्तात्प्रसृतंज्ञानंततोबुद्धिस्ततोमनः ॥ मनः श्रोत्रादिभिर्युक्तंशब्दादीन्साधुपश्यति ११ यस्तांस्त्यजतिशब्दादीन्सर्वांश्चव्यक्तयस्तथा ॥ विमुंचेत्प्राकृतान्ग्रामांस्तान्मुक्त्वाऽमृतमश्नुते १२

अस्मीत्येतावन्मात्रेणावतिष्ठेत । तमपिशांतेपरस्मिन्नात्मनिपरस्यांकाष्ठायांअपास्तसमस्तविशेषेनियच्छेदिति १० प्रविलापनक्रमनियमायउत्पत्तिक्रममाह अव्यक्तादिति अव्यक्तात्शुद्धचि न्मात्रात्युक्तंव्याप्तंमनसःश्रोत्रादीनि श्रोत्रादिभ्यःशब्दादयःप्रसृताइत्यर्थः । तथाचसुषुप्तौश्रोत्रंसर्वैःशब्दैःसहाप्येतिमनःसर्वैर्ध्यानैःसहाप्येतीत्यात्मनिसविषयाणामिंद्रियमनआदीनांलयः प्रबोधेच एतस्मादात्मनःसर्वेप्राणायथाऽऽयतनंविप्रतिष्ठंते प्राणेभ्योदेवादेवेभ्योलोकाइतिप्राणशब्दितेभ्यइंद्रियेभ्योदेवानामादित्यादीनांतेभ्योलोकानांचोत्पत्तिःश्रूयते तस्मादुक्तएवशब्दार्थः ननुकिमर्थमयंक्रमोविवक्ष्यते असमाधौसमाधिभ्रमनिवृत्त्यर्थमितिब्रूमः तथाहि । पूर्वपूर्वकक्षातःउत्तरोत्तरकक्षांप्रविविक्षतोयोगिनोनिरुद्ध्यमानंचित्तंदैनंदिनलयाभ्यासाल्लीयतेप्रस्तपश्चित्त पूर्वावस्थांवासहसागच्छति । तावेतौलयविक्षेपौहेयतयाश्रूयेते । 'लयविक्षेपरहितंमनःकृत्वासुनिश्चलम् ॥ यदायात्युन्मनीभावंतदातत्परमंपदम्'इति । तत्रस्थूलप्रपंचात्सूक्ष्मंगच्छन्मध्येलीनः
२५ सुषुप्तएव । सूक्ष्मात्कारणंगच्छन्लीनोविदेहः । कारणादूर्ध्वंगच्छन्लीनःप्रकृतिलयः । शुद्धंप्राप्तोजीवन्मुक्तः । तत्राद्यःसंसार्येवमध्यमौक्रममुक्तिभाजौअंत्यःसद्योमुक्तिभागिति ११ तदेतदाह यस्तानिति त्यजतित्यजेत् व्यक्तयःव्यक्तीः शब्दाद्याश्रयभूतानिवियदादीनिकारणशरीराणिमुक्त्वाहार्दाकाशेभासमानानिविमुंचेत् प्राकृतान्प्रकृत्युत्थान्ग्रामान्ग्रामवदंतःकरण पांचस्यसंश्लेषस्थानानिस्थूलसूक्ष्मकारणशरीराणिमुक्त्वाऽमृतंकैवल्यमश्नुते १२

प्राकृतान्ग्रामानित्यग्रसांख्याभिमताप्रकृतिर्भंप्रसंजीति आत्मनएवेंद्रियाणुदयास्तमयाविति सदृष्टांतमाहद्वाभ्यां उद्यन्निति १३ इंद्रियगुणान्इंद्रियभोग्यान्रूपादीन् आहृत्यअस्तंस्वरूपं गच्छतीतियोजना १४ अस्यपुनःपुनर्देहावाप्तौहेतुमाह प्रणीतमिति प्रणीतंकर्मणा उपस्थापितंमार्गैर्विषयंकर्मणैवनीयमानःकर्मफलंसुखादिप्राप्नोति यतःप्रवृत्तंप्रवृत्तिप्रधानंधर्मंपुण्यपापात्मकं आप्तवान्कृतवान् । आत्मविदितिपाठेप्रारब्धकर्ममात्रविषयोऽयंश्लोकः १५ एतत्परिहारार्थंनिवृत्तंधर्ममाह विषयाइति आहरणंआहारोविषयभोगस्तद्वर्जितस्यविषयाःशब्दाद्यभिलाषाःवि निवर्तंते परंतुरसोवासनात्मकोननिवर्तते सोऽपिपरंआत्मानंदृष्ट्वाअवाप्तसकलकामस्यपुंसोनिवर्तते । भोगेच्छांत्यक्त्वाऽऽत्मानंपश्यतोविषयबंधोनिवर्ततइत्यर्थः १६ कर्मगुणैःकर्माणिगुणभूतानि येषांतैर्विषयसंगैःमनसिमनःप्रधानेत्वंपदार्थेऽस्मितामात्रे तदामनोऽपीतिशेषः ब्रह्मसंपद्यते कुतः यतस्तत्रैवप्रलयंगतंभवति १७ ब्रह्मपदार्थमाह अस्पर्शनमिति स्पर्शादिहीनत्वात्स्पर्शनादि

उद्यन्हिसवितायद्वत्सृजतेरश्मिमंडलम् ॥ सएवास्तमपागच्छंस्तदेवात्मनियच्छति १३ अंतरात्मातथादेहमाविश्येंद्रियरश्मिभिः ॥ प्राप्येंद्रियगुणान्पंचसोऽस्त
माहृत्यगच्छति १४ प्रणीतंकर्मणामार्गेनीयमानःपुनःपुनः ॥ प्राप्नोत्ययंकर्मफलंप्रवृत्तंधर्ममाप्तवान् १५ विषयाविनिवर्तंतेनिराहारस्यदेहिनः ॥ रसवर्जंरसो
ऽप्यस्यपरंदृष्ट्वानिवर्तते १६ बुद्धिःकर्मगुणैर्हीनायदामनसिवर्तते ॥ तदासंपद्यतेब्रह्मतत्रैवप्रलयंगतम् १७ अस्पर्शनमशृण्वानमनास्वादमदर्शनम् ॥ अघ्राणमवि
तर्कंचसत्वंप्रविशतेपरम् १८ मनस्याकृतयोमग्नामनस्त्वभिगतंमतिम् ॥ मतिस्त्वभिगताज्ञानंज्ञानंचाभिगतंपरम् १९ इंद्रियैर्मनसःसिद्धिर्नबुद्धिंबुद्ध्यतेमनः ॥
नबुद्धिर्बुद्ध्यतेव्यक्तंसूक्ष्मंत्वेतानिपश्यति २० ॥ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि मनुबृहस्पतिसंवादे चतुरधिकद्विशततमोऽध्यायः॥२०४॥
॥ मनुरुवाच ॥ ॥ दुःखोपघातेशारीरेमानसेचाप्युपस्थिते ॥ यस्मिन्नशक्यतेकर्तुंयत्नस्तंनानुचिंतयेत् १ भैषज्यमेतद्दुःखस्ययदेतन्नानुचिंतयेत् ॥ चिंत्य
मानंहिचाभ्येतिभूयश्चापिप्रवर्तते २ प्रज्ञयामानसंदुःखंहन्याच्छारीरमौषधैः ॥ एतद्विज्ञानसामर्थ्यंनबालैःसमतामियात् ३ अनित्यंयौवनंरूपंजीवितंद्रव्य
संचयः ॥ आरोग्यंप्रियसंवासोगृध्येत्तत्रनपंडितः ४ नजानपदिकंदुःखमेकःशोचितुमर्हति ॥ अशोचन्प्रतिकुर्वीतयदिपश्येदुपक्रमम् ५

क्रियानाश्रयं अनिंद्रियत्वात्श्रवणादिक्रियाहीनंअशृण्वानं अवितर्कमनुमानागम्यं ईदृशंपरंब्रह्मसर्वंबुद्धिःप्रविशते १८ अध्यायार्थमुपसंहरति मनसीति आकृतयोघटादिव्यक्तयःमनःसंकल्पकृतत्वात्तत्रैवमग्नाभवंति तथाचाक्षपादाचार्यप्रणीतंसूत्रं । दोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइति एवंमनसोबुद्धौबुद्धेर्जीवेतस्यब्रह्मणिचलयइत्यर्थः १९ सिद्धिर्नेतिनकारःकाकाक्षिवदुभयत्रसंबध्यते । कार्येणकारणाव्याप्तेरिंद्रियादयःस्वंस्वंकारणंनबुद्ध्यंते । सूक्ष्मंतुचिदात्मासर्वंपश्यति तदनुविद्धाउत्तरेतुल्यंस्वंकार्यंपश्यंतीत्यर्थः ॥ २० ॥ इति शांतिपर्वणि मो०नीलकंठीये भारतभावदीपे चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥ ॥ दुःखोपघातेइति दुःखरूपेउपघातेप्राप्तेयोगेविघ्नेसतिशारीरेव्याध्यादौमानसेशोकादौचयस्मिन्सतियत्नोयोगाभ्यासःकर्तुंनशक्यतेतंदुःखोपघातंनानुचिंतयेत् अचिंतयैवतंपरिहरेदित्यर्थः १ एवदेवाह भैषज्यमिति २ । ३ प्रज्ञामेवाह अनित्यमिति नगृध्येत्गर्वंनकुर्यात् ४ उपक्रमंप्रतीकारोपायम् ५



मरणंभवति ६ तेब्रह्माभिगताः ७ पालनेचतेसुखमितिसंबंधः दुःखेनचदुःखेऽपिचसतिनाधिगम्यंवेकदाचित् ८ एवंदुःखनिवृत्त्युपायंवैराग्यमुक्त्वासुखप्राप्त्युपायंब्रह्मात्मज्ञानमाह ज्ञानमिति ज्ञानं ब्रह्मज्ञेयमहंकारादिघटांतंतदात्मनाअभिनिर्वृत्तमविद्ययानिष्पन्नमतएवमनःज्ञानगुणंज्ञानस्यधर्मः कनकस्येवकटकं प्रज्ञाकरणैर्ज्ञानेंद्रियैःसंयुक्तंतद्यदाभवति ततोनंतरंबुद्धिर्विषयाकारावृत्तिर्भवति । एतेनयदेतद्धृदयंमनश्चेत्युपक्रम्यसर्वाण्येवैतानिप्रज्ञानस्यनामधेयानिभवंत्येषब्रह्मैषइंद्रइत्यादिनाप्रज्ञाप्रतिष्ठाप्रज्ञानंब्रह्मेत्यंतेनकरणदेवताभूतभौतिकानामर्थानांप्रज्ञात्मत्वंप्रज्ञाप्रतिष्ठात्वं चहाटककटकन्यायेनोक्तातामेवप्रज्ञांब्रह्मेतिवदंत्याःश्रुतेरर्थोब्रह्माद्वैतंपादत्रयेणदर्शितम् । चतुर्थंनतत्कारणाविद्यावियोगहेतुर्बुद्धिरितिचोक्तम् ९ बुद्धेर्निग्रहस्तदभिव्यक्तिहेतुरित्याह यदेति यदाकर्मगुणैःकर्मोत्थैःसंस्कारैःसहिताबुद्धिर्मनसिमननात्मिकायांधीवृत्तौवर्ततेतदाऽऽत्मनापरिणमतेतदाब्रह्मप्रज्ञायते । तादृशधीवृत्त्युदयेहेतुमाह ध्यानेति ध्यानंयमनियमादिभिःपूर्वांगैःसहितं ध्यानंध्येयाकारप्रत्ययसंततिःसएवयोगाख्यस्ततोनिष्पन्नेनसमाधिनाब्रह्माकारवृत्तिविशेषेण । कर्मणोपेतेतिपाठेकर्मणोबाह्यविषयप्रकाशनादपेतेतिव्याख्येयम् १० गुणवतीइंद्रियादिमती गुणेषुरूपादिषु अपरादज्ञानात् ११ यदाअज्ञाननाशकाले ध्यानंध्येयंवस्तुमनसिधीवृत्तौप्राप्नोतिअभिव्यज्यते पूर्वजमित्यज्ञानस्यापिकारणम् । तस्मादव्यक्तमुत्पन्नमित्यादिस्मृतेः निकषे

सुखाद्बहुतरंदुःखंजीवितेनास्तिसंशयः ॥ स्निग्धस्यचेंद्रियार्थेषुमोहान्मरणमप्रियम् ६ परित्यजतियोदुःखंसुखंवाप्युभयंनरः ॥ अभ्येतिब्रह्मसोऽत्यंतं
नतेशोचंतिपंडिताः ७ दुःखमर्थाहियुज्यंतेपालनेनचतेसुखम् ॥ दुःखेनचाधिगम्यंतेनाशमेषांनचिंतयेत् ८ ज्ञानंज्ञेयाभिनिर्वृत्तंविद्धिज्ञानगुणंमनः ॥
प्रज्ञाकरणसंयुक्तंततोबुद्धिःप्रवर्तते ९ यदाकर्मगुणोपेताबुद्धिर्मनसिवर्तते ॥ तदाप्रज्ञायतेब्रह्मध्यानयोगसमाधिना १० सेयंगुणवतीबुद्धिर्गुणेष्वेवाभिवर्तते ॥
अपरादभिनिःसृत्यगिरेःशृंगादिवोदकम् ११ यदानिर्गुणमाप्नोतिध्यानंमनसिपूर्वजम् ॥ तदाप्रज्ञायतेब्रह्मनिकषंनिकषेयथा १२ मनस्त्वपहृतंपूर्वमिंद्रि
यार्थनिदर्शकम् ॥ नसमक्षगुणापेक्षिनिर्गुणस्यनिदर्शकम् १३ सर्वाण्येतानिसंवार्यद्वाराणिमनसिस्थितः ॥ मनस्येकाग्रतांकृत्वातत्परंप्रतिपद्यते १४ यथा
महांतिभूतानिनिवर्तंतेगुणक्षये ॥ तथेंद्रियाण्युपादायबुद्धिर्मनसिवर्तते १५

कषपाषाणे निकषःस्वर्णरेखा प्रकर्षेणनिःसंशयंज्ञायते १२ विषयत्वेननिकषवद्ब्रह्मप्रज्ञायतेचेज्जाड्यंब्रह्मणआपद्येतेत्याशंक्याह मनस्त्विति मनोऽखंडाकारावृत्तिः पूर्वमखंडचैतन्याभिव्यक्तेःप्रागेवापहृतमखंडप्रकाशेनतिरोभूतं । कुतः यस्मादिंद्रियार्थानांशब्दादीनामेवतन्निदर्शकंतदप्यव्यवधानेनैवेत्याह समक्षमिंद्रियसन्निकृष्टंगुणंरूपाद्यपेक्षतेवत्तथाअतोहेतोर्निर्गुणस्यरूपादिहीनस्यतन्न निदर्शकमतोनब्रह्मणोजाड्यापत्तिः १३ उपसंहरति सर्वाणीति द्वाराणींद्रियाणि संवार्यपिधाय मनसिसंकल्पमात्रेणस्थितःसन्तमपिमनसिबुद्धौकृत्वाप्रविलाप्य एकाग्रतामस्मीत्यात्ममात्राकारतांप्राप्य तत्परंतत्एकाग्रताऽतःपरम् १४ तमेतंलयक्रमंयुक्त्याऽप्युपपादयति यथेति गुणाःशब्दतन्मात्रादयोऽपंचीकृतभूतसंज्ञास्तेषांसूक्ष्मेक्षयेसतितत्कार्याणिमहाभूतानिपंचीकृतस्थूलभूतानिनश्यंति । तथाहिश्रुतिःकारणनाशपूर्वकत्वंकार्यनाशस्यदर्शयति । सयथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेतेति उदकंविलीनमनुखिल्योलीयतइतिश्रुत्यर्थः तथाचानुभवोजलप्रस्थेखिल्यप्रस्थप्रक्षेपेकरकाप्रक्षेपइवपरिमाणानतिरेकात्खिल्योपादानंजलंस्वोपादानेरसतन्मात्रेविलीयतेनतुजलप्रस्थे तस्यतदनुपादानत्वात् तस्मात्सूक्ष्मस्यजनकनाशात्खिल्यनाशइतिस्मृत्याचगुणक्षयाद्भूतक्षयइति । यथाऽयंदृष्टांतस्तथामनस्यहंकारेलीयमानाबुद्धिःस्वकार्याणींद्रियाणिगृहीत्वैवलीयते १५

ननुकारणेलीयमानंकार्यस्वदोषेणकारणमविदूषयेज्जलक्षिप्तलवणखिल्यइवजलंस्वरसेनेत्याशंक्याह यदेति बुद्धिर्व्यवसायोनिश्चयःसएवगुणोधर्मस्तेनोपेताऽपिअंतरेऽहंकारेचरतीतितथा । यथाशाकल्यंतरोपेतमपिकुंडलंस्वर्णस्थमेवतद्रूप्मनसिपदाबुद्धिर्मवतितदासामनएवभवति । मधुरंजलंतुनखिल्यस्यकारणमितितेनतद्रूपगंविजातीयसंसर्गकृतमेवेत्यर्थः १६ ननुत्रिगुणात्मकोमनःशब्दितोऽहंकारोविजातीयेनिर्गुणेलीयमानःस्वधर्मेणतदपिदूषयेदेवेत्याशंक्याह गुणवद्भिरिति ध्यानेनगुणःसत्वोत्कर्षाख्योयस्मिंस्तद्ध्यानगुणंमनोऽहंकारः गुणवद्भीरूपादिमद्भिर्विषयैः सहयदागुणोपेतंगुणान्सत्वादीन्मूलप्रकृतिमितियावत् । तामव्यक्ताख्यामुपेतंप्राप्तंभवतितदासर्वान्गुणान्सर्वगुणात्मकमव्यक्तमपिहित्वानिर्गुणंव्रह्मप्रविलाप्यनिर्गुणंप्रतिपद्यते । यदि सत्यादयोनप्रविलाप्याःस्युस्तर्हिवेपुलीनंमनःसुप्तिप्रलययोरिवपुनरुन्मज्जेत्कारणस्यानाशात् । नचादृष्टाख्यनिमित्तांतराभावान्नोन्मज्जतीतिवाच्यं श्रुतहान्यश्रुतकल्पनाप्रसंगात् । तत्त्वमसीतिवाक्यार्थज्ञानात्कृतकृत्यत्वंश्रूयते । 'ज्ञात्वादेवंसर्वपाशापहानिः' इतिश्रुतेः । नत्वहंकारस्यप्रधानेप्रलयात्कृतकृत्यत्वं निमित्तमप्रयोजकमितितत्सूत्रकृतैवादृष्टस्याऽप्रयोजकत्वाभिधानात् । तस्मात्सत्वमपिप्रविलापनीयं नचगुणात्मकस्यतस्यनिर्गुणतामवस्युक्तदोषापातादतोरज्जुरगादिवद्बाधएवास्यप्रलयः । तदिदमुक्तंमनोगुणान्हित्वानिर्गुणंप्रतिपद्यते गुणानुपादायेत्यर्थः । हित्वेतिदधातेरूपंनतुजहातेः नहिकारणंमुक्त्वाकार्यस्यान्यप्राप्तिःसंभवतितस्मान्नमनोलयाधिष्ठानेब्रह्मणिमानसदोषप्रसक्तिरितिदिक् १७ अहंकाराद्युपादानंयदव्यक्ता

यदामनसिसाबुद्धिर्वर्ततेंऽतरचारिणी ॥ व्यवसायगुणोपेतातदासंपद्यतेमनः १६ गुणवद्भिर्गुणोपेतंयदाध्यानगुणंमनः ॥ तदासर्वान्गुणान्हित्वानिर्गुणंप्रतिपद्यते १७ अव्यक्तस्येहविज्ञानेनास्तितुल्यंनिदर्शनम् ॥ यत्रनास्तिपदन्यासःकस्तंविषयमाप्नुयात् १८ तपसाचानुमानेनगुणैर्जात्याश्रुतेनच ॥ निनीषेत्परंब्रह्मविशुद्धेनांतरात्मना १९ गुणहीनोहितंमार्गंबहिःसमनुवर्तते ॥ गुणाभावात्प्रकृत्यावानिस्तर्क्यंज्ञेयसंमितम् २०

ख्यंगुणत्रयंतस्यस्वरूपंदुर्वचमित्याह अव्यक्तस्येति निदर्शनंदृष्टांतः अव्यक्तंनसत् नेहनानाऽस्तिकिंचनेतिश्रुत्याबाधात् । नापिनरशृंगवदसत् तत्कार्यस्योपलंभात् नापिसदसद्विरोधात् । तस्मादनिर्वचनीयमित्याह पदन्यासोवाग्व्यापारोयत्रनास्त्यतस्तत्रनिदर्शनमपिनास्तीत्यर्थः अतएवतदवाप्तिरपिनसंभवतीत्याह कइति १८ अतःश्रवणादिजन्येनसाक्षात्कारेणवास्मतत्त्वंनिश्चिनुयादित्याह तपसेति तपसाआलोचनेनध्यानजेनसाक्षात्कारेण । अनुमानेनमननाख्ययुक्त्यनुसंधानेन । गुणैःशमदमादिभिः । जात्याजात्युचितस्वधर्मेण । श्रुतेनवेदांतश्रवणेन । विशुद्धेनांतरात्मनामनसापरंब्रह्मनिनीषेत्ज्ञातुमिच्छेत् । परमंशोधितपदार्थंतत्पदार्थंप्रतिप्रापयितुमिच्छेदितिवा णयतेर्द्विकर्मत्वात् १९ उक्तविधयातत्त्वदर्शिनोऽन्तर्बहिश्चतुल्यवद्भेदभानंनास्तीत्याह गुणहीनइति तंनिष्प्रपंचंमार्गंबहिरन्वयेनाविसम्यगनुवर्ततेअनुसरति द्वैतंपश्यन्नपिनपश्यतीत्यर्थः । ननुबहिःकार्यात्मनामेदोंऽतःकारणात्मनाऽभेदः । यथासुवर्णस्वरूपेणकुंडलादिरूपेणचाभिन्नंभिन्नंचेतिव्यपदेष्टुंशक्यंतद्वदिदमपिस्यात्किमितिबहिरपिभेदाभासःप्रत्यक्षादिप्रमाणसिद्धोऽपलप्यतइतिचेन्न । 'सयथासैंधवघनोऽनंतरोऽबाह्यःकृत्स्नोरसघनएवंवाअरेऽयमात्मानंतरोबाह्यःकृत्स्नःप्रज्ञानघनएव'इत्यात्मनएकरसत्वश्रुतेः । अंतरंकारणंबाह्यंकार्यंतयोरभावादयंकृत्स्नःप्रज्ञानमात्रइतिश्रुत्यर्थः । बहिरपिज्ञेयेनशुद्धेनचिदात्मनासंमितं तत्रहेतुः गुणाभावात्मूलप्रकृतेस्तुच्छत्वात् प्रकृत्यावाचित्स्वभाव्याद्वा तर्कैकगम्याःप्रधानपरमाणुस्वभावशून्यवादास्तर्कास्तद्रहितंनिस्तर्क्यंतस्मादंतर्बहिरेकरूपंब्रह्म । एकस्मिन्वस्तुनिपरस्परविरुद्धयोर्भेदाभेदयोःसमानसत्ताकत्वंकुमयुक्तमित्यवश्यहेयेऽन्यतरस्मिन्व्यभिचारित्वाद्भेदएवहेयइतिनिर्विवादमैकात्म्यमित्याकरेविस्तरः २० ॥७४॥

बुद्धिर्नैर्गुण्यान्निर्विषयत्वाद्ब्रह्मप्राप्नोतिसगुणत्वात्सविषयत्वान्निवर्तते । ब्रह्मणःसकाशादितिशेषः गुणेषुप्रचारिणी २१ यथेति सुषुप्तौयथाकार्यत्यागेनकारणात्मनाऽवस्थानमेवंतुरीयेकारणत्यागेनचिन्मात्राऽऽत्मनाऽवस्थानमपिसंभवतीतिभावः २२ एवमितिलौकिकदृष्टांतामिनयः प्रकृतितोऽज्ञानात् । शरीरिणश्चिदाभासाजीवाख्याः । निवृत्तावज्ञानस्य । यथाऽज्ञानाच्छुक्तिरजतादाविवप्रवर्ततेकर्मसुतन्निवृत्तौनिवर्तते । अनिवृत्तावुस्वर्गंप्रवृत्तिफलम् २३ पुरुषोजीवः अभिमानइदमित्यमेवेतिपीविपर्ययोवा भूतसंज्ञाफलंविनाशित्वनिश्चयः २४ ननुप्रवाहनित्यस्यवियदादेःकुतोविनाशइत्याशंक्याह एतस्येति एतस्यभूतसंघस्यआद्याप्रवृत्तिःप्रथमसर्गःप्रधानान्मायाशबलाद्व्याकृतादेव । तदनंतरंमिथुनाद्बीजांकुरन्यायेनव्यक्तिमभिव्यक्तिं अविशेषात्विशेषाःपंचमहाभूतानितदन्येअविशेषाःपंचतन्मात्राणिएकादशेंद्रियाणिअहंकारश्च जात्यभिप्रायमेकवचनं द्वितीयाप्रवृत्तिस्तुमिथुनादभिव्यक्तिंनियच्छतिनियमयतिनपुनर्यादृच्छिकीसृष्टिरित्यर्थः । एवंचयथावदशरावोदंचनादीनांविशेषाणामविशेषोमृन्मात्रमेवंवियदादिविशेषाणामप्यस्त्यविशेषःप्रधानमितिनप्रवाहनित्यत्वंसृष्टेरितिभावः २५ प्रकृतिंप्रलयकालेऽभ्येति विरक्तस्तुज्ञानवान्प्रकृ

नैर्गुण्याद्ब्रह्मचाप्नोतिसगुणत्वान्निवर्तते ॥ गुणप्रचारिणीबुद्धिर्हुताशनइवेंधने २१ यथापंचविमुक्तानिइंद्रियाणिस्वकर्मभिः ॥ तथाहिपरमंब्रह्मविमुक्तंप्रकृतेःपरम् २२ एवंप्रकृतितःसर्वेप्रवर्ततेशरीरिणः ॥ निवर्ततेनिवृत्तौचस्वर्गंचैवोपयांतिच २३ पुरुषःप्रकृतिर्बुद्धिर्विषयाश्चेंद्रियाणिच ॥ अहंकारोऽभिमानश्चसमूहोभूतसंज्ञकः २४ एतस्याद्याप्रवृत्तिस्तुप्रधानात्संप्रवर्तते ॥ द्वितीयामिथुनव्यक्तिमविशेषान्नियच्छति २५ धर्मादुत्कृष्यतेश्रेयस्तथाऽश्रेयोऽप्यधर्मतः ॥ रागवान्प्रकृतिंह्येतिविरक्तोज्ञानवान्भवेत् २६ ॥ इ०शां०मो० मनुबृहस्पति० पंचाधिकद्विशततमोऽध्यायः॥२०५॥ मनुरुवाच ॥ यदातैःपंचभिःपंचयुक्तानिमनसासह ॥ अथतद्रक्ष्यतेब्रह्ममणौसूत्रमिवार्पितम् १ तदेवचयथासूत्रंसुवर्णेवर्ततेपुनः ॥ मुक्तास्वथप्रवालेषुमृन्मयेराजतेतथा २ तद्वद्गोऽश्वमनुष्येषुतद्वद्धस्तिमृगादिषु ॥ तद्वत्कीटपतंगेषुप्रसक्तात्मास्वकर्मभिः ३ येनयेनशरीरेणयद्यत्कर्मकरोत्ययम् ॥ तेनतेनशरीरेणतत्तत्फलमुपाश्नुते ४ यथाह्येकरसाभूमिरोषध्यर्थानुसारिणी ॥ तथाकर्मानुगाबुद्धिरंतरात्मानुदर्शिनी ५ ज्ञानपूर्वाभवेल्लिप्सालिप्सापूर्वाऽभिसंधिता ॥ अभिसंधिपूर्वकंकर्मकर्ममूलंततःफलम् ६ फलंकर्मात्मकंविद्यात्कर्मज्ञेयात्मकंतथा ॥ ज्ञेयंज्ञानात्मकंविद्याज्ज्ञानंसदसदात्मकम् ७

तिबाधेनात्मज्ञानवान्भवति मुच्यतइत्यर्थः २६ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचाधिकद्विशततमोऽध्यायः ॥ २०५ ॥ धर्मादुत्कृष्यतेश्रेयइत्युक्तंव्याकुर्वंस्तुकमर्थमुपसंहरति यदातैःपंचभिःपंचेत्यादिनाऽध्यायेन पंचभिःशब्दादिभिःस्वविषयैःसहपंचेंद्रियाणिमनसाकारणेनाविसहयुक्तानिनिगृहीतानि मनसेत्सत्त्वैवबुद्धेरपिग्रहणं श्रुतिश्च । 'यदापंचावतिष्ठंतेज्ञानानिमनसासह ॥ बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिम्'इति । आत्मनात्मनोरस्वंतंविविक्तत्वंमणिसूत्रदृष्टांतेनोक्तं १ ऐकात्म्यसिद्ध्यर्थमनेनैवदृष्टांतेनसर्वत्रात्मव्याप्तिमाह तदेवेति २ प्रसक्तात्माआसक्तचित्तः आसंगहेतुमाह स्वकर्मभिरिति ३ येनयेनपिउरूपेणदेवेनगांधर्वेणप्राजापत्येनवाप्राप्येणहेतुभूतेनयस्ययस्यदेहस्यप्राप्त्यर्थमित्यर्थः यद्यत्कर्मयज्ञादिकं ४ कर्मभेदाद्देहविशेषयोगेदृष्टांतमाह यथेति अंतरात्माअनुदर्शीसाक्षीयस्याःसातथा साक्षिप्रकाश्याऽपिप्राक्कर्मानुसारिण्येवबुद्धिर्भवतीत्यर्थः ५ ज्ञानपूर्वाबुद्धिपूर्वालिप्सारागस्ततोऽभिसंधिताऽभिसंधिमत्त्वमभिसंधिरितियावत् सचेदंसाधयेयमितियत्नस्ततःकर्मस्पंदस्ततःफलावाप्तिः ६ फलमिति अनेनक्रमेणतत्तद्देहप्राप्त्यादिरूपंफलं कर्मात्मकंकर्मप्रभवं । कर्मतुज्ञेयात्मकमहमर्थोद्भवं । अहमर्थोऽपिज्ञानात्माजीवरूपःसोऽपिसदसदात्माऽचिज्जडरूपः ७

ज्ञानानांचिजडग्रंथीनां फलानांदेहानां ज्ञेयानांबुद्धीनां कर्मणांसंचितानांचक्षयातेयत्फलमिवफलंआत्मतत्त्वप्रकाशः । विद्याब्रह्माकारपरमांतःकरणवृत्त्याज्ञानंसाक्षात्कारीयस्यतद्विद्या ज्ञानं दिव्यंज्ञानमितिपाठेदिविहार्दाकाशाख्येकारणेब्रह्मणिभवंदिव्यंज्ञेयवस्तुनिप्रतिष्ठितंज्ञानम् ८ ज्ञेयस्वरूपमाह महद्भिरिति महत्त्रिविधपरिच्छेदशून्यमतएवपरमंमाबुद्धिःसापरादूरे भूतायस्मात्तत् भूतंनित्यसिद्धं आत्मस्थं बुद्धिस्थंगुणेषुविषयेषुबुद्धिर्येषाम् ९ महत्त्वंव्याचष्टे पृथिवीतित्रिभिः १० कालोऽव्यक्ताख्यंजगत्कारणम् ११ विष्णुःशुद्धंब्रह्म १० महत्त्व हेतुकंपरमत्वंव्याचष्टेऽनादित्वादितिद्वाभ्यां अव्ययोऽपक्षयशून्यः अंतवदज्ञातृज्ञेयविभागवत् । यत्राऽन्यत्पश्यत्यन्यच्छृणोतितदल्पं अथयदल्पंतन्मर्त्यंतद्दुःखमितितत्स्यदुःखत्वश्रुतेः १३ धामेवधामआश्रयःप्राप्यं गत्वाज्ञात्वा कालविषयात्अनित्याद्दुःखात्मकात् १४ गुणेष्विति एतेमुक्ताःशुद्धचिदात्मानोगुणेषुमानमेयव्यवहारेषुप्रकाशंतेज्ञानरूपेण । मेयेषुवासत्वेनघटः

ज्ञानानांचफलानांचज्ञेयानांकर्मणांतथा ॥ क्षयांतेयत्फलंविद्याज्ञानंज्ञेयप्रतिष्ठितम् ८ महद्भिःपरमंभूतंयत्प्रपश्यंतियोगिनः ॥ अबुधास्तंनपश्यंतिह्यात्मस्थंगुणबुद्धयः ९ पृथिवीरूपतोरूपमपामिहमहत्तरम् ॥ अद्भ्योमहत्तरंतेजस्तेजसःपवनोमहान् १० पवनाच्चमहद्व्योमतस्मात्परतरंमनः ॥ मनसोमहतीबुद्धिर्बुद्धेःकालोमहान्स्मृतः ११ कालात्सभगवान्विष्णुर्यस्यसर्वमिदंजगत् ॥ नादिर्नमध्यंनैवांतस्तस्यदेवस्यविद्यते १२ अनादित्वादमध्यत्वादनंतत्वाच्चसोऽव्ययः ॥ अत्येतिसर्वदुःखानिदुःखंह्यंतवदुच्यते १३ तद्ब्रह्मपरमंप्रोक्तंतद्धामपरमंपदम् ॥ तद्गत्वाकालविषयाद्विमुक्तामोक्षमाश्रिताः १४ गुणेष्वेतेप्रकाशंतेनिर्गुणत्वात्ततःपरम् ॥ निवृत्तिलक्षणोधर्मस्तथाऽऽनंत्यायकल्पते १५ ऋचोयजूंषिसामानिशरीराणिव्यपाश्रिताः ॥ जिह्वाग्रेषुप्रवर्ततेयत्नसाध्याऽविनाशिनः १६ नचैवमिष्यतेब्रह्मशरीराश्रयसंभवम् ॥ नयत्नसाध्यंतद्ब्रह्मनादिमध्यंनचांतवत् १७ ऋचामादिस्तथासाम्नांयजुषामादिरुच्यते ॥ अंतश्चादिमतांदृष्टोनत्वादिर्ब्रह्मणःस्मृतः १८ अनादित्वादनंतत्वात्तदनंतमथाव्ययम् ॥ अव्ययत्वाच्चनिर्दुःखंद्वंद्वाभावस्ततःपरम् १९ अदृष्टतोऽनुपायाच्चप्रतिसंधेश्चकर्मणः ॥ नतेनमर्त्याःपश्यंतियेनगच्छंतितत्पदम् २०

सत्पटःसन्नित्येवंरूपेणसुखात्मनावा । अतएवोक्तम् । 'अस्तिभातिप्रियंरूपंनामचेत्यंशपंचकम् । आद्यंत्रयंब्रह्मरूपंजगद्रूपंततोद्वयम्'इति ततोगुणेभ्यःपरमुत्कृष्टंब्रह्मनिर्गुणत्वादेव निवृत्तिलक्षणःशमदमोपरमादिरूपोधर्मोनिर्विकल्पकः सचज्ञानःसन्नानंत्यायमोक्षाय १५ ऋचइत्यध्ययनादिधर्माकथ्यंते शरीराणिलिंगशरीराणिव्यपाश्रितास्तत्संस्कारकत्वेनतद्वानुभवाधेयातिशयेचिदात्मनिगताः अतएवयत्नसाध्याविनाशिनश्च १६ ब्रह्मणितद्विपर्ययमाह नचेति शरीरमाश्रित्यसंभवआविर्भावोयस्यतत्ताहशमपियत्नसाध्यंनभवतिधर्मवद्यतोऽनादिमध्यम् नैकधेतिवत्समासः ब्रह्मभावस्यसाध्यत्वेनिश्चितमनित्यत्वंस्यादित्यर्थः । ब्रह्माशरीरंलिंगमाश्रयतेपुण्यापुण्यरूपेणेतिशरीराश्रयंशरीरात्संभवतिताहशंचधर्मस्वरूपं ब्रह्मत्वकारीरंउदासीनंचेत्यर्थः १७ ऋचामिति ब्रह्ममात्रस्यादिमत्वेधुवंविनाशइतिभावः १८ अनादित्वादजन्यत्वादनंतत्वाद्ध्वंसशून्यत्वादतएवअनंतंव्यापकमव्ययंचव्योमवत् द्वंद्वाभिमानापमानादीनि १९ नन्वयत्नसाध्यंनित्यंचात्मसुखंचेत्किमितितत्रसर्वेनरज्यंतइत्याशंक्याह अदृष्टतइति अदृष्टंभाग्यंतद्राहित्यात्अनुपायादुपायाभावात् । अत्राष्टतइतिचतुर्विधाध्यात्मिकतुष्टयुपलक्षणं ।



तथाकर्मणोविषयभोगाख्यस्यप्रतिसंधिःप्रतीपःसंधिर्वियोगोविषयेभ्यउपरमइतियावत्तेनपंचविधाबाह्यातुष्टिरुक्ता । तेनतुष्टिद्वयेनहेतुनोपायेष्वप्रवर्तमानाःपुरुषायेनोपायेनतत्पदंगच्छंति तन्नपश्यंति ! तुष्टयस्तूक्ताःसांख्यप्रवचनेआध्यात्मिकाश्चतस्रःप्रकृत्युपादानकालभाग्याख्याःबाह्याविषयोपरमात्पंचचतुष्टयोऽभिहिताइति । अस्यार्थः शास्त्रात्प्रकृतिपुरुषयोर्विवेकोज्ञातस्तत्साक्षात्कारस्तुवृत्तिरूपःप्रकृतेःपरिणामःसचस्वयमेवपरिणामक्रमेणभविष्यतिकिंध्यानायासेनेतिप्रकृत्याख्यातुष्टिरंभइत्युच्यते । एतावताऽपिनकृतकृत्यतासर्वस्याप्यनायासेनविवेकख्यात्यापत्तेरनर्थकःप्रव्रज्याविधिःस्यादतस्तन्मात्रेणकृतकृत्यताकिंध्यानेनेत्युपादानाख्यातुष्टिःसलिलमित्युच्यते । प्रव्रज्यापिकालविशेषापेक्षैवकैवल्यहेतुरित्यलमुत्तप्ततयेतितूष्णीमवस्थानंकालाख्यतुष्टिरोघइत्युच्यते । कालोऽपिपूर्वपुण्यवशादेवविवेकसाक्षात्कारंमदालसापत्यानांबालानामिवजनयिष्यतीतिकिंध्यानायासेनेतितुष्टिर्भाग्याख्यावृष्टिशब्देनोच्यते । सैवेहमुख्यत्वाददृष्टतइत्यनेनगृहीताऽन्यैवतत्पूर्वासांतुष्टीनामाक्षेपतोलाभादिति । विषयाःपंच तेषुवैराग्याण्यतिपंच तत्रधनार्जनेदुःखंदृष्ट्वायाउपरतिःसापारं । राजचोरादिनाधननाशेदुःखंदृष्ट्वायामातुपारं । भोगेनापिधननाशंदृष्ट्वायद्दुःखंतज्जायाउपरतिःसापारापारं । भोगेऽपिक्षयित्वादिदोषदर्शनाद्याउपरतिःसाऽनुत्तमांभः भानुरहत्यभूतानिभोगःसंभवतीतिभ्यायेनभोगेहिंसादोषदर्शनाद्याउपरतिःसाउत्तमांभः । एवंविषयोपरमात्पंचतुष्टयोऽत्रकर्मप्रतिसंधिशब्देनोच्यंते । एवंनवतुष्टयःतन्मात्रेणकृतकृत्यतांमन्वानस्योपायेष्वप्रवृत्तेरात्मदर्शनंनभवतीत्यर्थः २० कदाचित्तुष्टिनवकंजित्वाध्यानेनप्रवृत्तोऽपिध्यानजसिद्धिविपर्ययाद्प्यात्मतत्त्वंनपश्यतीत्याह विषयेषुचेति तत्रप्राणिनांस्वाभाविकोविषयेषुसंगःविद्याश्चहार्दाकाशाख्यब्रह्मलोकगताःशाश्वताः

विषयेषुचसंसर्गाच्छाश्वतस्यचदर्शनात् ॥ मनसाचान्यदाकांक्षन्परंनप्रतिपद्यते २१ गुणान्यदिहपश्यंतितदिच्छंत्यपरेजनाः ॥ परंनैवाभिकांक्षंतिनिर्गुणत्वाद्गुणार्थिनः २२ गुणैर्यस्त्ववरैर्युक्तःकथंविद्यात्परान्गुणान् ॥ अनुमानाद्धिगंतव्यंगुणैरवयवैःपरम् २३

मधुमत्यांयोगभूमौस्थितस्ययोगिनःसंकल्पमात्रोपनताः । तइमेसरथाःकामाअनृतापिधानादेहेनोपाधिनाऽऽच्छादिताः संकल्पादेवास्यपितरःसमुत्तिष्ठंतीत्यादिश्रुतिभ्यः अतोहेतोरविरक्तोयोगीमनसाऽन्यद्योगैश्वर्यसुखमिच्छन्सकलकामनिर्धूननप्राप्यंपरंब्रह्मनप्रतिपद्यतेनसाक्षात्करोति । अत्राऽन्यदित्यनेनसिद्धिविपर्ययोदर्शितः । तत्रसिद्धयःसांख्यप्रवचनेउक्ताः । 'ऊहःशब्दोऽध्ययनंदुःखविघातास्त्रयःसुहृत्प्राप्तिः । दानंचसिद्धयोऽष्टौसिद्धेःपूर्वोंकुशस्त्रिविधः'इति । अस्यार्थः ऊहोवितर्कःश्रुतस्यार्थस्ययुक्त्याचिंतनंमननमित्यर्थः शब्दःशब्दजज्ञानंमोक्षशास्त्रस्योपक्रमोपसंहारपर्यालोचनयातात्पर्यज्ञानं । अध्ययनमुपनिषद्ग्रंथस्यावाप्तिः । आध्यात्मिकाधिभौतिकाधिदैविकभेदेनत्रिविधंदुःखमतस्तद्विघातास्त्रयः । ताश्चमुख्याःसिद्धयः । तथासुहृत्प्राप्तिःपरविद्याप्रदसदाचार्यलाभः । दानंचित्तशुद्धिजन्याविवेकप्राप्तिः दैपशोधनेइत्यस्यरूपं एताअष्टौसिद्धयः तत्रऊहशब्दाध्ययनसुहृत्प्राप्तयस्तारंसुतारंतारातारंरम्यकंचेतिक्रमेणमीयंते । दानाख्याश्चतस्रस्तुसदामुदितंप्रमोदोमुदितंमोदमानाइतिचगीयंते । एतास्तुप्रज्ञाप्रासादसोपानभूताअपिकुयोगिनेप्राप्यविपर्यस्तफलाःस्युस्तदिदमुक्तं सिद्धेःपूर्वोंकुशस्त्रिविधः सिद्धेर्मोक्षकरिण्याअंकुशइवनिवारकस्त्रिविधःकोविद्यादिःपंचविधोविपर्ययः । द्वितीयोऽशक्तिःसाचएकादशेंद्रियवधाःसहबुद्धिवधैरशक्तिरुद्दिष्टेत्युक्ताबधिरत्वादयएकादशेंद्रियवधाः ।
२६ तुष्टीनांपूर्वोक्तानांसिद्धीनांचानुपदोक्तानांविपर्ययात्सप्तदशबुद्धिवधाः । तत्रगोबलीवर्दन्यायेनतुष्टीःपृथक्कृत्यविपर्ययाशक्तितुष्टयस्त्रिविधोंऽकुशोमनसाचान्यदाकांक्षन्नित्यनेनसूचितः २१ अत्राप्यन्यकांक्षायांहेतुमाह गुणानिति गुणान्विषयान् यद्यस्मात्तस्मात् परंनिर्विषयं गुणार्थिनःपुरुषाः २२ अतिमौढ्याद्ब्रह्मगुणासक्तास्तुपरान्योगिगम्यान्विषयान्नाद्रियंतीत्याह गुणैरिति उभयेषांतुल्यत्वेऽप्यावरैर्गुणैर्ब्रह्मणःस्वरूपभूतैःसत्यकामत्वादिभिःपरमुपलक्ष्यतेधूमेनेवाग्निःशाखाग्रेणेवचांद्रकलामित्याह अनुमानादिति २३

अत्रस्वानुभवंप्रमाणयति सूक्ष्मेणेति सूक्ष्मेणध्याननिशितेन । 'दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः'इतिश्रुतेः । शब्दश्रोत्रगंधघ्राणादिवुप्रकाश्यप्रकाशकयोराकाशभूम्यादिरूपैकोपादानकत्वनियमाद्युपादानोपादेययोश्चाभेदाद्घटादिरूपंमनएवचक्षुरादिरूपेणमनसायथासूक्ष्मतेवंद्रष्टृदृश्यद्वयेअपिदर्शनमात्रोपादानेदर्शनादभिन्नेइत्यर्थः २४ ईदृगमेवग्रहेहेतुमनुभवमेवाह ज्ञानेनेति ज्ञानंब्रह्मात्माकाराधीवृत्तिस्तयाबुद्धिंदेहाद्यात्मभ्रमकलुषितांनिर्मलीकृत्यसर्वसंशयहीनांकृत्वा तथाचश्रुतिः । 'भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः । क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे'इति तथाबुद्ध्यामनोऽपिसंकल्पात्मकंसंकल्पकरूपेणस्वप्रादौस्थितमितिनिश्चित्यतथाजाग्रत्कालेऽपिमनसेंद्रियग्रामंशब्दादिसहितंमनोमात्रमितिनिश्चित्यविलोमक्रमेणाक्षरंसरतीतिव्युत्पत्त्याद्रष्टृदृश्यपरिणामितयाविकारोतद्भिन्नंचिन्मात्रंदर्शनंप्रतिपद्यते २५ बुद्ध्याचरमवृत्त्याध्यानपरिपाकोत्थयाप्रहीणोनिर्वृत्तिकोमनसाविचारात्मकेनसमृद्धःपूर्वमितिशेषः श्रवणमननवानित्यर्थः । निराशिषं आशीःप्रार्थनातद्रहितं स्वेनैवरूपेणपरमानंदत्वात् निर्गुणमात्मानमुपैतिप्राप्नोति । विलोड्यमानाआशीर्भिराकुलीक्रियमाणायथावायुःकाष्ठांतर्गतंवह्निंनोद्दीपयतिकिंतुत्यजत्येवमेते प्यंतस्यमात्मानंत्यजंतीत्यर्थः २६ उक्तमेवार्थंस्पष्टयति गुणेति विषयाणामादानेआभिमुख्येनखंडनेआत्मनिप्रविलापनेकृतेसतिमनोबुद्धिपरावबुद्ध्यपेक्षयापरंब्रह्मतस्मैतस्माप्तयेभवति । तेषां गुणानांविप्रयोगेपृथक्त्वेनग्रहणेसतिमनःसदासर्वस्मिन्नपिवुगेवुद्ध्यवरापबुद्ध्यपेक्षयापदवरंबुद्धिकल्पितंब्रह्मलोकांतमैश्वर्यमवीच्यंतमनैश्वर्यंचतस्याप्तयेभवति । अनेनप्रकारेणविधिनाबंधायविषया

सूक्ष्मेणमनसाविप्रोवाचावक्तुंनशक्नुमः ॥ मनोहिमनसाग्राह्यंदर्शनेनचदर्शनम् २४ ज्ञानेननिर्मलीकृत्यबुद्धिंबुद्ध्यामनस्तथा ॥ मनसाचेंद्रियग्राममक्षरं प्रतिपद्यते २५ बुद्धिप्रहीणोमनसासमृद्धोनिराशिषंनिर्गुणमभ्युपैति ॥ परंत्यजंतीहविलोड्यमानाहुताशनंवायुरिवेंधनस्थम् २६ गुणादानेविप्रयोगेचतेषां मनःसदाबुद्धिपरावराभ्याम् ॥ अनेनैवविधिनासंप्रवृत्तोगुणापायेब्रह्मशरीरमेति २७ अव्यक्तात्मापुरुषोऽव्यक्तकर्मासोऽव्यक्तत्वंगच्छतिह्यंतकाले ॥ तैरेवायंचेंद्रियैर्वर्धमानैर्ग्लायद्भिर्वावर्ततेऽकामरूपः २८

सक्तंमुक्तयैर्निर्विषयंमनइत्यादिवचनेनगुणापायेसंप्रवृत्तोब्रह्मशरीरंब्रह्मस्वरूपंप्राप्नोति । शारीरमितिपाठेशारीरोजीवस्तयोर्ब्रह्मशारीरयोरभेदेसामानाधिकरण्यं २७ ननुलोकेचतुर्धाभेदोदृश्यते । यथासुवर्णंकुंडलमितितयोरुपादानोपादेयभावेन । यथात्राशुक्लःपटइतितयोर्गुणगुणिभावेन । यथावाशुक्तीरजतमित्यधिष्ठानाध्यस्तभावेन । यथावाग्निर्दहेदितिदाहकाग्निइतितन्नत्वगुणयोगेन । नाद्यः ब्रह्मणोविकारित्वापत्त्याकूटस्थत्वनाशापत्तेः नद्वितीयः आश्रयनाशंविनागुणनाशासंभवान्मुक्तौजीवत्वनाशेब्रह्मणोऽपिनाशापत्तेः नतृतीयःमिथ्याभूतस्यजीवस्यमुक्त्यन्वयायोगात् । परिशेषादंत्यएवपक्षःशिष्यते । तत्रापियथानंतंवैमनोऽनंतावैविश्वेदेवाइतिवृत्त्यस्तान्यानमनसिविश्वेदेवसंपत्तिस्तथादेहादिबृंहकत्वयोगाज्जीवेऽपिब्रह्मशब्दः । यद्वा योषावावगौतमाग्निरित्यत्राग्नीरूपंप्रतीकमविद्यमानवत्कृत्वातत्राग्न्युपासनं । एवंजीवमविद्यमानवत्कृत्वातत्रब्रह्मोपास्यं । यद्वा । यथामनोब्रह्मेत्युपासीतेतिमनएवब्रह्मभावारोपेणोपास्यमेवंजीवेऽपिब्रह्मभावमारोप्यामृतत्वकामस्यात्मोपासनंविधीयतेआत्मेत्येवोपासीतेत्यादिश्रुतिष्विल्याशंक्याह अव्यक्तात्मेति अव्यक्तेतिवाङ्मनसागोचरस्वोक्त्यायमआदित्यप्रतीकत्वादिकंनिरस्यते । आत्मेतिव्यापकप्रत्यक्तैतन्यरूपत्वोक्त्याकीटभृंगवद्यत्नांतरस्यालभ्यत्वमुच्यते । पुरुषइतिपुरिशेतेइतिव्युत्पत्त्यागौणात्मत्वंनिरस्यते । व्यक्तकर्मेतिदेहाद्युपाधियोगात्कर्मसमवायीवदृश्यते अतएवश्रूयते । 'आराममस्य पश्यंतिनतंपश्यतिकश्चन'इति । अंतकालेऽपिप्रलयमोक्षणायान्यत्रमकालेवाऽव्यक्तएवासौऽव्यक्तत्वंतदाऽव्यमतंगृपैव । तत्रश्चाव्यक्तस्यात्मनोऽव्यक्तेनब्रह्मणाबहुलक्षणभेदाभावाद्वेदोन-



घःतइतिबिंबप्रतिबिंबन्यायेनोपाधिकत्वतयोर्भेदःसचोपाधिभूताया अविद्यायामिवृत्तौनिरवशेषेणलीयतइतिमुक्तमुक्तब्रह्मशारीरमेतीति । नन्वेवंविदेआत्मनिकुतोदुःखित्वप्रतीतिरित्याशंक्याह तैरेवेति तैःप्रसिद्धैः अकामरूपइतिच्छेदः । जलसूर्यन्यायेनसूर्येवात्मनिदुःखित्वादिभ्रमइत्याह ग्लायद्भिर्वा वाशब्दउपमार्थे ग्लायद्भिवाऽवर्ततेलोकइवेसंचरति घटाकाशवत् आपोविभक्तिव्यत्ययः तथाचसूत्रं । अतएवचोपमासूर्यप्रतिकादिवदिति सूर्यप्रतिकृतिःप्रतिबिंबसूर्यः आदिपदाद्घटाकाशः तथाचात्मनिमिर्दंयतिचवारयंतिश्रुतयः 'यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन् ॥ उपाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवमजोऽयमात्मा ॥ घटसंवृतमाकाशंनीयमानेयथाघटे ॥ घटोनीयेतनाकाशंतद्वज्जीवोनभोपमः'इत्यादयः २८ सर्वैरिति अयंचिदाभासोदेहं लिंगशरीरंप्राप्तःपंचभूतानिस्थूलदेहाकारेणपरिणतानि तदाऽऽश्रयश्चस्यात्अस्ति परमेणविभुतेनांऽतर्यामिणाहीनःसन्नगच्छति गतिरुपलक्षणंकिमपिकर्तुंनशक्नोतीत्यर्थः । कुतः असामर्थ्यात् कुत्रकर्मणेकर्मकर्तुमित्यर्थः । इइतिश्रौतीप्रसिद्धिंएषह्येवसाधुकर्मकारयतीत्यादिकांद्योतयति अयंभावः । जलसूर्यघटाकाशयोश्चाचल्यगमनेइवात्मनिदुःखित्वादिकंभासमानमपिपरमार्थतोनास्तिनाप्यस्यतत्परिहारेसामर्थ्यमस्तिउपाधिपक्षपातित्वात् उपाधेश्चप्राक्कर्मानुरोधीश्वरेच्छयाचेष्टाश्रयत्वात् अतोतयोर्मिथ्येश्वरस्ययुक्तमिति २९ ननूपाध्यंतर्यामिणोरनादित्वान्नित्ययोःप्रवर्त्यप्रवर्तकयोःसतोःकथंचिदाभासस्यदुःखान्मुक्तिःस्यादित्याशंक्याह पृथ्व्येति यथाऽन्यैरदृष्टोऽपिपृथिव्याअंतोऽस्ति अविमुक्तत्वात् एवंदुःखसंततेरप्यंतोऽस्तिजन्यत्वात् । यथावावा

सर्वैरयंचेंद्रियैःसंप्रयुक्तोदेहंप्राप्तःपंचभूताश्रयःस्यात् ॥ नासामर्थ्याद्गच्छतिकर्मणेहहीनस्तेनपरमेणाव्ययेन २९ पृथ्व्यानरःपश्यतिनांतमस्याह्यंतश्चास्याभवितानचेतिविद्धि ॥ परंनयंतीहविलोड्यमानंयथाप्लवंवायुरिवार्णवस्थम् ३० दिवाकरोगुणमुपलभ्यनिर्गुणोयथाभवेदपगतरश्मिमंडलः ॥ तथाह्यसौमुनिरिहनिर्विशेषवान्सनिर्गुणंप्रविशतिब्रह्मचाव्ययम् ३१ अनागतंसुकृतवतांपरांगतिंस्वयंभुवंप्रभवनिधानमव्ययम् ॥ सनातनंयदमृतमव्ययंध्रुवंनिचाय्यतत्परममृतत्वमश्नुते ३२ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि मनुबृहस्पतिसंवादे षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥ ॥ ५ ॥ ॥ ६ ॥

पुरर्णवस्थंतृणादिकं यथाप्लवंयथापत्राहंवायुनेवलोड्यमानमिवतस्ततश्चाल्यमानंवायुरेवपरंपारंनयति । एवंकर्मवायुभिरुह्यमानंसंसारसमुद्रस्थंजीवपोतंकर्माण्येवचित्तशुद्ध्याविजननद्वारापरंपारं नयंतीत्यर्थः यथोक्तं । 'कर्मणैवहिसंसिद्धिमास्थिताजनकादयः'इति संसिद्धिंज्ञानयोग्यताम् ३० यथासूर्यरश्मीनामुदयास्तमयावेवंचैतन्यमासामपिस्तइत्याह दिवाकरइति गुणंरश्मिमंडलेनजगद्व्यापित्वंएवंजीवःसत्त्वांचित्तशुद्धोज्ञानोदयेसतिरात्रिंदिववत्संसारलयोदयौपश्यतीत्यर्थः । निर्गतोविशेषवान्सुखित्वादिधर्मवानहंकारोयस्मात्सनिर्विशेषवान् ३१ प्रकरणार्थमुपसंहरति अनागतमिति अनादौसंसारे सर्वमपिसुलभंपुरुषस्यब्रह्मविज्ञानमनिप्राप्तमेवास्ति । इदंत्वमृतत्वमनागतं आगतस्यनिवृत्त्ययोगात् । स्वयंभुवमजन्यं जन्यस्यावश्यंविनाशित्वात् । प्रभवत्यस्मान्निधीयतेलीयतेऽस्मिन्कार्यजातमितिप्रभवनिधानं । एवमप्यव्ययंप्रधानवन्नपरिणामिनित्यं परिणामिनोनाशावश्यंभावेननित्यत्वायोगात् । सनातनंयदमृतं । आदिमध्यांतशून्यंमोक्षस्वरूपं । अनादिमध्यामृतमित्यपिपाठः । अव्ययंनाशहीनंयतोध्रुवमविचाल्यंइदंत्वंप्रत्यगभिन्नंवस्तुनिचाय्यज्ञात्वातद्वेदप्रसिद्धंपरमगौणममृतत्वंमोक्षमश्नुतेप्राप्नोति । अपामसोमममृताअभूमेतिकर्मप्राप्यमप्यमृतत्वंश्रूयते तद्गौणं कर्मजस्यनित्यत्वायोगात् । 'तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयते'इतिश्रुतेश्च यथाहुः 'आभूतसंप्लवंस्थानममृतत्वंहिभाष्यते' इति । मुख्यममृतत्वंप्राप्तस्तुनपुनरावर्ततेसंसारमंडले । तस्मात्सनातनादिविशेषणविशिष्टंनित्यंसुखंमोक्षाख्यंस्वतःसिद्धमप्यज्ञानादप्राप्तमिवकंठगतविस्मृतचामीकरवत्प्राप्तव्यमज्ञानापगममात्रेणेतिसिद्धम् ३२ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षपर्वणि नीलकंठीये भारतभावदीपे षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

पूर्वाध्यायांतेनिचाय्यतत्परममृतत्वमश्नुतेइतिब्रह्मसाक्षात्कारस्यमोक्षहेतुत्वमुक्तं तत्रनिर्गुणदर्शनंसगुणज्ञानपूर्वकमितिमत्वासन्निहितंश्रीकृष्णंप्रागेवमहर्षीणांमुखात्परमात्माऽयमितिजानन्राजा
मतिसंवादायकृष्णतत्वंपृच्छति पितामहेत्यादिना । नन्विहपुंडरीकाक्षपदेनविग्रहमुपलक्ष्यतत्राच्युतत्वादिविशेषणमसंगतम् । नहिकृष्णशरीरंपराद्दृष्टेरेवोत्पन्नमितिपक्षेऽपिपराद्दृष्टानांज
न्मविनाशवत्वात्तत्कृतविग्रहस्यापितद्वत्वंप्रत्याख्यातुंशक्यं विग्रहाविवक्षायांत्वस्माकमप्यच्युतत्वादिकंसमानमितिकिंपुंडरीकाक्षेतिविशेषणेनेतिचेत् अत्रब्रूमः मूबीजांकुरतरुफलोपमानिपंच
परमेश्वररूपाणिशुद्धशबलसूत्रविराड्विष्णुसंज्ञानियथापृथिव्यामोषधयःसंभवंतीतिश्रौतदृष्टांतानुगुण्येनभूतुल्यायांचितिसदनतिरिक्ताबीजादितुल्यामायाशबलादयःसंति तत्रब्रह्माकूडवपिफलम
नेकबीजगर्भत्वाद्बीजांकुरतरुभ्योमहत्तरं । एवंविश्वाख्यविग्रहवद्ब्रह्माप्यनेकशबलादिगर्भत्वादीशसूत्रविराड्भ्योमहत्तरं अतएवच्छांदोग्ये । 'आदित्यरूपंपुरुषंहिरण्यश्मश्रुर्हिरण्यकेशः'इति
विग्रहधर्मैर्विशेषितत्वात्तस्यर्क्सामचगेष्णाविततंगुलिपर्वस्वेनऋक्सामशब्दाभिहितःक्षरप्रपंचोनिरूपितः । नचतस्यामूर्तेरनित्यत्वंशक्यं 'देवानांकार्यसिद्ध्यर्थमाविर्भवतिसायदा ॥ उत्प
न्नेतितदालोकेसानित्याऽप्यभिधीयते'इतिजीवाद्दृष्टानुरोधेननित्यायाअपितस्याआविर्भावतिरोभावावेवोत्पत्तिलयशब्देनव्यवह्रियेतेइत्येतस्यार्थस्यप्रतिपादकेनागमेनविरोधात् अत्रयद्वक्तव्यंत

युधिष्ठिरउवाच ॥ पितामहमहाप्राज्ञपुंडरीकाक्षमच्युतम् ॥ कर्तारमकृतंविष्णुंभूतानांप्रभवाप्ययम् १ नारायणंहृषीकेशंगोविंदमपराजितम् ॥ तत्त्वेनभरतश्रेष्ठश्रो
तुमिच्छामिकेशवम् २ ॥भीष्मउवाच॥ श्रुतोऽयमर्थोरामस्यजामदग्न्यस्यजल्पतः ॥ नारदस्यचदेवर्षेःकृष्णद्वैपायनस्यच ३ असितोदेवलस्तातवाल्मीकिश्चमहा
तपाः ॥ मार्कंडेयश्चगोविंदेकथयंत्यद्भुतंमहत् ४ केशवोभरतश्रेष्ठभगवानीश्वरःप्रभुः ॥ पुरुषःसर्वमित्येवश्रूयतेबहुधाविभुः ५ किंतुयानिविदुर्लोकेब्राह्मणाःशार्ङ्गधन्व
नि ॥ महात्मनिमहाबाहोशृणुतानियुधिष्ठिर ६ यानिचाहुर्मनुष्येंद्रयेपुराणविदोजनाः ॥ कर्माणितानिवक्ष्यामिगोविंदकीर्तयिष्यामितान्यहम् ७ महाभूतानिभूतात्मामहा
त्मापुरुषोत्तमः ॥ वायुर्ज्योतिस्तथाचापःखंचगांचान्वकल्पयत् ८ सदृष्ट्वापृथिवींचैवसर्वभूतेश्वरःप्रभुः ॥ अप्स्वेवभवनंचक्रेमहात्मापुरुषोत्तमः ९ सर्वतेजोमय
स्तस्मिन्शयानःपुरुषोत्तमः ॥ सोऽग्रजंसर्वभूतानांसंकर्षणमकल्पयत् १० आश्रयंसर्वभूतानांमनसेतीहशुश्रुम ॥ सधारयतिभूतानिउभेभूतभविष्यती ११

त्प्रागेवोक्तं तस्मात्पुंडरीकाक्षेऽप्यच्युतत्वादिकंविशेषणंयुज्यतएव । तत्राच्युतंक्षयहीनं कर्तारमर्थात्कार्यमात्रस्य अकृतमुत्पत्तिहीनं । विष्णुंव्यापकं बीजफलन्यायेनकारणस्याधिकारण
त्वात् । अतएवभूतानांवियदादीनांप्रभवाप्ययंयोनिम् १ अपराजितंदेहादिधर्मैर्जरादिभिरितिशेषः २ जल्पतःजल्पाद्वचनात् ३ महत्माहात्म्यम् ४ भगवान् 'ऐश्वर्यस्यसमग्रस्यज्ञानस्य
यशसःश्रियः ॥ वैराग्यस्यचधर्मस्यषण्णांभगइतींगना'इत्युक्तरूपषड्गुणवान् । ईश्वरोंऽतर्यामी प्रभुःराजवद्बहिःस्थित्वानियंता । विभुर्व्यापकः ५ किंत्विति यानिकर्माणीत्युत्तरेणसंबंधः अनंतम
पिहरेर्माहात्म्यंलेशतोवक्ष्येइतिभावः ६ । ७ भूतात्मेत्यादिनाक्रमेणपदत्रयोक्तानांजीवेशशुद्धानांत्र्यात्विमहाभूतकल्पकत्वंसामानाधिकरण्यादभेदश्चोक्तः ८ तत्रतत्सृष्ट्वातदेवानुप्राविशदिति
श्रुत्वाभीक्ष्णादिप्रवेशांतामैशींसृष्टिमाह सइति चात्खादीन् आप्सु आपःपुरुषवचसइतिश्रुतेरब्बहुलेषुदेहेषु ९ जाग्रदादिविमोक्षांतांजैवींसृष्टिमाह सर्वेत्यादिना तेजोमयःवासनामयः जाग्रद्वा
सनामयेस्वप्नद्रष्टरितैजसपदप्रयोगात् तस्मिन्नम्मयेदेहे संकर्षणमहंकारं १० मनसासहाऽकल्पयदितिपूर्वेणसंबंधःसमनस्कोऽहंकारः सोऽहमित्यग्रेव्याहरत्ततोऽहंनामाभवदित्यहंकारसृष्टिमुक्ता
सोबिभेत्तस्मादेकाकीबिभेतिसहायमीक्षत इतिश्रुतेरेवमितिवदनुवादेनभयारत्याद्यनेकमनोधर्मस्यश्रवणात्सृष्टेस्तत्रविवक्षणात् 'सैषाब्रह्मणोऽतिसृष्टिर्यन्मर्त्यःसन्नमृतानसृजत' इतिश्रुतिसाम्यादपिजीवसृष्टिप्रकरणमिदमित्यवसीयते ११



नाभ्यांपद्ममिति स्वप्नवद्बहिरिवभासमानमभ्यंतरेवब्रह्मांडमस्तिमानसत्वात्तस्येतिदर्शितम् । नाभ्यामुपरितिष्ठति 'विश्वस्यायतनंमहत्'इतिश्रुतेः १२ पुष्करेनाभिकमले 'अथयदिदमस्मि
न्ब्रह्मपुरेदहरंपुंडरीकंवेश्म'इत्यादिश्रुतेरांतरमेवपुष्करमिहप्रतिपत्तव्यंनबाह्यं ब्रह्मपुरेब्रह्मोपलब्धिस्थानेशरीरे दहरंसूक्ष्मं ससमनस्कोऽहंकारःपुष्करेस्थित्वाब्रह्मासर्वभूतस्रष्टासमभवदितिसं
बंधः । हृदयपुंडरीकादौनिरुद्धंमनएवसर्वेश्वरइत्यसकृदावेदितम् १३ तस्मिन्निति एवंहृत्पुंडरीकेब्रह्मणआविर्भावेसति तमोगुणकार्यभूतोमधुर्नामलयापरनामायोगविघ्नदेनदिनलयाभ्या
सात्पूर्वजोऽनादिर्ब्रह्मग्रासायआविर्भवति १४ तमिति अपचितिमुन्नतिं पुरुषोत्तमश्चिदात्मा योगेऽवस्थितंलयंबोधेनैवशमयेदित्यर्थः । एतच्चविक्षेपादेरप्युपलक्षणं यदाहुःसंप्रदाय

ततस्तस्मिन्महाबाहोप्रादुर्भूतेमहात्मनि ॥ भास्करप्रतिमंदिव्यंनाभ्यांपद्ममजायत १२ सतत्रभगवान्देवःपुष्करेभ्राजयन्दिशः ॥ ब्रह्मासमभवत्तातसर्वभूत
पितामहः १३ तस्मिन्नपिमहाबाहोप्रादुर्भूतेमहात्मनि ॥ तमसापूर्वजोजज्ञेमधुर्नाममहासुरः १४ तमुग्रमुग्रकर्माणमुग्रंकर्मसमास्थितम् ॥ ब्रह्मणोऽपचितिं
कुर्वन्जघानपुरुषोत्तमः १५ तस्यतातवधात्सर्वेदेवदानवमानवाः ॥ मधुसूदनमित्याहुर्वृषभंसर्वसात्वताम् १६ ब्रह्माऽनुससृजेपुत्रान्मानसान्दक्षसप्तमान् ॥
मरीचिमत्र्यंगिरसंपुलस्त्यंपुलहंक्रतुम् १७ मरीचिःकश्यपंतातपुत्रमग्र्यजमग्रजः ॥ मानसंजनयामासतैजसंब्रह्मवित्तमम् १८ अंगुष्ठात्ससृजेब्रह्मामरीचेरपि
पूर्वजम् ॥ सोऽभवद्भरतश्रेष्ठदक्षोनामप्रजापतिः १९ तस्यपूर्वमजायंतदशतिस्रश्चभारत ॥ प्रजापतेर्दुहितरस्तासांज्येष्ठाभवद्दितिः २० सर्वधर्मविशेषज्ञः
पुण्यकीर्तिर्महायशाः ॥ मारीचःकश्यपस्तातसर्वासामभवत्पतिः २१ उत्पाद्यतुमहाभागस्तासामवरजादश ॥ ददौधर्मायधर्मज्ञोदक्षएवप्रजापतिः २२
धर्मस्यवसवःपुत्रारुद्राश्चामिततेजसः ॥ विश्वेदेवाश्चसाध्याश्चमरुत्वंतश्चभारत २३ अपराश्चयवीयस्यस्ताभ्योऽन्याःसप्तविंशतिः ॥ सोमस्तासांमहाभागः
सर्वासामभवत्पतिः २४ इतरास्तुव्यजायंतगंधर्वांस्तुरगान्द्विजान् ॥ गाश्चकिंपुरुषान्मत्स्यानुद्भिज्जांश्चवनस्पतीन् २५ आदित्यानदितिर्जज्ञेदेवश्रेष्ठान्महाब
लान् ॥ तेषांविष्णुर्वामनोभूद्गोविंदश्चाभवत्प्रभुः २६ तस्यविक्रमणाच्चापिदेवानांश्रीर्व्यवर्धत ॥ दानवाश्चपराभूतादैतेयीचासुरीप्रजा २७ विप्रचित्तिप्रधानां
श्चदानवानसृजद्दनुः ॥ दितिस्तुसर्वानसुरान्महासत्वानजीजनत् २८ अहोरात्रंचकालंचयथर्तुमधुसूदनः ॥ पूर्वाह्णंचापराह्णंचसर्वमेवानुकल्पयत् २९

विदः । 'लयेसंबोधयेच्चित्तंविक्षिप्तंशमयेत्पुनः'इत्यादि १५ तस्येत्यादिनाआंतरसृष्टिप्रपंचोयावदध्यायसमाप्ति सात्परमात्मातद्भक्तांसात्वतांयोगिनामित्यर्थः १६ ब्रह्मेति मानसत्वंयोगि
सृष्टेर्मूढसृष्टेश्चयद्यपितुल्यंतथापियोगिनांजितमनस्कत्वात्सृष्टिर्नदुःखदा मूढानामतथात्वाद्दुःखदा ज्ञानाज्ञानकृतात्रैवद्विमोक्षबंधावितिप्रसिद्धं । 'अत्रद्वयाहप्राजापत्यादेवाश्चासुराश्चततःका
नीयसाएवदेवाज्यायसाअसुरास्तएषुलोकेष्वस्पर्धंत'इतिश्रुत्यनुसारेणशमादयोदेवाःशास्त्रबलेनानिष्पाद्यतयायत्नसाध्यत्वात्कनिष्ठाः । कामादयोऽसुराःस्वाभाविकत्वाज्ज्येष्ठाः । तेषामात्मा
नंमोचयितुंमोहपाशैर्बद्धंचमिथःस्पर्धमानानांयद्विष्णवाख्यंसत्त्वंवर्द्धतेतदादेवानांजयोऽसुराणांपराजयश्चात्मविमोकहेतुर्भवतीत्याख्यायिकातात्पर्यं पदार्थःस्पष्टः १७ । १८ । १९ । २०
२१ । २२ । २३ । २४ इतराःकश्यपस्त्रियः व्यजायंतव्यजनयंत २५ । २६ । २७ । २८ । २९

प्रध्यायाऽऽलोच्य समधुसूदनः पृथिवीमितिपृथिवीस्थसर्वभूतोपलक्षणम् ३० शतमनेतं ३१ । ३२ धातारंसमष्टिमहंकारं ३३ ततएवचतुर्मुखादयोजाताइत्याह वेदेत्यादिना ३४ समव 
र्तिनंयमं 'समवर्तीपरेतराड्'इत्यमरः ३१ । ३६ । ३७ । ३८ । ३९ । ४० निरयमेवईक्षंतेतान् ४१ । ४२ । ४३ । ४४ । ४५ । ४६ एवमिति प्रादुर्भूतोनित्यसिद्धएवसन्नत्वभूत्वाभूतः 
अतएवभूतोत्पत्तिरित्यध्यायनामसंगच्छते महात्मनाश्रीकृष्णेनहेतुना ४७ । ४८ विग्रहाविशिष्टस्यकृष्णस्यप्रतिपादितंजगद्धेतुत्वमुपसंहरति एवमेषइति केवलमानुषोनअपितुपरमात्मैव


प्रध्यायसोऽसृजन्मेघांस्तथास्थावरजंगमान् ॥ पृथिवींसोऽसृजद्विश्वांसहितांभूरितेजसा ३० ततःकृष्णोमहाभागःपुनरेवयुधिष्ठिर ॥ ब्राह्मणानांशतंश्रेष्ठंमु
खादेवासृजत्प्रभुः ३१ बाहुभ्यांक्षत्रियशतंवैश्यानामूरुतःशतम् ॥ पद्भ्यांशूद्रशतंचैवकेशवोभरतर्षभ ३२ सएवंचतुरोवर्णान्समुत्पाद्यमहातपाः ॥ अध्य 
क्षंसर्वभूतानांधातारमकरोत्स्वयम् ३३ वेदविद्याविधातारंब्रह्माणममितद्युतिम् ॥ भूतमातृगणाध्यक्षंविरूपाक्षंचसोऽसृजत् ३४ शासितारंचपापानांपितृ
णांसमवर्तिनम् ॥ असृजत्सर्वभूतात्मानिधिपंचधनेश्वरम् ३५ यादसामसृजन्नाथंवरुणंचजलेश्वरम् ॥ वासवंसर्वदेवानामध्यक्षमकरोत्प्रभुः ३६ यावद्यावदभू
च्छ्रद्धादेहंधारयितुंनृणाम् ॥ तावत्तावदजीवंस्तेनासीद्यमकृतंभयम् ३७ नचैषांमैथुनोधर्मोबभूवभरतर्षभ ॥ संकल्पादेवचैतेषामपत्यमुपपद्यते ३८ ततस्त्रे
तायुगेकालेसंस्पर्शाज्जायतेप्रजा ॥ नह्यभून्मैथुनोधर्मस्तेषामपिजनाधिप ३९ द्वापरेमैथुनोधर्मःप्रजनामभवन्नृप ॥ तथाकलियुगेराजन्द्वंद्वमापेदिरेजनाः
४० एषभूतपतिस्तातस्वध्यक्षश्चतथोच्यते ॥ निरपेक्षांश्चकौंतेयकीर्तयिष्यामितच्छृणु ४१ दक्षिणापथजन्मानःसर्वेनरवरांध्रकाः ॥ गुहाःपुलिंदाःशबराश्चू
चुकामद्रकैःसह ४२ उत्तरापथजन्मानःकीर्तयिष्यामितानपि ॥ यौनकांबोजगांधाराःकिराताबर्बरैःसह ४३ एतेपापकृतस्तातचरंतिपृथिवीमिमाम् ॥ श्वपा
कबलगृध्राणांसधर्माणोनराधिप ४४ नैतेकृतयुगेतातचरंतिपृथिवीमिमाम् ॥ त्रेताप्रभृतिवर्धंतेतेजनाभरतर्षभ ४५ ततस्तस्मिन्महाघोरेसंध्याकालउपस्थि
ते ॥ राजानःसमसज्जंतसमासाद्येतरेतरम् ४६ एवमेषकुरुश्रेष्ठप्रादुर्भूतोमहात्मना ॥ देवदेवर्षिराचष्टनारदःसर्वलोकदृक् ४७ नारदोऽप्यथकृष्णस्यपरंमेनेन
राधिप ॥ शाश्वतत्वंमहाबाहोयथावद्भरतर्षभ ४८ एवमेषमहाबाहुःकेशवःसत्यविक्रमः ॥ अचिंत्यःपुंडरीकाक्षोनैषकेवलमानुषः ४९ ॥ इति श्रीमहाभारते
शांतिपर्वणि मोक्षधर्मपर्वणि सर्वभूतोत्पत्तिकथनेसप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ केपूर्वमासन्पतयःप्रजानां
भरतर्षभ ॥ केचर्षयोमहाभागादिक्षुप्रत्येकशःस्मृताः १ ॥ भीष्मउवाच ॥ श्रूयतांभरतश्रेष्ठयन्मांत्वंपरिपृच्छसि ॥ प्रजानांपतयोयेऽस्मिन्दिक्षुयेचर्षयःस्मृताः २

अतएवअचिंत्यः ४९ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ॥ ७ ॥ ॥ पूर्वध्यानायकृष्णमाहात्म्यमुक्तंतत्र 
ध्यानप्रतिपक्षाःकामादयआंतराःशत्रवःसंति तेषांप्रशमायपूर्वेषांगुरूणांस्मरणंकर्तव्यमित्येतदर्थोऽयमध्यायआरभ्यते । असतोमासद्गमयतमसोमाज्योतिर्गमयेतिवेदेअभ्यारोहमंत्रइवात्र
चातुर्वर्ण्यसाधारण्येनयोगारोहायजपोऽयंसर्वेदिग्गतान्विघ्नान्शमयतीतिदिक्षास्वस्तिकमित्यस्यनाम केपूर्वमासन्पतयइत्यादिरक्षरयोजनास्पष्टा १ । २

१ । ४ । ५ । ६ । ७ । ८ । ९ प्रदेशाःप्रदिशंतिआज्ञापयंतीतिप्रदेशाईशनशीलाइत्यर्थः प्रभावनाःप्रकर्षेणस्रष्टारश्च १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

एकःस्वयंभूर्भगवानाद्योब्रह्मासनातनः ॥ ब्रह्मणःसप्तवैपुत्रामहात्मानःस्वयंभुवः ३ मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः ॥ वसिष्ठश्चमहाभागःसदृशोवैस्वयंभु
वा ४ सप्तब्रह्माणइत्येतेपुराणेनिश्चयंगताः ॥ अतऊर्ध्वंप्रवक्ष्यामिसर्वानेवप्रजापतीन् ५ अत्रिवंशसमुत्पन्नोब्रह्मयोनिःसनातनः ॥ प्राचीनबर्हिर्भगवांस्तस्मा
त्प्राचेतसोदश ६ दशानांतनयस्त्वेकोदक्षोनामप्रजापतिः ॥ तस्यद्वेनामनीलोकेदक्षःकइतिचोच्यते ७ मरीचेःकश्यपःपुत्रस्तस्यद्वेनामनीस्मृते ॥ अरिष्टने
मिरित्येकेकश्यपेत्यपरेविदुः ८ अत्रेश्चैवौरसःश्रीमान्राजासोमश्चवीर्यवान् ॥ सहस्रंयश्चदिव्यानांयुगानांपर्युपासिता ९ अर्यमाचैवभगवान्येचास्यतनयावि
भो ॥ एतेप्रदेशाःकथिताभुवनानांप्रभावनाः १० शशबिंदोश्चभार्याणांसहस्राणिदशाच्युत ॥ एकैकस्यांसहस्रंतुतनयानामभूत्तदा ११ एवंशतसहस्राणिद
शतस्यमहात्मनः ॥ पुत्राणांचनतेकंचिदिच्छंत्यन्यंप्रजापतिम् १२ प्रजामाचक्षतेविप्राःपुराणाःशाशबिंदवीम् ॥ सवृष्णिवंशप्रभवोमहावंशःप्रजापतेः १३
एतेप्रजानांपतयःसमुद्दिष्टायशस्विनः ॥ अतःपरंप्रवक्ष्यामिदेवांस्त्रिभुवनेश्वरान् १४ भगोंऽशश्चार्यमाचैवमित्रोऽथवरुणस्तथा ॥ सविताचैवधाताचविवस्वां
श्चमहाबलः १५ त्वष्टापूषातथैवेंद्रोद्वादशोविष्णुरुच्यते ॥ इत्येतेद्वादशादित्याःकश्यपस्यात्मसंभवाः १६ नासत्यश्चैवदस्रश्चस्मृतौद्वावश्विनावपि ॥ मार्तंड
स्यात्मजावेतावष्टमस्यमहात्मनः १७ तेचपूर्वसुराश्चेतिद्विविधाःपितरःस्मृताः ॥ त्वष्टुश्चैवात्मजःश्रीमान्विश्वरूपोमहायशाः १८ अजैकपादहिर्बुध्न्योविरूपा
क्षोऽथरैवतः ॥ हरश्चबहुरूपश्चत्र्यंबकश्चसुरेश्वरः १९ सावित्रश्चजयंतश्चपिनाकीचापराजितः ॥ पूर्वमेवमहाभागावसवोऽष्टौप्रकीर्तिताः २० एतएवंविधादेवाम
नोरेवप्रजापतेः ॥ तेचपूर्वसुराश्चेतिद्विविधाःपितरःस्मृताः २१ शीलयौवनतस्त्वन्यस्तथाऽन्यःसिद्धसाध्ययोः ॥ ऋभवोमरुतश्चैवदेवानांचोदितोगणः २२
एवमेतेसमाम्नाताविश्वेदेवास्तथाऽश्विनौ ॥ आदित्याःक्षत्रियास्तेषांविशश्चमरुतस्तथा २३ अश्विनौतुस्मृतौशूद्रौतपस्युग्रेसमास्थितौ ॥ स्मृतास्त्वंगिरसो
देवाब्राह्मणाइतिनिश्चयः २४ इत्येतत्सर्वदेवानांचातुर्वर्ण्यंप्रकीर्तितम् ॥ एतान्वैप्रातरुत्थायदेवान्यस्तुप्रकीर्तयेत् २५ स्वजादन्यकृताच्चैवसर्वपापात्प्रमुच्यते ॥
यवक्रीतोऽथरैभ्यश्चअर्वावसुपरावसू २६ औशिजश्चैवकक्षीवान्बलश्चांगिरसःस्मृतः ॥ ऋषिर्मेधातिथेःपुत्रःकण्वोबर्हिषदस्तथा २७ त्रैलोक्यभावनास्तातप्रा
च्यांसप्तर्षयस्तथा ॥ उन्मुचोविमुचश्चैवस्वस्त्यात्रेयश्चवीर्यवान् २८ प्रमुचश्चेध्मवाहश्चभगवांश्चदृढव्रतः ॥ मित्रावरुणयोःपुत्रस्तथाऽगस्त्यःप्रतापवान् २९ एतेब्रह्म
 र्षयोनित्यमास्थितादक्षिणांदिशम् ॥ उषंगुःकवषोधौम्यःपरिव्याधश्चवीर्यवान् ३० एकतश्चद्वितश्चैवत्रितश्चैवमहर्षयः ॥ अत्रेःपुत्रश्चभगवांस्तथासारस्वतःप्रभुः ३१

१९ । २० । २१ । २२ । २३ । २४ । २५ स्वजात्स्वयंकामतोऽकामतश्चकृतात् अन्यसंसर्गजात् २६ । २७ । २८ । २९ । ३० । ३१

२१ । ३३ । ३४ । ३५ । ३६ । ३७ ॥ इति शांतिपर्वणि मोक्षपर्वणि नीलकंठीये भारतभावदीपे अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥ ॥ एवंस्वस्त्ययनपूर्वकंकृष्णंध्यायतःपुरुषस्यांत
राविर्भूतःकृष्णोहृद्गतान्कामादीन्योगप्रतिपक्षान्नाशयतीत्यंतर्भूमिविक्रीडनाख्येस्मिन्नध्यायेवराहाख्यायिकामुखेनप्रतिपाद्यते पितामहमहाप्राज्ञेत्यादिना १ । २ । ३ । ४ । ५ । ६ । ७ । ८

एतेचैवमहात्मानःपश्चिमामाश्रितादिशम् ॥ आत्रेयश्चवसिष्ठश्चकाश्यपश्चमहानृषिः ३२ गौतमोऽथभरद्वाजोविश्वामित्रोऽथकौशिकः ॥ तथैवपुत्रोभगवानृचीक
स्यमहात्मनः ३३ जमदग्निश्चसप्तैतेउदीचीमाश्रितादिशम् ॥ एतेप्रतिदिशंसर्वेकीर्तितास्तिग्मतेजसः ३४ साक्षिभूतामहात्मानोभुवनानांप्रभावनाः ॥ एवमेतेम
हात्मानःस्थिताःप्रत्येकशोदिशम् ३५ एतेषांकीर्तनंकृत्वासर्वपापात्प्रमुच्यते ॥ यस्यांयस्यांदिशिह्येतेतांदिशंशरणंगतः ३६ मुच्यतेसर्वपापेभ्यःस्वस्तिमांश्चगृ
हान्व्रजेत् ३७ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षपर्वणि दिशास्वस्तिकंनामअष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥ ॥ युधिष्ठिरउवाच ॥ ॥
पितामहमहाप्राज्ञयुधिसत्यपराक्रम ॥ श्रोतुमिच्छामिकात्स्न्र्येनकृष्णमव्ययमीश्वरम् १ यच्चास्यतेजःसुमहद्यच्चकर्मपुराकृतम् ॥ तन्मेसर्वंयथातत्त्वंब्रूहित्वंपुरुष
र्षभ २ तिर्यग्योनिगतोरूपंकथंधारितवान्प्रभुः ॥ केनकार्यनिसर्गेणतमाख्याहिमहाबल ३ ॥ ॥ भीष्मउवाच ॥ ॥ पुराऽहंमृगयांयातोमार्कंडेयाश्रमेस्थितः ॥
तत्रापश्यंमुनिगणान्समासीनान्सहस्रशः ४ ततस्तेमधुपर्केणपूजांचक्रुरथोमयि ॥ प्रतिगृह्यचतांपूजांप्रत्यनंदमृषीनहम् ५ कथैषाकथितातत्रकश्यपेनमहर्षिणा ॥
मनःप्रह्लादिनींदिव्यांतामिहैकमनाःशृणु ६ पुरादानवमुख्याहिक्रोधलोभसमन्विताः ॥ बलेनमत्ताःशतशोनरकाद्यामहासुराः ७ तथैवचान्येबहवोदानवायुद्ध
दुर्मदाः ॥ नसहंतेस्मदेवानांसमृद्धितामनुत्तमाम् ८ दानवैरर्द्यमानास्तुदेवादेवर्षयस्तथा ॥ नशर्मलेभिरेराजन्विशमानास्ततस्ततः ९ पृथिवींमार्तरूपांतेसमप
श्यन्दिवौकसः ॥ दानवैरभिसंस्तीर्णांघोररूपैर्महाबलैः १० भारार्तामपहृष्टांचदुःखितांसंनिमज्जतीम् ॥ अथादितेयाःसंत्रस्ताब्रह्माणमिदमब्रुवन् ११ कथंशक्ष्यामहे
ब्रह्मन्दानवैरभिमर्दनम् ॥ स्वयंभूस्तानुवाचेदंनिसृष्टोऽत्रविधिर्मया १२ तेवरेणाभिसंपन्नाबलेनचमदेनच ॥ नावबुध्यंतिसंमूढाविष्णुमव्यक्तदर्शनम् १३ वराहरूपिणं
देवमधृष्यममरैरपि ॥ एषवेगेनगत्वाहियत्रतेदानवाधमाः १४ अंतर्भूमिगताघोरानिवसंतिसहस्रशः ॥ शमयिष्यतितच्छ्रुत्वाजहृषुःसुरसत्तमाः १५ ततोविष्णुर्महाते
जावाराहंरूपमास्थितः ॥ अंतर्भूमिंसंप्रविश्यजगामदितिजान्प्रति १६ दृष्ट्वाचसहिताःसर्वे दैत्याःसत्वममानुषम् ॥ प्रसह्यतरसासर्वेसंतस्थुःकालमोहिताः १७ तत
स्तेसमभिद्रुत्यवराहंजगृहुःसमम् ॥ संक्रुद्धाश्चवराहंतंव्यकर्षंतसमंततः १८ दानवेंद्रामहाकायामहावीर्यबलोच्छ्रिताः ॥ नाशक्नुवंश्चकिंचित्तेतस्यकर्तुंतदाविभो १९

९ पृथिवींवृद्धिंशासनारूपबीजानांक्षेत्रभूता दानवैःकामक्रोधाद्यैरभिसंस्तीर्णांसर्वतोव्याप्ताम् १० । ११ । १२ । १३ वराहरूपिणंवरंचतद्बहश्चेतिव्युत्पत्त्याश्रेष्ठक्रतुर्योगस्तत्ररूपयितुमाविर्भावितुं
शीलमस्यतं अहःशब्दस्यक्रतुवाचित्वमह्नःखःक्रताविस्यादिषुदृष्टं दानवाःकामक्रोधादयः १४ अंतर्भूमिगताहृदस्थाः १५ विष्णुःसर्वं वाराहंयागात्मकम् १६ सत्वंसत्वगुणंविष्णुं अमानुषंदिव्यं
व्यवहितादिग्राहकत्वात्दसंतस्थुर्नाशंगताः संपूर्वस्यतिष्ठतेःसमाधिवाचित्वात् १७ नाशक्रममेवाह ततस्तइति १८ । १९

७० । २१ । २२ । २३ । २४ । २५ । २६ सनात्सततमनितिभक्तानुग्रहार्थंचेष्टतइतिसनातनः सनादनहरयपेक्षितेदकारस्थानेतकारेनिरुक्तः नादेनसहवर्तमानःसनातनइतियोगस्यदर्शित
त्वात् २७ । २८ । २९ । ३० महावर्ष्मामहाकायः ३१ आत्मापारमार्थिकंस्वरूपं आत्मनोजीवस्य ३२ स्वमात्मानंप्रत्यग्याथात्म्यंसमायातःप्राप्तः ३३ । ३४ । ३५ एषजीवः अतएवसं

ततोऽगच्छन्विस्मयंतेदानवेंद्राभयंतथा ॥ संशयंगतमात्मानंमेनिरेचसहस्रशः २० ततोदेवाधिदेवःसयोगात्मायोगसारथिः ॥ योगमास्थायभगवांस्तदाभरत
सत्तम २१ विननादमहानादंक्षोभयन्दैत्यदानवान् ॥ सन्नादितायेनलोकाःसर्वाश्चैवदिशोदश २२ तेनसन्नादशब्देनलोकानांक्षोभआगमत् ॥ संत्रस्ताश्चभृशं
लोकेदेवाःशक्रपुरोगमाः २३ निर्विचेष्टंजगच्चापिबभूवातिभृशंतदा ॥ स्थावरंजंगमंचैवतेननादेनमोहितम् २४ ततस्तेदानवाःसर्वेतेननादेनभीषिताः ॥
पेतुर्गतासवश्चैवविष्णुतेजःप्रमोहिताः २५ रसातलगतश्चापिवराहस्त्रिदशद्विषाम् ॥ खुरैर्विदारयामासमांसमेदोस्थिसंचयान् २६ नादेनतेनमहतासनातनइति
स्मृतः ॥ पद्मनाभोमहायोगीभूताचार्यःसभूतराट् २७ ततोदेवगणाःसर्वेपितामहमुपाद्रवन् ॥ तत्रगत्वामहात्मानमूचुश्चैवजगत्पतिम् २८ नादोयंकीदृशोदेव
नैतंविद्मवयंप्रभो ॥ कोऽसौहिकस्यवानादोयेनविह्वलितंजगत् २९ देवाश्चदानवाश्चैवमोहितास्तस्यतेजसा ॥ एतस्मिन्नंतरेविष्णुर्वाराहंरूपमास्थितः ॥ उद
तिष्ठन्महाबाहोस्तूयमानोमहर्षिभिः ३० ॥ ॥ पितामहउवाच ॥ ॥ निहत्यदानवपतीन्महावर्ष्मामहाबलः ॥ एषदेवोमहायोगीभूतात्माभूतभावनः ३१
सर्वभूतेश्वरोयोगीमुनिरात्मातथाऽऽत्मनः ॥ स्थिरीभवतकृष्णोऽयंसर्वविघ्नविनाशनः ३२ कृत्वाकर्मातिसाध्वेतदशक्यममितप्रभः ॥ समायातःस्वमात्मानंमहा
भागोमहाद्युतिः ३३ पद्मनाभोमहायोगिमहात्माभूतभावनः ॥ नसंतापोनभीःकार्याशोकोवासुरसत्तमाः ३४ विधिरेषप्रभावश्चकालःसंक्षयकारकः ॥ लोका
न्धारयतातेननादोमुक्तोमहात्मना ३५ सएषहिमहाबाहुःसर्वलोकनमस्कृतः ॥ अच्युतःपुंडरीकाक्षःसर्वभूतादिरीश्वरः ३६ ॥ ॥ इतिश्रीमहाभारते शांति
पर्वणि मोक्षधर्मपर्वणि अंतर्भूमिविक्रीडनंनामनवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ युधिष्ठिरउवाच ॥ ॥ योगंमेपरमंतातमोक्षस्यवदभारत ॥
तमहंतत्त्वतोज्ञातुमिच्छामिवदतांवर १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ संवादंमोक्षसंयुक्तंशिष्यस्यगुरुणासह २ कश्चिद्ब्राह्मणमा
सीनमाचार्यमृषिसत्तमम् ॥ तेजोराशिंमहात्मानंसत्यसंधंजितेंद्रियम् ३ शिष्यःपरममेधावीश्रेयोर्थीसुसमाहितः ॥ चरणावुपसंगृह्यस्थितःप्रांजलिरब्रवीत् ४

तापादिकंनकार्यंतन्मूलस्यास्मादर्शभस्यनष्टत्वादितिभावः ३६ ॥ इति शांतिपर्वणि मोक्षपर्वणि नीलकंठीये भारतभावदीपे नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥ एवमध्यायत्रयेणेश्वर
प्रणिधानमुक्तंयनशीघ्रतरंयोगःसिद्ध्यतियोगांतरायाश्चव्याधिदुःखादयोनश्यंत्यथेदानींप्रधानभूतंयोगमेवजिज्ञासुःपृच्छति योगंमेइति परमंसबीजयोगात्परमंनिर्बीजयोगंमोक्षस्यहेतुं मोक्षंमे
इतिपाठेउपायोपेयविषयौद्वौप्रश्नौ तंसपांगंमोक्षं १ । २ कश्चिदितिश्लोकाभ्यांक्रमेणगुरुशिष्ययोर्गुणादर्शिताः ३ । ४

स्वंचाऽहंचकुतउपादानात्कुतोवानिमित्तादुत्पन्नौस्वस्तद्ब्रूहियत्परंश्रेष्ठमुपादानंनिमित्तंचनतुमातृपितृवत्पुण्यापुण्यवच्चांतरालिकम् ५ भूतेषुपंचसूपादानकारणेषुसमेषुसत्सुविपरीताविषमाःक र्मक्षयोदयानिवर्तंतेभिन्नरात्रवर्तंते । वेदेषुयद्वाक्यंवर्णधर्मव्यवस्थापरं'ब्राह्मणोबृहस्पतिसवेनयजेत । राजाराजसूयेनयजेत । वैश्योवैश्यस्तोमेनयजेत । तस्माच्छूद्रोयज्ञेऽनवक्लृप्तः'इत्यादि लौ किकंस्मृतिवाक्यंतादृशंव्यापकंसर्ववर्णाश्रमसाधारणं नहिंस्यात्सर्वभूतानीत्यादि इदमपिकथं हेतुसाम्येऽपिकार्यवैषम्येकिंबीजंतद्ब्रूहीत्यर्थः श्लोकद्वयमेकंवाक्यं ६ । ७ ब्रह्मगुह्यंवेदगोप्यं वस्तुघनंतद्ब्रह्मक्षणीयमुपकारकंवा ८ ब्रह्मणोमुखंवेदादिःप्रणवः उपायोपेययोरभेदात्प्रणवादीनांत्राणुदेवत्वं ९ उपेयस्वरूपमाह पुरुषमिति १० एतदेवायंकृष्णइत्याह तदिति वार्ष्णेयंवृष्णिषु कृतावतारं इतिहासंतत्स्वरूपप्रकाशनपरंग्रंथं ११ । १२ वार्ष्णेयंकृष्णाख्यानंयत्परंकालचक्रंनस्वर्वाचीनंसंवत्सराख्यंतत्केशवंवदंतीत्युत्तरेणान्वयः । भावाभावौसृष्टिप्रलयौस्वलक्षणंस्वरू पज्ञापकौयस्य अध्यारोपापवादाभ्यांनिष्प्रपंचंनिरूप्यतइतिन्यायेनैवज्ञातुंशक्यंनतुशृंगग्राहिकयागवाश्ववदित्यर्थः १३ सर्वभूतेशोयस्मिन्त्रैलोक्यंचक्रवच्चक्रारूढपिपीलिकावत्परवशत्वेनपरि

उपासनात्प्रसन्नोऽसियदितेभगवन्मम ॥ संशयोमेमहान्कश्चित्तन्मेव्याख्यातुमर्हसि ॥ कुतश्चाहंकुतश्चत्वंतत्सम्यग्ब्रूहियत्परम् ५ कथंचसर्वभूतेषुसमेषुद्विजसत्तम ॥ सम्यग्वृत्तानिवर्तंतेविपरीताःक्षयोदयाः ६ वेदेषुचापियद्वाक्यंलौकिकंव्यापकंचयत् ॥ एतद्विद्वन्यथातत्त्वंसर्वंव्याख्यातुमर्हसि ७ ॥ गुरुरुवाच ॥ शृणुशिष्यमहाप्राज्ञब्रह्मगुह्यमिदंपरम् ॥ अध्यात्मंसर्वविद्यानामागमानांचयद्वसु ८ वासुदेवःपरमिदंविश्वस्यब्रह्मणोमुखम् ॥ सत्यंज्ञानमथोयज्ञस्तितिक्षादमआर्जवम् ९ पुरुषंसनातनंविष्णुंयत्तंवेदविदोविदुः ॥ स्वर्गप्रलयकर्तारमव्यक्तंब्रह्मशाश्वतम् १० तदिदंब्रह्मवार्ष्णेयमितिहासंशृणुष्वमे ॥ ब्राह्मणोब्राह्मणैःश्राव्योराजन्यःक्षत्रियैस्तथा ११ वैश्योवैश्यैस्तथाश्राव्यःशूद्रःशूद्रैर्महामनाः ॥ माहात्म्यंदेवदेवस्यविष्णोरमिततेजसः १२ अर्हस्त्वमसिकल्याणंवार्ष्णेयंशृणुयत्परम् ॥ कालचक्रमनाद्यंतंभावाभावस्वलक्षणम् १३ त्रैलोक्यंसर्वभूतेशेचक्रवत्परिवर्तते ॥ यत्तदक्षरमव्यक्तममृतंब्रह्मशाश्वतम् ॥ वदंतिपुरुषव्याघ्रंकेशवंपुरुषर्षभम् १४ पितॄन्देवानृषींश्चैवतथावैयक्षराक्षसान् ॥ नागासुरमनुष्यांश्चसृजतेपरमोऽव्ययः १५ तथैववेदशास्त्राणिलोकधर्मांश्चशाश्वतान् ॥ प्रलयंप्रकृतिंप्राप्ययुगादौसृजतेपुनः १६

वर्तते केशोरिवचिद्रश्मिभिर्वातिसर्वंव्याप्नोतीतिकेशवस्तं पुरुषर्षभंपुरुषाअन्नमयादयःपंचतेषामृषभंश्रेष्ठमुत्तमंपंचममित्यर्थः १४ पितॄनिति अव्ययोऽपरिणामी १५ तथैवेति वेदकर्तृत्वंब्रह्मणोमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदइत्यादिश्रुतिसिद्धं । वाचाविरूपनित्ययेतिवेदनित्यत्ववचनंतुवर्णपदाद्यानुपूर्व्यविध्वंसमात्रपरं प्रलीयतेऽस्मिन्महदादिकार्यंसप्रलयस्तं करोतीतिप्रकृतिस्तांकयोत्पत्तिस्थानंमायाशबलमपिसृजेइत्यर्थः । तथाचश्रुतिः'नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत्'इतिसदसद्रजःशब्दितानांप्रधानशून्यपरमाणूनामानुमानिकानामिवश्रौतस्यपरव्योम्नोऽपिमायाशबलापरनाम्नःसृष्टेःप्रागभावंवदंतीतस्यापिजन्यत्वंदर्शयति । मायायास्तुच्छत्वाद्ब्रह्मणश्चासंगत्वान्नतयोरेकीभावलक्षणंतात्त्विकंशाबल्यंसंभवतितुच्छयेनाभ्वपिहितंयदासीत् असंगोह्ययंपुरुषइतिश्रुतिभ्यां तस्मात्सृष्टेःप्राङ्मायाशबलंब्रह्मासीदित्युक्तिर्मायायाःस्थित्वैवयुक्तानतुवस्तुदृष्ट्या यथोक्तं ।'अस्याविद्येत्यविद्यायामेवासित्वाप्रकल्प्यते'इति । अतोयुक्तमुक्तंप्रकृतिंसृजतेइति रज्जूरगवत्प्रतीतिसमकालायाएवतत्सृष्टेरुपगमादितिदिक् १६



यथेति प्रत्यक्षंयथावसंतेआम्रकाम्रीष्मेमल्लिकावर्षासुकदंबानियमेनपुष्पितामवंत्येवंब्रह्महरविष्ण्वादिषुप्रतिकल्पंसृष्टिप्रलयस्थितिकर्तृत्वंतदातदाआविर्भवति १७ एतदेवव्याचष्टे अथेति तत्तदस्मिंस्तस्मिन्विषये लोकयात्राव्यवहारस्तस्यविधानंप्रमाणेनप्रमेयख्यापनंतज्जं तेनसोपाधिकमेवज्ञानमुत्पद्यतेननिरुपाधिकमित्युक्तंभवति १८ युगांतेयुगादौ अंतर्हितान्पूर्वयुगेऽपूर्वंस्तान् अनुज्ञाताउपदिष्टाः स्वयंभुवाब्रह्मणा १९ वेदविद्भगवान्ब्रह्मावेदांगानिबृहस्पतिर्वेदेतिसंबंधः २० । २१ न्यायतंत्राणितार्किकवैशेषिककापिलपातंजलादीनि हेतुर्युक्तिः आगमोवेदः सदाचारःप्रत्यक्षं तैःप्रमाणैःकृत्वापूर्वैर्मुनिभिर्यद्ब्रह्मउक्तंतदुपास्यतामनुख्यत्वात्तदुपास्यमेवनवेदांतविज्ञेयमित्यर्थः । तथाचोपास्यस्यपाब्रह्मत्वंश्रुतिराह 'तदेवब्रह्मत्वंविद्धिनेदंयादिदमुपासते'इति २२ अनाद्यंनास्तिआद्यंकारणंयस्यतत् यद्वाआदौविदितमाद्यंतदन्यदनाद्यंसर्गादावविदितमित्यर्थः । कथंतर्हिदेवानविदुरित्यतआह एकइत्यादि २३ । २४ ब्रह्मज्ञानस्याऽऽत्यंतिकदुःखनिवर्तकत्वमुक्त्वाऽध्यारोपापवादन्यायेनब्रह्मनिरूपयति पुरुषेति पुरुषेणाऽधिष्ठितानालोचितान् सोकामयतबहुस्यांप्रजायेयेतिश्रुतेः तेनसांख्याभिमतंप्रकृतेः

यथर्तावृतुलिंगानिनानारूपाणिपर्यये ॥ दृश्यंतेतानितान्येवतथाभावायुगादिषु १७ अथयद्यदाभातिकालयोगाद्युगादिषु ॥ तत्तदुत्पद्यतेज्ञानंलोकयात्राविधानजम् १८ युगांतेंतर्हितान्वेदान्सेतिहासान्महर्षयः ॥ लेभिरेतपसापूर्वमनुज्ञाताःस्वयंभुवा १९ वेदविद्वेदभगवान्वेदांगानिबृहस्पतिः ॥ भार्गवोनीतिशास्त्रंतुजगादजगतोहितम् २० गांधर्वंनारदोवेदभरद्वाजोधनुर्ग्रहम् ॥ देवर्षिचरितंगार्ग्यःकृष्णात्रेयश्चिकित्सितम् २१ न्यायतंत्राण्यनेकानितैस्तैरुक्तानिवादिभिः ॥ हेत्वागमसदाचारैर्यदुक्तंतदुपास्यताम् २२ अनाद्यंतत्परंब्रह्मनदेवानर्षयोविदुः ॥ एकस्तद्वेदभगवान्धातानारायणःप्रभुः २३ नारायणादृषिगणास्तथामुख्याःसुरासुराः ॥ राजर्षयःपुराणाश्चपरमंदुःखभेषजम् २४ पुरुषाधिष्ठितान्भावान्प्रकृतिःसूयतेयदा ॥ हेतुयुक्तमतःपूर्वंजगत्संपरिवर्तते २५ दीपादन्येयथादीपाःप्रवर्तंतेसहस्रशः ॥ प्रकृतिःसूयतेतद्वदानंत्यान्नापचीयते २६ अव्यक्तात्कर्मजाबुद्धिरहंकारंप्रसूयते ॥ आकाशंचाप्यहंकाराद्वायुराकाशसंभवः २७ वायोस्तेजस्ततश्चापअद्भ्योऽथवसुधोद्गता ॥ मूलप्रकृतयोह्यष्टौजगदेतास्ववस्थितम् २८ ज्ञानेंद्रियाण्यतःपंचपंचकर्मेंद्रियाण्यपि ॥ विषयाःपंचचैकंचविकारेषोडशंमनः २९ श्रोत्रंत्वक्चक्षुषीजिह्वाघ्राणंज्ञानेंद्रियाण्यथ ॥ पादौपायुरुपस्थश्चहस्तौवाक्कर्मणाअपि ३०

स्वातंत्र्यंनिरस्तं अचेतनेचेतनानधिष्ठितेशकटादौप्रवृत्त्यदर्शनाद्युक्तंतत् । सूयतेप्रसवोन्मुखीजायते भावान्महदादीन् हेतुर्धर्माधर्मौताभ्यांयुक्तमतएवसर्गादावपितारतम्यंयुक्तं अतईशात् हेतुयुक्तमितिसांख्यमतंप्रकृतेर्धर्माद्यपेक्षत्वेनस्वातंत्र्यंनिरस्तं तेषांहिजलवत्स्वतःप्रवर्तमानायाःप्रकृतेःपापंसुखपरिणामं प्रतिबध्नातिपुण्यंचदुःखपरिणामं तत्रान्यतरेणान्यतरस्यस्वोदयेप्रतिबंधशक्तिरपनीयतइति २५ दीपादिति हेतुयुक्तमित्यत्रापिवर्तते तैलवर्त्यादिहेतौसतियथादीपादनेकेदीपाःप्रभवंतीत्येवमदृष्टोपग्रहात्प्रकृतिर्महदादिकार्यंसूयतेदीपवदानंत्याच्चनापचीयते ईशादृष्टाभ्यांप्रकृतिःप्रवर्ततइतिश्लोकद्वयतात्पर्यं २६ सृष्टिक्रममाहाव्यक्तादिति कर्मजेतिईशादपिकर्मभावल्यंदृश्यते तस्यकर्मापेक्षयैवसदसत्फलदत्वात् बुद्धिर्महत्तत्त्वं तथाचसर्गादौकर्मैवप्रकृतिंप्रवर्तयतीत्यर्थः । आकाशादिपदैःशब्दतन्मात्रादीनिज्ञेयानि २७ । २८ अतःपुरुषाधिष्ठितप्रकृत्याद्यष्टकात् विषयाःविशब्दाद्याश्रयाःस्थूलाकाशादयः वाय्वाकाशयोरपिस्पर्शशब्दलिंगानुमेयतयाविषयत्वं २९ वाक्कर्मणीत्यत्रवागिंद्रियं कर्मशब्देनसर्वेषामिंद्रियाणांकर्माण्यभिवचनादानगतिविसर्गानंदाख्यानिज्ञेयानि ३०

शब्दइति शब्दादयश्चित्तमिति विज्ञेयं चित्तमात्रोपादानाइत्यर्थः यदाहुर्भगवंतोऽक्षपादाचार्याः । दोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइति । प्रमेयस्यचित्तमात्रत्वमुक्त्वाप्रमाणस्यापितदाह तेष्विति तेषुशब्दादिष्वपिसर्वेषुगतंश्रोत्रादिरूपेणोपगतंमनएव ३१ एतदेवस्पष्टयति रसेति रसज्ञानेमनएवइयंजिह्वेत्यर्थः । 'मनसाह्येवपश्यतिमनसाशृणोति'इत्यादिश्रुतेः । व्याहृतेशब्दप्रयोगे । इदंद्वयंज्ञानकर्मेंद्रियपंचकद्वयस्योपलक्षणमित्याह इंद्रियैरिति सर्वमांतरंबुद्धिसुखदुःखादिबाह्यंवियच्छब्दादि तथाऽव्यक्तंमहादादिघटांतंमनएव तथाचश्रुतिः । 'असतोऽधिमनोऽसृज्यतमनःप्रजापतिमसृजतप्रजापतिःप्रजाअसृजत । तद्वाइदंमनस्येवपरमंप्रतिष्ठितंयदिदंकिंच'इति ३२ षोडश दशेंद्रियाणिमनःपंचभूतानि ज्ञानकर्तारंविज्ञानात्मानमुपासीनमर्यात्परमात्मानं तस्यापि संहतत्वेनासंहतपुरुषशेषत्वात् ३३ रसात्मकत्वात्सोमोजलतस्यगुणःकार्यंजिह्वागंधोगंधग्राहकंघ्राणंग्राह्यग्राहकयोरभेदात्स्पर्शस्पर्शनेंद्रियं जिह्वादीनांजलादिकार्यत्वंतत्रतरसादिग्राहकत्वाद्ग्राह्यग्राहकयोःसमानजातीयत्वनियमोऽनेनसूचितः ३४ सत्त्वगुणंसत्त्वकार्यं अव्यक्तजंप्रधानकार्यंसर्वेषांभूतानामात्मभूतईश्वरस्तत्स्वमुपाधित्वेनतत्रस्थितंसर्वांतरंगंसत्त्वंजानीयात् । सत्त्वविशिष्टस्य

शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ विज्ञेयंव्यापकंचित्तंतेषुसर्वगतंमनः ३१ रसज्ञानेतुजिह्वेयंव्याहृतेवाक्तथोच्यते ॥ इंद्रियैर्विविधैर्युक्तंसर्वंव्यक्तंमनस्तथा ३२ विद्यात्तुषोडशैतानिदैवतानिविभागशः ॥ देहेषुज्ञानकर्तारमुपासीनमुपासते ३३ तद्वत्सोमगुणाजिह्वागंधस्तुपृथिवीगुणः ॥ श्रोत्रंनभोगुणंचैवचक्षुरग्नेर्गुणस्तथा ॥ स्पर्शंवायुगुणंविद्यात्सर्वभूतेषुसर्वदा ३४ मनःसत्त्वगुणंप्राहुःसत्त्वमव्यक्तजंतथा ॥ सर्वभूतात्मभूतस्थंतस्माद्बुद्धेचेतबुद्धिमान् ३५ एतेभावाजगत्सर्वंवहंतिसचराचरम् ॥ श्रिताविरजसंदेवंयमाहुःप्रकृतेःपरम् ३६ नवद्वारंपुरंपुण्यमेतैर्भावैःसमन्वितम् ॥ व्याप्यशेतेमहानात्मातस्मात्पुरुषउच्यते ३७ अजरःसोमरश्चैवव्यक्ताऽव्यक्तोपदेशवान् ॥ व्यापकःसगुणःसूक्ष्मःसर्वभूतगुणाश्रयः ३८ यथादीपःप्रकाशात्माह्रस्वोवायदिवामहान् ॥ ज्ञानात्मानंतथाविद्यात्पुरुषंसर्वजंतुषु ३९ श्रोत्रंवेदयतेवेद्यंसशृणोतिसपश्यति ॥ कारणंतस्यदेहोऽयंसकर्तासर्वकर्मणाम् ४० अग्निर्दारुगतोयद्वद्भिन्नेदारौनदृश्यते ॥ तथैवात्माशरीरस्थोयोगेनैवानुदृश्यते ४१ अग्निर्यथाह्युपायेनमथित्वादारुदृश्यते ॥ तथैवात्माशरीरस्थोयोगेनैवात्रदृश्यते ४२

ज्ञेयत्वेऽपिचिद्विवेकेपरिशेषादचितःसत्त्वस्यैवज्ञेयत्वमस्तीतिसत्त्वमेवबुद्ध्येतेत्युक्तं ३५ एतसत्त्वादयईशाद्ययोवा विरजसंसर्वप्रवृत्तिशून्यंकूटस्थं ३६ नवज्ञानेंद्रियपंचकं बुद्धिमनसीदेहप्राणौचद्वाराणिविषयप्रापकाणियस्मिन्तन्नवद्वारं भावैःशब्दादिभिः ३७ अजरामरइतिदेहधर्मास्पर्शउक्तः व्यक्तंमूर्तमव्यक्तममूर्तंतदुभयात्मनाउपदिश्यते वेदे 'द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंच'इत्यादिनायःसव्यक्ताव्यक्तोपदेशःकार्यकारणात्मावद्वान्तदाधिष्ठानभूतोनेतिनेतीत्यागमविषयःएवंविधोऽपिव्यापकःकारणात्मा । सगुणोयःसर्वज्ञइत्यादिश्रुतेःसार्वज्ञ्यादिगुणयुक्तः सूक्ष्मोदुर्लक्ष्यः सर्वाणिभूतानिगुणाश्चसत्त्वादयस्तेषामाश्रयोऽधिष्ठानं ३८ यथेति उपाधिवशान्महत्त्वमल्पत्वंवाप्राप्तोऽपिदीपवत्सर्वजंतुषुसएवेत्यर्थः ३९ येनश्रोत्रंवेद्यंस्वविषयंशब्दंवेदयतेसएवशृणोति । एवंपश्यतीत्यादिष्वपियोज्यं येनश्रोत्रंशृणोतिहियेनचक्षुश्चपश्यतीत्यादिश्रुतिभ्यः । अयंदेहस्तुतस्यशब्दादिवेदनस्यकारणंनिमित्तंनतुवेत्ताकिंतुसएवकर्ता ४० एवंविधस्यापिदेहेकुतोनुपलंभइत्याशंक्योपायाभावादित्याह अग्निरिति दारुभेदेकृतेऽपिनदृश्यते अयोगेयोगाभावेसतिनैवानुदृश्यते ४१ व्यतिरेकमुक्त्वाऽन्वयमाह दारुदारुणियोगेनैवनान्येनोपायेन ४२



योगाभावेदेहसंबंधोनविच्छिद्यतइत्याह नदीष्विति ४३ देहांतरप्रवेशोऽपिनशालाचैत्रवत्किंतुस्वप्नवदित्याह स्वप्नेति तथैवमरणांतेदेहमुत्सृज्यदेहांतरंप्राप्नोतीत्युपलभ्यतेशास्त्रदृष्ट्यायोगेनवाज्ञायते ४४ केनहेतुनादेहांतरंयातीतितत्राह कर्मणेति रूपंप्राचीनंशरीरंबाध्यतेनतुनिवर्तते भ्रांतिगृहीतस्यघटवान्निवृत्त्ययोगात् ४५ एतदेवविशदयितुंप्रतिजानीते सत्विति ४६ ॥ इतिशांति० मो० नी० भा० दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ ॥ ७ ॥ ॥ प्रतिज्ञातंनिरूपयति चतुरिति नव्यक्तःप्रभवोदेहांतरप्राप्तिर्येषां अव्यक्तंनिधनंपूर्वदेहवियोगोयेषां स्वप्नवत्पूर्वापरदेहत्यागयोगौनग्रहावग्रहांतरप्रवेशवत्स्पष्टावित्यर्थः अत्रहेतुमाहार्धेन अव्यक्तेति यतोनव्यक्तंलक्षणंज्ञापकमस्यतादृशमतोऽव्यक्तलक्षणं अत्रहेतुः अव्यक्तात्माऽयमकमव्यक्तोयआत्मातद्रात्मकंद्वितीयेंदुवत्त्रिवकल्पितं अतस्तत्कल्पितेप्रभवनिधनेअप्यव्यक्तेएवेत्यर्थः १ नन्वेवंमध्येऽपिदेहादिरव्यक्तएवस्यादाद्यंतयोरव्यक्तत्वादित्यतआह यथेति प्रागूर्ध्वंचाव्यक्तोऽप्यश्वत्थोमध्येव्यक्तोभवति एवमव्यक्तान्मनसःसंभवोव्यक्तिर्दृश्यस्येत्यर्थः २ अभीति यथाऽयस्कांतंलोहचुंबकपाषाणंप्रत्यचेतनमप्ययोलोहमभिमुखंगच्छति एवंदेहेव्यक्तिंगतमनुस्वभावःपूर्वसंस्कारोहेतुर्येषाकर्मणांतज्जाधर्माधर्मादयोभावाअर्थाअभिद्रवंति यच्चान्यदपिईदृशमविद्यादिकंतदप्यभिद्रवति ३ इममेवन्यायमन्यत्राप्यतिदिशति तद्वदिति अव्यक्तजा

नदीष्वापोयथायुक्तायथासूर्येमरीचयः ॥ संततत्वाद्यथायांतितथादेहाःशरीरिणाम् ४३ स्वप्नयोगेयथैवात्मापंचेंद्रियसमायुतः ॥ देहमुत्सृज्यवैयातितथैवात्मोपलभ्यते ४४ कर्मणाबाध्यतेरूपंकर्मणाचोपलभ्यते ॥ कर्मणानीयतेऽन्यत्रस्वकृतेनबलीयसा ४५ सतुदेहाद्यथादेहंत्यक्त्वाऽन्यंप्रतिपद्यते ॥ तथान्यंसंप्रवक्ष्यामिभूतग्रामंस्वकर्मजम् ४६ ॥ इति श्रीम० शां० मो० वार्ष्णेयाध्यात्मकथनेदशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ भीष्मउवाच ॥ चतुर्विधानिभूतानिस्थावराणिचराणिच ॥ अव्यक्तप्रभवान्याहुरव्यक्तनिधनानिच ॥ अव्यक्तलक्षणंविद्यादव्यक्तात्मात्मकंमनः १ यथाऽश्वत्थकणिकायामंतर्भूतोमहाद्रुमः ॥ निष्पन्नोदृश्यतेव्यक्तमव्यक्तात्संभवस्तथा २ अभिद्रवत्ययस्कांतमयोनिश्चेतनंयथा ॥ स्वभावहेतुजाभावायद्वदन्यदपीदृशम् ३ तद्वदव्यक्तजाभावाःकर्तुःकारणलक्षणाः ॥ अचेतनाश्चेतयितुःकारणादभिसंहताः ४ नभूर्नखंद्यौर्भूतानिनर्षयोनसुरासुराः ॥ नान्यदासीदृतेजीवमासेदुर्नतुसंहतम् ५ पूर्वंनित्यंसर्वगतंमनोहेतुमलक्षणम् ॥ अज्ञानकर्मनिर्दिष्टमेतत्कारणलक्षणम् ६

अविद्योत्थाभावाःकामकर्मवासनादेहेंद्रियादयश्चाचेतनाअभितःसंहताः । एवंकर्तुश्चेतनस्यकारणलक्षणाःकारणंब्रह्मलक्षयंतितेकारणाद्ब्रह्मणःसकाशात्सत्त्वचित्त्वानंदत्वादयोऽपिभावाअभिसंगताः । यथापूर्वंकस्त्रोऽप्यात्मानात्मगुणगणोदेहांतरप्राप्तौसंहन्यतइत्यर्थः ४ ननुशुक्रशोणितसंयोगादिक्रमेणदेहद्वयादिकंदृश्यतेतत्कथंस्वाप्नदेहवदाकस्मिकीदेहांतरप्राप्तिरित्याशंक्याह नभूरितिद्वाभ्यां जीवंचिद्धातुंविनाभ्वादयोवाऋषयःप्राणाःप्राणावाऋषयइतिश्रुतेः सुरासुराःशमकामादयइत्येवमादिकमन्यन्नैवासीत्प्रागुत्पत्तेः । संहतमज्ञानोपाधिंजीवमेतेराजानंभृत्याइवनाप्यासेदुःपश्चादपिनासादितवंतः भ्वादयोनित्यंजीवेनासंगताइत्यर्थः ५ कथंतर्हितत्संबंधस्यजीवेप्रतीतिरत्रआह पूर्वमिति एतज्जीवेभ्वादितादात्म्यमज्ञानकर्ममायाकार्यमितिनिर्दिष्टंवेदे'इंद्रोमायाभिःपुरुरूपईयते'इत्यादौ पूर्वमनादि नित्यमज्ञानेसत्यनुच्छेद्यं सर्वगतंविद्वदविद्वत्साधारणंव्यवहारकाले यथोक्तं । पश्वादिभिश्चाविशेषादिति । मनोहेतुंमनोजन्यं अलक्षणमनिर्वचनीयं कारणंपूर्ववासनासैवलक्षणंविशेषतोज्ञापकंयस्यप्राग्भवीयवासनावशादेवतत्तद्रूपश्वादिदेहतादात्म्यमात्मनःप्रतीयते । यथास्वप्नेऽराज्ञोपिराजाऽस्मीतिप्रतीतिस्तद्वदबालस्यापिबालोऽस्मीतिदेहांतरप्राप्तौप्रतीतिर्जायतेइत्यर्थः ६

ततश्चकिमित्यतआह तदिति तज्जीवस्वरूपंकारणैर्वासनाभिर्युक्तं कार्यस्यकर्मणःसंग्रहंकारयतितथा जीवःप्राग्वासनावशात्कर्मणिप्रवर्ततइत्यर्थः येनसंग्रहेणततःप्रादारभ्यवर्ततेऽनुवर्तते वासनावशात्कर्मकर्मवशाद्वासनाइतिचक्रंचक्रवदनवरतप्रवाहं ७ अव्यक्तंधीवासनाद्रूपंनाभिर्यद्वंतरंगंयस्य । व्यक्तंदेहेंद्रियादिअराःनाभिनेमिसंधानकाष्ठानितद्वद्बहिरंगंयस्य । विकारोज्ञानक्रियादिःपरिमंडलंनेमिस्तद्वद्व्यापकं । स्निग्धरंजनात्मकंरजःअक्षइवचालकंयस्य । चक्रंजन्ममरणप्रवाहसंघातः । क्षेत्रज्ञेनाधिष्ठितं ध्रुवमविचाल्यंवर्तते ८ स्निग्धत्वाद्रजोगुणाक्रांतत्वात् तिलपीडैस्तैलिकैः भोगैःसुखदुःखयोगैः ९ कर्मेति तत्संघातात्मकंचक्रंतत्फलतृष्णयाऽहंकारोऽभिमानस्तत्परिग्रहात्तेनस्वीकृतंसत्कर्मकुरुते । कार्यकारणसंयोगेदेहाज्ञानयोगेआगामिनिसहेतुःतत्कर्मकारणं । विधेयापेक्षंपुंस्त्वं उपपादितः समर्थितः १० ननुकारणादभिन्नंकार्यमितिसांख्याः नहिकुंडलंकनकादन्यत्किंतुकनकमेवसंस्थानविशेषविशिष्टंकुंडलमित्युच्यते । तथाकारणात्कार्यंभिन्नमभिन्नंचेत्यौडुलोमिरुत्क्रमिष्यतएवंभावादित्यौडुलोमिरितिशास्त्रेतदनुवादात् । प्रपंचःकार्यावस्थायांब्रह्मणोभिन्नोऽपिकारणावस्थायामभिन्नइतिसूत्रार्थः । अस्मिन्मतेऽपिकारणांशेनकार्यस्यकारणादभेदोऽस्ति । येतुकार्यकारणयोर्गवाश्ववद्भेदमिच्छंतितेषामपितयोरप्रयक्सिद्धत्वमस्त्यतोमत्स्ययोरिवनकार्यकारणयोःसंयोगःकर्मनिमित्तोयुज्यतइत्याशंक्यविवर्तवादाश्रये

तत्कारणैर्हिसंयुक्तंकार्यसंग्रहकारकम् ॥ येनैतद्वर्ततेचक्रमनादिनिधनंमहत् ७ अव्यक्तनाभंव्यक्तारंविकारपरिमंडलम् ॥ क्षेत्रज्ञाधिष्ठितंचक्रंस्निग्धाक्षंवर्ततेध्रुवम् ८ स्निग्धत्वात्तिलवत्सर्वंचक्रेऽस्मिन्पीड्यतेजगत् ॥ तिलपीडैरिवाक्रम्यभोगैरज्ञानसंभवैः ९ कर्मतत्कुरुतेतर्षादहंकारपरिग्रहात् ॥ कार्यकारणसंयोगेसहेतुरुपपादितः १० नाभ्येतिकारणंकार्यंनकार्यंकारणंतथा ॥ कार्याण्यतेनकरणेकालोभवतिहेतुमान् ११ हेतुयुक्ताःप्रकृतयोविकाराश्चपरस्परम् ॥ अन्योन्यमभिवर्ततेपुरुषाधिष्ठिताः सदा १२ राजसैस्तामसैर्भावैश्च्युतोहेतुबलान्वितः ॥ क्षेत्रज्ञमेवानुयातिपांसुर्वातेरितोयथा १३

णपरिहरति नाभ्येतीति रज्जूरगयोरिवकार्यकारणयोर्विषमसत्ताकत्वादन्योऽन्यस्मिन्प्रवेशःकनककुंडलादिवन्नघटतइत्यर्थः ।नात्येतीतिपाठेऽपिनातिक्रामतिनव्याप्नोतीत्यर्थः । कुतस्तर्हिगवाश्ववदत्यंतभिन्नयोःकार्यकारणभावइत्याशंक्याह कार्याण्यतेनकरणेइति भावेनिष्ठा हेतौतृतीयाअधिकरणेल्युट् करणेअधिष्ठाने कार्याभिव्यक्तयेहेतुमानदृष्टादिसहायांतरवान्कालोभवतिप्रभवति अयंभावः । नमृद्घटन्यायेनप्रतीचिप्रपंचाभिव्यक्तयेकारकव्यापारोऽपेक्ष्यतेकिंतुभोगप्रदकर्मोद्बोधहेतुःकालएवरज्ज्वाभिवोरगोत्पत्ताविति । कार्याणांनुपकरणेइतिपाठेतुउपकरणेसत्ताप्रदानरूपोपकारेकालएवप्रभवतिनकारकव्यापारइत्यर्थः । तथाचनिरधिष्ठानकभ्रमासंभवादधिष्ठानाध्यस्तयोःसत्यमिथ्यावस्तुनोरत्यंतभेदेऽपिकार्यकारणभावोयुज्यतइत्यर्थः ११ एवमधिष्ठानाध्यस्तयोःसंबंधेकर्मैवहेतुरित्युक्त्वाऽध्यस्तानामपिप्रकृत्यादीनांमिथःसंयोगेकर्मैवहेतुरित्याह हेत्विति हेतुयुक्ताःकर्मयुक्ताःअभिवर्ततेसंहन्यंते प्रकृतयोऽष्टौविकाराःषोडशेतिचतुर्विंशतिःपूर्वोक्ताः १२ एवंदेहांतरप्राप्तिव्युत्पादनप्रसंगात्कृत्स्नस्यकार्यस्यब्रह्मविवर्तत्वमुक्त्वाप्रकृतमनुसरति राजसैरिति च्युतःपूर्वदेहाद्विभ्रष्टोजीवः भावैःप्राणैर्भूतसूक्ष्मैःसंस्कारैःसमन्वितइत्येकदेशोऽप्यपकृष्यते हेतुनाकर्मणाबलेनपूर्वप्रज्ञयाविद्ययाचसमन्वितः । क्षेत्रज्ञंपरमात्मानमनुलक्ष्ययातिलोकांतरंप्रति । 'प्राज्ञेनात्मनासंपरिष्वक्तउत्सर्जन्यातितंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच । तमुत्क्रामंतंप्राणोऽनूत्क्रामति प्राणमनूत्क्रामंतंसर्वेप्राणाअनूत्क्रामंति' इतिश्रुतिभ्यः १३

नाभ्येतीतिश्लोकोक्तेकार्यकारणयोरध्यस्ताधिष्ठानत्वेदेहदेहिनोरप्याह नचेति तैःरजःसत्वतमोजैर्देहेंद्रियभूतसूक्ष्माख्यैर्भावैः हेतुबलाभ्यांचपूर्वोक्ताभ्यांनस्पृश्यते । अध्यस्तधर्माणामधिष्ठानेऽनन्वयात् । तेनदेहिनातेभावादयोऽपिनस्पृश्यंते असंगत्वात् । यथावायोःसरजस्कत्वंभ्रांत्यानीरजस्कत्वंस्वतएवमात्मनिदेहादिसंगासंगौ १४ एतयोर्वायुरजसोरंतरंपृथक्भावः अभ्यासाद्देहादितादात्म्याभ्यासात् प्रकृतिंशुद्धंस्वरूपं नगच्छेन्नजानीयात् १५ अणुरात्मास्वभावबद्धइतिकेचित् । देहसंमितइत्यन्ये । विभुरपिस्वभावबद्धइत्यपरे । असंगइत्यपरं । तत्रकिंमतमुपादेयंकिंहेयमित्येतंसंदेहं ऋषिर्मंत्रः'अनश्नन्नन्योअभिचाकशीति । असंगोह्ययंपुरुषः'इत्यादिः । अच्छिनत् । ननुस्वर्गकामोयजेतेतिसंगत्वमपिनश्रूयतेतत्कथमसंगत्वनिश्चयइत्याशंक्याह तथेतिकृतंक्रिययानिष्पादितंयल्लक्षणंमूर्द्धाभिषिक्तत्वादितेनसंमितातदनुरोधिनीवार्तासुखदुःखप्राप्तिपरिहारोपायभूताक्रियासमीक्षितवत्तद्वदात्मानंक्रियाविष्टंकर्तारमीक्षेत । यथादेहातिरिक्तमात्मानंजानन्नेवराजाराजसूयेनस्वाराज्यकामोयजेतेतिवाक्याद्देहसंमितंकृत्रिमंमूर्द्धाभिषिक्तत्वरूपलक्षणंराजसूयाधिकारिविशेषणंक्रियाकालेऽपेक्षते । एवंकर्तृत्वादिविशेषणंमुमुक्षुरपिविद्यासाधनकालेफलकालेतुराजादेहमिवमुमुक्षुःकर्तृत्वाद्युज्झतीतिभावः १६ एतद्विज्ञानफलंमोक्षमाह बीजानीति क्लेशैरविद्यादिभिः १७ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

नचतैःस्पृश्यतेभावैर्नतेतेनमहात्मना ॥ सरजस्कोऽरजस्कश्चनैववायुर्भवेद्यथा १४ तथैतदंतरंविद्यात्सत्वक्षेत्रज्ञयोर्बुधः ॥ अभ्यासात्सतथायुक्तोनगच्छेत्प्रकृतिंपुनः १५ संदेहमेतमुत्पन्नमच्छिनद्भगवानृषिः ॥ तथावार्तांसमीक्षेतकृतलक्षणसंमिताम् १६ बीजान्यग्न्युपदग्धानिनरोहंतियथापुनः ॥ ज्ञानदग्धैस्तथाक्लेशैर्नात्मासंपद्यतेपुनः १७ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मकथने एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥ ॥

॥ भीष्मउवाच ॥ प्रवृत्तिलक्षणोधर्मोयथासमुपलभ्यते ॥ तेषांविज्ञाननिष्ठानामन्यत्तत्त्वंनरोचते १ दुर्लभावेदविद्वांसोवेदोक्तेषुव्यवस्थिताः ॥ प्रयोजनंमहत्त्वात्तुमार्गमिच्छंतिसंस्तुतम् २ सद्भिराचरितत्त्वात्तुवृत्तमेतदगर्हितम् ॥ इयंसाबुद्धिरन्येयययायातिपरांगतिम् ३ शरीरवानुपादत्तेमोहात्सर्वान्परिग्रहान् ॥ क्रोधलोभादिभिर्भावैर्युक्तोराजसतामसैः ४ नाशुद्धमाचरेत्तस्माद्भीप्सन्देहयापनम् ॥ कर्मणाविवरंकुर्वन्नलोकानाप्नुयाच्छुभान् ५ लोहयुक्तंयथाहेमविपक्वंनविराजते ॥ तथाऽपक्वकषायाख्यंविज्ञानंनप्रकाशते ६

॥ अस्मिन्नध्यायेक्लेशोदयलयहेतूहानायोपादानायचप्रदर्श्यंते प्रवृत्तीत्यादिना तथाकर्मनिष्ठानांयथाधर्मःसमुपलभ्यतेतथाविज्ञाननिष्ठानांविज्ञानादन्यन्नरोचते १ वेदोक्तेष्वग्निहोत्रादिषुशमादिषुचयथाधिकारंव्यवस्थिताःनिष्ठावंतःप्रयोजनंस्वर्गमोक्षौतयोर्मध्येसंस्तुतंप्रशस्ततरंमोक्षमार्गंनिवृत्तिरूपंमहत्त्वादिच्छंति बुद्धिमत्तराइतिशेषः २ ननुजरामर्यमग्निहोत्रंभस्मांतंशरीरमित्यादयोयावज्जीवंकर्मानुष्ठापकाविधयउपरुध्येरन्निवृत्तिमार्गादरेइत्याशंक्याह सद्भिरिति । 'एतद्धस्मवैतत्पूर्वेविद्वांसोमहाशालामहाश्रोत्रियाअग्निहोत्रंनजुहवांचक्रिरे'इत्यादिश्रुतेःतत्कर्मत्यागात्मकंवृत्तंनिंद्यं ।'आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यते । योगारूढस्यतस्यैवशमःकारणमुच्यते'इतिभगवतेवप्रवृत्तिनिवृत्तिमार्गयोरधिकारभेदेनव्यवस्थापितत्वात् इयंनिवृत्त्यात्मिकापरांगतिंमोक्षं ३ एतदभावेऽनिष्टमाह शरीरेति शरीरवान्शरीराभिमानवान् ४ देहयापनंदेहसंबंधविच्छेदमशरीरताख्यंमोक्षं । तत्रोपायमाह कर्मणेति विवरमात्मविविदिषाख्यंद्वारं शुभान्स्वर्गादीन्कर्मफलभूतान्नाप्नुयात्नस्वीकुर्यात् फलत्यागपूर्वकंचित्तशुद्ध्यर्थंकर्माण्येवाचरेदित्यर्थः ५ चित्तशुद्ध्यभावेदोषमाहलोहेति विपक्वंपाकहीनं भावेनिष्ठा अविपक्वकषायेपुंसिआख्याउपदेशोयस्याःअजितरागादिदोषेउक्तमित्यर्थः ६

कषायाणामपाकेदोषमाह यश्चेति अनुप्लवन्ननुसरन् आक्रम्योपमृद्य उत्क्रम्येतिपाठःस्वच्छः ७ संरागोरागाधिक्यं प्रजनेदोषमाह क्रोधइति क्रोधोराजसःहर्षःसात्त्विकोविषाद स्तामसः ८ अभिद्रुवतेआभिष्टौति चितोऽविकारिस्त्वाद्विकारिणश्चचेतसोजडत्वादस्तुत्याक्रोशौनिरास्पदावित्यर्थः ९ विज्ञानाद्विपर्ययबुद्धेः आत्मानंदेहं पार्थिवंपृथ्वीविकारंगुणं १० देहस्यपार्थिवत्वेयुक्तिमाहद्वाभ्यां मृन्मयमिति शरणंगृहं मृद्विकारान्मृद्विकारमन्नादिकंप्राप्यननश्यतिजीवतीत्यर्थः ११ मृद्विकारानाह मधिवति १२ कांतारमातिष्ठन्संन्यासी औ त्सुक्यंमिष्टान्नादौरागं नसमनुव्रजेत् आहारमन्नं यापनंदेहनिर्वाहकं १३ संन्यासिवद्गृहिणापिविरक्तेनस्थेयमित्याह तद्वदिति संसारोगृहं यात्रार्थंवेदांतश्रवणादिनिर्वाहार्थंनत्विंद्रि यप्रीत्यर्थं १४ एवंद्वयोरपिमिष्टान्नादौवैराग्यमुपपाद्याश्रमद्वयसाधारणान्मोक्षधर्मानाह सत्येति सत्यंयथार्थभाषणं शौचंमृज्जलाभ्यांबाह्यंभावशुद्धिरांतरमितिद्विविधं आर्जवमकौटिल्यं

यश्चाधर्मंचरेल्लोभात्कामक्रोधावनुप्लवन् ॥ धर्म्यंपंथानमाक्रम्यसानुबंधोविनश्यति ७ शब्दादीन्विषयांस्तस्मात्रसंरागादयंव्रजेत् ॥ क्रोधोहर्षोविषादश्चजायंतेहप रस्परात् ८ पंचभूतात्मकेदेहेसत्त्वेराजसतामसे ॥ कमभिष्टुवतेचायंकंवाऽऽक्रोशतिकिंवदन् ९ स्पर्शरूपरसाद्येषुसंगंगच्छंतिबालिशाः ॥ नावगच्छंतिविज्ञाना दात्मानंपार्थिवंगुणम् १० मृन्मयंशरणंयद्वन्मृदैवपरिलिप्यते ॥ पार्थिवोऽयंतथादेहोमृद्विकारान्नन्श्यति ११ मधुतैलंपयःसर्पिर्मांसानिलवणंगुडः ॥ धान्यानि फलमूलानिमृद्विकाराःसहांभसा १२ यद्वत्कांतारमातिष्ठन्नौत्सुक्यंसमनुव्रजेत् ॥ ग्राम्यमाहारमादद्यादस्वाद्वपिहियापनम् १३ तद्वत्संसारकांतारमातिष्ठन्श्रम तत्परः ॥ यात्रार्थमद्यादाहारंव्याधितोभेषजंयथा १४ सत्यशौचार्जवत्यागैर्वर्चसाविक्रमेणच ॥ क्षांत्याधृत्याचबुद्ध्याचमनसातपसैवच १५ भावान्सर्वा नुपावृत्तान्समीक्ष्यविषयात्मकान् ॥ शांतिमिच्छन्नदीनात्मासंयच्छेदिंद्रियाणिच १६ सत्त्वेनरजसाचैवतमसाचैवमोहिताः ॥ चक्रवत्परिवर्तंतेह्यज्ञाना ज्जंतवोभृशम् १७ तस्मात्सम्यक्परीक्षेतदोषानज्ञानसंभवान् ॥ अज्ञानप्रभवंदुःखमहंकारंपरित्यजेत् १८ महाभूतानींद्रियाणिगुणाःसत्त्वंरजस्तमः ॥ त्रैलोक्यंसेश्वरंसर्वमहंकारेप्रतिष्ठितम् १९ यथेहनियतःकालोदर्शयत्यार्तवान्गुणान् ॥ तद्वद्भूतेष्वहंकारंविद्यात्कर्मप्रवर्तकम् २० संमोहकंतमोविद्यात्कृष्ण मज्ञानसंभवम् ॥ प्रीतिदुःखनिबद्धांश्चसमस्तांस्त्रीनथोगुणान् २१ सत्त्वस्यरजसश्चैवतमसश्चनिबोधतान् ॥ प्रसादोहर्षजाप्रीतिरसंदेहोधृतिःस्मृतिः ॥ एतान्सत्त्वगुणान्विद्यादिमान्राजसतामसान् २२ कामक्रोधौप्रमादश्चलोभमोहौभयंक्लमः ॥ विषादशोकावरतिर्मानदर्पावनार्यता २३

त्यागोवैराग्यं वर्चोऽध्ययनादिजंतेजस्तेनतत्कारणंलक्ष्यं विक्रमोमनोजयेशौर्यं बुद्ध्याश्रवणजन्यया धृत्याक्लेशकालेऽपिचित्तविधारकयत्नेन मनसाक्रियमाणेनतपसासाध्वसाधुनोरालोचनेन भावान्समीक्ष्येत्युत्तरेणान्वयः १५ संभवेतयथाक्रममितिपाठेयथाक्रमंसंसारीचेत्कामादिनामुमुक्षुश्चेच्छमादिनासंभवेतसंयुज्येतेत्यर्थः अदीनात्मावारचितः १६ विपक्षेदंडमाह सत्त्वेनेति १७ अज्ञानात्प्रभवउत्पत्तिर्यस्यतं १८ महेति ईश्वरादिकंसर्वमहंकारकल्पितमित्यर्थः १९ नन्वेतदहंकारकल्पितंचेत्स्वप्नवन्नित्यमभिनवसंस्थानंस्यादित्याशंक्यपूर्वसंस्कारानुरोधात्समानरूपमे वकल्प्यतेइतिसदृष्टांतमाह यथेति भूतेतिमूर्तेंद्रियादीनामुपलक्षणम् २० त्रिगुणात्मकस्याहंकारस्यगुणकार्याण्यपिविभजते संमोहकमिति कृष्णमंधकारवदप्रकाशात्मकं प्रीतिदुःखेक्रमात्सा त्विकराजसे २१ तान्कार्यभूतान्विशेषगुणान् २२ कामादयोराजसाः विषादादयस्तामसाः २३



अस्यविभागस्यप्रयोजनमाह दोषाणामिति आत्मनिसंस्थानंस्थितिमेकैकंप्रत्येकमनुलक्षीकृत्यविमृशेत्कोदोषःकियान्क्षीणःकियान्शिष्टइतिनित्यमालोचयेदित्यर्थः २४ त्यक्ताःपूर्वैर्मुमुक्षुभिरि तिशेषः केपुनरिति अपरिहार्याइत्यर्थः पंचात्रप्रश्नाः अफलाआगताअपिनिष्फलाइत्यर्थः २५ । २६ दोषैरितिसार्धश्लोकएकंवाक्यं मूलान्मूलमज्ञानंतदारभ्य अवच्छिन्नैश्छिन्नैः मूलच्छेदेनैवदो षांश्छिद्यात्तत्रश्चतेपश्चाच्छिन्नपुरुषवत्किलसितवत्कंचित्कालमनुवर्तमानाअप्यफलाएवेत्यर्थः मूलच्छेदेउपायंसदृष्टांतमाह विनाशयतीति संभूतमुत्पन्नमयस्मयंलोहनिगडं । अयोवास्यधा रामयं एवंकृतात्मा ध्यानसंस्कृताबुद्धिस्तामसैर्विपर्यासरूपैरविद्यादिदोषैःसहजैरनादिभिःसहनश्यतितात्राशयित्वास्वयमपिकतकरजोवच्छाम्यति अत्रवास्यधारानिगडंछित्वास्वयमपिनश्य तीतिविवक्षयादृष्टांतदार्ष्टांतिकयोःसाम्यम् २७ चतुर्थप्रश्नोत्तरमुक्त्वातृतीयप्रश्नोत्तरंपादत्रयेणाह राजसमिति शुद्धात्मकंसत्त्वं तथाकल्मषं काममोहराहित्यात् गुणत्रयंदेहिनांदेहप्राप्तौ बीजं आत्मवतोजितचित्तस्यतुसत्त्वसमंब्रह्मतत्प्रापकम् । निर्दोषंहिसमंब्रह्मेतिसमशब्दस्यब्रह्मण्यपिप्रयोगात् २८ प्रथमप्रश्नोत्तरमाह तस्मादिति सत्त्वंबुद्धिः २९ अथवेति आत्मादा नायबुद्धिवशीकारायविहितंमंत्रवन्मंत्रयुक्तंयज्ञादिकंकर्मकेचिदुष्कृतमितिब्रूयुःसांख्याः पशुबीजादिहिंसामिश्रत्वात् तस्माज्जपादिरेवहिंसाहीनोधीशुद्ध्युपायःश्रेयानितिभावः अत्रायंसांख्य

दोषाणामेवमादीनांपरीक्ष्यगुरुलाघवम् ॥ विमृशेदात्मसंस्थानमेकैकमनुसंततम् २४ ॥ युधिष्ठिरउवाच ॥ केदोषामनसात्यक्ताःकेबुद्ध्याशिथिलीकृताः ॥ केपुनः पुनरायांतिकेमोहादफलाइव २५ केषांबलाबलंबुद्ध्याहेतुभिर्विमृशेद्बुधः ॥ एषमेसंशयस्ताततन्मेब्रूहिपितामह २६ ॥ भीष्मउवाच ॥ दोषैर्मूलादवच्छिन्नैर्विशु द्धात्माविमुच्यते ॥ विनाशयतिसंभूतमयस्मयमयोयथा ॥ तथाकृतात्मासहजैर्दोषैर्नश्यतितामसैः २७ राजसंतामसंचैवशुद्धात्मकमकल्मषम् ॥ तत्सर्वंदे हिनांबीजंसत्त्वमात्मवतःसमम् २८ तस्मादात्मवतावर्ज्यंरजश्चतमएवच ॥ रजस्तमोभ्यांनिर्मुक्तंसत्त्वंनिर्मलतामियात् २९ अथवामंत्रवद्ब्रूयुरात्मादानाय दुष्कृतम् ॥ सवैहेतुरनादानेशुद्धधर्मानुपालने ३०

वृद्धानामभिप्रायः । नहिंस्यात्सर्वभूतानीतिनिषेधःपुरुषार्थोनतुक्रत्वर्थः । येनाग्नीषोमीयंपशुमालभेतेत्यनेनसमानविषयत्वंस्यात् । यथाआहवनीयेजुहोतीतिहोमार्थस्याहवनीय स्यपदेजुहोतीतिहोमार्थेनैवपदेनापवादस्तद्वत् । नचपुरुषार्थस्यसतःक्रत्वर्थत्वमपिनिषेधस्यवक्तुंयुक्तंकर्त्रधिकरणविरोधात् । तत्रहिपुरुषार्थेनानृतंवदेदितिनिषेधेसत्यपिदर्शपूर्णमासप्रकर णेपुनःक्रत्वर्थतयानानृतंवदेदित्यनृतवदनंनिषिध्यतेक्रतुमध्येकारणविशेषात्पुरुषार्थनिषेधोल्लंघनेतुक्रतुवैकल्यंमाभूदिति । तस्माद्भिन्नविषयत्वाद्धिंसाविधितन्निषेधशास्त्रयोःपरिहृत्यापवादमुत्सर्गः प्रवर्ततइत्यस्यन्यायस्याप्रवृत्तिः । अधिकारिभेदादपितत्रवदप्रवृत्तिः । गृहासक्तोहिहिंसाशास्त्रेऽधिक्रियतेनतुविरक्तः तस्ययदहरेवविरजेत्तदहरेवप्रव्रजेदितिप्रव्रज्याविधानात् । नचगृहाश्र मोऽपिनित्यः तस्यरागतःप्राप्तत्वाद्ब्रह्मचर्यादेवप्रव्रजेदितिविधिविरोधाच्च । तस्माद्यथाश्येनेनाभिचरन्यजेतेतिशास्त्राच्छत्रुमारणकामस्यश्येनोविधीयमानोहिंसात्मकफलद्वारानहिंस्यादि तिशास्त्रंनिरुंधेतद्वत्स्वर्गपश्वादिकामस्याग्नीषोमीयेनाज्योतिष्टोमेनस्वर्गकामोयजेतचित्रयायजेतपशुकामइत्यादिविधिःपशुबीजादिहिंसात्मकसाधनद्वारानहिंस्यादितिशास्त्रंनिरुणद्धितत्तश्चपुरु षःप्रत्यवैति यथोक्तं दृष्टवदानुश्रविकःसह्यविशुद्धिक्षयातिशययुक्तइति । यथादृष्टःसुखोपायोदोषादियुक्तएवंवैदिकोऽपीतिसांख्यकारिकार्थः । स्वमतमाह सवैइति सैवेतिपाठेऽपिसैषदाशरथी विवस्वान्ऋषिः सःमंत्रवान्यज्ञादिधर्मः अनादानेवैराग्येहेतुर्निमित्तंभवति चित्तशुद्धिद्वारानित्यानित्यवस्तुविवेकादिप्रदानाद्यामवति । तथाशुद्धधर्मःशमादिस्तस्यापिरक्षणेसएवयज्ञादिधर्मोभवति–

जयमर्थः । विविदिषंतियज्ञेनेत्यादिश्रुतेरश्वेनजिगमिषतीत्यादौगतावश्वस्येवविद्यायांयज्ञादीनांहिंसायुक्तधर्माणांसाधनत्वंगम्यते । तथाशांतोदांतइत्यादिनानिवृत्तिरूपस्याप्यहिंसादेर्धर्मस्यवि द्यासाधनत्वंगम्यते । यथाह्यावश्वौरथेनियुक्तावविरुद्धदिक्क्रियौसंतावेवैकंदेशंरथिनंनयतोनतुतयोरन्यतरस्यैकदपिविरुद्धदिक्क्रियत्वे एवंयज्ञहिंसापदप्यहिंसाशास्त्रविरोधीचेत्तेनसहैकार्थ्यनभजेदि तियज्ञादिव्यतिरिक्तहिंसायाएवाहिंसाशास्त्रेणानर्थहेतुताबोध्यतइति तथाचसूत्रम् । सर्वापेक्षाचयज्ञादिश्रुतेरश्ववदिति । यस्तुकाम्योयज्ञस्तस्यास्त्वंशतोदोषहेतुत्वंननःकिंचिच्छिन्नम् । स्वल्पः संकरःसपरिहारःसप्रत्यवमर्शइतिसांख्याचार्यवचनमपितद्विषयमेवपुण्यैकर्मणिस्वल्पोहिंसाजन्योऽधर्मसंस्कारःस्वल्पेनापिप्रायश्चित्तेनपरिहर्तुंशक्योऽपरिहारेवाफलकालेसोढुंशक्यःसुखसमुद्रमग्नो हिदुःखकणिकांसोढुमर्हतीतिसर्वमनवद्यं ३० वैदिकेऽपिकर्मणिराजसंतामसंकामक्रोधादिहेतुकंत्याज्यंसात्विकंसेव्यमित्याह श्लोकत्रयेण रजसेति अधर्मेतिच्छेदः लौकिकंतुराजसंतामसंचकर्मसुत रांत्याज्यमितिभावः ३१ । ३२ सात्विकंतुमुमुक्षूणांपथ्यमित्यर्थः ३३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ पूर्वाध्या



रजसाऽधर्मयुक्तानिकार्याण्यपिसमाप्नुते ॥ अर्थयुक्तानिचात्यर्थंकामान्सर्वांश्चसेवते ३१ तमसालोभयुक्तानिक्रोधजानिचसेवते ॥ हिंसाविहाराभिरतस्तंद्रीनिद्रास मन्वितः ३२ सत्वस्थःसात्विकान्भावान्शुद्धान्पश्यतिसंश्रितः ॥ सदेहीविमलःश्रीमान्श्रद्धाविद्यासमन्वितः ३३ ॥ इति श्री०शां०मो०वार्ष्णेयाध्यात्मकथनेद्वा दशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ भीष्मउवाच ॥ रजसासाध्यतेमोहस्तमसाभरतर्षभ ॥ क्रोधलोभौभयंदर्पएतेषांसादनाच्छुचिः १ परमंपरमात्मानंदेवम क्षयमव्ययम् ॥ विष्णुमव्यक्तसंस्थानंविदुस्तंदेवसत्तमं २ तस्यमायापिनद्धांगानष्टज्ञानाविचेतसः ॥ मानवाज्ञानसंमोहात्ततःक्रोधंप्रयांतिवै ३ क्रोधात्काममवाप्या थलोभमोहौचमानवाः ॥ मानदर्पावहंकारमहंकारात्ततःक्रियाः ४ क्रियाभिःस्नेहसंबंधात्स्नेहाच्छोकमनंतरम् ॥ सुखदुःखक्रियारंभाज्जन्माजन्मकृतक्षणाः ५ जन्मतो गर्भवासंतुशुक्रशोणितसंभवं ॥ पुरीषमूत्रविक्लेदंशोणितप्रभवाविलं ६ तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन् ॥ संसारतंत्रवाहिन्यस्तत्रबुद्ध्येतयोषितः ७ प्रकृत्याः क्षेत्रभूतास्तानराःक्षेत्रज्ञलक्षणाः ॥ तस्माद्देवाविशेषेणनरोऽतीयाद्विशेषतः ८ कृत्याह्येताघोररूपामोहयंत्यविचक्षणान् ॥ रजस्यंतर्हितामूर्तिरिंद्रियाणांसनातनी ९

यांविमंश्लोकत्रयंव्याख्यातुमयमध्यायआरभ्यते रजसेति रजस्तमसोःकार्यंमोहोविपर्ययोऽनात्मन्यात्मबुद्धिः । अज्ञानस्यहिद्वेशक्तीआवरणशक्तिर्विक्षेपशक्तिश्च । तत्राद्ययावस्तुस्वरूपंरज्ज्वा द्यात्रियते द्वितीययासर्पादिस्वरूपंविक्षिप्यते तेउभेअत्रक्रमेणतमोरजःशब्दाभ्यामुच्येते मोहजाःक्रोधादयः १ शुद्धेःफलंजीवब्रह्मात्मैक्यज्ञानमित्याह परममिति परमसात्यंतिकंपरंब्रह्मकोशपं चकातीतं । आत्मानंप्रत्यंचं परमात्मानमात्मानमितिपाठांतरंस्पष्टार्थं । अक्षयंनाशहीनमव्ययंन्हासहीनंविदुःप्राप्नुवन्तुइति इदानींतनोपिशुचिर्विंदतीत्यर्थः २ पिनद्धांगाःरूपाविभिर्जडीकृ तेंद्रियाः । अतएवनष्टज्ञानास्ततोविचेतसोनिर्विवेकाः । ज्ञानसंमोहाद्बुद्धिवैकल्याद्वाज्ञानाद्वा । क्रोधंविक्षिप्तचित्ततां ३ मानआत्मनिपूज्यताबुद्धिः । दर्पउच्छृंखलत्वं । अहंकारःपरेषांतु च्छीकरणम् ४ जन्माजन्मकृतक्षणाः जन्ममरणयोःकृतस्वीकाराः ५ । ६ तैःक्रोधादिभिर्बद्धस्तानभितःपरिप्लवंस्तदुंमिच्छन् हेतौशतृप्रत्ययः प्रथमंयोषितोहेयत्वेनजानीयात् यतस्ताः संसारपटस्यतंत्रमिवतंत्रंतंतुवितानंतंतुवायवद्वहंति ७ यथाप्रकृतिःक्षेत्रज्ञंबध्नात्येवमेताअपत्योत्पत्तिक्षेत्रभूताजीवंबध्नंतीत्यर्थः । अतीयादतिक्रामेत् संन्यसेदित्यर्थ । नचाभीयुरिति पाठेनानुसरेयुरित्यर्थः ८ शत्रुमारणार्थमंत्रमयीशक्तिः कृत्यासैवएताः रजसिरजोगुणेऽन्तर्हितासूक्ष्मरूपेणमृद्विघटाइवस्थिता इंद्रियाणांमूर्तिरिंद्रियैःकल्पितेत्यर्थः ९



तदात्मकात्स्त्रीप्रधानात् एतेनसार्धश्लोकेनदोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइतिगौतमसूत्रार्थोदर्शितः । अस्वसंज्ञान्प्रमानूवेतिसंज्ञाहीनान् कृमीन्यूकालिक्षादीन् अस्वकानन्नात्मान् १० शुक्रतोरेतोरूपात्स्नेहाद्यथाशतःपुत्राः । रसतःस्वेदरूपात्स्नेहाद्यूकादयः । एषांजंतूत्पत्तिःस्वभाववादेऽदृष्टवादेचसमानैवेत्यर्थः ११ एवंहेयमुक्त्वाज्ञेयमाह रजइति प्रवृत्तिप्रकाशात्मके रजःसत्वेतमसिलीयेते । तच्चतमोऽज्ञानाख्यंज्ञानाधिष्ठानमधिष्ठानभूतेज्ञानेऽध्यस्तंसद्बुद्ध्यहंकारयोर्लक्षणंज्ञापकंभवति १२ तद्बुद्ध्यहंकारविशिष्टमज्ञानंदेहिनांजीवानांदेहप्राप्तौबीजं । तस्य सकार्यस्याज्ञानस्यबीजमधिष्ठानभूतंज्ञानंतदेवजीवसंज्ञितंदेहिशब्दवाच्यं । तज्ज्ञानंबीजसंज्ञितमितिपाठेतत् अज्ञानविशिष्टंज्ञानंबीजमीश्वरस्तत्संज्ञंऐश्वर्यमेवाह कर्मणेति १३ अयंजीवई श्वरोवा गर्भमातुरुदरे १४ तत्रमांसपिंडभूतोऽसौपूर्ववासनावशाद्यंयंविषयंस्मरतितत्तद्ग्राहकमिंद्रियमस्याविर्भवतीत्याह कर्मणेत्यादिना १५ प्राणंगंधचिकीर्षयेतिएतस्यैववासनावशा

तस्मात्तदात्मकाद्रागाद्बीजाज्जायंतिजंतवः ॥ स्वदेहजानस्वसंज्ञान्यद्वदंगात्कृमींस्त्यजेत् ॥ स्वसंज्ञानस्वकांस्तद्वत्सुतसंज्ञान्कृमींस्त्यजेत् १० शुक्रतोरस तश्चैवदेहाज्जायंतिजंतवः ॥ स्वभावात्कर्मयोगाद्वातानुपेक्षेतबुद्धिमान् ११ रजस्तमसिपर्यस्तंसत्वंचरजसिस्थितम् ॥ ज्ञानाधिष्ठानमव्यक्तंबुद्ध्यहंकारलक्ष णम् १२ तद्बीजंदेहिनामाहुस्तद्बीजंजीवसंज्ञितम् ॥ कर्मणाकालयुक्तेनसंसारपरिवर्तनम् १३ रमत्ययंयथास्वप्नेमनसादेहवानिव ॥ कर्मगर्भैर्गुणैर्देहीगर्भेतदु पलभ्यते १४ कर्मणाबीजभूतेनचोद्यतेयद्यदिंद्रियम् ॥ जायतेतदहंकाराद्रागयुक्तेनचेतसा १५ शब्दरागाच्छ्रोत्रमस्यजायतेभावितात्मनः ॥ रूपरागात्त थाचक्षुर्घ्राणंगंधचिकीर्षया १६ स्पर्शनेत्वक्तथावायुःप्राणापानव्यपाश्रयः ॥ व्यानोदानौसमानश्चपंचधादेहयापनम् १७ संजातैर्जायतेगात्रैःकर्मजैर्ब्रह्मणा वृतः ॥ दुःखाद्यंतैर्दुःखमध्यैर्नरःशारीरमानसैः १८ दुःखंविद्यादुपादानादभिमानाच्चवर्धते ॥ त्यागात्तेभ्योनिरोधःस्यान्निरोधज्ञोविमुच्यते १९ इंद्रियाणांरज स्येवप्रलयप्रभवावुभौ ॥ परीक्ष्यसंचरेद्विद्वान्यथावच्छास्त्रचक्षुषा २० ज्ञानेंद्रियाणींद्रियार्थान्नोपसर्पंत्यतर्षुलम् ॥ हीनैश्चकरणैर्देहीनदेहंपुनरर्हति २१ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मकथने त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥ ॥ भीष्मउवाच ॥ अत्रोपायंप्र क्ष्यामियथावच्छास्त्रचक्षुषा ॥ तत्त्वज्ञानाच्चरन्राजन्प्राप्नुयात्परमांगतिम् १ सर्वेषामेवभूतानांपुरुषःश्रेष्ठउच्यते ॥ पुरुषेभ्योद्विजानाहुर्द्विजेभ्योमंत्रदर्शिनः २ सर्वभूतात्मभूतास्तेसर्वज्ञाःसर्वदर्शिनः ॥ ब्राह्मणावेदशास्त्रज्ञास्तत्त्वार्थगतनिश्चयाः ३

स्त्वदृत्वंदर्शितं १६ यापनंदेहयात्रानिर्वाहः १७ संजातैःसम्यङ्निष्पन्नैः गात्रैःश्रोत्रादिभिःकृत्वानरोवर्ष्मणाशरीरेणवृतःसन्जायते ब्रह्मणासहेतिपाठांतरं १८ दुःखाद्यंतरित्येत द्व्याचष्टे दुःखमिति उपादानाद्देहेंद्रियादीनांगर्भेंऽगीकारात् अभिमानाज्जन्मानंतरंदुःखंदेहवद्वर्धते एवंत्यागान्मरणादविवर्धतेऽतस्तेभ्योहेतुभ्योनिरोधोदुःखस्यस्यात्कर्तव्योयतोनिरोध ज्ञोविमुच्यते १९ रजस्यंतर्हितामूर्तिरिंद्रियाणामित्युपक्रांतमिंद्रियाणांरजोमात्रत्वमुपसंहरति इंद्रियाणामिति परीक्ष्येति रजोरूपप्रवृत्तिनिरोधेनेंद्रियनिरोधाद्दुःखनिरोधोभवतीत्यर्थः २० अतर्षुलंतृष्णाहीनं ज्ञानेंद्रियाणिनोपसर्पंतिनव्याप्नुवंति इंद्रियार्थान्प्राप्यापीतिशेषः तत्फलमाह हीनैरिति हीनैःक्षीणैः करणैरिंद्रियैः २१ ॥ इति शां०मो०नी०भा०त्रयोदशाधिक द्विशततमोऽध्यायः ॥ २१३ ॥ अत्रेंद्रियजयेज्ञानाद्यज्ञानंप्राप्यचरन्शमादीननुतिष्ठन् १ पुरुषोमनुष्यः द्विजास्त्रैवर्णिकाः मंत्रदर्शिनोब्राह्मणाः २ तत्त्वार्थप्रतिगतोनिश्चयोयेषाम् ३

ज्ञानविदोब्रह्मविदः ४ एवमुपायज्ञानप्रशस्यतद्गुणानाह तांस्तानिति यथागमंयथाशास्त्रंतांस्तान्निष्टापूर्तादीन् अर्थसामान्यंफलसाम्यंमोक्षाख्यंनिरतिशयं इमान्वक्ष्यमाणान् ५ गुणा नेवाह वागिति अनृतहिंसाकामादिराहित्यंवागादीनांशौचं सर्वेषुप्रवृत्तिमित्स्वात्मकेषुधर्मेषु ६ ब्रह्मणिचर्यांब्रह्मचर्ययोगधर्मः ब्रह्मणोरूपंब्रह्मप्रापकत्वात्तदभिन्नं परांगतिंमोक्षं ७ गतिमेवविशिनष्टि लिंगमिति लिंगंपंचप्राणमनोबुद्धिदशेंद्रियसंघातरूपं । तेनयत्रसंयोगोनास्त्यतएवशब्दादिहीनंश्रोत्रेणोपाधिनातदेवश्रवणंशब्दानुभवरूपमेवंरूपाद्यनुभवात्मकं तथाचशब्दादीनांव्यभिचारिस्त्वाद्यत्केवलानुभवरूपंतदेवमुख्यंब्रह्म निर्विकल्पकावस्थापरब्रह्मप्रापिकेत्यर्थः ८ वाचासंभाषाकथनं प्रवृत्तंयस्मिन्नतत्तथाभूतंयद्ब्रह्मचर्यंतन्मनोमनोमात्रेणाव स्थानंपरिवर्जितंविषयेंद्रियहीनं शब्देनवक्तुंयोग्यासविकल्पकावस्थेत्यर्थः यद्बुद्ध्याश्रवणमननोत्थयाअध्यवसीयीतनिश्चिनुयात् निर्विचिकित्संपरोक्षज्ञानमित्यर्थः ९ ब्रह्मचर्याणांक्रमेण

नेत्रहीनोयथाह्येकःकृच्छ्राणिलभतेऽध्वनि ॥ ज्ञानहीनस्तथालोकेतस्माज्ज्ञानविदोधिकाः ४ तांस्तानुपासतेधर्मान्धर्मकामायथागमम् ॥ नत्वेषामर्थसामान्यमं तरेणगुणानिमान् ५ वाग्देहमनसांशौचंक्षमासत्यंधृतिःस्मृतिः ॥ सर्वधर्मेषुधर्मज्ञाज्ञापयंतिगुणाञ्छुभान् ६ यदिदंब्रह्मणोरूपंब्रह्मचर्यमितिस्मृतम् ॥ परंत त्सर्वधर्मेभ्यस्तेनयांतिपरांगतिम् ७ लिंगसंयोगहीनंयच्छब्दस्पर्शविवर्जितम् ॥ श्रोत्रेणश्रवणंचैवचक्षुषाचैवदर्शनम् ८ वाक्संभाषाप्रवृत्तंयत्तन्मनःपरिवर्जि तम् ॥ बुध्याचाध्यवसीयीतब्रह्मचर्यमकल्मषम् ९ सम्यग्वृत्तिर्ब्रह्मलोकंप्राप्नुयान्मध्यमःसुरान् ॥ द्विजाग्र्योजायतेविद्वान्कन्यसींवृत्तिमास्थितः १० सुदुष्करं ब्रह्मचर्यमुपायंतत्रमेशृणु ॥ संप्रदीप्तमुदीर्णंचनिगृह्णीयाद्द्विजोरजः ११ योषितांनकथाश्राव्यानानिरीक्ष्यानिरंबराः ॥ कथंचिद्दर्शनादासांदुर्बलानांविशेद्रजः १२ रागोत्पन्नश्चरेत्कृच्छ्रंमहार्तिःप्रविशेदपः ॥ मग्नःस्वप्नेचमनसात्रिर्जपेदघमर्षणम् १३ पाप्मानंनिर्दहेदेवमंतर्भूतरजोमयम् ॥ ज्ञानयुक्तेनमनसासंततेनवि चक्षणः १४ कुणपामेध्यसंयुक्तंयद्वदच्छिद्रबंधनम् ॥ तद्वद्देहगतंविद्यादात्मानंदेहबंधनम् १५ वातपित्तकफान्रक्तंत्वङ्मांसंस्नायुमस्थिच ॥ मज्जादेहंशिराजालै स्तर्पयंतिरसान्नृणाम् १६ दशविद्याद्धमन्योऽत्रपंचेंद्रियगुणावहाः ॥ याभिःसूक्ष्माःप्रतायंतेधमन्योऽन्याःसहस्रशः १७ एवमेताःशिरानद्योरसोदादेहसाग रम् ॥ तर्पयंतियथाकालमापगाइवसागरम् १८ मध्येचहृदयस्यैकाशिरातत्रमनोवहा ॥ शुक्रंसंकल्पजंनृणांसर्वगात्रैर्विमुंचति १९

फलमाह सम्यगिति ब्रह्मैवलोकस्तंमोक्षं सुरान्सत्यलोकं कन्यसींकनीयसीम् १० संप्रदीप्तंसमुत्पन्नं उदीर्णंवृद्धिंगतंरजःकामादिरूपम् ११ रजोरागः १२ कृच्छ्रं 'त्र्यहंप्रातस्त्र्यहं सायंत्र्यहमद्यादयाचितं । त्र्यहंपरंचनाश्नीयात्प्राजापत्योयमुच्यते'इत्यादिनोक्तलक्षणं महार्तिःशुक्रवृद्ध्यात्यंतंपीडितः । अद्भिस्त्रिरितिवापाठः स्वप्नेचरेतःस्रावेऽप्सुमग्नः अघमर्षणसूक्तं चसत्यंचेत्यृक्त्रयम् १३ रागयुक्तेनेत्यपपाठः मनसानिर्दहेदितिसंबंधः १४ कुणपेतिशरीरांतर्गतंमलांत्रतयथाऽदृढबंधनमेवंदेहआत्मनोदृढबंधनमित्यर्थः १५ शिरानाड्यस्तासांजालैः १६ दशवातादिदशकवहाः धमन्योनाड्यः पंचस्विंद्रियेषुगुणंस्वस्वविषयग्रहणपाटवमन्नरसार्पणद्वाराआवहंतीतितथा याभिरश्वत्थपर्णशंकुतुल्याभिः १७ । हृदयस्यकदंबकुसुमाकार स्यमांसपिंडस्यमध्येमनोवहा । 'अन्नमयंहिसौम्यमनः'इतिश्रुतेरन्नरसैर्हृदयांतर्वर्तिमनःप्रीणनकरीनाडी यथोक्तं । 'अश्वत्थपत्रनाडीवद्धिसप्ततिकावाधिका । नाडीमनोवहेत्युक्तंयोगशास्त्र विशारदैः'इति साहिसर्वगात्रेभ्यःशुक्रमादायोपस्थोन्मुखंकरोति १९



एकाशिराकथंगात्रैःसंबद्धेत्यतआह सर्वगात्रेति तैजसंगुणमूष्माणं २० खजैर्मंथनदंडैः देहस्थात्संकल्पात्खेभ्यइंद्रियेभ्यश्चजातैःसंकल्पजैःखजैःस्त्रीदर्शनस्पर्शनादिभिः २१ शुक्रंसंकल्पजमित्ये तदुपपादयति स्वप्नेऽपीति स्त्रीसंगाभावेऽपिसंकल्पजंरजःस्त्रीरागोयथाभ्येतितथैवमनोवहानाडीशुक्रंसृजति २२ त्रीणिअन्नरसोमनोवहानाडीसंकल्पश्चेतिबीजानियस्यत्रिबीजमित्यपपाठः २३ भूतानांशुक्रोत्रेकादनुलोमप्रतिलोमगमनाद्वर्णसंकरकारिकांविद्युर्विचारयेयुः विचार्यविरागादग्धदोषानिर्बीजमनाः २४ देहानवाप्तावनुष्ठेयांतरमाह गुणानामिति मनसैवगुणसाम्यंनिर्विकल्पत्वमा गम्ययोगबलेनासाद्यमनोवहंसत्यलोकप्रदंपूर्वोक्तसुषुम्नाख्यनाडीमार्गंप्रत्यंतकालेप्राणान्नुदन्प्रेरयन्विमुच्यते । कःयोदेहकर्मादेहनिर्वाहमात्रार्थकर्मयस्य । बाह्यप्रवृत्तिशून्यइत्यर्थः २५ देहबं धच्छेदेयोगमार्गक्रममुक्तिदमुक्त्वाजीवन्मुक्तिकरंज्ञानमार्गमाह भवितेति मनसेविश्वात्मकत्वज्ञानंभवितामविष्यति । कीदृशंतद्ज्ञानंमनएवप्रनायतइतिस्वप्नइवसर्वविषयाकारंभवतीति । एत

सर्वगात्रप्रतायिन्यस्तस्याह्यनुगताःशिराः ॥ नेत्रयोःप्रतिपद्यंतेवहंत्यस्तैजसंगुणम् २० पयस्यंतर्हितंसर्पिर्यद्वन्निर्मथ्यतेखजैः ॥ शुक्रंनिर्मथ्यतेतद्वद्देहसंक ल्पजैःखजैः २१ स्वप्नेऽप्येवयथाऽभ्येतिमनःसंकल्पजंरजः ॥ शुक्रंसंकल्पजंदेहात्सृजत्यस्यमनोवहा २२ महर्षिर्भगवानत्रिर्वेदतच्छुक्रसंभवम् ॥ त्रिबीजमिंद्र दैवत्यंतस्मादिंद्रियमुच्यते २३ येवैशुक्रगतिंविद्युर्भूतसंकरकारिकाम् ॥ विरागादग्धदोषास्तेनाप्नुयुर्देहसंभवम् २४ गुणानांसाम्यमागम्यमनसैवमनोवहम् ॥ देह कर्मानुदन्प्राणानंतकालेविमुच्यते २५ भवितामनसोज्ञानंमनएवप्रजायते ॥ ज्योतिष्मद्विरजोनित्यंमंत्रसिद्धंमहात्मनाम् २६ तस्मात्तदभिघातायकर्मकुर्या दकल्मषम् ॥ रजस्तमश्चहित्वेहयथेष्टांगतिमाप्नुयात् २७ तरुणाधिगतंज्ञानंजरादुर्बलतांगतम् ॥ विपक्वबुद्धिःकालेनआदत्तेमानसंबलम् २८ सुदुर्गमिवपं थानमतीत्यगुणबंधनम् ॥ यथापश्येत्तथादोषानतीत्यामृतमश्नुते २९ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मकथने चतुर्दशा धिकद्विशततमोऽध्यायः ॥ २१४ ॥ ॥ भीष्मउवाच ॥ दुरंतेष्विंद्रियार्थेषुसक्ताःसीदंतिजंतवः ॥ येत्वसक्तामहात्मानस्तेयांतिपरमांगतिम् १ जन्ममृत्यु जरादुःखैर्व्याधिभिर्मनसःक्लमैः ॥ दृष्ट्वेमंसंततंलोकंघटेन्मोक्षायबुद्धिमान् २ वाङ्मनोभ्यांशरीरेणशुचिःस्यादनहंकृतः ॥ प्रशांतोज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सु खम् ३ अथवामनसःसंगंपश्येद्भूतानुकंपया ॥ तत्राप्युपेक्षांकुर्वीतज्ञात्वाकर्मफलंजगत् ४

ज्ञानवतःफलमाह मंत्रसिद्धंप्रणवोपास्तिसिद्धंमनोनित्यमनादिमायामात्रंसद्विरजंनिर्वासनंज्योतिष्मत्प्रकाशवत्सर्वज्ञंसर्वशक्तिचभवति यथोक्तंवासिष्ठे । 'विगतवासनामाशुविपाशतामुप गतंमनआत्मतयोदितंयदभिवांछतितद्भवतिक्षणात्सकलशक्तिमयोहिमहेश्वरः'इति २६ तदभिघातायमनोनाशाय अकल्मषंनिवृत्तिरूपं यथायेनप्रकारेण इष्टांगतिंमोक्षं २७ जरयादुर्बलतातां तृतीयातत्कृतार्थेनेतिसमासः मानसंबलंसंकल्पमादत्तेसंहरति कालेपूर्वभाग्येननतुदृष्टयोग्यतया २८ गुणादेहेंद्रियादयस्तदेवबंधनं २९ इतिशांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीयेभारत भावदीपे चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥ ॥ ७ ॥ ॥ ७ ॥ पूर्वोक्तबंधनेऽमृतेचाधिकारिभेदानाह दुरंतेष्विति १ क्लमैःक्लेशैःसंततंव्याप्तंदृष्ट्वैवंनतुममेदानींक्लेशोनास्ती त्युपेक्षेत २ वदनमेवाह्याध्यायेन वागिति ३ अथवेत्यप्ययं भूतानुकंपयापिमनसःसंगंबंधंपश्येत् यथोक्तं । 'कृपयापिकृतःसंगःपतनायैवयोगिनां ॥ इतिसंदर्शयन्नाहभरतस्यैणपोषणं'इति ४

५ शुभंकर्माहाहिंसेति ६ बुद्धयेदंसर्वंयदयमात्मेतिशास्त्रोत्थयासमाहितंस्थिरंरागद्वेषशून्यमेनमहिंसादिरूपं ७ । ८ अशुभंवर्ज्यमित्याहसार्धेन नापेति नापध्यायेत्परानिष्टंनचिंतयेत् । अबद्धंस्वस्यायोग्यंराज्यादिरंकोनस्पृहयेत् । असन्नष्टंमाविवाख्रीपुत्रादिकंनचिंतयेत् । अथामोघेतियत्नस्यावश्यंभाविफलत्वंसूचितं । ज्ञानेज्ञानसाधनेऽमानित्वादौश्रवणादौच । वाचामो घप्रयासेनेतिपाठेवाचावेदांतवाक्येन । अवागोवप्रयोगेणेतिपाठेवागितिवागादींद्रियव्यापारोलक्ष्यते ओघइतिकालपरिणाममपेक्ष्यऋतुलिंगवत्स्वयमेवज्ञानाख्याचित्तपरिणामोभाविष्याति किमुत्तप्रयतेत्युपदेशेयाश्रेयोबुद्धिःसाकालाख्यातुष्टिरोघशब्दार्थः तदुभयंयत्रनास्तितादृशोयमनियमादीनांयोगांगानांप्रयोगस्तेनतत्वज्ञानंप्रवर्तते ९ सद्वाक्यंविवक्षतापुरुषेणेदृग्वक्तव्यं इद कथं यदहिंस्त्रांवाचंवदेदितिद्वयोःसंबंधः १० कल्कापेतांशाठ्येनहीनां ११ संसारऐहिकआमुष्मिकोऽर्थःसर्वोवाचैवप्रबद्धोऽस्त्यतःसाध्वीमेववाचंवदेत् । वैराग्यंचेत्तामसंहिंसादिकंकर्मापिस्वीयं

यत्कृतंस्याच्छुभंकर्मपापंवायदिवाऽश्नुते ॥ तस्माच्छुभानिकर्माणिकुर्याद्वाग्बुद्धिकर्मभिः ५ अहिंसासत्यवचनंसर्वभूतेषुचार्जवम् ॥ क्षमाचैवाऽप्रमादश्चयस्यै तेससुखीभवेत् ६ तस्मात्समाहितंबुद्ध्यामनोभूतेषुधारयेत् ॥ यश्चैनंपरमंधर्मंसर्वभूतसुखावहम् ७ दुःखान्निःसरणंवेदसर्वज्ञःससुखीभवेत् ॥ तस्मात्समा हितंबुद्ध्यामनोभूतेषुधारयेत् ८ नापध्यायेन्नस्पृहयेन्नाबद्धंचिंतयेदसत् ॥ अथामोघप्रयत्नेनमनोज्ञानेनिवेशयेत् ॥ वाचामोघप्रयासेनमनोज्ञंतत्प्रवर्तते ९ विवक्षताचसद्वाक्यंधर्मंसूक्ष्ममवेक्षता ॥ सत्यांवाचमहिंस्त्रांचवदेदनपवादिनीम् १० कल्कापेतामपरुषामनृशंसामपैशुनाम् ॥ ईदृगल्पंचवक्तव्यमविक्षिप्तेन चेतसा ११ वाक्प्रबद्धोहिसंसारोविरागाद्व्याहरेद्यदि ॥ बुद्ध्याप्यनुगृहीतेनमनसाकर्मतामसम् १२ रजोभूतैर्हिकरणैःकर्मणिप्रतिपद्यते ॥ सदुःखंप्राप्यलो केऽस्मिन्नरकायोपपद्यते ॥ तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः १३ प्रकीर्णमेषभारंहियद्वद्धार्येतदस्युभिः ॥ प्रतिलोमांदिशंबुद्ध्वासंसारमबुधास्तथा १४ तमेवचयथादस्युःक्षिप्त्वागच्छेच्छिवांदिशम् ॥ तथारजस्तमःकर्माण्युत्सृज्यप्राप्नुयाच्छुभम् १५ निःसंदिग्धमनीहोवैमुक्तःसर्वपरिग्रहैः ॥ विविक्त चारीलघ्वाशीतपस्वीनियतेंद्रियः १६ ज्ञानदग्धपरिक्लेशःप्रयोगरतिरात्मवान् ॥ निष्प्रचारेणमनसापरंतदधिगच्छति १७ धृतिमानात्मवान्बुद्धिंनिगृह्णी यादसंशयम् ॥ मनोबुद्ध्यानिगृह्णीयाद्विषयान्मनसाऽऽत्मनः १८ निगृहीतेंद्रियस्यास्यकुर्वाणस्यमनोवशे ॥ देवतास्तत्प्रकाशंतेहृष्टायांतितमीश्वरम् १९

व्याहरेत् । पुण्यंपापंवाकर्मस्वमुखेनप्रकाशितंचेन्नश्यतीतिभावः १२ रजोभूतैःप्रवृत्तिपरैः फलितमाहार्धेन तस्मादिति १३ सदृष्टांतंकर्मसंन्यासमाह प्रकीर्णमितिद्वाभ्यां आमिषभारंवहंतश्चोराग म्यांदिशंराजकीयाद्यवरोधात्प्रतिकूलांबुद्ध्वाआमिषंत्यक्त्वान्यादिशंगच्छंतोयथानबद्ध्यंते। एवमाविद्यकंकर्मादायकामाद्यभिमुखःसंसारमयंबुद्ध्वाकर्माणित्यजन्नबद्ध्यतेइतितात्पर्यम्। प्रकी र्णमेषोविशस्तमेषः आमिषमित्यर्थः तस्यभारः क्लीबत्वमार्षं १४।१५ अनीहश्चेष्टाशून्यः तपस्वीमनसश्चेंद्रियाणांचैकाग्र्यंपरमंतपस्तद्वान् १६ प्रयोगोयोगांगानामनुष्ठानंतत्ररतिःप्रीतिर्यस्यानि ष्प्रचारेणनिरुद्धेन 'बुद्धिश्चनविचेष्टतितामाहुःपरमांगति'इतिश्रुतेः १७ आत्मवान्बुद्धिमान् बुद्धिमहंब्रह्मास्मीतिवाक्यजाधीवृत्तिं मनःसंकल्पविकल्पात्मकं बुद्ध्यातयावृत्त्या मनसाविषयान् शब्दादीन् तेषांविशेषणमात्मनइति मनोरूपानित्यर्थः १८ योगावांतरफलमाह निगृहीतेति ततस्यामवस्थायांदेवताइंद्रियाणितंयोगिनमीश्वरंयांतिप्रविशंति एतेनतत्तउत्पन्नत्वमपिज्ञेयम् १९



ताभिर्देवताभिःसंयुक्तमैकात्म्यंगतंमनोयस्यधीमात्रेणस्थायिनः सत्त्वेधीमात्रे ब्रह्मभूयायब्रह्मभावाय मुक्तोभावेइतिक्यप् २०. नप्रवर्तेतयोगैश्वर्ये नप्रकाशेतेतिपाठेऐश्वर्येणयोगीविदितोन भवेत् योगतंत्रैरविरोधप्रधानैरेवयत्नैरुपक्रमेत सत्यसंकल्पादीन्नभावयेत्किंत्वस्थूलत्वादीनेवेत्यर्थः ननुकथमेकस्यात्मवस्तुनःसगुणत्वंनिर्गुणत्वंचेत्यतआह येनेति तंत्रंतंत्रप्रतिपाद्यंयोगंतंत्र यतःअनुतिष्ठतःयेनरूपेणविशिष्टावृत्तिःस्यात्तत्तदाचरेत् । सविशेषत्वंवृत्त्युपाधिकृतंस्वतस्तुनिर्विशेषत्वमेवेतिभावः २१ कणेति कणादीनपिभक्षयेन्नतुयोगैश्वर्यमुपजीवेत्येत्यर्थः । कुल्मा षाःपक्वमाषाः यावकंयवचूर्णंजलोष्मपक्वं सक्तवःसक्तून् २२ । २३ प्रवृत्तंकर्मतदनुरोधेनयोगिंऽतरायंनकुर्यात् ज्ञानान्वितंकर्मक्रमेणइंधयेद्वर्धयेत् तथाकुर्वतोज्ञानंब्रह्मप्रकाशते २४ नन्वात्माभिन्नस्यज्ञानस्याप्रकाशायोगात्कथंप्रकाशतइत्युक्तिरतआह ज्ञानेति त्रींल्लोकान्जाग्रदादीन् विज्ञानंबुद्धिस्तदनुगतं । 'सधीःस्वप्नोभूत्वाध्यायतीवलेलायतीव'इत्यादिश्रुतेः । अज्ञाने नानात्मादावात्मादिबुद्धिरूपेणविपर्ययेणप्रकाशमानमपिज्ञानमवस्थात्रयकालुष्यादप्रकाशमानमिवेत्यर्थः २५ ननुसांशमंशतःप्रकाशतेनतुनिरंशमतोऽस्यसर्वात्मनाऽप्रकाशःप्रकाशोवाबाच्यइ

ताभिःसंयुक्तमनसोब्रह्मतत्संप्रकाशते ॥ शनैश्चापगतेसत्त्वेब्रह्मभूयायकल्पते २० अथवानप्रवर्तेतयोगतंत्रैरुपक्रमेत् ॥ येनतंत्रयतस्तंत्रंवृत्तिःस्यात्तत्तदाचरेत् २१ कणकुल्माषपिण्याकशाकयावकसक्तवः ॥ तथामूलफलंभैक्ष्यंपर्यायेणोपयोजयेत् २२ आहारनियमंचैवदेशेकालेचसात्त्विकम् ॥ तत्परीक्ष्यानुवर्तेततत्प्र वृत्त्यनुपूर्वकम् २३ प्रवृत्तंनोपरुंधेत्शनैरग्निमिवेंधयेत् ॥ ज्ञानान्वितंतथाज्ञानकर्मवत्संप्रकाशते २४ ज्ञानाधिष्ठानमज्ञानंत्रींल्लोकानधितिष्ठति ॥ विज्ञानानु गतंज्ञानमज्ञानेनापकृष्यते २५ पृथक्त्वात्संप्रयोगाच्चनासूयुर्वेदशाश्वतम् ॥ सतयोरपवर्गज्ञोवीतरागोविमुच्यते २६ वयोतीतोजरामृत्यूजित्वाब्रह्मसनातनम् ॥ अमृतंतदवाप्नोतियत्तदक्षरमव्ययम् २७ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मकथने पंचदशाधिकद्विशततमो ऽध्यायः ॥ २१५ ॥ ॥ ७ ॥ ॥ भीष्मउवाच ॥ निष्कल्मषंब्रह्मचर्यमिच्छताचरितुंसदा ॥ निद्रासर्वात्मनात्याज्यास्वप्नदोषानवेक्षता १ स्वप्नेहिरज सादेहीतमसाचाभिभूयते ॥ देहांतरमिवापन्नश्चरत्यपगतस्पृहः २ ज्ञानाभ्यासाज्जागरणंजिज्ञासार्थमनंतरम् ॥ विज्ञानाभिनिवेशात्तुसजागर्त्यनिशंसदा ३

त्याशंक्याह पृथक्त्वादिति अवस्थात्रयातीतमपितत्संप्रयुक्तत्वेनयुक्तमसूयुःशाश्वतमनुपाधिमात्मानंदूषयन्तंनवेद तयोःपृथक्त्वापृथक्त्वयोरपवर्गपर्यंतं । रूपवृत्तेतिपाठेरूपवृत्तंस्वभावरूपम बाध्यत्वेनबाध्यत्वेनचजानन् २६ वयोतीतोजितकालः ततोवीतजरामृत्युर्जरिवेतिपाठांतरंसुगमम् २७ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ पूर्वंप्रयोगैश्वर्यमनुभूयाननुभूयवाब्रह्मप्रविशेदित्युक्तंतत्रैश्वर्यानुभवंनिंदितुमारभते नि ष्कल्मषमिति निष्कामंब्रह्मचर्ययोगं निद्राअविद्यामोहकत्वात्त्याज्या स्वप्नेति 'तस्यत्रयआवसथास्त्रयःस्वप्नाः'इतिश्रुतेः जाग्रत्स्वप्नाविवयोगैश्वर्यमपिसंप्रज्ञातकालिकंस्वप्नप्रवत्तद्दोषादेवां गनाभंत्रणादयस्तान् १ स्वप्नेद्विविधेऽपि देहीयोगीअयोगीवा २ उक्तनिद्राप्रतियोगिजागरणमाह ज्ञानाभ्यासादिति 'तच्चिंतनंतत्कथनमन्योन्यंतत्प्रबोधनं ॥ एतदेकपरत्वंचज्ञाना भ्यासंविदुर्बुधाः'इत्युक्तविधाज्ज्ञानाभ्यासात् । जिज्ञासाविचारोऽर्थःप्रयोजनमस्यतज्जागरणमनंतरमनवरतं । ज्ञाततत्त्वस्यतुमुख्यंजागरणमित्याह विज्ञानेति ३

अत्राहपूर्वपक्षीतिशेषः स्वप्नेदृश्यमानोऽयंदेहादिर्भावःपदार्थःकोनु नुर्वितर्के किंसत्योऽसत्योवेतिविकल्पायेबाधानुपपत्तिरितिसूचयति विषयवानिवेति इवकारेणवस्तुतोनविषयवानित्यर्थः । ननुयथोपरिस्थोर्कोजलेऽधस्थइवाभातितद्वज्जाग्रद्देहादिरेवान्यथास्वप्नेभातीतिनतावतास्वप्नस्यानिर्विषयत्वमित्याशंक्याह प्रलीनैरिति दृष्टांतेजलोपरिसंहत्यस्थितेनार्कतेजसाप्रतिहतंचाक्षुषं तेजोऽप्रविलीनंप्रतिस्रोतःप्रवृत्तंसदुपरिस्थमप्यर्कंप्राक्प्रवृत्तिसंस्कारादधइवविषयीकरोति अत्रत्विंद्रियाणिविलीनानीतिभेदः । अन्यथाप्रतिबिंबभ्रमसमयेपुरोवर्तिद्रव्यांतरवद्वायद्देशादिकम पिस्वप्नेदृश्येत तस्मात्स्वाप्नोभावोनसत्यइत्यर्थः । नाप्यसत्यः असत्यस्यशशशृंगादेर्भानायोगात् ४ एवंयुक्त्यानिरुद्धगतिकःसिद्धांत्यनुभवबलेनैवोत्तरयति अत्रोच्यतइति योगेश्वरइतिहारिरिति चहेतुगर्भविशेषणद्वयं योगिसंकल्पमात्रएवस्वाप्नोभावोवस्तुतुस्यात्तुतदभावएवेतिभावः । एतच्चयथाहरिर्वेदतथामहर्षयोवर्णयंति उपपन्नार्थंयुक्तिमच्चैतदित्यर्थः । 'संकल्पादेवास्यपितरःसमुत्तिष्ठंति' इतिश्रुतेर्यथायोगिसंकल्पजंपित्रादिकंतथाऽस्मत्संकल्पजंखादिकमितिसुवचमित्याशयः ५ सर्वगतंसर्वप्राणिप्रसिद्धं इंद्रियाणामुपरमेसंकल्पस्वभावस्यमनसोऽनुपरमःस्वप्नइत्यर्थः । तत्तस्मिन्स्व प्नेविषये तत्प्रसिद्धंवक्ष्यमाणंनिदर्शनंदृष्टांतः ६ तमेवाह कार्येइति मनोरथवृत्तिवत्स्वाप्नवृत्तिरपिसंकल्पमात्रशरीरातथाप्यायेइंद्रियैर्विक्षेपात्सम्यङ्नप्रतिभासःस्वप्नेतदभावाज्जाग्रद्वद्भानंसम्य

अत्राहकोन्वयंभावःस्वप्नेविषयवानिव ॥ प्रलीनैरिंद्रियैर्देहीवर्ततेदेहवानिव ४ अत्रोच्यतेयथाह्येतद्वेदयोगेश्वरोहरिः ॥ तथैतदुपपन्नार्थंवर्णयंतिमहर्षयः ५ इंद्रि याणांश्रमात्स्वप्नमाहुःसर्वगतंबुधाः ॥ मनसस्त्वप्रलीनत्वात्तत्तदाहुर्निदर्शनं ६ कार्यव्यासक्तमनसःसंकल्पोजाग्रतोह्यपि ॥ यद्वन्मनोरथैश्वर्यंस्वप्नेतद्वन्मनोगतम् ७ संसाराणामसंख्यानांकामात्मातदवाप्नुयात् ॥ मनस्यंतर्हितंसर्वंसवेदोत्तमपूरुषः ८ गुणानामपियद्येतत्कर्मणाचाप्युपस्थितम् ॥ तत्तच्छंसंतिभूतानिमनो यद्भावितंयथा ९ ततस्तमुपसर्पंतिगुणाराजसतामसाः ॥ सात्विकावायथायोगमानंतर्यफलोदयम् १० ततःपश्यंत्यसंबुद्धयावातपित्तकफोत्तरान् ॥ रजस्तमो गतैर्भावैस्तदप्याहुर्दुरत्ययम् ११ प्रसन्नैरिंद्रियैर्यद्यत्संकल्पयतिमानसम् ॥ तत्तत्स्वप्नेऽप्युपगतेमनोह्यप्यनिरीक्षते १२ व्यापकंसर्वभूतेषुवर्ततेऽप्रतिघंमनः ॥ आ त्मप्रभावात्तंविद्यात्सर्वाह्यात्मनिदेवताः १३ मनस्यंतर्हितंद्वारंदेहमास्थायमानुषं ॥ यद्यत्सदसदव्यक्तंस्वपित्यस्मिन्निदर्शनं ॥ सर्वभूतात्मभूतस्थंतमध्यात्मगुणंविदुः १४

ग्भानमितिविशेषइत्यर्थः ७ स्वप्नादेर्मनोगतत्वंव्याचष्टेसंसाराणामिति प्राचीनानंतजन्मसंस्कारात्कामात्माविषयासक्तचित्तस्तत्स्वप्नाद्यैश्वर्यमवाप्नुयात् कथंतद्वाप्नोतीत्याह सउत्तम पूरुषोऽसंहतःसाक्षीमातृमानमेयाकारंमनोवेदप्रकाशयति । नविक्रियारूपंभोक्तृत्वंसाक्षिणोऽपितुसाक्ष्यप्रकाशकत्वमात्रं । यस्तुविक्रियावान्प्रमातासदृश्यकोटिस्थएवनतुसाक्षीत्यर्थः ८ गुणानांसत्वादीनांमध्येयद्यत्कर्मणाप्राचीनेनसत्वंरजस्तमोवाउपस्थितंभवति येनचकर्मणाभावितंसंस्कृतंमनोयदाभवतितदाभूतानिसूक्ष्माणितत्तच्छंसंतितत्तद्रूपाद्याकारंस्वप्नेनिवेदयंतीत्यर्थः ९ ततआकारदर्शनानंतरं आनंतर्यफलोदयमनंतरमेवसुखाद्युदयंयथास्यात्तथातमुपसर्पंति १० असंबुद्धयाऽज्ञानात् वाताद्युत्तरान्त्रिधातुकान्देहान्पश्यंति तद्देहदर्शनंतुदुरत्ययंप्रा ग्वासनाप्राबल्याद्योगंविनाऽपरिहार्यं ११ तत्तत्तस्मिंस्तस्मिन् १२ व्यापकमुपादानत्वादप्रतिघातशून्यं तत्रहेतुः आत्मप्रभावाच्चमात्मानंदेवताआकाशाद्याः आत्मज्ञानात्सार्वज्ञ्यंसार्वात्म्यं चप्राप्नोतीत्यर्थः १३ एवंस्वप्नावस्थामुक्त्वासुषुप्त्यवस्थामाह मनसीतिसार्धेन द्वारंस्वप्नदर्शनेद्वारभूतंस्थूलंदेहंमनस्यंतर्हितमास्थायतत्रैवदेहेस्वपितीतिस्वमात्मानमपिप्रविगच्छति । कुत्र अस्मिन्नव्यक्तेसदसदात्मकेमायाशबले । निदर्शनंनिश्चितदर्शनंसाक्षिरूपं तदेवसर्वेषांभूतानामात्मभूतोऽहंकारस्तत्रप्रतिबिंबात्मनाविद्यतीतितथा । अध्यात्मगुणमात्माऽहंकारःगुणाश्चप्रकृ तिरूपास्तेषामुपरीत्यध्यात्मगुणं । अहंकारादिगुणैरस्पृष्टंबिंबात्मकत्वात्सुषुप्तौशुद्धसाक्षिण्येवाहंकारादयोलीयंतेइत्यर्थः १४



दृष्टांतभूतेस्वप्नसुषुप्तीउक्त्वादार्ष्टांतिकेसबीजनिर्बीजावस्थेयोगिगम्येब्रह्माद्यासंप्रज्ञातावस्थामाह लिप्सेतेति ऐश्वरंगुणंज्ञानवैराग्यैश्वर्यधर्मैश्वर्यतत्त्वमात्मप्रसादंचित्तप्रसादं शुद्धंमनईश्वरइत्यर्थः १५ तपसाविषयाद्यालोचनेनयुक्तंमनएवंभूतंभवति तमसःपरंप्राप्तंतुमनःअर्कवज्ज्ञप्तिमात्रमेवभवति । तत्रोभयविधब्रह्मभावंदेहिनआह त्रैलोक्येति देहांजीवस्त्रैलोक्यप्रकृतिः कारणंब्रह्मे त्यर्थः । कारणीभूततमसोंतेतुसएवमहेश्वरः शुद्धब्रह्मभूतएवेत्यर्थः । यथोक्तं 'सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते । सोपाधिकःस्यात्सर्वात्मानिरुपाख्योऽनुपाधिकः'इति १६ तपइ ति अग्निहोत्रादिकंतपः तमदंभदर्पादि एतद्ब्रह्मदेवासुरैर्हेतुभूतैरजस्तमोमयैर्नप्राप्यमितिगुप्तंप्रजापतिना कीदृशंज्ञानलक्षणंज्ञानस्वरूपं १७ इममेवविभागंविभजतेसत्वमिति १८ तत्पर मंतेभ्यःसात्विकासात्विकेभ्योभावेभ्यउत्कृष्टं ज्ञानमेवनतुज्ञेयं अमृतंज्ञानांतराबाध्यं ज्योतिःस्वप्रकाशमक्षरंव्यापकं भावितात्मानःध्यानादिनाशोधितचित्ताः १९ उपसंहरति हेतुमदि ति ज्ञानचक्षुषातत्त्वदर्शिनाएतावद्वाच्यएतस्यासगुणंलक्षणयाचनिर्गुणं । हेतुमद्युक्तियुक्तंयथास्यात्तथाआख्यातुंशक्यंनतुशृंगग्राहिकयाप्रदर्शयितुं । श्रवणमननाभ्यांविदितशास्त्रयुक्तितत्त्व

लिप्सेतमनसायश्चसंकल्पादैश्वरंगुणम् ॥ आत्मप्रसादंतंविद्यात्सर्वाह्यात्मनिदेवताः १५ एवंहितपसायुक्तमर्कवत्तमसःपरम् ॥ त्रैलोक्यप्रकृतिर्देहीतमसोंतेमहे श्वरः १६ तपोह्यधिष्ठितंदेवैस्तपोघ्नमसुरैस्तमः ॥ एतद्देवासुरैर्गुप्तंतदाहुर्ज्ञानलक्षणम् १७ सत्वंरजस्तमश्चेतिदेवासुरगुणान्विदुः ॥ सत्वंदेवगुणंविद्यादितरा वासुरौगुणौ १८ ब्रह्मतत्परमंज्ञानममृतंज्योतिरक्षरम् ॥ येविदुर्भावितात्मानस्तेयांतिपरमांगतिम् १९ हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा ॥ प्रत्या हारेणवाशक्यमक्षरंब्रह्मवेदितुम् २० ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मकथनेषोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ ॥ भीष्मउवाच ॥ नसवेदपरंब्रह्मयोनवेदचतुष्टयम् ॥ व्यक्ताव्यक्तेचयत्तत्त्वंसंप्रोक्तंपरमर्षिणा १ व्यक्तंमृत्युमुखंविद्यादव्यक्तममृतंपदम् ॥ प्रवृत्तिलक्षणंधर्म मृषिर्नारायणोऽब्रवीत् २ तत्रैवाऽवस्थितंसर्वंत्रैलोक्यंसचराचरम् ॥ निवृत्तिलक्षणंधर्ममव्यक्तंब्रह्मशाश्वतम् ३ प्रवृत्तिलक्षणंधर्मंप्रजापतिरथाब्रवीत् ॥ प्रवृ त्तिःपुनरावृत्तिर्निवृत्तिःपरमागतिः ४ तांगतिंपरमामेतिनिवृत्तिपरमोमुनिः ॥ ज्ञानतत्त्वपरोनित्यंशुभाऽशुभनिदर्शकः ५ तदेवमेतौविज्ञेयावव्यक्तपुरु षावुभौ ॥ अव्यक्तपुरुषाभ्यांतुयत्स्यादन्यन्महत्तरम् ६

स्यप्रत्याहारेणविषयेभ्यइंद्रियाणामाकर्षणेनब्रह्मवेदितुंशक्यंयोगांगेषुप्रत्याहारएवदुःशकइतरत्सुसंपादमतोब्रह्मप्राप्तिकामेनेंद्रियाणिजेतव्यानीत्यर्थः २० ॥ इतिशां० मो० नी० भा० षोडशा धिकद्विशततमोऽध्यायः ॥ २१६ ॥ उक्तंवक्ष्यमाणंचसाधनजातंसमुच्चिनोति नसइति धर्ममितिपाठेअयंतुपरमोधर्मोयद्योगेनात्मदर्शनमितियाज्ञवल्क्योक्तलक्षणंधर्मं । चतुष्टयंपूर्वोक्तंदृष्टांतभूतं स्वप्नसुषुप्त्याख्यंद्वयंदार्ष्टांतिकंचसगुणनिर्गुणब्रह्मभावाख्यंद्वयमितिचतुष्टयं व्यक्तंदृश्यं अव्यक्तंचिदात्मा यत्तत्त्वमनारोपितंरूपंयस्यतत्परमर्षिणानारायणेन १ व्यक्ताव्यक्तयोस्तत्त्वंस्वरूपतःफल तश्चाह द्वाभ्यां व्यक्तमिति ऋषिर्वेदःसएवनारायणवाक्यत्वान्नारायणः २ ब्रह्मांडाधिपत्यांतसर्वकर्मफलांतर्भूतमित्यर्थः निवृत्तिर्देहेंद्रियाहंकारातानांबाधस्तल्लक्षणोधर्मस्तुब्रह्मैव ३ प्रजापतिः स्रष्टारजोमयत्वात् ४ तांएषोऽस्यपरमआनंदएषाऽस्यपरमासंपदितिश्रुतिप्रसिद्धांकैवल्यावस्थांशुभाशुभेभुक्तिसंसारौनिश्चयेनद्रष्टुमिच्छन् तुमुन्ण्वुलौक्रियायांक्रियार्थायामितिण्वुल् । ज्ञानतत्त्वं चिदात्मतत्त्वंतद्विचारपरोनित्यंस्यात् ५ तत्तत्रतत्त्वविचारेकर्तव्येएवंवक्ष्यमाणंप्रकारंजानीयात् अव्यक्तंप्रधानंपुरुषःक्षेत्रज्ञोजीवोमहत्तरईश्वरः प्रधानक्षेत्रज्ञपतिर्गुणेशइतिश्रुतिप्रसिद्धंत्रयम् ६

तेषुयन्महत्तरंतंविशेषंक्लेशादिभिरपरामृष्टतयाविशिष्टंपरमात्मानमवेक्षेतसाक्षात्कुर्यात् विशेषेणबाध्यत्वाबाध्यत्वलक्षणेनवैपरीत्येन विशेषमेवाहानादीति उभौप्रधानक्षेत्रज्ञौ अनादीअनंतौ अलिंगौमानांतराविषयौ ७ नित्यौकूटस्थापरिहार्यौ एवमादिपुंप्रकृत्योःसाधर्म्यं विशेषणंव्यावर्तकंधर्मपंस्त्वेवविद्यात् ८ एवंकथंतदाह प्रकृत्येति अप्रसवधर्मानिर्गुणश्चपुरुषइतिविपरीतम् ९ विकाराणांमहदादीनांद्रष्टारंनतुदृश्यं एवंप्रधानक्षेत्रज्ञयोःसाधर्म्यवैधर्म्येउक्त्वाक्षेत्रज्ञेश्वरयोरपितदाह अग्राह्याविति अग्राह्यौयतःपुरुषौचिद्रूपौअलिंगौलिंग्यतेज्ञाप्यतेऽनेनेति गुणादिकंप्रतिसंबंधिलिंगंतद्राहित्यादसंहतावत्यंतविविक्तौ १० नन्वलिंगयोर्जीवेशयोर्लिंगभेदप्रयुक्तोभेदःकुतःस्यादित्याशंक्यौपाधिकस्तयोर्भेदोनस्वतइत्याशयेनाह संयोगेति संयोगो दृग्दृश्यसंबंधोलक्षणंज्ञापकमुत्पत्तिराविर्भावहेतुश्चयस्यससंयोगलक्षणोत्पत्तिः । कर्तेतिकर्तृबुद्धौचित्प्रतिबिंबस्वलक्षणमुक्तं । ननुबुद्धिरेवचिच्छायापन्नाकर्त्रीकिंतदुभयेतरेणकर्त्रेत्याशंक्याह कर्मनिर्वृत्तिरिति कर्मणाशास्त्रीयाणांलौकिकानांचनिर्वृत्तिर्निष्पत्तिर्यस्मात् अयमर्थः । कर्ताशास्त्रार्थवत्त्वादितिन्यायेनविधिनिषेधशास्त्राक्षिप्तःकश्चिन्नियोज्यस्तावदस्ति । सचनबुद्धिःतस्याःकाष्ठलोष्टसमत्वेनानियोज्यत्वात् । नापिपुरुषःअकर्तृत्वात् । अतःशास्त्रार्थवत्त्वायतदुभयसंयोगजःकर्ताऽवश्यंप्रधानेश्वरव्यतिरिक्तलक्षणोऽभ्युपेयइति । सकर्तायद्यद्यथायथाकरणैरिं

तंविशेषमवेक्षेतविशेषेणविचक्षणः ॥ अनाद्यंतावुभावेतावलिंगौचाप्युभावपि ७ उभौनित्यावविचलौमहद्भ्यश्चमहत्तरौ ॥ सामान्यमेतदुभयोरेवंह्यन्यद्विशेषणम् ८ प्रकृत्यासर्गधर्मिण्यातथात्रिगुणधर्मया ॥ विपरीतमतोविद्यात्क्षेत्रज्ञस्यस्वलक्षणम् ९ प्रकृतेश्चविकाराणांद्रष्टारमगुणान्वितम् ॥ अग्राह्यौपुरुषावेतावलिंगत्वादसंहतौ १० संयोगलक्षणोत्पत्तिःकर्मणाग्राह्यतेयथा ॥ करणैःकर्मनिर्वृत्तिःकर्तायद्यद्विचेष्टते ॥ कीर्त्यतेशब्दसंज्ञाभिःकोहमेषोऽप्यसाविति ११ उष्णीषवान्यथावस्त्रैस्त्रिभिर्भवतिसंवृतः ॥ संवृतोऽयंतथादेहीसत्त्वराजसतामसैः १२ तस्माच्चतुष्टयंवेद्यमेतैर्हेतुभिराचितम् ॥ यथासंज्ञोह्ययंसम्यगंतकालेनमुह्यति १३ श्रियंदिव्यामभिप्रेप्सुर्वर्ष्मवान्मनसाशुचिः ॥ शारीरैर्नियमैरुग्रैश्चरेन्निष्कल्मषंतपः १४

द्रियादिभिःसाधनैर्विचेष्टतेकर्मकुरुततयातयातत्तद्योग्यभिप्रदेनकर्मणासहितोगृह्यते अतःसमानेऽपिदृग्दृश्यसंयोगेदृश्योपाधिस्वरूपभेदात्कर्तृभेदइत्यर्थः । एवंचकर्तृव्यवहारतस्तृतीयोऽपिपरमार्थतोदृक्कोटिरेवनतुदृश्यकोटिरितिदृष्टांतमुखेनाहार्थेन कीर्त्यतइति यथास्वस्त्रकौंतेयत्वमजानानःकर्णःकःकौंतेयइतिपृच्छतिसएवसूर्यंणप्रबोधितोऽहंकौंतेयइतिवक्ति । एवमज्ञःकिंब्रह्मेतिपृच्छति ज्ञस्त्वहंब्रह्मेतिजानाति । एवमेकस्मिन्नपिवस्तुन्युपाधिभेदाज्ज्ञानाज्ञानकृतभेदाद्विभिन्नौशब्दप्रत्ययौभवतः संज्ञाप्रत्ययः एवंदृश्येऽप्येषोऽसावितिसामीप्यासामीप्यकृतौशब्दप्रत्ययावेकत्रापिभिन्नौभवतएवंजीवेशाविति ११ ननुविनिगमकाभावाद्दृश्यकोटिरेवकर्ताकथंनेत्याशंक्याह उष्णीषवानिति वस्त्रैर्वस्त्रवदाच्छादकैस्त्रिभिःस्थूलसूक्ष्मकारणदेहैः यथोष्णीष्युष्णीषादन्यएवंदेहीगुणेभ्योऽन्यइत्यर्थः । नहिप्रतिबिंबमुखंदर्पणेदृश्यमानमपिदर्पणकोटिगतंतथाजीवोऽपीतिभावः १२ चतुष्टयंद्वेपुंप्रधानयोःसाधर्म्यवैधर्म्येद्वेजीवेश्वरयोश्चसाधर्म्यवैधर्म्येइतिएतैःपूर्वोक्तैरनाद्यंतत्वेनाचिज्जडत्वेनाऽसंहतत्वेनकर्तृत्वेनचेतिचतुर्भिर्हेतुभिराहृतमपिमयासम्यग्व्याख्यातमित्यर्थः । यथासंज्ञउक्तविधंज्ञानमपनविक्रांतः अंतकालेसिद्धांतसमये १३ एतच्चतुष्टयंज्ञात्वायत्कर्तव्यंतदाह श्रियमिति दिव्यांदिविहार्दाकाशेब्रह्मणिभवां वर्ष्मवान्देहवान् शारीरैःशरीरनिर्वर्त्यैर्नियमैःशौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानाख्यैः निष्कल्मषंनिष्कामंतपोयोगम् १४

तपसायोगेनतद्बलेनेत्यर्थः अंतर्भूतेनांतरेणनतुसमित्कुशाज्यपयआदिबाह्यद्रव्यसाध्येनभास्वताचैतन्यप्रकाशवतादिविहार्दाकाशेसूर्यादिकंतपसायोगेनभासते । 'यावान्वाअयमाकाशस्तावानेषोऽन्तर्हृदयआकाशउभेअस्मिन्द्यावापृथिवीअंतरेवसमाहिते । उभावग्निश्चवायुश्चसूर्याचंद्रमसौ' इत्यादिश्रुतेःसर्वस्यतदंतर्गतत्वावगमात् । अतएवयोगिनांव्यवहितादिसाक्षात्काराउपपद्यते १५ प्रकाशोविकसनंफलमित्यर्थः तपसोयोगस्य संशब्दितं'योगिनस्तंप्रपश्यंतिभगवंतंसनातनं' इतिसर्वत्रख्यातं ज्ञानहेतुत्वेनतस्यस्वलक्षणमसाधारणंरूपंरजस्तमोघ्नंप्रवृत्त्यावरणयोर्नाशकं कर्मवैराग्यपूर्वकंवेदांतश्रवणं १६ तपोविशेषानाह ब्रह्मेति १७ । १८ वैमनस्यंवैराग्यं विषयेशब्दादौ कारणानींद्रियाणि अस्पशिष्टान्नभुजः तन्मात्रमाहारमात्रंनतुधनादिकंशिष्टेभ्योऽप्याददीत १९ एवंविधसाधनसंपत्त्यभावेऽपिमोक्षेउपायांतरमस्तीत्याह अंतेति बलज्ञानमंतकालेबलोत्कर्षात्कुर्यात्यज्ज्ञानंयोगयुक्तेनमनसाज्ञानैरुपपद्यतेइत्यन्वयः अयमाशयः । आदिपर्वणिविष्ण्वनुग्रहाद्देवाअमृतंलेभिरेराहुस्तुच्छलेनामृतार्थीदेवपंक्तिस्थोदेहभेदेनसहैवतल्लेभेइत्युपाख्यातं । तत्राख्यायिकानांस्वार्थेतात्पर्याभावात्ततःकश्चिद्विधेयोर्थउन्नेयः । सचयथोक्तसाधनानुष्ठानात्सात्त्विकामुक्तिभाजःस्युः । असात्त्विकोऽपिमोक्षसेवीमरणकालेमुक्तिमाप्नोतीति । तथाआश्वमेधिकेसंवर्तमरुत्तीयेकाश्यामसतःसंवर्तस्य

त्रैलोक्यंतपसाव्याप्तमंतर्भूतेनभास्वता ॥ सूर्यश्चचंद्रमाश्चैवभासतस्तपसादिवि १५ प्रकाशस्तपसोज्ञानंलोकेसंशब्दितंतपः ॥ रजस्तमोघ्नंयत्कर्मतपसस्तत्स्वलक्षणम् १६ ब्रह्मचर्यमहिंसाचशारीरंतपउच्यते ॥ वाङ्मनोनियमःसम्यङ्मानसंतपउच्यते १७ विधिज्ञेभ्योद्विजातिभ्योग्राह्यमन्नंविशिष्यते ॥ आहारनियमेनास्यपाप्माशाम्यतिराजसः १८ वैमनस्यंचविषयेयांत्यस्यकरणानिच ॥ तस्मात्तन्मात्रमादद्याद्यावदत्रप्रयोजनम् १९ अंतकालेबलोत्कर्षाच्छनैःकुर्यादनातुरः ॥ एवंयुक्तेनमनसाज्ञानंयदुपपद्यते २० रजोवर्ज्योऽप्ययंदेहीदेहवाञ्छब्दवच्चरेत् ॥ कार्यैरव्याहतमतिर्वैराग्यात्प्रकृतौस्थितः २१ आदेहादप्रमादाच्चदेहांताद्विप्रमुच्यते ॥ हेतुयुक्तःसदासर्गोभूतानांप्रलयस्तथा २२

शवदर्शनेनशिवदर्शनासिद्धिःसूचिता । तेनकाश्यांमृतस्यशिवत्वेनतत्प्रतिभावत्तच्छरीरस्यलिंगत्वंसूच्यते । तथेहापिबलोत्कर्षादंतकालेज्ञानंकुर्यादित्युच्यते । तेनसर्वेणैतेनवाक्यसंदर्भेणाऽत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतितस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेदित्यस्याःश्रुतेरर्थःकाश्यांम्रियमाणस्यरुद्रमुखात्तारकोपदेशप्राप्त्यामुक्तिप्राप्तिरितिसमस्तपुराणोपबृंहितःसूचितइतिमन्यते । बलोत्कर्षादितियत्नेनकाश्यांवासादंतकालेज्ञानंकुर्यादीशोपदेशात्संपादयेत् २० एवंमोक्षेसाधनांतरमुक्त्वाआपेक्षिकत्वमप्याह रजइति अयंदेहीरजोवर्ज्योबाह्येंद्रियप्रवृत्तिशून्यःसमाधौसंस्यक्तस्थूलदेहोऽपिदेहीपुरुषोदेहवान्सूक्ष्मदेहवान्शब्दवत्शब्दादिमत्कार्यंसूक्ष्मशरीरंचरेदनुचरेत् । यस्तुकार्यैरव्याहतमतिःसवैराग्यात्सूक्ष्मभोगेष्वपिनिस्पृहःप्रकृतौलीयतेनतुप्रकृतेःपरंपुरुषंप्राप्नोति अयंभावः । स्थूलसूक्ष्मकारणशरीरैर्मुक्तोयोगीसद्योमोक्षमश्नुते । स्थूलमात्रविहीनोविदेहःस्थूलसूक्ष्माभ्यांविहीनःप्रकृतिलयः । एतौद्विसुप्तिस्थवदुत्तरकक्ष्यांमविविक्तौमध्येलयेनाभिभूतौनिर्विकल्पपदमनुभवतइव । अतएवतयोरसंप्रज्ञातःसंसारहेतुः तथाचसूत्रितं । भवप्रत्ययोविदेहप्रकृतिलयानामिति २१ आदेहादेहपातावधि अप्रमादादनवधानत्वाद्यभावात् देहानांस्थूलसूक्ष्मकारणानामंताद्बाधाद्विशेषेणसद्यएवमुच्यते । पूर्वोक्तक्रममुक्तिभाजावित्याह हेत्विति हेतुर्मूलाज्ञानंतन्नाशाद्विदेहादीनामन्येषांचभूतानांकर्मविनाशस्ततःसर्गप्रलयौजन्ममरणेस्तइत्यर्थः २२

परप्रत्ययसर्गेशुद्धब्रह्मसाक्षात्कारोदयेनियतिर्धर्माधर्मौनानुवर्तेते शुद्धब्रह्मविदस्तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशादितिन्यायेनपूर्वपापस्यनाशउत्तरस्यासंश्लेषश्चभवतीत्यागामिजन्मकारणा भावान्मुक्तिरित्यर्थः । परप्रत्ययाभावेसंसारानर्थयोगइत्याह भावेति येविपर्ययंमनात्मसुप्रकृत्यादिदेहांतेष्वन्यतमस्मिंस्तत्समुदायेवाआत्मबुद्धिंकृत्वाआसतेभावानांमहदादीनामंतप्रभवयो र्नाशोदययोरेवप्रज्ञाबुद्धिर्येषांतितथाभवंति विपर्यस्तमतीनांमोक्षकथाऽपिनास्तीत्यर्थः २३ धृत्याआसनाद्यप्रच्युत्यादेहान्धारयंतोयोगिनः बुद्ध्यासंक्षिप्तंविषयेभ्यःप्रत्याहृतंचेतोयैस्ते स्थानेभ्योऽक्ष्यादिभ्यइंद्रियगोलकेभ्योध्वंसमानाश्च्युतास्त्यक्तान्नमयकोशाः सूक्ष्मत्वादन्नमयापेक्षया नतुवस्तुतस्तान्प्राणेंद्रियादीनुपासतेआत्मत्वेनाचिंतयंति यथोक्तंपुराणांतरे । 'दशमन्वंतराणीहतिष्ठंतींद्रियचिंतकाः ॥ भौतिकास्तुशतंपूर्णंसहस्रंत्वाभिमानिकाः । बौद्धादशसहस्राणितिष्ठंतिविगतज्वराः । पूर्णंशतसहस्रंतुतिष्ठंत्यव्यक्तचिंतकाः ॥ पुरुषंनिर्गुणंप्राप्यकालसंख्यानविद्यते'इति ब्रह्मलोकेएतेसर्वेतिष्ठंतीत्यर्थः २४ यस्मादेवंतस्मात्ययागमं । 'इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥ मनसस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ॥ महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः ॥ पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः'इतीमंवेदमनतिक्रम्यवतस्ततःपरंपरंस्थानंगत्वातत्रपरस्यांकाष्ठायांविषयेस्वयमेवबुद्ध्वाधीतृत्याबुद्ध्यतेजानातिपरांकाष्ठां । देहांतमव्यक्तादपिपरं एतेनाव्यक्तात्पुरुषःपरइतिश्रौतमव्यक्तपदंदेहपरंनतुसांख्याभिमताव्यक्तपरमितिव्यख्यातं आनुमानिकाधिकरणेचैतत्स्पष्टं । तंदेहांतंकश्चिदेवभावितात्मायोगशोधितमतिर

परप्रत्ययसर्गेतुनियतिर्नानुवर्तते ॥ भावांतप्रभवप्रज्ञाआसतेयेविपर्ययम् २३ धृत्यादेहान्धारयंतोबुद्धिसंक्षिप्तचेतसः ॥ स्थानेभ्यो ध्वंसमानाश्चसूक्ष्मत्वात्तानुपासते २४ यथागमंचगत्वैवबुद्ध्वातत्रैवबुद्ध्यते ॥ देहांतंकश्चिदन्वास्तेभावितात्मानिराश्रयम् २५ युक्तंधारणयासम्यक्सतःकेचिदुपासते ॥ अभ्यस्यंतिपरंदेवंविद्युत्संशब्दिताक्षरम् २६ अंतकालेह्युपासंतेतपसादग्धकिल्बिषाः ॥ सर्वएतेमहात्मानोगच्छंतिपरमांगतिम् २७ सूक्ष्मंविशेषणंतेषामवेक्षेच्छास्त्रचक्षुषाम् ॥ देहांतंपरमंविद्याद्विमुक्तमपरिग्रहम् २८

न्वास्तेऽनुशास्त्राचार्योपदेशमनुप्राप्यास्तेनिराश्रयंस्वमहिमप्रतिष्ठंपराकाष्ठारूपत्वात् २५ युक्तमिति धारणयाधारणाविषयेणमूर्तब्रह्मणाकृष्णादिनायुक्तंतादात्म्यसंबंधेनसेव्यसेवकभावेनवायुक्तं निबद्धमात्मानंकश्चिदुपास्ते सतइतिकर्मणिषष्ठी । अविद्याशबलंकेचिदुपासते । अपरेपरंशबलादुत्कृष्टंनिर्गुणंब्रह्माऽभ्यस्यंतिपुनःपुनरनुभवविषयतामापादयंति । विद्युत्संशब्दितंसकृद्विभातोह्येषब्रह्मलोकइतिश्रुतेर्विद्युद्वत्सकृद्विभातत्वेनविद्युत्संशब्दितंकेनेषितमित्युपनिषत्प्रसिद्धमिदंविशेषणं अक्षरमपरिणामि । ननुदेहांतपदेनैवैतदुक्तं सत्यं तत्रज्ञेयत्वेनोक्तमिहतूपास्यत्वेनोच्यते कः पुनरेतावत्तामेदः शृणु आद्येश्रवणादिप्रणाल्याऽध्यस्तानात्मनिरसनेनात्मतत्त्वावाप्तिःसर्पबाधेनेवरज्ज्ववगतिः । द्वितीयेतुमूलप्रमाणाभावेऽपितत्पाणौपंचरत्नानीतिवदतोवाक्यंकदाचित्संवाद्येतद्वत्त्वंब्रह्मासीतिगुरुवाक्येविश्वासमात्रात्प्रवृत्तआत्मनोब्रह्मभावंचिंतयंस्तमनुभवति सेयंसंवादिभ्रमवदुपास्तिर्ब्रह्मसाक्षात्कारफलेति २६ अंतेति तपसाऽविपुलोपासनेनांतकालेउपासंतेब्रह्मप्राप्नुवंति असगताविस्यस्यरूपं एतेपंचयथायोगंपरमांनिर्विशेषांगतिंक्रमेणसद्योवागच्छंति २७ सूक्ष्ममिति विशेषणंव्यावर्तकमुपाधिभूतंतेषांसोपाधिकब्रह्मणामवेक्षेतहेलनयाहेयत्वेनपश्येत् यथोक्तंकल्पतरौ । 'निर्विशेषंपरंब्रह्मसाक्षात्कर्तुमनीश्वराः । येमंदास्तेऽनुकंप्यंतेसविशेषनिरूपणैः । स्थिरीकृतेमनस्येषांसगुणब्रह्मचिंतनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनं'इतिदेहांतमव्यक्तफलयाधिष्ठानं । देहंत्विविपाठेअव्यक्तमेव परमंचरमंविशेषणं नततःपरमन्यद्ध्येयमस्तीत्यर्थः । विमुक्तमपरिग्रहमित्यादिपादोनश्लोकएकंवाक्यं विमुक्तंस्थूलदेहाध्यासहीनंअपरिग्रहंसंन्यासिनं २८



धारणासक्तमानसंयोगिनं अंतरिक्षादंतरिक्षंहार्दाकाशस्तमारभ्याऽन्यतरमीशंसूत्रात्मानंवाविद्यादित्यर्थः । मर्त्येति यत्किंचिच्छ्रोतोपास्तियुक्तामर्त्यदेहाद्विमुच्यंते २९ ततआरोहक्रमेणपरांगतिंयांति एकायनमेकंब्रह्मैवायनंप्राप्तिस्थानंयस्मिन् ३० कषायेति रागादिहीनमचलंपैर्वाशास्त्रीयंपरोक्षमपिज्ञानमुत्पद्यतेतेऽपियथाबलंयथावैराग्यंमुच्यंते ३१ भगवंतंसर्वैश्वर्यवंतम् ३२ आत्मस्थंकोशपंचकांतर्गतम् ३३ संक्षेपेणज्ञेयंहेयंचाह एतावदिति अस्तिचनास्तिचेत्यनेनरज्जूरगादिवज्जगद्भ्रांताभ्रांतयोरस्तिचनास्तिचेत्यनिर्वचनीयमित्युक्तं जगन्मिथ्यात्वंज्ञेयंतृष्णाचत्याज्येत्यर्थः ३४ बिसमृणालम् ३५ । ३६ तृष्णात्यागोपायमाह विकारमिति कार्यकारणंशुद्धंचजानन्नवितृष्णोभूत्वाविमुच्यते ३७ प्रकाशंस्पष्टं अमृतंमोक्षसाधनम् ३८ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥ ॥ पूर्वंसंक्षेपेणप्रकरणयोर्वैधर्म्यमुक्तंतद्विवरणायपंचशिखवाक्यम

अंतरिक्षादन्यतरंधारणासक्तमानसम् ॥ मर्त्यलोकाद्विमुच्यंतेविद्यासंसक्तचेतसः २९ ब्रह्मभूताविरजसस्ततोयांतिपरांगतिम् ॥ एवमेकायनंधर्ममाहुर्वेदविदोजनाः ३० यथाज्ञानमुपासंतःसर्वेयांतिपरांगतिम् ॥ कषायवर्जितंज्ञानंयेषामुत्पद्यतेऽचलम् ॥ यांतितेऽपिपरांल्लोकान्विमुच्यंतेयथाबलम् ३१ भगवंतमजंदिव्यंविष्णुमव्यक्तसंज्ञितम् ॥ भावेनयांतिशुद्धायेज्ञानतृप्तानिराशिषः ३२ ज्ञात्वाऽऽत्मस्थंहरिंचैवनिवर्ततेतेऽव्ययाः ॥ प्राप्यतत्परमंस्थानंमोदंतेऽक्षरमव्ययम् ३३ एतावदेतद्विज्ञानमेतदस्तिचनास्तिच ॥ तृष्णाबद्धंजगत्सर्वंचक्रवत्परिवर्तते ३४ बिसतंतुर्यथैवायमंतस्थःसर्वतोबिसे ॥ तृष्णातंतुरनाद्यंतस्तथादेहगतःसदा ३५ सूच्यासूत्रंयथावस्त्रेसंसारयतिवायकः ॥ तद्वत्संसारसूत्रंहितृष्णासूच्यानिबद्ध्यते ३६ विकारंप्रकृतिंचैवपुरुषंचसनातनम् ॥ योयथावद्विजानातिसवितृष्णोविमुच्यते ३७ प्रकाशंभगवानेतदृषिर्नारायणोऽमृतम् ॥ भूतानामनुकंपार्थंजगादजगतोगतिः ३८ ॥ इति श्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मकथने सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ केनवृत्तेनवृत्तज्ञजनकोमिथिलाधिपः जगाममोक्षंमोक्षज्ञोभोगानुत्सृज्यमानुषान् १ ॥ ॥ भीष्म उवाच ॥ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ येनवृत्तेनधर्मज्ञःसजगाममहत्सुखम् २ जनकोजनदेवस्तुमिथिलायांजनाधिपः ॥ और्ध्वदेहिकधर्माणामासीद्युक्तोविचिंतने ३ तस्यस्मशतमाचार्यावसंतिसततंगृहे ॥ दर्शयंतःपृथग्धर्मान्नानाश्रमनिवासिनः ४ सतेषांप्रेत्यभावेचप्रेत्यजातौविनिश्चये ॥ आगमस्थःसभूयिष्ठमात्मतत्त्वेनतुष्यति ५

ख्यायद्वयमारभते तत्रतृष्णात्यागोमुख्यंमुक्तिसाधनंसचराज्ञांदुःशकइतिमन्वानोमिथिलायांप्रदह्यमानायांनमेकिंचनदह्यतीतिपूर्वोक्तंस्वमतविरुद्धंजनकवचनंस्मरंस्तद्वृत्तंपृच्छति केनेति १ महत्सुखंमोक्षं २ जनकोजनकवंश्यः नाम्नाजनदेवः ऊर्ध्वंदेहादित्यूर्ध्वंदेहमशरीरंब्रह्मतत्प्राप्तिकराणामौर्ध्वदेहिकानांविचिंतनेयुक्तोऽवहितआसीत् ३ धर्मानुवासनामार्गान् पाठांतरेपाषंडालोकायतादयस्तेषांवादिनःप्रतिभटत्वेनजेतारः । पाषंडवासिनइतिपाठेपाषंडान्नवासयंतिआच्छादयंतितिरस्कुर्वंतितेतथा ४ तत्रकेचित्पाषंडादेहनाशादात्मनाशमिच्छंति । अन्येपुनर्देहस्यैवनाशंमिच्छंति । तत्राद्येजगद्वैचित्र्यानुपपत्तिमंत्येप्रत्यक्षविरोधंचोद्भावयतांतेषांप्रेत्यभावेअस्माद्देहादुत्क्रम्यभावेसत्तायांप्रेत्यजातौजन्मांतरलाभेचविषयेविनिश्चयेसभूयिष्ठंनतुष्यति यतआगमस्थः तत्रतार्किकाणांविभूनामात्मनापूर्वदेहेंद्रियवियोगोमरणमपूर्वदेहेंद्रियसंबंधोजन्मेतिविनिश्चयः । सांख्यानांत्वात्मनांकरणानांचविभूनामेवसतांअरण्यामग्नेरिवतत्रतत्राविर्भावोजन्मतद्वि-

-विलयोमृत्युरितिविनिश्चयः । तथाकर्ताभोक्ताविभुरात्मेतिपूर्वेषामात्मतत्त्वंपरेषांतुभोक्तैवनकर्तेति । तत्रापापंडस्याकिंचित्पुण्यन्नविभूयिष्ठंनतुष्यति आगमविरोधात् । आगमोहि
स्वप्नवत्पूर्वदेहनाशोत्तरदेहप्राप्तीवदति । आत्मानंचाकर्तारमभोक्तारमेकंच । नतेषामितिपाठेआत्मतत्त्वेनेतितृतीया ५ कापिलेयःकपिलायाःपुत्रः परिधावन्एकत्रवासमकुर्वन् ६ सु
पर्यवसितार्थःसम्यङ्निश्चितप्रयोजनः ७ कामैरनावृतं कामादवसितमितिपाठेयदृच्छयास्थितं नृपसुखंअन्विच्छंतं स्थापयितुमितिशेषः ८ सकपिलस्तेनपंचशिखसंज्ञेन तस्माशिष्यत्वा
त्तुल्यत्वं ९ पंचस्रोतांसिविषयकेदारप्रणालिकायस्य तस्मिन्मनसि मानसंसत्रमित्यर्थः १० यत्रयस्समीपे कापिलंकपिलमतानुसारि मंडलंमुनिसमूहंप्रतिपरमार्थंयोऽन्यवेदयदित्युत्तरे
णसंबंधः पंचस्रोतसिमनसिनिष्णातःऊहापोहकौशलवान्पंचरात्रोनामविष्णुत्वप्रापकःक्रतुः । 'पुरुषोहवैनारायणोऽकामयतात्यतिष्ठेयऽसर्वाणिभूतान्यहमेवेदऽसर्वऽस्यामिति । सएतंपंचरात्रंपु
रुषमेधंयज्ञक्रतुमपश्यत्'इतिशतपथोक्तस्तत्रविशारदोऽनुष्ठिताखिलकर्मेत्यर्थः ११ पंचअन्नमयप्राणमयमनोमयविज्ञानमयानंदमयान्कोशान्मिथआत्मनश्चविविक्तान्जानातीतिपंचज्ञः अतएव
पंचकृत्पंचतद्विषयाण्युपासनानि । भृगुर्वैवारुणिरित्यस्यामुपनिषदिसतपस्तप्त्वाऽन्नंब्रह्मेतिव्यजानादित्यादिविहितानिकरोतिसपंचकृत् । पंचशांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्ये

तत्रपंचशिखोनामकापिलेयोमहामुनिः ॥ परिधावन्महींकृत्स्नांजगाममिथिलामथ ६ सर्वसंन्यासधर्माणांतत्त्वज्ञानविनिश्चये ॥ सुपर्यवसितार्थश्चनिर्द्वंद्वोनष्टसंश
यः ७ ऋषीणामाहुरेकंतंयंकामानावृतंनृषु ॥ शाश्वतंसुखमत्यंतमन्विच्छंतंसुदुर्लभम् ८ यमाहुःकपिलंसांख्याःपरमर्षिंप्रजापतिम् ॥ समन्येतेनरूपेणविस्मा
पयतिहिस्वयम् ९ आसुरेःप्रथमंशिष्यंयमाहुश्चिरजीविनम् ॥ पंचस्रोतसियःसत्रमास्तेवर्षसहस्रिकम् १० यत्रचासीनमागम्यकापिलंमंडलंमहत् ॥ पंचस्रोत
सिनिष्णातःपंचरात्रविशारदः ११ पंचज्ञःपंचकृत्पंचगुणःपंचशिखःस्मृतः ॥ पुरुषावस्थमव्यक्तंपरमार्थंन्यवेदयत् १२ इष्टसत्रेणसंपृष्टोभूयश्चतपसाऽऽसुरिः ॥
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिंबुबुधेदेवदर्शनः १३ यत्तदेकाक्षरंब्रह्मनानारूपंप्रदृश्यते ॥ आसुरिर्मंडलेतस्मिन्प्रतिपेदेतदव्ययम् १४ तस्यपंचशिखःशिष्योमानुष्याःपय
साभृतः ॥ ब्राह्मणीकपिलानामकाचिदासीत्कुटुंबिनी १५ तस्याःपुत्रत्वमागम्यास्त्रियाःसपिबतिस्तनौ ॥ ततःसकापिलेयत्वंलेभेबुद्धिंचनैष्ठिकीम् १६
एतन्मेभगवानाहकापिलेयस्यसंभवम् ॥ तस्यतत्कापिलेयत्वंसर्ववित्त्वमनुत्तमम् १७

वात्मानंपश्यतीतिश्रुताःशांत्यादयोगुणायस्मिन्सपंचगुणः । ततश्चब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः पंचभ्योऽतिरिच्यमानत्वात्शिखेवेतिपंचशिखंपुच्छंब्रह्मतज्ज्ञत्वान्मुनिरपिपंचशिखः ।
ननुपंचकृत्कथंषष्ठज्ञःस्यादितिचेत् शृणु यथाऽन्नमयंविकारमुपासीनस्तत्प्रकृतिमन्नंविराडाख्यमेति एवंमाययाविकृतमानंदमानंदमयाख्यमुपास्याविकृतमानंदंतत्प्रकृतिमेतीतिनषष्ठोपास्तिः
पृथग्वक्तव्याषष्ठज्ञानाय तस्यपंचमोपास्तिफलत्वात् तदेतदाह पुरुषेति पुरुषाअन्नमयादयःपंचअवसन्नतयाबाधिततयातिष्ठंतीत्यस्मिन्नितिपुरुषावस्थं । अतएवशिरआद्यवयवरहित
त्वादव्यक्तमवाच्यत्वाच्चपरमार्थमबोधयत् १२ तस्यापिगुरुमाहेष्टेत्यादिना इष्टसत्रेणआत्मयज्ञेन हेतौतृतीया अध्ययनेनवसतीतिवत् सम्यक्पृष्टःप्रश्नोयस्यसंपृष्टः आत्मज्ञानार्थंकृतप्र
श्नइत्यर्थः व्यक्तिंवाच्यत्वावाच्यत्वेनस्पष्टतां देवदर्शनःदिव्यदृष्टिरित्यर्थः १३ सांख्यसंमतंगुणपुरुषांतरज्ञानत्कैवल्यंप्रधानंचोपादानमितिपक्षंनिरस्यति यत्तदिति अक्षरमेवजगदुपादा
नतयानानारूपंनतुक्षरंप्रधानं अव्ययंब्रह्मैवप्रतिपेदेज्ञातवान्नतुगुणपुरुषांतरम् १४ । १५ । १६ भगवान्मार्कंडेयःसनत्कुमारोवा १७

सामान्यंसर्वैर्व्याचार्यैस्तुल्यमबुद्धिम् १८ अभिसंरक्तोभक्तः १९ कल्पायसमर्थाय सांख्येउपनिषत्कांडे विधीयतेअपूर्वतयाज्ञाप्यतेनतुफ्कयाउक्तीयते २० जातिर्जन्म कर्मयागादि सर्वं
ब्रह्मलोकांतं तेषुनिर्वेदोदुःखरूपत्वाद्दोषयुक्तत्वात्क्षयिष्णुत्वाच्च २१ तंमोहमब्रवीदितिपूर्वेणान्वयः । तंकं यस्यमोहस्यार्थेकर्मतत्फलंचकांक्षते अनाश्वासिकमविश्वसनीयं शुक्तिरजत
यसद्विषयप्रदर्शकत्वात् । विनाशिचंचलंध्वंसिनमनियतकालंच अध्रुवंसत्त्वेनासत्त्वेनवानानिश्चितम् २२ तमिममेतस्मिंस्तद्बुद्धिलक्षणंमोहंविवरीतुंलोकायतानांमतमुपन्यस्यति दृश्यमाने
इत्यादिना तेहिपार्थिवाऽप्यतैजसवायवीयाःपरमाणवःखरस्नेहोष्णेरणस्वभावाःस्वयमेवदेहाद्याकारेणसंहन्यमानामदशक्तिवच्चैतन्यंजनयंतिदेहएवनतुघटादौस्वभावादितिसंतमात्मानंनास्ती
त्याहुः । असंतंचदेहंसंतमाहुस्तदेतदाह विनाशेदेहरूपात्मध्वंसेप्रत्यक्षेसतिदेहात्परमात्मतत्त्वमागमप्रमाणाद्प्यस्तीतिब्रुवन्लोकविरुद्धागमप्रामाण्यवादीपराजितएवेत्यर्थः २३ ननुदेह
स्यैवात्मत्वेस्वर्गकामोयजेतेत्यादयःपरलोकफलाश्चोदनाउपरुद्ध्येरन्नित्याशंक्याहानात्मेतिद्वाभ्यां आत्मनोमृत्युरनात्मतास्वरूपाभावएव क्लेशोदुःखंजरावयोहानिरामयोरोगश्चाऽऽत्मनोमृत्यु
रेवांशेनस्वरूपनाशः । गृहस्येवदुर्बलंदुर्बलमंगंपूर्वपूर्वतरंनश्यतीत्योंऽऽशेनगृहनाशएवाग्निक्रियादिनाशेनाप्यंशतआत्मैवनश्यतीत्यर्थः । एवंसतियआत्मानंमोहात्परंदेहादन्यंमन्यतेतन्मतम

सामान्यंजनकंज्ञात्वाधर्मज्ञोज्ञानमुत्तमम् ॥ उपेत्यशतमाचार्यान्मोहयामासहेतुभिः १८ जनकस्त्वभिसंरक्तःकापिलेयानुदर्शनात् ॥ उत्सृज्यशतमाचार्या
न्पृष्ठतोऽनुजगामतम् १९ तस्मैपरमकल्यायप्रणतायचधर्मतः ॥ अब्रवीत्परमंमोक्षंयत्तत्सांख्येऽभिधीयते २० जातिनिर्वेदमुक्त्वासकर्मनिर्वेदमब्रवीत् ॥
कर्मनिर्वेदमुक्त्वाचसर्वनिर्वेदमब्रवीत् २१ यदर्थंधर्मसंसर्गःकर्मणांचफलोदयः ॥ तमनाश्वासिकंमोहंविनाशिचलमध्रुवम् २२ दृश्यमानेविनाशेचप्रत्यक्षेलोकसा
क्षिके ॥ आगमात्परमस्तीतिब्रुवन्नपिपराजितः २३ अनात्माह्यात्मनोमृत्युःक्लेशोमृत्युर्जरामयः ॥ आत्मानंमन्यतेमोहात्तदसम्यक्परंमतम् २४ अथचे
देवमप्यस्तियल्लोकेनोपपद्यते ॥ अजरोऽयममृत्युश्चराजाऽसौमन्यतेयथा २५ अस्तिनास्तीतिचाप्येतत्तस्मिन्नसतिलक्षणे ॥ किमधिष्ठायतद्ब्रूयाल्लोकया
त्राविनिश्चयम् २६ प्रत्यक्षंह्येतयोर्मूलंकृतांतैतिह्ययोरपि ॥ प्रत्यक्षेणागमोभिन्नःकृतांतोवानकिंचन २७ यत्रयत्राऽनुमानेऽस्मिन्कृतंभावयतोऽपिच ॥
नान्योजीवःशरीरस्यनास्तिकानांमतेस्थितः २८

सम्यक् २४ स्वर्गकामचोदनातुयथाराज्ञोऽजरत्वामरत्वाद्याशीरुपचारएवंदृष्टसुखेएवस्वर्गोपचारः तस्माद्भूमएवाग्निर्दिवादृशेनार्चिः । तस्मादर्चिर्वाग्नेर्नक्तंददृशेनधूमइत्यादिवत्प्रत्यक्ष
विरुद्धाश्रुतिर्नस्वार्थेप्रमाणमित्याहाथेति । तथाऽग्निहोत्रादेर्वैयर्थ्यमुदाहरंति । 'अग्निहोत्रंत्रयीधर्मस्त्रिदंडंभस्मगुंठनम् ॥ बुद्धिपौरुषहीनानांजीविकेतिबृहस्पतिः'इति २५ एवंप्रत्यक्षवि
रोधाच्छ्रुतिप्रामाण्यंदूषयित्वाव्याप्तिग्रहादनुमानस्यापितद्दूषयति अस्तिनास्तीति यथाचंद्रतारकेगत्यभावोऽस्तिनास्तीतिसंशयेऽस्तिगत्यनुपलब्धेरितिप्राप्तेनास्तिदेशांतरप्राप्तेरित्यनुमा
३१ नेनयद्गत्यादिसाधनंतदप्यसतिलक्षणेज्ञापकेहेतौशतशः सहचरितयोरपिव्यभिचारदर्शनादसतिकिंलिंगमधिष्ठायाऽऽलंब्यलोकयात्रायावद्व्याविव्यवहारस्यविनिश्चयंब्रूयान्नकिमपीत्यर्थः २६
कृतांतैतिह्ययोरनुमानागमयोः भिन्नःबाधितः नकिंचनप्रमाणमित्यर्थः २७ फलितमाह यत्रेति यत्रकुत्राप्यनुमानेईशादृष्टनित्यात्मान्यतमसाधकेताव्याप्तिसिद्धिंभावयतःकृतंअलं भाव
नयाऽलमित्यर्थः । उक्तविषयानुमानस्याप्रमाणत्वात् शरीरस्यशरीरात् २८

अनुमानस्यप्रामाण्योपगमेतुततएवदेहादनन्यात्मसिद्धिरित्याह रेतइति यथासमानेऽपिभूतचतुष्टयसंयोगेवटकणिकायांवटपत्रपुष्पफलमूलत्वगादिरूपरसादयोंतर्हिताएवंततद्रेतसिसमानेप्युप ष्टंभकभागेमनोबुद्ध्यहंकारचित्तशरीराकारगुणादयोंतर्हिताःसंतआविर्भवंति । यथावाएकस्मादेवधेनुभुक्तात्तृणोदकात्पयःसर्पिषीष्टयकृत्स्नभावेयथावाबहुद्रव्यकल्कादित्रिरात्रमधिवासितान्मद शक्तिरुत्पद्यतएवंरेतसउपलभ्योपलब्धांशोत्राभूतसंयोगाद्वाचैतन्यंजन्यते जातिर्जन्माद्यादेः यथावाकाष्ठद्वयसंश्लेषात्तत्प्रकाशकोऽग्निर्जायतएवंभूतयोगादपितत्प्रकाशकंचैतन्यमुत्पद्यतेइतिजडद्व यादजडोत्पत्तौदृष्टांतावरंपराभिमतम् । स्मृतिरितियथातर्कमतेजडयोरप्यात्ममनसोर्योगादजडंस्मृत्यादिरूपंज्ञानंजायतेतद्वदत्रापिभविष्यति । एवमुत्पन्नंचैतन्यमयस्कांतमणिवदिंद्रियमिंद्रियसं यातंचालयिष्यति कार्यवैचित्र्यमपिपार्थिवांशगतजातिभेदाद्देवभविष्यति सूर्यकांतयोगादेवसूर्यरश्मयोऽग्निसुखेनपृथग्यंतरयोगात्तद्वत् एवंभोक्तृत्वंवह्नेर्जलशोषकत्ववत्संघातस्यैवयुज्यतेइतिच त्तंशरीरादन्योजीवोनास्तीति २९ एतद्दूषयति प्रेतीति प्रेतीभूतेदेहेचैतन्याख्ययोदेहातिरिक्तात्माऽस्तित्वेप्रमाणमित्यध्याहृत्ययोज्यं । यदिदेहधर्मश्चेतनःस्यात्तर्हिमृतेऽपिदेहेचैतन्यमुपलभ्येतातोन देहधर्मश्चैतन्यमित्यर्थः । प्रेत्यभूतात्ययइतिपाठे मृत्त्राभूतनाशःयस्मिन्सतिदेहोननश्यति असतिचनश्यतिसदेहादन्यइत्यर्थः । तथाशीतज्वरनिवृत्त्यर्थंमंत्रप्रतिपाद्यादेवतालोकायतिकेनप्रा र्थ्यतेसाचेद्भूतमयीस्यात्तर्हिघटादिवद्दृश्यते सूक्ष्मशरीरस्यलोकांतरसंचारक्षमस्यास्वीकारात् । आदिपदाद्भूतावेशोऽपिग्राह्यः यस्मिन्शरीरेभूतांतरमाविशतितदातदेहपीडयामुख्योदेहपतिर्न बाध्यतेकिंत्वाविष्टएवतदानींतस्यैवदेहाभिमानात् । तदपगमेतुमुख्यएवबाध्यतेऽतोनदेहआत्माहष्टविरोधादित्यर्थः । मृतेकर्मनिवृत्तिःकृतनाशः चादुत्पत्ताकृताभ्यागमश्चदोषइत्यर्थः ३०

रेतोवटकणिकायांघृतपाकाधिवासनम् ॥ जातिःस्मृतिरयस्कांतःसूर्यकांतोंऽबुभक्षणम् २९ प्रेतीभूतेऽत्ययश्चैवदेवताद्युपयाचनम् ॥
मृतेकर्मनिवृत्तिश्चप्रमाणमितिनिश्चयः ३० नन्वेतेहेतवःसंतियेकेचिन्मूर्तिसंस्थिताः ॥ अमूर्तस्यहिमूर्तेनसामान्यंनोपपद्यते ३१
अविद्याकर्मचेष्टानांकेचिदाहुःपुनर्भवे ॥ कारणंलोभमोहौतुदोषाणांतुनिषेवणम् ३२

एवंस्वमतेसाधकान्युक्तापरोक्तान्हेतूनाभासयति नन्वेतइति मूर्तिसंस्थिताजडमेवाद्यादिकमितिसर्वेपूर्वोक्ताहेतवोजडाज्जडसिद्धावेवपर्यवस्यंतिनत्वजडसिद्धौ । हियस्मान्मूर्तात्अमूर्तस्यज्ञानस्योत्प त्तौपृथिव्यादिचतुष्टयादाकाशोप्युत्पद्येतेत्यर्थः । सामान्यंसादृश्यंकार्यस्यकारणेनसहावगतंमृद्घटादौनतुमूर्तामूर्तयोरत्यंतविलक्षणयोस्तदुपपद्यते । यदपितर्कमतंजडयोरात्ममनसोर्योगादजडं ज्ञानमुत्पद्यतेतदपिदृष्टशाद्वद्वजन्मासंभवात्प्रत्याख्येयमेव ३१ एवंलोकायतमतंनिरस्यसौगतमतंनिरसितुमुपन्यस्यति अविद्येत्यादिभिस्त्रिभिः तेहिलोकायताभिमतात्संघाताद्वाद्यादन्यमाध्या त्मिकंसंघातंरूपविज्ञानवेदनासंज्ञासंस्काराख्यपंचस्कंधात्मकमैहिकामुष्मिकव्यवहारास्पदमभ्युपगच्छंत्यतोनतेषांप्रेतीभूतात्ययादयोदोषाःसंति । यद्यप्येतेषामपीतरवत्स्थिरोभोक्तामंत्रशासिता वाचेतनःसंहंतानास्तितथापिअविद्या १ संस्कारो २ विज्ञानं ३ नाम ४ रूपं ५ षडायतनं ६ स्पर्शो ७ वेदना ८ तृष्णा ९ उपादानं १० भवो ११ जाति १२ जरा १३ मरणं १४ शोकः १५ परिदेवनाः १६ दुःखं १७ दुर्मनस्ता १८ इत्यष्टादशकचित्संक्षेपेणकचिद्विस्तरेणचोक्ताःसर्वेषांसौगतानामप्रत्याख्येयाःपूर्वपूर्वेउत्तरेषांनिमित्तभूताघटीयंत्रवदावर्तमानाःसंघातंस्वाश्रयतया ऽऽक्षिपंति । षडायतनंशरीरंचैतस्यस्कंधपंचकस्यतदुपादानस्यषष्ठस्यचित्तस्यचाऽऽश्रयभूतत्वात् । एवंचसंघातोत्पत्तेर्लोकयात्रायाश्चनिर्वाहेसतिनस्थिरआत्माऽभ्युपेयइतिवदंति तत्राविद्या स्वशब्दोपात्ताकर्मचेष्टालोभमोहशब्दैःसंस्कारोपादानतृष्णादुर्मनस्ताःइतरेदोषपदेनसंगृहीताः केचित्सौगताअविद्यादिकंपुनर्भवेदेहांतरप्राप्तौकारणमाहुरितियोजना ३२

एतदेवस्पष्टयत्यविद्यामिति अविद्याक्षेत्रंपूर्वकृतंकर्मबीजंतृष्णास्नेहाख्यजलरूपा एषएवंप्रकारकस्तेषामविद्यादीनांपुनर्भवःपुनःपुनरुत्पत्तिप्रकारः ३३ तस्मिन्नविद्यादिकलापेगूढेसुप्तिप्रलययोः संस्काररात्मनाऽऽस्थितेनिमित्तभूतेसति एकस्मिन्मरणधर्मिणिदेहेभिन्नेविनष्टेऽप्यन्योऽस्मात्तत्एवाविद्यादेर्देहोऽन्योजायते । तस्मिन्ज्ञानेनदग्धेचसतिदेहनाशात्सत्त्वसंक्षयंमोक्षमाहुः । सत्वस्य धीधातोःसंक्षयःसम्यगैश्वर्यंनिर्विषयप्रवाहित्वंकैवल्यमित्याहुः ३४ एतद्दूषयति यदेति स्वरूपतोऽन्यत्वंमुक्तावपिक्षणिकानांविज्ञानादीनां यदाचजातितःआलयविज्ञानंबाह्यविज्ञानमितितेषाम न्यत्वं । यदाचशुभतःशुभाशुभतःपुण्यपापतोऽर्थतोबंधमोक्षतोविज्ञानानांपृथक्त्वंतदाबाह्येकथंसोऽयमित्यभेदप्रत्यभिज्ञानं प्राग्दृष्टस्यघटस्यैववार्तमानिकादन्यत्वात् । एवमसंहितमनभिसंहितं भोगमोक्षादिकथंवास्यात् अन्योमुमुक्षुरन्यःसाधनाविष्टोऽन्योमुक्तइत्यापत्तेः ३५ एवंचसतिदानाद्यप्यनर्थकंफलभोगकालेदातुरभावादित्याह एवमिति अन्येनविज्ञानेनाचरितमन्यद्विज्ञानांतरं प्रतिप्रवर्ततेफलंदातुंगच्छति ३६ इष्टापत्तिमाशंक्याहापीति अन्यत्वाविशेषाच्चैत्रपुण्यैरपिमैत्रःसुखीभवेदित्यर्थोदृश्यःस्पष्टः ३७ तथाहीति चैत्रज्ञानान्मैत्रज्ञानंपृथक्त्विसदृशंयेनवैजात्येनेतरपूर्व

अविद्यांक्षेत्रमाहुर्हिकर्मबीजंतथाकृतम् ॥ तृष्णासंजननंस्नेहएषतेषांपुनर्भवः ३३ तस्मिन्गूढेचदग्धेचभिन्नेमरणधर्मिणि ॥ अन्योऽस्माज्जायतेदेहस्तमा
हुःसत्वसंक्षयम् ३४ यदास्वरूपतश्चान्योजातितःशुभतोऽर्थतः ॥ कथमस्मिन्सइत्येवंसर्ववास्यादसंहितम् ३५ एवंसतिचकाप्रीतिर्दानविद्यातपोबलैः ॥
यदस्याचरितंकर्मसर्वमन्यत्प्रपद्यते ३६ अपिह्ययमिहैवान्यैःप्राकृतैर्दुःखितोभवेत् ॥ सुखितोदुःखितोवाऽपिदृश्याद्दृश्यविनिर्णयः ३७ तथाहिमुसलैर्हन्युःश
रीरंतत्पुनर्भवेत् ॥ पृथग्ज्ञानंयदन्यच्चयेनैतन्नोपपद्यते ३८ ऋतुसंवत्सरौतिष्यःशीतोष्णेऽथप्रियाप्रिये ॥ यथाऽतीतानिपश्यंतितादृशःसत्वसंक्षयः ३९
जरयाऽभिपरीतस्यमृत्युनाचविनाशिना ॥ दुर्बलंदुर्बलंपूर्वंगृहस्येवविनश्यति ४० इंद्रियाणिमनोवायुःशोणितंमांसमस्थिच ॥ आनुपूर्व्याविनश्यंतिस्वं
धातुमुपयांतिच ४१ लोकयात्राविघातश्चदानधर्मफलागमे ॥ तदर्थंवेदशब्दाश्चव्यवहाराश्चलौकिकाः ४२ इतिसम्यङ्मनस्येतेबहवःसंतिहेतवः ॥
एतदस्तीदमस्तीतिनकिंचित्प्रतिदृश्यते ४३ तेषांविमृशतामेवतत्तत्समभिधावताम् ॥ क्वचिन्निविशतेबुद्धिस्तत्रजीर्यतिवृक्षवत् ४४ एवमर्थैरनर्थैश्चदुः
खिताःसर्वजंतवः ॥ आगमैरपकृष्यंतेहस्तिपैर्हस्तिनोयथा ४५

श्लोकोक्तंदर्शनंनोपपद्यतेऽतश्चैत्रज्ञानधारैवसजातीयाविवक्षितेतिचेत्तर्हिउत्पद्यमानस्यसदृशज्ञानस्याक्षिप्तुपादानं नतावत्पूर्वज्ञानं तस्यक्षणिकत्वेनोत्तरोत्पादेव्यापारायोगात् । तत्राशश्चेन्मुसलैर्हता च्छरीरादप्यन्यच्छरीरंपुनर्भवेत् ३८ किंचऋत्वादिवज्ज्ञातोऽपिमोक्षःपुनःपुनरागत्यनिवर्तेतज्ञानधारायाआनंत्यादित्याह ऋत्विति तिष्यःकलिरितियुगानामुपलक्षणं बहुदोषग्रस्तत्वात्क्षणि कविज्ञानवादोऽनुपपन्नइत्यर्थः ३९ अस्तुतर्हिविज्ञानानामाश्रयःस्थिरःकश्चिदात्मेतितर्कमतमाशंक्याह जरयेति उपयन्नपयन्धर्मोविकरोतिहिधर्मिणमितिन्यायेनानित्यधर्माश्रयस्यधर्मिणोऽ ध्रुवमपक्षयादिनानाशइत्यर्थः ४० अनित्यधर्माश्रयोप्याकाशादिवन्ननश्यतीत्याशंक्येंद्रियवन्नश्यत्येवेत्याह इंद्रियाणीति मनसोनाशःसांख्यसंमतःप्रोक्तः ४१ अस्तुतर्हिबुद्ध्यादिगुणानाम नाश्रयःशुद्धस्तत्राकर्तृत्वेभोक्तृत्वतस्यदानादिफलाप्राप्तौदानादिवैयर्थ्यं । ततश्चसर्वस्याप्यात्मसुखार्थस्यलोकवेदव्यवहारस्योच्छेदइत्यर्थः ४२ इतीति मनःप्रभवेष्वनेकेषु.वेंधुग्नयाऽन्यतरोऽपि निर्धारयितुंनशक्यतइतिभावः ४३ विमृशतांविचारयतां ४४ निर्णायकंमानमाह एवमिति ४५

वेदोदितज्ञानेष्वप्यविवक्षितेश्रोतुरधिकारसंपत्तिर्विवत्ते अर्थानित्यादिना ४६ । ४७ सतिःशरीरे ४८ अनुपधिभ्रमविप्रलंभादिरहितं वेदमूलकत्वात् अच्छलंवैदिककर्मकांडवन्नमायामूलकं अनु योकुंपूर्वपक्षंकर्तुं ४९ ॥ ॥ इति शांतिपर्वणि मोक्ष० नीलकंठीये भारतभावदीपे अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ जनकइति ज्ञपितोनिशामितः निशामनेमित्यात्मस्वस्वं एतदस्तीदमस्तीतिनकिंचित्प्रतिदृश्यतइत्यनेकमतोपन्यासपूर्वकंजगतोऽनिर्वचनीयत्वंश्रावितः सांपरायेमरणे भवाभवौसंसारमोक्षौ १ ननुयदिसत्त्वासत्त्वाभ्यामनिर्वचनीयःसंसारस्तर्हिरज्जुर मवन्निस्तत्त्वस्यतस्यविनाशाययत्नोनिष्फलोनित्यनष्टत्वात्तस्येतिशंकते भगवन्निति प्रेत्यमरणादूर्ध्वंदेवत्वस्य संज्ञाविशेषविज्ञानं सुप्तिमूर्च्छावदत्यंतविस्मृतिरूपेमोक्षेऽपिनास्तिचेज्ज्ञानाज्ञानकृतो नकश्चिद्विशेषोऽस्ति २ ततश्चयत्ननैष्फल्यमित्याशंक्याह सर्वमिति उच्छेदनिष्ठमात्मनाशपर्यवसायिसर्वंयमनियमादि ३ असंसर्गइति यदिमोक्षेभूतेषुदिव्यांगनादिषुसंसर्गोनास्तितर्ह्यपिसंस र्गःस्वर्गवद्विनाशित्वेचेत्स्यात्तर्ह्यविशयाभावात्कस्मैफलायकोऽत्रतत्त्वतोनिश्चयःक्रियेत क्रियमाणोवाकथंकल्पेतघटेत तस्माद्विनाशिस्वर्गसुखमेवमोक्षःसचनिर्वचनीयएवेत्याशयः ४ कविः

अर्थास्तथाऽत्यंतसुखावहाश्चलिप्संतएतेबहवोविशुष्काः ॥ महत्तरंदुःखमनुप्रपन्नाहित्वाऽऽमिषंमृत्युवशंप्रयांति ४६ विनाशिनोह्यध्रुवजीवितस्यकिंबंधुभिर्मित्रप रिग्रहैश्च ॥ विहाययोगच्छतिसर्वमेवक्षणेनगत्वाननिवर्त्ततेच ४७ भूव्योमतोयानलवायवोऽपिसदाशरीरंप्रतिपालयंति ॥ इतीदमालक्ष्यरतिःकुतोभवेद्विनाशिनो ह्यस्यनशर्मविद्यते ४८ इदमनुपधिवाक्यमच्छलंपरमविरामयमात्मसाक्षिकम् ॥ नरपतिरभिवीक्ष्यविस्मितःपुनरनुयोक्तुमिदंप्रचक्रमे ४९ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षपर्वणि पंचशिखवाक्ये पाषंडखंडनंनाम अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ ४ ॥ ॥ ४ ॥

भीष्मउवाच ॥ जनकोजनदेवस्तुज्ञपितःपरमर्षिणा ॥ पुनरेवानुपप्रच्छसांपरायेभवाभवौ १ ॥ जनकउवाच ॥ भगवन्यदिनप्रेत्यसंज्ञाभवतिकस्यचित् ॥ एवंसतिकिमज्ञानंज्ञानंवाकिंकरिष्यति २ सर्वमुच्छेदनिष्ठंस्यात्पश्यचैतद्द्विजोत्तम ॥ अप्रमत्तःप्रमत्तोवाकिंविशेषंकरिष्यति ३ असंसर्गोहिभूतेषुसंसर्गोवाविना शिषु ॥ कस्मैक्रियेतकल्प्येतनिश्चयःकोऽत्रतत्त्वतः ४ ॥ भीष्मउवाच ॥ तमसाहिप्रतिच्छन्नंविभ्रांतमिवचातुरम् ॥ पुनःप्रशमयन्वाक्यैःकविःपंचशिखोऽब्रवीत् ५ उच्छेदनिष्ठानेहास्तिभावनिष्ठानविद्यते ॥ अयंह्यपिसमाहारःशरीरेंद्रियचेतसाम् ॥ वर्ततेपृथगन्योन्यमप्यपाश्रित्यकर्मसु ६

क्रांतदर्शी ५ विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञाऽस्तीति देहाद्युत्थितस्यउपाधिविशिष्टस्वरूपस्यनाशाद्विशेषविज्ञानाभावेयाज्ञवल्क्येनोक्तेमैत्रेयीआत्मोच्छे दबुद्ध्याअत्रैवमाभगवानमूमुहदितितमुपालब्धवतीनवाअरेमोहंब्रवीमीत्यादिनापुनर्याज्ञवल्क्येनबोधिता तद्वदिहापिव्याकुलंराजानमाश्वासयत्यर्धेन उच्छेदेति उच्छेदनिष्ठानाशेपर्यवसानंन नापिभावनिष्ठाविशेषेपर्यवसानमस्तिकिंत्वविद्ययाआत्मन्यारोपितंबुद्ध्यादिकंरज्जुरगवत्तत्केवलमपोह्यतेतावतैवानर्थनिवृत्तिः स्वरूपानंदस्यचकंठगतविस्मृतचामीकरवत्प्राप्तिरितिकृतकरत्वा ऽस्त्यवस्तदर्थोयत्नोननिष्फलइतिभावः तथाचश्रुतिः । 'अविनाशीवाअरेऽयमात्माऽनुच्छित्तिधर्मामात्रासंसर्गस्त्वस्यभवति' इति मात्राप्रमाताभनर्थश्चप्रमातृताप्रमुक्तंकर्तृत्वभोक्तृत्वनिमित्तदुःखसं सर्गोमोक्षइतिप्रतिपादयत्यात्मनिदेहाद्यध्यारोपमेवाहायामित्यादिना समाहारःसंघातः अस्मिन्नन्नेकेन्यतरनाशेऽपिसंघातनाशइत्यन्योन्यमपाश्रित्येत्यस्यार्थः ६

शरीरादीनामनात्मत्वंवक्तुंतत्प्रकृतीराह धातवइति धीयतेनिलीयतेकार्यमेष्वितिधातवउपादानानि ज्योतिषोधरेत्यनयोर्मध्येजलमित्यपिज्ञेयं पंचधातोवमिति पाठांतरंतुयमं स्वभावेनेति सांख्यमताभिप्रायेणतेषांहीश्वरकालयोरभावाज्जीवानांचोदासीनत्वादचेतनस्यचकार्यत्वेनकारणामवर्तकत्वात्स्वभावतएवगुणानांप्रवृत्तिरितिमतम् ७ प्रवृत्तानिभूतानिशरीराकारेणपरिणमं तेइत्याहाकाशइति यानिखानिसआकाशःयःप्राणःसवायुः यऊष्मासोऽग्निः यत्लोहितादिद्रवंतदापः यत्कठिनमस्थ्यादितत्पृथिवीत्यर्थः । नैकधेतिजरायुजादिभेदेन ८ शरीरोत्पत्तिमु क्त्वाइंद्रियोत्पत्तिमाह ज्ञानेति शरीरेबुद्धिर्जाठरःप्राणश्चसर्वंकर्मसंग्राहकोगणः । कुतः यतोऽष्टइंद्रियाद्यष्टकंनिःसृतं । अर्थाःशब्दादयःस्वभावोऽर्थप्रकाशकत्वम् । चेतनाघटाद्याकारा वृत्तिः । मनःसंकल्पादिरूपमेवतद्ज्ञानकार्यं । वायुकार्येतुप्राणापानौतौचव्यानादीनामप्युपलक्षणं । विकारोऽशितपीतादिपाचनेनेंद्रियादीनामाप्यायनादिर्जाठरकार्यं ९ श्रवणंश्रोत्रं स्पर्शनंत्वगिंद्रियं नासाघ्राणंचित्तपूर्वंकारणंयस्यार्थगणस्यतंचित्तपूर्वंचित्तमात्रोपादानकं गताःप्राप्ताः गुणाःगुणकार्यभूताः १० विज्ञानसंयुक्ताचिरप्रतिबिंबगर्भाचेतनावृत्तिः विषयस्यो पादेयत्वहेयत्वोपेक्षणीयत्वैस्त्रिविधा ११ मूर्तयःरूपाश्रयद्रव्याणि वाय्वाकाशयोरमूर्तत्वंश्रुतेर्बाह्येंद्रियाग्राह्यत्वात् पंचशब्दाद्याःमूर्तिभिःसहषट्गुणाविप्रयाः ज्ञानंप्रमातस्यसिद्धयेवि

धातवःपंचभूतेषुखंवायुर्ज्योतिषोधरा ॥ तेस्वभावेनतिष्ठंतिवियुज्यंतेस्वभावतः ७ आकाशोवायुरूष्माचस्नेहोयश्चापिपार्थिवः ॥ एषपंचसमा हारःशरीरमपिनैकधा ८ ज्ञानमूष्माचवायुश्चत्रिविधःकार्यसंग्रहः ॥ इंद्रियाणींद्रियार्थाश्चस्वभावश्चेतनामनः ॥ प्राणापानौविकारश्चधातवश्चात्र निःसृताः ९ श्रवणंस्पर्शनंजिह्वादृष्टिर्नासातथैवच ॥ इंद्रियाणीतिपंचैतेचित्तपूर्वंगतागुणाः १० तत्रविज्ञानसंयुक्तात्रिविधाचेतनाध्रुवा ॥ सुखदुःखेतियामाहुरदुःखामसुखेतिच ११ शब्दःस्पर्शश्चरूपंचरसोगंधश्चमूर्तयः ॥ एतेह्यामरणात्पंचषड्गुणाज्ञानसिद्धये १२ तेषुकर्मविसर्गश्चसर्व तत्त्वार्थनिश्चयः ॥ तमाहुःपरमंशुक्रंबुद्धिरित्यव्ययंमहत् १३ इमंगुणसमाहारमात्मभावेनपश्यतः ॥ असम्यग्दर्शनैर्दुःखमनंतंनोपशाम्यति १४ अनात्मेतिचयद्दृष्टंतेनाहंनममेत्यपि ॥ वर्ततेकिमधिष्ठानात्प्रसक्तादुःखसंततिः १५

षयकरणयोगाद्भितज्जायते १२ किंचतेषुश्रोत्रादिषु कर्मस्वर्गसाधनं विसर्गःसंन्यासोब्रह्मलोकदः । संन्यासाद्ब्रह्मणःस्थानमितिस्मृतेःसर्वतत्त्वार्थनिश्चयोमोक्षहेतुः तंतत्त्वनिश्चयं परमंश्रेष्ठं शुक्रंमोक्षबीजं बुद्धिरित्यव्ययं मोक्षदत्वादव्ययमितिचाहुः महद्ब्रह्मतत्प्रदत्वात् १३ इममिति अस्मिन्संघातेअनात्मनिआत्मबुद्धिरनर्थहेतुरित्यर्थः १४ एवमध्यारोपमुक्त्वाऽपवादमाहा नात्मेत्यादिना इतियद्दृष्टंतदनात्मेतिसंबंधः स्वात्मनिवृत्तिविरोधादिदंतयायद्दृष्टमहंकारादितदनात्मानेत्यर्थः । नहिदृश्यंद्रष्टुरात्मेतियुक्तंतेनकारणेनअहमितिममेतिचनवर्तते । यथ नामेदंनप्रतीयेततान्मिथ्यायथाशुक्तिरजतम् । अहंकारदेहेंद्रियादिकंचात्मन्यभेदेनप्रतीयतेऽयमहमस्मिकाणोऽहंगौरोऽहमित्यतोमिथ्यातस्तत्संबंधिममकारास्पदंपुत्रादिकमपिमिथ्या अतोऽहमितिममेतिचनवर्ततइतियुक्तमुक्तम् । अनात्मेतिच्छ्रुतिनिर्दिष्टंचनाहंनचममेत्यपीतिपाठेइतिदिदृक्षमित्येवमाकाराप्रतीतिरैतिह्यं । स्वार्थेऽण्यः तत्रनिष्ठापरिसमाप्तिर्यस्यतन्निष्ठइत्यर्थः । सत्त्वोऽप्यनात्माऽतोऽहमितिनवर्ततेममेत्यपिनवर्ततइतियोजना पाठांतरंस्वनाकरं एवंसतियाप्रसक्ताप्रतीयमानादुःखसंततिःसाकिमधिष्ठानाआत्मनोऽसंगत्वात् अहंकारस्यचमिथ्यात्वात् जूरगर्भीपणत्वचनिरधिष्ठानैव । याहतोवत्सत्वादशोचयितिरिमिप्पायेनाहंकारवन्मिथ्यैवेत्यर्थः १५

अत्रेति इतिगुणनार्थेज्योतिःशास्त्रेप्रसिद्धः सम्यग्वधोगुणनं पुनःपुनरभ्यस्यंतेतस्त्वाभ्यास्मिन्निति सम्यग्वधोनामसांख्यशास्त्रं । सम्यङ्भमइतिपाठेसम्यक्संदेहनिर्मुक्तमनोयेनेतितदेव । त्याग प्रधानंशास्त्रंत्यागशास्त्रम् १६ तदेवाह त्यागइति युक्तानामत्यर्थनित्योद्युक्तानांपुंसांसर्वकर्मत्यागएवनित्यमतः कर्मणामितिधनादेरप्युपलक्षणं येतुमिथ्याविनीतास्त्यागंविनाशांत्यादि परास्तेषांक्लेशोऽविद्यादिरूपोमतः १७ सर्वशास्त्रतात्पर्यंत्यागेएवेत्याह द्रव्येति द्रव्यादित्यागनिमित्तंयज्ञकर्मादीन्युपदिशंतीतिशेषः । सर्वत्यागनिमित्तंयोगमुपदिशंति । यतःसात्यागस्य समापनासमाप्तिःपराकाष्ठेत्यर्थः १८ तस्येति अयंत्वद्ग्रप्राणायोगोऽद्वैतःप्रकारभेदशून्यः तथाचत्यागस्यैवप्राधान्यंमाध्यंदिनशाखिनःसमामनंति । 'त्यागएवहिसर्वेषांमोक्षसाधनमुत्तमं । त्यजतैवहितज्ज्ञेयंत्यक्तुःप्रत्यक्परंपदं' इति अन्यथात्यागाभावे १९ त्याज्यंगणमाह पंचेति चेतसिबुद्धौसतीतिबुद्धित्यागेसर्वाणित्यक्तानिस्युरितिभावः बलंप्राणशक्तिः २० शेफःशि

अत्रसम्यग्वधोनामत्यागशास्त्रमनुत्तमम् ॥ शृणुयत्तवमोक्षायभाष्यमाणंभविष्यति १६ त्यागएवहिसर्वेषांयुक्तानामपिकर्मणाम् ॥ नित्यंमिथ्याविनीतानांक्लेशोदुःखवहोमतः १७ द्रव्यत्यागेतुकर्माणिभोगत्यागेव्रतान्यपि ॥ सुखत्यागेतपोयोगंसर्वत्यागेसमापना १८ तस्यमार्गोऽयमद्वैधःसर्वत्यागस्यदर्शितः ॥ विप्रहाणायदुःखस्यदुर्गतिस्त्वन्यथाभवेत् १९ पंचज्ञानेंद्रियाण्युक्त्वामनःषष्ठानिचेतसि ॥ बलषष्ठानिवक्ष्यामिपंचकर्मेंद्रियाणितु २० हस्तौकर्मेंद्रियंज्ञेयमथपादौगतींद्रियम् ॥ प्रजननानंदयोःशेफोनिसर्गेपायुरिंद्रियम् २१ वाक्तुशब्दविशेषार्थमितिपंचान्वितंविदुः ॥ एवमेकादशैतानितुद्ध्याऽऽशुविसृजेन्मनः २२ कर्णौशब्दश्चचित्तंचत्रयःश्रवणसंग्रहे ॥ तथास्पर्शेतथारूपेतथैवरसगंधयोः २३ एवंपंचत्रिकाह्येतेगुणास्तदुपलब्धये ॥ येनायंत्रिविधोभावःपर्यायात्समुपस्थितः २४ सात्त्विकोराजसश्चापितामसश्चापितेत्रयः ॥ त्रिविधावेदनायेषुप्रसूताःसर्वसाधनाः २५ प्रहर्षःप्रीतिरानंदःसुखंसंशांतचित्तता ॥ अकुतश्चित्कुतश्चिद्वाचिंतितःसात्त्विकोगुणः २६ अतुष्टिःपरितापश्चशोकोलोभस्तथाऽक्षमा ॥ लिंगानिरजसस्तानिदृश्यंतेहेत्वहेतुतः २७ अविवेकस्तथामोहःप्रमादःस्वप्नतंद्रिता ॥ कथंचिदपिवर्तंतेविविधास्तामसागुणाः २८ अत्रयत्प्रीतिसंयुक्तंकायेमनसिवाभवेत् ॥ वर्ततेसात्त्विकोभावइत्यपेक्षेततत्तथा २९ यत्त्वसंतोषसंयुक्तमप्रीतिकरमात्मनः ॥ प्रवृत्तंरजइत्येवंततस्तदपिचिंतयेत् ३० अथयन्मोहसंयुक्तंकायेमनसिवाभवेत् ॥ अप्रतर्क्यमविज्ञेयंतमस्तदुपधारयेत् ३१

श्नं पायुर्गुदं २१ पंचान्वितंमनइतिबुद्ध्वाबुद्ध्याविसृजेन्मनस्त्यजेत् । मनस्त्यागेसविषयाणांकर्मेंद्रियाणांत्यागोबुद्धित्यागेसमनस्कानांज्ञानेंद्रियाणांचत्यागःसिद्धइतिप्रघट्टकार्थः २२ एतमेवस्पष्टयति कर्णावित्यादिना कर्णौश्रोत्रंकरणं शब्दोविषयः चित्तंकर्तृ श्रवणंक्रिया २३ पंचत्रिकाः सर्वाण्यपिविषयकरणद्वंद्वानिसमनस्कानीतित्रिकाइत्युक्तं । एतेगुणास्तत्तदुपलब्धयेशब्दादिज्ञानाभिव्यक्तयेभवंति येनानुभवाभिव्यंजनेननिमित्तेनायंत्रिविधोभावःकरणकर्मकर्तृरूपःपर्यायात्पूर्वगर्वतयास्ति २४ त्रैविध्यमेवाह सात्त्विकइति वेदनाःअनुभवाः सर्वान्प्रहर्षादीन्साधयंतीतिसर्वसाधनाः २५ इष्टश्रवणदर्शनप्राप्तिपरिष्वंगजानिसुखानिप्रहर्षप्रीत्यानंदसुखशब्दितानि संशांतचित्तताभुक्तेभुक्तेवाऽनुत्सुकता अकुतश्चिद्वैराग्यात्स्वतएव कुतश्चिदितिइष्टलाभात् चिंतितोविचारितः चित्तइतिपाठेचित्तजः २६ अक्षमेतिच्छेदः हेत्विति पूर्ववत् २७ कथंचिदिति हेत्वहेतुभिरित्यर्थः २८ अपेक्षेतेत्युक्तेतरयोर्हेयत्वमुक्तं २९ । ३० । ३१



एवंशब्दादीनांश्रोत्रादीनांचत्रिगुणात्मकचित्तमात्रत्वमुक्तंचित्तत्यागेनैवगुणकरणविषयाणांत्यागोभवतीतिज्ञानायेदानींवियदादिभ्योऽनन्यत्वंशब्दश्रोत्रादीनामुच्यतेतत्प्रविलापनेनैववियदादिप्रविलापनंभवत्विस्येतदर्थं श्रोत्रमितिद्वाभ्यां आकाशाश्रितंश्रोत्रमाकाशरूपंभूतमेव कर्णशष्कुल्यवच्छेदेननभसएवश्रोत्रत्वात् एवंश्रोत्राश्रितःशब्दोऽपिपरंपरयाभूतमेव एवंसतिशब्दविज्ञानेउभयंव्योमश्रोत्रेविज्ञानस्यविषयौन । नहिशब्दंजानताश्रोत्राकाशावपिज्ञायेतेतयोर्ज्ञातात्वेचतौभवेतांकिंनश्छिन्नमित्याशंक्याह इतरस्यविज्ञानादन्यस्याज्ञानस्यवाविषयौश्रोत्राकाशौनभवतः शब्दस्यतदुभयानन्यत्वात् । नहिघटरूपादिवदाश्रयाश्रितकृतयोःशब्दश्रोत्रयोराकाशगुणकार्ययोर्ग्रहणंप्रविलापनंवाकर्तुंशक्यंतस्मात्श्रोत्रादिप्रविलापनेनैवतदनन्यस्यशब्दाकाशादेरपिप्रविलापनंयुक्तं श्रोत्रादीनांचचित्तादनन्यत्वात् । तानिशब्दाकाशादीन्यपिस्मरणात्मकंचित्तमेव । चित्तमपिमनसोऽध्यवसायात्मकादनन्यदितिधीमात्रं सर्वंमनसिलीनेलीनभवतीत्यर्थः ३२ । ३३ सर्वेषांमनोमात्रत्वेयुक्तिमाह स्वकर्मेति एतेषुदशसुविषयेंद्रियपंचकद्वयेएकादशंचित्तमनुगतंतिष्ठतीतिविद्धि यदशरावादिष्विवमृत्स्ना अत्रहेतुःस्वकर्मयुगपद्भावइतिपंचम्यर्थेप्रथमा स्वेषामिंद्रियविषयाणांकर्माणिश्रवणस्पर्शनदर्शनादीनितेषांयौगपद्यात्सुप्तोत्थितमात्रस्यपुंसोलब्धात्मकंमनोयुगपदुपस्थितान्शब्दादीननुभवति तच्चतेषांमनआत्मकत्वामावेनसंगच्छते । उपादानंहिस्वकार्येयुगपत्संगतंभवत्यनुपादानंतुक्रमेणेतिस्पष्टं । येतुयुगपज्ज्ञानानुपलब्धिर्मनसोलिंगमितिन्यायाद्यौगपद्यमेवानुपादानस्यमनसःसाधकंलिंगमाहुस्तेषांगगाह

श्रोत्रंव्योमाश्रितंभूतंशब्दःश्रोत्रंसमाश्रितः ॥ नोभयंशब्दविज्ञानेविज्ञानस्येतरस्यवा ३२ एवंत्वक्चक्षुषीजिह्वानासिकाचेतिपंचमी ॥ स्पर्शेरूपेरसेगंधेतानिचेतोमनश्चतत् ३३ स्वकर्मयुगपद्भावोदशस्वेतेषुतिष्ठति ॥ चित्तमेकादशंविद्धिबुद्धिर्द्वादशमीभवेत् ३४ तेषामयुगपद्भावउच्छेदोनास्तितामसे ॥ आस्थितोयुगपद्भावोव्यवहारःसलौकिकः ३५ इंद्रियाण्यपिसूक्ष्माणिदृष्ट्वापूर्वंश्रुतागमात् ॥ चिंतयन्नानुपर्येतित्रिभिरेवान्वितोगुणैः ३६ यत्तमोपहतंचित्तमाशुसंहारमध्रुवम् ॥ करोत्युपरमंकायेतदाहुस्तामसंबुधाः ३७ यद्यदागमसंयुक्तंनकृच्छ्रमनुपश्यति ॥ अथतत्राप्युपादत्तेतमोव्यक्तमिवानृतम् ३८

दनिग्रहस्ययुगपत्सर्वांगीणशैत्यानुभवेनहेतोर्बाधइत्यास्तांतावत् । चित्तस्यापिव्यापिकाबुद्धिर्द्वादशमीद्वादशी आर्षोमट्प्रत्ययः ३४ तेषांद्वादशानामात्मन्यारोपितानामयुगपद्भावोप्रदृष्टदृश्यापरकंचित्तंसर्वार्थमितियोगप्रसिद्धं । चित्तस्यसर्वार्थत्वमिहबुद्ध्यादियुगपद्भावइत्युच्यते तदन्योविशेषविज्ञानराहित्यलक्षणोज्ञातृज्ञेयज्ञानयौगपद्याभावस्तामसोनिद्रारूपतमोमयःसुषुप्तिकालीनस्तस्मिन्सत्यप्यात्मनउच्छेदोनास्ति उत्थितस्यसुखमहमस्वाप्समित्यादिपरामर्शात् । सतासौम्यतदासंपन्नोभवतीतिसुषुप्तौब्रह्मसंपत्तिश्रवणात् । सएवतुकर्मानुस्मृतिशब्दविधिभ्यइतिन्यायायुगपद्भावएवआत्मनोवास्तवंतत्त्वंयुगपद्भावस्तुस्वप्नवदज्ञानकृतइत्याह आस्थितइति लौकिकोनतुपारमार्थिकः ३५ व्यावहारिकंयुगपद्भावमुक्त्वाप्रातिभासिकंस्वप्नकालिकंतमाहेंद्रियाणीतिपूर्वंश्रुतंश्रवणक्रियासाचस्पर्शनादीनामप्युपलक्षणंतयाशब्दादीनामागमःप्राप्तिःपूर्वानुभववासनातइत्यर्थः । सूक्ष्माणींद्रियाण्येकादशद्रष्टाचितयन्नविषयसंगंभावयन् नानुरूपान्स्वप्नदर्शीत्रिभिर्गुणैःसत्त्वादिभिर्युक्तोऽनुपर्येतिजाग्रदवस्थामनुसंचरतिस्वप्ने कायेइत्युत्तरादपकृष्यते स्वेशरीरेयथाकामंपरिवर्ततइतिश्रुतेः ३६ तमोपहतंतमोगुणेनाभिभूतंचित्तंप्रवृत्तिप्रकाशात्मकमाशुसंहारंशीघ्रंसंहृत्यअध्रुवंमोक्षवदानंत्यहीनमुपरमंपूर्वोक्तयुगपद्भावस्योच्छेदंकरोतितत्सुखंतामसमज्ञानप्रधानंशरीरएवसुषुप्तावनुभूयते ३७ सुषुप्तिसादृश्यंकैवल्यस्याह यद्यदिति यत्सुखमागमसंयुक्तमानंदोप्रत्येतिवेदबोधितंयद्यस्मिन्कृच्छ्रंद्वैतदुःखंनानुपश्यति । नकिंचिदनुशाम्यतीतिपाठांतरेयत्रनकिंचित्सुखंदुःखंवाज्ञातृज्ञेयंवाऽस्तिकिंतुदर्पणवन्नालत्वदाचार्योपदेशमनुशाम्यत्येव । तत्रतस्मिन्नपिसुखेअव्यक्तमनृतंतमउपादत्तइव । वस्तुतस्तुतमोनास्तितथापिद्वैतदर्शनाभावसाम्येनाहतमव्यक्तंच ज्ञात्रादिविषयाणामभावात् ३८

एवंसुएमिवन्मोक्षेऽप्येषोऽहंकारादिघटांतोदृश्यमानोगुणोभोग्यवर्गःस्वकर्मप्रत्ययःकर्महेतुकाविर्भावःप्रसंख्यातःप्रत्याख्यातःकेषांचिदविद्यावतांत्रअपंजरवद्वर्तते केषांचिद्विद्यावतांकालत्रयेऽपिन हास्ति ३९ एतदएतंसमाहारंसंघातंक्षेत्रमाहुः एतदितिविधेयापेक्षंक्लीबत्वं मनसिसंघातबीजभूतेयोभावोयासत्तासक्षेत्रज्ञः शुक्तिरजतवदध्यस्तस्यमनसःसत्तास्फूर्तिप्रदः ४० एवमिति सर्वेषुभूतेषुचतुर्विधेषु हेतुतःअनाद्यविद्याकामकर्मवशतः । स्वभावात्सत्यानृतयोरात्माऽनात्मनोर्मिथुनीकरणात् । व्यवहारेवर्तमानेषुसत्सुकउच्छेदउच्छेदवान् । कोवाशाश्वतःस्यात् ना सतोविद्यतेभावोनाभावोविद्यतेसतइतिन्यायेनासतःसंघातस्यस्वरूपाभावादेवनोच्छेदप्रसंगः । अतएवशाश्वतत्वंचास्यनेत्यर्थः । यद्वा शाश्वतआत्मावाकथमुच्छेदवान्भवेदितियापूर्व स्ययाआत्मोच्छेदशंकाकृतासानिरालंबनेत्यर्थः । एतेनपुंप्रकृत्योरत्यंतवैधर्म्यमुपपादितम् ४१ यथेति नद्योनदाश्चव्यक्तीःरूपाणिनामचजहतित्यजंति नदाश्वतानदीर्नियच्छांतिस्ववशे कुर्वंति यथाक्षुद्रनदीमहानद्यांनामरूपेजहातिमहानदीचसमुद्रेलीयतेतद्वत्सत्वस्यमहदादिघटांतात्मनास्थितस्योत्पत्तिविपरीतक्रमेणसंक्षयःस्थूलंसूक्ष्मेलीयतेसूक्ष्मंकारणेतच्चशुद्धेइत्यर्थः ४२ प्र

एवमेषप्रसंख्यातःस्वकर्मप्रत्ययोगुणः ॥ कथंचिद्वर्ततेसम्यक्केषांचिद्वानिवर्तते ३९ एतदाहुःसमाहारंक्षेत्रमध्यात्मचिंतकाः ॥ स्थितोमनसियोभावःसवैक्षेत्रज्ञ उच्यते ४० एवंसतिकउच्छेदःशाश्वतोवाकथंभवेत् ॥ स्वभावाद्वर्तमानेषुसर्वभूतेषुहेतुतः ४१ यथार्णवगतानद्योव्यक्तीर्जहतिनामच ॥ नदाश्वतानियच्छं तितादृशःसत्वसंक्षयः ४२ एवंसतिकुतःसंज्ञाप्रेत्यभावेपुनर्भवेत् ॥ जीवेचप्रतिसंयुक्तेगृह्यमाणेचसर्वतः ४३ इमांचयोवेदविमोक्षबुद्धिमात्मानमन्विच्छतिचाप्र मत्तः ॥ नलिप्यतेकर्मफलैरनिष्टैःपत्रंबिसस्येवजलेनसिक्तम् ४४ दृढैश्चपाशैर्बहुभिर्विमुक्तःप्रजानिमित्तैरपिदैवतैश्च ॥ यदाह्यसौसुखदुःखेजहातिमुक्तस्तदा ग्र्यांगतिमेत्यलिंगः ४५ श्रुतिप्रमाणागममंगलैश्चशेतेजरामृत्युभयादभीतः ॥ क्षीणेचपुण्येविगतेचपापेततोनिमित्तेचफलेविनष्टे ॥ अलेपमाकाशमलिंगमेवमा स्थायपश्यंतिमहत्यसक्ताः ४६ यथोर्णनाभिःपरिवर्तमानस्तंतुक्षयेतिष्ठतिपात्यमानः ॥ तथाविमुक्तःप्रजहातिदुःखंविध्वंसतेलोष्टइवाद्रिमृच्छन् ४७ यथा रुरुःशृंगमथोपुराणंहित्वात्वचंवाप्युरगोयथाच ॥ विहायगच्छत्यनवेक्षमाणस्तथाविमुक्तोविजहातिदुःखम् ४८ द्रुमंयथावाप्युदकेपतंतमुत्सृज्यपक्षीनिपतत्य सक्तः ॥ तथाह्यसौसुखदुःखेविहायमुक्तःपरार्ध्यांगतिमेत्यलिंगः ४९

तिसंयुक्तेउपाधिमिश्रेजीवेसर्वतःसर्वात्मनादर्पणस्थमुखवद्गृह्यमाणेसतिप्रेत्यभावेउपाध्यपायेसंज्ञायमहंदेवदत्तोऽस्मीतिवद्ग्रहणंकुतःस्यान्नकुतश्चिन्नापिग्रहणाभावान्मुखस्येवात्मनउच्छेदोऽप्यस्ती तिनोक्तशंकावकाशइत्यर्थः ४३ विद्याफलमाह इमामिति वेदशास्त्रतःअन्विच्छतिशमादिपरोभवति बिसस्यमृणालस्य ४४ पाशैःस्नेहकर्मनिमित्तैः तेषांग्रहणंप्रजेत्यादिना अलिंगः पंचप्राणमनोबुद्धिदशेंद्रियात्मकलिंगहीनः ४५ श्रुतिप्रमाणंतत्त्वमसीतिवाक्यं आगमोक्तंमंगलं साधनंशमादि निमित्तेमोहोत्थेफलेसुखदुःखात्मके महतिबुद्धितत्त्वेऽस्मितामात्रेपश्यंति । तत्रैवहिसांख्यानांगुणपुरुषांतरज्ञानमस्माकंचप्रतीचोब्रह्मभावागमःप्रसिद्धः । असक्ताविरक्ताःआकाशंहार्दाकाशाख्यंसगुणंब्रह्मास्थायाऽऽश्रित्यअलिंगंनिर्गुणंपश्यंतीतियोजना ४६ यथेति ऊर्णनाभिर्लूताकीटस्तंतुक्षयेतंतुमयेगृहेयथातिष्ठति तथैवपात्यमानोऽविद्यावशोजीवःकर्मतंतुगृहेतिष्ठति । तथाचोर्णनाभिस्तंतुक्षयंप्रजहातिएवंविमुक्तोपि । हानेफलमाह दुःखंविध्वंसतइति दृष्टांतोलोष्टइति पांसुपिंडःअद्रिंपाषाणंऋच्छन्वेगेनप्राप्नुवन् ४७ रुरुर्मृगभेदः ४८ परार्ध्यांश्रेष्ठाम् ४९



केनवृत्तेनवृत्तज्ञोजनकोमिथिलाधिपइतियुधिष्ठिरप्रश्नबीजमुपन्यस्यति अपिचेति ५० । ५१ अवेक्षतेअर्थतःपर्यालोचयति कपिलंकपिलमतशिष्यंपंचशिखम् ५२ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥ ॥ ७ ॥ ॥ किंकुर्वन्सुखमाप्नोतिकिंकुर्वन्दुःखमाप्नुयादित्यारभ्यभाष्यंतंसर्वभूतानां ज्ञातुमिच्छामिकौरव्येत्यतःप्राक्तनीएकादशाध्यायीउक्तवक्ष्यमाणस्वरूपज्ञानलाभार्थासाधनसंपद्विधानार्थाप्रायेणस्पष्टार्थातथापिविषमाणिपदान्यत्रव्याख्यायंते १ श्रुतिसमाधयोवेदद्रष्टारः २ दमोबाह्येंद्रियनिग्रहस्तद्वर्जितःअदांतः ३ । ४ । ५ तीक्ष्णोराजसः अमित्रान्कामादीन् ६ क्रव्याद्भ्योव्याघ्रादिभ्योमांसभक्षकेभ्यः ७ भूयोऽधिकम् ८ लिंगानिस्वरूपाणि

अपिचभवतिमैथिलेनगीतंनगरमुपाहितमग्निनाऽभिवीक्ष्य ॥ नखलुममहिदह्यतेऽत्रकिंचित्स्वयमिदमाहकिलस्मभूमिपालः ५० इदममृतपदंनिशम्यराजास्व यमिहपंचशिखेनभाष्यमाणम् ॥ निखिलमभिसमीक्ष्यनिश्चितार्थःपरमसुखंविजहारवीतशोकः ५१ इमंहियःपठतिमोक्षनिश्चयंमहीपतेसततमवेक्षतेतथा ॥ उपद्रवान्नानुभवत्यदुःखितःप्रमुच्यतेकपिलमिवैत्यमैथिलः ५२ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि पंचशिखवाक्यंनाम एकोनविंशाधिकद्वि शततमोऽध्यायः ॥ २१९ ॥ ॥ ७ ॥ ॥ युधिष्ठिर उवाच ॥ किंकुर्वन्सुखमाप्नोतिकिंकुर्वन्दुःखमाप्नुयात् ॥ किंकुर्वन्निर्भयोलोकेसिद्धश्चरतिभारत १ ॥ भीष्मउवाच ॥ दममेवप्रशंसंतिवृद्धाःश्रुतिसमाधयः ॥ सर्वेषामेववर्णानांब्राह्मणस्यविशेषतः २ नादांतस्यक्रियासिद्धिर्यथावदुपपद्यते ॥ क्रियातपश्चसत्यं चदमेसर्वंप्रतिष्ठितम् ३ दमस्तेजोवर्धयतिपवित्रंदमउच्यते ॥ विपाप्मानिर्भयोदांतःपुरुषोविंदतेमहत् ४ सुखंदांतःप्रस्वपितिसुखंचप्रतिबुद्ध्यते ॥ सुखं लोकेविपर्येतिमनश्चास्यप्रसीदति ५ तेजोदमेनध्रियतेतत्रतीक्ष्णोऽधिगच्छति ॥ अमित्रांश्चबहून्नित्यंपृथगात्मनिपश्यति ६ क्रव्याद्भ्यइवभूतानामदांतेभ्यः सदाभयम् ॥ तेषांविप्रतिषेधार्थंराजासृष्टःस्वयंभुवा ७ आश्रमेषुचसर्वेषुदमएवविशिष्यते ॥ यच्चतेषुफलंधर्मेभूयोदांतेतदुच्यते ८ तेषांलिंगानिवक्ष्यामियेषां समुदयोदमः ॥ अकार्पण्यमसंरंभःसंतोषःश्रद्दधानता ९ अक्रोधआर्जवंनित्यंनातिवादोऽभिमानिता ॥ गुरुपूजाऽनसूयाचदयाभूतेष्वपैशुनम् १० जनवा दमृषावादस्तुतिनिंदाविवर्जनम् ॥ साधुकामश्चस्पृहयेन्नायतिंप्रत्ययेषुच ११ अवैरकृत्सूपचारःसमोनिंदाप्रशंसयोः ॥ सुवृत्तःशीलसंपन्नःप्रसन्नात्माऽऽत्मवान्प्र भुः १२ प्राप्यलोकेचसत्कारंस्वर्गंवैप्रेत्यगच्छति ॥ दुर्गमंसर्वभूतानांप्रापयन्मोदतेसुखी १३ सर्वभूतहितेयुक्तोनस्मयोद्विषतेजनम् ॥ महाह्रदइवाक्षोभ्यः प्रज्ञातृप्तःप्रसीदति १४ अभयंयस्यभूतेभ्यःसर्वेषामभयंयतः ॥ नमस्यःसर्वभूतानांदांतोभवतिबुद्धिमान् १५

समुदेत्यस्मादितिसमुदयोहेतुः अकार्पण्यमदीनत्वं असंरंभोऽभिनिवेशाभावः ९ अतिवादोलौकिकार्थभाषणं अभिमानितागर्वः १० जनवादोराजादिवार्ता साधुकामोमोक्षार्थी प्रत्ययेषुसुखदुःखाद्यनुभवेषु आयतिमुत्तरकालं नस्पृहयेत् प्राप्तंसुखादिकंभुंजीतनतुकालांतरीयेतज्जोहर्षविषादौचिंतनीयावित्यर्थः नायतिंप्रत्ययोनृष्विति पाठेफलसंवादेनविश्वस्तोनृष्वादरंनकुर्यात् किंतुप्रागेवाकृतकार्येषुसाधुष्वविश्वासोनकर्त व्यइत्यर्थः ११ सूपचारःशाठ्यवर्जितादरःप्रसन्नात्माशुद्धचित्तः आत्मवान्धृतिमान् प्रभुर्जितकामादिदोषः १२ दुर्गमंदुष्काले दुर्लभमन्नादिप्रापयन्दयावानित्यर्थः १३ स्मेतिविषयवदुम् १४।१५

१६ । १७ । १८ । १९ । २० ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीयेभारतभावदीपे विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥ ॥ ७ ॥ ॥ भूता नामभयंयतइत्यहिंसाविधिः किमग्नीषोमीयंपशुमालभेतसुराग्रहंगृह्णातीतिवैदिकंब्राह्मणंकर्मप्रवर्तनावाक्यं । तथा'प्रीणयेच्चंडिकांभक्त्यामांसेनसुरयानृप'इत्यवैदिकंब्राह्मणं सविधिःकिमे ताभ्यांविरुद्धवर्तनेनेतिप्रश्नार्थः द्विजातयस्त्रैवर्णिकाः व्रतंयज्ञदीक्षामंत्रदीक्षाचतद्युक्ताः हविर्देवताशेषं अन्नमदनीयंमांसमद्यादि ब्राह्मणंपूर्वोक्तंद्विविधंतत्रोक्तोपःकामःस्वर्गपुत्रादि स्वस्मै यत्तद्भुंजतेतदिदंकथंयुक्तमयुक्तंवेतिपदार्थः १ अवेदोक्तेति भुंजानाअभोज्यंमांसादीतिशेषः । कार्यकारिणःकामाचारवंतः इहैवपतिताइत्यर्थः । व्रतलुब्धादीक्षोक्तफलानुरागिणःस्वर्गं

नहृष्यतिमहत्यर्थेव्यसनेचनशोचति ॥ सवैपरिमितप्रज्ञःसदांतोद्विजउच्यते १६ कर्मभिःश्रुतसंपन्नःसद्भिराचरितःशुचिः ॥ सदैवदमसंयुक्तस्तस्यभुंक्तेमहाफ लम् १७ अनुसूयाक्षमाशांतिःसंतोषःप्रियवादिता ॥ सत्यंदानमनायासोनैषमार्गोदुरात्मनाम् १८ कामक्रोधौचलोभश्चपरस्येर्ष्याविकत्थना ॥ कामक्रोधौव शेकृत्वाब्रह्मचारीजितेंद्रियः १९ विक्रम्यघोरेतमसिब्राह्मणःसंशितव्रतः ॥ कालाकांक्षीचरेल्लोकान्निरपायइवात्मवान् २० ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि दमप्रशंसायां विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ द्विजातयोव्रतोपेतायदिदंभुंजतेहविः ॥ अन्नंब्राह्मणकामायकथमेतत्पितामह १ ॥ ॥ भीष्मउवाच ॥ ॥ अवेदोक्तव्रतोपेताभुंजानाःकार्यकारिणः ॥ वेदोक्तेषुचभुंजानाव्रतलुब्धायुधिष्ठिर २ ॥ युधिष्ठिरउवाच ॥ ॥ यदिदंतपइत्याहुरुपवासंपृथग्जनाः ॥ एतत्तपोमहाराजउताहोकिंतपोभवेत् ३ ॥ ॥ भीष्मउवाच ॥ ॥ मासपक्षोपवासेनमन्यंतेय तपोजनाः ॥ आत्मतंत्रोपघातस्तुनतपस्तत्सतांमतम् ४ त्यागश्चसन्नतिश्चैवशिष्यतेतपउत्तमम् ॥ सदोपवासीसभवेद्ब्रह्मचारीसदाभवेत् ५ मुनिश्चस्यात्स दाविप्रोदैवतंचसदाभवेत् ॥ कुटुंबिकोधर्मकामःसदाऽस्वप्नश्चभारत ६ अमांसादीसदाचस्यात्पवित्रश्चसदाभवेत् ॥ अमृताशीसदाचस्याद्दैवतातिथिपूजकः ७ विघसाशीसदाचस्यात्सदाचैवातिथिव्रतः ॥ श्रद्दधानःसदाचस्याद्देवताद्विजपूजकः ८ ॥ ॥ युधिष्ठिरउवाच ॥ कथंसदोपवासीस्याद्ब्रह्मचारीकथंभवेत् ॥ विघसाशीकथंचस्यात्सदाचैवातिथिव्रतः ९ ॥ ॥ भीष्मउवाच ॥ ॥ अंतराप्रातराशंचसायमाशंतथैवच ॥ सदोपवासीसभवेद्योनभुंक्तेऽतरापुनः १० भा र्यांगच्छन्ब्रह्मचारीऋतौभवतिवैद्विजः ॥ ऋतवादीभवेन्नित्यंज्ञाननित्यश्चयोनरः ११ नभक्षयेद्वृथामांसममांसाशीभवत्यपि ॥ दाननित्यःपवित्रश्चअस्वप्नश्च दिवाऽस्वपन् १२ भृत्यातिथिषुयोभुंक्तेभुक्तवत्सुसदासदा ॥ अमृतंकेवलंभुंक्तेइतिविद्धियुधिष्ठिर १३

प्राप्स्यतिष्यंतीत्यर्थः । कृशाइतिपाठेव्रतविधिनात्यंचिताइत्यर्थः ३ एवंपरपीडाकरंयागादिकंविनिंद्यदेहपीडाकरमपिधर्मंमुमुक्षूणामनुपादेयंनिंदतिमध्योत्तराभ्यांयदिति ३ आत्मतंत्रमात्मविद्यात स्याउपघातोविघ्नः ४ आत्मविद्योपकारकंतपआह त्यागइति भूतभयंकरकर्मसंन्यासस्त्यागः सन्नतिर्भूताराधनं असंन्यासिनामपिमार्गमाह सदेति सकुटुंबिकोऽपिसदोपवासीत्याद्विविशेषणवा न्भवेत् ५ धर्मकामःनतुफलकामः अस्वप्नइतिच्छेदः ६ । ७ अतिथिर्विश्वेदेवांतेप्राप्तः देवताद्विजानांपूजकः ८ । ९ । १० । ११ वृथादेवपितृशेषंविना अस्वपन्नितिच्छेदः १२ । १३



अभुक्तवत्स्वतिथ्यादिषुनाश्नातःअनश्नन् १४ । १५ । १६ । १७ ॥ इति शांति० नीलकंठीये भा०प्रकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥ यदिति इदंसदोपवासीस्यादित्यादिना विहितंकर्म १ तस्यकर्ता अस्तिर्भवत्यर्थे पुरुषस्तस्यकर्तामवतिनवेतिप्रश्नार्थः कर्तेतिकाणादाः अकर्तेतिकापिलाः । आद्येमोक्षानुपपत्तिः स्वाभाविकस्यकर्तृत्वस्यवन्ह्यौष्ण्यवदाश्रयना शमंतरेणाविनाशात् । अंत्येशास्त्रानर्थक्यापत्तिःजडस्याप्रेर्यत्वाच्चेतनस्याकर्तृत्वाच्चसंशयः २ । ३ तत्त्वविदांलक्षणमेवज्ञानसाधनमितिप्रह्लादंविशिनष्टि असक्तमित्यादिना असक्तंफलेच्छा रहितं अस्तब्धंअनलसं अनहंकारंवीतगर्वं सत्त्वस्थसात्विकं अतएवसमयेस्वोचितेशमादौधर्मेरतम् ४ विदितःप्रभवश्चासावव्ययश्चेत्यपरिणाम्युपादानभूतःपरमात्मायेनतं ५ । ६ आत्म

अभुक्तवत्सुनाश्नानःसततंयस्तुवैद्विजः ॥ अभोजनेनतेनास्यजितःस्वर्गोभवत्युत १४ देवताभ्यःपितृभ्यश्चभृत्येभ्योऽतिथिभिःसह ॥ अवशिष्टंतुयोऽश्नातितमा हुर्विघसाशिनम् १५ तेषांलोकाह्यपर्यंताःसदनेब्रह्मणासह ॥ उपस्थिताश्चाप्सरोभिःपरियांतिदिवौकसः १६ देवताभिश्चयेसार्धंपितृभ्यश्चोपभुंजते ॥ रमंतेपुत्रपौत्रै श्चतेषांगतिरनुत्तमा १७ ॥ इति श्रीमहाभारते शांति० मोक्षध० अमृतप्राशिकोनामएकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥ युधिष्ठिरउवाच ॥ यदि दंकर्मलोकेऽस्मिन्शुभंवायदिवाऽशुभम् ॥ पुरुषंयोजयत्येवफलयोगेनभारत १ कर्ताऽस्तितस्यपुरुषउताहोनेतिसंशयः ॥ एतदिच्छामितत्त्वेनत्वत्तःश्रोतुंपितामह २ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रह्लादस्यचसंवादमिंद्रस्यचयुधिष्ठिर ३ असक्तंधूतपाप्मानंकुलेजातंबहुश्रुतम् ॥ अस्तब्धमन हंकारंसत्त्वस्थंसमयेरतम् ४ तुल्यनिंदास्तुतिंदांतंशून्यागारनिवासिनम् ॥ चराचराणांभूतानांविदितप्रभवाव्ययम् ५ अक्रुध्यंतमहृष्यंतमप्रियेषुप्रियेषुच ॥ कां चनेवाऽथलोष्टेवाउभयोःसमदर्शनम् ६ आत्मनिश्रेयसिज्ञानेधीरंनिश्चितनिश्चयम् ॥ परावरज्ञंभूतानांसर्वज्ञंसमदर्शनम् ७ शक्रःप्रह्लादमासीनमेकांतेसंयतेंद्रियम् ॥ बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ८ यैःकश्चित्संमतोलोकेगुणैःस्यात्पुरुषोनृषु ॥ भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ९ अथतेलक्ष्यतेबुद्धिःसमावा लजनैरिह ॥ आत्मानंमन्यमानःसन्श्रेयःकिमिहमन्यसे १० बद्धःपाशैश्च्युतःस्थानाद्द्विषतांवशमागतः ॥ श्रियाविहीनःप्रह्लादशोचितव्येनशोचसि ११ प्रज्ञाला भात्तुदैतेयउताहोधृतिमत्तया ॥ प्रह्लादस्वस्थरूपोऽसिपश्यन्व्यसनमात्मनः १२ इतिसंचोदितस्तेनधीरोनिश्चितनिश्चयः ॥ उवाचश्लक्ष्णयावाचास्वांप्रज्ञामनु वर्णयन् १३ ॥ प्रह्लादउवाच ॥ प्रवृत्तिंचनिवृत्तिंचभूतानांयोनबुध्यते ॥ तस्यस्तंभोभवेद्बाल्यान्नास्तिस्तंभोऽनुपश्यतः १४

निश्रेयसि श्रेयस्यानंदरूपे ज्ञानेचिन्मात्रे धीरंकुतर्कानभिभूतं अतएवनिश्चितनिश्चयं परोहिरण्यगर्भोऽवरोनीचोयस्मादीश्वरात्तज्ज्ञं अतएवसर्वज्ञं । 'आत्मनोवाअरेदर्शनेनेदंसर्वंविदितं'इ त्यात्मज्ञानात्सार्वज्ञ्यश्रुतेः समंनिर्विशेषंतद्दर्शनवंतं ७ बुभुत्समानस्तंबोद्धुमिच्छन् ८ भवतित्वयि अनपगान्स्थिरान् ९ बालजनैःसमारागद्वेषादिराहित्यात् मन्यमानोजानन्ना त्मज्ञानार्थंकिंश्रेयःप्रशस्ततरंसाधनं १० । ११ । १२ । १३ अत्रसांख्यमतमादायकर्तृत्वंनिराकरोति प्रवृत्तिमित्यादिना प्रवर्ततइतिप्रवृत्तिः निवर्ततइतिनिवृत्तिः पुरुषस्य भोगापवर्गौसाधयितुमनुलोमप्रतिलोमपरिणामवतीमूलप्रकृतिस्तांकर्तृकरणक्रियारूपामात्मनोऽन्यांयोनबुध्यतेतस्यात्मनिबुद्धिधर्मान्कर्तृत्वादीनारोपयतःस्तंभोपवेत्तस्वात्मानमनुपश्यतः त थाचश्रुतिः । 'तत्रकोमोहःकःशोकएकत्वमनुपश्यतः'इति १४

रथादिवदचेतनाप्रकृतिरधिष्ठातारंविनाकथंप्रवर्ततेइत्याशंक्याह स्वभावादिति यथावत्सोत्पत्तेःप्रागेवतद्बुद्धिनिमित्तंक्षीरंरुधिरपूर्णेऽपिगवामूधसिप्रवर्तते नचतदावात्सल्यादिकंतत्प्रवर्तकमस्ति वत्सस्यैवाजातत्वात् जातेतुवत्सेवात्सल्यंस्वरयतांनामप्रवृत्तिस्तुक्षीरस्वाभाविक्येव । तद्वत्सर्वेभावाभावाःस्वभावादेवप्रकृतितएवसंप्रवर्ततेनास्तिप्रवर्तकापेक्षेत्यर्थः । नन्वेवंजितंसांख्यैरित्याशं क्याह भावामहदाद्याअभावास्तेषांप्रलयाश्च पुरुषार्थोनविद्यतइति । पुरुषार्थोभोगापवर्गात्मकःसआत्मनिनास्ति । नहिप्रकृतिःकर्त्री पुरुषोभोक्तेतिवदामोयेनसिद्धांताक्षयेम । शास्त्रफलंप्रयोक्तरितिलक्षणत्वादितिन्यायंनचपश्यामःकिंतुयाकर्त्रीसैवभोक्त्री आत्मनितुभोक्तृत्वंजलचांचल्यवच्चन्द्रेतिरिरितिवदामः १५ नन्वयस्कांतमणिवत्पुरुषस्योदासीनस्यापिसत्ता मात्रेणप्रवर्तकत्वमस्त्वित्याशंक्याह पुरुषार्थस्येति भोगापवर्गयोरभविकारकःकारयिताकथंस्यात् सत्तामात्रेणकारयितृत्वमपिविक्रियमाणत्वाधीनंविक्रियाचनरज्जुरगायमाणायःप्रकृतेर्वा स्त्वीसंभवतीतिनकारकत्वमात्मनः । ततश्चनकुर्वतःअपि्तस्यस्यैहदेहादौस्वयंमानोऽहमित्यभिमानोभवेत् अविद्ययेतिशेषः १६ कस्तावतादोषइत्यतआह यइति १८ आत्मनःकर्तृत्वे दृष्टविरोधमाह यदीत्यादिना १९ नन्वदृष्टानुकूल्याभावादारंभविघातइत्यतआहानिष्टस्येति हितार्थंयतमानानांस्वतंत्राणामप्यनिष्टाद्दृष्टोत्पत्तिरप्ययुक्तैवेतिभोक्तृत्वसमानयतस्यकर्तृत्वस्या भावेभोक्तृत्वस्याप्यभावइत्यर्थः १९ ईशःकालश्चेतिस्वभावस्यैवनामांतरमित्यभिप्रेत्याहानिष्टस्येति यथाऽनिष्टनिष्पत्तिरिष्टतिरोधानंचायत्नजंएवंस्वभावादापतत्येवमन्यदपीत्यर्थः । नहि

स्वभावात्संप्रवर्ततेनिवर्ततेतथैवच॥सर्वेभावास्तथाऽभावाःपुरुषार्थोनविद्यते१५पुरुषार्थस्यचाभावेनास्तिकश्चिच्चकारकः॥स्वयंनकुर्वतस्तस्यजातुमानोभवेदि ह १६यस्तुकर्तारमात्मानंमन्यतेसाध्वसाधुवा॥ तस्यदोषवतीप्रज्ञाअतत्त्वज्ञेतिमेमतिः १७ यदिस्यात्पुरुषःकर्ताशक्रात्मश्रेयसेध्रुवम् ॥ आरंभास्तस्यसिद्ध्येयुर्न तुजातुपराभवेत् १८ अनिष्टस्यहिनिर्वृत्तिरनिवृत्तिःप्रियस्यच ॥ लक्ष्यतेयतमानानांपुरुषार्थस्ततःकुतः १९ अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेवच ॥ अप्रय त्नेनपश्यामःकेषांचित्तत्स्वभावतः २० प्रतिरूपतराःकेचिद्दृश्यंतेबुद्धिमत्तराः ॥ विरूपेभ्योऽल्पबुद्धिभ्योलिप्समानाधनागमम् २१ स्वभावप्रेरिताःसर्वेनिविशं तेगुणायदा ॥ शुभाशुभास्तदातत्रकस्यकिंमानकारणम् २२ स्वभावादेवतत्सर्वमितिमेनिश्चितामतिः ॥ आत्मप्रतिष्ठाप्रज्ञावाममनास्तिततोऽन्यथा २३ कर्म जंत्विहमन्यंतेफलयोगंशुभाशुभम् ॥ कर्मणांविषयंकृत्स्नमहंवक्ष्यामितच्छृणु २४ यथावेदयतेकश्चिदोदनंवायसोह्यदन् ॥ एवंसर्वाणिकर्माणिस्वभावस्यैवलक्षणम् २५

स्वभावजमदृष्टंस्वभावप्रवर्तकंभवति कार्यस्यकारणाप्रवर्तकत्वादितिभावः २० । २१ प्रकृतेःस्वातंत्र्यमुपसंहरतिद्वाभ्यां स्वभावेति गुणाःसुखदुःखादयः मानकारणमहंसुखीकर्ताभोक्ताचेत्यभि मानहेतुर्नकिमपीत्यर्थः २२ आत्मप्रतिष्ठामोक्षः प्रज्ञाआत्मज्ञानं तदपिस्वभावादेवबंधस्यैवास्वरसात्तत्प्रतियोगिनीमुक्तिरप्यज्ञानादेवेत्यर्थः तथाचश्रुतिः । 'ननिरोधोनचोत्पत्तिर्नबद्धोनचसा धकः । नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता'इति २३ ननुपर्जन्यवदीशकालस्थानीयाप्रकृतिःसाधारणंकारणंकर्मतुबीजवदसाधारणमितिशंकते कर्मजमिति एतन्निरासंप्रतिजानीते कर्म णामिति विषयंविशेषकार्यं २४ तदेवाह यथेति काकोऽन्नमिवकर्माणिस्वभावंप्रकाशयंति नतुजनयंतीत्यर्थः लक्षणंज्ञापकानि असाधारणोधर्मइतियावत् अयंभावः । तंतवएवपट स्यकारणंतन्नतंतौकल्यादिकंतुपटगतवैचित्र्यस्य । एवंस्वभावएवजन्यमात्रहेतुस्तद्गतंधर्मादिकंतद्वैचित्र्येऽसाधारणोहेतुः एतदेवोक्तंयोगैः । निमित्तमप्रयोजकंप्रकृतीनामावरणभेदस्तुततः क्षेत्रिकवदिति । धर्मादिर्गुणानांनप्रवर्तकः किंतुतेनगुणप्रवाहस्याधर्मस्रोतः खिलीकुर्वताधर्मस्रोतसआवरणंदूरीक्रियतेइतिसूत्रार्थः एतदेवकर्मणांस्वभावज्ञापकत्वमिति २५



फलितमाह विकारानिति विकारान्धर्मान् परांप्रकृतिमर्वाचीनत्रिगुणमयप्रकृत्यपेक्षयाश्रेष्ठांप्रकृतिमुपादानंब्रह्मयोनवेदतस्यकर्मप्रवाहस्यमेददर्शिनःस्तंभोभवतिनत्वनुपश्यतःपरांप्रकृतिम् २६ ब्रह्मविदःकुतःस्तं[illegible]अस्तीत्याशंक्यप्रकृतिरेवकर्त्रीनत्वात्मेतिबोधादित्याह स्वभावेति कर्तृत्वाभिमानोहिदर्पादेःकारणंतदभावाद्दर्पाद्यभावइत्यर्थः २७ यस्माद्वेदज्ञानाभिसर्वमंतवदि तितस्मान्नशोचामीत्यर्थः २८ शोकाभावेहेतुमाह निर्ममइति मुक्तबंधनोनिर्वासनः स्वस्थःस्वरूपप्रतिष्ठः अव्यपेतोदेहाद्यनभिमानेनस्वरूपादप्रच्युतः भूतानांप्रभवाप्ययौपरंब्रह्म २९ लोकमात्मानं अव्ययंनिरपायम् ३० प्रकृतौविश्वकर्त्र्यां विकारेधर्माधर्मफलयोःसुखदुःखयोः ममद्वेष्टारमहंनपश्यामि यश्चममायतेममेवाऽऽचरतिपुत्रमित्रादिरात्मीयस्तंचनपश्यामि ३१

विकारानेवयोवेदनवेदप्रकृतिंपराम् ॥ तस्यस्तंभोभवेद्बाल्यान्नास्तिस्तंभोऽनुपश्यतः २६ स्वभावभाविनोभावान्सर्वानेवेहनिश्चयात् ॥ बुद्ध्यमानस्यदर्पोवा मानोवाकिंकरिष्यति २७ वेदधर्मविधिंकृत्स्नंभूतानांचाप्यनित्यताम् ॥ तस्माच्छक्रनशोचामिसर्वंह्येवेदमंतवत् २८ निर्ममोनिरहंकारोनिराशीर्मुक्तबंधनः ॥ स्वस्थोव्यपेतःपश्यामिभूतानांप्रभवाप्ययौ २९ कृतप्रज्ञस्यदांतस्यवितृष्णस्यनिराशिषः ॥ नायासोविद्यतेशक्रपश्यतोलोकमव्ययम् ३० प्रकृतौचविका रेचनमेप्रीतिर्नचद्विषे ॥ द्वेष्टारंचनपश्यामियोमाममममायते ३१ नोर्ध्वंनावाङ्नतिर्यक्चनकचिच्छक्रकामये ॥ नहिज्ञेयेनविज्ञानेनज्ञानेकर्मविद्यते ३२ ॥ शक्रउवाच ॥ येनैषालभ्यतेप्रज्ञायेनशांतिरवाप्यते ॥ प्रब्रूहितमुपायंमेसम्यक्प्रह्लादपृच्छतः ३३ ॥ प्रह्लादउवाच ॥ आर्जवेनाप्रमादेनप्रसादेनात्मव तया ॥ वृद्धशुश्रूषयाशक्रपुरुषोलभतेमहत् ३४ स्वभावाल्लभतेप्रज्ञांशांतिमेतिस्वभावतः ॥ स्वभावादेवतत्सर्वंयत्किंचिदनुपश्यसि ३५ इत्युक्तोदैत्यपति नाशक्रोविस्मयमागमत् ॥ प्रीतिमांश्चतदाराजंस्तद्वाक्यंप्रत्यपूजयत् ३६ सतदाऽभ्यर्च्यदैत्येंद्रंत्रैलोक्यपतिरीश्वरः ॥ असुरेंद्रमुपामंत्र्यजगामस्वंनिवेशनम् ॥ ३७ ॥ इति श्रीम०शां०मो०शक्रप्रह्लादसंवादोनामद्वाविंशत्यधिकद्विशततमोऽध्यायः॥२२२ ॥ युधिष्ठिरउवाच ॥ ययाबुद्ध्यामहीपालोभ्रष्टश्रीर्विचरेन्महीम् ॥ कालदंडविनिष्पिष्टस्तन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ वासवस्यचसंवादंबलेर्वैरोचनस्यच २ पितामहमुपाग म्यप्रणिपत्यकृतांजलिः ॥ सर्वानेवासुरान्जित्वाबलिंप्रपच्छवासवः ३ यस्यस्मददतोवित्तंनकदाचनहीयते ॥ तंबलिंनाधिगच्छामिब्रह्मन्नाचक्ष्वमेबलिम् ४

ऊर्ध्वंस्वर्गं अवाक्पातालं तिर्यक्मर्त्यलोकं नकामयेकाचित्काले तत्रहेतुर्नहीति ज्ञेयेविज्ञानेकर्म । पाठांतरेज्ञर्मवानविद्यतेइतिनहिकिंतुज्ञानेएवनविद्यतेइतियोजना । विज्ञानेबुद्धौज्ञानेचिदा त्मनि आत्मनोधर्माधर्मतत्फलाश्रयत्वाभावादहंनकिमपिकामयेइत्यर्थः ३१ प्रज्ञाज्ञानं शांतिस्तत्फलम् ३३ प्रसादेनबुद्धेर्नैर्मल्येन आत्मवत्तयाजितेंद्रियतया महत्मोक्षं ३४ अना त्मनःकर्तृत्वमुपपाद्योपसंहरति स्वभावादेवेति विद्यामुक्तिश्चमायिक्येवेत्यर्थः यथोक्तंश्रीमद्भागवते । 'विद्याऽविद्येममतनूविद्ध्युद्धवशरीरिणाम् । मोक्षबंधकरीआद्येमाययामेविनिर्मिते'इति ममायाविनः ३५ । ३६ । ३७ ॥ इति शांति०नी०भा०द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥ ॥ इंद्रियनिग्रहोऽहंकर्तृत्वाभिमानत्यागश्चकार्यइत्यध्यायद्वयेनोक्तासंपदां चांचल्यात्तत्प्राप्तिनाशयोर्हर्षशोकौनकर्तव्यावित्याख्यायिकामुखेनाध्यायत्रयेणाह ययाबुद्ध्येत्यादिना कालदंडविनिष्पिष्टोविपद्ग्रस्तः १ । २ । ३ स्ववीर्यख्यापनायबलिस्तौति यस्येत्यादिना ४

५ । ६ । ७ । ८ गोषूष्ट्रमेषु ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ अकृष्टपच्या आकर्षणं विनाधान्यप्रसूः १७ । १८ । १९ । २० । २१ । २२

सवायुर्वरुणश्चैवसरविःसचचंद्रमाः ॥ सोऽग्निस्तपतिभूतानिजलंचसभवत्युत ५ तंबलिंनाधिगच्छामिब्रह्मन्नाचक्ष्वमेबलिम् ॥ सएवह्यस्तमयतेसस्मविद्योतते दिशः ६ सवर्षतिस्मवर्षाणियथाकालमतंद्रितः ॥ तंबलिंनाधिमच्छामिब्रह्मन्नाचक्ष्वमेबलिम् ७ ॥ ब्रह्मोवाच ॥ नैतत्तेसाधुमघवन्यदेनमनुपृच्छसि ॥ पृष्टस्तुनानृतंब्रूयात्तस्माद्वक्ष्यामितेबलिम् ८ उष्ट्रेषुयदिवागोषुखरेष्वश्वेषुवापुनः ॥ वरिष्ठोभविताजंतुःशून्यागारेशचीपते ९ ॥ शक्रउवाच ॥ यदिस्मबलिनाब्रह्मनशून्यागारेसमेयिवान् ॥ हन्यामेनंनवाहन्यांतद्ब्रह्मन्ननुशाधिमाम् १० ॥ ब्रह्मोवाच ॥ मास्मशक्रबलिंहिंसीर्नबलिर्वधमर्हति ॥ न्यायस्तुशक्रप्रष्टव्यस्त्वयावासवकाम्यया ११ ॥ भीष्मउवाच ॥ एवमुक्तोभगवतामहेंद्रःपृथिवींतदा ॥ चचारैरावतस्कंधमधिरुह्यश्रियावृतः १२ ततोददर्शसबलिंखरवेषेणसंवृतम् ॥ यथाऽऽख्यातंभगवताशून्यागारकृतालयम् १३ ॥ शक्रउवाच ॥ खरयोनिमनुप्राप्तस्तुषभक्षोऽसिदानव ॥ इयंतेयोनिरधमाशोचस्याहोनशोचसि १४ अदृष्टंबतपश्यामिद्विषतांवशमागतम् ॥ श्रियाविहीनंमित्रैश्चभ्रष्टवीर्यपराक्रमम् १५ यत्तद्यानसहस्रैस्त्वंज्ञातिभिःपरिवारितः ॥ लोकान्प्रतापयन्सर्वान्यास्यस्मानवितर्कयन् १६ त्वन्मुखाश्चैवदैतेयाव्यतिष्ठंस्तवशासने ॥ अकृष्टपच्याचमहीतवैश्वर्येबभूवह १७ इदंचतेऽद्यव्यसनंशोचस्याहोनशोचसि ॥ यदाऽऽतिष्ठःसमुद्रस्यपूर्वकूलेविलेलिहन् १८ ज्ञातिभ्योविभजन्वित्तंतदाऽऽसीत्तेमनःकथम् ॥ यत्तेसहस्रसमितानन्नृतुर्देवयोषितः १९ बहूनिवर्षपूगानिविहारेदीप्यतःश्रिया ॥ सर्वाःपुष्करमालिन्यःसर्वाःकांचनसप्रभाः २० कथमद्यतदाचैवमनस्तेदानवेश्वर ॥ छत्रंतवासीत्सुमहत्सौवर्णंरत्नभूषितम् २१ ननृतुस्तत्रगंधर्वाःषट्सहस्राणिसप्तधा ॥ यूपस्तवासीत्सुमहान्यजतःसर्वकांचनः २२ यत्राददःसहस्राणिअयुतानांगवांदश ॥ अनंतरंसहस्रेणतदाऽसीद्दैत्यकामतिः २३ यदाचपृथिवींसर्वांयजमानोऽनुपर्यगाः ॥ शम्याक्षेपणविधिनातदाऽऽसीत्किंनुतेहृदि २४ नतेपश्यामिभृंगारंनच्छत्रंव्यजनेनच ॥ ब्रह्मदत्तांचतेमालांनपश्याम्यसुराधिप २५ ॥ ॥ बलिरुवाच ॥ ॥ नत्वंपश्यसिभृंगारंनच्छत्रंव्यजनंनच ॥ ब्रह्मदत्तांचमेमालांनत्वंद्रक्ष्यसिवासव २६ गुहायांनिहितानित्वंममरत्नानिपृच्छसि ॥ यदामेभविताकालस्तदात्वंतानिद्रक्ष्यसि २७ नत्वेतदनुरूपंतेयशसोवाकुलस्यच ॥ समृद्धार्थोऽसमृद्धार्थंयन्मांकत्थितुमिच्छसि २८ नहिदुःखेषुशोचंतेनप्रहृष्यंतिचर्द्धिषु ॥ कृतप्रज्ञाज्ञानतृप्ताःक्षांताःसंतोमनीषिणः २९

२३ यदाचेति सूक्ष्माग्रःस्थूलमूलःषट्त्रिंशदंगुलोदंडःशम्यातांबलवतातिक्षिप्तायावद्दूरेपतितावदेकंदेवयजनं एवंसर्वाऽपिपृथिवीशम्याप्रक्षेपविमिता तावद्देवयजनानामपर्याप्ताऽभूदितिपर्यगाःपरिवृत्यगतवान् २४ भृंगारःकनकालुकाजलस्थौवर्णउदपात्रविशेषः २५ । २६ गुहायांमूलप्रकृतौ निहितान्यंतर्हितानि २७ । २८ । २९

३० ॥ इतिशां० मो० नी० भा० त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥ ॥ पुनरिति प्रत्याहारायप्रकृष्टोक्तये १ । २ । ३ । ४ । ५ इदंखरत्वंममापराधाद्विनुकालपर्ययादित्यर्थः ६ जीवितंजीवरयनेनेतिलिंगं शरीरंस्थूलं । जात्यास्वभावेन देहाःस्थूलसूक्ष्मभेदेनद्विविधाः तृणजलायुकान्यायेनमरणेऽपिलिंगस्यस्थूलदेहांतरसंगतेरपरिहृतत्वात्स्थूलवल्लिंगमप्यन्नेनाप्यायते । अन्नमयंहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिश्रुतेः विनश्यतःमोक्षे अन्नमयं । स्थूलसूक्ष्मदेहधर्मैर्गर्दभत्वाशनायादिभस्त्वप्रभृतिभिर्दुःखैर्न द्रष्टाऽहंततोविविक्तमात्मानंजानन्नव्याकुलीभवामीत्यर्थः ७ एतदेवाह नहीति ईदृशंभावंगार्दभंदेहंप्राप्याहंविवशोदेहधर्मैःपराभूतोनास्मीतियोजना एवमात्मनोऽसंगत्वं ८ भूतानांस्थूलसूक्ष्माणांनिधनंमरणंनि

त्वंतुप्राकृतयाबुद्ध्यापुरंदरविकत्थसे ॥ यदाऽहमिवभावीस्यात्तदानैवंवदिष्यसि ३० ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि बलिवासवसंवादोनामत्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥ ॥ ध ॥ ॥ भीष्मउवाच ॥ पुनरेवतुतंशक्रःप्रहसन्निदमब्रवीत् ॥ निःश्वसंतंयथानागंप्रत्याहारायभारत १ ॥ शक्रउवाच ॥ यत्तद्यानसहस्रेणज्ञातिभिःपरिवारितः ॥ लोकान्प्रतापयन्सर्वान्यास्यस्मानवितर्कयन् २ दृष्ट्वासुकृपणांचेमामवस्थामात्मनोबले ॥ ज्ञातिमित्रपरित्यक्तःशोचस्याहोनशोचसि ३ प्रीतिंप्राप्यातुलांपूर्वंलोकांश्चात्मवशेस्थितान् ॥ विनिपातमिमंबाह्यंशोचस्याहोनशोचसि ४ ॥ बलिरुवाच ॥ अनित्यमुपलक्ष्येहकालपर्यायधर्मतः ॥ तस्माच्छक्रनशोचामिसर्वंह्यंतवदिदं ५ अंतवंतइमेदेहाभूतानांचसुराधिप ॥ तेनशक्रनशोचामिनापराधादिदंमम ६ जीवितंचशरीरंचजात्यैवसहजायते ॥ उभेसहविवर्धेतेउभेसहविनश्यतः ७ नहीदृशमहंभावमवशःप्राप्यकेवलम् ॥ यदेवमभिजानामिकाव्यथामेविजानतः ८ भूतानांनिधनंनिष्ठास्रोतसामिवसागरः ॥ नैतत्सम्यग्विजानंतोनरामुह्यंतिवज्रभृत् ९ येत्वेवंनाभिजानंतिरजोमोहपरायणाः ॥ तेकृच्छ्रंप्राप्यसीदंतिबुद्धिर्येषांप्रणश्यति १० बुद्धिलाभात्तुपुरुषःसर्वंतुदतिकिल्बिषम् ॥ विपाप्मालभतेसत्त्वंसत्त्वस्थःसंप्रसीदति ११ ततस्तुयेनिवर्तंतेजायंतेवापुनःपुनः ॥ कृपणाःपरितप्यंतेतैरर्थैरभिचोदिताः १२ अर्थसिद्धिमनर्थंचजीवितंमरणंतथा ॥ सुखदुःखफलेचैवनद्वेष्मिनचकामये १३ हतंहंतिहतोह्येवयोनरोहंतिकंचन ॥ उभौतौनविजानीतोयश्चहंतिहतश्चयः १४ हत्वाजित्वाचमघवन्यःकश्चित्पुरुषायते ॥ अकर्ताह्येवभवतिकर्ताह्येवकरोतितत् १५ कोहिलोकस्यकुरुतेविनाशप्रभवावुभौ ॥ कृतंहितत्कृतेनैवकर्तातस्यापिचापरः १६

धापरागतिः नत्वात्मनः नमुह्यंतीतिसंबंधः ९ मूढोनश्यत्यमूढस्तरतीत्याहद्वाभ्यां येत्विति १० सत्त्वस्थोबुद्धिमान् संप्रसीदतिमोहजंकालुष्यंत्यजति ११ ततःसत्त्वान्निवर्ततेरजस्तमोभ्यामभिभूयंतइत्यर्थः । अर्थैःकामादिभिः १२ स्वस्यतद्वैलक्षण्यमाह अर्थेति १३ अत्रयुक्तिमाह हतमिति हतंनिर्जीवंदेहंहंतिनतुजीवं एतेनदेहस्यात्मत्वंनिरस्तं । योहंतिदेहादन्योऽहंहंतेत्यभिमानीकर्तासोऽपिहतएव दृश्यत्वाद्देहवदात्मत्वेनप्रतीयमानोऽपिजडएव उभौयोहंतिबुध्याऽऽत्मवादी योहतोदेहात्मवादी १४ हत्वेतिहत्वा जयतीतिजित्वा । उभयत्राप्यन्येभ्योऽपिदृश्यंतइतिक्त्विपि तुगागमः आद्येऽनुनासिकलोपोऽधिकः हंताजेताचपुरुषायमौधीतादात्म्यापन्नःकर्तृत्वाभिमानीपुरुषाभासोनतुमुख्यःपुरुषःसाक्षकर्तैव । योहिकर्ताधीवाद्यःसएवकरोतितद्धननादिकम् १५ जगत्कर्तृत्वमपिपुरुषेनास्तीत्याह कोहीति तल्लोकपूर्वं वेनजनिमतामनसाकृतं तस्यमनसोऽपिकर्तापरः १६

तमेवाह पृथिवीति मनोऽपिपांचभौतिकमित्यर्थः भूतानिस्थूलसूक्ष्मशरीराणि १७ महाविद्यइति विद्यावत्त्वबलवत्त्वादयोमनोदेहयोर्भौतिकयोर्विकारादधिष्ठिरादिवत्कालैकनिर्वर्त्यान स्वात्मसंबंधिनइतिजानतोममनव्यथास्तीतिश्लोकद्वयार्थः १८ तस्मिन्नुर्वीदेहविकारेपूर्वोक्ते १९ दग्धंकालात्मनेश्वरेणाऽनुदहतिवह्न्यादिः 'मयाहतांस्त्वंजहिमाव्यथिष्ठाः'इत्यादिस्मृतेः एव

पृथिवीज्योतिराकाशमापोवायुश्चपंचमः ॥ एतद्योनीनिभूतानितत्रकापरिदेवना १७ महाविद्योऽल्पविद्यश्चबलवान्दुर्बलश्चयः ॥ दर्शनीयोविरूपश्चसुभगो दुर्भगश्चयः १८ सर्वंकालःसमादत्तेगंभीरःस्वेनतेजसा ॥ तस्मिन्कालवशंप्राप्तेकाव्यथामेविजानतः १९ दग्धमेवानुदहतिहतमेवानुहन्यते ॥ नश्यतेनष्टमेवा ग्रेलब्धव्यंलभतेनरः २० नास्यद्वीपःकुतःपारोनावारःसंप्रदृश्यते ॥ नांतमस्यप्रपश्यामिविधेर्दिव्यस्यचिंतयन् २१ यदिमेपश्यतःकालोभूतानिनविनाश येत् ॥ स्यान्मेहर्षश्चदर्पश्चक्रोधश्चैवशचीपते २२ तुषभक्षंतुमांज्ञात्वाप्रविविक्तजनेगृहे ॥ बिभ्रतंगार्दभंरूपमागत्यपरिगर्हसे २३ इच्छन्नहंविकुर्यांहिरूपाणिब हुधात्मनः ॥ बिभीषणानियानीक्ष्यपलायेथास्त्वमेवमे २४ कालःसर्वंसमादत्तेकालःसर्वंप्रयच्छति ॥ कालेनविहितंसर्वंमाकृथाःशक्रपौरुषम् २५ पुरासर्वंप्रव्य थितंमयिक्रुद्धेपुरंदर ॥ अवैमित्वस्यलोकस्यधर्मंशक्रसनातनम् २६ त्वमप्येवमवेक्षस्वमाऽऽत्मनाविस्मयंगमः ॥ प्रभवश्चप्रभावश्चनात्मसंस्थःकदाचन २७ कौ मारमेवतेचित्तंतथैवाद्ययथापुरा ॥ समवेक्षस्वमघवन्बुद्धिंविंदस्वनैष्ठिकीम् २८ देवामनुष्याःपितरोगंधर्वोरगराक्षसाः ॥ आसन्सर्वेममवशेतत्सर्वंवेत्थवासव २९ नमस्तस्यैदिशेऽप्यस्तुयस्यांवैरोचनोबलिः ॥ इतिमामभ्यपद्यंतबुद्धिमात्सर्यमोहिताः ३० नाहंतदनुशोचामिनात्मभ्रंशंशचीपते ॥ एवंमेनिश्चिताबुद्धिःशास्तु स्तिष्ठाम्यहंवशे ३१ दृश्यतेहिकुलेजातोदर्शनीयःप्रतापवान् ॥ दुःखंजीवन्सहामात्योभवितव्यंहितत्तथा ३२ दौष्कुलेयस्तथामूढोदुर्जातःशक्रदृश्यते ॥ सुखंजीवन्सहामात्योभवितव्यंहितत्तथा ३३ कल्याणीरूपसंपन्नादुर्भगाशक्रदृश्यते ॥ अलक्षणाविरूपाचसुभगादृश्यतेपरा ३४ नैतदस्मत्कृतंशक्रनैतच्छ क्रत्वयाकृतम् ॥ यत्त्वमेवंगतोवज्रिन्यच्चाप्येवंगतावयम् ३५ नकर्मभविताप्येतत्कृतंममशतक्रतो ॥ ऋद्धिर्वाऽप्यथवानार्द्धिःपर्यायकृतमेवतत् ३६ पश्यामित्वांविराजंतंदेवराजमवस्थितम् ॥ श्रीमंतंद्युतिमंतंचगर्जमानंममोपरि ३७ एवंनैवनचेत्कालोमामाक्रम्यस्थितोभवेत् ॥ पातयेयमहंत्वाद्यसव ज्रमपिमुष्टिना ३८ नतुविक्रमकालोऽयंशांतिकालोऽयमागतः ॥ कालःस्थापयतेसर्वंकालःपचतिवैतथा ३९ मांचेदभ्यागतःकालोदानवेश्वरपूजि तम् ॥ गर्जंतंप्रतपंतंचकमन्यंनागमिष्यति ४०

अग्रेऽपि २० अस्यकालस्यविधेर्विधातुः दिव्यस्यपुण्यपापेतरस्य २१ । २२ । २३ ईक्ष्यदृष्ट्वा २४ । २५ धर्मंवृद्धिह्रासवत्त्वं २६ प्रभवऐश्वर्यं प्रभावस्तदाविष्करणं नात्मसंस्थोनाऽऽत्मा धीनः २७ कौमारंबालस्येवाज्ञंतवचित्तं २८ । २९ । ३० शास्तुरीश्वरस्य ३१ । ३२ । ३३ । ३४ । ३५ नर्द्धिःऋद्ध्यभावः नैकधेतिवत्समासः पर्यायःकालक्रमस्तेन कृतं कर्माण्यपिकालमनुरुध्यैवफलंविबीजानीवपर्जन्यंनतुस्वतइत्यर्थः ३६ । ३७ एवंममगर्वमत्वाविक्रमेवस्यादितिविशेषः नचेदित्यादितव्रोपपत्तिः ३८ । ३९ । ४०

---

द्वादशानां'अरुणोमाघमासेतुसूर्योवैफाल्गुनेतथा'इत्युक्तरूपाणां ४१ उद्वहामिमेघोभूत्वासूर्योभूत्वाशोषयामीतिवाऽर्थः आपःअपः ४२ । ४३ कालसैन्यंमासार्धमासादि ४४ नाहमिति जीवस्यनत्वमितितदस्येश्वरस्यनान्यइतिमकृतेश्चकर्तृत्वंनिषिद्धं पर्यायेणकालक्रमेणभुज्यंतेपाल्यंतेसंह्रियंतेवा ४५ कोऽसौकालस्तमाह मासेति मासाद्युपलक्षितस्तार्किकाभिमतद्रव्यविशे षःकालस्तस्यवेश्मेवाधिष्ठानंमायाशबलंब्रह्मेत्यर्थः । अहःसंज्ञैरात्रिसंज्ञैश्चऋतुभिःसंवृतं 'नववैतान्यहानिभवंति नववैप्राणाःनववर्गालोकाःनवस्वेवतत्सुवर्गेषुलोकेषुप्रतितिष्ठंतोयंतिमति तिष्ठंतिदेवैयएतारात्रीरूपयंति'इत्यर्थवादिकफलवताकर्मकांडेनगूहितमित्यर्थः उक्तंचभगवता यामिमांपुष्पितांवाचमित्यादिना । एवमपिऋतुद्वारभूतवोसंतायाः । 'ब्राह्मणोऽग्निमादधीत वसंतेवसंतेज्योतिषायजेत'इतिवसंतादिकालविहिताधानज्योतिष्टोमादिकंकर्मैवद्वारंमाप्तिसाधनंयस्यतदृतुद्वारं । वायुःसूत्रात्मा 'वायुर्वैगौतमतत्सूत्रंवायुनावैगौतमतत्सूत्रेणायंचलोकःपरश्चलोकः सर्वाणिचभूतानिसंदृब्धानि'इतिश्रुतिप्रसिद्धः । मुखमिवप्रथमप्राप्यंयस्यतद्वायुमुखं । वर्षमुखमितिपाठेवर्षतीतिवर्षोधर्मभेवाख्यंध्यानंतदेवमुखंयस्यनिर्विषयध्यानैकगम्यंकालमाहुरितिप्रसिद्धेन विशेषणक्रिययासंबंधः । तंमामायुरमृतमित्युपास्वेतिश्रुतेरायुर्ब्रह्मतत्प्रतिपादकोवेदउपनिषत्तद्विदः ४६ आहुरिति इदंसर्वंकालाख्यंब्रह्मेत्याहुः । 'इदंसर्वंयदयमात्मा'ब्रह्मैवेदंसर्वम्'इत्यागमव

द्वादशानांतुभवतामादित्यानांमहात्मनाम् ॥ तेजस्यैकेनसर्वेषांदेवराजप्रतापिनां ४१ अहमेवोद्वहाम्यापोविसृजामिचवासव ॥
तपामिचैवत्रैलोक्यंविद्योताम्यहमेवच ४२ संरक्षामिनिलुंपामिददाम्यहमथाददे ॥ संयच्छामिनियच्छामिलोकेषुप्रभुरीश्वरः ४३
तदद्यविनिवृत्तंमेप्रभुत्वममराधिप ॥ कालसैन्यावगाढस्यसर्वंनप्रतिभातिमे ४४ नाहंकर्तानचैवत्वंनान्यःकर्ताशचीपते ॥
पर्यायेणहिभुज्यंतेलोकाःशक्रयदृच्छया ४५ मासमासार्धवेश्मानमहोरात्राभिसंवृतम् ॥ ऋतुद्वारंवायुमुखमायुर्वेदविदोजनाः ४६
आहुःसर्वमिदंचिंत्यंजनाःकेचिन्मनीषया ॥ अस्याःपंचैवचिंतायाःपर्येष्यामिचपंचधा ४७

लेनतद्ब्रह्मचिंत्यंध्येयमितिकेचिज्जैमिन्यादयआहुर्मनीषयाबुद्ध्यैवनतुशास्त्रबलेन । अस्त्विदंसर्वंब्रह्मनतुप्रत्यगभिन्नत्वेनतदुपास्यंकिंतुवस्तुतत्त्वमेवततत्तयाज्ञेयमित्यर्थः । 'तदेवब्रह्मत्वंविद्धिनेदं यदिदमुपासते'इतिश्रुत्याऽसकृदुपास्यस्यब्रह्मभावनिषेधात् । ननुज्ञेयत्वमपिब्रह्मणोनिषिद्धंयन्मनसानमनुतइत्यादिश्रुत्येत्यतआह अस्याइति अस्याश्चिंतायाःपंचैवचिंत्यान्विषयानन्नमय प्राणमयमनोमयविज्ञानमयानंदमयान्कोशान्पंचधाप्रत्येकंपंचप्रकारान्पक्षद्वयशिरोमध्यदेशपुच्छाख्यपंचावयवविशिष्टान्पर्येष्यामिश्रुतावगच्छामि तथाहिश्रूयते । 'सवाएषपुरुषोऽन्नरसम यः तस्येदमेवशिरः अयंदक्षिणःपक्षःअयमुत्तरःपक्षः अयमात्माइदंपुच्छंप्रतिष्ठा'इतिप्रतिपुरुषंशिरआदयःपंचावयवाःतदयमर्थः यज्ज्ञेयंयच्चोपास्यंनतद्ब्रह्मअनात्मत्वात् आत्माहिब्रह्म कथंतर्हि दंसर्वंयदयमात्मेतिबाधायांसामानाधिकरण्यमिदमितिब्रूमःयद्रजतमभात्सासाशुक्तिरितिवत् अविद्याद्युद्भेदाः 'योऽयंस्थाणुःपुमानेषपुंधियास्थाणुधीरिव। ब्रह्मास्मीतिधियाऽशेषाहंबुद्धिर्विनिवर्त्यते' इति । अशेषाहंबुद्धिःसमष्ट्यहंकारःपूर्वोक्तरीत्यायथास्फटिकेलौहित्यपद्मरागत्वेंद्रनीलत्वान्यध्यस्यन्नुत्तरोत्तररूपबोधेपूर्वपूर्वरूपमेवतात्त्विकंमन्यते। एवंशुद्धचैतन्येईशसूत्रविराजोऽध्यस्तास्तत्रदे हपरिच्छेदाभिमाननिवृत्तौविराडस्मीत्यध्यासोऽवशिष्यते तन्निवृत्तौसूत्रात्माऽस्मीति तस्यापिनिवृत्तावीशोऽस्मीति तस्यापिनिवृत्तौवाङ्मनसातीतंकिंचित्सन्मात्रंसुषुप्तिसदृशंशिष्यतेइति ४७

तदेतदाह गंभीरमिति गंभीरंतर्कागम्यं गहनंशास्त्रतोऽधिगतमपिदुष्प्रवेशं ब्रह्मत्रिविधपरिच्छेदशून्यं महत्तोयार्णवंपारावारशून्यार्णवतुल्यम् । सलिलएकोद्रष्टाऽद्वैतोभवतीतिश्रुत्यातादृशस लिलेनोपमितमेकरसमित्यर्थः । क्षरंशुक्तिरिवरजतरूपेणस्वतोजन्मनाशशून्यमपिजगद्रूपेणक्षरं अक्षरंजीवरूपेण निःविशेषमेवस्वस्वविद्ययासर्वविशेषयुक्तंभवतीत्यर्थः ४८ एतदेवाह सत्त्वेष्विति यथाऽदर्पणेषुमुखंप्रविश्यस्वरूपस्यागमकमपिगमकंभवति एवंसत्त्वेषुबुद्धिसत्त्वेषुचित्प्रतिबिंबरूपेणाविश्यलिंगंनिरुपाधिचैतन्यस्यप्रज्ञापिकाभवति । जीवस्यैवानुपाधिकंरूपंब्रह्मेत्यर्थःअतएवध्रुव मुपाधिवर्मास्पर्शिनम् ४९ भूतानामिति चित्ताद्याकारपरिणतपंचमहाभूतसंबंधिनंविपर्यासंसच्चिदानंदानंतविपरीतमनृतजडदुःखपरिच्छिन्नाख्यंदुर्भगत्वंभगवानप्यविद्ययाऽऽत्मनिमन्यतेन ह्येतावदविद्याप्रकाशितंदुःखित्वादिरूपमात्मनोगम्यंनित्यज्ञातत्वात्तस्य । किंतुयस्मात्प्रतीचोरूपात्पुनरन्योब्रह्मारुद्रोविष्णुर्वाप्रभवेत्तदेवात्मनोरूपमतएवचानन्याधिपतिरितिन्यायात् ५०

गंभीरंगहनंब्रह्ममहत्तोयार्णवंयथा ॥ अनादिनिधनंचाहुरक्षरंक्षरमेवच ४८ सत्त्वेषुलिंगमाविश्यनिर्लिंगमपितत्स्वयम् ॥ मन्यंतेध्रुवमेवैनंयेजनास्तत्त्वदर्शिनः ४९ भूतानांतुविपर्यासंकुरुतेभगवानिति ॥ नह्येतावद्भवेद्गम्यंनयस्मात्प्रभवेत्पुनः ५० गतिंहिसर्वभूतानामगत्वाक्वगमिष्यति ॥ योधावतानहातव्यस्तिष्ठन्नपि नहीयते ५१ तमिंद्रियाणिसर्वाणिनानुपश्यंतिपंचधा ॥ आहुश्चैनंकेचिदग्निंकेचिदाहुःप्रजापतिम् ५२ ऋतून्मासार्धमासांश्चदिवसांश्क्षणांस्तथा ॥ पूर्वाह्णम पराह्णंचमध्याह्नमपिचापरे ५३ मुहूर्तमपिचैवाहुरेकंसंतमनेकधा ॥ तंकालमितिजानीहियस्यसर्वमिदंवशे ५४ बहूनींद्रसहस्राणिसमतीतानिवासव ॥ बलवीर्यो पपन्नानियथैवत्वंशचीपते ५५ त्वामप्यतिबलंशक्रदेवराजंबलोत्कटम् ॥ प्राप्तेकालेमहावीर्यःकालःसंशमयिष्यति ५६ यइदंसर्वमादत्तेतस्माच्छक्रस्थिरोभव ॥ मयात्वयाचपूर्वैश्चनसशक्योतिवर्तितुम् ५७ यामेतांप्राप्यजानीषेराज्यश्रियमनुत्तमाम् ॥ स्थितामयीतितन्मिथ्यानैषाह्येकत्रतिष्ठति ५८ स्थिताहींद्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ॥ मांचलोलापरित्यज्यत्वामगाद्विबुधाधिप ५९ मैवंशक्रपुनःकार्षीःशांतोभवितुमर्हसि ॥ त्वामप्येवंविधंज्ञात्वाक्षिप्रमन्यंगमिष्यति ६० ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि बलिवासवसंवादेचतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ ॥ भीष्मउवाच ॥ शतक्रतुरथापश्य द्बलेर्दीप्तांमहात्मनः ॥ स्वरूपिणींशरीराद्धिनिष्क्रामंतींतदाश्रियम् १ तांदृष्ट्वाप्रभयादीप्तांभगवान्पाकशासनः ॥ विस्मयोत्फुल्लनयनोबलिंपप्रच्छवासवः २ ॥ शक्रउवाच ॥ बलेकेयमपक्रांतारोचमानाशिखंडिनी ॥ त्वत्तःस्थितासकेयूरादीप्यमानास्वतेजसा ३

गतिमिति अगत्वाअप्राप्य नित्यप्राप्तत्वादितिभावः अहेयत्वमविकारित्वंचोत्तरार्धेनं ५१ इंद्रियाणीतिचित्तवृत्तिमात्रोपलक्षणं पंचधापंचभिःप्रमाणविपर्ययविकल्पनिद्रास्मृत्याख्यैःप्र कारैः एनमिंद्रियाद्यगम्यंकेचिदौपनिषदाअग्निंअयमग्निर्वैश्वानरोयो यमंतःपुरुषेअहंवैश्वानरोभूत्वेत्यादिश्रुतिस्मृतिप्रसिद्धंजाठरेआरोप्योपास्यमाहुः अपरेकर्मपरायणाःप्रजापतिंसंवत्सरःप्र जापतिरितिश्रुतंकालाभिमानिनंसूत्रात्मानंसर्वकर्मसंतर्पणीयंप्रतिनियतकालसर्वफलप्रदातारंऋतुमासाद्यभिमानिदेवतात्मानमाहुरेकंसंतमनेकधाआहुः तथाचश्रुतिः । 'सुपर्णंविप्राःकवयोवचो भिरेकंसंतंबहुधाकल्पयंति'इत्याद्या । 'तद्यदिदमाहुरमुंयजामुंयजेत्येतस्यैवसाविसृष्टिः'इत्याद्याच श्लोकत्रयम् ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० ॥ इतिशांति० मोक्ष० नी० भा० चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ श्रीदर्पशमनायश्रियश्चांचल्यमाख्यायिकामुखेनाह प्रसंगाच्छ्रीदान्श्रीभ्रांश्चधर्मान्कथयति शतक्रतुरित्यध्यायेन १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८

बलिरुवाच ॥ नहीमामासुरींवेद्मिनदैवींचनमानुषीम् ॥ त्वमेनांपृच्छवामावायथेष्टंकुरुवासव ४ ॥ शक्रउवाच ॥ कात्वंबलेरपक्रांतारोचमानाशिखंडिनी ॥ अजानतोममाचक्ष्वनामधेयंशुचिस्मिते ५ कात्वंतिष्ठसिमामेवंदीप्यमानास्वतेजसा ॥ हित्वादैत्यवरंसुभ्रुतन्ममाचक्ष्वपृच्छतः ६ ॥ श्रीरुवाच ॥ नमांविरो चनोवेदनायंवैरोचनोबलिः ॥ आहुर्मांदुःसहेत्येवंविधित्सेतिचमांविदुः ७ भूतिर्लक्ष्मीतिमामाहुःश्रीरित्येवंचवासव ॥ त्वंमांशक्रनजानीषेसर्वेदेवानमांविदुः ८ ॥ शक्रउवाच ॥ किमिदंत्वंममकृतेउताहोबलिनःकृते ॥ दुःसहेविजहास्येनंचिरसंवासिनीसती ९ ॥ श्रीरुवाच ॥ नोधातानविधातामांविदधातिकथंचन ॥ कालस्तुशक्रपर्यागान्मैनंशक्रावमन्यथाः १० ॥ शक्रउवाच ॥ कथंत्वयाबलिस्त्यक्तःकिमर्थंवाशिखंडिनि ॥ कथंचमांनजह्यास्त्वंतन्मेब्रूहिशुचिस्मिते ११ ॥ श्रीरुवाच ॥ सत्येस्थिताऽस्मिदानेचव्रतेतपसिचैवहि ॥ पराक्रमेचधर्मेचपराचीनस्ततोबलिः १२ ब्रह्मण्योऽयंपुराभूत्वासत्यवादीजितेंद्रियः ॥ अभ्यसूय द्ब्राह्मणानामुच्छिष्टश्चास्पृशद्घृतम् १३ यज्ञशीलःसदाभूत्वामामेवयजतेस्वयम् ॥ प्रोवाचलोकान्मूढात्माकालेनोपनिपीडितः १४ अपाकृताततःशक्रत्वयिव त्स्यामिवासव ॥ अप्रमत्तेनधार्याऽस्मितपसाविक्रमेणच १५ ॥ शक्रउवाच ॥ नास्तिदेवमनुष्येषुसर्वभूतेषुवापुमान् ॥ यस्त्वामेकोविषहितुंशक्नुयात्कमलाल ये १६ ॥ श्रीरुवाच ॥ नैवदेवोनगंधर्वोनासुरोनचराक्षसः ॥ योमामेकोविषहितुंशक्तःकश्चित्पुरंदर १७ ॥ शक्रउवाच ॥ तिष्ठेथामयिनित्यंत्वंयथातद्ब्रूहिमेशु भे ॥ तत्करिष्यामितेवाक्यमृतंतद्वक्तुमर्हसि १८ ॥ श्रीरुवाच ॥ स्थास्यामिनित्यंदेवेंद्रयथात्वयिनिबोधतत् ॥ विधिनावेददृष्टेनचतुर्धाविभजस्वमाम् १९ ॥ शक्रउवाच ॥ अहंवैत्वांनिधास्यामियथाशक्तियथाबलम् ॥ नतुमेऽतिक्रमःस्याद्वैसदालक्ष्मितवांतिके २० भूमिरेवमनुष्येषुधारिणीभूतभाविनी ॥ साते पादंतितिक्षेतसमर्थाहीतिमेमतिः २१ ॥ ॥ श्रीरुवाच ॥ ॥ एषमेनिहितःपादोयोऽयंभूमौप्रतिष्ठितः ॥ द्वितीयंशक्रपादंमेतस्मात्सुनिहितंकुरु २२ ॥ ॥ शक्र उवाच ॥ ॥ आपएवमनुष्येषुद्रवंत्यःपरिचारिणीः ॥ तास्तेपादंतितिक्षंतामलमापस्तितिक्षितुम् २३ ॥ ॥ श्रीरुवाच ॥ ॥ एषमेनिहितःपादोयोऽयमप्सुप्रतिष्ठितः ॥ तृतीयंशक्रपादंमेतस्मात्सुनिहितंकुरु २४ ॥ ॥ शक्र उवाच ॥ ॥ यस्मिन्वेदाश्चयज्ञाश्चयस्मि न्देवाःप्रतिष्ठिताः ॥ तृतीयंपादमग्निस्तेसुधृतंधारयिष्यति २५ ॥ ॥ श्रीरुवाच ॥ ॥ एषमेनिहितःपादोयोऽयमग्नौप्रतिष्ठितः ॥ चतुर्थंश क्रपादंमेतस्मात्सुनिहितंकुरु २६ ॥ ॥ शक्र उवाच ॥ ॥ येवैसंतोमनुष्येषुब्रह्मण्याःसत्यवादिनः ॥ तेतेपादंतितिक्षंतामलंसंतस्तितिक्षितुम् ॥ २७ ॥ ॥ श्रीरुवाच ॥ ॥ एषमेनिहितःपादोयोऽयंसत्सुप्रतिष्ठितः ॥ एवंहिनिहितांशक्रभूतेषुपरिधत्स्वमाम् २८

वित्तंतीर्थादिपुण्यंयज्ञादिधर्मोविद्याचेतिश्रियश्चत्वारःपादाभूमौजलेऽग्नौविद्वत्सु वनिहितास्तेषामुपघातःस्वैपका मार्शोचाश्रमैः २९ यावत्पुरस्तादिति मेरोःपृष्ठेमध्येब्रह्मलोकःप्राच्यादिचतुर्दिक्षिंद्रयमवरुणकुबेराणांपुर्यश्चमेरुंप्रदक्षिणीकुर्वता आदित्येनभास्यंते । तत्रभास्यापेक्षंभासकत्वमतोपस्याःपुर्याउच्छेदस्तत्रादित्योमतपतीतिव्यवहारः । तयासूर्यस्योदयस्तद्देशवासिनांदर्शनमदर्शनंचास्तमयः । तत्रप्राच्यामुदितःप्रतीच्यानामस्तंगतउदीच्यानांमध्यंदिनगतोदाक्षिणात्यानांतदामध्यरात्रमितिचव्यवहारः । एवंदक्षिणादिष्वपिज्ञेयं । एवंसतियदाप्राच्यांतपतितदामेरुप्रदक्षिणायास्तुल्यत्वादितरास्वपितपत्येव । तेनयावत्प्राच्यांतपतितावदेवदक्षिणस्यामितिवदताप्राच्याउच्छेदोयावताकालेनततोद्विगुणितेनकालेनदक्षिणस्याउच्छेदउक्तोभवति एवमुत्तरयोस्तथाचब्रह्मणोदिनस्यषोडशधाविभक्तस्यप्रथमेनांशेनैंद्र्याउच्छेदोद्वाभ्यांसंयमिन्याश्चतुर्भिर्वारुण्या अष्टाभिरुदीच्याउच्छेदस्तदाब्रह्मणामभावात्सूर्यस्यदर्शनादर्शनरूपावुदयास्तमयौनस्तःकिंतुमध्यंदिनएवसंततंब्रह्मलोकंप्रकाशयतिनपुर्यंतरं तदावदभावात् तदेतदाह एकस्थोब्रह्मलोकस्थः सर्वाँल्लोकान्मेरुपृष्ठादधस्तनांस्तापयति तदाब्रह्मणोमध्याह्नावसानेवर्तमानेव

॥ शक्र उवाच ॥ ॥ भूतानामिहसर्वेषांत्वंमयाविनिहितांसतीम् ॥ उपहन्यात्समेष्टव्यस्तथाशृण्वंतुमेवचः ॥ ततस्त्यक्तःश्रियाराजादैत्यानांबलिरब्रवीत् २९ ॥ ॥ बलिरुवाच ॥ ॥ यावत्पुरस्तात्प्रतपेत्तावद्वैदक्षिणांदिशम् ॥ पश्चिमांतावदेवापितथोदीचींदिवाकरः ३० तथामध्यंदिनेसूर्योनास्तमेतियदातदा ॥ पुनर्देवासुरंयुद्धंभाविजेताऽस्मिवस्तदा ३१ सर्वलोकान्यदादित्यएकस्थस्तापयिष्यति ॥ तदादेवासुरेयुद्धेजेताऽहंत्वांशतक्रतो ३२ ॥ ॥ शक्र उवाच ॥ ॥ ब्रह्मणाऽस्मिसमादिष्टोनहंतव्योभवानिति ॥ तेनतेऽहंबलेवज्रंनविमुंचामिमूर्धनि ३३ यथेष्टंगच्छदैत्येंद्रस्वस्तितेऽस्तुमहासुर ॥ आदित्योनैवतपिताकदाचिन्मध्यतःस्थितः ३४ स्थापितोह्यस्यसमयःपूर्वमेवस्वयंभुवा ॥ अजस्रंपरियात्येषसत्येनावतपन्प्रजाः ३५ अयनंतस्यषण्मासानुत्तरंदक्षिणंतथा ॥ येनसंयातिलोकेषुशीतोष्णेविसृजन्रविः ३६ ॥ ॥ भीष्मउवाच ॥ ॥ एवमुक्तस्तुदैत्येंद्रोबलिरिंद्रेणभारत ॥ जगामदक्षिणामाशामुदीचींतुपुरंदरः ३७

स्वतमनोरधिकारच्युतौसत्यांभविष्ये सावर्णिकमनौबलिरिंद्रोभविष्यति । यद्वा वैवस्वतमन्वंतरमेवाष्टधाविभज्यतदंतेउक्तक्रमेणसर्वपुर्युच्छेदेसतिमन्वंतरांतरेबलिरिंद्रोभाविष्यतीतिज्ञेयं तदिदमुक्तं । यावत्पुरस्तात्प्रतपेत्यादिनाश्लोकत्रयेण अयंलोकनाशक्रमश्छांदोग्येमधुविद्यायांयावदादित्यःपुरस्तादुदेतापश्चादस्तमेताद्विस्तावद्दक्षिणउदेतोत्तरतोऽस्तमेतेत्यादिनादर्शितःसएवात्रबलिनास्वराज्यकालकथनायोदीर्यते ३० । ३१ । ३२ तत्रमन्वंतरस्याष्टमांशकालेनस्वराज्योच्छेदंश्रुत्वाकुपितःकर्मफलस्यैंद्रपदस्यनिरवद्यतांमन्वानइंद्रःप्रत्युक्तिपूर्वकंतद्दूषयति ब्रह्मणेत्यादिना ३३ मध्यमास्थितःसन्नैवतपिता पुरीचतुष्टयोच्छेदोनैवभवितेत्यर्थः ३४ अजस्रंसत्येनकर्मणा तथाहि कर्मठाःप्राहुर्नकदाचिदनीदृशंजगदिति ३५ । ३६ एवमुक्तास्विति अयंभावः एकसप्तत्याचतुर्युगैरेकोमनुर्नश्यति तस्येदानीमष्टाविंशतितमोयुगपर्यायोऽनुवर्तते । तत्रोक्तरीत्याचतुर्थांशेनैंद्रीसंयमिन्योरुच्छेदोजातएव । वारुण्याअपिक्षयकालःप्रवृत्तः । उदीच्यास्तुनप्रवृत्तइत्याशयेनैंद्रउदीचींगतोबलिस्तुभ्रष्टश्रीस्ताद्दशीमेवदक्षिणांगतोनतुपूर्वां तस्यामैंद्रैश्वर्यतेऽपिशत्रुसन्निहितत्वादिति ३७

ननुपुराणांतरेचवसूणामपिपुरीणांसहैवोच्छेदोदृश्यतेनोक्तक्रमेणेत्याशंक्याह इत्येवदिति अनहंकारइतिसंज्ञामात्रंवाक्यस्यकिंतुकिंचित्साहंकारमेवेत्यर्थः । एवंचात्रत्रपःपक्षाउपन्यस्ताःनिरहंकारस्ययुगपत्सर्वोच्छेदःपुराणांतरसंमतः साहंकारस्यैंद्रस्यतुनकदाचित्पुर्युच्छेदोऽस्ति यथोक्तंवासिष्ठे ।' यत्राहंत्वंजगत्तत्रपूर्वमागत्यतिष्ठति । त्रसरेणूदरेपींद्रःपश्यतिस्मजगत्त्रयं' इति । साहंकारस्यापिविवेकिनोबलेःक्रमिकनाशयुक्तंजगदितिश्रुत्वोदीचींप्राप्यश्रुतियुक्तिबलेनपर्यालोच्यसंहारादाकाशमारुरोह ३८ ॥ ॥ इति शांति पर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपेपंचविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ ॥ ७ ॥ ॥ ७ ॥ अत्रैवअनहंकारस्वेरव १ भवाभवज्ञमुत्पत्तिप्रलयज्ञम् २ । ३ सहायता शोकस्यदुःखापनोदेहेतुत्वंनास्ती

इत्येतद्बलिनागीतमनहंकारसंज्ञितम् ॥ वाक्यंश्रुत्वासहस्राक्षःखमेवारुरुहेतदा ३८ ॥ इति श्रीमहाभरते शांति०मो०प०श्रीसन्निवानोनामपंचविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ भीष्मउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ शतक्रतोश्चसंवादंनमुचेश्चयुधिष्ठिर १ श्रियाविहीनमासीनमक्षोभ्यमिवसागरम् ॥ भवाभवज्ञंभूतानामित्युवाचपुरंदरः २ बद्धःपाशैश्च्युतःस्थानाद्द्विषतांवशमागतः ॥ श्रियाविहीनोनमुचेशोचस्याहोनशोचसि ३ ॥ नमुचिरुवाच ॥ अनिवार्येणशोकेनशरीरंचोपतप्यते ॥ अमित्राश्चप्रहृष्यंतिशोकेनास्तिसहायता ४ तस्माच्छक्रनशोचामिसर्वंह्येवेदमंतवत् ॥ संतापाद्भ्रश्यतेरूपंसंतापाद्भ्रश्यतेश्रियः ५ संतापाद्भ्रश्यतेचायुर्धर्मश्चैवसुरेश्वर ॥ विनीयखलुतद्दुःखमागतंवैमनस्यजम् ६ ध्यातव्यंमनसाहृद्यंकल्याणंसंविजानता ॥ यदायदाहिपुरुषःकल्याणेकुरुतेमनः ॥ तदातस्यप्रसिध्यंतिसर्वार्थानात्रसंशयः ७ एकःशास्तानद्वितीयोऽस्तिशास्तागर्भेशयानंपुरुषंशास्तिशास्ता ॥ तेनानुयुक्तःप्रवणादिवोदकंयथानियुक्तोऽस्मितथावहामि ८ भवाभवौत्वभिजानन्गरीयोज्ञानाच्छ्रेयोनतुतद्वैकरोमि ॥ आशासुधर्म्यासुपरासुकुर्वन्यथानियुक्तोऽस्मितथावहामि ९ यथायथाऽस्यप्राप्तव्यंप्राप्नोत्येवतथातथा ॥ भवितव्यंयथायच्चभवत्येवतथातथा १० यत्रयत्रैवसंयुक्तोधात्रागर्भेपुनःपुनः ॥ तत्रतत्रैववसतिनयत्रस्वयमिच्छति ११ भावोयोऽयमनुप्राप्तोभवितव्यमिदंमम ॥ इतियस्यसदाभावोनसमुह्येत्कदाचन १२ पर्यायैर्हन्यमानानामभियोक्तानविद्यते ॥ दुःखमेतत्तुयद्द्वेष्टाकर्ताऽहमितिमन्यते १३ ऋषींश्चदेवांश्चमहासुरांश्चत्रैविद्यवृद्धांश्चवनेमुनींश्च ॥ कान्नापदोनोपनमंतिलोकेपरावरज्ञास्तुनसंभ्रमंति १४ नपंडितःक्रुध्यतिनाभिपद्यतेनचापिसंसीदतिनप्रहृष्यति ॥ नचार्थकृच्छ्रव्यसनेषुशोचतेस्थितःप्रकृत्याहिमवानिवाचलः १५

त्यर्थः ४ श्रियःसकाशात् ५ विनीयनिरस्य ६ हृद्यंहृत्स्थंस्वरूपं कल्याणंमोक्षम् ७ एकइति अंतर्यामिस्वरूपमेवकल्याणमित्यर्थः प्रवणात्निम्नदेशात् ८ भवाभवौबंधमोक्षौ भावाभावावितिपाठेसत्यानृतौ तावेवाभिजानंस्तयोरपिमध्येश्रेयोमोक्षंगुरुतरत्वेनजानन्नपिनकरोमिश्रवणाद्यभ्यासेननसंपादयामि परास्वधर्म्यासुनिमित्तभूतासु कुर्वन्कर्माणि नियुक्तःशास्त्रा ९ । १० ११ । १२ पर्यायैःकालक्रमागतैःसुखदुःखैः द्वेष्टादुःखस्यः कर्तृत्वाभिमानएवदुःखमित्यर्थः १३ आपदःकान्पुरुषान्नोपनमंतिनानुसरंत्यपितुसर्वानेव परावरज्ञाःसदसद्वस्तुविदः नसंभ्रमंतिनविभ्यति १४ नाभिपद्यतेनसज्जते अतिकृच्छ्रव्यसनेषुदुर्निवार्येषुदुःखेषु १५

१६ प्रणुदन्दूरीकुर्वन् १७ विवेकदौर्लभ्यमाह नतदिति श्रौतस्मार्तलौकिकन्यायान्यायविवेचकाजनसमाजाःसदःपर्षत्समाख्याः भयंधर्मेविष्ठाजं धुरंधरःसम्यश्रेष्ठः धर्मतत्त्वमपिदुरवगाहंकि
मुतब्रह्मतत्त्वमितिभावः १८ दुरन्वयानिदुर्ज्ञेयोदर्काणि नमुमोहगौतमइतिपाठेअहल्याजारस्येंद्रस्यप्रजाजनानर्थममोंद्घाटनं गौतमस्यचदारापहारेऽपिधैर्यवर्णनं स्थानादहल्यायाःशप्तत्वेनशि

यमर्थसिद्धिःपरमानमोहयेत्तथैवकालेव्यसनंनमोहयेत् ॥ सुखंचदुःखंचतथैवमध्यमंनिषेवतेयःसधुरंधरोनरः १६ यांयामवस्थांपुरुषोऽधिगच्छेत्तस्यांरमेतापरित
प्यमानः ॥ एवंप्रवृद्धंप्रणुदन्मनोजंसंतापमायासकरंशरीरात् १७ नतत्सदःसत्परिषत्सभाचसाप्राप्ययांनकुरुतेसदाभयम् ॥ धर्मतत्त्वमवगाह्यबुद्धिमान्योऽभ्युपै
तिसधरंधुरःपुमान् १८ प्राज्ञस्यकर्माणिदुरन्वयानिनवैप्राज्ञोमुह्यतिमोहकाले ॥ स्थानाच्च्युतश्चेन्नमुमोहचोत्तमस्तावत्कृच्छ्रामापदंप्राप्यवृद्धः १९ नमंत्रबलवीर्ये
णप्रज्ञयापौरुषेणच ॥ नशीलेननवृत्तेनतथानैवार्थसंपदा ॥ अलभ्यंलभतेमर्त्यस्तत्रकापरिदेवना २० यदेवमनुजातस्यधातारोविदधुःपुरा ॥ तदेवानुचरिष्यामि
किंमेमृत्युःकरिष्यसि २१ लब्धव्यान्येवलभतेगंतव्यान्येवगच्छति ॥ प्राप्तव्यान्येवचाप्नोतिदुःखानिचसुखानिच २२ एतद्विदित्वाकात्स्न्येनयोनमुह्यतिमानवः
कुशलीसर्वदुःखेषुसवैसर्वधनोनर २३ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शकनमुचिसंवादोनामषड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥
युधिष्ठिरउवाच ॥ मग्नस्यव्यसनेकृच्छ्रेकिंश्रेयःपुरुषस्यहि ॥ बंधुनाशेमहीपालराज्यनाशेऽथवापुनः १ त्वंहिनःपरमोवक्तालोकेऽस्मिन्भरतर्षभ ॥ एतद्भवंतंपृच्छामि
तन्मेत्वंवक्तुमर्हसि २ ॥भीष्मउवाच॥ पुत्रदारैःसुखैश्चैवविवियुक्तस्यधनेनवा ॥ मग्नस्यव्यसनेकृच्छ्रेधृतिःश्रेयस्करीनृप ३ धैर्येणयुक्तंसततंशरीरंनविशीर्यते ॥ विशोक
तासुखंधत्तेधत्तेचारोग्यमुत्तमम् ४ आरोग्याच्चशरीरस्यसपुनर्विंदतेश्रियम् ॥ यश्चप्राज्ञोनरस्तातसात्विकींवृत्तिमास्थितः ५ तस्यैश्वर्यंचधैर्यंचव्यवसायश्चकर्मसु ॥
अत्रैवोदाहरंतीममितिहासंपुरातनम् ६ बलिवासवसंवादंपुनरेवयुधिष्ठिर ॥ वृत्तेदेवासुरेयुद्धेदैत्यदानवसंक्षये ७ विष्णुक्रांतेषुलोकेषुदेवराजेशतक्रतौ ॥ इज्यमानेषुदेवे
षुचातुर्वर्ण्येव्यवस्थिते ८ समृद्ध्यमानेत्रैलोक्येप्रीतियुक्तेस्वयंभुवि ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यामपिचर्षिभिः ९ गंधर्वैर्भुजगेंद्रैश्चसिद्धैश्चान्यैर्वृतःप्रभुः ॥ चतुर्दंतंसुदां
तंचवारणेंद्रंश्रियावृतम् ॥ आरुह्यैरावतंशक्रस्त्रैलोक्यमनुसंययौ १० सकदाचित्समुद्रांतेकस्मिंश्चिद्गिरिगह्वरे ॥ बलिंवैरोचनिंवज्रीददर्शोपससर्पच ११ तमैरावतमूर्ध
स्थंप्रेक्ष्यदेवगणैर्वृतम् ॥ सुरेंद्रमिंद्रंदैत्येंद्रोनशुशोचनविव्यथे १२ दृष्ट्वातमविकारस्थंतिष्ठंतंनिर्भयंबलिम् ॥ अधिरूढोद्विपश्रेष्ठमित्युवाचशतक्रतुः १३ दैत्यनव्यथ
सेशौर्याद्थवावृद्धसेवया ॥ तपसाभावितत्वाद्वासर्वथैतत्सुदुष्करम् १४ शत्रुभिर्वशमानीतोहीनःस्थानादनुत्तमात् ॥ वैरोचनेकिमाश्रित्यशोचितव्येनशोचसि१५

लारूपत्वाद्गार्हस्थ्याच्च्युतः नस्वरसदृशोऽहमजितचित्तोऽस्मिकिंतुगौतमवज्जितचित्तोऽस्मीतिभावः १९ अलभ्यंचित्तस्वास्थ्यम् २० । २१ । २२ । २३ ॥ इति शांतिपर्वणि मोक्षपर्वणि
नीलकंठीये भारतभावदीपे षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥ मग्नस्यव्यसनेकृच्छ्रइत्यादिनाऽध्यायेनविपदिधैर्यमेव
श्रेयइतिपुनर्बलिवासवसंवादाख्यायिकामुखेनप्रदर्श्यते १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५



१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३।४४।४५

श्रैष्ठ्यंप्राप्यस्वजातीनांमहाभोगाननुत्तमान् ॥ हृतस्वरत्नराज्यस्त्वंब्रूहिकस्मान्नशोचसि १६ ईश्वरोहिपुराभूत्वापितृपैतामहेपदे ॥ तत्त्वमद्यहृतंदृष्ट्वासपत्नैःकिं
नशोचसि १७ बद्धश्चवारुणैःपाशैर्वज्रेणचसमाहतः ॥ हृतदारोहृतधनोब्रूहिकस्मान्नशोचसि १८ नष्टश्रीर्विभवभ्रष्टोयन्नशोचसिदुष्करम् ॥ त्रैलोक्यराज्यनाशे
हिकोऽन्योजीवितुमुत्सहेत् १९ एतच्चान्यच्चपरुषंब्रुवंतंपरिभूयतम् ॥ श्रुत्वासुखमसंभ्रांतोबलिर्वैरोचनोऽब्रवीत् २० बलिरुवाच ॥ निगृहीतेमयिभृशंशक्रकिंकत्थि
तेनते ॥ वज्रमुद्यम्यतिष्ठंतंपश्यामित्वांपुरंदर २१ अशक्तःपूर्वमासीस्त्वंकथंचिच्छक्ततांगतः ॥ कस्त्वदन्यइमांवाचंसुक्रूरांवक्तुमर्हति २२ यस्तुशत्रोर्वशस्थस्य
शक्तोऽपिकुरुतेदयाम् ॥ हस्तप्राप्तस्यवीरस्यतंचैवपुरुषंविदुः २३ अनिश्चयोहियुद्धेपुद्वयोर्विवदमानयोः ॥ एकःप्राप्नोतिविजयमेकश्चैवपराजयम् २४ माचतेऽ
भूत्स्वभावोऽयमितितेदेवपुंगव ॥ ईश्वरःसर्वभूतानांविक्रमेणजितोबलात् २५ नैतदस्मत्कृतंशक्रनैतच्छक्रकृतंत्वया ॥ यत्त्वमेवंगतोवज्रिन्यद्वाऽप्येवंगतावयम् २६
अहमासंयथाद्यत्वंभवितात्वंयथावयम् ॥ मावमंस्थामयाकर्मदुष्कृतंकृतमित्युत २७ सुखदुःखेहिपुरुषःपर्यायेणाधिगच्छति ॥ पर्यायेणाऽसिशक्रत्वंप्राप्तःशक्रन
कर्मणा २८ कालःकालेनयतिमांत्वांचकालोनयत्ययम् ॥ तेनाहंत्वंयथानाद्यत्वंचापिनयथावयम् २९ नमातृपितृशुश्रूषानचदैवतपूजनम् ॥ नान्योगुणसमाचा
रःपुरुषस्यसुखावहः ३० नविद्यानतपोदानंनमित्राणिनबांधवाः ॥ शक्नुवंतिपरित्रातुंनरंकालेनपीडितम् ३१ नागामिनमनर्थंहिप्रतिघातशतैरपि ॥ शक्नुवंति
प्रतिव्योढुमृतेबुद्धिबलान्नराः ३२ पर्यायैर्हन्यमानानांपरित्रातानविद्यते ॥ इदंतुदुःखंयच्छक्रकर्ताऽहमितिमन्यसे ३३ यदिकर्ताभवेत्कर्तानक्रियेतकदाचन ॥
यस्मात्तुक्रियतेकर्तातस्मात्कर्ताऽप्यनीश्वरः ३४ कालेनाहंत्वामजयंकालेनाहंजितस्त्वया ॥ गंतागतिमतांकालःकालःकलयतिप्रजाः ३५ इंद्रप्राकृतयाबुद्ध्याप्र
लयंनावबुद्ध्यसे ॥ केचित्त्वांबहुमन्यंतेश्रैष्ठ्यंप्राप्तंस्वकर्मणा ३६ कथमस्मद्विधोनामजानँल्लोकप्रवृत्तयः ॥ कालेनाभ्याहतःशोचेन्मुह्येद्वाप्यथविभ्रमेत् ३७
नित्यंकालपरीतस्यममवामद्विधस्यवा ॥ बुद्धिर्व्यसनमासाद्यभिन्नानौरिवसीदति ३८ अहंचत्वंचयेचान्येभविष्यंतिसुराधिपाः ॥ तेसर्वेशक्रयास्यंतिमार्गमिंद्र
शतैर्गतम् ३९ त्वामप्येवंसुदुर्धर्षंज्वलंतंपरयाश्रिया ॥ कालेपरिणतेकालःकालयिष्यतिमामिव ४० बहूनींद्रसहस्राणिदैवतानांयुगेयुगे ॥ अभ्यतीतानि
कालेनकालोहिदुरतिक्रमः ४१ इदंतुलब्ध्वासंस्थानमात्मानंबहुमन्यसे ॥ सर्वभूतभवंदेवंब्रह्माणमिवशाश्वतम् ४२ नचेदमचलंस्थानमनंतंवाऽपिकस्य
चित् ॥ त्वंतुबालिशयाबुद्ध्याममेदमितिमन्यसे ४३ अविश्वस्तेविश्वसिषिमन्यसेवाऽध्रुवेध्रुवम् ॥ नित्यंकालपरीतात्माभवत्येवंसुरेश्वर ४४ ममेयमिति
मोहात्त्वंराजश्रियमभीप्ससि ॥ नेयंतवनचास्माकंनचान्येषांस्थिरासदा ४५

॥१०२॥ अतिक्रम्यबहूनन्यांस्त्वयितावदियंगता ॥ कंचित्कालमियंस्थित्वात्वयिवासवचंचला ४६ गौर्निवासमिवोत्सृज्यपुनरन्यंगमिष्यति ॥ राजलोकाह्यतिक्रांतायान्न अ०
संख्यातुमुत्सहे ४७ त्वत्तोबहुतराश्चान्येभविष्यंतिपुरंदर ॥ सवृक्षौषधिरत्नेयंससत्ववनाकरा ४८ तानिदानींनपश्यामियैर्भुक्तेयंपुरामही ॥ पृथुरैलोमयोभीमो
नरकःशंबरस्तथा ४९ अश्वग्रीवःपुलोमाचस्वर्भानुरमितध्वजः ॥ प्रह्लादोनमुचिर्दक्षोविप्रचित्तिर्विरोचनः ५० ह्रीनिषेवःसुहोत्रश्चभूरिहापुष्पवान्वृषः ॥ सत्येपु ॥२२७॥
ऋषभोबाहुःकपिलाश्वोविरूपकः ५१ बाणःकार्तस्वरोवह्निर्विश्वदंष्ट्रोऽथनैर्ऋतिः ॥ संकोचोऽथवरीताक्षोवराहाश्वोरुचिप्रभः ५२ विश्वजित्प्रतिरूपश्चवृषांडोवि
ष्करोमधुः ॥ हिरण्यकशिपुश्चैवकैटभश्चैवदानवः ५३ दैतेयादानवाश्चैवसर्वेतेनैर्ऋतैःसह ॥ एतेचान्येचबहवःपूर्वेपूर्वतराश्चये ५४ दैत्येंद्रादानवेंद्राश्चयांश्चा
न्याननुशुश्रुम ॥ बहवःपूर्वदैत्येंद्राःसंत्यज्यपृथिवींगताः ५५ कालेनाभ्याहताःसर्वेकालोहिबलवत्तरः ॥ सवःक्रतुशतैरिष्टंनत्वमेकःशतक्रतुः ५६ सर्वेधर्मपराश्चास
न्सर्वेसततसत्रिणः ॥ अंतरिक्षचराःसर्वेसर्वेऽभिमुखयोधिनः ५७ सर्वेसंहननोपेताःसर्वेपरिघबाहवः ॥ सर्वेमायाशतधराःसर्वेतेकामरूपिणः ५८ सर्वेसमरमासा
द्यनश्रूयंतेपराजिताः ॥ सर्वेसत्यव्रतपराःसर्वेकामविहारिणः ५९ सर्वेवेदव्रतपराःसर्वेचैवबहुश्रुताः ॥ सर्वेसंमतमैश्वर्यमीश्वराःप्रतिपेदिरे ६० नचैश्वर्यमदस्तेषां
भूतपूर्वोमहात्मनाम् ॥ सर्वेयथार्हदातारःसर्वेविगतमत्सराः ६१ सर्वेसर्वेषुभूतेषुयथावत्प्रतिपेदिरे ॥ सर्वेदाक्षायणीपुत्राःप्राजापत्यामहाबलाः ६२ ज्वलंतःप्रतपं
तश्चकालेनप्रतिसंहृताः ॥ त्वंचैवेमांयदाभुक्त्वापृथिवींत्यक्ष्यसेपुनः ६३ नशक्ष्यसितदाशक्रनियंतुंशोकमात्मनः ॥ मुंचेच्छांकामभोगेषुमुंचेमंश्रीभवंमदम् ६४
एवंस्वराज्यनाशेत्वंशोकंसंप्रसहिष्यसि ॥ शोककालेशुचोमात्वंहर्षकालेचमाहृषः ६५ अतीतानागतंहित्वाप्रत्युत्पन्नेनवर्तय ॥ मांचेदभ्यागतःकालःसदायुक्तम
तंद्रितः ६६ क्षमस्वनचिरादिंद्रत्वामप्युपगमिष्यति ॥ त्रासयन्निवदेवेंद्रवाग्भिस्तक्षसिमामिह ६७ संयतेमयिनूनंत्वमात्मानंबहुमन्यसे ॥ कालःप्रथममायान्मां
पश्चात्त्वामनुधावति ६८ तेनगर्जसिदेवेंद्रपूर्वंकालहतेमयि ॥ कोहिस्थातुमलंलोकेममक्रुद्धस्यसंयुगे ६९ कालस्तुबलवान्प्राप्तस्तेनातिष्ठसिवासव ॥ यत्तद्वर्षसह
स्रांतंपूर्णंभवितुमर्हति ७० यथामेसर्वगात्राणिनसुस्थानिमहौजसः ॥ अहमैंद्राच्च्युतःस्थानात्त्वमिंद्रःप्रकृतोदिवि ७१ सुचित्रेजीवलोकेऽस्मिन्नुपास्यःकाल
पर्ययात् ॥ किंहिकृत्वात्वमिंद्रोऽद्यकिंवाकृत्वावयंच्युताः ७२ कालःकर्ताविकर्ताचसर्वमन्यदकारणम् ॥ नाशंविनाशमैश्वर्यंसुखंदुःखंभवाभवौ ७३ विद्वान्प्रा
प्यैवमत्यर्थंनप्रहृष्येन्नचव्यथेत् ॥ त्वमेवहींद्रवेत्थास्मान्वेदाहंत्वांचवासव ७४ किंकत्थसेमांकिंचत्वंकालेननिरपत्रप ॥ त्वमेवहिपुरावेत्थयत्तदापौरुषंमम ७५ ॥१०२॥
समरेषुचविक्रांतंपर्याप्तंतन्निदर्शनम् ॥ आदित्याश्चैवरुद्राश्चसाध्याश्चवसुभिःसह ७६



मयाविनिर्जिताःपूर्वंमरुतश्चशचीपते ॥ त्वमेवशक्रजानासिदेवासुरसमागमे ७७ समेताविबुधाभग्नास्तरसासमरेमया ॥ पर्वताश्चासकृत्क्षिप्ताःसवनाःसवनौकसः
७८ सटंकशिखराभग्नाःसमरेमूर्ध्नितेमया ॥ किंनुशक्यंमयाकर्तुंकालोहिदुरतिक्रमः ७९ नहित्वांनोत्सहेहंतुंसवज्रमपिमुष्टिना ॥ नतुविक्रमकालोऽयंक्षमाकालो
ऽयमागतः ८० तेनत्वांमर्षयेशक्रदुर्मर्षणतरस्त्वया ॥ तंमांपरिणतेकालेपरीतंकालवह्निना ८१ नियतंकालपाशेनबद्धंशक्रविकत्थसे ॥ अयंसपुरुषःश्यामो
लोकस्यदुरतिक्रमः ८२ बद्ध्वातिष्ठतिमांरौद्रःपशुंरशनयायथा ॥ लाभालाभौसुखंदुःखंकामक्रोधौभवाभवौ ८३ वधबंधप्रमोक्षंचसर्वंकालेनलभ्यते ॥ नाहंक
र्तानकर्तात्वंकर्तायस्तुसदाप्रभुः ८४ सोऽयंपचतिकालोमांवृक्षेफलमिवागतम् ॥ यान्येवपुरुषःकुर्वन्सुखैःकालेनयुज्यते ८५ पुनस्तान्येवकुर्वाणोदुःखैःका
लेनयुज्यते ॥ नचकालेनकालज्ञःस्पृष्टःशोचितुमर्हति ८६ तेनशक्रनशोचामिनास्तिशोकेसहायता ॥ यदाहिशोचतःशोकोव्यसनंनापकर्षति ८७ सामर्थ्यं
शोचतोनास्तीत्यतोऽहंनाद्यशोचिमि ॥ एवमुक्तःसहस्राक्षोभगवान्पाकशासनः ८८ प्रतिसंहृत्यसंरंभमित्युवाचशतक्रतुः ॥ सवज्रमुद्यतंबाहुंदृष्ट्वापाशांश्चवारु
णान् ८९ कस्येहनव्यथेद्बुद्धिर्मृत्योरपिजिघांसतः ॥ सातेनव्यथतेबुद्धिरचलातत्त्वदर्शिनी ९० ध्रुवंनव्यथसेऽद्यत्वंधैर्यात्सत्यपराक्रम ॥ कोहिविश्वासमर्थेषुश
रीरेवाशरीरभृत् ९१ कर्तुमुत्सहतेलोकेदृष्ट्वासंप्रस्थितंजगत् ॥ अहमप्येवमेवैनंलोकंजानाम्यशाश्वतम् ९२ कालाग्नावाहितंघोरेगुह्येसततगेऽक्षरे ॥ नचात्रप
रिहारोऽस्तिकालस्पृष्टस्यकस्यचित् ९३ सूक्ष्माणांमहतांचैवभूतानांपरिपच्यताम् ॥ अनीशस्याप्रमत्तस्यभूतानिपचतःसदा ९४ अनिवृत्तस्यकालस्यक्ष
यंप्राप्तोनमुच्यते ॥ अप्रमत्तःप्रमत्तेषुकालोजागर्तिदेहिषु ९५ प्रयत्नेनाप्यपक्रांतोदृष्टपूर्वोनकेनचित् ॥ पुराणःशाश्वतोधर्मःसर्वप्राणभृतांसमः ९६ कालोनपरि
हार्यश्चनचास्यास्तिव्यतिक्रमः ॥ अहोरात्रांश्चमासांश्चक्षणान्काष्ठालवान्कलाः ९७ संपीडयतियःकालोवृद्धिंवार्धुषिकोयथा ॥ इदमद्यकरिष्यामिश्वःकर्ताऽस्मी
तिवादिनम् ९८ कालोहरतिसंप्राप्तोनदीवेगइवद्रुमम् ॥ इदानींतावदेवासौमयादृष्टःकथंमृतः ९९ इतिकालेनह्रियतांप्रलापःश्रूयतेनृणाम् ॥ नश्यंत्यर्थास्तथा
भोगाःस्थानमैश्वर्यमेवच १०० जीवितंजीवलोकस्यकालेनागम्यनीयते ॥ उच्छ्रायाविनिपातांताभावोऽभावःसएवच १ अनित्यमध्रुवंसर्वंव्यवसायोहिदुष्करः ॥
३५ सातेनव्यथतेबुद्धिरचलातत्त्वदर्शिनी २ अहमासंपुराचेतिमनसाऽपिनबुद्ध्यते ॥ कालेनाक्रम्यलोकेऽस्मिन्पच्यमानेबलीयसा ३ अज्येष्ठमकनिष्ठंचक्षिप्यमा
णोनबुध्यते ॥ ईर्ष्याभिमानलोभेषुकामक्रोधभयेषुच ४ स्पृहामोहाभिमानेषुलोकःसक्तोविमुह्यति ॥ भवांस्तुभावतत्त्वज्ञोविद्वाञ्ज्ञानतपोन्वितः ५ कालंपश्य
तिसुव्यक्तंपाणावामलकंयथा ॥ कालचारित्रतत्त्वज्ञःसर्वशास्त्रविशारदः १०६

१०७। ८। ९। ११०।। ११। १२।१३।१४।१५।१६।१७।१८।११९॥ ॥ इतिशांति० मो० नी० भा० सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ ॥ ७ ॥

विवेचनेकृताऽऽत्मासिस्पृहणीयोविजानताम् ॥ सर्वलोकोह्ययंमन्येबुद्ध्यापरिगतस्त्वया १०७ विहरन्सर्वतोमुक्तोनक्वचित्परिषज्जसे ॥ रजश्चहितमश्चत्वां स्पृशतेनजितेंद्रियम् ८ निष्प्रीतिंनष्टसंतापमात्मानंत्वमुपाससे ॥ सुहृदंसर्वभूतानांनिर्वैरंशांतमानसम् ९ दृष्ट्वात्वांममसंजाताल्वय्यनुक्रोशिनीमतिः ॥ नाहमे तादृशंबुद्धंहंतुमिच्छामिबंधने ११० आनृशंस्यंपरोधर्मोह्यनुक्रोशश्चमेत्वयि ॥ मोक्ष्यंतेवारुणाःपाशास्तवेमेकालपर्ययात् ११ प्रजानामुपचारेणस्वस्तितेऽ स्तुमहासुर ॥ यदाश्वश्रूंस्नुषावृद्धांपरिचारेणयोक्ष्यते १२ पुत्रश्चपितरंमोहात्प्रेषयिष्यतिकर्मसु ॥ ब्राह्मणैःकारयिष्यंतिवृषलाःपादधावनम् १३ शूद्राश्चब्रा ह्मणींभार्यामुपयास्यंतिनिर्भयाः ॥ वियोनिषुविमोक्ष्यंतिबीजानिपुरुषायदा १४ संकरंकांस्यभांडैश्चबलिंचैवकुपात्रकैः ॥ चातुर्वर्ण्यंयदाकृत्स्नममर्यादंभविष्य ति १५ एकैकस्तेतदापाशःक्रमशःपरिमोक्ष्यते ॥ अस्मत्तस्तेभयंनास्तिसमयंप्रतिपालय ॥ सुखीभवनिराबाधःस्वस्थचेतानिरामयः १६ तमेवमुक्त्वाभग वाञ्छतक्रतुःप्रतिप्रयातोगजराजवाहनः ॥ विजित्यसर्वानसुरान्सुराधिपोननंदहर्षेणबभूवचैकराट् १७ महर्षयस्तुष्टुवुरंजसाचतंवृषाकपिंसर्वचराचरेश्वरम् ॥ हिमापहोहव्यमुवाहचाध्वरेतथाऽमृतंचार्पितमीश्वरोऽपिहि १८ द्विजोत्तमैःसर्वगतैरभिष्टुतोविदीप्ततेजागतमन्युरीश्वरः ॥ प्रशांतचेतामुदितःस्वमालयंत्रिवि ष्टपंप्राप्यमुमोदवासवः ११९ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० प० बलिवासवसंवादेसप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ युधिष्ठिरउवाच ॥ पूर्वरूपाणिमेराजन्पुरुषस्यभविष्यतः ॥ पराभविष्यतश्चैवतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ मनएवमनुष्यस्यपूर्वरूपाणिशंसति ॥ भविष्यतश्चभद्रं तेतथैवनभविष्यतः २ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ श्रियाशक्रस्यसंवादंतंनिबोधयुधिष्ठिर ३ महतस्तपसोव्युष्ट्यापश्यँल्लोकौपरावरौ ॥ सामा न्यमृषिभिर्गत्वाब्रह्मलोकनिवासिभिः ४ ब्रह्मेवामितदीप्तौजाःशांतपाप्मामहातपाः ॥ विचचारयथाकामंत्रिषुलोकेषुनारदः ५ कदाचित्प्रातरुत्थायपिस्पृक्षुःस लिलंशुचि ॥ ध्रुवद्वारभवांगंगांजगामावततारच ६ सहस्रनयनश्चापिवज्रीशंबरपाकहा ॥ तस्यादेवर्षिजुष्टायास्तीरमभ्याजगामह ७ तावाप्लुत्ययतात्मानौ कृतजप्यौसमासतः ॥ नद्याःपुलिनमासाद्यसूक्ष्मकांचनवालुकम् ८ पुण्यकर्मभिराख्यातादेवर्षिकथिताःकथाः ॥ चक्रतुस्तौतथाऽऽसीनौमहर्षिकथितास्त था ९ पूर्ववृत्तव्यपेतानिकथयंतौसमाहितौ ॥ अथभास्करमुद्यंतंरश्मिजालपुरस्कृतम् १० पूर्णमंडलमालोक्यतावुत्थायोपतस्थतुः ॥ अभितस्तूदयंतंतम र्कमर्कमिवापरम् ११ आकाशेददृशेज्योतिरुद्यतार्चिःसमप्रभम् ॥ तयोःसमीपंतंप्राप्तंप्रत्यदृश्यतभारत १२ तत्सुपर्णार्करचितमास्थितंवैष्णवंपदम् ॥ भाभि रप्रतिमंभातित्रैलोक्यमवभासयत् १३ तत्राऽभिरूपशोभाभिरप्सरोभिःपुरस्कृताम् ॥ बृहतीमंशुमत्प्रख्यांबृहद्भानोरिवार्चिषम् १४ नक्षत्रकल्पाभरणांतांमौ क्तिकसमस्रजम् ॥ श्रियंददृशतुःपद्मांसाक्षात्पद्मदलस्थिताम् १५ ॥ पूर्वरूपाणीति १। २। ३। ४। ५। ६। ७। ८। ९। १०। ११। १२। १३। १४। १५

१६। १७। १८। १९। २०। २१। २२। २३। २४। २५। २६। २७। २८। २९। ३०। ३१। ३२। ३३। ३४। ३५। ३६। ३७। ३८। ३९। ४०। ४१। ४२। ४३। ४४

साऽवरुह्यविमानाग्र्यादंगनानामनुत्तमा ॥ अभ्यागच्छत्त्रिलोकेशंदेवर्षिंचापिनारदम् १६ नारदानुगतःसाक्षान्मघवांस्तामुपागमत् ॥ कृतांजलिपुटोदेवींनि वेद्यात्मानमात्मना १७ चक्रेचानुपमांपूजांतस्याश्चापिससर्ववित् ॥ देवराजःश्रियंराजन्वाक्यंचेदमुवाचह १८ ॥ शक्रउवाच ॥ कात्वंकेनचकार्येणसंप्राप्ता चारुहासिनि ॥ कुतश्चागम्यतेसुभ्रुगंतव्यंक्वचतेशुभे १९ ॥ श्रीरुवाच ॥ पुण्येषुत्रिषुलोकेषुसर्वेस्थावरजंगमाः ॥ ममात्मभावमिच्छंतोयतंतेपरमात्मना २० साहंवैपंकजेजातासूर्यरश्मिविबोधिते ॥ भूत्यर्थंसर्वभूतानांपद्माश्रीःपद्ममालिनी २१ अहंलक्ष्मीरहंभूतिःश्रीश्चाहंबलसूदन ॥ अहंश्रद्धाचमेधाचसन्न तिर्विजितिःस्थितिः २२ अहंधृतिरहंसिद्धिरहंत्वद्भूतिरेवच ॥ अहंस्वाहास्वधाचैवसन्नतिर्नियतिःस्मृतिः २३ राज्ञांविजयमानानांसेनाग्रेषुध्वजेषुच ॥ निवासेधर्मशीलानांविषयेषुपुरेषुच २४ जितकाशिनिशूरेचसंग्रामेष्वनिवर्तिनि ॥ निवसामिमनुष्येंद्रेसदैवबलसूदन २५ धर्मनित्येमहाबुद्धौब्रह्मण्येसत्यवादिनि ॥ प्रश्रितेदानशीलेचसदैवनिवसाम्यहम् २६ असुरेष्ववसंपूर्वंसत्यधर्मनिबंधना ॥ विपरीतांस्तुतान्बुद्ध्वात्वयिवासमरोचयम् २७ ॥ शक्रउवाच ॥ कथंवृत्ते षुदैत्येषुत्वमवात्सीर्वरानने ॥ दृष्ट्वाचकिमिहागास्त्वंहित्वादैतेयदानवान् २८ ॥ श्रीरुवाच ॥ स्वधर्ममनुतिष्ठत्सुधैर्यादचलितेषुच ॥ स्वर्गमार्गाभिरामेषुसत्त्वे षुनिरताह्यहम् २९ दानाध्ययनयज्ञेज्यापितृदैवतपूजनम् ॥ गुरूणामतिथीनांचतेषांसत्यमवर्तत ३० सुसंमृष्टगृहाश्चासन्जितस्त्रीकाहुताग्नयः ॥ गुरुशु श्रूषकादांताब्रह्मण्याःसत्यवादिनः ३१ श्रद्दधानाजितक्रोधादानशीलाऽनसूयवः ॥ भृतपुत्राभृतामात्याभृतदाराह्यनीर्षवः ३२ अमर्षेणनचान्योन्यंस्पृहयंते कदाचन ॥ नचजातूपतप्यंतिधीराःपरसमृद्धिभिः ३३ दातारःसंगृहीतारआर्याःकरुणवेदिनः ॥ महाप्रसादाऋजवोदृढभक्ताजितेंद्रियाः ३४ संतुष्टभृत्यस चिवाःकृतज्ञाःप्रियवादिनः ॥ यथार्हमानार्थकराह्रीनिषेवायतव्रताः ३५ नित्यंपर्वसुसुस्नाताःस्वनुलिप्ताःस्वलंकृताः ॥ उपवासतपःशीलाःप्रतीताब्रह्मवादिनः ३६ नैनानभ्युदियात्सूर्योनचाप्यासन्प्रगेशयाः ॥ रात्रौदधिचसक्तूंश्चनित्यमेवव्यवर्जयन् ३७ कल्यंघृतंचान्ववेक्षन्प्रयताब्रह्मवादिनः ॥ मंगल्यान्यपिचाप श्यन्ब्राह्मणांश्चाप्यपूजयन् ३८ सदाहिवदतांधर्मंसदाचाऽप्रतिगृह्णताम् ॥ अर्धंचरात्र्याःस्वपतांदिवाचास्वपतांतथा ३९ कृपणानाथवृद्धानांदुर्बलातुर योषिताम् ॥ दयांचसंविभागंचनित्यमेवाऽन्वमोदताम् ४० त्रस्तंविषण्णमुद्विग्नंभयार्तंव्याधितंकृशम् ॥ हृतस्वंव्यसनार्तंचनित्यमाश्वासयंतिते ४१ धर्ममेवान्ववर्तंतनहिंसंतिपरस्परम् ॥ अनुकूलाश्चकार्येषुगुरुवृद्धोपसेविनः ४२ पितॄन्देवातिथींश्चैवयथावत्तेऽभ्यपूजयन् ॥ अवशेषाणिचाश्नंतिनित्यंसत्यत पोधृताः ४३ नैकेऽश्नंतिसुसंपन्नंनगच्छंतिपरस्त्रियम् ॥ सर्वभूतेष्ववर्तंतयथाऽऽत्मनिदयांप्रति ४४

४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३।७४।७५



नैवाकाशेनपशुषुवियोनौचनपर्वसु ॥ इंद्रियस्यविसर्गंतेरोचयंतिकदाचन ४५ नित्यंदानंतथादाक्ष्यमार्जवंचैवनित्यदा ॥ उत्साहोऽथानहंकारःपरमंसौहृ
दंक्षमा ४६ सत्यंदानंतपःशौचंकारुण्यंवागनिष्ठुरा ॥ मित्रेषुचानभिद्रोहःसर्वंतेष्वभवत्प्रभो ४७ निद्रातंद्रीरसंप्रीतिरसूयाऽथानवेक्षिता ॥ अरतिश्चविषा
दश्चस्पृहाचाप्यविशन्नतान् ४८ साऽहमेवंगुणेष्वेवदानवेष्ववसंपुरा ॥ प्रजासर्गमुपादायनैकंयुगविपर्ययम् ४९ ततःकालविपर्यासेतेषांगुणविपर्ययात् ॥ अप
श्यंनिर्गतंधर्मंकामक्रोधवशात्मनाम् ५० सभासदांचवृद्धानांसतांकथयतांकथाः ॥ प्राहसन्नभ्यसूयंश्चसर्ववृद्धान्गुणावराः ५१ युवानश्चसमासीनावृद्धानपिगता
न्सतः ॥ नाभ्युत्थानाभिवादाभ्यांयथापूर्वमपूजयन् ५२ वर्तयन्त्येवपितरिपुत्राःप्रभवतेतथा ॥ अभृत्याभृत्यतांप्राप्यख्यापयंत्यनपत्रपाः ५३ तथाधर्मादपेते
नकर्मणागर्हितेनये ॥ महतःप्राप्नुवंत्यर्थांस्तेषांतत्राऽभवत्स्पृहा ५४ उच्चैश्चाभ्यवदन्रात्रौनीचैस्तत्राग्निरज्वलत् ॥ पुत्राःपितॄनत्यचरन्नार्यश्चात्यचरन्पतीन्
५५ मातरंपितरंवृद्धमाचार्यमतिथिंगुरुम् ॥ गुरुत्वान्नाभ्यनंदंतकुमारान्नाऽन्वपालयन् ५६ भिक्षांबलिमदत्वाचस्वयमन्नानिभुंजते ॥ अनिष्ट्वाऽसंविभज्या
थपितॄन्देवातिथीन्गुरून् ५७ नशौचमनुरुद्धयंततेषांसूदजनास्तथा ॥ मनसाकर्मणावाचाभक्ष्यमासीदनावृतम् ५८ विप्रकीर्णानिधान्यानिकाकमूषिक
भोजनम् ॥ अपावृतंपयोऽतिष्ठदुच्छिष्टाश्चास्पृशन्घृतम् ५९ कुदालंदात्रपिटकंप्रकीर्णंकांस्यभाजनम् ॥ द्रव्योपकरणंसर्वंनान्ववेक्षत्कुटुंबिनी ६० प्राकारा
गारविध्वंसान्नस्मतेप्रतिकुर्वते ॥ नाद्रियंतेपशून्बद्धायवसेनोदकेनच ६१ बालानांप्रेक्षमाणानांस्वयंभक्ष्यमभक्षयन् ॥ तथाभृत्यजनंसर्वमसंतर्प्यचदानवाः ६२
पायसंकृसरंमांसमपूपानथशष्कुलीः ॥ अपाचयन्नात्मनोऽर्थेवृथामांसान्यभक्षयन् ६३ उत्सूर्यशायिनश्चासन्सर्वेचासन्प्रगेनिशाः ॥ अवर्तन्कलहाश्चात्रदिवा
रात्रंगृहेगृहे ६४ अनार्याश्चार्यमासीनंपर्युपासन्नतत्रह ॥ आश्रमस्थान्विधर्मस्थाःप्राद्विषंतपरस्परम् ६५ संकराश्चाभ्यवर्ततनचशौचमवर्तत ॥ येचवेदवि
दोविप्राविस्पष्टमनृचश्चये ६६ निरंतरविशेषास्तेबहुमानावमानयोः ॥ हारमाभरणंवेषंगतंस्थितमवेक्षितम् ६७ असेवंत भुजिष्यावैदुर्जनाचरितंविधिम् ॥
स्त्रियःपुरुषवेषेणपुंसःस्त्रीवेषधारिणः ६८ क्रीडारतिविहारेषुपरांमुदमवाप्नुवन् ॥ प्रभवद्भिःपुरादायानर्हेभ्यःप्रतिपादितान् ६९ नाऽभ्यवर्ततनास्तिक्याद्वर्तंतः
संभवेष्वपि ॥ मित्रेणाऽभ्यर्थितंमित्रमर्थेसंशयितेक्वचित् ७० वालकोट्यग्रमात्रेणस्वार्थेनाघ्नततद्वसु ॥ परस्वादानरुचयोविपणव्यवहारिणः ७१ अदृश्यंताऽऽ
र्यवर्णेषुशूद्राश्चापितपोधनाः ॥ अधीयंतेऽव्रताःकेचिद्वृथाव्रतमथाऽपरे ७२ अशुश्रूषुर्गुरोःशिष्यःकश्चिच्छिष्यसखोगुरुः ॥ पिताचैवजनित्रीचश्रांतौवृत्तोत्स
वाविव ॥ अप्रभुत्वेस्थितौवृद्धावन्नंप्रार्थयतःसुतान् ७३ तत्रवेदविदःप्राज्ञागांभीर्येसागरोपमाः ७४ कृष्यादिष्वभवन्सक्तामूर्खाःश्राद्धान्यभुंजत ॥ प्रातः ॥१०४॥
प्रातश्चसुप्रश्नंकल्पनंप्रेषणक्रियाः ७५

७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६

शिष्यानप्रहितास्तेषामकुर्वन्गुरवःस्वयम् ॥ श्वश्रूश्वशुरयोरग्रेवधूःप्रेष्यानशासत ७६ अन्वशासच्चभर्तारंसमाह्वायाऽभिजल्पति ॥ प्रयत्नेनापिचारक्षच्चित्तंपुत्र
स्यैवपिता ७७ व्यभजच्चापिसंरंभाद्दुःखवासंतथाऽवसत् ॥ अग्निदाहेनचोरैर्वाराजभिर्वाहृतंधनम् ७८ दृष्ट्वाद्वेषात्प्राहसंतसुहृत्संभाविताह्यपि ॥ कृतघ्नाना
स्तिकाःपापागुरुदाराभिमर्शिनः ७९ अभक्ष्यभक्षणरतानिर्मर्यादाहतत्विषः ॥ तेष्वेवमादिनाचारानाचरत्सुविपर्यये ८० नाहंदेवेंद्रवत्स्यामिदानवेष्वितिमे
मतिः ॥ तन्मांस्वयमनुप्राप्तामभिनंदशचीपते ८१ त्वयाऽर्चितांमांदेवेशपुरोधास्यंतिदेवताः ॥ यत्राहंतत्रमत्कांतामद्विशिष्टामदर्पणाः ८२ सप्तदेव्योजयाष्ट
म्योवासमेष्यंतितेऽष्टधा ॥ आशाश्रद्धाधृतिःक्षांतिर्विजितिःसन्नतिःक्षमा ८३ अष्टमीवृत्तिरेतासांपुरोगापाकशासन ॥ ताश्चाहंचासुरांस्त्यक्त्वायुष्मद्विषयमा
गताः ८४ त्रिदशेषुनिवत्स्यामोधर्मनिष्ठांतरात्मसु ॥ इत्युक्तवचनांदेवींप्रीत्यर्थंचननंदतुः ८५ नारदश्चात्रदेवर्षिर्वृत्रहंताचवासवः ॥ ततोऽनलसखोवायुःप्रववौ
देववर्त्मसु ८६ इष्टगंधःसुखस्पर्शःसर्वेंद्रियसुखावहः ॥ शुचौचाभ्यर्थितेदेशेत्रिदशाःप्रायशःस्थिताः ८७ लक्ष्मीसहितमासीनंमघवंतंदिदृक्षवः ८८ ततोदिवं
प्राप्यसहस्रलोचनःश्रियोपपन्नःसुहृदामहर्षिणा ॥ रथेनहर्यश्वयुजासुरर्षभःसदःसुराणामभिसत्कृतोययौ ८९ अथेंगितंवज्रधरस्यनारदःश्रियश्चदेव्यामनसाविचा
रयन् ॥ श्रियैशशंसामरदृष्टपौरुषःशिवेनतत्रागमनंमहर्षिभिः ९० ततोऽमृतंद्यौःप्रववर्षभास्वतीपितामहस्यायतनेस्वयंभुवः ॥ अनाहतादुंदुभयोऽथनेदिरेतथा
प्रसन्नाश्चदिशश्चकाशिरे ९१ यथर्तुसस्येषुववर्षवासवोनधर्ममार्गाद्विचचालकश्चन ॥ अनेकरत्नाकरभूषणाचभूःसुघोषघोषाभुवनौकसांजये ९२ क्रियाभिरामाम
नुजामनस्विनोबभुःशुभेपुण्यकृतांपथिस्थिताः ॥ नरामराःकिन्नरयक्षराक्षसाःसमृद्धिमंतःसुमनस्विनोऽभवन् ९३ नजात्वकालेकुसुमंकुतःफलंपपातवृक्षात्पवने
रितादपि ॥ रसप्रदाःकामदुघाश्चधेनवोनदारुणावाग्विचचारकस्यचित् ९४ इमांसपर्यांसहसर्वकामदैःश्रियाश्चशक्रप्रमुखैश्चदैवतैः ॥ पठंतियेविप्रसदःसमागताः
समृद्धकामाःश्रियमाप्नुवंतिते ९५ त्वयाकुरूणांवरयत्प्रचोदितंभवाभवस्येहपरंनिदर्शनम् ॥ तदद्यसर्वंपरिकीर्तितंमयापरीक्ष्यतत्त्वंपरिगंतुमर्हसि ९६ ॥ इति
श्रीम० शांति० मोक्ष० श्रीवासवसंवादोनामअष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥ युधिष्ठिरउवाच ॥ किंशीलःकिंसमाचारःकिंविद्यःकिंपराक्रमः ॥
प्राप्नोतिब्रह्मणःस्थानंयत्परंप्रकृतेर्ध्रुवम् १ ॥ भीष्मउवाच ॥ मोक्षधर्मेषुनियतोलघ्वाऽऽहारोजितेंद्रियः ॥ प्राप्नोतिब्रह्मणःस्थानंतत्परंप्रकृतेर्ध्रुवम् २ अत्राप्युदा
हरंतीममितिहासंपुरातनम् ॥ जैगीषव्यस्यसंवादमसितस्यचभारत ३ जैगीषव्यंमहाप्राज्ञंधर्माणामागतागमम् ॥ अक्रुध्यंतमहृष्यंतमसितोदेवलोऽब्रवीत् ४

इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टाविंशत्यधिकद्विशततमो ध्यायः ॥ २२८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ किंशीलइति १ । २ । ३ । ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ ॥ ॥ इति शांतिपर्वणि नीलकंठीये भारतभावदीपे



देवलउवाच ॥ ॥ नप्रीयसेवंद्यमानोनिंद्यमानोनकुप्यसे ॥ कातेप्रज्ञाकुतश्चैषाकिंतेतस्याःपरायणम् ५ ॥ भीष्मउवाच ॥ इतितेनानुयुक्तःसतमुवाचमहा
तपाः ॥ महद्वाक्यमसंदिग्धंपुष्कलार्थपदंशुचि ६ ॥ ॥ जैगीषव्यउवाच ॥ ॥ यागतिर्यापराकाष्ठायाशांतिःपुण्यकर्मणाम् ॥ तांतेऽहंसंप्रवक्ष्यामिमहती
मृषिसत्तम ७ निंदत्सुचसमानित्यंप्रशंसत्सुचदेवल ॥ निह्नुवंतिचयेतेषांसमयंसुकृतंचयत् ८ उक्ताश्चनवदिष्यंतिवक्तारमहितेहितम् ॥ प्रतिहंतुंनचेच्छंतिहंतारं
वैमनीषिणः ९ नाप्राप्तमनुशोचंतिप्राप्तकालानिकुर्वते ॥ नचातीतानिशोचंतिनचैवप्रतिजानते १० संप्राप्तायांचपूजायांकामादर्थेषुदेवल ॥ यथोपपत्तिंकुर्वंति
शक्तिमंतःकृतव्रताः ११ पक्वविद्यामहाप्राज्ञाजितक्रोधाजितेंद्रियाः ॥ मनसाकर्मणावाचानापराध्यंतिकर्हिचित् १२ अनीर्षवोनचाऽन्योन्यंविहिंसंतिकदाचन ॥
नचजातूपतप्यंतेधीराःपरसमृद्धिभिः १३ निंदाप्रशंसेचात्यर्थंनवदंतिपरस्यये ॥ नचनिंदाप्रशंसाभ्यांविक्रियंतेकदाचन १४ सर्वतश्चप्रशांतायेसर्वभूतहितेरताः ॥
नक्रुद्ध्यंतिनहृष्यंतिनापराध्यंतिकर्हिचित् १५ विमुच्यहृदयग्रंथिंचंक्रमंतियथासुखम् ॥ नयेषांबांधवाःसंतियेचाऽन्येषांनबांधवाः १६ अमित्राश्चनसंत्येषांये
चाऽमित्रानकस्यचित् ॥ यएवंकुर्वतेमर्त्याःसुखंजीवंतिसर्वदा १७ येधर्मंचानुरुद्ध्यंतेधर्मज्ञाद्विजसत्तम ॥ येह्यतोविच्युतामार्गात्तेहृष्यंत्युद्विजंतिच १८ आस्थि
तस्तमहंमार्गमसूयिष्यामिकंकथम् ॥ निंद्यमानःप्रशस्तोवाहृष्येऽहंकेनहेतुना १९ यद्यदिच्छंतितत्तस्मादपिगच्छंतुमानवाः ॥ नमेनिंदाप्रशंसाभ्यांह्रास
वृद्धीभविष्यतः २० अमृतस्येवसंतृप्येदवमानस्यतत्त्ववित् ॥ विषस्येवोद्विजेन्नित्यंसंमानस्यविचक्षणः २१ अवज्ञातःसुखंशेतेइहचामुत्रचाभयम् ॥ विमु
क्तःसर्वदोषेभ्योयोऽवमंतासबुध्यते २२ परांगतिंचयेकेचित्प्रार्थयंतिमनीषिणः ॥ एतद्व्रतंसमाहृत्यसुखमेधंतितेजनाः २३ सर्वतश्चसमाहृत्यक्रतून्सर्वान्जितें
द्रियः ॥ प्राप्नोतिब्रह्मणःस्थानंयत्परंप्रकृतेर्ध्रुवम् २४ नास्यदेवानगंधर्वानपिशाचानराक्षसाः ॥ पदमन्ववरोहंतिप्राप्तस्यपरमांगतिम् २५ ॥ इतिश्रीमहाभारते
शांतिपर्वणि मोक्षधर्मप॰ जैगीषव्यासितसंवादे ऊनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥ युधिष्ठिरउवाच ॥ प्रियःसर्वस्यलोकस्यसर्वसत्वाभिनंदिता ॥
गुणैःसर्वैरुपेतश्चकोन्वस्तिभुविमानवः १ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामिपृच्छतोभरतर्षभ ॥ उग्रसेनस्यसंवादंनारदेकेशवस्यच २ ॥ उग्रसेनउवाच ॥
यस्यसंकल्पतेलोकोनारदस्यप्रकीर्तने ॥ मन्येसगुणसंपन्नोब्रूहितन्ममपृच्छतः ३ ॥ ॥ वासुदेवउवाच ॥ ॥ कुकुराधिपयान्मन्येशृणुतान्मेविवक्षतः ॥
नारदस्यगुणान्साधून्संक्षेपेणनराधिप ४ नचारित्रनिमित्तोऽस्याहंकारोदेहतापनः ॥ अभिन्नश्रुतचारित्रस्तस्मात्सर्वत्रपूजितः ५ ॥१०५॥

ऊनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ प्रियइति १ । २ । ३ । ४ । ५

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्रिंशा
धिकद्विशततमोऽध्यायः ॥ २३० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ एवंनामाख्यानमुखेनोक्तमधिकारिणःस्वरूपंश्रुत्वाऽऽत्मनितत्त्वज्ञानाधिकारंपश्यन्भृगुभरद्वाजसंवा
दादौपूर्वंसंक्षेपेणश्रुतमेवार्थंविस्तरेणश्रोतुमिच्छन्युधिष्ठिरउवाच आद्यंतमिति । आदिंसंसारहेतुं अंतंलयस्थानं भूतानांजीवानां अभिन्ननिमित्तोपादानत्वसूचनार्थःसमासः साक्षाद्योमयाज्ञा

अरतिःक्रोधचापल्येभयंनैतानिनारदे ॥ अदीर्घसूत्रःशूरश्चतस्मात्सर्वत्रपूजितः ६ उपास्योनारदोबाढंवाचिनास्यव्यतिक्रमः ॥ कामतोयदिवालोभात्तस्मा
त्सर्वत्रपूजितः ७ अध्यात्मविधितत्त्वज्ञःक्षांतःशक्तोजितेंद्रियः ॥ ऋजुश्चसत्यवादीचतस्मात्सर्वत्रपूजितः ८ तेजसायशसाबुद्ध्याज्ञानेनविनयेनच ॥ जन्मनात
पसावृद्धस्तस्मात्सर्वत्रपूजितः ९ सुशीलःसुखसंवेशःसुभोजःस्वादरःशुचिः ॥ सुवाक्यश्चाप्यनीर्ष्यश्चतस्मात्सर्वत्रपूजितः १० कल्याणंकुरुतेबाढंपापम
स्मिन्नविद्यते ॥ नप्रीयतेपरानर्थैस्तस्मात्सर्वत्रपूजितः ११ वेदश्रुतिभिराख्यानैरर्थानभिजिगीषति ॥ तितिक्षुरनवज्ञातस्तस्मात्सर्वत्रपूजितः १२ समत्वाच्च
प्रियोनास्तिनाप्रियश्चकथंचन ॥ मनोनुकूलवादीचतस्मात्सर्वत्रपूजितः १३ बहुश्रुतश्चित्रकथःपंडितोऽलालसोऽशठः ॥ अदीनोऽक्रोधनोऽलुब्धस्तस्मात्सर्वत्र
पूजितः १४ नार्थेधनेवाकामेवाभूतपूर्वोऽस्यविग्रहः ॥ दोषाश्चास्यसमुच्छिन्नास्तस्मात्सर्वत्रपूजितः १५ दृढभक्तिरनिंद्यात्माश्रुतवाननृशंसवान् ॥ वीतसंमो
हदोषश्चतस्मात्सर्वत्रपूजितः १६ असक्तःसर्वसंगेषुसक्तात्मेवचलक्ष्यते ॥ अदीर्घसंशयोवाग्मीतस्मात्सर्वत्रपूजितः १७ समाधिर्नास्यकामार्थेनात्मानंस्तौति
कर्हिचित् ॥ अनीर्षुर्मृदुसंवादस्तस्मात्सर्वत्रपूजितः १८ लोकस्यविविधंचित्तंप्रेक्षतेचाप्यकुत्सयन् ॥ संसर्गविद्याकुशलस्तस्मात्सर्वत्रपूजितः १९ नासूयत्याग
मंकंचित्स्वनयेनोपजीवति ॥ अवंध्यकालोवश्यात्मातस्मात्सर्वत्रपूजितः २० कृतश्रमःकृतप्रज्ञोनचतृप्तःसमाधितः ॥ नित्ययुक्तोऽप्रमत्तश्चतस्मात्सर्वत्रपूजितः
२१ नापत्रपश्चयुक्तश्चनियुक्तःश्रेयसेपरैः ॥ अभेत्तापरगुह्यानांतस्मात्सर्वत्रपूजितः २२ नहृष्यत्यर्थलाभेषुनालाभेतुव्यथत्यपि ॥ स्थिरबुद्धिरसक्तात्मातस्मात्सर्व
त्रपूजितः २३ तंसर्वगुणसंपन्नंदक्षंशुचिमनामयम् ॥ कालज्ञंचप्रियज्ञंचकःप्रियंनकरिष्यति २४ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणिवासुदेवोग्र
सेनसंवादे त्रिंशाधिकद्विशततमोऽध्यायः ॥ २३० ॥ युधिष्ठिरउवाच ॥ आद्यंतंसर्वभूतानांज्ञातुमिच्छामिकौरव ॥ ध्यानंकर्मचकालंचतथैवायुर्युगेयुगे १

नात् । तदात्मानंस्वयमकुरुतेतिन्यायेनश्रुत्याचब्रह्मणस्तथात्वप्रतिपादनात् । किंलक्षणंब्रह्मेतिध्यानकर्मणीतत्प्राप्तावंतरंगबहिरंगसाधने । कालं ' कलिःशयानोभवतिसंजिहानस्तुद्वापरः । उ
त्तिष्ठंस्त्रेताभवतिकृतंसंपद्यतेचरन्' इतिश्रुतिप्रसिद्धंचतुर्विधं जीवलोकतत्त्वंलोकस्यवास्तवंरूपंभूतानांवियदादीनामागतिमुद्गमस्थानंगतिंप्रवेशस्थानंपूर्णनाभिमिवतंतुजालस्यतदेतत्सर्वंज्ञातुमिच्छा
मि । श्रुत्यर्थस्तु शयानोऽविद्यावृतःपुमान्कलिरित्युच्यते । संजिहानोविषयेषुजातवैराग्यःसम्यग्विद्यांसम्यक्हातुमिच्छन्मुमुक्षुर्द्वापरइत्युच्यते । उत्तिष्ठन्शमाद्यनुष्ठानायसज्जीभवन्त्रेतेत्यु
च्यते । चरन्शमादिकमाचरन्कृतंकृतयुगंभवतिपुमानेवेत्यर्थः । धर्मेतारतम्यात्वायुस्तारतम्यंयुगेयुगेपुंसिपुंसिज्ञेयं सार्धः १

सर्गनिधनेभौतिकानांजरायुजादीनांचतुर्मुखादिरवांतरकारणमपिकिंब्रह्मैवततोऽन्यद्वेत्यभिप्रायः २ । ३ पौनरुक्त्यमाशंक्याह पूर्वंहीति ४ परमधर्मिष्ठायोगधर्मनिष्ठाबुद्धिर्मेजातेतिपूर्वेणा न्वयः । दिव्यसंस्थानसंस्थिताअलौकिकस्वरूपनिष्ठावती । भूयोधिकंविस्तरेणेत्यर्थः । तथाचसंक्षेपेणश्रुतस्यापिविस्तरार्थंपुनःप्रश्नइत्यपौनरुक्त्यम् ५ । ६ । ७ संदेहंसंदेहविषयंप्रश्न समूहं छिन्नधर्मार्थसंशयंव्यासम् ८ तत्त्वंपदार्थौपृच्छति भूतेति कर्तारमीश्वरमेवसंतं कालस्यपूर्वोदाहृतश्रुत्युक्तस्यशयानमजिहानोतिष्ठंश्चरद्भवतीजीवस्यज्ञानेनशयानत्वादिधर्मज्ञानेन । निष्ठाअंधंतमआदिरूपप्राप्तिःसंजाताऽस्यतंकालज्ञानेननिष्ठितं । ईशोप्यविद्ययाजीवतांगतःकेनधर्मेणकीदृशंभावमश्नुवइतिप्रश्नार्थः तत्त्वमस्यादिवाक्याध्येतृप्रसिद्धमेवजीवब्रह्माभेदम नुवदतिप्रष्टा । कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवतीत्याथर्वणेएकविज्ञानात्सर्वविज्ञानप्रसिद्धयनुवादवत् ब्राह्मणोब्रह्मबुभुत्सुर्धर्माधर्माभ्यांमुक्तिमिच्छन् ९ सर्वज्ञोब्रह्मज्ञः १० भूतग्रामकर्तुः

लोकतत्त्वंचकार्त्स्न्येनभूतानामागतिंगतिम् ॥ सर्गश्चनिधनंचैवकुतएतत्प्रवर्तते २ यदितेऽनुग्रहेबुद्धिरस्मास्विहसतांवर ॥ एतद्भवंतंपृच्छामि तद्भवान्प्रब्रवीतुमे ३ पूर्वंहिकथितंश्रुत्वाभृगुभाषितमुत्तमम् ॥ भरद्वाजस्यविप्रर्षेस्ततोमेबुद्धिरुत्तमा ४ जातापरमधर्मिष्ठादिव्यसंस्थानसंस्थिता ॥ ततोभूयस्तुपृच्छामितद्भवान्वक्तुमर्हति ५ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्येऽहमितिहासंपुरातनम् ॥ जगौयद्भगवान्व्यासःपुत्रायपरिपृच्छते ६ अधीत्यवेदानखिलान्सांगोपनिषदस्तथा ॥ अन्विच्छन्नैष्ठिकंकर्मधर्मनैपुणदर्शनात् ७ कृष्णद्वैपायनंव्यासंपुत्रोवैयासकिःशुकः ॥ पप्रच्छसंदेहमि मंछिन्नधर्मार्थसंशयम् ८ ॥ श्रीशुकउवाच ॥ भूतग्रामस्यकर्तारंकालज्ञानेननिष्ठितम् ॥ ब्राह्मणस्यचयत्कृत्यंतद्भवान्वक्तुमर्हति ९ ॥ भीष्मउवाच ॥ तस्मैप्रोवाचतत्सर्वंपितापुत्रायपृच्छते ॥ अतीतानागतेविद्वान्सर्वज्ञःसर्वधर्मवित् १० ॥ व्यासउवाच ॥ अनाद्यंतमजंदिव्यमजरंध्रुवमव्ययम् ॥ अप्रतर्क्यमविज्ञेयंब्रह्माग्रेसंप्रवर्तते ११

स्वरूपंतावदाह अनाद्यंतमिति दिव्यंद्योतमानंचिन्मात्रं ब्रह्मत्रिविधपरिच्छेदशून्यंवस्तु अग्रेसृष्टेःप्राक्संप्रवर्तते मायाशबलाज्जगदाद्यंतरूपाद्व्यवच्छिनत्तिअनाद्यंतमितिअजमजरमव्ययमिति यास्कोक्तान्जायतेऽस्तिवर्धतेविपरिणमतेऽपक्षीयतेनश्यति वेतिषड्भावविकारांश्चितोनिषेधति अतएवध्रुवमविकारि अप्रतर्क्यंकारणंलिंगकार्येणानुमीयते नचैतत्तथा अतएवाविज्ञेयंवृत्तेरप्यविषयः । कथंतर्हिदृश्यतेत्वग्र्ययाबुद्ध्येतिश्रुतिर्ब्रह्मगोबुद्धिगम्यत्वमाह उच्यते स्वमुखस्यस्वदृश्यत्वंयथादर्पणद्वारानस्वतः एवंब्रह्मणोऽपिधीप्रतिबिंबितस्यधियोदृश्यत्वेनैवदृश्यत्वंनस्वतइतिगृहाण । का रणत्वादिकंतुब्रह्मण्याविद्यकमविद्यादशायांस्थित्वैवकल्प्यतइत्यर्थः । एतच्चाक्षिप्यसमाहितंवार्तिके 'नन्वविद्याववित्तेचेद्ब्रह्मदोषोमहानयम् । निरविद्येचविद्यायाआनर्थक्यंप्रसज्यते' न 'अस्याविद्येत्यविद्यायामेवासित्वाप्रकल्पते । ब्रह्मद्वारात्वविद्येयंनकथंचनयुज्यते'इति श्रुतिश्च । 'नासदासीनोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत्'इति सृष्टेःप्राग्वस्तुद्वत्तमनुरुध्या ऽसत्सद्रजःशब्दितानामानुमानिकानांशून्यप्रधानपरमाणूनामिवश्रौतस्यपरव्योमशब्दितस्यजगत्कारणस्याप्यसत्त्वमाह । तस्माद्युक्तमेवब्रह्मण्यनाद्यंतत्वादिविशेषणम् ११ ॥१०६॥

कालज्ञानेननिष्ठितमितिद्वितीयप्रश्नोत्तरमाह काष्ठेति अत्रतस्माद्व्यक्तात्मकर्मनइत्युपसंहारात् । कलाकाष्ठादिव्यंजकैर्पद्मार्कसूर्यादिपदार्थजातंतत्सर्वंमनोमात्रमित्यवगतेः । कृतत्रेतादि रूपमपितद्देवसत्वादिगुणतारतम्यात् । तथामानुषपैतृकदैवब्राह्माणामहोरात्राणामुत्तरोत्तरंप्रमाणाधिक्यमपिसत्त्वोत्कर्षादेवतदप्यस्मदृष्ट्यपेक्षमेव । तत्रत्यानांतुतदस्मदीयघटीमात्रमेव । एवदेवेरेतस्यधैर्याधिनाश्वतकेनब्रह्मलोकस्थेनमुहूर्तमात्रत्वेनानुभूतःकालोलौकिकानामनेकसंवत्सरसंमितोव्यतीतइत्युपाख्यानेनव्यक्तीकृतंपुराणेषु । तस्मात्स्वस्वदृष्ट्यासर्वोऽपिसुखीस्वल्पा युर्दुःखीचिरायुः साधारणदृष्ट्यातुपापिनामल्पमायुःकलिप्राधान्यात् इतरेषांद्वापरादिप्राधान्यादधिकमितिविवेकः । तस्मात्कालजयार्थंमनोनिग्रहेणात्मैवशरणीयइत्यध्यायतात्पर्यं । अक्षरार्थस्तु भागःभगःसूर्यस्तत्संबंधि कलायादशमोंशस्तेनसहितःत्रिंशत्कलोमुहूर्तः । सचसूर्यस्योदयादुदयांतरपर्यंतंयावान्कालस्तस्यषोडशोंऽशःपादोननाडीचतुष्टयात्मकः । तस्या

काष्ठानिमेषादशपंचचैवत्रिंशत्तुकाष्ठागणयेत्कलांताम् ॥ त्रिंशत्कलश्चापिभवेन्मुहूर्तोभागःकलायादशमश्चयःस्यात् १२ त्रिंशन्मुहूर्तंतुभवेदहश्चरात्रिश्चसंख्यामुनि भिःप्रणीता ॥ मासःस्मृतोरात्र्यहनीचत्रिंशत्संवत्सरोद्वादशमासउक्तः १३ संवत्सरंद्वेत्वयनेवदंतिसंख्याविदोदक्षिणमुत्तरंच १४ अहोरात्रेविभजतेसूर्योमानुषलौ किके ॥ रात्रिःस्वप्नायभूतानांचेष्टायैकर्मणामहः १५ पित्र्येरात्र्यहनीमासःप्रविभागस्तयोःपुनः ॥ शुक्लोहःकर्मचेष्टायांकृष्णःस्वप्नायशर्वरी १६ दैवेरात्र्यहनीव र्षंप्रविभागस्तयोःपुनः ॥ अहस्तत्रोदगयनंरात्रिःस्याद्दक्षिणायनम् १७ येतेरात्र्यहनीपूर्वेकीर्तितेजीवलौकिके ॥ तयोःसंख्यायवर्षाग्रंब्राह्मेवक्ष्याम्यहःक्षपे १८ पृथक्संवत्सराग्राणिप्रवक्ष्याम्यनुपूर्वशः ॥ कृतेत्रेतायुगेचैवद्वापरेचकलौतथा १९ चत्वार्याहुःसहस्राणिवर्षाणांतत्कृतंयुगम् ॥ तस्यतावच्छतीसंध्यासंध्यांशश्चत थाविधः २० इतरेषुससंध्येषुसंध्यांशेषुततस्त्रिषु ॥ एकपादेनहीयंतेसहस्राणिशतानिच २१ एतानिशाश्वतान्लोकान्धारयंतिसनातनान् ॥ एतद्ब्रह्मविदांतातवि दितंब्रह्मशाश्वतम् २२ चतुष्पात्सकलोधर्मःसत्यंचैवकृतेयुगे ॥ नाधर्मेणागमःकश्चित्परस्तस्यप्रवर्तते २३ इतरेष्वागमाद्धर्मःपादशस्त्ववरोप्यते ॥ चौर्यकानृतमायाभिरधर्मश्चोपचीयते २४ अरोगाःसर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ॥ कृतेत्रेतायुगेत्वेषांपादशोह्रसतेवयः २५ वेदवादाश्चानुयुगंह्रसंतीती हनःश्रुतम् ॥ आयूंषिचाशिषश्चैववेदस्यैवचयत्फलम् २६

पिदशमांशःसार्धद्वाविंशतिपलात्मकः । एतेन'अष्टादशनिमेषास्तुकाष्ठात्रिंशत्तुताःकलाः । त्रिंशत्कलोमुहूर्तस्तुत्रिंशद्रात्र्यहनीतुते'इत्यादिलोकप्रसिद्धक्रमःप्रतिमुहूर्तंसाधपलाधिक्यात्स्थू लइतिज्ञेयम् । 'कलातुषोडशोभागः'इत्यमरः अन्येत्वष्टकाष्ठात्रयाधिकात्रिंशत्कलामुहूर्तइतिव्याचख्युः १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ तावच्छतीचतुःशती तथाविधश्च तुःशतात्मकःकालःसंध्यायुगयोरंतरं सध्यांशोयुगांतरयोरंतरम् २० । २१ एतत्कालाख्यंचतुर्युगात्मकंजीवस्वरूपंशाश्वतमाद्यंतशून्यंमनोरूपोपाधियोगाच्चतुर्विधमपिस्वरूपतःसर्वविकाररही तंब्रह्मैवास्तीत्यर्थः २२ कृतयुगे युज्यतेवासनावरणयावध्यतेऽस्मिन्पुरुषपशुरितियुगंस्वधर्मस्तस्मिन्कृतेसाकल्येननिष्पादिते तस्यकृतयुगात्मनःपुरुषस्य अधर्मेणइयेनाद्यभिचारकर्मणा आगम उपदेशवाक्यं सचपरइतिविशेषणाद्वेदएव २३ चौर्यंचकानृतंचकुत्सितमनृतंवेदविरुद्धहिंसादिकर्म तेनवैदिकंकर्माप्यंधेर्वैषयोग्यत्वाद्नृतमेवेतिदर्शितं मायाशाठ्यादिरूपा उपचीयतेवर्धते २४

१७ ततःपरंपरविद्या ज्ञानमपराविद्या तेषअथपरायथातदक्षरमधिगम्यतेयत्तदद्रेश्यमग्राह्यमित्यादिनातत्रापराऋग्वेदोयजुर्वेदइत्यादिनाथर्वणेप्रसिद्धे १८ एतामिति अत्रकृतादियुगचतुष्टयेक्रमेणधर्मस्यदशपादाअधर्मस्यपट् । एतेषामपियुगकालाल्पत्वबहुत्वाभ्यांफलतश्चतुर्युगपादमात्रमधर्मः पादत्रयंधर्मः सेयंसहस्रगुणितान्राह्मंदिनंतावत्येवब्राह्मीरात्रिश्चेतिविवदताऽथ यत्रान्यत्पश्यतितदल्पंतन्मर्त्यमितिश्रुतेर्ब्राह्मंपदमपिदिवाद्वैतदुःखेनरात्रावज्ञानशेषेणचानुविद्धत्वात्क्षयिष्णुत्वाच्चक्षुद्रमेवेतिदर्शितम् १९ तदादौदिनादौध्यानमाविश्ययोगनिद्रयासुप्त्वान्तेविप्रियाणांजाड्येन ३० । ३१ इममेवसृष्टिप्रलयप्रकारमस्मदादिष्वप्यतिदिशति प्रतिबुद्धइति अक्षय्यंक्षेतुमशक्यंस्वतोनिर्विकारस्वरूपमपिब्रह्माजीवःक्षपाक्षयेनिद्रानाशेसतिप्रतिबुद्धःसन्विकुरुतेमायया विकारयुक्तंकरोति चकारोहेत्वर्थः तस्मान्महद्भूतमहंकारंसृजते तस्मादहंकाराद्व्यक्तात्मकंवियदाद्यात्मकंमनश्चसृजते मनोमात्रमेवकालाकाशादिकंसुप्तिप्रबोधयोरेवचसृष्टिप्रलयावित्यर्थः तथाचश्रुतिः । 'सयदास्वपितितदेनंवाक्सर्वैर्नामभिःसहाप्येतीतिचक्षुःसर्वैरूपैःसहाप्येति'इत्यादिनासुप्तौप्रत्यगात्मनिनामरूपप्रपंचप्रलयमुक्त्वा'अथयदाप्रबुद्ध्यतेएतस्मादात्मनः



अन्येकृतयुगेधर्मास्त्रेतायांद्वापरेऽपरे ॥ अन्येकलियुगेनॄणांयुगह्रासानुरूपतः २७ तपःपरंकृतयुगेत्रेतायांज्ञानमुत्तमम् ॥ द्वापरेयज्ञमेवाहुर्दानमेकंकलौयुगे २८ एतांद्वादशसाहस्रींयुगाख्यांकवयोविदुः ॥ सहस्रपरिवर्तंतद्ब्राह्मंदिवसमुच्यते २९ रात्रिमेतावतींचैवतदादौविश्वमीश्वरः ॥ प्रलयेध्यानमाविश्यसुप्त्वासोऽन्तेविबुद्ध्यते ३० सहस्रयुगपर्यंतमहर्यद्ब्रह्मणोविदुः ॥ रात्रिंयुगसहस्रांतांतेऽहोरात्रविदोजनाः ३१ प्रतिबुद्धोविकुरुतेब्रह्माक्षय्यंक्षपाक्षये ॥ सृजतेचमहद्भूतंतस्माद्व्यक्तात्मकंमनः ३२ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने एकत्रिंदशाधिकद्विशततमोऽध्यायः ॥ २३१ ॥ ७ ॥ व्यासउवाच ॥ ब्रह्मतेजोमयंशुक्रंयस्यसर्वमिदंजगत् ॥ एकस्यभूतंभूतस्यद्वयंस्थावरजंगमम् १ अहर्मुखेविबुद्धःसन्सृजतेऽविद्ययाजगत् ॥ अग्रएवमहद्भूतमाशुव्यक्तात्मकंमनः २

सर्वेप्राणायथाऽऽयतनंविप्रतिष्ठंतेप्राणेभ्योदेवादेवेभ्योलोकाः' इतिप्रबोधेचततएवप्राणदेवलोकशब्दितानामाध्यात्मिकादैविकाधिलौकिकप्रपंचानामुत्पत्तिंदर्शयति ३२ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥ ॥ ७ ॥ ॥ ननुप्राक्सिद्धमज्ञातसत्ताकंजगत्समनस्केंद्रियसन्निकर्षाद्दृश्यतेअस्तनएवायंघटइतिप्रत्यभिज्ञायतेचतत्कथंमनोमात्रमित्याशंक्याह ब्रह्मेति । 'मनोमहान्मतिर्ब्रह्मापूर्बुद्धिःख्यातिरीश्वरः ॥ प्रज्ञासंविच्चितिश्चैवस्मृतिश्चपरिपठ्यते ॥ पर्यायवाचकाःशब्दामनसः परिकीर्तिताः'इतिस्मृतेर्ब्रह्मनहत्तत्त्वंसूक्ष्मबुद्धिः तच्चतेजोमयंसूक्ष्मवासनामयं सप्ततास्तेजोमात्राःसमभ्याददानइत्यादौवासनासुतेजःशब्दप्रयोगात् तदेवशुक्रंबीजंविद्धीतिशेषः । यस्यबीजस्यएकस्यद्रूपांतरवर्जितस्यभूतस्यजनिमतः पंचम्यर्थेषष्ठी यस्मादिदंजगद्भूतमुद्भूतं स्थावरंस्यास्तुनित्यंचेतनंजंगमंविनाइयनित्यमचेतनंस्वप्नेइववासनामयंजगन्मनस्येवस्थितंपूर्वपूर्वसंस्कारवशादिदमितिविज्ञायतेतदिदमितिप्रत्यभिज्ञायतेचेत्यर्थः १ अहरिति अविद्ययेतिमहत्तत्त्वस्यापिकारणमुक्तं । सृष्टिक्रममाहाग्रेइति अग्रेसर्वादौमहन्महत्तत्त्वंभूतमुद्भूतंतदेवाशुशीघ्रंव्यक्तात्मकंवियदादिरूपंसन्मनइत्युच्यते । आशुइतिसांख्याभिमतःसृष्टिक्रमोनिरस्तः युगपत्सृष्टिरेवविशाखतस्मितिविवृद्धिसृष्टिवादिनांचंद्राघोषः १



अभिभूयेतिसार्द्धश्लोकः मनःकर्तृअर्चिष्मत्प्रकाशकंचिदात्मानमभिभूयआवृत्यमानसान्सप्तव्यसृजत् अर्चिष्पामितिपाठेत्वीश्वरःमानसान्पूर्वसर्गाणेऽभिभूयोत्तरसर्गादौव्यसृजदितिज्ञेयं । मनःप्रथमंसिसृक्षयाबहुस्यांप्रजायेयेतिश्रुतिसिद्धयाप्रार्थनारूपयाऽन्येनमनसोरूपांतरेणेतिद्वितीयस्यार्थमुक्तं विकुरुतेविविधाकाराकुरुते आकाशादयःपंचेतिसप्तमानसाः ३ । ४ । ५ । ६ ७ गुणाइति आकाशादयःपंचक्रमेणैकद्वित्रिचतुःपंचगुणयुक्ताइत्यर्थः । तेषांभूतानांमध्येयद्भूतंयावत्कालपर्यंतयथायेनप्रकारेणवर्ततेतद्भूतं । एकस्तच्छब्दस्तावच्छब्दार्थः । तावत्कालपर्यंतंतावद्गुणंस्मृतं । अत्रपूर्वार्द्धोक्ताव्यवस्थासूक्ष्मभूतेष्वेवज्ञेया । स्थूलेषुतुपंचीकरणादूर्ध्वंसर्वाण्यपिपंचगुणानि । त्रिवृत्करणपक्षेचआकाशवायूक्रमेणैकद्विगुणकावितराणिपंचगुणान्येवेत्याशयः । तत्रपंचीकरणंत्वाकाशादीन्प्रत्येकंद्वेधाविभज्यैकस्मिन्भागेस्वेतरभूतचतुष्टयस्याऽर्धीकृतस्यचतुरश्चतुर्थांशान्प्रक्षिप्यैकैकंस्थूलभूतंभवति । तथात्रिवृत्करणं तेजोबन्नानिप्रत्येकंद्वेधाविभज्यैकस्मिन्नर्धेस्वेतरयोरर्धार्धंप्रक्षिपेदिति । एवंसंकीर्णेष्वप्याकाशादिसंज्ञाभ्यस्वभागाधिक्यादितिज्ञेयं ८ ननुपंचीकरणपक्षेकथमाकाशेगंधाद्यनुपलंभःकथंवात्रिवृत्करणपक्षेवायौगंधोपलंभइत्याशंक्याद्येस्थूलाकाशस्याप्रत्यक्षत्वेनतदंतर्गतगंधादीनामप्यप्रत्यक्षत्वमित्यभिसंधायद्वितीयंप्रत्याह उपलभ्येति अप्स्वितिदृष्टांतार्थं यथाऽप्सुएलालवंगादिगंधउपलभ्यतेएवंवा

अभिभूयेहचार्चिष्मद्व्यसृजत्सप्तमानसान् ॥ दूरगंबहुधागामिप्रार्थनासंशयात्मकम् ३ मनःसृष्टिंविकुरुतेचोद्यमानंसिसृक्षया ॥ आकाशंजायतेतस्मात्तस्यशब्दंगुणंविदुः ४ आकाशात्तुविकुर्वाणात्सर्वगंधवहःशुचिः ॥ बलवान्जायतेवायुस्तस्यस्पर्शोगुणोमतः ५ वायोरपिविकुर्वाणाज्ज्योतिर्भवतिभास्वरम् ॥ रोचिष्णुजायतेशुक्लंतद्रूपगुणमुच्यते ६ ज्योतिषोऽपिविकुर्वाणाद्भवंत्यापोरसात्मिकाः ॥ अद्भ्योगंधस्तथाभूमिःसर्वेषांसृष्टिरुच्यते ७ गुणाःसर्वस्यपूर्वस्यप्राप्नुवंत्युत्तरोत्तरम् ॥ तेषांयावद्यथायच्चतत्तत्तावद्गुणंस्मृतम् ८ उपलभ्याप्सुचेद्गंधंकेचिद्ब्रूयुरनैपुणात् ॥ पृथिव्यामेवतंविद्यादपांवायोश्चसंश्रितम् ९ एतेसप्तविधात्मानोनानावीर्याःपृथक्पृथक् ॥ नाशक्नुवन्प्रजाःस्रष्टुमसमागम्यकृत्स्नशः १० तेसमेत्यमहात्मानोह्यन्योन्यमभिसंश्रिताः ॥ शरीराश्रयणंप्राप्तास्ततःपुरुषउच्यते ११ शरीरंश्रयणाद्भवतिमूर्तिमत्षोडशात्मकम् ॥ तमाविशंतिभूतानिमहांतिसहकर्मणा १२ सर्वभूतान्युपादायतपसश्चरणायहि ॥ आदिकर्तासभूतानांतमेवाहुःप्रजापतिम् १३

याप्यागंतुकद्रव्यसंपर्कजएवगंधवानुभवोनत्वाजानसिद्धद्रव्यसंपर्कजइत्यर्थः । अनैपुणादितिमूर्खाणामेवायंपूर्वपक्षोनविदुषांकाणादादीनां तेहियुक्तिबलेनैववायौगंधाभावंमिथ्स्विन्वंतीतिदर्शितं ९ सप्तमनःसिसृक्षाशब्दितौमहदहंकारौसूक्ष्माकाशादयश्च असमागम्याऽमिलित्वा १० महात्मानोव्यापकाःसमेत्यत्रिदंडविष्टंभवदन्योन्यबलमाश्रित्यैकीभूयेत्यर्थः । पुरितिशरीरस्यनामतत्रवसतीतिपुरुषइत्यवयवार्थः ११ षोडशपंचस्थूलभूतानिसमनस्कान्येकादशेंद्रियाणिचतदात्मकंशरीरं षोडशानांसृष्टिस्तुव्यक्तात्मकंमनइतिमनःसृष्टयैवोक्तेतिनतेषांपृथक्सिद्धिस्ताकिंकाभिमतामंतव्या । नषोडशात्मकंपुरुषंतदितिपाठेस्थूलशरीरापेक्षयाक्लीबत्वं । भूतानिसूक्ष्माणिमहांतिमहत्त्वानिभुक्तावशिष्टकर्मसहितानीतिबहुत्वंप्रतिपुरुषंमहदादीनांभिन्नत्वप्रतिपादनार्थं तेनतत्तत्पुरुषीयासूक्ष्मबुद्धिरेवकर्माश्रयस्तदुपलक्षितोऽहंकारश्चेतिज्ञेयं १२ एवंस्थूलेशरीरेलिंगशरीरस्यप्रवेशमुक्त्वातत्रचैतन्यप्रवेशमाह सर्वेति आदिकर्तासर्वभूतानिस्वोपाधिमायैकदेशभूतानिउपादायतमाविशतीतिविपरिणामेनानुषज्यते । एतेनतत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेरर्थोदर्शितः । तपसोज्ञानमयस्यालोचनस्यचरणायतथाचश्रुतिःपरमेश्वरस्यतत्तदुपाध्यनुहरणंस्वस्वरूपज्ञानार्थमेवेत्याह । 'रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय'इति तमेवउपाधिंप्रविश्यपृथिभावमापन्नंप्रजापतिंब्रह्मेत्याहुःतत्त्वमसीत्यादयःश्रुतयः १३

तत्रहेतुमाह सर्वेइति सशरीरांतस्थो वैषव ततःशरीरप्रवेशानंतरं एतेन'तदनुप्रविश्यसच्चत्यच्चाभवदित्यादिसत्यंचानृतंचसत्यमभवत्'इत्येतस्याःश्रुतेरर्थोदर्शितः सत्पृथिव्यप्तेजांसित्यत्वा
य्वाकाशौ सत्यानृतेघटरज्जुरगादिसत्यंब्रह्मैवाभवदितिश्रुतिपदानामर्थःएवमैश्वरीभूतमयींजैवींचधीमयीमितिद्विविधांसृष्टिमभिप्रेत्योक्तमभियुक्तैः । 'अन्यामांसमयीयोषिदन्याकाचिन्मनोमयी'
इति 'घटोमृन्मयधीमयौ'इतिच । तथासृष्टिद्वयवत्प्रलयद्वयमपिविदुषोविदेहकैवल्यकालेश्रूयतेगताःकलाःपंचदशप्रतिष्ठाइति एवमेवास्यपरिद्रष्टुरिमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तं
यंतीतिचकलाःप्राणाच्छ्रद्धाखंवायुर्ज्योतिरापःपृथिवींद्रियमित्याद्याःतत्रेशीव्यावहारिकींदृष्टिसृष्टिमभिप्रेत्यप्रतिष्ठासुवाय्वादिषुतत्तदुपादानेषुप्राणादीनांप्रलयःपुरुषांतरमतीत्याउक्तः विद्वत्प्रती
त्यानुजैवींप्रातिभासिकींदृष्टिसृष्टिमभिप्रेत्यपुरुषएवकलाप्रलयउक्तःतस्माद्युक्तमुक्तंसृष्टिद्वयं १४ वयःपक्षीअव्ययंआकाशादिव्ययंघटादिअपक्षयधर्मि १५ देवानरकिन्नरादीनांप्राक्सृष्ट्यापि
श्याजैव्यावाय्याद्योहिंस्रस्याद्यापिहिंस्रत्वंवदृश्यते । एवंपूर्वकल्पेहिंस्रस्यपुनःकल्पांतरेऽपिहिंस्रत्वमेवानुवर्तते । 'सूर्याचंद्रमसौधातायथापूर्वमकल्पयतदिवंचपृथिवींचांतरिक्षमथोस्वः'इतिश्रु
तिरपिपूर्वकल्पसरूपामेवैश्वरीमपिसृष्टिमाहन्यायोऽपिसमाननामरूपत्वाद्वृत्तावप्यविरोधइति । प्रतिकल्पमिंद्रादीनांनामानिरूपाणिकर्माणिचसमानान्येवअतस्तद्वाचिनांवैदिकशब्दानांवी

सर्वैसृजतिभूतानिस्थावराणिचराणिच ॥ ततःससृजतिब्रह्मादेवर्षिपितृमानवान् १४ लोकान्नदीःसमुद्रांश्चदिशःशैलान्वनस्पतीन् ॥ नरकिन्नररक्षांसिवयःपशुमृ
गोरगान् ॥ अव्ययंचव्ययंचैवद्वयंस्थावरजंगमम् १५ तेषांयेयानिकर्माणिप्राक्सृष्ट्यांप्रतिपेदिरे ॥ तान्येवप्रतिपद्यंतेसृज्यमानाःपुनःपुनः १६ हिंस्राहिंस्रेमृदु
क्रूरेधर्माधर्मावृतानृते ॥ तद्भाविताःप्रपद्यंतेतस्मात्तत्तस्यरोचते १७ महाभूतेषुनानात्वमिंद्रियार्थेषुमूर्तिषु ॥ विनियोगंचभूतानांधातैवविदधात्युत १८ केचि
त्पुरुषकारंतुप्राहुःकर्मसुमानवाः ॥ दैवमित्यपरेविप्राःस्वभावंभूतचिंतकाः १९ पौरुषंकर्मदैवंचफलवृत्तिस्वभावतः ॥ त्रयएतेऽपृथग्भूतानविवेकंतुकेचन २०
एतमेवत्वनैवंचनचोभेनानुभेनच ॥ कर्मस्थाविषयंब्रूयुःसत्वस्थाःसमदर्शिनः २१

ह्यादिशब्दवज्जातिवाचित्वेनानाधुनिकत्वेनवेदस्यनित्यत्वंनविरुद्ध्यतेइतिसूत्रार्थः प्रतिकल्पंसृष्टिवैरूप्येतुकृतहानाकृताभ्यागमौप्रसज्येतामित्येवकारार्थः १६ । १७ महाभूतेष्वितिधाताजगदिं
द्रजालविस्तारयितानानात्वंशुक्तिरजतवत्प्रतिपुरुषंभिन्नत्वंमहाभूतेषुवियदादिषुइंद्रियार्थेषुरूपादिषुमूर्तिषुब्रह्माकृतिषुभूतानांजीवानांविनियोगंभोक्तृभोग्यभावेनसंबंधंसर्वंदृष्टांतार्थमिदंयथासुखा
द्यनुभवःप्रतिपुरुषंनानाएवमनुभवविषयोऽपिमहाभूतादिर्नानेत्यर्थः १८ धातैवेत्येवकारव्यावर्त्यान्परपक्षानुपन्यस्यतिकेचिदिति कर्मस्वेवपुरुषस्यसामर्थ्यमस्तीतिकर्मैवप्रधानमितिमीमांसकाः ।
दैवंआदित्याद्याग्रहाएवसदसत्फलदातारइतिदैवज्ञाः । स्वभावएवेतिस्वभाववादिनोबाह्याः १९ एतेषांसमुच्चयमतमाह पौरुषमिति अपृथग्भूताइतिच्छेदः दैवंकर्मचस्वभावानुगृहीतं
फलावर्ततेऽतस्त्रयएतेसमुदितानतुतेषांविवेकंपृथग्भावंएकैकस्यप्राधान्यंइच्छंतिकेचन २० आर्हतमतमाह एतमिति श्लोकपादत्रयेणएतंविषयंभूतादीनांनानात्वेकिंकारणमितिचिंताया
विषयमेवमिति विशिष्यनब्रूयुः नानिर्वक्तुंशक्यमित्यर्थः । एवंनचेत्यपिनब्रूयुः अनिर्वाच्यत्वमपिनेत्यर्थः । नन्वेकैकइयेनकर्मदैवयोःकारणत्वंस्तुनचंद्रवैचंत्राऽस्तुसमुच्चितयोस्तुत्वच ||१०८||
मित्याशंक्याह उभेचनब्रूयुरिति अस्तुतर्हितयोरपिद्वैतमित्याशंक्याह अनुभेचनब्रूयुरिति उभयव्यतिरिक्तमपिकारणंनेत्यर्थः । कर्मस्थाइत्यार्हतानांयौगिकंनाम तेहिकर्माष्ट
कवशादेवजीवानांबंधस्तप्तशिलारोहणादिनानिर्जराख्येनधर्मेणैवमोक्षइतिवदंति । सिद्धांतमाह सत्वस्थाःसमदर्शिनइति अयमर्थः । श्रुतौकिंकारणंब्रह्मेत्युपक्रम्यकालः-

स्वभावोनियतिर्यदृच्छाभूतानियोनिःपुरुषइतिचिंत्यमितिकालइतिदैवज्ञानांस्वभावइतिपरिणामवादिसांख्यानांनियतिरितिकर्मवादिनांमीमांसकानांयदृच्छेत्यनियमवादिनामार्हतानांभूतानी
तिलोकायतानांपुरुषइतितदस्येश्वरवादिनांचजगत्कारणविषयेमतान्युपन्यस्य 'तेध्यानयोगानुगताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढाम्'इत्यनुभवबलेनसिद्धांतःकृतः । देवःप्रकाशमानोयआ
त्माआत्मत्वस्तुतद्गतांशक्तिमेवकारणमाहुः । स्वगुणैःसत्वरजस्तमोभिर्युक्तामपिपरीक्षावशात्पानितरांगूढांतस्याःकार्यमात्मनोजगद्भानंप्रत्यक्षंसातुनप्रत्यक्षारज्जुरगहेत्वज्ञानवदितिश्रुत्यर्थस्त
देतदाह सत्वस्थाःरजस्तमोरहितेंतःकरणेसत्वेसंप्रज्ञातावस्थायांतिष्ठंतितेसत्वस्थायोगिनःसमंब्रह्मैवकारणत्वेनद्रष्टुंशीलंयेषांतेसमदर्शिनःब्रह्मैवकारणमितिपश्यंतीत्यर्थः २१ ब्रह्मप्राप्तेःसा
धनंफलंचाह सार्धद्वाभ्यां तपइति तपोयोगः निःश्रेयसंमोक्षहेतुः शमोमनोनिग्रहः दमोबाह्येंद्रियनिग्रहः तेनतपसा तथाचश्रुतिर्योगिनांसर्वकामावाप्तिंदर्शयति 'विशुद्धसत्वःकामयतेयां
श्चकामांस्तंतंलोकंजयतेतांश्चकामान्'इति जयतेप्राप्नोति कामान्विषयान् २२ तपसेति तपसाब्रह्मदर्शनंब्रह्मभावःसर्वेश्वरत्वंचयोगस्यैवफलमित्यर्थः २३ अध्येष्यंतप्राग्जन्मन्यधीतान्योग
बलेनैवस्मृतवंतः अनादीतिश्लोकस्यउत्तरार्धंआदौवेदमयीदिव्यायतःसर्वाःप्रवृत्तयइतिशेषं कश्चिदवदर्शनेऽपिशारीरकसूत्रभाष्यादीपुस्तकांतरेषुपदर्शनात्स्वयंभुवा 'योब्रह्माणंविदधातिपूर्वं

ततोनिःश्रेयसंजंतोस्तस्यमूलंशमोदमः ॥ तेनसर्वानवाप्नोतियान्कामान्मनसेच्छति ॥ २२ तपसातदवाप्नोतियद्भूतंसृजते
जगत् ॥ सतद्भूतश्चसर्वेषांभूतानांभवतिप्रभुः २३ ऋषयस्तपसावेदानध्यैषंतदिवानिशम् ॥ अनादिनिधनाविद्यावागुत्सृष्टा
स्वयंभुवा २४ ऋषीणांनामधेयानियाश्चवेदेषुसृष्टयः ॥ नानारूपंचभूतानांकर्मणांचप्रवर्तनम् २५ वेदशब्देभ्यएवादौनिर्मि
मीतेसईश्वरः ॥ नामधेयानिचर्षीणांयाश्चवेदेषुसृष्टयः ॥ शर्वर्यंतेसुजातानामन्येभ्योविदधात्यजः २६ नामभेदतपः
कर्मयज्ञाख्यालोकसिद्धयः ॥ आत्मसिद्धिस्तुवेदेषुप्रोच्यतेदशभिःक्रमैः २७

योवैवेदांश्चप्रहिणोतितस्मै'इतिश्रुतेः परमेश्वराल्लब्धवेदेनउत्सृष्टाशिष्यप्रशिष्यसंप्रदायक्रमेणप्रवर्तिता २४ । २५ वेदशब्देभ्यएवेति लोकेहिदृष्टादृष्टद्वारकंशब्दानामर्थकारणत्वंक्लृप्तंयथा
विष्ण्वादिमूर्तिंसिसृक्षतःशिल्पिनस्तदाकृतिप्रतिपादकागमस्मरणंमूलं यथावा तक्षकदष्टंवर्दजीवयितुमिच्छतोविषघ्नमंत्रोच्चारणं इंद्रजालपुरंसिसृक्षतोवाशाबरमंत्रोच्चारणमेवमिहापिसभूरि
तिव्याहरन्सभूमिमसृजतेतिश्रुत्यादृष्टद्वारैवार्थोत्पत्तिप्रतिशब्दस्यहेतुत्वमुक्तं ।तथा'एतइतिवैप्रजापतिर्देवानसृजत असृग्रमितिमनुष्यान् इंदवइतिपितॄन् तिरःपवित्रमितिग्रहान् आशवइतिस्तो
त्रंविश्वानीतिशस्त्रं अभिसौभगायेत्यन्याःप्रजाः'इतिश्रुतेस्तत्तत्पदोच्चारणतएवदेवादिसृष्टिर्गम्यतेनपुनतदर्थस्मारकस्वरूपदृष्टद्वारेति सर्वथापिवेदशब्दादेवसृष्टिरित्यर्थः शर्वर्यंतेसर्गादावि
त्यर्थः २६ नामेति आत्मसिद्धिरात्मनोमुक्तिर्दशभिःक्रमैःसाधनैर्नामादिभिःसहितावेदेषुप्रोच्यते तत्रनामवाऋग्वेदइत्यादिश्रुतेर्नामेतिवेदाध्ययनं भेदःअथोवाएषआत्मनोयत्पत्नीतिश्रुतेः

पूर्वकृतस्त्रस्यसतोदारकरणेनार्धस्वसंपादनं गार्हस्थ्यमितियावत् । तपःकृच्छ्रचांद्रायणादिवानप्रस्थाश्रमइत्यर्थः कर्मसंध्योपासनादिसर्वाश्रमसाधारणं । यज्ञोज्योतिष्टोमादिः । आख्याकीर्तिक
रंतटाकारामाद्यापूर्ताख्यं । आलोकआलोचनंमानसोध्यानादिधर्मः । सचत्रिविधः यज्ञांगेष्वश्वादिषुउपावाअश्वस्यमेध्यस्यशिरइत्यादिशास्त्रविहिताविराडादिदृष्टिरेका । अध्यात्मंजाठरादिप्र
दीकेषुवैश्वानराख्यकारणब्रह्मदृष्टिरपराविधा दहराद्यहंग्रहोपास्त्याशुद्धस्वरूपावमतिस्तृतीया । ततश्चसिद्धिःकैवल्याख्याजीवतएवमुक्तिरितिदशभिःक्रमैःक्रम्यतेउल्लंघ्यतेसंसारदुःखमेभिरित्वैः २७

इतोऽप्यंतरंगंमोक्षसाधनमाह यदुक्तमिति गहनंदुरवगाहंब्रह्मवेदवादेषुवेदोक्तकर्मसुप्रस्तावावादिदेवताद्वेनोक्तं । तदंतेषुवेदवादांतेषूपनिषत्सुचयथायुक्तंविस्पष्टतरमुक्तंतद्ब्रह्मक्रमयोगेनपूर्वोक्तेन नामादिदशकेनलक्ष्यते । तत्त्वमस्यादिवाक्येभ्यस्तत्त्वंपदवाच्यार्थयोर्विशेषणांशभूतमायांतःकरणांशप्रहाण्यासोऽयंदेवदत्तइत्यत्रतदेतद्देशकालरूपविशेषणांशप्रहाण्याऽखंडदेवदत्तस्वरूप मिवप्रत्यगभिन्नंब्रह्मलक्ष्यतेनतुशब्देनशृंगग्राहिकयाअयंगौरयंमहिषइतिवदावेद्यते । यतोवाचोनिवर्ततइतिश्रुतेर्ब्रह्मणोऽपदार्थत्वादवाक्यार्थत्वाच्च २८ तत्रब्रह्मणोलक्ष्यंस्वरूपंदर्शयति कर्मजइति देहिनःदेहाभिमानिनोजीवस्यपृथग्भावःपृथक्त्वंद्वैतदर्शनमितियावत् तत्कर्मजंकर्मोपरमेसुषुप्तौसमाधौचनास्तीत्यर्थः द्वंद्वैःसुखदुःखशीतोष्णमानापमानादिभिर्युक्तं तंचपृथक्भावमा त्मसिद्धिरात्ममोक्षरूपःपुरुषः । एतेनमुक्तमोक्षयोरभेदवचनेनानागंतुकंस्वस्वरूपमात्रंमुक्तिरित्युक्तं । विज्ञानात्सम्यग्वाक्यजाज्ज्ञानात्जहातिज्ञातृज्ञानज्ञेयभावंरूपभेदंत्यजतीत्यर्थः २९ भेद स्यागोपायमाह द्वेइति शब्दब्रह्मप्रणवः निष्णातःप्रणवोपास्तिकुशलः परमात्रात्रयातीतंतुरीयम् ३०, प्रणवोपास्तिमेवेतरनिंदापूर्वकंस्तौति आलंभेति आलंभःपशुहिंसा हविर्व्रीह्या दिकं परिचारस्त्रैवर्णिकसेवा तपोब्रह्मोपासनम् ३१ विधिरप्रवृत्तप्रवर्तनं तच्चत्रेतायामेवनतुकृते स्वतएवतत्रतत्सिद्धेः । अत्रधर्ममनुतिष्ठन्पुरुषःकृतंधर्मानुष्ठानमारभमाणस्त्रेताआरब्धु

यदुक्तंवेदवादेषुगहनंवेददर्शिभिः ॥ तदंतेषुयथायुक्तंक्रमयोगेनलक्ष्यते २८ कर्मजोऽयंपृथग्भावोद्वंद्वयुक्तोऽपिदेहिनः ॥ तमात्मसिद्धिर्विज्ञानाज्जहातिपुरुषोबलात् २९ द्वेब्रह्मणीवेदितव्येशब्दब्रह्मपरंचयत् ॥ शब्दब्रह्मणिनिष्णातःपरंब्रह्माधिगच्छति ३० आलंभयज्ञाःक्षत्राश्चहविर्यज्ञाविशःस्मृताः ॥ परिचारयज्ञाःशूद्रास्तु तपोयज्ञाद्विजातयः ३१ त्रेतायुगेविधिस्त्वेषयज्ञानांनकृतेयुगे ॥ द्वापरेविप्लवंयांतियज्ञाःकलियुगेतथा ३२ अपृथग्धर्मिणोमर्त्याऋक्सामानियजूंषिच ॥ का म्याइष्टीःपृथग्दृष्ट्वातपोभिस्तपएवच ३३ त्रेतायांतुसमस्तायेप्रादुरासन्महाबलाः ॥ संयंतारःस्थावराणांजंगमानांचसर्वशः ३४ त्रेतायांसंहतावेदायज्ञावर्णा श्रमास्तथा ॥ संरोधादायुषस्त्वेतेभ्रश्यंतेद्वापरेयुगे ३५ दृश्यंतेनचदृश्यंतेवेदाःकलियुगेऽखिलाः ॥ उत्सीदंतेसयज्ञाश्चकेवलाऽधर्मपीडिताः ३६ कृतेयुगेयस्तु धर्मोब्राह्मणेषुप्रदृश्यते ॥ आत्मवत्सुतपोवत्सुश्रुतवत्सुप्रतिष्ठितः ३७ सधर्मव्रतसंयोगंयथाधर्मंयुगेयुगे ॥ विक्रियंतेस्वधर्मस्थावेदवादायथागमम् ३८

मिच्छन्नद्वापरस्तद्विमुखःकलिरितिपूर्वोदाहृतश्रुत्यर्थोनविस्मर्तव्यः ३२ त्रेतायुगेइत्येतंश्लोकंव्याचष्टेऽपृथगित्यादिना पृथग्धर्मःपृथक्त्वंभेदस्तद्वंतःपृथग्धर्मिणोद्वैतिनस्तदन्येऽपृथग्धर्मि णोऽद्वैतनिष्ठामर्त्यास्तएवत्रेतायांमेवकृतयुगेऽनुतिष्ठंतीतिविशेषः । ऋगादीनिकाम्याइष्टीश्चसौत्रचलंनिर्वपेद्ब्रह्मवर्चसकामइत्तिशाखोक्ताःपृथक्तपोभिरालोचनैर्दृष्ट्वातत्फलमनात्मभूतस्वर्गादिरूपं दृष्ट्वातत्परित्यज्ययोगपराएवबभूवुरित्यर्थः ३३ त्रेतायांधर्मेनृणांस्वतःप्रवृत्त्यभावात्तत्रसंयंतारोधर्मशास्तारोवेदाश्चसंहतायज्ञाद्यनुष्ठापनायसन्नद्धाआसन्निति सार्धश्लोकार्थः ३४ सं रोधादितिसार्धंस्पष्टार्थः ३५ । ३६ कृतादिशब्दानांकालत्वाविस्वंसिद्धत्वात् कृतेइति कृतयुगेयश्चतुष्पाद्धर्मउक्तःसइदानीमपिब्राह्मणेषुदृश्यतेऽतस्तेएवकृतयुगरूपाइतिभा वः । आत्मवत्सुजितचित्तेषु तपोवत्सुयोगनिष्ठेषु श्रुतवत्सुवेदांतश्रवणादिमत्सु ३७ त्रेतायुगव्यवहारमाह सधर्मेति यथाधर्ममाचाराद्यनतिक्रम्यस्वधर्मस्थाअग्निहोत्रादिपराः येवेदान्वदंतितेवेदवादाःवैदिकाः । यथागमंवेदोक्तप्रमाणेन धर्मोयज्ञादिस्तत्सहितंव्रतमेकादश्युपवासादिसंयोगस्तीर्थक्षेत्रप्राप्त्यादितत्सर्वंतेविक्रियतेकामपूर्वकंक्रियते । वैदिका अपिस्वर्गकामाएवयष्यंतेद्वापरेपुत्रादिकामाएवकलौशत्रुमरणादिकामाएवेतियुगेयुगेइत्यस्यार्थः ३८



विशंतीतिस्थानिस्थावराणि जंगमानिचस्थानिचजंगमस्थानि भूयांसिवृद्धिमंतराणि तथायुगेयुगेधर्मोऽधर्मश्चवर्धतेह्रसंतिच ३९ ऋतुलिंगानिशीतोष्णादीनितथाब्रह्महरादिष्वपिसृष्टिसंहार सामर्थ्यानिवर्धंतेह्रसंतिचेत्यर्थः ४० कालनामात्वंचतुर्युगात्मकल्पपुरुषस्यनानात्वंधर्मादिवृद्धिभेदेनपृथक्त्वंतच्चानादिनिधनंतत्प्रजाःसूतेवर्धयत्यत्तिचसंहरतिच ४१ दधातीति यानिभूतानि चतुर्विधानिस्वभावेनैवद्वंद्वयुक्तानिसुखदुःखादिमंतिवर्ततेतेषांभूतानांसमयःकालःस्थानमधिष्ठानंमतम् । सएवतानिभूतानिदधातिधारयतिपोषयतिच । तथासएवभूतानिभवति स्वयमेवभूता त्मेत्यर्थः ४२ सर्गेति समयएवसर्गादिकंदधाति भवतीतिचानुषज्यते नकेवलंभूतात्मैवकालोऽपितुसर्गाद्यात्माऽपीत्यर्थः । सर्गःसृष्टिः कालोदर्शादिः क्रियायज्ञश्राद्धादिः वेदास्तत्प्रकाशकाः कर्तातदनुष्ठाताकार्यंदेहादिपरिस्पंदः क्रियाफलंस्वर्गः सर्वमेतत्कालात्मापुरुषएवेत्यर्थः तथाचश्रुतिः । पुरुषएवेदंसर्वमिति ४३ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये

यथाविश्वानिभूतानिवृष्ट्याभूयांसिप्रावृषि ॥ सृज्यंतेजंगमस्थानितथाधर्मायुगेयुगे ३९ यथर्तुष्वृतुलिंगानिनानारूपाणिपर्यये ॥ दृश्यंतेतानितान्येवतथाब्रह्मह रादिषु ४० विहितंकालनानात्वमनादिनिधनंतथा ॥ कीर्तितंतत्पुरस्तात्तेतत्सूतेचात्तिचप्रजाः ४१ दधातिभवतिस्थानंभूतानांसमयोमतम् ॥ स्वभावेनैववर्तं तेद्वंद्वयुक्तानिभूरिशः ४२ सर्गकालक्रियावेदाःकर्ताकार्यंक्रियाफलम् ॥ प्रोक्तंतेपुत्रसर्वंवैयन्मांत्वंपरिपृच्छसि ४३ ॥ इतिश्रीमहाभारते शांति० मोक्षधर्मपर्वणि शुकानुप्रश्ने द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ व्यासउवाच ॥ प्रत्याहारंतुवक्ष्यामिशर्वर्यादौगतेऽहनि ॥ यथेदंकुरुतेऽध्यात्मंसुसूक्ष्मंविश्वमीश्वरः १ दिविसूर्यस्तथासप्तदहंतिशिखिनोऽर्चिषः ॥ सर्वमेतत्तदार्चिर्भिःपूर्णंजाज्वल्यतेजगत् २ पृथिव्यांयानिभूतानिजंगमानिध्रुवाणिच ॥ तान्येवाग्रेप्रलीयंतेभूमि त्वमुपयांतिच ३ ततःप्रलीनेसर्वस्मिन्स्थावरेजंगमेतथा ॥ निर्वृक्षानिस्तृणाभूमिर्दृश्यतेकूर्मपृष्ठवत् ४ भूमेरपिगुणंगंधमापआददतेयदा ॥ आत्तगंधातदा भूमिःप्रलयत्वायकल्पते ५ आपस्तत्रप्रतिष्ठंतिऊर्मिमत्योमहास्वनाः ॥ सर्वमेवेदमापूर्यतिष्ठंतिचचरंतिच ६ अपामपिगुणंतातज्योतिराददतेयदा ॥ आप स्तदात्ताप्तगुणाज्योतिःषूपरमंतिवै ७ यदाऽऽदित्यंस्थितंमध्येगूहंतिशिखिनोऽर्चिषः ॥ सर्वमेवेदमर्चिर्भिःपूर्णंजाज्वल्यतेनभः ८ ज्योतिषोऽपिगुणंरूपं वायुराददतेयदा ॥ प्रशाम्यतिततोज्योतिर्वायुर्दोधूयतेमहान् ९ ततस्तुस्वनमासाद्यवायुःसंभवमात्मनः ॥ अधश्चोर्ध्वंचतिर्यक्चदोधवीतिदिशोदश १० वायोरपिगुणंस्पर्शमाकाशंग्रसतेयदा ॥ प्रशाम्यतितदावायुःखंतुतिष्ठतिनादवत् ११ अरूपमरसस्पर्शमगंधंनचमूर्तिमत् ॥ सर्वलोकप्रणदितंखंतुतिष्ठतिना दवत् १२ आकाशस्यगुणंशब्दमभिव्यक्तात्मकंमनः ॥ मनसोव्यक्तमव्यक्तंब्राह्मःसंप्रतिसंचरः १३

भारतभावदीपे द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ ॥७॥ ॥ क्रमप्राप्तंप्रलयमाह प्रत्याहारमिति । प्रतीपमुत्पत्तिक्रमविपरीतमाहरणंप्रत्याहारः ईश्वरःकालात्मा अध्यात्म मात्मनि सुसूक्ष्मंकारणावस्थम् १ संकर्षणमुखोद्भूतस्यशिखिनोऽग्नेरर्चिषःसप्तेतिसंबंधः अर्चिर्भिःसौरीभिराग्नेयीभिश्चज्वालाभिः २ ध्रुवाणिस्थावराणि ३ । ४ गंधंकाठिन्यहेतुं गृहीतवद्भूमिःका ठिन्यंत्यक्त्वाजलमात्रंभवतीत्यर्थः । प्रलयत्वायकारणभावाय ५ । ६ आपोऽप्यात्तगुणाअग्निनाशोषितरसाअग्निमात्रंभवंति ७ । ८ रूपंवायुराददते काङ्पूर्वस्यददातेरिदंरूपम् ९ स्वनं शब्दतन्मात्रम् १० नादःशब्दस्यपूर्वरूपंवर्णविभागहीनम् ११ सर्वेषुलोकेषुवाय्वादिषुदृश्येषुप्रणदितंशब्दोयस्यतत्तथा १२ मनसःसकाशाद्व्यक्तंस्फुटीभूतंशब्दंमनोग्रसति अतोमनएवाऽभि-

ऽव्यक्तात्मकंशब्दादिस्थूलसर्वंद्वयरूपं स्वतस्त्वव्यक्तंसूक्ष्मं एषमनोऽवसानःप्रतिसंचरःप्रलयः । ब्राह्मःविराट्संबंधी'मनःप्रजापतिमसृजत'इतिश्रुतेःमनःकल्पितोविराण्मनस्येवलीयतइत्यर्थः १३
सूत्रात्मप्रलयमाह तदात्मगुणमितिद्वाभ्यां तद्विराडुपादानमस्मदीयंपरिच्छेदाभिमानिमनोमुख्यंकर्म आत्मगुणंनिःसीमज्ञानवैराग्यैश्वर्यधर्मात्मकंगोपंकर्माऽऽविश्य अंतर्भावितण्यर्थोऽयं प्रवे
श्यग्रसतिचंद्रमाःहैरण्यगर्भीयंसमष्टिमनः एतंव्यष्टिमनस्युपरतेसतिकुत्रचंद्रमस्युपाधिष्ठानेवतत्रश्चोपतिष्ठते एनंपुरुषं आत्मगुणइतिशेषः अयमर्थः । द्वेब्रह्मणीवेदितव्येइत्युपक्रमात्परब्रह्मप्राप्तिकामः
प्रणवाख्यमपरंब्रह्मोपासीनोभूतशुद्ध्याद्युक्तक्रमेणस्थूलभूतात्मकंविराजमकारार्थंसंहृत्यसर्वात्मनास्थूलदेहं विस्मृत्यमनोमात्रेणावस्थायेतियावत्तत्रमुक्तबंधनंमनश्चंद्रसंज्ञमुकारार्थतांप्रतिपन्नंसदैश्व
र्यमुक्तंभवति यथोक्तं 'विगतवासनमाशुविपाशतामुपगतंमनआत्मतपोदितं ॥ यदभिवांछतितद्भवतिक्षणात्सकलशाकिमयोहिमहेश्वरइति'इति १४ तंतुचंद्राख्यसमष्टिमनउपाधिंसंकल्पंसंकल्पमा
त्रशरीरमुकारार्थंमहताकालेनवशीकुरुतेमकारार्थेकारणेप्रविलापयतियोगी । यतःससंकल्पश्चित्तंविचारात्मिकांचेतोवृत्तिंग्रसत्यतःसंकल्पनिरोधोदुःशकः । तच्चसंकल्पवशीकरणंमकारार्थत्वेनाह
मेवेदंसर्वोऽस्मीत्येवंरूपेणावस्थानमेवज्ञानमनुत्तमंश्रेष्ठं १५ ईशस्यापिलयमाहद्वाभ्यां कालइति कालोऽर्धमात्रार्थःशोधितत्वंपदार्थः अस्मीत्येतावन्मात्रप्रत्ययात्मा विज्ञानमुक्तलक्षणंसार्वात्म्या
नुभवात्मकमीशंगिरतिनिगिलतिग्रसतीत्यर्थः । कालमपिबलाख्याशक्तिर्ग्रसति अयमर्थः । अर्धमात्रायाःपरतोबिंदुनादशक्तिशांताख्याश्चतस्रोऽवस्थाः तत्राकारउकारमकारानपेक्ष्यार्धमात्रा
तुरीयंतामप्यपेक्ष्यशक्तिर्व्युत्थानवतीजीवन्मुक्त्याख्यातुरीया । शांतातुविदेहकैवल्यंपुनरुत्थानाभावात्प्रणमनीया । तथाचईश्वरग्रासस्तुरीयस्तुरीयइतिश्रुतिः अस्याअर्थः विश्वतैजसप्राज्ञतुरी

तदात्मगुणमाविश्यमनोग्रसतिचंद्रमाः ॥ मनस्युपरतेचापिचंद्रमस्युपतिष्ठते १४ तंतुकालेनमहतासंकल्पंकुरुतेवशे ॥ चित्तंग्रस
तिसंकल्पस्तच्चज्ञानमनुत्तमम् १५ कालोगिरतिविज्ञानंकालंबलमितिश्रुतिः ॥ बलंकालोग्रसतितुतंविद्याकुरुतेवशे १६ आ
काशस्यतदाघोषंतंविद्वान्कुरुतेऽऽत्मनि ॥ तदव्यक्तंपरंब्रह्मतच्छाश्वतमनुत्तमम् ॥ एवंसर्वाणिभूतानिब्रह्मैवप्रतिसंचरः १७
यथावत्कीर्तितंसम्यगेवमेतदसंशयम् ॥ बोध्यंविद्यामयंह्याप्तायोगिभिःपरमात्मभिः १८

येष्वकारोकारमकारार्धमात्रार्थेषुप्रत्येकमेकैकस्मिन्विश्वादिचतुष्टयमस्तित्वेनषोडशभेदाभवंति । तत्रतुरीयोऽव्यक्तरूपोजागरणंबिंदुनादशक्त्यउत्तरोत्तरंसूक्ष्मत्वात्स्वप्नसुषुप्तितुरीयरूपाः । तत्र
मकारार्थस्यईश्वरस्यग्रासस्तुरीयोऽर्धमात्रातस्यापितुरीयःशक्तिरितिसाशक्तिरिहबलशब्देनोच्यते बिंदुनादयोःकालेएवांतर्भावविवक्षित्वाकालंबलमित्युक्तम् । अत्रशंकते बलंकालोग्रसतितिस्वि
तिशुतान्वयउक्तार्थेनिवारणार्थः । अस्मीतिजीवानुभवेनब्रह्मणोपलापःक्रियतइत्यर्थः । उत्तरमाह तमिति तंकालंविद्यानेहनानास्तिकिंचनेतिशास्त्ररूपा अस्मीत्यस्यापिबाधिकासुषुप्त्यादिदृष्टांतेन
वशेकुरुते । अस्मितात्यागप्रलयस्यसुषुप्त्यादौप्रत्यक्षत्वात्तद्विशिष्टआत्मेत्यर्थः १६ विद्याक्रममाह आकाशस्येति यदाविद्याकालंवशेकुरुतेतदाआकाशस्यगुणंघोषंनादमर्धमात्रांबिंदुनादक्रमेणतु
रीयस्यतृतीयमीश्वरमात्मनितुरीयेकुरुतेप्रविलापयति । तद्दोपलयाधिष्ठानमव्यक्तंघोषादप्यतीतत्वात्परंबोपांतशब्दब्रह्मापेक्षयाश्रेष्ठं तदेवचशाश्वतंनित्यनिर्मुक्तं अनुत्तमंनास्युत्तमंवरमंयस्मा
त्तथा । पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरितिश्रुतेः एवमिति एवंप्रतिसंचरःप्रलयउक्तः तत्स्वरूपंतुसर्वाणिभूतानिब्रह्मैवेतिबाधायांसामानाधिकरण्यम् । रज्जुरगवदीश्वरांतसर्वं ॥११०॥
भूतबाधेनब्रह्मैवावशिष्यतेसप्रलयोनतुघटध्वंसवन्निःशेषविनाश इत्यर्थः १७ एतदेवशास्त्रप्रतिपाद्यंवस्तुतत्त्वमित्याह यथावदिति बोध्यंबोधयितुंयोग्यमन्वर्थनामानंशिष्यं विद्यामयमत्यौत्कंठ्येनविद्या
र्थित्वात् विद्यामयंह्याप्तात्वाकीर्तितम् । 'ब्रह्मविद्ब्रह्मैवभवति'इतिश्रुतेःपरमात्मविदस्तायोगिनःपरमात्मानइतिदर्शयितुंपरमात्मभिरितिविशेषणम् १८

उपसंहरति एवमिति विस्तारसंक्षेपौसृष्टिप्रलयावुक्ताविति शेषः ब्रह्माव्यक्तेप्रणवप्रत्यगात्माख्याने । योऽपेयौ पुनःपुनर्युगसहस्रांतेरात्रिस्तथैवाहश्च १९ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नील
कंठीये भारतभावदीपे त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥ अस्यैवार्थस्यवैशद्यायविस्तरेणसांख्ययोगौविवक्षुस्तदधिकारिणंनिरूपयत्यध्यायद्वयेन भूतग्रामेनियुक्तंयदित्यादिना १

एवंविस्तारसंक्षेपौब्रह्माव्यक्तेपुनःपुनः ॥ युगसाहस्रयोरादावहोरात्रस्तथैवच १९ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने त्रयस्त्रिंदधिक
द्विशततमोऽध्यायः ॥ २३३ ॥ व्यासउवाच ॥ भूतग्रामेनियुक्तंयत्तदेतत्कीर्तितंमया ॥ ब्राह्मणस्यतुयत्कृत्यंतत्तेवक्ष्यामितच्छृणु १ जातकर्मप्रभृत्यस्यकर्मणां
दक्षिणावताम् ॥ क्रियास्यादासमावृत्तेराचार्येवेदपारगे २ अधीत्यवेदानखिलान्गुरुशुश्रूषणेरतः ॥ गुरूणामनृणोभूत्वासमावर्तेतयज्ञवित् ३ आचार्येणाभ्यनु
ज्ञातश्चतुर्णामेकमाश्रमम् ॥ आविमोक्षाच्छरीरस्यसोऽवतिष्ठेद्यथाविधि ४ प्रजासर्गेणदारैश्चब्रह्मचर्येणवापुनः ॥ वनेगुरुसकाशेवायतिधर्मेणवापुनः ५ गृहस्थ
स्त्वेषधर्माणांसर्वेषांमूलमुच्यते ॥ यत्रपक्वकषायोहिदांतःसर्वत्रसिध्यति ६ प्रजावाञ्श्रोत्रियोयज्वामुक्तएवऋणैस्त्रिभिः ॥ अथान्यानाश्रमान्पश्चात्पूतोगच्छेतक
र्मभिः ७ यत्पृथिव्यांपुण्यतमंविद्यात्स्थानंतदावसेत् ॥ यतेततस्मिन्प्रामाण्यंगंतुंयशसिचोत्तमे ८ तपसावासुमहताविद्यानांपारणेनवा ॥ इज्ययावाप्रदानैर्वावि
प्राणांवर्धतेयशः ९ यावदस्यभवत्यस्मिन्कीर्तिर्लोकेयशस्करी ॥ तावत्पुण्यकृतांल्लोकाननंतान्पुरुषोऽश्नुते १० अध्यापयेदधीयीतयाजयेतयजेतवा ॥ नवृथाप्र
तिगृह्णीयान्नचदद्यात्कथंचन ११ याज्यतःशिष्यतोवाऽपिकन्यायावाधनंमहत् ॥ यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथंचन १२ गृहमावसतोह्यस्यनान्यत्तीर्थंप्रतिग्र
हात् ॥ देवर्षिपितृगुर्वर्थंवृद्धातुरबुभुक्षताम् १३ अंतर्हिताभितप्तानांयथाशक्तिबुभूषताम् ॥ द्रव्याणामतिशक्त्याऽपिदेयमेषांकृतादपि १४ अर्हतामनुरूपाणां
नादेयंह्यस्तिकिंचन ॥ उच्चैःश्रवसमप्यश्वंप्रापणीयंसतांविदुः १५ अनुनीययथाकामंसत्यसंधोमहाव्रतः ॥ स्वैःप्राणैर्ब्राह्मणप्राणान्परित्रायदिवंगतः १६ रंतिदेव
श्चसांकृत्योवसिष्ठायमहात्मने ॥ अपःप्रदायशीतोष्णानाकपृष्ठेमहीयते १७ आत्रेयश्चेंद्रदमनोह्यर्हतेविविधंधनम् ॥ दत्वालोकान्ययौधीमाननंतान्समहीपतिः १८
शिबिरौशीनरोंऽगानिसुतंचप्रियमौरसम् ॥ ब्राह्मणार्थमुपाहृत्यनाकपृष्ठमितोगतः १९ प्रतर्दनःकाशिपतिःप्रदायनयनेस्वके ॥ ब्राह्मणायातुलांकीर्तिमिहचामुत्र
चाश्नुते २० दिव्यमष्टशलाकंतुसौवर्णंपरमर्धिमत् ॥ छत्रंदेवावृधोदत्वासराष्ट्रोऽभ्यपतद्दिवम् २१ सांकृतिश्चतथाऽत्रेयःशिष्येभ्योब्रह्मनिर्गुणम् ॥ उपदिश्यमहा
तेजागतोलोकाननुत्तमान् २२ अंबरीषोगवांदत्वाब्राह्मणेभ्यःप्रतापवान् ॥ अर्बुदानिदशैकंचसराष्ट्रोऽभ्यपतद्दिवम् २३ सावित्रीकुंडलेदिव्येशरीरंजनमेजयः ॥
ब्राह्मणार्थेपरित्यज्यजगामलोकमुत्तमम् २४ सर्वरत्नंवृषादर्भिर्युवनाश्वःप्रियाःस्त्रियः ॥ रम्यमावसथंचैवदत्वास्वर्लोकमास्थितः २५

१ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ कृतात्पक्वान्नादपि १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५

 २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ ॥ इति शांतिपर्वणि मोक्षपर्वणि नीलकंठीये भारतभावदीपे चतुस्त्रिंशदधिक 

निमीराष्ट्रंचवैदेहोजामदग्न्योवसुंधराम् ॥ ब्राह्मणेभ्योददौचापिगयश्चोर्वींसपत्तनाम् २६ अवर्षतिचपर्जन्येसर्वभूतानिभूतकृत् ॥ वसिष्ठोजीवयामासप्रजापतिरिव 

 प्रजाः २७ करंधमस्यपुत्रस्तुकृतात्मामरुतस्तथा ॥ कन्यामंगिरसेदत्वादिवमाशुजगामह २८ ब्रह्मदत्तश्चपांचाल्योराजाबुद्धिमतांवरः ॥ निधिंशंखंद्विजाग्र्ये
भ्योदत्वालोकानवाप्तवान् २९ राजामित्रसहश्चापिवसिष्ठायमहात्मने ॥ मदयंतींप्रियांदत्वातयासहदिवंगतः ३० सहस्रजिच्चराजर्षिःप्राणानिष्टान्महायशाः ॥ 
ब्राह्मणार्थेपरित्यज्यगतोलोकाननुत्तमान् ३१ सर्वकामैश्चसंपूर्णंदत्वावेश्महिरण्मयम् ॥ मुद्गलायगतःस्वर्गंशतद्युम्नोमहीपतिः ३२ नाम्नाचद्युतिमान्नामशाल्वराजः
प्रतापवान् ॥ दत्वाराज्यमृचीकायगतोलोकाननुत्तमान् ३३ लोमपादश्चराजर्षिःशांतांदत्वासुतांप्रभुः ॥ ऋष्यशृंगायविपुलैःसर्वकामैरयुज्यत ३४ मदिराश्वश्च
राजर्षिर्दत्वाकन्यांसुमध्यमाम् ॥ हिरण्यहस्तायगतोलोकान्देवैरभिष्टुतान् ३५ दत्वाशतसहस्रंतुगवांराजाप्रसेनजित् ॥ सवत्सानांमहातेजागतोलोकाननुत्तमान् ॥
३६ एतेचान्येचबहवोदानेनतपसैवच ॥ महात्मानोगताःस्वर्गंशिष्टात्मानोजितेंद्रियाः ३७ तेषांप्रतिष्ठिताकीर्तिर्यावत्स्थास्यतिमेदिनी ॥ दानयज्ञप्रजासर्गै रे
तेहिदिवमाप्नुवन् ३८ ॥ इतिश्री० शांति०मो०शुकानुप्रश्ने चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥ व्यासउवाच ॥ त्रयींविद्यामवेक्षेतवेदेषूक्तामथांगतः ॥
ऋक्सामवर्णाक्षरतोयजुषोऽथर्वणस्तथा १ तिष्ठत्येतेषुभगवान्षट्सुकर्मसुसंस्थितः ॥ वेदवादेषुकुशलाह्यध्यात्मकुशलाश्चये २ सत्ववंतोमहाभागाःपश्यंतिप्रभवा
प्ययौ ॥ एवंधर्मेणवर्तेतक्रियांशिष्टवदाचरेत् ३ असंरोधेनभूतानांवृत्तिंलिप्सेतवैद्विजः ॥ सद्भ्यआगतविज्ञानःशिष्टःशास्त्रविचक्षणः ४ स्वधर्मेणक्रियालोकेकर्मस
त्वस्थसंचरः ॥ तिष्ठतेतेषुगृहवान्षट्सुकर्मसुसद्विजः ५ पंचभिःसततंयज्ञैःश्रद्दधानोयजेतच ॥ धृतिमानप्रमत्तश्चदांतोधर्मविदात्मवान् ६ वीतहर्षमदक्रोधोब्राह्मणो
नावसीदति ॥ दानमध्ययनंयज्ञस्तपोह्रीरार्जवंदमः ७ एतैर्वर्धयतेतेजःपाप्मानंचापकर्षति ॥ धूतपाप्माचमेधावीलघ्वाहारोजितेंद्रियः ८ कामक्रोधौवशेकृत्वानिनी
षेद्ब्रह्मणःपदम् ॥ अग्नींश्चब्राह्मणांश्चार्चेद्देवताःप्रणमेतच ९ वर्जयेदुशतींवाचंहिंसांचाधर्मसंहिताम् ॥ एषापूर्वगतावृत्तिर्ब्राह्मणस्यविधीयते १० ज्ञानागमेनकर्मा
णिकुर्वन्कर्मसुसिद्ध्यति ॥ पंचेंद्रियजलांघोरांलोभकूलांसुदुस्तराम् ११ मन्युपंकामनाधृष्यांनदींतरतिबुद्धिमान् ॥ कालमभ्युद्यतंपश्येन्नित्यमत्यंतमोहनम् १२ मह
ताविधिदृष्टेनबलेनाप्रतिघातिना ॥ स्वभावस्रोतसावृत्तमुह्यतेसततंजगत् १३ कालोदकेनमहतावर्षावर्तेनसंततम् ॥ मासोर्मिणर्तुवेगेनपक्षोलपतृणेच १४ निमेषो
न्मेषफेनेनअहोरात्रजलेनच ॥ कामग्राहेणघोरेणवेदयज्ञप्लवेनच १५ धर्मद्वीपेनभूतानांचार्थकामजलेनच ॥ ऋतवाङ्मोक्षतीरेणविहिंसातरुवाहिना १६ 

द्विशततमोऽध्यायः ॥ २३४ ॥ ॥७॥ ॥७॥ ॥ ७ ॥ ॥ ७ ॥ ॥ त्रयीमिति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२।१३ । १४ । १५ । १६

ब्रह्मप्रायभवेनब्रह्मकार्यभूतेन १७ । १८ । १९ । २० । २१ । २२ अवदातेषुशुद्धेषुकुलेष्विविशेषः त्रिष्वध्यापनयाजनप्रतिग्रहेषुसंदेहवांस्तत्रप्रवृत्तइत्यर्थः त्रिकर्मकृतस्त्वाध्याय
जनदानकृत् २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचत्रिंशद
धिकद्विशततमोऽध्यायः ॥ २३५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अथाऽतीतानंतराध्यायद्वयोक्तसाधनसंपत्तेरनंतरमेतद्वक्ष्यमाणेशा
स्याख्यंकैवल्यंचेद्रोचयेचर्हिज्ञानवान्भवेत् । एवंमुमुक्षावान्ज्ञानंसाधयेदितिविवक्षितार्थंबंधस्याज्ञानकार्यत्वेनमिथ्यात्वंदर्शितम् । यतोज्ञानमज्ञानस्यैवनिवर्तकंतन्निवृत्तौतत्कृतस्यबंधस्यनिवृत्तिः
युगह्रदौघमध्येनब्रह्मप्रायभवेनच ॥ धात्रासृष्टानिभूतानिकृष्यंतेयमसादनम् १७ एतत्प्रज्ञामयैर्धीरानिस्तरंतिमनीषिणः ॥ प्लवैरप्लववंतोहिकिंकरिष्यंत्यचे
तसः १८ उपपन्नंहियत्प्राज्ञोनिस्तरेन्नेतरोजनः ॥ दूरतोगुणदोषौहिप्राज्ञःसर्वत्रपश्यति १९ संशयंसतुकामात्माचलचित्तोऽल्पचेतनः ॥ अप्राज्ञोन
तरत्येनंयोह्यास्तेनसगच्छति २० अप्लवोहिमहादोषंमुह्यमानोनियच्छति ॥ कामग्राहगृहीतस्यज्ञानमप्यस्यनप्लवः २१ तस्मादुन्मज्जनस्यार्थेप्रयतेत
विचक्षणः ॥ एतदुन्मज्जनंतस्ययदयंब्राह्मणोभवेत् २२ अवदातेषुसंजातस्त्रिसंदेहस्त्रिकर्मकृत् ॥ तस्मादुन्मज्जनेतिष्ठेत्प्रज्ञयानिस्तरेद्यथा २३ संस्कृत
स्यहिदांतस्यनियतस्ययतात्मनः ॥ प्राज्ञस्यानंतरासिद्धिरिहलोकेपरत्रच २४ वर्तेततेषुगृहवानक्रुद्ध्यन्ननसूयकः ॥ पंचभिःसततंयज्ञैर्विघसाशीयजेतच
२५ सतांधर्मेणवर्तेतक्रियांशिष्टवदाचरेत् ॥ असंरोधेनलोकस्यवृत्तिंलिप्सेदगर्हिताम् २६ श्रुतविज्ञानतत्त्वज्ञःशिष्टाचारोविचक्षणः ॥ स्वधर्मेणक्रियावां
श्चकर्मणासोऽप्यसंकरः २७ क्रियावान्श्रद्दधानोहिदांतःप्राज्ञोऽनसूयकः ॥ धर्माधर्मविशेषज्ञःसवतरतिदुस्तरम् २८ धृतिमानप्रमत्तश्चदांतोधर्मविदात्म
वान् ॥ वीतहर्षमदक्रोधोब्राह्मणोनावसीदति २९ एषापुरातनीवृत्तिर्ब्राह्मणस्यविधीयते ॥ ज्ञानवत्त्वेनकर्माणिकुर्वन्सर्वत्रसिध्यति ३० अधर्मंधर्मकामोहि
करोतिह्यविचक्षणः ॥ धर्मंवाधर्मसंकाशंशोचन्निवकरोतिसः ३१ धर्मंकरोमीतिकरोत्यधर्ममधर्मकामश्चकरोतिधर्मम् ॥ उभेऽबलःकर्मणीनप्रजानन्सजायते
म्रियतेचापिदेही ३२ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने पंचत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥ ॥ व्यासउवाच ॥
अथचेद्रोचयेदेतद्दुह्येतस्रोतसायथा ॥ उन्मज्जंश्चनिमज्जंश्चज्ञानवान्प्लववान्भवेत् १ प्रज्ञयानिश्चिताधीरास्तारयंत्यबुधान्प्लवैः ॥ नाबुधास्तारयंत्यन्याना
त्मानंवाकथंचन २ छिन्नदोषोमुनिर्योगान्मुक्तोयुंजीतद्वादश ॥ देशकर्मानुरागार्थानुपायापायनिश्चयः ३

संभाव्यतेनतुबंधस्यस्वपक्षे तथाचश्रुतिः । 'तदन्वेष्टव्यंतद्वावविजिज्ञासितव्यं'इति । आत्मजिज्ञासासिद्ध्याक्षिप्तमावरणमनुवाद्यतस्यमिथ्यात्वंप्रसिद्धिविषयैवाह । एतंब्रह्मलोकं
३८ नविदंत्यनृतेनहिप्रत्यूढाइति । तथाऽसंगोह्ययंपुरुषइतिच । तथाचासंगस्यापिसंगित्वमानंमिथ्यैवसचज्ञाननिवर्त्यंभविष्यतीतियुक्तमुक्तंचेदेतद्रोचयेत्तर्हिज्ञानवान्भवेदिति । ज्ञानप्लवहीनस्सं
सारस्रोतसाउह्यमानऊर्ध्वाधोगतींगच्छतीत्यर्थः । एतेनाथातोब्रह्मजिज्ञासेतिसूत्रपदानामर्थः साधनसंपत्त्यनंतरंबंधस्यमिथ्यात्वात्तन्निवृत्त्यर्थंब्रह्मजिज्ञास्यमित्येवंरूपोदर्शितः १ प्रज्ञया
ध्यानजसाक्षात्कारेण २ छिन्नदोषोरागादिहीनः अतएवयोगात्रूपादिसंगाद्द्वादशदेशादीन्योगसहायान्वक्ष्यमाणान्युंजीतसमादध्यात् अनुतिष्ठेदित्यर्थः । तत्रदेशयोगः 'समेशुचौ-

–शर्करवह्निवालुकाविवर्जितेशब्दजलाश्रयादिभिः ॥ मनोऽनुकूलेनतुचक्षुपीडनेगुहानिवाताश्रयणेनयोजयेत्'इतिश्रुत्युक्तः । कर्मयोगः । 'युक्ताहारविहारस्ययुक्तचेष्टस्यकर्मसु ॥ युक्तस्वप्नावबोधस्ययोगोभवतिदुःखहा'इतिगीतोक्तः । अनुरागःसच्छिष्यः अर्थोद्रव्यं पृषोदकाद्याहारणादासादिचिंतानिरासार्थावेतयोर्योगो । उपायआसनादियोगस्तिद्धिकारणस्यपाप्यसमंशरीरमित्यादिश्रुतिप्रसिद्धः । अपायोरागाद्यपचयः । निश्चयोगुरुवेदवाक्यादौफलावश्यंभावबुद्धिः । निश्चयइतिसुर्वाणुत्तुगितिभिसःस्वादेशः । उपायापायनिश्चयैश्चक्षुरादिभिश्चसहितान्देशादीन्द्वादशयुंजीतेतिपूर्वेणसंबंधः । चक्षुश्चक्षुरादीनि । आहारःआहारशुद्धौसत्त्वशुद्धिरितिश्रुतिप्रसिद्धः । संहारःस्वाभाविकविषयप्रवृत्तिसंकोचः । मनःसंकल्पविकल्पात्मकंदर्शनंजन्ममृत्युजराव्याधिदुःखदोषानुदर्शनमेतान्द्वादशमुमुक्षुरनुसरेदित्यर्थः सार्धः ३ एवंद्वादशविशेषणविशिष्टस्याधिकारिणोयत्कर्तव्यंतदाह यच्छेदिति वागादिबाह्येंद्रियव्यापारमुत्सृज्यमनोमात्रेणावतिष्ठेत । मनोऽपिविषयविकल्पाभिमुखमध्यवसायस्वभावयाबुद्ध्यानियच्छेत् । बुद्धिमात्रेणावतिष्ठेतेत्यर्थः । इदमेवोत्तमंज्ञानंभिंद्रियमनोतिरिक्तकर्त्रात्मविषयं तेनज्ञानेनसूक्ष्मत

चक्षुराहारसंहारैर्मनसादर्शनेनच ॥ यच्छेद्वाङ्मनसीबुद्ध्यायइच्छेज्ज्ञानमुत्तमम् ४ ज्ञानेनयच्छेदात्मानंयइच्छेच्छांतिमात्मनः ॥ एतेषां चेदनुद्रष्टापुरुषोऽपिसुदारुणः ५ यदिवासर्ववेदज्ञोयदिवाऽप्यनृचोद्विजः ॥ यदिवाधार्मिकोयज्वायदिवापापकृत्तमः ६ यदिवापुरुषव्याघ्रोयदिवाक्लेशधारितः ॥ तरत्येवंमहादुर्गंजरामरणसागरम् ७ एवंह्येतेनयोगेनयुंजानोह्येवमंततः ॥ अपिजिज्ञासमानोऽपिशब्दब्रह्मातिवर्तते ८ धर्मोपस्थोह्रीवरूथउपायापायकूबरः ॥ अपानाक्षःप्राणयुगःप्रज्ञायुर्जीवबंधनः ९ चेतनाबंधुरश्चारुश्चाचारग्रहनेमिमान् ॥ दर्शनस्पर्शनवहोघ्राणश्रवणवाहनः १० प्रज्ञानाभिःसर्वतंत्रप्रतोदोज्ञानसारथिः ॥ क्षेत्रज्ञाधिष्ठितोधीरःश्रद्धादमपुरःसरः ११ त्यागसूक्ष्मानुगःक्षेम्यःशौचगोध्यानगोचरः ॥ जीवयुक्तोरथोदिव्योब्रह्मलोकेविराजते १२ अथसंत्वरमाणस्यरथमेवंयुयुक्षतः ॥ अक्षरंगंतुमनसोविधिंवक्ष्यामिशीघ्रगम् १३

मयाबुद्ध्याआत्मानंबुद्धिविविक्तंयच्छेत् । बुद्धिमप्यात्मनिप्रविलापयेदित्यर्थः । कः यःशांतिंकैवल्यमात्मनइच्छेत् । एतेन'यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि ॥ ज्ञानमात्मनिमहतितद्यच्छेच्छांतआत्मनि'इत्यस्याःश्रुतेरर्थोदर्शितः । अत्रश्रुत्युक्तायामहदाख्यसमष्टिबुद्धेरपिबुद्धिशब्देनैवसंग्रहः अन्यत्समानं । योगफलमाह एतेषामिति वागादीनामनुद्रष्टाशांतात्मायेनज्ञातःसपुरुषःसाधुरसाधुर्वामुच्यतएवेतिसार्धश्लोकद्वयार्थः ४ । ५ । ६ । ७ एवंपूर्वश्लोकोक्तप्रकारेण एवमंततःशांतात्मप्राप्त्यवधियोगंजिज्ञासमानोऽपिकिमुतानुतिष्ठन् शब्दब्रह्मकर्मकांडमतिक्रम्यप्रवर्तते । परोक्षज्ञानवानपिस्वकर्मत्यागजंदोषंनप्राप्नोतीत्यर्थः ८ अक्षरंब्रह्मप्राप्तुकामस्यरथरूपकेणयोगमुपायमुपदिशंस्तदंगानिबाह्यान्याह धर्मोपस्थइत्यादिना धर्मोयज्ञादिस्तदेवोपस्थंज्ञानसारथेरुपवेशनस्थानंयस्य । ह्रीरकार्यान्निवृत्तिःसैववरूथंरथगुप्तिर्यस्य । उपायापायौप्रागुक्तौकूबरोयुगंदंडोयस्य ९ चेतनासावधानतासैवबंधुरःफलकद्वयसंश्लवः आचारःशीलंतस्यग्रहोंगीकारः । दर्शनादिचतुष्टयंवाहनमश्वादिरूपं १० प्रज्ञाशमादिप्रावण्यं नाभिर्मध्यममगोरथिनउपवेशनस्थानं तंत्रंशास्त्रं ज्ञानंतदर्थनिश्चयः ११ सूक्ष्मानुगश्छेदःसंनिपत्योपकारी शौचमार्गेणैवगच्छतीतिशौचगः ध्यानंध्येयैकतानतासैवगोचरःप्राप्योऽर्थोयस्य जीवयुक्तोजीवेनमुमुक्षुणायुक्तोयोजितः ब्रह्मैवलोकस्तत्समीपे १५ रथंयोगं विधिमंतरंगसाधनम् १३



सप्तेति देशबंधश्चित्तस्यधारणेतिसूत्रितंएकस्मिन्विषयेचित्तस्यस्थापनंधारणासाचविषयभेदादनेकधेतिसप्तधारणाइत्युक्तम् । वाग्यतइतियमनियमादीनामुपलक्षणम् । पृष्ठतोविप्रकृष्टतराश्चंद्रसूर्यध्रुवमंडलादिधारणाः । पार्श्वतःकिंचित्सन्निकृष्टानासाग्रभ्रूमध्यकंठकूपादिधारणाअन्याःसंति तथाऽपिताःप्रधारणाः । प्रशिष्यप्रपौत्रादिशब्दवत्प्रशब्दार्थः ताव्यवहिताइति अव्यवहिताःसप्तैवधारणाइत्यर्थः अत्रपुराणांतरे'दशमन्वंतराणीहतिष्ठंतींद्रियचिंतकाः । भौतिकास्तुशतंपूर्णंसहस्रंत्वाभिमानिकाः । बौद्धादशसहस्राणितिष्ठंतिविगतज्वराः । पूर्णंशतसहस्रंतुतिष्ठंत्यव्यक्तचिंतकाः'इतिभूतेष्वभिमानाख्याहंकारेऽव्यकेचेतिसप्तकापेक्षयेंद्रियबुद्धिधारणेअधिकेउक्तेअप्यहंकारधारणायामंतर्भवतः १४ क्रमशइति पयःपयसांजलस्य पश्चवर्येप्रथमाबुद्धितोद्धृत्यात्तत्रतत्रविषयेस्थिरयातत्तदैश्वर्यंप्रतिपद्यते । अत्रपृथ्व्यादिधारणानांस्थानबीजदेवतायोगियाज्ञवल्क्योक्ताज्ञेयाः यथा 'पादादिजानुपर्यंतंपृथिवीस्थानमुच्यते । आजानोःपायुपर्यंतमपांस्थानंप्रकीर्तितम् । आपायोर्हृदयांतंचवह्निस्थानंतदुच्यते । हृन्मध्यात्तुभ्रुवोर्मध्यंयावद्वायुकुलंभवेत् । आभ्रूमध्यात्तुमूर्धांतमाकाशमितिचोच्यते । पृथिव्यांवायुमारोप्यलकारेणसमन्वितम् । ध्यायंश्चतुर्मुखाकारंब्रह्माणंसृष्टिकारणम् । धारयेत्पंचघटिकाःपृथिवीजयमाप्नुयात् । वारुणेवायुमारोप्यवकारेणसमन्वितम् । स्मरन्नारायणंदेवंचतुर्बाहुंशुचिस्मितम् । शुद्धस्फटिकसंकाशंपीतवाससमच्युतम् । धारयेत्पंचघटिकाःसर्वरोगैःप्रमुच्यते । वह्नावनिलमारोप्यरेफाक्षरसमन्वितं । त्र्यक्षंवरप्रदंरुद्रंतरुणादित्यसंनिभम् । भस्मोद्धूलितसर्वांगंसुप्रसन्नमनुस्मरन् । धारयेद्घटिकाःपंचवह्निनासौनदह्यते । मारुतंमरुतांस्थानेयकारेणसमन्वितं । धारयेत्पंचघटिकावायुवद्व्योमगोभवेत्' । वर्णोयकारः देवईश्वरः रूपंरुद्रवत् । 'आकाशेवायुमारोप्यहका

सप्तयाधारणाःकृत्स्नावाग्यतःप्रतिपद्यते ॥ पृष्ठतःपार्श्वतश्चान्यास्तावत्यस्ताःप्रधारणाः १४ क्रमशःपार्थिवंयच्चवायव्यंखंतथापयः ॥ ज्योतिषोयत्तदैश्वर्यमहंकारस्यबुद्धितः ॥ अव्यक्तस्यतथैश्वर्यंक्रमशःप्रतिपद्यते १५ विक्रमाश्चापियस्यैतेतथायुक्तेषुयोगतः ॥ तथायोगस्ययुक्तस्यसिद्धिमात्मनिपश्यतः १६ निर्मुच्यमानःसूक्ष्मत्वाद्रूपाणीमानिपश्यतः ॥ शैशिरस्तुयथाधूमःसूक्ष्मःसंश्रयतेनभः १७

रोपरिशंकरं । बिंदुरूपंमहादेवंव्योमाकारंसदाशिवम् । चित्तेनार्चितयेत्स्वस्यंमुहूर्तमपिधारयेत्' । अत्रलकारादिबीजस्थानेऽवकारोकारमकारार्धमात्राबिंदून्न्यसेत् । अव्यक्तधारणायांचघोषनादं यद्दृष्टेशुद्धंब्रह्मवशिष्यते तथाचतत्रैवोपसंहृतम् । 'स्वंतस्मात्प्रणवेनैवप्राणायामैस्त्रिभिस्त्रिभिः । ब्रह्मादिकार्यरूपाणिस्वेस्वेसंहृत्यकारणे । विशुद्धचेतसापश्यनादातिपरमेश्वरं'इति । अहंकारधारणास्वरूपंतुस्थूलदेहासंगेनाहमेवेदंसर्वोऽस्मीत्यभिमानः अस्यैवतत्त्वमस्यादिवाक्यजाविद्याविनाप्रज्ञयाऽव्यक्तधारणा १५ विक्रमाइति योगतउपायतः युक्तेषुयोगेप्रवृत्तेषुयोगिनएतेवक्ष्यमाणाविक्रमाःअनुभवक्रमाः यथायेनप्रकारेणभवंतितथावक्ष्यामीतिशेषः । आत्मनिदेहाभ्यंतरेपश्यतोध्यायतःपुरुषस्ययुक्तस्ययोगस्यसिद्धिसम्यक्युक्तयोगसंबंधिनींसिद्धिंभूजयादिकांवक्ष्यामीतिशेषः १६ तत्रविक्रमानाह निर्मुच्यमानइत्यादिना पश्यतःप्रत्यगात्मनइमानिवक्ष्यमाणानिरूपाणिनिर्मुच्यमानोगुरूक्तयुक्त्यास्थूलदेहाभ्यासंत्यजन्सूक्ष्मत्वात्पश्यतीतिशेषः नत्वविमुच्यमानःस्थूलदृष्टिः । शैशिरोधूमोऽवश्यायोनीहाराख्योनभःसंश्रयतइत्यनेनतस्यभुवनकोशेव्याप्तिर्दर्शिता अत्रायंप्रयोगः शमादिसंपन्नोविविक्तेदेशेस्थिरसुखमासनमध्यासीनःप्राणायामपुरःसरंगुरूक्तयुक्त्यास्थूलदेहाऽसंगेनपादादिजानुपर्यंतेभूस्थानेचित्तंधारयतःस्थानतिरोधानपूर्वकंनीहारमात्रमवभासतेयथारज्जुरगेचक्षुर्धारयतउरगतिरोधानेनरज्जुमात्रं । तद्वाल्लक्षाधरभागोजानूपरिष्टात्तनएवदेहोनीहारमयोऽसंदिग्धाविपर्यस्ततयाभातिसोऽयंभूमिजयः । अस्मिन्सिद्धेजान्वादिपाय्वंतेजलस्थानेचित्तंधारयतोभूःस्थानंचतिरोधीयते । पायूर्ध्वभागमात्रंचकल्पांतार्णवमग्रंपूर्ववद्भाति तदिदंद्वयंजलेभूमिसंहारोजलजयश्चेत्युच्यते एवमुत्तरत्रापिभूतसंहारजयौज्ञेयौ १७

१८ आत्मानमिदेहाभ्यंतरेवह्निरूपंप्रकाशतेलोहितोषकारमप्रोभवतीत्यर्थः १९ तस्मिन्निति अस्ययोगिनः अजतिमच्छतिक्षिपतिवाहस्तानित्यजोवायुः पीतशस्त्रःपीतशस्त्रवत्पीतानिगिलिता निशस्त्राणिच्छेदकत्वात्स्रग्रामारपर्वतादीनिशस्त्राणियेनतद्वत् गिलिताखिलभूजलतेजोरूपःकेवलेनभसिसंततंदोधूयमानःप्रकाशतेइत्यर्थः । तदेवोक्तंप्राक् वायुर्दोधूयतेमहान् तदानिरा श्रयमूर्णातंतोर्यद्रूपमतिलघुतेनसवर्णस्यसमानरूपस्य ऊर्णातंतुवन्निरालंबनेऽन्तरिक्षेस्थितस्यवायुवशस्येत्यर्थः । तस्ययोगिनोऽपिरूपंहृन्मध्यादारभ्योपरितनंप्रकाशतेनस्वम्परंकिंचिद्वाय्वा काशव्यतिरिक्तम् २० अथतेजःसंहारवायुजयानंतरंवायव्यंवायुसंबंधिसूक्ष्मंरूपादिहीनंस्वरूपंकर्तृश्वेतांप्रहृत्यावरणरूपरजस्तमोमलशून्यत्वात्प्रकाशमयत्वाचस्वच्छाम् । गतिःगम्यते तत्त्वंप्राप्यतेऽनयेतिभ्रूमध्यादिमूर्धांतमाकाशस्थानंगतिस्तांगत्वातत्रविलयंप्राप्याऽशुक्लंनीलरूपंसुषिरमाकाशमात्रंस्थानलयपूर्वकंपूर्ववत्प्रकाशतइतिपूर्वेणान्वयः । तदिदमशुक्लंचेतसःसौक्ष्म्यं सौख्यमितिपाठेप्रसादकरं ब्राह्मणस्यब्रह्मबुभूषोरुक्तंशास्त्रे अपिःपादपूरणार्थः । अव्यक्तमितिपाठेलोकाप्रसिद्धंयोगैकगम्यंसेयंव्योमसंविद्वायुलयवाकाशजयश्चेत्युच्यते । अयमेवतांत्रिका

तथादेहाद्विमुक्तस्यपूर्वरूपंभवत्युत ॥ अथधूमस्यविरमेद्वितीयंरूपदर्शनम् १८ जलरूपमिवाकाशेतथैवात्मनिपश्यति ॥ अपांव्यतिक्रमेचास्यवह्निरूपंप्रकाशते १९ तस्मिन्नुपरतेऽजोऽस्यपीतशस्त्रःप्रकाशते ॥ ऊर्णारूपसवर्णस्यतस्यरूपंप्रकाशते २० अथश्वेतांगतिंगत्वावायव्यंसूक्ष्ममप्युत ॥ अशुक्लंचेतसः सौक्ष्म्यमप्युक्तंब्राह्मणस्यवै २१ एतेष्वपिहिजातेषुफलजातानिमेशृणु ॥ जातस्यपार्थिवैश्वर्यैःसृष्टिरत्रविधीयते २२ प्रजापतिरिवाक्षोभ्यःशरीरात्सृजतेप्रजाः ॥ अंगुल्यंगुष्ठमात्रेणहस्तपादेनवातथा २३ पृथिवींकंपयत्येकोगुणोवायोरितिश्रुतिः ॥ आकाशभूतश्चाकाशेसवर्णत्वात्प्रकाशते ॥ वर्णतोगृह्यतेचापिकामात्पिबतिचाशयान् २४ नचास्यतेजसारूपंदृश्यतेशाम्यतेतथा ॥ अहंकारेऽस्यविजितेपंचैतेस्युर्वशानुगाः २५ षण्णामात्मनिबुद्धौचजितायांप्रभवत्यथ ॥ निर्दोषप्रतिभाह्येनंकृत्स्नासमभिवर्तते २६ तथैवव्यक्तमात्मानमव्यक्तंप्रतिपद्यते ॥ यतोनिःसरतेलोकोभवतिव्यक्तसंज्ञकः २७ तत्राव्यक्तमयींविद्यांशृणुत्वंविस्तरेणमे ॥ तथाव्यक्तमयंचैवसांख्येपूर्वंनिबोधमे २८

पांभूतशुद्धिप्रकारःसंप्रदायापरिज्ञानाद्यथावदिदानींतनैर्नानुष्ठीयते २१ 'पृथ्व्याप्यतेजोऽनिलखेसमुत्थितेपंचात्मकेयोगगुणेप्रवृत्ते । नतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरं'इति श्रुत्युक्तंपंचभूतजयफलंपृथिवीवायुराकाशआपोज्योतींषीतिश्रुत्यंतरोक्तक्रमेणोपबृंहयति एतेष्वित्यादिना जातस्यसिद्धस्य २२ । २३ आकाशभूतस्येहेतुःसवर्णत्वादिति । आकाशव त्सर्वगतश्चनित्यइतिश्रुतेराकाशेनसमानरूपत्वात् वर्णतआकृतितोगृह्यतेपिधीयते अरूपत्वादेवांतर्धानशक्तिमपिप्राप्नोतीत्यर्थः । जलजयफलमाह कामादिति इच्छयाआशयान्वा जलस्यवापीकूपतटाकादीन्पिबत्यगस्त्यवत् २४ नचेति आकाशजयेआकृतेरेवाऽऽकाशभूततयापिधानम् । अत्रतुतस्यामप्याकृतौअदृश्यत्वमुच्यते । उक्तक्रमेणभूतजयंविनावापूर्वोक्ता हंकारधारणयाऽहंकारेविजितेनांतरीयकत्वेनैवाकाशादयोजिताःस्युरित्यर्थः २५ षण्णामिति पंचभूतान्यहंकारश्चतेषामात्मभूतायांबुद्धौ एतेनाहंकाराद्बुद्धेरव्यतिरेकउक्तः तेनसप्तैवधा रणाः प्रभवत्यैश्वर्यवान्भवति निर्दोषप्रतिभासंशयविपर्ययशून्यंज्ञानं सर्वेश्वरःसर्वज्ञश्चभवतीत्यर्थः २६ व्यक्तंबुद्ध्यादिरूपमात्मानमव्यक्तमल्पकत्वेननर्निबीजजगत्कारणंब्रह्मभावेनजानाती त्यर्थः २७ अव्यक्तमयीमव्यक्तप्रधानां मेमत्तःपूर्वमव्यक्तबोधात्माव्यक्तंनिबोध २८



पंचेति 'मूलप्रकृतिरविकृतिर्महदाद्याःप्रकृतिविकृतयःसप्त ॥ षोडशकस्तुविकारोनप्रकृतिर्नविकृतिःपुरुषः'इतिसांख्योक्तानितत्त्वानियोगेपातंजलीयेसांख्येवेदांतविचारेचतुल्यानि विशेषंशास्त्रभेद प्रयोजकम् २९ तत्राव्यक्तलक्षणमाह प्रोक्तमिति तच्चमहदादिविकारांतंत्रयोविंशकम् ३० विपरीतंजन्मवृद्ध्यादिहीनं अव्यक्तंचतुर्विंशंएतेभ्योऽन्यमेकमेवजीवात्मानंप्रतिशरीरंभिन्नमि तिसांख्यामन्यंतेततोविशेषमाह द्वाविति द्वौजीवेश्वरौ वेदेषुकर्मकांडेषु यजमानोपद्रष्टव्यश्च तेनयष्टव्यदेवतायाश्चेतनत्वमनिच्छंतोमीमांसकाःपरास्ताः । सिद्धांतेषुवेदांतेषूदाहृतोजीवब्रह्म रूपौ ३१ 'कार्योपाधिरयंजीवःकारणोपाधिरीश्वरः'इतिश्रुत्यनुसारेणजीवेश्वरविभागमाह चतुरिति चतुर्लक्षणंजन्मादिविकारवन्महदहंकारपंचतन्मात्रैकादशेंद्रियपंचभूतानितज्जंतदुपाधिकं चतुर्वर्गार्थिनं व्यक्तंजीवं अव्यक्तजंमायोपाधिमीश्वरं तयेति तदुभयमपिबुद्धमचेतनंच चिदचिदात्मकमित्यर्थः । अयजलचंद्रन्यायेनप्रतिबिंबोजीवोबिंबचैतन्यमीश्वरइति । द्वासुपर्णासयुजा सखायेत्यादिश्रुतिसंमतंजीवेश्वरविभागमाह सत्त्वमिति सत्त्वंबुद्धिः क्षेत्रज्ञश्चिदात्मा तदेतरसत्त्वंयेनस्वप्नंपश्यत्ययोऽयंशारीरउपद्रष्टासक्षेत्रज्ञस्तावेतौसत्त्वक्षेत्रज्ञाविितिपैंगिरहस्यब्राह्मणेव्या

पंचविंशतितत्त्वानितुल्यान्युभयतःसमम् ॥ योगेसांख्येऽपिचतथाविशेषंतत्रमेशृणु २९ प्रोक्तंतद्व्यक्तमित्येवजायतेवर्धतेचयत् ॥ जीर्यतेम्रियतेचैवचतुर्भिर्लक्षणैर्युतम् ३० विपरीतमतोयत्तुतदव्यक्तमुदाहृतम् ॥ द्वावात्मानौचवेदेषुसिद्धांतेष्वप्युदाहृतौ ३१ चतुर्लक्षणजंत्वाद्यंचतुर्वर्गंप्रचक्षते ॥ व्यक्तमव्यक्तजंचैवतथाबुद्धमचेतनम् ॥ सत्त्वंक्षेत्रज्ञइत्येतद्द्वयमप्यनुदर्शितम् ३२ द्वावात्मानौचवेदेषुविषयेष्वनुरज्यतः ॥ विषयात्प्रतिसंहारःसांख्यानांविद्धिलक्षणम् ३३ निर्ममश्चानहंकारोनिर्द्वंद्वश्छिन्नसंशयः ॥ नैवक्रुद्ध्यतिनद्वेष्टिनानृताभाषतेगिरः ३४ आक्रुष्टस्ताडितश्चैवमैत्रेणध्यातिनाशुभम् ॥ वाग्दंडकर्ममनसांत्रयाणांचनिवर्तकः ३५ समःसर्वेषुभूतेषुब्रह्माणमभिवर्तते ॥ नैवेच्छतिनचानिच्छोयात्रामात्रव्यवस्थितः ३६ अलोलुपोऽव्यथोदांतोनकृतीननिराकृतिः ॥ नास्येंद्रियमनेकाग्रंनाविक्षिप्तमनोरथः ३७ सर्वभूतसदृङ्मैत्रःसमलोष्टाश्मकांचनः ॥ तुल्यप्रियाप्रियोधीरस्तुल्यनिंदात्मसंस्तुतिः ३८ अस्पृहःसर्वकामेभ्योब्रह्मचर्येदृढव्रतः ॥ अहिंस्रःसर्वभूतानामीदृक्सांख्योविमुच्यते ३९

ख्यानात् । यद्यपितृतीययाकरणत्वेननिर्दिष्टस्याचेतनस्यसत्त्वस्यभोक्तृत्वंनघटतेनाप्युपद्रष्टुःक्षेत्रज्ञस्यनिर्विकारस्यतथाऽपितयोरन्यःपिप्पलंस्वाद्वत्तीतिसत्त्वस्यभोक्तृत्वश्रुत्यन्यथानुपपत्त्याचै तन्यानुविद्धस्यवक्तव्यं । 'यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन् ॥ उपाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवमजोऽयमात्मा'इतिश्रुत्यंतराच्च एतद्द्वयंजीवेश्वरविभागे प्रकारद्वयमपिदर्शितंश्रुत्या ३२ अनयोःपक्षयोःक्रमेणमुक्तामुक्तद्विभेदेनव्यवस्थामाह द्वाविति विषयाद्द्व्यादिविषयमारभ्यप्रतिसंहारउत्पत्तिक्रमवैपरीत्येनसंप्रविलापनंकर्तव्यमितिसांख्या नामौपनिषदानालक्ष्यतेनेऽनेतिलक्षणंशास्त्रं अयमर्थः । मूढानांतात्त्विकएवजीवेश्वरादिभेदोबुद्धानांतुबिंबप्रतिबिंबभावेनेतिप्रतिबिंबोपाधेःसत्त्वस्यप्रविलयेचिन्मात्रमेवशिष्यतइति ३३ एवंज्ञाततत्त्वस्यजीवन्मुक्तस्यलक्षणान्याह निर्ममइत्यादिना ३४ ध्यातिध्यायति वाग्दंडःपारुष्यं कर्मताडनमेवहिंस्रं तथामनोऽपिपरानिष्टार्थितेषां ३५ ब्रह्माणंचतुर्मुखम् ३६ कृतीकार्यवान् निराकृतिस्तुच्छवेषः नाविक्षिप्तःसंपादितोमनोरथोयस्यसतथानभवतिसत्यसंकल्पइत्यर्थः ३७ । ३८ । ३९

योगमतेविशेषंवकुंप्रतिजानीते यथेति योगैश्वर्यमणिमादिपरमार्थभूतंसदतिक्रांतः स्वदुर्लंघ्यमतःपरवैराग्यबलेनमतुतत्त्वज्ञानबलेनानृतंसत्सांख्यइवशुक्तिरजतबद्बाधितवान्निष्काममतिर्वृत्तिसारू प्यादपसरतिनतुवृत्तिमूलज्ञानमुच्छिनत्ति अयमर्थः । अस्माकंमिथ्याज्ञानोद्भवोदेहेंद्रियादिःप्रपंचोऽविद्याज्ञानबाधेसतिबाध्यतेरज्जूरगादिवत् । योगानांतुसत्यात्प्रधानतउत्पन्नःप्रपंचः सत्यस्तदाकाराश्चित्तस्यवृत्तयोऽपिसत्याः वृत्तिसारूप्यंचचैतन्यस्यसत्यमेव तत्रवृत्तीनांनिरोधेचितस्तदाकारताऽपिनिवर्तते तथाचसूत्रितं । योगश्चित्तवृत्तिनिरोधस्तदाद्रष्टुःस्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्रेति । सोऽयंसांख्ययोगयोर्विशेषोयथाप्रतिज्ञमुपपादितः ४० उपसंहरति इतीति । भावीवस्तुविवक्षातद्विशेषजाबुद्धिः फलतस्तुनतयोर्भेदोऽस्तीतिभावः । यथोक्तंभगवता 'यत्सांख्यैःप्राप्यतेस्थानंतद्योगैरपिगम्यते ॥ एकंसांख्यंचयोगंचयःपश्यतिसपश्यति'इति ब्रह्माणंपरंब्रह्म पुंस्त्वमार्षं ४१ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारत भावदीपेषट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥ सांख्ययोगपक्षयोर्मध्येसांख्यमेवश्रेयइत्याह अथेति शास्त्राचार्योपदेशजंपरोक्षज्ञानरूपंप्लवंसंसारसमुद्रतरणसाधनंगृहीत्वाधी रोध्यानवानात्मनःशांतिंमोक्षहेतुंज्ञानमेवाश्रयेत् । 'तमेवधीरोविज्ञायप्रज्ञांकुर्वीतब्राह्मणः'इतिश्रुतेर्ज्ञानंशास्त्रतःसंपाद्यतन्निष्ठोभवेदित्यर्थः १ अत्रज्ञानशब्दार्थंपृच्छति किमिति तत्संश्रयणीयंज्ञानं किंविद्यारज्जूरगादिन्यायेनाविद्यामात्रनिरासेनवस्तुतत्त्वज्ञापिकाधीवृत्तिंवाभूवेउतप्रवृत्तिलक्षणोध्यानेनकीटभृंगवद्ध्येयसारूप्यप्रापकोधर्मइतिवाआत्मोच्छेदलक्षणाशून्यवादिलौकायतिकयोःसं

यथायोगाद्विमुच्यंतेकारणैर्यैर्निबोधतत् ॥ योगैश्वर्यमतिक्रांतोयोनिष्क्रामतिमुच्यते ४० इत्येपाभावजाबुद्धिःकथितातेनसंशयः ॥ एवंभवतिनिर्द्वंद्वोब्रह्माणंचा धिगच्छति ४१ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्नेषट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥ ॥ ६ ॥ ॥ व्यासउवाच ॥ अथज्ञानप्लवंधीरोगृहीत्वाशांतिमात्मनः ॥ उन्मज्जंश्चनिमज्जंश्चज्ञानमेवाभिसंश्रयेत् १ ॥ शुकउवाच ॥ किंतज्ज्ञानमथोविद्यायथानिस्तरतेद्वयम् ॥ प्रवृत्तिलक्षणोधर्मोनिवृत्तिरितिवावद २ ॥ व्यासउवाच ॥ यस्तुपश्यन्स्वभावेनविनाभावमचेतनः ॥ पुष्यतेचपुनःसर्वान्प्रज्ञयामुक्तहेतुकान् ३ येषांचै कांतभावेनस्वभावात्कारणंमतम् ॥ पूत्वात्तृणमिषीकांवातेलभंतेनकिंचन ४

मतानिवृत्तिरितिवातद्वद । यथायेनप्रकारेणद्वयंजन्ममरणादिनिस्तरतेतथावदेति २ अत्राहमित्यनुभवेजडोऽहंकारस्तत्प्रकाशश्चमयेतेतदुभयमात्मेतिप्राभाकराः । अहमर्थएवात्माप्रकाशस्तस्यगुणः सचक्षणिकावस्थायीतितार्किकाः । नित्यप्रकाशएवात्माऽहमर्थोऽनात्मेतिसांख्याः । तत्राप्यात्मानात्मानौद्वावपिवास्तवाविति वहवः । अनात्मेवस्थिरश्चिदात्मातुदेहनाशेनश्यतीतिलौकाय तिकाः । आत्मैवसत्योऽनात्मामृषेतिवेदांतवादाः । द्वयमपिनास्तीतिशून्यवादिनः । एवमात्माभावेतातिज्ञानानर्थक्यंस्यादित्यर्थंतावद्दूषयति यस्त्विति यस्तुभावमधिष्ठानसत्तांविनास्वभावेनैवाहं कारादिकंस्वरूपेणैवभातीतिपश्यन्निरधिष्ठानकांस्वाभाविकींजगत्प्रतीतिंवदन्सर्वान्शिष्यान्प्रज्ञयायुक्ताऊहापोहकौशलेनरहिताः हेतवोयुक्तयोयेषांतान्निर्बुद्धीनित्यर्थः । प्रज्ञयेतितृतीयायाआ र्षोऽलुक् पुष्यतेपुष्णातितादृशेनबोधेनरंजयति । अचेतनोमूढःसनकिंचनतत्त्वंलभतेइत्युत्तरेणान्वयः । निरधिष्ठानकभ्रमासंभवात्शून्यवादोऽप्ययंहेयइतिभावः ३ एवंनैरात्म्यवादंदूषयि त्वाऽऽत्मोच्छेदवादंलौकायतमतंदूषयति येषामिति । येषांलौकायतानामेकांतभावेनदृढत्वेनस्वभावादेवक्षीरादिकंदध्यादिभावेनकारणंस्वीशादयाद्यनुग्रहादीशादिसत्त्वेप्रमाणाभावात्प्रत्यक्षेणच तेषामदृष्टत्वादितिमतं । तेकिंतृणंमुंजंपूत्वासंशोध्यतदंतर्गतांप्रागदृष्टामिषीकामपिकिंचानलभंतेइतिकाकादृष्टविरुद्धवादित्वंतेषामुक्तं । चनशब्दोऽप्यर्थोभिन्नक्रमश्च । नह्यदर्शनमात्रेण-



वस्त्वभावोनिश्चेतुंशक्यःमुंजांतस्थेषीकायाअप्यसत्त्वापत्तेः । श्रुतिश्चमुंजेषीकादृष्टांतेनैवदेहादन्यमात्मानमाह । तंस्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकांधैर्येणेति । पूत्वानुणामृषीणांवेति पाठेश्रवणपूर्वकंकिंचित्तत्त्वंनलभंतेऽपितुस्वपमेवानुपासिताचार्याइत्यंकल्पयंतीत्यर्थः ४ स्वभावादेवशून्येजगत्प्रातिःस्वभावादेवचदेहाद्युत्पत्तिरितिपक्षद्वयमप्यनर्थकमित्याह येचेति ५ त द्वेवदूषयति स्वभावोहीति मोहकार्यंयन्मनस्तद्भवः मूढैर्मनसाकल्पितइत्यर्थः । स्वस्यैवभावःसत्ताकारणमितिएकःपक्षः परितःस्वस्येतरेषांचभावःकारणमित्यन्यः । एतयोस्वभावप रिभावयोर्निरुक्तंनिर्वचनंतत्स्वमेतद्वक्ष्यमाणंशृण्वितिशेषः ६ स्वभावादेवक्षीरदधिन्यायेनसर्वोत्पत्तौकृष्यादिर्यत्नःप्रज्ञाकौशलंचानर्थकंस्यादित्याह कृष्यादीत्यादिना ७ गदानांरोगाणां

येचैनंपक्षमाश्रित्यनिवर्तंत्यल्पमेधसः ॥ स्वभावंकारणंज्ञात्वानश्रेयःप्राप्नुवंतिते ५ स्वभावोहिविनाशायमोहकर्ममनोभवः ॥ निरुक्तमेतयोरेतत्स्वभावपरिभाव योः ६ कृष्यादीनीहकर्माणिसस्यसंहरणानिच ॥ प्रज्ञावद्भिःप्रकॢप्तानियानासनगृहाणिच ७ आक्रीडानांगृहाणांचगदानामगदस्यच ॥ प्रज्ञावंतःप्रयोक्तारोज्ञान वद्भिरनुष्ठिताः ८ प्रज्ञासंयोजयत्यर्थैःप्रज्ञाश्रेयोऽधिगच्छति ॥ राजानोभुंजतेराज्यंप्रज्ञयातुल्यलक्षणाः ९ परावरंतुभूतानांज्ञानेनैवोपलभ्यते ॥ विद्ययातात सृष्टानांविद्यैवेहपरागतिः १० भूतानांजन्मसर्वेषांविविधानांचतुर्विधम् ॥ जरायुजांडजोद्भिज्जस्वेदजंचोपलक्षयेत् ११ स्थावरेभ्योविशिष्टानिजंगमान्युपधारयेत् ॥ उपपन्नंहियच्चेष्टाविशिष्येतविशेष्यया १२ आहुर्वैबहुपादानिजंगमानिद्वयानितु ॥ बहुपाद्भ्योविशिष्टानिद्विपादानिबहून्यपि १३ द्विपदानिद्वयान्याहुःपार्थिवानी तराणिच ॥ पार्थिवानिविशिष्टानितानिह्यन्नानिभुंजते १४ पार्थिवानिद्वयान्याहुर्मध्यमान्युत्तमानितु ॥ मध्यमानिविशिष्टानिजातिधर्मोपधारणात् १५ मध्यमानि द्वयान्याहुर्धर्मज्ञानीतराणिच ॥ धर्मज्ञानिविशिष्टानिकार्याकार्योपधारणात् १६ धर्मज्ञानिद्वयान्याहुर्वेदज्ञानीतराणिच ॥ वेदज्ञानिविशिष्टानिवेदोह्येषुप्रतिष्ठितः १७ वेदज्ञानिद्वयान्याहुःप्रवक्तॄणीतराणिच ॥ प्रवक्तॄणिविशिष्टानिसर्वधर्मोपधारणात् १८ विज्ञायंतेहियैर्वेदाःसधर्माःसक्रियाफलाः ॥ सधर्मानिखिलावेदाः प्रवक्तृभ्योविनिःसृताः १९ प्रवक्तॄणिद्वयान्याहुरात्मज्ञानीतराणिच ॥ आत्मज्ञानिविशिष्टानिजन्माजन्मोपधारणात् २० धर्मद्वयंहियोवेदससर्वज्ञःससर्ववित् ॥ सत्यागीसत्यसंकल्पःसत्यःशुचिरथेश्वरः २१ ब्रह्मज्ञानप्रतिष्ठंहितंदेवाब्राह्मणंविदुः ॥ शब्दब्रह्मणिनिष्णातंपरेचकृतनिश्चयम् २२

अगदस्यौषधस्य अनुष्ठिताःप्रयोजिताः ८ तुल्यलक्षणाःप्रज्ञाधिक्यावैश्वर्याधिक्यभाजः ९ भूतानांपररूपंचिदात्मा अवरंमायातदुभयंज्ञानेनधीवृत्त्यैवबाध्याबाध्यरूपयोपलभ्यतेज्ञायते विद्ययाधीवृत्त्या परागतिर्लयस्थानं १० एवंधीमयौसृष्टिप्रलयावुक्त्वाव्यावहारिकींतावाहविद्वत्प्रशंसार्थं भूतानामिति जरायुजंमनुष्यपश्वादि । अंडजंपक्षिसर्पादि । उद्भिज्जंतृणवन स्पत्यादि । स्वेदजंयूकालिक्षादि ११ यद्यस्माद्विशेष्यविशेषंकृत्वायाचेष्टासाविशिष्येतविशिष्टंकुर्यात् । वृक्षादीनांपूर्वोक्तरीत्यादर्शनादिमत्त्वेऽपिप्रत्यक्षेणदर्शनादिमंतोजंगमास्ततः श्रेष्ठाइत्यर्थः १२ । १३ पार्थिवानिपृथिवीचराणिमानुषाणि इतराणिखेचराणि १४ । १५ उत्तमानिनिर्णेतुंमध्यमेष्वेवावांतरतारतम्यमाह मध्यमानीत्यादिनाआत्मज्ञानिविशि ष्टानीत्यंतेन १६ । १७ । १८ । १९ । २० धर्मद्वयंप्रवृत्तिनिवृत्तिरूपम् २१ तत्रापिब्रह्मज्ञानेप्रतिष्ठासमाधिर्यस्यनतुप्रवृत्तिपर्यंतं शब्दब्रह्मणिवेदशास्त्रे २२

अंतस्थंपरचितस्थं बहिष्ठंव्यवहितादि तेज्ञानान्विताद्विजादेवाश्च अन्येनामब्राह्मणाअसुराश्चेत्यर्थः २३ । २४ । २५ ॥ इति शांतिपर्वणि मोक्ष० नीलकंठीये भारतभावदीपे सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥ आत्मज्ञानंविनाकर्मापिकृतमंतवदेवभवति । 'योवाएतदक्षरंगार्ग्यविदित्वाऽस्मिँल्लोकेयजतिददातितपस्तप्यतेऽपिबहूनिवर्षसहस्राण्यंतवदेवास्यभवति'इति श्रुतेः । अतआत्मानंजिज्ञासुंज्ञात्वातत्प्राप्त्यर्थंकर्माणिकुर्वीत विविदिषंतियज्ञेनेत्यादिश्रुतेरित्याह एषेति वृत्तिर्वर्तनं पूर्वतरानित्या एषनित्योमहिमाब्राह्मणस्येतिश्रुतेः १ तत्रकर्मणिसंशयश्चेन्नभवेत्तर्हिकर्मकृतंसत्सिद्धयेभवति संशयस्वरूपंविवृणोति किंस्विति किंकर्मस्वभावोनित्यमेवोतज्ञानंज्ञानजनकत्वेनकर्मकाम्यंवेत्यर्थः । नित्यंचेन्नकाम्यंस्यात्काम्यंचेन्नतदकरणेप्रत्यवायःस्यादितिभावः २ तत्रतस्मिन्संशयेसति पुरुषंप्रतिब्रह्मोद्देशेनज्ञानंज्ञानजनकंचेत्कर्मस्यात्तर्हिसएववेदविधिर्नित्यविधिरित्यात् । आत्मविविदिषार्थैरपिकर्मभिर्नित्यप्रयोगस्यापिसिद्धिरस्तीत्यर्थः । अत्रहेतुद्वयमुपपत्तेरुपलब्धेश्चेति यथाकाम्योऽपिदारसंग्रहःक्रत्वर्थोऽपिभवति । नहिकामार्थमन्याश्चीकृत्वर्थमन्याश्चीपरिणेयेत्युपपद्यते । उपलभ्यतेचसंयोगपृथक्त्वन्यायेननित्यस्यापिखादिरत्वादेःकाम्यत्वंतच्चोदाहृतं तत्कर्मणामुभयार्थत्वेनप्राधान्यंवर्णयिष्याम्यहंत्वंशृणु ३ स्वभाववादनिरासमुपक्रांतमुपसंहरिष्यन्मतांतराण्युपन्यस्यति केचिदिति

अंतस्थंचबहिष्ठंचसाधियज्ञाधिदैवतम् ॥ ज्ञानान्विताहिपश्यंतितेदेवास्तातवेद्विजाः २३ तेषुविश्वमिदंभूतंसर्वंचजगदाहितम् ॥ तेषांमाहात्म्यभावस्यसदृशं नास्तिकिंचन २४ आद्यंतेनिधनंचैवकर्मचातीत्यसर्वशः ॥ चतुर्विधस्यभूतस्यसर्वस्येशाःस्वयंभुवः २५ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्नेसप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥ व्यासउवाच ॥ एषापूर्वतरावृत्तिर्ब्राह्मणस्यविधीयते ॥ ज्ञानवानेवकर्माणिकुर्वन्सर्वत्रसिद्ध्यति १ तत्रचेन्नभवेदेवंसंशयःकर्मसिद्धये ॥ किंतुकर्मस्वभावोऽयंज्ञानंकर्मेतिवापुनः २ तत्रवेदविधिःस्यात्ज्ञानंचेत्पुरुषंप्रति ॥ उपपत्त्युपलब्धिभ्यांवर्णयिष्यामितच्छृणु ३ पौरुषंकारणंकेचिदाहुःकर्मसुमानवाः ॥ दैवमेकेप्रशंसंतिस्वभावमपरेजनाः ४ पौरुषंकर्मदैवंचकालवृत्तिस्वभावतः ॥ त्रयमेतत्पृथग्भूतमविवेकंतुकेचन ५ एतदेवंचनैवंचनचोभेनानुभेतथा ॥ कर्मस्थाविषयंब्रूयुःसत्वस्थाःसमदर्शिनः ६ त्रेतायांद्वापरेचैवकलिजाश्चससंशयाः ॥ तपस्विनःप्रशांताश्चसत्वस्थाश्चकृतेयुगे ७

पौरुषमिहजन्मांतरेवाकृतंकर्म दैवंग्रहाःकालइतियावत् स्वभावःस्वरूपमात्रं ४ इतिक्रमेणमीमांसकस्यदैवज्ञस्यशून्यवादिलोकायतयोश्चमतान्युपन्यस्यैतेषांविकल्पसमुच्चयावाह पौरुषमिति पौरुषंदैवंचकर्मदृष्टादृष्टफलंस्वभावमनुसृत्यकर्मकालोफलदावित्यर्थः । अविवेकंसमुच्चयं पृथग्भूतमेकमेवप्रधानं नत्वितरावित्यर्थः ५ आर्हतमतमाह एतदिति चैवंस्यादस्ति । स्यान्नास्ति । स्यादस्तिचनास्तिच । स्यादस्तिचावक्तव्यः । स्यान्नास्तिचावक्तव्यः । स्यादस्तिचनास्तिचावक्तव्यः । स्यादवक्तव्य इतिसप्तभंगीनयःसर्वत्रयोज्यते । अतएतदेवमितिस्यादस्तीत्युक्तं । चापएतन्नएवंचनेतिसंबंधेनस्यान्नास्तिस्यादवक्तव्यइतिचोक्तं । नचोभेइत्यनेनस्यादस्तिचनास्तिचस्यादस्तिचनास्तिचावक्तव्यइतिचोक्तं । नानुभेइतिस्यादस्तिचावक्तव्यःस्यान्नास्तिचावक्तव्यइतिचोक्तं । कर्मस्थाआर्हताविषयंघटादिएतदेवमस्तीत्यादिब्रूयुरितिसंबंधः । एतेषुपक्षेषुकृतहानाकृताभ्यागमप्रसंगात्स्वभावमात्रपक्षस्तुच्छः । बंधमोक्षादिवस्तुमात्रस्वरूपस्यास्तिनास्तीत्यादिविकल्पग्रस्तत्वेनानवधारणात्मकआर्हतपक्षोऽपितुच्छएव । परिशेषात्समुच्चयपक्षएवश्रेयान्व्यवहारे । परमार्थस्तुसत्वस्थायोगिनःसमदर्शिनोब्रह्मैवकारणत्वेनपश्यंति ६ त्रेतायामिति पापानुवेधादेवात्रश्रौतेष्वपिसंशयोभवतीत्यर्थः प्रशांताःनिःसंशयाः ७

अपृथगिति वेदत्रयेऽपिभिन्नमपश्यंतःकामादीन्पृथक्कृत्यतपोज्ञानमुपासतेश्रयंति ८ अतोज्ञातारमेवस्तौति तपइति ९ यद्भूत्वाब्रह्मभूत्वातद्भूतोब्रह्मभूतः १० किंतज्ज्ञानमितिज्ञानशब्देनविद्यावाकर्मजोऽतिशयोवाआत्मनाशोवेतिपृष्टं । तत्रांत्यःस्वभाववादनिरासेननिरस्तः । आद्येप्रमाणंप्रदर्शयन्मध्यमंनिरस्यति तदिति तद्ब्रह्मवेदवादेषुकर्मकांडेष्वपिप्रस्तावादिदेवतात्वेनोक्तंतथापिगहनमज्ञातमेवतत्रवेददार्शिभिरपि । वेदांतेषुतुतदेवपुनर्विधिकप्राप्यंब्रह्मव्यक्तमुक्तं । कर्मयोगेभावनाख्यात्मकेयोगेतन्नलक्ष्यते । नह्युपासनयाकीटभृंगन्यायेनब्रह्मभावस्यप्राप्यत्वंवक्तुंयुक्तं जन्यत्वेनानित्यत्वापातादित्यर्थः ११ प्रमेयसिद्धयर्थंब्रह्मणिप्रमाणमुक्त्वेदंस्तौति आलंभेत्यादिना १२ । १३ । १४ । १५ । १६ स्वधर्मस्थाआश्रमाविक्रियंतेभूतकाष्ठपावनकतुजन्यपुण्यसमर्पणादिना १७ वर्षतिपुष्णाति अंगानियोगांगानियमादीनि वेदाध्यायिनंपुष्यंतीत्यर्थः १८ कालनानात्वंकालोजीवस्तस्यनानात्वंकृतत्रेतादिरूपेण तथाहि । सत्कर्मपराङ्मुखःशयानःपुरुषःकलिरित्युच्यते । अधर्मंहातुमिच्छन्संजिहानोद्वापरः । धर्ममनुष्ठातुमुद्युक्तउत्तिष्ठंस्त्रेता । धर्मंचरन्कृतंभवति तथाचश्रुतिः । 'कलिःशयानोभवतिसंजिहानस्तुद्वापरः ॥ उत्तिष्ठंस्त्रेताभवति

अपृथग्दर्शनाःसर्वेंऋक्सामसुयजुःषुच ॥ कामद्वेषौपृथक्कृत्वातपःकृतउपासते ८ तपोधर्मेणसंयुक्तस्तपोनित्यःसुसंशितः ॥ तेनसर्वानवाप्नोतिकामान्यान्मनसेच्छति ९ तपसातदवाप्नोतियद्भूत्वासृजतेजगत् ॥ तद्भूतश्चततःसर्वभूतानांभवतिप्रभुः १० तदुक्तंवेदवादेषुगहनंवेददर्शिभिः ॥ वेदांतेषुपुनर्व्यक्तंकर्मयोगेनलक्ष्यते ११ आलंभयज्ञाःक्षत्राश्चहविर्यज्ञाविशःस्मृताः ॥ परिचारयज्ञाःशूद्राश्चजपयज्ञाद्विजातयः १२ परिनिष्ठितकार्योहिस्वाध्यायेनद्विजोभवेत् ॥ कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते १३ त्रेतादौकेवलावेदायज्ञावर्णाश्रमास्तथा ॥ संरोधादायुषस्त्वेतेव्यस्यंतेद्वापरेयुगे १४ द्वापरेविप्लवंयांतिवेदाःकलियुगेतथा ॥ दृश्यंतेनापिदृश्यंतेकलेरंतेपुनःकिल १५ उत्सीदंतिस्वधर्माश्चतत्राधर्मेणपीडिताः ॥ गवांभूमेश्चयेचापामोषधीनांचयेरसाः १६ अधर्मांतर्हितावेदावेदधर्मास्तथाऽऽश्रमाः ॥ विक्रियंतेस्वधर्मस्थाःस्थावराणिचराणिच १७ यथासर्वाणिभूतानिवृष्टिर्भौमानिवर्षति ॥ सृजतेसर्वतोंगानितथावेदायुगेयुगे १८ निश्चितंकालनानात्वमनादिनिधनंचयत् ॥ कीर्तितंयत्पुरस्तान्मेसूतेयच्चात्तिचप्रजाः १९ यच्चेदंप्रभवःस्थानंभूतानांसंयमोयमः ॥ स्वभावेनैववर्तंतेद्वंद्वसृष्टानिभूरिशः २० सर्गःकालोधृतिर्वेदाःकर्ताकार्यंक्रियाफलम् ॥ एतत्तेकथितंतातयन्मांत्वंपरिपृच्छसि २१ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥ भीष्मउवाच ॥ इत्युक्तोऽभिप्रशस्यैतत्परमर्षेस्तुशासनम् ॥ मोक्षधर्मार्थसंयुक्तमिदंप्रष्टुंप्रचक्रमे १ ॥ शुकउवाच ॥ प्रज्ञावान्श्रोत्रियोयज्वाकृतप्रज्ञोऽनसूयकः ॥ अनागतमनैतिह्यंकथंब्रह्माधिगच्छति २

कृतंसंपद्यतेचरन्'इति । सएषकालोऽनादिनिधनःप्रजाःसूतेऽत्तिचेतिजीवस्यतत्पदार्थभेदउक्तः १९ यच्चेदंकालाख्यं भूतानांप्रभवउत्पत्तिः स्थानंपोषणं संयमःप्रलयः यमोनियंतांतर्यामी यत्रवर्ततेभूतानिस्वभावेनब्रह्मभावेनमतुविकृतेनरूपेण २० कालएवसर्गादिकं तेनज्ञानंनामविद्यैवप्रतीचोऽज्ञानकृतजीवत्वबाधेनब्रह्मभावप्रकाशिकानत्वात्मन्यतिशयआत्मोच्छेदोवेत्यध्यायद्वयेनस्पष्टीकृतम् २१ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपे अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥ एवंज्ञानपदार्थव्याख्यानप्रसंगादात्मनोऽनाधेयातिशयत्वमुक्तं तच्चनकर्त्रात्मपक्षेउच्छेदपक्षेवायुज्यते । अतःपरिशेषादसंगात्मवादिनोःसांख्ययोगयोरेवव्यवतिष्ठतइतितयोरेवविभागार्थमध्यायद्वयमारभ्यते इत्युक्तइत्यादि १ अनागतंप्रत्यक्षानुमानाभ्यामज्ञातं । अनैतिह्यंयूपाहवनीयादिवदलौकिकमपीदमित्थमितिवेदेनापिअनिर्देश्यं २

३ यथायत्प्रकारकमैकाग्र्यं ४ विद्यादिपदैः क्रमेणाश्रमचतुष्टयधर्मा उक्ताः ५ स्वयंभुवईश्वरस्यमहाभूतानिपूर्वसृष्टिः । तानिचप्राणभृद्ग्रामेजीवसंवेशशरीरेषुशरीराभिमानिषुमूढजीवेषुभूयिष्ठंनिविष्टानि । तैरात्मत्वेनगृहीतानीत्यर्थः पृथक्सृष्टिरितिपाठेभौतिकसृष्टेःपृथगेवभूतसृष्टिस्ततःप्राचीनत्वादितिसएवार्थः ६ खेषुनासादिरंध्रेषु ७ योगमतेआत्माभोक्तैवनतुकर्त्ता सांख्यमतेतुनभोक्तानापिकर्त्तेति तत्राद्यंदूषयन्पुत्तरस्यैवसिद्धांतत्वंज्ञापयितुं क्रांतेइति क्रांतेपादेंद्रियेबलेपाणींद्रियेचाविष्णुशक्रौतत्प्रयोक्तारौतिष्ठतः । भटाइवराजकीयरथशकटादौ । तत्रयथाभटगतंजयपराजयादिरथगतंह्रासवृद्ध्यादिचराजाआत्मन्यभिमानादध्यारोपयतितद्वविदात्मादेवतेंद्रियगतंभोक्तृत्वखंजत्वादिकमविद्ययात्वस्मिन्नारोपयत्यहंभोग्यहंखंजइति । यथाचपराजयोनभृत्येतदभिमानाभावादेवंभोगोऽपिविष्ण्वादीनास्ति । आत्मनिरविद्ययैवतद्भावनमितिसिद्धमात्मनोऽकर्तृत्वमभोक्तृत्वंच । नन्वात्मैवकर्त्ताभोक्ताचास्तुकिमंतर्गडुभिर्विष्ण्वादिभिरितिचेन्न अनिर्मोक्षापत्तेः । स्वाभाविकत्यकर्तृत्वादेर्वह्न्यौष्ण्यवदाश्रयनाशमंतरेणनाशायोगाच्च कर्णौस्थानं श्रोत्रमिंद्रियं दिशोदेवताः । जिह्वास्थानं वागिंद्रियं सरस्वतीदेवता । एतच्चान्ये

तपसाब्रह्मचर्येणसर्वत्यागेनमेधया ॥ सांख्येवायदिवायोगएतत्पृष्टोवदस्वमे ३ मनसश्चेंद्रियाणांचयथैकाग्र्यमवाप्यते ॥ येनोपायेनपुरुषैस्तत्त्वंव्याख्यातुमर्हसि ४ ॥ व्यासउवाच ॥ नान्यत्रविद्यातपसोर्नान्यत्रेंद्रियनिग्रहात् ॥ नान्यत्रसर्वसंत्यागात्सिद्धिंविंदतिकश्चन ५ महाभूतानिसर्वाणिपूर्वसृष्टिःस्वयंभुवः ॥ भूयिष्ठं प्राणभृद्ग्रामेनिविष्टानिशरीरिषु ६ भूमेर्देहोजलात्स्नेहोज्योतिषश्चक्षुषीस्मृते ॥ प्राणापानाश्रयोवायुःखेष्वाकाशंशरीरिणाम् ७ क्रांतेविष्णुर्बलेशक्रःकोष्ठेऽग्निर्भोक्तुमिच्छति ॥ कर्णयोःप्रदिशःश्रोत्रंजिह्वायांवाक्सरस्वती ८ कर्णौत्वक्चक्षुषीजिह्वानासिकाचैवपंचमी ॥ दर्शनीयेंद्रियोक्तानिद्वाराण्याहारसिद्धये ९ शब्दःस्पर्शस्तथारूपंरसोगंधश्चपंचमः ॥ इंद्रियार्थान्पृथग्विद्यादिंद्रियेभ्यस्तुनित्यदा १० इंद्रियाणिमनोयुंक्तेवश्यान्यंतेववाजिनः ॥ मनश्चापिसदायुंक्तेभूतात्माहृदयाश्रितः ११ इंद्रियाणांतथैवैषांसर्वेषामीश्वरंमनः ॥ नियमेचविसर्गेचभूतात्मामानसस्तथा १२ इंद्रियाणींद्रियार्थाश्चस्वभावश्चेतनामनः ॥ प्राणापानौचजीवश्चनित्यंदेहेषुदेहिनाम् १३ आश्रयोनास्तिसत्वस्यगुणाःशब्दोनचेतना ॥ सत्वंहितेजःसृजतिनगुणान्वैकथंचन १४

पाणिस्थानादीनामुपलक्षणं ८ दर्शयंतितानिदर्शनीयानि कर्त्तरिकृत्यः तानिचतानींद्रियाणिचेतिसमासः विभक्तिलोपआर्षः आहारःशब्दादिग्रहः ९ इंद्रियेभ्यएवेंद्रियार्थान्भूर्मौगवत्पृथग्भूतान्विद्यात् १० मनःकर्तृयंतासारथिः भूतात्माबुद्ध्युपाधिर्जीवः ११ एषांशब्दादीनां ईश्वरमुत्पत्तिस्थितिलयहेतुः नियमेसंहारे विसर्गेसृष्टौ १२ इंद्रियार्थाघटादयः स्वभावःशीतोष्णादिधर्मः चेतनाधीवृत्तिः देहेबुद्धत्वगुहायामेववर्त्तंते स्वप्नइवकर्मोदयेतत्रवाविर्भवंतीत्यर्थः १३ ननुदेहस्यापींद्रियार्थत्वाद्देहांतर्मनबुद्धौस्थितिःस्वस्कंधारोहणन्यायमनुसरतीत्याह आश्रयइति सत्वस्यबुद्धेराश्रयोयःप्राग्उक्तोदेहःसोऽपिनास्ति स्वाप्नदेहवत्तस्यापिप्रतिभानमात्रत्वात् । कस्तर्हिसत्वस्याश्रयःकिंचतस्यरूपमतआह गुणाइति त्रिगुणात्मिकामूलप्रकृतिरेवस्वविकारस्यवाचारंभणंविकारोनामधेयमितिश्रुतेःशब्दमात्रस्वरूपस्यसत्वस्याश्रयइत्यर्थः नतुचेतनासत्वस्याश्रयःस्वरूपंवा असंगत्वादविकारत्वाच्च । ननुगुणाबुद्धेरेवधर्माःसंतु तथाचसात्विकोऽयंराजसोऽयमितितेषांतदुपाधिकेपुरुषेव्यपदेशोयुज्यतइत्याशंक्याह सत्वंहीति तेजोवासनासत्वंसृजतिनतुगुणान् अनादिवासनाहिसत्वस्यकारणंसाचत्रिगुणात्मिकेतिमत्सत्वकार्यत्वंगुणानांघटते सात्विकोयमित्यादिर्व्यपदेशस्तुपरंपरयाऽपियुज्यतइतिभावः १४ 

सप्तदशंचिदात्मानं षोडशभिःपंचेंद्रियाणिपंचेंद्रियार्थाःस्वभावादयश्चषट्तैः मनीषीमनोनिग्रहशीलः आत्मनिबुद्धौ १५ । १६ अशरीरंस्थूलसूक्ष्मकारणशरीररहितं १७ मर्त्येषुमरणधर्मवत्सुअनुपश्यतिगुरुवेदवाक्यमनु ब्रह्मभूयसेनिर्विशेषब्रह्मभावाय १८ अभिजनःशिष्यकुलादिः सर्वंब्रह्मैवपश्यंतितेसमदर्शिनः १९ एतदेवप्रसिद्धिविषयाआह सहीति ध्रुवेषुस्थावरेषु २० योगफलमाह सर्वभूतेष्विति संप्रज्ञातेसोपाधिकावस्थायांसर्वभूतेष्वात्मानमनुस्यूतंपश्यति अहमेवेदंसर्वोऽस्मीत्यनुभवतीत्यर्थः । आत्मनिनिष्कलेअसंप्रज्ञातावस्थायांसर्वभूतान्यात्मन्येवविलीनानिपश्यति । तत्केनकंपश्येदितिश्रुतेः । तथाचाद्विविधाब्रह्मभावकोभवति सचोक्तः । 'सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते ॥ सोपाधिकःस्यात्सर्वात्मानिरुपाख्योऽनुपाधिकः'इति २१ वेदस्यआत्माशब्दःसआत्मनिस्वस्वरूपेयावान्देशतःकालतश्चयावत्प्रमाणोऽस्तितावानात्माजीवःसर्वोऽपि वाचोविषयआत्मेत्यर्थः सचपरात्मन्यधिष्ठानेस्वस्व

एवंसप्तदशंदेहेवृतंषोडशभिर्गुणैः ॥ मनीषीमनसाविप्रःपश्यत्यात्मानमात्मनि १५ नह्ययंचक्षुषादृश्योनचसर्वैरपींद्रियैः ॥ मनसातुप्रदीपेनमहानात्माप्रकाशते १६ अशब्दस्पर्शरूपंतदरसागंधमव्ययम् ॥ अशरीरंशरीरेषुनिरीक्षेतनिरिंद्रियम् १७ अव्यक्तंसर्वदेहेषुमर्त्येषुपरमाश्रितम् ॥ योऽनुपश्यतिसप्रेत्यकल्पतेब्रह्मभूयसे १८ विद्याभिजनसंपन्नेब्राह्मणेगविहस्तिनि ॥ शुनिचैवश्वपाकेचपंडिताःसमदर्शिनः १९ सहिसर्वेषुभूतेषुजंगमेषुध्रुवेषुच ॥ वसत्येकोमहानात्मायेनसर्वमिदंततम् २० सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ॥ यदापश्यतिभूतात्माब्रह्मसंपद्यतेतदा २१ यावानात्मनिवेदात्मातावानात्मापरात्मनि ॥ यएवंसततंवेदसोऽमृतत्वायकल्पते २२ सर्वभूतात्मभूतस्यविभोर्भूतहितस्यच ॥ देवाऽपिमार्गेमुह्यंतिअपदस्यपदैषिणः २३ शकुंतानामिवाकाशेमत्स्यानामिवचोदके ॥ यथागतिर्नदृश्येततथाज्ञानविदांगतिः २४ कालःपचतिभूतानिसर्वाण्येवात्मनाऽऽत्मनि ॥ यस्मिंस्तुपच्यतेकालस्तंवेदेहनकश्चन २५ नतदूर्ध्वंनतिर्यक्चनाधोनचपुनःपुनः ॥ नमध्येप्रतिगृह्णीतेनैवकिंचित्कुतश्चन २६ सर्वेऽतस्थाइमेलोकाबाह्यमेषांनकिंचन ॥ यद्यजस्रंसमागच्छेद्यथाबाणोगुणच्युतः २७ नैवांतंकारणस्येयाद्यद्यपिस्यान्मनोजवः ॥ तस्मात्सूक्ष्मात्सूक्ष्मतरंनास्तिस्थूलतरंततः २८ सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमुखम् ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति २९ तदेवाणोरणुतरंतन्महद्भ्योमहत्तरम् ॥ तदंतःसर्वभूतानांध्रुवंतिष्ठन्नदृश्यते ३०

रूपे तथाचश्रुतिः । 'यावद्ब्रह्मविष्ठितंतावतीवागिति' विष्ठितंविविधाकारेणस्थितं २२ सर्वेषांभूतानामात्मभूतस्यप्रत्यग्भूतस्य विभोःआकाशतुल्यस्य परिच्छेदाभिमानिनामेवदेवयानःपितृयाणोऽन्योवामार्गोऽस्ति अतस्तस्यमार्गेऽन्वेषणीयेदेवाअपिमुह्यंति । देवापीत्यपेरार्षःसंधिर्व्यवहितक्रिययासंबंधश्च । अपदस्यमार्गरहितस्य पदैषिणोब्रह्मबुभुत्सोः तथाचश्रुतिः । 'नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंते ब्रह्मैवसन्ब्रह्माप्येति'इति । अत्रैवस्वात्मन्येवसमवनीयंतेएकीभावेनलीयंते । 'अस्यपरिद्रष्टुरिमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंगच्छंति'इतिश्रुत्यंतराच्चविदुष्येवप्राणमनःप्रभृतीनांकलानामस्तयोऽध्यवसेयः २३ एतदेवदृष्टांतेनस्पष्टयति शकुंतानामिति ज्ञानविदांब्रह्मविदां २४ कालश्चक्ररूपोजीवः पचतिजरयति पच्यतेजीर्यतेयस्मिंस्तंपरमात्मानं २५ तन्मुक्तस्वरूपं प्रविग्रह्णीतेविषयीकरोति एतेनदेशविशेषप्राप्तिर्मुक्तिरितिपक्षःपरास्तः २६ अंतस्थामुक्तस्वरूपांतर्गताः एषालोकानांमध्येबाह्यंकिंचिदस्यानंनास्तियद्गतिमाप्यंस्यात् २७ अंतसन्निधिमनंतत्वात्तस्य २८ कारणस्यज्ञेयंस्वरूपमाह तस्मादितिसार्धाभ्याम् २९ । ३०

कालःपचतीत्यादिभिःषड्भिःश्लोकैर्ब्रह्मणःप्रत्यगात्मत्वादविषयत्वात्सर्वलोकाश्रयत्वादनंतत्वात्सूक्ष्मत्वाद्विमुख्यावत्र अवि द्यादेशांतरप्राप्तिनांस्तीत्युक्त्वाप्रकारांतरेणाप्येतदाह अक्षरमिति अक्षरमविनाशिचैतन्यं क्षरंविनाशिजडं सर्वेषुभूतेषुस्थावरजंगमशरीरेषु क्षरःक्षरत्वं ३१ नवमहदहंकारपंचतन्मात्राण्यविद्याकर्मचेतिकामस्याहंकारधर्मस्यतद्रूपेणैवग्रहइतिनवैवगतिद्वाराणिय स्मिंस्तन्नवद्वारंपुरंगत्वाप्राप्यशो ऽपिहंसोहंविगच्छतीतिहंसोगतिमान्भवति । 'सईक्षांचक्रेकस्मिन्स्वहमुत्क्रांतउत्क्रांतोभविष्यामिकस्मिन्वाप्रतिष्ठितेप्रतिष्ठास्यामीतिसप्राणमसृजत'इतिपरस्मि न्प्राणोपाधिकस्यैवगमनस्यश्रवणात् । नियतोऽचंचलः वशीउपाधिदोषानभिभूतः ईशोनियंता ३१ पुरंगत्वाहंसोभवतीत्येतद्विवृणोति हानीतिअजस्यपरमेश्वरस्यशरीराणांशरीरांतर्गे तानांनवानांपूर्वोक्तमहदादीनांसंबंधिनोपेहान्यादयस्तेषांसंचयेनसंग्रहेणहंसत्वमाहु पारदर्शिनस्तत्त्वविदः हानिर्गतिः ओहाङ्गताविस्यस्यरूपं भंगोदुःखित्वादिकं विकल्पोमनुष्योऽहंपशुरहं वृक्षोऽयमितिविविधकल्पनाच हंसत्वमित्युपलक्षणंभंगादेरपि ३३ एवमात्मनःक्षराक्षरयोरुत्पत्तिमक्षरस्यक्षरद्वारकंगत्यादिकंचेत्युक्त्वातस्यमसिवाक्यार्थप्रतिपादनपुरःसरंविदुषउपाध्यभा वादृस्यभावमाह हंसेति हंसपदेनोक्तंयदक्षरंजीवाख्यंतत्कूटस्थमेवाक्षरंनत्वन्यत्कूटस्थमक्षरमन्यद्धंसाख्यमक्षरमितिभेदोऽस्तिअयमात्माअहंब्रह्मास्मीत्यादिश्रुतिशतेभ्यः । ततस्तमाज्ञे

अक्षरंचक्षरंचैवद्वैधीभावोऽयमात्मनः ॥ क्षरःसर्वेषुभूतेषुदिव्यंतमृतमक्षरम् ३१ नवद्वारंपुरंगत्वाहंसोहिनियतोवशी ॥ ईशःसर्वस्यभूतस्यस्थावरस्यचरस्यच ३२ हानिभंगविकल्पानांनवानांसंचयेनच ॥शरीराणामजस्याहुर्हंसत्वंपारदर्शिनः ३३ हंसोक्तंचाक्षरंचैवकूटस्थंयत्तदक्षरं ॥ तद्विद्वानक्षरंप्राप्यजहातिप्राणजन्मनी ३४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिशुकानुप्रश्नेऊनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥ व्यासउवाच ॥ पृच्छतस्तवसत्पुत्रयथावदिह स्वतः ॥ सांख्यज्ञानेनसंयुक्तंयदेतत्कीर्तितंमया १ योगकृत्यंतुतेकृत्स्नंवर्तयिष्यामितच्छृणु ॥ एकत्वंबुद्धिमनसोरिंद्रियाणांचसर्वशः २ आत्मनोव्यापिनस्तातज्ञा नमेतदनुत्तमम् ॥ तदेतदुपशांतेनदांतेनाध्यात्मशीलिना ३ आत्मारामेणबुद्धेनबोद्धव्यंशुचिकर्मणा ॥ योगदोषान्समुच्छिद्यपंचयान्कवयोविदुः ४ कामंक्रोधं चलोभंचभयंस्वप्नंचपंचमम् ॥ क्रोधंशमेनजयतिकामंसंकल्पवर्जनात् ५ सत्त्वसंसेवनाद्धीरोनिद्रामुच्छेत्तुमर्हति ॥ धृत्याशिश्नोदरंरक्षेत्पाणिपादंचचक्षुषा ६

तोविद्वानहंसोऽक्षरंकूटस्थमात्मानंप्राप्यप्राणमुत्क्रांत्यादिसाधनेउपाधिंजन्मचजहाति जन्महेतोरविद्याया नाशात् ३४ ॥ इतिशांतिपर्वणिमो० नी० भा० ऊनचत्वारिंशदधिकद्विशततमो ऽध्यायः ॥ २३९ ॥ ॥ ७ ॥ ॥ एवंसांख्यतत्त्वमुक्त्वायोगिनांयत्कर्तव्यंतद्वक्तुमतिजानीते पृच्छतइति १ ननुज्ञानादेवमुक्तेःस्वंनाम्यःपंथाविद्यतेऽयनायेतिश्रुतेःसांख्यादन्योमोक्षमार्गो नास्तितत्किंस्वातंत्र्येणयोगकृत्यनिरूपणेनेत्याशंक्ययोगमतेज्ञानशब्दार्थमाह एकत्वमिति घटादिबहिर्विकारमिंद्रियाणिदुःखादिरहितविकारंमनः तेषामेकत्वंबुद्धिमात्रेणावस्थानंबुद्धिवृत्ति निरोधइतियावत् एतदेवज्ञानमनुत्तमंश्रेष्ठमित्यर्थः । नान्यदहंब्रह्मास्मीतिधीवृत्तिरूपं तथाचश्रुतिः 'तावन्मनोनिरोद्धव्यंहृदिपावत्क्षयंगतं ॥ एतज्ज्ञानंचध्यानंचशेषोऽन्योग्रंथविस्तरः' इति २ बोद्धव्यंगुरुमुखादवगंतव्यं । आचार्यवान्पुरुषोवेदेतिश्रुतेः तेनसुषुप्तौघटदुःखादिदृश्याभावेनज्ञावस्थाप्रसक्तंतन्निरस्तं । आनंदभुक्चेतोमुखःप्राज्ञइतिश्रुतेस्तत्रापिनिद्रारूपाधीवृत्तेः सत्त्वात् प्राज्ञःसुषुप्तः । उपशांतोजितचित्तः । दांतोजितबाह्येंद्रियः अध्यात्मशीलीध्याननिष्ठः आत्मारामआत्मनिरतिमान् । बुद्धोज्ञातशास्त्रतत्त्वः शुचिकर्मायमनियमादिमान् ३ समुच्छिद्यबोद्धव्यमितिपूर्वेणान्वयः ४ । ५ सत्त्वेनबुद्धबासंसेवनंपरिशीलनमप्रमत्ततेन । धृत्याधैर्येण । शिश्नोदरंस्त्र्यभिषारादिभ्यः पाणिपादंकंटकादिभ्यः ६ 

चक्षुःश्रोत्रेसाभिलाषपरस्त्रीदर्शनादिभ्यः । मनोवाचंतुच्छर्पानादिभ्यः । कर्मणायज्ञादिना । एतदेवाहाप्रमादादिति दंभंलोभमूलं ७ । ८ उशतींकामप्रधानांविरुद्धोक्तिमित्यर्थः । मनो नुदांमनोभंगकारिणीं । ननुब्रह्मज्ञानादेवमुक्तिःप्रसिद्धानतुधीनिरोधमात्रादित्याशंक्यब्रह्मशब्दार्थमाह ब्रह्मेति शुक्रंबीजभूतंप्रधानं तेजोमयंप्रकाशात्मकसत्त्वगुणप्रधानंमहत्तत्त्वाख्यं त देवब्रह्मनततोऽन्यत् यस्यशुक्रस्यरसःसारः ९ मठस्यजन्मवतःएतस्यदृष्टमीक्षणं एतेन'सदेवसोम्येदमग्रआसीत् तदैक्षतबहुःस्यांप्रजायेयेति । ऐतदात्म्यमिदंसर्वं'इत्यस्याःश्रुतेरर्थः प्रधानमेकमेवसदसत्त्वोद्रेकादीक्षणकर्तृत्वेनमहत्तत्त्वात्मकंभूत्वाईक्षणद्वारासर्वात्मकत्वंगतमितिदर्शितः । अस्यध्यानेनाध्ययनादिनाचसत्त्वोत्कर्षेसतिपापनाशःसर्वकामावाप्तिस्तत्त्वज्ञानंच जायतइत्याहद्वाभ्यां ध्यानमित्यादि १० । ११ समोरागद्वेषशून्यः लब्धालब्धेनेति यदृच्छालाभसंतुष्टइत्यर्थः १२ तेजस्वीसत्त्ववान् ब्रह्मणोमहत्तत्त्वस्यपदंलयस्थानंप्रकृतिनिनी

चक्षुःश्रोत्रेचमनसामनोवाचंचकर्मणा ॥ अप्रमादाद्भयंजह्याद्दंभंप्राज्ञोपसेवनात् ७ एवमेतान्योगदोषान्जयेन्नित्यमतंद्रितः ॥ अग्नींश्चब्राह्मणांश्चार्चेद्देवताः प्रणमेतच ८ वर्जयेदुशतींवाचंहिंसायुक्तांमनोनुदाम् ॥ ब्रह्मतेजोमयंशुक्रंयस्यसर्वमिदंरसः ९ एतस्यभूतंभव्यस्यदृष्टंस्थावरजंगमम् ॥ ध्यानमध्ययनं दानंसत्यंह्रीरार्जवंक्षमा १० शौचमाचारसंशुद्धिरिंद्रियाणांचनिग्रहः ॥ एतैर्विवर्धतेतेजःपाप्मानंचापकर्षति ११ सिद्ध्यंतिचास्यसर्वार्थाविज्ञानंचप्रवर्तते ॥ समःसर्वेषुभूतेषुलब्धालब्धेनवर्तयन् १२ धूतपाप्मातुतेजस्वीलघ्वाहारोजितेंद्रियः ॥ कामक्रोधौवशेकृत्वानिनीषेद्ब्रह्मणःपदम् १३ मनसश्चेंद्रियाणांच कृत्वैकाग्र्यंसमाहितः ॥ पूर्वरात्रापरार्धेचधारयेन्मनआत्मनि १४ जंतोःपंचेंद्रियस्यास्ययद्येकंछिद्रमिंद्रियम् ॥ ततोऽस्यस्रवतेप्रज्ञादृतेःपादादिवोदकम् १५ मनस्तुपूर्वमादद्यात्कुमीनानिवमत्स्यहा ॥ ततःश्रोत्रंततश्चक्षुर्जिह्वाघ्राणंचयोगवित् १६ ततएतानिसंयम्यमनसिस्थापयेद्यतिः ॥ तथैवापोह्यसंक ल्पान्मनोह्यात्मनिधारयेत् १७ पंचेंद्रियाणिसंधायमनसिस्थापयेद्यतिः ॥ यदैतान्यवतिष्ठंतिमनःषष्ठान्यथात्मनि १८ प्रसीदंतिचसंस्थायतदाब्रह्मप्र काशते ॥ विधूमइवदीप्तार्चिरादित्यइवदीप्तिमान् १९ वैद्युतोऽग्निरिवाकाशेदृश्यतेऽऽत्मातथाऽऽत्मनि ॥ सर्वंस्तत्रससर्वत्रव्यापकत्वाच्चदृश्यते २० तंपश्यं तिमहात्मानोब्राह्मणायेमनीषिणः ॥ धृतिमंतोमहाप्राज्ञाःसर्वभूतहितेरताः २१

 षेद्वशीकर्तुमिच्छेत् १३ ऐकाग्र्यंविषयेभ्योनिरोधंकृत्वाआत्मनिबुद्धौमनोधारयेत् संकल्पात्मकंमनोनिरुंध्यादित्यर्थः १४ इंद्रियाणामनिरोधेदोषमाह जंतोरिति प्रज्ञाशास्त्रजाबुद्धिः स्रवतेविषयप्रावण्यात्क्षीयते दृतेश्चर्मकोशस्य १५ मनइति इंद्रियाणांनिग्रहोमनोनिग्रहपूर्वकएवेत्यर्थः कुमीनंजालदंशकमंमीनम् १६ ततइति संकल्पत्यागएवमनसआत्मनिबुद्धौ धारणंनाम १७ संधायध्येयवस्तुनोऽभिसंधानंकृत्वानतुसुप्तावितमोग्रस्तत्वेनमनसिस्थापयेत् आत्मनिबुद्धौ १८ प्रसीदंतिसंकल्पजंकालुष्यंत्यजंति तत्रहेतुः संस्थायनाशंप्राप्य व हर्यौण्यवस्तुस्वरूपनाशानुविनाइपेंद्रियाणांकालुष्यमित्यर्थः । ब्रह्ममहत्तत्त्वंप्रकाशतेनिर्विषयवेदनमहमीत्येतावत्प्रत्ययमात्रंसएवब्रह्मप्रकाशोयोगानांसत्त्वपुरुषान्यताख्यातिःशुद्धत्वंपदार्थ साक्षात्कारः १९ आत्माशुद्धत्वंपदार्थः आत्मनिसूक्ष्मबुद्धावस्मितामात्रायां सर्वोऽहंकारादिर्विकारस्तत्रमहत्यात्मनिसचमहानात्माकारणत्वेनव्यापकत्वादेवसर्वत्रेत्यर्थः २० । २१

परिमितंषण्मासमात्रं तथाचश्रुतिः । 'षड्भिर्मासैस्तुयुक्तस्यनित्ययुक्तस्ययोगिनः ॥ आनंदःपरमोगुह्यःसम्यग्योगःप्रवर्तते'इति । संशितव्रतःसम्यक्कृततीक्ष्णनियमः रागादिच्छेदकत्व मिहशितत्वं अक्षरमस्मितानिर्मुक्तंशुद्धात्मस्वरूपंतेनसाम्यतांसमतालक्षणमेदाभावं स्वार्थेष्यञ् २२ योगविघ्नानाह प्रमोहइति प्रमोहोऽज्ञयः । भ्रमोविक्षेपः । आवर्तउभयात्स्पर्शीक पायः । घ्राणेतिदिव्यगंधादिग्रहणंच । मारुताकृतिरितिशीघ्रगतिरदर्शनसिद्धिराकाशगमनंचेत्युक्तं २३ प्रतिभांसकलशास्त्रार्थभानं उपसर्गादिव्यगनासंगादयस्तांश्चोपसंहृत्ययोगब लेनलब्ध्वाअनादृत्यचाऽऽत्मनिशुद्धे वेत्रनिवर्तयेत्संहरेत् बुद्धिकल्पितत्वात्तेषांतत्रैवसंहारस्ययुक्तत्वात् २४ त्रैकाल्येप्रातःपूर्वरात्रेऽपररात्रेच चैत्येवद्धमूलतरौ वृक्षाग्रेषुपुरतः २५ को ष्ठेहृदयपुंडरीके एकाग्रंययास्यात्तथानित्यंवस्तु भांडंवनाद्युपकरणंतन्मनाः भांडमिवनित्यमनानित्यंचिंतयेत् २६ येनोपायेनपूर्वोक्तेनमन्यकालंबनेनाऽऽयक्तालंबनेनवा २७ । २८ ना

एवंपरिमितंकालमाचरन्संशितव्रतः ॥ आसीनोहिरहस्येकोगच्छेदक्षरसाम्यताम् २२ प्रमोहोभ्रमआवर्तोघ्राणंश्रवणदर्शने ॥ अद्भुतानिरसस्पर्शेशीतोष्णेमारुताकृतिः २३ प्रतिभामुपसर्गांश्चाप्युपसंहृत्ययोगतः ॥ तांस्तत्त्वविदनादृत्यआत्मन्येवनिवर्तयेत् २४ कुर्यात्परिचयंयोगेत्रैकाल्येनियतोमुनिः ॥ गिरिशृंगे तथाचैत्येवृक्षाग्रेषुचयोजयेत् २५ संनियम्येंद्रियग्रामंकोष्ठेभांडमनाइव ॥ एकाग्रंचिंतयेन्नित्यंयोगान्नोद्वेजयेन्मनः २६ येनोपायेनशक्येतसंनियंतुंचलंमनः ॥ तंचयुक्तोनिषेवेतनचैवविचलेत्ततः २७ शून्यागिरिगुहाश्चैवदेवतायतनानिच ॥ शून्यागाराणिचैकाग्रोनिवासार्थमुपक्रमेत् २८ नाभिष्वजेत्परंवाचाकर्मणामनसाऽपिवा ॥ उपेक्षकोयताहारोलब्धालब्धेसमोभवेत् २९ यश्चैनमभिनंदेतयश्चैनमपवादयेत् ॥ समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम् ३० नप्रहृष्येतलाभेषुनालाभेषुचचिंतयेत् ॥ समःसर्वेषुभूतेषुसधर्मामातरिश्वनः ३१ एवंस्वस्थात्मनःसाधोःसर्वत्रसमदर्शिनः ॥ षण्मासान्नित्ययुक्तस्यशब्दब्रह्मातिवर्तते ३२ वेदनार्ताःप्रजादृष्ट्वासमलोष्टाश्मकांचनः ॥ एतस्मिन्विरतोमार्गेविरमेन्नचमोहितः ३३ अपिवर्णावकृष्टस्तुनारीवाधर्मकांक्षिणी ॥ तावप्येतेनमार्गेणगच्छेतां परमांगतिम् ३४ अजंपुराणमजरंसनातनंयदिंद्रियैरुपलभेतनिश्चलैः ॥ अणोरणीयोमहतोमहत्तरंतदात्मनापश्यतिमुक्तमात्मवान् ३५

भिष्वजेन्नपरिगृह्णीयात् । परिग्रहोहिदुःखायेत्युक्तेः २९ अपवादयेन्निंदेत् स्वार्थेणिच् ३० मातरिश्वनोवायोःसधर्मातुल्यधर्माऽसंगोऽनिकेतश्च ३१ शब्दब्रह्मप्रणवः अतिवर्ततेस्वा र्थापरोक्षीकरणेनात्यंतंप्रकाशते ३२ प्रजाःकांचनलाभार्थंवेदनार्ताःदृष्ट्वाएतस्मिन्वित्तार्जनादिमार्गेविरतोविरक्तोविरमेद्वित्तार्जनादिभ्योनचमोहितोभवेत् ३३ श्रद्धावानेवात्राधिकारी त्याह अपीति वर्णावकृष्टःशूद्रः एतेनतत्त्वमस्यादिवाक्यार्थविचारात्मकेसांख्येत्रैवर्णिकास्वाधिकारिणोमनोनिरोधारूपेयोगमार्गेतुस्त्रीशूद्रादयोऽप्यधिकारिणइतिगम्यते ३४ योगवि द्यामुपसंहरति अजमिति इंद्रियैर्मनोबुद्धियुक्तैर्निश्चलैःसद्भिरुपलक्षितंयन्नामरूपातीतंस्वरूपंतदेवाजंजन्महीनंयतःपुराणंपुराऽपिनवमतएवाऽजरंसर्वभावविकारहीनमतःसनातनंनित्यमेकरूपं वस्तुउपलभेततद्वस्तुअणोरप्यणीयःदुर्लक्ष्यमित्यर्थः महतोपिमहत्तरमनंतमित्यर्थः । तत्आत्मनाबुद्ध्यायुक्तमात्मवान्जितचित्तःपश्यति । एतेन'यदापंचावतिष्ठंतेज्ञानानिमनसासह ॥ बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिं ॥ तांयोगमितिमन्यंतेस्थिरामिंद्रियधारणां ॥ अप्रमत्तस्तदाभवतियोगोहिप्रभवाप्ययौ'इतिश्रुतेरर्थोदर्शितः ३५



सांख्यविद्यामुपसंहरति इदमिति अनुदृश्यगुरुवचनमनुअन्वदृतोऽर्थतश्चज्ञात्वाऽवेक्ष्यस्वयंचयुक्त्यापरीक्ष्येमांशास्त्रप्रसिद्धांपरमेष्ठिसाम्यतांचतुर्मुखसमतांप्रयाति । आभूतगतिंभूतसंप्लवपर्यंतंब्रह्म लोकेब्रह्मणासहसमानभोगभाजोभूत्वाब्रह्मणासहमुच्यंते मनीषिणःशुद्धचित्ताः । निर्विचिकित्सपरोक्षज्ञानस्यैवैतत्फलमपरोक्षज्ञानिनामक्षरसाम्यतायाःप्रागुक्तत्वात् । एतेन'वेदांतविज्ञान सुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्त्वाः । तेब्रह्मलोकेतुपरांतकालेपरामृतात्परिमुच्यंतिसर्वे'इतिश्रुतेरर्थोदर्शितः परांतकालेब्रह्मणोमोक्षकालेतन्मुक्त्यैवमुच्यंते ३६ ॥ इति शांतिपर्वणि मोक्ष०नी०भा०चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥ समाप्ताब्रह्मविद्या तस्याःकर्मभिःसमंसमुच्चयंखंडयति यदिदमिति 'कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः'इति । 'नकर्मणान प्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः'इतिकर्मकरणत्यागविधोःपरस्परविरोधादेककार्यकारित्वमलभमानोविसदृशकार्यांगत्वंप्रतिपद्येतेऽतःपृच्छति कामिति १ । २ क्षराक्षरौनश्वरान

इदंमहर्षेर्वचनंमहात्मनोयथावदुक्तंमनसाऽनुदृश्यच ॥ अवेक्ष्यचेमांपरमेष्ठिसाम्यतांप्रयांतिचाभूतगतिंमनीषिणः ३६ ॥ इति श्रीमहाभारते शांति०मोक्ष०शुकानुप्रश्नेचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥ ॥ शुकउवाच ॥ यदिदंवेदवचनंकुरुकर्मत्यजेतिच ॥ कांदिशंविद्ययायांतिकांचगच्छंतिकर्मणा १ एतद्वैश्रोतुमिच्छामितद्भवान्प्रब्रवीतुमे ॥ एतद्व्यन्योन्यवैरूप्येवर्तेतेप्रतिकूलतः २ ॥ भीष्मउवाच ॥ इत्युक्तःप्रत्युवाचेदंपराशरसुतःसुतम् ॥ कर्मविद्यामयावेतौव्याख्यास्यामिक्षराक्षरौ ३ यांदिशंविद्ययायांतियांचगच्छंतिकर्मणा ॥ शृणुष्वैकमनावत्सगह्वरंह्येतदंतरम् ४ अस्तिधर्मइतिप्रोक्तंनास्तीत्यत्रैवयोवदेत् ॥ तस्यपक्षस्यसदृशमिदंममभवेद्यथा ५ द्वाविमावथपंथानौयत्रवेदाःप्रतिष्ठिताः ॥ प्रवृत्तिलक्षणोधर्मोनिवृत्तोचसुभाषितः ६ कर्मणाबद्ध्यतेजंतुर्विद्ययातुप्रमुच्यते ॥ तस्मात्कर्मनकुर्वंतियतयःपारदर्शिनः ७ कर्मणाजायतेप्रेत्यमूर्तिमान्षोडशात्मकः ॥ विद्ययाजायतेनित्यमव्यक्तंह्यव्ययात्मकम् ८ कर्मत्वेकेप्रशंसंति स्वल्पबुद्धिरतानराः ॥ तेनतेदेहजालानिरमयंतउपासते ९ येतुबुद्धिंपरांप्राप्ताधर्मनैपुण्यदर्शिनः ॥ नतेकर्मप्रशंसंतिकूपंनद्यांपिबन्निव १० कर्मणःफलमाप्नोतिसुखदुःखेभवाभवौ ॥ विद्ययातदवाप्नोतियत्रगत्वानशोचति ११ यत्रगत्वानम्रियतेयत्रगत्वानजायते ॥ नपुनर्जायतेयत्रयत्रगत्वानवर्तते १२ यत्रतद्ब्रह्मपरममव्यक्तमचलंध्रुवम् ॥ अव्याकृतमनायासममृतंचावियोगिच १३

श्वरौमार्गौवितिशेषः ३ गह्वरमाकाशमिवानंतंएतदंतरमेतयोरंतरम् ४ आस्तिकनास्तिकयोरिवपृच्छ्यमानंतारतम्यंयथास्तिकस्यक्लेशावहंवद्वदेतन्ममेत्यर्थः ५ द्वाविति निवृत्ताख्यात्मद र्शनेचधर्मःसुभाषितःआत्यंतिकोधर्मःसउक्तः । अयंतुपरमोधर्मोयद्योगेनात्मदर्शनमिति ६ । ७ षोडशात्मकोदेहःप्रेत्यमृत्वापुनर्जायतेउत्पद्यते विद्ययानित्यमव्यक्तंह्येवभिन्नंजायतेआवि र्भवति ८ रमयंतःरूपादीन्रंजयंतस्तद्वासनावासिताःदेहशतानिप्राप्नुवंति ९ । १० । ११ यत्रेति यत्रनिर्विशेषेब्रह्मणिगत्वाप्रविश्यनजायतेअयमहमस्मीतिनजानात्यात्मानं तत्रहेतुर्नवर्त तेगंता विशेषविज्ञानाभावाज्जीवएवनश्यति तथाचश्रुतिः । विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतीति १२ नवर्ततेइत्यत्रापिहेतुमाह यत्रेति यत्रयस्यामवस्थायां तद्ब्रह्माऽवियोगिजीवेश्वरभेदेनवियोगवत्रभवति उपाध्यभावेनब्रह्माभेदादेवत्वर्ततेनतुस्वरूपनाशादित्यर्थः । 'अविनाशीवाअरेऽयमात्माऽनुच्छित्तिधर्मामात्राऽसंसर्गस्त्वस्यभवति'इतिश्रुतेः । मीयंतेविषयाअनयासामात्राऽन्तःकरणवृत्तिस्तयाअसंसर्गइतिश्रुत्यर्थः । सूत्रप्रणवप्रकृतिभ्योऽप्यवच्छिनत्ति परममव्यक्तमचलमिति ध्रुवंकूटस्थंनित्यम् । अव्याकृतमविस्पष्टम् ।–

–सनायासमक्लेशप्राप्यंप्रत्यगात्मत्वात् । अव्यक्तमहंकारादन्यत् । अमृतमितिपाठेऽपिसएवार्थः । व्यक्तआविर्भावतिरोभाववांश्चाहंकारएवततोऽन्यद्ब्रह्मेत्यर्थः १३ द्वंद्वैःसुखदुःखादिभिः मानसेनकर्मणासंकल्पेन १४ चंद्रमसंकर्ममयानांमध्येउत्कृष्टतमंसंवत्सराख्यंप्रजापतिमुपचयापचयवंतंप्रतिमासंदर्शेकलामात्रशेषंतद्वदन्येषामविकर्ममयानामैश्वर्यमित्यर्थः १५ दृष्टतिप्रमाणमाह तदेतदिति ऋषिणाबृहदारण्यकदर्शिनायाज्ञवल्क्येन । 'सएषसंवत्सरःप्रजापतिःषोडशकलस्तस्यरात्रयएवपंचदशकलाध्रुवैवास्यषोडशीकलासरात्रिभिरेवापूर्यतेऽपचक्षीयतेसोऽमावास्यांरात्रिमेतयाषोडश्याकलयासर्वमिदंप्राणभृदनुप्रविश्यततःप्रातर्जायते' इतिदृष्टांतमुक्त्वा 'योवैसंवत्सरःप्रजापतिःषोडशकलःअयमेवसयोऽयमेवंवित्पुरुषस्तस्यवित्तमेवपंचदशकलाआत्मैवास्यषोडशीकलासवित्तेनैवापूर्यतेऽपचक्षीयते'इतिदार्ष्टांतिकंप्रोक्तम् । अनुमीयतेचचंद्रगतौवृद्धिह्रासौकर्मपूर्वकावस्मदीयवृद्धिह्रासवदिति १६ एकादशेति वैराजंमनश्चंद्रस्तत्राऽस्मदीयंमनः । मनसाह्येवपश्यतीत्यादिश्रुतेर्मनएकादशेंद्रियात्मकंतद्द्वैराजमप्यतस्तत्रराजयइवात्रचिताख्यंकर्मैवकलास्तासांसंभारेणसंभृतोमनोमयःसूत्रात्माऽस्मदादिभिश्चमूर्तिमानितिहेतोस्तंविराजंव्याष्टिजीवंचकर्मगुणात्मकंत्रिगुणात्मककर्मफलभूतंचंद्रवद्वृद्धिह्रासभाजंविद्धि १७ तस्मिन्नजीवोपाधिभूतेमनसिचदेवोद्योतनवान्नचित्प्रकाशस्तंक्षेत्रज्ञंपरमात्मानंविजानीयात् । अयमेवसयोऽयमेवं

द्वंद्वैर्नयत्रबाध्यंतेमानसेनचकर्मणा ॥ समाःसर्वत्रमैत्राश्चसर्वभूतहितेरताः १४ विद्यामयोऽन्यःपुरुषस्तातकर्ममयोऽपरः ॥ विद्धिचंद्रमसंदर्शेसूक्ष्मयाकलयास्थितम् १५ तदेतदृषिणाप्रोक्तंविस्तरेणानुमीयते ॥ नवजंशशिनंद्रष्टावक्रतंतुमिवांबरे १६ एकादशविकारात्माकलासंभारसंभृतः ॥ मूर्तिमानितितंविद्धितात्कर्मगुणात्मकम् १७ देवोयःसंश्रितस्तस्मिन्नब्बिंदुरिवपुष्करे ॥ क्षेत्रज्ञंतंविजानीयान्नित्यंयोगजितात्मकम् १८ तमोरजश्चसत्त्वंचविद्धिजीवगुणात्मकम् ॥ जीवमात्मगुणंविद्यादात्मानंपरमात्मनः १९ सचेतनंजीवगुणंवदंतिसचेष्टतेजीवयतेचसर्वम् ॥ ततःपरंक्षेत्रविदोवदंतिप्राकल्पयद्योभुवनानिसप्त २०

॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ शुकउवाच ॥ क्षरात्प्रभृतियःसर्गःसगुणानींद्रियाणिच ॥ बुद्धेरैश्वर्यातिसर्गोऽयंप्रधानश्चात्मनःश्रुतम् १

विदित्यनुपदोदाहृतश्रुतेरुपाधिद्वयस्थएकएवक्षेत्रज्ञइत्यर्थः । योगेनजितोनिरुद्धआत्माचित्तंयेनतंजीवंक्षेत्रज्ञंविजानीयादितियोजना १८ तमइति तमआदिकंत्रयंजीवस्यविज्ञानमयकोशस्यगुणाःकर्तृत्वादयः । विज्ञानंयज्ञंतनुतइत्यादिश्रुतेः तदात्मकंगुणत्रयमेवकर्त्रादिधर्मकंनत्वात्मेत्यर्थः । जीवंविज्ञानमात्मगुणंचिदाभासगुणश्चतस्यतंपूर्वोक्तंविद्धि । आत्मानंचिदाभासंपरमात्मनोगुणंज्ञानैश्वर्यादिभिर्युक्तंविद्धीत्यध्याहृत्ययोज्यम् । चिदचिदात्माजीवोऽचिदंशत्यागेनब्रह्मैवेत्यर्थः १९ अध्यायार्थमुपसंहरति सचेतनमिति चेतनयासहितंस्वयमचेतनंदेहंजीवगुणंजीवगुणेनचैतन्येनयुक्तंवदंति यतःसजीवश्चेष्टतेनतुदेहः । जीवयतेचेतयतेचदेहंनतुदेहःस्वयंचेतनः ततोजीवादपिपरंतंवदंति यःसप्तभुवनानिभूर्भुवआदीनिप्राकल्पयत्परमात्माप्रत्यगात्मत्वात् । ब्रह्मनग्राप्यादिवत्क्रियाप्राप्यमितिज्ञानकर्मणोर्ब्रह्मप्राप्तौसमसमुच्चयोनघटतइत्यर्थः २० ॥ इति शांति० मो० नी० भा० एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥ स्वबोधख्यापनार्थंवृत्तमनुवदति क्षरादिति क्षरात्प्रधानाद्यःसर्गश्चतुर्विंशतितत्त्वात्मकःसाधारणःसआत्मनईशादितिश्रुतम् । तथासगुणानिसविषयाणींद्रियाणिबुद्धेर्यदैश्वर्यंसामर्थ्यंतस्कृतोऽतिसर्गउत्कृष्टसृष्टिस्सवत्पुरुषकृतोऽसाधारणःअयंचबंधकत्वेनप्रधानःश्रेष्ठः प्रेशीजेर्वा चेतिद्विविधासृष्टिस्तत्रजैवीधीमयीसृष्टिर्बंधहेतुर्नत्वैशीभूतमयीतिप्राक्श्रुतमित्यर्थः १ 

सद्वृत्तिसतामाचारं कालहेतुकींयुगानुसारिणीं अनुवर्तितुंपुनःश्रोतुम् २ कुरुकर्मत्यजेतिश्रुत्योरेतद्वैतमविरोधंचकथंविजानीयांविषयविभागेनविविच्यकथंजानीयाम् ३ लोकवृत्तांतोलोकरीतिःतत्त्वतत्त्वंधर्माधर्ममूलकत्वंतज्ज्ञः पूतोधर्मानुष्ठानेन बुद्धिंकृत्वासंस्कृत्य विमुक्तात्मात्यक्तदेहः ४ तत्रमाऽस्तुकर्मणांज्ञानेनसहसमुच्चयःक्रमसमुच्चयस्तुभविष्यतीत्याशयमाह यथेतिएषाकर्मभिर्बुद्धिसंस्कृत्यतयाऽऽत्मदर्शनमित्येवंरूपा ५ श्रेयांसिश्रेयोहेतून्यज्ञादीनन्विच्छन् विविदिषंतियज्ञेनेतिश्रुतेः ६ । ७ । ८ । ९ बुद्धिंकृत्वाऽऽत्मानंद्रक्ष्यामीतिस्वाभिप्रायं

भूयएवतुलोकेस्मिन्सद्वृत्तिंकालहेतुकीम् ॥ यथासंतःप्रवर्तंतेतदिच्छाम्यनुवर्तितुम् २ वेदेवचनमुक्तंतुकुरुकर्मत्यजेतिच ॥ कथमेतद्विजानीयांतच्चव्याख्यातुमर्हसि ३ लोकवृत्तांततत्त्वज्ञःपूतोऽहंगुरुशासनात् ॥ कृत्वाबुद्धिंविमुक्तात्माद्रक्ष्याम्यात्मानमव्ययम् ४ ॥ व्यासउवाच ॥ यथावैविहितावृत्तिःपुरस्ताद्ब्रह्मणास्वयम् ॥ एषापूर्वतरैःसद्भिराचीर्णापरमर्षिभिः ५ ब्रह्मचर्येणवैलोकानजयंतिपरमर्षयः ॥ आत्मनश्चततःश्रेयांस्यन्विच्छन्मनसाऽऽत्मनि ६ वनेमूलफलाशीचतप्यन्सुविपुलंतपः ॥ पुण्यायतनचारीचभूतानामविहिंसकः ७ विधूमेसन्नमुसलेवानप्रस्थप्रतिश्रये ॥ कालेप्राप्तेचरन्भैक्ष्यंकल्पतेब्रह्मभूयसे ८ निस्तुतिर्निर्नमस्कारःपरित्यज्यशुभाशुभे ॥ अरण्येविचरैकाकीयेनकेनचिदाशितः ९ ॥ शुकउवाच ॥ यदिदंवेदवचनंलोकवादेविरुध्यते ॥ प्रमाणेवाऽप्रमाणेचविरुद्धेशास्त्रताकुतः १० इत्येतच्छ्रोतुमिच्छामिप्रमाणंतूभयंकथम् ॥ कर्मणामविरोधेनकथंमोक्षःप्रवर्तते ११ ॥ भीष्मउवाच ॥ इत्युक्तःप्रत्युवाचेदंगंधवत्याःसुतःसुतम् ॥ ऋषिस्तत्पूजयन्वाक्यंपुत्रस्यामिततेजसः १२ ॥ व्यासउवाच ॥ ब्रह्मचारीगृहस्थश्चवानप्रस्थोऽथभिक्षुकः ॥ यथोक्तचारिणःसर्वेगच्छंतिपरमांगतिम् १३ एकोवाऽप्याश्रमानेतान्योऽनुतिष्ठेद्यथाविधि ॥ अकामद्वेषसंयुक्तःसपरत्रविधीयते १४ चतुष्पदीहिनिःश्रेणीब्रह्मण्येषाप्रतिष्ठिता ॥ एतामारुह्यनिःश्रेणींब्रह्मलोकेमहीयते १५ आयुषस्तुचतुर्भागंब्रह्मचार्यनसूयकः ॥ गुरौवागुरुपुत्रेवावसेद्धर्मार्थकोविदः १६ जघन्यशायीपूर्वंस्यादुत्थायगुरुवेश्मनि ॥ यच्चशिष्येणकर्तव्यंकार्यंदासेनवापुनः १७ कृतमित्येवतत्सर्वंकृत्वातिष्ठेत्तुपार्श्वतः ॥ किंकरःसर्वकारीस्यात्सर्वकर्मसुकोविदः १८ कर्मातिशेषेणगुरावध्येतव्यंबुभूषता ॥ दक्षिणोऽनपवादीस्यादाहूतोगुरुमाश्रयेत् १९ शुचिर्दक्षोगुणोपेतोब्रूयादिष्टमिवांतरा ॥ चक्षुषागुरुमव्यग्रोनिरीक्षेतजितेंद्रियः २० नाभुक्तवतिचाश्नीयादपीतवतिनोपिबेत् ॥ नातिष्ठतितथासीतनासुप्तेप्रस्वपेतच २१ उत्तानाभ्यांचपाणिभ्यांपादावस्यमृदुस्पृशेत् ॥ दक्षिणंदक्षिणेनैवसव्यंसव्येनपीडयेत् २२

प्रदर्शयितुंपृच्छति यदिदमिति कुरुकर्मत्यजेतिवाक्यद्वयमपिप्रमाणंचेद्विरुद्धयोर्वाक्ययोरशास्त्रत्वमप्रमाणंचेत्सुतरामशास्त्रत्वमतोऽनयोःशास्त्रयोःप्रामाण्यसिद्ध्यर्थंव्यवस्थावक्तव्येत्याशयः १० । ११ तद्वाक्यंकृत्वाबुद्धिंविमुक्तात्माद्रक्ष्याम्यात्मानमात्मनीतिकर्मणांचित्तसंस्कारार्थत्ववचनंपूजयन्सिद्धांतत्वेनमानयंश्चातुराश्रम्यधर्मानेवगंधवत्याःयोजनगंधायाःसुतोव्यासउवाच १२ ब्रह्मचारीति परमांगतिंमोक्षं तेनसमुच्चितानामसमुच्चितानांवाआश्रमधर्माणांतत्त्वजिज्ञासाहेतुत्वमुक्तम् १३ परत्रब्रह्मणिविषयेविधीयतेज्ञातुंयोग्यःक्रियते १४ चतुष्पदीचातुराश्रम्यरूपा १५ । १६ । १७ । १८ कर्मातिशेषेणनिःशेषंकर्मकृत्वेत्यर्थः १९ । २० अभुक्तवतिगुराविति शेषः २१ । २२

अधीष्वाध्यापय २३ । २४ । २५ समावृत्तःसमापितब्रह्मचर्यंकस्यः २६ अनपगःसमीपस्थः २७ । २८ । २९ । ३० ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारत भावदीपे द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥ क्रमप्राप्तान्गृहस्थधर्मानाह द्वितीयमिति १ वृत्तयोजीविकाः १ कापोतीमुंछवृत्तिम् १ षट्यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाःकर्मयस्य एकोगृहस्थः त्रिभिर्यजनाध्ययनदानैः अभ्योवानप्रस्थः द्वाभ्यांदानाध्ययनाभ्यां ब्रह्मसत्रेप्रणवोपास्तौ ४ अत्रगार्हस्थ्ये ५ प्राणीछागादिः अप्राणीअश्वत्थादिः यजुपाछेदनम्

अभिवाद्यगुरुंब्रूयादधीष्वभगवन्निति ॥ इदंकरिष्येभगवन्निदंचापिकृतंमया २३ ब्रह्मंस्तदपिकर्ताऽस्मियद्भवान्वक्ष्यतेपुनः ॥ इतिसर्वमनुज्ञाप्यनिवेद्यचयथाविधि २४ कुर्यात्कृत्वाचतत्सर्वमाख्येयंगुरवेपुनः ॥ यांस्तुगंधान्रसान्वाऽपिब्रह्मचारीनसेवते २५ सेवेतनान्समावृत्तइतिधर्मेषुनिश्चयः ॥ येकेचिद्विस्तरेणोक्तानियमाब्रह्मचारिणः २६ तान्सर्वानाचरेन्नित्यंभवेच्चानपगोगुरोः ॥ सएवंगुरवेप्रीतिमुपहृत्ययथाबलम् २७ आश्रमादाश्रमेष्वेवशिष्योवर्तेतकर्मणा ॥ वेदव्रतोप[illegible]चतुर्थेचायुषोगते २८ गुरवेदक्षिणांदत्वासमावर्तेतयथाविधि २९ धर्मलब्धैर्युतोदारैरग्नीनुत्पाद्ययत्नतः ॥ द्वितीयमायुषोभागंगृहमेधीभवेद्व्रती [illegible]ति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥ व्यासउवाच ॥ द्वितीयमायुषोभा[illegible]धीगृहेवसेत् ॥ धर्मलब्धैर्युतोदारैरग्नीनाहृत्यसुव्रतः १ गृहस्थवृत्तयश्चैवचतस्रःकविभिःस्मृताः ॥ कुसूलधान्यःप्रथमःकुंभधान्यस्त्वनंतरम् २ अश्वस्तनोऽथकापोतीमाश्रितोवृत्तिमाहरेत् ॥ तेषांपरःपरोज्यायान्धर्मतोधर्मजित्तमः ३ षट्कर्मावर्तयत्येकस्त्रिभिरन्यःप्रवर्तते ॥ द्वाभ्यामेकश्चतुर्थस्तुब्रह्मसत्रेव्यवस्थितः ४ गृहमेधिव्रतान्यत्रमहांतीहप्रचक्षते ॥ नात्मार्थंपाचयेदन्नंनवृथाघातयेत्पशून् ५ प्राणीवायदिवाऽप्राणीसंस्कारंयजुषार्हति ॥ नदिवाप्रस्वपेज्जातुनपूर्वापररात्रिषु ६ नभुंजीतांतराकालेनान्तृतावाह्वयेतस्त्रियम् ॥ नास्यानश्नन्गृहेविप्रोवसेत्कश्चिदपूजितः ७ तथाऽस्यातिथयःपूज्याहव्यकव्यवहाःसदा ॥ वेदविद्याव्रतस्नाताःश्रोत्रियावेदपारगाः ८ स्वधर्मजीविनोदांताःक्रियावंतस्तपस्विनः ॥ तेषांहव्यंचकव्यंचाप्यर्हणार्थंविधीयते ९ नखरैःसंप्रयातस्यस्वधर्मज्ञापकस्यच ॥ अपविद्धाग्निहोत्रस्यगुरोर्वालीककारिणः १० संविभागोऽत्रभूतानांसर्वेषामेवशिष्यते ॥ तथैवापचमानेभ्यःप्रदेयंगृहमेधिना ११ विघसाशीभवेन्नित्यंनित्यंचामृतभोजनः ॥ अमृतंयज्ञशेषंस्याद्भोजनंहविषासमम् १२ भृत्यशेषंतुयोऽश्नातितमाहुर्विघसाशिनम् ॥ विघसंभृत्यशेषंतुयज्ञशेषमथामृतम् १३ स्वदारनिरतोदांतोह्यनसूयुर्जितेंद्रियः ॥ ऋत्विक्पुरोहिताचार्यमातुलातिथिसंश्रितैः १४

त्रेणैवकृत्स्नार्थमेवसंस्कारमर्हतिनतुभक्षणमात्रार्थं ६ अंतराभोजनद्वयमध्ये स्त्रियंमैथुनायेतिशेषः ७ । ८ । ९ नखरैर्नखैः दंभार्थंनखलोमधरस्यं अपविद्धमविधिनात्यक्तमग्निहोत्रंयेनतस्य एवंविधानांचांडालादीनांचभूतानामत्रगार्हस्थ्येसंविभागोऽस्ति १० अपचमानेभ्योब्रह्मचारिसंन्यासिभ्यः ११ विघसामृतेव्याख्याति अमृतमिति १२ । १३ । १४



आपीभिःसगोत्रस्त्रीभिः १५ संवादानंशाद्यर्थंकलहान् १६ जितांश्चाख्याविवतः आचार्यादयःसम्यगाराधिताब्रह्मलोकादीन्प्रतिनयंतीत्याहाचार्यइतिसार्धाभ्याम् १७ । १८ । १९ आतेतिएतेस्वदेहवत्पोषणीयाइत्यर्थः २० । २१ नचेति अर्थाशयाऽग्निहोत्रादीन्नकुर्यात् तिस्रोवक्ष्यमाणाःकुंभधान्यमुंछशिलंकापोतींचतासांपरमुत्तरमुत्तरंश्रेयः २२ चातुराश्रम्यमध्येऽपिपरंपरंश्रेयःपरस्परमित्यऽपपाठः २३ । २४ । २५ चक्रधराश्चक्रवर्तिनोमांधात्रादयस्तल्लोकानांसदृशींगतिंतत्तुल्यताम् २६ सुपुष्पितोरमणीयः २७ एवंगार्हस्थ्यं योनिःस्वर्गस्यकारणं यस्मात्तस्माद्

वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबंधिबांधवैः ॥ मातापितृभ्यांजामीभिर्भ्रात्रापुत्रेणभार्यया १५ दुहित्रादासवर्गेणविवादंनसमाचरेत् ॥ एतान्विमुच्यसंवादान्सर्वपापैर्विमुच्यते १६ एतैर्जितस्तुजयतिसर्वाँल्लोकान्नसंशयः ॥ आचार्योब्रह्मलोकेशःप्राजापत्येपिताप्रभुः १७ अतिथिस्त्विंद्रलोकस्यदेवलोकस्यचर्त्विजः ॥ जामयोऽप्सरसांलोकेवैश्वदेवेतुज्ञातयः १८ संबंधिबांधवादिक्षुपृथिव्यांमातृमातुलौ ॥ वृद्धबालातुरकृशास्त्वाकाशेप्रभविष्णवः १९ भ्राताज्येष्ठःसमःपित्राभार्यापुत्रःस्वकातनुः ॥ छायास्वादासवर्गश्चदुहिताकृपणंपरम् २० तस्मादेतैरधिक्षिप्तःसहेन्नित्यमसंज्वरः ॥ गृहधर्मपरोविद्वान्धर्मशीलोजितक्लमः २१ नचार्थबद्धःकर्माणिधर्मवान्कश्चिदाचरेत् ॥ गृहस्थवृत्तयस्तिस्रस्तासांनिःश्रेयसंपरम् २२ परंपरंतथैवाहुश्चातुराश्रम्यमेवतत् ॥ यथोक्तानियमास्तेषांसर्वंकार्यंबुभूषता २३ कुंभधान्यैरुंछशिलैःकापोतींचास्थितास्तथा ॥ यस्मिंश्चैतेवसंत्यर्हास्तद्राष्ट्रमभिवर्धते २४ पूर्वान्दशदशपरान्पुनातिचपितामहान् ॥ गृहस्थवृत्तींश्चाप्येतावर्तयेद्योगतव्यथः २५ सचक्रधरलोकानांसदृशीमाप्नुयाद्गतिम् ॥ जितेंद्रियाणामथवागतिरेषाविधीयते २६ स्वर्गलोकोगृहस्थानामुदारमनसांहितः ॥ स्वर्गोविमानसंयुक्तोवेददृष्टःसुपुष्पितः २७ स्वर्गलोकोगृहस्थानांप्रतिष्ठानियतात्मनाम् ॥ ब्रह्मणाविहितायोनिरेषायस्माद्विधीयते ॥ द्वितीयंक्रमशःप्राप्यस्वर्गलोकेमहीयते २८ अतःपरंपरमुदारमाश्रमंतृतीयमाहुस्त्यजतांकलेवरम् ॥ वनौकसांगृहपतिनामनुत्तमंशृणुष्वसंक्लिष्टशरीरकारिणाम् २९ ॥ इति श्रीमहाभा[illegible]ांति० मोक्ष०शुकानुप्रश्ने त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥ ॥ भीष्मउवाच ॥ प्रोक्तागृहस्थवृत्तिस्तेविहितायामनीषिभिः ॥ तदनंतर[illegible]ोधयुधिष्ठिर १ क्रमशस्त्ववधूयैनांतृतीयांवृत्तिमुत्तमाम् ॥ संयोगव्रतखिन्नानांवानप्रस्थाश्रमौकसाम् २ श्रूयतांपुत्रभद्रंतेसर्वलोकाश्रमात्मनाम् ॥ प्रे[illegible]तानांपुण्यदेशनिवासिनाम् ३ ॥ व्यासउवाच ॥ गृहस्थस्तुयदापश्येद्वलीपलितमात्मनः ॥ अपत्यस्यैवचापत्यंवनमेवतदाश्रयेत् ४

द्वितीयंगार्हस्थ्यम् २८ गृहपतिनां ज्हस्वत्वमार्षं गृहस्थेभ्यःश्रेष्ठंसंक्लिष्टमस्थिचर्ममात्रसंश्लेषवत्तयतच्छरीरंचतस्यकारिणांशरीरशोषकाणामित्यर्थः २९ ॥ इति शांति० मोक्ष० पर्वणि नीलकंठीये भारतभावदीपे त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥ ॥ ७ ॥ ॥ प्रोक्तेति प्रकर्षेणोक्तामोक्षशास्त्रे १ एनांगृहस्थवृत्तिमवधूयतिरस्कृत्य कां तृतीयांकापोतींवृत्तिमपि संयोगःसहधर्मचारिणीसंयोगस्तत्रयद्व्रतंतेनखिन्नानां वानप्रस्थाश्रम ओकआश्रयोयेषांतेषांवृत्तिःश्रूयतामितिद्वयोःसंबंधः २ सर्वेलोकाआश्रमाश्चात्माश्रयायेषां संविभागशमादिमयत्वात्सर्वाश्रमफलमत्रैवांतर्भूतमित्यर्थः ३ । ४

१ । ६ अत्रापिवनेऽपि पंचसुमहायज्ञेषु अग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यानिपशुःसोमइत्येतेषुवा ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ चतुर्थश्चतुर्थाश्रमेविहितऔपनिषदःशांतोदांतउपरत
स्तितिक्षुःसमाहितोभूत्वाऽऽत्मन्येवात्मानंपश्यतीत्याद्युपनिषद्विविदितोधर्मःसाधारणः सर्वेष्वाश्रमेषुअन्योऽसाधारणः १५ । १६ । १७ । १८ प्रत्यक्षोधर्मोधर्मफलंसत्यसंकल्पत्वादिकं येषांते
प्रत्यक्षधर्माणः १९ । २० निरानंदाःकृच्छ्रचांद्रायणादिपरत्वात् २१ अनक्षत्राःनक्षत्रग्रहताराभ्योऽप्युपरितरतमःप्रभृतयः अनाधृष्याःनिर्भयाः २२ सद्यस्कारामेकाहसाध्यामिष्टिंप्राजापत्यांत्रै

तृतीयमायुषोभागंवानप्रस्थाश्रमेवसेत् ॥ तानेवाग्नीन्परिचरेद्यजमानोदिवौकसः ५ नियतोनियताहारःषष्ठभक्तोऽप्रमत्तवान् ॥ तदग्निहोत्रंतागावोयज्ञांगानि
चसर्वशः ६ अफालकृष्टंव्रीहियवंनीवारंविघसानिच ॥ हवींषिसंप्रयच्छेतमखेष्वत्रापिपंचसु ७ वानप्रस्थाश्रमेऽप्येताश्चतस्रोवृत्तयःस्मृताः ॥ सद्यःप्रक्षालकाः
केचित्केचिन्मासिकसंचयाः ८ वार्षिकंसंचयंकेचित्केचिद्द्वादशवार्षिकम् ॥ कुर्वंत्यतिथिपूजार्थंयज्ञतंत्रार्थमेववा ९ अभ्रावकाशावर्षासुहेमंतेजलसंश्रयाः ॥ ग्रीष्मे
चपंचतपसःशश्वच्चमितभोजनाः १० भूमौविपरिवर्तंतेतिष्ठंतिप्रपदैरपि ॥ स्थानासनैर्वर्तयंतिसवनेष्वभिषिंचते ११ दंतोलूखलिकाःकेचिदश्मकुट्टास्तथा
परे ॥ शुक्लपक्षेपिबंत्येकेयवागूंक्वथितांसकृत् १२ कृष्णपक्षेपिबंत्यन्येभुंजतेवायथागतम् ॥ मूलैरेकेफलैरेकेपुष्पैरेकेदृढव्रताः १३ वर्तयंतियथान्यायंवैखान
सगतिंश्रिताः ॥ एताश्चान्याश्चविविधादीक्षास्तेषांमनीषिणाम् १४ चतुर्थश्चौपनिषदोधर्मःसाधारणःस्मृतः ॥ वानप्रस्थाद्गृहस्थाच्चततोऽन्यःसंप्रवर्तते १५
अस्मिन्नेवयुगेतातविप्रैःसर्वार्थदर्शिभिः ॥ अगस्त्यःसप्तऋषयोमधुच्छंदोऽघमर्षणः १६ सांकृतिःसुदिवातंडिर्यथावासोकृतश्रमः ॥ अहोवीर्यस्तथाकाव्यस्तां
ड्योमेधातिथिर्बुधः १७ बलवान्कर्णनिर्वाकःशून्यपालःकृतश्रमः ॥ एवंधर्मंकृतवंतस्ततःस्वर्गमुपागमन् १८ तातप्रत्यक्षधर्माणस्तथायायावरागणाः ॥ ऋ
षीणामुग्रतपसांधर्मनैपुणदर्शिनाम् १९ अन्येचापरिमेयाश्चब्राह्मणावनमाश्रिताः ॥ वैखानसावालखिल्याःसैकताश्चतथापरे २० कर्मभिस्तेनिरानंदाधर्मनि
त्याजितेंद्रियाः ॥ गताःप्रत्यक्षधर्माणस्तेसर्वेवनमाश्रिताः २१ अनक्षत्रास्त्वनाधृष्यादृश्यंतेज्योतिषांगणाः ॥ जरयाचपरिद्यूनोव्याधिनाचप्रपीडितः २२
चतुर्थेचायुषःशेषेवानप्रस्थाश्रमंत्यजेत् ॥ सद्यस्कारांनिरूप्येष्टिंसर्ववेदसदक्षिणाम् २३ आत्मयाजीसोऽऽत्मरतिरात्मक्रीडात्मसंश्रयः ॥ आत्मन्यग्नीन्समारो
प्यत्यक्त्वासर्वपरिग्रहान् २४ साद्यस्कांश्चयजेद्यज्ञानिष्टीश्चैवेहसर्वदा ॥ यदेवयाजिनांयज्ञादात्मनीज्याप्रवर्तते २५

धातवींवा सर्ववेदसदक्षिणांसर्वस्वदक्षिणां सर्वान्वेदान्सदक्षिणानित्यपपाठः २३ आत्मयाजीजीवब्रह्मादिकृत् आत्मरतिरात्मनिष्ठः संधिरार्षः आत्मक्रीडश्चाऽऽत्मसंश्रयश्चतत्तुल्यादिक्रीडो ॥१२१॥
राजाद्याश्रयः २४ तीव्रतरवैराग्याभावेतुपक्षांतरमाह साद्यस्कान्सद्यएवक्रियंतेतान्ब्रह्मयज्ञादीन् इष्टीश्चदर्शपूर्णमासमित्रविंदादीस्तामिस्ताश्चयजेत् यदेवयस्मिन्नेवकालेयाजिनांयज्वनां
यज्ञात्कर्मयज्ञाद्‌न्य आत्मनिज्याआत्मयज्ञोयोगाभ्यासःप्रवर्ततेतावदेवतान्कुर्यादित्यर्थः यथोक्तंभगवता'आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यते । योगारूढस्यतस्यैवशमःकारणमुच्यते'इति २५

आत्मनीज्यायाःस्वरूपमाह त्रीनिति हृदयंगार्हपत्योमनोन्वाहार्यपचनआस्यमाहवनीयइतिवैश्वानरविद्योक्तप्रकारेणआत्ममोक्षणादेहपातावध्यात्मनिदेहएवाग्नीन्यजेत्प्राणाग्निहोत्रविधिना
'तद्यद्भक्तंप्रथममागच्छेतद्धोमीयंसयांप्रथमामाहुतिंजुहुयात्तांजुहुयात्प्राणायस्वाहे'त्यादिश्रुतेर्यजुषउच्चारणानंतरंपंचग्रासान्प्राश्नीयात्पक्वा अकुत्सयन्नप्रमर्मभिंदन् २६ वाप्यवापयित्वा २७
२८ नचेहनामुत्रचेहलोकनिमित्तंपरलोकनिमित्तंवाकर्तुंकर्मानुष्ठातुमीहतेइच्छति २९ यमेष्वहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाख्येषुचादशौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानाख्येषुनिय
मेषु स्वशास्त्रोक्ति स्वस्यसंन्यासविधेःशास्त्रंतत्रस्थंसूत्रंक्षौकानिमंलोकममुंचपरित्यज्यात्मानमन्विच्छेदित्येवंरूपं आहुतिमंत्रःशिखांयज्ञोपवीतमित्येतत्सर्वंभूःस्वाहेत्यप्सुप्रक्षिप्येतिश्रुति
निर्दिष्टः तत्रोभयत्रापिविक्रमःपराक्रमोयस्यसतथा यथेष्टाचिरजीविताद्यासद्योमुक्तिर्वाक्रममुक्तिर्वाइच्छयाभवतीत्यर्थः ३० त्रीनाश्रमानपेक्ष्याविहितमविकल्पेनस्थितं यतोधिष्ठितमधि

त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवात्ममोक्षणात् ॥ प्राणेभ्योयजुषःपंचषट्प्राश्नीयादकुत्सयन् २६ केशलोमनखान्वाप्यवानप्रस्थोमुनिस्ततः ॥ आश्रमादाश्रमं
पुण्यंपूतोगच्छतिकर्मभिः २७ अभयंसर्वभूतेभ्योदत्वायःप्रव्रजेद्द्विजः ॥ लोकास्तेजोमयास्तस्यप्रेत्यचानंत्यमश्नुते २८ सुशीलवृत्तोव्यपनीतकल्मषोनचेहना
मुत्रचकर्तुमीहते ॥ अरोषमोहोगतसंधिविग्रहोभवेदुदासीनवदात्मविन्नरः २९ यमेषुचैवानुगतेषुनव्यथेत्स्वशास्त्रसूत्राहुतिमंत्रविक्रमः ॥ भवेद्यथेष्टागतिरात्मवेदि
निनसंशयोधर्मपरेजितेंद्रिये ३० ततःपरंश्रेष्ठमतीवसद्गुणैरधिष्ठितंत्रीनधिवृत्तिमुत्तमम् ॥ चतुर्थमुक्तंपरमाश्रमंशृणुप्रकीर्त्यमानंपरमंपरायणम् ३१ ॥ इतिश्रीम॰
शां॰मोक्ष॰शुकानुप्रश्नेचतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ श्रीशुकउवाच ॥ वर्तमानस्तथैवात्रवानप्रस्थाश्रमेयथा ॥ योक्तव्योऽऽत्माकथंशक्त्या
वेद्यंवेकांक्षतापरम् १ ॥ व्यासउवाच ॥ प्राप्यसंस्कारमेताभ्यामाश्रमाभ्यांततःपरम् ॥ यत्कार्यंपरमार्थंतुतदिहैकमनाःशृणु २ कषायंपाचयित्वाऽऽशुश्रेणिस्थाने
षुचात्रिषु ॥ प्रव्रजेच्चपरंस्थानंपारिव्राज्यमनुत्तमम् ३ तद्भवानेवमभ्यस्यवर्ततांश्रूयतांतथा ॥ एकएवचरेद्धर्मंसिद्ध्यर्थमसहायवान् ४ एकश्चरतियःपश्यन्नजहातिन
हीयते ॥ अनग्निरनिकेतश्चग्राममन्नार्थमाश्रयेत् ५ अश्वस्तनविधातास्यान्मुनिर्भावसमाहितः ॥ लघ्वाशीनियताहारःसकृदन्ननिषेविता ६ कपालंवृक्षमूलानिकुचे
लमसहायता ॥ उपेक्षासर्वभूतानामेतावद्भिक्षुलक्षणम् ७ यस्मिन्वाचःप्रविशंतिकूपेत्रस्ताद्विपाइव ॥ नवक्तारंपुनर्यांतिसकैवल्याश्रमेवसेत् ८

आरामःयात्मिकाद्वृत्तिर्यस्य स्वंपरमंमोक्षहेतुत्वात् ३१ । इति शांतिपर्वणि मोक्षधर्मपर्वणि नैलकंठीये भारतभावदीपे चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ ॥
पूर्वेत्रसाद्यस्कांश्चयजेद्यज्ञानितिश्लोकद्वयेनवानप्रस्थस्यापिवैश्वानरात्मोपासनमुक्तंतत्कर्मण्यप्रस्पष्टःशकमितिमन्वानःपृच्छति वर्तमानइति यथायथावत् आत्माकथंयोक्तव्यः संधिरार्षः
परंवेद्यंब्रह्म १ उत्तरमाहार्धेन प्राप्येति एताभ्यामाश्रमाभ्यांब्रह्मचर्यगार्हस्थ्याभ्यांसंस्कारंचित्तशुद्धिंप्राप्यात्मायोक्तव्यइतिपूर्वेणान्वयः । चित्तशुद्धौसत्यांवानप्रस्थाद्याश्रमेऽपियोगम
भ्यस्येदित्यर्थः । ऋजुमार्गमाह यदितिसार्धेन २ कषायंचित्तदोषंपाचयित्वाविशुद्धंकृत्वा स्थानेष्वाश्रमेष्वनुत्तमं इदंमतंश्रेष्ठमित्यर्थः ३ एवंवक्ष्यमाणरीत्या धर्मयोगम् ४
पश्यन्नात्मतत्त्वंनजहातिकिंचित्पदार्थंसर्वव्यापित्वात् नहीयतेमोक्षसुखात् ५ भावसमाहितश्चित्तसमाधानवान् ६ कपालंपानपात्रं विवर्णंकाषायवस्त्रंकुचैलमित्युच्यते उपेक्षाप्रीति
द्वेषराहित्यम् ७ यस्मिन्निति आक्रुश्यमानोनाक्रोशेदित्यर्थः ८

एतदेवाह नैवेति ९ नैमर्ण्यंभवरोगचिकित्सां १० येनसंप्रज्ञातेऽहमेवेदंसर्वोऽस्मीतिपश्यतायेनरूपादीनग्रहताचजनपूर्णमपिस्थानंशून्यमिवभवति ब्राह्मणंब्रह्मविदम् ११ । १२ अहेःसार्पा द्गणाज्जनसमूहात् सौहित्यान्मृष्टान्नजनिततृप्तेः १३ । १४ निदेशमाज्ञां १५ अभ्याहतंदोषाक्रांतंनिरमित्रस्याजातशत्रोः १६ सर्वभूतेभ्योयस्येतिशेषः १७ निर्मयस्यमुक्तस्यकस्मात् समाधिमप्याह यथेति नागपदेहस्तिपदे पदगामिनांवृषभादीनांपदान्यपिधीयंतेतिरोधीयंते तथेंद्रादीनांपदजातानिस्थानानि कौंजरेकुंभूयिष्ठेशरीररूपाजरयतीतिकुंजरःसमाधिस्थो योगीतस्यस्थानेकौंजरेपदे । 'यथाकृतायविजितायाधरेऽयाःसंयंत्येवमेवैनंसर्वंतदभिसमेतियत्किंचप्रजाःसाधुकुर्वंतियस्तद्वेद'इतिश्रुतेः । कृतायश्चतुरंकपाशः तत्रत्रिद्व्येकांकानामिवयोगेक स्वकर्मफलानामंतर्भावइतिश्रुत्यर्थः १८ धार्ष्टीतिकंविहृणोति एवमिति वक्ष्यमाणप्रकारंधर्मार्थं अहिंसायांसर्वभूताभयदानरूपेसंन्यासयोगे १९ । २० प्रज्ञानमात्मानुभवस्तेनतृप्तस्य

नैवपश्येन्नशृणुयादवाच्यंजातुकस्यचित् ॥ ब्राह्मणानांविशेषेणनैवब्रूयात्कथंचन ९ यद्ब्राह्मणस्यकुशलंतदेवसततंवदेत् ॥ तूष्णीमासीतनिंदायांकुर्वन्भैषज्यमा त्मनः १० येनपूर्णमिवाकाशंभवत्येकेनसर्वदा ॥ शून्यंयेनजनाकीर्णंतंदेवाब्राह्मणंविदुः ११ येनकेनचिदाच्छन्नोयेनकेनचिदाशितः ॥ यत्रक्वचनशायीचतंदेवा ब्राह्मणंविदुः १२ अहेरिवगणाद्भीतःसौहित्यान्नरकादिव ॥ कुणपादिवचस्त्रीभ्यस्तंदेवाब्राह्मणंविदुः १३ नक्रुद्ध्येन्नप्रहृष्येच्चमानितोऽमानितश्चयः ॥ सर्वभूतेष्व भयदस्तंदेवाब्राह्मणंविदुः १४ नाभिनंदेतमरणंनाभिनंदेतजीवितम् ॥ कालमेवप्रतीक्षेतनिदेशंभृतकोयथा १५ अनभ्याहतचित्तःस्यादनभ्याहतवाग्भवेत् ॥ निर्मु क्तःसर्वपापेभ्योनिरमित्रस्यकिंभयम् १६ अभयंसर्वभूतेभ्योभूतानामभयंयतः ॥ तस्यमोहाद्विमुक्तस्यभयंनास्तिकुतश्चन १७ यथानागपदेऽन्यानिपदानिपद गामिनाम् ॥ सर्वाण्येवापिधीयंतेपदजातानिकौंजरे १८ एवंसर्वमहिंसायांधर्मार्थमपिधीयते ॥ अमृतःसनित्यंवसतियोहिंसांनप्रपद्यते १९ अहिंसकःसमःसत्यो धृतिमान्नियतेंद्रियः ॥ शरण्यःसर्वभूतानांगतिमाप्नोत्यनुत्तमाम् २० एवंप्रज्ञानतृप्तस्यनिर्भयस्यनिराशिषः ॥ नमृत्युरतिगोभावःसमृत्युमधिगच्छति २१ विमुक्तंसर्वसंगेभ्योमुनिमाकाशवत्स्थितम् ॥ अस्वमेकचरंशांतंतंदेवाब्राह्मणंविदुः २२ जीवितंयस्यधर्मार्थंधर्मोहर्यर्थमेवच ॥ अहोरात्राश्चपुण्यार्थंतंदेवाब्राह्मणं विदुः २३ निराशिषमनारंभंनिर्नमस्कारमस्तुतिम् ॥ निर्मुक्तंबंधनैःसर्वैस्तंदेवाब्राह्मणंविदुः २४

मृत्युरूपोभावस्तस्यातिगोऽतिक्रम्यगंतानभवतिकिंतुसएवमृत्युमतिक्रामतीत्यर्थः 'सयथाऽश्मानमाखणमृत्वालोष्टोविध्वंसेतैवंहैवतेविध्वंसोविनेशुः'इतिश्रुतेः कृत्वाप्राप्यतेकामादयोऽसुराम् त्युरूपाइतिश्रुत्यर्थः आखणःखननायोग्यः स्वार्थेतद्धितः घरवमार्थं २१ संगेभ्यःस्थूलसूक्ष्मकारणशरीरेष्वहमित्यभिमानेभ्यः आकाशवन्निर्विषयत्वात् शून्यवदस्वंनिर्द्वंद्वं अतएवैकचरंज्ञातृज्ञेयशून्यज्ञानमात्रम् २२ यस्यकृतकृत्यस्यजीवन्मुक्तस्यजीवितंधर्मार्थंधर्ममेवाख्यानिर्विकल्पसमाधिजपुण्योत्पत्त्यर्थं तथाचश्रुतिः 'क्षणमेकंक्रतुशतस्यचतुःसप्तत्यायत्फलं तदवाप्नोति'इति । धर्ममेवस्यफलमाह सोऽपिधर्मोहर्यर्थंहरंतितेहरयस्तत्समीपवर्तिनस्तेषामर्थं योगिनोहिपुण्यंतद्भक्ताहरंति । 'तस्यपुत्रादायमुपयंतिसुहृदःसाधुकृत्यांद्विषंतःपापकृत्यां' इतिश्रुतेः । 'अहिंसाप्रतिष्ठायांतत्सन्निधौवैरत्यागः'इत्यन्यनिष्ठंयोगांगफलंस्मर्यतेच । रत्यर्थमितिपाठेपरेषांसुखार्थं अहोरात्राःसमाधयोऽत्युत्थानानिच पुण्यार्थंलोकशिक्षार्थं २३ निरिति स्तुतिनमस्कारशब्दयुक्तालंगिनमित्यर्थः बंधनैर्वासनाभिः २४

सर्वाणीति कर्ममात्रंहिंसाकरमतस्त्याज्यमित्यर्थः २५ अपितिष्ठत्यधिकत्वेनवर्तते तीक्ष्णांतनुंहिंसामयंधर्मं सोऽनंत्यंसआनंत्यंमोक्षं यतःप्रजाभ्यःप्रजानामभयं २६ आनंत्यावाप्त्युपा यभूतांत्रींश्चैवाग्नीन्मजेदितिपूर्वाध्यायेसूचितांवैश्वानरविद्यामनुवर्तयतिउत्तानइत्यादिना वानप्रस्थइवोत्तानेव्यात्तेआस्येमुखेप्राणायस्वाहेत्यादिमंत्रैः पंचपञ्चवाआहुतीर्नजुहोतिकिंतर्हिप्राणानेवेंद्रि यमनआदीनात्मयाजीआत्मनिजुहोतिप्रविलापयतीत्युत्तरेणसंबंधः । तत्प्रकारमाह लोकस्येति लोकस्यचराचरस्यजंतोर्नाभिःजगतस्त्रैलोक्यात्मनोवैश्वानरस्यप्रतिष्ठास्थानं । 'अधोनि ष्ट्यावितस्त्यांतेनाभ्यामुपरितिष्ठति ॥ ज्वालमालाकुलंभातिविश्वस्यायतनंमहत्'इतिश्रुतेः । निष्ट्याःहृदयकपाटात् विश्वस्यवैश्वानरस्य । प्रकारांतरेणायतनांतरमाह तस्यांगमंगा नीति तस्यलोकस्यांगंमूर्धादिचुबुकांतं अंगानिवैश्वानरावयवामूर्धानमुपादिशन्नुवाचैषवामतिष्ठावैश्वानरइत्यादिनाचुबुकमुपदिशन्नुवाचैषवैप्रतिष्ठावैश्वानरइत्यंतेनग्रंथेनश्रुत्यादर्शिताः । नाभ्यादि निष्ट्यंतेदेशेवाचुबुकादिमूर्धांतदेशेवात्रैलोक्यात्मानंवैश्वानरमुपासीतेतिपक्षद्वयमुपन्यस्तं । एतच्चकृताकृतवंकल्पिकंनतुसमुच्चितं । तात्पर्यमाह वैश्वानरःसर्वमिदमिति प्रपेदेप्रतिपत्तव्यमित्यर्थः २७ 'यस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानंवैश्वानरमुपास्तेससर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेष्वात्मस्वन्नमत्ति'इत्यस्याःश्रुतेरर्थमाह प्रादेशेति हृदिनाभ्यादिहृदयपर्यंतेदेशेप्रादेशसंमितेनिःसृतमा विर्भूतमितिश्रोत्रस्यप्रादेशमात्रपदस्यार्थः । तस्मिन्नात्मन्यात्रेप्राणोपलक्षितंकृत्स्नंप्रपंचमात्मयाजीयोगीजुहोतिप्रविलापयतियस्तस्याग्निहोत्रंप्राणाग्निहोत्रमात्मसंस्थंदेहस्थितंहृदयंगार्हपत्यइत्या

सर्वाणिभूतानिसुखेरमंतेसर्वाणिदुःखस्यभृशंत्रसंते ॥ तेषांभयोत्पादनजातखेदःकुर्यान्नकर्माणिहिश्रद्दधानः २५ दानंहिभूताभयदक्षिणायाःसर्वाणिदानान्यधितिष्ठ तीह ॥ तीक्ष्णांतनुंयःप्रथमंजहातिसोऽनंत्यमाप्नोत्यभयंप्रजाभ्यः २६ उत्तानआस्येनहविर्जुहोतिलोकस्यनाभिर्जगतःप्रतिष्ठा ॥ तस्यांगमंगानिकृताकृतंचवैश्वा नरःसर्वमिदंप्रपेदे २७ प्रादेशमात्रेहृदिनिःसृतंयत्तस्मिन्प्राणानात्मयाजीजुहोति ॥ तस्याग्निहोत्रंहुतमात्मसंस्थंसर्वेषुलोकेषुसदेवकेषु २८ दैवंत्रिधातुंत्रिवृतंसुपर्णंये विदुरग्र्यांपरमात्मतांच ॥ तेसर्वलोकेषुमहीयमानादेवाःसमर्त्याःसुकृतंवदंति २९ वेदांश्चवेद्यंचविधिंचकृत्स्नमथोनिरुक्तंपरमार्थतांच ॥ सर्वंशरीरात्मनियःप्रवेदतस्ये वदेवाःस्पृहयंतिनित्यम् ३० भूमावसक्तंदिविचाप्रमेयंहिरण्मयंयोऽण्डजमंडमध्ये ॥ पतत्रिणंपक्षिणमंतरिक्षेयोवेदभोग्यात्मनिरश्मिदीप्तः ३१

दिनोक्तप्रकारंसर्वेषुलोकेषुहुतंभवति तस्यसर्वात्मकत्वात्तेनयदवदन्नंगृहीतंतेनावदानेनसर्वंब्रह्मांडंतृप्यतीत्यर्थः । तच्चद्धृक्तंप्रथममागच्छेदित्यादिनाग्रंथेनश्रुतौचतदुपपादितम् २८ एवंप्रणवमात्रा मुखममकारार्थंवैश्वानरमुपासीनायेतेदेवंत्रिधातुंद्योतमानंसूक्ष्मतेजोधन्नात्मकंसूत्रात्मानमुपकारार्थंविदुः । तथात्रिवृतंत्रिभिर्गुणैर्वृतंसुपर्णमीश्वरंमायोपाधिमकारार्थमग्र्यांसूक्ष्मतमांपरमोनिरुपा धिरात्माग्रस्यमुख्यरूपंतद्भावंचविदुः अतएवतेपांसुकृतंदेवादयोवदंतिप्रशंसंति । प्रजंतीतिपाठेसुकृतंब्रह्मानंदं । 'यद्वैतत्सुकृतंरसोवैसः'इतिश्रुतेः २९ विद्याफलमाह वेदानिति वेद्यंवि धयाविधिंविधिकर्मकांडंनिरुक्तंकांडेकवाक्यंपरलोकादि परमार्थतांसत्यस्वभावतांचात्मनः एतत्सर्वंशरीरात्मनिप्रत्यग्रूपेएवास्तीतियोवेदतस्यतमेवसर्वेश्वरंदेवाःसेवितुंस्पृहयंति ३० अस्यसगुणे त्वंध्याचष्टे भूमाविति अप्रमेयंप्रमत्मात्मत्वात् हिरण्मयंचिन्मयं अंडजंब्रह्मांडांतराविर्भूतं अंडमध्येपिंडस्यमध्येहृदंबुजे भोग्यात्मनिशरीरे अंतरिक्षेहार्दाकाशेमायायांएवंचदेहपुंडरी कंमायारूपमुपाधित्रयमाधारत्वेनाधेयात्सगुणःपृथगुक्तंभवति । 'अथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोऽस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं'इतिश्रुतेः । रश्मिभिरिवमयूखैः श्चक्षुःश्रोत्रादिभिर्दीप्तोजीवभावंगमितः । पतत्रिणंवदुपतत्रस्थानीयाभिरंगदेवताभिर्युक्तं यस्याग्निरास्यंसंभूर्धाद्यौर्नाभिश्चरणौक्षितिरित्यादिभिर्युक्तं पक्षिणमितिसंगमोदप्रमोदाख्यद्वाति विशेषरूपपक्षद्वयवंतंवाजीवरस्यभूतंमह्यहिरण्मदःशकुनिर्ब्रह्मनामेविश्रुतंतस्यतोयोवेदतंदेवाःस्पृहयंतीतिपूर्वेणान्वयः ३१

विवर्तनमायुःक्षपणं षड्ऋतवोनाभयोयस्य द्वादशमासाअरायस्मिन् शोभनानिदर्शसंक्रमादीनिपर्वाणियत्र आस्योपरिभक्ष्यमिवविश्वंयाति गुहायांबुद्धौ ३१ संप्रसीदत्यस्मिन्निति
प्रसादःसुषुप्तंतदेवजगतःशरीरंमूलकारणत्वात् यथोक्तं । 'सुषुप्ताख्यंतमोऽज्ञानंयद्बीजंस्वप्रबोधयोः'इति । सर्वान्लोकांश्चस्थूलसूक्ष्मानधिगच्छतिव्याप्नोतिकारणत्वादेवतस्मिन्संप्रसादाभि
न्नेस्थूलसूक्ष्मदेहद्वयेसजीवोदेवान्प्राणादींस्तर्पयतितेचदेवाअस्यआस्यंमुखंप्राप्यएनंतर्पयंतीत्यर्थः तथाचश्रुतिः । 'सयांप्रथमामाहुतिंजुहुयात्तांजुहुयात्प्राणायस्वाहेतिप्राणस्तृप्यतिप्राणेतृप्यति
चक्षुस्तृप्यतिचक्षुषितृप्यत्यादित्यस्तृप्यतिआदित्येतृप्यतिद्यौस्तृप्यतिदिवितृप्यंत्यांयत्किंचद्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति' इति
३३ यःपूर्वोक्ताभ्यांपरमात्मतामप्राप्यअविद्योपाधिकेएवरूपेतिष्ठतितस्यगतिमाह तेजोमयइति तेषुब्रह्मलोकेषुपराःपरावतोवसंतीतिश्रुताविवेहापिलोकानितिबहुत्वंकार्यब्रह्मलोकगतप्रदेश
भेदापेक्षया तेनकार्यब्रह्मलोकंगच्छतीत्यर्थः । अतएवकठवल्लीषुनिर्गुणविद्याप्रकरणेऽपिगतिराम्नायते । 'शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिःसृतैका ॥ तयोर्ध्वमायन्नमृतत्व

आवर्तमानमजरंविवर्तनंषण्णाभिकंद्वादशारंसुपर्व ॥ यस्येदमास्योपरियातिविश्वंतत्कालचक्रंनिहितंगुहायाम् ३२ यःसंप्रसादोजगतःशरीरंसर्वा
न्सलोकानधिगच्छतीह ॥ तस्मिन्हितंतर्पयतीहदेवांस्तेवैतृप्तास्तर्पयंत्यास्यमस्य ३३ तेजोमयोनित्यमयःपुराणोलोकाननंतानभयानुपैति ॥
भूतानियस्मात्त्रसंतेकदाचित्सभूतानांनत्रसतेकदाचित् ३४ अगर्हणीयोनचगर्हतेऽन्यान्सवैविप्रःपरमात्मानमीक्षेत ॥ विनीतमोहोव्यपनीतक
ल्मषोनचेहनामुत्रचसोऽन्नमच्छति ३५ अरोषमोहःसमलोष्टकांचनःप्रहीणकोशोगतसंधिविग्रहः ॥ अपेतनिंदास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेष
भिक्षुकः ३६ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने पंचचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥
व्यासउवाच ॥ प्रकृत्यास्तुविकारायेक्षेत्रज्ञस्तैरधिष्ठितः ॥ नचैनंतेप्रजानंतिसतुजानातितानपि १ तैश्चैवंकुरुतेकार्यंमनःषष्ठैरिहेंद्रियैः ॥ सुदांतैरि
वसंयंताद्दृढैःपरमवाजिभिः २ इंद्रियेभ्यःपरेह्यर्थाअर्थेभ्यःपरमंमनः ॥ मनसस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ३

मैतिविष्वङ्ङन्याउत्क्रमणेभवंति'इतितत्राप्ययमेवमुक्तेराशयोनतुपरब्रह्मविदाअर्चिरादिगतिरस्तीतितत्रगत्याम्नानमितिव्यक्तमाकरे ३४ परमात्मतांगतस्यतुनेहामुत्रवाभोगोऽस्तितद्धेतोर्मूला
ज्ञानस्यनाशादित्याह अगर्हणीयइति विनीतमोहोनष्टाज्ञानः अतएवव्यपनीतंनष्टंकल्मषंस्थूलसूक्ष्मदेहद्वयंयस्य अन्नमदनीयंभोग्यंलोकं अर्च्छतिगच्छति नतस्यप्राणाउत्क्रामंतीतिति
स्वगत्यभावश्रुतेः ३५ अस्यजीवन्मुक्तावस्थामाह अरोषेति नत्वःप्रियाप्रियेयस्यसोऽप्रियाप्रियः उदासीनवत्तत्तुप्रीत्यप्रीतियुक्तंचरन्भुंजानोभोगान् ३६ ॥ इति शांतिपर्वणि मोक्षध
र्मपर्वणि नीलकंठीये भारतभावदीपे पंचचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥ ॥ ॥ ॥ विस्तरेणससाधनांब्रह्मविद्यामुक्त्वासंक्षेपेणकठवल्लीनामर्थंसंगृह्णन्नुपसंहरति
प्रकृत्याइति विकारादेहेंद्रियमनांसितैरधिष्ठितोऽधिष्ठातृत्वंकर्तृत्वभोक्तृत्वभावंप्रापितः । 'आत्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः'इतिश्रुतेः १ जडत्वाच्चक्षुरादयआत्मानंनभासयंत्यात्मातुचेतन
त्वात्तानेवभासयति । 'नचक्षुषागृह्यतेनापिवाचा तस्यभासासर्वमिदंविभाति'इतिश्रुतिभ्यामित्याह तैश्चेति कार्यंविषयदेशंप्रतिगमनम् २ परत्वंसूक्ष्मत्वंकारणत्वंचांतरत्वंच । ननु'इंद्रियाणिह
यानाहुर्विषयांस्तेषुगोचरान्'इतिवत्रैवकठवल्ल्याभिंद्रियेभ्योर्थानांबाह्यत्वंभूयतेतत्कथमिंद्रियेभ्यःपरेह्यर्थाइतितद्विरुद्धमुच्यते सत्यं व्यवहारतस्तित्थमेव परमार्थतस्तुसंकल्पमात्रकृताविषयाः-

-संकल्पश्चमनोधर्मइंद्रियेभ्यआंतरइतिनकिंचिदवद्यं तथाचाक्षपादसूत्रं । दोषनिमित्तंरूपादयोविषयाःसंकल्पकृताइतिअर्थेभ्योमनस्तत्कल्पकं मनसोऽपिबुद्धिर्निश्चयात्मिकापरा ततो
ऽपिपरंमहानात्माशुद्धत्वंपदार्थःसएवहैरण्यगर्भीबुद्धिः ३ ततःपरंमहतउपादानमव्यक्ताख्यमज्ञानंनतुकापिलाभिमतंप्रधानं आनुमानिकाधिकरणेतस्याव्यक्तशब्दार्थत्वनिरासात् । ननुतत्रसूक्ष्मं
शरीरमव्यक्तशब्देनोक्तंतदेवास्माकमज्ञानं 'आदित्यवर्णंतमसःपरस्तात्'इतिश्रुतेः पुरुषादव्यवहितममृतंचिदात्मा ४ एवमनेनप्रकारेणभूतेषुशरीराकारेषुआत्माऽनेककंचुकाक्रांततयागूढःसन्नो
पाधिकेनरूपेणनप्रकाशते । तर्हितत्सत्त्वेकिंमानमतआह दृश्यतइति अग्रमिवाग्र्यातीक्ष्णातया सूक्ष्मयेतितस्यैवव्याख्यानं सूक्ष्मदर्शिभिर्ब्रह्मदर्शनशीलैर्योगिभिः ५ इंद्रियाणींद्रियार्थांश्च
मेधयाबुद्ध्याअंतरात्मनिमहत्तत्त्वेसंलीयविलाप्यबहुचिंत्यंचपलंध्यानध्यातृरूपंत्रयमचिंतयत् ६ ध्यानेनतदेकतानतया विद्यासंपादितमहंब्रह्मास्मीतिवाक्यजधीवृत्त्याविद्ययासंस्कृतं उपरमम्
परतंकृत्वा अनीश्वरईशभावमप्रविष्टःध्यात्वएवप्रकर्षेणशांतात्मामुक्तचित्तोऽमृतंकैवल्यमच्छतिप्राप्नोति ७ विपक्षेदोषमाह इंद्रियाणांतुवशात्माइंद्रियैर्हृतचित्तः आत्मनःसंप्रदानेनकामादिभ्यः
समर्पणेनमर्त्योऽयंमृत्युमश्नुते ८ उपसंहरति आहत्येति आहत्यविनाश्य सर्वेतृष्णमायांबुद्धौ चित्तंस्थूलबुद्धिं कालंजरपर्वतवत्प्रकंप्योभवेत् कालंक्षणमुहूर्तादिरूपंजरयतिनाशयतितथाआत्म

महतःपरमव्यक्तमव्यक्तात्परतोऽमृतम् ॥ अमृतान्नपरंकिंचित्साकाष्ठासापरागतिः ४ एवंसर्वेषुभूतेषुगूढोऽऽत्मानप्रकाशते ॥ दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मया
सूक्ष्मदर्शिभिः ५ अंतरात्मनिसंलीयमनःषष्ठानिमेधया ॥ इंद्रियाणींद्रियार्थांश्चबहुचिंत्यमचिंतयत् ६ ध्यानेनोपरमंकृत्वाविद्यासंपादितंमनः ॥ अनीश्वरः
प्रशांतात्माततोऽर्च्छत्यमृतंपदम् ७ इंद्रियाणांतुसर्वेषांवश्यात्माचलितस्मृतिः ॥ आत्मनःसंप्रदानेनमर्त्योमृत्युमुपाश्नुते ८ आहत्यसर्वसंकल्पान्सत्त्वेचित्तं
निवेशयेत् ॥ सत्त्वेचित्तंसमावेश्यततःकालंजरोभवेत् ९ चित्तप्रसादेनयतिर्जहातीहशुभाशुभम् ॥ प्रसन्नात्माऽऽत्मनिस्थित्वासुखमत्यंतमश्नुते १० लक्षणंतुप्र
सादस्ययथास्वप्नेसुखंस्वपेत् ॥ निवातेवायथादीपोदीप्यमानोनकंपते ११ एवंपूर्वापरेकालेयुंजन्नात्मानमात्मनि ॥ लघ्वाहारोविशुद्धात्मापश्यत्यात्मानमात्मनि
१२ रहस्यंसर्ववेदानामनैतिह्यमनागमम् ॥ आत्मप्रत्ययिकंशास्त्रमिदंपुत्रानुशासनम् १३ धर्माख्यानेषुसर्वेषुसत्याख्यानेचयद्वसु ॥ दशेदमृक्सहस्राणिनिर्म
थ्यामृतमुद्धृतम् १४ नवनीतंयथादध्नःकाष्ठादग्निर्यथैवच ॥ तथैवविदुषांज्ञानंपुत्रहेतोःसमुद्धृतम् १५

विवेककालंनाशयतिमत्तुतंकालहरत्यर्थः ९ प्रसादेनद्वैतदर्शनाभावरूपेणनैर्मल्येन शुभाशुभंपुण्यपापं पुण्यस्यापिबंधकत्वेनमोक्षापेक्षयापापत्वं । तथाचजापकोपाख्यानेइंद्रादिलोकानामपिनर
कत्वमुक्तं । प्रसन्नात्माशुद्धचित्तआत्मनिस्वरूपेस्थित्वाद्वैतदर्शनकालीनंवृत्तिसारूप्यंपरित्यज्यसुखमत्यंतमंतमतिक्रांतंत्रिविधपरिच्छेदशून्यमश्नुते १० स्वप्नेसुषुप्तौ तथाहिद्वैतादर्शनंसुषिकैवल्य
योस्तुल्यवदाम्नायतेमाध्यंदिनैः । यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यतिनहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोऽन्यद्विभक्तंयत्पश्येदित्यादिना अनूदितंचैतत्सूत्रकारेण
स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहीति स्वाप्ययःसुषुप्तं संपत्तिःकैवल्यंअनयोरन्यतरदपेक्ष्यद्वैतादर्शनमाविष्कृतंश्रुत्याक्वचित्षष्ठाध्यायादौसुषुप्तिमपेक्ष्यमैत्रेयिब्राह्मणादौकैवल्यमपेक्ष्येति
सूत्रार्थः ११ । १२ अनैतिह्यंनकेवलमनुमानतः अनागममागममात्रतोवागम्यं किंत्वनुभवगम्यमित्यर्थः १३ वसुधनंसारभूतं दशकिंचिदधिकानिऋक्सहस्राणि तथाचोक्तंताकलंके । 'ऋचां
दशसहस्राणिऋचांपंचशतानिच ॥ ऋचामशीतिःपादश्चैतत्पारायणमुच्यते'इति । सर्ववेदश्रेष्ठादृग्वेदादयंसारउद्धृतइत्यर्थः १४ । १५

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥
अध्यात्ममिति आत्मापुर्यष्टकंतच्च कर्मेंद्रियाणि १ ज्ञानेंद्रियाणि २ मनआदिचतुष्टयम् ३ पंचप्राणाः ४ पंचभूतानि ५ कामः ६ कर्म ७ अविद्याचेति ८ पुनरितिशत
कृत्वोऽपिपथ्यंवेदितव्यमितिन्यायेनविस्तरार्थंचोच्यते यथेतिसप्रकारंवेद १ । २ भूतानांजरायुजादीनां सागरोर्मिन्यायेनप्रतिजं[तं]भूम्यादयःपृथक्कल्पिताःसंतीत्यर्थः ३ एतदेवदृष्टां
तांतरपूर्वकमाह प्रसार्येति यवीयःस्वल्पेषुशरीराकारेषुमहाभूतेषुस्थित्वाविकुर्वतेषुटिलयाख्यंविकारंजनयंति ४ अंतःशरीरेएवस्वस्वप्नवद्ब्रह्मांडोदयप्रलयौभवतइतिफलितमाह इतीति तन्मयमल्प

स्नातकानामिदंशास्त्रंवाच्यंपुत्रानुशासनम् ॥ तदिदंनाप्रशांतायनादांतायातपस्विने १६ नावेदविदुषेवाच्यंतथानानुगतायच ॥ नासूयकायानृजवेनचानिर्दिष्ट
कारिणे १७ नतर्कशास्त्रदग्धायतथैवपिशुनायच ॥ श्लाघिनेश्लाघनीयायप्रशांतायतपस्विने १८ इदंप्रियायपुत्रायशिष्यायानुगतायच ॥ रहस्यधर्मंवक्तव्यंना
न्यस्मैतुकथंचन १९ यद्यप्यस्यमहींदद्याद्रत्नपूर्णामिमांनरः ॥ इदमेवततःश्रेयइतिमन्येततत्त्ववित् २० अतोगुह्यतरार्थंतदध्यात्ममतिमानुषम् ॥ यत्तन्मह
र्षिभिर्दृष्टंवेदांतेषुचगीयते २१ तत्तेऽहंसंप्रवक्ष्यामियन्मांत्वंपरिपृच्छसि २२ यच्चतेमनसिवर्ततेपरंयत्रचास्तिततवसंशयःक्वचित् ॥ श्रूयतामयमहंतवाग्रतःपुत्रकिं
द्विकथयामितेपुनः २३ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० शुकाऽनुप्रश्नेषट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥ ७ ॥ शुकउवाच ॥ अध्यात्मं
विस्तरेणेहपुनरेववदस्वमे ॥ यदध्यात्मंयथावेदभगवन्नृषिसत्तम १ ॥ व्यासउवाच ॥ अध्यात्मंयदिदंतातपुरुषस्येहपठ्यते ॥ तत्तेऽहंवर्तयिष्यामितस्यव्याख्या
मिमांशृणु २ भूमिरापस्तथाज्योतिर्वायुराकाशएवच ॥ महाभूतानिभूतानांसागरस्योर्मयोयथा ३ प्रसार्येहयथांगानिकूर्मःसंहरतेपुनः ॥ तद्वन्महांतिभूतानि
यवीयःसुविकुर्वते ४ इतितन्मयमेवेदंसर्वंस्थावरजंगमम् ॥ सर्गेचप्रलयेचैवतस्मिन्निर्दिश्यतेतथा ५ महाभूतानिपंचैवसर्वभूतेषुभूतकृत् ॥ अकरोत्तातवैषम्यंय
स्मिन्यदनुपश्यति ६ ॥ शुकउवाच ॥ अकरोद्यच्छरीरेषुकथंतदुपलक्षयेत् ॥ इंद्रियाणिगुणाःकेचित्कथंतानुपलक्षयेत् ७ ॥ व्यासउवाच ॥ एतत्तेवर्तयिष्या
मियथावदनुपूर्वशः ॥ शृणुतत्त्वमिहैकाग्रोयथातत्त्वंयथाचतत् ८ शब्दःश्रोत्रंतथाखानित्रयमाकाशसंभवम् ॥ प्राणश्चेष्टातथास्पर्शएतेवायुगुणास्त्रयः ९ रूपंच
क्षुर्विपाकश्चत्रिधाज्योतिर्विधीयते ॥ रसोऽथरसनंस्नेहोगुणास्त्वेतेत्रयोंऽभसः १०

भूतमयं तस्मिन्नशरीरांतःस्थे । तथासृष्टिप्रलयादिकंनिर्दिश्यतेइहैवांतःशरीरेसोम्यसपुरुषोयस्मिन्नेताःषोडशकलाःप्रभवंतीतिश्रुत्या ५ यद्यपिसर्वस्मिन्शरीरेपंचैवभूतानितथाऽपिशरी
रेषुसुरनरतिर्यगादिरूपेणवैषम्यमकरोत् । तत्रहेतुः यस्मिन्कर्मणिनिमित्तेसतियदनुपश्यतिअंतकाले । 'यंयंवाऽपिस्मरन्भावंत्यजत्यंतेकलेवरं । तंतमेवैति'इतिस्मृतेः ६ शरीरेषुशरी
रावयवेषुबुद्धींद्रियादिषुयद्वैषम्यंकानिचिदिंद्रियाणिकेचिद्गुणाःशब्दादयइत्येवमादितत्कथमितिस्वरूपतोगुणतश्चभेदंकथंज्ञेयमित्यनेनपृच्छतीत्यर्थः ७ तदेवसंक्षेपतिजानीते यथातत्त्वंयथाच
तदिति ८ शब्दश्रोत्रदेहच्छिद्राणिस्वरूपतोभिन्नानिविषयत्वंकरणत्वंतदुभयाश्रयत्वंचेतिगुणतोभिन्नानि एवमग्रेऽपिज्ञेयं । स्पर्शःस्पर्शनेंद्रियं वायुगुणावायुविकाराः ९ विपाकोजाठरः १० 

शरीरंकठिनांशस्तदुल्यत्वात्पार्थिवं इंद्रियग्रामैःसहपांचभौतिकोविकारः ११ स्पर्शादयोवाय्वादीनांगुणास्तद्विकारैःस्पर्शनादिभिरिंद्रियैर्गृह्यंते १२ मनःसंकल्पविकल्पात्मकं बुद्धिर्निश्चयात्मिका
स्वभावःपूर्ववासनास्त्रयोनिर्भूतात्म्येवावस्तानिसर्वाण्यपिभूतोत्थान्येव । अत्रहेतुमाह नेति गुणेभ्यःसत्त्वादिभ्यःपरंश्रोत्रादिकार्यस्वरूपमागताःप्राप्ताःसंतोगुणान्शब्दादीन्नातिवर्तंते अत्रायमा
शयः । यदिंद्रियं यस्यार्थस्यग्राहकंतद्ग्राह्यसजातीयगुणाश्रयइतिनियमश्चक्षुरूपादौदृष्टइतिमनोबुद्ध्यहंकारापंचानामपिग्राहकाइतिपंचगुणाश्रयत्वात्पांचभौतिकाः १३ समनस्कानींद्रियाणिबु
द्धिमात्रमेवेत्याहयथेति १४ यदिति ऊर्ध्वमित्यादिनाकृत्स्नंशरीरंयत्पश्यतिइदमहमितिविवेकहीनमेतस्मिन्कृत्येकरणीयेबुद्धिर्वर्तते देहेअहमित्यनुभवोविषयोबुद्धेःस्वरूपमित्यर्थः १५ गुणान्
शब्दादीन्भावप्रधानोनिर्देशः बुद्धिरेवशब्दाद्यात्मतामतिशयेननीयते कर्मकर्तरिप्रयोगः बुद्ध्यभावेविषयाइंद्रियाणिचनप्रथंतेऽतस्तदुभयंबुद्धिरेवेत्यर्थः १६ । १७ चक्षुरिति इदंरूपमितिज्ञाने

श्रेयंघ्राणंशरीरंचभूमेरेतेगुणास्त्रयः ॥ एतावानिंद्रियग्रामोव्याख्यातःपांचभौतिकः ११ वायोःस्पर्शोरसोऽद्भ्यश्चज्योतिषोरूपमुच्यते ॥ आकाशप्रभवःशब्दोगंधो
भूमिगुणःस्मृतः १२ मनोबुद्धिःस्वभावश्चत्रयएतेस्वयोनिजाः ॥ नगुणानतिवर्ततेगुणेभ्यःपरमागताः १३ यथाकूर्मइहांगानिप्रसार्यविनियच्छति ॥ एवमेवें
द्रियग्रामंबुद्धिःसृष्ट्वानियच्छति १४ यदूर्ध्वंपादतलयोरवाङ्मूर्ध्नश्चपश्यति ॥ एतस्मिन्नेवकृत्येतुवर्ततेबुद्धिरुत्तमा १५ गुणान्नेनीयतेबुद्धिर्बुद्धिरेवेंद्रियाण्यपि ॥
मनःषष्ठानिसर्वाणिबुद्ध्यभावेकुतोगुणाः १६ इंद्रियाणिनरेपंचषष्ठंतुमनउच्यते ॥ सप्तमींबुद्धिमेवाहुःक्षेत्रज्ञंपुनरष्टमम् १७ चक्षुरालोचनायैवसंशयंकुरुतेमनः ॥
बुद्धिरध्यवसानायसाक्षीक्षेत्रज्ञउच्यते १८ रजस्तमश्चसत्त्वंचत्रयएतेस्वयोनिजाः ॥ समाःसर्वेषुभूतेषुतान्गुणानुपलक्षयेत् १९ तत्रयत्प्रीतिसंयुक्तंकिंचिदात्मनि
लक्षयेत् ॥ प्रशांतमिवसंशुद्धंसत्त्वंतदुपधारयेत् २० यत्तुसंतापसंयुक्तंकायेमनसिवाभवेत् ॥ प्रवृत्तंरजइत्येवंतत्रचाप्युपलक्षयेत् २१ यत्तुसंमोहसंयुक्तमव्यक्तविषयं
भवेत् ॥ अप्रतर्क्यमविज्ञेयंतमस्तदुपधार्यताम् २२ प्रहर्षःप्रीतिरानंदःसाम्यंस्वस्थात्मचित्तता ॥ अकस्माद्यदिवाकस्माद्वर्ततेसात्त्विकागुणाः २३ अभिमानो
मृषावादोलोभोमोहस्तथाक्षमा ॥ लिंगानिरजसस्तानिवर्तंतेहेत्वहेतुतः २४ तथामोहःप्रमादश्चनिद्रातंद्राप्रबोधिता ॥ कथंचिदभिवर्ततेविज्ञेयास्तामसागुणाः
२५ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥ ॥ ७ ॥ ॥ व्यासउवाच ॥ मनो
विसृजतेभावंबुद्धिरध्यवसायिनी ॥ हृदयंप्रियाप्रियेवेदत्रिविधाकर्मचोदना १ इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यःपरमंमनः ॥ मनसस्तुपराबुद्धिर्बुद्धेरात्मापरोमतः २

यथाचक्षुःकरणं । एवमिदमित्थंनवेत्यांतरेज्ञानेइदमित्थमेवेतिज्ञानेचमनोबुद्धीकरणे तेषांज्ञानानांद्रष्टातुसाक्षीततःपृथगित्यर्थः १८ रजइति स्वयोनिजास्ततत्संस्कारसचिवाच्चित्तादा
विर्भूताः अतएवचित्तंतज्जाश्चार्थेंद्रियादयःसर्वेत्रिगुणात्मकाएवेतिमतं सर्वेषुसुरनरादिषुतान्गुणान्कार्यद्वाराउपलक्षयेत् १९ कार्याण्येवाह तत्रेत्यादिना २० । २१ । २२ । २३ हेतुतःकारणात्
अहेतुतोऽकस्मात् २४ । २५ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥ एवंबुद्धेःस्वाभाविकं त्रिगुणात्मत्वमुक्त्वाकर्म
जंत्रैविध्यमाह मनइति विसृजतेसंकल्पमात्रेणभावंपदार्थंत्रिविधमुत्पादयति बुद्धिरध्यवसायिनीतंपदार्थंबुद्धिर्निश्चिनोतीदमित्थमेवेति हृदयमहंकारंप्रियमनुकूलमप्रियंप्रतिकूलंचवेद १ अत
एवेंद्रियेभ्योऽर्थाविषयाःपराःसूक्ष्माः संकल्पजत्वात् तेभ्योमनःपरं तदुपादानत्वात् ततोऽपिबुद्धिःपरा निश्चयात्मकत्वात् ततोऽप्यात्मापरः अहंप्रत्ययेनप्रत्यक्तमत्वात् २

जंतोर्व्यावहारिकआत्माबुद्धिः सायदाभावंघटादिविविधाकारंकुरुतेतदासामनइत्युच्यते २ पृथग्भावात्पृथग्विषयत्वात् विक्रियतेविकारंप्राप्नोति तानेवविकारानाह शृण्वतीति ४ ५ तानिगुद्धेर्विकारान् अदृश्यश्चिदात्मा भावेषुसात्विकादिषु ६ तानेवाह कदाचिदिति प्रीतिशोकोभयाभावाःक्रमेणसात्विकराजसतामसाः ७ एतान्भावानतिवर्ततेबुद्धिः सरितांवेगान्सागरोर्मिरिवतिरोधत्ते निरोधकालेइत्यर्थः ८ यदेति अधिष्ठानानींद्रियगोलकानिबुद्ध्याभेदेनोर्भूतानिपरस्परंपृथग्भूतानि मेधारूपादिज्ञानंतत्राहितानिमेध्यानि ९ सर्वाणीति यदींद्रियं यदाऽनुविधीयतेबुद्ध्याऽनुगतंभवतितदापूर्वमविभागगताअपृथग्भूताऽपिबुद्धिःपश्चान्मनसिसंकल्पात्मकेभावेघटादौवर्तते । बुद्ध्याऽनुगृहीतमिंद्रियंसंकल्पजंघटंगृह्णातियेनरूपादीनानुपूर्व्येणनतु यौगपद्येन १० भावाःसात्विकादयः त्रिषुमनोबुद्ध्यहंकारेषु अन्वर्थाअर्थमनुसृत्यवर्ततइत्यन्वर्थाः एकस्मिन्स्त्र्यादिपिंडेभर्तुःप्रीतिःसपत्न्याद्वेषस्तामविंदतश्चैत्रस्यमोहइत्यतोरागएवभावाविषयदर्शनेनाविर्भवंतीत्यर्थः । इतएवानुभववैषम्याद्विषयएवात्रिगुणात्मेतिकापिलाःप्राहुस्तन्मंदं । नहिस्त्रीपिंडेसदैवभर्त्रादीनांप्रीत्यादयोऽनुवर्ततेयेनतान्प्रतितेषांसत्वाद्यात्मत्वंनियम्येत । नह्येकएवार्थएकमेवभोक्तारंप्रतिकदाचित्सत्वात्माकदाचित्तमस्त्वात्मेतियुक्तम् । नहिहिमग्रीष्मयोःग्रीष्मग्रीतिविषयोऽपिवाह्निर्दाहात्म्यमतिवर्तते तस्माद्भुध्यादयएवसत्वाद्यात्मानोन्वर्थाः

बुद्धिरात्मामनुष्यस्यबुद्धिरेवात्मनाऽऽत्मनि ॥ यदाविकुरुतेभावंतदाभवतिसामनः २ इंद्रियाणांपृथग्भावाद्बुद्धिर्विक्रियतेह्यतः ॥ शृण्वतीभवतिश्रोत्रंस्पृशतीस्पर्शउच्यते ४ पश्यतीभवतेदृष्टीरसतीरसनंभवेत् ॥ जिघ्रतीभवतिघ्राणंबुद्धिर्विक्रियतेपृथक् ५ इंद्रियाणितुतान्याहुस्तेष्वदृश्योऽधितिष्ठति ॥ तिष्ठतीपुरुषेबुद्धिस्त्रिषुभावेषुवर्तते ६ कदाचिल्लभतेप्रीतिंकदाचिदपिशोचति ॥ नसुखेननदुःखेनकदाचिदिहयुज्यते ७ सेयंभावात्मिकाभावांस्त्रीनेतानतिवर्तते ॥ सरितांसागरोभर्तामहावेलामिवोर्मिमान् ८ यदाप्रार्थयतेकिंचित्तदाभवतिसामनः ॥ अधिष्ठानानिवैबुद्ध्यांपृथगेतानिसंस्मरेत् ॥ इंद्रियाण्येवमेध्यानिविजेतव्यानिकृत्स्नशः ९ सर्वाण्येवानुपूर्व्येणयद्यदाऽनुविधीयते ॥ अविभागगताबुद्धिर्भावेमनसिवर्तते १० येचैवभावावर्ततेसर्वएष्वेवतेत्रिषु ॥ अन्वर्थाःसंप्रवर्ततेरथनेमिमराइव ११ प्रदीपार्थंमनःकुर्यादिंद्रियैर्बुद्धिसत्तमैः ॥ निश्चरद्भिर्यथायोगमुदासीनैर्यदृच्छया १२

रज्जूरगादिवदनिर्वचनीयत्वात्तेषां । नहिव्यवहितघटादिसत्वेप्रत्यक्षंक्रमते तस्यतत्रासामर्थ्यात् । नाप्यनुमानं वह्निधूमन्यायेनतत्सत्वसाधकस्यानियतस्यलिंगस्याभावात् । नापिलोकवाक्यं तस्याप्रामाण्यादिदोषशंकाकलंकितत्वात् । नापिवेदवाक्यं नेहनानास्तिकिंचनेतिसर्वसत्ताग्रासिनोवेदस्यघटादिकचित्पदार्थसत्वासाधकत्वात् । ननु'अविमुक्तंवैकुरुक्षेत्रंदेवानांदेवयजनंसर्वेषांभूतानांब्रह्मसदनमत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टे ॥ येनासावमृतीभूत्वामोक्षीभवतितस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेत्'इत्यादिश्रुतेरविमुक्तादीनांसद्भावंप्रभावंतदविमोकंचप्रकाशयंत्याःकागतिः अज्ञातवस्तुनःसत्वाभावेकर्मोपास्तिकांडयोरुच्छेदापत्तेरितिचेन्न अविद्यावद्विषयत्वात्तयोः यथास्वाप्नेरज्जूरगभ्रमेऽपनीतेरज्जुःसत्यासर्पोमृषेतिसत्यासत्यविभागआभिमानिकोऽविद्यापेक्षःपरमार्थतस्तयोर्मिथ्यात्वाविशेषेऽप्यनुवर्ततेतद्वदित्यवेहि । तस्मादविद्यावतांवज्रपंजरायितमपिजगद्विद्यावतांदृष्टिसमसमयमात्रमेवेतियुक्तमुक्तंबुद्ध्यादयएवसत्वाद्यात्मानोन्वर्थाइति ११ नन्वर्थानांस्वरूपसत्वाभावेकथमिंद्रियसन्निकर्षादितज्ज्ञंघटादिज्ञानंवास्यादित्याशंक्याह प्रदीपार्थमिति । इंद्रियैःकरणैः बुद्धिसत्तमैर्हेतुभिः इयमत्रप्रक्रिया त्रिविधंसत्वं शुक्तिरजतादीनांप्रातिभासिकंघटादीनांव्यावहारिकंब्रह्मणःपारमार्थिकंचेतिक्रमेणतानिसत्सत्तरसत्तमानि । तत्रसत्तमब्रह्माभिन्नत्वाद्विषयाअपिसत्तमाइत्युच्यंते बुद्धिसत्तमै-

-रितिबुद्धिस्थविषयसिद्ध्यर्थं । अव्ययमेनवसतीतिवत्तृतीया । इंद्रियैरश्मिभूतैर्मनःप्रदीपार्थंसत्तमावरकाज्ञाननाशंकुर्यात् । ततःस्वतःप्रकाशमानेसत्तमेविषयाअध्यस्यंते । यथेंद्रियैःशुक्तीदमंशावरकाज्ञानेनाशितेशुक्तिर्बुद्धिस्थरजतभावेनशुक्त्यनतिरिक्तेनभाति । इंद्रियान्वयव्यतिरेकयोरधिष्ठानग्रहएवोपक्षयः । एवंघटाद्यध्यासेऽपींद्रियद्वारामनसासत्तमावरकाज्ञानेनाशितेस्वतःप्रकाशमानंसत्तमंबुद्धिस्थवियदादिभावेनसत्तमाऽनन्येनभाति । अतइंद्रियंसत्तमस्यैवग्राहकं । वियदादिकंतुरज्ज्वामुरगवदविद्यामात्रभातंसाक्षिमात्रभास्यंवा । तथाचश्रुतिस्तमेवभांतमनुभातिसर्वमित्यधिष्ठानभानमनुअध्यस्तस्यघटादेर्भानमाह लोकेऽपिघटानुभवःपटानुभवइत्यादावनुभवशब्दःप्राप्त्यर्थस्यमतेर्ज्ञानार्थत्वेनपाश्चात्यप्रकाशवाचकोऽनुशब्दसामर्थ्यात्पूर्वतरमधिष्ठानप्रकाशमाक्षिपति । इममेवतार्किकानिर्विकल्पकंज्ञानमित्याचक्षतेभाषांतरेण । तथाचविषयाणांस्वरूपसत्वाभावेऽपिरज्जूरगवदविद्ययाप्रकाशउपपद्यतेइतिसर्वमवदातम् १२ एतज्ज्ञानफलमाह एवमिति इदंजगदेवंस्वभावंबुद्धिमात्रकल्पितमितिजानन्नमुह्यति । नहिस्वाप्नधननाशादिनाप्रबुद्धःशोकादिकंप्राप्नोतीत्यर्थः १३ नन्वेवंघटमात्रविदाप्यधिष्ठानब्रह्मज्ञातमेवेतिकिंश्रवणादिने

एवंस्वभावमेवेदमितिविद्वान्नमुह्यति ॥ अशोचन्नप्रहृष्यद्धिनित्यंविगतमत्सरः १३ नचात्माशक्यतेद्रष्टुमिंद्रियैःकामगोचरैः ॥ प्रवर्तमानैरनघैर्दुष्करैरकृतात्मभिः १४ तेषांतुमनसारश्मीन्यदासम्यङ्नियच्छति ॥ तदाप्रकाशतेऽस्यात्मादीपदीप्तायथाऽऽकृतिः १५ सर्वेषामेवभूतानांतमस्यपगतेयथा ॥ प्रकाशंभवतेसर्वंतथेदमुपधार्यताम् १६ यथावारिचरःपक्षीनलिप्यतिजलेचरन् ॥ विमुक्तात्मातथायोगीगुणदोषैर्नलिप्यते १७ एवमेवकृतप्रज्ञोनदोषैर्विषयांश्चरन् ॥ असज्जमानःसर्वेषुकथंचनमलिप्यते १८ त्यक्त्वापूर्वकृतंकर्मरतिर्यस्यसदाऽऽत्मनि ॥ सर्वभूतात्मभूतस्यगुणवर्गेष्वसज्जतः १९ सत्वमात्माप्रसरतिगुणान्वाऽपिकदाचन ॥ नगुणाविदुरात्मानंगुणान्वेदससर्वदा २० परिद्रष्टागुणानांचपरिस्रष्टायथातथम् ॥ सत्वक्षेत्रज्ञयोरेतदंतरंविद्धिसूक्ष्मयोः २१ सृजतेऽत्रगुणानेकएकोनसृजतेगुणान् ॥ पृथग्भूतौप्रकृत्यातौसंप्रयुक्तौचसर्वदा २२ यथामत्स्योऽद्भिरन्यःस्यात्संप्रयुक्तौतथैवतौ ॥ मशकोदुंबरौवाऽपिसंप्रयुक्तौयथासह २३ इषीकावायथामुंजेपृथक्चसहचैवच ॥ तथैवसहितावेतावन्योन्यस्मिन्प्रतिष्ठितौ २४ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥ व्यासउवाच ॥ सृजतेतुगुणान्सत्वंक्षेत्रज्ञस्त्वधितिष्ठति ॥ गुणान्विक्रियतःसर्वानुदासीनवदीश्वरः १

स्याशंक्याह नचेति । कामगोचरैः काम्यमानविषयगोचरैः अनघैर्निर्दोषैरपींद्रियैः आत्मास्वरूपेणज्ञातएवपुरुषार्थोनपररूपेण । नहिरजतात्मनाज्ञाताशुक्तिःशुक्तिकार्यायप्रभवतितद्वत् । दुष्करैर्दुष्कृतिभिरकृतात्मभिरसंशोधितचित्तैःपुरुषैः १४ कथंतर्ह्यात्माज्ञेयइत्यतआह तेषामिति आकृतिर्घटादिरूपं १५ भवतेप्राप्नोति कंठगतविस्मृतचामीकरवदज्ञानापगममात्रलभ्यआत्मेत्यर्थः १६ विद्याफलमाह यथेति गुणदोषैःपुण्यपापैःप्राकृतैः १७ क्रियमाणैरपिनलिप्यतइत्याह एवमिति विषयांश्चरन्नपिनलिप्यते तत्रहेतुरसज्जमानइति सर्वेषुपुत्रादिष्वप्यसज्जमानस्तन्नाशादिजैःशोकादिभिर्नलिप्यते एवंदेहासंगीदेहकृतैरपिकर्मभिर्नलिप्यतइत्यर्थः १८ संन्यासपूर्वकमात्मध्यानशीलस्यसार्वात्म्यंप्राप्तस्यभोग्यानासक्तस्यबुद्धींद्रियाण्यात्माकाराण्येवभवंतितथापिचिदचितोर्विभागएवास्तिनत्वैक्यंभवतीत्याहद्वाभ्यां त्यक्त्वेति १९ । २० । २१ । २२ । २३ शेषंप्राग्व्याख्यातं २४ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥ सृजतइति । गुणान्विषयान् । गुणान्सत्वादीन् । विक्रियतःविकारंभजमानान् अनुकल्पं उदासीनस्याप्यधिष्ठातृत्वमयस्कांतमणिवज्ज्ञेयम् १

एतदेवाह स्वभावेति अभिन्ननिमित्तोपादानत्वसूचनायोर्णनाभिदृष्टांतः एतेगुणाःप्रध्वस्तास्तत्त्वज्ञानेनदर्शनंमताःसंतोननिवर्तंतेघटादिवन्ननश्यंतिकिंतुरज्जूरगादिवद्बाधप्रध्वंसपदार्थइत्यर्थः । तत्रहेतुः प्रवृत्तिर्नोपलभ्यतेइति निवृत्तस्यहिघटादेःकपालादिरूपेणप्रवृत्तिर्लभ्यतेऽत्रघटोध्वस्तइति । इहतुताहक्प्रवृत्त्यदर्शनान्निरन्वयनाशएवगुणानामित्यर्थः । एकेबुरूपाः अपरेतार्किकाः निवृत्तिरात्यंतिकीदुःखानामात्मगुणानांनिवृत्तिर्भवतीत्याहुः । एवंसांख्यादयोऽपिसंसारहेतोर्दृग्दृश्यसंयोगस्यानादिभावस्यापिनाशमिच्छंति ३ एवंनिवृत्तिबाधपक्षौसं प्रधार्यतत्त्वयाऽऽलोच्ययथामतिनिश्चित्ययावदसिद्धांतंकुर्योत् एतदनुरोधेनैवगर्भशयः जन्मादिलाभोऽपिबाधपक्षेआध्यासिकोनिवृत्तिपक्षेतात्त्विकइति ४ अनादीति हिशब्दोनित्यानि त्ययोर्धर्मधर्मिभावासंभवप्रसिद्धिद्योतकः । उपपन्नपयन्धर्मोविकरोतिहिधर्मिणमितिन्यायेनदुःखादिधर्मिणिविकारिणिनित्यत्वासंभवाद्द्वैतावन्नूपनाशादर्शनेनात्मनियावद्दुःखनाशलक्ष

॥१२६॥ ॥२४९॥

स्वभावयुक्तंतत्सर्वंयदिमान्सृजतेगुणान् ॥ ऊर्णनाभिर्यथासूत्रंसृजतेतद्गुणांस्तथा २ प्रध्वस्तानानिवर्तंतेप्रवृत्तिर्नोपलभ्यते ॥ एवमेकेव्यवस्यंतिनिवृत्ति रितिचापरे ३ उभयंसंप्रधार्यैतदध्यवस्येद्यथामति ॥ अनेनैवविधानेनभवेद्गर्भशयोमहान् ४ अनादिनिधनोह्यात्मातंबुद्ध्वाविचरेन्नरः ॥ अक्रुध्यन्नप्रहृष्य श्चनित्यंविगतमत्सरः ५ इत्येवंहृदयग्रंथिंबुद्धिचिंतामयंदृढम् ॥ अनित्यंसुखमासीतअशोचंश्छिन्नसंशयः ६ ताम्येयुःप्रच्युताःपृथ्व्यायथापूर्णांनदींनराः ॥ अवगाढाह्यविद्वांसोविद्धिलोकमिमंतथा ७ नतुताम्यतिवैविद्वान्स्थलेचरतितत्त्ववित् ॥ एवंयोविंदतेऽऽत्मानंकेवलंज्ञानमात्मनः ८ एवंबुद्ध्वानरःसर्वंभूता नामागतिंगतिम् ॥ समवेक्ष्यचवैषम्यंलभतेशममुत्तमम् ९ एतद्वैजन्मसामर्थ्यंब्राह्मणस्यविशेषतः ॥ आत्मज्ञानंशमश्चैवपर्याप्तंतत्परायणम् १० एतद्बु द्ध्वाभवेद्बुद्धःकिमन्यद्बुद्धलक्षणम् ॥ विज्ञायैतद्विमुच्यंतेकृतकृत्यामनीषिणः ११ नभवतिविदुषांमहद्भयंयदविदुषांसुमहद्भयंपरत्र ॥ नहिगतिरधिकाऽस्ति कस्यचिद्भवतिहियाविदुषःसनातनी १२ लोकमातुरमसूयतेजनस्तत्तदेवचनिरीक्ष्यशोचते ॥ तत्रपश्यकुशलानशोचतोयेविदुस्तदुभयंकृताकृतम् १३

णमोक्षस्याप्यसंभवात्तसावीयानयंपक्षइत्याशयः ५ बुद्धिधर्माश्रितादयस्तत्प्रधानंबुद्धिचिंतामयम् ध्यायतीवलेलायतीवेत्यादिश्रुतेः । दृढंकर्मभिरप्यनिवर्त्यंविद्याविनाश्यंछित्त्वेति शेषः ६ पृथ्व्याःसकाशान्नदींप्रतिच्युताअविद्वांसस्तरणविद्याहीनाउन्मज्जननिमज्जनैस्ताम्येयुःक्लिश्येयुः ७ सार्धश्लोकेनदृष्टांतमुक्त्वादार्ष्टांतिकमाहार्धेन एवमिति आत्मनःस्वस्या त्मानंप्रत्यंचंतस्यस्वरूपलक्षणंकेवलंज्ञानमितिशुद्धचिन्मात्रमित्यर्थः ८ शमंसुखम् ९ जन्मसामर्थ्यंकृत्स्नजन्मफलंयोयोक्ताचारवतोऽवश्यंभावीत्यर्थः । पर्याप्तंपूर्णं परायणं मोक्षप्रापकम् १० शुद्धःपुण्यपापहीनः ११ भयमधःपातजं याविदुषोगतिस्ततोऽधिकाकस्यचिद्गतिर्नास्ति १२ लोकयतइतिलोकोभोग्यंतद्वादिस्तमातुरंदोषाक्रांतंजनःअसू ॥१२६॥
यतेदोषेष्वपश्यति भोगवैकल्यात् । तथातत्तदेवलोकस्यातुरत्वंनिरीक्ष्यशोचतेच तत्रेति बुद्धाबुद्धयोर्महद्वैलक्षण्यमित्यर्थः । येपुरुषास्तदुभयंशोकाशोकरूपंकृताकृतंकर्मणा रोपितानारोपितमितिविदुस्तेकुशलाइत्यर्थः १३

किमनेनकौशलेनेत्यतआह यदिति इहलोकेकुर्वतोयन्निष्कामंकर्मतत्प्राचीनकर्मणांनाशकं नहिकर्मणासर्वकर्मोच्छेदोऽस्तीत्यर्थः किंतुतदुभयमिहजन्मनिपूर्वजन्मनिचकृतंकर्मतस्यविदुषः प्रियमप्रियंवानजनयतीत्यतोविद्यासंपादनीयेतिभावः । नैनंकृताकृतेतपतः नाळिप्यतेकर्मणापापकेनेत्यादिश्रुतिभ्यः १४ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकोनपंचाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥ ॥ ७ ॥ ॥ विद्याप्रापकंधर्मंपृच्छति यस्मादिति १ अश्वमेधादिर्मोमूदितिनिवृत्तिधर्मलक्षणायाऽऽह विशिष्टमिति १

यत्करोत्यनभिसंधिपूर्वकंतच्चनिर्णुदतितत्पुराकृतम् ॥ नप्रियंतदुभयंनचाप्रियंतस्यतज्जनयतीहकुर्वतः १४ ॥ इति श्रीम० शां० मोक्ष० शुकानुप्रश्नेए कोनपंचाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥ ॥ शुकउवाच ॥ यस्माद्धर्मात्परोधर्मोविद्यतेनेहकश्चन ॥ योविशिष्टश्चधर्मेभ्यस्तंभवान्प्रब्रवीतुमे १ ॥ व्यासउवाच ॥ धर्मंतेसंप्रवक्ष्यामिपुराणमृषिभिःकृतम् ॥ विशिष्टंसर्वधर्मेभ्यस्तमिहैकमनाःशृणु २ इंद्रियाणिप्रमाथीनिबुद्ध्यासंयम्ययत्नतः ॥ सर्वतोनि ष्पतिष्णूनिपिताबालानिवात्मजान् ३ मनसश्चेंद्रियाणांचाप्यैकाग्र्यंपरमंतपः ॥ तज्ज्यायःसर्वधर्मेभ्यःसधर्मःपरउच्यते ४ तानिसर्वाणिसंधायमनःषष्ठानिमे धया ॥ आत्मतृप्तइवाऽऽसीतबहुचिंत्यमचिंतयन् ५ गोचरेभ्योनिवृत्तानियदास्थास्यंतिवेश्मनि ॥ तदात्वमात्मनात्मानंपरंद्रक्ष्यसिशाश्वतम् ६ सर्वा त्मानंमहात्मानंविधूममिवपावकम् ॥ तंपश्यंतिमहात्मानोब्राह्मणायेमनीषिणः ७ यथापुष्पफलोपेतोबहुशाखोमहाद्रुमः ॥ आत्मनोनाभिजानीतेक्वमे पुष्पंक्वमेफलम् ८ एवमात्मानजानीतेक्वगमिष्येकुतस्त्वहम् ॥ अन्योह्यत्रांतरात्माऽस्तियःसर्वमनुपश्यति ९ ज्ञानदीपेनदीप्तेनपश्यत्यात्मानमात्मनि ॥ दृष्ट्वात्वमात्मनाऽऽत्मानंनिरात्माभवसर्ववित् १० विमुक्तःसर्वपापेभ्योमुक्तत्वचइवोरगः ॥ परांबुद्धिमवाप्येहविपाप्माविगतज्वरः ११ सर्वतःस्रोतसंघोरांनदीं लोकप्रवाहिनीम् ॥ पंचेंद्रियग्राहवतींमनःसंकल्परोधसम् १२ लोभमोहतृणच्छन्नांकामक्रोधसरीसृपाम् ॥ सत्यतीर्थानृतक्षोभांक्रोधपंकांसरिद्वराम् १३ अव्यक्तप्रभवांशीघ्रांदुस्तरामकृतात्मभिः ॥ प्रतरस्वनदींबुद्ध्याकामग्राहसमाकुलाम् १४ संसारसागरगमांयोनिपातालदुस्तराम् ॥ आत्मकर्मोद्भवांतात जिह्वावर्तांदुरासदाम् १५ यांतरंतिकृतप्रज्ञाधृतिमंतोमनीषिणः ॥ तांतीर्णःसर्वतोमुक्तोविधूतात्माऽऽत्मविच्छुचिः १६ उत्तमांबुद्धिमास्थायब्रह्मभूयंभ विष्यसि ॥ संतीर्णःसर्वसंसारात्प्रसन्नात्माविकल्मषः १७

निष्पतिष्णूनिनिष्पतनशीलानि संनियम्यैकाग्र्यंकुर्यादितिसंबंधः ३ । ४ बहुचिंत्यंत्रिपुटीं ५ गोचरेभ्योबाह्याभ्यंतरविषयेभ्यः वेश्मनिपरस्मिन्ब्रह्मणिसर्वाधिष्ठाने ६ विधूममिव निरुपाधिं ब्राह्मणाब्रह्मविदः ७ । ८ आत्माबुद्धिरचेतनत्वाद्वृक्षवत् सर्वंबुद्धवाविकं ९ ज्ञानदीपेनब्रह्माकारांतःकरणवृत्त्या आत्मानंब्रह्म आत्मनिदेहे आत्मनेतिपाठेआत्मना ज्ञानदीपेनेतिसामानाधिकरण्यं निरात्मानिरुपाधिः १० विपाप्मेतिदेहांतरसंबंधनिरासः विगतज्वरइतिजीवन्मुक्तिसुखवान् ११ सर्वतःस्रोतसंअनेकधाप्रवहंतीं नदींसंसारनदीं लोका न्वाहयंतीं रोधस्तीरं १२ । १३ बुद्ध्याज्ञानेन १४ योनिर्वासना १५ । १६ ब्रह्मभूयाब्रह्मैव १७

मूतान्यज्ञानिनिशामयपश्य पर्वतस्थोज्ञानपर्वतारूढः यथोक्तं 'प्रज्ञाप्रासादमारुह्याशोच्यःशोचतोजनान् ॥ भूमिष्ठानिवशैलस्थःसर्वान्प्राज्ञोनुपश्यति'इति १८ एनंयोगेनाज्ञाननदीतरणरूपम् १९ । २० । २१ नैवेति पुमानेतद्ब्रह्मरूयादिरूपेणनवेदनामरूपशून्यत्वात् भूतमव्ययोर्भवउत्पत्तिःकारणंतदात्मकम् २२ अभवोऽनुत्पत्तिरात्मातस्यप्रतिपत्त्यर्थं एतद्धर्मेषयोगधर्मः २३ यद्यपितंत्रभेदेनजगदुत्पत्तिप्रकाराभिद्यंतेतथाऽपिशमादिसंपन्नस्यसर्वधर्मास्पर्शिसुषुप्तावस्थासदृशसुखदुःखसंपर्कशून्यतयाऽवस्थानंमुक्तिरितिसर्ववादिसंमतम् । वादिनोदेहनाशोवाशून्यभावोवादुःखनाशोवालिंगभंगोवाऽविद्यानिवृत्तिर्वास्वरूपप्रतिष्ठाचितिशक्तिर्वापरमानंदावाप्तिर्वेतिशब्दतएवविकल्पयंतितदेतदभिसंधायाह यथेति यथासर्वाणिमतानिधनमकारेणमुक्तौपर्यवस्यंति तथातैनैवप्रकारेणमदीयान्येतानिवचांसिमुक्तौपर्यवस्यंतीति मया यथातथेतिभावप्रधानोनिर्देशः याथातथ्येनकथितानीत्यर्थः । हेपुत्रतानिमतानिभवंति फलतो

भूमिष्ठानीवभूतानिपर्वतस्थोनिशामय ॥ अक्रुध्यन्नप्रहृष्यंश्चनन्नृशंसमतिस्तथा १८ ततोद्रक्ष्यासिसर्वेषांभूतानांप्रभवाप्ययौ ॥ एनंवैसर्वभूतेभ्योविशिष्टंमेनिरेबुधाः ॥ धर्मंधर्मभृतांश्रेष्ठामुनयस्तत्त्वदर्शिनः १९ आत्मनोव्यापिनोज्ञानमिदंपुत्रानुशासनम् ॥ प्रयतायप्रवक्तव्यंहितायानुगतायच २० आत्मज्ञानमिदंगुह्यंसर्वगुह्यतमंमहत् ॥ अब्रुवंयदहंतातआत्मसाक्षिकमंजसा २१ नैवस्त्रीनपुमानेतन्नैववेदनपुंसकम् ॥ अदुःखमसुखंब्रह्मभूतभव्यभवात्मकम् २२ नैतज्ज्ञात्वापुमान्स्त्रीवापुनर्भवमवाप्नुते ॥ अभवप्रतिपत्त्यर्थमेतद्धर्मंविधीयते २३ यथामतानिसर्वाणितथैतानियथातथा ॥ कथितानिमयापुत्रभवंतिनभवंतिच २४ तत्प्रीतियुक्तेनगुणान्वितेनपुत्रेणसत्पुत्रदमान्वितेन ॥ पृष्टोहिसंप्रीतिमनायथार्थंब्रूयात्सुतस्येहयदुक्तमेतत् २५ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्नेपंचाशदधिकद्विशततमोऽध्यायः ॥२५० ॥व्यासउवाच॥ गंधान्रसान्नानुरुंध्यात्सुखंवानालंकारांश्चाप्नुयात्तस्यतस्य ॥ मानंचकीर्तिंचयशश्चनेच्छेत्सवैप्रचारःपश्यतोब्राह्मणस्य १ सर्वान्वेदानधीयीतशुश्रूषुर्ब्रह्मचर्यवान् ॥ ऋचोयजूंषिसामानियोवेदनसवैद्विजः २ ज्ञातिवत्सर्वभूतानांसर्ववित्सर्ववेदवित् ॥ नाकामोम्रियतेजातुनतेननचवैद्विजः ३ इष्टीश्चविविधाःप्राप्यक्रतूंश्चैवाप्तदक्षिणान् ॥ प्राप्नोतिनैवब्राह्मण्यमविधानात्कथंचन ४ यदाचायंबिभेतियदाचास्मान्नबिभ्यति ॥ यदानेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा ५ यदानकुरुतेभावंसर्वभूतेषुपापकम् ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा ६

विरोधाभावात् । नभवंतिचनिर्वक्तुमशक्यत्वात् । तस्मात्सर्वैरपितांत्रिकैरिदंशास्त्रमुपादेयमितिसिद्धम् २४ तदिति तस्मादुक्तविशेषणवताऽधिकारिणापृष्टोगुरुःप्रीतिपूर्वकमिदंवदेदित्यर्थः २५ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥ गंधान्रसानित्याद्यध्यायःसाधनविधानार्थंजीवन्मुक्तलक्षणख्यापनार्थंच नानुरुंध्यान्नानुसरेत् नापितस्यतस्यगंधादेरलंकारान्वर्जनानिचप्राप्नुयात् गंधादिरागद्वेषौनकार्यौकिंतूदासीनैवेत्यर्थः । प्रचारोव्यवहारः पश्यतोविदुषः १ द्विजोमुख्योब्राह्मणः २ कस्तर्हिद्विजइत्यतआह ज्ञातिवदिति योदयालुर्ब्रह्मवित्सएववेदवित्यश्चाकामआत्मज्ञानेनतृप्तोजातुकदाचिन्नम्रियते तथाचश्रुतिः । 'योऽकामोनिष्कामआप्तकामःस्यान्नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेब्रह्मैवसन्ब्रह्माप्येति'इति । तेनाऽकामत्वेनद्विजोनेतिनचकिंतुद्विजएव । योनिर्दयःसकामश्चनासौवेदविन्नब्राह्मणश्चेतिभावः ३ अविधानाद्दयानैष्काम्ययोरननुसरणात् ४ एतदेवविवृणोति यदेत्यादिना ५ । ६



७।८ समुद्रेऽन्याआपइवयत्रपुंभिकामाळीयंतेसमोक्षभाङ्नतुकामकामोविषयाभिलाषी ९ तेषांरूवैषुलोकेषुकामचारोभवतीतिश्रुतेर्ब्रह्मविदेवपूर्णकामोनत्वन्यइत्याहार्धेन सइति सःविद्वान्कामैःसंकल्पमात्रोपनतैःकांतोमनोहरः नतुकामकामःस्वर्गाद्यर्थी कुतः सताइति स्वर्गप्राप्त्यसंयोगाविप्रयोगांताइतिनियमेनततोभ्रश्यतइतिभावः १० उपनिषद्रहस्यं सत्यंहितकरंवाक्यं उत्तरोत्तराभावेपूर्वपूर्वव्यर्थमित्यर्थः ११ स्वर्गःसगुणब्रह्मभावः शमोनिर्गुणब्रह्मभावः १२ क्लेदनमिति संतोषाद्धेतोःसत्वंबुद्धिप्रसादमिच्छसिइच्छेत पंचमलकारोऽयं । एतदेवसत्वंशांतिलक्षणंमोक्षस्यसूचकं कीदृशंसत्वं तृष्णयासहशोकमनसोःसंकल्पःसंशयोवाऽप्रमनःशब्दार्थः संतापंसंताप्यक्लेदनंविक्लित्तिकरणं तंडुलस्येवपाचकमित्यर्थः संतापमितिणमुलंतम् १३ षड्भिःसंतोषसहितैर्विशोकत्वादिभिःसमग्रोज्ञानतृप्तः १४ एवंमुक्तलक्षणमुक्तामुक्तिसाधनमाह षड्भिरिति फलभूतत्वात्सुखस्वर्गवर्जंपूर्वोक्तैःसत्यदमदानतपस्त्यागशमाख्यैरुपनिषत्संज्ञैः सत्यादिषुराजसतामसत्वेऽ

कामबंधनमेवैकंनान्यदस्तीहबंधनम् ॥ कामबंधनमुक्तोहिब्रह्मभूयायकल्पते ७ कामतोमुच्यमानस्तुधूम्राभ्रादिवचंद्रमाः ॥ विरजाःकालमाकांक्षन्धीरोधैर्येणवर्तते ८ आपूर्यमाणमचलप्रतिष्ठंसमुद्रमापःप्रविशंतियद्वत् ॥ तद्वत्कामायंप्रविशंतिसर्वेसशांतिमाप्नोतिनकामकामः ९ सकामकांतोनतुकामकामःसवैकामात्स्वर्गमुपैतिदेही १० वेदस्योपनिषत्सत्यंसत्यस्योपनिषद्दमः ॥ दमस्योपनिषद्दानंदानस्योपनिषत्तपः ११ तपसोपनिषत्त्यागस्त्यागस्योपनिषत्सुखम् ॥ सुखस्योपनिषत्स्वर्गःस्वर्गस्योपनिषच्छमः १२ क्लेदनंशोकमनसोःसंतापंतृष्णयासह ॥ सत्वमिच्छसिसंतोषाच्छांतिलक्षणमुत्तमम् १३ विशोकोनिर्ममःशांतःप्रसन्नात्माविमत्सरः ॥ षड्भिर्लक्षणवानेतैःसमग्रःपुनरेष्यति १४ षड्भिःसत्वगुणोपेतैःप्राज्ञैरधिगतंत्रिभिः ॥ येविदुःप्रेत्यचात्मानमिहस्थंतंगुणंविदुः १५ अकृत्रिममसंहार्यंप्राकृतंनिरुपस्कृतम् ॥ अध्यात्मंसुकृतंप्राप्तःसुखमव्ययमश्नुते १६ निष्प्रचारंमनःकृत्वाप्रतिष्ठाप्यचसर्वशः ॥ यामयंलभतेतुष्टिंसानशक्याऽऽत्मनोऽन्यथा १७ येनतृप्यत्यभुंजानोयेनतृप्यत्यवित्तवान् ॥ येनास्नेहोबलंधत्तेयस्तंवेदसवेदवित् १८ संगुप्तान्यात्मनोद्वाराण्यपिधायविचिंतयन् ॥ योह्यास्तेब्राह्मणःशिष्टःसआत्मरतिरुच्यते १९

पिसंभावितेअतस्तद्व्यावृत्तयेसत्वगुणोपेतैरिति । त्रिभिश्चश्रवणमनननिदिध्यासनैरागमानुमानानुभवैर्वाऽधिगतमात्मानमिहस्थंशरीरांतस्थंप्रेत्यजीवस्यैवदेहेवेहाभिमानाद्व्युत्थापयेविदुर्ज्ञानीयुस्तेतंगुणंपूर्वोक्तमुक्तलक्षणंविदुःप्राप्नुयुः १५ अकृत्रिममजन्यमतएवाऽसंहार्यं प्राकृतंस्वभावसिद्धं । निरुपस्कृतंगुणाधानमलापकर्षणात्मकसंस्कारहीनम् । अध्यात्ममात्मनिदेहेसुकृतंब्रह्मतस्मात्तत्सुकृतमुच्यतइतिश्रुतिप्रसिद्धंप्राप्तःसुखमव्ययमश्नुते । यद्वाअध्यात्मग्रंथंयःप्राप्तःसोऽपिध्यानादिक्रमेणाव्ययंसुखमश्नुते । ग्रंथोऽप्युपनिषद्रूपेनित्यत्वादकृत्रिमत्वमसंहार्यत्वंच । प्राकृतंवाक्यार्थमर्यादास्वरसतोऽर्थप्रत्यायकं । निरुपस्कृतंद्वैतिनामिवहठानाकृष्टार्थं । एतेनपरोक्षज्ञानस्यापिपुण्यवृद्धिहेतुतयाक्रममुक्त्यपर्यवसानमुक्तं तथाचस्मृतिः । 'दिनेदिनेतुवेदांतश्रवणाद्भक्तिसंयुतात् ॥ गुरुशुश्रूषयालब्धात्कृच्छ्राशीतिफलंलभेत्'इति १६ नकेवलंशास्त्रीयज्ञानमात्रान्मुक्तिःकिंतुसाधनांतरापेक्षाऽप्यस्तीत्याह निष्प्रचारमिति अन्यथामनोनिरोधाभावे नशक्याप्राप्तुमितिशेषः १७ येनब्रह्मणा १८ संगुप्तानिप्रमादावसम्यग्रक्षितानिद्वाराणींद्रियाण्यपिधायनिरुध्यविचिंतयन्ध्यायन् १९

अन्वेतिवर्धते २० अविशेषाणीति विशेषाविशेषलिंगमात्रालिंगानिगुणपर्वाणीतियोगोक्तेषुगुणावयवेषु । विशेषाःस्थूलपृथिव्यादयएकादशेंद्रियाणिच । अविशेषाःपंचतन्मात्राणिबुद्धिश्च लिंगमात्रंमहत्तत्त्वं अलिंगंप्रधानं तत्रपूर्वंपूर्वस्यामेनउत्तरमुत्तरंप्रतिबध्यमानोयोगीगुणानापैत्यजति । तत्राविशेषाणिभूतानीतिपंचतन्मात्राणिगुणाइतिमहदव्यक्तेचजहतोमुनेस्त्यजतामुनिना दुःखंसंसाराख्यमपोह्यते । सविशेषाणीतिपाठेभूतशब्देनपंचतन्मात्राण्येवस्वकार्यस्थूलभूतसहितानीत्यर्थः २१ अतिक्रांतंबाधितंगुणक्षयंगुणैश्वर्ययेनतं विषयैरश्लिष्टम् २२ मुक्तोविरक्तः समोरागद्वेषशून्यः पर्यवतिष्ठतेस्थिरोभवति शरीरस्थोजीवन्नेवसर्वार्थानतिक्रम्यवर्तते २३ परमंकारणंनिर्गुणंब्रह्म कार्यतामव्यक्तताम् २४ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नी लकंठीये भारतभावदीपे एकपंचाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥ ॥ ७ ॥ ॥ विस्तरेणोक्तमध्यात्मंसुखसंग्रहार्थंसंक्षिपति द्वंद्वानीत्यादिनाऽध्यायेन । द्वंद्वानि मानापमानादीनि अर्थवर्यैश्चाधिष्ठितोऽपिपुरुषोयद्विमोक्षार्थीस्यात्तर्हिसइदंमहदध्यात्मंश्राव्यः १ भूतेषुजरायुजादिषु पंचसुपंचात्मकेषु एतेनभावाभावकालानामपिभौतिकत्वमुक्तं । ननुपंचभ्योभूतेभ्योऽधिकानिकालदिगात्ममनांसित्वत्वारिद्रव्याणिगुणाश्चचतुर्विंशतिः कर्मसामान्यविशेषसमवायाश्चभावपदार्थाःसप्तमोऽभावपदार्थश्चेतिकाणादामन्यंतेतत्कथंसर्वस्यपंचात्म

समाहितंपरेतत्त्वेक्षीणकाममवस्थितम् ॥ सर्वतःसुखमन्वेतिवपुश्चांद्रमसंयथा २० अविशेषाणिभूतानिगुणांश्चजहतोमुनेः ॥
सुखेनापोह्यतेदुःखंभास्करेणतमोयथा २१ तमतिक्रांतकर्माणमतिक्रांतगुणक्षयम् ॥ ब्राह्मणंविषयाश्लिष्टंजरामृत्यूनविंदतः २२
सयदासर्वतोमुक्तःसमःपर्यवतिष्ठते ॥ इंद्रियाणींद्रियार्थांश्चशरीरस्थोऽतिवर्तते २३ कारणंपरमंप्राप्यअतिक्रांतस्यकार्यताम् ॥
पुनरावर्तनंनास्तिसंप्राप्तस्यपरंपदम् २४ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने एकपंचाशदधिकद्वि
शततमोऽध्यायः ॥ २५१ ॥ ॥ ७ ॥ ॥ व्यासउवाच ॥ ॥ द्वंद्वानिमोक्षजिज्ञासुरर्थधर्मावनुष्ठितः ॥ वक्तागुण
वताशिष्यःश्राव्यःपूर्वमिदंमहत् १ आकाशंमारुतोज्योतिरापःपृथ्वीचपंचमी ॥ भावाभावौचकालश्चसर्वभूतेषुपंचसु २

कत्वंप्रतिज्ञायतइतिचेत् अत्रोच्यते । नतावत्कालोनामपदार्थांतरमतीतानागतत्वादिव्यवहारहेतुःकिंचिदस्ति नूतनत्वपुराणत्वादिवद्रव्यगताभिरेवातीतत्वाद्यवस्थाभिस्तादृग्व्यवहारोपपत्तेः । नापिदिक् आकाशेएवसूर्योपाधिकीप्राच्यादिकल्पनेस्युपगमात् । नापिमनस्तस्यइंद्रियत्वेनश्रोत्रादिवदाहसजातीयगुणाश्रयत्वस्यावश्यंवक्तव्यत्वेनपांचभौतिकत्वात् । परामिमतमनसस्तुग्रा ह्यसजातीयगुणानाश्रयत्वेनदिक्कालवन्नेंद्रियत्वंयुज्यते । गुणाअपिआश्रयान्नातिरिच्यंतेइतिनपृथक्पदार्थाः तथाद्रव्यस्यैवस्वास्थ्यप्रच्युतिःपरिस्पंदात्माऽवस्थाविशेषःकर्मेतिनतदपिपृथक्पदार्थः । तथासत्सदितिव्यवहारविषयत्वस्यस्वकल्पितस्यसामान्यादिषुसद्भावेऽप्यनवस्थादिदोषभयात्तेभ्योव्यावृत्तंद्रव्यगुणकर्मस्वेवानुगतंसामान्यमित्यप्यसत् । अधिष्ठानसत्त्वेनैवसत्सदितिव्यवहारस्यो पपत्तौसत्यामननुगतस्यतस्यकल्पनायाअनौचित्यात् । नित्यद्रव्यवृत्तयोऽनंताविशेषाइत्युपगमस्त्वेकात्म्येनित्यद्रव्याणाभेवाभावान्निरालंबनोमानांतरासिद्धश्च । समवायवद्रूपादिकमपिसमवा यंविनैवद्रव्येस्थास्यतीतिसमवायकल्पनाऽप्यनर्थिका । यथाघटःपटान्योन्याभावः । एवंभूतलंघटसंसर्गाभावोऽपिभविष्यति तथाचोक्तं । 'भावांतरमभावोहिकयाचित्तुव्यपेक्षया' इति । प्रागभाव प्रध्वंसाभावयोस्त्वसत्प्रतियोगिकत्वादेवासिद्धिः । सद्भावमभावोनिरूप्यतइतिन्यायेनतन्निरूपकाभावात् । तस्मादभौतिकःपदार्थएवनास्तीतियुक्तमुक्तंभावाभावकालानामपिपंचात्मकत्वम् २ ॥१२८॥

अंतरात्मकंभवकाशात्मकंमूर्तिःशरीरंतस्यशास्त्रंस्वरूपप्रकाशकंविधानंवेदवाक्यंतद्विन्मूर्तिशास्त्रविधानवित् ३ चरणंगमनं मारुतात्मकंवायुधर्मत्वात्तदात्मकम् ४ पाकोऽन्नादेःप्रकाशोदीपादेः ज्योतिःऊष्मा ५ क्षुद्रताअंतःप्रविश्यपार्थिवावयवसंयोगश्लथीकरणेनसूक्ष्मता ६ । ७ । ८ उत्तरेषुभूतेषुपूर्वभूतगुणाःसंतितेनशब्दएवाकाशेशब्दस्पर्शौवायौशब्दस्पर्शरूपाणितेजसिशब्दस्पर्श रूपरसाःसलिलेऽतएवसगंधाःपृथिव्यामिति । तथासर्वसत्त्वेषुसर्वप्राणिषुउत्तरागुणाःअविद्याकामकर्माख्याः तथाचोक्तं । 'तमःप्रधानःक्षेत्राणांचित्प्रधानश्चिदात्मनां ॥ परःकारणतामेति भावनाज्ञानकर्मभिः' इति ९ एतैर्भावनाज्ञानकर्मभिर्वासनाशब्देनोक्तःसहनवमंमनः १० व्यवसायात्मिकानिश्चयात्मिका व्याकरणंसंशयःमनःअनंतरात्माकर्मानुमानात् सुखदुःखलिंगेनकर्मणामाश्रयत्वे नानुमेयोजीवः ११ एभिरिति कालःकृतत्रेताद्वापरकलिरूपोजीवस्तदात्मकैःपुण्यापुण्यादिसंस्कारात्मभिःएभिःभावैर्भावनाभिःसर्वंप्राणिजातंसमन्वितंयःपश्यतिस्वरूपतस्त्वकलुषमितिजाना

अंतरात्मकमाकाशंतन्मयंश्रोत्रमिंद्रियम् ॥ तस्यशब्दंगुणंविद्यान्मूर्तिशास्त्रविधानवित् ३ चरणंमारुतात्मेतिप्राणापानौचतन्मयौ ॥ स्पर्शनंचेंद्रियंविद्यात्तथा
स्पर्शंचतन्मयम् ४ तापःपाकःप्रकाशश्चज्योतिश्चक्षुश्चपंचमम् ॥ तस्यरूपंगुणंविद्यात्ताम्रगौरासितात्मकम् ५ प्रक्लेदःक्षुद्रतास्नेहइत्यपामुपदिश्यते ॥ असृङ्
मज्जाचयच्चान्यत्स्निग्धंविद्यात्तदात्मकम् ६ रसनंचेंद्रियंजिह्वारसश्चापांगुणोमतः ॥ संघातःपार्थिवोधातुरस्थिदंतनखानिच ७ श्मश्रुरोमचकेशाश्चशिरास्नायुच
चर्मच ॥ इंद्रियंघ्राणसंज्ञातंनासिकेत्यभिसंज्ञिता ८ गंधश्चेंद्रियार्थोऽयंविज्ञेयःपृथिवीमयः ॥ उत्तरेषुगुणाःसंतिसर्वसत्त्वेषुचोत्तराः ९ पंचानांभूतसंघानांसंततिं
मुनयोविदुः ॥ मनोनवममेषांतुबुद्धिस्तुदशमीस्मृता १० एकादशस्त्वनंतात्मासर्वःपरउच्यते ॥ व्यवसायात्मिकाबुद्धिर्मनोव्याकरणात्मकम् ॥ कर्मानुमाना
द्विज्ञेयःसजीवःक्षेत्रसंज्ञकः ११ एभिःकालात्मकैर्भावैर्यःसर्वःसर्वमन्वितम् ॥ पश्यत्यकलुषंकर्मसमोहंनानुवर्तते १२ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० शुकानु
प्रश्नेद्विपंचाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥ व्यासउवाच ॥ शरीराद्विप्रमुक्तंहिसूक्ष्मभूतंशरीरिणम् ॥ कर्मभिःपरिपश्यंतिशास्त्रोक्तैःशास्त्रवेदिनः १
यथामरीच्यःसहिताश्चरंतिसर्वत्रतिष्ठंतिचदृश्यमानाः ॥ देहैर्विमुक्तानिचरंतिलोकांस्तथैवसत्त्वान्यतिमानुषाणि २ प्रतिरूपंयथैवाप्सुतापःसूर्यस्यलक्ष्यते ॥
सत्ववत्सुतथासत्त्वंप्रतिरूपंसपश्यति ३ तानिसूक्ष्माणिसत्त्वानिविमुक्तानिशरीरतः ॥ स्वेनसत्त्वेनसत्त्वज्ञाःपश्यंतिनियतेंद्रियाः ४

तिसःसमोहंसकामंकर्मनानुवर्तते । ज्ञातात्मतत्त्वतयानिष्कामोभवतीत्यर्थः १२ ॥ इतिशांतिपर्वणिमोक्षधर्म० नी० भारतभावदीपे द्विपंचाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥ एवंपंचभूता नि अविद्याकामकर्माणिमनोबुद्धीचेतिदशकःक्षेत्रंततोऽन्यएकादशोऽनंतात्मासचलिंगात्मैवेतिभ्रमोमाभूदितितस्यापिदशकांतर्गतत्वंसाधयतिशरीरादित्यादिनास्थूलशरीराद्विप्रमुक्तमपिशरीरि णंसूक्ष्मशरीरवंतंअतएवसूक्ष्मभूतंदुर्लक्ष्यंशास्त्रोक्तैःकर्मभिर्योगानुष्ठानैःपश्यंतिशास्त्रज्ञायोगिनः लिंगात्मानंसमाधौसाक्षात्कुर्वतीत्यर्थः १ लिंगदेहसत्त्वेविद्वदनुभवंप्रमाणमुक्त्वायुक्तिमप्याह यथेति यथागगनोदरेसूर्यमरीचिकानिबिडाःसंत्योऽपिस्थूलदृष्ट्यानगृह्यंते । गुरूक्तयुक्त्यातुदृश्यमानास्ताएवातिविस्पष्टंगृह्यंते । तथादेहैःस्थूलैर्विमुक्तानिरहितानिसत्त्वानिस्थूलदृष्ट्यानदृश्यंत इत्यर्थः । लोकांश्चरंतीतिशत्रंतं २ प्रतिरूपंप्रत्युपाधि सूर्यस्यतापोरश्मिमंडलमप्सुलक्ष्यते एवंसत्ववत्सुजीवद्देहेषुसत्त्वंप्रत्यप्रधानंलिंगंप्रतिरूपंप्रतिव्यक्तिसयोगीपश्यति ३ एतदेवाह तानीति ४

सर्वेषांयोगयोगिनांयोगंयुंजतांसत्वात्मालिंगदेहोवशेतिष्ठतियथेष्टंपरशरीरप्रवेशादावपियोग्योभवति । आत्मनिचिंतितंकल्पितंकर्मजंरजः कामादिव्यसनंजहतां । प्रधानस्यजगत्कारणस्याद्वैधमद्वयम्भावस्तादात्म्यंयोगैश्वर्यंततोऽपिमुक्तानांसर्वास्ववस्थासुसर्वकालेषुचयोगिनांलिंगदेहोवशेतिष्ठतीतिद्वयोःसंबंधः ५। ६ तेषामिति तेषांयोगिनांभूतात्माजीवःसततंसर्वदासूक्ष्मैःसप्तभिर्गुणैर्गुणकार्यैर्महदहंकारपंचतन्मात्राख्यैर्युतोनित्यंचरिष्णुरिंद्रादिलोकेषुसंचरणशीलः । सदाऽनित्यःकालत्रयेऽपिमिथ्यात्वादनित्योबाधितोऽव्यवहारतोऽजरामरश्चभवति ७ एवंयोगिनांसूक्ष्मदेहापरोक्ष्यमुक्तंमूढानामपितदस्तीत्याह मनइति मनोबुद्धिभ्यांपराभूतोजितःस्वप्नेष्वपिस्वदेहंपरदेहंचस्थूलादन्यंवेत्तीतितथा ८ । ९ । १० एवंस्वप्नइवगर्भेशयनंप्राप्तोऽपितत्रयेजाठराग्न्यादिभिर्दुःखंनाप्नोतितद्धृद्ययातप्राग्न्यादेरभावादित्याहअहेति अहेतिप्रसिद्धयर्थमव्ययं ऊष्माजाठरीयस्तदंतर्गतः ११ अस्यैवदुर्ज्ञेयत्वमाह तमिति तमेतमात्मानं अतितेजाःपरमेश्वरस्तस्यांशमिवांशं मूर्तिषुदेहेषु १२ कथंतत्प्राप्तिरतआह योगेति अनुच्छ्वासान्यचेतनानिस्थूलशरीराणि अमूर्तानिसूक्ष्मशरीराणि वज्रोपमानिब्रह्मप्रलयेऽप्यविनाशीनिकारणशरीराणि अतिक्रामंतीविशेषः केतमात्मानंयेपरीप्सवःप्राप्तुमिच्छवोभवंति योगेनदेहत्रयमुल्लंघयतामात्मप्राप्तिरित्यर्थः, १३ आश्रमकर्मसुकर्मच्छिद्रेषु एतन्मदुक्तंवाक्यं योगंयोगप्रधानं शांडिल्योमुनिरब्रवीत्

स्वपतांजाग्रतांचैवसर्वेषामात्मचिंतितम् ॥ प्रधानाद्वैधमुक्तानांजहतांकर्मजंरजः ५ यथाऽहनितथारात्रौयथारात्रौतथाऽहनि ॥ वशेतिष्ठतिसत्वात्मासततं योगयोगिनाम् ६ तेषांनित्यंसदानित्योभूतात्मासततंगुणैः ॥ सप्तभिस्त्वन्वितःसूक्ष्मैश्चरिष्णुरजरामरः ७ मनोबुद्धिपराभूतःस्वदेहपरदेहवित् ॥ स्वप्नेष्वपिभवत्येषविज्ञातासुखदुःखयोः ८ तत्रापिलभतेदुःखंतत्रापिलभतेसुखम् ॥ क्रोधलोभौतुतत्रापिकृत्वाव्यसनमर्च्छति ९ प्रीणितश्चापिभवतिमहतोऽर्थानवाप्यहि ॥ करोतिपुण्यंतत्रापिजीवन्निवचपश्यति १० अहोष्मांतर्गतश्चापिगर्भत्वंसमुपेयिवान् ॥ दशमासान्वसन्कुक्षौनैषोऽन्नमिवजीर्यते ११ तमेतमतितेजोंशंभूतात्मानंहृदिस्थितम् ॥ तमोरजोभ्यामाविष्टानानुपश्यंतिमूर्तिषु १२ योगशास्त्रपराभूत्वातमात्मानंपरीप्सवः ॥ अनुच्छ्वासान्यमूर्तानियानिवज्रोपमान्यपि १३ पृथग्भूतेषुसृष्टेषुचतुर्थाश्रमकर्मसु ॥ समाधौयोगमेवैतच्छांडिल्यःशममब्रवीत् १४ विदित्वासप्तसूक्ष्माणिषडंगंचमहेश्वरम् ॥ प्रधानविनियोगज्ञःपरंब्रह्मानुपश्यति १५ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने त्रिपंचाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

कीदृशंयोगंसमाधौशमंसमाधिकालीनंकारणमावात्परभूतंशमंसर्वद्वन्द्वशमात्मकं । तत्रसंन्यासिनांध्यानार्थंएवसंन्यासइतरेषामाश्रमिणामपिकर्मच्छिद्रेषुध्यानंविहितमेवेत्यर्थः । सोऽयंशमश्छांदोग्येऽपिशांडिल्यब्राह्मणेसर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीतेत्यादिनाविहितः । तत्रब्रह्मणएवजायतेतत्रैवलीयतेतेनैवाऽनितिचेष्टतेचेतितज्जलानितिहेतोर्यतःसर्वंब्रह्मतउत्पन्नमतोब्रह्मैव । अतएकात्म्यदर्शित्वेनरागद्वेषादिशून्यतयाशांतोभूत्वाउपासीतेतिश्रुत्यर्थः १४ उपसंहरति विदित्वेति सप्तसूक्ष्माणिइंद्रियार्थमनोबुद्धिमहत्तत्वाव्यक्तपुरुषान्शास्त्रतोविदित्वा षडंगंमहेश्वरंजगत्कारणं योगबलेनविदित्वा षडंगानितु 'सर्वज्ञतातृप्तिरनादिबोधःस्वतंत्रतानित्यमलुप्तशक्तिः । अनंतशक्तिश्चविभोर्विभुज्ञःषडाहुरंगानिमहेश्वरस्य'इतिवायुपुराणोक्तानि । प्रधानंत्रिगुणात्मकमज्ञानंतस्यविनियोगोविपरिणामइदंजगदितिजानन् परंब्रह्मशाखाग्रस्थानीयादीश्वरादांतरंचंद्रस्थानीयं अनुगुरुवेदवाक्यमनु ध्यानेनपश्यतिसाक्षात्करोति १५ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्रिपंचाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥



एवमध्यायद्वयेनस्थूलसूक्ष्मशरीराभ्यामात्मानंविविच्यमूलाज्ञानादपितंविवेक्तुमारभते हृदीति हृदयक्षेत्रे मोहोवैचित्त्यंतदेवसंचयोबीजंतस्मात्संभवोयस्य विधित्साकर्तुमिच्छा परिषिच्यतेऽस्मिन्नितिपरिषेचनमालवालम् १ आधारोमूलं परिषिच्यतेऽनेनेतिपरिषेचनंजलम् २ । ३ तत्फलंरस्पादितदिच्छवः आयसैर्लोहमयवद्दृढैःपाशैर्बंधकैःशरीरैर्वासनाभिर्वा ४ वासनाजित्वाकाममपकर्षतिनिकृंततिदुःखयोःसुखदुःखयोःवैषयिकसुखमपिदुःखमेवेतिमत्वादुःखयोरित्युक्तंस्यजमानस्त्यजंस्त्यक्तुमिच्छन् हेतौशानच् ५ येनरूपादिनाहेतुनातंकामपादपंसंरोहतिवर्धयतिसएवरूपादिस्तंवर्धकंहंति ६ मूलमज्ञानं साम्येननिर्विकल्पसमाधिना एतेनतार्किकाणामात्मत्वेनाभिमतादानंदमयाख्यादज्ञानादप्यन्यआत्मेतिकारणादपिविवेकोदर्शितः ७ बंधंबंधकत्वं वधमितिपाठेत्यागम् ८ अग्रिमाध्यायेविद्याविवक्षंस्तन्निर्वर्त्यसंसारंपूर्वोक्ताज्ञानकर्तृकराज्यरूपकेणाह शरीरंपुरमित्यादिना भोगायतनत्वाच्छरीरंपुरं भोगजसुखाभिमानित्वाद्बुद्धिःस्वामिनी तस्याबुद्धेर्निश्चयात्मिकायाबुद्धेःस्वामिन्याअर्थचिंतकममात्यस्थानीयंमनःविचारपरत्वात् ९ बुद्धेर्भोगार्थविषयधनमर्पयंतींद्रियाणिपौराः तेचमनसाऽमात्येनप्रवर्त्याइतिमनःपौराइत्युच्यंते ।

॥ व्यासउवाच ॥ हृदिकामद्रुमश्चित्रोमोहसंचयसंभवः ॥ क्रोधमानमहास्कंधोविधित्सापरिषेचनः १ तस्यचाज्ञानमाधारःप्रमादःपरिषेचनम् ॥ सोऽभ्यसूयापलाशोहिपुरादुष्कृतसारवान् २ संमोहचिंताविटपःशोकशाखोभयांकुरः ॥ मोहनीभिःपिपासाभिर्लताभिरनुवेष्टितः ३ उपासतेमहावृक्षंसुलुब्धास्तत्फलेप्सवः ॥ आयसैःसंयुताःपाशैःफलदंपरिवेष्ट्यतम् ४ यस्तान्पाशान्वशेकृत्वातंवृक्षमपकर्षति ॥ गतःसदुःखयोरंतंत्यजमानस्तयोर्द्वयोः ५ संरोहत्यकृतप्रज्ञःसदायेनहिपादपम् ॥ सतमेवततोहंतिविषग्रंथिरिवातुरम् ६ तस्यानुगतमूलस्यमूलमुद्ध्रियतेबलात् ॥ योगप्रसादात्कृतिनासाम्येनपरमासिना ७ एवंयोवेदकामस्यकेवलस्यनिवर्तनम् ॥ बंधंवैकामशास्त्रस्यसदुःखान्यतिवर्तते ८ शरीरंपुरमित्याहुःस्वामिनीबुद्धिरिष्यते ॥ तत्रबुद्धेःशरीरस्थंमनोनामार्थचिंतकम् ९ इंद्रियाणिमनःपौरास्तदर्थंतुपराकृतिः ॥ तत्रद्वौदारुणौदोषौतमोनामरजस्तथा ॥ तदर्थमुपजीवंतिपौराःसहपुरेश्वरैः १० अद्वारेणतमेवार्थंद्वौदोषावुपजीवतः ॥ तत्रबुद्धिर्हिदुर्धर्षामनःसामान्यमश्नुते ११ पौराश्चापिमनस्त्रस्तास्तेषामपिचलास्थितिः ॥ तदर्थंबुद्धिरध्यास्तेसोऽनर्थःपरिषीदति १२

तदर्थंतेषामिंद्रियपौराणांपालनार्थंमनसःपराकृतिर्महतीक्रियाप्रवृत्तिर्यज्ञदानक्षेत्रारामादिर्दृष्टादृष्टार्थसाधिका । तत्रकृतौद्वौदोषौरजस्तमसीराजसतामसाहंकारौदारुणौक्रियाफलमन्यथयंतौचित्तामात्यस्यकालुष्यंकुर्वंतौ । तमेवार्थंक्रियाफलंसुखदुःखंमनसाऽमात्येनसदोषेणनिर्मितंपौराउपजीवंतिश्रयंति पुरेश्वरैर्मनोबुद्ध्यहंकारैःसह १० एवंसत्यद्वारेणाऽविहितेननिषिद्धेनचमार्गेणपरदारार्थादिनाराजसतामसाहंकारौकर्तारौतंसुखादिरूपमप्यर्थमुपजीवतःतत्रएवंसतिदुर्धर्षाऽपिबुद्धिःशुद्धसत्त्वमयत्वेनरजस्तमसोरवशत्वात्साऽपिदोषकलुषितेनमनसासहसमानत्वंभजतेमनसःप्रधानत्वात् । एवंबुद्धिरपिसदोषत्वेन । 'ययाधर्ममधर्मंचकार्यंचाकार्यमेवच । अयथावत्प्रजानातिबुद्धिःसापार्थराजसी । अधर्मंधर्ममितियामन्यतेतमसाऽऽवृता । सर्वार्थान्विपरीतांश्चबुद्धिःसापार्थतामसी'इतिभगवदुक्तरूपवतीभवति ११ ततोऽपिकिंस्यादित्यतआह पौराइति दुष्टेमनसींद्रियाण्यपिदुष्टानिभूत्वानक्वचित्स्थैर्यंलभंतेएवंबुद्धिरपिदुष्टासतीयदर्थंयमर्थंधनपुत्रादिकंहितमित्यध्यवस्यतिसएवानर्थोदुःखदायीभूत्वापरिषीदतिनश्यति १२

नष्टोऽप्ययोंदुःखदइत्याह यदिति यद्बुद्धिसहितंमनः अर्थनाशादूर्ध्वंमध्यास्तेस्मरतितन्मनोऽपिपरिषीदति । मनस्तापेनबुद्धिरपितप्यतइत्याह पृथगिति । संकल्परूपेणमनोयदाबुद्धेःसका
शात्पृथक्भवतितदातत्केवलंमनइत्युच्यते । वस्तुतस्तुतदेवबुद्धिरतस्तत्तापेनबुद्धिरपितप्यतइत्यर्थः ११ बुद्धिमनसोरनात्मनोस्तापेआत्मनःकिंनष्टमतआहसार्धेन तत्रेति एनमात्मानंतत्र
बुद्धौविष्टंप्रतिबिंबरूपेणस्थापितंरजोबुद्धिगतोरजोगुणोदुःखैकफलदःपर्यवतिष्ठतेऽश्नोति । तथाचबुद्धिधर्माःपरिच्छेदपरितापादयस्तदुपहितेआत्मनिभांतीत्यर्थः । 'बुद्धेर्गुणेनात्मगुणेनचैव
ह्याराग्रमात्रोह्यवरोऽपिदृष्टः । सद्धिस्वप्नोभूत्वाध्यायतीवलेलायतीव'इत्यादिश्रुतिभ्यस्तैर्बुद्धिगुणैरात्माऽपितप्यतएवेति । फलितमाह तदिति तत्तस्माद्धेतोःमनोरजसासहसख्यंकुरुतेप्रवृत्तु
न्मुखंसंभवतीत्यर्थः । ततःकिमतआह संगतंमनउपाधिकंतमात्मानंपौरंजनमिंद्रियाणिचादायस्ववशेकृत्वामनःकर्तृरजसेरजःफलायदुःखायप्रयच्छति । यथादुष्टोऽमात्योराजानंपौरंजनं
चस्वाधीनंकृत्वाशत्रवेऽर्पयतितद्वद्राजसेनमनसाआत्माबुद्धिरिंद्रियाणिचबद्धानीत्यर्थः १४ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुःपंचाशदधिकद्विशतत

यदर्थंपृथगध्यास्तेमनस्तत्परिषीदति ॥ पृथग्भूतंमनोबुद्ध्यामनोभवतिकेवलम् १३ तत्रैनंविष्टंशून्यंरजःपर्यवतिष्ठते ॥ तन्मनःकुरुतेसख्यंरजसासहसं
गतम् ॥ तंचादायजनंपौरंरजसेसंप्रयच्छति १४ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने चतुःपंचाशदधिकद्विशततत
मोऽध्यायः ॥ २५४ ॥ छ ॥ ॥ छ ॥ ॥ भीष्मउवाच ॥ भूतानांपरिसंख्यानंभूयःपुत्रनिशामय ॥ द्वैपायनमुखाद्भ्रष्टंश्लाघयापरयाऽनघ १
दीप्तानलनिभःप्राहभगवान्धूमवर्चसे ॥ ततोऽहमपिवक्ष्यामिभूयःपुत्रनिदर्शनम् २ भूमेःस्थैर्यंगुरुत्वंचकाठिन्यंप्रसवार्थता ॥ गंधोगुरुत्वंशक्तिश्चसंघातःस्था
पनाधृतिः ३ अपांशैत्यंरसःक्लेदोद्रवत्वंस्नेहसौम्यता ॥ जिह्वाविस्यंदनंचापिभौमानांश्रपणंतथा ४ अग्रेर्दुर्धर्षताज्योतिस्तापःपाकःप्रकाशनम् ॥ शोकोरागोल
घुस्तैक्ष्ण्यंसततंचोर्ध्वभासिता ५ वायोरनियमस्पर्शोवादस्थानंस्वतंत्रता ॥ बलंशैघ्र्यंचमोक्षंचकर्मचेष्टात्मताभवः ६

मोऽध्यायः ॥ २५४ ॥ ॥ छ ॥ ॥ एवंप्रवृत्तस्यबंधस्यमोक्षार्थंन्यासेनोक्तमुपायंवक्तुंप्रतिजानीतेभीष्मः भूतानामिति चिदात्मोपाधिभूतानांखादीनांपरिसंख्यानंनिवारणंभूयइति
प्रागुक्तमेवाध्यात्मंपुनःश्लाघयाधन्योऽहमीदृशमध्यात्मंज्ञातवानितिबुद्ध्यानिशामयशृणु १ दीप्तेति अज्ञानेनानावृतोवह्निनिभः आवृतोधूमतुल्यः निदर्शनंनिश्चितंशास्त्रमज्ञानापनो
दकम् २ 'एतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घं'इत्यादिश्रुत्याब्रह्मणिनिषिद्धानांचतुर्विधपरिमाणादिगुणानामाश्रयोभूतान्येवेत्यात्मनोनिर्गुणत्वसिद्ध्यर्थंभूम्यादिगुणा
न्विभजते भूमेरिति । स्थैर्यमचांचल्यम् । गुरुत्वंपतनप्रतियोगीगुणः । प्रसवोधान्याद्युत्पत्तिस्तदर्थता । गुरुत्वंप्रथमानतापिंडपुष्टिः । शक्तिर्गंधग्रहणसामर्थ्यं । संघातःश्लिष्टावयवत्वम् ।
स्थापनामनुष्याद्याश्रयत्वं धृतिर्पांचभौतिकेमनसियोधृत्यंशःसपार्थिवःस्थैर्यशब्देनैवोपात्तइतिधृतिशब्देनात्रमूर्तांतरप्रवेशस्थानत्वमुच्यते ३ जिह्वारसनेंद्रियं । विस्यंदनंप्रस्रवणम्
चाद्भिमकरकादिरूपेणसंघातश्च । भौमानांतंडुलादीनांश्रपणंपाचनम् ४ ज्योतिर्ज्वलनकर्म लघुःशीघ्रगामित्वम् ५ अनियमस्पर्शोऽनुष्णाशीतस्पर्शः । वादस्थानंवागिंद्रियगोळ
कानि । स्वतंत्रतागमनादौ मोक्षोमूत्रादेः कर्मउत्क्षेपणादि चेष्टाश्वासप्रश्वासादिः । आत्मताप्राणरूपेणचिदुपाधित्वम् । भवोजन्ममरणे ६



अनाश्रयमाश्रयस्याभावः । अनालंबनमाश्रयांतरशून्यत्वम् । अव्यक्तंरूपस्पर्शशून्यत्वात् । अविकारिताद्रव्यांतरानारंभकत्वम् ७ भूतत्वंश्रोत्रेंद्रियोपादानत्वात् । विकृतानिदेहांतर्गतच्छि
द्राणि । अत्रभूतत्वविकृतत्वादयोभूतांतरेऽपिसंभवंतीतिअधिकगुणत्वंतत्रास्तितथापिगुणाःपंचाशदेवपंचाशतमित्यार्षं । पंचभूतात्मभाविताःपंचानांभूतानामात्माप्रातिस्विकंस्वरूपंतत्रलक्षिताः
८ धैर्योपपत्तिरूहापोहकौशलं व्यक्तिःस्मरणम् । विसर्गोविपरीतःसर्गोभ्रांतिः । कल्पनामनोरथवृत्तिः । क्षमाप्रसिद्धा । सद्वैराग्यादि । असद्रागद्वेषादि । आशुताअस्थिरत्वम् ९ इष्टानि
ष्टानांवृत्तिविशेषाणांविपत्तिर्नाशोनिद्रारूपावृत्तिरित्यर्थः । व्यवसायउत्साहः । समाधितािचत्तस्थैर्यंनिरोधइत्यर्थः । संशयःकोटिद्वयस्पृग्ज्ञानं । प्रतिपत्तिःप्रत्यक्षादिप्रमाणवृत्तिः १०
अत्रबुद्धिमनसीएकीकृत्यशंकतेकथमिति ननुभूम्यादीनांजडानांस्थैर्यादयोजडाएवगुणाइतियुक्तम् । इंद्रियमनसांतुपश्याम्यहंदुःखयहंजानाम्यहमित्यात्माभेदेनप्रतीयमानानांकथमनात्मत्वं ।
अनात्मत्वेवाकथंतद्गुणानांधैर्योपपत्त्यादीनांप्रतिपत्त्यंतानांज्ञानरूपत्वम् । नहिजडानामजडागुणाःसंभवंतीत्यैंद्रियागुणारूपादिप्रकाशाइतिबुद्धिगुणानामेवावयुत्याऽनुवादः ११ अत्रोत्तरंयदे
तद्धृदयंमनश्चेत्यादिप्रज्ञानंब्रह्मेत्यंताश्रुतिमनुसरन्नाह आहुरिति ननुपंचाशद्भूतगुणाःपंचबुद्धिगुणाइतिपंचपंचाशद्वा । चतुर्दशानुपदोक्ताबुद्धिगुणाइतिपक्षेचतुःषष्टिर्वाबुद्धिगुणाःस्युरित्याशंक्याह

आकाशस्यगुणःशब्दोव्यापित्वंछिद्रताऽपिच ॥ अनाश्रयमनालंबमव्यक्तमविकारिता ७ अप्रतीघातिताचैवभूतत्वंविकृतानिच ॥ गुणाःपंचाशतंप्रोक्ताःपंच
भूतात्मभाविताः ८ धैर्योपपत्तिर्व्यक्तिश्चविसर्गःकल्पनाक्षमा ॥ सदसच्चाशुताचैवमनसोनववैगुणाः ९ इष्टानिष्टविपत्तिश्चव्यवसायःसमाधिता ॥ संशयःप्रतिप
त्तिश्चबुद्धेःपंचगुणान्विदुः १० ॥ युधिष्ठिरउवाच ॥ कथंपंचगुणाबुद्धिःकथंपंचेंद्रियागुणाः ॥ एतन्मेसर्वमाचक्ष्वसूक्ष्मज्ञानंपितामह ११ ॥ भीष्मउवाच ॥
आहुःषष्टिंबुद्धिगुणान्वैभूतविशिष्टानित्यविषक्ताः ॥ भूतविभूतीश्चाक्षरसृष्टाःपुत्रननित्यंतदिहवदंति १२ तत्पुत्रचिंताकलिलंतदुक्तमनागतंवैतवसंप्रतीह ॥ भूता
र्थतत्त्वंतदवाप्यसर्वंभूतप्रभावाद्भवशांतबुद्धिः १३ ॥ इति श्रीमहाभारते शां० मो० शुकानुप्रश्ने पंचपंचाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥ ॥

भूतविशिष्टाःपंचभूतान्यपिबुद्धेरेवगुणाःपूर्वेचपंचपंचाशदितिषष्टिर्बुद्धिगुणानाहुः । तेचनित्येनचैतन्येनविषक्ताःमिश्रिताःजडानामपिवृत्तीनांचिदनुवेधेनैवज्ञानरूपत्वव्यवहारइतिनकश्चिद्दोष
इतिभावः । वृत्तिभिश्चैतन्यस्यसंबंधोजतुकाष्ठवन्मामूदित्याशयेनाह भूतेति भूतानिपंचतद्विभूतयश्चमनोबुद्धिभ्यांसहउक्ताःषट्षष्टिरित्येकसप्ततिपदार्थानक्षरेणब्रह्मणाप्रशासितान्सृष्टानवदंतिवे
दाःसर्वंखल्विदंब्रह्मतज्जलानितीत्यादयः । नन्वक्षरस्यसर्वस्रष्टृत्वेपरिणामित्वंस्यादित्याशंक्याह पुत्रननित्यंतदिहवदंतीति तदक्षरस्रष्टृत्वमक्षरस्याक्षरत्वादपरिणामित्वादेवानित्यंन । यथा
क्षीरस्यनित्यंदधिस्रष्टृत्वंतद्वन्नकिंतर्हिशुक्तिकायांरजतंप्रातिकादाचित्कंब्रष्टिसमसमयंचितोविश्वस्रष्टृत्वमित्यर्थः । एवंचितोऽपरिणामित्वात्तज्जंजगद्रज्जूरगवन्मृषैवेतिब्रह्माद्वैतंसिद्ध्यतीतिभावः
तथाचश्रुतिः । 'अजायमानोबहुधाविजायते'इति जन्मादिभावविकारमलभमानएवबहुरूपोभवतीतिश्रुत्यर्थः १२ इदमेवमदुक्तंवेदसंमतमित्याह तदिति तत्तस्मिन्पूर्वश्लोकोक्तेजगदुत्पत्त्यादि
विषयेयत्तवदुःखमनागतमनागमंवेदविरुद्धमुक्तमन्यैर्वादिभिस्तच्चिताकलिलंविचारतोदुष्टंयौक्तिकैःउक्तमपियुक्तिविरुद्धमेवश्रौतमेवमतंयुक्तिमत्तरमित्यर्थः । त्वंसंप्रतिइहलोकेतन्मदुक्तंभूतार्थस्य
नित्यसिद्धस्यब्रह्मणस्तत्त्वंयाथात्म्यंसर्वंकृत्स्नमवाप्यभूतप्रभावाद्ब्रह्मैश्वर्यात् ल्यब्लोपेपंचमी तत्राप्यशातानिर्वृत्तिकाबुद्धिर्यस्यतथाभव १३ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि
नीलकंठीये भारतभावदीपे पंचपंचाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

मनुज्ञातबुद्धिदैवश्रेयश्चेन्मृत्युरत्यंतविस्मृतिरितिस्मृतेर्भामरणेस्वयमेवमवर्तिकिंसाधनायासेनेत्याशंक्यप्रामाद्यामांतरप्राप्तिवन्मृत्युजन्मनीनतुखरूपनाशोदयौ कृतहानाकृताभ्यागमादिदोष
प्रसक्तेः । स्मृतिस्तुस्थूलदेहमात्रविस्मरणपरेतिनिर्णयार्थंमृत्युप्रजापतिसंवादमारभते यइमेपृथिवीपालाइत्यादिना १ । २ । ३ वर्ततिवर्तते ४ । ५ कस्येति स्थूलस्यसूक्ष्मस्यवा
देहस्याऽऽत्मनएववेति कुतःपुरुषात्केननिमित्तेन ६ आख्यायिकामुखेनकृतइत्यस्योत्तरंतावदाह पुरेत्यादिना ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ खेभ्यइंद्रियच्छि

युधिष्ठिरउवाच ॥ यइमेपृथिवीपालाःशेरतेपृथिवीतले ॥ पृतनामध्यएतेहिगतसंज्ञामहाबलाः १ एकैकशोभीमबलानागायुतबलास्तथा ॥ एतेहिनिहताःसंख्ये
तुल्यतेजोबलैर्नरैः २ नैषांपश्यामिहंतारंप्राणिनांसंयुगेपरम् ॥ विक्रमेणोपसंपन्नास्तेजोबलसमन्विताः ३ अथचेमेमहाप्राज्ञाःशेरतेहिगतासवः ॥ मृताइतिचशब्दो
ऽयंवर्तत्येषुगतासुषु ४ इमेमृतानृपतयःप्रायशोभीमविक्रमाः ॥ तत्रमेसंशयोजातःकुतःसंज्ञामृताइति ५ कस्यमृत्युःकुतोमृत्युःकेनमृत्युरिहप्रजाः ॥ हरत्यमरसं
काशतन्मेब्रूहिपितामह ६ ॥ भीष्मउवाच ॥ पुराकृतयुगेतातराजाह्यासीदकंपनः ॥ सशत्रुवशमापन्नःसंग्रामेक्षीणवाहनः ७ तस्यपुत्रोहरिर्नामनारायणसमोबले ॥
सशत्रुभिर्हतःसंख्येसबलःसपदानुगः ८ सराजाशत्रुवशगःपुत्रशोकसमन्वितः ॥ यदृच्छयाशांतिपरोददर्शभुविनारदम् ९ तस्मैससर्वमाचष्टयथावृत्तंजनेश्वरः ॥
शत्रुभिर्ग्रहणंसंख्येपुत्रस्यमरणंतथा १० तस्यतद्वचनंश्रुत्वानारदोऽथतपोधनः ॥ आख्यानमिदमाचष्टपुत्रशोकापहंतदा ११ ॥ नारदउवाच ॥ राजन्शृणुसमा
ख्यानमद्येदंबहुविस्तरम् ॥ यथावृत्तंश्रुतंचैवमयेदंवसुधाधिप १२ प्रजाःसृष्ट्वामहातेजाःप्रजासर्गेपितामहः ॥ अतीववृद्धावहुलानामृष्यतपुनःप्रजाः १३ नह्यंत
रमभूत्किंचित्क्वचिज्जंतुभिरच्युत ॥ निरुच्छ्वासमिवोन्नद्धंत्रैलोक्यमभवन्नृप १४ तस्यचिंतासमुत्पन्नासंहारंप्रतिभूपते ॥ चिंतयन्नाध्यगच्छच्चसंहारेहेतुकारणम् ॥
१५ तस्यरोषान्महाराजखेभ्योऽग्निरुदतिष्ठत ॥ तेनसर्वादिशोराजन्ददाहसपितामहः १६ ततोदिवंभुवंखंचजगच्चसचराचरम् ॥ ददाहपावकोराजन्भगवत्को
पसंभवः १७ तत्रादह्यंतभूतानिजंगमानिध्रुवाणिच ॥ महताक्रोधवेगेनकुपितेप्रपितामहे १८ ततोऽध्वरजटःस्थाणुर्वेदाध्वरपतिःशिवः ॥ जगामशरणंदेवोब्रह्मा
णंपरवीरहा १९ तस्मिन्नभिगतेस्थाणौप्रजानांहितकाम्यया ॥ अब्रवीत्परमोदेवोज्वलन्निवतदाशिवम् २० करवाण्यद्यकंकामंवरार्होऽसिमतोमम ॥ कर्ताह्यस्मि
प्रियंशंभोतवयद्धृदिवर्तते २१ ॥ इति श्रीमहाभारते शांति० मोक्ष० मृत्युप्रजापतिसंवादोपक्रमे षट्पंचाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥ ॥ ७ ॥
॥ स्थाणुरुवाच ॥ प्रजासर्गनिमित्तंमेकार्यवत्तामिमांप्रभो ॥ विद्धिसृष्टास्त्वयाहीमामाकुप्याऽसांपितामह १

द्रेभ्यः १६ खंखस्थंग्रहनक्षत्रादि १७ ध्रुवाणिध्रुवाणीध्रुवापृथिवीत्यादिश्रुतेर्धृपृथिव्यादीनि १८ अध्वरः ध्वर्हिंसायां अहिंसैवजटाइवशिरसिधार्यत्वेनमान्यायस्यसोऽध्वरजटोवबालुः ।
हरिजटइतिपाठेऽपिहरिशब्देनतद्गुणःपालकत्वमालक्ष्यपूर्ववदर्थः १९ । २० । २१ ॥ ॥ इति शांतिपर्वणि नीलकंठीये भारतभावदीपे षट्पंचाशदधिकशततमोऽ ॥१३१७
ध्यायः ॥ २५६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ प्रजेति कार्यंवत्तामर्थित्वं माकुप्यकोपंमाकुरु आसांआसु १

२ नमवेयुर्नश्येयुः ३ । ४ । ५ । ६ उरुपमविगुणविशेषः ७ । ८ । ९ । १० अधिदेवेअहंकाराधिष्ठातृत्वे ११ आवृत्तिजाःप्रजायाधामियाचे आवृत्त्याजाताः मृत्वामृ
त्वापुनर्नोपंयामित्यर्थः १२ सन्निजग्राहसंहृतवान् १३ प्रवृत्तिंजन्म निवृत्तिंमरणं अनेनात्यंतप्रजानामुच्छेदोनाप्यत्यंतंभूमेर्भारइतिदर्शितं १४ विश्वेभ्यःसर्वेभ्यः १५ । १६ उभौ

सवतेजोग्निनादेवप्रजादह्यंतिसर्वशः ॥ तादृष्ट्वाममकारुण्यंमाकुप्याऽऽसांजगत्प्रभो २ ॥ प्रजापतिरुवाच ॥ नकुप्येनचमेकामोनभवेयुःप्रजाइति ॥ लाघवार्थंध
रण्यास्तुततःसंहारइष्यते ३ इयंहिमांसदादेवीभारार्तासमचोदयत् ॥ संहारार्थंमहादेवभारेणाप्सुनिमज्जति ४ यदाऽहंनाधिगच्छामिबुद्ध्याबहुविचारयन् ॥
संहारमासांवृद्धानांततोमांक्रोधआविशत् ५ ॥ स्थाणुरुवाच ॥ संहारार्थंप्रसीदस्वमाकुधोविबुधेश्वर ॥ माप्रजाःस्थावरंचैवजंगमंचव्यनीनशत् ६ पल्वलानिच
सर्वाणिसर्वंचैवतृणोलपम् ॥ स्थावरंजंगमंचैवभूतग्रामंचतुर्विधम् ७ तदेतद्भस्मसाद्भूतंजगत्सर्वमुपद्रुतम् ॥ प्रसीदभगवन्साधोवरएषवृतोमया ८ नष्टानपुनरेष्यं
तिप्रजाह्येताःकथंचन ॥ तस्मान्निवर्ततामेतत्तेजस्त्वेनैवतेजसा ९ उपायमन्यंसंपश्यभूतानांहितकाम्यया ॥ यथाऽमीजंतवःसर्वेनदह्येरन्पितामह १० अभावंहि
नगच्छेयुरुच्छिन्नप्रजनाःप्रजाः ॥ अधिदैवेनियुक्तोऽस्मित्वयालोकेश्वरेश्वर ११ त्वद्भवंहिजगन्नाथएतत्स्थावरजंगमम् ॥ प्रसाद्यत्वांमहादेवयाचाम्यावृत्तिजाःप्रजाः
१२ ॥ नारदउवाच ॥ श्रुत्वातुवचनंदेवःस्थाणोर्नियतवाङ्मनाः ॥ तेजस्तत्सन्निजग्राहपुनरेवांतरात्मनि १३ ततोऽग्निमुपसंगृह्यभगवाँल्लोकपूजितः ॥ प्रवृत्तिंचनि
वृत्तिंचकल्पयामासवैप्रभुः १४ उपसंहरतस्तस्यतमग्निंरोषजंतदा ॥ प्रादुर्बभूवविश्वेभ्यःखेभ्योनारीमहात्मनः १५ कृष्णरक्तांबरधराकृष्णनेत्रतलांतरा ॥ दि
व्यकुंडलसंपन्नादिव्याभरणभूषिता १६ सावनिःसृत्यवैखेभ्योदक्षिणामाश्रितादिशम् ॥ ददृशातेचतांकन्यांदेवौविश्वेश्वरावुभौ १७ तामाहूयतदादेवोलोकाना
मादिरीश्वरः ॥ मृत्योइतिमहीपालजहिचेमाःप्रजाइति १८ त्वंहिसंहारबुद्ध्यामेचिंतितारुषितेनच ॥ तस्मात्संहरसर्वास्त्वंप्रजाःसजडपंडिताः १९ अविशेषेण
चैवत्वंप्रजाःसंहरकामिनि ॥ ममत्वंहिनियोगेनश्रेयःपरमवाप्स्यसि २० एवमुक्तातुसादेवीमृत्युःकमलमालिनी ॥ प्रदध्यौदुःखिताबालासाश्रुपातमतीवच २१
पाणिभ्यांचैवजग्राहतान्यश्रूणिजनेश्वरः ॥ मानवानांहितार्थाययथाचेपुनरेवह २२ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि मृत्युप्र
जापतिसंवादे सप्तपंचाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ नारदउवाच ॥ ॥ विनीयदुःखमबलासाऽऽ
त्मनैवायतेक्षणा ॥ उवाचप्रांजलिर्भूत्वातमेवावर्जितातदा १ त्वयासृष्टाकथंनारीमादृशीवदतांवर ॥ रौद्रकर्माभिजायेतसर्वप्राणिभयंकरी २ बिभेम्यह
मधर्मस्यधर्म्यमादिशकर्ममे ॥ त्वंमांभीतामवेक्षस्वशिवेनेक्षस्वचक्षुषा ३

प्रभुरुद्रौ १७ । १८ । १९ । २० । २१ पाणिभ्यामश्रूणिजग्राह मृत्योर
श्रुपातेयुगपत्सर्वभूतक्षयोमाभूदितिभावः २२ ॥ इति शांति० मो० नी० भा० सप्तपंचाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥ ॥ ७ ॥ विनीयप्रमार्ज्य आवर्जितानम्रीभूता १ । २ । ३

४ प्रियानपुत्रानित्यस्यनहरेयमितिपूर्वेणान्वयः तत्रहेतुः येषांसंबंधिनोमृतास्तेयत्पपध्यास्यंतिशप्स्यंतेतर्हितेपातिभ्योबिभेम्यहं ५ बलवदत्यंतम् ६ । ७ । ८ । ९ । १० । ११ । १२ । १३
१४ अप्रतिश्रुत्याऽनंगीकृत्य धेनुकंगोतीर्थंमायांतर्वर्ति १५ । १६ । १७ । १८ । १९ । २० कौशिकींगंडकींनदीम् २१ । २२ दार्विवस्थाणुरिव २३ । २४ । २५ । २६ निग्रह्यहठंकृत्वा २७

बालान्वृद्धान्वयस्थांश्चनहरेयमनागसः ॥ प्राणिनःप्राणिनामीशनमस्तेस्तुप्रसीदमे ४ प्रियान्पुत्रान्वयस्थांश्चभ्रातॄन्मातॄःपितॄनपि ॥ अपध्यास्यंतियद्येवंमृ
तास्तेषांबिभेम्यहम् ५ कृपणाश्रुपरिक्लेदोदहेन्मांशाश्वतीःसमाः ॥ तेभ्योऽहंबलवद्भीताशरणंत्वामुपागता ६ यमस्यभवनेदेवपात्यंतेपापकर्मिणः ॥ प्रसाद
येत्वांवरदप्रसादंकुरुमेप्रभो ७ एतदिच्छाम्यहंकामंत्वत्तोलोकपितामह ॥ इच्छेयंत्वत्प्रसादार्थंतपस्तप्तुंमहेश्वर ८ ॥ पितामहउवाच ॥ मृत्योसंकल्पितामेत्वं
प्रजासंहारहेतुना ॥ गच्छसंहरसर्वास्त्वंप्रजामाचविचारय ९ एतदेवमवश्यंहिभवितानैतदन्यथा ॥ क्रियतामनवद्यांगियथोक्तंमद्वचोऽनघे १० एवमु
क्तामहाबाहोमृत्युःपरपुरंजय ॥ नव्याजहारतस्थौचप्रह्वाभगवदुन्मुखी ११ पुनःपुनरथोक्तासागतसत्वेवभामिनी ॥ तूष्णीमासीत्ततोदेवोदेवानामीश्वरेश्वरः
१२ प्रससादकिलब्रह्मास्वयमेवात्मनात्मनि ॥ स्मयमानश्चलोकेशोलोकान्सर्वानवैक्षत १३ निवृत्तरोषेतस्मिंस्तुभगवत्यपराजिते ॥ साकन्याऽथजगामास्य
समीपादितिनःश्रुतम् १४ अपसृत्याप्रतिश्रुत्यप्रजासंहरणंतदा ॥ त्वरमाणेवराजेंद्रमृत्युर्धेनुकमभ्यगात् १५ सातत्रपरमंदेवीतपोऽचरतदुश्चरम् ॥ समाह्ये
कपदेतस्थौदशपद्मानिपंचच १६ तांतथाकुर्वतींतत्रतपःपरमदुश्चरम् ॥ पुनरेवमहातेजाब्रह्मावचनमब्रवीत् १७ कुरुष्वमेवचोमृत्योतदनादृत्यसत्वरा ॥ त
थैवैकपदेतातपुनरन्यानिसप्तसा १८ तस्थौपद्मानिषट्चैवपंचद्वेचैवमानद ॥ भूयःपद्मायुतंतातमृगैःसहचचारसा १९ द्वेचायुतेनरश्रेष्ठवाय्वाहारामहामते ॥
पुनरेवततोराजन्मौनमातिष्ठदुत्तमम् २० अप्सुवर्षसहस्राणिसप्तचैकंचपार्थिव ॥ ततोजगामसाकन्याकौशिकींनृपसत्तम २१ तत्रवायुजलाहाराचचारनियमं
पुनः ॥ ततोययौमहाभागागंगांमेरुंचकेवलम् २२ तस्थौदार्विवनिश्चेष्टाप्रजानांहितकाम्यया ॥ ततोहिमवतोमूर्ध्नियत्रदेवाःसमीजिरे २३ तत्रांगुष्ठेनराजेंद्रनि
खर्वमपरंततः ॥ तस्थौपितामहंचैवतोषयामासयत्नतः २४ ततस्तामब्रवीत्तत्रलोकानांप्रभवाप्ययः ॥ किमिदंवर्ततेपुत्रिक्रियतांममतद्वचः २५ ततोऽब्रवी
त्पुनर्मृत्युर्भगवंतंपितामहम् ॥ नहरेयंप्रजादेवपुनश्चाहंप्रसादये २६ तामधर्मभयाद्भीतांपुनरेवप्रयाचतीम् ॥ तदाऽब्रवीद्देवदेवोनिगृह्येदंवचस्ततः २७ अध
र्मोनास्तितेमृत्योसंयच्छेमाःप्रजाःशुभे ॥ मयाह्युक्तंमृषाभद्रेभवितानेहकिंचन २८ धर्मःसनातनश्चत्वामिहैवानुप्रवेक्ष्यति ॥ अहंचविबुधाश्चैवत्वद्धितेनिरताः
सदा २९ इममन्यंचतेकामंददानिमनसेप्सितम् ॥ नत्वांदोषेणयास्यंतिव्याधिसंपीडिताःप्रजाः ३० पुरुषेषुस्वरूपेणपुरुषस्त्वंभविष्यसि ॥ स्त्रीपुस्त्रीरूपि
णीचैवतृतीयेषुनपुंसकम् ३१

२८ । २९ अपध्यास्यंतीत्युक्तंतत्राह नत्वामिति त्वयिदोषंनवदिष्यंतीत्यर्थः ३० पुरुषेष्विति 'रूपंरूपंप्रतिरूपो
बभूव'इतिश्रुतेःसर्वेषांप्रतिरूपंत्रअतस्त्वंचतद्भावममासस्यनमवर्तीति प्रमभावंमाप्स्यसीत्यर्थः । 'तेनचनहवाएवंविदिपापंकर्मालिप्यते'इतिश्रुतेर्ब्रह्मज्ञायास्तेपापलेपोऽपिनभविष्यतीतिभावः ३१

यावद्देहपातंक्रोधवेगंधारयितुमशक्तयाहिंस्रस्यब्रह्मनिष्ठाऽपिनश्यतितत्तश्चपापलेशोऽपिप्रसक्तइत्यभिप्रेत्याह सैवमिति ३२ । ३३ कालयिष्यंतिमारयिष्यंति ३४ तवापिमारकत्वंमरणनि
दानयोःकामक्रोधयोःप्रेरकत्वेनेत्याह सर्वेषामिति । नन्वेवमपिप्रयोजकेमयिपापसंबंधःप्रसक्तइत्याशंक्याह एवमिति एवंकुर्वतींत्वांप्रतिधर्मोऽपिनिश्चितत्वयाउपैष्यति । प्राणिकर्मानुरोधेन
कामक्रोधोद्भावनद्वाराभूतानिमारयंत्यास्तवनदोषोऽस्तियतस्त्वंतुल्यवृत्तिःरागद्वेषशून्याऽसि तथाचसूत्रितं । वैषम्यनैर्घृण्येनसापेक्षत्वादिति परमेश्वरस्यविषमांसृष्टिंकुर्वतोवैषम्यादिदोषो
नास्तिकुतस्तत्तत्प्राणिकर्मसापेक्षत्वाद्वैषम्यस्येतिसूत्रार्थः ३५ अभ्यागतमधिकारंरोचयकामंसंयोज्यजंतून्संहरस्वेतियोजना ३६ प्राप्यप्राप्यच ३७ प्राणनांतेजीवनांते बुद्ध्यजानीहि ३८
सर्वइति देवाइंद्रियाणिप्राणनांते स्वव्यवहारांतेजाग्रदवसाने सद्वस्तुगत्वा । सतासोम्यतदासंपन्नोभवतीतिश्रुतेःसुषुप्तौब्रह्माभेदंप्राप्यजागरेपुनरावृत्तास्तथैवपुनर्निवृत्ताइति । तथाऽवस्थाभेदे

सैवमुक्तामहाराजकृतांजलिरुवाचह ॥ पुनरेवमहात्मानंनेतिदेवेशमव्ययम् ३२ तामब्रवीत्तदादेवोमृत्योसंहरमानवान् ॥ अधर्मस्तेनभवितातथाध्यास्याम्यहं
शुभे ३३ यानश्रुबिंदून्पतितानपश्यंयेपाणिभ्यांधारितास्तेपुरस्तात् ॥ तेव्याधयोमानवान्घोररूपाःप्राप्तेकालेकालयिष्यंतिमृत्यो ३४ सर्वेषांत्वंप्राणिनामं
तकालेकामक्रोधौसहितौयोजयेथाः ॥ एवंधर्मस्त्वामुपैष्यत्यमेयोनचाधर्मंलप्स्यसेतुल्यवृत्तिः ३५ एवंधर्मंपालयिष्यस्यथोत्वंनचात्मानंमज्जयिष्यस्यधर्मे ॥ त
स्मात्कामंरोचयाभ्यागतंत्वंसंयोज्याथोसंहरस्वेहजंतून् ३६ सावैतदामृत्युसंज्ञापदेशाद्भीताशापाद्बाढमित्यब्रवीत्तम् ॥ अथोप्राणान्प्राणिनामंतकालेकामक्रोधौप्रा
प्यनिर्मोह्यहंति ३७ मृत्योर्येतेव्याधयश्चाश्रुपातामनुष्याणांरुज्यतेयैःशरीरम् ॥ सर्वेषांवैप्राणिनांप्राणनांतेतस्माच्छोकंमाकृथाबुद्ध्यबुद्ध्या ३८ सर्वेजीवाःप्राणि
नांप्राणनांतेगत्वावृत्ताःसन्निवृत्तास्तथैव ॥ एवंसर्वेमानवाःप्राणनांतेगत्वावृत्तादेववद्राजसिंह ३९ वायुर्भीमोभीमनादोमहौजाःससर्वेषांप्राणिनांप्राणभूतः ॥ नाना
वृत्तिर्देहिनांदेहभेदेतस्माद्वायुर्देवदेवोविशिष्टः ४० सर्वेदेवामर्त्यसंज्ञाविशिष्टाःसर्वेमर्त्यादेवसंज्ञाविशिष्टाः ॥ तस्मात्पुत्रंमाशुचोराजसिंहपुत्रःस्वर्गंप्राप्यतेमोदतेह
४१ एवंमृत्युर्देवसृष्टाप्रजानांप्राप्तेकालेसंहरंतीयथावत् ॥ तस्याश्चैवव्याधयस्तेऽश्रुपाताःप्राप्तेकालेसंहरंतीहजंतून् ४२ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि
मोक्षधर्मपर्वणि मृत्युप्रजापतिसंवादेअष्टपंचाशदधिकद्विशततमोऽध्यायः॥ २५८ ॥ ॥ युधिष्ठिरउवाच ॥ इमेवैमानवाःसर्वेधर्मंप्रतिविशंकिताः ॥ को
ऽयंधर्मःकुतोधर्मस्तन्मेब्रूहिपितामह १ धर्मस्त्वयमिहार्थःकिममुत्रार्थोऽपिवाभवेत् ॥ उभयार्थोहिवाधर्मस्तन्मेब्रूहिपितामह २

दृष्टएवंदेहभेदेऽपिप्राणनांतेजीवनांतेपरलोकंगत्वाआवृत्तादेववत्पुनर्वृत्ताश्चभवंति । सुप्तिप्रबोधवत्कर्मोपरमोद्भवकृतेजन्ममरणेइत्यर्थः । एतेनकेनमृत्युरित्यस्योत्तरमुक्तम् ३९ कस्यमृत्युरित्य
स्योत्तरमाह वायुरिति वायुःपंचवृत्तिःप्राणः देहभेदेदेहनाशे देवानामिंद्रियाणांदेवोराजा नानावृत्तिर्नानादेहगतः एतेनदेहस्यैवमृत्युर्नप्राणानामात्मनोवा ४० सर्वइति देवाः क्षीणपुण्यामर्त्य
त्वंमर्त्याश्चकृतपुण्यादेवत्वंप्राप्नुवंतीत्यर्थः ४१ । ४२ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टपंचाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥ एवंप्राणिनांकर्माधी
नोमृत्युव्याधिसंबंधःसंततइतिज्ञात्वातन्निवृत्तिंधर्ममूलांमन्वानोधर्मतत्त्वेऽप्यार्यजैनम्लेच्छागमानांनानापथत्वेनसंदिहानोधर्मस्वरूपंलक्षणप्रमाणाभ्यांजिज्ञासमानःपृच्छति इमेवैइति १ । २

तत्रचोदनालक्षणोऽर्थोधर्मइतिस्मृतेर्मुख्यंधर्मस्यलक्षणंवेदएवइतरदपितन्मूलतयाधर्मलक्षणंनस्वतइतिसिद्धंपूर्वतंत्रे । कवयोविद्वांसोऽर्थप्रयोजनमेवधर्मलक्षणमाहुः यथोक्तं । 'परिनिर्मथ्य वाग्जालमिदमेवसुनिश्चितं ॥ नोपकारात्परंपुण्यंनापकारादघंपरं' इति अधर्मलक्षणमपकारइत्यपिप्रश्लेषेणध्येयं ३ एतदेवविवृणोति अपीति धर्म्याणिधर्मायहितानिकर्माण्युत्तरावरे व्यवस्यंतिन्यूनाधिकभावेनविपरीतंचनिश्चिन्वंति तथाहि गार्हस्थ्येऽपिमोक्षोऽस्त्यलसाःसंन्यासमिच्छंतित्यागेनैवमोक्षोविषयलंपटागार्हस्थ्यमिच्छंतीतिकस्तर्ह्यत्रनिर्णयइत्याशंक्याह लोकेति लोकव्यवहारमनुरुध्यायंनियमःकृतः यथाऽविक्षिप्तचित्तस्यपुरुषधौरेयस्यगार्हस्थ्येऽपिजनकवसिष्ठादिवन्मोक्षोऽस्ति । अन्यस्यवेदांतश्रवणादौदृष्टविक्षेपनिवृत्त्यर्थःसंन्यासइति ४ इहवा परत्रोभयत्रवाधर्मःफलतीतिप्रश्नस्योत्तरमाह उभयत्रेति ५ नैपुण्यमेवाह नचेति केचिदित्याहुरितिशेषः आपदितुयथापापवाधस्तथापापवादीभवति अधर्मकृदपिधर्मकृद्भवति । तथै

॥ भीष्मउवाच ॥ सदाचारःस्मृतिर्वेदास्त्रिविधंधर्मलक्षणम् ॥ चतुर्थमर्थमित्याहुःकवयोधर्मलक्षणम् ३ अपिह्युक्तानिधर्म्याणिव्यवस्यंत्युत्तरावरे ॥ लोकयात्रार्थमेवेहधर्मस्यनियमःकृतः ४ उभयत्रसुखोदर्कइहचैवपरत्रच ॥ अलब्ध्वानिपुणंधर्मंपापःपापेनयुज्यते ५ नचपापकृतःपापान्मुच्यंतेकेचिदापदि ॥ अपापवादीभवतियथाभवतिधर्मकृत् ॥ धर्मस्यनिष्ठात्वाचारस्तमेवाश्रित्यभोत्स्यसे ६ यथाधर्मसमाविष्टोधनंगृह्णातितस्करः ॥ रमतेनिर्हरंस्तेनःपरवित्तमराजके ७ यदाऽस्यतद्धरंत्यन्येतदाराजानमिच्छति ॥ तदातेषांस्पृहयतेयेवैतुष्टाःस्वकैर्धनैः ८ अभीतःशुचिरभ्येतिराजद्वारमशंकितः ॥ नहिदुश्चरितंकिंचिदंतरात्मनिपश्यति ९ सत्यस्यवचनंसाधुनसत्याद्विद्यतेपरम् ॥ सत्येनविधृतंसर्वंसर्वंसत्येप्रतिष्ठितम् १० अपिपापकृतोरौद्राःसत्यंकृत्वापृथक्पृथक् ॥ अद्रोहमविसंवादंप्रवर्ततेतदाश्रयाः ११ तेचेन्मिथोधृतिंकुर्युर्विनश्येयुरसंशयम् ॥ नहर्तव्यंपरधनमितिधर्मःसनातनः १२ मन्यंतेबलवंतस्तंदुर्बलैःसंप्रवर्तितम् ॥ यदानियतिदौर्बल्यमथैषामेवरोचते १३ नह्यत्यंतंबलवंतोभवंतिसुखिनोऽपिवा ॥ तस्मादनार्जवेबुद्धिर्नकार्यातेकदाचन १४ असाधुभ्योऽस्यनभयंनचौरेभ्योनराजतः ॥ अकिंचित्कस्यचित्कुर्वन्निर्भयःशुचिरावसेत् १५ सर्वतःशंकतेस्तेनोमृगोग्राममिवेयिवान् ॥ बहुधाऽऽचरितंपापमन्यत्रैवानुपश्यति १६ मुदितःशुचिरभ्येतिसर्वतोनिर्भयःसदा ॥ नहिदुश्चरितंकिंचिदात्मनोऽन्येषुपश्यति १७ दातव्यमित्ययंधर्मउक्तोभूतहितेरतैः ॥ तंमन्यंतेधनयुताःकृपणैःसंप्रवर्तितम् १८ यदानियतिकार्पण्यमथैषामेवरोचते ॥ नह्यत्यंतंधनवंतोभवंतिसुखिनोऽपिवा १९

वोक्तमापद्धर्मेषुकर्णपर्वणिचायुधिष्ठिरंजिघांसोरर्जुनस्यबोधापममत्तामस्यबादिनोहिंस्त्रस्यचाख्यानमुक्तंतदिहानुसंधेयं भोत्स्यसेज्ञास्यसि ६ पुरुषःपरपापमेवपश्यतिप्रकाशयतिनचस्वीयमिति सदृष्टांतमाह यथेतित्रिभिः ७ । ८ । ९ यद्यप्येवंतथापिसत्यमेवश्रेयइत्याह सत्यस्येति १० पापिनामपिसत्यमत्याज्यमित्याहसार्धेन अपीति सत्यंशपथम् ११ अद्रोहमविसंवादं ॥१२३॥ यस्यागमम् ११ तंपूर्वाधोक्तंधर्मं नियतिर्दौर्बल्यंदैवप्रमतिकूल्यं तदास्वेराभेवसधर्मोरोचते १३ रुचौहेत्वंतरमाह नहीति उपसंहरति तस्मादिति अनार्जवेकौटिल्ये १४ । १५ मृग इव आचरितंस्वेन शठःपरमपिशठंमन्यतेइत्यर्थः १६ । १७ उक्तन्यायमन्यत्राप्यतिदिशति दातव्यमिति कृपणैर्निर्धनैः १८ । १९

सामान्यतोधर्मलक्षणमाह यदन्यैरिति २० यइति अन्यस्यभार्यायामितिशेषः उपपतिर्जारःकंकिंवक्तुमर्हति स्वस्यैवदुष्टत्वात यद्यपि अन्यस्यान्यं ततस्तस्मिन्नेवऔपपत्येविषयेकुर्या दृग्गोचरीकुर्यात्तदानमृष्येदितियोजना अन्यस्येतिद्वितीयार्थेषष्ठी २१ । २२ अतिरिक्तैरावश्यकाधिकभोगसाधनैर्धनादिभिः कुसीदवृद्ध्यर्थंधनप्रयोगःसदीनपोषणार्थमेवकार्योनधनमात्रवृद्धयर्थं २३ समयेसन्मार्गेसंतिष्ठेरन्सुखाभवेयुस्तथातन्मार्गाचरणशीलोदमदानदयापरोभवेदित्यर्थः । तत्रदानेविशेषमाह अथवेति धर्मेयज्ञदानादौ २४ प्रियेणसाम्नानतुहिंसया अभ्युपगतं प्राप्तंप्रियाभ्युपगतं पश्याऽऽलोचय लक्षणोद्देशंलक्षणकीर्तनं एवंयदात्मनःप्रियंतदन्येषुकर्तव्यंयत्नतस्त्वेवंविधम् २५ लोकेति दयाप्रधानमित्यर्थः सूक्ष्मधर्मार्थंसूक्ष्मधर्मलाभायनियतंनियमितम् २६ अनार्जवेकौटिल्ये २७ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे ऊनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥ ॥ ७ ॥ ॥ अत्रप्रत्यवतिष्ठते सूक्ष्ममिति ब्रह्मलक्षणंचोदनालक्षणंवेदैकबोध्यंधर्मजातं प्रतिभास्फूर्तिःसाचानुमानलक्षणा स्वदुक्तंयुक्तिविरुद्धमित्यर्थः १ निग्रहात्वत्कृततर्काग्रहेण १ इमानिभूतानिशरीरवंति द्विप्र

यदन्यैर्विहितंनेच्छेदात्मनःकर्मपूरुषः ॥ नतत्परेषुकुर्वीतजानन्नप्रियमात्मनः २० योऽन्यस्यस्यादुपपतिःसकंकिंवक्तुमर्हति ॥ यदन्यस्यततःकुर्यान्नमृष्येदितिमेमतिः २१ जीवितुंयःस्वयंचेच्छेत्कथंसोऽन्यंप्रघातयेत् ॥ यद्यदात्मनिचेच्छेततत्परस्यापिचिंतयेत् २२ अतिरिक्तैःसंविभजेद्भोगैरन्यानकिंचनान् ॥ एतस्मात्कारणाद्धात्राकुसीदंसंप्रवर्तितम् २३ यस्मिंस्तुदेवाःसमयेसंतिष्ठेरंस्तथाभवेत् ॥ अथवालाभसमयेस्थितिर्धर्मेऽपिशोभना २४ सर्वंप्रियाभ्युपगतंधर्ममाहुर्मनीषिणः ॥ पश्यैतंलक्षणोद्देशंधर्माधर्मेयुधिष्ठिर २५ लोकसंग्रहसंयुक्तंविधात्राविहितंपुरा ॥ सूक्ष्मधर्मार्थनियतंसतांचरितमुत्तमम् २६ धर्मलक्षणमाख्यातमेतत्तेकुरुसत्तम ॥ तस्मादनार्जवेबुद्धिर्नतेकार्याकथंचन २७ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि धर्मलक्षणेएकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥२५९॥

॥ युधिष्ठिरउवाच ॥ सूक्ष्मंसाधुसमुद्दिष्टंनियतंब्रह्मलक्षणम् ॥ प्रतिभात्वस्तिमेकाचित्तांब्रूयामनुमानतः १ भूयांसोहृदयेयेमेप्रश्नास्तेव्याहृतास्त्वया ॥ इदंत्वन्यत्प्रवक्ष्यामिनराजन्निग्रहादिव २ इमानिहिप्राणयंतिसृजंत्युत्तारयंतिच ॥ नधर्मःपरिपाठेनशक्योभारतवेदितुम् ३ अन्योधर्मःसमस्थस्यविषमस्थस्यचापरः ॥ आपदस्तुकथंशक्याःपरिपाठेनवेदितुम् ४ सदाचारोमतोधर्मःसंतस्त्वाचारलक्षणाः ॥ साध्यासाध्यंकथंशक्यंसदाचारोह्यलक्षणः ५

सिद्धं स्वेनस्वयमेवाऽऽत्मानंप्राणयंतिजीवयंतिसृजंत्युत्तारयंतिदेहाकाराद्यावर्धयंति तथाचश्रुतिः ।'अन्नाद्ध्येवखल्विमानिभूतानिजायंते ॥ अन्नेनजातानिजीवंति ॥ अन्नंप्रयंत्यभिसंविशंतीति ' त्वयाहिपरस्यसुखदुःखोत्पादनेनजातौधर्माधर्मौस्वस्यापिकालांतरेसुखदुःखप्रदौभवतइत्युक्तंतत्केवलंपरिपाठेनाऽऽम्नायमात्रेणननिश्चेतुंशक्यं । अन्नस्यैवजन्मसुखादिहेतुत्वदर्शनाद्दृष्टेनैवकारणेनस्वाभाविकेनधर्मेणजगद्वैचित्र्यसिद्धौवैदिकधर्मस्यादृष्टस्यकल्पनायाअनुदयान्नेत्याशयः ३ व्यवस्थित्यभावादपिवैदिकधर्मोदुर्ज्ञेयइत्याहान्यइति । आपदामानंत्यात्तद्धर्मा अप्यनंताइतिदुर्ज्ञेयएवधर्मइत्याह आपदस्त्विति तस्मादव्यवस्थितरूपस्यवैदिकधर्मस्यनधर्मत्वमित्याशयः ४ सतामाचारोधर्मोधर्माचरणाच्चसत्त्वमित्यन्योन्याश्रयेणलक्ष्यलक्षणयोःसाध्यासाध्ययोरविवेकादपिनसदाचारोऽपिधर्मेप्रमाणमित्याह सदाचारइति ५

दृश्यतेहीति ' अथास्यवेदमुपशृण्वतस्त्रपुजतुभ्यांश्रोत्रप्रपूरणं' इत्यादिनिषेधेश्रूयमाणेऽपिप्राकृताःशूद्रामुमुक्षवोवेदांतान्धर्मबुद्ध्याशृण्वंति । अगस्त्यादिरप्राकृतोऽपिबर्हिंसाकरंदंडकारण्यशापा ल्ययधर्मंचकार । अतोभ्रष्टेपुशिष्टलक्षणदर्शनाच्छिष्टेपुचभ्रष्टलक्षणदर्शनात्सदाचारोऽपिदुर्निर्णयइत्यर्थः ६ कालमेदेनधर्ममन्यथयंतीवेदाअप्यश्रद्धेयाअनवस्थितत्वादित्याह वेदेति ७ । ८ लोकसंग्रहोलोकरंजनमात्रं वेदयंत्याम्नायार्थमितिवेदाःस्मृतयः ९ तेआम्नायाः अत्रस्मृतिषु प्रमाणंप्रमाणत्वं प्रमाणंश्रुतिर्निरपेक्षत्वात् अप्रमाणंस्मृतिर्मूलश्रुतिसापेक्षत्वात् तयोःपरस्परविरोधे औदुंबरीसर्वावेष्टयितव्या औदुंबरींस्पृष्ट्वोद्गायेदिति तत्रवेष्टनस्मृतिःसापेक्षत्वादप्रमाणंचेत्तत्सामान्यात्सर्वाऽपिस्मृतिरप्रमाणंततश्चतन्मूलभूतायाःश्रुतेरप्यप्रमाणत्वेनविनिगमनाविरहात्प्रत्यक्ष प्रत्यक्षयोरपिश्रुत्योरप्रामाण्यमित्याह प्रमाणेऽपीति १० धर्मस्येति संस्थास्वरूपं जनमेजयाश्वमेधेइंद्रापराधादश्वमेधसंस्थालोपोदृष्टः ११ स्वयंविज्ञनवाविज्ञउक्तंवावेदितुंशक्यंनवा दुर्ज्ञेयंधर्म तत्वमित्यर्थः १२ प्रथमंकर्मकांडेअक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति । अपामसोमममृताअभूमेत्यादिश्रुतेर्गंधर्वनगरवदद्भुतइवदृश्यते । कविभिरन्वीक्ष्यमाणःपरस्कृतकंतदनित्यंकार्यत्वाद्घट

दृश्यतेह्यधर्मरूपेणाधर्मंप्राकृतश्चरन् ॥ धर्मंचाधर्मरूपेणकश्चिदप्राकृतश्चरन् ६ पुनरस्यप्रमाणंहिनिर्दिष्टंशास्त्रकोविदैः ॥ वेदवादाश्चानुयुगंह्रसंतीतीहनःश्रुतम् ७ अन्येकृतयुगेधर्मास्त्रेतायांद्वापरेपरे ॥ अन्येकलियुगेधर्मायथाशक्तिकृताइव ८ आम्नायवचनंसत्यमित्ययंलोकसंग्रहः ॥ आम्नायेभ्यःपुनर्वेदाःप्रसृताःसर्वतोमुखाः ९ तेचेत्सर्वप्रमाणंवैप्रमाणंतन्नविद्यते ॥ प्रमाणेऽप्यप्रमाणेनविरुद्धेशास्त्रताकुतः १० धर्मस्यक्रियमाणस्यबलवद्भिर्दुरात्मभिः ॥ यायाविक्रियतेसंस्थाततःसाऽपिप्रणश्यति ११ विद्मचैवंनवाविद्मशक्यंवावेदितुंनवा ॥ अणीयान्क्षुरधारायागरीयानपिपर्वतात् १२ गंधर्वनगराकारःप्रथमंसंप्रदृश्यते ॥ अन्वीक्ष्यमाणःकविभिःपुनर्गच्छत्यदर्शनम् १३ निपानानीवगोभ्योऽपिक्षेत्रेकुल्येवभारत ॥ स्मृतिर्हिशाश्वतोधर्मोविप्रहीणोनदृश्यते १४ कामादन्येच्छयाचान्येकारणैरपरैस्तथा ॥ असंतोऽपिवृथाचारंभजंतेबहवोऽपरे १५ धर्मोभवतिसक्षिप्रंप्रलापस्त्वेवसाधुषु ॥ अथैतानाहुरुन्मत्तानपिचावहसंत्युत १६ महाजनाह्युपावृत्ताराजधर्मंसमाश्रिताः ॥ नहिसर्वंहितःकश्चिदाचारःसंप्रवर्तते १७ तेनैवान्यःप्रभवतिसोऽपरंबाधतेपुनः ॥ दृश्यतेचैवसपुनस्तुल्यरूपोयदृच्छया १८ येनैवान्यःसभवतिसोऽपरानपिबाधते ॥ आचाराणामनैकाग्र्यंसर्वेषामुपलक्षयेत् १९

वत् । तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयतइत्युपपत्तिपूर्वकमुपनिषत्सुईक्ष्यमाणःअदर्शनंयाति तुच्छइवभवति १३ निपीयतेपशुभिर्जलमस्मिन्निति निपानंवाप्यादिसमीपस्थःक्षुद्रजलाधारः कुल्यावाकेदारंप्रतिनीयमानायथाक्षयःशुष्यतिएवंशाश्वतोवैदिकोधर्मोविप्रहीणःसन्कलौरंतेनदृश्यतेइतिस्मृतिरस्तिभविष्यविषया १४ विप्रहीणत्वमेवोपपादयति कामादिति कामात्काम्याग्निहोत्रादिः अन्येच्छयामृतकाध्यापनादिःअपरैःकारणैर्यज्ञायुद्देशेनधनलाभार्थंव्रतादिः असंतोदांभिकाः वृथाश्रद्धाराहित्यात् १५ सकामादिभिर्भिःकृतोऽधर्मोभवतिमूढदृष्ट्यासाधुषुचधर्मःप्रलापमात्रंधर्मोनास्तीतिवदंतिमूढाः प्रलापमेवाहाथेति १६ महाजनाःद्रोणाचार्यादयः ब्रह्मकर्मादरेखुरकार्यनस्यात्अनादरेशिष्टाचारव्याकोपइतिभावः १७ तेनैव आचारेणैव अन्योविश्वामित्रादिः अपरंजामदग्न्यादिकं सःआचारवान्तुल्यरूपोवसिष्ठादिः १८ उक्तानुवादपूर्वकमाचाराणामनैकाग्र्यंव्यभिचारित्वमाह येनैवेति १९



एवंश्रुतिस्मृतिसदाचाराणामप्रामाण्यमुक्त्वास्वमतमाह चिराभिपन्नइति अनाद्यविगानप्रवृत्तेःस्वभावेनैवसुखदुःखकार्याकार्यव्यवस्थानश्रुत्याद्यप्रमाणकेनधर्मेणेत्यर्थः संस्थामर्यादा २० इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे षष्टयधिकद्विशततमोऽध्यायः ॥ २६० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अत्रेति अत्रसुखादिव्यवस्थायांस्वभावएवनियामकइतधर्मइतिविमर्शेतुलाधारवाक्यानिधर्मेप्रमाणत्वेनोदाहरंतीत्यर्थः १ । २ । ३ । ४ जलवासेमहीविप्रेक्ष्यतपोबलाद्दूरदर्शनादिसिद्धिंप्राप्येत्यर्थः ५ वैहायसमा

चिराभिपन्नःकविभिःपूर्वंधर्मउदाहृतः ॥ तेनाचारेणपूर्वेणसंस्थाभवतिशाश्वती २० ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि धर्मप्रामाण्याक्षेपे षष्टयधिकद्विशततमोऽध्यायः ॥ २६० ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ तुलाधारस्यवाक्यानिधर्मेजाजलिनासह १ वनेवनचरःकश्चिज्जाजलिर्नामवैद्विजः ॥ सागरोद्देशमागम्यतपस्तेपेमहातपाः २ नियतोनियताहारश्चीराजिनजटाधरः ॥ मलपंकधरोधीमान्बहून्वर्षगणान्मुनिः ३ सकदाचिन्महातेजाजलवासीमहीपते ॥ चचारलोकान्विप्रर्षिःप्रेक्षमाणोमनोजवः ४ सचिंतयामाससमुनिर्जलवासेकदाचन ॥ विप्रेक्ष्यसागरांतांवैमहींसवनकाननाम् ५ नमयासदृशोऽस्तीहलोकेस्थावरजंगमे ॥ अप्सुवैहायसंगच्छेन्मयायोऽन्यःसहेतिवै ६ अदृश्यमानोरक्षोभिर्जलमध्येवदंस्तथा ॥ अब्रुवंश्चपिशाचास्तंनैवंत्वंवक्तुमर्हसि ७ तुलाधारोवणिग्धर्मावाराणस्यांमहायशाः ॥ सोऽप्येवंनार्हतेवक्तुंयथात्वंद्विजसत्तम ८ इत्युक्तोजाजलिर्भूतैःप्रत्युवाचमहातपाः ॥ पश्येयंतमहंप्राज्ञंतुलाधारंयशस्विनम् ९ इतिब्रुवाणंतमृषिरक्षांस्युद्धृत्यसागरात् ॥ अब्रुवन्गच्छपंथानमास्थायेमंद्विजोत्तम १० इत्युक्तोजाजलिर्भूतैर्जगामविमनास्तदा ॥ वाराणस्यांतुलाधारंसमासाद्याब्रवीदिदम् ११ ॥ युधिष्ठिरउवाच ॥ किंकृतंदुष्करंतातकर्मजाजलिनापुरा ॥ येनसिद्धिंपरांप्राप्तस्तन्मेव्याख्यातुमर्हसि १२ ॥ भीष्मउवाच ॥ अतीवतपसायुक्तोघोरेणसबभूवह ॥ तथोपस्पर्शनरतःसायंप्रातर्महातपाः १३ अग्नीन्परिचरन्सम्यक्स्वाध्यायपरमोद्विजः ॥ वानप्रस्थविधानज्ञोजाजलिर्ज्वलितःश्रिया १४ वनेतपस्यतिष्ठत्सनचधर्ममवैक्षत ॥ वर्षास्वाकाशशायीचहेमंतेजलसंश्रयः १५ वातातपसहोग्रीष्मेनचधर्ममविंदत ॥ दुःखशय्याश्चविविधाभूमौचपरिवर्तते १६ ततःकदाचित्समुनिर्वर्षास्वाकाशमास्थितः ॥ अंतरिक्षाज्जलंमूर्ध्नाप्रत्यगृह्णान्मुहुर्मुहुः १७ अथतस्यजटाःक्लिन्नाबभूवुर्ग्रथिताःप्रभो ॥ अरण्यगमनान्नित्यंमलिनोमलसंयुतः १८ सकदाचिन्निराहारोवायुभक्षोमहातपाः ॥ तस्थौकाष्ठवदव्यग्रोनचचालचकर्हिचित् १९ तस्यस्मस्थाणुभूतस्यनिर्विचेष्टस्यभारत ॥ कुलिंगशकुनौराजन्नीडंशिरसिचक्रतुः २० सतौदयावान्ब्रह्मर्षिरुपप्रैक्षतदंपती ॥ कुर्वाणौनीडकंतत्रजटासुतृणतंतुभिः २१ यदानसचलत्येवस्थाणुभूतोमहातपाः ॥ ततस्तौसुखविश्वस्तौसुखंतत्रोषतुस्तदा २२

काशगतंग्रहनक्षत्रादिगच्छेदवगच्छेत् मयासहगच्छेद्यःसोऽन्यःकोऽस्तीतिपोज्यम् ६ । ७ । ८ । ९ । १० । ११ । १२ उपस्पर्शनरतःस्नानाचमनरतः १३ श्रियाविद्यया १४ नचधर्ममवैक्षतधर्मवानस्मीतिमानंनप्रापेत्यर्थः १५ । १६ । १७ अमलसंयुतःनिष्पापः १८ । १९ । २० उपप्रैक्षतउपेक्षांचक्रे नवारितवानित्यर्थः २१ । ३२

२२ प्राजापत्येनगर्न्धर्वाचविधिना २४ । २५ । २६ । २७ । २८ कालसमयेकालमर्यादायांसत्यां तेशकुंतकाःपक्षिणःपक्षवंतोबभूवुः २९ पक्षीन् आयोंमस्वर्यादवः ३० । ३१ द्विजान्शकुं

अतीतास्वथवर्षासुशरत्कालउपस्थिते ॥ प्राजापत्येनविधिनाविश्वासात्काममोहितौ २२ तत्रापातयतांराजन्शिरस्यंडानिखेचरौ ॥ तान्यबुध्यततेजस्वीसवि
प्रःसंशितव्रतः २४ बुद्ध्वाचसमहातेजानचचालचजाजलिः ॥ धर्मेकृतमनानित्यंनाधर्मंसत्वरोचयत् २५ अहन्यहनिचागत्यततस्तौतस्यमूर्धनि ॥ आश्वासि
तौनिवसतःसंप्रहृष्टौतदाविभो २६ अंडेभ्यस्त्वथपुष्टेभ्यःप्राजायंतशकुंतकाः ॥ व्यवर्धंतचतत्रैवनचाकंपतजाजलिः २७ सरक्षमाणस्त्वंडानिकुलिंगानांधृतव्रतः
तथैवतस्थौधर्मात्मानिर्विचेष्टःसमाहितः २८ ततस्तुकालसमयेबभूवुस्तेऽथपक्षिणः ॥ बुबुधेतांस्तुसमुनिर्जातपक्षान्कुलिंगकान् २९ ततःकदाचित्तांस्तत्रपश्य
न्पक्षीन्यतव्रतः ॥ बभूवपरमप्रीतस्तदामतिमतांवरः ३० तथातानपिसंवृद्धान्दृष्ट्वाचाप्युवतांमुदम् ॥ शकुनौनिर्भयौतत्रऊषतुश्चात्मजैःसह ३१ जातपक्षांश्चसो
ऽपश्यदुड्डीनान्पुनरागतान् ॥ सायंसायंद्विजान्विप्रोनचाकंपतजाजलिः ३२ कदाचित्पुनरभ्येत्यपुनर्गच्छंतिसंततम् ॥ त्यक्तामातापितृभ्यांतेनचाकंपतजा
जलिः ३३ तथातेदिवसंचापिगत्वासायंपुनर्नृप ॥ उपावर्तंततत्रैवनिवासार्थंशकुंतकाः ३४ कदाचिद्दिवसान्पंचसमुत्पत्यविहंगमाः ॥ षष्ठेऽहनिसमाजग्मुर्नचाकं
पतजाजलिः ३५ क्रमेणचपुनःसर्वेदिवसान्सुबहूनथ ॥ नोपावर्तंतशकुनाजातप्राणाःस्मतेयदा ३६ कदाचिन्मासमात्रेणसमुत्पत्यविहंगमाः ॥ नैवागच्छंस्ततो
राजन्प्रातिष्ठतसजाजलिः ३७ ततस्तेषुप्रलीनेषुजाजलिर्जातविस्मयः ॥ सिद्धोस्मीतिमतिंचक्रेततस्तंमानआविशत् ३८ सतथानिर्गतान्दृष्ट्वाशकुंतान्नियत
व्रतः ॥ संभावितात्मासंभाव्यभृशंप्रीतमनाऽभवत् ३९ सनद्यांसमुपस्पृश्यतर्पयित्वाहुताशनम् ॥ उदयंतमथादित्यमुपातिष्ठन्महातपाः ४० संभाव्यचटकान्मू
र्ध्निजाजलिर्जपतांवरः ॥ आस्फोटयत्तथाऽऽकाशेधर्मःप्राप्तोमयेतिवै ४१ अथांतरिक्षेवागासीत्तांचशुश्रावजाजलिः ॥ धर्मेणनसमस्त्वं वैतुलाधारस्यजाजले ४२
वाराणस्यांमहाप्राज्ञस्तुलाधारःप्रतिष्ठितः ॥ सोऽप्येवंनार्हतेवक्तुंयथात्वंभाषसेद्विज ४३ सोऽमर्षवशमापन्नस्तुलाधारदिदृक्षया ॥ पृथिवीमचरद्राजन्यत्रसायंगृ
हेोमुनिः ४४ कालेनमहताऽगच्छत्सतुवाराणसींपुरीम् ॥ विक्रीणंतंचपण्यानितुलाधारंददर्शसः ४५ सोऽपिदृष्ट्वैवतंविप्रमायांतंभांडजीवनः ॥ समुत्थायसुसंहृ
ष्टःस्वागतेनाभ्यपूजयत् ४६ ॥ तुलाधारउवाच ॥ आयानेवासिविदितोममब्रह्मन्नसंशयः ॥ ब्रवीमियत्तुवचनंतच्छृणुष्वद्विजोत्तम ४७ सागरानूपमाश्रित्यतप
स्तप्तंत्वयामहत् ॥ नचधर्मस्यसंज्ञांत्वंपुरावेत्थकथंचन ४८ ततःसिद्धस्यतपसातवविप्रशकुंतकाः ॥ क्षिप्रंशिरस्यजायंततेचसंभावितास्त्वया ४९

तान् ३२ । ३३ । ३४ । ३५ । ३६ । ३७ प्रलीनेषुप्रडीनेषु मानोगर्वः ३८ । ३९ । ४० संभाव्यवर्धयित्वा आस्फोटयद्बाहुशब्दमकरोत् ४१ । ४२ । ४३ । ४४ । ४५ भांडंमूलधनंतेन
जीवनंयस्य 'स्याद्भांडमश्वाभरणामत्रेमूलवणिग्धने'इतिविश्वः ४६ आयानागच्छन् ४७ सागरानूपंसागरसमीपस्थंसजलंप्रदेशं संज्ञांधर्मेवानहमितिविज्ञानम् ४८ । ४९

पारीबाहरार्थंसंचरणम् ५० । ५१ ॥ इति शांतिपर्वणि मोक्ष० नी० भा० एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥ इतीति १ वाणिजवणिक्पुत्रेतिसाधिक्षेपमाह अपण्यविक्रेतृत्वाद्दो
षवानपीत्यर्थः २ अध्यगाःअधिगतवानसि ३ । ४ धर्मरहस्यमेवाह सर्वभूतहितमिति ५ अल्पद्रोहेण आपदिवानानुपहत्यभूतानिभोगःसंभवतीतिन्यायेनाद्रोहेणवृत्त्यसंभवाद्वा ६ अलक्तंलाक्षा
रससारं पद्मकंतुंगंचकाष्ठविशेषौ कस्तूर्यादीन्गंधान् ७ रसान्लवणादीन् क्रीत्वैवनतुस्वयमुत्पाद्य ८ ननुलाक्षालवणमांसानिपतनीयानिविक्रयेइतिलाक्षादिविक्रयेदोषस्मृतेस्त्वद्व्रतःकथंधार्मि

जातपक्षायदातेचगताश्चारीमितस्ततः ॥ मन्यमानस्ततोधर्मंचटकप्रभवंद्विज ५० खेवाचंत्वमथाश्रौषीर्मांप्रतिद्विजसत्तम ॥ अमर्षवशमापन्नस्ततःप्राप्तो
भवानिह ॥ करवाणिप्रियंकिंतेतद्ब्रूहिद्विजसत्तम ५१ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षप०तुलाधारजाजलिसंवादे एकषष्ट्यधिकद्विशततमो
ऽध्यायः ॥ २६१ ॥ ॥ भीष्मउवाच ॥ इत्युक्तःसतदातेनतुलाधारेणधीमता ॥ प्रोवाचवचनंधीमान्जाजलिर्जपतांवरः १ ॥ जाजलिरुवाच ॥ विक्रीणतः
सर्वरसान्सर्वगंधांश्चवाणिज ॥ वनस्पतीनोषधीश्चतेषांमूलफलानिच २ अध्यगानैष्ठिकींबुद्धिंकुतस्त्वामिदमागतम् ॥ एतदाचक्ष्वमेसर्वंनिखिलेनमहामते ३
॥भीष्मउवाच॥ एवमुक्तस्तुलाधारोब्राह्मणेनयशस्विना ॥ उवाचधर्मसूक्ष्माणिवैश्योधर्मार्थतत्त्ववित् ४॥ तुलाधारउवाच ॥ वेदाहंजाजलेधर्मंसरहस्यंसनातनम् ॥
सर्वभूतहितंमैत्रंपुराणंयंजनाविदुः ५ अद्रोहेणैवभूतानामल्पद्रोहेणवापुनः ॥ यावृत्तिःसपरोधर्मस्तेनजीवामिजाजले ६ परिच्छिन्नैःकाष्ठतृणैर्मयेदंशरणंकृतम् ॥
अलक्तंपद्मकंतुंगंगंधांश्चोच्चावचांस्तथा ७ रसांश्चतांस्तान्विप्रर्षेमद्यवर्ज्यान्बहूनहम् ॥ क्रीत्वावैप्रतिविक्रीणेपरहस्तादमायया ८ सर्वेषांयःसुहृन्नित्यंसर्वेषांचहि
तेरतः ॥ कर्मणामनसावाचासधर्मंवेदजाजले ९ नानुरुध्येविरुध्येवानद्वेष्मिनचकामये ॥ समोऽहंसर्वभूतेषुपश्यमेजाजलेव्रतम् ॥ तुलामेसर्वभूतेषुसमातिष्ठति
जाजले १० नाहंपरेषांकृत्यानिप्रशंसामिनगर्हये ॥ आकाशस्येवविप्रेंद्रपश्यन्लोकस्यचित्रताम् ११ इतिमांत्वंविजानीहिसर्वलोकस्यजाजले ॥ सममतिमतांश्रे
ष्ठसमलोष्टाश्मकांचनम् १२ यथांधबधिरोन्मत्ताउच्छ्वासपरमाःसदा ॥ देवैरपिहितद्वाराःसोपमापश्यतोमम १३ यथावृद्धातुरकृशानिस्पृहाविषयान्प्रति ॥
तथार्थकामभोगेषुममापिविगतास्पृहा १४ यदाचायंनबिभेतियदाचास्मान्नबिभ्यति ॥ यदानेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा १५ यदानकुरुतेभावंसर्वभूते
षुपापकम् ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा १६ नभूतोनभविष्योऽस्तिनचधर्मोऽस्तिकश्चन ॥ योऽभयःसर्वभूतानांसप्राप्नोत्यभयंपदम् १७ यस्मादुद्वि
जतेलोकःसर्वोमृत्युमुखादिव ॥ वाक्क्रूराद्दंडपरुषात्सप्राप्नोतिमहद्भयम् १८

कत्वमित्याशंक्याह सर्वेषामिति अयमर्थः लोकेहिउपकारिणंप्रत्युपकुर्वंति अद्रोहिणेनद्रुह्यंतिचेत्युत्सर्गः तत्सामान्याद्दैहिकौउपकारापकारौजन्मांतरेऽपिसुखदुःखप्रदानायप्रभवतोनत्वाकस्मि
कंकस्यचित्सुखंदुःखंवाऽस्तिजन्मांतरीयंकारणंविनेत्यनुमीयतेऽतःस्वभाववादस्तावदयुक्तएव । श्रुत्यादीनांधर्मेप्रामाण्यमपिवक्ष्यमाणरीत्यायुज्यतएवेति ९ । १० आकाशस्यअभ्रपटलस्य
चित्रतांविविधाकारत्वम् ११ । १२ अपिहितद्वाराआच्छादितेंद्रियगोलकाः १३ । १४ । १५ । १६ । १७ विपक्षेदोषमाह यस्मादिति १८

'मानःपथःपित्र्यान्मानवादविदूरंनैष्टपरावतः'इतिमंत्रलिंगात्कुलाचारस्यप्रामाण्यंगम्यतेतदप्यस्मास्वस्तीत्याह यथावदिति अहिंस्राणामितिहिंसामयःकुलाचारोऽप्यप्रमाणमित्युक्तं मंत्रार्थस्तुपित्र्यात्पित्रादिसंसेवितान्मानवात्मनुर्मंत्रस्तत्प्रकाशितात् वेदाविरुद्धादित्यर्थः पथोमार्गान्नोस्मान्दूरंमानैष्टनयतपरावतःबह्वायुष्मतोऽस्मानिति १९ शिष्टाचारंप्रमाणयति प्रनष्टइतिद्वाभ्यां शाश्वतःशश्वद्भवःपरंपरयावेदमूलकत्वादनादिर्धर्मःशिष्टाचारःसप्रनष्टः यतःसदाचारेणकचिदंशेविरुद्धेनमोहितःमोहंप्रापितः यथा'अवर्त्यांशुनआंत्राणिपेचे' 'यःपूजयितुंपितृदेवमनुष्यान्पेचआंत्राणिशुनः'इतिश्रुतिस्मृतिभ्यांवामदेवस्यश्रेष्ठतमस्यापिवीभत्सआचारआपदिश्वमांसभक्षणरूपःप्रदर्शितः पुराणेवाऋषभादीनांमहायोगिनामाचारंदृष्ट्वाआर्हतादयोमोहिताःपाषंडमार्गमनुगताइत्युक्तम् । तेनमोहरूपेणकारणेन वयोविद्यावान् तपस्वीजितेंद्रियः बलवान्जितकामक्रोधःसोऽपिविमुह्यते विमुच्यतइतिपाठेतेनसदाचारेणेत्यर्थः अयंभावः । 'सर्वनाशेसमुत्पन्नेह्यर्धंत्यजतिपंडितः । अर्धनाशेसमुत्पन्नेसर्वंत्यजतिदुर्मतिः'इतिन्यायेनमूढाःशिष्टाचारमंशेविगीतंदृष्ट्वाकृत्स्नमपित्यजंतिस्वभाववादंचानुरुध्यंते । वृद्धास्तु

यथावद्वर्तमानानांवृद्धानांपुत्रपौत्रिणाम् ॥ अनुवर्तामहेवृत्तमहिंस्राणांमहात्मनाम् १९ प्रनष्टःशाश्वतोधर्मःसदाचारेणमोहितः ॥ तेनवैद्यस्तपस्वीवाबलवान्वाविमुह्यते २० आचाराज्जाजलेप्रज्ञाःक्षिप्रंधर्ममवाप्नुयात् ॥ एवंयःसाधुभिर्दांतश्चरेदद्रोहचेतसा २१ नद्यांचेहयथाकाष्ठमुह्यमानंयदृच्छया ॥ यदृच्छयैवकाष्ठेनसंधिंगच्छेतकेनचित् २२ तत्रापराणिदारूणिसंसृज्यंतेपरस्परम् ॥ तृणकाष्ठकरीषाणिकदाचिन्नसमीक्षया २३ यस्मान्नोद्विजतेभूतंजातुकिंचित्कथंचन ॥ अभयंसर्वभूतेभ्यःसप्राप्नोतिसदामुने २४ यस्मादुद्विजतेविद्वन्सर्वलोकोवृकादिव ॥ क्रोशतस्तीरमासाद्ययथासर्वेजलेचराः २५ एवमेवायमाचारःप्रादुर्भूतोयतस्ततः ॥ सहायवान्द्रव्यवान्यःसुभगोऽन्यपरस्तथा २६ ततस्तानेवकवयःशास्त्रेषुप्रवदंत्युत ॥ कीर्त्यर्थमल्पहृल्लेखाःपटवःकृत्स्ननिर्णयाः २७ तपोभिर्यज्ञदानैश्चवाक्यैःप्रज्ञाश्रितैस्तथा ॥ प्राप्नोत्यभयदानस्ययद्यत्फलमिहाश्नुते २८ लोकेयःसर्वभूतेभ्योददात्यभयदक्षिणाम् ॥ ससर्वयज्ञैरीजानःप्राप्नोत्यभयदक्षिणाम् २९

श्रुत्यंतरविरुद्धंविरुद्धांशमात्रंत्यक्त्वातेनैवसदाचारेणमुच्यंतइति २० एतदेवाह आचारादिति धर्ममोक्षोपयोगिनमधिकारं उपसंहरति एवमिति । साधुभिश्चीर्णधर्मंयश्चरेत्सधर्ममाप्नुयादित्यन्वयः २१ नद्यामिति नदीप्रवाहेणकाष्ठानामिवकर्मप्रवाहेणपितृपुत्रादीनांसंयोगवियोगावित्याशयः २२ । २३ लोकस्यकर्माधीनत्वात्सुखार्थीनकंचिदुद्वेजयेदित्याह यस्मादिति एतत्फलमाह अभयमिति २४ विपक्षेदोषमाह यस्मादिति । वृकःहिंस्रपशुः दृष्टांतेवृकवाग्निः २५ अयमभयदानलक्षणः यतस्ततःसर्वोपायसाध्यःसहायादिसाध्योबंदीमोचनादिरूपः सुभगःऐश्वर्यहेतुः परःपरलोकहेतुश्च २६ ततोऽभयदानात् तान्सहायादियुक्तान्प्रवदंतिप्रकृष्टान्वदंति तेचयदिअल्पहृल्लेखाःअल्पंबाह्यसुखंहृदिलेखवत्प्रतिष्ठितंयेषांतेबाहिर्मुखाःकीर्त्यर्थमभयदानंकुर्युः येपटवःकुशलाः कृत्स्नंत्रह्मतन्मूलकएवतदर्थमेवाभयदानमितिनिर्णयोयेषां अभयदानंतेषांसंमतमित्यर्थः २७ तपआदिभिर्यद्यत्फलमश्नुतेतत्अभयदानस्याभयदानेनप्राप्नोति २८ एतदेवप्रशंसति लोकेइत्यादिना २९



३०।३१ अभयदानस्यपारलौकिकंफलमाह सर्वेति सर्वेषांभूतानामात्मभूतस्यप्रत्यगात्मनः'आत्माह्येषांसभवतियत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येत्'इत्यादिश्रुतिप्रसिद्धानिर्विकल्पकावस्थाउक्ता सर्वभूतानिपश्यतइति'आत्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदंसर्वंविदितं'इतिश्रुतिप्रसिद्धसार्वज्ञ्यफलासविकल्पावस्थाउक्ता । अतएवास्यविभुत्वेनगगनस्येवगत्यभावाद्देवाअपि संचिरार्थःमार्गेमुह्यंति पदंब्रह्मलोकादितद्रहितस्य पदैषिणोदेवाः ३२ अभयदानश्रैष्ठ्यमुपसंहरति दानमिति ३३ अस्यैवस्तुत्यर्थंकाम्यंकर्मक्षयिष्णुत्वेननिंदति सएवेति सुभगःस्वर्गी व्यापत्तिंनाशं कर्मणांकर्मफलानांस्वर्गादीनां ३४ अकारणःकारणमनुष्ठानप्रयोजकंफलंतद्धीनः सूक्ष्मोऽभयदानात्मकः भूतंब्रह्मभव्यंस्वर्गादितदुभयार्थमेव धर्माणांशमादीनांयज्ञादीनांचप्रवचनमध्ययनंवेदेकृतं अतःस्थूलधर्माद्यज्ञादेरन्यःसूक्ष्मधर्मोऽस्तीतिभावः ३५ कुतःसूक्ष्मधर्मोदुर्ज्ञेयःयतोबहुनिह्नवः'सप्तदशप्राजापत्यान्पशूनालभतेसप्तदशःप्रजापतिःप्रजापतेराप्त्या'इत्यादिविषयःश्रेयःसाधनत्वेनाहिं

नभूतानामहिंसायाज्ज्यायान्धर्मोऽस्तिकश्चन ॥ यस्मान्नोद्विजतेभूतंजातुकिंचित्कथंचन ॥ सोऽभयंसर्वभूतेभ्यःसंप्राप्नोतिमहामुने ३० यस्मादुद्विजतेलोकःसर्पाद्वेश्मगतादिव ॥ नसधर्ममवाप्नोतिइहलोकेपरत्रच ३१ सर्वभूतात्मभूतस्यसर्वभूतानिपश्यतः ॥ देवाऽपिमार्गेमुह्यंतिअपदस्यपदैषिणः ३२ दानंभूताऽभयस्याहुःसर्वदानेभ्यउत्तमम् ॥ ब्रवीमितेसत्यमिदंश्रद्दधस्वचजाजले ३३ सएवसुभगोभूत्वापुनर्भवतिदुर्भगः ॥ व्यापत्तिंकर्मणांदृष्ट्वाजुगुप्संतिजनाःसदा ३४ अकारणोहिनैवास्तिधर्मःसूक्ष्मोहिजाजले ॥ भूतभव्यार्थमेवेहधर्मप्रवचनंकृतम् ३५ सूक्ष्मत्वान्नसविज्ञातुंशक्यतेबहुनिह्नवः ॥ उपलभ्यांतराचान्यानाचारानवबुध्यते ३६ येचच्छिंदतिवृषणान्येचभिंदंतिनस्तकान् ॥ वहंतिमहतोभारान्बध्नंतिदमयंतिच ३७ हत्वासत्वानिखादंतितान्कथंनविगर्हसे ॥ मानुषामानुषानेवदासभावेनभुंजते ३८ वधबंधनिरोधेनकारयंतिदिवानिशम् ॥ आत्मनश्चापिजानातियद्दुःखंवधबंधने ३९ पंचेंद्रियेषुभूतेषुसर्वंवसतिदैवतम् ॥ आदित्यश्चंद्रमावायुर्ब्रह्माप्राणःक्रतुर्यमः ४० तानिजीवानिविक्रीयकामृतेषुविचारणा ॥ अजोऽग्निर्वरुणोमेषःसूर्योऽश्वःपृथिवीविराट् ४१ धेनुर्वत्सश्चसोमोवैविक्रीयैतन्नसिध्यति ॥ कातैलेकाघृतेब्रह्मन्मधुन्यप्यौषधेषुवा ४२ अदंशमशकेदेशेसुखसंवर्धितान्पशून् ॥ तांश्चमातुःप्रियान्जानन्नाक्रम्यबहुधानराः ४३ बहुदंशाकुलान्देशान्नयंतिबहुकर्दमान् ॥ वाहसंपीडिताधुर्याःसीदंत्यविधिनापरे ४४ नमन्येभ्रूणहत्याऽपिविशिष्टातेनकर्मणा ॥ कृषिंसाध्वितिमन्यंतेसाचवृत्तिःसुदारुणा ४५ भूमिंभूमिशयांश्चैववहंतिकाष्ठमयोमुखम् ॥ तथैवानडुहोयुक्तान्समवेक्षस्वजाजले ४६

साधुपदिष्टतोऽहिंसाशास्त्रमुपमृद्नंतीत्यर्थः । तर्हितदप्रमाणमेवेत्याशंक्याह उपलभ्येति 'उक्षाणंवावेहतंवाक्षदंते' 'महोक्षंवामहाजंवाश्रोत्रियायोपकल्पयेत्'इतिश्रुतिस्मृतिविहितोमधुपर्केगवालंभएकआचारः । 'मागामनागामदितिंवधिष्ट'इतिमंत्रलिंगावगतोगवोत्सर्गविधिस्तद्विरुद्धोऽन्यआचारः । तत्राऽनागामितिविशेषणात्क्रत्वर्थहिंसाविधेरहिंसाविधिर्ज्यायानितिगम्यते अनागस्त्वस्यप्राजापत्यपशुष्वपितुल्यत्वादित्यास्तांतावत् ३६ यदुक्तमलक्तपत्रकादीन्यपण्यानिविक्रीणासीतितत्राह येचेति नस्तकान्नासागर्भान् वहंतिवाहयंति ३७ । ३८ । ३९ ४० । ४१ । ४२ । ४३ अविधिना क्रत्वर्थाऽपिहिंसादोषावहाकिमुताऽक्रत्वर्थेत्यर्थः ४४ एतदेवाह नमन्येइति ४५ भूमिशयान्सर्पादीन् अयोमुखंकाष्ठंलांगलम् ४६

आप्यायध्वमघ्न्यादेवभागमितिश्रुतिप्रसिद्धमघ्न्याइतिगवांनाम नहंतुंशक्याअघ्न्याइतियोगाद्गवामवध्यत्वंश्रौतमित्यर्थः । चकारकृतवान् आलभेद्धिंस्यात् पृषध्रोगोलभन्निवेतिपाठेगौ गोजातीयांपृषध्रबाणोलभन्स्पृशन्निव व्याघ्रभ्रांत्यानिसृष्टोबाणोगविपातितोनतुगविविसृष्टइत्यर्थः १७ । १८ शतमिति यथेंद्रस्यब्रह्महत्यानार्योदिषुरजआदिरूपेणक्षिप्ताएवंनहुषकृतागो वधहत्यासर्वभूतेष्वेकाधिकशतरोगरूपेणक्षिप्तेत्यर्थः ४९ भ्रूणहमिति 'ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतम् ॥ एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति'इतिस्मृतेर्गवांब्राह्मणेनसहसमानवंशत्वा द्गोघ्नोऽपिभ्रूणहैवेत्यर्थः ५० एवमुक्त्वाऽपितपसाध्यानेनतंप्रत्यवेदयन्प्रतीपमवेदयन् हंतारमपिधीपूर्वमहंतारंनहुषंध्यानबलेनज्ञात्वातथैवलोकेऽपिप्रमादात्कृतोऽपिगोवधोव्याधिरूपेणसर्व लोकापकारायाभूत्किमुतबुद्धिपूर्वंकृतइतिज्ञापितवंतइत्यर्थः ५१ केवलेति मधुपर्कादौगवाद्यालंभःपूर्वैःकृतइत्यंधपरंपरामात्रात्करोषिनतुतत्त्वबुद्ध्या ५२ कारणाद्धेतुतः येनभूतानाममयं

अघ्न्याइतिगवांनामकएताहंतुमर्हति ॥ महच्चकाराकुशलंवृषंगांवाऽलभेत्तुयः ४७ ऋषयोयतयोह्येतन्नहुषेप्रत्यवेदयन् ॥ गांमातरंचाप्यवधीर्वृषभंचप्रजाप तिम् ४८ अकार्यंनहुषाकार्षीर्लप्स्यामस्त्वत्कृतेव्यथाम् ॥ शतंचैकंचरोगाणांसर्वभूतेष्वपातयन् ४९ ऋषयस्तेमहाभागाःप्रजास्वेवहिजाजले ॥ भ्रूण हंनहुषंत्वाहुर्नतेहोष्यामहेहविः ५० इत्युक्त्वातेमहात्मानःसर्वेतत्त्वार्थदर्शिनः ॥ ऋषयोयतयःशांतास्तपसाप्रत्यवेदयन् ५१ ईदृशानशिवान्घोरानाचारा निहजाजले ॥ केवलाचरितत्वात्तुनिपुणोनावबुद्ध्यसे ५२ कारणाद्धर्ममन्विच्छेन्नलोकचरितंचरेत् ॥ योहन्याद्यश्चमांस्तौतिततत्रापिशृणुजाजले ५३ समौ तावपिमेस्यातांनहिमेऽस्तिप्रियाप्रियम् ॥ एतदीदृशकंधर्मंप्रशंसंतिमनीषिणः ५४ उपपत्त्याहिसंपन्नोयतिभिश्चैवसेव्यते ॥ सततंधर्मशीलैश्चनिपुणेनो पलक्षितः ५५ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि तुलाधारजाजलिसंवादे द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥ ॥ ७ ॥ ॥ जाजलिरुवाच ॥ ॥ अयंप्रवर्तितोधर्मस्तुलाधारयतात्वया ॥ स्वर्गद्वारंचवृत्तिंचभूतानामवरोत्स्यते १ कृष्याह्यन्नंप्रभवतिततस्त्वमपिजीवसि ॥ पशु भिश्चौषधीभिश्चमर्त्याजीवंतिवाणिज २ ततोयज्ञःप्रभवतिनास्तिक्यमपिजल्पसि ॥ नहिवर्तेदयंलोकोवार्तामुत्सृज्यकेवलाम् ३ ॥ ॥ तुलाधारउवाच ॥ वक्ष्यामिजाजलेवृत्तिंनास्मिब्राह्मणनास्तिकः ॥ नयज्ञंचविनिंदामियज्ञवित्तुसुदुर्लभः ४

सधर्मइतिजानीयान्नगतानुगतिकःस्यादित्यर्थः ५३ प्रियाप्रियंहर्षविषादौतौहिहिंसायांप्रवर्तयतः तथाचापस्तंबः । 'हृष्टोदृप्यतिदृप्तोधर्ममतिक्रामतिधर्मातिक्रमात्त्वघ्नपतीति क्रुद्धोहन्यादपि तूनपीति'तस्मात्सर्वभूताभयप्रदानमेवमहान्धर्मइत्याशयः ५४ सेव्यतेधर्मः निपुणेनचक्षुषोपलक्षितश्च ५५ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे द्विषष्ट्य धिकद्विशततमोऽध्यायः ॥ २६२ ॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥ येचच्छिद्रंतिदूषणानित्यादिनाकृषिंदूषयतात्वयालोकद्वयंनाशितमि त्याह अयमिति १ । २ नास्तिक्यंहिंसात्मकत्वेनयज्ञनिंदा ३ वृत्तिमहिंस्रांजीविकांवक्ष्यामिवच्मि अस्मद्वृत्त्यावानप्रस्थवृत्त्यावान्येनवाजीविकायाःसंभवात्किंहिंसात्मकयाकृष्येति भावः । नचक्वापिव्रीहमात्रान्नास्तिक्यंयज्ञनिंदावाकृतामयेत्याह नास्मीति तथापियज्ञवित्यज्ञोवैविष्णुरितिश्रुतेर्योयज्ञमोक्तारंपरमात्मानंवेदसदुर्लभः ४



ब्राह्मणानांब्रह्मविदांयज्ञोब्रह्माग्नौजीवहविषस्त्यागस्तस्मैयोगायेत्यर्थः । स्वयज्ञंयोगं क्षत्रयज्ञंहिंसामयंज्योतिष्टोमादिं ५ क्षत्रयज्ञंविशिनष्टि । लुब्धैरिति ब्रह्मघ्नान् नास्तिकैर्वेदप्रामाण्य वादिभिः वेदवादान्अर्थवादान्तेषांस्तुतिमात्रेतात्पर्यमित्यविज्ञाय सत्यवदाभासमानंस्वरूपतःअनृतंआविद्यकब्राह्मण्याद्यध्यासमूलत्वात्लुब्धैःसंप्रवर्तितं तथाचश्रुतिः । 'नीहारेणप्रावृ ताजल्प्याचासुतृपउक्थशासश्चरंति'इति अज्ञानेनआवृताः जल्प्याअर्थवादगिरा असुतृपःप्राणपोषकाः उक्थशासःकर्मानुशासनपराः ६ इदमिति । 'यज्ञआयुष्मान्सदक्षिणाभिरायु ष्मान् । प्राचीदिग्घोतुर्दक्षिणाऽध्वर्योः'इत्यादिश्रुतिस्मृतिविहितादक्षिणादेया । षट्देयाद्वादशदेयाइतिताद्दशश्चदक्षिणावानयंयज्ञःप्रशस्यते । अन्यथाअतोयज्ञादेवस्तैन्यंलुब्धस्ययजमा नस्यसामर्थ्येसतियथोक्तदक्षिणामददतःप्रकर्षेणभवति । विकर्माणितस्यकर्माणिविपरीतान्यश्रेयस्कराणिचभवंति यथोक्तं । 'प्रभुःप्रथमकल्पस्यपोऽनुकल्पेनवर्तते ॥ सनाप्नोतिफलंत स्यपरत्रेतिश्रुतिःस्मृतिः'इति 'नास्तियज्ञसमोरिपुः'इतिच ७ एवंक्षत्रयज्ञंनिंदित्वाब्राह्मणयज्ञस्वरूपमाह यदेवेति सुकृतंसुकृतार्जितंहव्यं तदेवत्रिविधमाह नमइति नमस्कारात्मकेनह विषेतिसामानाधिकरण्यं योनमसास्वध्वरइतियज्ञोयैनमइतिहिब्राह्मणंभवतीतिश्रुस्मृतिभ्यांनमस्कारस्यैवयज्ञत्वावगतेः तथास्वाध्यायैर्हविषेतिसंबंधः । 'वयमग्नेअर्वतावासुवीर्यंब्रह्मणावाचि तयेमाजनाँअति'इतिवेदस्यापियज्ञत्वश्रुतेः अर्वताअश्वेनब्रह्मणावेदेनवाऽग्नेत्वांचिंतयेमजानीम । तथाचाश्वमेधतुल्यत्वंब्रह्मयज्ञस्योक्तं आश्वलायनगृह्येऽपि'आतेअग्नऋचाहविर्हृदातष्टंभराम

नमोब्राह्मणयज्ञाययेचयज्ञविदोजनाः ॥ स्वयज्ञंब्राह्मणाहित्वाक्षत्रयज्ञमिहास्थिताः ५ लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैःसंप्रवर्तितम् ॥ वेदवादानविज्ञायसत्याभास मिवानृतम् ६ इदंदेयमिदंदेयमितिचायंप्रशस्यते ॥ अतस्तैन्यंप्रभवतिविकर्माणिचजाजले ७ यदेवसुकृतंहव्यंतेनतुष्यंतिदेवताः ॥ नमस्कारेणहविषास्वाध्या यैरौषधैस्तथा ॥ पूजास्याद्देवतानांहियथाशास्त्रनिदर्शनम् ८ इष्टापूर्ताद्साधूनांविगुणाजायतेप्रजा ॥ लुब्धेभ्योजायतेलुब्धःसमेभ्योजायतेसमः ९ यजमाना यथाऽऽत्मानमृत्विजश्चतथाप्रजाः ॥ यज्ञात्प्रजाप्रभवतिनभसोंभइवामलम् १० अग्नौप्रास्ताहुतिर्ब्रह्मन्नादित्यमुपगच्छति ॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततः प्रजाः ११ तस्मात्सुनिष्ठिताःपूर्वेसर्वान्कामांश्चलेभिरे ॥ अकृष्टपच्यापृथिवीआशीर्भिर्वीरुधोऽभवन् १२

सि ॥ तेतेभवंतूक्षणऋषभासोवशाउते'त्येवएव'उक्षाणश्चऋषभाश्चवशाश्चभवंतियइमंस्वाध्यायमधीयतेइति' । तथाऔषधैर्व्रीहियवादिभिः'पशुभ्योवैमेधाउदक्रामंस्तौव्रीहिश्चैवयवश्चभूतावजा येतांतस्माद्दाद्दःपुरोडाशसत्रंलोक्यं'इतिचतयोर्हविष्ट्वगमात्पुरुषाश्वगोऽजानांपशूनाममेध्यत्वश्रुतेश्च'तएतउत्क्रांतमेधाअमेध्याःपशवः'इति तथाचैतैस्त्रिभिर्हविर्भिर्देवतापूजायज्ञाख्याकर्तव्ये तिशास्त्रेवेदेनिदर्शनंप्रत्यायकंवचनमस्तितदप्युदाहृतमेव ८ ननु'इष्टान्भोगान्हिवोदेवादास्यंतेयज्ञभाविताः'इतिभगवतायज्ञानांधनपुत्रादिप्राप्त्यर्थत्वोक्तेःकिंतैर्मोक्षानुपयोगिभिरित्याशंक्याह इष्टेति । इष्टंइष्टिपशुसोमादि आपूर्तंतटाकारामादि असाधूनांकामनावतांयज्ञात्ताद्दगेवलुब्धमपत्यंभवति । समेभ्योरागद्वेषशून्येभ्यइष्टादिकर्तृभ्योऽनीप्सिताऽपिताद्दशीप्रजाजायतइत्यर्थः ९ अस्यमर्थंव्याचष्टे यजमानाइति ऋत्विजोयजमानाश्चयथाआत्मानंसकाममकामंवापश्यंतितथाउभयेषामपिप्रजाभवति तथाहि कस्त्वंगोपासनस्यऋत्विकर्तृकस्यापिफलंउभयगामिदृष्टं आत्मनेवायजमानायवायंकामंकामयतेतमागायतीति १० यज्ञस्यप्रजाहेतुत्वेमनुवाक्यंप्रमापयति अग्नाविति ११ तस्माद्यज्ञात् सुनिष्ठितायज्ञमात्रनिष्ठानतुकामपराः पूर्वेविनाऽपि फलाभिसंधिसर्वान्कामान्प्रावरीयकतयालेभिरे यथोक्तमापस्तंबेन । 'तद्यथाऽऽम्रेफलार्थेनिर्मितेच्छायागंधइत्यनूत्पद्येतेएवंधर्मंचर्यमाणमर्थाअनूत्पद्यंते'इति । एतदेवाह अकृष्टेति यथाच कर्षणाभावान्नगवांक्षुवोभूमिशयानांवाहिंसाभवति अभयन्फलपुष्पवत्स्यइतिशेषः । आशीर्भिर्जगतःशुभानुध्यानेन १२

नवेइति यज्ञानांस्वामाविकत्वादात्मनश्चाऽनाधेयातिशयत्वान्नकर्मणःफलंकर्तारंपश्यंति शंकमानायज्ञेफलमस्तिनवेतिसंदिहानाः १३ असाधवः धूर्ताः दांभिकाः सस्मेत्यादिसार्धः अ
प्रमाणेनकुतर्केणप्रमाणंवेदंअशुभंकुर्यात्सःपापकृतांलोकान्गच्छेत्स्मेत्यन्वयः । सचसदैवाकृतप्रज्ञोभवतिनकदाचिदपिमुच्यतइत्यर्थः १४ । १५ एवंश्लोकत्रयेणफलाभिसंधिशून्यंकर्म
प्रशस्यदांभिककुतार्किकौचनिंदित्वा इदानींविद्वदभिसंधिमाह कर्तव्यमिति । कर्मेत्युत्तरश्लोकादपकृष्यते कर्मकर्तव्यं नित्यमित्येवकर्तव्यं कुतोनित्यंयतःवेदइतिनिश्चितंब्राह्मणोवेदनिष्ठःमयं
वेत्ति कर्माकरणेइतिशेषः । ब्राह्मणशब्दार्थमाह ब्रह्मेति लोकेऋत्विग्यविमंत्राग्न्यादिरूपेणब्रह्मैववर्ततेइतियोवेत्तिकर्तव्यतांकर्तुमर्हतांआत्मनिचयोवर्णाध्यासपूर्वकंकर्तृत्वंचपुनर्नैववेत्तिसब्राह्म
णइत्यर्थः । कर्तृत्वाभिमानंफलाभिलाषंचत्यक्त्वाकर्मागेषुब्रह्मदृष्टिंकुर्वाणाअशनपानादाविवस्वरसेनैवकर्माणिकुर्वंतीत्यर्थः १६ यदुक्तमतःस्तैन्यंप्रभवतीतिविगुणात्कर्मणोदोषोऽस्तीतितत्राह
विगुणमिति एवंविदोब्राह्मणस्यविगुणमपिकर्मज्यायः तथाचानुशुश्रुमवेदे ।'यदुचैवास्मिन्नशव्यंकुर्वंतियदृचिनार्चिषमेवाभिसंभवतीति'। अंत्येष्टयमात्रेपिविदुषोर्चिरादिगतिरस्त्येवकिमुत
तत्रांगवैगुण्येइतिश्रुत्यर्थः । किंचैवंविदःकर्माणिसर्वैर्भूतैःश्वसूकरादिभिरमेध्यपशुभिरुपघातोऽपिज्यायान् आत्मानुसंधानहेतुत्वात् नतुमूढस्यसांगमपिकर्मज्यायइतिभावः । तथाफलमा

नतेयज्ञैःप्वात्मसुखाफलंपश्यंतिकिंचन ॥ शंकमानाःफलंयज्ञेयेयजेरन्कथंचन १३ जायंतेसाधवोधूर्तालुब्धावित्तप्रयोजनाः ॥
सस्मपापकृतांलोकान्गच्छेदशुभकर्मणा १४ प्रमाणमप्रमाणेनयःकुर्यादशुभंनरः ॥ पापात्मासोऽकृतप्रज्ञःसदैवेहद्विजोत्तम १५
कर्तव्यमितिकर्तव्यंवेत्तिवैब्राह्मणोभयम् ॥ ब्रह्मैववर्ततेलोकेनैवकर्तव्यतांपुनः १६ विगुणंचपुनःकर्मज्यायइत्यनुशुश्रुम ॥
सर्वभूतोपघातश्चफलभावेचसंयमः १७ सत्ययज्ञादमयज्ञाअर्थलुब्धार्थतृप्तयः ॥ उत्पन्नत्यागिनःसर्वेजनाआसन्नमत्सराः १८
क्षेत्रक्षेत्रज्ञतत्त्वज्ञाःस्वयज्ञपरिनिष्ठिताः ॥ ब्राह्मंवेदमधीयंतस्तोषयंत्यपरानपि १९ अखिलंदैवतंसर्वंब्रह्मब्रह्मणिसंश्रितम् ॥
तृप्यंतितृप्यतोदेवास्तृप्ताऽतृप्तस्यजाजले २०

वैउपघातफलत्यइदंमेकर्माभिनोपघातेननष्टमितिबुद्धिस्तत्संत्वेसंयमःप्रायश्चित्तमुक्तंनान्यथा चकारोहेत्वर्थः तथाचाम्नातमैतरेयके । 'तदाहुर्यस्यगार्हपत्याहवनीयावंतरेणानोवारथोवाऽश्वोवाप्रति
पद्येतकातत्रप्रायश्चित्तिरितिनैतन्मनसिकुर्यादित्याहुरात्मन्यस्यहिताभवंतीतितद्येन्मनसिकुर्वीतगार्हपत्यादविच्छिन्नामुदकधारांहरेत्तंतुंतन्वन्रजसोभानुमन्विहीत्याहवनीयात्सातत्रप्रायश्चित्तिः'
इति । अनःशकटं एनत्एतत् अस्ययजमानस्य आत्मनिस्वरूपे हियस्मात् तावाग्निअनआदीनि सुप्तासुप्तमितिसुप्तोद्धादेशः१७ एवंविदुषःकर्मयज्ञंप्रशस्ययज्ञांतरमप्याहशिष्टाचारप्रदर्शनमुखेन
सत्येति । अर्थलुब्धाःपरमपुरुषार्थेलोभवंतःअर्थेपुत्रनेषुविषयेतृप्तिर्येषांते वैराग्यतृप्ताइत्यर्थः । परमपुरुषार्थेनैवतृप्ताइतिवा उत्पन्नत्यागिनः श्वस्तनसंग्रहमकुर्वंतः अमत्सराइतिच्छेदः १८ स्वयज्ञो
योगः ब्राह्मंवेदंप्रणवं १९ कथंतोषयंतीत्यतआहाखिलमिति सर्वंब्रह्मप्रणवः कार्यकारणोभयरूपत्वात् । 'एतद्वैसत्यकामपरंचापरंचब्रह्मयदोंकारः'इतिश्रुतेः तदखिलंदैवतंसर्वदेवतात्मकं वाच्य
वाचकयोरभेदात् । ओंकारःसर्वदैवत्यइत्यनुक्रमणिकायांकात्यायनवचनाच्च । तच्चब्रह्मणिब्रह्मविदिस्थितं अतस्तृप्यतोऽस्मतोब्रह्मविदस्तृप्तस्यच सप्तम्यर्थेषष्ठी ब्रह्मविदितृप्तेसतिदेवाविराडन
त्वमूताआदित्यादयस्तृप्यंति तथाचोक्तंछांदोग्ये । 'प्राणेतृप्यतिचक्षुस्तृप्यतिचक्षुषितृप्यत्यादित्यस्तृप्यति'इत्यादि । भुंजानोऽपिविद्वान्विश्वंतर्पयतिकिमुतयजमानइत्याशयः २० ॥१३८॥

किंचनरसांतरंनाभिनंदतिद्वेष्टानतुष्यति २१ ईदृक्ज्ञानलाभेहेतुमाह धर्मेति धर्मांधाराधर्मैकाश्रयाः धर्मसुखाःधर्मेणवसुखंयेषां कृत्स्नंकार्याकार्यंव्यवसितंनिश्चितंयैःईदृशावयंस्मः । नः
अस्माकंतत्त्वतःस्वरूपात्बुद्धौचिदाभासात्मकात्सूत्रात्मकप्राणसंज्ञात्भूयःबहुतरंविश्वव्यापकत्वात्प्राणएवसर्वापेक्षयाभूयान्ततोऽपिबहुतरः । प्राणाद्युत्पत्तिस्थानंभूतात्माऽस्तीतिप्राज्ञःकर्म
भिःशुद्धांतःकरणईक्षतेआलोचयति २२ तितीर्षवोयत्रगत्वानशोचंतितत्तत्रब्रह्मणःस्थानंसात्त्विकाःप्राप्नुवंतीतिद्वयोःसंबंधः । ज्ञानंशास्त्रजंविज्ञानमनुभवस्तद्वंतः २३ । २४ नैवेति ते
तितीर्षवः 'तस्यनाममहद्यशः'इतिश्रुतेर्यशोब्रह्म । धनैर्धनसाध्यैःकर्मभिःसतांवर्त्मयोगमनुवर्तंते यजंतेचाविहिंसया २५ विदुःइविद्वेन एतान्निर्धनान् ऋत्विजोनयाजयंति यतःफलार्थिनोधना
र्थिनः २६ कथंतर्हितेयज्ञंसंपादयंतीत्यतआह स्वमेवेति स्वमात्मानमेवअर्थंयज्ञोपकरणसामग्रींसंकल्पसमकालोत्थांकुर्वाणामानसिकंयज्ञंचक्रुः तथाचोपबृंहितंत्रितारव्यायिकयाप्रागेव मंत्र
लिंगंच । 'त्रितःकूपेऽवहितोदेवान्हवतऊतये'इति ऊतयेयज्ञसंततयविच्छेदाय । परिनिष्ठितंसमापितंकर्मयैस्तेतथाभूताअपिलोकानुग्रहार्थंमानसैर्यज्ञैर्यजंतेइत्यर्थः २७ यस्मादेवंविधान्लुब्धाऋ

यथासर्वरसैस्तृप्तोनाभिनंदतिकिंचन ॥ तथाप्रज्ञानतृप्तस्यनित्यतृप्तिःसुखोदया २१ धर्माधाराधर्मसुखाःकृत्स्नव्यवसितास्तथा ॥ अस्तिनस्तत्त्वतोभूयइ
तिप्राज्ञस्त्ववेक्षते २२ ज्ञानविज्ञानिनःकेचित्परंपारंतितीर्षवः ॥ अतीवपुण्यदंपुण्यंपुण्याभिजनसंहितम् २३ यत्रगत्वानशोचंतिनच्यवंतिव्यथंतिच ॥
तेतुतद्ब्रह्मणःस्थानंप्राप्नुवंतीहसात्त्विकाः २४ नैवतेस्वर्गमिच्छंतिनयजंतियशोधनैः ॥ सतांवर्त्मानुवर्तंतेयजंतेचाविहिंसया २५ वनस्पतीनोषधीश्चफलंमूलं
चतेविदुः ॥ नचैतान्त्विजोलुब्धायाजयंतिफलार्थिनः २६ स्वमेवचार्थंकुर्वाणायज्ञंचक्रुःपुनर्द्विजाः ॥ परिनिष्ठितकर्माणःप्रजानुग्रहकाम्यया २७ तस्माता
नृत्विजोलुब्धायाजयंत्यशुभान्नरान् ॥ प्रापयेयुःप्रजाःस्वर्गेस्वधर्माचरणेनवै ॥ इतिमेवर्ततेबुद्धिःसमासर्वत्रजाजले २८ यानियज्ञेष्विहेज्यंतिसदाप्राज्ञाद्वि
जर्षभाः ॥ तेनतेदेवयानेनपथायांतिमहामुने २९ आवृत्तिस्तत्रचैकस्यनास्त्यावृत्तिर्मनीषिणः ॥ उभौतौदेवयानेनगच्छतोजाजलेयथा ३०

त्विजोनयाजयंतितेचतान्नेच्छंतितस्मात्तानेवाशुभान्मोक्षेच्छारहितांस्तेलुब्धाऋत्विजोयाजयंतीत्याह तस्मादिति इतरेतुसाधवःस्वधर्माचरणेनपरान्उपकुर्वंतिनतुधर्मफलंकामयंतेसमबुद्धि
त्वादित्याह प्रापयेयुरिति इतीतिइतिहेतोः सदसद्वृत्त्योर्विभिन्नत्वादहंसद्वृत्तमेवानुसरामीत्यर्थः २८ यानीति यानिमार्गेदैवतानिधूमरात्र्यादीनिपुनरावृत्तिप्रदमार्गप्रदर्शकानिअर्चिरहरादी
निअपुनरावृत्तिप्रदमार्गप्रदर्शकानिवा । प्राज्ञाःकर्मठाउपासकावा इज्यंतियजंते तेनयजनेन 'तंयथायथोपासतेतथेतःप्रेत्यभवंति'इतिश्रुतेस्तेयजमानाःयथाभावनंतेनतेनदेवयानेनपथामार्गेण
अत्रपितृयाणोऽपिदेवयानपदेनोच्यते तेपितृलोकंदेवलोकंवायांति । 'कर्मणापितृलोकाद्विद्ययादेवलोकः'इतिश्रुतेः २९ तत्रदेवयानेनगतस्यापिएकस्यकर्मठस्यावृत्तिरस्ति । अथैतमेवाध्वानंपुन
र्निवर्ततइतिधूमादिमार्गेणगतानामावृत्तिश्रुतेः । मनीषिणोमनोरोधशीलस्योपासकस्यनास्त्यावृत्तिः नचपुनरावर्ततइत्यर्चिरादिमार्गगतानामनावृत्तिश्रुतेः । उभौकर्मठोपासकौ देवैःधूमाद्या
र्चिरादिभिरातिवाहिकैःसहयांत्यस्मिन्निति देवयानस्तेनदिव्येनमार्गेणयद्यप्युभावपिगच्छतस्तथाऽपिसंकल्पभेदात्तयोरावृत्त्यनावृत्तीभवतइतिमहद्वैलक्षण्यमित्याशयः ३०

विदुषांसत्यसंकल्पानामैश्वर्यमाह स्वयमिति अनडुहइत्युपलक्षणं सर्वमेषांसोमयागादीनामिवसंकल्पेनैवसिध्यतीत्यर्थः उस्राधेनवः ३१ तेषांक्रतवोऽपिमानसिकाएवेत्याहार्धेन स्वय मिति सिद्धसंकल्पत्वाद्यूपदक्षिणादीन्मनसैवसृजंतीत्यर्थः । ततश्चकिमित्यतआह यइति भावितात्मायोगाभ्यासशोधितचित्तःसमधुपर्कंगांआलब्धुंहिंसितुमर्हति । नकर्मणालिप्यतेपाप केनेतिविदुषिदोषालेपश्रुतेः ३२ इतरस्तुपशुबीजादिवधात्प्रत्यवेत्येवेत्याह नतादृशाइति मूढाःनगवेत्यवादिभिर्यष्टुमर्हाइत्यर्थः । इतीति यस्मात्त्यागिनामीदृङ्माहात्म्यंतस्माद्वेतो रित्यर्थः ३३ संक्षेपेणत्यागिनोलक्षणमाह निराशिषमिति ३४ कांगतिंयाति 'तस्मादाहुरयजमानमददानमासुरोवत' इतिश्रुतेःसआसुरःकामपिगतिंदेवमार्गपितृमार्गंवानयातीत्यर्थः । कथंतर्हिगतिंयातीत्यतआहार्धेन इदमिति इदंनिराशिषमितिश्लोकोक्तलक्षणंदैवतंदैवतमिवसेवनीयंकृत्वायथायथावत्यज्ञंपरमात्मानम् । 'यज्ञोवैविष्णुः' इतिश्रुतेः । अवाप्नुयात् ३५ मुनी नांत्वयंयूपानुपादाययजंतेस्वाप्तदक्षिणैरित्युक्तरूपाणामात्मयाजिनांयत्तत्त्वंरहस्यंनस्मशृणुमोनश्रुतवंतोवयं यतःकष्टंगहनंअतस्त्वांपृच्छामि अस्यबोगधर्मस्य नावेक्षमाणाःनआलोचनं

स्वयंचैषामनड्वाहोयुज्यंतिचवहंतिच ॥ स्वयमुस्राश्चदुह्यंतेमनःसंकल्पसिद्धिभिः ३१ स्वयंयूपानुपादाययजंतेस्वाप्तदक्षिणैः ॥ यस्तथाभावितात्मास्यात्सगामा लब्धुमर्हति ३२ ओषधीभिस्तथाब्रह्मन्यजेरंस्तेनतादृशाः ॥ इतित्यागंपुरस्कृत्यतादृशंप्रब्रवीमिते ३३ निराशिषमनारंभंनिर्नमस्कारमस्तुतिम् ॥ अक्षीणं क्षीणकर्माणंतंदेवाब्राह्मणंविदुः ३४ नश्रावयन्नचयजन्नददद्ब्राह्मणेषुच ॥ काम्यांवृत्तिंलिप्समानःकांगतिंयातिजाजले ॥ इदंतुदैवतंकृत्वायथायज्ञमवाप्नुयात् ३५ ॥ जाजलिरुवाच ॥ नवैमुनीनांशृणुमःस्मतत्त्वंपृच्छामितेवाणिजकष्टमेतत् ॥ पूर्वेपूर्वेचास्यनवेक्षमाणानातःपरंतमृषयःस्थापयंति ३६ यस्मिन्नेवात्मतीर्थेनपशवः प्राप्नुयुर्मखम् ॥ अथस्वकर्मणाकेनवाणिजप्राप्नुयात्सुखम् ॥ शंसमेतन्महाप्राज्ञभृशंवैश्रद्दधामिते ३७ ॥तुलाधारउवाच॥ उतयज्ञाउतायज्ञामखंनार्हंतितेक्वचित्॥ आज्येनपयसादध्नापूर्णाहुत्याविशेषतः ॥ वालैःशृंगेणपादेनसंभरत्येवगौर्मखम् ३८पत्नींचानेनविधिनाप्रकरोतिनियोजयन् ॥ इष्टंतुदैवतंकृत्वायथायज्ञमवाप्नुयात्३९

कृतवंतः अनवेक्षमाणाअपिअतःपरमपितंधर्मनस्थापयंतिलोकेनप्रवर्तयंतिरहस्यत्वादेव ३६ यस्मिन्निति विमाकिमतिरूपकमव्ययंबव्यर्थे एवएवं यद्येवंत्वदुक्तकारेणआत्मतीर्थंआत्मैवतीर्थंयज्ञभूमि स्तत्रपशवःपशुप्रायाःमंदमतयोमखंमानसिकंक्रतुंनप्राप्नुयुः तत्प्राप्तेबहुपुण्यसाध्यत्वात् । अथतर्हिप्राप्नुयात्प्राप्नुयुः वचनव्यत्ययआर्षः तत्कर्म तेतववाक्यमितिशेषः ३७ उतेति एकउतशब्दोऽधिकविवक्षायामन्योऽप्यर्थे किंचयेषांदांभिकानांयज्ञाअपिश्रद्धादिराहित्यादयज्ञाभवंतितेकचिदंतबर्हिर्वामखंनार्हंति श्रद्दधानानांत्वेकया गवैवबाह्यक्रतुसिद्धिरित्याह आज्ये नेतिदर्शपूर्णमासयोःश्रूयते । सर्वस्मैवाएतद्यज्ञायगृह्यतेयद्ध्रुवायामाज्यम् । ऐंद्रंपयोऽमावास्यायांऐंद्रंदध्यमावास्यायां । आधानप्रकारणचद्वादशगृहीतेनस्रुचंपूरयित्वासप्तवत्यापूर्णा हुतिंजुहोतीति आज्येनेतिशेषः । सप्ततेअग्नेसमिधइत्यृचा विशेषतइतिश्रौतमखोदर्शितः । तत्राशक्तानांतुवालैर्गोपुच्छैःपितृतर्पणादिना शृंगेणगोशृंगेणाभिषेकादिना पादेनेतिपादरज सेत्यर्थः एतेषांगोस्पर्शनादीनांचसद्यःपापनाशकत्वंपरलोकप्रदत्वंचस्मृत्युक्तंदर्शितम् ३८ ननुपत्न्यभावेविशेषवान्श्रौतोमखःकथंस्यादित्यतआह पत्नीमिति अनेनपशुहिंसारहिते नाऽऽज्यादिसाध्यक्रतुविधिनाऽऽज्यादिद्रव्यंदेवतार्थेविनियोजयन् हेतौशतृप्रत्ययः । विनियोगहेतोःपत्नींचमानसीमेवकरोति श्रद्धामितिशेषः तस्मादपत्नीकोऽग्निहोत्रमाहरेत्तस्मादपत्नी-



-कस्याधानंकुर्वीतेत्युक्त्वाश्रद्धापत्नीसत्यंयजमानइतिबह्वृचब्राह्मणेऽपत्नीकस्याग्निहोत्राधानादौश्रद्धायाःपत्नीत्वदर्शनात् इष्टं भावेक्तः यागमेवदैवतवदर्च्यंतंसेवनीयंकृत्वायथायथावत्यज्ञंविष्णुं प्राप्नुयात् ३९ तत्रयागविशेषंनियमयति पुरोडाशोहीति हिशब्देनतपतउत्क्रांतमेधाअमेध्याःपशवइतिपशूनाममेध्यत्वंतस्मादाहुःपुरोडाशसत्रंलोक्यमितिपुरोडाशसत्रप्राशस्त्यंचश्रुति प्रसिद्धंद्योत्यते मेधोयज्ञस्तदर्होमेध्यः । 'सर्वेषांवाएषपशूनांमेधेनयजतेयःपुरोडाशेनयजते' इतिश्रुतेः । मूलेपशूनामितिननिर्धारणेषष्ठी पशूनाममेध्यत्वात्पुरोडाशस्यचापशुत्वात् तेनपशुसंबंधीयोमेधस्तदर्हःपुरोडाशइतिश्रुत्यनुसारेणस्मृत्यर्थोवर्णनीयः । एवंश्रद्धावतामविदुषांयज्ञमुक्त्वाविदुषांयज्ञमाह सर्वाइति ४० तीर्थंयज्ञभूमिः यत्रैवात्मसमाधानंतत्रैवसर्वाणि तीर्थानिसंतीत्यर्थः । तीर्थमितियज्ञाद्युपलक्षणं ईदृशकानहिंस्रान् कारणैर्युक्तिभिःस्वसमर्थत्वविद्वत्त्वतारतम्यैः ४१ उपपत्त्यायुक्त्या ४२ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भार

पुरोडाशोहिसर्वेषांपशूनांमेध्यउच्यते ॥ सर्वानद्यःसरस्वत्यःसर्वेपुण्याःशिलोच्चयाः ४० जाजलेतीर्थमात्मैवमास्मदेशातिथिर्भव ॥ एतानीदृशका न्धर्मानाचरन्निहजाजले ॥ कारणैर्धर्ममन्विच्छन्सलोकानाप्नुतेशुभान् ४१ ॥ भीष्मउवाच ॥ एतानीदृशकान्धर्मांस्तुलाधारःप्रशंसति ॥ उपप त्त्याभिसंपन्नान्नित्यंसद्भिर्निषेवितान् ४२ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि तुलाधारजाजलिसंवादे त्रिषष्ट्यधिकद्विशततमोऽ ध्यायः २६३ ॥ ७ ॥ तुलाधारउवाच ॥ सद्भिर्वायदिवाऽसद्भिःपंथानमिममास्थितम् ॥ प्रत्यक्षंक्रियतांसाधुततोज्ञास्यसितद्यथा १ एतेशकुंताब हवःसमंताद्विचरंतिह ॥ तवोत्तमांगेसंभूताःश्येनाश्चान्याश्चजातयः २ आहूयैनान्महाब्रह्मन्विशमानान्स्ततस्ततः ॥ पश्येमान्हस्तपादेषुश्लिष्टा न्देहेषुसर्वशः ३ संभावयंतिपितरंत्वयासंभाविताःखगाः ॥ असंशयंपितावैत्वंपुत्रानाहूयजाजले ४ ॥ भीष्मउवाच ॥ ततोजाजलिनातेनसमाहूताः पतत्रिणः ॥ वाचमुच्चारयंतिस्मधर्मस्यवचनात्किल ५ अहिंसादिकृतंकर्मइहचैवपरत्रच ॥ श्रद्धांनिहंतिवैब्रह्मन्साहताहंतितंनरम् ६ समानां श्रद्दधानानांसंयतानांसुचेतसाम् ॥ कुर्वतांयज्ञइत्येवनयज्ञोजातुनेष्यते ७

तभावदीपे त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ एवंश्रुत्यविरोधेनाहिंसात्मकोधर्मःप्रतिपादित स्तत्रदृष्टप्रत्ययोत्पादनपूर्वकंश्रद्धांग्राहयितुमारभते सद्भिरिति क्रियतांकुरु पंथानमाविह्भत्स्वफलंचत्वयाप्रत्यक्षंक्रियतामित्यध्याहृत्यवायोज्यम् आहूयतत्फलंयथातयाज्ञास्यसीतिच तुर्थेनसंबंधः १ । २ ततस्ततःतेषुतेषुनीडेषु प्रवेशायश्लिष्टान्संकुचितहस्तपादान् ३ । ४ वाचमुच्चारयंति निःशंकंप्रत्युत्तरंप्रयच्छंतीत्यर्थः तत्रहेतुः धर्मस्याऽहिंसात्मकस्यसंबं धिनोवचनात्प्रियवचनादित्यर्थः ५ एवमहिंसाधर्मेप्रत्ययमुत्पाद्यफलितमाह अहिंसादीति हिंसा आदिपदार्थःइहपरत्रचप्रत्यक्षफलमितिशेषः तत्रहिफलमनुभवेनदर्शयित्वाहिंसाफ लमाह श्रद्धामिति हिंसाश्रद्धांविश्वासंनिहंतीत्यध्याहृत्ययोज्यं तंविश्वासघातिनम् ६ समानांलाभालाभयोस्तुल्यानां संयतानांदांतानां सुचेतसांशांतानां यज्ञःकर्तव्यइत्येवाभिसं धायकुर्वतांयज्ञमनुतिष्ठतांनतुकर्तृत्वाभिमानंफलंचाभिसंधायेतिशेषार्थः । तेषांयज्ञोजातुकदाचिदपिनेष्यतइतिनाकिंलिप्सवइत्यर्थः ७

श्रद्धांस्तौति श्रद्धेत्यादिना विवस्वान्प्रकाशरूपश्चिदात्मातत्संबंधिनीवैवस्वतीश्रद्धाविषयिणीविद्यावत् सेयंसूर्यस्यसूर्यवत्प्रकाशधर्मिणःसत्वस्यदुहितेवदुहितासात्विकीत्यर्थः । सैवचश्रद्धा अवित्रीपालयित्री प्रसवित्रीविशुद्धजन्मप्रदा तथावाङ्मनसयोरपिसांतरंगं । मिश्रपात्मिकाहिश्रद्धा संकल्पात्मकंसंशयात्मकंमनस्ततोबहिरंगं । ततोऽपिबाह्यतरावाणी जपध्यान जधर्मापेक्षयाश्रद्धवश्रेष्ठेत्यर्थः ८ एतदेवाह वाग्वृद्धमिति वाचाखरवर्णविपर्यासेनयद्वृद्धंछिन्नंनष्टंमंत्राद्युच्चारणेतच्छ्रद्धात्रायतेसमावत्ते । मनसाऽप्यग्रेणयन्नष्टंदेवताध्यानादितच्छ्रद्धाहीनं तुल्यर्थमेवकर्मातोनत्रातुमर्हतिकंचित् ९ श्रद्धाशुचित्वयोःश्रद्धाधिकेत्यत्रारव्यायिकामाहात्रेति १० कदर्यस्यकृपणस्य वार्धुषेर्धान्यविक्रयिणः ११ मीमांसित्वाविचार्य १२ । १३

श्रद्धावैवस्वतीसेयंसूर्यस्यदुहिताद्विज ॥ साऽवित्रीप्रसवित्रीचवहिर्वाङ्मनसीततः ८ वाग्वृद्धंत्रायतेश्रद्धामनोवृद्धंचभारत ॥ श्रद्धावृद्धंवाङ्मनसीनकर्मत्रातुमर्हति ९ अत्रगाथाब्रह्मगीताःकीर्तयंतिपुराविदः ॥ शुचेरश्रद्दधानस्यश्रद्दधानस्यचाशुचेः १० देवावित्तममन्यंतसदृशंयज्ञकर्मणि ॥ श्रोत्रियस्यकदर्यस्यवदान्यस्यच वार्धुषेः ११ मीमांसित्वोभयंदेवाःसममन्नमकल्पयन् ॥ प्रजापतिस्तानुवाचविषमंकृतमित्युत १२ श्रद्धापूतंवदान्यस्यहतमश्रद्धयेतरत् ॥ भोज्यमन्नंवदान्यस्यक दर्यस्यनवार्धुषेः १३ अश्रद्दधानएवैकोदेवानांनार्हतेहविः ॥ तस्यैवान्ननभोक्तव्यमितिधर्मविदोविदुः १४ अश्रद्धापरमंपापंश्रद्धापापप्रमोचनी ॥ जहातिपापंश्रद्धा वान्सर्पोजीर्णामिवत्वचम् १५ ज्यायसीयापवित्राणांनिवृत्तिःश्रद्धयासह ॥ निवृत्तशीलदोषोयःश्रद्धावान्पूतएवसः १६ किंतस्यतपसाकार्यंकिंवृत्तेनकिमात्मना ॥ श्रद्धामयोऽयंपुरुषोयोयच्छ्रद्धःसएवसः १७ इतिधर्मःसमाख्यातःसद्भिर्धर्मार्थदर्शिभिः ॥ वयंजिज्ञासमानास्तुसंप्राप्ताधर्मदर्शनात् १८ श्रद्धांकुरुमहाप्राज्ञततः प्राप्स्यसियत्परम् ॥ श्रद्धावान्श्रद्दधानश्चधर्मश्चैवहिजाजले ॥ स्ववर्त्मनिस्थितश्चैवगरीयानेवजाजले १९ ॥ भीष्मउवाच ॥ ततोऽचिरेणकालेनतुलाधारःसए च ॥ दिवंगत्वामहाप्राज्ञौविहरेतांयथासुखम् २० स्वंस्वंस्थानमुपागम्यस्वकर्मपरिनिर्जितम् ॥ एवंबहुविधार्थंचतुलाधारेणभाषितम् २१ सम्यक्चैतदुपालब्धोध र्मश्चोक्तःसनातनः ॥ तस्यविख्यातवीर्यस्यश्रुत्वावाक्यानिसद्द्विजः २२ तुलाधारस्यकौंतेयशांतिमेवान्वपद्यत ॥ एवंबहुमतार्थंचतुलाधारेणभाषितम् ॥ यथो पम्योपदेशेनकिंभूयःश्रोतुमिच्छसि २३ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि तुलाधारजाजलिसंवादे चतुःषष्ट्यधिकद्विशततमो ऽध्यायः ॥ २६४ ॥ ॥ ५ ॥ ॥ भीष्मउवाच ॥ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ प्रजानामनुकंपार्थंगीतंराज्ञाविचख्नुना १

हविर्दातुमितिशेषः १४ । १५ निवृत्तःशीलदोषआचारलांछनंरागादिर्यस्यसनिर्दोषशीलवान् १६ यत्यासात्विकीराजसीतामसीवाश्रद्धायस्यसयच्छ्रद्धः सएवसात्विकोराजसस्ता मसोवा १७ धर्मदर्शनाख्यान्मुनेर्धर्मंवयंप्राप्तवंतः १८ श्रद्धावान्वेदवाक्ये श्रद्दधानस्त्वधर्मंमनुष्ठातुंममेदंश्रेयइतिनिश्चयवान् धर्मोधर्मात्मा गरीयान्श्रेष्ठतरः १९ अचिरेणाऽल्पेन दिवंहार्दाकाशाख्यंब्रह्म विहरेतांसत्यकामःसत्यसंकल्पइतिश्रुतेर्योगैश्वर्येणक्रीडांचक्रतुः । स्वंस्वंस्थानंवासदेशंस्वकर्मभिःपरिनिर्जितमर्जितमुपागम्येतिसार्धः २० । २१ । २२ यथो पम्योपदेशेनयथावदृष्टांतकीर्तनेन २३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नैलकंठीये भारतभावदीपे चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥ ॥ ५ ॥ ॥ ५ ॥



एवंतुलाधारवाक्यैरहिंसात्मकस्यधर्मस्यश्रेष्ठत्वमुपपाद्यतस्यैवस्तुतयेहिंसात्मकंकर्मनिंदस्याख्यायिकामुखेन अत्रापीत्यादिना प्रजानांपुरुषादिपशूनाम् १

छिन्नाविशस्तास्थूणाप्रतिमाशरीरंयस्यतं । 'स्थूणायसिस्मृता प्रतिमायांगृहस्तंभे'इतिविश्वः । गोग्रहेगवालंभवतियज्ञे यज्ञवाटस्य कर्मणिषष्ठी यज्ञवाटस्थान्ब्राह्मणान्निर्दयान्प्रेक्षमाणः २ निश्चितंवचनंनिर्वचनं एषाःस्वस्तिगोभ्योऽस्त्विति ३ तदेवाह अव्यवस्थितेत्यादिना हिंस्रःक्षत्रयज्ञस्तदन्योब्राह्मणयज्ञइतिमर्यादा अव्यवस्थिताविचलितामर्यादायेषांतैः यतोविमूढैः तत्रापिहेतुर्नास्तिकैर्नास्तिप्रत्ययोविवदद्भिः संशयात्मभिः आत्मादेहोऽन्योऽवा अन्योऽपिकर्ताऽकर्तावा अकर्ताऽप्येकोऽनेकोवा एकोऽपिसंगवानसंगोवाइत्यादिरूपःसंशयस्तद्वानात्माचि त्तंयेषांतैः अव्यक्तैर्यज्ञादिद्वारैरख्यातिमिच्छद्भिरितिभावः हिंसाक्रतौपश्वालंभःप्रशस्तः ४ सर्वेति बहिर्वेद्यामिवसर्वकर्मसुज्योतिष्टोमादिष्वपिनराःकामकारादेवपशून्हिंसंतिनतुशास्त्रात् यतोधर्मात्मामनुःसर्ववेदार्थतत्त्वविदहिंसामेवाऽब्रवीत्प्रशशंस । 'वसंतेवसंतेज्योतिषायजेत प्रतिसंवत्सरंसोमः'इतिश्रुतिस्मृतिभ्यांनित्यत्वेनविहितेषुज्योतिष्टोमादिषुविहितःपश्वालंभःकथंका मकारःस्यात् 'जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायते ब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यः'इत्यृणश्रुतेश्चानधीत्यानिष्ट्वाप्रजामनुत्पाद्यचकथमनृणोवास्यात् अनाहिताग्नितायाश्चोप पातकेषुस्मरणात् कृताधानस्यसमर्थस्यक्रत्वनारंभोवाकथंस्यादितिचेन्न गार्हस्थ्यस्यैवकामकारत्वेतन्मूलकानामाधानादीनामपितथात्वाज्जायमानोवैइत्यत्रापिनोत्पद्यमानइत्यर्थः किंतुगृहस्थो ऽधिकारीवासंपद्यमानइतिव्याख्येयं अन्यथापित्रादिष्वकृताधानेषुपुत्रादीनामनाहिताग्निताजनितदोषभाक्त्वोपपत्तेः किंचयद्यहरेवैनंश्रद्धोपनमेद्यादधीतायमजेतेतिशतपथश्रुतेराधानादिविधि

छिन्नस्थूणंवृषंदृष्ट्वाविलापंचगवांभृशम् ॥ गोग्रहेयज्ञवाटस्यप्रेक्षमाणःसपार्थिवः २ स्वस्तिगोभ्योऽस्तुलोकेषुततो निर्वचनंकृतम् ॥ हिंसायांहिप्रवृत्तायामाशीरेषांतुकल्पिता ३ अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः ॥ संशया त्मभिरव्यक्तैर्हिंसासमनुवर्णिता ४ सर्वकर्मस्वहिंसाहिधर्मात्मामनुरब्रवीत् ॥ कामकाराद्विहिंसंतिबहिर्वेद्यांपशून्नराः ५ तस्मात्प्रमाणतःकार्योधर्मःसूक्ष्मोविजानता ॥ अहिंसासर्वभूतेभ्योधर्मेभ्योज्यायसीमता ६ उपोष्यसंशितो भूत्वाहित्वावेदकृताःश्रुतीः ॥ अचारइत्यनाचारःकृपणाःफलहेतवः ७

षुश्रद्धावानधिकारी श्रद्धाचाधीतसांगवेदस्याऽऽपातप्रतिपन्नवेदार्थस्य 'प्लवाह्येतेअदृढायज्ञरूपा अष्टादशोक्तमवरंयेषुकर्म । एतच्छ्रेयोयेऽभिनंदंतिमूढाजरामृत्युंतेपुनरेवापियंति'इतिश्रुत्याषो डशऋत्विजोयजमानःपत्नीचेत्यष्टादशवैर्निष्पाद्यानांयज्ञानामदृढत्वंतत्कर्तृणांचमूढत्वंदर्शयंत्याज्योतिष्टोमादिभ्योहिंसावद्भ्योयज्ञेभ्यःप्रागेवापनीता । तथाचवसंतेवसंतेज्योतिषायजेतेति विधितोनित्यार्थवादानुमितनिषेधाच्चातिरात्रेषोडशिनंगृह्णातिनातिरात्रेषोडशिनंगृह्णातीतिविहितप्रतिषिद्धत्वात्षोडशिग्रहणवज्ज्योतिष्टोमोऽपिकृताकृतएवेति । अश्रद्दधानस्यतत्रप्रवृत्तिःकाम कारकृतैव । नचोपनिषदध्ययनात्प्रागेवज्योतिष्टोमेप्रवृत्तिःसंभवतियेननिंदाश्रवणात्प्राकृतप्रश्रद्धा आवश्यकत्वबुद्धिश्चसंभाव्येत । स्वाध्यायोऽध्येतव्यइतिब्रह्मचर्येएवार्थज्ञानपर्यंतस्योपनिषदध्य यनस्यसिद्धत्वात् । ननुकांडद्वयाध्याय्यपिकर्मकांडएवश्रद्धावानहमस्मिनज्ञानकांडेइतिचेत्तर्हिमोहसर्पदष्टस्यतवकर्मनिबंधपुरीकुर्वतस्तत्त्वज्ञानासितेर्यंतिकायेतांननःकिंचिच्छिन्नं । सर्वथाऽप्याज्ञा नात्कामकारकृताहिंस्रकर्मणिप्रवृत्तिरितिसिद्धं तस्मादुक्तविधएवश्लोकार्थः ५ प्रमाणतःप्रमाणयोर्बलाबलंविजानतासूक्ष्मोधर्मःकार्यः तमेवाह अहिंसेति ६ गृहस्थस्यपंचसूनानामपरिहार्यत्वात्कथ महिंसाकार्येत्यतआह उपोष्येति उपसमीपेग्रामस्यवासंकृत्वाभिक्षार्थंग्रामंप्रविशेदितिविधेःसंन्यस्येत्यर्थः। संशितस्तीक्ष्णव्रतोभूत्वावेदेनकृताःश्रुतीःफलश्रुतीः'अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतं भवति'इत्याद्याहित्वा आचारइतिबुद्ध्याऽनाचारोयद्दस्याचारहीनःस्यात् पुरुषस्येदमेवश्रेयइतिबुद्ध्यावार्यत्कर्मश्रयेदित्यर्थः । कृपणाःक्षुद्राः फलमेवकर्मणिप्रवृत्तौहेतुःकारणंयेषांतथाभूताः ७

एतदेवकर्मनिंदयास्तौति यदीति यज्ञादिपरामानवादयामांसंनखादंतिइतियःसएषधर्मोनप्रशस्यते ८ वैदिकंधर्मनिर्दिश्याकामकारकृतंकर्मनिंदति सुरामितिसार्धेन आसवंमद्यं कृसरा दनंतिलमिश्रौदनं ९ एवंनिरस्ताखिलदोषोविष्णुमात्मानमेवश्रयेदित्याह विष्णुमिति १० तस्यार्चनार्थंयज्ञवृक्षेरिवसुरामांसाद्यपेक्षितमित्याह पायसैरिति ११ चोक्षैर्विशुद्धैः १२ आपदः शरीरंशोषयंतिशरीरंचापदानाशमिच्छत्यतोऽयंतर्हिंसाशून्यस्यकथंशरीरनिर्वाहइत्याह शरीरमिति १३ यथेति शरीराविरोधेनैवधर्मंचरेन्नतुधर्मोद्गुरोधेनशरीरंनाशयेत् १४ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥ ॥ ७ ॥ ॥ एवमहिंसाधर्मस्यावश्यानुष्ठेयत्वमुक्त्वाकदाचित्परनिर्बंधाद्धिं

यदियज्ञांश्चवृक्षांश्चयूपांश्चोद्दिश्यमानवाः ॥ वृथामांसंनखादंतिनैषधर्मःप्रशस्यते ८ सुरांमत्स्यान्मधुमांसमासवंकृसरौदनम् ॥ धूर्तैःप्रवर्तितंह्येतन्नैतद्वेदेषु कल्पितम् ९ मानान्मोहाच्चलोभाच्चलौल्यमेतत्प्रकल्पितम् ॥ विष्णुमेवाभिजानंतिसर्वयज्ञेषुब्राह्मणाः १० पायसैःसुमनोभिश्चतस्यापियजनंस्मृतम् ॥ य ज्ञियाश्चैवयेवृक्षावेदेषुपरिकल्पिताः ११ यच्चापिकिंचित्कर्तव्यमन्यच्चोक्षैःसुसंस्कृतम् ॥ महासत्त्वैःशुद्धभावैःसर्वंदेवार्हमेवतत् १२ ॥ युधिष्ठिरउवाच ॥ शरी रमापदश्चापिविवदंत्यविहिंसतः ॥ कथंयात्राशरीरस्यनिरारंभस्यसेत्स्यते १३ ॥ भीष्मउवाच ॥ यथाशरीरंनग्लायेन्नेयान्मृत्युवशंयथा ॥ तथाकर्मसुवर्तेत समर्थोधर्ममाचरेत् १४ ॥ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि विचख्नुगीतायां पंचषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥ ॥

॥ युधिष्ठिरउवाच ॥ कथंकार्यंपरीक्षेतशीघ्रंवाऽथचिरेणवा ॥ सर्वथाकार्यदुर्गेऽस्मिन्भवान्नःपरमोगुरुः १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपु रातनम् ॥ चिरकारेस्तुयत्पूर्ववृत्तमांगिरसेकुले २ चिरकारिकभद्रंतेभद्रंतेचिरकारिक ॥ चिरकारीहिमेधावीनापराध्यतिकर्मसु ३ चिरकारीमहाप्राज्ञोगौतम स्याभवत्सुतः ॥ चिरेणसर्वकार्याणिविमृश्यार्थान्प्रपद्यते ४ चिरंसचिंतयत्यर्थांश्चिरंजाग्रच्चिरंस्वपन् ॥ चिरंकार्याभिपत्तिंचचिरकारीतथोच्यते ५ अलसग्र हणंप्राप्तोदुर्मेधावीतथोच्यते ॥ बुद्धिलाघवयुक्तेनजनेनादीर्घदर्शिना ६ व्यभिचारेतुकस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान् ॥ पित्रोक्तःकुपितेनाथजहीमांजननीमि ति ७ इत्युक्त्वासतदाविप्रोगौतमोजपतांवरः ॥ अविमृश्यमहाभागोवनमेवजगामसः ८ सतथेतिचिरेणोक्त्वास्वभावाच्चिरकारिकः ॥ विमृश्यचिरकारित्वाच्चिं तयामासवैचिरम् ९ पितुराज्ञांकथंकुर्यांनहन्यांमातरंकथम् ॥ कथंधर्मच्छलेनास्मिन्निमज्जेयमसाधुवत् १० पितुराज्ञापरोधर्मःस्वधर्मोमातृरक्षणम् ॥ अस्व तंत्रंचपुत्रत्वंकिंतुमांनानुपीडयेत् ११ स्त्रियंहत्वामातरंचकोहिजातुसुखीभवेत् ॥ पितरंचाप्यवज्ञायकःप्रतिष्ठामवाप्नुयात् १२

साधुत्वस्थितांकालविलंबादिनापरिहरेदितिप्रश्नपूर्वकमाख्यायिकामुखेनाह कथंकार्यमित्यादिना कार्यदुर्गेगुर्वादिवचनादवश्यकर्तव्येहिंसामयत्वेनदुष्करेचसतीत्यर्थः १ । २ । ३ । ४ चिरका रिनामनिरुक्तिं चिरमिति कार्याभिपत्तिःकार्याधिगमः तथातेनहेतुनाचिरकारीत्युच्यते ५ यद्यप्येतउपादीयतेकोकेनेनेतिग्रहणंनामधेयं अलसइतिग्रहणमलसग्रहणंप्राप्तः लाघवंनीचता जने नात्वहइतिसंबंधः ६ पित्रागौतमेन इमांजननीमहत्याम् ७ । ८ । ९ धर्मच्छलेधर्मसंकटे १० । ११ । १२

युक्तमुचितं क्षमंसुखाद्युद्देर्यं इदृद्वावपिधर्मौपरस्परविरुद्धौतमयुक्तक्षमौकथमहमेतौनातिवर्तेतमामतिशयेननातिवर्तेत् किमेतद्विकव्ययथादितितिकर्तव्यतामपश्याम् १३ गोत्रस्यनाम्नः १४ मुद्रयेना नामि संभवमुत्पत्तिहेतुम् १५ जातकर्मणिअश्माभवपरशुर्भवेतिमाह अश्मेवाच्छेद्योभवपरशुरिवमदीयशत्रुच्छेदकोभवेतिमंत्रपदार्थः उपकर्मणोपनयनात्प्रवासादेत्यपुत्रस्यशिरःपरिगृह्य जपतीतिग्रह्यविहितसर्वसंस्कारबहिर्भूतत्वादिदमुपकर्म तथाआत्मावैपुत्रनामासीतिमाह पितुःपालयितुः एवंपितुराशिषमात्मभावंचदधतोगौरवंनिश्चितमित्यर्थः १६ । १७ । १८ । १९ भो

अनवज्ञापितुर्युक्ताधारणंमातृरक्षणम् ॥ युक्तक्षमावुभावेतौनातिवर्तेतमांकथम् १३ पिताह्यात्मानमाधत्तेजायायांजज्ञिवानिति ॥ शीलचारित्रगोत्रस्यधार णार्थंकुलस्यच १४ सोऽहमात्मास्वयंपित्रापुत्रत्वेप्रकृतःपुनः ॥ विज्ञानंमेकथंनस्याद्बुद्ध्वेचात्मसंभवम् १५ जातकर्मणियत्प्राहपितायच्चोपकर्मणि ॥ पर्याप्तः सदृढीकारःपितुर्गौरवनिश्चये १६ गुरुरग्र्यःपरोधर्मःपोषणाध्यापनान्वितः ॥ पितायदाहधर्मंसवेदेष्वपिसुनिश्चितः १७ प्रीतिमात्रंपितुःपुत्रःसर्वंपुत्रस्यवै पिता ॥ शरीरादीनिदेयानिपितात्वेकःप्रयच्छति १८ तस्मात्पितुर्वचःकार्यंनविचार्यंकदाचन ॥ पातकान्यपिपूयंतेपितुःशासनकारिणः १९ भोग्येभोज्ये प्रवचनेसर्वलोकनिदर्शने ॥ भर्त्राचैवसमायोगेसीमंतोन्नयनेतथा २० पिताधर्मःपितास्वर्गःपिताहिपरमंतपः ॥ पितरिप्रीतिमापन्नेसर्वाःप्रीयंतिदेवताः २१ आशिषस्ताभजंत्येनंपुरुषंप्राहयत्पिता ॥ निष्कृतिःसर्वपापानांपितायच्चाभिनंदति २२ मुच्यतेबंधनात्पुष्पंफलंवृक्षात्प्रमुच्यते ॥ क्लिश्यन्नपिसुतंस्नेहैःपिता पुत्रंनमुंचति २३ एतद्विचिंतितंतावत्पुत्रस्यपितृगौरवम् ॥ पितानाल्पतरंस्थानंचिंतयिष्यामिमातरम् २४ योह्ययंमयिसंघातोमर्त्यत्वेपांचभौतिकः ॥ अ स्यमेजननीहेतुःपावकस्ययथाऽरणिः २५ मातादेहारणिःपुंसांसर्वस्यार्तस्यनिर्वृतिः ॥ मातृलाभेसनाथत्वमनाथत्वंविपर्यये २६ नचशोचतिनाप्येनंस्थाविर्य मपकर्षति ॥ श्रियाहीनोऽपियोगेहमंबेतिप्रतिपद्यते २७ पुत्रपौत्रोपपन्नोऽपिजननींयःसमाश्रितः ॥ अपिवर्षशतस्यांतेसद्विहायनवच्चरेत् २८ समर्थंवाऽस मर्थंवाकृशंवाप्यकृशंतथा ॥ रक्षत्येवसुतंमातानान्यःपोष्टाविधानतः २९ तदासवृद्धोभवतितदाभवतिदुःखितः ॥ तदाशून्यंजगत्तस्ययदामात्रावियुज्यते ॥ ३० नास्तिमातृसमाच्छायानास्तिमातृसमागतिः ॥ नास्तिमातृसमंत्राणंनास्तिमातृसमाप्रिया ३१ कुक्षिसंधारणाद्धात्रीजननाज्जननीस्मृता ॥ अंगानां वर्धनादंबावीरसूत्वेनवीरसूः ३२ शिशोःशुश्रूषणाच्छुश्रूर्मातादेहमनंतरम् ॥ चेतनावान्नरोहन्याद्यस्यनासुषिरंशिरः ३३

ग्येवस्त्रादौ भोज्येऽन्नादौ प्रवचनेवेदाध्ययने लोकनिदर्शनेलौकिकशिक्षायां भर्त्रेतिगर्भाधानादिसर्वसंस्कारोपलक्षणम् २० । २१ । २२ । २३ । २४ । २५ निर्वृतिःसुखंतत्कर्त्री २६ हेअंबइत्युक्त्वा २७ द्विहायनवद्द्विवर्षवान्भवेत् २८ । २९ । ३० । ३१ वीरसूर्वीरपुत्रसूः ३२ मातेवशुश्रूस्तामनंतरमव्यवहितमात्मनोदेहंसचेतनावान्नहन्यात् सकः यस्यशिरःसु षिरंभेदोमज्जादिनारिक्तंशुष्कालाबुवत्पायिपावितंताद्विपरीतमसुषिरंस्यात् ३३

माणउपरथेंद्रियंतस्संश्लेषेमैथुनेइत्यर्थः । अभिसंधिःपुत्रोमेगौरोजायेतवेदमन्वीतसर्वमायुरित्यादिश्रुत्याप्रदर्शितोऽभिलाषःकृतोदंपतीभ्यामेव । तमभिलाषंमातापितावाउभौवाकुरुतस्तत्र भूतार्थोयाथार्थ्यंमातर्येवतत्कर्तृत्वंस्थितंनिश्चितंपितरितुसोऽभिलाषःपाक्षिकोभवतीत्यर्थः ३४ भरणमात्रेणगर्भधारणमात्रेणसंबंधेनमातापुत्रेप्रीतिमाह्लादंस्नेहमासक्तिंचकरोति अतःप्रत्युपकारायतस्यामपिप्रीतिस्नेहौपुत्रेणकार्यावित्यर्थः वस्तुतस्तुपितुरेवप्रजाः यथोक्तंप्रागेव 'मातामस्त्रापितुःपुत्रोयेनजातःसएवसः'इति मस्त्राचर्मकोशः पितुराज्ञाऽनुल्लंघनीयेतिभावः ३५ ननुनचैतद्विद्मोब्राह्मणाःस्मोवयमब्राह्मणावेतिश्रुतेःपितृत्वेएवसंशयात्कथंतदाज्ञानुल्लंघनीयेत्यतआह पाणीति धर्मेचार्थेचकामेचनातिचरामीतिप्रतिज्ञापूर्वकंस्वयंपाणिग्रहंकृत्वायदिपुरुषाः स्त्रियःपरदारान्प्रतियास्यंतितर्हितेयाच्यतांप्रार्थनीयतांपूज्यतामितियावत् नार्हंतिधर्मत्यागात् । अयमाशयः यद्यप्येवंविधःपितासोऽज्ञातत्वादशिष्टत्वाच्चनानुरोध्योममतुपितासतीपतिरनुरोध्यएवेति ३६ किंतर्हिपित्राज्ञयामाताहंतव्येत्याशंक्याह भरणादिति पत्युर्माबाःकर्मवापार्थंपालयितृत्वस्मात् तथाचभार्यापर्णोचप्राणैर्वियोजयितुमिच्छतोऽस्यमर्तृत्वादि गुणशून्यस्योन्मत्तस्येववचनान्मातरंनहिंसिष्येइत्याशयः ३७ ननुव्यभिचारिणीस्त्रीहंतव्यैवान्यथाकुलसंकरापत्तेरित्याशंक्याह एवामिति एवमपीत्यर्थः व्युच्चरन्नाचरन् महादोषं

दंपत्योःप्राणसंश्लेषेयोऽभिसंधिःकृतःकिल ॥ तंमाताचपिताचेतिभूतार्थोमातरिस्थितः ३४ माताजानातियद्गोत्रंमाताजानातियस्यसः ॥ मातुर्भरणमात्रेणप्रीतिःस्नेहःपितुःप्रजाः ३५ पाणिबंधंस्वयंकृत्वासहधर्ममुपेत्यच ॥ यदायास्यंतिपुरुषाःस्त्रियोनार्हंतियाच्यताम् ३६ भरणाद्धिस्त्रियोभर्तापात्याच्चैवस्त्रियःपतिः ॥ गुणस्यास्यनिवृत्तौतुनभर्तानपुनःपतिः ३७ एवंस्त्रीनापराप्नोतिनरएवापराध्यति ॥ व्युच्चरंश्चमहादोषंनरएवापराध्यति ३८ स्त्रियाहिपरमोभर्तादैवतंपरमंस्मृतम् ॥ तस्यात्मनातुसदृशमात्मानंपरमंददौ ३९ नापराधोऽस्तिनारीणांनरएवापराध्यति ॥ सर्वकार्यापराध्यत्वान्नापराध्यंतिचांगनाः ४० यश्चनोक्तोऽथनिर्देशस्त्रियामैथुनतृप्तये ॥ तस्यस्मारयतोव्यक्तमधर्मोनास्तिसंशयः ४१ एवंनारींमातरंच गौरवेचाधिकेस्थिताम् ॥ अवध्यांतुविजानीयुःपशवोप्यविचक्षणाः ४२

पारदार्यं यदिप्रार्थयितैवनस्यात्तर्हिनायंदोषःप्रसज्ज्येतातःप्रथमप्रवृत्तेपुंस्येवायंदोषइत्यर्थः ३८ ननुस्त्रियाअपितदनुमोदनादपराधोऽस्त्येवेत्याशंक्याह स्त्रियाहीति तस्याऽऽत्मनाशरीरेणसदृशमिंद्रमालक्ष्येतिशेषः आत्मानंशरीरंपरमंश्रेष्ठंददौ स्वपतिवेषेणागतायपरस्मैपतिबुद्ध्याशरीरंप्रयच्छंत्यामममातुर्नव्यभिचारदोषोऽस्ति गर्भानुत्पत्तेःकुलसंकराभावाच्चनेयंवध्येत्यर्थः ३९ उपसंहरति नापराधइति किंचसर्वेषुकार्येष्वपराध्यत्वादनुरोध्यत्वादल्पबलत्वेनसर्वथापुरुषाधीनत्वात् तथाचबलात्कारकृतव्यभिचारादौस्त्रियोनापराध्यंतीत्यर्थः ४० यश्चनेति चनशब्दोप्यर्थे योऽपिमैथुनजन्यतृप्तयेनिर्देशोवचनमुक्तंइंद्रंप्रतीतिशेषः एवंद्युपाख्यायते स्वश्वःपुरेस्त्रिशिराइंद्रेणहतस्तद्धत्यायास्तृतीयांशःस्त्रीपुरजोरूपेणस्थापितोद्वौवृक्षभूम्योर्निर्यासोपररूपौस्थापितौ तदास्त्रीभिर्वरःप्रार्थितः । काममाविजनितोःसंभवामेति अस्माकंजननपर्यंतंपुरुषसंगोऽस्त्विति सोऽयंनिर्देशःस्त्रियाउक्तः तस्यतंस्मारयतःस्वहत्यांशनिधानेनतत्स्मरणप्रयोजकस्येंद्रस्यैवव्यक्तमधर्मोनतुममामातुरत्रसंशयोनास्ति तस्मादिंद्रस्यापराधान्ममामातुर्वधोनन्याय्यइतिभावः ४१ यावत्कृत्स्नांनारीमवध्यांजानीयुस्तत्रापिमातरं तत्रापि गौरवेपातिव्रत्यधर्मेस्थितां । पशवोऽपिपशुप्रायाअपि किमुतमादृशाइत्यर्थः ४५

समावायःसमूहः पितुस्तोषणेनस्वर्गप्राप्तिरित्यर्थः मर्त्यानांदेवतानांचसमावायंमातरंस्नेहादभ्येतीतियोजना मातात्वदृष्टद्वारालोकद्वयप्रदाइहलोकपालयित्रीचेतिभावः ४३ । ४४ तेनतावताकालेन संस्थाव्यतिक्रमंमरणानौचित्यं ४५ श्रुतमध्ययनं धैर्यंक्रोधादिजयेस्थैर्यं तयोःप्रसादेन ४६ । ४७ सांत्वितोविश्रांतिंप्रापितः प्रतिपादितःप्रापितः ४८ परवान्त्वयाऽहंनाथवानस्मीत्युक्तस्तेनसांत्वनादिनातृप्तःसन्प्रणयिष्यतिमयिप्रणयंकरिष्यति अत्रास्मिन्नर्थेचिंतितेसति अकुशलेइंद्रलौल्येनस्त्रीदूषणेजातेविषयेस्त्रियाअहल्यायाव्यतिक्रमोना

देवतानांसमावायमेकस्थंपितरंविदुः ॥ मर्त्यानांदेवतानांचस्नेहादभ्येतिमातरम् ४३ एवंविमृशतस्तस्यचिरकारितयाबहु ॥ दीर्घःकालोव्यतिक्रांतस्ततोऽस्याभ्यागमत्पिता ४४ मेधातिथिर्महाप्राज्ञोगौतमस्तपसिस्थितः ॥ विमृश्यतेनकालेनपत्न्याःसंस्थाव्यतिक्रमम् ४५ सोऽब्रवीद्दुःखसंतप्तोदुःखेनाश्रूणिवर्तयन् ॥ श्रुतधैर्यप्रसादेनपश्चात्तापमुपागतः ४६ आश्रमंममसंप्राप्तस्त्रिलोकेशःपुरंदरः ॥ अतिथिव्रतमास्थायब्राह्मणंरूपमास्थितः ४७ समयासांत्वितोवाग्भिःस्वागतेनाभिपूजितः ॥ अर्घ्यंपाद्यंयथान्यायंमयाचप्रतिपादितः ४८ परवानस्मिचेत्युक्तःप्रणयिष्यतितेनच ॥ अत्रचाकुशलेजातेस्त्रियानास्तिव्यतिक्रमः ४९ एवंनस्त्रीनचैवाहंनाध्वगस्त्रिदशेश्वरः ॥ अपराध्यतिधर्मस्यप्रमादस्त्वपराध्यति ५० ईर्ष्याजंव्यसनंप्राहुस्तेनचैवोर्ध्वरेतसः ॥ ईर्ष्ययात्वहमाक्षिप्तोमग्नोदुष्कृतसागरे ५१ हत्वासाध्वींचनारींचव्यसनित्वाच्चवासिताम् ॥ भर्तव्यत्वेनभार्याचकोनुमांतारयिष्यति ५२ अंतरेणमयाऽऽज्ञप्तश्चिरकारीत्युदारधीः ॥ यद्यद्यचिरकारिस्यात्सर्मात्रायेतपातकात् ५३ चिरकारिकभद्रंतेभद्रंतेचिरकारिक ॥ यद्यद्यचिरकारीत्वंततोऽसिचिरकारिकः ५४ त्राहिमांमातरंचैवतपोयच्चार्जितंमया ॥ आत्मानंपातकेभ्यश्चभवाद्यचिरकारिकः ५५ सहजंचिरकारित्वमतिप्रज्ञतयातव ॥ सफलंतत्तथातेऽस्तुभवाद्यचिरकारिकः ५६ चिरमाशंसितोमात्राचिरंगर्भेणधारितः ॥ सफलंचिरकारित्वंकुरुत्वंचिरकारिक ५७ चिरायतेचसंतापाच्चिरंस्वपितिधारितः ॥ आवयोश्चिरसंतापादवेक्ष्यचिरकारिक ५८ एवंसदुःखितोराजन्महर्षिर्गौतमस्तदा ॥ चिरकारिंददर्शाथपुत्रंस्थितमथांतिके ५९ चिरकारीतुपितरंदृष्ट्वापरमदुःखितः ॥ शस्त्रंत्यक्त्वाततोमूर्ध्नाप्रसादायोपचक्रमे ६० गौतमस्तंततोदृष्ट्वाशिरसापतितंभुवि ॥ पत्नींचैवनिराकारांपरामभ्यागमन्मुदम् ६१ नहिसातेनसंभेदंपत्नीनीतामहात्मना ॥ विजनेचाश्रमस्थेनपुत्रश्चापिसमाहितः ६२ हन्याइतिसमादेशःशस्त्रपाणौसुतेस्थिते ॥ विनीतिप्रसवत्यर्थंविवासेचात्मकर्मसु ६३ बुद्धिश्चासीत्सुतंदृष्ट्वापितुश्चरणयोर्नतम् ॥ शस्त्रग्रहणचापल्यंसंवृणोतिभयादिति ६४

स्ति ४९ अध्वगइतिस्वर्गमार्गेणगच्छतेंद्रेणाहल्यांदृष्ट्वामोहंप्राप्तेनैतत्कृतमितिसूचितं धर्मस्ययोगधर्मसंबंधि प्रमादोऽनवधानता इंद्रस्यानपराधत्वेहेतुपराहित्यान्मुनिनेहोक्तंनतुव्यवहारतः ५० तेनप्रमादेनहेतुनाऊर्ध्वरेतसोमुनयः ५१ । ५२ अंतरेणप्रमादेन ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० निराकारांलज्जयापाषाणभूतां पुराणांतरेगौतमशापेनैवपाषाणभूतामितिस्मर्यते ६१ । ६२ । ६३ । ६४

६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ ॥ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नैलकंठीये भारतभावदीपे षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥ ॥ एवमहिंसैवधर्मोहिंसैवचपापमितिस्थितेदंड्यानदंडयतोराज्ञःकथमहिंसास्वंस्यादंडयतोवाकथंप्रजासंरक्षणंस्यादितिपृच्छति कथमिति १ । २ अव्याहृतंदंड्यानामप्यदंडयत्वंमाकेनचिदनुक्तं वधायवध्येष्वितिशेषः १ वधोनामसत्यधर्मइतिवदतोव्याघातइत्यर्थः ४ । ५ संकरमेवाह ममेति लोकयात्रातीर्थगमनवाणिज्यादिव्यवहारः

ततःपित्राचिरंस्तुत्वाचिरंचाघ्रायमूर्धनि ॥ चिरंदोर्भ्यांपरिष्वज्यचिरंजीवेत्युदाहृतः ६५ एवंसगौतमःपुत्रंप्रीतिहर्षगुणैर्युतः ॥ अभिनंद्यमहाप्राज्ञइदंवचनमब्रवीत् ६६ चिरकारिकभद्रंतेचिरकारीचिरंभव ॥ चिराययदितेसौम्यचिरमस्मिनदुःखितः ६७ गाथाश्चाप्यब्रवीद्विद्वान्गौतमोमुनिसत्तमः ॥ चिरकारिषुधीरेषुगुणोद्देशसमाश्रयाः ६८ चिरेणमित्रंबध्नीयाच्चिरेणचकृतंत्यजेत् ॥ चिरेणहिकृतंमित्रंचिरंधारणमर्हति ६९ रागेदर्पेचमानेचद्रोहेपापेचकर्मणि ॥ अप्रियेचैवकर्तव्येचिरकारीप्रशस्यते ७० बंधूनांसुहृदांचैवभृत्यानांस्त्रीजनस्यच ॥ अव्यक्तेष्वपराधेषुचिरकारीप्रशस्यते ७१ एवंसगौतमस्तत्रप्रीतःपुत्रस्यभारत ॥ कर्मणातेनकौरव्यचिरकारितयातथा ७२ एवंसर्वेषुकार्येषुविमृश्यपुरुषस्ततः ॥ चिरेणनिश्चयंकृत्वाचिरंनपरितप्यते ७३ चिरंधारयतेरोषंचिरंकर्मनियच्छति ॥ पश्चात्तापकरंकर्मनकिंचिदुपपद्यते ७४ चिरंवृद्धानुपासीतचिरमन्वास्यपूजयेत् ॥ चिरंधर्मंनिषेवेतकुर्याच्चान्वेषणंचिरम् ७५ चिरमन्वास्यविदुषश्चिरंशिष्टान्निषेव्यच ॥ चिरंविनीयचात्मानंचिरंयात्यनवज्ञताम् ७६ ब्रुवतश्चपरस्यापिवाक्यंधर्मोपसंहितम् ॥ चिरंपृष्टोऽपिचब्रूयाच्चिरंनपरितप्यते ७७ उपास्यबहुलास्तस्मिन्नाश्रमेसुमहातपाः ॥ समाःस्वर्गंगतोविप्रःपुत्रेणसहितस्तदा ७८ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि चिरकारिकोपाख्याने षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

॥ युधिष्ठिरउवाच ॥ कथंराजाप्रजारक्षेन्नचकिंचित्प्रघातयेत् ॥ पृच्छामित्वांसतांश्रेष्ठतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ द्युमत्सेनस्यसंवादंराज्ञासत्यवतासह २ अव्याहृतंव्याजहारसत्यवानितिनःश्रुतम् ॥ वधायोन्नीयमानेषुपितुरेवानुशासनात् ३ अधर्मतांयातिधर्मोयात्यधर्मश्चधर्मताम् ॥ वधोनामभवेद्धर्मोनैतद्भवितुमर्हति ४ ॥ द्युमत्सेनउवाच ॥ अथचेदवधोधर्मोधर्मःकोजातुचिद्भवेत् ॥ दस्यवश्चेन्नहन्येरन्सत्यवन्संकरोभवेत् ५ ममेदमितिनास्यैतत्प्रवर्तेतकलौयुगे ॥ लोकयात्रानचैवस्यादथचेद्वेत्थशंसनः ६ ॥ सत्यवानुवाच ॥ सर्वएतेत्रयोवर्णाःकार्याब्राह्मणबंधनाः ॥ धर्मपाशनिबद्धानामन्योऽप्येवंचरिष्यति ७ योयस्तेषामपचरेत्तमाचक्षीतवैद्विजः ॥ अयंमेनशृणोतीतितस्मिन्राजाप्रधारयेत् ८

कलौयुगेअधर्मप्रधानेकालेवेत्थचेदहिंसयाप्यसंकरप्रकारमितिशेषः सोऽस्मभ्यंशंसकथय ६ त्रयःक्षत्रविट्शूद्राःब्राह्मणाधीनाःकार्याः धर्मपाशनिबद्धानांतेषुधर्मपाशेनानिबद्धेषुसत्सु अन्योऽपिप्रतिलोमानुलोमजातःसूतमागधादिरेवंत्रैवर्णिकवच्चरिष्यतिधर्मं ७ अपचरेद्राज्ञ एवचनमतिकामेत् प्रधारयेद्दंडम् ८



तत्त्वात्मकत्वात्तरंशरीरं सत्त्वेतिपाठेजंतुस्तस्यामेदेनाऽविनाशेनयत्प्रवृत्तंशास्त्रंतत्कार्यं एतदेवव्यतिरेकमुखेनाह नेति कर्मादीन्यसमीक्ष्यसम्यगनालोच्यान्यथात्विवंविपरीतप्रकारंछेदात्मकंशासनंनकार्यमितियोज्यम् ९ यदाएकस्मिन्नपिचोरेहतेतत्संबंधिनामनागसांबहूनांवधोभवतीत्याह दस्यूनिति पुरुषेणहतेनतेभार्यादयः यस्मादेकस्यापराधेनबहूनांवधोऽनुचितस्तस्मादसम्यक्प्रधारयेद्विचारयेत् १० तमेवाहासाधुश्चेति साधोःसकाशाच्छीलंलभते ११ फलितमाह नमूलेति यतोमूलघातोनैवधर्मः १२ उद्वेजनंसर्वस्वापहरणादिभयप्रदर्शनेनपरंतुचोरस्यवधेनतदीयाभार्यादयोनक्लिश्याद्वृत्तिलोपेनक्लेशंनप्रापणीयाः १३ यदेति तेदस्यवः १४ बिभ्रदिति संन्यासिनोऽपिशास्याइत्यर्थः १५ गरीयांसमपिशास्युरितिशेषः पुनःपुनरपराधेयदाकृतेतदाविसर्गंनार्हति प्रथमापराधेइवेतिव्यतिरेकदृष्टांतः १६ यत्रयत्रसमयेमर्यादापालंयतुंनिर्यंतुम् १७ धर्मोच्छेदनंप्यहन्यमानेषुचोरेषु पूर्वेपूर्वकाले १८ सुशास्यत्वेहेतुमाह मृ

तत्त्वाभेदेनयच्छास्त्रंतत्कार्यंनान्यथाविधम् ॥ असमीक्ष्यैवकर्माणिनीतिशास्त्रंयथाविधि ९ दस्यून्निहंतिवैराजाभूयसोवाप्यनागसः ॥ भार्यामातापितापुत्रोहन्यंतेपुरुषेणते ॥ परेणापकृतोराजातस्मात्सम्यक्प्रधारयेत् १० असाधुश्चैवपुरुषोलभतेशीलमेकदा ॥ साधोश्चापिह्यसाधुभ्यःशोभनाजायतेप्रजा ११ नमूलघातःकर्तव्योनैषधर्मःसनातनः ॥ अपिस्वल्पवधेनैवप्रायश्चित्तंविधीयते १२ उद्वेजनेनबंधेनविरूपकरणेनच ॥ वधदंडेनतेक्लिश्यानपुरोहितसंसदि १३ यदापुरोहितंवातेपर्येयुःशरणैषिणः ॥ करिष्यामःपुनर्ब्रह्मन्नपापमितिवादिनः १४ तदाविसर्गमर्हाःस्युरितीदंधातृशासनम् ॥ बिभ्रद्दंडाजिनंमुंडोब्राह्मणोऽर्हतिशासनम् १५ गरीयांसोगरीयांसमपराधेपुनःपुनः ॥ तदाविसर्गमर्हंतिनयथाप्रथमेतथा १६ ॥ द्युमत्सेनउवाच ॥ यत्रयत्रैवशक्येरन्संयंतुंसमयेप्रजाः ॥ सतावान्प्रोच्यतेधर्मोयावन्नप्रतिलंघ्यते १७ अहन्यमानेषुपुनःसर्वमेवपराभवेत् ॥ पूर्वेपूर्वतरेचैवसुशास्याह्यभवन्जनाः १८ मृदवःसत्यभूयिष्ठाअल्पद्रोहाल्पमन्यवः ॥ पुराधिग्दंडएवासीद्वाग्दंडस्तदनंतरम् १९ आसीदादानदंडोऽपिवधदंडोऽद्यवर्तते ॥ वधेनापिनशक्यंतेनियंतुमपरेजनाः २० नैवदस्युर्मनुष्याणांनदेवानामितिश्रुतिः ॥ नगंधर्वपितॄणांचकःकस्येहनकश्चन २१ पद्मंश्मशानादादत्तेपिशाचाच्चापिदैवतम् ॥ तेषुयःसमयंकश्चित्कुर्वीतहतबुद्धिषु २२ ॥ सत्यवानुवाच ॥ तान्नशक्नोषिचेत्साधून्परित्रातुमहिंसया ॥ कस्यचिद्भूतभव्यस्यलाभेनांतंतथाकुरु २३

दवइति १९ अद्यकलौ एकस्मिन्हतेऽपीतरेनत्रस्यंतीत्यर्थः अतःसर्वेऽपिचोरपक्षीयाहंतव्याएवेत्याशयः २० नैवेति कःकस्येहेतिगवएवप्रश्नः नकश्चनकस्यापीत्युत्तरंचदस्युरपेतद्भार्यादीनांवधोनास्तीत्यर्थः संबंधाभावात् २१ चोरेषुमर्यादाकरणमपिनसंभवतीत्याह पद्ममिति पद्मंशवालंकारमादत्ते पिशाचात्पिशाचोपहतादादत्तेचैलादिकमितिशेषः कीदृशंसमयदैवतंदेवताशपथादिरूपं यःकश्चिन्मूढोनतुप्राज्ञइत्यर्थः २२ साधून्कर्तुमितिशेषः भूतंभव्यायोपदिश्यतइतिन्यायेनसिद्धंपश्वादिकंसाध्यायकर्मणेभवतीतिभूतभव्यशब्देनकृतःकस्यचित्कृतोर्लाभेनतेषामंतंनाशंकुरु । तथाहिसर्वमेधेब्रह्मणेब्राह्मणमालभेतेत्यादिनासर्वजातीयानांसर्वकर्मणांचनराणामालंभउक्तः । तथाचराजाबहून्वध्यान्निरोध्यकालेसर्वमेधेआलभेतेत्यर्थः । तेनपापिष्ठाअपियज्ञपशूभूयस्वर्गंयांति । 'पशुर्वैनीयमानःसमृत्युंप्रापश्यत्सदेवान्नान्वकामयतैतुंतंदेवाअब्रुवन्नेहिस्वर्गंवैत्वालोकंगमयिष्यामइतिसतथेत्यब्रवीत्'इतिश्रुतेः । वध्यानपिक्रतुप्रवेशेनोपकुर्यादितिभावः २३

तेराजानस्ताद्दग्भ्यःस्तेनेभ्योऽपत्रपंतेममापिराज्येस्तेनइतिलज्जांकुर्वते ऽतस्तथावृत्तालोकयात्रार्थंप्रजापालनार्थमिदंपरवंकामयानाःपितरइवतपस्विनोभवंति । तथाचराजानःप्रतिजानतेछांदोग्ये 'नमेस्तेनोजनपदेनकदर्योनमद्यपः ॥ नानाहिताग्निर्नाविद्वान्नस्वैरीस्वैरिणीकुतः'इति २४ वित्रास्यमानाइति त्रासेनैवप्रजाःसाध्व्योभवंतिनतुराजानोदुष्कृतीनदुष्टानकामात्वग्रं स्यपितुकृत्यप्रयोजनेनैवघ्नंत्येवंचसुकृतेनैवप्रजाःशासते २५ एवंविधेराज्ञि'यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरेजनाः'इतिन्यायेनोत्तरोत्तरंप्रजाःश्रेयस्याभवंतीत्याह श्रेयसइति २६ राज्ञास्वचित्तं जित्वैवप्रजाःशास्याअन्यथातापएवैनमुपहसंतीत्याह आत्मानमिति २७ । २८ दुष्कृतंदुष्टकर्मकारिणं अनंतरान्पुत्रसोदर्यादीन् २९ विपक्षेदोषमाह यत्रेति यत्रराज्येअर्च्छति प्राप्नोति ३० स्वोक्तेःसांप्रदायिकत्वमाह इतीति ३१ आश्वासयद्भिः प्रजाइतिशेषः एतद्रूपदंडंप्रथमकल्पेनमुख्येनाहिंसामयेनदंडेनजयेद्वशीकुर्यात् धिग्दंडंवाग्दंडमादानदंडंवधदंडं

राजानोलोकयात्रार्थंतप्यंतेपरमंतपः ॥ तेऽपत्रपंतिताद्दग्भ्यस्तथावृत्ताभवंतिच २४ वित्रास्यमानाःसुकृतोनकामाद्घ्नंतिदुष्कृतीन् ॥ सुकृतेनैवराजानोभूयिष्ठं शासतेप्रजाः २५ श्रेयसःश्रेयसोऽप्येवंवृत्तंलोकोऽनुवर्तते ॥ सदैवहिगुरोर्वृत्तमनुवर्ततिमानवाः २६ आत्मानमसमाधायसमाधित्सतियःपरान् ॥ विषयेष्विंद्रियव शंमानवाःप्रहसंतितम् २७ योराज्ञोदंभमोहेनकिंचित्कुर्यादसांप्रतम् ॥ सर्वोपायैर्नियंम्यःसतथापापान्निवर्तते २८ आत्मैवादौनियंतव्योदुष्कृतंसंनियच्छता ॥ दंडयेच्चमहादंडैरपिबंधूननंतरान् २९ यत्रवैपापकृत्क्लेशोनमहद्दुःखमर्च्छति ॥ वर्धंतेतत्रपापानिधर्मोह्रसतिचध्रुवम् ३० इतिकारुण्यशीलस्तुविद्वान्वैब्राह्मणोऽन्व शात् ॥ इतिचैवानुशिष्टोऽस्मिपूर्वंस्तातपितामहैः ३१ आश्वासयद्भिःसुभृशमनुक्रोशात्तथैवच ॥ एतत्प्रथमकल्पेनराजाकृतयुगेजयेत् ३२ पादोनेनापिधर्मेणग च्छेत्त्रेतायुगेतथा ॥ द्वापरेतुद्विपादेनपादेनत्ववरेयुगे ३३ तथाकलियुगेप्राप्तेराज्ञोदुश्चरितेनह ॥ भवेत्कालविशेषेणकलाधर्मस्यषोडशी ३४ अथप्रथमकल्पेनस त्यवन्संकरोभवेत् ॥ आयुःशक्तिंचकालंचनिर्दिश्यतपआदिशेत् ३५ सत्यायहियथानेहजह्याद्धर्मफलंमहत् ॥ भूतानामनुकंपार्थंमनुःस्वायंभुवोऽब्रवीत् ३६ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि द्युमत्सेनसत्यवत्संवादे सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ युधिष्ठिर उवाच ॥ ॥ अविरोधेनभूतानांयोगःषाड्गुण्यकारकः ॥ यःस्यादुभयभाग्धर्मस्तन्मेब्रूहिपितामह १

चयगक्रमेणप्रजासुप्रवर्तयेदितितात्पर्यम् ३२ । ३३ । ३४ अथेति निर्दिश्यनिश्चित्यतपोदंडं । 'राजभिःकृतदंडास्तुशुद्ध्यंतिमलिनाजनाः'इतिदंडस्यापितपोवच्छुद्धिहेतुत्वस्मृतेः ३५ उक्तऽर्थेप्रमाणमाह सत्यायेति सत्यायब्रह्मप्राप्तयेहिप्रसिद्धंमहद्धर्मफलंज्ञानं स्वर्गादेःक्षुद्रत्वात् यथायेनप्रकारेणेहनजह्यात्तादृशमहिंसाख्यंधर्ममनुरब्रवीत् ३६ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ वृत्तमनूद्यपृच्छति अविरोधेनेति राज्ञामप्य हिंसाप्रधानःषाड्गुण्यकारकःषड्गुणाऐश्वर्यादयोधर्मगवच्छब्दभाग्भवतिउत्पत्त्यादयःप्रकृतिगुणावातेषांसमूहःषाड्गुण्यंतस्यकारकोहेतुर्योगउक्तइतिशेषः । 'ऐश्वर्यस्यसमग्रस्यज्ञानस्ययशसः श्रियः ॥ वैराग्यस्यचधर्मस्यषण्णांभगइतींगना ॥ उत्पत्तिंचविनाशंचभूतानामागतिंगतिं ॥ वेत्तिविद्यामविद्यांचसवाच्योभगवानिति' १ ॥१४४॥

उभयभाक्त्वमेवविवृणोति गार्हस्थ्यस्येति गार्हस्थ्येपंचसूनाअनिवार्याः योगेतुहिंसासर्वात्मनास्त्याज्या अदूरेसमीपेएककार्यार्थत्वेनसंप्रस्थितयोःप्रवृत्तयोः । 'न्यायागतधनस्तत्त्वज्ञाननिष्ठो ऽतिथिप्रियः ॥ श्राद्धकृत्सत्यवादीचगृहस्थोऽपिविमुच्यते ॥ प्राणायामैर्दहेद्देनोधारणाभिश्चकिल्बिषान् ॥ प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान्'इतिस्मृतिभ्यां गुणानजीवत्वादीन् अतस्तुल्यार्थयोरेतयोर्मध्येकिंस्विच्छ्रेयः २ उभौगार्हस्थ्ययोगधर्मौ ३ । ४ अत्रेति अक्षराधिक्यमार्षम् ५ 'तद्यथैवादोमनुष्यराजआगतेऽन्यस्मिन्वार्हत्युक्षाणंवावेहतंवाक्षदंते'इतिश्रुति मनुपश्यंस्त्वष्टुस्त्वष्ट्रेगृहागतायमधुपर्कगामालेभे वेहतंवंध्यांगां क्षदंतेहिंसंति ६ नियुक्तांहंतुंपुरस्कृतांदृष्ट्वावेदाइत्यब्रवीदितिद्वयोःसंबंधः दृष्ट्वेत्यस्याध्याहारश्च ७ वेदाइतिगर्हायांप्लुतिः ८ प्रविश्ययोगबलेनेत्यर्थः यतिंकपिलमुनिं इंहोइतिविस्मये वेदायदिमताःगर्हितत्वेनसंमताः अत्रापिगर्हायांयाःप्लुतेरनुवादः अपरेहिंसाशून्याधर्माःकेनमताः प्रामाण्यमप्रामाण्यंवाकर्मज्ञान

गार्हस्थ्यस्यचधर्मस्ययोगधर्मस्यचोभयोः ॥ अदूरसंप्रस्थितयोःकिंस्विच्छ्रेयःपितामह २ ॥ भीष्मउवाच ॥ उभौधर्मौमहाभागावुभौपरमदुश्चरौ ॥ उभौमहा फलौतौतुसद्भिराचरितावुभौ ३ अत्रतेवर्तयिष्यामिप्रामाण्यमुभयोस्तयोः ॥ शृणुष्वैकमनाःपार्थच्छिन्नधर्मार्थसंशयम् ४ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ कपिलस्यगोश्चसंवादंतन्निबोधयुधिष्ठिर ५ आम्नायमनुपश्यन्हिपुराणंशाश्वतंध्रुवम् ॥ नहुषःपूर्वमालेभेत्वष्टुर्गामितिनःश्रुतम् ६ तांनियुक्तामदीनात्मासत्त्वस्थः संयमेरतः ॥ ज्ञानवान्नियताहारोददर्शकपिलस्तथा ७ सबुद्धिमुत्तमांप्राप्तोनैष्ठिकीमकुतोभयाम् ॥ सत्यमशिथिलांसत्यांवेदाइत्यब्रवीत्सकृत् ८ तांगामृषिः स्यूमरश्मिःप्रविश्ययतिमब्रवीत् ॥ इंहोवेदाश्चयदिमताधर्माःकेनापरेमताः ९ तपस्विनोधृतिमंतःश्रुतिविज्ञानचक्षुषः ॥ सर्वमार्षंहिमन्यंतेव्याहृतंविदितात्मनः १० तस्यैवंगततृष्णस्यविज्वरस्यनिराशिषः ॥ काविवक्षाऽस्तिवेदेषुनिरारंभस्यसर्वतः ११ ॥ कपिलउवाच ॥ नाहंवेदान्विनिंदामिनविवक्ष्यामिकर्हिचित् ॥ पृथगाश्रमिणांकर्माण्येकार्थानीतिनःश्रुतम् १२ गच्छत्येवपरित्यागीवानप्रस्थश्चगच्छति ॥ गृहस्थोब्रह्मचारीचउभौतावपिगच्छतः १३ देवयानाहिपंथानश्च त्वारःशाश्वतामताः ॥ एषांज्यायःकनीयस्त्वंफलेषूक्तंबलाबलम् १४

कांडयोस्तुल्यमतोनान्यतरन्निंदेत्प्रशंसेद्वेतिभावः ९ तपस्विनःआर्षमन्यंते किंविदितात्मनःनित्यज्ञानवतःपरमेश्वरस्यवाहृतं । 'अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदः'इतिश्रुतेर्निःश्वास वदयत्नोच्चारितंचवेदं अतोऽत्रैकमप्यक्षरंप्रमाणीकर्तुमशक्यमित्यर्थः १० ननु'एषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषतेएषह्येवासाधुकर्मकारयतितंयमधोनिनीषते'इतिश्रुत्यास तांमुक्तिमसतांबंधंचदातुंविवक्षाभेदेनज्ञानकर्मकांडप्रवृत्तेइत्याशंक्याह तस्येति तस्यईश्वरस्यगततृष्णस्यफलाशाहीनस्य विज्वरस्यद्वेषहीनस्य निराशिषःनीरागस्य निरारंभस्यावाप्तस कलकामत्वात् नवैषम्यविवक्षयावेदवचनंसंभवतीत्यर्थः ११ नाहमिति विवक्ष्यामिविषमान्वक्ष्यामि १२ एकार्थत्वमाह गच्छत्येवेति परित्यागीसंन्यासी गच्छत्येवपरंपदमितिशेषः १३ देवयानाःदेवमात्मानंयांत्येभिरितितथाभूताश्चत्वारआश्रमाः एषांज्यायस्त्वकनीयस्त्वरूपंबलाबलंफलेषुनिमित्तेषूक्तं यथोक्तं 'संन्यासीमोक्षमाप्नोतिब्रह्मलोकंवनीतथा । स्वर्लोकंगृ हिलोकंचगृहस्थब्रह्मचारिणौ'इति १४

आरभेतसर्वार्थान्स्वर्गादिप्रदान्यज्ञादीनितिवैदिकंमतं यथोक्तमापस्तंबेन त्रैविद्यवृद्धानांतुवेदाःप्रमाणमितिनिष्ठातत्रयानिश्रूयंतेव्रीहियवपश्वाज्यपयःकपालपत्नीसंबद्धान्युच्चैर्नीचैःकार्यमिति तैर्विरुद्धआचारोऽप्रमाणमितिमन्यंते अथापिप्रजापतेर्वचनं'त्रयींविद्यांब्रह्मचर्यंप्रजातिंश्रद्धांतपोयज्ञमनुप्रदानं। यएतानिकुर्वतेतैरित्सहस्मोरजोभूत्वाध्वंसतेऽन्यत्प्रशंसन्निति'इति। श्रुतिश्चमर्त्यं तंशरीरमितिआमरणमग्निसाध्यकर्मानुष्ठानंकर्तव्यमितिदर्शयति तथाऽन्यत्रप्रकरणांतरेनारभेतकर्माणीतिशेषः तथाचवार्तिककारोदाहृतंमाण्डविशाखावचनं । 'त्यागएवहिसर्वेषांमोक्षसाधनमु त्तमं । त्यजतैवहिविज्ञेयंत्यक्तुःप्रत्यक्परंपदं'इति नैष्ठिकीत्यनेनैतस्याःसिद्धांतत्वंदर्शितं १९ तदेवाहार्धेन अनारंभेइति । अत्रशंकतेऽर्धेन एवमिति । कर्मतत्त्यागविध्योर्बलाबलंदुर्ज्ञेयं उभयत्रनिंदास्तुत्योस्तुल्यत्वादितिभावः १६ एतद्दूषयति यद्यत्रेति । अहिंसायाःपरमहिंसातोऽन्यत्वत्यर्त्किंचित्त्हिंसाशास्त्रंआगमशास्त्रेभ्यःऋतेयदिप्रत्यक्षंदृष्टफलंमतंयुक्त्यायदिवातत्पश्यसि अनुभवंनतर्हिब्रूहि । अयंभावः । योगफलंप्रत्यक्षंयथोक्तमापस्तंबेन अथापिसंकल्पसिद्धयोभवंतियथावर्षप्रजादानंदूरेदर्शनंमनोजवतायच्चान्यदेवंयुक्तंतस्मात्श्रुतितःप्रत्यक्षफलत्वाच्चाविशिष्टाना श्रमानेतानेकेब्रुवतइति अनुमानगम्यंच तथाहि । नीहारेणप्रावृताअनृतेनहिप्रत्यूढाइत्यादिश्रुतिभ्योरज्जूरगस्येवबंधस्यमिथ्याज्ञानकार्यत्वंसिद्धं ततोज्ञानमात्रापनोद्यत्वंयुक्तं । नहिरज्जूरगभीत स्यभयनिवृत्तिर्गंगास्नानसहस्रेणापिभवत्यधिष्ठानसाक्षात्कारजनिततद्बाधमंतरेण । स्मृतिश्च । 'भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे'इति तथाच यथा

एवंविदित्वासर्वार्थानारभेतेतिवैदिकम् ॥ नारभेतेतिचान्यत्रनैष्ठिकीश्रूयतेश्रुतिः १५ अनारंभेह्यदोषःस्यादारंभेदोषउत्तमः ॥ एवंस्थितस्यशास्त्रस्यदुर्विज्ञेयंब लाबलम् १६ यद्यत्रकिंचित्प्रत्यक्षमहिंसायाःपरंमतम् ॥ ऋतेत्वागमशास्त्रेभ्योब्रूहितद्यदिपश्यसि १७ ॥ ॥ स्यूमरश्मिरुवाच ॥ ॥ स्वर्गकामोयजेतेतिसत तंश्रूयतेश्रुतिः ॥ फलंप्रकल्प्यपूर्वंहितततोयज्ञःप्रतायते १८ अजश्चाश्वश्चमेषश्चगौश्चपक्षिगणाश्चये ॥ ग्राम्यारण्याश्चौषधयःप्राणस्यान्नमितिश्रुतिः १९ तथैवा न्नंह्यहरहःसायंप्रातर्निरूप्यते ॥ पशवश्चाथधान्यंचयज्ञस्यांगमितिश्रुतिः २०

प्रत्यक्षानुमानागमगम्यंतत्त्वज्ञानफल कर्मफलंतुश्रुत्यैकगम्यं नतत्रप्रत्यक्षानुमानेसंक्रमतइतिकर्मतत्त्यागविद्ययोर्बलाबलंसुज्ञेयमेव यत्तुआपस्तंबेनोक्तं । तत्रयेपुण्यकृतस्तेषांत्रकृतयःपराज्वलंत्य उपलभ्यंतइतितारारूपिणांकर्मकृतामपिप्रत्यक्षंज्योतिर्मयत्वामिति तदपिश्रौतमेव नहिसुकृतांवाएतानिज्योतींषियन्नक्षत्राणीतिश्रुतिमंतरेणतेषांचेतनत्वमध्यवसातुंशक्यं अचेतनत्वंतुजौमि निसंमतमित्यास्तांतावत् यत्तुतेनैवत्यानुकर्माव्ययेनतपसाबाकश्चित्सशरीरोंतवंतंलोकंजयति . संकल्पसिद्धिश्चस्यात्तुतज्ज्यैष्ठ्यमाश्रमाणामितिज्ञानफलस्यप्रत्यक्षत्वमभ्युपेत्यापितस्सा धकाश्रमस्यज्यैष्ठ्यंनिषिद्धं यच्चगौतमेन ऐकाश्रम्यंत्वाचार्याःप्रत्यक्षविधानाद्गार्हस्थ्यस्येतिप्रस्मार्तंशरीरंकुटुंबेशुचौदेशेस्वाध्यायमधीयानइतिप्रत्यक्षश्रुतिमूलकतयागार्हस्थ्यस्यज्यैष्ठ्यमुक्तं तत्सर्वंनाहिनिंदानिंद्यंनिंदितुंप्रवर्ततेऽपितुविधेयंस्तोतुमितिन्यायेनज्ञानादधिकारिणामाश्रमधर्मेषुश्रद्धोत्पादनार्थमितिद्रष्टव्यमिति १७ अत्रप्रत्यवतिष्ठते स्वर्गेति यागविधावुद्देश्यस्य स्वर्गस्यस्वरूपाविवक्षायांकस्त्रंशास्त्रमनर्थकंस्यादित्यर्धेःप्रतायतेप्रतन्यते १८ ननुस्वर्गोनास्तीतिनब्रूमःकिंतुहिंसायुक्तंतत्साधनंनिंदामइत्याशंक्यप्राणविद्यायांसहोवाचकिंमेऽन्नंभविष्यतीति यत्किंचिदिदमाश्वभ्यआशकुनिभ्यइतिश्रुतिंप्रत्यक्षंचसर्वस्यान्नत्वेप्रमाणयति अजश्चेतिसार्धेन अपोर्वाइत्रशिराः ग्राम्याओषधयोयवाद्याः यस्ययदन्नंतद्भक्षणेतस्यदोषोनास्तीतिभावः १९ यदेवंतदाश्रौतेकर्मणिहिंसादोषःकैमुतिकन्यायनिरस्तइत्याशयेनाह पशवइति २०

२१ अन्योन्यवराःपरस्परापेक्षयाश्रेष्ठाः सप्तघासप्तधेतिषाड्गुणाहृतिः तेच'गौरजोमनुजोऽश्वश्चमेषाश्वतरगर्दभाः ॥ ग्राम्याःसप्तसमाख्याताःपशवःसाधुवेदिभिः ॥ सिंहव्याघ्रवराहाश्चमहि षावारणास्तथा ॥ ऋक्षाश्चवानराश्चैवसप्तारण्याःप्रकीर्तिताः'इति उत्तममितिसंज्ञासंजातायस्य पुरुषोवाबसुकृतमितिश्रुतेरुत्तमसंज्ञितंपुरुषाख्यमपियज्ञेयूपाकृतंविनियुक्तं'पुरुषंवैदेवाःपशुमालभंत' इतिवेदाःप्राहुस्तच्चशिष्टैराहृतं । 'पुरुषोहवैनारायणोकामयतास्यतिष्ठेयंसर्वाणिभूतान्यहमेवेदंसर्वस्यामिति सएतंपुरुषमेधंपंचरात्रंयज्ञक्रतुमपश्यत्'इतिश्रुतेः पूर्वैर्ब्रह्मादिभिःपूर्वतरैर्नारायणादिभिः यत्रसर्वोत्कृष्टःपुरुषोऽपिश्रुतितआचाराच्चहिंस्यतेतत्रकाकथाइतरेषामितिभावः सार्धः २२ स्वाशक्तिविद्वान्नमयेदमजस्याश्वस्यपुरुषस्यवाआलंभनंकर्तुंशक्यमितिनानकूःपुमानात्मनोऽजी वान्नविचिन्वीतनविवेचयेतआलंभार्यमितिशेषः किंतुसर्वोऽप्यास्तिकःस्वस्यशक्त्यंक्रतुंकुर्यादेवेत्यर्थः २३ नचात्रहिंसादोषोऽस्तिप्रत्युतस्वर्गार्थिनापश्वादीनां'नवाउएतन्म्रियसेनरिष्यसिदेवाँइदे

एतानिसहयज्ञेनप्रजापतिरकल्पयत् ॥ तेनप्रजापतिर्देवान्यज्ञेनायजतप्रभुः२१ तदन्योन्यवराःसर्वेप्राणिनःसप्तसप्तधा ॥ यज्ञेषूपाकृतंविश्वंप्राहुरुत्तमसंज्ञितम् २२ एतच्चैवाभ्यनुज्ञातंपूर्वैःपूर्वतरैस्तथा ॥ कोजातुनविचिन्वीतविद्वान्स्वांशक्तिमात्मनः २३ पशवश्चमनुष्याश्चद्रुमाश्चौषधिभिःसह ॥ स्वर्गमेवाभिकांक्षंतेनचस्व र्गस्ततोमखात् २४ ओषध्यःपशवोवृक्षावीरुदाज्यंपयोदधि ॥ हविर्भूमिर्दिशःश्रद्धाकालश्चैतानिद्वादश २५ ऋचोयजूंषिसामानियजमानश्चषोडश ॥ अग्निर्ज्ञे योगृहपतिःससप्तदशउच्यते २६ अंगान्येतानियज्ञस्ययज्ञोमूलमितिश्रुतिः ॥ आज्येनपयसादध्नाशकृताऽऽमिक्षयात्वचा २७ वालैःशृंगेणपादेनसंभवत्येवगौ र्मखम् ॥ एवंप्रत्येकशःसर्वंयद्यदस्यविधीयते २८ यज्ञंवहंतिसंभूयसहर्त्विग्भिःसदक्षिणैः ॥ संहृत्यैतानिसर्वाणियज्ञंनिर्वर्तयंत्युत २९ यज्ञार्थानिहिसृष्टानियथार्था श्रूयतेश्रुतिः ॥ एवंपूर्वतराःसर्वेप्रवृत्ताश्चैवमानवाः ३० नहिनस्तिनारभतेनाभिद्रुह्यतिकिंचन ॥ यज्ञोयष्टव्यइत्येवयोयजत्यफलेप्सया ३१ यज्ञांगान्यपिचैता नियज्ञोक्तान्यनुपूर्वशः ॥ विधिनाविधियुक्तानिधारयंतिपरस्परम् ३२ आम्नायमार्षंपश्यामियस्मिन्वेदाःप्रतिष्ठिताः ॥ तंविद्वांसोऽनुपश्यंतिब्राह्मणस्यानुदर्श नात् ३३ ब्राह्मणप्रभवोयज्ञोब्राह्मणार्पणएवच ॥ अनुयज्ञंजगत्सर्वंयज्ञश्चानुजगत्सदा ३४

षिपथिभिःसुगेभिः'इतिमंत्रवर्णाद्वयमुपकारएवेत्याह पशवश्चेति मखात्यज्ञंविनास्वर्गस्ततोविस्तृतोनास्ति जपादिजःस्वर्गःस्वल्पइतिभावः नरिष्यसिनहिंस्यसेदेवाँइतदेवानेव २४ । २५ । २६ यज्ञोमूलं लोकस्थितेरितिशेषः श्रुतिर्यज्ञाद्भवतिपर्जन्यइत्यादिर्भगवद्वचनरूपा वेदस्यापीश्वरकर्तृकत्वाभ्युपगमेनभगवद्गीतायाउपनिषदामपिसमानकर्तृकत्वेनश्रुतित्वौचित्यात् । शकृतागोमयेन आमिक्षयादधिमिश्रेणपयसा त्वचाआनुडुहेचर्मणिपिनिर्वापादेर्विधानात् शेषंव्याख्यातं २७ । २८ संहृत्यगुणोपसंहारन्यायेनैकीकृत्य आरभेतैवयज्ञमितिभावः २९ । ३० हिंसारंभयो रुपपादितमदोषत्वमुपसंहरति नेति फलार्थिनामेवहिंसारंभौदोषावहौनत्वफलार्थिनांममेदमावश्यकमितिबुद्ध्यायज्ञमनुतिष्ठतामित्यर्थः ३१ यज्ञांगान्योषध्यादीनि यज्ञोक्तानियूपदा र्वादिवत्समासः विधियुक्तान्यलौकिकानियूपाहवनीयादीनि विधिनोन्नयनप्रणयनादिरूपेण धारयंतिस्वस्वकार्येपरस्परमुपकुर्वंतीत्यर्थः ३२ ब्राह्मणस्यक्रियायांप्रवर्तकस्यवाक्यस्य ३३ ब्राह्मणप्रभवोवेदविप्रोद्भवः नपुंसकमनपुंसकेनेत्येकशेषपूर्वकोऽयंसमासः ३४

ब्रह्मणोवेदस्य तस्मात्प्रणवपूर्विकायज्ञादिक्रियाकर्तव्येत्यर्थः ३९ । ३६ स्तोभाःसामपूरकाक्षराणिहाविहावुइत्यादीनि ३७ मानुषादैव्यमुपैमीतिमंत्रवर्णादाधानकादिदैवदेवभावंप्राप्नोति सोमंसुनोतिमर्त्यविद्युमांअहेतिमंत्रवर्णात्सोमंसुन्वंतःस्वर्गोविपर्ययमाप्नुवंतीत्येवमादितद्भगवान्ज्ञानैश्वर्यसंपन्नतमोभवानेववेद ३९ स्वर्गेविधिनास्वर्गप्रदज्योतिष्टोमादिनायतःप्रेत्यमहत्स्वर्गफलंभवति ३९ वेदवादविदःयोवेदगतानर्थवादान्वेदतस्योभयंफलसमर्पकमर्थवादद्वयंप्रमाणंस्तुत्यर्थत्वेनेत्यर्थः । यथायस्यपर्णमयीजुहूर्भवतिनसपापंश्लोकंशृणोतीतिफलंक्रत्वंगजुहूसंबंधाद्विवक्षितस्वार्थंकिंतुलक्षणयास्तुतिमात्रपरम् । एवंसर्वांश्चलोकानाप्नोतिसर्वांश्चकामान्यस्तमात्मानमनुविद्यविजानातीत्यात्मज्ञानफलमविज्ञेयं । ननुलोकवेदसाधारणस्यकर्त्रात्मनोजुहूवदव्यभिचरितक्रतुसंबंधाभावात्कथंतज्ज्ञानफलस्यजुहूफलवदर्थवादत्वम् उच्यते देहातिरिक्तआत्मावैदिकाग्न्योपूषाहवनीयादिवदलौकिकोऽस्ति तस्यचक्रतुसंबंधोनव्यभिचरति आमुष्मिकव्यहारमात्रस्यतत्सापेक्षत्वात् । ऐहिकव्यहारेचतदनपेक्षणादेहात्मभावेऽपितदुपपत्तेः । यच्चपिजातपुत्रःकृष्णकेशोऽग्नीनादधीतेत्यादिविशेषणमात्रस्यपत्न्यादिवल्लोकवेदसाधारणत्वेऽपिफलभोक्तृत्वंतथात्वमस्ति । तस्माज्जुहूवत्स्वर्गकामस्याप्यव्यभिचरितक्रतुसंबंधात्साधद्ध्यादिवदनारभ्याधीतमपितज्ज्ञानंक्रतुमत्रेशंलभतेतत्फलस्यचार्थवादत्वमितियुक्तमुत्पश्यामः

ओमितिब्रह्मणोयोनिर्नमःस्वाहास्वधावषट् ॥ यस्यैतानिप्रयुज्यंतेयथाशक्तिकृतान्यपि ३५ नतस्यत्रिषुलोकेषुपरलोकभयंविदुः ॥ इतिवेदावदंतीहसिद्धाश्च परमर्षयः ३६ ऋचोयजूंषिसामानिस्तोभाश्चविधिचोदिताः ॥ यस्मिन्नेतानिसर्वाणिभवंतीहसवेदद्विजः ३७ अग्न्याधेयेयद्भवतियच्चसोमेसुतेद्विज ॥ यच्चेतरेमहायज्ञैर्वेदतद्भगवान्पुनः ३८ तस्माद्ब्रह्मन्यजेचैवयाजयेचाविचारयन् ॥ यजतःस्वर्गविधिनाप्रेत्यस्वर्गफलंमहत् ३९ नायंलोकोऽस्त्ययज्ञानांपरश्चेतिविनिश्चयः ॥ वेदवादविदश्चैवप्रमाणमुभयंतदा ४० ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि गोकपिलीये अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

॥ कपिलउवाच ॥ एतावदनुपश्यंतियतयोयांतिमार्गगाः ॥ नैषांसर्वेषुलोकेषुकश्चिदस्तिव्यतिक्रमः १

तथाचसूत्रम् । शेषत्वात्पुरुषार्थवादोयथान्येष्विति जैमिनिरिति । ननुविद्याफलंप्रत्यक्षमितितत्राप्युक्तमापस्तंबेनबुद्धेक्षेमप्रापणंतच्छास्त्रैर्विप्रतिषिद्धंबुद्धेचेत्क्षेमप्रापणमिहैवनदुःखमुपलभेतेति बुद्धेआत्मनिष्ठातेक्षेमप्रापणमानंदप्राप्तिर्नास्ति ज्ञातात्मतत्त्वस्यापिदुःखोपलंभात् अयुक्तंचतत् रजोमूलत्वाच्चसतेज्ञपरप्रशंसन्निविकर्ममार्गादन्यज्ज्ञानंप्रशंसतोनिंदाश्रवणात् तस्माज्जुहूात्मज्ञानफलयोःसमानमर्थवादत्वमितिपूर्वःपक्षः ४० ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥ ॥ ७ ॥

अत्रोत्तरमाह एतावदिति एतयोयमनियमादिमंतोयांतिप्रकरणादात्मानंप्राप्नुवंति तेमार्गगाःप्रागेवशुद्धात्मप्राप्तेर्मार्गेसविशेषावस्थायांस्थिताएतावद्दृश्यत्वेनपरिच्छिन्नंब्रह्मांडपार्थिवंकर्मफलमनुपश्यंतिगुरुशास्त्रोपदेशमनुसाक्षात्कुर्वंति तथाचश्रुतिर्ब्रह्मविदाप्नोतिपरमितिमहत्फलमुपक्षिप्य'योवेदनिहितंगुहायांपरमेव्योमन्सोऽश्नुतेसर्वान्कामान्सह'इतिशरीरगुहास्थंसत्यादिलक्षणंब्रह्म योवेदसःपरमेव्योमन्नव्याकृतावस्थांगतःसर्वकामभाग्भवतीतिदर्शयति ननुफलश्रुतेरर्थवादत्वमुक्तमित्याशंक्याह नैषामिति एषांयतीनांसर्वेषुलोकेषुभोग्यपदार्थेषुकश्चिद्व्यतिक्रमोमिथ्यासंकल्पत्वंनास्ति । संकल्पादेवास्यपितरःसमुत्तिष्ठंति संकल्पादेवतुतच्छ्रुतेरितिश्रुतिन्यायाभ्यां तथाहि छांदोग्ये सर्वांश्चलोकानाप्नोतिसर्वांश्चकामानितिप्रजापतिनाआत्मज्ञानफलमुक्त्वास्तंवदेवोदिव्यैंद्रविरोचनौप्रजापतौब्रह्मचर्यमूषतुः तंवाएतंदेवाआत्मानमुपासते तस्मात्तेषांसर्वेचलोकाःसर्वेचकामाआप्ताइतिपरकृतिरूपार्थवादेनासिद्धवन्निर्दिष्टम् । एतस्याविवक्षायां-



-तत्संकर्मफलमप्यविवक्षितंस्यात् न्यायसाम्यात् प्राकरणिकफलत्वाच्च । ननूक्तंदेहादन्यस्यकर्त्रात्मनोजुह्वादिवन्नियतःक्रतुसंबंधइति । सत्यं तथापिअन्यत्रधर्मात्अन्यत्राधर्मादयोऽशनायापिपासेशोकंमोहंजरांमृत्युमत्येतीतिविदितवेदांतवेद्यस्यधर्माद्यतीतस्याशनायादिरहितस्याऽऽत्मनोज्ञानंनकर्मांगत्वंप्रतिपद्यते । यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितितदधिगमेद्वैतोपमर्दश्रवणात् । तस्मान्नात्मज्ञानफलस्यार्थवादत्वंपर्णमयीदृष्टांतेनयुज्यते तथाचसूत्रं अधिकोपदेशात्तुबादरायणस्यैवंतद्दर्शनादिति १ यत्तुबुद्धेचेत्क्षेमप्रापणमिहैवनदुःखमुपलभेतेत्यापस्तंबवचनमुदाहृतंतत्राह निर्द्वंद्वाइति निर्द्वंद्वाःशीतोष्णादिजहर्षविषादशून्याः अतएवनिर्नमस्काराःनकंचिन्नमस्कुर्वंति यतोनिराशीर्बंधनाःप्रार्थनापाशशून्याःयतःपापेभ्योवासनाहेतुभ्योविमुक्ताः शुचयःस्वभावशुद्धाः अमलाआगंतुकदोषशून्याः । यतएवंविधाभरतसंवर्तादयोबहवउपलभ्यंतेऽतआपस्तंबोक्तिर्ज्ञानानधिकारिणांकर्मणिश्रद्धोत्पादनार्था । अन्यथापूर्वोदाहृतेनतदीयेनज्ञानफलाभ्युपगमवचनेनविरोधःस्यात् एतेनगौतमोक्तिरप्येकाश्रम्यपराव्याख्यातावेदितव्या १ । ३ लोकाःलोक्यंतइतिलोकाःकाम्यमानाविषयाः सनातनानित्य

निर्द्वंद्वानिर्नमस्कारानिराशीर्बंधनाबुधाः ॥ विमुक्ताःसर्वपापेभ्यश्चरंतिशुचयोऽमलाः २ अपवर्गेऽथसंत्यागेबुद्धौचकृतनिश्चयाः ॥ ब्रह्मिष्ठाब्रह्मभूताश्चब्रह्मण्येवकृतालयाः ३ विशोकानष्टरजसस्तेषांलोकाःसनातनाः ॥ तेषांगतिंपरांप्राप्यगार्हस्थ्येकिंप्रयोजनम् ४ ॥ स्यूमरश्मिरुवाच ॥ यद्येषापरमाकाष्ठायद्येषापरमागतिः ॥ गृहस्थानव्यपाश्रित्यनाश्रमोऽन्यःप्रवर्तते ५ यथामातरमाश्रित्यसर्वेजीवंतिजंतवः ॥ एवंगार्हस्थ्यमाश्रित्यवर्ततइतराऽऽश्रमाः ६ गृहस्थएवयजतेगृहस्थस्तप्यतेतपः ॥ गार्हस्थ्यमस्यधर्मस्यमूलंयत्किंचिदेजते ७ प्रजनाद्यभिनिर्वृत्ताःसर्वेप्राणभृतोजनाः ॥ प्रजनंचाप्युतान्यत्रनकथंचनविद्यते ८ यास्तुस्युर्बहिरोषध्योबहिरन्यास्तथाऽद्रिजाः ॥ ओषधिभ्योबहिर्यस्मात्प्राणात्कश्चिन्नदृश्यते ९ कस्यैषावाग्भवेत्सत्यामोक्षोनास्तिगृहादिति ॥ अश्रद्दधानैरप्राज्ञैःसूक्ष्मदर्शनवर्जितैः १० निरासैरलसैःश्रांतैस्तप्यमानैःस्वकर्मभिः ॥ शमस्योपरमोदृष्टःप्रव्रज्यायामपंडितैः ११ त्रैलोक्यस्यैवहेतुर्हिमर्यादाशाश्वतीध्रुवा ॥ ब्राह्मणोनामभगवान्जन्मप्रभृतिपूज्यते १२

सिद्धाः । तएतेसत्याःकामाअनृतापिधानाइतिश्रुतेः अनृतंदेहादितादात्म्याध्यासः गार्हस्थ्येअसत्यस्वर्गादिप्रदकर्माधिकारनिमित्तेकिमपिप्रयोजनंनास्तिनहिप्राप्तसाम्राज्योभिक्षामन्विच्छति ४ ननुतथाऽपिकेकेयजनकादीनांगार्हस्थ्यएवविद्वत्त्वदर्शनात्कर्मसमुच्चितैवविद्याफलायभवतीत्यभिप्रेत्याह यदीति यदिएषानिर्द्वंद्वादिविशेषणवत्तैवज्ञाननिष्ठातर्हिसागार्हस्थ्यमंतरेणनभवति प्रवर्तंतेएनांनिष्ठांदातुंसमर्थोभवति ५ । ६ एजते एजृकंपने यत्किंचित्सुखार्थीचेष्टतेतस्यधर्मफलस्यसुखस्यमूलंगार्हस्थ्यमेव ७ जनायेनप्रजनादिनाप्रजोत्पादनादिना अभिनिर्वृत्ताःसर्वतःसुखिनोभवंतितत्प्रजनंप्रजनाद्यन्यत्राश्रमांतरेनास्ति ८ यास्त्विति यद्यपितृणानिओषध्योवान्यानिबहिरन्याओषध्योऽद्रिजाःसोमपूतिकाद्यायास्तासामपिमूलंदृष्ट्यादिगार्हस्थ्यमेवेतिव्यवहितातीतेनसंबंधः तथाह्याह । 'अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते । आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाः'इति ओषधिभ्यःप्राणादितिसमानाधिकरणेपंचम्यौ ओषध्यात्मकात्प्राणाद्बहिर्नकश्चिद्दृश्यते अतोविश्वोत्पत्त्यादिहेतुर्गार्हस्थ्यमेवेतिभावः ९ तथापियोक्षसाधनत्वंगार्हस्थ्यस्यनास्तीत्याशंक्याह कस्येति १० निरासैः अप्रतिष्ठैःकाणत्वादिदोषाद्गार्हस्थ्यंकर्तुमशक्तैरित्यर्थः । अतएवस्वकर्मभिःकाणत्वादिभिर्दैन्यादिभिःकृतैस्तप्यमानैः ११ ब्राह्मणःवेदवित् १२

अविश्रंभेषुमानांतरागम्येषुस्वर्गादिषुविश्रंभेषुऐहिकेषुदृष्टचाविषुमाध्येषुमंत्राएवसाधयितुंप्रवर्तंते १३ दाहइति मृतस्यदाहादिकंपितरोमंत्राश्चानुमन्यंतइतिद्वयोःसंबंधः तत्र'मैनमग्नेविदह' इतिदाहंप्रकाशयतिमंत्रः । 'संगच्छस्वपितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन्' । हित्वायावद्यंपुनरस्तमेहिसंगच्छस्वतन्वासुवर्चा'इतिमंत्रेऽवद्यंजीर्णदेहंहित्वायहित्वा आर्षःक्त्वोल्यप् पितृभिर्यमेन इष्टादिफलेनचस्वर्गेसंगतिंसंप्राप्यपुनरस्तंगृहंपौत्ररूपेणप्रपौत्ररूपेणवाएहितन्वादेहेनसंगच्छेतिपुनर्देहप्राप्तिःप्रकाश्यते तदिदंपुनःसंश्रयणं देहस्येतिशेषः तस्मिन्निमित्तेदाहइतिसंबंधः । देहेपुनःसंश्रितेसतिमृतस्यतृप्तयेपात्रभोजनेपीयतइतिपात्रंजलंभोजनंचतेउभेतर्पणनित्यश्राद्धादिरूपेणदेये । तथागवांवैतरण्यादीनांदानंपशूनांवागोवृषादीनामुत्सर्गःपिंडानांवाप्सुमज्जनंक्रियते । एतत्सर्वंमंत्रमूलंनत्वशरीरस्यमुक्तस्योपकारायभवतीतिनतादृशोऽशरीरतालक्षणोमोक्षोऽस्ति १४।१५ अत्रैवहेत्वंतरमाह ऋणवंतइति तथाचश्रुतिः 'जायमानोवैब्राह्मणस्त्रिभिर्ऋणवाजायतेब्रह्मच र्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यः'इति १६ वेदवादानांप्रजामनुप्रजायसेतदुतेमर्त्यामृतमितिसंतत्यविच्छेदस्यैवामृतत्वंवदतांपरिज्ञानंयर्हिमस्तत्सत्याभासमनृतमशरीरतालक्षणंमोक्ष स्वरूपंदर्शितं १७ प्रतिपादितमर्थमुपसंहरतिनवाइतिद्वाभ्यां १८ परिभवात्वेदोक्तकर्मानादरात् ब्रह्मणित्रैविककर्मणि । ब्रह्मयआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोऽपिपासः

प्राग्गर्भाधानान्मंत्राहिप्रवर्तंतेद्विजातिषु ॥ अविश्रंभेषुवर्तंतेविश्रंभेष्वप्यसंशयम् १३ दाहेपुनःसंश्रयणेसंश्रितेपात्रभोजने॥दानेगवांपशूनांवापिंडानामप्सुमज्जने १४ अर्चिष्मंतोबर्हिषदःक्रव्यादाःपितरस्तथा ॥ मृतस्याप्यनुमन्यंतेमंत्रामंत्राश्चकारणम् १५ एवंक्रोशत्सुवेदेषुकुतोमोक्षोऽस्तिकस्यचित् ॥ ऋणवंतोयदामर्त्याःपि तृदेवद्विजातिषु१६ श्रियाविहीनैरलसैःपंडितैःसंप्रवर्तितम् ॥ वेदवादापरिज्ञानंसत्याभासमिवानृतम् १७ नवैपापैर्ह्रियतेकृष्यतेवायोब्राह्मणोयजतेवेदशास्त्रैः॥ ऊर्ध्वंय ज्ञैःपशुभिःसार्धमेतिसंतर्पितस्तर्पयतेचकामैः १८ नवेदानांपरिभवान्नशाठ्येननमायया ॥ महत्प्राप्नोतिपुरुषोब्रह्मणिब्रह्मविंदति १९ ॥कपिलउवाच ॥ दर्शंचपौर्ण मासंचअग्निहोत्रंचधीमतः ॥ चातुर्मास्यानिचैवासंस्तेषुधर्मःसनातनः २० अनारंभाःसुधृतयःशुचयोब्रह्मसंज्ञिताः ॥ ब्रह्मणैवस्मतेदेवांस्तर्पयंत्यमृतैषिणः २१

सत्यकामःसत्यसंकल्पइत्यष्टगुणयुक्तमाप्नोति । तथाचसूत्रं ब्राह्मेणजैमिनिरुपन्यासादिभ्यइति ब्राह्मेणअपहतपाप्मत्वादिगुणाष्टकवत्तारूपेणमुक्तःसंपद्यते कुतः उपन्यासादिभ्यःउपन्यासोऽ ज्ञातज्ञापनं उद्देशः सिद्धवद्व्यपदेशश्चादिपदार्थः तेचप्राग्व्याख्याताः । तथाचाग्निहोत्रादिकर्मतमुचितादुपासनारूपाद्वज्ञानान्मोक्षस्तचगार्हस्थ्येएवसिध्यतीतिनिष्कृष्टोऽर्थः । जैमिनि मतेसृष्टिप्रलययोरभावात् इमंमानवमावर्तंनावर्तंतइतिविदेवयानेनपथागतानामनावृत्तिश्रुतेश्चसगुणभावएवनित्यः वस्तुतस्तुइममितिविशेषणात्मानवांतरेतएवबीजभूताआवर्तंतइतिगम्यते । तथाचपुनरस्तमेहीतिप्रागुक्तंमंत्रलिंगंसंगच्छते । आपस्तंबवचनंचआभूतसंप्लवांतेस्वर्गजितःपुनःसर्गेबीजार्थाभवंतीति १९ तत्रयदुक्तंकर्मभिरेवचेष्टादिकंकरोतितदंगीकरोति दर्शंचेति चित्तशु द्ध्यर्थिनाएतान्येवकर्माण्यनुष्ठेयानिनपुनर्हिंस्राणिपशुबंधादीनीतिभावः २० यत्पुनःसंन्यासोऽलसैःकल्पितइतितत्राह अनारंभाइति येकर्मणिनारभंतेसंन्यसंतितएवसुतरांधैर्यवंतः वैरा ग्यबलेनजितकामत्वात् । अतएवशुचयोरागादिमलरहिताब्रह्मेतिसंज्ञांप्राप्ताः ब्रह्मज्ञाइत्यर्थः 'ब्रह्मविद्ब्रह्मैवभवति'इतिश्रुतेः । यदुक्तंऋणत्रयवान्नमुच्यतइतितत्राह ब्रह्मणैवसाक्षात्कृतेनतेसंन्या सिनोदेवान्देवऋषिपितृनमृतान्निहविःस्वाध्यायप्रजारूपानिच्छंतिताञ्शास्तर्पयंति । क्षणमेकंकतुजातस्यचतुःसमुद्रपर्यंतपृथ्वीदानफलंतद्दयाप्रोवीत्यल्पकालकृतस्यापिध्यानस्यमहाफलत्वात् २१



यदुक्तमूर्ध्वंयज्ञैःपशुभिःसार्धमेतीतितत्रतत्स्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतइतिश्रुत्युक्तेनब्रह्मविदांगत्यभावेनविरुद्धमित्याशयेनाह सर्वेति महिसावीर्यंसार्वद्रष्ट्येपमास्यगतिर्भोगोवा मुच्यतेऽवस्तुत्स्वमार्गेदेवाअपिमुह्यंति । अपदस्यपद्यतेगम्यतेवस्तुस्वरूपमेभिरितिपदानिगुणास्तत्रहितस्य पदैषिणःगुणकामाःदेवाः । एतेनमुक्तस्यसोपाधिकात्वस्यायांसार्वात्म्यंवास्तवं तुचिन्मात्रत्वमितिदर्शितं । तथाचसूत्रम् । एवमप्युपन्यासात्पूर्वभावादविरोधंबादरायणइति । सगुणैकांतवादीजैमिनिःनिर्गुणैकांतवादीऔडुलोमिः । अवस्थाभेदेनउभयमुपगच्छतोबाद रायणस्यत्वविरोधइतिभावः । तदिदंद्वयंसर्वभूतात्मभूतस्येत्यपदस्येतिविशेषणाभ्यांदर्शितं २२ ननुकथमात्मनेद्विरूप्यंकथंवातत्रदेवानामपिमोहइत्याशंक्याह चतुर्द्वारमिति एनंसर्वा त्मानमपदंपुरुषंशरीरांतःस्थंवाचागुरूपदेशेनचतुर्थाविराट्सूत्रांतर्यामिशुद्धरूपेणउपयातिप्राप्नोति अतःसोपाधिकाऽनुपाधिकरूपेणात्मनोद्वैविध्यंयुक्तम् । ननुसर्वत्रैवात्मत्वात्सर्व दैवापमवगतएवास्तीत्याशंक्याह चतुर्द्वारंचत्वारिबाह्वादीनिद्वाराणीवपिधायकामियस्यतंचत्वारिदेहेंद्रियमनोबुद्ध्याख्यानिमुखानीवभोगसाधनानियस्यतम् । आत्माऽपिकर्मादिभिराव्र

सर्वभूतात्मभूतस्यसर्वभूतानिपश्यतः ॥ देवाऽपिमार्गेमुह्यंतिअपदस्यपदैषिणः २२ चतुर्द्वारंपुरुषंचतुर्मुखंचतुर्धाचैनमुपयातिवाचा ॥ बाहुभ्यांवाचउदरा दुपस्थात्तेषांद्वारंद्वारपालोबुभूषेत २३ नाक्षैर्दीव्येन्नाददीतान्यवित्तंनवाय्योनीयस्यशृतंप्रगृह्णात् ॥ क्रुद्धोनचैवप्रहरेतधीमांस्तथाऽस्यतत्पाणिपादंसुगुप्तम् २४ नाक्रोशमृच्छेन्नृथावदेच्चनपैशुनंजनवादंचकुर्यात् ॥ सत्यव्रतोमितभाषोऽप्रमत्तस्तथाऽस्यवाग्द्वारमथोसुगुप्तम् २५ नानाशनःस्यान्नमहाशनःस्यादलोलुपः साधुभिरागतःस्यात् ॥ यात्रार्थमाहारमिहाददीततथाऽस्यस्याज्जाठरीद्वारगुप्तिः २६ नवीरपत्नींविहरेतनारींनचापिनारीमनृतावाह्वयीत ॥ भार्याव्रतंह्यात्म निधारयीततथाऽस्योपस्थद्वारगुप्तिर्भवेत २७ द्वाराणियस्यसर्वाणिसुगुप्तानिमनीषिणः ॥ उपस्थमुदरंबाहूवाक्चतुर्थीभवेद्द्विज २८ मोघान्यगुप्तद्वा रस्यसर्वाण्येवभवंत्युत ॥ किंतस्यतपसाकार्यंकिंयज्ञेनकिमात्मना २९ अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ॥ बाहूपधानंशाम्यंतंतंदेवाब्राह्मणंविदुः ३० द्वंद्वारामेषुसर्वेष्वेकोरमतेमुनिः ॥ परेषामननुध्यायंस्तंदेवाब्राह्मणंविदुः ३१ येनसर्वमिदंबुद्धंप्रकृतिर्विकृतिश्चया ॥ गतिज्ञःसर्वभूतानांतंदेवाब्राह्मणंविदुः ३२ अभयंसर्वभूतेभ्यःसर्वेषामभयंयतः ॥ सर्वभूतात्मभूतोयस्तंदेवाब्राह्मणंविदुः ३३

तत्वाज्ञोकूत्यादिरूपेणअन्यथाग्रहणाद्वावृतएवेत्यर्थः । बाहुभ्यामितिकर्मोपलक्षणं भोगप्रदेनकर्मणेत्यर्थः हेत्वर्थेपंचम्यः । वाचइतिकर्मकांडतंत्रांतरीयसिद्धांतानांग्रहणम् । उदरो पस्थयोरपिविपरीतप्रवृत्तिहेतुतयाआत्माऽवरकत्वम् । एतैश्चतुर्भिर्निमित्तैस्तेषांदेवानामपिद्वारपिधानमस्ति । द्वास्थगनेअस्माद्वावेयत् । अतोद्वारपालोबाह्वादीनांपालकोविनियंताबु भूषेत्प्रभवितुमिच्छेत् २३ नियमनप्रकारमाह नाक्षैरित्यादिना अयोनीयस्यनास्तियोनीयंयोनिसंबंधोयस्यसतथातस्य शृतंहविर्नप्रगृह्णात्नप्रतिगृह्णीयात् पंचमलकारोऽर्थेलिङर्थेलेट् योनिसंबंधायोग्यंनतुयाजयेदित्यर्थः । तथाचस्मृतिः यथाकन्यातथाहविरिति २४ । २५ । २६ नेति देवीरयुधिष्ठिरपत्नीयज्ञसंबंधवतींनारींनाविहरेतनविभजेत तदुपरिरूपंतरकरणेनधर्मार्थ कामेषुतांविभागवतींनकुर्यात् तथोक्तमापस्तंबेन । धर्मप्रजासंपन्नेदारेनान्यांकुर्वीतान्यतराभावेकार्याप्रागग्न्याधेयादाधानेसातिहिकर्मभिःसंबध्यतइति भार्याव्रतंपरस्त्रीवर्जनं २७ । २८ मोघानिनिष्फलानि सर्वाणितपआदीनि २९ । ३० अननुध्यायन्सुखंदुःखंवा ३१ प्रकृतिर्ब्रह्म विकृतिर्द्वैतं ३२ । ३३

ईदृशंब्राह्मण्यमज्ञात्वामूढाःकर्मसुसक्ताश्चवेयोगंचावमन्यंतेइत्याह नेतिचतुर्भिः दानादिक्रियायाःफलंचित्तशुद्धिस्तामंतरेणविनानअनुजानंतिगुर्वादिभिरुक्तंनानुरुद्ध्यंते ब्राह्मण्यमितिशेषः । अन्यत्तत्स्वर्गादि ३४ यमाश्रित्यसंश्रितानामाश्रमाणांस्वकर्मभिःसहितंतपःवेदांतश्रवणाद्यात्मकमात्मालोचनंघोरत्वंसंसारगूढाज्ञानदाहकत्वमागतंभवतितंसदाचारंचरितुमशक्नुवंतएता निविगुणान्यनैकांतिकानिव्यभिचारीणिपश्यंतीतित्रयाणांसंबंधः । पुराणमनादि शाश्वतंमुमुक्षूणांनित्यानुष्ठेयं ध्रुवमव्यभिचारिफलं ३५ अप्रमादःसावधानता अपराभवःकामाद्यनाक्रांतता ३६ फलवंतिप्रत्यक्षफलानि कर्माणियमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाणि । व्युष्टिःपारमैश्वर्यंतद्वंति ध्रुवाण्यविनाशीन्यपि । विगुणानियज्ञादिकर्मत्यागा न्निष्फलानि । अनैकांतिकानिचेतिपश्यंति ३७ गुणाःगुणकार्याणिवृक्षादीनि यज्ञादीनामंतवत्फलत्वंजानन्तज्ज्ञानमिष्टमेवश्रपस्वेतिभावः ३८ एवंश्रद्धोपपत्तिभ्यांकर्मतत्त्यागदिशोराकृष्य माणतयाऽन्यतरस्यश्रेयस्त्वेसंदिहानःस्यूमरश्मिःपृच्छति यथाचेति कुरुकर्मत्यजेतिपरस्परविरुद्धंपक्षद्वयमुपदिशतोवेदस्यप्रामाण्यंयथानिर्वहेत् यथाचत्यागश्चादत्यागः । एतौप क्षौपक्षौ 'कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः । त्यजतैवहितज्ज्ञेयंत्यक्तुःप्रत्यक्परंपदं' इतिश्रुतिभ्यांविस्पष्टमुक्तौ । भगवन्सर्वैश्वर्यज्ञानादिसंपन्न तत्तयोस्तत्त्वंमेमह्यंब्रवीहि ३९

नांतरेणानुजानंतिदानयज्ञक्रियाफलम् ॥ अविज्ञायचतत्सर्वंमन्यद्रोचयतेफलम् ३४ स्वकर्मभिःसंश्रितानांतपोघोरत्वमागतम् ॥ तंसदाचारमाश्रित्यपुराणं शाश्वतंध्रुवम् ३५ अशक्नुवंतश्चरितुंकिंचिद्धर्मेषुसूत्रितम् ॥ निरापद्धर्मआचारोह्यप्रमादोपराभवः ३६ फलवंतिचकर्माणिव्युष्टिमंतिध्रुवाणिच॥ विगुणानिचपश्यं तितथाऽनैकांतिकानिच ३७ गुणाश्चात्रसुदुर्ज्ञेयाज्ञाताश्चात्रसुदुष्कराः ॥ अनुष्ठिताश्चांतवंतइतित्वमनुपश्यसि ३८ ॥ स्यूमरश्मिरुवाच ॥ यथाचवेदप्रामा ण्यंत्यागश्चसफलोयथा ॥ तौपंथानावुभौव्यक्तौभगवंस्तद्ब्रवीहिमे ३९ ॥ कपिलउवाच ॥ प्रत्यक्षमिहपश्यंतिभवंतःसत्पथेस्थिताः ॥ प्रत्यक्षंतुकिमत्रास्तियद्भ वंतउपासते ४० ॥ स्यूमरश्मिरुवाच ॥ स्यूमरश्मिरहंब्रह्मन्जिज्ञासार्थमिहागतः ॥ श्रेयस्कामःप्रत्यवोचमार्जवान्नविवक्षया ४१ इमंचसंशयंघोरंभगवान्प्र ब्रवीतुमे ॥ प्रत्यक्षमिहपश्यंतोभवंतःसत्पथेस्थिताः ॥ किमत्रप्रत्यक्षतमंभवंतोयदुपासते ४२

अत्रानुभवमेवप्रमाणयन्नुत्तरमाह प्रत्यक्षमिति सतःपंथानंब्रह्मप्राप्तिमार्गेयोगसत्प्रसिद्धाःसंतोभवंतइहजीवत्येवदेहेप्रत्यक्षंपश्यंतुपरीक्षंपंतु विशौलेन् किंतत्परीक्षणीयंप्रत्यक्षंयद्भवंतःप्रत्यक्षीकरो मियदप्रत्यक्षेणपश्यामीतिविषयकरणयोरपिप्रत्यक्षशब्दप्रयोगादितितत्राह प्रत्यक्षमिति यद्भवंतःकर्मंतडपासतेप्रार्थयंते तत्प्रत्यक्षंसुखाद्यनुभवरूपमत्रास्मिन्लोकेकिंकिंस्वरूपमस्तीति ४० तत्रसुखाद्यनुभवंपरीक्षितुमशक्तःप्रतिवादित्वंवरित्यज्यशिष्यत्वेनकपिलमनुसरन्स्यूमरश्मिरुवाच स्यूमेति इहागतोऽविप्रविष्टः विवक्षयास्वपक्षनिर्वाहेच्छया वहवेरिदंरूपं नप्राति भटत्वेनेत्यर्थः ४१ संशयंकिंविषयात्मकंप्रत्यक्षंज्योतिष्टोमादिप्राप्यम् । उतइंद्रियमनोबुद्ध्याख्यकरणात्मकम् । आद्ये एकस्यांयुवत्यांकामुकसपत्न्योरागद्वेषदर्शनेनविषयस्यसुखरू पत्वानियमेनकाम्यत्वायोगात् । अंत्ये सुखकरणत्वादेवतेषांसुखत्वाभावेनाकाम्यत्वात् । अथस्वरूपसुखाभिव्यक्त्येकरणपाटवमेवकाम्यंवदा विरक्तानांविनाऽपिविषयंसुखसिद्धेःस्वर्गकामा दिपदवैयर्थ्यं । परामिमतचित्तसंस्कारपक्षानतिरेकादित्यन्यतरानिर्णयात्संशयस्यघोरत्वंविशेषंजिज्ञासुःकपिलोक्तिमनुवदति प्रत्यक्षमिति विषयःप्रत्यक्षं बुद्धिःप्रत्यक्षतरं प्रत्यक्षतमं तुकिंबुद्धिविशिष्टश्चिदाभासः । उततुद्धिनिष्कृष्टोऽन्यःकश्चिदात्मेति । यंभवंतउपासतेतंमेब्रूतेतिविपरिणामेनानुषंजनीयम् ४२

स्वमतमाह अन्यत्रेति तर्कैकप्रधानानिवेदविरोधीनिलोकायतार्हतसौगतकापालिकादिशास्त्राणितेभ्योऽन्यत्रतानिवर्जयित्वा आगमस्यार्थंयथायथावदागममधिगतवानस्मि । तत्राऽऽगमःकपा शुपतपांचरात्रादिरित्येतांशंकांनिरस्यति आगमइति तर्कशास्त्राणिवेदार्थनिर्णायकानिपूर्वोत्तरमीमांसेसांख्यपातंजलेच । अत्रवेदस्यस्वतःप्रामाण्यमास्थीयतेनानुमानांतरसंवादसापेक्षं ४३ तान्येतानियथाश्रममाश्रमधर्ममनतिक्रम्योपासीत । तत्राप्यागमोमीमांसाद्वयोपगृहीतःसिद्ध्यति । सांख्यपातंजलेत्वंशतोवेदविरोधान्नसिद्ध्यतः । तथाहि सांख्यैर्हिंसैवप्रशस्यते । पातंजलैश्चचित्तनिरोधएव । स्वाध्यायाद्यनुष्ठानप्रतिबंधकात्ततोनसिद्ध्यतः । ननु'पृथ्व्याप्यतेजोऽनिलखेसमुत्थितेपंचात्मकेयोगगुणेप्रवृत्ते ॥ नतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरं' इतिपंचभूतजयाद्योगिनामप्यजरत्वामरत्वादिसिद्धिःप्रत्यक्षागमसमुक्तादृश्यते । सत्यं प्रतिक्षणपरिणामिनोजन्मवतःशरीरस्याजरत्वामरत्वेप्रत्यक्षानुमानविरुद्धे । अतोयामप्रत्यक्षस्यरूपमिवरूपं यस्याइतिप्रत्यक्षाविरुद्धाचादनुमानाविरुद्धाच्चागमनिश्चयाद्दृश्यादिदृश्यतेऽस्यागातिर्दिष्टफलमोक्षप्राप्त्यादिरूपासैवसिद्धिरिति ४४ एवमुपन्यस्तंस्वमतंपरमतजिज्ञासयानिंदति नौनांवीति यथानाविनिबद्धानौः स्रोतसाह्रियमाणानतारयत्येवमेवपरंपरयाकर्मनौकासनिबंधनापूर्वपूर्वकर्मवासनाबंधवतीमाश्रितावयंजन्मजरामृत्युप्रवाहंनतर्तुंक्षमाइत्यर्थः । फलितमाह एतदिति एतत् प्रत्यक्षतमंउपपन्नउपसन्नःशिष्योऽस्म्यधिकार्यस्मीतिवा अधीह्यध्यापय ४५ ननुतरतिशोकमात्मविदितित्वयाऽप्यधीतमस्त्येव । निर्द्वंद्वानिर्नमस्कारइत्यादिनामयाऽप्युक्तंचकिमतःपरम

अन्यत्रतर्कशास्त्रेभ्यआगमार्थंयथागमम् ॥ आगमोवेदवादास्तुतर्कशास्त्राणिचागमः ४३ यथाश्रममुपासीतआगमस्तत्रसिध्यति ॥ सिद्धिःप्रत्यक्षरूपाचदृश्य त्यागमनिश्चयात् ४४ नौर्नावीवनिबद्धाहिस्रोतसासनिबंधना ॥ ह्रियमाणाकथंविप्रकुबुद्धींस्तारयिष्यति ॥ एतद्ब्रवीतुभगवानुपपन्नोस्म्यधीहिभो ४५ नैवत्या गीनसंतुष्टोनाशोकोननिरामयः ॥ नानिर्विधित्सोनावृत्तोनापवृत्तोऽस्तिकश्चन ४६ भवंतोऽपिचहृष्यंतिशोचंतिचयथावयम् ॥ इंद्रियार्थाश्चभवतांसमानाःसर्व जंतुषु ४७ एवंचतुर्णांवर्णानामाश्रमाणांप्रवृत्तिषु ॥ एकमालंबमानानांनिर्णयेकिंनिरामयम् ४८ ॥ कपिलउवाच ॥ यद्यदाचरतेशास्त्रमर्थ्यंसर्वप्रवृत्तिषु ॥ य स्ययत्रह्यनुष्ठानंतत्रतत्रनिरामयम् ४९ ज्ञानंह्लावयतेसर्वंयोज्ञानंह्यनुवर्तते ॥ ज्ञानादपेत्ययावृत्तिःसाविनाशयतिप्रजाः ५०

व्यापयितव्यमित्याशंक्यतत्रप्रत्यक्षविरोधमुपन्यस्यति नैवेति । नापुरुषः निर्विधित्सश्चिकीर्षाशून्यः आवृत्तःसंगविमुखः अपवृत्तोनिष्कर्मा ४६ । ४७ एकंसर्वेषामीप्सितंसुखमालंबमाना नांसुखार्थिनांवर्णादीनांनिर्णयेसिद्धांतेकिंसुखंनिरामयमपायहीनंतद्वदेतिपूर्वेणसंबंधः ४८ अत्रोत्तरमाह यद्यदिति वैदिकमवैदिकंवाश्च्छाक्षंयस्ययस्यमोक्षशास्त्रस्यार्थमाचरतेसम्यग नुतिष्ठति भावकर्मणोरितिकर्मणितङ् तत्तदर्थ्यमर्थोऽप्रयोजनानादनपेतंसफलं एतत्प्रसिद्धमेवेत्याह यस्येति अयंभावः । सर्वज्ञानंधर्मिण्यभ्रांतंप्रकारेतुविपर्ययइतिन्यायेनसर्वेषांघटस्वरूपे तत्साक्षात्कारसाधनेचक्षुरुन्मीलनादौचनविगानमेवमात्मनिभावादिविप्रतिपत्त्यानेकेषुविकल्पेषुशून्यंक्षणिकविज्ञानं कर्तृभोक्त्रित्यादिषुसत्स्वपिमोक्षेतत्स्वरूपंनिरस्ताशेषविषयदर्शनंतत्साधनंच शमदमोपरमतितिक्षाश्रद्धासमाधानात्मकमविगीतं । एवंव्यावहारिकमक्रियायांविगानेऽपिफलसाधनयोरविगानात् । यत्रयत्रमतेस्थित्वाऽस्यशमाद्यनुष्ठानंसंपद्यतेतेनतत्रतत्रनिरामयंसर्व दोषशून्यंस्वरूपंलभ्यते । एतेनान्यत्रतर्कशास्त्रेभ्यइतिपूर्वंवाक्यमुक्तंशास्त्रांतरविगानमुपादेयांशस्याविज्ञानादेवेत्युक्तं । उक्तंचव्यावहारिकमक्रियाणांसर्वासामविगीतत्वमनवस्थितत्वंच । 'यया ययाभवेत्पुंसांव्युत्पत्तिःप्रत्यगात्मनि ॥ सासैवप्रक्रियाज्ञेयासाध्वीसाचानवस्थिता' इति ४९ ज्ञानमिति यथोक्तसाधनानुष्ठानादुत्पन्नंज्ञानंसर्वंसंसारंनाशयति कस्य योज्ञानंह्यनुवर्ततेतस्यज्ञानं विनायावृत्तिर्दिव्यपिवृत्तिः साप्रजानाशयतिजन्ममरणप्रवाहपातनेनक्लेशयति ५०

एकपवद्वैतवर्णनहीनआत्मायत्रभवतितदैकात्म्यंनामज्ञानंभवतांज्ञानिनांमध्येकश्चिदुपपद्यतेउपसन्नोभूत्वाप्राप्नोतिनैवेत्यर्थः शमाद्यभावात् ५१ अतःसवयूयंभ्रांताइत्याह शास्त्रंहीत्या विना ५२ ब्रह्मत्रिविधपरिच्छेदशून्यंवस्तुतस्यस्तेनाअपलापकर्तारः निरारंभाःशमाद्यारंभशून्याः ५३ नैर्गुण्यंफलाभावं गुणान्ज्ञानैश्वर्यादीन्नानुयुंजतेआत्मसंवेद्यतामापाद्यपरेषुनयो जयंति । पाषाणवत्स्वयंमज्जंतोनान्युद्धर्तुंशक्नुवंतीत्यर्थः ५४ । ५५ संयमेधारणाध्यानसमाध्याख्यके समयेइतिपाठेसिद्धांते ५६ एतत्कर्मणांप्राशस्त्यंसंन्यासस्याप्राशस्त्यंच प्रवृत्त पोवाचोविलासाः ५७ । ५८ । ५९ व्यक्तंप्रत्यक्षसिद्धंतदेवमन्यंतइतिदृष्टमात्रपराः अतएवशास्त्रादपेतमिहलोकमेवपश्यंति । शास्त्रदोषान्नशास्त्रोक्तान्कृतहानाकृताभ्यागमादिदोषा नन्याय्यमवैदिकंचमतमाश्रित्ययथालोकायताःशोचंतितथावयमपिशोचामइत्यर्थः । अत्रहेतुमाह इंद्रियार्थाइति शीतोष्णादीनांस्पर्शःसर्वेषांसुखादिप्रदःपशुपामरपंडितानांतुल्यरूपइत्यर्थः

भवंतोज्ञानिनोव्यक्तंसर्वतश्चनिरामयाः ॥ ऐकात्म्यंनामकश्चिद्धिकदाचिदुपपद्यते ५१ शास्त्रंह्यबुद्धातत्त्वेनकेचिद्वादबलाज्जनाः ॥ कामद्वेषाभिभूतत्वादहंकार वशंगताः ५२ याथातथ्यमविज्ञायशास्त्राणांशास्त्रदस्यवः ॥ ब्रह्मस्तेनानिरारंभादंभमोहवशानुगाः ५३ नैर्गुण्यमेवपश्यंतिनगुणाननुयुंजते ॥ तेषांतमःशरीरा णांतमएवपरायणम् ५४ योयथाप्रकृतिर्जंतुःप्रकृतेःस्याद्वशानुगः ॥ तस्यद्वेषश्चकामश्चक्रोधोदंभोऽनृतंमदः ॥ नित्यमेवाभिवर्ततेगुणाःप्रकृतिसंभवाः ५५ एवं ध्यात्वाऽनुपश्यंतःसंत्यजेयुःशुभाशुभम् ॥ परांगतिमभीप्संतोयतयःसंयमेरताः ५६ ॥ स्यूमरश्मिरुवाच ॥ सर्वमेतन्मयाब्रह्मन्शास्त्रतःपरिकीर्तितम् ॥ नह्य विज्ञायशास्त्रार्थंप्रवर्ततेप्रवृत्तयः ५७ यःकश्चिन्न्याय्यआचारःसर्वंशास्त्रमितिश्रुतिः ॥ तदन्याय्यमशास्त्रंतदित्येषाश्रूयतेश्रुतिः ५८ नप्रवृत्तिर्ऋतेशास्त्रात्काचिद स्तीतिनिश्चयः ॥ यदन्यद्वेदवादेभ्यस्तदशास्त्रमितिश्रुतिः ५९ शास्त्रादपेतंपश्यंतिबहवोव्यक्तमानिनः ॥ शास्त्रदोषान्नपश्यंतिशोचंतिचयथावयम् ॥ इंद्रिया र्थाश्चभवतांसमानाःसर्वजंतुषु ६० एवंचतुर्णांवर्णानामाश्रमाणांप्रवृत्तिषु ॥ एकमालंबमानानांनिर्णयेसर्वतोदिशम् ६१ आनंत्यंवदमानेनशक्तेनावर्जितात्मना ॥ अविज्ञानहतप्रज्ञाहीनप्रज्ञास्तमोवृताः ६२ शक्यंत्वेकेनयुक्तेनकृतकृत्येनसर्वशः ॥ पिंडमात्रंव्यपाश्रित्यचरितुंविजितात्मना ६३ वेदवादंव्यपाश्रित्यमोक्षो ऽस्तीतिप्रभाषितुम् ॥ अपेतन्यायशास्त्रेणसर्वलोकविगर्हिणा ६४

६० एवमितिद्वयोःसंबंधः एकमुमुक्षार्थिनांवर्णादीनांमध्येवयंत्वयाआत्मनानिश्चितेनआवर्जिताःशांतिंनीताः संधिरार्षः कीदृशेनत्वया निर्णयेसिद्धांतेसर्वतोदिशंसर्वतःप्रकारंसर्वशास्त्रसिद्धांत त्वेनाऽऽनंत्यंवदमानेनयद्वाचरतेशास्त्रमित्यत्रप्राग्व्याख्यातरीत्याप्रकाशयता । भासनोपसंभाषेतिवदेर्भासनार्थेतङ् शक्तेनोहापोहकुशलेन । कीदृशावयं अविज्ञानेनाऽऽत्मानमनुभवेन हताप्रज्ञास्वरूपनिष्ठायेषां अतएवहीनेविषयेएवप्रज्ञाधीर्येषां । एतयोरावरणविक्षेपयोःकारणमाह तमोवृताइति ६१ । ६२ यद्यपित्वयेयंनिष्ठोक्तातथापिदुष्करेत्याह शक्यंत्विति द्वयेन येनसर्वशःसर्वतोदिशंचरितुंशक्यंतेनमोक्षोऽस्तीतिप्रभाषितुंयुक्तमित्यध्याहारवव्यवहितेनपोव्यं संन्यासंविनामोक्षोदुष्प्रापइत्यर्थः ६३ । ६४ ॥१४९॥

अथानुपपत्तिमाहसार्धद्वयेन इदंत्विति कर्मकांडस्यवैपर्त्यप्रतिपत्तृणांनास्तिकत्वंचास्मिन्मतेस्यादित्यर्थः ६५ । ६६ एतस्यकर्मकांडस्य आनंत्यमानंत्यहेतुत्वं अयंभावः कर्मज्ञानकांडयोः पार्थगर्थ्येवेदस्यैकस्मिन्नर्थेपर्यवसानाभावाद्वाक्यभेदःस्यात् । सचसंभवत्येकवाक्यत्वेवाक्यभेदोहिनेष्टइतिन्यायेनायुक्तः अतःकर्मकांडस्यैवज्ञानकांडशेषत्वंवाच्यं वैपरीत्यस्यप्रागेव निरस्तत्वादिति ६७ । ६९ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेऊनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥ ॥ ७० ॥ कर्मणांज्ञानांगत्वंविवक्षुस्तद्वैयर्थ्यशंकांताव त्परिहरत्यर्धेन वेदाइति शब्दब्रह्मकर्मोपास्तिकांडः परंब्रह्मप्रत्यगात्मा १ तत्रगर्भाधानमारभ्यकर्मकांडोज्ञानशेषत्वंभजतइत्याह शरीरमिति वेदेउपनिषत्कांडेयत्तनुंशरीरंकुरुतेगर्भाधा नविधिनोत्पादयति । 'विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु आसिंचतुप्रजापतिर्धातागर्भंदधातुते' इत्यादिमंत्रैस्तच्छरीरमेवकुरुतेसंस्कुरुते । विष्ण्वादिदेवतास्मरणपूर्वकमाहितेगर्भेविष्ण्वादि वज्ज्ञानैश्वर्यसंपन्नएवजीवआविर्भवति । शरीरसंस्कारेणशरीराभिमानिनःस्वास्थ्यदर्शनात् २ अत्रैववैदिकप्रसिद्धिमाह कृतेति कृतंश्रौतस्मार्तसंस्कारैःविप्रासंस्कृतंशुद्धंचाध्ययनादिनाशरीरं

इदंतुदुष्करंकर्मकुटुंबमभिसंश्रितम् ॥ दानमध्ययनंयज्ञःप्रजासंतानमार्जवम् ६५ यद्येतदेवंकृत्वाऽपिनविमोक्षोऽस्तिकस्यचित् ॥ धिक्कर्तारंचकार्यंचश्रमश्चायंनि रर्थकः ६६ नास्तिक्यमन्यथाचस्याद्वेदानांपृष्ठतःक्रिया ॥ एतस्यानंत्यमिच्छामिभगवन्श्रोतुमंजसा ६७ तत्त्वंवदस्वमेब्रह्मन्नुपसन्नोऽस्म्यधीहिभोः ॥ यथाते विदितोमोक्षस्तथेच्छाम्युपशिक्षितुम् ६८ ॥ इतिश्रीमहाभारतेशांतिपर्वणि मोक्षधर्मपर्वणिगोकपिलीये ऊनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥ ॥ ॥ कपिलउवाच ॥ वेदाःप्रमाणंलोकानांनवेदाःपृष्ठतःकृताः ॥ द्वेब्रह्मणीवेदितव्येशब्दब्रह्मपरंचयत् १ शब्दब्रह्मणिनिष्णातःपरंब्रह्माधिगच्छति ॥ शरीरमेतत्कु रुतेयद्वेदेकुरुतेतनुम् २ कृतशुद्धशरीरोहिपात्रंभवतिब्राह्मणः ॥ आनंत्यमत्रबुद्ध्येदंकर्मणांतद्ब्रवीमिते ३ अनागममनैतिह्यंप्रत्यक्षंलोकसाक्षिकम् ॥ धर्मइत्येवये यज्ञान्वितन्वंतिनिराशिषः ४ उत्पन्नत्यागिनोलुब्धाःकृपासूयाविवर्जिताः ॥ धनानामेषवैपंथास्तीर्थेषुप्रतिपादनम् ५ अनाश्रिताःपापकर्मकदाचित्कर्मयोगिनः ॥ मनःसंकल्पसंसिद्धाविशुद्धज्ञाननिश्चयाः ६ अक्रुध्यंतोऽनसूयंतोनिरहंकारमत्सराः ॥ ज्ञाननिष्ठास्त्रिशुक्लाश्चसर्वभूतहितेरताः ७

यस्यसब्राह्मणःपात्रंब्रह्मविद्यायायोग्यंभवति । तत्रश्रौतःसंस्कारोजातेष्ट्यादिः 'यस्मिन्जातएतामिष्टिंनिर्वपतिपूतएवसतेजस्व्यन्नादइंद्रियावीपशुमान्भवति' इतिश्रुत्युक्तफलकः । स्मृत्यंतरे 'यस्यैतेअष्टाचत्वारिंशत्संस्काराःसब्राह्मणःसायुज्यंसरूपतांसलोकतांजयति' इति । 'महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुः' इतिच । एतेनज्ञानशेषत्वंकर्मकांडस्योक्तंभवति । कर्मणांफलमानंत्यं मोक्षोपयोगिचित्तशुद्धिरूपमत्राऽस्मिन्नेवलोकेप्रत्यक्षंबुद्ध्यजानीहि । नहिचित्तशुद्धिःस्वसाक्षिकीस्वर्गवद्वेदैकगम्यापर्वतवह्निवदनुमेयावेतिवक्तुंशक्यं ३ तदेवदाह अनागममनैतिह्यमिति । येनक्रमेणकर्मणामानंत्यहेतुत्वंस्यात्तमाह । धर्मइति निराशिषोनिष्कामाः ४ उत्पन्नत्यागिनोधनसंग्रहशून्याः कृपासूयाभ्यांरागद्वेषौलक्ष्यौतद्वर्जिताः तीर्थेषुसत्पात्रेषु ५ तल्लक्षणं अनाश्रिताइति अग्निहोत्रादिमंतःसर्वदापापकर्मानाश्रितास्तेतीर्थभूताइत्यर्थः । एवंधर्ममनुतिष्ठतईदृशामवंतीत्याह मनइत्यादिद्वाभ्यां विशुद्धंनिर्विषयंज्ञानंब्रह्मतत्रनिश्चयोयेषां ६ ज्ञा नेज्ञानोपायेश्रवणमनननिदिध्यासनाख्येनिष्ठायेषांते । त्रिशुक्लाजन्मकर्मविद्याचेतित्रीणिशुक्लानिशुद्धानियेषांते ७

अभ्युत्क्रांताआदरवंतः राजानोजनकादयः ब्राह्मणायाज्ञवल्क्यादयः ८ प्रत्यक्षोधर्मोधर्मफलंसत्यसंकल्पत्वादिकंयेषांते परंसोपाधिकंब्रह्मअवरंनीचंयस्मात्तस्मिन्निरुपाधिकेब्रह्मणि ९ १० । ११ मात्रांभीयंतेविषयाअनयेतिमात्राबुद्धिस्तांनानुरुध्यंते अपितुशास्त्रमेवानुरुध्यंते धर्मेच्छलंवंचनां १२ छलाभावमेवाह यएवेति १३ दुर्बलात्मनोऽशक्तस्य १४ । १५ तेषांयज्ञादिकंसर्वमानंत्यमासीदितितृतीयेनान्वयः १६ । १७ शंसितानांप्रख्यातानां १८ आनंत्यंब्रह्म शाश्वतीश्रुतिर्गीताब्रह्मार्पणंब्रह्महविरित्यादिः १९ संभृतानांपूर्णानांघोरत्वमविद्यानि वर्तनक्षमत्वं तमितिसार्धश्लोकद्वयमेकंवाक्यंपाठक्रममननुरुध्यार्थक्रमेणव्याख्येयं । यःसदाचारःसतामापद्धर्मोचारादन्यआचारःससदाचारइतिसदाचारलक्षणं सच अप्रमादःसावधानता

आसन्गृहस्थाभूयिष्ठाअभ्युत्क्रांताःस्वकर्मसु ॥ राजानश्चतथायुक्ताब्राह्मणाश्चयथाविधि ८ समाह्यार्जवसंपन्नाःसंतुष्टाज्ञाननिश्चयाः ॥ प्रत्यक्षधर्माःशुचयःश्रद्दधा नाःपरावरे ९ पुरस्ताद्भावितात्मानोयथावच्चरितव्रताः ॥ चरंतिधर्मंकृच्छ्रेऽपिदुर्गेचैवापिसंहताः १० संहत्यधर्मंचरतांपुरासीत्सुखमेवतत् ॥ तेषांनासीद्विधा तव्यंप्रायश्चित्तंकथंचन ११ सत्यंहिधर्ममास्थायदुराधर्षतमामताः ॥ नमात्रामनुरुध्यंतेनधर्मेच्छलमंततः १२ यएवप्रथमःकल्पस्तमेवाभ्याचरन्सह ॥ तेषां नासीद्विधातव्यंप्रायश्चित्तंकदाचन १३ तस्मिन्विधौस्थितानांहिप्रायश्चित्तंनविद्यते ॥ दुर्बलात्मनउत्पन्नंप्रायश्चित्तमितिश्रुतिः १४ एवंबहुविधाविप्राःपुराणायज्ञ वाहनाः ॥ त्रैविद्यवृद्धाःशुचयोवृत्तवंतोयशस्विनः १५ यजंतोऽहरहर्यज्ञैर्निराशीर्बंधनाबुधाः ॥ तेषांयज्ञाश्चवेदाश्चकर्माणिचयथागमम् १६ आगमाश्चयथाकाले संकल्पाश्चयथाक्रमम् ॥ अपेतकामक्रोधानांदुश्चराचारकर्मणाम् १७ स्वकर्मभिःशंसितानांप्रकृत्याशंसितात्मनाम् ॥ ऋजूनांशमनित्यानांस्वेषुकर्मसुवर्तताम् १८ सर्वमानंत्यमेवासीदितिनःशाश्वतीश्रुतिः ॥ तेषामदीनसत्वानांदुश्चराचारकर्मणाम् १९ स्वकर्मभिःसंभृतानांतपोघोरत्वमागतम् ॥ तंसदाचारमाश्चर्यंपुराणंशा श्वतंध्रुवम् २० अशक्नुवद्भिश्चरितुंकिंचिद्धर्मेषुसूक्ष्मताम् ॥ निरापद्धर्मआचारोह्यप्रमादोऽपराभवः २१ सर्ववर्णेषुजातेषुनासीत्कश्चिद्व्यतिक्रमः ॥ व्यस्तमेकंचतु र्धाहिब्राह्मणाआश्रमंविदुः २२ तंसंतोविधिवत्प्राप्यगच्छंतिपरमांगतिम् ॥ गृहेभ्यएवनिष्क्रम्यवनमन्येसमाश्रिताः २३ गृहमेवाभिसंश्रित्यततोऽन्येब्रह्मचारिणः ॥ तएतेदिविदृश्यंतेज्योतिर्भूताद्विजातयः २४ नक्षत्राणीवधिष्ण्येषुबहवस्तारकागणाः ॥ आनंत्यमुपसंप्राप्ताःसंतोषादितिवैदिकम् २५

अपराभवःकामक्रोधादिभिरनभिभूतत्वापद्यपुराव्यतिक्रमःअपूज्यपूजनंपूज्यानामपूजनंचेत्यादिर्नासीदतंसदाचारमेकमाश्रमंसंतंचतुर्धाव्यस्तंब्राह्मणाआहुः । कैश्चरितं धर्मेषुसूक्ष्मतांसूक्ष्मंधर्म माचरितुमशक्नुवद्भिः तथाहि । मानसिकंव्यभिचारंवारयितुमक्षमैर्ब्रह्मचारिभिर्गार्हस्थ्यमाश्रितं । तत्रकृतैर्यज्ञादिभिःकषायेष्वीषत्पक्वेषुवैराग्यबहुलं वानप्रस्थ्यमास्थितं तेष्वेवसम्यक् पक्वेषुपारिव्राज्यमित्यारोहक्रमेणचातुराश्रम्यंस्थितमित्यर्थः शेषंव्याख्यातं २० । २१ । २२ तमितिसार्धःश्लोकः तंसदाचारंसंतोगृहेभ्योनिष्क्रम्यैवसंन्यासंकृत्वैवविधिवत्प्राप्यपरमां गतिंगच्छंति । विधिवदित्यादिसर्वत्रयोज्यं चतुर्ष्वप्याश्रमेषुकरूपसदाचारवतांमोक्षोऽस्तीत्यर्थः २३ । २४ संतोषाद्वैराग्यादानंत्यंब्रह्मभावंप्राप्ताःअगस्त्यवसिष्ठादयः २५



तादृशाआधिकारिकायद्यागच्छंतिसंसारंतथाऽपिपापैर्योनिप्रवेशजैर्दुःखैर्नलिप्यंते । गृहाद्गृहांतरप्रवेशवद्देहिकस्तेषांदेहांतरप्रवेशः यथाम्नातमनुक्रमणिकायां । मित्रावरुणयोर्दीक्षितयोरुर्वशी मप्सरसंदृष्ट्वावासतीवरेकुंभेरेतोऽपततत्तोऽगस्त्यवसिष्ठावजायेतामिति वसतीवर्यःसोमाभिषवार्थाआपस्तत्संबंधिनिवासतीवरे । तेषांशुद्धब्रह्मविदामपिहिरण्यगर्भस्येवयावदधिकारसमाप्तिनविदे हकैवल्यमस्ति यावदधिकारमवस्थितिराधिकारिकाणामितिन्यायात् । ननु'कार्तिक्यांकृत्तिकायोगेदःकुर्यात्स्वामिदर्शनं ॥ सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगः'इत्येकंकर्मानेकजन्मारंभकंदृष्टं । तत्रप्रथमेऽस्मिन्नेवजन्मनितत्त्वज्ञानोदयेऽपिप्रारब्धकर्मणांभोगादेवक्षयइतिन्यायेनप्रारब्धकर्मबलादन्यान्यपिषड्जन्मान्यनिवार्याण्येवेत्याशंक्याह कर्मयोनितइति अत्रेदंविचार्यतेकिंसप्तजन्मा नितेषुचगर्भवासादीनिदुःखान्यशनपानादिजन्यानिसुखानिचकिमेकमेवस्वामिदर्शनाख्यंकर्मप्रापयत्युतकर्मांतरसमवेतं । आद्येइष्टसाधनबुद्ध्याऽनुष्ठितस्यतस्यगर्भवासाद्यनिष्टप्रापकत्वेशास्त्र स्याऽनर्थकरत्वंस्यात् । अंत्येतत्त्वज्ञानेनकर्मांतरनाशेसतिजन्मायोगाद्दर्शनशास्त्रानर्थक्यंस्यात्तस्माज्जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यचेतिशास्त्रादविच्छिन्नेजन्ममरणप्रवाहेसप्तसुजन्मसुविप्र त्वादियोगोदर्शनफलंनतुसप्तजन्मान्यपि । तस्माद्युक्तमुक्तंप्रारब्धकर्मोत्पत्त्यापितयोनिप्रवेशनिमित्ततःपापकृत्यैःपापफलदुःखैस्तेनलिप्यंतइति २६ ब्राह्मणोब्रह्मवित्त्वेनयथार्थनामा । अन्यो

यद्यागच्छंतिसंसारंपुनर्योनिषुतादृशाः ॥ नलिप्यंतेपापकृत्यैःकदाचित्कर्मयोनितः २६ एवमेवब्रह्मचारीशुश्रूषुर्घोरनिश्चयः ॥ एवंयुक्तोब्राह्मणःस्यादन्यो ब्राह्मणकोभवेत् २७ कर्मैवपुरुषस्याहशुभंवायदिवाऽशुभं ॥ एवंपक्वकषायाणामानंत्येनश्रुतेनच २८ सर्वमानंत्यमासीद्धिएवंनःशश्वतीश्रुतिः ॥ तेषामपेततृ ष्णानांनिर्णिक्तानांशुभात्मनां २९ चतुर्थोपनिषद्धर्मःसाधारणइतिस्मृतिः ॥ संसिद्धैःसाध्यतेनित्यंब्राह्मणैर्नियतात्मभिः ३० संतोषमूलस्त्यागात्माज्ञाना धिष्ठानमुच्यते ॥ अपवर्गमतिर्नित्योयतिधर्मःसनातनः ३१ साधारणःकेवलोवायथाबलमुपासते ॥ गच्छतांगच्छतांक्षेमंदुर्बलोऽत्रावसीदति ॥ ब्रह्मणःपद मन्विच्छन्संसारान्मुच्यतेशुचिः ३२ ॥ स्यूमरश्मिरुवाच ॥ येभुंजतेयेददतेयजंतेऽधीयतेचये ॥ मात्राभिरुपलब्धाभिर्येवात्यागंसमाश्रिताः ३३

ब्राह्मणकोब्राह्मणप्रतिकृतिःदारुगजवन्नाममात्रधारीत्यर्थः २७ एवंब्राह्मणइतिब्राह्मणकइतिचकर्मसदसद्रूपंपुरुषस्यनामआह एवंनिष्कामकर्मप्रणाड्याआनंत्येनत्वंपदार्थसाक्षात्कारजेन श्रुतेनतत्त्वमसिवाक्यार्थज्ञानेन २८ सर्वकृत्स्नमानंत्यंप्राक्स्रुतादीश्वरोमदन्यःकश्चिदस्तीतिशंकयासमावौपरिदृश्यमानमप्यानंत्यमसत्यमभूत्श्रुतानंतरंतुसर्वमित्यर्थः । आसीदित्यनेनसर्वानं त्यस्याकृत्रिमत्वमुक्तं शाश्वतीश्रुतिःक्षेत्रज्ञंचापिमांविद्धीतितत्त्वमसीतिचजीवस्यसिद्धब्रह्मभावकीर्तनात् निर्णिक्तानांविशुद्धानां शुभात्मनांमोक्षबुद्धीनां २९ चतुर्थःजाग्रत्स्वप्नसुषुप्त्यभिमानि विश्वतैजसप्राज्ञानपेक्ष्यचतुर्थोनिर्विशेषःपरमात्मातद्विषयिणीयाउपनिषत्विद्यातदर्थोधर्मःशमदमोपरमतितिक्षाश्रद्धासमाध्यात्मकःसाधारणोवर्णाश्रमाणामितिशेषः । संसिद्धैःशुद्धचित्तैःनिय तात्मभिर्निरुद्धचित्तैःनित्यंतुरीयंब्रह्मसाध्यतेप्राप्यते । ज्ञानंशास्त्रीयंश्रवणमपिनिर्विशेषंसंन्यासेएवभवतीत्यर्थः ३० अपवर्गप्रदामतिर्विद्याब्रह्मसाक्षात्काररूपाद्यतिर्यस्मिन्नितिनित्यआवश्यकः । एषनित्योमहिमाब्राह्मणस्येतिश्रुतेः सनातनःसंप्रदायागतः ३१ साधारणआश्रमांतरधर्मसंमिश्रः यथाबलंयथावैराग्यं गच्छतांगच्छतामितिपुरुषमात्रस्यवणिग्व्याधादेरपिक्षेमंक्षेमहेतुः दुर्बलोरागी । ज्ञानफलमुपसंहरति ब्रह्मणइत्यर्धेन ३२ मात्राभिर्धनैः त्यागंसंन्यासं गार्हस्थ्येसंन्यासेवायथोक्ताचारवतांयद्यपिनिष्ठाद्विधिर्मस्तुल्यस्तथाऽपित्यमावेमरणेकःस्वर्गंजितवान् ३३

३४ परीति द्वयोर्मोक्षेसमानेऽपित्यागीदृष्टसुखंबहुप्राप्नोतीत्यर्थः ३५ ऐक्यंमोक्षैकफलत्वम् ३६ एकत्वेनज्ञानकर्मणोःसमप्राधान्येन पृथक्त्वेनप्रधानगुणभावेन ३७ शरीरपक्तिःस्थूलसूक्ष्म शरीरशुद्धिःकर्माणिकर्मप्रयोज्या साध्यसाधनयोरभेदोपचारःज्ञानं तुशब्दःपूर्ववैलक्षण्यसूचनार्थः मोक्षसाधनमित्यर्थः । तत्रक्रममाह कषायेइति चित्तदोषेकर्मभिःपाचितेसति रसःप्री तिर्ब्रह्मानंदस्तस्यज्ञानेशास्त्रजेतिष्ठतिसति ३८ आनृशंस्यादयःप्रवर्ततेतैश्चपरंब्रह्मप्राप्नोति आनृशंस्यंभूतदया क्षमाअभिभवेप्यविक्षिप्तचित्तता शांतिर्मनोजयः सत्यंयथार्थभाषणं आर्जव मवक्रत्वं शमःकर्मभ्यउपरतिः ३९ कर्मनिश्चयंकर्मफलनिश्चयंकषायपाकिमनुवैराग्याद्युत्पत्तिमनुसंजातांबुद्ध्येत ४० यामितिपरमगतेर्लक्षणम् ४१ यत्रतेवेदाःवेदितव्यंकर्मब्रह्मस्वरूपं यथा स्थितिकर्मणामनुष्ठानंब्रह्मणश्चज्ञानंप्राप्याऽनहंकारेणावस्थानंचदृश्यतेसएववेदवित् । अन्यस्तुवातरेचकोभस्त्रापरनामाचर्मकोशः वातवेटकइतिगौडाःपठंति व्याचक्षतेचवातवशाद्वेटकोभा षकः वेटपरिभाषणेइतिधातुः ४२ मानंमेयंमातृस्थितिंचवेदादिपदोपात्तांक्रमेणव्युत्पादयति सर्वमित्यादिनाऽध्यायशेषेण अस्तिवर्तमानं नास्त्यतीतानागतंतस्यसर्वस्यनिष्ठास्वरूपम् ४३ मानमुक्त्वामेयमाह एषैवेति सर्वत्रसर्वेषुशाखेष्वैषाएकैवनिष्ठा । काऽसौ एतज्जगदस्तिचप्रतीतिकाले नास्तिचबाधकाले । ननुघटादिरपिस्थितिकालेऽस्तिप्राक्प्रध्वंसाभावकालेनास्तीत्य

एतेषांप्रेत्यभावेतुकतमःस्वर्गजित्तमः ॥ एतदाचक्ष्वमेब्रह्मन्यथातत्त्वेनपृच्छतः ३४ ॥ कपिलउवाच ॥ परिग्रहाःशुभाःसर्वेगुणतामभ्युपागताः ॥ नतुत्यागसु खंप्राप्ताएतत्त्वमपिपश्यसि ३५ ॥ स्यूमरश्मिरुवाच ॥ भवंतोज्ञाननिष्ठावैगृहस्थाःकर्मनिश्चयाः ॥ आश्रमाणांचसर्वेषांनिष्ठायामैक्यमुच्यते ३६ एकत्वेन पृथक्त्वेनविशेषोनात्रदृश्यते ॥ तद्यथावद्यथान्यायंभगवान्प्रब्रवीतुमे ३७ ॥ कपिलउवाच ॥ शरीरपक्तिःकर्माणिज्ञानंतुपरमागतिः ॥ कषायेकर्मभिःपक्वे रसज्ञानेचतिष्ठति ३८ आनृशंस्यंक्षमाशांतिरहिंसासत्यमार्जवम् ॥ अद्रोहोऽनभिमानश्चह्रीस्तितिक्षाशमस्तथा ३९ पंथानोब्रह्मणस्त्वेतेएतैःप्राप्नोतियत्परम् ॥ तद्विद्वाननुबुद्ध्येतमनसाकर्मनिश्चयम् ४० यांविप्राःसर्वतःशांताविशुद्धाज्ञाननिश्चयाः ॥ गतिंगच्छंतिसंतुष्टास्तामाहुःपरमांगतिम् ४१ वेदांश्चवेदितव्यंच विदित्वाचयथास्थितिम् ॥ एवंवेदविदित्याहुरतोऽन्योवातरेचकः ४२ सर्वविदुर्वेदविदोवेदेसर्वंप्रतिष्ठितम् ॥ वेदेहिनिष्ठासर्वस्ययद्यदस्तिचनास्तिच ४३ एषै वनिष्ठासर्वत्रयत्तदस्तिचनास्तिच ॥ एतदंतंचमध्यंचसच्चाऽसच्चविजानतः ४४

शंकानिरासायचकारद्वयेनसमानकालिकमस्तित्वनास्तित्वधर्मद्वयंसमुचिनोति । तेनबुद्धानांप्रतीयमानमपिमायापुरवन्नास्त्येव । अबुद्धानांचतस्ततोऽस्यंतासदपिवज्रपंजरवद्दृढतरमस्त्येव । एतदेवविवृणोति एतदिति विजानतस्तत्त्वज्ञस्यैतत्परिदृश्यमानंवियदादि अंतंचमध्यंच अनुवाद्यापेक्षंक्लीबत्वं अंतश्चमध्यश्च अंतोनिर्विशेषंलयस्थानं मध्यःसविशेषंलयस्थानं सतत्त्व त्राख्यं वस्तुतस्त्वसदिति एतदुक्तंभवति एतद्वैराजंरूपंशुद्धाद्ब्रह्मणोऽनन्यदेवरजतमिवशुक्तेः । एतन्मायाशबलादप्यनन्यत्कुंडलमिवकनकात् । एतत्सूक्ष्मादप्यनन्यत्उपनेत्रदृशःस्थूलाक्षरामि वसूक्ष्मात् । तेनैतदसदज्ञानमात्रमनिर्वचनीयमिति । नन्वेकएवमायावीसर्वलयस्थानमस्तुकिमितिततोऽन्यन्निर्मायंकल्प्यतेइतिचेच्छ्रुतिप्रामाण्यादितिब्रूमः तथाहिश्रुतिः । सयथासर्वासामपांस मुद्रएकायनमेवंसर्वेषांरूपाणांचक्षुरेकायनमित्यप्समुद्रदृष्टांतेनकार्यलयाधिष्ठानंमायाविनमुक्त्वासयथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयतइतिलवणोदकदृष्टांतेनकार्यकारणोभयलयाधि ष्ठानंचिन्मात्रंदर्शयति । यथाउदकेप्रास्तःसैंधवखिल्यस्तत्रस्वोपादानभूतमुदकंविलीयतेनतुकरकावत्स्वरूपमात्रेणपरिमाणानतिरेकादेवंकार्यकारणेशुद्धेब्रह्मणिलीयेतेइतिश्रुत्यर्थः ४४

एवंविदःसमाधिव्युत्थानयोःस्थितिमाह समाप्तमिति त्यागइत्येवक्षेत्रारामगृहपशुपत्नीपुत्रशरीरेंद्रियप्राणमनोबुद्ध्यहंकारांतानांत्यागेनिर्विकल्पसमाधौसत्येवसम्यगासंभवति एतदेवसर्ववे दार्थः यथोक्तंवासिष्ठे । 'निर्विकल्पसमाधिर्हिसिद्धांतःसर्ववाङ्मयः'इति । अपिसंराधनेप्रत्यक्षानुमानाभ्यामितिसूत्रंच संराधनेसमाधौ प्रत्यक्षंश्रुतिः प्रामाण्यंप्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः मूलसापेक्षत्वात् । दृश्यतेत्वग्र्ययाबुद्ध्यायोगिनस्तंप्रपश्यंतीश्रुतिस्मृतिभ्यांसमाधावात्मनःसम्यग्दर्शनंभवतीतिसूत्रार्थः । व्युत्थानावस्थामाह संतोषइति श्रुताहि 'तेयेशतंमानु षाआनंदाः सएकोमनुष्यगंधर्वाणामानंदः श्रोत्रियस्यचाकामहतस्य'इत्यादिनोत्तरोत्तरंशतगुणेषुमानुषानंदादिब्रह्मानंदांतेष्वानंदेषुश्रोत्रियस्याकामहतस्वयोरनुगमोदृष्टः । तत्रश्रोत्रियत्वंसर्व त्रसमानं । अकामहतत्वोत्कर्षादेवचानंदोत्कर्षस्तस्यैवसंतोषशब्दितस्यसर्वानंदेष्वनुगतस्यपराकाष्ठाव्युत्थितेब्रह्मविदिज्ञेयेत्यर्थः ४५ अपवर्गस्वरूपमाह ऋतमिति ऋतमबाधितं सत्यं सच्चत्यच्चेतिसत्यंमूर्तामूर्तमपंचात्मकं तदधिष्ठानत्वात् यतःसर्वस्यात्माऽतोविदितं यतःस्थावरंजंगमंचतत्तद्देहतादात्म्यापन्नमतोवेदितव्यं सर्वमविकलंसुखं दुःखासंभिन्नंसुखमित्यर्थः । उत्तरंसर्वोत्कृष्टंशिवंशांतमद्वैतंतुरीयमित्यर्थः । शिवमद्वैतंचतुर्थमन्यंतइतिश्रुतेः ब्रह्मत्रिविधपरिच्छेदशून्यं अव्यक्तस्यप्रभवआविर्भावोयस्मात्तदीशस्याप्यधिष्ठानं । अव्ययंअपरिणामि

समाप्तंत्यागइत्येवसर्ववेदेषुनिष्ठितम् ॥ संतोषइत्यनुगतमपवर्गेप्रतिष्ठितम् ४५ ऋतंसत्यंविदितंवेदितव्यंसर्वस्यात्मास्थावरंजंगमंच ॥ सर्वसुखंयच्छिवमुत्तरंच ब्रह्माव्यक्तंप्रभवश्चाव्ययंच ४६ तेजःक्षमाशांतिरनामयंशुभंतथाविधंव्योमसनातनंध्रुवम् ॥ एतैःसर्वैर्गम्यतेबुद्धिनेत्रैस्तस्मैनमोब्रह्मणेब्राह्मणाय ४७ ॥ इति श्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि गोकापिलीये सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥ ॥ ४ ॥ ॥ ४ ॥ ॥ युधिष्ठिरउवाच ॥ धर्ममर्थंचकामंचवेदाःशंसंतिभारत ॥ कस्यलाभोविशिष्टोऽत्रतन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामिइतिहासंपुरातनम् ॥ कुंडधारेणयत्प्री त्याभक्तायोपकृतंपुरा २ अधनोब्राह्मणःकश्चित्कामाद्धर्ममवैक्षत ॥ यज्ञार्थंसततोऽर्थार्थीतपोतप्यतदारुणम् ३ सनिश्चयमथोकृत्वापूजयामासदेवताः ॥ भक्त्या नचैवाध्यगच्छद्धनंसंपूज्यदेवताः ४ ततश्चिंतामनुप्राप्तःकतमद्दैवतंनुतत् ॥ यन्मद्रुतंप्रसीदेतमानुषैरजडीकृतम् ५ सोऽथसौम्येनमनसादेवानुचरमंतिके ॥ प्रत्य पश्यज्जलधरंकुंडधारमवस्थितम् ६ दृष्ट्वैवतंमहाबाहुंतस्यभक्तिरजायत ॥ अयंमेधास्यतिश्रेयोवपुरेतद्धिताद्दशम् ७

त्वान्नित्यं चाद्दसंगं ४६ प्रकरणार्थमुपसंहरति तेजइति तेजःइंद्रियजयेसामर्थ्यं । क्षमाअपकारिष्वपिक्रोधानुत्पत्तिः । शांतिर्निष्कामत्वेनसर्वस्मात्कर्तव्यादुपरमः । एतत्त्रयम नामयंशुभ्रंनिर्दुःखस्यसुखस्यप्राप्तौहेतुः । तथेतिप्राप्यप्रापकस्वरूपविभागार्थः । तथाविधंनास्तिविधोविधानंकर्तव्यतायत्रतदविधमकृत्रिमं । व्योमजगत्कारणं व्योमवदसंगंवा । सनातनंनित्यै करूपं ध्रुवमविनाशि । एतैस्तेजआदिभिस्त्रिभिःकारणैर्यद्गम्यतेअधिगम्यतेऽज्ञानापनोदेसति । कैःबुद्धिनेत्रैःपुरुषैः तस्मैब्रह्मणनमइतिविद्यायावीर्यवत्त्वायप्रवचनमनायचनमस्करोतिभगवा न्कपिलः ब्राह्मणायब्रह्मविदभिन्नाय ४७ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणिनैलकंठीये भारतभावदीपे सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥ ॥ मोक्षधर्माननुष्ठातुमशक्तस्यत्रिवर्गे कःश्रेष्ठतमइतिपृच्छति धर्ममिति १ तत्राख्यायिकापूर्वकंधर्मस्यप्राधान्यमाहात्रेत्यादिना कामाद्धर्ममवैक्षतफलकामनयाधर्मंकरिष्यामीतिचिंतितवान् धर्मश्चार्थसाध्यइत्यर्थार्थीघोरंतपोऽत प्यत २ । ३ । ४ । ५ जलधरमेवं कुंडधारंनामतः ६ धास्यतिविधास्यति ७

८ । ९ उपकारेनियमेनप्रवर्तयंतीमुपकारनियतां १० । ११ । १२ तेजसाप्रभावेन १३ निरुपस्कृतोभोगवर्जितः निदर्शनंकुंडधारभक्तेःप्रत्ययं १४ व्यादिशंतंदेवेभ्यःफलयाचकान्निवेदयंतं वे वाङ्मयायाचकेभ्यःफलानिसमर्पयंतंवा १५ अशुभेषुकर्मसूपस्थितेषुप्राग्दत्तमपिराज्यादिकंप्रच्छिदंतिहरंति १६ भूमौपतितोब्राह्मणहितार्थी १७ । १८ । १९ । २० । २१ । २२ । २३ । २४

संनिकृष्टश्चदेवस्यनचान्यैर्मानुषैर्वृतः ॥ एषमेदास्यतिधनंप्रभूतंशीघ्रमेवच ८ ततोधूपैश्चगंधैश्चमाल्यैरुच्चावचैरपि ॥ बलिभिर्विविधाभिश्चपूजयामासतंद्विजः ९ ततस्त्वल्पेनकालेनतुष्टोजलधरस्तदा ॥ तस्योपकारनियतामिमांवाचमुवाचह १० ब्रह्मघ्नेचसुरापेचचौरेभग्नव्रतेतथा ॥ निष्कृतिर्विहितासद्भिःकृतघ्नेनास्तिनिष्कृतिः ११ आशायास्तनयोऽधर्मःक्रोधोऽसूयासुतःस्मृतः ॥ लोभःपुत्रोनिकृत्यास्तुकृतघ्नोनार्हतिप्रजाम् १२ ततःसब्राह्मणःस्वप्नेकुंडधारस्यतेजसा ॥ अपश्यत्सर्वभूतानिकुशेषुशयितस्तदा १३ शमेनतपसाचैवभक्त्याचनिरुपस्कृतः ॥ शुद्धात्माब्राह्मणोरात्रौनिदर्शनमपश्यत १४ मणिभद्रंसतत्रस्थंदेवतानांमहाद्युतिम् ॥ अपश्यतमहात्मानंव्यादिशंतंयुधिष्ठिर १५ तत्रदेवाःप्रयच्छंतिराज्यानिचधनानिच ॥ शुभैःकर्मभिरारब्धाःप्रच्छिदंत्यशुभेषुच १६ पश्यतामथयक्षाणांकुंडधारोमहाद्युतिः ॥ निपत्यपतितोभूमौदेवानांभरतर्षभ १७ ततस्तदेववचनान्मणिभद्रोमहामनाः ॥ उवाचपतितंभूमौकुंडधारकिमिष्यते १८ कुंडधारउवाच ॥ यदिप्रसन्नादेवामेभक्तोऽयंब्राह्मणोमम ॥ अस्यानुग्रहमिच्छामिकृतंकिंचित्सुखोदयम् १९ ततस्तंमणिभद्रस्तुपुनर्वचनमब्रवीत ॥ देवानामेववचनात्कुंडधारंमहाद्युतिम् २० ॥ मणिभद्रउवाच ॥ उत्तिष्ठोत्तिष्ठभद्रंतेकृतकृत्यःसुखीभव ॥ धनार्थीयदिविप्रोऽयंधनमस्मैप्रदीयताम् २१ यावद्धनंप्रार्थयतेब्राह्मणोऽयंसखातव ॥ देवानांशासनात्तावदसंख्येयंददाम्यहम् २२ विचार्यकुंडधारस्तुमानुष्यंचलमध्रुवम् ॥ तपसेमतिमाधत्तब्राह्मणस्ययुधिष्ठिर २३ कुंडधारउवाच ॥ नाहंधनानियाचामिब्राह्मणायधनप्रद ॥ अन्यमेवाहमिच्छामिभक्तायानुग्रहंकृतम् २४ पृथिवींरत्नपूर्णांवामहद्वारत्नसंचयम् ॥ भक्तायनाहमिच्छामिभवेदेषतुधार्मिकः २५ धर्मेऽस्यरमतांबुद्धिर्धर्मंचैवोपजीवतु ॥ धर्मप्रधानोभवतुममैषोऽनुग्रहोमतः २६ ॥ मणिभद्रउवाच ॥ सदाधर्मफलंराज्यंसुखानिविविधानिच ॥ फलान्येवायमश्नातुकायक्लेशविवर्जितः २७ ॥ भीष्मउवाच ॥ ततस्तदेवबहुशःकुंडधारोमहायशाः ॥ अभ्यासमकरोद्धर्मेततस्तुष्टास्तुदेवताः २८ मणिभद्रउवाच ॥ प्रीतास्तेदेवताःसर्वाद्विजस्यास्यतथैवच ॥ भविष्यत्येषधर्मात्माधर्मेचाधास्यतेमतिः २९ ततःप्रीतोजलधरःकृतकार्योयुधिष्ठिर ॥ ईप्सितंमनसोलब्ध्वावरमन्यैःसुदुर्लभम् ३० ततोपश्यतचीराणिसूक्ष्माणिद्विजसत्तमः ॥ पार्श्वतोऽभ्याशतोन्यस्तान्यथनिर्वेदमागतः ३१ ॥ ब्राह्मणउवाच ॥ अयंनसुकृतंवेत्तिकोन्वन्योवेत्स्यतेकृतम् ॥ गच्छामिवनमेवाहंवरंधर्मेणजीवितुम् ३२

२५ । २६ । २७ धर्मंधर्मनिमित्तं अभ्यासंपुनःपुनर्धर्ममेवविप्रार्थमयाचत येनकामस्तदर्थोधर्मोऽर्थश्चेतित्रयमपिहत्वैनिष्कामधर्मएवश्रेयानित्याख्यायिकातात्पर्यमुक्तंभवति २८ । २९ । ३० चीराण्यपश्यतोपादेयत्वेनेक्षतविरक्तोभूदित्यर्थः शेषंस्पष्टार्थम् ३१ । ३२



३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ ॥ इतिशां० मो० नी० भा०एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥ ॥ ७ ॥ ॥ ७ ॥ निष्कामधर्मस्यश्रैष्ठ्यमुक्तंतद्धिंसाशून्यस्यैवतस्योतिवक्तुंहिंस्रयज्ञनिंदार्थोयमध्यायआरभ्यते बहूनामिति एकंचित्तशुद्धिरीश्वरप्री

भीष्मउवाच ॥ निर्वेदाद्देवतानांचप्रसादात्सद्विजोत्तमः ॥ वनंप्रविश्यसुमहत्तपआरब्धवांस्तदा ३३ देवतातिथिशेषेणफलमूलाशनोद्विजः ॥ धर्मेचास्यमहाराजदृढाबुद्धिरजायत ३४ त्यक्त्वामूलफलंसर्वंपर्णाहारोऽभवद्द्विजः ॥ पर्णंत्यक्त्वाजलाहारःपुनरासीद्द्विजस्तदा ३५ वायुभक्षस्ततःपश्चाद्बहून्वर्षगणानभूत ॥ नचास्यक्षीयतेप्राणस्तदद्भुतमिवाभवत् ३६ धर्मेचश्रद्दधानस्यतपस्युग्रेचवर्ततः ॥ कालेनमहतातस्यदिव्यादृष्टिरजायत ३७ तस्यबुद्धिःप्रादुरासीद्यदिदद्यामहंधनम् ॥ तुष्टःकस्यचिदेवेहमिथ्यावाङ्नभवेन्मम ३८ ततःप्रहृष्टवदनोभूयआरब्धवांस्तपः ॥ भूयश्चाचिंतयत्सिद्धोयत्परंसोऽभिमन्यते ३९ यदिदद्यामहंराज्यंतुष्टोवैयस्यकस्यचित ॥ सभवेदचिराद्राजानमिथ्यावाग्भवेन्मम ४० तस्यसाक्षात्कुंडधारोदर्शयामासभारत ॥ ब्राह्मणस्यतपोयोगात्सौहृदेनाभिचोदितः ४१ समागम्यसतेनाथपूजांचक्रेयथाविधि ॥ ब्राह्मणःकुंडधारस्यविस्मितश्चाभवन्नृप ४२ ततोऽब्रवीत्कुंडधारोदिव्यंतेचक्षुरुत्तमम् ॥ पश्यराज्ञांगतिंविप्रलोकांश्चैवतुचक्षुषा ४३ ततोराजसहस्राणिमग्नानिनिरयेतदा ॥ दूरादपश्यद्विप्रःसदिव्ययुक्तेनचक्षुषा ४४ ॥ कुंडधारउवाच ॥ मांपूजयित्वाभावेनयदित्वंदुःखमाप्नुयाः ॥ कृतंमयाभवेत्किंतेकश्चतेऽनुग्रहोभवेत् ४५ पश्यपश्यचभूयस्त्वंकामानिच्छेत्कथंनरः ॥ स्वर्गद्वारंहिसंरुद्धंमानुषेषुविशेषतः ४६ ॥ भीष्मउवाच ॥ ततोऽपश्यत्सकामंचक्रोधंलोभंभयंमदम् ॥ निद्रांतंद्रींतथाऽऽलस्यमावृत्त्यपुरुषान्स्थितान् ४७ ॥ कुंडधारउवाच ॥ एतैर्लोकाःसुसंरुद्धादेवानांमानुषाद्भयम् ॥ तथैवदेववचनाद्विघ्नंकुर्वंतिसर्वशः ४८ नदेवैरननुज्ञातःकश्चिद्भवतिधार्मिकः ॥ एषशक्तोऽसितपसादातुंराज्यंधनानिच ४९ ॥ भीष्मउवाच ॥ ततःपपातशिरसाब्राह्मणस्तोयधारिणे ॥ उवाचचैनंधर्मात्मामहान्मेऽनुग्रहःकृतः ५० कामलोभानुबंधेनपुरातेयदसूयितम् ॥ मयास्नेहमविज्ञायतत्रमेक्षंतुमर्हसि ५१ क्षांतमेवमयेत्युक्त्वाकुंडधारोद्विजर्षभम् ॥ संपरिष्वज्यबाहुभ्यांतत्रैवांतरधीयत ५२ ततःसर्वांस्तदालोकान्ब्राह्मणोऽनुचचारह ॥ कुंडधारप्रसादेनतपसासिद्धिमागतः ५३ विहायसाचगमनंतथासंकल्पितार्थता ॥ धर्माच्छक्त्यातथायोगाद्याचैवपरमागतिः ५४ देवताब्राह्मणाःसंतोयक्षामानुषचारणाः ॥ धार्मिकान्पूजयंतीहनधनाढ्यान्नकामिनः ५५ सुप्रसन्नाहितेदेवायत्तेधर्मेरतामतिः ॥ धर्मेसुखकलाकाचिद्धर्मेतुपरमंसुखम् ५६ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणिकुंडधारोपाख्याने एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ बहूनांयज्ञतपसामेकार्थानांपितामह ॥ धर्मार्थंनसुखार्थार्थंकथंयज्ञःसमाहितः १

तिर्थानांतदर्थानांमध्येधर्मार्थंयोयज्ञःसमाहितोविनियुक्तःसकथंकीदृक्स्वरूपःस्यात् । सुखार्थार्थःस्वर्गार्थःधनार्थश्चयोनभवति तदर्थोहिहिंसांनानुरुध्यतेऽतोऽधर्ममात्रार्थस्ययज्ञस्यस्वरूपंब्रूहीत्यर्थः १

कुशलंकल्याणंदराहितमित्यर्थः १२ । १३ सुखदुःखानांविवेचनेकुशलश्चतुरः १४ । १५ मूलेसिंचतेयत्रवृक्षगुणान्पश्यतितदेवत्रर्धयति १६ । १७ प्रभुत्वंसंकल्पसिद्धत्वं १८ निर्वेदंवैराग्यं १९ भावयतेचिंतावशंकरोति २० धर्मत्यागेधर्मफलस्यस्वर्गादेस्त्यागे नानुपायादुपायानुष्ठानात्किंतूपायतश्च २१ । २२ । २३ । २४ ॥ इतिशांतिपर्वणिनील कंठीयेभारतभावदीपेत्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥ ॥ ७ ॥ उपायस्वरूपंप्रश्नपूर्वकंवक्तुमारभते मोक्षइति १ सर्वार्थंसर्वमर्थंधर्मादिंमोक्षमेवत्वा प्राज्ञअर्थग्रहण समर्थं निपुणंश्रुतार्थपरीक्षयाक्षमंनिदर्शनंप्रत्ययःमोक्षेस्वस्य द्विसाक्षिकउपायइत्यर्थः २ तत्रोपायोद्विविधःप्रवृत्तिरूपोनिवृत्तिरूपश्च तयोर्दृष्टांतमुखेनवैलक्षण्योपपादनपूर्वकंमोक्षहेतुहेतु

एवंभवतिपापात्माधर्मात्मानंतुमेशृणु ॥ यथाकुशलधर्मासकुशलंप्रतिपद्यते १२ कुशलेनैवधर्मेणगतिमिष्टांप्रपद्यते ॥ यएतान्प्रज्ञयादोषान्पूर्वमेवानुपश्यति ॥२७४॥
१३ कुशलःसुखदुःखानांसाधुश्चाप्यथसेवते ॥ तस्यसाधुसमाचारादभ्यासाच्चैववर्धते १४ प्रज्ञाधर्मेचरमतेधर्मंचैवोपजीवति ॥ सोऽथधर्मादवाप्तेषुधनेषुकुरुते
मनः १५ तस्यैवसिंचतेमूलंगुणान्पश्यतियत्रवै ॥ धर्मात्माभवतिह्येवंमित्रंचलभतेशुभम् १६ समित्रधनलाभात्तुप्रेत्यचेहचनंदति ॥ शब्देस्पर्शेरसेरूपेतथागंधे
चभारत १७ प्रभुत्वंलभतेजंतुर्धर्मस्यैतत्फलंविदुः ॥ सतुधर्मफलंलब्ध्वानहृष्यतियुधिष्ठिर १८ अतृप्यमाणोनिर्वेदमादत्तेज्ञानचक्षुषा ॥ प्रज्ञाचक्षुर्यदाकामेरसे
गंधेनरज्यते १९ शब्देस्पर्शेतथारूपेनचभावयतेमनः ॥ विमुच्यतेतदाकामान्नचधर्मंविमुंचति २० धर्मत्यागेचयततेदृष्ट्वालोकंक्षयात्मकम् ॥ ततोमोक्षाययत
तेनानुपायादुपायतः २१ शनैर्निर्वेदमादत्तेपापंकर्मजहातिच ॥ धर्मात्माचैवभवतिमोक्षंचलभतेपरम् २२ एतत्तेकथितंतातयन्मांत्वंपरिपृच्छसि ॥ पापंधर्मं
रतं मोक्षोनिर्वेदश्चैवभारत २३ तस्माद्धर्मेप्रवर्तेथाःसर्वावस्थंयुधिष्ठिर ॥ धर्मेस्थितानांकौंतेयसिद्धिर्भवतिशाश्वती २४ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्ष
धर्मपर्वणिचतुःप्राश्निकोनामत्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥ ॥ युधिष्ठिरउवाच ॥ मोक्षःपितामहेनोक्तउपायान्नानुपायतः ॥ तमुपा
यंयथान्यायंश्रोतुमिच्छामिभारत १ ॥ भीष्मउवाच ॥ त्वय्येवैतन्महाप्राज्ञयुक्तंनिपुणदर्शनम् ॥ येनोपायेनसर्वार्थंनित्यंमृगयसेऽनघ २ करणेघटस्ययाबुद्धिर्घ
टोत्पत्तौनसामता ॥ एवंधर्माभ्युपायेषुनान्यद्धर्मेषुकारणम् ३ पूर्वेसमुद्रेयःपंथाःसनगच्छतिपश्चिमम् ॥ एकःपंथाहिमोक्षस्यतन्मेविस्तरतःशृणु ४ क्षमयाक्रो
धमुच्छिंद्यात्कामंसंकल्पवर्जनात् ॥ सत्वसंसेवनाद्धीरोनिद्रांचच्छेत्तुमर्हति ५

मद्भावमाह करणेइति साध्येधर्मेचिकीर्षाबुद्धिरुत्पद्यतेसिद्धेतुब्रह्मण्यावरणापगमेनज्ञानमात्रमितिदृष्टांतेनैवज्ञेयमित्यर्थः । एवंधर्मेषुमोक्षधर्मेषुशमदमादिषुनिवृत्तिरूपेष्वालोचनद्वस्तुतत्त्वामि व्यंजकेष्वन्यत्प्रवृत्तिरूपोधर्मःकारणंन । तस्योपयोगंविशेषणेनैवाह धर्माभ्युपायेषुयमोयोगादिःसरवाभ्युपायोयेषांतेषु । निष्कामस्ययागादिश्चित्तशुद्धिद्वारानिवृत्तिहेतुर्भवतीत्यर्थः ३ एवंप्रवृत्तिनिवृत्तिधर्मयोर्हेतुहेतुमद्भावेऽप्यत्यंतवैलक्षण्यंदृष्टांतेनैवाह पूर्वेइति ४ निवृत्तिधर्मस्यपराकाष्ठासर्ववृत्तिनिरोधरूपोयोगस्तंविवक्षुस्तादृशनिःक्षमादीनित्रयोविंशतिसाधनानिपृथक्पृथ क्फलवंतिनिर्दिशति क्षमयेत्यादिना सत्वसंसेवनादालस्यादित्यागपूर्वकंसात्त्विकमगवद्ध्यानादिधर्मसेवनात् ५ ॥१५४॥

अप्रमादात्सावधानतया भयंलोकापवादजं लज्जामित्यर्थः । श्वासंप्राणचेष्टां क्षेत्रज्ञस्त्वंपदार्थस्तस्यशीलनाद्धेतोःतत्रमनसोधारणयेत्यर्थः । रक्षेन्निरुंध्यादितिपूर्वेणान्वयः । 'प्राणा न्प्रपीड्येहसंयुक्तचेष्टःक्षीणेप्राणेनासिकयोच्छ्वसीत ॥ दुष्टाश्वयुक्तमिववाहमेनंविद्वान्मनोधारयेताऽप्रमत्तः'इतिवायुजयस्यमनोधारणार्थत्वश्रुतेः । कामंरूपमिलाषं ६ भ्रमंविपरीतज्ञानं संमोहःअज्ञानं आवर्तमासमंताद्वर्ततइतिव्युत्पत्त्याऽनेककोटिस्पर्शिनंसंशयं अभ्यासात्तत्त्वाभ्यासात् निद्रामनदनुसंधानं प्रतिभामन्यानुसंधानंच ज्ञानाभ्यासेन 'तच्चिंतनंतत्कथनमन्योन्यं तत्प्रबोधनं ॥ एतदेकपरत्वंचज्ञानाभ्यासंविदुर्बुधाः'इत्युक्तलक्षणेन ७ उपद्रवान्श्लेष्माजीर्णादीन् रोगान्ज्वरातिसारादीन् हितंशाह्यायुत्पादकं जीर्णेसत्यमितंप्रमाणं तत्त्वंविषयाणांरूपम नर्थकरत्वंतद्दर्शनात् ८ अनुक्रोशात्कृपातः अवेक्षयापरिपालनेन आयत्याउत्तरकालेन संगोऽभिलाषः ९ योगेनवायुनिग्रहेण मानंचित्तसमुन्नतिं १० उत्थानेनोद्योगेन तंद्रीमाल स्यं वितर्कंविपरीततर्कं निश्चयाच्छ्रुतिविश्वासात् शौर्येणषड्वर्गजयसामर्थ्येन भयंसंसारं ११ अंतरंगमुक्तप्रधानंयोगमाह यच्छेदिति निद्रायामिवयुगपत्सर्वलयोमाभूदित्यनुष्ठेयंलयक्रमम

अप्रमादाद्भयंरक्षेच्छ्वासंक्षेत्रज्ञशीलनात् ॥ इच्छांद्वेषंचकामंचधैर्येणविनिवर्तयेत् ६ भ्रमंसंमोहमावर्तमभ्यासाद्विनिवर्तयेत् ॥ निद्रांचप्रतिभांचैवज्ञानाभ्यासेनत
त्ववित् ७ उपद्रवांस्तथारोगान्हितजीर्णमिताशनात् ॥ लोभंमोहंचसंतोषाद्विषयांस्तत्त्वदर्शनात् ८ अनुक्रोशादधर्मंचजयेद्धर्ममवेक्षया ॥ आयत्याचजयेदा
शामर्थंसंगंविवर्जनात् ९ अनित्यत्वेनचस्नेहंक्षुधांयोगेनपंडितः ॥ कारुण्येनात्मनोमानंतृष्णांचपरितोषतः १० उत्थानेनजयेत्तंद्रींवितर्कंनिश्चयाज्जयेत् ॥ मौने
नबहुभाष्यंचशौर्येणचभयंत्यजेत् ११ यच्छेद्वाङ्मनसीबुद्ध्यातांयच्छेज्ज्ञानचक्षुषा ॥ ज्ञानमात्मावबोधेनयच्छेदात्मानमात्मना १२ तदेतदुपशांतेनबोद्धव्यंशु
चिकर्मणा ॥ योगदोषान्समुच्छिद्यपंचयान्कवयोविदुः १३ कामंक्रोधंचलोभंचभयंस्वप्नंचपंचमम् ॥ परित्यज्यनिषेवेतयतवाग्योगसाधनान् १४ ध्यानमध्यय
नंदानंसत्यंह्रीरार्जवंक्षमा ॥ शौचमाहारतःशुद्धिरिंद्रियाणांचसंयमः १५ एतैर्विवर्धतेतेजःपाप्मानमुपहंतिच ॥ सिध्यतिचास्यसंकल्पाविज्ञानंचप्रवर्तते १६ धूत
पापःसतेजस्वीलघ्वाहारोजितेंद्रियः ॥ कामक्रोधौवशेकृत्वानिनीषेद्ब्रह्मणःपदम् १७ अमूढत्वमसंगित्वंकामक्रोधविवर्जनम् ॥ अदैन्यमनुदीर्णत्वमनुद्वेगोव्यवस्थितिः १८

नरुध्यवागादिबाह्येंद्रियव्यापारमुत्सृज्यमनोमात्रेणावतिष्ठेत मनोऽपिविषयविकल्पाभिमुखमध्यवसायस्वरूपायांबुद्धौधारयेत् । तदिदमुक्तंयच्छेद्वाङ्मनसीबुद्ध्येति । तांबुद्धिंज्ञानचक्षुषा शुद्धत्वंपदार्थबोधेनसमष्टिबुद्ध्यात्मा ज्ञानशुद्धत्वंपदार्थमध्यात्मावबोधेनायमात्माब्रह्मेत्यखबोधेनवाक्यजवृत्त्यायच्छेत् आत्मानंधीवृत्तिमप्यात्मनापरमचैतन्यप्रकाशेननियच्छेत् । इंद्रियाणि मनसिमनोबुद्धौबुद्धिंत्वंपदार्थेतंब्रह्माकारवृत्तौतांशुद्धात्मनिचेतिक्रमेणप्रविलाप्यस्वरूपात्मनाऽवतिष्ठेतेत्यर्थः १२ । १३ । १४ । १५ । १६ निनीषेन्नेतुमिच्छेदात्मानं कुत्र ब्रह्मणः पदंपदनीयंयत्रब्रह्माचतुर्मुखोऽपिलीयततत्स्थानं राहोःशिरःइतिवदभेदेभेदोपचाराद्वषष्ठी १७ अमूढत्वंवेदांतश्रवणाद्यभ्यासात् असंगित्वंवैराग्यात् कामक्रोधविवर्जनंसंदोषप्रमादाद्वर्जात् अदैन्यंपरिपूर्णकामता अनुदीर्णत्वंदर्पाहंकारराहित्यं अनुद्वेगोनिर्भयत्वं अव्यवस्थितिरनिकेतत्वं १८

कामतोऽन्यथा कामं स्वैरं स्थैयेन नियमो योगो निष्कामः कर्तव्यः योगजसिद्धीर्नेच्छेदित्यर्थः १९ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ अत्रैवविनिर्णीषद्ब्रह्मणःपदमित्यत्रोक्तेब्रह्मणःपदेविषयेऽत्र १ । २ कुतइत्यत्रांतरकारणप्रश्नः कमभ्येतीतिपार्यंतिकोपादानकारणप्रश्नः १ आद्य योत्तरमाह येभ्यइति भूतानिजरायुजादीनि कालेकर्मोद्भवसमये भावाभावनानिखिलप्राणिधीवासनातयाप्रचोदितःप्रेरितःपरमात्मा महाभूतानिखादीनि ४ कःसृजति कश्चास्यप्रवर्तकोभावइत्यतआह तेभ्यइति कालश्चतुर्युगात्मा अधर्मैरतोऽधर्मनित्यस्तुर्धर्मारंभीधर्मैरतइतिचतुर्विधःकलिद्वापरत्रेताकृतयुगसंज्ञोजीवआत्माबुद्धिस्तयाप्रचोदितः एतेभ्यः कालबुद्धिमहभूतेभ्यःपरं चेतनमीश्वरमचेतनंप्रधानंवाऽन्यदस्तीतियोब्रूयात्सोऽसदलीकंब्रूयात् । नान्योऽतोस्तिद्रष्टेतिद्रष्ट्रंतरनिषेधश्रुतः । तुच्छेनाभ्वपिहितंयदासीत्तमसस्तन्महिनाऽजायतैकमितितुच्छाज्ञानमाहात्म्याद्दुःख्यादिरूपेणब्रह्मैवाजायतेतिश्रुतेर्दृश्यमानकार्यमेवास्तित्वतुपरीक्षायांतिरोधीयमानंकारणमस्तिरज्जूरगोपादानाज्ञानवदतोऽन्येषामित्यानुमेयस्वेनाभिमतंप्र

एषमार्गोहिमोक्षस्यप्रसन्नोविमलःशुचिः ॥ तथावाक्कायमनसांनियमःकामतोऽन्यथा १९ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि योगाचारानुवर्णनंनामचतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥ ॥ ७ ॥ ॥ भीष्मउवाच ॥ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ नारदस्यचसंवादंदेवलस्यासितस्यच १ आसीनंदेवलंवृद्धंबुध्वाबुद्धिमतांवरम् ॥ नारदःपरिपप्रच्छभूतानांप्रभवाप्ययम् २ ॥ नारदउवाच ॥ कुतःसृष्टमिदंविश्वंब्रह्मन्स्थावरजंगमम् ॥ प्रलयेचकमभ्येतितद्भवान्प्रब्रवीतुमे ३ ॥ असितउवाच ॥ येभ्यःसृजतिभूतानिकालेभावप्रचोदितः ॥ महाभूतानिपंचेतितान्याहुर्भूतचिंतकाः ४ तेभ्यःसृजतिभूतानिकालआत्मप्रचोदितः ॥ एतेभ्योयःपरंब्रूयादसद्ब्रूयादसंशयम् ५ विद्धिनारदपंचैतान्शाश्वतानचलान्ध्रुवान् ॥ महतस्तेजसोराशीन्कालषष्ठान्स्वभावतः ६ आपश्चैवांतरिक्षंचपृथिवीवायुपावकौ ॥ नासीद्धिपरमंतेभ्योभूतेभ्योमुक्तसंशयम् ७

धानंतदस्त्येश्वरश्चतदुभयंदृश्याद्दृष्टुश्चान्यदचेतनंचेतनंवानास्तीतिस्पष्टम् ५ एतानखादीन् अचलान्परिणामशून्यान् ध्रुवानाद्यंतशून्यान् स्वप्नघटइवाजातत्वादेवत्वनाद्यंतवस्त्वद्धिभूतेषुत्रांतिविरत्यर्थः । जातएवनजायतेमायामात्रमिदंद्वैतमितिश्रुत्याच योलोकदृष्टाजातोघटादिःसएवपरमार्थतोनजायतेस्वप्नघटवदित्याद्यश्रुतेरर्थः । द्वितीयायास्तुस्पष्टएवार्थः महतोमहतत्त्वाख्यस्यबुद्धिसूक्ष्मस्यतेजसः सत्त्वप्राधान्येनप्रकाशमयस्य राशीनिवराशीन्कार्याणिविद्धि कालउक्तरूपोजीवःसएवषष्ठोयेषांतान् स्वभावतइतिपूर्ववत्प्राधान्येन ६ तान्येवाह आपइति महतत्त्वस्यापिमीतिकत्वात्तस्माद्भेदेभ्योभूतेभ्यःपरमन्यत्किमपितत्त्वंनासीत् उपपत्त्याश्रौतयुक्त्यालौकिकानुमानेनवाकश्चित्तदस्तीतियदिब्रूयात्तर्हितंतेअनदज्ञानंब्रूयात् तथाहि दुःखस्यमूलंशरीरंतस्यापिकारणंकर्म कर्मण्यपिप्रवर्तकोरागादिदोषःसचाज्ञानादेवभवतीतिश्रौतीउपपत्तिस्तामसूत्रयद्भगवानक्षपादः । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायेतदनंतरामावादपवर्गइति । तस्मान्मूलकारणमज्ञानमेव । ननुसंसारकारणमज्ञानमस्तु तस्यवियदादिपंचकारणत्वेकिंमानमितिचेत् अत्रपृच्छामः किंतदज्ञानंयत्संसारकारणमुच्यते नतावज्ज्ञानाभावमात्रं तस्यसुषुप्तावपिसत्त्वेनदोषाद्यजनकत्वात् अभावाद्भावोत्पत्त्यसंभवाच । नापिसंशयज्ञानं अनवधारणात्मकस्यतस्यप्रवृत्त्याद्यनुपयोगित्वात् । तस्मादतस्मिंस्त–

द्बुद्धिरूपंविपरीतज्ञानंतत्राप्यनात्मनिदेहादावात्मबुद्धिरूपंसंसारकारणमितिवाच्यं । नचासिंहोमाणवकइत्यादौमाणवकेसिंहत्वबुद्धिरस्तिमयोर्भेदस्फुरणात् सिंहमाणवकयोर्भेदस्फुरणात् अस्मिन्स्तत्त्वबुद्धयोगमात्रं तत्तुमाणवकेसिंहगतक्रौर्यादिसंबंधस्यापकर्षोणामितिप्रसिद्धं । देहादिस्तुशुक्तिरजतवदात्मनितादात्म्येनाध्यस्तइतिकृशोऽहंगौरोऽहमितितत्रदेहधर्मस्यगौरत्वादेःप्रत्ययोनगौणः सिंहमाणवकयोरिवदेहात्मनोर्भेदस्यलोकाप्रसिद्धत्वात् । ननुमाऽस्तुतयोर्भेदप्रसिद्धिःतथाऽपिस्फाटिकलौहित्यन्यायेनधर्ममात्राध्यासेनैवकृशोऽहमित्यादिव्यवहारोपपत्तावात्मनिदेहाद्यध्यासकल्पनंवृथेतिचेत् किमहमर्थमेवात्मानंब्रूषेउततोऽन्यं आद्येइष्टापत्तिः नहिजडयोर्देहाहमोरन्यधर्मस्यान्यत्राध्यासेकिंचिदस्माकंहीयते । अहमर्थस्यचैतन्याश्रयत्वेनाजडत्वाकरएवदृश्यत्वादिनाहेतुनानात्मत्वादेवनिरस्तं । अंत्ये 'निःसंगस्यससंगेनकूटस्थस्यविकारिणा । आत्मनोऽनात्मनायोगोवास्तवोनोपपद्यते'इतिवृद्धवचनात्शुक्तिरजतवदनिर्वचनीयएवतयोरज्ञानकृतःसंबंधइत्यज्ञानमेवात्रशरणीकरणीयं । तथाचस्वप्रकाशज्ञानेनैवसर्वव्यवहारोपपत्तौवियदादीनांपृथक्सत्त्वकल्पनंगौरवग्रस्तमित्युपेक्षणीयं । तस्माद्युक्तमुक्तमसद्ब्रूयादसंशयमिति । नासिद्धेःपरमितिपाठेतुपावन्मोक्षंभूतेभ्यःपरममपिकंनोपपत्त्यानवायुक्त्याकश्चिद्ब्रूयात् यदिब्रूयात्तर्ह्यसदज्ञानमेवब्रूयात् । मोक्षेतुनवाभूतानिनाप्यज्ञानमितिभावः । अतिद्धिःपरमे

नोपपत्त्यानवायुक्त्यात्वसद्ब्रूयादसंशयम् ॥ वेत्थैतानभिनिर्वृत्तान्षडेतेयस्यराशयः ८ पंचैवतानिकालश्चभावाभावौचकेवलौ ॥ अष्टौभूतानिभूतानांशाश्वतानिभवाप्ययौ ९ अभावंयांतितेष्वेवतेभ्यश्चप्रभवंत्यपि ॥ विनष्टोऽप्यनुतान्येवजंतुर्भवतिपंचधा १० तस्यभूमिमयोदेहःश्रोत्रमाकाशसंभवम् ॥ सूर्याच्चक्षुरसुर्वायोरद्भ्यस्तुखलुशोणितम् ११ चक्षुषीनासिकाकर्णौत्वग्जिह्वेतिचपंचमी ॥ इंद्रियाणींद्रियार्थानांज्ञानानिकवयोविदुः १२ दर्शनंश्रवणंघ्राणंस्पर्शनंरसनंतथा ॥ उपपत्त्यागुणान्विद्धिपंचपंचसुपंचधा १३

तेभ्यश्चविपाठेऽपिएतेभ्यःपरमस्तीतियत्तत्रासिद्धिप्रमाणाभावः यतःनोपपत्त्यानवायुक्त्यातद्ब्रूयात्किंत्वसदेवब्रूयादितियोज्यं सार्धः ७ एतानपदमिनिर्वृत्तान्सर्वत्रकार्येऽनुगतान्वेत्थजानीषे । यस्यैतेराशयःकार्याणितदसच्चाऽद्वाच्यमज्ञानंचवेत्थ । अहमज्ञइत्यनुभवोनीहारेणप्रावृताजल्प्याचेतिश्रुतिश्चाज्ञानसद्भावेप्रमाणमस्तीतिभावः ८ भावोभावनंपूर्वसंस्कारः अभावोऽज्ञानं भावांतरभावेहिकथंचित्पूर्वपेक्षयेतिन्यायेनतदभावरूपमेवनतुसत्त्वपदार्थरूपमित्युक्तंप्रागेव । कालोजीवःपंचभूतानिचत्यष्टौभूतान्यनादीनिशाश्वतान्यखंडदंडायमानानिभूतानांस्थावरजंगमानांभवाप्ययावुत्पत्तिलयस्थानानि ९ एतदेवव्याचष्टेऽभावमिति । ननुस्थावरजंगमदेहावयवानांभूम्यादीनांस्वस्वकारणेलयोयुज्यते । जीवस्यतुलयस्थानंनास्तिनान्योऽतोस्तिद्रष्टेतिद्रष्ट्रंतरनिषेधादतआह विनष्टइति तान्येवभूतानिनष्टान्यनुलक्षीकृत्यजंतुर्विपंचधाभूत्वानष्टोऽपिभवति । विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतीतिजलचंद्रन्यायेनोपाधिभूतभूतनाशेनतन्नाशस्याश्रवणात् १० पंचधात्वमेवाविष्करोतितस्येत्यादिना ११ इंद्रियार्थानांशब्दादीनां ज्ञानानिज्ञानकरणानि १२ पंचइंद्रियाणिपंचसुरूपादिषुपंचधादर्शनादिक्रियारूपेणवर्तमानानेतान्गुणानेवोपपत्त्यायुक्त्याविद्धि । अयमर्थः । प्रकाशप्रकाशयोर्गंधघ्राणयोःपार्थिवत्वमेवैकजातीयत्वावगमाद्विषयपंचकप्रकाशंमनःपंचभूतात्मकंतत्प्रवर्तकोविज्ञानमयोऽपिवाऽतएवउभयोःपूर्वापरीभावोदर्शनादिक्रिया अतःप्रवृत्तदर्शनादरवात्रयाणामपिगुणात्मत्वमुपपन्नमिति १३.

रूपमिति तद्गुणास्तुपलब्धुर्विज्ञानमयस्यगुणाः पंचधाभूतेनतेनैवोपलब्ध्वाउपलभ्यंते इंद्रियैःकरणैः १४ उपलब्धुःस्वरूपमाह रूपमितिसार्धत्रयेण मनःसहितानींद्रियाणीतिज्ञेयं क्षे त्रज्ञोविज्ञानात्मा क्षेत्रंचज्ञश्चतयोःसमाहारः अथवाक्षेत्रयुक्तोज्ञःक्षेत्रज्ञःबुद्धिविशिष्टश्चेतनइत्यर्थः १५ क्षेत्रात्क्षेत्रज्ञंनिर्विनक्ति चित्तमिति १६ चित्तादीनंतःकरणवृत्तिभेदान्व्याचष्टे पूर्वमि ति चेतयतेजानाति सामान्यतइदमितिज्ञानमनवच्छिन्नविशेषंचित्तमिति पृथगितिकोऽयमिद्रियमुपन्यस्यतिनिश्चिनोतियया विचारात्मकंज्ञानमिदंवाइदंवेतितन्मनोऽध्यवस्यति साबुद्धिवृत्तिः । यइंद्रिय र्थानध्यवस्येतिसउपलब्ध्युद्धिमानुबुद्धयुक्तः १७ इंद्रियसंघातंश्रोत्रादिपंचकं एतेनबुद्धेरिंद्रियत्वादुपलब्धातत्तोऽपिनिष्कृष्टोऽनुपाधिचिन्मात्रस्वरूपःक्षेत्रज्ञादन्योभवति १८ मेहनं शिश्नं मुखंवागिंद्रियमदनसाधनंच १९ एतेषांविषयानाह जल्पनेति २० पायुपस्थमितिपूर्वार्धस्योत्तरार्धेव्याख्यानम् २१ बलमिति षष्ठवृत्तिःप्राणः यथामेतथासर्वेषांएतानिपादैरितिमया वाचाउक्तानीतिशेषः । चेष्टाकर्मपथागमंसशब्दितामयाइतिपाठस्पष्टोऽर्थः । तेनसामान्याकरणवृत्तिःप्राणाद्यावायवःपंचेतिसांख्यानांसंमतःप्राणस्यैंद्रियानतिरेकपक्षःपरास्तः । निर्विशे

रूपंगंधोरसःस्पर्शःशब्दश्चैवाथतद्गुणाः ॥ इंद्रियैरुपलभ्यंतेपंचधापंचपंचभिः १४ रूपंगंधंरसंस्पर्शंशब्दंचैवाथतद्गुणान् ॥ इंद्रियाणिनबुध्यंतेक्षेत्रज्ञस्तैस्तुबुध्य ते १५ चित्तमिंद्रियसंघातात्परंतस्मात्परंमनः ॥ मनसस्तुपराबुद्धिःक्षेत्रज्ञोबुद्धितःपरः १६ पूर्वंचेतयतेजंतुरिंद्रियैर्विषयान्पृथक् ॥ विचार्यमनसापश्चादथ बुद्ध्याव्यवस्यति ॥ इंद्रियैरुपलभ्यार्थान्बुद्धिमांस्तुव्यवस्यति १७ चित्तमिंद्रियसंघातंमनोबुद्धिस्तथाऽष्टमी ॥ अष्टौज्ञानेंद्रियाण्याहुरेतान्यध्यात्मचिंतकाः १८ पाणिपादंचपायुश्चमेहनंपंचमंमुखम् ॥ इतिसंशब्द्यमानानिशृणुकर्मेंद्रियाण्यपि १९ जल्पनाभ्यवहारार्थंमुखमिंद्रियमुच्यते ॥ गमनेंद्रियंतथापादौकर्म णःकरणेकरौ २० पायूपस्थंविसर्गार्थमिंद्रियेतुल्यकर्मणी ॥ विसर्गंचपुरीषस्यविसर्गंचापिकामिके २१ बलंषष्ठंषडेतानिवाचासम्यग्यथामम ॥ ज्ञानचेष्टेंद्रिय गुणाःसर्वेषांशब्दितामया २२ इंद्रियाणांस्वकर्मभ्यःश्रमादुपरमोयदा ॥ भवतींद्रियसंत्यागादथस्वपितिवैनरः २३ इंद्रियाणांव्युपरमेमनोऽव्युपरतंयदि ॥ सेवते विषयानेवतंविद्यात्स्वप्नदर्शनम् २४ सात्विकाश्चैवयेभावास्तथातामसराजसाः ॥ कर्मयुक्तान्प्रशंसंतिसात्विकानितरांस्तथा २५ आनंदःकर्मणांसिद्धिःप्रति पत्तिःपरागतिः ॥ सात्विकस्यनिमित्तानिभावान्संश्रयतेस्मृतिः २६

षंनसामान्यमितिन्यायेनसुषुप्तौसर्वेंद्रियोपरमेप्राणानुपलंभापत्तेः तुल्यन्यायेनतथामनसोऽप्यनिंद्रियत्वापत्तेः २२ एवंजाग्रदवस्थापरीक्षिता सुषुप्तिस्वप्नयोःस्वरूपमाह इंद्रियाणामिति इंद्रियाण्यष्टौचित्तमनोबुद्धिसहितानिप्राणव्यतिरिक्तानिपंचकर्मेंद्रियाणिच तेषांसंत्यागःएकत्रास्यस्तत्रैवस्वरूपमात्रेणतदाक्षेत्रज्ञआस्तइत्यर्थः । नरइतिमूलाज्ञाननाशाभावाज्जीवत्वंदर्शि तम् २३ अव्युपरतमितिच्छेदः २४ मनस्त्वप्नेविषयाणामनावारकत्वंतद्वानमतआह सात्विकाइति येभावाभासंतेचित्ततइतिभावावासनामयाविषयादिजाग्रत्प्रसिद्धास्तानेवसात्विकादी न्कर्मयुक्तान्भोगप्रदकर्मयुक्तान्प्रशंसंति स्वप्नेऽपीतिशेषः । जाग्रद्वासनाएवकर्मोद्बोधेस्वप्नेऽपिभातीत्यर्थः २५ एतदेवाह आनंदइति आनंदःसुखं कर्मणासिद्धिरैश्वर्यं प्रतिपत्तिर्ज्ञानं परागतिःपरंवैराग्यंधर्मोवा धर्मोज्ञानंविरागऐश्वर्यं सात्विकमेतद्रूपमितिसत्स्मृतेः । सात्विकस्यपुरुषस्यएतानिनिमित्तानिहेतुभूतानानंदादीन्भावान्वासनाःसंश्रयते । सात्विकःपुमान् जाग्रद्वासनाहेतुकानानंदादीन्स्वप्नेस्मरतीतिभावः २६

सात्विकस्येत्युपलक्षणत्वेनव्याचष्टे जंतुष्विति सात्विकेषुराजसेषुतामसेषुवाजंतुष्वेकतमेषुयेषुकेषुचिद्येभावायावासनाविधिकर्मगतिमास्थितास्तानेवभावान्स्मृतिःसंश्रयतइतिपूर्वेणसंबंधः । सात्विकादिसंस्कारेष्वन्यतमःप्राक्कर्मोपोद्बलितःस्वप्नेतादृशान्भावान्स्मारयतीत्यर्थः । स्मृतिरूपमपितज्ज्ञानंभोगप्रदकर्मवशादेवप्रत्यक्षवदवभातीतिभावः । जाग्रत्स्वप्नयोरुपपादनफलं दर्शयति भावयोरिति द्वित्वजात्यभिप्रायं जाग्रद्भावजातीयस्यस्वाप्नभावजातीयस्यचगमनमपसरणंजागरीयभावस्यस्वप्नेस्वाप्नस्यजागरेचद्वयस्यापिसुषुप्तौप्रत्यक्षंदृष्टंतदेवनित्यमपुनरावृत्ति स्वभावमीप्सितं नित्यासुषुप्तिरेवमुक्तिःसैवापेक्षितव्या उच्छेदशीलयोर्भावयोरात्यंतिकोच्छेदस्यापिसंभवादित्यर्थः २७ वह्न्यौष्ण्यवदात्मनितयोरनुच्छेद्यमाशंक्याह इंद्रियाणीति पूर्वो क्तानिचतुर्दशेंद्रियाणि त्रयःसात्विकादयोभावाः एतेसप्तदशगुणाभोक्तुरष्टादशस्यात्मनोभोग्याअतोभोक्तृभोग्ययोःस्वस्वामिभावसंबंधोवह्न्यौष्ण्यवत्तादात्म्याभावादुच्छेद्योभवतीत्यर्थः । शरीरेसप्तदशात्मिकायामविद्यायांप्रविष्टोयोऽष्टादशःसशाश्वतोभोक्तेत्यर्थः २८ ननुभोक्तुर्विक्रियावतःकथंशाश्वतत्वमित्याशंक्याह अथवेति अविद्ययासहितास्तेअष्टादशगुणाभोग्याएव भोक्तुरप्यविद्ययासंहतत्वात्पारार्थ्यमस्त्यतःसोऽपिभोग्यवर्गेऽन्तर्भूतइत्यर्थः । शरीरिणाचिदात्मनायस्यानुभवस्यार्थेभोक्ताभोग्यमिच्छतिससर्वशेषीपरमप्रेमास्पदंतस्यैवैतेऽष्टादशभोग्याः । बहुत्वंभोक्तृभेदकृतानुभवभेदाभिप्रायं शरीरिणामितिकर्मणिषष्ठी भोक्तादयोऽनुभवाश्रिताः अस्यानुभवस्यसत्त्वेप्रमाणमाह तद्वियोगेहीति यतोऽनुभवाभावेसाविद्यास्तेनसंति । प्रमा

जंतुष्वेकतमेष्वेवंभावायेविधिमास्थिताः ॥ भावयोरीप्सितंनित्यंप्रत्यक्षंगमनंतयोः २७ इंद्रियाणिचभावाश्चगुणाःसप्तदशस्मृताः ॥
तेषामष्टादशोदेहीयःशरीरेसशाश्वतः २८ अथवासशरीरास्तेगुणाःसर्वेशरीरिणाम् ॥ संश्रितास्तद्वियोगेहिसशरीरानसंतिते २९
अथवासंनिपातोऽयंद्विशरीरंपांचभौतिकम् ॥ एकश्चदशचाष्टौचगुणाःसहशरीरिणा ॥ ऊष्मणासहविंशोवासंघातःपांचभौतिकः ३०
महान्संधारयत्येतच्छरीरंवायुनासह ॥ तस्यप्रभावयुक्तस्यनिमित्तंदेहभेदने ३१

णादिभावाभावसाधकस्यानुभवस्याभावेप्रमात्रादयएवनसिद्ध्येयुरतःसप्रसिद्धतरइत्यर्थः । यथोक्तंवार्तिके 'प्रमाणमप्रमाणंचप्रमाभावस्तथैवच ॥ यदाश्रिताःप्रवर्तंतेतदासंभावनाकुतः'इति अप्रमाणंमातृमेयात्मकं २९ नन्वनुभवोऽपिनप्रमोदास्पदंदुःखानुभवस्यापिप्रार्थ्यत्वापत्तेरित्यतआहाथवेति । सन्निपातएकीभावः शरीरंस्थूलसूक्ष्मभेदेनद्विविधं एकोऽनुभवःशरीरिणाभो क्तासहदशचाष्टौचेत्यष्टादशपूर्वोक्तागुणाःऊष्मणाजाठराग्निनासहविंशोविंशतेर्गणः अयंकृत्स्नोऽपिपांचभौतिकःसंघातः । अत्रानुभवस्यधीवृत्तिरूपत्वंवृत्तिवृत्तिमतोर्भेदंचाविवक्षित्वासंघातमध्ये पाठः तेनवृत्तिरूपोऽनुभवःक्षेत्रज्ञइतिशंकापरास्तायोमातृमानमेयप्रमाणानांतदाभासानांतदभावानांचप्रकाशकोयोऽखंडसंविद्रूपोऽनुभवःसक्षेत्रज्ञइतिस्थितं ३० अस्यैवदेहेप्रवेशादिकमाह महानित्यादिना महानेकविंशतितमउक्तविधोऽनुभवोवायुनाप्राणेनोपकरणेनसहशरीरंविंशात्मकंक्षेत्रंधारयति । ननुतत्प्राणेप्रपन्नउदतिष्ठदितिप्राणस्यैवमुख्यंशरीरधारकत्वमुच्यतइत्याशं क्याह तस्येति तस्यमहतोनिमित्तमुपकरणंदेहभेदनेदेहनाशे । यथाघटनाशेमुद्गरोनिमित्तमात्रंभेत्तापुरुषएवंमहानेवधारयितादेहस्यवायुस्तुनिमित्तमात्रं । निमित्तमात्रपरतयाचश्रुतिरप्यु पपन्नैवेतिनकश्चिद्दोषः तथाचश्रुत्यंतरं । 'नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ इतरेणतुजीवंतियस्मिन्नेतावुपाश्रितौ'इति प्रभावयुक्तस्येत्यनेन'अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुः सशृणोत्यकर्णः ॥ सवेत्तिवेद्यंनचतस्यास्तिवेत्तातमाहुरग्र्यंपुरुषंमहांतं ॥ पराऽस्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच'इत्यादिश्रुत्यर्थोदर्शितः ३१

एवंप्रविष्टस्यदेहनाशोत्पत्तीअनुनाशोत्पत्तीअपिस्तइत्याह यथैवेतिसार्धेन यथैवकिंचिद्घटादिकमुत्पद्यतेनश्यतिचतथैवायंप्रारब्धपुण्यपापविनाशांतेपंचत्वंगच्छति संचितपुण्यपापाभ्यांसमी रितःकालेनदेहंदेहांतरंविशति ३२ कृताश्रयोऽविद्याकामकर्मभिर्निष्पादितदेहांतरः । वाशब्दइवार्थे ३३ तत्रदेहसंबंधकृतेमरणादौसतिसंबंधदर्शिनआत्मनोऽनात्मनादेहपुत्रादिना संबंधंवस्तुतोऽविद्यमानमपिभ्रांत्यापश्यंतः ३४ पुत्रादिसंबंधंतावन्निषेधतिनहीति ३५ देहादिसंबंधंनिषेधति नैवेति कदाचिदिद्रियाकर्मदाहेसतिपरमांगतिंमोक्षंयाति ३६ तयाविभार ब्धकर्मणामवश्यभोक्तव्यत्वमाह पुण्येति ३७ संचितकर्मणांज्ञानेनैवदाहइत्याह पुन्येति तत्क्षयेपुण्यपापक्षयेसति अस्यजीवस्यब्रह्मभावेब्रह्मविद्ब्रह्मैवभवतीतिश्रुतिसिद्धेब्रह्मविद्याऽप्यक्षी मूतेसतिपरांगतिंकैवल्यंपश्यंतिपंडिताःशास्त्रदृष्टयानत्वन्यस्यकैवल्यमन्येनद्रष्टुंशक्यतइति ३८ ॥ इतिशांति०मोक्ष०नीलकंठीये भारतभावदीपे पंचसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

यथैवोत्पद्यतेकिंचित्पंचत्वंगच्छतेतथा ॥ पुण्यपापविनाशांतेपुण्यपापसमीरितः ॥ देहंविशतिकालेनततोऽयंकर्मसंभवम् ३२ हित्वाहित्वाह्ययंप्रैतिदेहाद्देहंकृताश्र यः ॥ कालसंचोदितःक्षेत्रीविशीर्णाद्वागृहाद्गृहम् ३३ तत्रनैवानुतप्यंतेप्राज्ञानिश्चितनिश्चयाः ॥ कृपणास्त्वनुतप्यंतेजनाःसंबंधदर्शिनः ३४ नह्ययंकस्यचित्क श्चिन्नास्यकश्चनविद्यते ॥ भवत्येकोह्ययंनित्यंशरीरसुखदुःखकृत् ३५ नैवसंजायतेजंतुर्नचजातुविपद्यते ॥ यातिदेहमयंभुक्त्वाकदाचित्परमांगतिम् ३६ पुण्यपा पमयंदेहंक्षपयन्कर्मसंक्षयात् ॥ क्षीणदेहःपुनर्देहीब्रह्मत्वमुपगच्छति ३७ पुण्यपापक्षयार्थंहिसांख्यज्ञानंविधीयते ॥ तत्क्षयेह्यस्यपश्यंतिब्रह्मभावेपरांगतिम् ३८ ॥ इतिश्रीमहाभा०शां०मो०नारदासितसंवादेपंचसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥ ॥ युधिष्ठिरउवाच ॥ भ्रातरःपितरःपौत्राज्ञातयःसुहृदःसुताः ॥ अर्थहेतोर्हताःक्रूरैरस्माभिःपापकर्मभिः १ येयमर्थोद्भवातृष्णाकथमेतांपितामह ॥ निवर्तयेयंपापानितृष्णयाकारितावयम् २ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंती ममितिहासंपुरातनम् ॥ गीतंविदेहराजेनमांडव्यायानुपृच्छते ३ सुसुखंबतजीवामियस्यमेनास्तिकिंचन ॥ मिथिलायांप्रदीप्तायांनमेदह्यतिकिंचन ४ अर्थाः खलुसमृद्धाहिबाढंदुःखंविजानताम् ॥ असमृद्धास्त्वपिसदामोहयंत्यविचक्षणान् ५ यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखम् ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशीं कलाम् ६ यथैवशृंगंगोःकालेवर्धमानस्यवर्धते ॥ तथैवतृष्णावित्तेनवर्धमानेनवर्धते ७ किंचिदेवममत्वेनयदाभवतिकल्पितम् ॥ तदेवपरितापायनाशेसंपद्यतेपुनः ८

उक्तविधज्ञानप्रतिबंधिकासर्वानर्थहेतुस्तृष्णाममतात्यागेननाशनीयेत्याह भ्रातरइत्यादिनाऽध्यायेन १ । १ । ३ । ४ अर्थाब्रह्मलोकांताविषयाः समृद्धाःसंपन्नाः हिमसिद्धं विजा नतांविवेकिनांदुःखमेव यदाहभगवान्पतंजलिः परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्चदुःखमेवसर्वंविवेकिनइति परिणामेदुःखंविनश्यद्वस्थःपुत्रादिर्दुःखंददाति विद्यमानोऽपिचैत्रपुत्र वन्नायंगुणवानितितापयन्दुःखंददाति । गुणवान्विनष्टोऽपिहापुत्रइतिस्मृत्वामृत्वादुःखसंस्कारोद्बोधनेनदुःखंददाति । सर्वथारमणीयेऽपितस्मिन्चलंगुणवृत्तमितिन्यायेनप्रतिक्षणपरिणा मितयाचित्तस्यसूक्ष्मंराजसंतामसंदुःखमोहहेतुंपरिणामंयोगिनएवजानंतिनतुमंदाः । अंतःसंज्ञाःस्थावरवद्वारसहामूढास्तद्दुःखमितिविद्वत्त्वे अक्षिमात्रकल्पोहिविद्वानल्पंतदुःखक्लेशेनाप्युद्वि जतेऽतोविवेकिनःसर्वंब्रह्मलोकांतंदुःखमेवेतिसूत्रार्थसंक्षेपः ५ । ६ । ७ । ८



प्राप्येति धर्मार्थमपिवित्तंनलिप्सेत यथोक्तं 'धर्मार्थंयस्यवित्तेहावरंतस्यनिरीहिता ॥ प्रक्षालनाद्धिपंकस्यदूरादस्पर्शनंवरं'इति धर्ममपिअर्थंप्राप्यैवोपयुंजीत कामांस्त्वर्थंप्राप्यापिविसर्जयेदेव ९ आत्मनासोपमःआत्मौपम्येनसर्वेषांसुखमिच्छेत् दुःखंचनेच्छेदित्यर्थः सर्वपुण्यपसंचयं १० ततोऽपिकिमतआह उभेइति सत्यो नृतेजाग्रत्स्वप्नौशोकानंदाविष्टवियोगसंयोगजौत्यक्त्वा कुतः यस्मात्प्रियाप्रियेइष्टानिष्टेएवतन्मूलभूतेत्यजति तेनचभयंसंसारं अभयमैश्वर्यं प्रशांतोनिर्विकल्पः निरामयोनिर्द्वंद्वः ११ । १२ चारित्रंसदाचारं १३ । १४ ॥ इतिशांतिपर्वणि

नकामाननुरुध्येतदुःखंकामेषुवैरतिः ॥ प्राप्यार्थमुपयुंजीतधर्मंकामान्विसर्जयेत् ९ विद्वान्सर्वेषुभूतेषुआत्मनासोपमोभवेत् ॥ कृतकृत्योविशुद्धात्मासर्वंत्यज तिवैवह १० उभेसत्यानृतेत्यक्त्वाशोकानंदौप्रियाप्रिये ॥ भयाभयंचसंत्यज्यसप्रशांतोनिरामयः ११ यादुस्त्यजादुर्मतिभिर्यानजीर्यतिजीर्यतः ॥ योऽसौप्राणां तिकोरोगस्तांतृष्णांत्यजतःसुखम् १२ चारित्रमात्मनःपश्यंश्चंद्रशुद्धमनामयम् ॥ धर्मात्मालभतेकीर्तिंप्रेत्यचेहयथासुखम् १३ राज्ञस्तद्वचनंश्रुत्वाप्रीतिमान भवद्द्विजः ॥ पूजयित्वाचतद्वाक्यंमांडव्योमोक्षमाश्रितः १४ ॥ इतिश्रीम०शांति०मोक्ष०मांडव्यजनकसंवादे षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥ ॥ युधिष्ठिरउवाच ॥ अतिक्रामतिकालेऽस्मिन्सर्वभूतभयावहे ॥ किंश्रेयःप्रतिपद्येततन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरा तनम् ॥ पितुःपुत्रेणसंवादंतंनिबोधयुधिष्ठिर २ द्विजातेःकस्यचित्पार्थस्वाध्यायनिरतस्यवै ॥ पुत्रोबभूवमेधावीमेधावीनामनामतः ३ सोऽब्रवीत्पितरंपुत्रः स्वाध्यायकरणेरतम् ॥ मोक्षधर्मेष्वकुशलंमोक्षधर्मविचक्षणः ४ ॥ पुत्रउवाच ॥ धीरःकिंस्वित्तातकुर्यात्प्रजानन्क्षिप्रंह्यायुर्भ्रश्यतेमानवानाम् ॥ पितस्तथा ऽऽख्याहियथार्थयोगंममानुपूर्व्याबेनधर्मंचरेयम् ५ ॥ पितोवाच ॥ अधीत्यवेदान्ब्रह्मचर्येणपुत्रपुत्रानिच्छेत्पावनार्थंपितॄणाम् ॥ अग्नीनाधायविधिवच्चेष्टयज्ञो वनंप्रविश्याथमुनिर्बुभूषेत् ६ ॥ पुत्रउवाच ॥ एवमभ्याहतेलोकेसमंततःपरिवारिते ॥ अमोघासुपतंतीषुकिंधीरइवभाषसे ७ ॥ पितोवाच ॥ कथमभ्याह तोलोकःकेनवापरिवारितः ॥ अमोघाःकाःपतंतीहकिंनुभीषयसीवमाम् ८ ॥ पुत्रउवाच ॥ मृत्युनाऽभ्याहतोलोकोजरयापरिवारितः ॥ अहोरात्राःपतंती मेतच्चकस्मान्नबुद्ध्यसे ९ यदाऽहमेवजानामिनमृत्युस्तिष्ठतीतिह ॥ सोऽहंकथंप्रतीक्षिष्येज्ञानेनापिहितश्चरन् १० रात्र्यांरात्र्यांव्यतीतायामायुरल्पतरंयदा ॥ गाधोदकेमत्स्यइवसुखंविंदेतकस्तदा ११ पुष्पाणीवविचिन्वंतमन्यत्रगतमानसम् ॥ अनवाप्तेषुकामेषुमृत्युरभ्येतिमानवम् १२ श्वःकार्यमद्यकुर्वीतपूर्वाह्णे चापराह्णिकम् ॥ नहिप्रतीक्षतेमृत्युःकृतंवाऽस्यनवाकृतम् १३ अद्यैवकुरुयच्छ्रेयोमात्वांकालोऽत्यगान्महान् ॥ कोहिजानातिकस्याद्यमृत्युकालोभविष्यति १४ अकृतेष्वेवकार्येषुमृत्युर्वैसंप्रकर्षति ॥ युवैवधर्मशीलःस्यादनिमित्तंहिजीवितम् १५

नी० भा०षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥ तृष्णात्यागिनाचत्वारआश्रमायथाक्रमंसेव्यानवेतिपृच्छति अतिक्रामतीति १ क्रमानुष्ठानमनियतायुषामशक्यमतोयत्रकुत्रचिदाश्रमे स्थित्वैर्मोक्षपरैर्भवितव्यमितिविवक्षन्पूर्वोक्तमेवेतिहासंप्रस्तौति अत्रापीति २ स्वाध्यायनिरतस्यकेवलाध्ययननिरतस्य ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

१६।१७।१८। १९।२०।२१ ।२२।२३। २४।२५ ।२६। २७।२८।२९।३०।३१।३२। ३३।३४। ३५।३६। ३७।३८।३९ ॥ इतिशांतिपर्वणिमोक्ष



कृतेधर्मेभवेत्प्रीतिरिहप्रेत्यचशाश्वती ॥ मोहेनहिसमाविष्टःपुत्रदारार्थमुद्यतः १६ कृत्वाकार्यमकार्यंवातुष्टिमेषांप्रयच्छति ॥ तंपुत्रपशुसंपन्नंव्यासक्तमनसं नरम् १७ सुप्तंव्याघ्रंमहौघोवामृत्युरादायगच्छति ॥ संचिन्वानकमेवैनंकामानामवितृप्तकम् १८ वृकीवोरणमासाद्यमृत्युरादायगच्छति ॥ इदंकृतमिदंकार्य मिदमन्यत्कृताकृतम् १९ एवमीहासमायुक्तंमृत्युरादायगच्छति ॥ कृतानांफलमप्राप्तंकार्याणांकर्मसंगिनाम् २० क्षेत्रापणगृहासक्तंमृत्युरादायगच्छति ॥ दुर्बलंबलवंतंचप्राज्ञंशूरंजडंकविम् २१ अप्राप्तसर्वकामार्थंमृत्युरादायगच्छति ॥ मृत्युर्जराचव्याधिश्चदुःखंचानेककारणम् २२ असंत्याज्यंयदामर्त्यैःकिंस्व स्थइवतिष्ठसि ॥ जातमेवांतकोंतायजराचाभ्येतिदेहिनम् २३ अनुषक्ताद्वयेनैतेभावाःस्थावरजंगमाः ॥ नमृत्युसेनामायांतींजातुकश्चित्प्रबाधते २४ बला त्सत्यमृतेत्वेकंसत्येह्यमृतमाश्रितम् ॥ मृत्योर्वागृहमेतद्वैयाग्रामेवसतोरतिः २५ देवानामेषवैगोष्ठोयदरण्यमितिश्रुतिः ॥ निबंधनीरज्जुरेषायाग्रामेवसतोरतिः २६ छित्त्वैनांसुकृतोयांतिनैनांछिंदंतिदुष्कृतः ॥ योनहिंसतिसत्त्वानिमनोवाक्कर्महेतुभिः २७ जीवितार्थापनयनैःप्राणिभिर्नसबद्ध्यते ॥ तस्मात्सत्यव्रताचा रःसत्यव्रतपरायणः २८ सत्यकामःसमोदांतःसत्येनैवांतकंजयेत् ॥ अमृतंचैवमृत्युश्चद्वयंदेहेप्रतिष्ठितम् २९ मृत्युरापद्यतेमोहात्सत्येनापद्यतेऽमृतम् ॥ सो ऽहंसत्यमहिंसार्थीकामक्रोधबहिष्कृतः ३० समाश्रित्यसुखंक्षेमीमृत्युंहास्याम्यमृत्युवत् ॥ शांतियज्ञरतोदांतोब्रह्मयज्ञेस्थितोमुनिः ३१ वाङ्मनःकर्मयज्ञश्चभ विष्याम्युदगायने ॥ पशुयज्ञैःकथंहिंस्रैर्मादृशोयष्टुमर्हति ३२ अंतवद्भिरुतप्राज्ञःक्षत्रयज्ञैःपिशाचवत् ॥ आत्मन्येवात्मनाजातआत्मनिष्ठोऽप्रजःपितः ३३ आ त्मयज्ञोभविष्यामिनमांतारयतिप्रजा ॥ यस्यवाङ्मनसीस्यातांसम्यक्प्रणिहितेसदा ३४ तपस्त्यागश्चयोगश्चसतैःसर्वमवाप्नुयात् ॥ नास्तिविद्यासमंचक्षुर्ना स्तिविद्यासमंफलम् ३५ नास्तिरागसमंदुःखंनास्तित्यागसमंसुखम् ३६ नैतादृशंब्राह्मणस्यास्तिवित्तंयथैकतासमतासत्यताच ॥ शीलेस्थितिर्दंडविधानमा र्जवंततस्ततश्चोपरमःक्रियाभ्यः ३७ किंतेधनैर्बांधवैर्वाऽपिकिंतेकिंतेदारैर्ब्राह्मणयोमरिष्यसि ॥ आत्मानमन्विच्छगुहांप्रविष्टंपितामहास्तेक्वगताःपिताच ३८ भीष्मउवाच ॥ पुत्रस्यैतद्वचःश्रुत्वातथाऽकार्षीत्पितानृप ॥ तथात्वमपिवर्तस्वसत्यधर्मपरायणः ३९ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणिपिता पुत्रसं० सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥ युधिष्ठिरउवाच ॥ किंशीलःकिंसमाचारःकिंविद्यःकिंपरायणः ॥ प्राप्नोतिब्रह्मणःस्थानंयत्परंप्रकृतेर्ध्रुवम् १

धर्मपर्वणिनीलकंठीये भारतभावदीपे सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥ ॥ ७ ॥ ॥ तृष्णांत्यक्त्वाशीघ्रंमोक्षमिच्छेदितिश्रुत्वामोक्षसाधनानिपृच्छति किंशीलइति । शी लंशुद्धस्वभावः आचरणमाचारः विद्याज्ञानं परायणमत्यंतंप्राप्यं कार्यंब्रह्मलोकव्यावृत्तयेयत्परमिति १



क्रमेणोत्तरं मोक्षधर्मेष्वितिरतोऽध्यात्मविद्यापरिशीलनशीलो लघ्वाहारोहितंमितंमेध्यंचान्नादिकंस्वीकुर्वन्नुद्वयोरेकमुत्तरंजितेंद्रियइति इंद्रियजयएवमहतीविद्यामुमुक्षूणांशरणंच प्रकृतेः परंनिर्विशेषं अतएवध्रुवमविचलं २ समोरागद्वेषहीनःसमुपोढेषूपस्थितेष्वपिपरिव्रजेत् गृहंत्यक्त्वामोक्षाश्रमंकुर्यात् ३ परिव्राड्धर्मानाह नचक्षुषेत्यादिना ४ मैत्रायणगतोमित्रःसूर्यस्तस्ये दंमैत्रंतदयनंगमनंतच्चमैत्रायणंतत्रगतःसूर्यवत्समस्थंहंविभिन्नमार्गैः अनिकेतोग्रामैकरात्रविधिनाचरेदित्यर्थः ५ कंचनोद्दिश्यनाभिमन्येताऽभिमानमहंकारंदर्पंनकुर्यात् ६ ग्राममध्येजनसमाजे प्रदक्षिणमनुकूलंसव्यं प्रतिकूलंवानाचरेत् भिक्षार्थंचर्यामनेकगृहाटनमनापन्नोऽकुर्वन्नित्यर्थः । पूर्वकेतितःप्राङ्निमंत्रितोनगच्छेद्भोजनार्थमितिशेषः ७ अवकीर्णोमुष्टिपांसुभिश्छन्नोविकृतइत्यर्थः तथाविमुग्धोऽचपलःस्वधर्मेनिष्ठावान् । यथोक्तं । 'तथाचरेतवैयोगीसतांधर्ममदूषयन् ॥ जनायथाऽवमन्येरन्गच्छेयुर्नैवसंगतं'इति मृदुर्दयावान् अप्रतिकूरःक्रूरंजिघांसंतंप्रत्यपिक्रूरोनस्यात्

॥ भीष्मउवाच ॥ मोक्षधर्मेषुनिरतोलघ्वाहारोजितेंद्रियः ॥ प्राप्नोतिपरमंस्थानंयत्परंप्रकृतेर्ध्रुवम् २ स्वगृहादभिनिःसृत्यलाभेऽलाभेसमोमुनिः ॥ समुपोढेषुका मेषुनिरपेक्षःपरिव्रजेत् ३ नचक्षुषानमनसानवाचादूषयेदपि ॥ नप्रत्यक्षंपरोक्षंवादूषणंव्याहरेत्कचित् ४ नहिंस्यात्सर्वभूतानिमैत्रायणगतश्चरेत् ॥ नेदंजीवि तमासाद्यवैरंकुर्वीतकेनचित् ५ अतिवादांस्तितिक्षेतनाभिमन्येतकंचन ॥ क्रोध्यमानःप्रियंब्रूयादाक्रुष्टःकुशलंवदेत् ६ प्रदक्षिणंचसव्यंचग्राममध्येचनाचरेत् ॥ भैक्षचर्यामनापन्नोनगच्छेत्पूर्वकेतितः ७ अवकीर्णःसुगुप्तश्चनवाचाह्यप्रियंवदेत् ॥ मृदुःस्यादप्रतिक्रूरोविस्रब्धःस्यादकत्थनः ८ विधूमेन्यस्तमुसलेव्यंगा रेभुक्तवज्जने ॥ अतीतपात्रसंचारेभिक्षांलिप्सेतवैमुनिः ९ प्राणयात्रिकमात्रःस्यान्मात्रलाभेष्वनादृतः ॥ अलाभेनविहन्येतलाभश्चैवंनहर्षयेत् १० लाभंसा धारणंनेच्छेन्नभुंजीताभिपूजितः ॥ अभिपूजितलाभंहिजुगुप्सेतैवतादृशः ११ नचान्नदोषान्निंदेतनगुणानभिपूजयेत् ॥ शय्यासनेविविक्तेचनित्यमेवाभिपूज येत् १२ शून्यागारंवृक्षमूलमरण्यमथवागुहाम् ॥ अज्ञातचर्यांगत्वाऽन्यांततोऽन्यत्रैवसंविशेत् १३ अनुरोधविरोधाभ्यांसमःस्यादचलोध्रुवः ॥ सुकृतंदुष्कृतंचोभे नानुरुध्येतकर्मणा १४ नित्यतृप्तःसुसंतुष्टःप्रसन्नवदनेंद्रियः ॥ विभीर्जप्यपरोमौनीवैराग्यंसमुपाश्रितः १५ अभ्यस्तंभौतिकंपश्यन्भूतानामागतिंगतिम् ॥ निस्पृहःसमदर्शीचपक्वापक्वेनवर्तयन् ॥ आत्मनायःप्रशांतात्मालघ्वाहारोजितेंद्रियः १६

विस्रब्धोनिर्भयः अविकत्थनो धन्योऽहमितिश्लाघामकुर्वन् ८ यदापात्राणांपरिवेषणपात्रहस्तानांसंचारेअतीतेसतीतिद्वत्तेशरावसंपातेइत्यमेनैतदेवोक्तं ९ मात्रा आहारपूर्तिस्तत्प्राप्यनादृतः विमुतवस्त्रादौ अकामेसतिनविहन्येतहिंसितोनस्यात् १० साधारणंसर्वयोग्यंमृकंदनादिलाभं ११ अन्नदोषान्पर्युषितत्वादीन् शय्येति एकांतेशय्यमासनमुपवेशनंचकांक्षेतेत्यर्थः १२ विविक्तमेवाह शून्येति अन्यांपैशाचीमन्यत्रात्मनि १३ अनुरोधोयोगस्य विरोधःसंगस्य ताभ्यांसमोब्रह्मस्यात् । निर्दोषंहिसमंब्रह्मेतिगीता । अचलउत्क्रांतिगत्यागतिशून्यः ध्रुवःकूटस्थः नानुरुध्येतनकांक्षेतकर्मणादयाद्वेषादिना १४ । १५ अभ्यस्तंपुनःपुनर्यथास्यात्तथाभौतिकंतत्त्वजातमात्मनोदेहेंद्रियादिपश्यन्ननात्मत्वेनालोचयन् भूतानांचान्येषां पक्वेनभक्तादिना अपक्वे नमूलादिना वर्तयन्जीविकांकुर्वन् । पक्षापक्षेणेतिपाठे मित्रामित्रसमूहेनवर्तयन्नमित्रवदमित्रमपिपश्येदित्यर्थः । आत्मनादेहेनाआत्मलाभार्थमित्यर्थः अध्ययनेनवसतीतिवत् १६

१७ । १८ अनपाश्रितःसंगमकुर्वन् अपूर्वचारकःपूर्वाश्रमीयेषुदेशग्रामादिषुचरतीतितदन्यः १९ नसंसृज्येतवतयोर्गृहेनवसेत् अज्ञातंपूर्वमकृप्तमाहारादिलिप्सितव्यैवेत्यज्ञातलिप्सांलिप्सेतलब्धु मिच्छेत् कषादित्वादनुप्रयोगः समूलकाषंकषतीतिवत् २० मोक्षसाधनमेषसंन्यासधर्मः मोक्षयानंमोक्षप्रापकम् २१ लोकाविषयाः तेजोमयास्तैजसांतःकरणमयाः । 'सत्यकामःसत्य संकल्पः'इतिश्रुतेः तथाविदेहकैवल्यकालेआनंत्यायवाङ्मनसातीतप्रत्यगात्मप्राप्तयेकल्पतेप्रव्रज्येतिशेषः २२ ॥ इति शांति०मो०नी०भा०अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥ उक्तःसंन्यासेदैवताशमूर्तेःसार्वभौमैर्भगवद्भक्तैरपिप्रार्थ्यतइत्येतद्दर्शयितुंयुधिष्ठिरप्रश्नमाह धन्याइति १ देवैर्धर्मादिभिर्बीजप्रदैः जातिंजन्मप्राप्यापि यद्यस्मादस्माभिरपिदुःखंप्राप्तमतःशरीरा णांधारणंदुःखमित्युत्तरेणान्वयः २ यतएतद्दुःखमतोदुःखसंज्ञकंदुःखनाशकंसंन्यासंकदाकरिष्यामः मारणतोषणनिशामनेषुज्ञेतिसूत्रेजानातेर्मारणार्थत्वानुवादात्पशुंसंज्ञपयतीतिब्राह्मणदर्श

वाचोवेगंमनसःक्रोधवेगंहिंसावेगमुदरोपस्थवेगम् ॥ एतान्वेगान्विषहेद्वैतपस्वीनिंदाचास्यहृदयंनोपहन्यात् १७ मध्यस्थएवतिष्ठेतप्रशंसानिंदयोःसमः ॥ एतत्प वित्रंपरमंपरिव्राजकआश्रमे १८ महात्मासर्वतोदांतःसर्वत्रैवानपाश्रितः ॥ अपूर्वचारकःसौम्योअनिकेतःसमाहितः १९ वानप्रस्थगृहस्थाभ्यांनसंसृज्येतकर्हि चित् ॥ अज्ञातलिप्सांलिप्सेतनचैनंहर्षआविशेत् २० विजानतांमोक्षएषश्रमःस्यादविजानताम् ॥ मोक्षयानमिदंकृत्स्नंविदुषांहारितोऽब्रवीत् २१ अभयंसर्वभू तेभ्योदत्वायःप्रव्रजेद्गृहात् ॥ लोकास्तेजोमयास्तस्यतथाऽऽनंत्यायकल्पते २२ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि हारीतगीतायां अष्टसप्तत्य धिकद्विशततमोऽध्यायः ॥ २७८ ॥ ॥ युधिष्ठिरउवाच ॥ धन्याधन्याइतिजनाःसर्वेऽस्मान्प्रवदंत्युत ॥ नदुःखितरःकश्चित्पुमानस्माभिरस्तिह १ लोकसंभावितैर्दुःखंयत्प्राप्तंकुरुसत्तम ॥ प्राप्यजातिंमनुष्येषुदेवैरपिपितामह २ कदावयंकरिष्यामःसंन्यासंदुःखसंज्ञकम् ॥ दुःखमेतच्छरीराणांधारणंकुरुसत्तम ३ विमुक्ताःसप्तदशभिर्हेतुभूतैश्चपंचभिः ॥ इंद्रियार्थैर्गुणैश्चैवअष्टाभिश्चपितामह ४ नगच्छंतिपुनर्भावंमुनयःसंशितव्रताः ॥ कदावयंगमिष्यामोराज्यंहित्वापरंतप ५ ॥ भीष्मउवाच ॥ नास्त्यनंतंमहाराजसर्वंसंख्यानगोचरः ॥ पुनर्भावोऽपिविख्यातोनास्तिकिंचिदिहाचलम् ६

नात्वसंज्ञपयतेर्ण्ञुलिणेरणिटीतिणिलोपेनिमित्तापायेनैमित्तिकस्याप्यपायइतिन्यायेनपुक्त्विवृत्तिः ३ सप्तदशभिःपंचप्राणाद्रैमनोबुद्धीदशज्ञानकर्मेंद्रियाणितैर्हेतुभूतैर्मुक्तिविरोधितयासंसारवर्धकैः पंचभिः । 'कामंक्रोधंचलोभंचभयंस्वप्नंचपंचमं'इतिप्रागुक्तैर्योगदोषैः इंद्रियार्थैःशब्दादिभिः गुणैःसत्वादिभिः अष्टाभिःपंचस्थूलभूतानिअविद्याहंकारकर्माणिचेतिअष्टत्रिंशतागणेनाविमुक्ताः ४ पुनर्भावंजन्मगमिष्यामःपारिव्राज्यंकरिष्यामः ५ एवंदुःखातुरंराजानंदुःखस्यांतवत्त्वंबोधयन्नाश्वासयति नास्तीति अनंतंनास्तिदुःखमितिशेषः अस्त्येवदुःखांताख्योमोक्षइत्यर्थः । यतःसर्वंसंख्यानंपरिच्छेदस्तस्यविषयः । ननुप्रलयेपिसर्वस्यांतोस्तिनतावतासंसारनिवृत्तिरस्त्यतआह पुनर्भावोभावोभवनंपुनर्जन्मसोऽपिविख्यातोऽतवत्त्वेन । नसपुनरावर्ततइतिश्रुत्यासर्व वादिसंप्रतिपत्त्याचप्रसिद्धोऽतः । ननुतथाप्यैश्वर्यंलुब्धैरस्माभिःसकथंप्रमुंशक्यइत्यतआह नास्तिकिंचिदिहाचलमिति । अतोऽन्यदार्तमिति श्रुतेरैश्वर्यस्याप्यंतोभविष्यतीत्यर्थः ६ ॥१५३॥

एवंऐश्वर्यंदोषइतिमन्यसेतदपिनेतिनच तत्रहेतुःप्रसंगतऐश्वर्यस्यापिसंगहेतुत्वेनमोक्षप्रतिबंधकत्वात्तयाऽपिधर्मज्ञायूयमुद्योगाच्छमाद्यभ्यासादेवकालेनकियताऽपिगमिष्यथप्राप्स्यथ मोक्षमि तिशेषः । 'बहूनांजन्मनामंतेज्ञानवान्मांप्रपद्यते'इतिगीतावचनात् ७ किंचायंजीवःपुण्यपापयोःसुखदुःखयोर्नैशेनइष्टे ततएवसुखदुःखोत्थेनैवतमसारागद्वेषात्मकेनाज्ञानेनरुध्यते । दैवमापि ताभ्यांसुखदुःखाभ्यामनुद्विग्नोमोक्षार्थमुद्योगंकुर्यादित्यर्थः ८ सुखदुःखयोरुच्छेद्यत्वंदर्शयितुमात्मधर्मत्वंदृष्टांतपूर्वकंव्युदस्यति यथेतिद्वाभ्यां अंजनमयःकज्जलप्रचुरः मनःशिलायाइदंमा नःशिलंरक्तपीतंरजः यथास्वयमरूपोऽपिवायुरंजनादिसंबंधात्तद्वर्णवानिवभूत्वास्वयोर्निदिक्षुशब्दितमाकाशंचतद्वर्णवंतमिवकरोत्येवंतमसाऽऽवृतोऽविद्योपाधिःसमष्टिजीवःस्वयंविवर्णोरागा दिराहित्याद्दोषास्पृगपिदेहद्वयसंबंधात्तद्धर्मैर्गौरत्वकाणत्वसुखित्वादिभिस्तद्वानिवभूत्वास्ययोनिर्मंतर्यामिणमवर्णंत्रिगुणातीतमप्याश्रित्यव्याप्यतद्वंतमिवकृत्वादेहेषुभ्रमति । बिंबप्रतिबिंब योरनन्यत्वात्प्रतिबिंबगतंकंपादिकंवस्तुतोबिंबएवाप्रभासतेएवंजीवगतोऽपिसंसारोब्रह्मण्येवास्ति तयोरभेदात् । अतोदुःखादेरात्मधर्मत्वाभावात्सुखेनोच्छेद्यत्वंस्यादित्यर्थः ९ । १० ननु देहात्मयोगोऽनादित्वादनुच्छेद्यइत्याशंक्याह ज्ञानेनेति तमःअतस्मिंस्तद्बुद्धिरूपोविपर्ययःसचआत्मन्यसंगेऽपिदुःखित्वादिभ्रमोऽज्ञानजोज्ञानेननश्यतियदातदाप्रकाशतेब्रह्मसनातनंसदैक

नचापिमन्यसेराजन्नेषदोषःप्रसंगतः ॥ उद्योगादेवधर्मज्ञाःकालेनैवगमिष्यथ ७ नेशेऽयंसततंदेहीनृपतेपुण्यपापयोः ॥ ततएवसमुत्थेनतमसारुध्यतेऽपिच ८ यथांजनमयोवायुःपुनर्मानःशिलंरजः ॥ अनुप्रविश्यतद्वर्णोदृश्यतेरंजयन्दिशः ९ तथाकर्मफलैर्देहीरंजितस्तमसावृतः ॥ विवर्णोवर्णमाश्रित्यदेहेषुप रिवर्तते १० ज्ञानेनहियदाजंतुरज्ञानप्रभवंतमः ॥ व्यपोहतितदाब्रह्मप्रकाशतिसनातनम् ११ अयत्नसाध्यंमुनयोवदंतियेचापिमुक्तास्तउपासित व्याः ॥ त्वयाचलोकेनचसामरेणतस्मान्नशाम्यंतिमहर्षिसंघाः १२ अस्मिन्नर्थेपुरागीतंशृणुष्वैकमनान्नृप ॥ यथादैत्येनवृत्रेणभ्रष्टैश्वर्येणचेष्टितम् १३ निर्जितेनासहायेनहृतराज्येनभारत ॥ अशोचताशत्रुमध्येबुद्धिमास्थायकेवलाम् १४ भ्रष्टैश्वर्यंपुरावृत्रमुशनावाक्यमब्रवीत् ॥ कच्चित्पराजितस्याद्यन व्यथातेऽस्तिदानव १५ ॥ वृत्रउवाच ॥ सत्येनतपसाचैवविदित्वाऽसंशयंह्यहम् ॥ नशोचामिनहृष्यामिभूतानामागतिंगतिम् १६

रूपं । अनादिरपिदेहात्मयोगोभ्रांत्यात्मकस्तत्त्वज्ञानेनोच्छेत्तुंशक्यइत्यर्थः ११ तच्चसनातनंब्रह्मअयत्नसाध्यंकर्मप्राप्यंन अनित्यत्वापत्तेः कर्मजंह्युत्पाद्यमाप्यंसंस्कार्यंविकार्यंवास्यात् । नहिसंयवनेनपिंडइवोपास्त्याब्रह्मोत्पाद्यं अनित्यत्वापत्तेः । नापिग्रामवद्गमनेनप्राप्यमात्मत्वात् । अन्यत्वेघटवज्जडत्वापत्तेः । नापिव्रीहिवदवघातेनोपास्त्यादोषापनयेनसंस्कार्यं असंगत्वा त्संभिरवेवन्हयौष्ण्यवत्तदनिवृत्त्यापत्तेः । नापिविकार्यंक्षीरादिवद्विकारयुक्तस्यानित्यत्वापत्तेः । अतोज्ञानेनाज्ञानापनोदेसतिकंठगतविस्मृतचामीकरवत्सिद्धमपिसाध्यमित्युच्यते त स्माद्युक्तमुक्तमयत्नसाध्यमिति येइति अत्रविद्वदनुभवएवप्रमाणमितिभावः । नशाम्यंतिब्रह्मोपासनान्नोपरमंते उद्योगिनोऽवश्यंब्रह्मप्राप्तिरतस्त्वयोद्योगकर्त्ताभवितव्यमितिभावः १२ १३ केवलांभंगहीनाम् १४ । सत्येनाऽबाधितार्थेनवेदवाक्येन तपसामननध्यानात्मकेनात्मालोचनेन चआगतिंसंसारं गतिंमोक्षमसंशयंविदित्वा नशोचामिनहृष्यामि तथाच । मत्वाधीरोहर्षशोकौजहातीतिश्रुतिः १६

कालेति युगचतुष्टययोग्याःपुण्यपापाख्याधर्मालक्ष्यंतेकेचिन्नरकेकानिचिद्भूतानिदिव्यानिस्वर्गार्हाणि १७ क्षपयित्वाभोगेनस्वर्गेनरकेवातंकालंनीत्वापुण्यापुण्येसमाप्य ताभ्यामेवनृतिर्यगा दियोनिप्रापकाभ्यांचोदिताःसंतःपुनःपुनर्भवंति कालचोदिताइत्यस्यव्याख्यानंसावशेषेणकालेनेति १८ कामबंधनबंधनाःकामपाशबद्धाः १९ जीवानिजीववंतिभूतानि अदृष्टवान्नदृष्ट मदृष्टंव्यवहितमतीतमनागतादिचतद्वानतिगच्छतिप्राप्नोतीतिजानातीत्यदृष्टवानतींद्रियज्ञानीअहंवैज्ञीविशेषः संसरतोजीवान् शास्त्रनिदर्शनंशास्त्रप्रत्ययंचजानामीत्यर्थः २० एतदेवाह तिर्यगिति चरित्वाताद्दशंकर्मकृत्वासुखादिकंप्रपद्यतेइतिसार्धेनसंबंधः कृतांतविधिसंयुक्तोयमयातनाते २१ गतमिति । 'यावत्संपातमुषित्वाथैतमेवाध्वानंपुनर्निवर्तंते'इतिश्रुतेः संपतत्यनेने तिसंपातःकर्मयावत्तावत्कालंस्थित्वापुनरत्रयथागतमायांतीति सर्वदेतिजन्ममरणप्रवाहस्यानंत्यमुक्तं २२ एतच्चाज्ञंप्रत्येवेतिवक्तुमध्वनोविशेषणं कालेति कर्ममानेनमितं तेननैष्कर्म्यं श्रयतोनायमध्वाऽस्तीतिदर्शितं एवंसृष्टिस्थित्योःपरायणंपरमात्मानंभाषमाणंकथयंतंतंवृत्रंप्रतिभगवानुशनाशुक्राचार्योऽसुरयोनिजातस्यापीदृशंज्ञानमित्याश्चर्यंमत्वातद्बुद्धिपरीक्षार्थंप्रत्यमा

कालसंचोदिताजीवामज्जंतिनरकेऽवशाः ॥ परितुष्टानिसर्वाणिदिव्यान्याहुर्मनीषिणः १७ क्षपयित्वातुतंकालंगणितंकालचोदिताः ॥ सावशेषेणकालेनसंभवंति पुनःपुनः १८ तिर्यग्योनिसहस्राणिगत्वानरकमेवच ॥ निर्गच्छंत्यवशाजीवाःकामबंधनबंधनाः १९ एवंसंसरमाणानिजीवान्यहमदृष्टवान् ॥ यथाकर्मतथालाभ इतिशास्त्रनिदर्शनम् २० तिर्यग्गच्छंतिनरकंमानुष्यंदैवमेवच ॥ सुखदुःखेप्रियेद्वेष्येचरित्वापूर्वमेवह २१ कृतांतविधिसंयुक्तःसर्वोलोकःप्रपद्यते ॥ गतंगच्छं तिचाध्वानंसर्वभूतानिसर्वदा २२ कालसंख्यानसंख्यातंसृष्टिस्थितिपरायणम् ॥ तंभाषमाणंभगवानुशनाप्रत्यभाषत ॥ धीमन्दुष्टप्रलापांस्त्वंतातकस्मात्प्रभा षसे २३ ॥ वृत्रउवाच ॥ प्रत्यक्षमेतद्भवतस्तथाऽन्येषांमनीषिणाम् ॥ मयायज्जयलुब्धेनपुरातप्तंमहत्तपः २४ गंधानादायभूतानांरसांश्चविविधानपि ॥ अवर्धंत्रीन्समाक्रम्यलोकान्वैस्वेनतेजसा २५ ज्वालामालापरिक्षिप्तोवैहायसचरस्तथा ॥ अजेयःसर्वभूतानामासंनित्यमपेतभीः २६ ऐश्वर्यंतपसाप्राप्तंभ्रष्टंतच्च स्वकर्मभिः ॥ धृतिमास्थायभगवन्नशोचामिततस्त्वहम् २७ युयुत्सुनामहेंद्रेणपुंसासार्धंमहात्मना ॥ ततोमेभगवान्दृष्टोहरिर्नारायणःप्रभुः २८ वैकुंठःपुरु षोऽनंतःशुक्लोविष्णुःसनातनः ॥ मुंजकेशोहरिश्मश्रुःसर्वभूतपितामहः २९

षत दुष्टप्रलापानसुरभावविनाशकानमर्थकान्वादानसुरोभूत्वाकथंभाषसइति २३ । २४ गंधाद्यादानंतदाश्रयोपमर्देन अवर्धंहिंसितवान् २५ वैहायसचरोविमानेनगच्छन् २६ । २७ युयुत्सुनायोद्धुमिच्छुना ततस्तत्रयुद्धकाले मेमया भगवान्सर्वैश्वर्यसंपन्नोदृष्टइंद्रसाहाय्यार्थमागतःसन्नवलोकितः हरिःपापहर्ता नारायणोनारस्यजीवसंघस्याश्रयंलयस्थानं पुंस्त्वंलोकात्प्र भुरंतर्यामी २८ वैकुंठोविकुंठायाअपत्यंविकुंठानामासुरींद्रतुल्यंपुत्रमिच्छंतीमहत्तपस्तेपेतस्याःस्वयमेवेंद्रःपुत्रोजज्ञेइत्यनुक्रमणिकावाक्यात् । विकुंठनंभूतानांमेलनंकरोतीतिविकुंठःस्वार्थेतद्धितः तथाचमायमिर्वचनाध्यायेवक्ष्यति । 'संश्लेषितामयाभूमिरद्भिर्व्योमचवायुना ॥ वायुनाचैवतेजश्चवैकुंठत्वंततोमम'इतिविद्यासागरीये । पुरुषःपूर्णः । यतोऽनंतस्त्रिविधपरिच्छेदशून्यः । शुक्लःशुद्धः । विष्णुर्व्यापनशीलः । सनातनःकूटस्थः । मुंजकेशोमुंजवत्पीतकेशः । हरिश्मश्रुःपिंगलश्मश्रुः । हिरण्यश्मश्रुर्हिरण्यकेशइतिश्रुतेः । सर्वभूतानिविराट्तस्यपितामायावीतस्यापिपिताब्रह्म २९

तस्यप्रासंगिकस्यविष्णुदर्शनात्मकस्यतपसइंद्रविजयत्रैलोक्याधिपत्यहेतोःसावशेषंकर्मगतिजिज्ञासोत्पादकंशेषंकिंचिदस्तीत्याह नूनमिति ३० महदैश्वर्यंब्रह्मवर्णेब्राह्मणादिषुमेंउत्तममैश्व र्यंब्राह्ममैश्वर्यंनिवर्ततेचकथं अयमर्थः सर्वांश्चलोकानाप्नोतिसर्वांश्चकामान्यस्तमात्मानमनुविद्यविजानातीत्यात्मसाक्षात्कारफलमैश्वर्यंमंतवचेत्कर्मफलाविशेषः । नचपुनरावर्ततइतिश्रुति व्याकोपश्च । अनंतंचेदअस्थूलमनणुइत्यादिनिर्विशेषब्रह्मप्रतिपादकश्रुतिविरोधः । निर्विशेषसविशेषयोर्ब्रह्मणोःसमसत्ताकत्वायोगादिति ३१ प्रवर्तंतेचेष्टांकुर्वंति कोऽन्तर्यामीत्यर्थःशा श्वतोब्रह्मभूत्वेतिशेषः किंफलंशाश्वतप्रापकंज्ञानंयज्ञादिफलं ३२ कर्मणायज्ञादिना ज्ञानेनउपास्त्या फलंविद्याख्यं ३३ । ३४ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीये भारतभा वदीपेएकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥ ॥ ७ ॥ ॥ दुर्वहंप्रश्नभारंनिर्वोढुंहरिंशरणीकरोति नमइति तलमधोभागः साकाशमाकाशसहितंसर्वमुपरितनं बाहुगो

नूनंतुतस्यतपसःसावशेषमिहास्तिवै ॥ यदहंप्रष्टुमिच्छामिभगवन्कर्मणःफलम् ३० ऐश्वर्यंवैमहद्ब्रह्मवर्णेकस्मिन्प्रतिष्ठितम् ॥ निवर्ततेचापिपुनःकथमैश्वर्यमु त्तमम् ३१ कस्माद्भूतानिजीवंतिप्रवर्तंतेयथापुनः ॥ किंवाफलंपरंप्राप्यजीवस्तिष्ठतिशाश्वतः ३२ केनवाकर्मणाशक्यमथज्ञानेनकेनवा ॥ तदवाप्तुंफलंविप्रतन्मे व्याख्यातुमर्हसि ३३ इतीदमुक्तःसमुनिस्तदानींप्रत्याहयत्तच्छृणुराजसिंह ॥ मयोच्यमानंपुरुषर्षभत्वमनन्यचित्तःसहसोदरीयैः ३४ ॥ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणिवृत्रगीतासुएकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥ ॥ ७ ॥ उशनोवाच ॥ नमस्तस्मैभगवतेदेवायप्रभविष्णवे ॥ यस्यपृथ्वीतलंतातसाकाशंबाहुगोचरः १ मूर्धायस्यत्वनंतंचस्थानंदानवसत्तम ॥ तस्याहंतेप्रवक्ष्यामिविष्णोर्माहात्म्यमुत्तमम् २ तयोःसंवदतोरेवमाजगा ममहामुनिः ॥ सनत्कुमारोधर्मात्मासंशयच्छेदनायवै ३ सपूजितोऽसुरेंद्रेणमुनिनोशनसातथा ॥ निषसादासनेराजन्महार्हेमुनिपुंगवः ४ तमासीनंमहाप्रज्ञमुश नावाक्यमब्रवीत् ॥ ब्रूह्यस्मैदानवेंद्रायविष्णोर्माहात्म्यमुत्तमम् ५ सनत्कुमारस्तुततःश्रुत्वाप्राहवचोऽर्थवत् ॥ विष्णोर्माहात्म्यसंयुक्तंदानवेंद्रायधीमते ६ शृणुसर्व मिदंदैत्यविष्णोर्माहात्म्यमुत्तमम् ॥ विष्णौजगत्स्थितंसर्वमितिविद्धिपरंतप ७ सृजत्येषमहाबाहोभूतग्रामंचराचरम् ॥ एषचाक्षिपतेकालेकालेविसृजतेपुनः ८ अस्मिन्गच्छंतिविलयमस्माच्चप्रभवंत्युत ॥ नैषज्ञानवताशक्यस्तपसानैवचेज्यया ॥ संप्राप्तुमिंद्रियाणांतुसंयमेनैवशक्यते ९ बाह्येचाभ्यंतरेचैवकर्मणामन सिस्थितः ॥ निर्मलीकुरुतेबुद्ध्यासोऽमुत्रानंत्यमश्नुते १०

चरोमध्यस्थमित्यर्थः १ अनंतंस्थानंमोक्षः २ विष्ण्वनुग्रहमाह तयोरिति ३ । ४ । ५ । ६ माहात्म्यंमहांश्चासौआत्माचतस्यभावःविष्णोर्जगज्जन्मादिकर्तृत्वंप्रत्यगभिन्नत्वंच शृणु उत्तमंतच्छ्रवणस्यमोक्षदत्वात् । तदेवाह विष्णौजगत्कनकेकुंडलमिवस्थितंविद्धि चेतनाचेतनंसर्वंविष्णुरेवेत्यर्थः ७ एतदेवव्युत्पादयति सृजतीति ८ निमित्तत्वमुक्त्वाउपादान त्वमाहार्धेन अस्मिन्निति कार्यंयत्रलीयतेयतश्चोद्भवतितदुपादानमित्यर्थः । एवमभिन्ननिमित्तोपादानत्वलक्षणंजगत्कारणत्वंविष्णोरुक्तं तस्यदुर्ज्ञेयत्वमाह नेति संयमेनयोगेन ९ सं यमेनैवेत्येवशब्देनयज्ञादीनामात्मप्राप्तिसाधनत्वंमाभूदित्याह बाह्येइति यःपुमान्बाह्येयज्ञादौविविदिषंतियज्ञेनेत्यादिश्रुतेर्विविदिषाहेतौ । आभ्यंतरे'शांतोदांतउपरतस्तितिक्षुःसमाहितो-

भूत्वाऽऽत्मन्येवात्मानंपश्यति'इतिश्रुतेर्दर्शनहेतुत्वेनांतरंगेसमाधौ । मनसिसंकल्पेचइदंमेऽनेनांगंसंस्क्रियतइतिस्मृतेरात्मविविदिषाचित्तसंस्कारान्पतराभिसंधीचबुद्ध्यानिश्चयेनस्थितोनिष्ठावा न् तानिबाह्ययज्ञादीनिनिर्मलीकुरुतेतैश्चित्तंशोधयतीत्यर्थः । सोऽमुत्रदेहाभिमानत्यागलभ्येआत्मलोकेगत्वाआनंत्यंमोक्षमश्नुते १० निर्मलीकरणेदृष्टांतांतरमाह यथेति हिरण्यकर्ता स्वर्णकारः ११ जातिशतैर्जन्मशतैः अनेनयज्ञादिनाशमादिनाअतियत्नेनत्वेकजातौएकजन्मन्यपि १२ दृष्टांतांतरमाह लीलयेति १३ ननुकर्मसुक्रियमाणेष्वपिचित्तशुद्धिर्नदृश्यते अतस्तत्करणंव्यर्थमित्याशंक्यदृष्टांतपूर्वकमावृत्त्याफलंसिध्यतीत्याहत्रिभिः यथाचेति १४ । १५ युक्तोयोजितः गुणैःसत्त्वाद्यैःप्रसंगिषुरुत्यादिसंगिषुदोषः अभ्यासजेनबाह्याभ्यंतरसा धनानांपुनःपुनरावृत्त्युत्थेन १६ रक्तानिजीवजातानीतिशेषः कर्मविशेषान्रागविरागहेतून् १७ यथावाकर्मणिप्रवर्ततेऽविद्यादशायां यस्मिन्निमित्तेतिष्ठतिकर्मभ्योनिवर्ततेविद्यायांसत्यां आनुपूर्व्यंविच्छेदः पूर्वरूपमार्षं १८ एवंसाधनाभिमुखीकृतस्यज्ञेयमाह अनादीति अनादिनिधनःनित्यः श्रीयतइतिदेवश्चिन्मात्रः । ननुनित्यज्ञातानास्त्येवघटज्ञानंजातंपटज्ञानंनष्ट

यथाहिरण्यकर्तावैरूप्यमग्नौविशोधयेत् ॥ बहुशोऽतिप्रयत्नेनमहताऽऽत्मकृतेनह ११ तद्वज्जातिशतैर्जीवःशुद्ध्यतेऽनेनकर्मणा ॥ यत्नेनमहताचैवाप्येकजातौ विशुद्ध्यते १२ लीलयाऽल्पंयथागात्रात्प्रमृज्यादात्मनोरजः ॥ बहुयत्नेनमहतादोषनिर्हरणंतथा १३ यथाचाल्पेनमाल्येनवासितंतिलसर्षपम् ॥ नमुंचतिस्व कंगंधंतद्वत्सूक्ष्मस्यदर्शनम् १४ तदेववहुभिर्माल्यैर्वास्यमानंपुनःपुनः ॥ विमुंचतिस्वकंगंधंमाल्यगंधेनतिष्ठति १५ एवंजातिशतैर्युक्तोगुणैरेवप्रसंगिषु ॥ बुद्ध्या निवर्ततेदोषोयत्नेनाभ्यासजेनह १६ कर्मणास्वनुरक्तानिविरक्तानिचदानव ॥ यथाकर्मविशेषांश्चप्राप्नुवंतितथाशृणु १७ यथाचसंप्रवर्ततेयस्मिंस्तिष्ठतिवावि भो ॥ ततेऽऽनुपूर्व्यांव्याख्यास्येतदिहैकमनाःशृणु १८ अनादिनिधनःश्रीमान्हरिर्नारायणःप्रभुः ॥ देवःसृजतिभूतानिस्थावराणिचराणिच १९ सर्वेसर्वेषुभूतेषु क्षरश्चाक्षरएवच ॥ एकादशविकारात्माजगत्पिबतिरश्मिभिः २० पादौतस्यमहींविद्धिमूर्धानंदिवमित्युत ॥ बाहवस्तुदिशोदैत्यश्रोत्रमाकाशमेवच २१ तस्यते जोमयःसूर्योमनश्चंद्रमसिस्थितम् ॥ बुद्धिर्ज्ञानगतानित्यंरसस्त्वप्सुप्रतिष्ठितः २२ भ्रुवोरनंतरास्तस्यग्रहादानवसत्तम ॥ नक्षत्रचक्रंनेत्राभ्यांपादयोर्भूश्चदानव २३

मित्यनुभवादित्याशंक्याह श्रीमानिति श्रीयतेआश्रीयतइतिश्रीरुपाधिस्तद्वान् घटाकाशवदौपाधिकावुत्पत्तिलयौनतुस्वतइत्यर्थः हरिःसंहर्ता नारायणःसर्वाश्रयः प्रभुःसर्वनियंता १९ अस्यैवसार्वात्म्यंवदन्नवविधसर्गोपादानत्वमाह सर्वाइति सर्वेषुभूतेषुशरीरेषु क्षरःसंघातः अक्षरोजीवः एकादशइंद्रियाणि पिबतिगृह्णाति रश्मिभिरिंद्रियैःअत्रक्षरइतिमहतःसर्गःप्रथमः उक्तः । भूतेष्वितिभूतसर्गोद्वितीयउक्तः । एकादशेतिवैकारिकस्तृतीयऐंद्रियकःसर्गउक्तः । तएतेत्रयःप्राकृताःसर्गाः यथोक्तंवैष्णवे । 'प्रथमोमहतःसर्गोविज्ञेयोब्रह्मणस्तुयः ॥ तन्मा त्राणांद्वितीयस्तुभूतसर्गोहिसस्मृतः ॥ वैकारिकस्तृतीयस्तुसर्गऐंद्रियकःस्मृतः ॥ इत्येषप्राकृतःसर्गःसंभूतोबुद्धिपूर्वकः'इति २० ऐकात्म्यसिद्धयेनारायणावयवत्वेनकृत्स्नंजगन्निरूपयति पादावित्यादिना दिवंस्वर्लोकं २१ तेजोमयश्चाक्षुषःमनश्चंद्रमसीत्यादावाधाराधेयभावोगंगायांजलमितिवदभेदविवक्षयाज्ञेयः बुद्धिर्महत्तत्त्वंज्ञानगताद्यविरूपज्ञानाकारा रसस्त्वप्सुप्रति ष्ठितः आपोरसनेत्यर्थः २२ अनंतराःसन्निहिताः नेत्राभ्यांनेत्ररश्मिभिर्निर्दिष्टमितिशेषः पादयोःपादावेवभूः २३



रजइति एतेगुणावक्ष्यमाणविषयाषट्प्रकारानारायणाख्यचैतन्याधिष्ठिततयाव्यदात्मनःषड्विधजीवसंज्ञामवेति आश्रमाणामितिसंधिरार्षः कर्मणोजपादेःफलंतत्प्राप्तिरेव सर्वस्यसुकृतस्यफलं सप्तस्वर्गात्मकंसुखमित्यर्थः २४ अकर्मणोनैष्कर्म्यस्यसंन्यासस्यफलंमोक्षः छंदांसिमंत्रादयः अक्षरंप्रणवः २५ बहवोवर्णाआश्रमाश्चाऽऽश्रयोयस्य परमोधर्मआत्मदर्शनं यथोक्तंयाज्ञ वल्क्येन । 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणां ॥ अयंतुपरमोधर्मोयद्योगेनात्मदर्शनं'इति । तपःकृच्छ्रचांद्रायणादि तत्फलमप्ययमेवेत्यर्थः सत्कार्यं असत्कारणं २६ श्रु तिर्मंत्राः शास्त्रंशास्तीतिशास्त्रंप्रवर्तनावाक्यंब्राह्मणं ग्रहाऐंद्रवाय्वाद्याःसोमपात्राणि षोडशऋत्विजः ब्रह्माब्राह्मणाच्छंस्याग्नीध्रःपोताएतेसर्ववेदीयाः । होतामैत्रावरुणोऽच्छावाकोग्रा वस्तोताएतेऋग्वेदिनः । अध्वर्युःप्रतिप्रस्थातानेष्टोन्नेताएतेयाजुषाः । उद्गाताप्रस्तोताप्रतिहर्तासुब्रह्मण्यएतेसामगाः २७ तेऋत्विजःपृथग्दर्शनाअपींद्राग्निर्महेंद्रोऽन्योऽग्निर्वैश्वानरोऽन्यइति शाखेणपृथक्पितामहादीन्कर्मपृथक्त्ववशात्पश्यंतोऽपितस्यैकतांतथाकारणत्वेनसंविदंति तथाचकात्यायनः । कर्मपृथक्त्वाद्धिपृथगभिधानाःस्तुतयोभवंत्येकैवावामहात्मादेवतेति । श्रुति रपि'तद्यदिदमाहुरमुंयजामुंयजेत्येतस्यैवसाविसृष्टिः'इति २८ नानेति अयमितिबुद्धिस्थआम्नायःपरामृश्यते । 'सचैकंसंतंबहुधाकल्पयंति योदेवानांनामधाएकएव'इत्यादिः अनुभवेनैवतज्ज्ञ

रजस्तमश्चसत्त्वंचविद्धिनारायणात्मकम् ॥ सोऽऽश्रमाणांफलंतातकर्मणस्तत्फलंविदुः २४ अकर्मणःफलंचैवसएवपरमव्ययः ॥ छंदांसियस्यरोमाणिह्यक्षरंचस रस्वती २५ बह्वाश्रयोबहुमुखोधर्मोहृदिसमाश्रितः ॥ सब्रह्मपरमोधर्मस्तपश्चसदसच्चसः २६ श्रुतिशास्त्रग्रहोपेतःषोडशर्त्विक्क्रतुश्चसः ॥ पितामहश्चविष्णुश्च सोऽश्विनौसपुरंदरः २७ मित्रोऽथवरुणश्चैवयमोऽथधनदस्तथा ॥ तेपृथग्दर्शनास्तस्यसंविदंतितथैकताम् ॥ एकस्यविद्धिदेवस्यसर्वंजगदिदंवशे २८ नाना भूतस्यदैत्येंद्रतस्यैकत्वंवदत्ययम् ॥ जंतुःपश्यतिविज्ञानात्ततोब्रह्मप्रकाशते २९ संहारविक्षेपसहस्रकोटीस्तिष्ठंतिजीवाःप्रचरंतिचान्ये ॥ प्रजाविसर्गस्यचपा रिमाण्यंवापीसहस्राणिबहूनिदैत्य ३० वाप्यःपुनर्योजनविस्तृतास्ताःक्रोशंचगंभीरतयाऽवगाढाः ॥ आयामतःपंचशताश्चसर्वाःप्रत्येकशोयोजनतःप्रवृद्धाः ३१ वाप्याजलंक्षिप्यतिवालकोट्याक्त्वह्नासकृच्चाप्यथनद्वितीयम् ॥ तासांक्षयेविद्धिपरंविसर्गंसंहारमेकंचतथाप्रजानाम् ३२

नोजानातीत्याह जंतुरिति विज्ञानाद्वृत्त्यासोपाधिकावस्थायांसार्वात्म्यंपश्यति वृत्तिविलयेतुब्रह्माद्वैतं २९ ब्रह्मप्राप्तेरतिदौर्लभ्यमाह संहारेति संहरत्यस्मिन्नविक्षिपत्यस्मिन्नितिव्युत्प त्त्यासंहारविक्षेपशब्दाभ्यांजगल्लयोदयकालःकल्पसंज्ञकउच्यते तस्यसहस्रकोटीः कालाध्वनोरत्यंतसंयोगेइतिद्वितीया तावत्कालपर्यंतंकेचिज्जीवास्तिष्ठंतिस्थावराभूत्वाआसते प्रचरंति जंगमाभवंतिचान्ये । तत्राप्येकैकस्यकल्पस्यातिप्रमाणत्वंमंत्रांतरेणाह प्रजाविसर्गस्येति पारिमाण्यंस्वार्थेतद्धितः बहूनीत्यसंख्येयत्वमुक्तं ३० वापीत्येतद्व्याचष्टे वाप्यइतिद्वाभ्यां योजन विस्तृताः पंचशताइतिवाक्यशेषाद्विस्तारयोजनसंख्याज्ञेया आयामतोदैर्घ्यतोयोजनतःपंचशताइतिसंबंधः शताइतिलिंगव्यत्ययआर्षः । पंचशतंयोजनानीत्यर्थः । अवगाढानास्तिऽ वगाढोऽवगाहोयासांताः दुरवगाहाइत्यर्थः । माधुरिमतेनावेत्युपसर्गस्याकारलोपंकृत्वानञ्समासः अतएवप्रत्येकशःप्रवृद्धाः ३१ वाप्याइति अयमर्थः यदिवालकोट्याकेशाग्रेणैकैकस्मि न्दिवसेएकएकएवबिंदुरुद्ध्रियेतनद्वितीयः तेनक्रमेणैकैकवाप्याउच्छोषणेनबहुसहस्रवाप्युच्छेदःस्याचर्हिसंसारस्यापिविनाज्ञानमुच्छेदःस्यात् । एकस्यमुक्तयैकस्यविसर्गस्यनाशेऽप्यनंताजीवाः संतीतिसर्वथाऽपिसंसारस्यानुच्छेदएव । तथोक्तंभगवता नांतोनचादिर्नचसंप्रतिष्ठेति ३२

एवंमुक्तिदौर्लभ्यायसंसारस्यानंत्यमुक्त्वेदानींरजःसत्वंतमश्चैवविद्धिनारायणात्मकामितिपूर्वोक्तंगुणत्रयंरंजकत्वस्वच्छत्वमलिनत्वसाम्यात्रक्तश्वेतकृष्णशब्दैर्विवक्षित्वातेषांमागभेदेनषड्रूपा णिप्रकल्प्यंते तथाहि । त्रिदंडविष्टंभवद्गुणत्रयमन्योन्यव्यतिरेकेणनतिष्ठति तत्रयदातमसआधिक्यंसत्वरजसोर्न्यूनत्वसमत्वेतदाकृष्णोवर्णः । अंत्ययोर्वैपरीत्येधूम्रः । तथारजसआधि क्येसत्वतमसोर्न्यूनत्वसमत्वेनीलवर्णः । अंत्ययोर्वैपरीत्येमध्यंमध्यमोवर्णः । तच्चरक्तंलोकानांसह्यतरं लोकानांमवृत्तिकुशलानाममूढानांसाहसिकानांसत्वस्याधिक्येरजस्तमसोर्न्यूनत्वस मत्वेहारिद्रःपीतवर्णस्तच्चसुखकरं । अंत्ययोर्वैपरीत्येशुक्लंतच्चात्यंतसुखकरं । ततःकृष्णोमुख्यसर्गःस्थावरश्चतुर्थः धूम्रस्तैर्यग्योन्यःपंचमः पीतोदेवसर्गःषष्ठः नीलोमानुषसर्गःसप्तमः मध्यमो ऽनुग्रहसर्गोऽष्टमः । शुक्लःकौमारसर्गोनवमः । यथोक्तंवैष्णवे 'मुख्यसर्गश्चतुर्थस्तुमुख्यावैस्थावराःस्मृताः ॥ तिर्यक्स्रोतस्तुयःप्रोक्तस्तैर्यग्योन्यःसउच्यते ॥ तदूर्ध्वस्रोतसांषष्ठोदेवसर्गस्तु सस्मृतः ॥ ततोऽर्वाक्स्रोतसांसर्गःसप्तमःसतुमानुषः ॥ मध्यमोऽनुग्रहःसर्गःसात्विकस्तामसश्चसः ॥ पंचैतेवैकृताःसर्गाःप्राकृतास्तुत्रयःस्मृताः ॥ प्राकृतावैकृताश्चैवकौमारोनवमःस्मृतः' ॥ अत्रानुग्रहशब्देनद्वयाहप्राजापत्यादेवाश्चासुराश्चेतिश्रुतिप्रसिद्धाःशमकामादिचेतोवृत्त्यनुग्राहिकादेवताउच्यंतेसचानुग्रहोजातिभेदाद्भिन्नः यथोक्तंवायुपुराणे 'अष्टमोऽनुग्रहःसर्गःसचतुर्धाव्यव स्थितः ॥ विपर्ययेणवाशक्त्यासिद्धयातुष्टयातथैवच ॥ स्थावरेषुविपर्यासस्तिर्यग्योनिषुशक्तितः ॥ सिद्धयात्मनामनुष्येषुतुष्टयादेवेषुकृत्स्नशः'इति ३३ परंत्विति एतेषुसर्गेषुशुक्लःकौमा रसर्गः रागद्वेषराहित्यात् विमलंनिष्पापमतएवविशोकम् विशोकत्वमपिकुतः यतोगतक्लमंप्रवृत्त्याख्यश्रमहीनं सिद्ध्यतिमोक्षंसाधयति । एतच्चात्यंतदुर्लभमित्याह गत्वेति योनि

षड्जीववर्णाःपरमंप्रमाणंकृष्णोधूम्रोनीलमथास्यमध्यम् ॥ रक्तंपुनःसह्यतरंसुखंतुहारिद्रवर्णंसुसुखंचशुक्लम् ३३ परंतुशुक्लंविमलंविशोकंगतक्लमंसिद्ध्यतिदानवें द्र ॥ गत्वातुयोनिप्रभवाणिदैत्यसहस्रशःसिद्धिमुपैतिजीवः ३४ गतिंचयांदर्शनमाहदेवोगत्वाशुभंदर्शनमेवचापि ॥ गतिःपुनर्वर्णकृताप्रजानांवर्णस्तथाकाल कृतोऽसुरेंद्र ३५ शतंसहस्राणिचतुर्दशेहपरागतिर्जीवगुणस्यदैत्य ॥ आरोहणंतत्कृतमेवविद्धिस्थानंतथानिःसरणंचतेषाम् ३६

प्रभवाणिजन्मानिनत्वयोनिजानिवृष्टद्युम्नादिवत् तेषांह्यधिकारिकाणांनेतरवद्योनिजंजन्म गत्वाप्राप्य यथोक्तं । 'मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये ॥ यततामपिसिद्धानांकश्चि न्मांवेत्तितत्त्वतः'इति ३४ यांसिद्धिंजीवउपैतितांव्याचष्टे गतिमिति शुभंदर्शनंसच्छायंगत्वाप्राप्यदेवइंद्रोयांगतिंदर्शनमात्मानुभवात्मिकामाहउक्तवान् सैवशुक्लवर्णभूतासिद्धिरित्यर्थः । तथाचश्रुतिः । 'सएतमेवपुरुषंब्रह्मततममपश्यदिदमदर्शमिति तस्मादिदंद्रोनामेदंद्रोहवैनामतमिदंद्रंसंतमिंद्रइत्याचक्षते'इति । ततमंततममित्येकस्यतकारस्यछांदसोलोपः इदंब्रह्म अदर्शमपश्यं एतेनेदमिहवाक्यंप्रमाणत्वेनदर्शितं । इदमेवान्यत्रापितुल्यमित्याह गतिरिति वर्णःसत्वादितारतम्यं वर्णोऽपिकालकृतः कालःप्रागुक्तश्चतुर्युगात्माजीवोधर्मरतोधर्ममालंबमानो ऽधर्मान्निवृत्तोऽधर्मरतइतिक्रमेणकृतत्रेताद्वापरकलिसंज्ञः तथाचजीवस्यप्राग्भवीयसंस्कारवशाद्यादृशःसत्वाद्याविर्भावस्तादृशीगतिरित्यर्थः ३५ शतमिति सेयंजीवगुणस्यगतिःपरापार्थ तिकीदृशानामिंद्रियाणामंतःकरणचतुष्टयस्यचकरणगणस्यभेदाच्चतुर्दशसंख्याकासवीतावंतिशतानिसहस्राणिशतसहस्राणिलक्षाणिवाविषयभेदाद्भवंति तथाहि विषयभेदाद्वृत्तिभेदंश्रुतिराह 'अयंवैहरयोऽयंवैदशचशतानिचसहस्राणिचप्रभूतानिचेत्यादि' । आरोहणमुपर्युपरिसोपानारोहक्रमेणोर्ध्वंगतिः तैरेवचतुर्दशभिःसत्वतारतम्यप्रधानैःकृतंतत्कृतं स्थानंचतेषुतेषुपदेषुस्थैर्यं तथानिःसरणंतेभ्यःपदेभ्यश्च्युतिः तेषांजीवानांतत्कृतंत्वैव तस्मादेतेषचतुर्दशसात्विकमार्गप्रवणाःकार्याइत्यर्थः ३६ ॥१६२॥

अन्यथादोषमाह कृष्णस्येति कृष्णस्यस्थावरत्वप्रापकस्यवर्णस्यनिकृष्टानीचागतिः यतःसमावीस्थावरोनरकेनरकप्रदेकर्मणिसज्जतेऽतोनरकेपच्यमानएवास्ते । तत्रैवचस्यस्थानंस्थितिः दुर्गतिभिःतैरेवचतुर्दशभिर्दुर्मार्गप्रवृत्तैर्भवति । स्थानावधिमाह सुबहूनिति प्रजाविसर्गान्कल्पान् ३७ सुबहूनित्यस्यव्याख्या शतंसहस्राणिलक्षमित्यर्थः हरितंधूम्रंतिर्यग्योनित्वं अमीशोदीनः शीतवाताद्यर्दितःसर्वतोमृत्युभयदर्शीच युगक्षयेपापभोगक्षयेइदंदेहिवर्णद्वयंकेवलाभोगभूमिरेवाऽतोऽत्रभोगेनक्षपितकलुषस्यदैवात्प्राचीनपुण्योदयेसतिजीवस्तपसाविवेकेनसंवृतात्माव्यात्रचित्तो भूत्वा ३८ सत्वगुणेनयुक्तःसन्बुद्ध्यातमोगुणप्रवृत्तिंदूरीकुर्वन्घटतेयततेश्रेयसेतदासर्वोत्कर्षेसतिलोहितमष्टममनुग्रहसर्गमुपैति शमकामाद्यभिमानिदेवताभावंप्राप्नोतीत्यर्थः । सत्वापकर्षेतु नीलान्नीलत्वंप्राप्यमनुष्यलोकेपरिवर्ततेगतागतंकरोति चकारोवाशब्दस्यार्थे ३९ सनीलत्वंप्राप्तः तत्रमानुषलोके संहारविसर्गंकल्पं बंधनैर्विधिनिषेधनिगडैःक्लिश्यमानस्तपोवृद्धिंकुर्वाणो हारिद्रंपष्ठंसर्गंदेवताभावमुपैति । तत्रापिसंहारविक्षेपशतेकल्पशतेजातेसति व्यतीतेव्यतिगच्छति कर्मव्यतिहारेतङ् गतिकार्थस्यर्थस्यवीधातोरंतःप्रक्षिप्तस्यईवातोव्यतिपूर्वस्येदंरूपं । त थाचदेवोभूत्वामनुष्यत्वमुपैतिमानुषश्चभूत्वादेवत्वमुपैतीत्यर्थः ४० एतदेवाह हारिद्रेत्यादिना देवःसहस्रशःकल्पान्संचरन्नप्यविप्रमुक्तोविषयवियोगहीनोनिरयेचसंवर्तकृतानिकल्पेकल्पेक

कृष्णस्यवर्णस्यगतिर्निकृष्टासससज्जतेनरकेपच्यमानः ॥ स्थानंतथादुर्गतिभिस्तुतस्यप्रजाविसर्गान्सुबहून्वदंति ३७ शतंसहस्राणिततश्चरित्वाप्राप्नोतिवर्णंहरितं तुपश्चात् ॥ सचैवतस्मिन्निवसत्यनीशोयुगक्षयेतपसासंवृतात्मा ३८ सवैयदासत्वगुणेनयुक्तस्तमोव्यपोहन्घटतेस्वबुद्ध्या ॥ सलोहितंवर्णमुपैतिनीलान्मनुष्यलो केपरिवर्ततेच ३९ सतत्रसंहारविसर्गमेकंस्वधर्मजैर्बंधनैःक्लिश्यमानः ॥ ततःसहारिद्रमुपैतिवर्णंसंहारविक्षेपशतेव्यतीते ४० हारिद्रवर्णस्तुप्रजाविसर्गात्सहस्रश स्तिष्ठतिसंचरन्वै ॥ अविप्रमुक्तोनिरयेचदैत्यततःसहस्राणिदशापराणि ४१ गतीःसहस्राणिचपंचतस्यचत्वारिसंवर्तकृतानिचैव ॥ विमुक्तमेनंनिरयाच्च विद्धिसर्वेषुचान्येषुचसंभवेषु ४२ सदेवलोकेविरहत्यभीक्ष्णंततश्च्युतोमानुषतामुपैति ॥ संहारविक्षेपशतानिचाष्टौमर्त्येषुतिष्ठत्यमृतत्वमेति ४३ सोऽस्मादथभ्रश्य तिकालयोगात्कृष्णेतलेतिष्ठतिसर्वकष्टे ॥ यथात्वयंसिध्यतिजीवलोकस्तत्तेऽभिधास्याम्यसुरप्रवीर ४४

तानिफलानिभुंजानोगतीःसंचरंस्तिष्ठतीतिपूर्वेणान्वयः । गतिसंख्यादशपंचचत्वारिचेत्येकोनविंशतिसहस्राणि अयमर्थः । एकोनविंशतिमुखःप्रविविक्तभुगितिश्रुतेः स्वप्नोपमेस्वर्गेपिदशेंद्रिया णिपंचप्राणाःमनआदिचतुष्टयंचेत्येकोनविंशतिर्जाग्रद्वासनामयानिभोगसाधनानिवर्तंतेतान्येवपूर्ववत्तावंतिशतानिसहस्राणिचभवंति । अत्रदिव्योपिभोगोरागहेतुत्वात्पुण्यक्षेपकत्वादनित्यत्वाच्च निरयएवेतिस्वर्गोऽपिनिरयभोगउक्तः । ततश्चैनंनरंनिरयाद्भोगप्रदकर्मणःसकाशाद्विमुक्तंविद्धि स्वर्गोऽपिक्षयवानित्यर्थः । अन्येष्वपिसंभवेषुस्थावरतैर्यग्योन्यादिषुमानुषवर्ज्येषु तस्मात्ति र्यक्सर्गवद्देवसर्गोऽपिभोगभूमिरवाद्धेयएवेतिभावः ४१ । ४२ व्यतीतेइत्यस्यार्थंस्पष्टयति सइति देवामानुषत्वंमानुषाश्चदेवत्वंभजंतइत्यर्थः । अमृतत्वं अष्टौपूर्वोक्तानिश्रोत्रत्वक्चक्षु र्जिह्वाघ्राणचित्तमनोबुद्ध्याख्यानिज्ञानेंद्रियाणि दृष्टिसृष्टिमाश्रित्यतान्येवस्वस्वविषयलयोदयकारणानीतिविषयभेदात्तान्येवशतानिसहस्राणिवालयोदयान्मर्त्येषुयस्तिष्ठतिसउपैतीत्यन्वयः ४३ सोऽस्मात्संकल्पकृतालयोदयप्रवाहात्कालःकलिरूपस्तद्योगाच्चप्रभ्रश्यकृष्णेतलेतलवदधोगतेसर्वकष्टेसर्वेभ्योनीचेस्थावरेतिष्ठति । अयमारोहावरोहप्रवाहपतितःसिद्ध्यतिमुच्यते ४४

भक्त्युपायमेवाह दैवानीति समुमुक्षुःसप्तव्यूहशतानिदैवानिसंश्रित्यरक्तादिक्रमेणांतेशुक्लःएवसवरांल्लोकान्संधावतीतिसंबंधः । एकस्यानेकधाभावोव्यूहः बुद्धेःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोबुद्धिरूपेणसप्तधाभूतायास्तत्तदिंद्रियवृत्तिभेदात्व्यूहानांशतानिसहस्राणिवापूर्ववद्भवंति । तत्रदैवानिसात्विकानिशमदमादीन्येवसंश्रित्यप्रथमंरक्तःशमाद्यभिमानिदेवतारूपोऽस्यंतंशमादिमान्भवति । ततोहारिद्रोदैवस्ततःशुक्लःकौमारोबालवद्रागद्वेषशून्योभवति ततअष्टावरान् अष्टौपुर्यःअवराअनुत्कृष्टाःपश्चाद्भूतावायेषुतान्सगुणात्मरूपान्लोकान् अर्च्यतमान्धूमादिमार्गंप्राप्यचंद्रलोकादर्च्यादर्च्यतरोर्चिरादिमार्गंप्राप्योब्रह्मलोकस्ततोऽप्यर्च्यतमान् । ज्ञानैकप्राप्यलोकान्योगफलभूतान् । तस्याभिध्यानात्तृतीयंदेहभेदेविश्वैश्वर्यंकेवलआप्तकामइत्यादिश्रुतिप्रसिद्धंतृतीयमैश्वर्यंप्राप्नोतीत्यर्थः ४५ अष्टावरानित्येतद्व्याचष्टे अष्टाविति शतशब्दार्थःप्राग्वत् अयमर्थः सप्तांगएकोनविंशतिमुखइतिजाग्रत्स्वप्नयोस्तुल्यवच्छ्रवणात्सप्तजाग्रदवस्थापंचभूतात्मकःस्थूलदेहःशब्दादिपंचकंचाऽत्यद्रष्टुरंगभिवांगंस्वरूपमृतमप्यविद्यादर्पणेनमुखवत्पराक्त्वंप्रापितस्यसतःप्राप्तयेएकोनविंशतिर्दशेंद्रियाणिप्राणपंचकंमनोबुद्ध्यहंकारचित्तचतुष्टयंचेतिमुखानीवप्राप्तिद्वाराणि । अविद्याकामकर्मात्मकस्त्रिशकःसंघातोजाग्रत्स्वप्नेऽपितुल्यइतियाप्यष्टावुक्तानिताप्येवषष्टिशतानीतियोजना । यदात्वविद्यादित्रयंत्रिंशकात्पृथग्गण्यतेतदाऽपिसर्वेषामाद्यस्याषष्टयष्टिः । सुषुप्तौचआनंदभुक्चेतोमुखइतिश्रुतेर्भोग्यआनंदोभोगसाधनंचेतिद्वयंचेत्यष्टषष्टिस्तदाऽत्वृत्तवरएवार्थः । एतानिमहाद्युतीनांपूर्णप्रकाशानामात्मविदांमनोवि

दैवानिसव्यूहशतानिसप्तरक्तोहरिद्रोऽथतथैवशुक्लः ॥ संश्रित्यसंधावतिशुक्लमेतमष्टावरानर्च्यतमान्सलोकान् ४५
अष्टौचषष्टिंचशतानिचैवमनोविरुद्धानिमहाद्युतीनाम् ॥ शुक्लस्यवर्णस्यपरागतिर्यात्रीण्येवरुद्धानिमहानुभाव ४६
संहारविक्षेपमनिष्टमेकंचत्वारिचान्यानिवसत्यनीशः ॥ षष्ठस्यवर्णस्यपरागतिर्यासिद्धाविसिद्धस्यगतक्लमस्य ४७
सप्तोत्तरंतत्रवसत्यनीशःसंहारविक्षेपशतंसशेषम् ॥ तस्मादुपावृत्यमनुष्यलोकेततोमहान्मानुषतामुपैति ४८

रुद्धाभिमनसैवविशेषेणरुद्धानि । मूढदृष्ट्यापृथग्भूतान्यपिविदुषांमनोमात्राण्येवेत्यर्थः । सेयंशुक्लस्यवर्णस्यगतिःसंक्षेपेण । त्रीणिजाग्रत्स्वप्नसुषुप्त्याख्यानिरुद्धानिचेच्छिवमद्वैतंचतुर्थंमन्यंते सआत्मासविज्ञेयइतिश्रुतिप्रसिद्धस्यतुर्यस्यप्राप्तिः । एवशब्देनत्रयरोधात्मिकैवतुर्यप्राप्तिस्तुर्यस्यप्रत्यक्त्वेनाप्राप्यत्वात् ४६ एवंविदोजीवन्मुक्तस्यापिप्रारब्धकर्मभोगस्यापरिहार्यत्वमाह संहारेति एकंसंहारविक्षेपशतमनिष्टंवसतीति एकंभोगायारब्धंजन्मदृष्टिसृष्टचभिप्रायेणलयोदयशतात्मकमिहदेहेवसतीत्यध्याहृत्ययोज्यं । अस्येवयोगिनःक्रममुक्तिमाह चत्वारीति । अनीशोयोगैश्वर्योपस्थापितान्दिव्यान्भोगांस्त्यक्तुमसमर्थोयोग्यन्यानिचत्वारिमहर्जनस्तपःसत्यलोकाख्यानियोगबलतारतम्येनैश्वर्यतारतम्यवंतिक्रममुक्तिस्थानानिवसत्यधिवसति । वासेनिमित्तमाह षष्ठस्येति यागतिःसत्त्वशुद्ध्यात्मिकातस्याःसिद्धावप्यसिद्धस्यशुद्धब्रह्मसाक्षात्कारेणजीवन्मुक्ततामप्राप्तस्यगतक्लमस्यनष्टरागादिदोषस्य । योगविद्धोऽपिब्रह्मात्मैक्यज्ञानात्क्रममुक्तिमाग्भवतीत्यर्थः ४७ योगभ्रष्टगतिमाह सप्तेति अनीशःसम्यग्योगमनुष्ठातुमशक्तः तत्रपरोक्षत्वेननिर्दिष्टेस्वर्गलोके सप्तपूर्वोक्तानिश्रोत्रादिपंचकंमनोबुद्धीचतान्युत्तराणिसत्वोत्कर्षबलेनोत्कृष्टानियस्मिन्तादृशंसंहारविक्षेपशतंसशेषंकर्मशेषसहितं । श्रेयब्रह्मसाक्षात्कारेहि'तद्यथैषीकातूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानःप्रदूयंते'इति निःशेषपापदाहश्रुतेस्ततःप्रागारब्धयोगस्ययोगिनःकर्मशेषमस्तीतिद्युक्तंशुद्धकर्मासन्योगीप्राग्योगसिद्धेर्मृतश्चेद्भुवोलोकंस्वर्लोकंचगच्छतीत्यर्थः । ततश्चवानुषंजन्मप्राप्यमहाव्कुलशीलविद्यादिनापूज्योभवति ४८ ॥१६३॥

तस्मान्मानुषाद्भावादुपावृत्यनिष्क्रम्याग्रेउत्तरमुत्तरंभूतसर्गंप्रतिगंतुंसंतिष्ठतिप्रस्थानंकरोति पूर्वाभ्यासवशादुत्तरोत्तरांयोगभूमिकामारोहतीत्यर्थः । सएवंप्रतिष्ठमानःसप्तकृत्वःसप्तवारंलोकान्परैतिपर्यटतिसंहारविक्षेपयोःसमाधिव्युत्थानाभ्यांकृतसंवादितःप्रभावएश्वर्ययेनसः अयमर्थः । प्रथमांभूमिमारूढोयोगीमृतःस्वर्गंप्राप्यततश्च्युतःसार्वभौमोराजाभवति एवंसोऽयंभूर्लोकजयः । एवमुत्तरोत्तरयोगवलाद्बृद्ध्याउत्तरमुत्तरंलोकंजयति । अंतेब्रह्मलोकंसप्तमंप्राप्यापिपुनरावर्ततेयदिध्येयवस्तुन्यहंब्रह्मेत्यहंनकुर्वीत तंकुर्वंस्तुब्रह्मणासहैवमुच्यते तत्रप्रमाणानि । 'प्राप्यपुण्यकृतांल्लोकानुषित्वाशाश्वतीःसमाः ॥ शुचीनांश्रीमतांगेहेयोगभ्रष्टोऽभिजायते ॥ तत्रतंबुद्धिसंयोगंलभतेपौर्वदेहिकं ॥ यततेचततोभूयःसंसिद्धौकुरुनंदन'इतिगीता । 'आब्रह्मभुवनाल्लोकाःपुनरावर्तिनोऽर्जुन'इतिच । 'ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदं'इतिच ४९ सप्तेति एवशब्दोभिन्नक्रमः संहारमितिणमुलंतं सप्तभूरादिसत्यलोकांतांल्लोकान्मनोबुद्धिसहितानिज्ञानेंद्रियाणिवासंहृत्यैवबोधेनबाधित्वाजीवलोकेसंतिष्ठतिसम्यक्मोहशोकाभावादास्ते । संहारेबीजमुपप्लवानिसंभाव्यतेयावुद्ध्यादीनांभूरादीनांवादुःखरूपत्वंनिश्चित्यततोदेहांतेअव्ययमपरिणामिस्थानमतएवानंतंत्रिविधपरिच्छेदशून्यंशुद्धंब्रह्मप्रतिप्राप्नोति । तत्स्थानंकेचिद्देवस्यमहादेवस्यसंबंधिकैलासमितिवदंतिशांभवाः । विष्णोर्वैकुंठमि

तस्मादुपावृत्यततःक्रमेणसोग्रेणसंतिष्ठतिभूतसर्गम् ॥ ससप्तकृत्वश्चपरैतिलोकान्संहारविक्षेपकृतप्रभावः ४९ सप्तैवसंहारमुपप्लवानिसंभाव्यसंतिष्ठतिजीवलोके ॥ ततोऽव्ययंस्थानमनंतमेतिदेवस्यविष्णोरथब्रह्मणश्च ॥ शेषस्यचैवाथनरस्यचैवदेवस्यविष्णोःपरमस्यचैव ५० संहारकालेपरिदग्धकायाब्रह्माणमायांतिसदाप्रजाहि ॥ चेष्टात्मनोदेवगणाश्चसर्वेयेब्रह्मलोकादपराःस्मतेऽपि ५१ प्रजाविसर्गंतुसशेषकालेस्थानानिस्वान्येवसरंतिजीवाः ॥ निःशेषतस्तत्पदंयांतिचांतेसर्वेदेवायेसदृशामनुष्याः ५२ येतुच्युताःसिद्धलोकात्क्रमेणतेषांगतिंयांतियथानुपूर्व्या ॥
जीवाःपरेतद्बलतुल्यरूपाःस्वंस्वंविधिंयांतिविपर्ययेण ५३

तिवैष्णवाः । ब्रह्मणोब्रह्मलोकइतिहैरण्यगर्भाः । शेषस्याऽनंतस्येतितद्भक्ताः । नरस्यजीवस्यैवतत्परंस्थानमितिसांख्याः । देवस्यद्योतमानस्यचिन्मात्रस्यविष्णोर्व्यापकस्यपरब्रह्मणस्तुर्यमूर्तिस्वरूपस्यपरमस्येतितद्विष्णोःपरमंपदमितिश्रुतिप्रसिद्धमित्यौपनिषदाः ५० एवंशब्दजान्विकल्पान्मोक्षेउपन्यस्यसर्ववादिसंमतंवस्तुवृत्तमाह संहारेति परितःसर्वात्मनादग्धबोधेनभस्मीकृताःकायाःस्थूलसूक्ष्मकारणदेहायाभिस्ताः प्रजाब्रह्माणंब्रह्म पुंस्त्वमार्षं देवगणाइंद्रियाणि येब्रह्मस्वरूपाल्लोकादपराअर्वाचीनाःप्रकृत्यादयस्तेऽपिपरिदग्धकायाःसंहारकालेमोक्षेब्रह्मप्राप्नुवंति ५१ एवमात्मबोधजमात्यंतिकंप्रलयमुक्त्वाऽवांतरप्रलयमाह प्रजेति प्रलयकालेआसन्नतरेयेदेवत्वंप्राप्ताअमुक्तकृत्स्नकर्मफलास्तेपूर्वकल्पार्जितानिस्वानिस्थानानिकल्पांतरेऽपिसरंतिलभंते । सर्वेषांकल्पानांपूर्वपूर्वकल्पसादृश्यात् । 'सूर्याचंद्रमसौधातायथापूर्वमकल्पयत्'इतिश्रुतेश्च । येत्वंतेकल्पांतेनिःशेषतःनिःशेषितकालास्तेस्वर्गनाशेइतरवन्मनुष्यत्वमेवयांतीत्यर्थः । प्रलयशतेनापिकृतंकर्मनेनश्यतितत्त्वज्ञानमंतरेणेतिभावः ५२ विषमदृष्टंपुण्यपापंतत्फलंयांतिप्राप्नुवंति एकस्मिन्नपिकल्पेअसकृदारोहावरोहौवर्ततेऽतःसंसारभीरुणातत्त्वज्ञानमेवाश्रयणीयमितिभावः ५३

एवंसपरिकरांब्रह्मविद्यामुक्त्वातद्वतोदृष्टिमाह सइति सब्रह्मवित् यावत्सशेषभुक् शेषंप्रारब्धकर्मतदपरित्यज्यभुंक्तेइतिसशेषभुगस्ति । तावत्तदंगेषुतत्स्वरूपेएवप्रजाःसर्वास्तेशुक्रेदेव्यौपराव रविद्येचवर्ततेइतिशेषः । ब्रह्मविदोविशुद्धकैवल्यावधिकस्त्वंजगदस्तितदनंतरंनास्तीत्यर्थः । अत्रकिंमानमतआह विशुद्धभावोयोगसंशोधितचित्तोभूत्वासंयम्यधारणाध्यानसमाध्यात्मकं संयममनुष्ठाय एतत्परिदृश्यमानंवियदादिपंचेंद्रियरूपमित्येवविद्धीतिशेषः । तथाहिप्राणेभ्योदेवादेवेभ्योलोकाइतींद्रियेभ्यःसाक्षात्परंपरयाचदेवानांलोकानांचसृष्टिःश्रूयते । स्वप्नमायेंद्र जालवदुपपद्यतेचैतज्जगतःप्रतिभासमात्रत्वमित्युपपादितमवस्तात् ५४ उपसंहरति शुद्धामिति शुद्धांनिरवद्यांपरमांगतिंशुद्धचिन्मात्रमावंशुद्धेनमनसाविचिन्वन्श्रवणमननध्यानाभ्यासैर्ज्ञा तुमिच्छन्परेतिप्रेतजालंपराहत्यप्रतिप्राप्नोति । ततोब्रह्मसाक्षात्कारानंतरमव्ययंस्थानंमोक्षमुपैति । प्रागवरप्राप्यत्वमस्त्वित्यतआह ब्रह्म नहित्रिविधपरिच्छेदशून्यस्यगगनस्येवप्राप्यत्वं संभवति । अथापिदुष्प्रापमविद्यादिनाव्यवधानात् शाश्वतंनित्यंप्राप्तमप्यभ्येतिकंठगतचामीकरवदित्यर्थः । तथाचश्रुतयो 'ब्रह्मवाइदमग्रआसीत्तदाऽऽत्मानमेवावेदहंब्रह्मास्मीति ब्रह्मैवस

सयावदेवास्तिसशेषभुक्तेप्रजाश्चदेव्यौचतथैवशुक्रे ॥ तावत्तदंगेषुविशुद्धभावःसंयम्यपंचेंद्रियरूपमेतत् ५४ शुद्धांगतिंतांपरमांपरैतिशुद्धेननित्यंमनसाविचि न्वन् ॥ ततोऽव्ययंस्थानमुपैतिब्रह्मदुष्प्रापमभ्येतिसशाश्वतंवै ५५ इत्येतदाख्यातमहीनसत्वनारायणस्येहबलंमयाते ५६ ॥ ॥ वृत्रउवाच ॥ एवं गतेमेनविषादोऽस्तिकश्चित्सम्यक्चपश्यामिवचस्तथैतत् ॥ श्रुत्वातुतेवाचमदीनसत्वविकल्मषोऽस्म्यद्यतथाविपाप्मा ५७ प्रवृत्तमेतद्भगवन्महर्षेमहाद्युते श्चक्रमनंतवीर्यम् ॥ विष्णोरनंतस्यसनातनंतत्स्थानंसर्गायत्रसर्वप्रवृत्ताः ॥ सवैमहात्मापुरुषोत्तमोवैतस्मिन्जगत्सर्वमिदंप्रतिष्ठितम् ५८ ॥ ॥ भीष्म उवाच ॥ एवमुक्त्वासकौंतेयवृत्रःप्राणानवासृजत् ॥ योजयित्वातथाऽऽत्मानंपरंस्थानमवाप्तवान् ५९ ॥ ॥ युधिष्ठिरउवाच ॥ अयंसभगवान्देवः पितामहजनार्दनः ॥ सनत्कुमारोवृत्राययत्तदाख्यातवान्पुरा ६० ॥ ॥ भीष्मउवाच ॥ मूलस्थायीमहादेवोभगवान्स्वेनतेजसा ॥ तत्स्थःसृजति तान्भावान्नानारूपान्महामनाः ६१

न्ब्रह्माप्येतितत्स्वयमस्त्ययमात्माब्रह्म'इत्यादयःसिद्धवद्ब्रह्मभावंजीवस्योपदिशंति ५५ अहीनसत्व ५६ एवमुक्तप्रकारेणगतेजगतोमनोमात्रत्वेस्थितेसति वचोवचोर्थब्रह्माद्वैतं विकल्मषोनिरवद्यः विपाप्माशोकमोहहीनः ५७ श्रुतंविष्णुमाहात्म्यमनुसंधत्ते प्रवृत्तमितिसार्धेन ५८ एवमिति इंद्रेणसहयुध्यन् अंतकालेप्रवृत्तमेतदित्यादिसार्धश्लोकेनविष्णुमनुसंधायाऽऽत्मानंब्रह्मणियोज यित्वा ५९ अयंसइतिपुरोवर्तिनंकृष्णमंगुल्यानिर्दिशति श्रीकृष्णएवसर्वशास्त्रप्रतिपाद्यइत्यर्थः ६० राजवन्मूर्तिमांस्तत्त्वदृश्यईश्वरइतियुधिष्ठिरस्यभ्रमोमाभूदितिभीष्मउवाच मूलेति मू लमधिष्ठानंतद्वन्निर्विकारेणरूपेणतिष्ठतीतिमूलस्थायी । योऽधिष्ठानचिद्रूपःसमहादेवोमहान्चिदात्मामायानिष्कृष्टोमूलस्थानीयःप्रथमःसएवमायाशबलोभगवान्षड्विधैश्वर्यवान्कारणात्माभवति । बीजस्थानीयश्चिदचिन्मयात्माद्वितीयःसोऽपिस्वेनस्वकीयेनतेजसोपलक्षितस्तैजसाख्यकार्यब्रह्मतांप्राप्तस्तृतीयोवृक्षस्थानीयोभवतितत्स्थस्तस्मिन्ब्रह्मांडरूपेकार्यंतिष्ठन्नयंश्रीकृष्णोऽनेकबीजग र्भफलस्थानीयश्चतुर्थः । तान्भावान्कार्यकारणरूपान्वृक्षबीजाभावान्सृजति । महामनाःमहत्परिच्छेदाभिमानशून्यंसत्यसंकल्पादिगुणकंमनोयस्यसतथा ६१



अस्यरूपमाह तुरीयेति तस्यमूलस्थायिनश्चिन्मात्रस्यतुरीयार्धेनाऽष्टमांशेननिष्पन्नमिमंमूर्तिमंतंकेशवंविद्धि । अच्युतमितिमूर्तिमतएवयावदविद्यंनित्यत्वमुक्तं तथाहि । मूलस्थायिपूर्णंचै तन्यंभगवतिमायांशस्यसमप्राधान्यादर्धम् । तैजसेस्वाविद्यकेसमष्टिकार्येबीजांशस्यार्धस्यैवसत्वात्तुरीयांशश्चैतन्यस्यास्ति । व्यष्टिकार्येतुपरिच्छिन्नेदेहाद्यभेदाभिमानादष्टमांशश्चैतन्यस्या स्ति । तदिदमुक्तंतुरीयार्धेनतस्येमंविद्धीति । नन्वेवमस्मदादितुल्यएवायमितितमुद्दिश्याऽयंसभगवानितियुधिष्ठिरोक्तिरयुक्ता । उपाध्यंशाविवक्षायांत्वस्माकमपितथात्वमस्तीत्याशं क्याह तुरीयार्धेनेति पूर्वोक्तरीत्याकृष्णेपक्वफलामेईशादिस्रष्टृत्वंयुक्तमपक्वफलामेष्वस्मासुत्वनीशत्वंस्फुटमितिनतेनसहास्माकंसाम्यप्रसंगः ६२ एतदेवकार्यकारणयोर्लयप्रतिपादनेनद्रढ यति अर्वागितिसार्धेन अर्वाक्स्थितःस्थायीसमष्टिकार्यात्मावृतीयोऽस्मदादिशरीरापेक्षयानित्योऽपिकल्पांतेपरिवर्ततेनश्यतीत्यर्थः । यस्तुभगवान्द्वितीयोऽतिबलोऽनेकब्रह्मांडलयोद यबीजभूतःप्रभुरंतर्यामीसोऽपिअप्स्वापइवाप्स्वतासु । सलिलएकोद्रष्टाऽद्वैतोभवतीतिश्रुत्यापरावरवर्जितसलिलात्मत्वेननिरूपितेअखंडैकरसेब्रह्मणिशेतेलीयते । ईश्वरस्यास्यानित्यत्वंव्य वहारापेक्षयैवोच्यतेनतुपरमार्थतइतिनतल्लयोक्तिरसंगता । तानित्यनुवाद्यमप्शब्दमपेक्ष्यबहुत्वंविधेयलोकापेक्षंपुंस्त्वंच तमखंडैकरसंलोकमात्मानंशाश्वतंनित्यप्राप्तमेवविधाताचतुर्मुखःप्रसन्ना त्माशुद्धचित्तःसन्नविद्यापनयमात्रेणचरतिगच्छतिप्राप्नोति ब्रह्मादीनांचैतन्नानामात्रितदेवलपस्थानमित्यर्थः ६३ सोयमनंतःपरमात्मासर्वाणिकारणानिचाशून्यानिस्वसत्तास्फूर्तिप्रदानेनपूर्णा

तुरीयार्धेनतस्येमंविद्धिकेशवमच्युतम् ॥ तुरीयार्धेनलोकांस्त्रीन्भावयत्येवबुद्धिमान् ६२ अर्वाक्स्थितस्तुयःस्थायीकल्पांतेपरिवर्तते ॥ सशेतेभगवानप्सुयो ऽसावतिबलःप्रभुः ॥ तान्विधाताप्रसन्नात्मालोकांश्चरतिशाश्वतान् ६३ सर्वाण्यशून्यानिकरोत्यनंतःसनातनःसंचरतेचलोकान् ॥ सचानिरुद्धःसृजतेमहात्मा तत्स्थंजगत्सर्वमिदंविचित्रम् ६४ ॥ युधिष्ठिरउवाच ॥ वृत्रेणपरमार्थज्ञदृष्टामन्येऽत्मनोगतिः ॥ शुभातस्मात्ससुखितोनशोचतिपितामह ६५ शुक्रःशुक्राभि जातीयःसाध्योनावर्ततेऽनघ ॥ तिर्यग्गतेश्चनिर्मुक्तोनिरयाच्चपितामह ६६ हारिद्रवर्णेरक्तेवावर्तमानस्तुपार्थिव ॥ तिर्यगेवानुपश्येतकर्मभिस्तामसैर्वृतः ६७ वयंतुभृशमापन्नारक्तादुःखसुखेसुखे ॥ कांगतिंप्रतिपत्स्यामोनीलांकृष्णाधमामथ ६८

निकरोति । सनातनःसर्वदैकरूपोऽपिमायिकउपाधिविशिष्टेनरूपेणश्रीकृष्णात्मनालोकान्संचरते । सचैवंभूतोऽप्यस्मदादिवदुपाधिधर्मेणमनिरुध्यतेऽतोऽनिरुद्धोऽहंकारःसन्जगत्सृजते म हात्मासर्वाधारत्वयोग्यः तथाचश्रुतिः । 'अस्मान्मायीसृजतेविश्वमेतत्तस्मिंश्चान्योमाययासन्निरुद्धः'इतिस्रष्टुर्मायासन्निरुद्धादन्यत्वमाह तत्स्थंबीजेतरुरिवफलेबीजानीवपरमात्मनिकृष्णेसर्वं जगदस्ति तथाचश्रुतिः । 'हिरण्यश्मश्रुर्हिरण्यकेशः'इति । विग्रहवर्णवंतमीश्वरमुपदिश्यइयमेवर्गाप्तिः सामेत्युक्सामात्मनानिरूपितंप्रपंचंतस्यसामर्क्ष्णेणावितितदंगुलिपर्वत्वेननिर्दिश ति अतस्तस्यस्थंजगत्तंगातरंगन्यायेनयुक्तम् ६४ एवंब्रह्मविद्यांश्रुत्वातत्रस्वस्याधिकारोऽस्तिनास्तिवेतिसंदिहानःपृच्छति वृत्रेणेति त्मनःआत्मनः तस्मादात्मगतिदर्शनात् ६५ शुक्रा भिजातीयःशुक्लवंश्यः साध्यःसाध्यसंज्ञकोदेवइतिनावर्तते ६६ हारिद्रवर्णेसत्वाधिक्येतमःसाम्येरजसोल्पत्वेचषष्ठेदेवतासर्गेऽस्के तथारक्तेरजसआधिक्येसत्वस्यसाम्येतमसोन्यूनत्वेचमध्यमेऽनु ग्रहसर्गेचवर्तमानः । तमोरजसोःसाम्यात्कदाचिदावरणस्यप्रवृत्तेर्वाउद्रेकःस्यात्तेनततस्तिर्यगादिसंभाव्यते ६७ वयंतुहारिद्राश्चयुताःकेवलरजःप्रधानेरक्तेवर्तमानानीलामानुषींवाकृष्णांततो ऽप्यधमांतिर्यग्गतिंवा । कृष्णयासहितामधमांकृष्णाधमाम् ६८

एवंमीतंयुधिष्ठिरमाश्वासयति शुद्धेति हेपांडवायूयंसंपन्नाःस्थ ६९ सिद्धसंख्यांसिद्धेषुगणनाम् ७० ॥ इति शांति०मो०नी०भा०अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥ ॥ अहोइत १

॥ भीष्मउवाच ॥ शुद्धाभिजनसंपन्नाःपांडवाःसंशितव्रताः ॥ विहृत्यदेवलोकेषुपुनर्मानुषमेष्यथ ६९ प्रजाविसर्गेचसुखेनकालेप्रत्येत्यदेवेषुसुखानिभुक्त्वा ॥ सुखेनसंयास्यथसिद्धसंख्यांमावोभयंभूद्विमलाःस्थसर्वे ७० ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणि मोक्षधर्मपर्वणि वृत्रगीतासुअशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥ ॥ युधिष्ठिरउवाच ॥ अहोधर्मिष्ठतातातवृत्रस्यामिततेजसः ॥ यस्यविज्ञानमतुलंविष्णोर्भक्तिश्चतादृशी १ दुर्विज्ञेयंपदंतातविष्णोरमिततेजसः ॥ कथंवाराजशार्दूलपदंतुज्ञातवानसौ २ भवताकथितंह्येतच्छ्रद्दधेचाहमच्युतम् ॥ भूयस्तुमेसमुत्पन्नाबुद्धिरव्यक्तदर्शनात् ३ कथंविनिहतोवृत्रःशक्रेण पुरुषर्षभ ॥ धार्मिकोविष्णुभक्तश्चतत्त्वज्ञश्चपदान्वये ४ एतन्मेसंशयंब्रूहिपृच्छतेभरतर्षभ ॥ वृत्रस्तुराजशार्दूलयथाशक्रेणनिर्जितः ५ यथाचैवाभवद्युद्धंतच्चाचक्ष्वपितामह ॥ विस्तरेणमहाबाहोपरंकौतूहलंहिमे ६ ॥ भीष्मउवाच ॥ रथेनेंद्रःप्रयातोवैसार्धंदेवगणैःपुरा ॥ ददर्शाथाग्रतोवृत्रंधिष्ठितंपर्वतोपमम् ७ योजनानांशतान्यूर्ध्वंपंचोच्छ्रितमरिंदम ॥ शतानिविस्तरेणाथत्रीण्येवाभ्यधिकानिवै ८ तत्प्रेक्ष्यतादृशंरूपंत्रैलोक्येनापिदुर्जयम् ॥ वृत्रस्यदेवाःसंत्रस्तानशांतिमुपलेभिरे ९ शक्रस्यतुतदाराजन्नूरुस्तंभोव्यजायत ॥ भयाद्वृत्रस्यसहसादृष्ट्वातद्रूपमुत्तमम् १० ततोनादःसमभवद्वादित्राणांचनिःस्वनः ॥ देवासुराणांसर्वेषांतस्मिन्युद्धेह्युपस्थिते ११ अथवृत्रस्यकौरव्यदृष्ट्वाशक्रमवस्थितम् ॥ नसंभ्रमोनभीःकाचिदास्थावासमजायत १२ ततःसमभवद्युद्धंत्रैलोक्यस्यभयंकरम् ॥ शक्रस्यचसुरेंद्रस्यवृत्रस्यचमहात्मनः १३ असिभिःपट्टिशैःशूलैःशक्तितोमरमुद्गरैः॥ शिलाभिर्विविधाभिश्चकार्मुकैश्चमहास्वनैः १४ शस्त्रैश्चविविधैर्दिव्यैःपावकोल्काभिरेवच ॥ देवासुरैस्ततःसैन्यैःसर्वमासीत्समाकुलम् १५ पितामहपुरोगाश्चसर्वेदेवगणास्तथा ॥ ऋषयश्चमहाभागास्तद्युद्धंद्रष्टुमागमन् १६ विमानाग्र्यैर्महाराजसिद्धाश्चभरतर्षभ ॥ गंधर्वाश्चविमानाग्र्यैरप्सरोभिःसमागमन् १७ ततोंतरिक्षमावृत्यवृत्रोधर्मभृतांवरः ॥ अश्मवर्षेणदेवेंद्रंसमाकिरदतिद्रुतम् १८ ततोदेवगणाःक्रुद्धाःसर्वतःशरवृष्टिभिः॥ अश्मवर्षमपोहंतवृत्रप्रेरितमाहवे १९ वृत्रस्तुकुरुशार्दूलमहामायोमहाबलः॥ मोहयामासदेवेंद्रंमायायुद्धेनसर्वशः२० तस्यवृत्रार्दितस्याथमोहआसीच्छतक्रतोः ॥ रथंतरेणतंवृत्रवसिष्ठःसमबोधयत् २१ ॥ वसिष्ठउवाच ॥ देवश्रेष्ठोऽसिदेवेंद्रदैत्यासुरनिबर्हण ॥ त्रैलोक्यबलसंयुक्तःकस्माच्छक्रविषीदसि २२ एषब्रह्माचविष्णुश्चशिवश्चैवजगत्पतिः ॥ सोमश्चभगवान्देवःसर्वेचपरमर्षयः२३ माकार्षीःकश्मलंशक्रकश्चिदेवेतरोयथा ॥ आर्यायुद्धेमतिंकृत्वाजहिशत्रून्सुराधिप२४

पदंस्थानं पदंपदनीयम् २ वृत्रवधख्यापकेस्ववद्वसिष्ठद्वाचवैष्णवस्यवृत्रस्यवधानर्हत्वंचेतिविरुद्धकोटिद्वयेनव्यक्तंस्पष्टमन्यत्तरकोटिनिश्चयाकंदर्शनंव्यक्तदर्शनंतदभावाद्व्यक्तदर्शनाद् ३ पदान्वयेव्यक्तदर्शनेवेदांतवाक्यार्थविचारे ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४



२५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकाशीत्य

एषलोकगुरुस्त्र्यक्षःसर्वलोकनमस्कृतः ॥ निरीक्षतेत्वांभगवांस्त्यजमोहंसुराधिप २५ एतेब्रह्मर्षयश्चैवबृहस्पतिपुरोगमाः ॥ स्तवेनशक्रदिव्येनस्तुवंतित्वांजयायवै २६ ॥ भीष्मउवाच ॥ एवंसंबोध्यमानस्यवसिष्ठेनमहात्मना ॥ अतीववासवस्यासीद्बलमुत्तमतेजसः २७ ततोबुद्धिमुपागम्यभगवान्पाकशासनः ॥ योगेनमहतायुक्तस्तांमायांव्यपकर्षत २८ ततोंगिरसुतःश्रीमांस्तेचैवसुमहर्षयः ॥ दृष्ट्वावृत्रस्यविक्रांतमुपागम्यमहेश्वरम् २९ ऊचुर्वृत्रविनाशार्थंलोकानांहितकाम्यया ॥ ततोभगवतस्तेजोज्वरोभूत्वाजगत्पतेः ३० समाविशत्तदारौद्रोवृत्रंलोकपतिंतदा ॥ विष्णुश्चभगवान्देवःसर्वलोकाभिपूजितः ३१ ऐंद्रंसमाविशद्वज्रंलोकसंरक्षणेरतः ॥ ततोबृहस्पतिर्धीमानुपागम्यशतक्रतुम् ॥ वसिष्ठश्चमहातेजाःसर्वेचपरमर्षयः ३२ तेसमासाद्यवरदंवासवंलोकपूजितम् ॥ ऊचुरेकाग्रमनसोजहिवृत्रमितिप्रभो ३३ ॥ महेश्वरउवाच ॥ एषवृत्रोमहान्शक्रबलेनमहतावृतः ॥ विश्वात्मासर्वगश्चैवबहुमायश्चविश्रुतः ३४ तदेनमसुरश्रेष्ठंत्रैलोक्येनापिदुर्जयम् ॥ जहित्वंयोगमास्थायमावमंस्थाःसुरेश्वर ३५ अनेनहितपस्तप्तंबलार्थममराधिप ॥ षष्टिंवर्षसहस्राणिब्रह्माचास्मैवरंददौ ३६ महत्त्वंयोगिनांचैवमहामायत्वमेवच ॥ महाबलत्वंचतथातेजश्चाग्र्यंसुरेश्वर ३७ एतत्त्वांमामकंतेजःसमाविशतिवासव ॥ व्यग्रमेनंत्वमप्येनंवज्रेणजहिदानवम् ३८ ॥ शक्रउवाच ॥ भगवंस्त्वत्प्रसादेनदितिजंसुदुरासदम् ॥ वज्रेणनिहनिष्यामिपश्यतस्तेसुरर्षभ ३९ ॥ भीष्मउवाच ॥ आविश्यमानेदैत्येतुज्वरेणाथमहासुरे ॥ देवतानामृषीणांचहर्षान्नादोमहानभूत् ४० ततोदुंदुभयश्चैवशंखाश्चसुमहास्वनाः ॥ मुरजाडिंडिमाश्चैवप्रावाद्यंतसहस्रशः ४१ असुराणांतुसर्वेषांस्मृतिलोपोमहानभूत् ॥ मायानाशश्चबलवान्क्षणेनसमपद्यत ४२ तथाविष्टमथोज्ञात्वाऋषयोदेवतास्तथा ॥ स्तुवंतःशक्रमीशानंतथाप्राचोदयन्नपि ४३ रथस्थस्यहिशक्रस्ययुद्धकालेमहात्मनः ॥ ऋषिभिस्तूयमानस्यरूपमासीत्सुदुर्दृशम् ४४ ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वृत्रवधे एकाशीत्यधिकद्विशततमोऽध्याय ॥ २८१ ॥ ॥ भीष्मउवाच ॥ वृत्रस्यतुमहाराजज्वराविष्टस्यसर्वशः ॥ अभवन्यानिलिंगानिशरीरेतानिमेशृणु १ ज्वलितास्योऽभवद्घोरोवैवर्ण्यंचागमत्परम् ॥ गात्रकंपश्चसुमहान्श्वासश्चाप्यभवन्महान् २ रोमहर्षश्चतीव्रोऽभून्निःश्वासश्चमहानृप ॥ शिवाचाशिवसंकाशातस्यवक्त्रात्सुदारुणा ३ निष्पपातमहाघोरास्मृतिःसातस्यभारत ॥ उल्काश्चज्वलितास्तस्यदीप्ताःपार्श्वेप्रपेदिरे ४ गृध्राःकंकाबलाकाश्चवाचोमुंचन्सुदारुणाः ॥ वृत्रस्योपरिसंहृष्टाश्चक्रवत्परिबभ्रमुः ५ ततस्तंरथमास्थायदेवाप्यायितआहवे ॥ वज्रोद्यतकरःशक्रस्तंदैत्यंसमवैक्षत ६ अमानुषमथोनादंसमुमोचमहासुरः॥ व्यजृंभच्चैवराजेंद्रतीव्रज्वरसमन्वितः ७ अथास्यजृंभतःशक्रस्ततोवज्रमवासृजत् ॥ सवज्रःसुमहातेजाःकालाग्निसदृशोपमः ८ धिकद्विशततमोऽध्यायः ॥ २८१ ॥ वृत्रस्येति १ । २ । ३ । ४ । ५ । ६ । ७ । ८

९।१०।११।१२।१३।१४।१५।१६। १७।१८।१९। २०। २१। २२।२३। २४।२५।२६। २७।२८। २९। ३०।३१। ३२ यस्त्वमितिय

क्षिप्रमेवमहाकायंवृत्रंदैत्यमपातयत् ॥ ततोनादःसमभवत्पुनरेवसमंततः ९ वृत्रंविनिहतंदृष्ट्वादिवानांभरतर्षभ ॥ वृत्रंतुहत्वामघवादानवारिर्महायशाः १० वज्रेण
विष्णुयुक्तेनदिवमेवसमाविशत् ॥ अथवृत्रस्यकौरव्यशरीरादभिनिःसृता ११ ब्रह्मवध्यामहाघोरारौद्रालोकभयावहा ॥ करालदशनाभीमाविकृताकृष्णपिंगला ॥
१२ प्रकीर्णमूर्धजाचैवघोरनेत्राचभारत ॥ कपालमालिनीचैवकृत्येवभरतर्षभ १३ रुधिरार्द्राचधर्मज्ञचीरवल्कलवासिनी ॥ साऽभिनिष्क्रम्यराजेंद्रतादृग्रूपाभ
यावहा १४ वज्रिणंमृगयामासतदाभरतसत्तम ॥ कस्यचित्त्वथकालस्यवृत्रहाकुरुनंदन १५ स्वर्गायाभिमुखःप्रायाल्लोकानांहितकाम्यया ॥ साविनिःसरमाणंतु
दृष्ट्वाशक्रंमहौजसम् १६ जग्राहवध्यादेवेंद्रंसुलग्नाचाभवत्तदा ॥ सहितस्मिन्समुत्पन्नेब्रह्मवध्याकृतेभये १७ नलिन्याबिसमध्यस्थउवासाब्दगणान्बहून् ॥ अनुसृ
त्यतुयत्नात्सतयावैब्रह्महत्यया १८ तदागृहीतःकौरव्यनिस्तेजाःसमपद्यत ॥ तस्याव्यपोहनेशक्रःपरंयत्नंचकारह १९ नचाशकत्तांदेवेंद्रोब्रह्मवध्यांव्यपोहि
तुम् ॥ गृहीतएवतुतयादेवेंद्रोभरतर्षभ २० पितामहमुपागम्यशिरसाप्रत्यपूजयत् ॥ ज्ञात्वागृहीतंशक्रंसद्विजप्रवरवध्यया २१ ब्रह्मासचिंतयामासतदाभरतसत्तम ॥
तामुवाचमहाबाहोब्रह्मवध्यांपितामहः २२ स्वरेणमधुरेणाथसांत्वयन्निवभारत ॥ मुच्यतांत्रिदशेंद्रोऽयंमात्प्रियंकुरुभाविनि २३ ब्रूहिकिंतेकरोम्यद्यकामंकिंत्वमिहे
च्छसि २४ ॥ ब्रह्मवध्योच ॥ त्रिलोकपूजितेदेवेप्रीतेत्रैलोक्यकर्तरि ॥ कृतमेवहिमन्यामिनिवासंतुविधत्स्वमे २५ त्वयाकृतेयंमर्यादालोकसंरक्षणार्थिना ॥ स्था
पनावैसुमहतीत्वयादेवप्रवर्तिता २६ प्रीतेतुत्वयिधर्मज्ञसर्वलोकेश्वरप्रभो ॥ शक्रादपगमिष्यामिनिवासंसंविधत्स्वमे २७ ॥ भीष्मउवाच ॥ तथेतितांप्राहतदाब्र
ह्मवध्यांपितामहः ॥ उपायतःसशक्रस्यब्रह्मवध्यांव्यपोहत २८ ततःस्वयंभुवाध्यातस्तत्रवह्निर्महात्मना ॥ ब्रह्माणमुपसंगम्यततोवचनमब्रवीत् २९ प्राप्तोऽस्मि
भगवन्देवत्वत्सकाशमनिंदित ॥ यत्कर्तव्यंमयादेवतद्भवान्वक्तुमर्हति ३० ॥ ब्रह्मोवाच ॥ बहुधाविभजिष्यामिब्रह्मवध्यामिमामहम् ॥ शक्रस्याद्यविमोक्षार्थंचतुर्भा
गंप्रतीच्छवै ३१ ॥ अग्निरुवाच ॥ ममामोक्षस्यकोऽन्तोवैब्रह्मन्ध्यायस्ववैप्रभो ॥ एतदिच्छामिविज्ञातुंतत्त्वतोलोकपूजित ३२ ॥ ब्रह्मोवाच ॥ यस्त्वांज्वलंतमासा
द्यस्वयंवैमानवःक्वचित् ॥ बीजौषधिरसैर्वह्नेनयक्ष्यतितमोवृतः ३३ तमेषायास्यतिक्षिप्रंतत्रैवचनिवत्स्यति ॥ ब्रह्मवध्याहव्यवाहव्येतुतेमानसोज्वरः ३४ इत्युक्तः
प्रतिजग्राहतद्वचोहव्यकव्यभुक् ॥ पितामहस्यभगवांस्तथाचतदभूत्प्रभो ३५ ततोवृक्षौषधितृणंसमाहूयपितामहः ॥ इममर्थंमहाराजवक्तुंसमुपचक्रमे ३६ ततोवृ
क्षौषधितृणंतथैवोक्तंयथातथम् ॥ व्यथितंवह्निवद्राजन्ब्रह्माणमिदमब्रवीत् ३७ अस्माकंब्रह्मवध्यायाःकोंतोलोकपितामह ॥ देवेनाभिहतानस्मान्नपुनर्हंतुमर्हसि ३८ ॥१६६॥

आदितामिरधिकारीबीजःपुरोडाशादिनाभोषधिरसैःसोमेनपयआदिभिर्वा ३३। ३४। ३५। ३६। ३७। ३८

३९।४०।४१।४२।४३।४४।४५।४६।४७।४८।४९।५०।५१।५२।५३।५४।५५। ५६ ब्रह्मविदांवधइंद्रस्याप्यत्यंतदुःखदोनाशहेतुश्चभवतीत्यध्यायतात्पर्यम् ५७

वयमग्निंतथाशीतंवर्षंचपवनेरितम् ॥ सहामःसततंदेवतथाच्छेदनभेदने ३९ ब्रह्मवध्यामिमामद्यभवतःशासनाद्वयम् ॥ ग्रहीष्यामस्त्रिलोकेशमोक्षंचिंतयतां
भवान् ४० ॥ ब्रह्मोवाच ॥ पर्वकालेतुसंप्राप्तेयोवैछेदनभेदनम् ॥ करिष्यतिनरोमोहात्तमेषाऽनुगमिष्यति ४१ ॥ भीष्मउवाच ॥ ततोवृक्षौषधितृणमेवमुक्तं
महात्मना ॥ ब्रह्माणमभिसंपूज्यजगामाशुयथागतम् ४२ आहूयाप्सरसोदेवस्ततोलोकपितामहः ॥ वाचामधुरयाप्राहसांत्वयन्निवभारत ४३ इयमिंद्रादनु
प्राप्ताब्रह्मवध्यावरांगनाः ॥ चतुर्थमस्याभागांशंमयोक्ताःसंप्रतीच्छत ४४ ॥ अप्सरसऊचुः ॥ ग्रहणेकृतबुद्धीनांदेवेशतवशासनात् ॥ मोक्षंसमयतोऽस्माकं
चिंतयस्वपितामह ४५ ॥ ब्रह्मोवाच ॥ रजस्वलासुनारीषुयोवैमैथुनमाचरेत् ॥ तमेषायास्यतिक्षिप्रंव्येतुवोमानसोज्वरः ४६ ॥ भीष्मउवाच ॥ तथेतिहृ
ष्टमनसइत्युक्त्वाप्सरसांगणाः ॥ स्वानिस्थानानिसंप्राप्यरेमिरेभरतर्षभ ४७ ततस्त्रिलोककृद्देवःपुनरेवमहातपाः ॥ अपःसंचिंतयामासध्यातास्ताश्चाप्यथाग
मन् ४८ तास्तुसर्वाःसमागम्यब्रह्माणममितौजसम् ॥ इदमूचुर्वचोराजन्प्रणिपत्यपितामहम् ४९ इमाःस्मदेवसंप्राप्तास्त्वत्सकाशमरिंदम ॥ शासनात्तवलोके
शसमाज्ञापयनःप्रभो ५० ॥ ब्रह्मोवाच ॥ इयंवृत्रादनुप्राप्तापुरुहूतंमहाभया ॥ ब्रह्मवध्याचतुर्थांशमस्यायूयंप्रतीच्छत ५१ ॥ आपऊचुः ॥ एवंभवतुलोके
शयथावदसिनःप्रभो ॥ मोक्षंसमयतोऽस्माकंसंचिंतयितुमर्हसि ५२ त्वंहिदेवेशसर्वस्यजगतःपरमागतिः ॥ कोऽन्यःप्रसादोहिभवेद्यन्नःकृच्छ्रात्समुद्धरेत् ५३
॥ ब्रह्मोवाच ॥ अल्पाइतिमतिंकृत्वायोनरोबुद्धिमोहितः ॥ श्लेष्ममूत्रपुरीषाणियुष्मासुप्रतिमोक्ष्यति ५४ तमियंयास्यतिक्षिप्रंतत्रैवचनिवत्स्यति ॥ तथा
वोभवितामोक्षइतिसत्यंब्रवीमिवः ५५ ततोविमुच्यदेवेंद्रंब्रह्मवध्यायुधिष्ठिर ॥ यथाविसृष्टंतंवासमगद्देवशासनात् ५६ एवंशक्रेणसंप्राप्ताब्रह्मवध्याजनाधिप
पितामहमनुज्ञाप्यसोऽश्वमेधमकल्पयत् ५७ श्रूयतेचमहाराजसंप्राप्तावासवेनवै ॥ ब्रह्मवध्याततःशुद्धिंहयमेधेनलब्धवान् ५८ समवाप्यश्रियंदेवोहत्वाऽरींश्वसह
स्रशः ॥ प्रहर्षमतुलंलेभेवासवःपृथिवीपते ५९ वृत्रस्यरुधिराच्चैवशिखंडाःपार्थजज्ञिरे ॥ द्विजातिभिरभक्ष्यास्तेदीक्षितैश्चतपोधनैः ६० सर्वावस्थंत्वमप्ये
षांद्विजातीनांप्रियंकुरु ॥ इमेहिभूतलेदेवाःप्रथिताःकुरुनंदन ६१ एवंशक्रेणकौरव्यबुद्धिसौक्ष्म्यान्महासुरः ॥ उपायपूर्वंनिहतोवृत्रोह्यमिततेजसा ६२ एवं
त्वमपिकौंतेयपृथिव्यामपराजितः ॥ भविष्यसियथादेवःशतक्रतुरमित्रहा ६३ येतुशक्रकथांदिव्यामिमांपर्वसुपर्वसु ॥ विप्रमध्येवदिष्यंतिनतेप्राप्स्यंतिकिल्बि
षम् ६४ इत्येतद्वृत्रमाश्रित्यशक्रस्यात्यद्भुतंमहत् ॥ कथितंकर्मतेतातकिंभूयःश्रोतुमिच्छसि ६५ ॥ इतिश्रीमहाभारतेशां० मोक्षब्रह्महत्याविभागेद्व्यशीत्यधिक
द्विशततमोऽध्यायः ॥ २८२ ॥ ५८।५९।६०।६१।६२। ६३। ६४। ६५ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

॥१८७॥ ॥ युधिष्ठिरउवाच ॥ पितामहमहाप्राज्ञसर्वशास्त्रविशारद ॥ अस्मिन्वृत्रवधेदेवविवक्षाममजायते १ ज्वरेणमोहितोवृत्रःकथितस्तेजनाधिप ॥ निहतोवासवेने अ०
हवज्रेणेतितदाऽनघ २ कथमेषमहाप्राज्ञज्वरःप्रादुर्बभौकुतः ॥ ज्वरोत्पत्तिंनिपुणतःश्रोतुमिच्छाम्यहंप्रभो ३ ॥ भीष्मउवाच ॥ शृणुराजन्ज्वरस्येमंसंभवंलो
कविश्रुतम् ॥ विस्तरंचास्यवक्ष्यामियादृशश्चैवभारत ४ पुरामेरोर्महाराजशृंगंत्रैलोक्यपूजितम् ॥ ज्योतिष्कंनामसावित्रंसर्वरत्नविभूषितम् ५ अप्रमेयमना ॥२८३॥
धृष्यंसर्वलोकेचभारत ॥ तत्रदेवोगिरितटेहेमधातुविभूषिते ६ पर्यंकइवविभ्राजन्नुपविष्टोबभूवह ॥ शैलराजसुताचास्यनित्यंपार्श्वेस्थितावभौ ॥ तथादेवाम
हात्मानोवसवश्चामितौजसः ७ तथैवचमहात्मानावश्विनौभिषजांवरौ ॥ तथावैश्रवणोराजागुह्यकैरभिसंवृतः ८ यक्षाणामीश्वरःश्रीमान्कैलासनिलयःप्रभुः ॥
उपासंतमात्मानमुशनाचमहामुनिः ९ सनत्कुमारप्रमुखास्तथैवचमहर्षयः ॥ अंगिरःप्रमुखाश्चैवतथादेवर्षयोऽपरे १० विश्वावसुश्चगंधर्वस्तथानारदपर्वतौ ॥
अप्सरोगणसंघाश्चसमाजग्मुरनेकशः ११ ववौसुखःशिवोवायुर्नानागंधवहःशुचिः ॥ सर्वर्तुकुसुमोपेताःपुष्पवंतोद्रुमास्तथा १२ तथाविद्याधराश्चैवसिद्धाश्चैव
तपोधनाः ॥ महादेवंपशुपतिंपर्युपासंतभारत १३ भूतानिचमहाराजनानारूपधराण्यथ ॥ राक्षसाश्चमहारौद्राःपिशाचाश्चमहाबलाः १४ बहुरूपधराह्
ष्टानानाप्रहरणोद्यताः ॥ देवस्यानुचरास्तत्रतस्थिरेचानलोपमाः १५ नंदीचभगवांस्तत्रदेवस्यानुमतेस्थितः ॥ प्रगृह्यज्वलितंशूलंदीप्यमानःस्वतेजसा ॥
१६ गंगाचसरितांश्रेष्ठासर्वतीर्थजलोद्भवा ॥ पर्युपासततंदेवंरूपिणीकुरुनंदन १७ सएवंभगवांस्तत्रपूज्यमानःसुरर्षिभिः ॥ देवैश्चसुमहातेजामहादेवोव्यति
ष्ठत १८ कस्यचित्त्वथकालस्यदक्षोनामप्रजापतिः ॥ पूर्वोक्तेनविधानेनयक्ष्यमाणोऽन्वपद्यत १९ ततस्तस्यमखंदेवाःसर्वेशक्रपुरोगमाः ॥ गमनायसमागम्य
बुद्धिमापेदिरेतदा २० तेविमानैर्महात्मानोज्वलनार्कसमप्रभैः ॥ देवस्यानुमतेगच्छन्गंगाद्वारमितिश्रुतिः २१ प्रस्थितादेवतादृष्ट्वाशैलराजसुतातदा ॥ उवा
चवचनंसाध्वीदेवंपशुपतिंपतिम् २२ भगवन्क्वनुयांत्येतेदेवाःशक्रपुरोगमाः ॥ ब्रूहितत्त्वेनतत्त्वज्ञसंशयोमेमहानयम् २३ ॥ महेश्वरउवाच ॥ दक्षोनामम
हाभागेप्रजानांपतिरुत्तमः ॥ हयमेधेनयजतेतत्रयांतिदिवौकसः २४ ॥ उमोवाच ॥ यज्ञमेतंमहादेवकिमर्थंनाधिगच्छसि ॥ केनवाप्रतिषेधेनगमनंतेनविद्यते
२५ ॥ महेश्वरउवाच ॥ सुरैरेवमहाभागेपूर्वमेतदनुष्ठितम् ॥ यज्ञेषुसर्वेषुममनभागउपकल्पितः २६ पूर्वोपायोपपन्नेनमार्गेणवरवर्णिनि ॥ नमेसुराःप्रयच्छं
तिभागंयज्ञस्यधर्मतः २७ ॥ उमोवाच ॥ भगवन्सर्वभूतेषुप्रभावाभ्यधिकोगुणैः ॥ अजय्यश्चाप्यधृष्यश्चतेजसायशसाश्रिया २८ अनेनतेमहाभागप्रतिषे ॥१८७॥
धेनमागतः ॥ अतीवदुःखमुत्पन्नंवेपथुश्चममानघ २९ १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९

३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१
॥ भीष्मउवाच ॥ एवमुक्त्वातुसादेवीतदापशुपतिंपतिम् ॥ तूष्णींभूताऽभवद्राजन्दह्यमानेनचेतसा ३० अथदेव्यामतंज्ञात्वाहृद्गतंयच्चिकीर्षितम् ॥ ससमा
ज्ञापयामासतिष्ठत्वमितिनंदिनम् ३१ ततोयोगबलंकृत्वासर्वयोगेश्वरेश्वरः ॥ तंयज्ञंसमहातेजाभीमैरनुचरैस्तदा ३२ सहसाघातयामासदेवदेवःपिनाकधृक् ॥
केचिन्नादानमुंचंतकेचिद्धासांश्चचक्रिरे ३३ रुधिरेणापरेराजंस्तत्राग्निंसमवाकिरन् ॥ केचिद्यूपान्समुत्पाट्यबभ्रमुर्विकृताननाः ३४ आस्यैरन्येचाग्रसंततथैव
परिचारकान् ॥ ततःसयज्ञोनृपतेवध्यमानःसमंततः ३५ आस्थायमृगरूपंवैखमेवाभ्यगमत्तदा ॥ तंतुयज्ञंतथारूपंगच्छंतमुपलभ्यसः ३६ धनुरादायबाणे
नतदान्वसरतप्रभुः ॥ ततस्तस्यसुरेशस्यक्रोधादमिततेजसः ३७ ललाटात्प्रसृतोघोरःस्वेदबिंदुर्बभूवह ॥ तस्मिन्पतितमात्रेचस्वेदबिंदौतदाभुवि ३८ प्रा
दुर्बभूवसुमहानग्निःकालानलोपमः ॥ तत्रजाचायततदापुरुषःपुरुषर्षभ ३९ ह्रस्वोतिमात्ररक्ताक्षोहरिश्मश्रुर्विभीषण ॥ ऊर्ध्वकेशोऽतिरोमांगःश्येनोलूकस्त
थैवच ४० करालकृष्णवर्णश्चरक्तवासास्तथैवच ॥ संयज्ञंसुमहासत्त्वोऽदहत्कक्षमिवानलः ४१ व्यचरत्सर्वतोदेवान्प्राद्रवत्सऋषींस्तथा ॥ देवाश्चाप्याद्रवन्सर्वे
ततोभीतादिशोदश ४२ तेनतस्मिन्विचरतापुरुषेणविशांपते ॥ पृथिवीह्यचलद्राजन्नतीवभरतर्षभ ४३ हाहाभूतंजगत्सर्वमुपलक्ष्यतदाप्रभुः ॥ पितामहो
महादेवंदर्शयन्प्रत्यभाषत ४४ ॥ ब्रह्मोवाच ॥ भवतोऽपिसुराःसर्वेभागंदास्यंतिवैप्रभो ॥ क्रियतांप्रतिसंहारःसर्वदेवेश्वरत्वया ४५ इमाहिदेवताःसर्वाऋषयश्च
परंतप ॥ तवक्रोधान्महादेवनशांतिमुपलेभिरे ४६ यश्चैषपुरुषोजातःस्वेदात्तेविबुधोत्तम ॥ ज्वरोनामैषधर्मज्ञलोकेषुप्रचरिष्यति ४७ एकीभूतस्यनत्वस्यधा
रणेतेजसःप्रभो ॥ समर्थासकलापृथ्वीबहुधासृजतामयम् ४८ इत्युक्तोब्रह्मणादेवोभागेचापिप्रकल्पिते ॥ भगवंतंतथेत्याहब्रह्माणममितौजसम् ४९ परांचप्री
तिमगमदुत्स्मयंश्चपिनाकधृक् ॥ अवापचतदाभागंयथोक्तंब्रह्मणाभवः ५० ज्वरंचसर्वधर्मज्ञोबहुधाव्यसृजत्तदा ॥ शांत्यर्थंसर्वभूतानांशृणुतच्चापिपुत्रक ५१
शीर्षाभितापोनागानांपर्वतानांशिलाजतु ॥ अपांतुनीलिकांविद्यान्निर्मोकंभुजगेषुच ५२ खोरकःसौरभेयाणामूषरंपृथिवीतले ॥ पशूनामपिधर्मज्ञदृष्टिप्रत्यवरो
धनम् ५३ रंध्रागतमथाश्वानांशिखोद्भेदश्चबर्हिणाम् ॥ नेत्ररोगःकोकिलस्यज्वरःप्रोक्तोमहात्मना ५४ अवीनांपित्तभेदश्चसर्वेषामितिनःश्रुतम् ॥ शुकानाम
पिसर्वेषांहिक्किकाप्रोच्यतेज्वरः ५५ शार्दूलेष्वथधर्मज्ञश्रमोज्वरइहोच्यते ॥ मानुषेषुतुधर्मज्ञज्वरोनामैषभारत ५६ मरणेजन्मनितथामध्येचाविशतेनरम् ॥
एतन्माहेश्वरंतेजोज्वरोनामसुदारुणः ५७ नमस्यश्चैवमान्यश्चसर्वप्राणिभिरीश्वरः ॥ अनेनहिसमाविष्टोवृत्रोधर्मभृतांवरः ५८ व्यजृंभतततःशक्रस्तस्मैवज्र
मवासृजत् ॥ प्रविश्यवज्रंवृत्रंचदारयामासभारत ५९ दारितश्चसवज्रेणमहायोगीमहासुरः ॥ जगामपरमंस्थानंविष्णोरमिततेजसः ६०
शिलाजतुधातुविशेषः नीलिकाशैवालं ५२ खोरकःपशूनांपादरोगः ५३ रंध्रागतमश्वगलरंध्रगतंमांसखंडं ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६०

६ । ६२ । ६३ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥ प्राचेतसस्येति वृत्रगीतोपसंहारेऽपसंभगवान्देवःपितामह ,नार्दनः ॥ सनत्कुमारोवृत्राययत्तदाख्यातवान्पुरेति श्रीकृष्णप्रकरणप्रतिपाद्यस्वोक्त्यानिर्विशेषब्रह्मावाप्तिद्वारस्त्रमुक्तं तत्प्रसक्तानुप्रसक्तत्वेनवृत्रवधज्वरोत्पत्तिंचोक्त्वापुनरपितस्यैवमूर्तिम ःपरमेश्वरस्यपरमकारुणिकत्वंदर्शयितुंद्विषंतमपिभगवान्दंडपूर्वकमनुगृह्णातीतिदक्षाख्यायिकामुखेनोक्तं तत्रकैमुतिकन्यायेनभक्तेष्वनुग्रहंसिध्यतीतिभक्त्यामगवत्तोषणार्थनाम्नामष्टसहस्रंच



विष्णुभक्त्याहितेनेदंजगद्व्याप्तमभूत्तदा ॥ तस्माच्चनिहतोयुद्धेविष्णोःस्थानमवाप्तवान् ६१ इत्येषवृत्रमाश्रित्यज्वरस्यमहतोमया ॥ विस्तरःकथितःपुत्रकिम न्यत्प्रब्रवीमिते ६२ इमांज्वरोत्पत्तिमदीनमानसःपठेत्सदायःसुसमाहितोनरः ॥ विमुक्तरोगःससुखीमुदायुतोलभेतकामान्सयथामनीषितान् ६३ ॥ इतिश्रीम हाभारतेशांतिपर्वणि मोक्षधर्मपर्वणिज्वरोत्पत्तिर्नामत्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥ ॥ जनमेजयउवाच ॥ प्राचेतसस्यदक्षस्यकथंवैवस्वते तरे ॥ विनाशमगद्यज्ञस्त्वयमेधःप्रजापतेः १ देव्यामन्युकृतंमत्वाक्रुद्धःसर्वात्मकःप्रभुः ॥ प्रसादात्तस्यदक्षेणसयज्ञःसंधितःकथम् ॥ एतद्वेदितुमिच्छेयंतन्मेब्रूहि यथातथम् २ ॥ वैशंपायनउवाच ॥ पुराहिमवतःपृष्ठेदक्षोवैयज्ञमाहरत् ॥ गंगाद्वारेशुभेदेशेऋषिसिद्धनिषेविते ३ गंधर्वाप्सरसाकीर्णेनानाद्रुमलतावृते ॥ ऋ षिसंघैःपरिवृतंदक्षंधर्मभृतांवरम् ४ पृथिव्यामंतरिक्षेचयेचस्वर्लोकवासिनः ॥ सर्वेप्रांजलयोभूत्वाउपतस्थुःप्रजापतिम् ५ देवदानवगंधर्वाःपिशाचोरगराक्षसाः ॥ हाहाहूहूश्चगंधर्वौतुंबुरुर्नारदस्तथा ६ विश्वावसुर्विश्वसेनोगंधर्वाप्सरसस्तथा ॥ आदित्यावसवोरुद्राःसाध्याःसहमरुद्गणैः ७ इंद्रेणसहिताःसर्वेआगतायज्ञभागिनः ॥ ऊष्मपाःसोमपाश्चैवधूमपाआज्यपास्तथा ८ ऋषयःपितरश्चैवआगताब्रह्मणासह ॥ एतेचान्येचबहवोभूतग्रामाश्चतुर्विधाः ९ जरायुजांडजाश्चैवस्वेदजोद्भिजाः ॥ आहूतामंत्रिताःसर्वेदेवाश्चसहपत्निभिः १० विराजंतेविमानस्थादीप्यमानाइवाग्नयः ॥ तान्दृष्ट्वामन्युनाऽऽविष्टोदधीचिर्वाक्यमब्रवीत् ११ नायंयज्ञो नवाधर्मोयत्ररुद्रोनइज्यते ॥ वधबंधंप्रपन्नावैकिंनुकालस्यपर्ययः १२ किंनुमोहान्नपश्यंतिविनाशंपर्युपस्थितम् ॥ उपस्थितंमहाघोरंनबुध्यंतिमहाध्वरे १३ इत्युक्त्वासमहायोगीपश्यतिध्यानचक्षुषा ॥ सपश्यतिमहादेवंदेवींचवरदांशुभाम् १४ नारदंचमहात्मानंतस्यादेव्याःसमीपतः ॥ संतोषंपरमंलेभेइ तिनिश्चित्ययोगवित् १५ एकमंत्रास्तुतेसर्वेयेनेशोननिमंत्रितः ॥ तस्माद्देशादपक्रम्यदधीचिर्वाक्यमब्रवीत् १६ अपूज्यपूजनाच्चैवपूज्यानांचाप्यपूजनात् ॥ नृघातकसमंपापंशश्वत्प्राप्नोतिमानवः १७ अनृतंनोक्तपूर्वंमेनचवक्ष्येकदाचन ॥ देवतानामृषीणांचमध्येसत्यंब्रवीम्यहम् १८

वक्तुमयमध्यायआरभ्यते मोक्षधर्मेषुपाठाच्चास्यस्तवस्यसाक्षात्तत्त्वज्ञानहेतुतयाशमदमादिवन्मोक्षोपयोगित्वं इतरेषांतुयज्ञादिवच्चित्तशुद्धयुत्पादनद्वारातद्धेतुत्वमित्ययमेवपदशःसम्यग्विभ ज्यते तत्रप्राचेतसस्यदक्षस्येत्यादिर्नाम्नामष्टसहस्रेणस्तुतवान्वृषभध्वजमित्यंतःस्पष्टार्थोग्रंथः तस्यतात्पर्यंपरमेश्वरद्रोहिणाकृतंकर्मानर्थावहंतदनुग्रहमंतरेणदुश्चिकित्स्यंचेतिसएवमाध्येइति १ २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८



१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६

आगतंपशुभर्तारंस्रष्टारंजगतःपतिम् ॥ अध्वरेह्यग्रभोक्तारंसर्वेषांपश्यतप्रभुम् १९ ॥ दक्षउवाच ॥ संतिनोबहवोरुद्राःशूलहस्ताःकपर्दिनः ॥ एकादशस्थानग तानाहंवेद्मिमहेश्वरम् २० ॥ दधीचिरुवाच ॥ सर्वेषामेवमंत्रोऽयंयेनासौननिमंत्रितः ॥ यथाहंशंकरादूर्ध्वंनान्यंपश्यामिदैवतम् ॥ तथादक्षस्यविपुलोयज्ञोऽयं नभविष्यति २१ ॥ दक्षउवाच ॥ एतन्मखेशायसुवर्णपात्रेहविःसमस्तंविधिमंत्रपूतम् ॥ विष्णोर्नयाम्यप्रतिमस्यभागंप्रभुर्विभुश्चाहवनीयएषः २२ ॥ देव्यु वाच ॥ किंनामदानंनियमंतपोवाकुर्यामहंयेनपतिर्ममाद्य ॥ लभेतभागंभगवानचिंत्योह्यर्धंतथाभागमथोतृतीयम् २३ एवंब्रुवाणांभगवान्स्वपत्नींप्रहृष्टरूपःक्षुभि तामुवाच ॥ नवेत्सिमांदेविकृशोदरांगिकिंनामयुक्तंवचनंमखेशे २४ अहंविजानामिविशालनेत्रेध्यानेनहीनानविदंत्यसंतः ॥ तवाद्यमोहेनचसेंद्रदेवालोकास्त्रयःसर्व तएवमूढाः २५ मामध्वरेशंसितारःस्तुवंतिरथंतरंसामगाश्चोपगांति ॥ मांब्राह्मणाब्रह्मविदोयजंतेममाध्वर्यवःकल्पयंतेचभागम् २६ ॥ देव्युवाच ॥ सुप्राकृतोऽपिपु रुषःसर्वःस्त्रीजनसंसदि ॥ स्तौतिगर्वायतेचापिस्वमात्मानंनसंशयः २७ ॥ भगवानुवाच ॥ नात्मानंस्तौमिदेवेशिपश्यमेतनुमध्यमे ॥ यंस्रक्ष्यामिवरारोहेया गार्थंवरवर्णिनि २८ इत्युक्त्वाभगवान्पत्नीमुमांप्राणैरपिप्रियाम् ॥ सोऽसृजद्भगवान्वक्त्राद्भूतंघोरंप्रहर्षणम् २९ तमुवाचाक्षिपमखंदक्षस्येतिमहेश्वरः ॥ ततोवक्त्रा द्विमुक्तेनसिंहेनैकेनलीलया ३० देव्यामन्युव्यपोहार्थंहतोदक्षस्यवैक्रतुः ॥ मन्युनाचमहाभीमामहाकालीमहेश्वरी ३१ आत्मनःकर्मसाक्षित्वेतेनसार्धंसहानुगा ॥ देवस्यानुमतंमत्वाप्रणम्यशिरसाततः ३२ आत्मनःसदृशःशौर्याद्बलरूपसमन्वितः ॥ सएवभगवान्क्रोधःप्रतिरूपसमन्वितः ३३ अनंतबलवीर्यश्चअनंतबलपौ रुषः ॥ वीरभद्रइतिख्यातोदेव्यामन्युप्रमार्जकः ३४ सोऽसृजद्रोमकूपेभ्योरौम्यान्नामगणेश्वरान् ॥ रुद्रतुल्यागणारौद्रारुद्रवीर्यपराक्रमाः ३५ तेनिपेतुस्तत स्तूर्णंदक्षयज्ञविहिंसया ॥ भीमरूपामहाकायाःशतशोऽथसहस्रशः ३६ ततःकिलकिलाशब्दैराकाशंपूरयन्निव ॥ तेनशब्देनमहतात्रस्तास्तत्रदिवौकसः ३७ पर्व ताश्चव्यशीर्यंतचकंपेचवसुंधरा ॥ मारुताश्चैवघूर्णंतेचुक्षुभेवरुणालयः ३८ अग्नयोनैवदीप्यंतेनैवदीप्यतिभास्करः ॥ ग्रहानैवप्रकाशंतेनक्षत्राणिनचंद्रमाः ३९ ऋषयोनप्रकाशंतेनदेवानचमानुषाः ॥ एवंतुतिमिरीभूतेनिर्दहंत्यपमानिताः ४० प्रहरंत्यपरेघोरायूपानुत्पाटयंतिच ॥ प्रमर्दंतितथाचान्येविमर्दंतितथाऽपरे ४१ आधावंतिप्रधावंतिवायुवेगामनोजवाः ॥ चूर्ण्यंतेयज्ञपात्राणिदिव्यान्याभरणानिच ४२ विशीर्यमाणादृश्यंतेताराइवनभस्तले ॥ दिव्यान्नपानभक्ष्याणांरा शयःपर्वतोपमाः ४३ क्षीरनद्योऽथदृश्यंतेघृतपायसकर्दमाः ॥ दधिमंडोदकादिव्याःखंडशर्करवालुकाः ४४ षड्रसानिवहंत्येतागुडकुल्यामनोरमाः ॥ उच्चावचा निमांसानिभक्ष्याणिविविधानिच ४५ पानकानिचदिव्यानिलेह्यचोष्याणियानिच ॥ भुंजतेविविधैर्वक्त्रैर्विलुंपंत्याक्षिपंतिच ४६

४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ यैर्नामधेयैरिति उत्तरार्धेतानीतिशेषः
७२ नन्विहनाम्नामष्टसहस्रेणेत्यष्टाधिकंसहस्रंनाम्नांवक्तव्यत्वेनप्रतिज्ञातं । तत्रनामपाठेकिंचिदधिकानिषट्शतनामान्युपलभ्यंते । नचस्तुतिपदेभ्योविपरिणामेननामान्युन्नेतुंशक्यंते अन्यशब्द

रुद्रकोपान्महाकायाःकालाग्निसदृशोपमाः ॥ क्षोभयन्सुरसैन्यानिभीषयंतःसमंततः ४७ क्रीडंतिविविधाकाराश्चिक्षिपुःसुरयोषितः ॥ रुद्रकोधात्प्रयत्नेनसर्वदेवैः
सुरक्षितम् ४८ तंयज्ञमदहच्छीघ्रंरुद्रकर्मासमंततः ॥ चकारभैरवंनादंसर्वभूतभयंकरम् ४९ छित्त्वाशिरो वैयज्ञस्यननादचमुमोदच ॥ ततोब्रह्मादयोदेवादक्षश्चै
वप्रजापतिः ५० ऊचुःप्रांजलयःसर्वेकथ्यतांकोभवानिति ॥ वीरभद्रउवाच ॥ नाहंरुद्रोनवादेवीनैवभोक्तुमिहागतः ५१ देव्यामन्युकृतंमत्वाक्रुद्धःसर्वात्मकःप्रभुः ॥
द्रष्टुंवानैवविप्रेंद्रान्नैवकौतूहलेनवा ५२ तवयज्ञविघातार्थंसंप्राप्तंविद्धिमामिह ॥ वीरभद्रइतिख्यातोरुद्रकोपाद्विनिःसृतः ५३ भद्रकालीतिविख्यातादेव्याःकोपा
द्विनिःसृता ॥ प्रेषितौ देवदेवेनयज्ञांतिकमिहागतौ ५४ शरणंगच्छविप्रेंद्रदेवदेवमुमापतिम् ॥ वरंक्रोधोऽपिदेवस्यवरदानंनचान्यतः ५५ वीरभद्रवचःश्रुत्वादक्षो
धर्मभृतांवरः ॥ तोषयामासस्तोत्रेणप्रणिपत्यमहेश्वरम् ५६ प्रपद्येदेवमीशानंशाश्वतंध्रुवमव्ययम् ॥ महादेवंमहात्मानंविश्वस्यजगतःपतिम् ५७ दक्षप्रजापते
र्यज्ञेद्रव्यैस्तैःसुसमाहितैः ॥ आहूतादेवताःसर्वाऋषयश्चतपोधनाः ५८ देवोनाहूयतेतत्रविश्वकर्मामहेश्वरः ॥ तत्रक्रुद्धामहादेवीगणांस्तत्रव्यसर्जयत् ५९ प्रदी
प्तयज्ञवाटेतुविद्रुतेषुद्विजातिषु ॥ तारागणमनुप्राप्तेरौद्रेदीप्तेमहात्मनि ६० शूलनिर्भिन्नहृदयैःकूजद्भिःपरिचारकैः ॥ निखातोत्पाटितैर्यूपैरपविद्धैरितस्ततः ६१
उत्पतद्भिःपतद्भिश्चगृध्रैरामिषगृद्धिभिः ॥ पक्षवातविनिर्धूतैःशिवाशतनिनादितैः ६२ यक्षगंधर्वसंघैश्चपिशाचोरगराक्षसैः ॥ प्राणापानौसंनिरुध्यवक्त्रस्थानेनय
त्नतः ६३ विचार्यसर्वतोदृष्टिंबहुदृष्टिरमित्रजित् ॥ सहसादेवदेवेशोह्यग्निकुंडात्समुत्थितः ६४ बिभ्रत्सूर्यसहस्रस्यतेजःसंवर्तकोपमः ॥ स्मितंकृत्वाऽब्रवीद्वाक्यंब्रूहि
किंकरवाणिते ६५ श्रावितेचमखाध्यायेदेवानांगुरुणाततः ॥ तमुवाचांजलिंकृत्वादक्षो देवंप्रजापतिः ६६ भीतशंकितवित्रस्तःसबाष्पवदनेक्षणः ॥ यदिप्रसन्नो
भगवान्यदिचाहंभवत्प्रियः ६६ यदिवाऽहमनुग्राह्योयादेयावरदोमम ॥ यद्दग्धंभक्षितंपीतमशितंयच्चनाशितम् ६८ चूर्णीकृतापविद्धंचयज्ञसंभारमीदृशम् ॥
दीर्घकालेनमहताप्रयत्नेनसुसंचितम् ॥ तन्नमिथ्याभवेन्मह्यंवरमेतमहंवृणे ६९ तथास्त्वित्याहभगवान्भगनेत्रहरोहरः ॥ धर्माध्यक्षोविरूपाक्षस्त्र्यक्षोदेवःप्रजापतिः
७० जानुभ्यामवनींगत्वादक्षोलब्ध्वाभवाद्वरम् ॥ नाम्नामष्टसहस्रेणस्तुतवान्वृषभध्वजम् ७१ ॥ युधिष्ठिरउवाच ॥ यैर्नामधेयैःस्तुतवान्दक्षोदेवंप्रजापतिः ॥
वक्तुमर्हसिमेतातश्रोतुंश्रद्धाममानघ ७२ ॥ भीष्मउवाच ॥ श्रूयतांदेवदेवस्यनामान्यद्भुतकर्मणः ॥ गूढव्रतस्यगुह्यानिप्रकाशानिचभारत ७३

स्यान्याथंत्वकल्पनेप्रमाणाभावात् । नचतावताऽपिसंख्यापूर्तिःसंभवति तस्माद्गलितइहनामसमाम्नायइत्यव्याख्येयमेतत्सहस्रनामस्तोत्रंनापिपठनीयंन्यूनत्वेनवाग्वज्रत्वात् वाग्वज्रोहिमंत्रोऽ
ध्येतारंनाशयति तथाचोक्तंशिक्षायां । 'मंत्रोहीनःस्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह ॥ सवाग्वज्रोयजमानंहिनस्तियथेंद्रशत्रुःस्वरतोऽपराधात्'इतींद्रंहंतुकामेनत्वष्ट्रापुत्रार्थिना-

स्वाहेंद्रशत्रुर्वर्धस्वेतिमंत्रेणहोमंकुर्वतेंद्रपदस्येष्टसिद्ध्यर्थंऽतोदात्तप्रयोज्यंतत्रनप्रयुक्तंप्रत्युताऽऽद्युदात्तमेवतत्पठितमितींद्रएवतत्पुत्रस्यनाशकोजातइत्युपाख्यायतेत्वष्टाहतपुत्रइत्यनुवाके । तस्मा
दस्यस्तवस्यमोक्षमंत्रत्वाद्वर्णतश्चात्यंतंहीनत्वान्नेष्टार्थप्रदत्वंयुज्यतेऽपितुपाठकानर्थकरत्वमेवेतिचेदुच्यते इदमिहजाबालाःसमामनंति । अथहैनंब्रह्मचारिणऊचुःकिंजप्येनामृतत्वंब्रूहीतिसहोवा
चयाज्ञवल्क्यःशतरुद्रियेणेत्येतानिहवाअमृतस्यनामधेयान्येतैर्हवाअमृतोभवतीति । अत्रनामजपस्यामृतसाधनत्वंगम्यते तेषांचनाम्नांन्यूनाधिकभावेनानेकासुशाखासुपठितानांगुणोपसंहार
न्यायेनैकत्रोपसंहारेणभवितव्यं । तच्चास्मदादीनामशक्यमितिभगवान्बादरायणस्तैत्तिरीयकवाजसनेयकादिप्रसिद्धशाखास्वविद्यमानानांनाम्नामुपसंहारमिहकृतवान् । यथाह्यापस्तंबादिःक
ल्पकारःस्वपरशाखास्थान्यंगान्युपदिश्याऽऽग्नेयमष्टाकपालमितियथासमाम्नातमितिमध्येप्रधानंसिद्धवन्निर्दिश्यपुनरुपरिष्टात्त्वन्याम्यंगान्युपदिशतितद्वदिहापिनमस्तेदेवदेवेशेत्यादिनाकानि
चिन्नामान्युपदिश्य'त्रिसौपर्णंतथाब्रह्मयजुषांशतरुद्रियं'इतिसुपर्णशतरुद्रियेनाममालायांसिद्धवन्निर्दिश्यशेषमपिनामधेयगणंपठति । तथाचयथाप्रतिज्ञातमष्टोत्तरसहस्रनाम्नांसंख्यापूर्यते
नान्यथा । तदिदमभिप्रेत्योक्तंगुह्यानीति गुह्यान्यश्रद्धायुपहतेष्वप्रकाश्यानि ७३ ॥ आदिपुरुषायनमः ॥ नमस्तेदेवेति ब्रह्मविद्याधिकाराध्यात्मपरतयैवैतानिव्याख्येयानि तथाहि हे
देवजगन्निर्माणक्रीडापरतेतुभ्यंनमः तेइतियुष्मदर्थस्यदृश्यस्यप्रमेयस्यनिर्देशः देवेशदेवाइंद्रियाणिईशोबुद्धिः 'बुद्धिःख्यातिरीश्वरः'इतिस्मृतेः एतदुभयात्मक एतेनप्रमाणप्रमात्रोर्निर्देशः
कृतः । एवंनामत्रयेणज्ञेयज्ञानज्ञात्रात्मकत्वंदेवस्योक्तं तत्प्राप्त्युपायंत्रयेणाह देवारीति देवाःशमाद्याइंद्रियवृत्तयस्तेषामरयोऽसुराःकामादयस्तेषांबलस्यसूदन । तथाचशमकामादिषुदे

नमस्तेदेवदेवेशदेवारिबलसूदन ॥ देवेंद्रबलविष्टंभदेवदानवपूजित ७४ सहस्राक्षविरूपाक्षत्र्यक्षयक्षाधिपप्रिय ॥ सर्वतःपाणिपादांतसर्वतोक्षिशिरोमुख ७५
सर्वतःश्रुतिमँल्लोकेसर्वमावृत्यतिष्ठति ॥ शंकुकर्णमहाकर्णकुंभकर्णार्णवालय ७६ गजेंद्रकर्णगोकर्णपाणिकर्णनमोऽस्तुते ॥ शतोदरशतावर्तशतजिह्वनमोऽस्तुते
७७ गायंतित्वागायत्रिणोऽर्चंत्यर्कमर्किणः ॥ ब्रह्माणंत्वाशतक्रतुमूर्ध्वंखमिवमेनिरे ७८

वासुरशब्दयोःप्रयोगोदृष्टोद्वयाहप्राजापत्यादेवाश्चासुराश्चेति । देवानामिंद्रियाणामिंद्रोबुद्धिस्तस्याबलंविषयप्रावण्यंतद्विशेषेणस्तभ्नातीतिदेवेंद्रबलविष्टंभ । अतएवदेवैरिंद्राद्यैर्दानवैर्बाणाद्यै
श्चपूजिताऽऽदरनैरंतर्यसत्कारसेवित । एवंचकामादिजयोधीनिरोधस्तत्रादरादिश्चमेयात्मकस्यवस्तुनःप्रापकइत्युक्तंभवति ६ ॥ ७४ योगेप्रथमंप्राप्यायाःसांबमूर्तेःस्वरूपमाहचतुर्भिः स
हस्रमक्षाणियुगपत्सर्वविषयप्रकाशकानींद्रियाणियस्य सर्वज्ञेत्यर्थः । अतएवविरूपाण्यस्मदादींद्रियेभ्योविलक्षणानिव्यवहितादिग्राहकाणींद्रियाणियस्य । त्र्यक्षत्रीणिसोमसूर्याग्न्या
ख्यान्यक्षाणियस्य । यक्षाधिपःकुबेरःसप्रियोयस्य । अथामूर्तंज्ञेयंस्वरूपमाह सर्वतइतिचतुर्भिः भगवद्गीतास्वपिज्ञेयंयत्तत्प्रवक्ष्यामीतिप्रतिज्ञायसर्वतःपाणिपादंतदित्यादिना इदमेव
स्वरूपमुक्तंसर्वतःपाणयःपादाःअंताःसन्निविश्चयस्यससर्वतःपाणिपादांतः एवमुत्तरत्र तथाचश्रुतिः 'विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ संबाहुभ्यांधमतिसंपतत्रैर्द्यावा
भूमीजनयन्देवएकः'इति धमतिवशीकरोति सर्वेषुसंबोधनपदेषुनमस्तेइत्यनुषंजनीयं । लोकेसर्वमावृत्यतिष्ठसीत्यत्रविपरिणामेनलोकेसर्वमावृत्यतिष्ठन्नितिसंबोधनमूहनीयं सार्धःश्लोकः ८ । ७५
शंकुकर्णादयःसप्तईश्वरगणाःसर्वाभिन्नत्वादीशस्यतदात्मत्वमुच्यते ७ शतोदरेत्यर्धंविश्वरूपप्रथनार्थः ३ ॥ ७६ । ७७ अस्यैवत्रैवर्णिकोपास्यत्वेश्रुतिंपठति गायंतीति गायत्रिणस्त्रिसंध्यं
गायत्रीजपपरास्त्वामेवगायंतिगायत्रीप्रतिपाद्यस्त्वमेवासीत्यर्थः । अर्किणअर्कोपासनपराःत्वामर्कंसवितारंमंडलाधिष्ठातारमर्चंत्युपातिष्ठंतेसंध्यासु । ब्रह्माणंब्रह्मविदंचतुर्मुखं । शतक्रतुंदेवेंद्रं । ऊर्ध्वं
सर्वोपाधिभ्यउद्गतं खमिवआकाशवत्सर्वगतश्चनित्यःअसंगश्चतादृशंमेनिरेमुनयः । अत्राऽपिगायत्रिणे । अर्क । अर्कयंर्च्य । ब्रह्मन् । शतक्रतो । ऊर्ध्व । खतुल्यत्वेनमतइतिनामान्युन्नेयानि ७ । ७८

मूर्तौ अष्टरूपायां भूम्यंबुवह्निवाय्वाकाशसूर्यचंद्रयजमानात्मिकायां सर्वदेवतामूर्तौ इत्यूर्ध्वंनाथ ७९ हे भवन्हे सोमशरीरेत्यादीन्यष्टौनामान्यूह्यानि ८ ॥ ८० भगवन्नित्यादीनि पूर्वोर्धे पंच सदसत्प्रभवाप्ययेत्युत्तरार्धे एकं ६ ॥ ८१ भवत्यस्मादिति भवः । शृणाति हिनस्तीति शर्वः । रुपापं द्रावयतीति रुद्रः । पशूनां ब्रह्मादिस्थावरांतानां जीवानां ६ ॥ ८२ नानारूपत्वेनस्तौति त्रिजटायेत्यादिना त्रिशूलवरेण पणितुं व्यवहर्तुंशीलमस्य तस्मै त्रिशूलवरपाणिने । त्रीणिशाखाचार्याख्यानाम्यंबकानि नेत्राणी वगमकानि बोधकानि यस्य सः त्र्यंबकः । त्रीणिसोमसूर्याग्न्याख्यानि नेत्राणि यस्य ६ ॥ ८३ चंडः सर्वसूदनक्षमः । कुंडं अमत्रवत्स्वस्मिन्सर्वंधारयितुंक्षमः । अंडं ब्रह्मांडं । दंडिने दंडधरायशासित्र इत्यर्थः । समश्चासौ कर्णश्चेति समकर्णः ऋजुर्वक्रश्च । दंडीचासौमुंडश्चेतिदंडिमुंडः परिव्राजकः ७ ॥ ८४ ऊर्ध्वाः उच्चाः दंष्ट्राः केशाश्च यस्य । शुद्धाय शुद्धाय असंगिने । तथाऽपि अवततायअवसन्नेनबाध्येनरूपेणजगदात्मना तताय विस्तृताय । अतएव विलोहिताय रजोगुणिने । धूम्रायतमोगुणिने । नीलग्रीवाय जगद्रक्षणार्थंकंठे विषधारित्वेन सात्त्विकाय ६ ॥ ८५ नास्ति प्रतिरूपः सदृशो यस्य । विविधानि रूपाणि यस्य । शिवाय परमकल्याणाय तुर्यब्रह्मणे । सूर्याय सूर्यमंडलरूपाय । सूर्यमालाय तस्मिन्मालवेशोभते सूर्यमंडलांतर्वर्तिने परमेश्वराय । सूर्यवत्प्रख्याः ध्वजाः पताकाश्च यस्य ८ ॥ ८६ प्रमथाः शिवगणाः । वृषस्येवस्कंधो यस्य पर्णानि भूर्जत्वचः चीराणि वल्कलानि पटा यस्य शबररूपिणस्तापसस्य वा ६ ॥ ८७ । ४ । ८८ । ६ । ८९ नामायनामो जगदस्यास्तीति नामः मत्वर्थीयो ऽन्यस्येति चेतीकारलोपः । नाभ्यायनाभिमर्हतीतिनाभ्यः नाभिनभंचेति यत्प्रत्ययेन भादेशः नाभिस्थानीयाय । अस्य अरनेमिस्थानेकारणकार्यप्रपंचौ तथाचश्रुतिः । 'तद्यथाऽरेषुनेमिरर्पितोनाभावरा अर्पिताएवमस्मिन्प्राणेसर्वंसमर्पितं' प्राणेब्रह्मणि सर्वंकार्यंकारणंच । कदानामावरकाणामपिकवाय आवरकाय । नामद्वयेनांतर्बहिर्व्याप्तिर्दर्शिता १ ॥ ९० किलकिलायशब्दविशेषरूपाय १ ॥ ९१ सर्वक्रियाकर्तृत्वेनस्तौति नमोऽस्त्वित्यादिना ७ ॥ ९२ नद्याभवानिनाद्यानिकमलानितान्येवोपहारस्तत्रलुब्धाय । 'हरिस्तेसाहस्रंकमलबलिमाधायपदयोः' इत्येतदनेनसूचितं ४ ॥ ९३

मूर्तौहितेमहामूर्तेसमुद्रांबरसन्निभ ॥ सर्वा वै देवताह्यस्मिन्गावोगोष्ठइवासते ७९ भवच्छरीरेपश्यामिसोममग्निंजलेश्वरम् ॥ आदित्यमथवैविष्णुंब्रह्माणंचबृहस्पतिम् ८० भगवान्कारणंकार्यंक्रियाकरणमेवच ॥ असतश्चसतश्चैवतथैवप्रभवाप्ययौ ८१ नमोभवायशर्वायरुद्रायवरदायच ॥ पशूनांपतयेनित्यंनमोऽस्त्वंधकघातिने ८२ त्रिजटायत्रिशीर्षायत्रिशूलवरपाणिने ॥ त्र्यंबकायत्रिनेत्रायत्रिपुरघ्नायवैनमः ८३ नमश्चंडायकुंडायअंडायांडधरायच ॥ दंडिनेसमकर्णायदंडिमुंडायवैनमः ८४ नमोर्ध्वदंष्ट्रकेशायशुक्लायावततायच ॥ विलोहितायधूम्रायनीलग्रीवायवैनमः ८५ नमोस्त्वप्रतिरूपायविरूपायशिवायच ॥ सूर्यायसूर्यमालायसूर्यध्वजपताकिने ८६ नमःप्रमथनाथायवृषस्कंधायधन्विने ॥ शत्रुंदमायदंडायपर्णचीरपटायच ८७ नमोहिरण्यगर्भायहिरण्यकवचायच ॥ हिरण्यकृतचूडायहिरण्यपतयेनमः ८८ नमःस्तुतायस्तुत्यायस्तूयमानायवैनमः ॥ सर्वायसर्वभक्षायसर्वभूतांतरात्मने ८९ नमोहोत्रेऽथमंत्रायशुक्लध्वजपताकिने ॥ नमोनाभायनाभ्यायनमःकटकटायच ९० नमोस्तुकृशनासायकृशांगायकृशायच ॥ संहृष्टायविहृष्टायनमःकिलकिलायच ९१ नमोस्तुशयमानायशयितायोत्थितायच ॥ स्थितायधावमानायमुंडायजटिलायच ९२ नमोनर्तनशीलायमुखवादित्रवादिने ॥ नाद्योपहारलुब्धायगीतवादित्रशालिने ९३



ज्येष्ठोवयसाऽधिकः । श्रेष्ठोगुणाधिकः । बलोबलाभिमानीदेवताइंद्रस्तस्यप्रमथनंपराजयस्तत्कर्त्रे । कालस्यापिनाथायनियंत्रे । कल्यायसमर्थाय । क्षयायमहाप्रलयाय । उपक्षयायअवांतरप्रलयाय ७ ॥ ९४ भीमंव्रतमनशनादितस्यधरायधर्त्रे ४ ॥ ९५ बिभीषणायनिर्भयाय । भीष्मायभयंकराय । हेभीम व्रतंशमादिभिः धरणमाकल्पांतंयस्यतस्मै व्रतधराय ६ ॥ ९६ पक्वंयज्ञेआममपक्वंश्मशानेउभयविधमांसलुब्धाय ५ ॥ ९७ वृषायवृष्टिकर्त्रे । वृष्यायवृषोधर्मस्तत्रहितायधर्मवृद्धिकर्त्रे । गोवृषायनंदिरूपाय । वृषायधर्माय । कटंकटाय कटीगतौ नित्यवीप्सयोरितिद्वित्वंमुमागमआर्षः वाय्वादिरूपेणनित्यंगमनशीलायेत्यर्थः कालायवा । दंडायनियंत्रे । पचपचायनित्यंभूतानांपाककर्त्रे कटिपच्योः पचायच् ७ ॥ ९८ गौर्वरः अविरोधेनुः ईप्सितमात्रदानंवरः ततोऽप्यधिकदानमतिवरः वरदेवरदाय किवंतस्यातोधातोरित्यालोपेरूपं ५ ॥ ९९ रक्तोरागवान् विरक्तस्तदन्यस्तदुभयात्मकाय । भावनायध्यात्रे । संभिन्नायकारणरूपेणसर्वतोनुस्यूताय । विभिन्नायकार्यरूपेणव्यावृत्ताय । छायायछायावत्तेयदृहत्वादिरूपाय । छायाशब्दादर्शआद्यच्

नमोज्येष्ठायश्रेष्ठायबलप्रमथनायच ॥ कालनाथायकल्यायक्षयायोपक्षयायच ९४ भीमदुंदुभिहासायभीमव्रतधरायच ॥ उग्रायचनमोनित्यंनमोऽस्तुदशबाहवे ९५ नमःकपालहस्तायचितिभस्मप्रियायच ॥ विभीषणायभीष्मायभीमव्रतधरायच ९६ नमोविकृतवक्त्रायखड्गजिह्वायदंष्ट्रिणे ॥ पक्वाममांसलुब्धायतुंबीवीणाप्रियायच ९७ नमोवृषायवृष्यायगोवृषायवृषायच ॥ कटंकटायदंडायनमःपचपचायच ९८ नमःसर्ववरिष्ठायवरायवरदायच ॥ वरमाल्यगंधवस्त्रायवरातिवरदेनमः ९९ नमोरक्तविरक्तायभावनायाक्षमालिने ॥ संभिन्नायविभिन्नायच्छायायातपनायच १०० अघोरघोररूपायघोरघोरतरायच ॥ नमःशिवायशांतायनमःशांततमायच १०१ एकपाद्बहुनेत्रायएकशीर्ष्णेनमोऽस्तुते ॥ रुद्रायक्षुद्रलुब्धायसंविभागप्रियायच २ पंचालायसितांगायनमःशमशमायच ॥ नमश्चंडिकघंटायघंटायाघंटघंटिने ३ सहस्राध्मातघंटायघंटामालाप्रियायच ॥ प्राणघंटायगंधायनमःकालकलायच ४ हुंहुंहुंकारपारायहुंहुंकारप्रियायच ॥ नमःशमशमेनित्यंगिरिवृक्षालयायच ५

आतपनआतपः ७ ॥ १०० । ५ ॥ १०१ एकपादेकपदे ६ ॥ २ पंचालायविश्वकर्मणे स्वर्णकारलोहकारतक्षादिकर्मकर्त्रेइत्यर्थः । शमशमायनित्यंशाम्यतीतिपचपचवत् । चंडिकाशत्रुभयंकरीघंटायस्यतस्मैचंडिकघंटाय । घंटायघंटानादरूपाय । अघंटघंटिनेनादहेत्वभावेऽपिनादवते अनाहतध्वनिरूपायेत्यर्थः ६ ॥ ३ पुंसांसहस्रैर्युगपदाध्मातापकाऽपिसतीप्रतिबिंबार्कवत्प्रत्येकंपरिसमाप्ताघंटाऽस्ययोगबलवतःसतथा । तादृशघंटामालाप्रियाय । प्राणःपंचवृत्तिर्वायुःसएवघंटावच्छब्दहेतुर्यस्यतस्मैप्राणघंटायः । गंधःप्रसिद्धः कलकलउष्माकोलाहलोवा ५॥ ४ हुंकारःक्रोधवर्णस्तस्यपरोऽतःशमोहुंकारोयाज्ञिकप्रसिद्धः । 'हुंइतिहिंकृत्यभूर्भुवःस्वरोमितिजपत्येषोऽभिहिंकारः' इत्याश्वलायनाद्युक्तोऽभिहिंकारस्तस्यपारोभूरादिलोकेभ्यःपरंशांतंब्रह्म । ऊंहकारआकाशऊकारःपथ्वीशिवमूर्तिःसूर्यस्ताभ्यांनामरूपात्मकःप्रपंचोलक्ष्यते मकारस्तस्यकारणमीश्वरस्तस्यपारस्तुरीयंशांतंब्रह्म तदिदमुक्तंहुंहुंहुंकारपारायेति । हुंहुंकारप्रियायेति क्रोधवर्णहुंकारद्वयप्रियाय । शमशमशांतोभवशांतोभवेत्याचष्टे शमशमेतिशाम्यशाम्येत्यपेक्षितेभौवादिकत्वमार्षं शमशमतीतिशमशमस्तस्मैशमशमे आचारक्विबंतात्कर्तरिक्विप् ४ । ५

गर्भमांसंहृदयजिह्वावक्षआद्यवदानगतंमांसंतत्रसृगालवल्लुब्धाय । यद्वा गर्भमांसंवपातस्यांलुब्धाय । अमृताहुतिर्वेपाहुतिरितिब्राह्मणात् । तारकाययज्ञमोकृत्वेनपापमोचकाय । तराय तरत्यनेनेतिव्युत्पत्त्यायज्ञोपकरणाय । यजिनेयजमानाय । हुतायब्राह्मणमुखेनतृप्ताय । प्रहुतायाग्निमुखेनतृप्ताय ७ ॥ ६ यज्ञवाहायऋत्विगादिरूपेणयज्ञनिर्वोढ्रे । दांतायाजितेंद्रियाय । तप्यायसत्त्वमयाय । आतपनायरजोमयाय । तप्यंसत्त्वंतापकंरजइतिसांख्यप्रसिद्धेः तद्यातअर्हनद्यादिरूपाय । तटानांतद्वतीनांनदीनांपतयेसमुद्राय ७ ॥ ७ अन्नदाय १०० ॥ ४ । ८ । ४ । ९ बालाश्चतेअनुचराश्चतान्गोपायतीतिबालानुचरगोप्ता:तस्मै गुपेरौणादिकस्तन् एतेनचाग्निपानादिश्रीकृष्णलीलासूचिता ७ ॥ ११० त्रीणिकर्माणियजनाध्ययनदानानि ॥ ११ कलकलःकोलाहलः ४ ॥ १२ प्राणभग्नायजितश्वासाय वाहिताग्न्यादिष्वितिविशेष्यस्यैवपूर्वनिपातः दंडआयुधं स्फोटनंविदारणं ६ ॥ १३ सांख्यायकपिलायनिरीश्वर

गर्भमांससृगालायतारकायतरायच ॥ नमोयज्ञाययजिनेहुतायप्रहुतायच १६ यज्ञवाहायदांतायतप्यायातपनायच ॥ नमस्तटायतट्यायतटानांपतयेनमः ७
अन्नदायान्नपतयेनमस्त्वन्नभुजेतथा ॥ नमःसहस्रशीर्षायसहस्रचरणायच ८ सहस्रोद्यतशूलायसहस्रनयनायच ॥ नमोबालार्कवर्णायबालरूपधरायच ९ बाला
नुचरगोप्त्रायबालक्रीडनकायच ॥ नमोवृद्धायलुब्धायक्षुब्धायक्षोभणायच ११० तरंगांकितकेशायमुंजकेशायवैनमः ॥ नमःषट्कर्मतुष्टायत्रिकर्मनिरतायच ११
वर्णाश्रमाणांविधिवत्पृथक्कर्मनिवर्तिने ॥ नमोघुष्यायघोषायनमःकलकलायच १२ श्वेतपिंगलनेत्रायकृष्णरक्तेक्षणायच ॥ प्राणभग्नायदंडायस्फोटनायकृशायच
१३ धर्मकामार्थमोक्षाणांकथनीयकथायच ॥ सांख्यायसांख्यमुख्यायसांख्ययोगप्रवर्तिने १४ नमोरथ्यविरथ्यायचतुष्पथरथायच ॥ कृष्णाजिनोत्तरीयायव्या
लयज्ञोपवीतिने १५ ईशानवज्रसंघातहरिकेशनमोऽस्तुते ॥ त्र्यंबकांबिकनाथायव्यक्ताव्यक्तनमोऽस्तुते १६ कामकामदकामघ्नतृप्तातृप्तविचारिणे ॥ स
र्वसर्वदसर्वघ्नसंध्यारागनमोऽस्तुते १७ महामेघचयप्रख्यमहाकालनमोऽस्तुते ॥ स्थूलजीर्णांगजटिलेवल्कलाजिनधारिणे १८ दीप्तसूर्याग्निजटिलेवल्कलाजिन
वाससे ॥ सहस्रसूर्यप्रतिमतपोनित्यनमोऽस्तुते १९ उन्मादनशतावर्तगंगातोयार्द्रमूर्धज ॥ चंद्रावर्तयुगावर्तमेघावर्तनमोऽस्तुते १२० त्वमन्नमत्ताभोक्ताचअन्नदो
ऽन्नभुगेवच ॥ अन्नस्रष्टाचपक्ताचपक्वभुक्पवनोऽनलः २१ जरायुजांडजाश्चैवस्वेदजाश्चतथोद्भिजाः ॥ त्वमेवदेवदेवेशभूतग्रामश्चतुर्विधः १२२

वादिने । सांख्यमुख्यायसेश्वरपातंजलाय । सांख्यंवेदांतविचारः । योगोनिदिध्यासनं । अनुग्रहद्वारापतयोःप्रवर्तकाय ४ ॥ १४ रथस्तदभावोविरथस्तदुभयार्हायरथ्यविरथ्याय । चतुर्भुजलाग्निवाय्वाकाशेपुर्पंथायस्यरथस्यतद्वते रतायेतिपाठेप्रसिद्धोऽर्थः ४ ॥ १५ ईशानहेईशितः वज्रसंघातवत्कठिनशरीर । हरिकेशपिंगकेश । त्र्यंबकात्रिनेत्राचासौअंबिकाच तस्यानाथ इस्वत्वमार्षं । व्यक्तकार्यरूप । अव्यक्तकारणरूप ६ ॥ १६ कामेतिद्वौ ८ ॥ १७ हेस्थूलहेजीर्णांग । जटिलवदाचरतिजटिलतस्मैजटिले ६ ॥ १८ दीप्तौयौसूर्याग्नीतद्वद्दीप्यमानजटावते ४ ॥ १९ हेउन्मादनव्यामोहकशतमावर्तायस्मिन्गंगाजलेयेतेनार्द्रमूर्धज । चंद्रंआवर्तयतिपुनःपुनरितिचंद्रावर्तस्यर्थः ९ ॥ १२० त्वमितिअन्नभुगन्नपालकः ९ ॥ २१ जरेतिजरायुजांडजाइतिनामद्वयं संधिरार्षः । हेदेवहेदेवेश । भूतग्रामश्चतुर्विधइत्येकंनाम ७ ॥ २२

चरेति ब्रह्मेतिब्रह्मविदांवरेतिचनामत्रयं ४ ॥ २३ मनसइति ६ ॥ ४ हायिहायीतिसामगीतिपुराणार्थास्तोमाः तेप्रत्येकंचतुरक्षराख्यः । सुरश्रेष्ठेत्येकंब्रह्मवादिगेयेविर्यंचमपुत्रेयं ९ २५ यजुरिति वेदोपनिषद्गणस्तुतिपठनीयेतिचतुर्थं ४ ॥ ३०० । १२६ वर्णावराःसंकरजाः । विद्युत्स्तनितंसदृष्टिकोमेघशब्दः । गर्जितंनिर्वृष्टिकःसः नवनामानि ९ ॥ २० १० ॥ २८ वृक्षाणामिति ककुदोमुख्याःन्यग्रोधाश्वत्थादयः । पततांपक्षिणांब्राह्म्यामुपासनार्थविभूतयउक्ताः ९ ॥ २९ ॥ ४ ॥ ३० त्वमितिद्वौ । झर्झरोवाद्यविशेषस्तद्वान् मतोज्ञातः शास्त्रकृद्भिरितिशेषः २४ । ३१ । ३२ दशलक्षणसंयुक्तोधर्मःइत्येकं । लक्षणानिच अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहायमाइति शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानिनियमाइतिचयोगोक्तानि क्षमासत्यादीनिमनूक्तानिवा ८ । ३३ तृणौषध्यइतिद्वे । मृगपक्षिणइतिद्वे । द्रव्यकर्मणांसमारंभइत्येकं । कालःपुष्पफलप्रदइत्येकं ९ ॥ ३४ आदि

चराचरस्यस्रष्टात्वंप्रतिहर्तातथैवच ॥ त्वामाहुर्ब्रह्मविदुषोब्रह्मब्रह्मविदांवर २३ मनसःपरमायोनिःखंवायुर्ज्योतिषांनिधिः ॥ ऋक्सामानितथोंकारमाहुस्त्वांब्रह्म
वादिनः २४ हायिहायिहुवाहायिहावुहायितथाऽसकृत् ॥ गायंतित्वांसुरश्रेष्ठसामगाब्रह्मवादिनः २५ यजुर्मयोऋङ्मयश्चत्वमाहुतिमयस्तथा ॥ पठ्यसेस्तु
तिभिश्चैववेदोपनिषदांगणैः २६ ब्राह्मणाःक्षत्रियावैश्याःशूद्रावर्णावराश्चये ॥ त्वमेवमेघसंघाश्चविद्युत्स्तनितगर्जितः २७ संवत्सरस्त्वमृतवोमासोमासार्धमेवच ॥
युगंनिमेषाःकाष्ठास्त्वंनक्षत्राणिग्रहाःकलाः २८ वृक्षाणांककुदोऽसित्वंगिरीणांशिखराणिच ॥ व्याघ्रोमृगाणांपततांतार्क्ष्योऽनंतश्चभोगिनाम् २९ क्षीरोदोऽसु
दधीनांचयंत्राणांधनुरेवच ॥ वज्रंप्रहरणानांचव्रतानांसत्यमेवच ३० त्वमेवद्वेषइच्छाचरागोमोहःक्षमाऽक्षमे ॥ व्यवसायोधृतिर्लोभःकामक्रोधौजयाजयौ
३१ त्वंगदीत्वंशरीचापिखट्वांगीझर्झरीतथा ॥ छेताभेत्ताप्रहर्तात्वंनेतामंतापितामतः ३२ दशलक्षणसंयुक्तोधर्मोऽर्थःकामएवच ॥ गंगासमुद्राःसरितःपल्व
लानिसरांसिच ३३ लतावल्लयस्तृणौषध्यःपशवोमृगपक्षिणः ॥ द्रव्यकर्मसमारंभःकालःपुष्पफलप्रदः ३४ आदिश्चांतश्चदेवानांगायत्र्योंकारएवच ॥ हरितो
रोहितोनीलःकृष्णोरक्तस्तथाऽरुणः ॥ कद्रुश्चकपिलश्चैवकपोतोमेचकस्तथा ३५ अवर्णश्चसुवर्णश्चवर्णकारोघनोपमः ॥ सुवर्णनामाचतथासुवर्णप्रि
यएवच ३६ त्वमिंद्रश्चयमश्चैववरुणोधनदोऽनलः ॥ उपप्लवश्चित्रभानुःस्वर्भानुर्भानुरेवच ३७ होत्रंहोताचहोम्यंचहुतंचैवतथाप्रभुः ॥ त्रिसौ
पर्णंतथाब्रह्मयजुषांशतरुद्रियम् ३८

श्चेत्यर्थः ४ हरितादिर्दशविधोवर्णः १० ॥ ३५ ॥ ६ त्वमिति उपप्लवउपरागः ९ ॥ ३७ होत्रमित्यर्थं हूयतेस्मिन्नितिहोत्रंवह्निः । होतायजमानः । प्रभुर्हुतस्य फलदईश्वरः ९ त्रिसौपर्णंत्रिसौपर्णेविदितंनामजातं । शतरुद्रसंबंधिनामजातंयस्मिंस्तच्छतरुद्रियं । तत्रब्रह्मवेदरूपं तेनद्रोणपर्वस्यशतरुद्रियस्यशिवोमहेश्वरःशंभुरितिनामाष्टोत्तरशतादेश्चव्यावृत्तिः । वेदांतरेऽपिशतंरुद्रनामानिसंभाव्यंतेतद्व्यावृत्तयेयजुषामिति । यजुषांशतरुद्रियमित्येतावदुक्तेद्रोणपर्वस्यस्यापिशतरुद्रियस्यमूलमूलिभावेनयजुःसंबंधित्वसंभवाद्ब्रह्मेत्युक्तं । तस्यतथात्वेऽपिसाक्षाद्वेदत्वाभावात् । ततश्चहुतंचैवतथाप्रभुरित्यंतान्यष्टाशीत्यधिकंशतत्रयंनाम्नांभवति । तथापवित्रंचपवित्राणामित्यादीनिनिमेषोन्मेषकर्मेत्यंतान्यष्टादशाधिकशतद्वयंतेनषडधिकपट्शतानिनाम्नामिहाम्नातानि । अष्टाधिकसहस्रस्यशेषंद्वयधिकंनाम्नांशतचतुष्टयंत्रिसुपर्णशतरुद्रियाभ्यांपूरणीयं । तथाहि । त्रिसुपर्णत्रयेचतुर्दशमंत्राः १४ सर्वशाखागतानांनाम्नामुपसंहारार्थत्वात् । खिलसहितेषुनमकानुवाकेषु-

प्रथमेषोडशमंत्राएकादशनामानिचेतिसप्तविंशतिः २७ द्वितीयेष्टाचत्वारिंशत् ४८ तृतीयचतुर्थयोःषट्सप्ततिः ७६ ततस्त्रिकेद्विनवतिः ९२ ततोद्विकेऽष्टाशीति ८३ रितिनामान्येवां स्त्ययोः चतुर्विंशतिः २४ मंत्राःशेषखिले १७ सप्तदशमंत्राः । नब्रह्मानचगोविंदइत्यादयोमूलश्लोकाश्चैकविंशतिः २१ सर्वेषांसंकलनेद्व्यधिकंशतचतुष्टयंएतत्पूर्वोक्तषडधिकषट्शतयुत मष्टाधिकंसहस्रंभवति । तथाचामृतत्वकामस्यायंनामसमाम्नायस्त्रिपुर्णत्रयशतरुद्रियाभ्यांसमुच्चितएवश्रेयस्करोनत्वन्यथा न्यूनत्वेनवाग्वज्रत्वापत्तेरितिशिवं ॥ ३८ पवित्रमिति गिरिंगि रिवदचेतनंदेहंकायतिशब्दयतीतिगिरिकः आतोऽनुपसर्गेकइतिकः अचैतनमपिदेहादिचेतनंकरोतीत्यर्थः । अचेतयदचित्तोदेवोअयंइतिमंत्रलिंगंच । हिंडुकः हिंडतेर्गत्यामतंकुंडइति हिंडुकः हिडिगताविस्यस्माद्वाडुलकादुकन्नचिदाभासइत्यर्थः । वृक्षःवृश्च्यतेछेद्यतइतिवृक्षः उपाधिविशिष्टेनरूपेणनाशवान् । जीवःशुद्धस्वरूपेणजीवत्येवननश्यतीत्यर्थः । तथाचश्रु तिर्विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतीत्यविनाशीवाअरेऽयमात्मेतिच । पुद्गलःपूयतेगलतिचेतिपुद्गलोदेहः ७ । ३९ अप्रमदःप्रमदयाखियाहीनः ऊर्ध्वरेताइत्य र्थः १० ॥ १४० लोहितांतर्गतावाचद्वहिरस्य पुंवद्भावाभावआर्षः ७ ॥ ४१ चलाचलःअत्यंतंचलः । तदावतोऽन्यानत्येतीतिश्रुतेः ६ । ४२ मत्स्यइवमत्स्योजीवः संसारनदी

पवित्रंचपवित्राणांमंगलानांचमंगलम् ॥ गिरिकोहिंडुकोवृक्षोजीवःपुद्गलएवच ३९ प्राणःसत्त्वंरजश्चैवतमश्चाप्रमदस्तथा ॥ प्राणोऽपानःसमानश्चउदानोव्यान एवच १४० उन्मेषश्चनिमेषश्चक्षुतंजृंभितमेवच ॥ लोहितांतर्गताद्दृष्टिर्महावक्त्रोमहोदरः ४१ सूचीरोमाहरिश्मश्रुरूर्ध्वकेशश्चलाचलः ॥ गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः ४२ मत्स्योजलचरोजाल्योऽकलःकेलिकलःकलिः ॥ अकालश्चातिकालश्चदुष्कालःकालएवच ४३ मृत्युःक्षुरश्चकृत्यश्चपक्षोऽपक्षक्षयंकरः ॥ मेघकालोमहादंष्ट्रःसंवर्तकबलाहकः ४४ घंटोऽघंटोघटीघंटीचरुचेलीमिलीमिली ॥ ब्रह्मकायिकमग्नीनांदंडीमुंडस्त्रिदंडधृक् ४५ चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्तकः ॥ चातुराश्रम्यनेताचचातुर्वर्ण्यकरश्चयः ४६ सदाचाक्षप्रियोधूर्तोगणाध्यक्षोगणाधिपः ॥ रक्तमाल्यांबरधरोगिरिशोगिरिकप्रियः ४७ शिल्पिकःशिल्पिनांश्रेष्ठः सर्वशिल्पप्रवर्तकः ॥ भगनेत्रांकुशश्चंडःपूष्णोदंतविनाशनः ४८ स्वाहास्वधावषट्कारोनमस्कारोनमोनमः ॥ गूढव्रतोगुह्यतपास्तारकस्तारकामयः ४९

जलेचरतीतिजाल्योवासनाजालबद्धः वस्तुतस्त्वकलोदुर्धरः कलनंधरणंकलः केलिरेवकलोयस्य लीलयाऽस्यबद्धत्वंनान्यवशतयेत्यर्थः १० । ४३ क्षुरःछेदनसाधनं कृत्यःछेत्तुंयो ग्यः कृतीछेदनेइत्यस्यरूपं । पक्षोमित्रंअपक्षःअमित्रं तत्पक्षयंकरः संवर्तकबलाहकःकल्पांतमेघः ८ ॥ ४४ घंटादीप्यतेतेइतिघंटःप्रकाशवान् । अघंटोमायावृतत्वेनप्रच्छन्नप्रकाशः । घटयतिकर्मफलैर्योजयतिनरानितिघटी । घंटीघंटावान् । चरुचेली चरंतितेचरवःस्थावरजंगमात्मानोवास्तैःसारिमिरिवचेलतिक्रीडतइतिचरुचेली । मिली मिलनंसंश्लेषणंमिलः तत्रयेणभावेकः तदस्यास्तीतिमिली कारणतयासर्वकार्येष्वनुस्यूतइत्यर्थः । द्विर्वचनंनित्यव्याप्तिप्रदर्शनार्थं । यद्वामिलीइतिद्विवचनांतेनमिलिमिलिइतिमंत्रपदंसाम्यासमुद्धृतंभवति । गौडास्तुरुद्रचीलि चिलीमिलीइतिपठंति अस्मिन्पक्षेघंटीप्रणवः रुद्रेतिसंबुद्धिः मिलीरुचीलिचिलिशब्दावपिद्विस्त्वपरौज्ञेयौ ब्रह्मप्रणवःअग्नीनांकायिकंकायेभवंकायिकंजाया । सइमवेतास्मानंद्वेधापातयत्ततःपति श्चपत्नीचाभवतामितिश्रुतेः वह्निजायास्वाहेत्यर्थः । तेन ओंरुद्रचीलिचीलिचिलिचिलिचिलिमिलिमिलिओंस्वाहेत्यष्टादशार्णोमंत्रश्चद्धृतोभवति । दंडी मुंडइतिपरमहंसः । त्रिदंडधृगितित्रिदंडीउक्तः १३ । ४५ । ५ ४६ गिरिकंकापायंतत्प्रियमस्य ७ । ४७ शिल्पिकोऽल्पशिल्पी ६ । ४८ नमस्कारस्थैवफलंतदनमोनमइतिशिष्टप्रयोग्यं । तारकःप्रणवः तारकामयःप्रचुरनक्षत्रआकाशरूपः५।४९

धाताआदिकर्ताविष्णुः । विधाताभौतिकस्रष्टाचतुर्मुखः । संधाताएकीकृत्यस्थापकः । संहर्तामहेश्वरः । विधाताविधिरदृष्टंकर्मेत्यर्थः । धारणः सर्वाधिष्ठानभूतःकारणात्मा । अ धरोनास्तिधरोधर्तायस्येतिसर्वबाधावधिभूतःशुद्धात्मा । ब्रह्माब्रह्मवित् । तपआदिचतुष्टयंब्रह्मविद्यासाधनं ११ ॥ १५० भूतानांजरायुजादीनामात्मा । भूतकृद्वियदाद्युत्पादकः । भूतोनित्यसिद्धः । भूतमतीतं भव्यंभवतीतिकर्तरिकृत्यः । वर्तमानंभविष्यंचतयोर्भवउत्पत्तिर्यस्मान्मायाशबलात्तस्याप्युद्भवउत्पत्तिस्थानं । भूर्भुवःस्वरितिनामत्रयं ध्रुवश्चेत्येकं नाम ध्रुवोध्रुवमानाद्वियदादेरपिध्रुवः शाश्वतइत्यर्थः । दांतोजितेंद्रियः । अतएवमहेश्वरइतरेभ्योब्रह्मादिभ्यईश्वरेभ्योऽपिमहान् १० ॥ ५१ अदांतनाशनइतिच्छेदः चंद्रमावर्त यतिमासः युगमावर्तयतिकल्पः सएवसंवर्तःसंप्रवर्तकः सृष्टिहेतुः ९ ॥ ५२ कामःरूपमिलाषः बिंदुःरेतोंशःपुत्रबीजभूतः स्रजइतिसमासांतष्टजार्षः नंदीतिदैर्घ्यमार्षं अमुखइति च्छेदः ॥ ५३ शकुनिःपक्षिवदसंगः ७ ॥ ५४ गोनर्दःकृष्णावतारेगोपबाललीलायांगौरिवनर्दतिशब्दंकरोतीतितथा । गोप्रतारोगवांप्रकर्षेणतारकोविषजलाच्छिलाद्दृष्टितश्चगोवर्धनो

धाताविधातासंधाताविधाताधारणोधरः ॥ ब्रह्मातपश्चसत्यंचब्रह्मचर्यमथार्जवम् १५० भूतात्माभूतकृद्भूतोभूतभव्यभवोद्भवः ॥ भूर्भुवःस्वरितश्चैवध्रुवोदांतोम हेश्वरः ५१ दीक्षितोऽदीक्षितःक्षांतोदुर्दांतोऽदांतनाशनः ॥ चंद्रावर्तयुगावर्तःसंवर्तःसंप्रवर्तकः ५२ कामोबिंदुरणुःस्थूलःकर्णिकारस्रजप्रियः ॥ नंदीमुखोभीम मुखःसुमुखोदुर्मुखोऽमुखः ५३ चतुर्मुखोबहुमुखोरणेष्वग्निमुखस्तथा ॥ हिरण्यगर्भःशकुनिर्महोरगपतिर्विराट् ५४ अधर्महामहापार्श्वश्चंडधारोगणाधिपः ॥ गोनर्दोगोप्रतारश्चगोवृषेश्वरवाहनः ५५ त्रैलोक्यगोप्तागोविंदोगोमार्गोऽमार्गएवच ॥ श्रेष्ठःस्थिरश्चस्थाणुश्चनिष्कंपःकंपएवच ५६ दुर्वारणोदुर्विषहोदुःसहोदुर तिक्रमः ॥ दुर्धर्षोदुष्प्रकंपश्चदुर्विषोदुर्जयोजयः ५७ शशःशशांकःशमनःशीतोष्णक्षुज्जराधिहृत् ॥ आधयोव्याधयश्चैवव्याधिहाव्याधिरेवच ५८ ममयज्ञमृग व्याधोव्याधीनामागमोऽगमः ॥ शिखंडीपुंडरीकाक्षःपुंडरीकवनालयः ५९ दंडधारस्त्र्यंबकश्चउग्रदंडोंडनाशनः ॥ विषाग्निपाःसुरश्रेष्ठःसोमपास्त्वंमरुत्पतिः ॥ अमृतपास्त्वंजगन्नाथदेवदेवगणेश्वरः ॥ विषाग्निपामृत्युपाश्चक्षीरपाःसोमपास्तथा ॥ मधुश्च्युतानामग्रपास्त्वंत्वमेवतुषिताद्यपाः ६१

द्धरणेनाऽऽपत्तारकः । गोवृषाख्यमीश्वरोनंदीवाहनंयस्य ७ ॥ ५५ गोमार्गोगवामिंद्रियाणांमार्गइवगत्याश्रयःइंद्रियपालकइत्यर्थः । अमार्गः इंद्रियाद्यग्राह्यइत्यर्थः श्रेष्ठःप्रशस्य तमः । स्थिरश्चलनहीनः । स्थाणुस्त्रैलोक्यधारणस्तंभः । निष्कंपः कंपःकंपवान् ९ ॥ ५६ दुर्वारणोमृत्युरूपेणाऽऽगतःसन्दुःखेनापिवारयितुमशक्यः । अमृतरूपेणानुगृह्णातिचे दुर्विषहोदुःखस्यापिविषस्यहंता । संग्रामेदुःसहःदुरतिक्रमश्च । दुर्धर्षोमीषयितुमप्यशक्यः । दुर्विषोदुःखेनवेष्टुंव्याप्तुंप्रवेष्टुमशक्यः विष्लृव्याप्तावित्यस्यकप्रत्ययेरूपं । जयोजयस्वरूपी नरोधर्मराजारूपोवा ९ ॥ ५७ शशःशीघ्रगः । शशांकश्चंद्रः । शमनोयमः ८ ॥ ५८ यज्ञमृगस्यव्याधइवहंता । व्याधीनामागमः । व्याधीनांगमश्च ९ ॥ ५९ त्रीणि वेदाख्यान्यंबकानिचक्षूंषियस्य । विषरूपमग्निंपिबतीतिविषाग्निपाः । विषाग्रपादितिपाठेविषमेवाऽग्रपादस्त्रैलोक्याक्रमणार्थोयस्यास्तिसतथा ८ ॥ १६० विषाग्नेःसकाशात्पातीति विषाग्निपाःसर्वत्रपिबतीत्येववा मधुश्च्युतानांस्वर्गादिसुखाढ्यानामग्रेपूर्वंपातीतिप्रथमरक्षकः आपत्त्रातेत्यर्थः । तुषितानांदेवानामाद्योब्रह्मातंपातीतितुषिताद्यपाः १० ॥ ६१

हिरण्यरेतावह्निः । विश्वकृत्विश्वकर्ता ६१ । ६२ विश्वंकृंतति छिनत्तीति विश्वकृत् विश्वसंहर्तेत्यर्थः । विश्वकृतांविश्वसृजांप्रजापतीनांवरेण्योवरणीयः । विश्वंवहतिपालनपोषणे नस्वस्मिन्धारयतीतिविश्ववाहः चंद्रेत्यर्धःस्तुतिरेव ॥ ६३ सरस्वतीनदी वाग्वर्णरूपा । बलंवैराग्यं । निमेषोन्मेषादिकंकर्मयस्यसनिमेषोन्मेषकर्मा । यंविनानिमेषादिकमपिकर्तुं नकश्चिच्छक्रोतीत्यर्थः । तथाचश्रुतिः 'नहित्वदारेनिमिषश्चनेशे' इति त्वत्त्वत्तःआरेदूरात् त्वांविनेत्यर्थः । निमिषश्चनिमेषोऽपि नईशेनेशितवान् । पूर्वेषांब्रह्मादीनामपिपक्ष्मपातोऽपि त्वत्प्रेरणंविनानासीदित्किमुतेदानींतनानामल्पसाराणामितिश्रुतिपदार्थः ८ ॥ ६४ नब्रह्मानचगोविंदइत्यादयएकविंशतिश्लोकाजपहोमादौएकैकनामगणनयायथावस्थंतीतिप्रागुक्तं ६५ । ६६ ६७ पुंसांसहस्राण्यावृत्याज्ञानेनाभिभूय एकःज्ञेयज्ञानज्ञातृभावशून्यः । समुद्राणांकामानामंतेनाशेसतितिष्ठतिप्रकाशते । कामंसमुद्रमाविशेतिमंत्रलिंगात्समुद्रशब्दःकामवचनः । 'यदा सर्वेप्रमुच्यंतेकामायेऽस्यहृदिश्रिताः ॥ अथमर्त्योऽमृतोभवत्यत्रब्रह्मसमश्नुते'इतिकामांतेब्रह्मभावश्रुतेश्च ६८ ईदृग्रूपसत्वेविद्वदनुभवंप्रमाणयति यंविनिद्राइति । विनिद्रत्वेहेतुःजितश्वासा

हिरण्यरेताःपुरुषस्त्वमेवत्वंस्त्रीपुमांस्त्वंचनपुंसकंच ॥ बालोयुवास्थविरोजीर्णदंष्ट्रस्त्वंनागेंद्रशक्रस्त्वंविश्वकृद्विश्वकर्ता ६२ विश्वकृद्विश्वकृतांवरेण्यस्त्वंविश्ववाहो विश्वरूपस्तेजस्वीविश्वतोमुखः ॥ चंद्रादित्यौचक्षुषीतेहृदयंचपितामहः ६३ महोदधिःसरस्वतीवाग्बलमनलोऽनिलः ॥ अहोरात्रंनिमेषोन्मेषकर्मा ६४ नब्रह्मानचगोविंदःपौराणाऋषयोनते ॥ माहात्म्यंवेदितुंशक्तायाथातथ्येनतेशिव ६५ यामूर्तयःसुसूक्ष्मास्तेनमह्यंयांतिदर्शनम् ॥ त्राहिमांसततंरक्षपितापुत्रमिवौरसम् ६६ रक्षमांरक्षणीयोऽहंतवानघनमोऽस्तुते ॥ भक्तानुकंपीभगवान्भक्तश्चाहंसदात्वयि ६७ यःसहस्राण्यनेकानिपुंसामावृत्यदुर्दृशः ॥ तिष्ठत्येकःसमुद्रांतेसमेगोप्ताऽस्तुनित्यशः ६८ यंविनिद्राजितश्वासाःसत्वस्थाःसंयतेंद्रियाः ॥ ज्योतिःपश्यंतियुंजानास्तस्मैयोगात्मनेनमः ६९ जटिलेदंडिनेनित्यंलंबोदरशरीरिणे ॥ कमंडलुनिषंगायतस्मैब्रह्मात्मनेनमः १७० यस्यकेशेषुजीमूतानद्यःसर्वांगसंधिषु ॥ कुक्षौसमुद्राश्चत्वारस्तस्मैतोयात्मनेनमः ७१ संभक्ष्यसर्वभूतानियुगांतेपर्युपस्थिते ॥ यःशेतेजलमध्यस्थस्तंप्रपद्येऽम्बुशायिनम् ७२ प्रविश्यवदनंराहोर्यःसोमंपिबतेनिशि ॥ ग्रसत्यर्कंचस्वर्भानुर्भूत्वामांसोऽभिरक्षतु ७३

इति । सनिद्रोहिश्वसित्येव एवमपिइष्टेनमनिरुद्धेवायोसुषुप्तिसदृशीमूर्च्छामवाप्तिंतांवारयितुंसत्वस्थाइति । तत्राप्यज्ञानमस्त्येवेतिनासौसमाधिःकिंसत्वोत्कर्षस्यपरस्याकाष्ठायांजायमानाहं ब्रह्मास्मीतिवाक्यजावृत्तिःकतकरजोवत्प्रपंचंप्रविलाप्यस्वयमपिसंस्कारात्मनातिष्ठंतीतिसत्वशब्दवाच्या तस्यांतिष्ठंतीतिसत्वस्थाःसंयतेंद्रियाइतिजाग्रद्व्यावृत्तिः ज्योतिःचितितन्मात्रंयुंजाना योगिनः ६९ अस्मिन्योगेप्रथममालंबनीयंमूर्तिमद्रूपमुपदिशति जटिलेजटिलवदाचरन्जटिलस्तस्मै आचारकिवंतादातोःकर्तरिक्विप् । लंबोदरंयच्छरीरंतद्वते कमंडलुर्जलपात्रंतदेवनिषंगःबाणाधारोयस्य कमंडलुजलेनैवक्षराक्षसादीन्नाशयतेइत्यर्थः । ब्रह्माचतुर्मुखस्तदात्मने १७० इदऊर्ध्ववैराजींधारणामाह यस्येति ७१ अस्याप्युपसंहारमाह संभक्ष्येति जलमिवजलंनिर्विशेषंब्रह्मतत्रयोमायावीशेतेलीनोभवति । कथंसर्वभूतान्याकाशादीनिसंभक्ष्यस्वात्मनिप्रविलाप्यस्वयमपिलीयतइत्यर्थः ७२ इमंराजयोगमनुष्ठातुमसमर्थस्यहठयोगमाह प्रविश्येति मुखस्यऊर्ध्वफलकेयच्छिद्रंतत्रचर्मात्मकंदोलंबत्वेनघंटिकेतिलंबिकेतिचान्यत्रउच्यते ग्राहइचंद्रसूर्यदेवस्यपोरिडापिंगलयोर्नाड्योःसंहारकत्वाद्राहोर्वदनमित्युच्यते ।-



तत्रहिजिह्वाग्रेव्यावृत्यधारितेसतिवायुर्निरुद्धोभवति सेयंखेचरीनाममुद्राहठयोगिनांप्रसिद्धा सोमंतत्रत्यममृतंपिबते निशिरात्रौज्ञानज्ञेयज्ञातृविभागाभावलक्षणायांसत्यां निशासद्भावेरतमेवहेतुमाह यतःस्वर्भानुःराहुरूकरूपःअर्कंचाचंद्रं इडापिंगलेग्रसतितन्मार्गंनिरोधेनहृदयविमार्गंगिलतियःसमांपरमेश्वरोऽभितोरक्षतु । अत्रग्रंथांतरवाक्यानिसांख्ययोगे । 'इडायांपिंगलायांचचरतश्चंद्रभास्करौ ॥ इडायांचंद्रमाज्ञेयःपिंगलायांरविःस्मृतः'इति शिवयोगे । अथतेषोडशाधारान्प्रवक्ष्यामिविशेषतइत्युपक्रम्य 'नवमंघंटिकाधारंजिह्वाग्रंतत्रदापयेत् ॥ सुधाकलास्रवत्येषासातुसंतृप्तिकारिणी ॥ यालंबिकाचालनदोहनाभ्यांदीर्घीकृतासाविपरीतमार्गात् ॥ यस्तालुमूलांतरगर्भदेशप्रवेशायेरसोन्मनत्वंप्रयाति' ॥ ईश्वरप्रोक्ते 'लंबिकोर्ध्वस्थितेगर्तेरसनांविपरीतगां ॥ संयोजयेत्प्रयत्नेनसुधाकूपेविचक्षणः ॥ मुद्रैषाखेचरीप्रोक्ताभक्तानामनुरोधतः ॥ निरंतरकृताभ्यासात्पीयूषंप्रत्यहंपिबेत् ॥ तेनविग्रहसिद्धिःस्यान्मृत्युमातंगकेसरी'इति । इयमेवभ्रूमध्यदृष्टिरित्याह दत्तात्रेयः 'अंतःकपालविवरेजिह्वांव्यावृत्यधारयेत् ॥ भ्रूमध्यदृष्टिरप्येषामुद्राभवतिखेचरी'इति ७३ द्विविधेऽपियोगेत्रिविधविघ्नविघातकंमंत्रजातंपठति येचेति गर्भाइवास्यंत

येचानुपतितागर्भायथाभागानुपासते ॥ नमस्तेभ्यःस्वधास्वाहाप्राप्नुवंतुमुदंतुते ७४ येंऽगुष्ठमात्राःपुरुषादेहस्थाःसर्वदेहिनाम् ॥ रक्षंतुतेहिमांनित्यंनित्यंचाप्याययंतुमाम् ७५ येनरोदंतिदेहस्थादेहिनोरोदयंतिच ॥ हर्षयंतिनहृष्यंतिनमस्तेभ्योऽस्तुनित्यशः ७६ येनदीषुसमुद्रेषुपर्वतेषुगुहासुच ॥ वृक्षमूलेषुगोष्ठेषुकांतारेगहनेषुच ७७ चतुष्पथेषुरथ्यासुचत्वरेषुतटेषुच ॥ हस्त्यश्वरथशालासुजीर्णोद्यानालयेषुच ७८ येषुपंचसुभूतेषुदिशासुविदिशासुच ॥ चंद्रार्कयोर्मध्यगतायेचचंद्रार्करश्मिषु ७९ रसातलगतायेचयेचतस्मैपरंगताः ॥ नमस्तेभ्योनमस्तेभ्योनमस्तेभ्योऽस्तुनित्यशः १८० येषांनविद्यतेसंख्याप्रमाणंरूपमेवच ॥ असंख्येयगुणारुद्रानमस्तेभ्योऽस्तुनित्यशः ८१ सर्वभूतकरोयस्मात्सर्वभूतपतिर्हरः ॥ सर्वभूतांतरात्माचतेनत्वंननिमंत्रितः ८२ त्वमेवहीज्यसेयस्माद्यज्ञैर्विविधदक्षिणैः ॥ त्वमेवकर्तासर्वस्यतेनत्वंननिमंत्रितः ८३ अथवामाययादेवसूक्ष्मयातवमोहितः ॥ एतस्मात्कारणाद्वापितेनत्वंननिमंत्रितः ८४ प्रसीदममभद्रंतेभावभावगतस्यमे ॥ त्वयिमेहृदयंदेवत्वयिबुद्धिर्मनस्त्वयि ८५ स्तुत्वैवंसमहादेवंविरराममप्रजापतिः ॥ भगवानपिसुप्रीतःपुनर्दक्षमभाषत ८६ परितुष्टोऽस्मितेदक्षस्तवेनानेनसुव्रत ॥ बहुनात्रकिमुक्तेनमत्समीपेभविष्यसि १८७

शिशवःअनुपतुर्मुखसुद्दिमनुपतिताःनिर्गतास्त्वत्तइतिशेषः । यथायथाभागान्यज्ञेषुपासतेदेवाःपितरश्चतेभ्योनमः तेचस्वाहास्वधाशब्दाभ्यांदत्तेनहव्यकव्येनमुदंहर्षंप्राप्नुवंतु ७४ आधिदैवात्शांतिप्रार्थ्याध्यात्ममूतात्प्रार्थयतेद्वाभ्यां येंऽगुष्ठेति । अंगुष्ठमात्राः जीवाः ७५ प्राणाभ्रणमति येइति देहिनोजीवान्यतोरोदयंत्यतोरुद्राख्याएतेप्राणाःश्रुताः ७६ आधिभौतिकेभ्यःसुखंप्रार्थयते येनदीष्वित्यादिना ७७ । ७८ । ७९ तस्मैतत्पदार्थायईश्वरार्थमित्यर्थः परमुत्कृष्टंवैराग्यादिकंगताःप्राप्ताः । 'तदितिवाएतस्यमहतोभूतस्यनामभवति'इतिश्रुत्याईश्वरस्यतच्छब्दाभिधेयत्वमुक्तं १८० येषामितिसार्वात्म्यमेवमर्गयंतरेणईश्वरस्योक्तं ८१ स्वयज्ञेईश्वरस्यानिमंत्रणयुक्तिमाह सर्वेति उपादानत्वादंतर्यामित्वादंतरात्मत्वाच्चनव्यवहितस्यपृथग्भूतस्येववनिमंत्रणंयुक्तमित्यर्थः ८२ । ८३ ननुउपादानत्वादिनारूपेणमांजानन्कथंनिंदितवानसीत्याशंक्याह अथवेति ८४ भावगतस्यसृष्टावधिकृतत्वेनराजसभावगतस्य सर्वैकप्राज्ञत्वामजानतइत्यर्थः हृदयंचित्तं चिंतनंनिश्चयः संकल्पश्चत्वद्गोचरएवप्राप्तीत्यर्थः ८५ । ८६ । ८७

८८ वाक्यंवचनं वाक्यंवक्तुमुचितं वाक्यविदांवाक्यानितेषुसंमतंयुक्तिमतम् ८९ तुभ्यंतव दृष्टंपूर्वकल्पे अतःसर्वेषांकल्पानांसमानरूपत्वादस्मिन्नपिकल्पेतवैवयज्ञहर्ताऽहंजातोऽतोमन्युर्दैन्यं नकार्यं अप्रतिकार्यत्वाद्भाविनइत्यर्थः पुरातनंपुराणं १९० । ९१ एतत्स्तोत्रजपांगभूतंव्रतंतद्वयंविधित्सुस्तत्स्तुतयेवैदिकंधर्मंमनुवदतिवेदादिति ९२ वेदोक्तंतपोवेदादिभिश्चीर्णंतदपेक्षयामया वक्ष्यमाणंव्रतंश्रेष्ठमित्याह अपूर्वमिति अपूर्वंवेदषडंगसांख्ययोगतर्कैरनधिगतंकिंतर्हिकेवलंराद्धुपनिषत्स्वत्याश्रमस्थपदेनप्रकाशितम् । सर्वतोभद्रंफलकालेसाधनकालेचश्रेयोरूपं सर्वतो मुखंसर्वेषुवर्णेष्वाश्रमेषुचाऽभिमुखं सर्वेषामिहाधिकारोऽस्तीत्यर्थः । अव्ययंमोक्षहेतुत्वात् अब्दैर्भूयसाकालेनाऽब्दसाध्यैःसहस्रसंवत्सरसत्रादिभिःकर्मभिर्वादशाहैःसंयुक्तं दशपंचयमाःपंच नियमाश्चतएवाहानियज्ञकतवोयेषां अहःशब्दस्यक्रतुवाचित्वंनवैताम्यहानिभवंतीत्यादौप्रसिद्धम् । भूयसाकालेनपुण्येनवायमनियमवद्भिर्लभ्यमित्यर्थः । दशाहेतिपाठेतद्वतयागपूज्यैर्लभ्य मित्यर्थः । गौडास्तुदशार्धेतिपठंतितदाब्दैःमासंदशार्धैःपंचाभिःसद्योजातमित्यादिभिर्मंत्रैःसंयुक्तं भाग्निरंमस्मसद्योजातदिपंचमंत्रैःपरिगृह्यत्र्यंबकमितिजलेनमिश्रयित्वेत्यादिश्रुतेः । आस्मि न्पक्षेऽत्याश्रममितिपाशुपतव्रतस्यैवविशेषणम् गूढमत्याश्रमस्थइतिपदमात्रेणसूचितमप्रकाशम् अतएवाप्राज्ञैःकर्मठैर्निंदितम् ९३ वर्णेति सूतसंहितायामत्याश्रमस्थइत्यत्रत्यमाश्रमपदंवर्णो

अश्वमेधसहस्रस्यवाजपेयशतस्यच ॥ प्रजापतेमत्प्रसादात्फलभागभिविष्यसि १८८ अथैनमब्रवीद्वाक्यंलोकस्याधिपतिर्भवः ॥ आश्वासनकरंवाक्यंवाक्य विद्वाक्यसंमितम् ८९ दक्षदक्षनकर्तव्योमन्युर्विघ्नमिमंप्रति ॥ अहंयज्ञहरस्तुभ्यंदृष्टमेतत्पुरातनम् १९० भूयश्चतेवरंदद्मितंत्वंगृह्णीष्वसुव्रत ॥ प्रसन्नवदनो भूत्वातदिहैकमनाःशृणु ९१ वेदात्षडंगादुद्धृत्यसांख्ययोगाच्चयुक्तितः ॥ तपःसुतप्तंविपुलंदुश्चरंदेवदानवैः ९२ अपूर्वंसर्वतोभद्रंसर्वतोमुखमव्ययम् ॥ अब्दै र्दशाहसंयुक्तंगूढमप्राज्ञनिंदितम् ९३ वर्णाश्रमकृतैर्धर्मैर्विपरीतंकचित्समम् ॥ गतांतैरध्यवसितमत्याश्रममिदंव्रतम् १९४

मलक्षणीकृत्यवर्णाश्रमधर्मानतिक्रांतमतिवर्णाश्रमंव्रतंतद्वानतिवर्णाश्रमीतितेनपदेनब्रह्मविदंविवक्षित्वा । 'ब्रह्मचारीगृहस्थश्चवानप्रस्थोऽथभिक्षुकः । अतिवर्णाश्रमीतिऽपिक्रमाच्छ्रेष्ठाविच क्षण'इत्युपक्रम्यभूयसाग्रंथेनतल्लक्षणान्युक्त्वा । 'यस्यवर्णाश्रमाचारोगलितःस्वात्मदर्शनात् । सवर्णानाश्रमान्सर्वानतीत्यस्वात्मनिस्थितः' । तथा 'नविधिर्ननिषेधश्चनवर्ज्यावर्ज्यकल्पना । आत्मविज्ञानिनामस्तितथाचान्यज्जनार्दन'इतितस्ययथेष्टाचरणमप्यनुज्ञातम् तदिदमभिप्रेत्यकचिद्वर्णाद्विधर्मैर्विपरीतमुक्तं एतेनास्यैतदसंमतमितिसूचितं तथाचसूत्रं सर्वान्नानुम तिश्चप्राणात्ययेतद्दर्शनादिति । छांदोग्येउषस्तिर्हचाक्रायणइभ्यग्रामेप्रद्राणकउवासमहेभ्यंकुल्माषान्खादंतंबिभिक्षेतंहोवाचनेतोऽन्येविद्यंतेयच्चयेमइमउपनिहिताइत्येतेषांमेदेहीतिहोवाचता नस्मैप्रददौहंतानुपानमित्युच्छिष्टंवैमेपीतंस्यादितिहोवाचनस्विदेतेऽप्युच्छिष्टाइतिनवाअजीविष्यमिमानखादन्नितिकामोमउदपानमितिब्रह्मविदउपस्तस्यइभ्योच्छिष्टपकमाषभक्षणंतद्वत्जल स्यागश्चप्राणात्ययकालेएवविदुषांनिषिद्धाचरणंकामकारनिषेधंचदर्शयतः अतएवोक्तं । 'तथाचरेतवैयोगीसतांधर्ममदूषयन् । जनायथाऽवमन्येरन्गच्छेयुर्नैवसंगतम्'इति । 'साक्षात्कृतात्मत त्त्वस्ययथेष्टाचरणंयदि । शुनांतत्त्वदृशांचैवकोभेदोऽशुचिभक्षणे'इतिचक्वचिद्विपरीतमपिवस्तुतःसममेव विदुषःकर्तृत्वाभिमानाभावेनतत्रविधिनिषेधयोरप्रवृत्तेः गतांतैर्ज्ञातसिद्धांतैरध्यवसितं निश्चितं अत्याश्रमंपरमहंसपारिव्राज्यं यद्यप्याश्रमलिंगधारणंब्राह्मणस्यैवतथापितद्धर्माःशमादयःसर्ववर्णसाधारणाः अतएवगृहस्थादीनामप्यत्याश्रमित्वमुक्तंब्रह्मचारीत्युदाहृतसूतसंहिता श्लोके । तद्विशिनष्टि इदंव्रतमिदंवक्ष्यमाणंव्रतमत्यस्मिन्नितीदंव्रतमितिसमस्तंपदं ९४



किंतद्व्रतमित्यतआह मयेति मयात्रेदकर्त्राउत्पादितंप्रकटीकृतं एतच्चश्रूयतेअथर्वशिरउपनिषदि व्रतमेतत्पाशुपतं अग्निरितिभस्मवायुरितिभस्मजलमितिभस्मस्थलमितिभस्मव्योमेतिभस्मसर्वं हवाइदंभस्ममनएतानिचक्षूंषिभस्मान्यग्निरित्यादिनाभस्मगृहीत्वाभिमृज्यांगानिसंस्पृशेत् तस्माद्व्रतमेतत्पाशुपतंपशुपाशविमोक्षायेति पशवोजीवाः पाशोऽविद्या यद्यपिसंन्यासोभस्मोद्धू लनंचद्वयमपिविद्यार्थमुक्तंतथापिसंन्यासस्यतीव्रतरवैराग्याधिकारिकत्वेनदुःशकत्वाद्भस्मधारणस्यैवमुख्यंविद्यांगत्वंध्येयं ९५ । ९६ । ९७ ब्रह्मसंमितोवेदेनतुलितः अस्मिन्स्तवेऽर्थंव दुमागोर्धपाराणांशइति ९८ विद्याकामैर्ब्रह्मसाक्षात्कारार्थिभिः ९९ । २०० । २०१ । २ । ३ । ४ । ५ नामजपेविशेषविधिमाह देवस्येति गुहस्यकार्तिकेयस्य अत्रायंप्रयोगः शुचिः

मयापाशुपतंदक्षशुभमुत्पादितंपुरा ॥ तस्यचीर्णस्यतत्सम्यक्फलंभवतिपुष्कलम् ९५ तच्चास्तुतेमहाभागत्यज्यतांमानसोज्वरः ॥ एवमुक्त्वामहादेवःसपत्नीकः सहानुगः ॥ अदर्शनमनुप्राप्तोदक्षस्यामितविक्रमः ९६ दक्षप्रोक्तंस्तवमिमंकीर्तयेद्यःशृणोतिवा ॥ नाशुभंप्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् ९७ यथासर्वेषुदेवे षुवरिष्ठोभगवाञ्छिवः ॥ तथास्तवोवरिष्ठोऽयंस्तवानांब्रह्मसंमितः ९८ यशोराज्यसुखैश्वर्यकामार्थधनकांक्षिभिः ॥ श्रोतव्योभक्तिमास्थायविद्याकामैश्चयत्नतः ९९ व्याधितोदुःखितोदीनश्चोरग्रस्तोभयार्दितः ॥ राजकार्याभियुक्तोवामुच्यतेमहतोभयात् २०० अनेनैवतुदेहेनगणानांसमतांव्रजेत् ॥ तेजसायशसाचैवयु क्तोभवतिनिर्मलः १ नराक्षसाःपिशाचावानभूतानविनायकाः ॥ विघ्नंकुर्युर्गृहेतत्रयत्रायंपठ्यतेस्तवः २ शृणुयाच्चैवयानारीतद्भक्ताब्रह्मचारिणी ॥ पितृ पक्षेमातृपक्षेपूज्याभवतिदेववत् ३ शृणुयाद्यःस्तवंकृत्स्नंकीर्तयेद्वासमाहितः ॥ तस्यसर्वाणिकर्माणिसिद्धिंगच्छंत्यभीक्ष्णशः ४ मनसाचिंतितंयच्चयच्चवाचा ऽनुकीर्तितम् ॥ सर्वंसंपद्यतेतस्यस्तवस्यास्यानुकीर्तनात् ५ देवस्यचगुहस्यापिदेव्यानंदीश्वरस्यच ॥ बलिंसुविहितंकृत्वादमेननियमेनच ६ ततस्तुयु क्तोगृह्णीयान्नामान्याशुयथाक्रमम् ॥ ईप्सितान्लभतेसोऽर्थान्भोगान्कामांश्चमानवः ७ मृतश्चस्वर्गमाप्नोतितिर्यक्षुचनजायते ॥ इत्याहभगवान्व्यासः पराशरसुतःप्रभुः २०८ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि दक्षप्रोक्ताशिवसहस्रनामस्तवे चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥
॥ युधिष्ठिरउवाच ॥ अध्यात्मंनामयदिदंपुरुषस्येहविद्यते ॥ यदध्यात्मंयतश्चैवतन्मेब्रूहिपितामह १

कृतनित्यक्रियःकालाग्निरुद्रोपनिषदुक्तप्रकारेणभस्मधृत्वारुद्राक्षांश्चधृत्वामुक्तसंगोभूतशुद्ध्यादिपूर्वंपूर्वोक्ताष्टादशाक्षरमंत्रेण त्रिभिश्चतुर्भिश्चतुर्भिरंत्येत्रिभिश्चवर्णैःपंचांगन्यासंकृत्वापंचाक्षरोक्त विधिनावाग्न्यासध्यानपूजादिकंकृत्वागुहादिभ्योऽगदेवताभ्यःपूजापूर्वकंबलिंदत्वायथाशक्त्यर्थानुसंधानपूर्वकंस्तवमावर्त्योत्तरपूजांकृत्वाद्यादिदेवांविसर्जयेदिति ६ । ७ । २०८ ॥ इतिशांति पर्वणिमोक्षधर्मपर्वणिनैलकंठीये भारतभावदीपे दक्षप्रोक्तशिवसहस्रनामस्तवेचतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥ ॥ ७ ॥ एवंस्तवपाठादिनाविशुद्धचेतसोयज्ज्ञेयंतत्पृच्छति अध्यात्ममिति पुरुषस्याऽऽत्मनिस्वरूपेवर्ततइत्यध्यात्मं दृश्यादृश्यविवेकार्थंशास्त्रंचाध्यात्मंतत्किंकुतश्चोत्पद्यतइतिप्रश्नः १

सर्वज्ञानमिति पूर्वमसकृदुक्तमप्यध्यात्ममिहसंक्षिप्यवक्तुमुपसंहारार्थं तेनउपक्रमोपसंहारयोरैकरूप्येणाऽभ्यासेनचशास्त्रस्याध्यात्मपरत्वेनिश्चितेमध्येयद्वर्णाश्रमधर्मजपादिकमुक्तंतत्प्रकरणा तदंगभावंभजतइतिज्ञाप्यते । तत्रयदध्यात्ममित्यस्योत्तरंपृथिवीत्यादि । ततश्चेत्यस्योत्तरंपुरुषेतिष्ठतीबुद्धिरित्यादि । अनयोर्बुद्धयोर्विवेकार्थंशास्त्रमध्यात्मं सर्वज्ञायतेऽनेनेतिसर्वं ज्ञानं तदेवपरंसर्वश्रेष्ठं बुद्ध्याबुद्धिमतया व्याख्यांविस्पष्टंकथनं २ भूतानांजरायुजादीनां ३ शरीरंस्थूलंसूक्ष्मंच तेषांभूतानांगुणसंघातःकार्यसमूहःगुणाबुद्ध्यादयोभौतिकाःपरमका रणेआत्मनिप्रलीयंते ४ ततआत्मनःसकाशात् भूतानिजीवाःयांतिलीयंते । यथास्रोतोभ्रमादात्मनोऽहमर्थस्यजीवस्योद्भवस्तत्रैवचलयएवमहमर्थेषुभूतेषुमहाभूतानामपिलयोदयौभवतइत्य र्थः ५ भूतानिखादीनि भूतानांजीवानां अल्पीयांसिकूर्मांगानीवामायासेनैवदृष्टिमात्रेणाविर्भावयितुंतिरोभावयितुंचशक्यानि ६ शरीरस्यभूतकार्यत्वमुक्तं तत्रतत्तद्भूतांशान्विवि नक्ति आकाशादिति घोपःशब्दः यःशरीरेप्रसिद्धःसंघातःकठिनांशः रसोलोहितादिद्रवांशः रूपंगौरादिऊष्माच ७ एतन्मयंभूतमयं तस्मादुद्दिश्यतेतस्मात्भूतकर्तुर्ब्रह्मणःसकाशादुद्दिश्यते

भीष्मउवाच ॥ सर्वज्ञानंपरंबुद्ध्यायन्मांत्वमनुपृच्छसि ॥ तद्व्याख्यास्यामितेताततस्यव्याख्यामिमांशृणु २ पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् ॥ महा भूतानिभूतानांसर्वेषांप्रभवाप्ययौ ३ सतेषांगुणसंघातःशरीरंभरतर्षभ ॥ सततंहिप्रलीयंतेगुणास्तेप्रभवंतिच ४ ततःसृष्टानिभूतानितानियांतिपुनःपुनः ॥ महा भूतानिभूतेभ्यऊर्मयःसागरेयथा ५ प्रसारयित्वेहांगानिकूर्मःसंहरतेयथा ॥ तद्वद्भूतानिभूतानामल्पीयांसिस्थवीयसाम् ६ आकाशात्खलुयोघोषःसंघातस्तुम हीगुणः ॥ वायोःप्राणोरसस्त्वद्भ्योरूपंतेजसउच्यते ७ इत्येतन्मयमेवैतत्सर्वंस्थावरजंगमम् ॥ प्रलयेचतमभ्येतितस्मादुद्दिश्यतेपुनः ८ महाभूतानिपंचैवसर्व भूतेषुभूतकृत् ॥ विषयान्कल्पयामासयस्मिन्यदनुपश्यति ९ शब्दःश्रोत्रंतथाखानित्रयमाकाशयोनिजम् ॥ रसःस्नेहश्चजिह्वाचअपामेतेगुणाःस्मृताः १० रूपं चक्षुर्विपाकश्चत्रिविधंज्योतिरुच्यते ॥ घ्रेयंघ्राणंशरीरंचएतेभूमिगुणाःस्मृताः ११ प्राणःस्पर्शश्चचेष्टाचवायोरेतेगुणाःस्मृताः ॥ इतिसर्वगुणाराजन्व्याख्याताः पांचभौतिकाः १२ सत्त्वंरजस्तमःकालःकर्मबुद्धिश्चभारत ॥ मनःषष्ठानिचैतेषुईश्वरःसमकल्पयत् १३ यदूर्ध्वंपादतलयोरवाङ्मूर्ध्नश्चपश्यसि ॥ एतस्मिन्नेव कृत्स्नेयंवर्ततेबुद्धिरंतरे १४ इंद्रियाणिनरेपंचषष्ठंतुमनउच्यते ॥ सप्तमींबुद्धिमेवाहुःक्षेत्रज्ञःपुनरष्टमः १५ इंद्रियाणिचकर्ताचविचेतव्यानिभागशः ॥ तमः सत्त्वंरजश्चैवतेऽपिभावास्तदाश्रयाः १६

जायतइतिशब्दमात्रेणोच्यतेनतुवस्तुतस्तत्रलीयतेवस्तुवतेवारज्ज्वामुरगइव ८ भूतकृदहंकारः भूतेषुदेहेषुभूतानिखादीनियथाकल्पयामास यस्मिंश्चभूतेदेहेतस्यैवतत्कार्यमनुपश्यतिनत्वन्यत्रेति विशेषः ९ तदेवाहत्रिभिः शब्देति १० । ११ । १२ सत्त्वमिति एतेषुशब्दादिषुपंचदशसुसात्त्विकादिकं कालोऽतीतत्वादिधर्मःप्रागुक्तरीत्याचतुर्युगात्माचिदाभासरूपोजीवोवा । कर्मबुद्धिःस्वविषयस्वरूपनिश्चयः । यद्वाकर्मव्यापारःशब्दस्याऽर्थप्रत्यायनंश्रोत्रस्यशब्दप्रत्यायनमित्यादिः । बुद्धिःप्रतीतिगोचरस्येदमित्थमेवेत्थमेवेत्यवधारणं । मनइदमित्थंनवेतिसंशयः कर्मसहितांबुद्धिंपंचमीमपेक्ष्यमनःषष्ठं ईश्वरोमायावी १३ अस्मिन्पादतलादिमूर्धांतेशरीरेतस्याबुद्धिरेवशब्दादिमनोंतैकविंशतितत्स्वरूपेत्याह । यदूर्ध्वमिति १४ बुद्धेरेवसप्तरूपत्वमाह इंद्रियाणीति पुनःशब्दोऽष्टयास्सप्तकादष्टमस्यदशेरस्यंतवैलक्षण्यद्योतनार्थः १५ भागशःकार्यविभागेन तेऽपिभावाःसात्त्विकादयोर्थाः तदाश्रयाइंद्रियकर्त्राश्रयाःततएवोत्थिताइत्यर्थः १६



विभागमेवाह चक्षुरिति चक्षुरिंद्रियमात्रं साक्षीइंद्रियाद्यव्यवधानेनद्रष्टाचिन्मात्रउदासीनः १७ गुणैस्तमआदिपंचभिः नेनीयतेपुनःपुनरतिशयेनवाविषयान्प्रतिनीयते बुद्धिरेवेंद्रियाणि चक्.रात्तमआदिपंचबुद्धिरेव अत्रहेतुःबुद्ध्यभावेकुतोगुणाइति १८ एवदेवठ्याचष्टेयेनेतिद्वाभ्यां १९ । २० एतानिमनःषष्ठानिबुद्ध्याकल्पितानीतिशेषः अत्रयवदोषेऽत्रयवीवेंद्रियेषुदुष्टे षुबुद्धिर्दुष्यति २१ पुरुषेसाक्षिणितिष्ठतीआध्यासिकसंबंधेनवर्तमानात्रिषुसात्त्विकादिषुसुखदुःखमोहात्मकेषुभावेषुविषयितयाबुद्धिर्वर्तते २२ एवंदृग्दृश्ययोःपुंबुध्योरत्यंतभेदेऽप्याध्यासिक संबंधादैक्यंमन्वानास्तार्किकाःपुमांसमेवसुखादिमंतमाहुः नसुखेनेतिमोहावस्थोक्ता २३।२४।२५। २६।२७।२८।२९। ३०।३१।३२ एवंसर्वेषांभावानांधीमात्रत्वमुक्त्वासत्त्वक्षेत्रज्ञयोर्भेदंव्याचष्टेसत्त्वे

चक्षुरालोचनायैवसंशयंकुरुतेमनः ॥ बुद्धिरध्यवसानायसाक्षीक्षेत्रज्ञउच्यते १७ तमःसत्त्वंरजश्चेतिकालःकर्मचभारत ॥ गुणैर्नेनीयतेबुद्धिर्बुद्धिरेवेंद्रियाणिच मनःषष्ठानिसर्वाणिबुद्ध्यभावेकुतोगुणाः १८ येनपश्यतितच्चक्षुःशृण्वतीश्रोत्रमुच्यते ॥ जिघ्रतीभवतिघ्राणंरसतीरसनारसान् १९ स्पर्शनंस्पर्शतीस्पर्शान्बु द्धिर्विक्रियतेऽसकृत् ॥ यदाप्रार्थयतेकिंचित्तदाभवतिसामनः २० अधिष्ठानानिबुद्ध्याहिपृथगेतानिपंचधा ॥ इंद्रियाणीतितान्याहुस्तेषुदुष्टेषुदुष्यति २१ पुरुषेतिष्ठतीबुद्धिस्त्रिषुभावेषुवर्तते ॥ कदाचिल्लभतेप्रीतिंकदाचिदपिशोचति २२ नसुखेननदुःखेनकदाचिदपिवर्तते ॥ सेयंभावात्मिकाभावांस्त्रीनेतान्परिवर्त ते २३ सरितांसागरोभर्तायथवेलामिवोर्मिमान् ॥ इतिभावगताबुद्धिर्भावेमनसिवर्तते २४ प्रवर्तमानंतुरजस्तद्भावेनानुवर्तते ॥ प्रहर्षःप्रीतिरानंदःसुखंसंशां तचित्तता २५ कथंचिदुपपद्यंतेपुरुषेसात्त्विकागुणाः ॥ परिदाहस्तथाशोकःसंतापोऽपूर्तिरक्षमा २६ लिंगानिरजसस्तानिदृश्यंतेहेत्वहेतुभिः ॥ अविद्यारा गमोहौचप्रमादःस्तब्धताभयम् २७ असमृद्धिस्तथादैन्यंप्रमोहःस्वप्नतंद्रिता ॥ कथंचिदुपवर्तंतेविविधास्तामसागुणाः २८ तत्रयत्प्रीतिसंयुक्तंकायेमनसिवा भवेत् ॥ वर्ततेसात्त्विकोभावइत्युपेक्षेततत्तथा २९ अथयद्दुःखसंयुक्तमप्रीतिकरमात्मनः ॥ प्रवृत्तंरजइत्येवतदसंरभ्यचिंतयेत् ३० अथयन्मोहसंयुक्तंकायेम नसिवाभवेत् ॥ अप्रतर्क्यमविज्ञेयंतमस्तदुपधारयेत् ३१ इतिबुद्धिगतीःसर्वाव्याख्यातायावतीरिह ॥ एतद्बुद्ध्वाभवेद्बुद्धःकिमन्यद्बुद्धलक्षणम् ३२ सत्त्वक्षेत्र ज्ञयोरेतदंतरंविद्धिसूक्ष्मयोः ॥ सृजतेऽत्रगुणानेकएकोनसृजतेगुणान् ३३ पृथग्भूतौप्रकृत्यातुसंप्रयुक्तौचसर्वदा ॥ यथामत्स्योऽद्भिरन्यःस्यात्संप्रयुक्तौभवेत्तथा ३४ नगुणाविदुरात्मानंसगुणान्वेदसर्वतः ॥ परिद्रष्टागुणानांतुसंस्रष्टामन्यतेयथा ३५ आश्रयोनास्तिसत्त्वस्यगुणसर्गेणचेतना ॥ सत्त्वमस्यसृजंत्यन्येगुणान्वेदकदाचन ३६

स्यादिना ३३ । ३४ संस्रष्टासंसर्गंकृतवान् आत्मनोगुणानांचगुणगुणिभावेनसंसर्गोऽस्तीतिमूढोयथामन्यतेतथाऽयंगुणानांपरिद्रष्टातादात्म्येनात्मनिगुणान्पश्यतीत्यर्थः ३५ ननुकिमाश्रितास्त र्हिगुणाःप्रवर्तंतइत्यतआह आश्रयइति सत्त्वस्यबुद्धिसत्त्वस्याश्रयउपादानंनास्ति उपादानत्वेनकृप्तस्याज्ञानस्यस्वरूपतस्तुच्छत्वात् । गुणानांसत्त्वादीनांसर्गेणकार्येणमहदादिनालिंगेनाऽव्ये कारणभूतागुणाःसृजंतीत्यनुमीयते । कदाचिदपिगुणान्नकश्चिदपिनवेद । यथारज्जुरगोपादानमज्ञानंकार्यद्वारैवानुमीयतेनत्वपरोक्षीक्रियतेतद्वत् । ननुगुणानांतुच्छत्वेतत्कार्यंनदृश्येतखपुष्पसौ रभवदतआह चेतनासत्त्वमस्येति अस्यगुणसर्गस्यसत्संबंधवना अधिष्ठानसत्तैवाध्यस्तसत्तेत्यर्थः । तथाचनात्यंततुच्छत्वंगुणानामनिर्वचनीयस्यतद्रूपस्याभ्युपगमादवतोनोक्तदोषइत्यर्थः ३६

ध्रुवोऽनादिः ३७ प्रदीपार्थप्रदीपप्रयोजनमावरणभंगं निश्चक्षुर्भिश्चेष्टैरतएवाजानद्भिः इंद्रियाणिप्रदीपवत्सहकारीणि बुद्धिरिंद्रियवत्कारणं चिदात्माबुप्रमातृवत्तृतीयः । एतेनबुद्धयविरि क्तश्चेतनःसिद्धइतिभावः ३८ दीपचक्षुर्भ्यांधीमान्रज्जूरगमिवेंद्रियबुद्धिभ्यांचितिचंऽत्रमासपतीत्याह एवमिति ३९ ऊर्णनाभिदृष्टांतोऽध्यारोपप्रसंगेपरिणामवादमाश्रित्यध्येयः ४० वस्तुत स्वमाह प्रध्वस्ताइति यथाप्रध्वस्तोघटोविहीनेनकपालाद्यात्मनाकारेणवर्तते नवंगुणानिवर्तंते यतोघटकपालवन्निवृत्तानांगुणानांप्रवृत्तिःसूक्ष्मावयवद्वारानोपलभ्यतेऽतोरज्जूरगवदुच्छिद्यतए वेत्यर्थः । येतुनिवृत्तिमन्यंतेतेषांमप्रवृत्त्यनुपलंभोदोषोबुद्धपरिहरइतिभावः ४१ हृदयग्रंथिंचिदचितोरात्ममनसोस्तादात्म्यं बुद्धिश्चचिंताचतदुभयप्रधानंबुद्धिचिंतामयं ४२ पृथ्वींमहतीमिमां संसाररूपांनदीमनुप्रच्युताःपतिताः गाधंतलं अविद्वांसोऽजानंतः एवमयंजीवोबुद्धियोगमनुप्रच्युतस्ताम्येत् ४३ । ४४ यथाविद्वदविदुषोरंतरमेवंविदुषांमिथोऽतरंनास्तीत्याह नहीति

सृजतेहिगुणान्सत्वंक्षेत्रज्ञःपरिपश्यति ॥ संप्रयोगस्तयोरेषसत्वक्षेत्रज्ञयोर्ध्रुवः ३७ इंद्रियैस्तुप्रदीपार्थंक्रियतेबुद्धिरंतरा ॥ निश्चक्षुर्भिरजानद्भिरिंद्रियाणिप्रदीप वत् ३८ एवंस्वभावमेवैतत्बुद्ध्वाविहरन्नरः ॥ अशोचन्नप्रहृष्यंश्चसवैविगतमत्सरः ३९ स्वभावसिद्धमेवैतद्यदिमान्सृजतेगुणान् ॥ ऊर्णनाभिर्यथासूत्रंविज्ञेयास्तं तुवद्गुणाः ४० प्रध्वस्तानननिवर्तंतेप्रवृत्तिर्नोपलभ्यते ॥ एवमेकेव्यवस्यंतिनिवृत्तिरितिचापरे ४१ इतीदंहृदयग्रंथिंबुद्धिचिंतामयंदृढम् ॥ विमुच्यसुखमासीतविशो कश्छिन्नसंशयः ४२ ताम्येयुःप्रच्युताःपृथ्वींमोहपूर्णांनदींनराः ॥ यथागाधमविद्वांसोबुद्धियोगमयंतथा ४३ नैवताम्यंतिविद्वांसःप्लवंतःपारमंभसः ॥ अध्यात्मविदुषोधीराज्ज्ञानंतुपरमंप्लवः ४४ नभवतिविदुषांमहद्भयंयदविदुषांसुमहद्भयंभवेत् ॥ नहिगतिरधिकाऽस्तिकस्यचित्सकृदुपदर्शयतीहतुल्यताम् ४५ यत्करोतियदुदोषमेकतस्तच्चदूषयतियत्पुराकृतम् ॥ नाप्रियंतदुभयंकरोत्यसौयच्चदूषयतियत्करोतिच ४६ ॥ इतिश्रीमहाभारतेशांतिपर्वणि मोक्षधर्मपर्वणि पांचभौतिके पंचाशीत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ सुदुःखात्र्चसुमृत्योश्चनसंतेप्राणिनःसदा ॥ उभयंनोयथानस्यात्तन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ नारदस्यचसंवादंसमंगस्यचभारत २

तत्रहेतुः सकृदिति सकृद्विभातोह्येषब्रह्मलोकइतिश्रुतिःप्रत्ययावृत्तिकृतंतारतम्यंमोक्षेनास्तीतिदर्शयतीत्यर्थः ४५ एवंविदःफलमाह यदिति यदयंज्ञानीबहुदोषंकर्मकरोति यच्चानेनपुराज्ञाना त्पूर्वंकालेकृतंतच्चैकतएकेनज्ञानेनैवदूषयतिनाशयति । 'तद्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवविदिपापंकर्मनश्लिष्यते ॥ तद्यथेषीकतूलमग्नौप्रोतंप्रदूयेतैवंहास्यसर्वेपाप्मानःप्रदूयंते'इति श्रुतिभ्यांब्रह्मविदःक्रियमाणकर्मणोऽपूर्वकर्मदाहयोरवगमात् । दृष्टमपिफलमाह यच्चाज्ञानदशायामयमप्रियमनिष्टंपरकृतंदूषयतियच्चरागादिदोषास्स्वयंकरोति तदुभयमप्रियदूषणकारणा त्मकंनकरोतिद्वैतदर्शनाभावात् । स्वयमदुष्टःपरदोषमपिनपश्यतीत्यर्थः ४६ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचाशीत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥ विद्वल्लक्षणानिवक्तुमारभते सुदुःखादिति यान्येवविद्वल्लक्षणानितान्येवविद्यासाधनानीत्यभिप्रेत्योभयंनोऽस्माकंकथंकेनप्रकारेणस्यादितिप्रश्नः १ समंगंविद्वांसमुदाहृत्यतस्योत्तरमाह अत्रापीति २



अम्बेशिरसानमंतिरत्यंतूरसाप्रणमसेऽत्यंतंविनीतोऽसीत्यर्थः । बाहुभ्यांतरसीवभवनदीं अत्यंतसंकटेऽपिनिरपेक्षोऽसीत्यर्थः । एतत्सुखलिंगंज्ञानवृद्धानां ३ बालवद्रागद्वेषशून्यः ४ भ वतीतिभव्यंवर्तमानंभव्यगेयेतिकर्तरिकृत्यः भूतभविष्यतोस्तत्त्वमविद्यमानत्वं आदावंतेचयन्नास्तिवर्तमानेऽपितत्तथेतिन्यायेनवर्तमानस्यापितत्त्वंतदेव यथोक्तंभगवता । 'नासतोविद्यते भावोनाभावोविद्यतेसतः'इति । नह्यैंद्रजालिकमदर्शितधनवृद्धिह्रासाभ्यांविद्वान्मुह्यतीत्यर्थः ५ अभ्युपेत्यापिजगत्सत्यत्वमारंभान्नफलानिफलवैचित्र्यंदुःखहेतुरेवेतिजानन्नपेतारंभादिरप्यहं मुद्यामीत्याह उपक्रमानिति ६ नन्वनारंभेकथंजीवितव्यमित्याशंक्याह अगाधाश्चेति अगाधानिर्ग्रंथामूर्खाः । गाधःप्रतिष्ठालिप्सयोर्ग्रंथेचेतिस्मृतेः अप्रतिष्ठाधनदारादिशून्याः ग तिमंतोग्रंथश्चनादिमंतः जडामत्तादयः अस्मान्निरारंभान्निरारंभाअपिजीवंतीत्यर्थः ७ कुतस्तेजीवंतीत्यतआह विहितेनैवेति प्राक्कर्मणैवजीवंतिनत्वारंभादिति समाजयपूजय ८ ९ यदावयंनशोचेमशोकमूलस्याज्ञानस्याभावात् तदानोऽस्माकंधर्मेणात्ममित्राह्मण्याद्यध्यासोपजीविनाबज्ञादिनावाकर्मणालौकिकेनवाकिंप्रयोजनंनकिमपीत्यर्थः । 'एतद्धस्मवैतद्विद्वांस

नारदउवाच ॥ उरसेवप्रणमसेबाहुभ्यांतरसीवच ॥ संप्रहृष्टमनानित्यंविशोकइवलक्ष्यसे ३ उद्वेगंनहितेकिंचित्सुसूक्ष्ममपिलक्षये ॥ नित्यतृप्तइवस्वस्थोबालवच्च विचेष्टसे ४ ॥ समंगउवाच ॥ भूतंभव्यंभविष्यंचसर्वमेतत्तुमानद ॥ तेषांतत्त्वानिजानामिततोनविमनाह्यहम् ५ उपक्रमानहंवेदपुनरेवफलोदयान् ॥ लोकेफला निचित्राणिततोनविमनाह्यहम् ६ अगाधाश्चाप्रतिष्ठाश्चगतिमंतश्चनारद ॥ अंधाजडाश्चजीवंतिपश्यास्मानपिजीवतः ७ विहितेनैवजीवंतिअरोगांगादिवौकसः ॥ बलवंतोऽबलाश्चैवतस्माद्स्मान्सभाजय ८ सहस्रिणोऽपिजीवंतिजीवंतिशतिनस्तथा ॥ शाकेनचान्येजीवंतिपश्यास्मानपिजीवतः ९ यदानशोचेमहिकिंनुनः स्याद्धर्मेणवानारदकर्मणावा ॥ कृतांतवश्यानियदासुखानिदुःखानिवायन्नविधर्षयंति १० यस्मैप्रज्ञाःकथयंतेमनुष्याःप्रज्ञामूलंहींद्रियाणांप्रसादः ॥ मुह्यंतिशोचं तितथेंद्रियाणिप्रज्ञालाभोनास्तिमूढेंद्रियस्य ११ मूढस्यदर्पःसपुनर्मोहएवमूढस्यनायंनपरोऽस्तिलोकः ॥ नह्येवदुःखानिसदाभवंतिसुखस्यवानित्यशोलाभएव १२ भवात्मकंसंपरिवर्तमानंनमादृशःसंज्वरंजातुकुर्यात् ॥ इष्टान्भोगान्नानुरुध्येत्सुखंवानाचिंतयेद्दुःखमभ्यागतंवा १३ समाहितोनस्पृहयेत्परेषांनानागतंचाभिनं देच्चलाभम् ॥ नचापिहृष्येद्विपुलेऽर्थलाभेतथाऽर्थनाशेचनवैविषीदेत् १४

आहुर्ऋषयःकावषेयाःकिमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहे'इतिश्रुतेस्तत्त्वविदोनधर्मांद्यनुतिष्ठंतीत्यर्थः । शोकाभावेहेतुः कृतांतेति कृतांतवश्यान्यंतवंतियद्यस्मात्तस्मात् नधर्षयं त्यस्मानितिशेषः १० प्रसादोमोहादिराहित्यंप्रज्ञायामूलं इंद्रियाण्येवमुह्यंतिशोचंतीतियस्मैप्राज्ञाःकथयंतेसप्राज्ञइत्यध्याहृत्ययोज्यं । इत्योमोहादिर्द्दृश्यस्यबुद्ध्याद्यनेकभेदभिन्नस्याहंकारस्यै वधर्मोनत्वदृश्यस्यदृगात्मनइत्यर्थः ११ दर्पश्चाढ्योस्मीत्यादिगर्वः सम्मोहश्चेत्काहानिरतआह मूढस्येति नहीति तस्मात्सुखादेरागमापायित्वात्सुख्यहमितिदर्पोदुःख्यहमितिदैन्यंचनकार्यमि तिभावः १२ भवात्मकंसंसाररूपं भावेतिपाठेदृश्यात्मकंसंज्वरंमादृशआत्मज्ञोदेहाभिमानशून्योजातुकदाचिन्नकुर्यान्नस्वीकुर्यात् तथाचश्रुतिः । 'आत्मानंचेद्विजानीयादयमस्मी तिपूरुषः ॥ किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत्'इति भोगाद्यचिंतनमेवविज्वरत्वेहेतुरित्याह इष्टानिति १३ अचिंतायामपिहेतुःसमाहितोयोगारूढःअचिंतत्वादेवनस्पृहा दिमान्भवतीत्यर्थः परेषांसुखादीन्निच्छेद १४

समाहितस्त्वंचशमदमादिरूपेणशीलेनैवभवतिनबांधवादिभिरित्याह नेति शांतिंनिर्विकल्पतां १५ योगंविनाज्ञानंसुखंचनास्तीत्याह नास्तीति योगसाधनमाह धृतीति धृतिर्मनःप्राणें द्रियप्रियाणांस्तंभसामर्थ्यं १६ योगप्रवृत्त्यर्थंलौकिकंप्रियंनिंदति प्रियमिति उत्सेकोदर्पः तान्प्रियहर्षोत्सेकान् १७ आअस्येतिच्छेदः अस्यदेहस्याऽऽविचेष्टनादितिसंबंधः । विमु क्तश्चविमुच्यतेभूयश्चांतेविश्वमायानिवृत्तिरितिश्रुतिभ्यांद्विर्मुक्तिमायानिवृत्त्योःप्रतिपादनात्तत्त्वविदामिंद्रजालत्वविदामिवावरणांशनिवृत्तावपिविक्षेपांशानुवृत्तिरस्तीतिगम्यते । साचमतिविंब भ्रमादौदृष्टा तेनजीवन्मुक्तिसिद्धौरागद्वेषराहित्यसिद्धिश्च । अन्यथाज्ञानसमकालमेवदेहपातापत्तिः यस्तुदेहपातावधिसाक्षिवत्प्रपश्यतिविषयेषुसंगंचकरोतितस्यजातमपिज्ञानंनश्यतीति भावः यथोक्तंभगवता । 'इंद्रियाणांहिचरतांयन्मनोऽनुविधीयते ॥ तदस्यहरतिप्रज्ञांवायुर्नावमिवांभसि'इतिबुद्धिनाशात्प्रणश्यतीतिच १८ । १९ इहवाअमुत्रवानभयमित्यन्वयः २० महद्ब्रह्मविजानामि अव्ययंतपोयोगंकृत्वासंप्राप्तोऽपिनप्रबाधते शीतोष्णादिजःशोकोदेहस्वाभाव्यादवश्यंप्राप्नोतिनचमूढेष्विवबुद्धेषुतस्यातिवप्रतापोऽस्तीतिभावः २१ ॥ ॥ इतिश्री महाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिषडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥ ॥ ७ ॥ ॥ ७ ॥ एवमुपदेशप्रधानांब्रह्मविद्यांश्रुत्वातामेवोपपत्तिप्राधान्येनजिज्ञासमानःपृच्छति

नबांधवानचवित्तंनकौल्यंनचश्रुतंनचमंत्रानवीर्यम् ॥ दुःखात्त्रातुंसर्वएवोत्सहंतेपरत्रशीलेनतुयांतिशांतिम् १५ नास्तिबुद्धिरयुक्तस्यनायोगाद्विंदतेसुखम् ॥ धृतिश्चदुःखत्यागश्चेत्युभयंतुसुखंनृप १६ प्रियंहिहर्षजननंहर्षउत्सेकवर्धनः ॥ उत्सेकोनरकायैवतस्मात्तान्संत्यजाम्यहम् १७ एतान्शोकभयोत्सेकान्मोहनान्सुख दुःखयोः ॥ पश्यामिसाक्षिवल्लोकेदेहस्याऽस्यविचेष्टनात् १८ अर्थकामौपरित्यज्यविशोकोविगतज्वरः ॥ तृष्णामोहौतुसंत्यज्यचरामिपृथिवीमिमाम् १९ नचमृत्योर्नचाधर्मान्नलोभान्नकुतश्चन ॥ पीतामृतस्येवात्यंतमिहवाऽमुत्रवाभयम् २० एतद्ब्रह्मन्विजानामिमहत्कृत्वातपोऽव्ययम् ॥ तेननारदसंप्राप्तोनमांशोकःप्रबा धते २१ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि समंगनारदसंवादे षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥ ॥ ७ ॥ ॥ युधिष्ठिरउवाच ॥ अतत्त्वज्ञस्यशास्त्राणांसंततंसंशयात्मनः ॥ अकृतव्यवसायस्यश्रेयोब्रूहिपितामह १

अतत्त्वज्ञस्यशास्त्राणामिति तत्त्यशास्त्रंतार्किकपाशुपतपांचरात्रसांख्यपातंजलादिउपपत्तिप्रधानमुपदेशप्रधानंच । तत्रवैदिकेशास्त्रेपूर्वोत्तरमीमांसेउपदेशप्रधाने । वैशेषिकतार्किकपाशुपतपां चरात्रसांख्यपातंजलादीनिउपपत्तिप्रधानानि । अवैदिकेऽपिलौकायतंशास्त्रमुपपत्तिप्रधानं । आर्हतसौगतेशास्त्रेबुद्धमुनिप्रणीतागमप्रधाने । तत्रापिसौगतेचत्वारोभेदाः । सौत्रां तिकवैभाषिकयोगाचारमाध्यमिकाः । सर्वाण्येतानिविभिन्नप्रस्थानानिमोक्षार्थंचप्रवृत्तानि । मोक्षश्च'नान्यःपंथाविद्यतेऽयनाय'इतिएकमार्गःश्रूयते । सर्वेषुचशास्त्रेषुस्वमतेएवमोक्षोऽस्तिन परमतेइतिसाटोपंप्रतिपाद्यते । विनिगमनाविरहाच्चनैतेषामन्यतमस्यश्रैष्ठ्यमध्यवसातुंशक्यं नाप्येषामैकमत्यंवक्तुंशक्यं विभिन्नप्रस्थानतायाःस्पष्टत्वात् ऐकशास्त्र्यापत्तेश्च । अतः शास्त्राणांतत्त्वानवधारणात्संशयःकिमुपादेयमिति । ननु'भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः'इतिश्रुतेरात्मानुभवएवसंशयोच्छेदंकरिष्यतिकिमुक्तप्रश्नेनेत्याशंक्याह अकृतव्यवसायस्येति व्यवसायआत्मदर्शनार्थंशमदमाद्यनुष्ठानंतदकुर्वतःकिंहितंस्यात्तद्ब्रूहि १

यद्यपिसर्वज्ञानंच भिन्यश्चानंप्रकारेतुविपर्ययइतिन्यायेनाशरीरतालक्षणेमोक्षेतत्साधनेशमादौसर्वेषांशास्त्राणामैकमत्यमस्ति तथाहि । शून्यदेहात्मवादिनांमाध्यमिकलौकायतिकौसंघातस्य तुच्छत्वंतस्यैवकर्तृत्वादिधर्माश्रयत्वंचप्रथयितुमेवसदात्मानमपलपतः । एवंतार्किकावयोऽप्यहमर्थस्यैवकर्तृत्वादिकंप्रथयितुंचिदात्मानमपलपंति अतोनतेषामात्मापलापेतात्पर्यंकिंतुसंघाता देस्तुच्छत्वादौ । तथासांख्याअपिआत्मनोऽसंगत्वमेवप्रथयितुंप्रधानादिकंकल्पयंति । ननुतेषामात्मनःकर्तृत्वेप्रधानादिसत्यत्वेआत्मभेदेवातात्पर्यमस्ति एवंतंत्रांतरतात्पर्यमप्यूह्यं । सर्व थाऽपिदेहनाशोवादुःखनाशोवानिर्विषयज्ञानधारावाचितितन्मात्रंवापरमानंदोवामोक्षइतिशब्दजविकल्पमात्रं सुषुप्तवद्वैतदर्शनाभावःसर्वेषांमोक्षेतुल्यः शमादीनांसाधनत्वंच व्यावहारिकप्र क्रियाणामात्मतत्त्वप्रतिपादनप्रकारभेदानांच तेषांपरस्परविरोधान्नैकशास्त्र्यंविधिमुखेनैवअखंडसच्चिदानंदैकरसंब्रह्मवेदांताविस्पष्टंप्रतिपादयंतीतितेषामेवश्रैष्ठ्यंचस्पष्टं । तथाऽपिसर्वशास्त्रावि रोधेनैवोत्तरमाह गुरुपूजेति गुरुपूजाऽत्रईश्वरेचेतःप्रणिधानं तस्यैवपरमगुरुत्वात् । सपूर्वेषांगुरुःकालेनानवच्छेदादितितस्यपातंजलेपरमगुरुत्वोक्तेः । वृद्धानामाचार्याणां तथाच 'यस्य देवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः'इतिश्रुत्यर्थोदर्शितः । शास्त्राणामविशेषात्सर्वेषांसर्वत्रमोक्षस्यप्रतिपादनात् श्रवणंगुरुमुखेनग्रहणं एतच्चमननिदि

॥ भीष्मउवाच ॥ गुरुपूजाचसततंवृद्धानांपर्युपासनम् ॥ श्रवणंचैवशास्त्राणांकूटस्थंश्रेयउच्यते २ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ गालवस्यचसं वादंदेवर्षेर्नारदस्यच ३ वीतमोहक्लमंविप्रंज्ञानतृप्तंजितेंद्रियः ॥ श्रेयस्कामोयतात्मानंनारदंगालवोऽब्रवीत् ४ यैःकश्चित्संमतोलोकेगुणैश्चपुरुषोमुने ॥ भवत्यनप गान्सर्वांस्तान्गुणानलक्षयामहे ५ भवानेवंविधोऽस्माकंसंशयंछेत्तुमर्हति ॥ अमूढश्चिरमूढानांलोकतत्त्वमजानताम् ६ ज्ञानेह्येवंप्रवृत्तिःस्यात्कार्याणामविशेषतः ॥ यत्कार्यंनव्यवस्यामस्तद्भवान्वक्तुमर्हति ७ भगवन्नाश्रमाःसर्वेपृथगाचारदर्शिनः ॥ इदंश्रेयइदंश्रेयइतिसर्वेप्रबोधिताः ८ तांस्तुविप्रस्थितान्दृष्ट्वाशास्त्रैःशास्त्राभिनं दिनः ॥ स्वशास्त्रैःपरितुष्टाश्चश्रेयोनोपलभामहे ९ शास्त्रंयदिभवेदेकंश्रेयोव्यक्तंभवेत्तदा ॥ शास्त्रैश्चबहुभिर्भूयःश्रेयोगुह्यंप्रवेशितम् १० एतस्मात्कारणाच्छ्रेयःक लिलंप्रतिभातिमे ॥ ब्रवीतुभगवांस्तन्मेउपसन्नोऽस्म्यधीहिभोः ११

दिध्यासनयोरप्युपलक्षणं गुरुदेवपूजाश्रवणादित्रयंचकूटस्थमाधिकारिणामात्यंतिकमैकांतिकंचयच्छ्रेयस्तद्रूपंतत्साधनत्वादुच्यते २ । ३ वीतेति जितेंद्रियःश्रेयस्कामइतिचाशिष्यलक्षणं शे षंगुरुलक्षणं ४ भवतित्वयि अनपगान्स्थिरान् ५ लोकतत्त्वमात्मयाथात्म्यम् ६ अज्ञानमेवाह ज्ञानेहीति कार्याणांतत्तच्छास्त्रोदितकर्तव्यानांवैदिकंमतप्तशिलारोहणकृच्छ्रचांद्राय णाग्निहोत्रादीनामविशेषतइदंश्रेयइदंनेतिविशेषावधारणहेत्वभावेनसाम्यात् एवंसमेवप्रवृत्तिःस्यात् ततश्चपरस्परविरुद्धधर्मद्वयाचरणादुभयभ्रष्टःस्यादित्यर्थः । अतस्तेषांकार्याणांमध्येयद स्माकंकार्यंकर्तुमुचितंतन्नव्यवस्यामोगनिश्चिनुमः सर्वत्रश्रेयोबुद्धिसाम्यात् अतोभवान्विशेषदर्शीतद्वक्तुमर्हति ७ एतदेवाह भगवन्निति नास्तिश्रमोऽनुष्ठानजोयस्मिन्नित्यश्रमंज्ञानंतस्येमेसाध काआश्रमाःशास्त्राणि पृथगाचारंपूर्वोक्तंदर्शयितुंशीलंयेषांतेपृथगाचारदर्शिनः तैराश्रमैःसर्वेनराःप्रबोधिताः ८ तान्प्रबोधितान्विविधेनमार्गेणप्रस्थितान्शास्त्राभिनंदिनःस्वेस्वेशास्त्रेअभिनंदि तुंशीलंयेषांतान्दृष्ट्वायथावयंस्वशास्त्रैःपरितुष्टास्तथातानपिदृष्ट्वाविदानाःसंतःश्रेयःप्रशस्ततरंनोपलभामहेनिश्चेतुंसमर्थाःस्मः ९ । १० कलिलंनानाशंकाकुलं अधीहिअध्यापय ११

आश्रमाः शास्त्राणि चत्वारि तत्रधर्मोनास्त्येवेत्येकंशास्त्रं । अवैदिकः शाक्यादिकल्पितश्चैत्यवंदनादिरेवधर्मोनान्यइत्यपरं । वेदोक्तएवधर्मोनान्यइतितृतीयं । धर्माधर्मातीतंवस्तुमात्रमस्तीतिच तुर्थं । यथासंकल्पिताः संकल्पितंसंकल्पमनतिक्रांताः योयेनश्रेयस्त्वेनभावितस्तस्यतदेवश्रेयइत्यर्थः तथाचश्रुतिः तंयथायथोपासतेतथेतःप्रेत्यभवतीतिसंकल्पानुसारेणफलंदर्शयति तान्समा श्रित्यअनुपश्यगुरुभ्योऽधिगम्यसम्यगालोचय एतावद्बुद्ध्याआलोचयन्स्वयमेवैतेषुप्रशस्तंयत्तज्ज्ञास्यसीतिभावः १२ गुणोद्देशमात्मज्ञानगुणभूतानांधर्माणामुद्देशंसंकीर्तनं पृथग्विरुद्धेनप्रकारे णप्रस्थितं । यथापरेषांतप्तशिलारोहणादिर्धर्मः सएवास्माकमधर्मः । यथावाऽस्माकमग्नीषोमीयपश्वालंभोधर्मः सएवपरेषामधर्मइत्यर्थः १३ नेति तेआश्रमाः स्थूलदृष्ट्यानिरीक्ष्यमाणाः सम्यग भिप्रेतंधर्ममात्मतत्त्वंवानयांतिनप्रापयंति तेषामेवपरांगतिमन्येसूक्ष्मदृशः सम्यगृजुयथास्यात्तथापश्यन्नुत्कर्षीत्याफलसाधनयोः सर्वत्राविनाभावात् १४ एतदेवाह यस्त्विति मित्राणांसर्वमू

नारदउवाच ॥ आश्रमास्तातचत्वारोयथासंकल्पिताः पृथक् ॥ तान्सर्वाननुपश्यत्वंसमाश्रित्येतिगालव १२ तेषांतेषांतथाहित्वमाश्रमाणांततस्ततः ॥ नानारूप गुणोद्देशंपश्यविप्रस्थितंपृथक् १३ नयांतिचैवतेसम्यगभिप्रेतमसंशयम् ॥ अन्येपश्यंस्तथासम्यगाश्रमाणांपरांगतिम् १४ यत्तुनिःश्रेयसंसम्यक्तच्चैवासंशया त्मकम् ॥ अनुग्रहंचमित्राणाममित्राणांचनिग्रहम् १५ संग्रहंचत्रिवर्गस्यश्रेयआहुर्मनीषिणः ॥ निवृत्तिःकर्मणःपापात्सततंपुण्यशीलता १६ सद्भिश्चसमुदाचारःश्रेय एतदसंशयं ॥ मार्दवंसर्वभूतेषुव्यवहारेषुचार्जवम् १७ वाक्चैवमधुराप्रोक्ताश्रेयएतदसंशयम् ॥ दैवतेभ्यःपितृभ्यश्चसंविभागोऽतिथिष्वपि १८ असंत्यागश्चभृत्यानां श्रेयएतदसंशयम् ॥ सत्यस्यवचनंश्रेयःसत्यज्ञानंतुदुष्करम् १९ यद्भूतहितमत्यंतमेतत्सत्यंब्रवीम्यहम् ॥ अहंकारस्यचत्यागःप्रमादस्यचनिग्रहः २० संतोषश्चैकचर्या चकूटस्थंश्रेयउच्यते ॥ धर्मेणवेदाध्ययनंवेदांतानांतथैवच २१ ज्ञानार्थानांचजिज्ञासाश्रेयएतदसंशयम् ॥ शब्दरूपरसस्पर्शान्सहगंधेनकेवलान् २२ नात्यर्थमु पसेवेतश्रेयसोऽर्थीकथंचन २३ नक्तंचर्यांदिवास्वप्नमालस्यंपैशुनंमदम् ॥ अतियोगमयोगंचश्रेयसोऽर्थीपरित्यजेत् २४ आत्मोत्कर्षंनमार्गेतपरेषांपरिनिंदया ॥ स्व गुणैरेवमार्गेतविप्रकर्षंपृथग्जनात् २५ निर्गुणास्त्वेवभूयिष्ठमात्मसंभाविताननराः ॥ दोषैरन्यान्गुणवतःक्षिपंत्यात्मगुणक्षयात् २६ अनूच्यमानास्तुपुनस्तेमन्यं तुमहाजनात् ॥ गुणवत्तरमात्मानंस्वेनमानेनदर्पिताः २७ अब्रुवन्कस्यचिन्निंदामात्मपूजामवर्णयन् ॥ विपश्चिद्गुणसंपन्नःप्राप्नोत्येवमहद्यशः २८ अब्रुवन्वातिसुर भिर्गंधःसुमनसांशुचिः ॥ तथैवाव्याहरन्भातिविमलोभानुरंबरे २९ एवमादीनिचान्यानिपरित्यक्तानिमेधया ॥ ज्वलंतियशसालोकेयानिनव्याहरंतिच ३०

तामयप्रदानामनुग्रहंअमित्राणांहिंस्राणांचनिग्रहंश्रेयआहुरित्यग्रिमेणान्वयः हिंस्रनिग्रहस्यश्रेयस्त्वोक्त्याहिंस्रसत्त्वस्यातिनिंद्यत्वमुक्तं १५। १६। १७ सर्वतंत्रसाधारणधर्मप्रसंगाद्वैदिकंधर्ममाह दैवतेभ्यइत्यर्धेन १८ सत्यस्यअबाधितात्मतत्त्वस्यवचनंश्रवणादिकं १९ सत्यंसत्यप्रापकं २० । २१ जिज्ञासाअनुभवेच्छा २२ । २३ अवियोगंआहारादीनां यथोक्तं'नात्यश्नतस्तुयोगोऽ स्तिनचैकांतमनश्नतः ॥ नचातिस्वप्नशीलस्यजाग्रतोनैवचार्जुन'इति २४ आत्मेति विप्रकर्षमुत्कर्षं नीचादुत्कर्षंनेच्छेदपितुच्चादेवेतिभावः २५ आत्मनोगुणाःक्षयऐश्वर्यंतदुभयात् गुणक्षयादि तिसमाहारः क्षिपंतिनिंदंति २६ अनूच्यमानाःशिक्ष्यमाणाः २७ विपश्चिद्गुणाअद्वेष्टासर्वभूतानामित्याद्युक्तः महद्यशोब्रह्म । 'नतस्येशेकश्चनतस्यनाममहद्यशः'इतिश्रुतिप्रसिद्धेः २८।२९।३०





३१ असत्सारवर्जितंयथास्यात्तथाप्रोक्तः ३२ मूढानामिति यथासूर्यःसूर्यकांतयोगात्स्वस्याग्निरूपंदर्शयतिएवंक्षुद्रोऽपिकुशब्दयोगात्क्षुद्रमंतरात्मानंदर्शयतीत्यर्थः ३३ मृगयंतेश्रेयोर्थिनः पृथ ग्विधानानाशास्त्रभेदभिन्नां ३४ । ३५ वासंपरीक्षितवस्तुमिच्छेत् ३६ व्यतिकरःसंकरः ३७ आप्तुयात्संगमात्रेणैवेत्यर्थः ३८ अत्रदृष्टांतमाह अपामिति अबादीनांसंगमात्रंयथाशीतोष्णसुख दुःखदंतथासदसत्संगएवपुण्यपापदइत्यर्थः ३९ विषयंविषयमनुवर्ततइत्यनुविषयोरसःतमपश्यंतःइदंमधुरमिदंतिक्तमित्यनालोचयंतःकेवलंगर्तपूरणमात्रार्थंभुंजते । विघसोदेवतादिशेषंतदश

नलोकेदीप्यतेमूर्खःकेवलात्मप्रशंसया ॥ अपिचापिहितःश्वभ्रेकृतविद्यःप्रकाशते ३१ असदुच्चैरपिप्रोक्तःशब्दःसमुपशाम्यति ॥ दीप्यतेत्वेवलोकेषुशनैरपिसुभा षितम् ३२ मूढानामवलिप्तानामसारंभाषितंबहु ॥ दर्शयत्यंतरात्मानमग्निरूपमिवांशुमान् ३३ एतस्मात्कारणात्प्रज्ञांमृगयंतेपृथग्विधाम् ॥ प्रज्ञालाभोहिभू तानामुत्तमःप्रतिभातिमे ३४ नापृष्टःकस्यचिद्ब्रूयान्नाप्यन्यायेनपृच्छतः ॥ ज्ञानवानपिमेधावीजडवत्समुपाविशेत् ३५ ततोवासंपरीक्षेतधर्मनित्येषुसाधुषु ॥ मनुष्येषुवदान्येषुस्वधर्मनिरतेषुच ३६ चतुर्णांयत्रवर्णानांधर्मव्यतिकरोभवेत् ॥ नतत्रवासंकुर्वीतश्रेयोऽर्थीवैकथंचन ३७ निरारंभोऽप्ययमिहयथालब्धोपजीवनः ॥ पुण्यंपुण्येषुविमलंपापंपापेषुचाप्नुयात् ३८ अपामग्नेस्तथेंदोश्चस्पर्शंवेदयतेयथा ॥ तथापश्यामहेस्पर्शमुभयोःपुण्यपापयोः ३९ अपश्यंतोऽनुविषयंभुंजतेविघ साशिनः ॥ भुंजानाश्चात्मविषयान्विषयान्विद्धिकर्मणाम् ४० यत्रागमयमानानामसत्कारेणपृच्छताम् ॥ प्रब्रूयाद्ब्राह्मणोधर्मंत्यजेत्तंदेशमात्मवान् ४१ शिष्योपा ध्यायिकावृत्तिर्यत्रस्यात्सुसमाहिता ॥ यथावच्छास्त्रसंपन्नःकस्तंदेशंपरित्यजेत् ४२ आकाशस्थाध्रुवंयत्रदोषंब्रूयुर्विपश्चिताम् ॥ आत्मपूजाभिकामोवैकोवसेत्तत्र पंडितः ४३ यत्रसंलोडिताल्लुब्धैःप्रायशोधर्मसेतवः ॥ प्रदीप्तमिवचैलांतंकस्तंदेशंनसंत्यजेत् ४४ यत्रधर्ममनाशंकाश्चरेयुर्वीतमत्सराः ॥ भवेत्तत्रवसेच्चैवपुण्यशी लेषुसाधुषु ४५ धर्ममर्थनिमित्तंचचरेयुर्यत्रमानवाः ॥ नतान्नुवसेज्जातुतेहिपापकृतोजनाः ४६ कर्मणायत्रपापेनवर्ततेजीवितेप्सवः ॥ व्यवधावेत्ततस्तूर्णंससर्पा च्छरणादिव ४७ येनखट्वांसमारूढःकर्मणाऽनुशयीभवेत् ॥ आदितस्तन्नकर्तव्यमिच्छताभवमात्मनः ४८ यत्रराजाचराज्ञश्चपुरुषाःप्रत्यनंतराः ॥ कुटुंबिनाम ग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ४९ श्रोत्रियास्त्वग्रभोक्तारोधर्मनित्याःसनातनाः ॥ याजनाध्यापनेयुक्तायत्रतद्राष्ट्रमावसेत् ५० स्वाहास्वधावषट्कारायत्रसम्यगनु ष्ठिताः ॥ अजस्रंचैववर्ततेवसेत्तत्राविचारयन् ५१ अशुचीन्यत्रपश्येतब्राह्मणान्वृत्तिकर्शितान् ॥ त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् ५२

नशीलाःशिष्टाः । येतुआत्मविषयान्बुद्धेर्विशेषतोबंधकानरसविशेषान्परीक्षापूर्वकंभुंजतेतान्कर्मणांविषयान्कर्मपाशगोचरान्विद्धि । इंद्रियपोषकाणांकदाचिदपिनसंसारोपरमसंभावनाऽ स्तीत्यर्थः ४० गुरुशिष्यधर्मानाह यत्रेत्यादिना आगमंप्रमाणजंज्ञानमात्मनइच्छतामागमयमानानां क्यजंतस्यरूपम् ४१ । ४२ आकाशस्थानिरालंबनाः अविद्यमानान्दोषान्ब्रूयुरि त्यर्थः ४३ संलोडिताःआकुलीकृताः ४४ भवेत्तत्रसन्निहितः ४५ काम्यनिषिद्धेर्निंदति धर्ममितिद्वाभ्याम् ४६ । ४७ अनुशयीपूर्वकर्मवासनावान् खट्वारूढस्त्रिदुःखग्रस्तः ४८ ४९ । ५० । ५१ उपसृष्टंसविषम् ५२

आत्मवान्जितचित्तः ५२ । ५१ येद्रांतिउपसृष्टाःमक्रोधास्तेषु येचसाधुदुराचारास्तेषु ५५ कामान्विषयाभिलाषान् कामेशःसर्वसंपत्तिमान् ५६ विषयवासिनःस्वदेशस्थान्प्रत्युपस्थिते प्रतीपस्थेनोपस्थिते हीयमानेसतीत्यर्थः ५७ प्रधानेनप्राधान्येन संख्यातुंकीर्तयितुम् ५८ एवमनयादिशा वृत्तिजीविकामुद्दिश्य तपसास्वधर्मेण प्राणिहितेआत्माचित्तंयस्य पाठांतरेप्रणिहितःसमाहितःआत्माचित्तंयस्य बहुळंश्रेयोमोक्षाख्यम् ५९ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नी० भारतभावदीपे सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥ सर्वतंत्रसाधारणानहिंसाप्र

प्रीयमाणानरायत्रप्रयच्छेयुरयाचिताः ॥ स्वस्थचित्तोवसेत्तत्रकृतकृत्यइवात्मवान् ५३ दंडोयत्राविनीतेषुसत्कारश्चकृतात्मसु ॥ चरेत्तत्रवसेच्चैवपुण्यशीलेषु साधुषु ५४ उपसृष्टेषुदांतेषुदुराचारेष्वसाधुषु ॥ अविनीतेषुलुब्धेषुसुमहद्दंडधारणम् ५५ यत्रराजाधर्मनित्योराज्यंधर्मेणपालयेत् ॥ अपास्यकामान्कामेशो वसेत्तत्राविचारयन् ५६ यथाशीलाहिराजानःसर्वान्विषयवासिनः ॥ श्रेयसायोजयत्याशुश्रेयसिप्रत्युपस्थिते ५७ पृच्छतस्तेमयातातश्रेयएतदुदाहृतम् ॥ नहि शक्यंप्रधानेनश्रेयःसंख्यातुमात्मनः ५८ एवंप्रवर्तमानस्यवृत्तिंप्राणिहितात्मनः ॥ तपसैवेहबहुलंश्रेयोव्यक्तंभविष्यति ५९ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि श्रेयोवाचिकोनामसप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥ ॥ युधिष्ठिरउवाच ॥ कथंनुयुक्तःपृथिवींचरेदस्मद्विधोनृपः ॥ नित्यंके श्चगुणैर्युक्तःसंगपाशाद्विमुच्यते १ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्येऽहमितिहासंपुरातनम् ॥ अरिष्टनेमिनाप्रोक्तंसगरायानुपृच्छते २ ॥ सगरउवाच ॥ किंश्रेयः परमंब्रह्मन्कृत्वेहसुखमश्नुते ॥ कथंनशोचेन्नक्षुभ्येदेतदिच्छामिवेदितुम् ३ ॥ भीष्मउवाच ॥ एवमुक्तस्तदाताक्ष्यःसर्वशास्त्रविदांवरः ॥ विबुद्धयसंपदंचाग्र्यांसद्वा क्यमिदमब्रवीत् ४ सुखंमोक्षसुखंलोकेकेनचमूढोऽवगच्छति ॥ प्रसक्तःपुत्रपशुषुधनधान्यसमाकुलः ५ सक्तबुद्धिरशांतात्मानशक्यंतच्चिकित्सितुम् ॥ स्नेहपाशासि तोमूढोनसमोक्षायकल्पते ६ स्नेहजानिहतेपाशान्वक्ष्यामिशृणुतान्मम ॥ सकर्णकेनशिरसाशक्याःश्रोतुंविजानता ७ संभाव्यपुत्रान्कालेनयौवनस्थान्निवेश्यच ॥ समर्थान्जीवनेज्ञात्वामुक्तश्चरयथासुखम् ८ भार्यांपुत्रवतींवृद्धांलालितांपुत्रवत्सलाम् ॥ ज्ञात्वाप्रजहिकालेनपरार्थमनुदृश्यच ९ सापत्योनिरपत्योवामुक्तश्चर यथासुखम् ॥ इंद्रियैरिंद्रियार्थांस्त्वमनुभूययथाविधि १० कृतकौतूहलस्तेषुमुक्तश्चरयथासुखम् ॥ उपपत्त्योपलब्धेषुलोकेषुचसमोभव ११ एषतावत्समासे नतवसंकीर्तितोमया ॥ मोक्षार्थोविस्तरेणाथभूयोवक्ष्यामितच्छृणु १२

धानान्मोक्षधर्मान्श्रुत्वाराज्ञांवदनुष्ठानंदुःशकमितिमन्वानःपृच्छति कथमिति १ सर्वस्यासारतांभावयन्नेवसंगपाशाद्विमुच्यतइतिवक्तुमाख्यायिकामुखेनाह अत्रेति २ । ३ संपदमपदेशयो ग्यतांश्रियम् ४ । ५ सक्तेति सक्ताविषयनिमग्नासाचासौबुद्धिश्च अशांतश्चासौआत्माचतृष्णाकुलंमनः तत्तद्वयंचिकित्सितुमशक्यम् । नसशक्यश्चिकित्सितुमितिपाठांतरेस्पष्टोर्थः सितोबद्धः ६ सकर्णकेनशिरसेत्येताभ्यांपदाभ्यांसावधानेनजीवतेत्यर्थोलक्ष्यते ७ निवेश्यदारैःसंयोज्य ८ परार्थमंतिमंपुरुषार्थंमोक्षं प्रजहित्यज ९ । १० कृतकौतूहलःछिन्नौत्सुक्यः कृहिंसायांभ्वा दिस्तस्यानिष्ठायांकृतमितिरूपं उपपत्त्यायदृच्छयाउपलब्धेषुलोकेषुविषयेषुसमोरागद्वेषहीनः ११ पृथग्योगपूर्वकरस्यामः मोक्षार्थोमोक्षप्रयोजनः १२



मुक्ताश्छिन्नस्नेहपाशाः सक्तभावाःविषयासक्तचित्ताः १३ उक्तेर्थेदृष्टांतमाह । आहारेति आहारंसंचिन्वंतिसंग्रह्णंतिताद्दशाःकीटादयोनश्यंति नत्वसंग्रहिणइत्यर्थः १४ ननु'वृद्धौचमाता पितरौसाध्वीभार्यासुतःशिशुः ॥ अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीत्'इतिस्मृतेःसंग्रहंविनाकथंमात्रादिजीवनंस्यादित्याशंक्याह स्वजनेइतित्रिभिः यथाउत्पत्त्यादिकंतत्तत्कर्माधीनमेवं भोजनादिकमपीतिपात्रादिविषयेचिंतानकार्येत्यर्थः १५ । १६ मात्रापित्राकृतेमत्स्वकृतेनवासंग्रहमधिगच्छंतीतियोजना १७ धात्राप्राक्कर्मफलविभाजकेन १८ स्वस्याकिंचित्करत्वादपिमा त्रादिपोषणेचिंतानकार्येत्याह स्वयमित्यादिना अद्दढेतिच्छेदः १९ । २० जीवंतमिति मरणेअन्ने रक्षणेगृहादौ असमाप्तेऽप्यन्नादौवेनंभर्तारंजीवंतमपिपरित्यज्यस्वकर्मणैवयथाभार्यादिर्जिय तेपश्चात्तदुभयनाशादूर्ध्वमपितथैवमरिष्यत्येवेत्यर्थः २१ यदेति मृतंदेशांतरस्थंवास्वजनंसुखितंदुःखितंवानज्ञास्यसिनाप्युपकरिष्यसियथैवमात्मनेदंबोद्धव्यंमामपिमृतंदेशांतरगतंपुत्रादयोन

मुक्तावीतभयालोकेचरंतिसुखिनोनराः ॥ सक्तभावाविनश्यंतिनरास्तत्रनसंशयः १३ आहारसंचयाश्चैवतथाकीटपिपीलिकाः ॥ असक्ताःसुखिनोलोकेसक्ताश्चैव विनाशिनः १४ स्वजनेनचतेचिंताकर्तव्यामोक्षबुद्धिना ॥ इमेमयाविनाभूताभविष्यंतिकथंत्विति १५ स्वयमुत्पद्यतेजंतुःस्वयमेवविवर्धते ॥ सुखदुःखेतथामृत्युं स्वयमेवाधिगच्छति १६ भोजनाच्छादनेचैवमात्रापित्राचसंग्रहम् ॥ स्वकृतेनाधिगच्छंतिलोकेनास्त्यकृतंपुरा १७ धात्राविहितभक्ष्याणिसर्वभूतानिमेदिनीम् ॥ लोकेविपरिधावंतिरक्षितानिस्वकर्मभिः १८ स्वयंमृत्पिंडभूतस्यपरतंत्रस्यसर्वदा ॥ कोहेतुःस्वजनंपोष्टुंरक्षितुंवाऽदृढात्मनः १९ स्वजनंहियदामृत्युर्हंत्येवतवपश्य तः ॥ कृतेऽपियत्नेमहतितत्रबोद्धव्यमात्मना २० जीवंतमपिचैवेनंभरणेरक्षणेतथा ॥ असमाप्तेपरित्यज्यपश्चादपिमरिष्यसि २१ यदामृतंचस्वजनंनज्ञास्य सिकदाचन ॥ सुखितंदुःखितंवाऽपिनानुबोद्धव्यमात्मना २२ मृतेवात्वयिजीवेवायदाभोक्ष्यतिवैजनः ॥ स्वकृतंननुबुद्ध्वैवंकर्तव्यंहितमात्मनः २३ एवंविजानन् लोकेऽस्मिन्कःकस्येत्याभिनिश्चितः ॥ मोक्षेनिवेशयमनोभूयश्चाप्युपधारय २४ क्षुत्पिपासादयोभावाजितायस्येहदेहिनः ॥ क्रोधोलोभस्तथामोहःसत्ववान्मुक्त एवसः २५ द्यूतेपानेतथास्त्रीषुमृगयायांचयोनरः ॥ नप्रमाद्यतिसंमोहात्सततंमुक्तएवसः २६ दिवसेदिवसेनामरात्रौरात्रौपुमान्सदा ॥ भोक्तव्यमितियःखिन्नो दोषबुद्धिःसउच्यते २७ आत्मभावंतथास्त्रीषुमुक्तमेवपुनःपुनः ॥ यःपश्यतिसदायुक्तोयथावन्मुक्तएवसः २८ संभवंचविनाशंचभूतानांचेष्टितंतथा ॥ यस्तत्त्व तोविजानातिलोकेऽस्मिन्मुक्तएवसः २९

ज्ञास्यंतिनोपकरिष्यंतीति २२ अत्यल्पमिदमुक्तंत्वयिमृतेवाजीवतिवाजनःपुत्रादिःस्वकृतंजरारोगादिकंभोक्ष्यतिस्वंचनतद्दूरीकर्तुंशक्तोपिएवमन्येऽपितवेतिबुध्द्वा २३ । २४ यस्यदेहिनः येनपुंसा सत्ववान्सत्वाधिकः २५ द्यूतेइत्यादयःसामीप्येसप्तम्यः नप्रमाद्यतिआत्मानंविस्मृत्यतत्रामिनिविष्टोनभवति २६ कियत्प्रत्यहंभोक्तव्यंकियत्प्रतिरात्रंभोक्तव्यमितियोभोगात् खिन्नः २७ आत्मेति आत्मभावंचित्तस्यस्वभावं स्त्रीषुविषयभूतासु मुक्तंत्यक्ताभिलाषाख्यादृत्तं सक्तमितिपाठेसक्तंसंगस्तं भावेनिष्ठा आत्मनोभवनंभावोजन्मस्त्रीसंगजन्महेतुत्वेनयःपश्यतीत्यर्थः युक्तःसावधानः २८ संभवमिति जन्ममरणजीवनक्लेशज्ञोमुच्यतइत्यर्थः २९

वाहःधान्यपूर्णंशकटं सहस्रेषुकोटिष्विति समानाधिकरणं प्रस्थंपुरुषाहारपरिमितंधान्यं । पद्मापंचकृष्णलकोमाषस्तेषोडशपलंतानिसार्धत्रयोदशप्रस्थःप्रस्थशतमाढकस्तेशतद्वयंद्रोणः कुंभस्तेदशवाहइति । यात्रार्थंदेहव्यवहारार्थं अधिकसंग्रहोऽनर्थइतियःपश्यति ३० अवृत्तिर्जीविकायाअभावः ३१ नपश्यन्नित्येकंपदं मृत्युनाऽभ्याहतंलोकमित्यनुकृष्यते ३२ अ ग्नीषोमाविति अग्निर्जाठरोभोक्ता सोमोऽन्नंभोज्यं अहंतुततोऽन्यइतियोऽनुपश्यतिसभावैःसुखदुःखादिभिरद्भुतैर्मायिकैर्नसंस्पृश्यतेसगवान्नभवति ३३ । ३४ क्षौममतसीसूत्रमयं कुशचीरंतृणव

प्रस्थंवाहसहस्रेषुयात्रार्थंचैवकोटिषु ॥ प्रासादेमंचकंस्थानंयःपश्यतिसमुच्यते ३० मृत्युनाऽभ्याहतंलोकंव्याधिभिश्चोपपीडितम् ॥ अवृत्तिकर्शितंचैवयःपश्यति
समुच्यते ३१ यःपश्यतिससंतुष्टोनपश्यंश्चविहन्यते ॥ यश्चाप्यल्पेनसंतुष्टोलोकेऽस्मिन्मुक्तएवसः ३२ अग्नीषोमाविदंसर्वमितियश्चानुपश्यति ॥ नचसंस्पृश्यते
भावैरद्भुतैर्मुक्तएवसः ३३ पर्यंकशय्याभूमिश्चसमानेयस्यदेहिनः ॥ शालयश्चकदन्नंचयस्यस्यान्मुक्तएवसः ३४ क्षौमंचकुशचीरंचकौशेयंवल्कलानिच ॥ आविकं
चर्मचसमंयस्यस्यान्मुक्तएवसः३५ पंचभूतसमुद्भूतंलोकंयश्चानुपश्यति ॥ तथाचवर्ततेदृष्ट्वालोकेऽस्मिन्मुक्तएवसः ३६ सुखदुःखेसमेयस्यलाभालाभौजयाजयौ ॥
इच्छाद्वेषौभयोद्वेगौसर्वथामुक्तएवसः ३७ रक्तमूत्रपुरीषाणांदोषाणांसंचयांस्तथा ॥ शरीरंदोषबहुलंदृष्ट्वाचैवविमुच्यते ३८ वलीपलितसंयोगंकार्श्यंवैवर्ण्यमेवच ॥
कुब्जभावंचजरयायःपश्यतिसमुच्यते ३९ पुंस्त्वोपघातंकालेनदर्शनोपरमंतथा ॥ बाधिर्यंप्राणमंदत्वंयःपश्यतिसमुच्यते ४० गतानृषींस्तथादेवानसुरांश्चतथाग
तान् ॥ लोकादस्मात्परंलोकंयःपश्यतिसमुच्यते ४१ प्रभावैरन्वितास्तैस्तैःपार्थिवेंद्राःसहस्रशः ॥ येगताःपृथिवींत्यक्त्वाइतिज्ञात्वाविमुच्यते ४२ अर्थाश्चदुर्ल
भाँल्लोकेक्लेशांश्चसुलभांस्तथा ॥ दुःखंचैवकुटुंबार्थेयःपश्यतिसमुच्यते ४३ अपत्यानांचवैगुण्यंजनंविगुणमेवच ॥ पश्यन्भूयिष्ठशोलोकेकोमोक्षंनाभिपूजयेत् ४४
शास्त्राल्लोकाच्चयोबुद्धःसर्वंपश्यतिमानवः ॥ असारमिवमानुष्यंसर्वथामुक्तएवसः ४५ एतच्छ्रुत्वाममवचोभवांश्चरतुमुक्तवत् ॥ गार्हस्थ्येयदिवामोक्षेकृतात्बुद्धिरवि
क्लवा ४६ तत्तस्यवचनंश्रुत्वासम्यक्सपृथिवीपतिः ॥ मोक्षजैश्चगुणैर्युक्तःपालयामाससचप्रजाः ४७ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणिसग
रारिष्टनेमिसंवादेअष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥ ॥ ॥ युधिष्ठिरउवाच ॥ तिष्ठतेमेसदातातकौतूहलमिदंहृदि ॥ तदहंश्रोतु
मिच्छामित्वत्तःकुरुपितामह १ कथंदेवर्षिरुशनाःसदाकाव्योमहामतिः ॥ असुराणांप्रियकरःसुराणामप्रियेरतः २ वर्धयामासतेजश्चकिमर्थममितौजसाम् ॥
नित्यंवैरनिबद्धाश्चदानवाःसुरसत्तमैः ३

लं कौशेयंकोशजं आविकंकंबलं ३५ तथाचसाम्येनेत्यर्थः ३६ । ३७ । ३८ । ३९ प्राणमंदत्वंदौर्बल्यं ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ मोक्षजैर्ज्ञानजैरद्वेष्टृत्वादिभिः ४७ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥ एवंरागद्वेषहीनोवीतसंगोमुच्यतइत्युक्तं । संगदोषाज्जन्मनामहानप्ययोगतिस्वर्ग मार्गप्रतिबंधंचलभतइतिवक्तुंशुक्रोपाख्यानंप्रस्तूयते तिष्ठतेइतिस्थेयाख्यायांतङ् कौतुहलमाश्चर्यं चिरकालंममहृदिवर्ततेइत्यर्थः १ । २ वर्धयामासचिच्छेद अमितौजसांदेवानां ३



शुक्रत्वंशुक्रोत्पन्नत्वं ४ नेति तस्याकाशगतिःकुतःकुंठितेत्यर्थः सप्तर्षिवद्भिक्षवेणस्थितस्यशुक्रस्यमूर्तस्यमूर्तिविषयकएवायंप्रश्नोनमचक्रस्यमूर्तिविषयः तेनयथामौमानांवसिष्ठादीनांस्वर्गे ऽपिगतिरस्तिनैवंभामस्यशुक्रस्यास्तीतिगम्यते ५ । ६ कारणाक्रियातदात्मकेनिमित्तेसति एवंत्वुपाख्यायते असुराःकिलदेवान्बाधित्वाभृगुपत्न्याआश्रमंप्रविशंतितंचदेवाःप्रवेष्टुमशक्नुव तोविष्णुंशरणमीयुस्ततोविष्णुश्चक्रेणभृगुपत्न्याःशिरश्चिच्छेदततोहतावशिष्टाअसुरास्तत्पुत्रंशुक्रंशरणमीयुः । सचमातृवधखिन्नोऽसुरेभ्योऽभयंदत्वादेवान्बाधतइति ७ इंद्रोजगतःप्रभुर्धनद स्तदीयकाशस्यप्रभुरित्यन्वयः ८ तस्यधनदस्य आत्मानंशरीरं ९ आपन्नमन्युःप्राप्तदैन्यः १० । ११ । १२ । १३ बभौआत्मानंदर्शितवान् १४ महायोगिनःशिवस्यप्रभुर्यो

कथंचाप्युशनाप्रापशुक्रत्वममरद्युतिः ॥ ऋद्धिंचसकथंप्राप्तःसर्वमेतद्ब्रवीहिमे ४ नयातिचसतेजस्वीमध्येननभसःकथम् ॥ एतदिच्छामिविज्ञातुंनिखिलेनपिता
मह ५ ॥ भीष्मउवाच ॥ शृणुराजन्नवहितःसर्वमेतद्यथातथम् ॥ यथामतियथाचैतच्छ्रुतपूर्वंमयाऽनघ ६ एषभार्गवदायादोमुनिर्मान्योदृढव्रतः ॥ सुराणांवि
प्रियकरोनिमित्तेकारणात्मके ७ इंद्रोऽथधनदोराजायक्षरक्षोधिपःसदा ॥ प्रभविष्णुश्चकोशस्यजगतश्चतथाप्रभुः ८ तस्यात्मानमथाविश्ययोगसिद्धोमहामुनिः ॥
रुद्ध्वाधनपतिंदेवंयोगेनहृतवान्वसु ९ हृतेधनेततःशर्मनलेभेधनदस्तथा ॥ आपन्नमन्युःसंविग्नःसोऽभ्यगात्सुरसत्तमम् १० निवेदयामासतदाशिवायामिततेजसे ॥
देवश्रेष्ठायरुद्रायसौम्यायबहुरूपिणे ११ योगात्मकेनोशनसारुद्ध्वाममहृतंवसु ॥ योगेनात्मगतंकृत्वानिःसृतश्चमहातपाः १२ एतच्छ्रुत्वाततःक्रुद्धोमहायोगीमहे
श्वरः ॥ संरक्तनयनोराजन्शूलमादायतस्थिवान् १३ क्वासौक्वासावितिप्राहगृहीत्वापरमायुधम् ॥ उशनादूरतस्तस्यबभौज्ञात्वाचिकीर्षितम् १४ समहायोगिनो
बुद्ध्वातंरोषंवैमहात्मनः ॥ गतिमागमनंवेत्तिस्थानंचैवततःप्रभुः १५ संचिंत्योग्रेणतपसामहात्मानंमहेश्वरम् ॥ उशनायोगसिद्धात्माशूलाग्रेप्रत्यदृश्यत १६
विज्ञातरूपःसतदातपःसिद्धोऽथधन्विना ॥ ज्ञात्वाशूलंचदेवेशःपाणिनासमनामयत् १७ आनतेनाथशूलेनपाणिनामिततेजसा ॥ पिनाकमितिचोवाचशूलमुग्रा
युधःप्रभुः १८ पाणिमध्यगतंदृष्ट्वाभार्गवंतमुमापतिः ॥ आस्यंविवृत्यककुदीपाणिनाप्राक्षिपच्छनैः १९ सतुप्रविष्टउशनाकोष्ठंमाहेश्वरंप्रभुः ॥ व्यचरच्चापितत्रा
सौमहात्माभृगुनंदनः २० ॥ युधिष्ठिरउवाच ॥ किमर्थंव्यचरद्राजन्नुशनातस्यधीमतः ॥ जठरेदेवदेवस्यकिंचाकार्षीन्महाद्युतिः २१ ॥ भीष्मउवाच ॥ पुरा
सोंतर्जलगतःस्थाणुभूतोमहाव्रतः ॥ वर्षाणामभवद्राजन्प्रयुतान्यर्बुदानिच २२ उदतिष्ठत्तपस्तप्त्वादुश्चरंचमहाह्रदात् ॥ ततोदेवातिदेवस्तंब्रह्मावैसमसर्पत २३


गसिद्धःशुक्रः १५ । १६ सशुक्रः धन्विनारुद्रेण शूलंशुक्रयुतं शूलस्थेशूलंप्रयोक्तुमशक्यमितितमेवशूलंधनुरूपंकर्तुंपाणिनासमनामयत्संनामितवान् १७ शूलमेवपिनाकपदेनोवाच यतः पाणिनाऽनामयदतःपिनाकंतेनाद्यपदस्याद्यंतवर्णाभ्यांद्वितीयस्यमध्यमाभ्यांकप्रत्यययुक्ताभ्यांपिनाकपदंनिष्पन्नमितियोगप्रदर्शनंकृतं १८ पाणिमध्यगतोधनुपाऽपिवेद्धुमशक्यइतिमत्वाककु द्वीदेवानांपद्माधिपधीरुद्रःप्राक्षिपदास्ये १९ कोष्ठमुदरं २० व्यचरदेवमत्वन्नयज्जीर्णतांगतः किंचवान्हशमकार्षीत्पइतिशेषः २१ । २२ । २३

२४ वृद्धिंशुक्रस्योत्कर्षं तत्संयोगेनतपोयोगेन २५ सशुक्रः २६ निलिल्येनितरांगतिंजगामजठरमेवेत्यर्थः २७ निःसरणंनिर्गमं तेनरुद्रेण २८ २९ । ३० । ३१ कार्येणेति तेनशिश्नाद्विनिर्गमेनेनकार्येणनिमित्तेनास्मदादिवन्नभसोमध्यतोनाध्यगच्छतनाधिगम्यते कर्मणितद् जामदग्न्यस्यरामस्येवास्यस्वर्गगतिर्निरुद्धेत्यर्थः । अन्येतुभचक्रस्थोऽपिशुक्रःसूर्याद्विप्रकर्षात्खमध्यगतोनदृश्यतइतितन्मात्रपरतयैवैतद्व्याचख्युस्तस्मिन्पक्षेशुक्रत्वहेतुर्नसंगच्छतइत्यालोचनीयं ३२ ।३३ । ३४। ३५ । ३६। ३७ ।३८ ॥ इतिशांतिपर्वणिमो॰ नी॰ भा॰ एकोननवत्यधिकद्विशततमो

तपोवृद्धिमपृच्छच्चकुशलंचैवमव्ययः ॥ तपःसुचीर्णमितिचप्रोवाचवृषभध्वजः २४ तत्संयोगेनवृद्धिंचाप्यपश्यत्सतुशंकरः ॥ महामतिरचिंत्यात्मासत्यधर्मरतःसदा २५ सतेनाढ्योमहायोगीतपसाचधनेनच ॥ व्यराजतमहाराजत्रिषुलोकेषुवीर्यवान् २६ ततःपिनाकीयोगात्माध्यानयोगंसमाविशत् ॥ उशनातुसमुद्विग्नोनिलिल्येजठरेततः २७ तुष्टावचमहायोगीदेवंतत्रस्थएवच ॥ निःसारंकांक्षमाणःसतेनस्मप्रतिहन्यते २८ उशनातुतथोवाचजठरस्थोमहामुनिः ॥ प्रसादंमेकुरुष्वेतिपुनःपुनररिंदम २९ तमुवाचमहादेवोगच्छशिश्नेनमोक्षणम् ॥ इतिसर्वाणिस्रोतांसिरुद्ध्वात्रिदशपुंगवः ३० अपश्यमानस्तद्द्वारंसर्वतःपिहितोमुनिः ॥ पर्यक्रामद्दह्यमानइतश्चेतश्चतेजसा ३१ सवैनिष्क्रम्यशिश्नेनशुक्रत्वमभिपेदिवान् ॥ कार्येणतेननभसोनाध्यगच्छतमध्यतः ३२ विनिष्क्रांतंतुतंदृष्ट्वाज्वलंतमिवतेजसा ॥ भवोरोषसमाविष्टःशूलोद्यतकरःस्थितः ३३ अवारयततंदेवीक्रुद्धंपशुपतिंपतिम् ॥ पुत्रत्वमगमद्देव्यावारितेशंकरेचसः ३४ ॥ देव्युवाच ॥ हिंसनीयस्त्वयानैवममपुत्रत्वमागतः ॥ नहिदेवोदरात्कश्चिन्निःसृतोनाशमृच्छति ३५ ततःप्रीतोभवोदेव्याप्रहसंश्चेदमब्रवीत् ॥ गच्छत्वेषयथाकाममितिराजन्पुनःपुनः ३६ ततःप्रणम्यवरदंदेवंदेवीमुमांतथा ॥ उशनाप्रापतद्धीमान्गतिमिष्टांमहामुनिः ३७ एतत्तेकथितंतातभार्गवस्यमहात्मनः ॥ चरितंभरतश्रेष्ठयन्मांत्वंपरिपृच्छसि ३८ ॥ इतिश्रीमहाभारते शांति॰ मोक्ष॰ भवभार्गवसमागमे एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥ ॥ युधिष्ठिरउवाच ॥ अतःपरंमहाबाहोयच्छ्रेयस्तद्ब्रवीहिमे ॥ नतृप्याम्यमृतस्येववचसस्तेपितामह १ किंकर्मपुरुषःकृत्वाशुभंपुरुषसत्तम ॥ श्रेयःपरमवाप्नोतिप्रेत्यचेहचतद्वद २ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामियथापूर्वंमहायशाः ॥ पराशरंमहात्मानंपप्रच्छजनकोनृपः ३ किंश्रेयःसर्वभूतानामस्मिँल्लोकेपरत्रच ॥ यद्भवेत्प्रतिपत्तव्यंतद्भवान्प्रब्रवीतुमे ४ ततःसतपसायुक्तःसर्वधर्मविधानवित् ॥ नृपायानुग्रहमनामुनिर्वाक्यमथाब्रवीत् ५

ऽध्यायः ॥ २८९ ॥ रुद्रेणापिहंतुमशक्यस्तस्यजठरेऽपियोनजीर्णोयश्चोमायाःपुत्रत्वंगतस्तादृशस्यापिसंगदोषादूर्ध्वगतिःप्रतिबद्धाकिमुतान्येषामितिमत्वाभीतोराजापुनःसर्वसंगदोषघस्मरंश्रेयःकिंतत्कारणंचकिंकर्मेतिपृच्छति अतःपरमिति १।२ अभ्यर्हितत्वात्प्रथमंश्रेयःकारणंकर्मैवाहपराशरगीतयाऽत्रेति ३ प्रतिपत्तव्यंज्ञातव्यंनरवत्प्राप्तव्यं क्रियासाध्यस्यश्रेयसोऽनित्यत्वापत्तेःतथाचप्रयोगः यत्कृतकंतदनित्यंकार्यत्वाद्घटवदिति श्रुतिश्च 'तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयते'इति ४ सर्वेषांवर्णाश्रमाणांधर्माणांविधानमाचारस्तद्वित् ५



६ धर्मस्यलक्षणमाह धर्मेति कर्मविधिर्यजेतजुहुयाद्दद्यादित्यादिःसएवधर्मः एतेनचोदनालक्षणोऽर्थोधर्मइत्युक्तंभवति चोदनेतिक्रियायाःप्रवर्तकंवचनंयजेतेत्यादीदमेवधर्मेप्रमाणंच ७ तस्मिन्धर्मेआश्रमिणःसंतस्तन्निष्ठाःकुर्वते विधौलिङ् ८ कर्मापेक्षितंवित्तार्जनंकथंस्यादित्यतआह चतुर्विधेति यात्राजीविकाब्राह्मणस्यप्रतिग्रहो राजन्यस्यकरादानं वैश्यस्यकृष्यादि शूद्रस्यभृतिवेतनमितिचतुर्विधा ९ सुकृतासुकृतंपुण्यपापंनिषेव्यवृत्तिमिच्छता दशानामर्धंपंचभूतानितेषुप्रविभक्तानांविभज्यस्थितानांपंचत्वंप्राप्तानांभूतानांप्राणिनांवृत्त्यनुरूपाचतुर्विधाऽप्यवांतरतारतम्याद्बहुविधागतिःश्रूयते पापिनांतिर्यक्त्वंपुण्यवतांस्वर्गस्तयोःसाम्येमानुषत्वंतत्त्वज्ञानेनोच्छेदेमुक्तिरिति १० जीवानांकर्मानुरंजितत्वेदृष्टांतमाह सौवर्णमिति यथाताम्रादिमयंपात्रंसौवर्णेनराजतेनवारसेननिषिच्यतेचेत्सौवर्णमिवराजतमिववादृश्यतेतद्वज्जंतुःपूर्वकर्मानुसारीनिषिच्यतेनिषिक्तोभवतिप्राक्कर्मणा ११ एतत्तर्कबलेनसाधयति नाबीजादिति यथाग्नौक्षेपात्तुंडिलंबीजमदृष्टमपिवर्षास्वंकुरोत्पादनेनानुमीयतेएवंदृष्टादृष्टाभ्यांकारणाभ्यांसुखादिकंजायते देहक्षयंदेहाविपर्ययंदेहनाशंवा । कर्मभिरेवदेहीहपरत्रचसुखंप्राप्नोतिअन्यथाकृतनाशाकृताभ्यागमौप्रसज्येयातामितिभावः १२ अत्रप्रत्यवतिष्ठतेचार्वाकः दैवमिति दैवंपुण्यपापलक्षणंनपश्यामि नाप्यनुमानंतस्यसाधनमस्ति । ननुसुखादिवैचित्र्यमन्यथानुपपत्तिरेवतत्रमानमित्यतआशंक्याह

॥ पराशरउवाच ॥ धर्मएवकृतःश्रेयानिहलोकेपरत्रच ॥ तस्माद्धिपरमंनास्तियथाप्राहुर्मनीषिणः ६ प्रतिपद्यनरोधर्मंस्वर्गलोकेमहीयते ॥ धर्मात्मकःकर्मविधिर्देहिनांनृपसत्तम ७ तस्मिन्नाश्रमिणःसंतःस्वकर्माणीहकुर्वते ८ चतुर्विधाहिलोकेऽस्मिन्यात्रातातविधीयते ॥ मर्त्यायत्रावतिष्ठंतेसाचकामात्प्रवर्तते ९ सुकृतासुकृतंकर्मनिषेव्यविविधैःक्रमैः ॥ दशार्धप्रविभक्तानांभूतानांबहुधागतिः १० सौवर्णंराजतंचापियथाभांडंनिषिच्यते ॥ तथानिषिच्यतेजंतुःपूर्वकर्मवशानुगः ११ नाबीजाज्जायतेकिंचिन्नाकृत्वासुखमेधते ॥ सुकृतीविंदतेसौख्यंप्राप्यदेहक्षयंनरः १२ दैवंतातनपश्यामिनास्तिदैवस्यसाधनम् ॥ स्वभावतोहिसंसिद्धादेवगंधर्वदानवाः १३ प्रेत्ययांत्यकृतंकर्मनस्मरंतिसदाजनाः ॥ तेवैतस्यफलप्राप्तौकर्मचापिचतुर्विधम् १४ लोकयात्राश्रयश्चैववशब्दोवेदाश्रयःकृतः ॥ शांत्यर्थंमनसस्तातनैतद्वृद्धानुशासनम् १५

स्वभावतइति वह्न्यौष्ण्यादिवत्स्वभावतएवतज्जायतेनकारणांतरादित्यर्थः १३ तत्रसिद्धांतीशंकते प्रेत्येति ननुप्रेत्याऽकृतंकर्मकर्मफलंनयांतिनप्राप्नुवंतिएवंसतिकृतहानादिदोषप्रसंगइत्यर्थः नचेष्टापत्तिः लोकवादविरोधादित्याह स्मरंतीति तस्यकर्मणःफलप्राप्तावकस्माद्राजमार्गेपतितद्रव्यलाभेरोगाद्युत्पत्तौचसत्यांतेजनाःसदाचतुर्विधंकर्मपुण्यंपापंनीतिरनीतिश्चेतितत्कारणत्वेनतुल्यवत्स्मरंति । अन्यथानीतिमतामपिदुःखमनीतिमतामपिसुखंचदृश्यमानंनोपपद्यतेइत्यर्थः । अन्येतुप्रेत्यजातिकृतंकर्मेतिपठित्वामृत्वाजन्मांतरेकृतंकर्मजन्मांतरेफलप्राप्तौसत्यांचचतुर्विधंनित्यनैमित्तिककाम्यनिषिद्धलक्षणंकारणत्वेननस्मरंतीतिचार्वाकवचनत्वेनैतमपिश्लोकंव्याचक्षते १४ लोकेति पुण्यादिचतुष्टयंयत्सुखादिहेतुत्वेनस्मरंति तथैवचवेदेऽपिशृण्वंति । पुण्योवैपुण्येनकर्मणाभवतिउत्तिष्ठतजाग्रतप्राप्यवरान्निबोधतेति वेदशब्दोऽपियःकर्मप्राधान्यपरःसोऽपिशांत्यर्थंपरर्द्धिस्वस्यहानिंचदृष्ट्वोत्पन्नानांसमाधानार्थंप्राकृतकर्मणातवशत्रुःसुखीत्वंचदुःखीतिनात्रतवदोषोऽस्तीतिनसंतापस्त्वयाकार्यइतिप्रयुज्यते अतएवतदैवप्रतिपादनंवृद्धानांबृहस्पत्यादीनांलोकायतागमप्रणेतॄणांशासनंनभवति नहिधर्मःप्रत्यक्षस्यविषयः अयोग्यत्वात् नाप्यनुमानस्य तस्यापिप्रत्यक्षपूर्वकत्वात् तदुभयाविषयेयःशब्दःसंकवलंवंचनार्थइतिभावः १५

एतद्रूपयति चक्षुषेति इंद्रियमनोवाक्शरीरैःप्रत्येकंचतुर्विधंपुण्यपापनीत्यमीस्याऽस्याकंतादृशंतत्प्रकारंफलंप्रतिपद्यते अयमर्थः। कार्यवैचित्र्यात्कारणवैचित्र्यंतावदवश्यंकल्प्यं तच्चकर्मवैचि ऽयकृतंलोकेवेदेचकृतं विहायसमानेऽपिभौतिकत्वेऽनंतानवस्थितत्वाप्रामाणिकस्वभाववादंकल्पयतोविस्पष्टंमूर्खत्वमितिभावः १६ एतदेवाह निरंतरमिति कर्मंतितत्फलंलक्ष्यते कदाचिन्निरंत रंदुःखमेवलभतेकदाचित्सुखमेवलभतेकदाचिन्मिश्रंयुगपदुभयंलभतेपादेमेदुःखंहस्तेमेसुखमिति । नचैतत्स्वभाववादेयुज्यते नहिवह्निरुष्णस्वभावःकंचित्कालमुष्णःकंचित्कालंशीतःकंचित्का लमनुष्णाशीतश्चदृश्यते । नन्वाशुतरविनाशिनःकर्मणःकथंकालांतरीयंफलंयुज्यतइत्याशंक्याह नतुनाशोऽस्याविद्यतइति अस्यकर्मणःकर्मजन्यस्यपुण्यपापात्मकस्यापूर्वस्येश्वरप्रीतिरूपस्यवा भोगंविनानाशोनास्तीत्यर्थः १७ इमंश्लोकंव्याचष्टे कदाचिदिति कूटस्थंपक्षपातशून्यं दुष्कृताविरोधेनेत्यर्थः १८ । १९ अव्यसनितेतिच्छेदः सुखावहाःपुण्यपापयोःसमूलोच्छेदेयत्सु खंतदावहंतीतितथा २० नियतोयावज्जीवमेकैकभागी अतोद्वयोरप्यागमापायित्वान्नित्यंसमाधानेब्रह्मदर्शनेहेतौसमाधौप्रयतेत २१ नचैतत्पितुःपुत्रस्यवासुकृतेनाप्तुंशक्यमित्याह नाय

चक्षुषामनसावाचाकर्मणाचचतुर्विधम् ॥ कुरुतेयादृशंकर्मतादृशंप्रतिपद्यते १६ निरंतरंचमिश्रंचलभतेकर्मपार्थिव ॥ कल्याणंयदिवापापंनतुनाशोऽस्यविद्यते
१७ कदाचित्सुकृतंतातकूटस्थमिवतिष्ठति ॥ मज्जमानस्यसंसारेयावद्दुःखाद्विमुच्यते १८ ततोदुःखक्षयंकृत्वासुकृतंकर्मसेवते ॥ सुकृतक्षयाच्चदुष्कृतंतद्वि
द्धिमनुजाधिप १९ दमःक्षमाधृतिस्तेजःसंतोषःसत्यवादिता ॥ ह्रीरहिंसाऽव्यसनितादाक्ष्यंचेतिसुखावहाः २० दुष्कृतेसुकृतेचापिनजंतुर्नियतोभवेत् ॥ नित्यं
मनःसमाधानेप्रयतेतविचक्षणः २१ नायंपरस्यसुकृतंदुष्कृतंचापिसेवते ॥ करोतियादृशंकर्मतादृशंप्रतिपद्यते २२ सुखदुःखेसमाधायपुमानन्येनगच्छति ॥ अ
न्येनैवजनःसर्वःसंगतोयश्चपार्थिवः २३ परेषांयदसूयेतनतत्कुर्यात्स्वयंनरः ॥ योह्यसूयुस्तथायुक्तःसोऽवहासंनियच्छति २४ भीरूराजन्योब्राह्मणः
सर्वभक्ष्योवैश्योऽनीहावान्हीनवर्णोलसश्च ॥ विद्वांश्चाशीलोवृत्तहीनःकुलीनःसत्याद्विभ्रष्टोब्राह्मणःस्त्रीचदुष्टा २५ रागीयुक्तःपचमानोऽऽत्महेतोर्मूर्खोवक्ता
नृपहीनंचराष्ट्रम् ॥ एतेसर्वेशोच्यतांयांतिराजन्यश्चायुक्तःस्नेहहीनःप्रजासु २६ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि पराशरगीतायां
नवत्यधिकद्विशततमोऽध्याय ॥ २९० ॥ ॥ ७ ॥ ॥

मिति योयथाकरोतिसतथाप्रप्नोतीत्युत्तरार्धार्थः २१ सुखदुःखहेतूपुण्यपापेसमाधायतत्त्वज्ञानेनात्मनिप्रविलाप्यपुमानन्येनज्ञानवर्त्मनागच्छतीष्टंवस्तुप्राप्नोति । यश्चसंगतोजनःपार्थिवः पृथिवीस्थःस्त्रीपुत्रपशुगृहधनारामादिःसोऽन्यतोगच्छति । नतुस्वर्गेऽपवर्गेवोपकरोतीत्यर्थः २३ परेषामिति यत्कर्मपरकृतमसूयेतदमयंनिंद्यंकर्मकरोतीतिदोषवत्तयाऽऽचक्षीततत्स्वयंनकु र्यात् । तत्किमसूयाऽपिकर्तव्यानेत्याह योयुक्तोयोगीअसूयुर्दोषदर्शीसोऽवहासंनिंद्यतांनियच्छतिनियमेनस्वीकरोति तस्मात्संगासूयावर्जितोयोगयुक्तोभवेदितिनिष्कृष्टोर्थः २४ यथाऽसू यावान्योगीनिंद्यएवंविरक्तोऽपियोगशून्योनिंद्यएवेतिबहुदृष्टांतपूर्वकमाह भीरुरितिद्वाभ्यां प्रजासुस्नेहहीनइतिस्यकैकपणत्वमुक्तं सोऽपिचेदयुक्तोयोगाभ्यासहीनस्तर्हिशोच्यतांयाति तेनयो गोऽभ्यसनीयइतिभावः २५ । २६ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥ ॥ ७ ॥ ॥ ७ ॥



एवंसुखादिहेतुर्नान्यःकर्मणामस्तित्वंबुद्ध्वासकलकर्मोच्छेदाययोगमाश्रयेदितिसूचितंतदेवव्याचष्टे मनइतिद्वाभ्यां मनोमयोरथःशरीरंतदेवरथइवलोकांतरगतिसाधनं । इंद्रियार्थाःशब्दाद योहयाइववाहकाअस्यतंप्राप्ययोज्ञानसंभूतैस्तत्तदाकारवृत्तिसंवलितैरश्मिभिश्चिद्भाभिर्गच्छतिविषयांश्चिन्मयत्वेनैवपश्यतिसबुद्धिमान् । देहंप्राप्यब्रह्मभावेनविश्वंपश्यन्मुच्यतइत्यर्थः १ अ न्वयमुक्त्वाव्यतिरेकमाह सेवेति अश्रितेनयत्किंचिदालंबनमनाश्रितेनानिरालंबेनमनसास्थितस्यातएववृत्तिहीनस्यपुंसःसेवाभक्तिर्ध्यानरूपेश्वरप्रणिधानंशस्यते निर्विकल्पसमाधिनाऽवस्थानं श्रेष्ठमित्यर्थः । हेद्विज कीदृशीसेवा अतिहस्तान्निर्वृत्ता हस्तशब्देनतत्साध्यंकर्मलक्ष्यते अतिहस्तोऽतिक्रांतकर्मा । सर्वपाप्मानंतरति नैनंकृताकृतेतपतः क्षीयंतेचास्यकर्माणी त्यादिश्रुतिभ्यःक्षीणकर्माब्रह्मवित्तंप्राप्यनिर्वृत्तानिष्पन्नासदाचार्यप्रसादाल्लब्धानतुपरस्परात्तुल्यान्निर्वृत्ता । परोक्षज्ञानिनांनपरस्परोपदेशेऽधिकारःकिंत्वपरोक्षज्ञान्येवोपदेष्टायुक्तइत्यर्थः । यथोक्तं । 'परोक्षज्ञानमात्रेणनाचार्यत्वेनियुज्यते'इति । 'तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठं । उपदेक्ष्यंतितेज्ञानंज्ञानिनस्तत्त्वदर्शिनः'इतिश्रुतिस्मृत्योर्ब्रह्मनिष्ठत्व

॥ पराशरउवाच ॥ मनोरथरथंप्राप्यइंद्रियार्थहयंनरः ॥ रश्मिभिर्ज्ञानसंभूतैर्योगच्छतिसबुद्धिमान् १ सेवाश्रितेनमनसावृत्तिहीनस्यशस्यते ॥ द्विजातिह
स्तान्निर्वृत्तानतुतुल्यात्परस्परात् २ आयुर्नसुलभंलब्ध्वानावकर्षेद्विशांपते ॥ उत्कर्षार्थंप्रयतेतनरःपुण्येनकर्मणा ३ वर्णेभ्योहिपरिभ्रष्टोनवैसंमानमर्हति ॥ नतु
यःसत्क्रियांप्राप्यराजसंकर्मसेवते ४ वर्णोत्कर्षमवाप्नोतिनरःपुण्येनकर्मणा ॥ दुर्लभंतमलब्ध्वाहिहन्यात्पापेनकर्मणा ५ अज्ञानाद्धिकृतंपापंतपसैवाभिनिर्णुदेत् ॥
पापंहिकर्मफलतिपापमेवस्वयंकृतम् ॥ तस्मात्पापंनसेवेतकर्मदुःखफलोदयम् ६ पापानुबंधंयत्कर्मयद्यपिस्यान्महाफलम् ॥ तन्नसेवेतमेधावीशुचिःकुशलिनं
यथा ७ किंकष्टमनुपश्यामिफलंपापस्यकर्मणः ॥ प्रत्यापन्नस्यहिततोनात्मातावद्विरोचते ८ प्रत्यापत्तिश्चयस्येहबालिशस्यनजायते ॥ तस्यापिसुमहांस्तापः
प्रस्थितस्योपजायते ९ विरक्तंशोध्यतेवस्त्रंनतुकृष्णोपसंहितम् ॥ प्रयत्नेनमनुष्येंद्रपापमेवंनिबोधमे १० स्वयंकृत्वातुयःपापंशुभमेवानुतिष्ठति ॥ प्रायश्चित्तंन
रःकर्तुमुभयंसोऽश्नुतेपृथक् ११ अज्ञानात्तुकृतांहिंसामहिंसाव्यपकर्षति ॥ ब्राह्मणाःशास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः १२

दर्शिनइतिविशेषणाच्च १ एतदेवशीघ्रंसाधनीयमित्याहायुरिति नसुलभंकिंतुदुर्लभं नावकर्षेद्विषयसेवनैर्ननाशयेत्किंतुपुण्येनकर्मणोत्कर्षार्थमुत्तरोत्तरश्रेष्ठभूमिलाभार्थंप्रयतेत ३ वर्णेभ्योऽत्र श्वेतासृक्केभ्यःषड्भ्यःकृष्णधूम्रनीलरक्तहारिद्रशुक्लेभ्यःसत्त्वरजस्तमसांह्रासवृद्धिवारतम्यात्कल्पितेभ्यःपरिभ्रष्टउच्चवर्णान्नीचवर्णंप्राप्तःसंमानंश्रेष्ठ्यंनार्हति परिभ्रष्टस्त्वमेवव्याचष्टे नत्विति ४ तं वर्णोत्कर्षमलब्ध्वाकुपुरुषःपापेनात्मानंहन्यान्नानानरकपातेनाहिंस्यात् ५ पापंदुःखं पापंकर्मेतिसंबंधः ६ कुशलिनंकारुकं चंडालविशेषमित्यर्थः ७ कुत्सितंचतत्कष्टंचाकिंकष्टं ततःपापा द्धेतोः प्रत्यासन्नस्यविपरीतदृष्टेः अनात्मादेहादिरेवविशेषेणआत्मत्वेनरोचते ८ प्रत्यापत्तिर्वैराग्यं प्रस्थितस्ययोगेप्रवृत्तस्यउत्तरभूम्यलाभात्तापोजायते प्रस्थितस्यमृतस्यवातापोनरकजः ९ विरक्तंखलुशुद्धंसद्विपरीतेनरागेणाक्रांतंवस्त्रंशोध्यते परंतुकृष्णेनमलात्मकेनोपसंहितंरक्तंनशोध्यतेएवंमेमनःपापंकिंचिच्छोधितुंशक्यंकिंचिदशक्यमितिनिबोधबुध्यस्व १० धीपूर्वंकृतं ननश्यतीत्याह स्वयमिति ११ अहिंसाअहिंसया तृतीयालोपआर्षः ब्रह्मणइतिपाठेवेदसंबंधिनः १२

तथाऽस्यपुंसःकर्मकामकृतंविहिंसाअहिंसानैवानुकर्षति ब्रह्मवादिनःस्मृतिकाराः यथोक्तं । 'प्रायश्चित्तैरपैत्येनोयदज्ञानकृतंभवेत् ॥ कामतोव्यवहार्यस्तुवचनादिहजायते'इति । कर्मकृतमि तिपाठेकामतइत्यध्याहर्तव्यं । तथाकामकृतंचास्येतिपाठेत्वकामकृतवत्कामकृतमपि अहिंसैवापकर्षतीत्यर्थः ११ एवंपरमतमुपन्यस्यकामतोऽकामतोवाकृतंकर्मबहुल्पंवाभोगमदत्वानैवन श्यतीतिस्वमतमाह अहंत्वित्यादिना गुणयुक्तंपुण्यंकर्मप्रकाशंबुद्धिपूर्वकंप्रकाश्यज्ञात्वेत्यर्थः णमुक्तमिदं १४ मनसाबुद्धियुक्तानिइदमित्थंकुर्यान्नवेतिविमर्शपूर्वकमिदमित्थंकर्तव्यमेवेतिनि श्चित्येत्यर्थः । यथातथंस्थूलसूक्ष्मतारतम्येनफलंतिसुखदुःखादिकंयच्छंति १५ नित्यमव्यभिचारिफलमुल्बणंनरकावहंउग्रेणहिंस्रेण यथाबुद्धिपूर्वकृतंकर्मनियमेनफलदमेवमबुद्धिपूर्वकृतम पि । तयोर्विशेषस्तुफलबहुत्वाल्पत्वकृतोनतुफलसदसद्भावकृतइतिश्लोकत्रयार्थः १६ ननुकर्मफलस्यापरिहार्यत्वेकथंविश्वामित्रेणवसिष्ठस्यपुत्रशतंहतंतत्फलंनरकपातश्चनप्राप्तइत्याशंक्यालौ किकत्वान्नतदुदाहरणमित्याहकृतानीति १७ । १८ नवेअपक्वेसलिलंन्यस्तंचेद्धीयतेकपालमेव नवेतरेपक्वेजलंन्यस्तंचेत्तथाभावंयथापूर्वरूपंस्थितंतथारूपत्वमेवप्राप्नोतिनहीयते । एवंतेजस्वि

तथाकामकृतंनास्यविहिंसैवानुकर्षति ॥ इत्याहुर्ब्रह्मशास्त्रज्ञाब्राह्मणाब्रह्मवादिनः १३ अहंतुतावत्पश्यामिकर्मयद्वर्ततेकृतम ॥ गुणयुक्तंप्रकाशंवापापेनानुपसंहि तम् १४ यथासूक्ष्माणिकर्माणिफलंतीहयथातथम् ॥ बुद्धियुक्तानितानीहकृतानिमनसासह १५ भवत्यल्पफलंकर्मसेवितंनित्यमुल्बणम् ॥ अबुद्धिपूर्वधर्मज्ञकृ तमुग्रेणकर्मणा १६ कृतानियानिकर्माणिदैवतैर्मुनिभिस्तथा ॥ नचरेत्तानिधर्मात्माश्रुत्वाचापिनकुत्सयेत् १७ संचिंत्यमनसाराजन्विदित्वाशक्यमात्मनः ॥ करोतियःशुभंकर्मसवैभद्राणिपश्यति १८ नवेकपालेसलिलंसंन्यस्तंहीयतेयथा ॥ नवेतरेतथाभावंप्राप्नोतिसुखभावितम् १९ सतोयेऽन्यत्तुयत्तोयंतस्मिन्नेवप्रसि च्यते ॥ वृद्धेवृद्धिमवाप्नोतिसलिलेसलिलंयथा २० एवंकर्माणियानीहबुद्धियुक्तानिपार्थिव ॥ समानिचैवयानीहतानिपुण्यतमान्यपि २१ राज्ञाजेतव्याः शत्रवश्चोन्नताश्चसम्यक्कर्तव्यंपालनंचप्रजानाम् ॥ अग्निश्चेयोबहुभिश्चापियज्ञैरंत्येमध्येवावनमाश्रित्यस्थेयम् २२ दमान्वितःपुरुषोधर्मशीलोभूतानिचात्मान मिवानुपश्येत् ॥ गरीयसःपूजयेदात्मशक्त्यासत्येनशीलेनसुखंनरेंद्र २३ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि पराशरगीतायां एकनवत्यधि कद्विशततमोऽध्यायः ॥ २९१ ॥ ॥ पराशरउवाच ॥ कःकस्यचोपकुरुतेकश्चकस्मैप्रयच्छति ॥ प्राणीकरोत्ययंकर्मसर्वमात्मार्थमात्मना १

मेपापपुण्योदासीनंकर्मनहिनस्तिइतरंतुहिनस्त्येवेतिभावः १९ । २० समानिषाड्विपमाणि २१ एवंसाधारणंधर्ममुक्त्वाराज्ञांविशेषधमानाह राज्ञेति अंत्येवयस्यविरक्तेनापि मध्येमध्य मेविरक्तेन १२ आत्मानमिवेत्यहिंसासूचिता गरीयसोगुरुतरान्ब्रह्मविद्यामदान् सत्येनब्रह्मप्राप्तये अध्ययनेनवसतीतिवद्धेतौतृतीया २३ ॥ इति शांतिपर्वणि नीलकंठीये भारतभाव दीपे एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥ नन्वहंराजायेषांमुनीनांपालयिताऽस्मितेषांयोगफलस्यषष्ठांशहर्ताचास्म्यतोममब्रह्मप्राप्तयेनगुरुसेवाऽपेक्ष्यतेतेषामहिंसादिभिर्मदीया।हिंसा देरपिवृद्धिसंभवात् यथोक्तंपातंजले । अहिंसाप्रतिष्ठायांतत्सन्निधौवैरत्यागःइत्याशंक्याह कःकस्येति सत्यं यदिकर्मजन्योमोक्षःस्यात्तर्हियुज्येतैतत् ज्ञानैकप्राप्योमोक्षः दृष्टार्थंचज्ञा नंभोजनादिवन्नेतरेणप्राप्यमितरस्योपकरोति कर्मदृष्टफलंभोजनादि आत्मनाशरीरेंद्रियबुद्धिरूपेणाऽऽत्मार्थमात्मनएववृत्त्याद्यर्थं नतुपरार्थंकर्मकश्चित्करोतीत्यर्थः १



नतुमातृदेवोभवपितृदेवोभवेत्यादिश्रुतेर्देववदाराधितोमात्रादिरुपकरोत्येवेत्याशंक्यानुपकारिणंमात्रादिकमपित्यजंत्येवलोकेऽतोनकश्चित्कंचिदुपकरोतीत्याह गौरवेणेति यत्तुमात्राद्याराध नंतदप्यामुष्मिकार्थैहिकायवास्वहितायैवनतुमात्रादिहितायेतिभावः २ कथंतर्ह्यात्महितमाचरेदित्यतआह विशिष्टस्येत्यादि विशिष्टात्प्रतिग्रहोनिर्धनस्यदानेनतुल्यःसधनस्यतुदानंपुण्य तरमित्यर्थः ३ दानप्राशस्त्यप्रकारमाह न्यायेति ४ ऋद्धिंधनसमृद्धिंनानुस्मरेद्धर्मार्थौत्यनुषंजनीयं ५ निर्धनस्यापिदानफलमस्तीत्याह अपइति फलमत्रदानस्येतिशेषः ६ । ७ अतिथिपूजाफलमुक्त्वादेवपूजाफलमाह तैरेवेति समाठरंमाठरेणपारिपार्श्विकेनसहितंसमाठरंसूर्यं अतोषयच्छैब्यइतिसंबंधः । 'माठरःपिंगलोदंडश्चंडांशोःपारिपार्श्विकाः'इत्यमरः ८ । ९

गौरवेणपरित्यक्तंनिःस्नेहंपरिवर्जयेत् ॥ सोदर्यंभ्रातरमपिकिमुतान्यंपृथग्जनम् २ विशिष्टस्याविशिष्टाच्चतुल्यौदानप्रतिग्रहौ ॥ तयोःपुण्यतरंदानंतद्द्विजस्यप्रय च्छतः ३ न्यायागतंधनंचैवन्यायेनैवविवर्धितम् ॥ संरक्ष्यंयत्नमास्थायधर्मार्थमितिनिश्चयः ४ नधर्मार्थीनृशंसेनकर्मणाधनमर्जयेत् ॥ शक्तितःसर्वकार्याणिकु र्यान्नर्द्धिमनुस्मरेत् ५ अपोहिप्रयतःशीतास्तापिताज्वलनेनवा ॥ शक्तितोऽतिथयेदत्वाक्षुधार्तायाश्नुतेफलम् ६ रंतिदेवेनलोकेद्धासिद्धिःप्राप्तामहात्मना ॥ फ लपत्रैरथोमूलैर्मुनीनर्चितवांश्चसः ७ तैरेवफलपत्रैश्चसमाठरमतोषयत् ॥ तस्माल्लेभेपरंस्थानंशैब्योऽपिपृथिवीपतिः ८ देवताऽतिथिभृत्येभ्यःपितृभ्यश्चात्मन स्तथा ॥ ऋणवान्जायतेमर्त्यस्तस्मादनृणतांव्रजेत् ९ स्वाध्यायेनमहर्षिभ्योदेवेभ्योयज्ञकर्मणा ॥ पितृभ्यःश्राद्धदानेननृणामभ्यर्चनेनच १० वाचाशेषावहार्ये णपालनेनात्मनोपिच ॥ यथावद्भृत्यवर्गस्यचिकीर्षेत्कर्मआदितः ११ प्रयत्नेनचसंसिद्धाधनैरपिविवर्जिताः ॥ सम्यग्घुत्वाहुतवहंमुनयःसिद्धिमागताः १२ वि श्वामित्रस्यपुत्रत्वमृचीकतनयोऽगमत् ॥ ऋग्भिस्तुत्वामहाबाहोदेवान्वैयज्ञभागिनः १३ गतःशुक्रत्वमुशनादेवदेवप्रसादनात् ॥ देवींस्तुत्वातुगगनेमोदतेयशसा वृतः १४ असितोदेवलश्चैवतथानारदपर्वतौ ॥ कक्षीवान्जामदग्न्यश्चरामस्ताड्यस्तथाऽऽत्मवान् १५ वसिष्ठोजमदग्निश्चविश्वामित्रोऽत्रिरेवच ॥ भरद्वाजोहारि श्मश्रुःकुंडधारःश्रुतश्रवाः १६ एतेमहर्षयःस्तुत्वाविष्णुमृग्भिःसमाहिताः ॥ लेभिरेतपसासिद्धिंप्रसादात्तस्यधीमतः १६ अनर्हाश्चार्हतांप्राप्ताःसंतःस्तुत्वातमे वह ॥ नतुवृद्धिमिहान्विच्छेत्कर्मकृत्वाजुगुप्सितम् १८ येऽर्थाधर्मेणतेसत्यायेऽधर्मेणाधिगस्तुतान् ॥ धर्मंवैशाश्वतंलोकेनजह्याद्धनकांक्षया १९ आहिताग्निर्हि धर्मात्मायःसपुण्यकृदुत्तमः ॥ वेदाहिसर्वेराजेंद्रस्थितास्त्रिष्वग्निषुप्रभो २०

१० वाचावेदशास्त्रमय्या श्रवणमननादिनेत्यर्थः शेषावहार्येणपंचयज्ञशेषेणान्नेन पालनेनभूतदययाऽऽत्मनोऽप्यनृणतांव्रजेत् तथाभृत्यवर्गस्यपुत्रादेःआदितःकर्मजातकर्मादिचिकीर्षेत्तेना प्यात्मनएवानृणतांव्रजेत् ११ प्रयत्नेनध्यानधारणादिना हुत्वाहुतवहं अग्निहोत्रंकृत्वेत्यर्थः १२ ऋचीकतनयोऽगमदित्यत्राऽजीगर्तसुतोऽगमदितिपठनीयं शुनःशेपोह्यजीगर्तपुत्रःसन् विश्वामित्रपुत्रतामापेतिबह्वृचब्राह्मणेसमाम्नायते । नचतनयशब्दोगोत्रपरःकर्तुंशक्यः । ऋचीकोहिभार्गवोजामदग्न्यस्यरामस्यपूर्वजः अथर्चीकादयोभ्येत्यपितरोराममब्रुवन्नित्यादिपर्व णिसमंतपंचकाख्यानेलिंगदर्शनात् अजीगर्तस्त्वांगिरसः । यथैवांगिरसःसन्नुपेयांतवपुत्रतामितिविश्वामित्रंप्रतिबह्वृचब्राह्मणेशुनःशेपवचनाद्यथाकथंचिद्वाएतत्समाधेयं । योविश्वामित्रपुत्र त्वमगमत्सदेवान्स्तुत्वासिद्धिमागतइत्यध्याहृत्यपूर्वेणयोज्यं १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ अग्निरिति जनयिताऽयंपितासएवनत्वन्योऽन्नदातृभयत्रातृप्रभृतयः परिचर्याःसेव्याः २२ क्लीबःकामहीनःसन्नयःप्रीतियोगात्केवलंक्रुपात्रंयादृष्ट्वापश्यति । दाक्ष्येणस्वंदेनहीनश्चा यासशून्यःसन्योधर्मपरः । नदांतइत्येकंपदं दानतिछिन्नत्तिदांतः दानआर्जवच्छेदनयोरित्यस्मात्कर्तरिक्तः तदन्योनदांतः नैकधेतिवत्समासःहिंसाशून्यइत्यर्थः २३ ॥ इतिशांतिपर्व णिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपे द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥ ॥ ७ ॥ पूर्वोध्यायेयतःस्वस्योपकर्ताऽन्योनास्त्यतआत्मोपकारायस्वयंमानंत्यक्त्वा ऽन्यान्सेवेतेत्युक्तंतत्रवृद्धसेवाप्रशंसार्थंशूद्रवृत्तिमहीकरोति वृत्तिरिति वर्णेभ्योब्राह्मणक्षत्रियवैश्येभ्यः हीनस्यशूद्रस्यवृत्तिर्जीविकावृद्धसेवासेवकान्धर्मिष्ठान्कुरुतेऽतःशोभना दृष्टादृष्टोभयार्थे

सचाप्यभ्याहितोविप्रःक्रियायस्यनहीयते ॥ श्रेयोह्यनाहिताग्नित्वमग्निहोत्रंननिष्क्रियम् २१ अग्निरात्माचमाताचपिताजनयितातथा ॥ गुरुश्चनरशार्दूलपरि चर्यायथातथम् २२ मानंत्यक्त्वायोनरोवृद्धसेवीविद्वान्क्लीबःपश्यतिप्रीतियोगात् ॥ दाक्ष्येणहीनोधर्मयुक्तोनदांतोलोकेऽस्मिन्वैपूज्यतेसद्भिरार्यः २३ ॥ इति श्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिपराशरगीतायांद्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥ ॥ पराशरउवाच ॥ वृत्तिःसकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्यशोभना ॥ प्रीत्योपनीतानिर्दिष्टाधर्मिष्ठान्कुरुतेसदा १ वृत्तिश्चेन्नास्तिशूद्रस्यपितृपैतामहीध्रुवा ॥ नवृत्तिंपरतोमार्गेच्छुश्रूषातुप्रयोजयेत् २ सद्भिस्तुस हसंसर्गःशोभतेधर्मदर्शिभिः ॥ नित्यंसर्वास्ववस्थासुनासद्भिरितिमेमतिः ३ यथोदयगिरौद्रव्यंसंनिकर्षेणदीप्यते ॥ तथासत्संनिकर्षेणहीनवर्णोऽपिदीप्यते ४ यादृशेनहिवर्णेनभाव्यतेशुक्लमंबरम् ॥ तादृशंकुरुतेरूपमेतदेवमवेहिमे ५ तस्माद्गुणेषुरज्येथामादोषेषुकदाचन ॥ अनित्यमिहमर्त्यानांजीवितंहिचलाचलम् ६ सुखेवायदिवादुःखेवर्तमानोविचक्षणः ॥ यश्चिनोतिशुभान्येवसतंत्राणीहपश्यति ७ धर्मादपेतंयत्कर्मयद्यपिस्यान्महाफलम् ॥ नतत्सेवेतमेधावीनतद्धितमिहो च्यते ८ योहृत्वागोसहस्राणिनृपोदद्यादरक्षिता ॥ सशब्दमात्रफलभाग्राजाभवतितस्करः ९ स्वयंभूरसृजच्चाग्रेधातारंलोकसत्कृतम् ॥ धाताऽसृजत्पुत्रमेकंलो कानांधारणेरतम् १० तमर्चयित्वावैश्यस्तुकुर्यादत्यर्थमृद्धिमत् ॥ रक्षितव्यंतुराजन्यैरुपयोज्यंद्विजातिभिः ११ अजिह्मैरशठक्रोधैर्हव्यकव्यप्रयोक्तृभिः ॥ शूद्रैर्नि र्माजनंकार्यमेवंधर्मोननश्यति १२ अप्रनष्टेततोधर्मेभवंतिसुखिताःप्रजाः ॥ सुखेनतासांराजेंद्रमोदंतेदिविदेवताः १३ तस्माद्योरक्षतिनृपःसधर्मेणेतिपूज्यते ॥ अधीतेचापियोविप्रोवैश्योयश्चार्जनेरतः १४ यश्चशुश्रूषतेशूद्रःसततंनियतेंद्रियः ॥ अतोऽन्यथामनुष्येंद्रस्वधर्मात्परिहीयते १५

स्वात् । नहियाजनकरादानवाणिज्यादयोविप्रादिजीविकास्तेषांधर्मिष्ठतायैभवंत्यतःसत्सेवयालोकद्वयंसाधयेदितिभावः १ परतस्त्रैवर्णिकसेवाव्यतिरेकेण २ शुश्रूषामेवस्तौति सद्भिरित्या दिना ३ द्रव्यंमणिकांचनादिदीप्यतेसूर्यसंनिकर्षेण अतएवसंध्योःसूर्यरश्मयोद्रव्यप्रभाविच्छुरणाद्रक्ताइवदृश्यंते ४ । ५ । ६ तंत्राणिशास्त्राणि सएवशास्त्रदर्शीत्यर्थः ७ । ८ । ९ पुत्रंपर्जन्यदेवतां १० ऋद्धिमत्कृषिगोरक्ष्यादि ११ अजिह्मैर्दंभहीनैः अशठक्रोधैर्वित्तशाठ्यक्रोधहीनैः निर्माजनंभूमिशुद्ध्यादि १२ । १३ तस्मादिति धर्मेणरक्षतीतिपू ज्यत्वेनतुनृपत्वमात्रेणेत्यर्थः १४ । १५



प्राणसंतापपूर्वकमपिनिर्दिष्टादत्ताःकाकिण्योविंशतिवराटिकाः कपिंजलाधिकरण्यायेनबहुत्वंत्रित्वेपर्यवसन्नं तिस्रोऽपिकाकिण्यइत्यर्थः १६ यादृशंतादृशंसम्यक्छमश्रद्धंवायोनित्यंददाति तथाचश्रुतिः । 'श्रद्धयादेयंअश्रद्धयादेयंश्रियादेयंह्रियादेयंसंविदादेयं'इति १७ तत्तुष्टपापात्रतुष्टचर्षे अभिष्टुतंसर्वतःप्रशस्तम् १८ तंधर्मं दानंदानात्मकम् १९ अतिक्रामेन्नवार्धिष विविधे नोपायेन संश्रयात्गृहपाशात् २० दाक्ष्येणसेवार्थोत्साहेन २१ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥ दानप्रशंसा

प्राणसंतापनिर्दिष्टाःकाकिण्योऽपिमहाफलाः ॥ न्यायेनोपार्जितादत्ताःकिमुतान्याःसहस्रशः १६ सत्कृत्यहिद्विजातिभ्योयोददातिनराधिपः ॥ यादृशंतादृशं नित्यमश्नातिफलमूर्जितम् १७ अभिगम्यचतत्तुष्ट्यादत्तमाहुरभिष्टुतम् ॥ याचितेनतुयद्दत्तंतदाहुर्मध्यमंबुधाः १८ अवज्ञयादीयतेयत्तथैवाश्रद्धयाऽपिवा ॥ तमाहुरधमंदानंमुनयःसत्यवादिनः १९ अतिक्रामेन्मज्जमानोविविधेननरःसदा ॥ तथाप्रयत्नंकुर्वीतयथामुच्येतसंश्रयात् २० दमेनशोभतेविप्रःक्षत्रियोविजये नतु ॥ धनेनवैश्यःशूद्रस्तुनित्यंदाक्ष्येणशोभते २१ ॥ इतिश्रीम०शांति०मोक्ष०पराशरगीतायांत्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥ पराशरउवाच ॥ प्रतिग्रहगताविप्रेक्षत्रियेयुधिनिर्जिताः ॥ वैश्येन्यायार्जिताश्चैवशूद्रेशुश्रूषयार्जिताः १ स्वल्पाप्यर्थाःप्रशस्यंतेधर्मस्यार्थेमहाफलाः ॥ नित्यंत्रयाणांवर्णानांशु श्रूषुःशूद्रउच्यते २ क्षत्रधर्मावैश्यधर्मानावृत्तिःपततेद्विजः ॥ शूद्रधर्मायदातुस्यात्तदापततिवैद्विजः ३ वाणिज्यंपाशुपाल्यंचतथाशिल्पोपजीवनम् ॥ शूद्रस्या पिविधीयंतेयदावृत्तिर्नजायते ४ रंगावतरणंचैवतथारूपोपजीवनम् ॥ मद्यमांसोपजीव्यंचविक्रयंलोहचर्मणोः ५ अपूर्विणानकर्तव्यंकर्मलोकेविगर्हितम् ॥ कृत पूर्वंतुत्यजतोमहान्धर्मइतिश्रुतिः ६ संसिद्धःपुरुषोलोकेयदाऽऽचरतिपापकम् ॥ मदेनाभिप्लुतमनास्तच्चनग्राह्यमुच्यते ७ श्रूयंतेहिपुराणेषुप्रजाधिग्दंडशासनाः ॥ दांताधर्मप्रधानाश्चन्यायधर्मानुवर्तिकाः ८ धर्मएवसदानॄणामिहराजन्प्रशस्यते ॥ धर्मवृद्धागुणानेवसेवंतेहिनराभुवि ९ तंधर्ममसुरास्तातनामृष्यंतजना धिप ॥ विवर्धमानाःक्रमशस्तत्रतेऽन्वाविशन्प्रजाः १० तासांदर्पःसमभवत्प्रजानांधर्मनाशनः ॥ दर्पात्मनांततःपश्चात्क्रोधस्तासामजायत ११ ततःक्रोधाभि भूतानांवृत्तंलज्जासमन्वितम् ॥ ह्रीश्चैवाप्यनशद्राजंस्ततोमोहोव्यजायत १२ ततोमोहपरीतास्तानापश्यंतयथापुरा ॥ परस्परावमर्देनवर्धयंत्योयथासुखम् १३ ताःप्राप्यतुसधिग्दंडोनकारणमतोऽभवत् ॥ ततोऽभ्यगच्छन्देवांश्चब्राह्मणांश्चावमन्यह १४

प्राकृताप्राणसंतापनिर्दिष्टाइत्यादिना तदर्थमर्थार्जनोपायंनियमयन्नन्यानपिप्रसंगाद्धर्मान्वक्ष्यति प्रतिग्रहागताइत्यादि १ । २ नपततइतिसंबंधः ३ शिल्पंचित्रलेखनादि वृत्तिःसेवारूपा ४ रंगेरूपादिवेषेणाऽवतरणंरूपोपजीवनंजलमंडपिकेतिदाक्षिणात्येषुप्रसिद्धं यत्रसूक्ष्मवस्त्रंव्यवधायचर्ममयैराकारैराजामात्यादीनांचर्याप्रदर्श्यते ५ अपूर्विणायेनपूर्वमद्याद्युपजीवनंनकृतं सोऽपूर्वीतेनतन्नकर्तव्यम् ६ संसिद्धोलब्धान्नवस्त्रादिः नग्राह्यंवृद्धैराचरितमपिनस्वीकर्तव्यम् ७ मदएवकुतोऽभवदित्यतआह श्रूयंतेहीत्यादिना ८ । ९ असुराःकामक्रोधादयः १० । ११ अनशादनश्यत १२ । १३ नकारणंतासांनियमनेइतिशेषः ततस्ताःप्रजादेवान्ब्राह्मणांश्चावमन्याऽभ्यगच्छन् विषयानसेवंतेत्यर्थः १४

एवंकामक्रोधादिद्वारेणप्रजानांबंधनंप्रदर्श्यसंक्षेपेणतन्निवृत्त्युपायमाह एतस्मिन्निति देवाःशमदमादयः देवईश्वरस्ततोऽपिवरंश्रेष्ठंशिवंतुर्यजाग्रत्स्वप्नसुषुप्त्यभिमानिभ्योविश्वतैजसप्राज्ञेभ्योविराट्सूत्रांतर्यामिभ्यश्चपरंचतुर्थंब्रह्म शिवमद्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञेयइतिश्रुतिप्रसिद्धं बहुरूपंमाययेतिशेषः । इंद्रोमायाभिःपुरुरूपईयतइतिश्रुतेः गुणैर्नित्यजानैश्वर्यादिभिरधिकम् १५ तेनशिवेनसाक्षात्कृतेनतेऽसुराःकामक्रोधादयःगगनगाःमायाख्याव्याकृतांतर्गताःसपुराःपुरैःस्थूलसूक्ष्मकारणशरीरैःसहिताः क्षितौएेश्वर्यैःशुद्धचिन्मात्रेपातिताःप्रविलापिताः एकेनबाणेनजीवात्मनाशुद्धचिन्मात्रांतःप्रविष्टेन तथाचश्रुतिः । 'प्रणवोधनुःशरोह्यात्माब्रह्मतल्लक्ष्यमुच्यते । अप्रमत्तेनवेद्धव्यंशरवत्तन्मयोभवेत्'इति । देवैरिंद्रियैराप्यायितेनतेजसासंस्कारशेषेणेत्यर्थः १६ नन्वेवंसंस्कारशेषेणपुरापतनंसुप्तिमूर्च्छयोरप्यस्तीत्यतआह तेषामिति तेषांकामादीनामधिपतिर्भीमोभयंकरोमहामोहः शूलपाणिनाशूलवत्तीक्ष्णाग्रयाबुद्ध्या आयुधभूतयापाणिस्थवत्स्वाधीनयेत्यर्थः १७ तस्मिन्महामोहेहतेस्वंभावंब्रह्मभावंमानवाजीवाःप्रत्यपद्यंत । 'ब्रह्मविद्ब्रह्मैवभवतिब्रह्मैवसन्ब्रह्माप्येति'इतिश्रुतेः यथापुरेतिः सृष्ट्यादौयथामरीच्यादयोवेदैकनिष्ठाआसंस्तथाव

एतस्मिन्नेवकालेतुदेवादेववरंशिवम् ॥ अगच्छन्शरणंधीरंबहुरूपंगुणाधिकम् १५ तेनस्मतेगगनगाःसपुराःपातिताःक्षितौ ॥ त्रिधाऽप्येकेनबाणेनदेवाप्यायिततेजसा १६ तेषामधिपतिस्त्वासीद्भीमोभीमपराक्रमः ॥ देवतानांभयकरःसहतःशूलपाणिना १७ तस्मिन्हतेऽथस्वंभावंप्रत्यपद्यंतमानवाः ॥ प्रापद्यंतचवेदान्वैशास्त्राणिचयथापुरा १८ ततोऽभिषिच्यराज्येनदेवानांदिविवासवम् ॥ सप्तर्षयश्चान्वयुंजन्नराणांदंडधारणे १९ सप्तर्षीणामथोर्ध्वंचविपृथुर्नामपार्थिवः ॥ राजानःक्षत्रियाश्चैवमंडलेषुपृथक्पृथक् २० महाकुलेषुयेजातावृद्धाःपूर्वतराश्चये ॥ तेषामप्यासुरोभावोहृदयान्नापसर्पति २१ तस्मात्तेनैवभावेनसानुषंगेणपार्थिवाः ॥ आसुराण्येवकर्माणिन्यसेवन्भीमविक्रमाः २२ प्रत्यतिष्ठंश्चतेष्वेवतान्येवस्थापयंत्यपि ॥ भजंतेतानिचाद्यापियेबालिशतरानराः २३ तस्मादहंब्रवीमित्वांराजन्संचिंत्यशास्त्रतः ॥ संसिद्धाधिगमंकुर्यात्कर्महिंसात्मकंत्यजेत् २४

त्स्वज्ञानोत्तरमपिजीवन्मुक्ताअनादिसद्वासनावशाद्वेदैकनिष्ठाएवासन्नित्यर्थः १८ ततइति देवानामिंद्रियाणांराज्येवशित्वेदिविहार्दाकाशे वासवंवासयतिस्वरूपचैतन्येनशरीरेंद्रियादीनितिवासवस्तिद्दात्मातमभिषिच्यब्रह्मनिष्ठत्वेनजितेंद्रियाभूत्वासप्तर्षयोवसिष्ठाद्याःलोकशिक्षांकृतवंतइत्यर्थः १९ आधिकारिकेभ्यःसप्तर्षिभ्योऽपिब्रह्मविदःश्रैष्ठ्यमाह सप्तर्षीणामिति । 'अर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन्यशोनिहितंविश्वरूपम् । तस्यासतऋषयःसप्ततीरेवागष्टमीब्रह्मणासंविदाने'तिश्रुतेः । शिरसिसहस्रारेब्रह्मनिहितं तस्यसमीपेश्रोत्रादिस्थानेषुइमामेवगोतमभरद्वाजावित्यादिश्रुत्याऋषिद्दृष्टिर्विधीयते ततोऽप्यधस्तनेषुमूलाधारादिषुचक्रेषुराजशब्दिततत्तद्देवताधिष्ठितेषुब्रह्मैवविराजतइत्यर्थः ऋषीणांश्रोत्रादीनामूर्ध्वमुपरिसहस्रारेविपृथुःविगतंपृथुप्रथनादवयवोपचयात्पृथुशरीरंतद्रहितोऽशरीरःपरमात्माऽस्ति पार्थिवःपृथिवीशरीरंतदाश्रितः तथाच । अशरीरंशरीरेष्वनवस्थेष्ववस्थितमितिश्रुत्याशरीरस्यापिशरीरस्थत्वंश्रुतं राजंतइतिराजानःषट्चक्राधिपागणेशाद्याः क्षत्रियायोगविघ्नविनाशिनइत्यक्षरार्थः २० ईदृग्ज्ञाननिदानस्यकामादिजयस्यदौर्लभ्यमाहासुरभावप्राधान्यार्थं महाकुलेष्वित्यादिना २१ । २२ २३ संसिद्धोनित्यसिद्धआत्मातदधिगममात्मज्ञानमासुरभावनिवृत्तयेसंपादनीयमित्यर्थः तत्रोपायः कर्महिंसात्मकंत्यजेदित्यादि २४

२५ । २६ इष्टेति सर्वेष्वपिजन्मसुइष्टादियोगोऽस्त्येवेत्यर्थः २७ आत्मनोगुणैरतिरज्यतेअतीवतुष्टोभवति २८ । २९ इहकोऽन्नाद्यर्थी ३० हृदिलिख्यतइवेतिहृल्लेखावासना नानृतमनृतमहंकारोऽज्ञानंवातद्रहितं नैकधेतिवत्समासः निर्वासनंनिरहंकारंनिर्गताज्ञानंवामनोयदाभवतितदाकल्याणंब्रह्मानंदमृच्छतिप्राप्नोति ३१ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥ ॥ ७ ॥ ॥ उक्तवक्ष्यमाणयोःसंगतिमाह एषइति १ तपःप्रशंसितुंगार्हस्थ्यंनिंदति प्रायेणे

नसंकरेणद्रविणंप्रचिन्वीयाद्विचक्षणः ॥ धर्मार्थंन्यायमुत्सृज्यनतत्कल्याणमुच्यते २५ सत्वमेवंविधोदांतःक्षत्रियःप्रियबांधवः ॥ प्रजाभृत्यांश्चपुत्रांश्चस्वधर्मेणानुपालय २६ इष्टानिष्टसमायोगेवैरंसौहार्दमेवच ॥ अथजातिसहस्राणिबहूनिपरिवर्तते २७ तस्माद्गुणेषुरज्येथामादोषेषुकथंचन ॥ निर्गुणोऽपिहिदुर्बुद्धिरात्मनःसोऽतिरज्यते २८ मानुषेषुमहाराजधर्माधर्मौप्रवर्ततः ॥ नतथान्येऽषुभूतेषुमनुष्यरहितेष्विह २९ धर्मशीलोनरोविद्वानीहकोऽनीहकोऽपिवा ॥ आत्मभूतःसदालोकेचरेद्भूतान्यहिंसया ३० यदाव्यपेतहृल्लेखंमनोभवतितस्यवै ॥ नानृतंचैवभवतितदाकल्याणमृच्छति ३१ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि पराशरगीतायांचतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥ ॥ ७ ॥ पराशरउवाच ॥ एषधर्मविधिस्तातगृहस्थस्यप्रकीर्तितः ॥ तपोविधिंतुवक्ष्यामितन्मेनिगदतःशृणु १ प्रायेणचगृहस्थस्यममत्वंनामजायते ॥ संगागतंनरश्रेष्ठभावैराजसतामसैः २ गृहाण्याश्रित्यगावश्चक्षेत्राणिचधनानिच ॥ दाराःपुत्राश्चभृत्याश्चभवंतीहनरस्यवै ३ एवंतस्यप्रवृत्तस्यनित्यमेवानुपश्यतः ॥ रागद्वेषौविवर्धेतेह्यनित्यत्वमपश्यतः ४ रागद्वेषाभिभूतंचनरंद्रव्यवशानुगम् ॥ मोहजातारतिर्नामसमुपैतिनराधिप ५ कृतार्थंभोगिनंमत्वासर्वोरतिपरायणः ॥ लाभंग्राम्यसुखादन्यंरतितोनानुपश्यति ६ ततोलोभाभिभूतात्मासंगाद्वर्धयतेजनम् ॥ पुष्ट्यर्थंचैवतस्येहजनस्यार्थंचिकीर्षति ७ सजानन्नपिचाकार्यमर्थार्थंसेवतेनरः ॥ बालस्नेहपरीतात्मातत्क्षयाच्चानुतप्यते ८ ततोमानेनसंपन्नोरक्षन्नात्मपराजयम् ॥ करोतियेनभोगीस्यामितितस्माद्विनश्यति ९ तथाहिबुद्धियुक्तानांशाश्वतंब्रह्मवादिनाम् ॥ अन्विच्छतांशुभंकर्मनराणांत्यजतांसुखम् १० स्नेहायतननाशाच्चधननाशाच्चपार्थिव ॥ आधिव्याधिप्रतापाच्चनिर्वेदमुपगच्छति ११ निर्वेदादात्मसंबोधःसंबोधाच्छास्त्रदर्शनम् ॥ शास्त्रार्थदर्शनाद्राजंस्तपएवानुपश्यति १२ दुर्लभोहिमनुष्येंद्रनरःप्रत्यवमर्शवान् ॥ योवैप्रियसुखेक्षीणस्तपःकर्तुंव्यवस्यति १३ तपःसर्वगतंतातहीनस्यापिविधीयते ॥ जितेंद्रियस्यदांतस्यस्वर्गमार्गप्रवर्तकम् १४

त्यादिना २ । ३ । ४ । ५ भोगिनमात्मानमितिशेषः ६ जनंकुटुंबंदासीदासादिकं अर्थंधनं चिकीर्षतिविक्षिपति वृद्ध्यर्थंकुसीदव्यापारंकरोतीत्यर्थः ७ । ८ येनकृष्यादिनाभोगीभोगसंपन्नःस्यामितिमनसिकरोति तस्मादेवकृष्यादितोविनश्यति ९ बुद्धियुक्तानांफलासंगिनां त्यजतांनिषिद्धकाम्यकर्माणीतिशेषः १० स्नेहायतनंस्त्रीपुत्रादि ११ तपएवानुपश्यतिश्रेयस्त्वेन १२ प्रत्यवमर्शवान्सारासारविवेकवान् प्रियसुखेकृष्यादिजसुखनिमित्तं क्षीणःक्लेशंप्राप्तः तत्रदोषदृष्ट्यातपःकर्तुंनिश्चिनोति १३ सर्वगतंसाधारणंदमदयादानादिहीनस्यशूद्रादेरपि १४

प्रजापतिःपूर्वंयजमानावस्थायांकिंचिज्जन्मनिकचिद्देशेव्रतानिसूत्रोपासनादीनिसोपासनानिकर्माणिवाआस्थायफलावस्थायांप्रजाअसृजदितिसंबंधः १५ एवमादित्यादयोऽपिपूर्वंयजमाना स्तत्तत्पदप्रापकाणिकर्माणिकृत्वाआदित्यादिभावंप्राप्ताइत्यर्थः । तथाचश्रुतिः । 'अग्निर्वाअकामयतअन्नादोदेवानांस्यामिति सएतमग्नयेकृत्तिकाभ्यःपुरोडाशमष्टाकपालंनिरवपत्'इत्या दि । योनिरवपत्सयजमानस्तस्मिन्नग्निशब्दप्रयोगोभाविनींवृत्तिमाश्रित्यज्ञेयः । यस्मैनिरवपत्सदेवतास्मातद्वावश्वकल्पांतरेप्राप्यतइतिप्रसिद्धं १६ । १७ । १८ । १९ । २० । २१ । २२ नाप्राप्यमिति अकृतकर्मणांकृतकृत्यत्वहीनानामनुत्पन्नतत्त्वज्ञानानांतपसःफलानि उपभोगपरित्यागोवैराग्यं २३ शास्त्रमवेक्ष्यलोभंत्यजेदितिसंबंधः २४ ततअसंतोषाल्लोभाच्च २५ प्र ज्ञानाशेऽपिकिंस्यादतआह नष्टेति न्यायंकर्तव्याकर्तव्यनिर्णयं योवैप्रियसुखेक्षीणइत्युपक्रांतमुपसंहरति तस्मादिति २६ कृतस्यतपसःफलंसुखमकृतस्यदुःखं २७ प्राकाश्यंविख्यात

प्रजापतिःप्रजाःपूर्वमसृजत्तपसाविभुः ॥ क्वचित्क्वचिद्ब्रह्मपरोव्रतान्यास्थायपार्थिव १५ आदित्यावसवोरुद्रास्तथैवाग्न्यश्विमारुताः ॥ विश्वेदेवास्तथासाध्याः पितरोऽथमरुद्गणाः १६ यक्षराक्षसगंधर्वाःसिद्धाश्चान्येदिवौकसः ॥ संसिद्धास्तपसाताततयेचान्येस्वर्गवासिनः १७ येचादौब्राह्मणाःसृष्टाब्रह्मणातपसापुरा ॥ तेभावयंतःपृथिवींविचरंतिदिवंतथा १८ मर्त्यलोकेचराजानोयेचान्येगृहमेधिनः ॥ महाकुलेषुदृश्यंतेतत्सर्वंतपसःफलम् १९ कौशिकानिचवस्त्राणिशुभान्या भरणानिच ॥ वाहनासनपानानितत्सर्वंतपसःफलम् २० मनोनुकूलाःप्रमदारूपवत्यःसहस्रशः ॥ वासःप्रासादपृष्ठेचतत्सर्वंतपसःफलम् २१ शयनानिच मुख्यानिभोज्यानिविविधानिच ॥ अभिप्रेतानिसर्वाणिभवंतिशुभकर्मिणाम् २२ नाप्राप्यंतपसःकिंचित्त्रैलोक्येऽपिपरंतप ॥ उपभोगपरित्यागःफलान्यकृ तकर्मणाम् २३ सुखितोदुःखितोवाऽपिनरोलोभंपरित्यजेत् ॥ अवेक्ष्यमनसाशास्त्रंबुद्ध्याचनृपसत्तम २४ असंतोषोऽसुखायेतिलोभादिंद्रियसंभ्रमः ॥ त तोऽस्यनश्यतिप्रज्ञाविद्येवाभ्यासवर्जिता २५ नष्टप्रज्ञोयदाभवतितदान्यायंनपश्यति ॥ तस्मात्सुखक्षयेप्राप्तेपुमानुग्रंतपश्चरेत् २६ यदिष्टंतत्सुखंप्राहु र्द्वेष्यंदुःखमिहेष्यते ॥ कृताकृतस्यतपसःफलंपश्यस्वयादृशम् २७ नित्यंभद्राणिपश्यंतिविषयांश्चोपभुंजते ॥ प्राकाश्यंचैवगच्छंतिकृत्वानिष्कल्मषंतपः २८ अप्रियाण्यवमानांश्चदुःखंबहुविधात्मकम् ॥ फलार्थीतत्फलंत्यक्त्वाप्राप्नोतिविषयात्मकम् २९ धर्मेतपसिदानेचविचिकित्साऽस्यजायते ॥ सकृत्वापापकान्ये वंनिरयंप्रतिपद्यते ३० सुखेतुवर्तमानोवैदुःखेवाऽपिनरोत्तम ॥ सुवृत्ताद्योनचलतेशास्त्रचक्षुःसमानवः ३१ इषुप्रपातमात्रंहिस्पर्शयोगेरतिःस्मृता ॥ रसने दर्शनेघ्राणेश्रवणेचविशांपते ३२ ततोऽस्यजायतेतीव्रावेदनातत्क्षयात्पुनः ॥ अबुधानप्रशंसंतिमोक्षंसुखमनुत्तमम् ३३

तां २८ । २९ धर्मइति धर्मादौयथाकालंकर्तव्येसति अस्यविचिकित्साअविहितकार्यचिकीर्षाजायते । तथाचनित्यकर्मकालेयोऽन्यानिकर्माणिकामकारेणकरोतिसतान्येवपापानिकृत्वानर कंप्रतिपद्यते । एतेननित्याकरणमात्रात्प्रत्यवैतीतिपरास्तं अभावाद्भावोत्पत्त्यसंभवात् ३० । ३१ इष्विति यावताकालेनगुणच्युतोबाणोभूमौपततितावत्कालिकमेवस्त्र्यादिस्पर्शेसुखमित्य र्थः । सएवन्यायोरसनादावपीत्याहरसनइति ३२ तत्क्षयात्सुखक्षयात् तर्हिनित्यंसुखमेवकुतोनरानप्रार्थयंतेइत्याशंक्याह अबुधाइति यतोमूढाःअतोनित्यंसुखंमोक्षाख्यंनप्रशंसंत्यपि किमुतवदर्थंयतिष्यंते । बुधायेनप्रशंसंतीतिपाठेयेनतीव्रवेदनादुःखेनहेतुनाबुधाःमोक्षंप्रशंसंतीतिसंबंधः ३९

ततोविषयस्पर्शानांतीव्रवेदनाकरत्वाद्धेतोःसर्वस्यविवेकिनोज्यायसेफलार्थंफलायमोक्षाय गुणाःशमादयोभवंत्युत्पद्यंतेतत्रश्चतंकामार्थौनाभिभवितुंशक्नुतइत्याह धर्मेति ३४ ननुसर्वंप्रारब्धक र्माधीनंकिमैहिकेनयत्नेनेत्याशंक्यप्रारब्धप्रयत्नयोर्विषयौविभजते अप्रयत्नेति प्रारब्धकर्मोपस्थापिताःस्त्र्यन्नपानादयःसेव्याःतेषुहिकचित्फलविसंवाददर्शनेनपुरुषकारस्यदौर्बल्यात् धर्मेहि पुरुषकारप्राबल्यं अन्यथाविधिनिषेधशास्त्रमनर्थकंस्यादितिभावः ३५ मानिनामिति पूर्वार्धोक्तानामुचिताक्रियाउत्तरार्धोक्तैःकर्तुमशक्येत्यर्थः संवृतात्मनामूढमनसाम् ३६ उभयेषांच मोक्षभजते क्रियमाणमित्यादिना कर्मयज्ञादिकं मानुषंमनुष्योहमित्यभिमानवताकृतं यस्मादेवंतस्मात्तेषांशास्त्रचक्षुषांतपसोविचारादन्यत्कर्मनविद्यते ३७ संवृतात्मनांधर्ममाह स र्वात्मनेति कर्मनिश्चयंयज्ञादौबुद्धिम् ३८ । ३९ ॥ इतिशांतिपर्वणिमो०नीलकंठीये भार० पंचनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥ एवंधर्मान्श्रुत्वोत्तरोत्तरमुत्कर्षमपिरिप्सुःपृच्छतिवर्णइति

ततःफलार्थंसर्वस्यभवंतिज्यायसेगुणाः ॥ धर्मवृत्त्याचसततंकामार्थाभ्यांनहीयते ३४ अप्रयत्नागताःसेव्यागृहस्थैर्विषयाःसदा ॥ प्रयत्नेनोपगम्यश्चस्वध र्मइतिमेमतिः ३५ मानिनांकुलजातानांनित्यंशास्त्रार्थचक्षुषाम् ॥ क्रियाधर्मविमुक्तानामशक्त्यासंवृतात्मनाम् ३६ क्रियमाणंयदाकर्मनाशंगच्छतिमानु षम् ॥ तेषांनान्यदृतेलोकेतपसःकर्मविद्यते ३७ सर्वात्मनाऽनुकुर्वीतगृहस्थःकर्मनिश्चयम् ॥ दाक्ष्येणहव्यकव्यार्थंस्वधर्मेविचरन्नृप ३८ यथानदीनदाःसर्वे सागरेयांतिसंस्थितिम् ॥ एवमाश्रमिणःसर्वेगृहस्थेयांतिसंस्थितिम् ३९ ॥ इतिश्रीम०शांति०मोक्ष० प० पराशरगीतायांपंचनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥ ॥ जनकउवाच ॥ वर्णोविशेषवर्णानांमहर्षेकेनजायते ॥ एतदिच्छाम्यहंज्ञातुंतद्ब्रूहिवदतांवर १ यदेतज्जायतेऽपत्यंसएवायमितिश्रुतिः ॥ कथंब्राह्मणतोजातोविशेषग्रहणंगतः २ ॥ पराशरउवाच ॥ एवमेतन्महाराजयेनजातःसएवसः ॥ तपसस्त्वपकर्षेणजातिग्रहणतांगतः ३ सुक्षेत्राच्चसुबी जाच्चपुण्योभवतिसंभवः ॥ अतोऽन्यतरतोहीनादवरोनामजायते ४ वक्त्राद्भुजाभ्यामूरुभ्यांपद्भ्यांचैवाथजज्ञिरे ॥ सृजतःप्रजापतेर्लोकानितिधर्मविदोविदुः ५ मुखजाब्राह्मणास्तातबाहुजाःक्षत्रियाःस्मृताः ॥ ऊरुजाधनिनोराजन्पादजाःपरिचारकाः ६ चतुर्णामेववर्णानामागमःपुरुषर्षभ ॥ अतोऽन्येत्वतिरिक्तायेतेवैसं करजाःस्मृताः ७ क्षत्रियातिरथांबष्ठाउग्रावैदेहकास्तथा ॥ श्वपाकाःपुल्कसाःस्तेनानिषादाःसूतमागधाः ८ अयोगाःकरणाव्रात्याश्चांडालाश्चनराधिप ॥ एते चतुर्भ्योवर्णेभ्योजायंतेवैपरस्परात् ९ ॥ जनकउवाच ॥ ब्रह्मणैकेनजातानांनानात्वंगोत्रतःकथम् ॥ बहूनीहहिलोकेवैगोत्राणिमुनिसत्तम १०

तत्रवर्णाःपूर्वोक्ताःषट्कृष्णधूम्रनीलरक्तपीतश्वेताःक्रमेणबुद्धिसत्त्वेतमोरजोंशयोराधिक्यसाम्यापकर्षजाः । तत्रविशेषःस्वाभाविकवर्णादाधिक्यंतमोरजसोर्ह्रासइत्यर्थः १ यदेतदिति सात्त्विक स्यब्राह्मणोऽपत्यमैलोक्तःसात्त्विकैरेवब्राह्मणैर्भवितव्यंकथंरजआदिप्रधानंक्षत्रादिविशेषजातिग्रहणंततउत्पन्नस्येत्याक्षेपार्थः २ । ३ तपसोऽप्यपकर्षःकुतइत्यतआह सुक्षेत्रादिति सात्त्विकयोर्दंपत्योः पुण्यःसंभवस्तयोरन्यतरस्यहीनत्वेहीनइत्यर्थः ४ अन्यतरहीनत्वमपिकुतइत्याशंक्योत्पत्तिस्थानभेदादित्याह वक्त्रादितिद्वाभ्याम् ५ । ६ । ७ अंबष्ठादीनांस्वरूपंजातिविवेकाद्विवेक्तव्यं । 'सवर्णाग्रब्राह्मणान्सूतेराज्ञीमूर्धावसिक्तकं ॥ वैश्यांबष्ठंनिषादंतुशूद्रापारसवश्वसः'इत्यादिना ८ । ९ ननुनिरवयवादव्याकृताज्जगज्जातमितिसर्वत्रश्रूयतेतत्रकुतोऽवयवकल्पनेतिशंकते ब्रह्मणेति ब्राह्मणेतिपाठेएकेनब्रह्मणेत्यध्याहर्तव्यं नानात्वंब्राह्मक्षत्रियादिभावेनभिन्नत्वं गोत्रतोऽन्वयतः गोत्राणिब्रह्मक्षत्रियादीन्युग्रांबष्ठादीनिच तस्माज्जातितारतम्यमयुक्तमित्यर्थ १०

तस्यादरेऽप्यव्यभिचारमाह यत्रेति यथाकाक्षीवदादयः शूद्रायामुत्पादिताः पुत्राब्राह्मणत्वंनीतास्तथा तुतेनिषादत्वं प्राप्ताइत्यर्थः । तस्मात्कारणद्वाराकार्यद्वारावाजातिभेदोनयुक्तइतिभावः ११ तदेतदभ्युपगमेनैवपरिहरिष्यन्नस्यार्थस्यदुर्ग्रहत्वमाह राजन्निति अपकृष्टेनवर्णतारतम्यदृष्टिमतारजस्तमोग्रस्तेन १२ । १३ । १४ । १५ । १६ मूलेति मूलंकार्यंब्रह्म तत्रचत्वारिगोत्राणि नामाभिसमुत्पन्नानि गुणयोगात् तथाचश्रुतिः 'एतमंगिराइत्याचक्षतेऽङ्गानांहिरसस्तेनेतितंदेवा अब्रुवन्नयंवैनःसर्वेषांवसिष्ठइतितस्माद्वसिष्ठइत्याचक्षतएतमेवसंतं'इत्यादिका १७ कर्मतोऽन्यानिगोत्राणि । 'तस्येदंविश्वंमित्रमासीद्यदिदंकिंचतस्माद्विश्वामित्रइत्याचक्षतएतमेवसंतं'इत्यादिश्रुतेःकर्मजान्येवसर्वाणिगोत्राणि परमात्मनिकर्मजन्यैववर्णाश्रमगोत्रकल्पनेति 

यत्रतत्रकथंजाताःस्वयोनिंमुनयोगताः ॥ शुद्धयोनौसमुत्पन्नावियोनौचतथाऽपरे ११ ॥ पराशरउवाच ॥ राजन्नैतद्भवेद्ग्राह्यमपकृष्टेनजन्मना ॥ महात्मनां समुत्पत्तिस्तपसाभावितात्मनाम् १२ उत्पाद्यपुत्रान्मुनयोनृपतेयत्रतत्रह ॥ स्वेनैवतपसातेषामृषित्वंविदधुःपुनः १३ पितामहश्चमेपूर्वमृष्यशृंगश्चकाश्यपः ॥ वेदस्तांड्यःकृपश्चैवकाक्षीवत्कमठादयः १४ यवक्रीतश्चनृपतेद्रोणश्चवदतांवरः ॥ आयुर्मतंगोदत्तश्चद्रुमदोमात्स्यएवच १५ एतेस्वांप्रकृतिंप्राप्तावैदेहतपसोऽश्रयात् ॥ प्रतिष्ठितावेदविदोदमेनतपसैवहि १६ मूलगोत्राणिचत्वारिसमुत्पन्नानिपार्थिव ॥ अंगिराःकश्यपश्चैववसिष्ठोभृगुरेवच १७ कर्मतोऽन्यानिगोत्राणिसमुत्पन्नानिपार्थिव ॥ नामधेयानितपसातानिचग्रहणंसताम् १८ ॥ जनकउवाच ॥ विशेषधर्मान्वर्णानांप्रब्रूहिभगवन्मम ॥ ततःसामान्यधर्मांश्चसर्वत्रकुशलोह्यसि १९ ॥ पराशरउवाच ॥ प्रतिग्रहोयाजनंचतथैवाध्यापनंनृप ॥ विशेषधर्मोविप्राणांरक्षाक्षत्रस्यशोभना २० कृषिश्चपाशुपाल्यंचवाणिज्यंचविशामपि ॥ द्विजानां परिचर्याचशूद्रकर्मनराधिप २१ विशेषधर्मान्नृपतेवर्णानांपरिकीर्तिताः ॥ धर्मान्साधारणांस्तातविस्तरेणशृणुष्वमे २२ आनृशंस्यमहिंसाचाप्रमादःसंविभागिता ॥ श्राद्धकर्मातिथेयंचसत्यमक्रोधएवच २३ स्वेषुदारेषुसंतोषःशौचंनित्यानसूयता ॥ आत्मज्ञानंतितिक्षाचधर्माःसाधारणानृप २४ ब्राह्मणाःक्षत्रियावैश्यास्त्रयोवर्णाद्विजातयः ॥ अत्रतेषामधीकारोधर्मेषुद्विपदांवर २५ विकर्मावस्थितावर्णाःपतंतिनृपतेत्रयः ॥ उन्नमंतियथासंतमाश्रित्येहस्वकर्मसु २६ नचापिशूद्रःपततीतिनिश्चयोनचापिसंस्कारमिहार्हतीतिवा ॥ श्रुतिप्रवृत्तंनचधर्ममाप्नुतेनचास्यधर्मेप्रतिषेधनंकृतम् २७ वैदेहकंशूद्रमुदाहरंतिद्विजामहाराजश्रुतोपपन्नाः ॥ अहंहिपश्यामिनरेंद्रदेवंविश्वस्यविष्णुंजगतःप्रधानम् २८

प्रघट्टकार्थः । तानिचगोत्राणितपसार्जितनामधेयापरपर्यायाणि सतांग्रहणंमार्येयंवरणंविवाहादिश्रौतस्मार्तव्यवहारालंबनंभवतीतिशेषः १८ एवंवर्णोत्पत्तिंज्ञात्वातद्धर्मान्सामान्यविशेषधर्मान्पृच्छतिविशेषेति १९ । २० । २१ । २२ आनृशंस्यादिस्त्रयोदशकोगणःसर्ववर्णाश्रमसाधारणः २३ । २४ अधीकारः उपसर्गस्यघञ्यमनुष्येबहुलमितिदीर्घः धर्मेषु पूर्वोक्तेषु २५ विकर्मनिषिद्धंकर्म स्वकर्मसुसंतंनरमाश्रित्यवर्णाःसत्वादिगुणजाउन्नमंति २६ नचेति संस्कारार्होहितदभावेपतेन्नस्वयंतथेत्यर्थः । धर्मेआनृशंस्यादित्रयोदशकरूपे २७ हेवैदेहद्विजाःशूद्रंकंप्रजापतिंब्राह्मणतुल्यमाहुः अहंतुतंविष्णुंक्षत्रियतुल्यंपश्यामि ब्रह्मविष्णूहिब्राह्मणक्षत्रियौ यथोक्तंद्रोणपर्वणिद्रोणंप्रकृत्य । 'ब्रह्मकल्पोभवद्राजन्नेत्रेनारायणोपमः'इतिभावः ।–



–वस्तुतस्तुयेस्थूलंशरीरंत्यक्त्वालिंगमेवात्मत्वेनप्रतिपन्नास्तेविदेहाः येतुस्थूलसूक्ष्मेत्यक्त्वाप्रधानाख्यंकारणमात्मत्वेनप्रतिपन्नास्तेप्रकृतिलयाः प्रथमतिक्रांताब्राह्मणाः । आद्यस्यमुक्तिर्जन्मद्वयेनव्यवहिता । द्वितीयस्यैकेनान्यस्यसद्यः एवंसतिद्विजाःशूद्रंवैदेहकंविदेहेषुविदितंमाहुः शूद्रोविद्वान्ब्रह्मजन्मनीप्राप्यब्राह्मणोभवतीत्यर्थः । स्वमतेतुसप्रधानमतएकमेवजन्मप्राप्यमुच्यते इति १८ ननुयज्ञस्यशूद्रस्यचितशुद्धत्वाभावात्कथंविदेहत्वादिकंस्यादतआह सतामिति सतांवृत्तंदमदयादानादि निहीनाःशूद्राःउद्दिधीर्षवआत्मानमुद्धर्तुमिच्छवः निहीनानुजिहीर्षवइति पाठेकामादीन्दोषानुज्जिहीर्षवस्त्यक्तुमिच्छवइत्यर्थः २९ मोदतेमोदंते ३० एनंनरंदूषयतिहीनतांनयति ३१ । ३२ दुष्टकर्मत्यागेजातिकर्मणोर्द्वयोरन्यतरस्यापिचहेतुत्वमाह द्वा

सतांवृत्तमधिष्ठायनिहीनाउद्दिधीर्षवः ॥ मंत्रवर्जंनदुष्यंतिकुर्वाणाःपौष्टिकीःक्रियाः २९ यथायथाहिसद्वृत्तमालंबंतीतरेजनाः ॥ तथातथासुखंप्राप्यप्रेत्यचेहच मोदते ३० ॥ जनकउवाच ॥ किंकर्मदूषयत्येनमथोजातिर्महामुने ॥ संदेहोमेसमुत्पन्नस्तन्मेव्याख्यातुमर्हसि ३१ ॥ पराशरउवाच ॥ असंशयंमहाराजउभयंदोषकारकम् ॥ कर्मचैवहिजातिश्चविशेषंतुनिशामय ३२ जात्याचकर्मणाचैवदुष्टंकर्मनसेवते ॥ जात्यादुष्टश्चयःपापंनकरोतिसपूरुषः ३३ जात्याप्रधानंपुरुषंकुर्वाणंकर्मधिक्कृतम् ॥ कर्मतद्दूषयत्येनंतस्मात्कर्मनशोभनम् ३४ ॥ जनकउवाच ॥ कानिकर्माणिधर्म्याणिलोकेऽस्मिन्द्विजसत्तम ॥ नहिंसंतीहभूतानिक्रियमाणानिसर्वदा ३५ ॥ पराशरउवाच ॥ शृणुमेऽत्रमहाराजयन्मांत्वंपरिपृच्छसि ॥ यानिकर्माण्यहिंस्राणिनरंत्रायंतिसर्वदा ३६ संन्यस्याग्नीनुदासीनाःपश्यंतिविगतज्वराः ॥ नैःश्रेयसंकर्मपथंसमारुह्ययथाक्रमम् ३७ प्रश्रिताविनयोपेतादमनित्याःसुसंशिताः ॥ प्रयांतिस्थानमजरंसर्वकर्मविवर्जिताः ३८ सर्ववर्णाधर्मकार्याणिसम्यक्कृत्वाराजन्सत्यवाक्यानिचोक्त्वा ॥ त्यक्त्वाऽधर्मंदारुणंजीवलोकेयांतिस्वर्गंनात्रकार्योविचारः ३९ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि पराशरगीतायांषण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥ ॥ ४ ॥ ॥ पराशरउवाच ॥ पितासखायोगुरवस्त्रियश्चननिर्गुणानांप्रभवंतिलोके ॥ अनन्यभक्ताःप्रियवादिनश्चहिताश्चवश्याश्चतथैवराजन् १ पितापरंदैवतंमानवानांमातुर्विशिष्टंपितरंवदंति ॥ ज्ञानस्यलाभंपरमंवदंतिजितेंद्रियार्थाःपरमाप्नुवंति २ रणाजिरेयत्रशराग्निसंस्तरेनृपात्मजोघातमवाप्यदह्यते ॥ प्रयातिलोकानमरैःसुदुर्लभान्निषेवतेस्वर्गफलंयथासुखम् ३ श्रांतंभीतंभ्रष्टशस्त्रंरुदंतंपराङ्मुखंपारिबर्हश्चहीनम् ॥ अनुद्यंतंरोगिणंयाचमानंनवैहिंस्याद्बालवृद्धौचराजन् ४ पारिबर्हैःसुसंयुक्तमुद्यतंतुल्यतांगतम् ॥ अतिक्रमेत्तंनृपतिःसंग्रामेक्षत्रियात्मजम् ५

भ्यां जात्येति ३३ । ३४ । ३५ । ३६ संन्यस्याग्नीन्पारिव्राज्यंकृत्वेत्यर्थः यथाक्रमंवितर्कविचारानंदास्मिताख्यासुयोगभूमिषुपूर्वपूर्वभूमिकांत्यक्त्वोत्तरोत्तरभूमिकामारुह्य कर्मपथंयोगं ३७ प्रश्रिताःश्रद्धावंतः सुसंशिताःअतिसूक्ष्मबुद्धयः ३८ त्यक्त्वाअधर्ममितिच्छेदः ३९ ॥ इतिशांतिपर्वणिनीलकंठीये भारतभावदीपेषण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥ कानिधर्मकार्याणीत्यपेक्षायामाह पितेति निर्गुणानामकृत्यादिहीनानांपित्रादयोयथोक्तसेवाफलंदातुंनप्रभवंति येतुभक्तास्तेपित्रादिसेवाफलंप्राप्नुवंत्येवेत्यर्थः १ लाभंलाभहेतुं जितार्इंद्रियार्थैस्तेशब्दादिविषयजयिनः २ । ३ पारिबर्हैरयाश्वकवचादिभिः अनुद्यंतमायुधमप्रेरयंतमुद्यतमुद्यतंवा ४ अतिक्रमेज्जयेत् ५

६ । ७ दिष्टांतो मृत्युः ८ स्निग्धैर्मांत्रादिभिः क्रियमाणान्यभ्यंगादीनि नायुरिति परप्राणैः प्राणान्नपोषयेत् ९ ग्रहस्थानामिति विनाशं वंधक्षयं यद्वा विःपक्षीपरमात्मा । पुरःसपक्षीभूत्वा हिरण्मयःशकुनिर्ब्रह्मनाम द्वासुपर्णाइत्यादिश्रुतिषुपरमात्मनिपक्षिवाचिशब्दप्रयोगदर्शनात् तेन इत्थंभावेतृतीया परमात्मभावेनशंपरमानंदमभिकांक्षतामित्यर्थः । पुलिनेषुपुलिनवत्सुतीर्थेषुनिधनंमरणंश्रेयःक्रियावतांतीर्थेवास्युचितकर्मवतां तथाचस्मृतिः । 'यस्यहस्तौचपादौचमनश्चैवसुसंयतम् । विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते'इति पुलिनेष्वपिसमुद्रगामिन्यपश्चनद्यःप्रशस्ताः तथाचश्रुतिः । 'इदंतेऽन्याभिरसमानमद्भिर्याःकाश्चसिंधुंप्रवहंतिनद्यः । सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोऽभ्युपेत्य'इति । योऽप्सुनावंप्रतिष्ठितांवेदप्रत्येवतिष्ठतीतिच नावंतारकंकारवंप्रणवरूपंब्रह्मविद्याय । यद्यप्येवंसर्वांतामपांब्रह्मविद्यामदत्वंभावितयाऽपियथापुरोडाशंचतुर्धाकरोत्याग्नेयंचतुर्धाकरोतीतिवत्सामान्यशास्त्रं विशेषेणाकृष्यतेएवमत्रदिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृतीभूत्वामोक्षीभवतीतिविशेषश्रुतेरविमुक्तांतर्गतास्वेवाप्सुतन्नियम्यते । अत्राप्यप्सुइतिश्रौतसप्तमीपुलिनेष्विति पदेनसामीप्येव्याख्याता तेनाऽप्सामीप्येऽपिमरणंयुक्तम् १० तच्चनहठेनसंपादनीयमित्याह नायुरिति तथाहितेनाहियदच्छामरणप्रकारेणयत्कारणाद्भवत्यज्ञानमात्रापनयेनस्वतःसिद्धंमोक्षरूपंतत्कारणेस्तीर्थमरणे हठादुपपादितंभवति यथोक्तंवासिष्ठेऽखिलग्रंथे । 'मोक्षक्षेत्रेविमूढांतःकरणायेऽथवामृताः । क्षेत्रमाहात्म्यतस्तेऽपिसंतिक्षेत्रफलान्विताः'इतिविमूढांतःकरणाइदंमुक्तिक्षेत्रमित्यप्रजानंतः

तुल्यादिहवधःश्रेयान्विशिष्टाच्चेतिनिश्चयः ॥ निहीनात्कातराच्चैवकृपणाद्गर्हितोवधः ६ पापात्पापसमाचारान्निहीनाच्चनराधिप ॥ पापएववधःप्रोक्तोनरकायेति निश्चयः ७ नकश्चिन्नातिवैराजन्दिष्टांतवशमागतम् ॥ सावशेषायुषंचापिकश्चिन्नैवापकर्षति ८ स्निग्धैश्चक्रियमाणानिकर्माणीहनिवर्तयेत् ॥ हिंसात्मकानिसर्वाणि नायुरिच्छेत्परायुषा ९ गृहस्थानांतुसर्वेषांविनाशमभिकांक्षताम् ॥ निधनंशोभनंतातपुलिनेषुक्रियावताम् १० आयुषिक्षयमापन्नेपंचत्वमुपगच्छति ॥ तथाह्यकारणाद्भवतिकारणैरुपपादितम् ११ तथाशरीरंभवतिदेहाद्येनोपपादितम् ॥ अध्वानंगतकश्चायंप्राप्तश्चायंगृहाद्गृहम् १२ द्वितीयंकारणंतत्रनान्यत्किंचनविद्यते ॥ तद्देहंदेहिनांयुक्तंमोक्षभूतेषुवर्तते १३ शिरास्नाय्वस्थिसंघातंबीभत्सामेध्यसंकुलम् ॥ भूतानामिंद्रियाणांचगुणानांचसमागमम् १४ त्वगंतंदेहमित्याहुर्विद्वांसोऽध्यात्मचिंतकाः ॥ गुणैरपिपरिक्षीणंशरीरंमर्त्यतांगतम् १५

क्षेत्रफलंमोक्षस्तदन्विताभुक्ताइत्यर्थः । अत्रदिजंतोरित्युद्राहृतश्रुत्यायद्यप्यत्राप्यज्ञानापनयोऽस्त्येवतथापिसएवाप्रशमादिकंविनामरणेनहठात्साध्यतइतिमोक्षस्यापिहठसाध्यत्वमुपचाराद्युक्तंभवति ११ तीर्थेऽपिहठान्मरणंनिंदति तथेति देहात् ल्यब्लोपेपंचमी देहंप्राप्येत्यर्थः येनपुंसापंचत्वमित्युक्तमुच्यतेउपपादितंहठेनजलप्रवेशादिनासंपादितं तस्यतथाशरीरंपूर्वदेहप्रकारमेवशरीरंभवतिदेहत्यागीयातनाशरीरंप्राप्नोतीत्यर्थः । सोऽयमध्वानंमोक्षमार्गंगतोऽपिकुत्सितत्वादध्वानंगतकः यतोऽयंमोक्षक्षेत्रेऽपिगृहाद्गृहंदेहाद्देहंप्राप्तः १२ तत्किमस्यमोक्षोनास्त्येवेत्याशंक्याह द्वितीयमिति तत्रगृहाद्गृहांतरप्राप्तौद्वितीयंकारणंकाश्यांमृतस्यापियातनादेहप्राप्तावेकंकारणंहठमरणमभूत् । ततोऽपिदेहांतरप्राप्तौद्वितीयंकारणंनास्ति । तस्ययातनादेहस्यभोगदेहस्येवकर्मदेहत्वाभावाद्देहांतरोत्पादकत्वंनास्तीत्यर्थः । तद्देहंक्लीवत्वमार्षं देहिनांसोऽपियातनादेहोमोक्षभूतेषुमोक्षयोग्येषुरुद्रपिशाचेषुयुक्तमात्महत्यापापनिर्हरणाययातनार्थंयोजितंवर्तते १३ यातनादेहस्यस्वरूपमेतद्देहतुल्यमित्याह शिरेति गुणानांविषयाणांवासनामयानाम् १४ त्वगंतंत्वगेवांऽतेसमीपेयस्य त्वगस्थिमात्रंमेदोमांसवर्जितमित्यर्थः । गुणैःसात्त्विकादिभिः मर्त्यतांमायकीयमपिपूर्ववासनावशान्मनुष्यतामिवगतम् १५



अतएवतन्नाशोऽपिमर्त्यशरीरनाशवदेवेत्याह शरीरिणेति कंचुकिनाकंचुकमिवमुक्तेनपरित्यक्तंभूतैरपंचीकृतैः प्रकृतिस्तत्त्वंकारणं यद्वा भूतैर्यातनादेहारंभकैःप्रकृतिमात्मानंप्राप्तैः 'एवमेवास्यपरिद्रष्टुरिमाःषोडशकलाःपुरुषायणाःपुरुषंप्राप्यास्तंयंति'इतिश्रुतेस्ततोभूमौनिमज्जतिलोकदृष्ट्या । तथाचतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतेइतिप्राणानांप्रत्यगात्मनिविलयदृष्ट्यालयंप्रवदर्शतउच्छ्वयत्याध्मातोमृतःशेतइतिलोकदृष्ट्याशरीरस्यभूमौलयोऽपिश्रुत्याप्रदर्शितः । इदमपिरुद्रपिशाचानामेवदृष्टयानत्वस्मद्दृष्टयातेष्वेवतस्यवर्तनादितिध्येयं १६ ननुपात्रेमाघमाहात्म्येवाराणस्यांमृतस्यापिब्राह्मणस्यदशजन्मानिस्मर्यंतेतत्कथंद्वितीयंकारणंतत्रेतिजन्मांतरप्रापकंकारणांतरंतस्यनास्तीत्युक्तमित्याशंक्याहार्धेन भावितमिति तत्पिशाचशरीरंकर्मयोगेनआत्महत्यापापाइवब्रह्महत्यादीनामनेकजन्मप्रापकाणामनेकेषांकर्मणांकाश्यांकृतानांसंभवात्तत्कर्मवासनयातत्रतत्रयातनाशरीरंजायते । नचैवंदेशांतरमरणादविशेषइत्याशंक्याह इदमिति इदंयातनाशरीरादन्यद्यत्रयत्रविषयेनिमग्नंसर्वत्रिनवतेतत्स्वभावस्तद्वद्गोऽपरोविसर्गोजन्मकर्मणःफलभूतोदृष्टः यातनाशरीरविसर्गस्तुपरक्तशरीरसजातीयोनभवतीत्यर्थः । विमर्दइतिपाठेऽपि

शरीरिणापरित्यक्तंनिश्चेष्टंगतचेतनम् ॥ भूतैःप्रकृतिमापन्नैस्ततोभूमौनिमज्जति १६ भावितंकर्मयोगेनजायतेतत्रतत्रह ॥ इदंशरीरंवैदेहम्रियतेयत्रयत्रह ॥ तत्स्वभावोऽपरोदृष्टोविसर्गःकर्मणस्तथा १७ नजायतेतुनृपतेकंचित्कालमयंपुनः ॥ परिभ्रमतिभूतात्माद्यामिवांबुधरोमहान् १८ सपुनर्जायतेराजन्प्राप्येहायतनंनृप ॥ मनसःपरमोह्यात्माइंद्रियेभ्यःपरंमनः १९ विविधानांचभूतानांजंगमाःपरमानृप ॥ जंगमानामपितथाद्विपदाःपरमामताः ॥ द्विपदानामपितथाद्विजावैपरमाःस्मृताः २० द्विजानामपिराजेंद्रप्रज्ञावंतःपरामताः ॥ प्राज्ञानामात्मसंबुद्धाःसंबुद्धानाममानिनः २१ जातमन्वेतिमरणंनृणामितिविनिश्चयः ॥ अंतवंतिहिकर्माणिसेवंतेगुणतःप्रजाः २२ आपन्नेतूत्तरांकाष्ठांसूर्येयोनिधनंव्रजेत् ॥ नक्षत्रेचमुहूर्तेचपुण्येराजन्सपुण्यकृत् २३ अयोजयित्वाक्लेशेनजनंप्लाव्यचदुष्कृतम् ॥ मृत्युनाऽऽत्मकृतेनेहकर्मकृत्वाऽऽत्मशक्तिभिः २४ विषमुद्बंधनंदाहोदस्युहस्तात्तथावधः ॥ दंष्ट्रिभ्यश्चपशुभ्यश्चप्राकृतोवधउच्यते २५ नचैभिःपुण्यकर्माणोयुज्यंतेचाभिसंधिजैः ॥ एवंविधैश्चबहुभिरपरैःप्राकृतैरपि २६ ऊर्ध्वंभित्त्वाप्रतिष्ठंतेप्राणाःपुण्यवतांनृप ॥ मध्यतोमध्यपुण्यानामधोदुष्कृतकर्मणाम् २७

सएवार्थः १७ यातनादेहस्यपुनस्ततोवैलक्षण्यमाह नजायतइति भूतात्मारुद्रपिशाचः नजायतेस्वेनरूपेणनाविर्भवतियावत्पापक्षयं १८ आयतनमधिष्ठानंप्राप्योपाधिजनितकालुष्यस्यागेनावगम्य । आयतनस्वरूपमाह मनसइति निःसंकल्पमेवमोक्षलक्षणमित्यर्थः । तस्मान्निःसंकल्पस्तद्भव्यस्तिष्ठेदेतन्मोक्षलक्षणमितिमैत्रायणीयश्रुतेः १९ एवंजंतुतारतम्यवर्जितांदेशविशेषायत्तांगतिमुक्त्वा कालायत्तांगतिंवक्तुंजंतुतारतम्यंतावदाह विविधानामिति २० आत्मसंबुद्धायोगिनः अमानिनोयोगैश्वर्यकृतदर्पहीनाः २१ दर्पत्यागमूलंविवेकमाह जातमिति २२ पुण्यकृत्ब्रह्मलोकं वस्तुमधिकारीत्यर्थः २३ तत्रमुख्यंसाधनंजनंक्लेशेनअयोजयित्वैवेति अत्रापियादृच्छिकमेवमरणंश्रेयइत्याह मृत्युनेति आत्मकृतेनकालजेन २४ विषमिति योगीअत्यंतव्याधिपीडाग्रस्तोऽपिवधुर्मरणंनेच्छेदित्यर्थः २५ । २६ उत्तरायणेमृतानांपुण्यकृतांगतिमाह ऊर्ध्वमिति सूर्यमंडलंभित्त्वेत्यर्थः । मूर्धद्वारेणतेविरजाःप्रयांतीतिश्रुतेः मध्यतोमनुष्यलोके प्रासंगिकोऽयमर्धश्लोकः २७

देशकालनिरपेक्षागतिस्तु केवलमज्ञानारूपशत्रोरपगममात्रादेवेत्याह एकइतिद्वाभ्यां १८ बस्यप्रबाधनार्थंश्रुतिधर्मयुक्तंयथास्यात्तथावृद्धानुपास्यप्रभवेत सोऽज्ञानशत्रुःप्रज्ञाशरेणोन्मथितःप
रैविनश्यतिहेराजपुत्र २९ आश्रमत्रयधर्मःप्रज्ञाप्राप्त्युपायइत्याह अधीत्येति श्रेयःस्थित्वाश्रेयोरथर्थंतिष्ठतिसन्नद्धोभवतीतिश्रेयःस्थित्वामोक्षकामः । आत्तोमनिम्कनिक्वनिपश्चेतिक
निर्वृत्तोऽयंशब्दः ३० अध्ययनादियोग्यांनृयोनिंप्रशंसति उपभोगैरिति चतुर्भिः ३१ । ३२ । ३३ योधर्मोवमंतासकामात्मामवेत्सचकामेनवंच्यते ३४ प्रीतिपुराणेनप्रीत्याचिरंतनेन पुरांगेणे
तिपाठःस्वच्छः दीपोपमानिस्नेहेनसं वर्धनीयानि यावदर्थान्सर्वान्विषयान् दयावान्सुखानिपश्यतिविरक्तोऽर्थान्नपश्यतियःसमहीयतेइत्युत्तरेणसंबंधः ३५ । ३६ पुनरावृत्तिमतींगतिमाह

एकःशत्रुर्नद्वितीयोऽस्तिशत्रुरज्ञानतुल्यःपुरुषस्यराजन् ॥ येनावृतःकुरुतेसंप्रयुक्तोघोराणिकर्माणिसुदारुणानि २८ प्रबाधनार्थंश्रुतिधर्मयुक्तंवृद्धानुपास्यप्र
भवेतयस्य ॥ प्रयत्नसाध्योहिसराजपुत्रप्रज्ञाशरेणोन्मथितःपरैति २९ अधीत्यवेदंतपसाब्रह्मचारीयज्ञाञ्शक्त्यासन्निसृज्येहपंच ॥ वनंगच्छेत्पुरुषोधर्मकामःश्रे
यःस्थित्वास्थापयित्वास्ववंशम् ३० उपभोगैरपित्यक्तंनात्मानंसादयेन्नरः ॥ चंडालत्वेऽपिमानुष्यंसर्वथातात शोभनम् ३१ इयंहियोनिःप्रथमायांप्राप्यजगती
पते ॥ आत्मावैशक्यतेत्रातुंकर्मभिःशुभलक्षणैः ३२ कथंनविप्रणश्येमयोनितोऽस्याइतिप्रभो ॥ कुर्वंतिधर्मंमनुजाःश्रुतिप्रामाण्यदर्शनात् ३३ योदुर्लभत
रंप्राप्यमानुष्यंद्विषतेनरः ॥ धर्मावमंताकामात्माभवेत्सखलुवंच्यते ३४ यस्तुप्रीतिपुराणेनचक्षुषातातपश्यति ॥ दीपोपमानिभूतानियावदर्थान्नपश्यति ३५
सांत्वेनान्नप्रदानेनप्रियवादेनचाप्युत ॥ समदुःखसुखोभूत्वासपरत्रमहीयते ३६ दानंत्यागःशोभनामूर्तिरद्भ्योभूयःप्लाव्यंतपसावैशरीरम् ॥ सरस्वतीनैमिष
पुष्करेषुयेचाप्यन्येपुण्यदेशाःपृथिव्याम् ३७ गृहेषुयेषामसवःपतंतितेषामथोनिर्हरणंप्रशस्तम् ॥ यानेनवैप्रापणंचश्मशानेशौचेनतूनंविधिनाचैवदाहः ३८
इष्टिःपुष्टिर्यजनंयाजनंचदानंपुण्यानांकर्मणांचप्रयोगः ॥ शक्त्यापित्र्यंयच्चकिंचित्प्रशस्तंसर्वाण्यात्मार्थेमानवोऽयंकरोति ३९ धर्मशास्त्राणिवेदाश्चषडंगानिनरा
धिप ॥ श्रेयसोऽर्थेविधीयंतेनरस्याक्लिष्टकर्मणः ४० ॥ भीष्मउवाच ॥ एतद्वैसर्वमाख्यातंमुनिनासुमहात्मना ॥ विदेहराजायपुराश्रेयसोऽर्थेनराधिप ४१
॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि पराशरगीतायां सप्तनवत्याधिकद्विशततमोऽध्यायः ॥ २९७ ॥ ॥ भीष्मउवाच ॥ पुनरेवतु
पप्रच्छजनकोमिथिलाधिपः ॥ पराशरंमहात्मानंधर्मेपरमनिश्चयम् १ ॥ जनकउवाच ॥ किंश्रेयःकागतिर्ब्रह्मन्किंकृतंनविनश्यति ॥ क्वगतोननिवर्तेततन्मे
ब्रूहिमहामते २ ॥ पराशरउवाच ॥ असंगःश्रेयसोमूलंज्ञानंज्ञानगतिःपरा ॥ चीर्णंतपोनप्रणश्येद्वापःक्षेत्रेननश्यति ३

दानमित्यादिनाशोभनामूर्तिः शांताआकृतिः हेभूप अद्भ्योऽद्भिस्तपसाचशरीरंप्लाव्यंशोधनीयं तत्रआपःकस्याइत्यतआह सरस्वतीति अन्येकुरुक्षेत्राद्याः ३७ उक्तपदार्थेप्रकारांतरमाह
गृहेष्विति ३८ । ३९ । ४० । ४१ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि निलकंठीये भारतभावदीपे सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥ उक्तमर्थंसंक्षेपेणवक्तुमारभतेपुनरेवेत्या
द्यध्यायं १ श्रेयःश्रेयःसाधनं २ ज्ञानमेवपरागतिः हेज्ञानहेविन्मात्रस्वरूप प्रत्यक्किर्तिरेवपरागतिरित्यर्थः वापोदानं क्षेत्रेसत्पात्रे बीजमितिपाठेबीजमिवन्युप्तमितिसप्तवार्थः ३



किंकृतंनविनश्यतीत्यस्यैवोत्तरंप्रायेणाध्यायशेषः अधर्मेतिच्छेदः अभयंकृतमभयंकरंदानंदत्वासिध्यांकुर्वेत्यर्थः । सिद्धिर्मोक्षमनिवर्तनंस्थानं इदंचतुर्थप्रश्नस्योत्तरं ४ अभयंसर्वभूते
भ्योयोददातितमभितःसदाऽभयंवर्तते ५ बुद्धिमानासंगशून्यः दुर्बुद्धिर्मनसाविषयसंगवान् ६ श्लिष्यतेआलिंगति तत्कार्यः पर्णवत्पर्णमिव ७ कारणाफलदानात्मिकाक्रियातन्निर्वर्त्य
पेक्षी सम्यक्प्रियतेफलंप्राप्नोति ततोऽधर्मात् कर्ताकर्तृत्वाभिमानी ८ नभिद्यंतेकर्मफलैर्नक्लिश्यंति तेषांकर्माश्लेषात् कस्तर्हिभिद्यतेऽतआह बुद्धीति नबुध्यतेदुश्चेष्टितमितिशेषः ९ । १०
यथानद्यांबद्धःसेतुर्नैवसीदति स्रोतःपुष्टिंकरोति एवमसक्तोधर्मएवसेतुर्यस्यसःमर्यादायांबद्धोनैवसीदति संचयस्तपोवृद्धिश्चस्फीताभवतीत्यर्थः ११ समाधिनानियमेनदृष्टांते दार्ष्टांतिकेतु
समाधिनाध्यानेन यथामणिःसौरंतेजआदत्ते एवंजीवोब्रह्मभावमादत्तेमणिद्वारावत्देरिवयोगद्वाराब्रह्मभावाभिव्यक्तिर्भवतीत्यर्थः १२ सौम्यतारम्यता यथाश्रयंपुनःपुनर्वासनाभ्यासाद्दृढ

छित्वाऽधर्ममयंपाशंयदाधर्मेऽभिरज्यते ॥ दत्वाऽभयकृतंदानंतदासिद्धिमवाप्नुते ४ योददातिसहस्राणिगवामश्वशतानिच ॥ अभयंसर्वभूतेभ्यःसदातमभिवर्त
ते ५ वसन्विषयमध्येऽपिनवसत्येवबुद्धिमान् ॥ संवसत्येवदुर्बुद्धिरसत्सुविषयेष्वपि ६ नाधर्मःश्लिष्यतेप्राज्ञंपयःपुष्करपर्णवत् ॥ अप्राज्ञमधिकंपापंश्लिष्यते
जतुकाष्ठवत् ७ नाधर्मःकारणापेक्षीकर्तारमभिमुंचति ॥ कर्ताखलुयथाकालंततःसमभिपद्यते ८ नभिद्यंतेकृतात्मानआत्मप्रत्ययदर्शिनः ॥ बुद्धिकर्मेंद्रिया
णांहिप्रमत्तोयोनबुद्ध्यते ॥ शुभाशुभेप्रसक्तात्माप्राप्नोतिसुमहद्भयम् ९ वीतरागोजितक्रोधःसम्यग्भवतियःसदा ॥ विषयेवर्तमानोऽपिनसपापेनयुज्यते १० म
र्यादायांधर्मसेतुर्निबद्धोनैवसीदति ॥ पुष्टस्रोतइवासक्तःस्फीतोभवतिसंचयः ११ यथाभानुगतंतेजोमणिःशुद्धःसमाधिना ॥ आदत्तेराजशार्दूलतथायोगःप्रव
र्तते १२ यथातिलानामिहपुष्पसंश्रयात्पृथक्पृथग्यातिगुणोतिसौम्यताम् ॥ तथानराणांभुविभावितात्मनांयथाश्रयंसत्वगुणःप्रवर्तते १३ जहातिदारांश्चज
हातिसंपदःपदंचयानंविविधाश्चसत्क्रियाः ॥ त्रिविष्टपेजातमतिर्यदानरस्तदास्यबुद्धिर्विषयेषुभिद्यते १४ प्रसक्तबुद्धिर्विषयेषुयोनरोनबुध्यतेह्यात्महितंकथंचन ॥
ससर्वभावानुगतेनचेतसानृपामिषेणेवझषोविकृष्यते १५ संघातवन्मर्त्यलोकःपरस्परमपाश्रितः ॥ कदलीगर्भनिःसारोनौरिवाप्सुनिमज्जति १६ नधर्मकालः
पुरुषस्यनिश्चितोनचापिमृत्युःपुरुषंप्रतीक्षते ॥ सदाहिधर्मस्यक्रियैवशोभनायदानरोमृत्युमुखेऽभिवर्तते १७ यथांधःस्वगृहेयुक्तोह्यभ्यासादेवगच्छति ॥ तथा
युक्तेनमनसाप्राज्ञोगच्छतितांगतिम् १८ मरणंजन्मनिप्रोक्तंजन्मवैमरणाश्रितम् ॥ अविद्वान्मोक्षधर्मेषुबद्धोभ्रमतिचक्रवत् १९ बुद्धिमार्गप्रयातस्यसुखंत्विहप
रत्रच ॥ विस्तराःक्लेशसंयुक्ताःसंक्षेपास्तुसुखावहाः ॥ परार्थंविस्तराःसर्वेत्यागमात्महितंविदुः २०

त्वंतद्भावेऽस्यसत्वगुणःप्रवर्तते १३ भिद्यतेशब्दादिभ्योव्यावृत्तोभवति १४ आमिषेणबडिशगर्भितेन झषोमत्स्यः १५ संघातवद्देहेंद्रियादिसमुदायवत् मर्त्यलोकःस्त्रीपुत्रपश्वादिसमुदायः
अपाश्रितउपकारकः १६ नेति सदामृत्युःसन्निहितोऽस्तीतिसदैवधर्मःकार्यइत्यर्थः १७ धर्मेणचित्तशुद्धौसत्यांयोगाभ्यासःकार्यइत्याह यथेति अगोचरेऽपिमार्गेगुरूक्तयुक्त्याभ्यासादेव
गच्छतीत्यर्थः १८ योगाभावेऽनिष्टमाह मरणमिति जन्मनिजन्मनिमित्तं मोक्षधर्मेषुमोक्षधर्मान्अजानन् १९ ज्ञानमार्गप्रवृत्तस्यपूभयत्रापिसुखमित्याहार्धेन बुद्धीति विस्तराःवैता
निकान्यग्निहोत्रादीनि संक्षेपास्त्यागादयः परार्थंअनात्मभूतफलार्थं २०

मृणालेतिलुप्तविभक्तिकं बिसतंतुःकर्दममिवात्मोपाधिभूतंमनस्त्यजतीत्यर्थः २१ मनःकृतःसंसारोमनसैवनश्यतीत्याह मनइति रमानमात्मानं संधिरार्षः प्रणयतेयोगोन्मुखंकरोति सयोगी एनंमनोरूपमात्मानमभियुंजतिपरस्यांकाष्ठायांयुनक्तिप्रविलापयति युक्तोयोगसिद्धः तंपरंसर्वोपाधिविहीनमात्मानम् २२ परार्थेइंद्रियतृप्त्यर्थे एतदेवस्वंकार्यमितियोमन्यतेमूढःसःस्वकार्यात् योगात् २३ योगाच्च्युतस्यगतिमाह अधइति स्वर्गेपरांगतिमिंद्रलोकम् २४ योगस्यस्पगतिमाह मृन्मयेइति द्रवःद्रवद्रव्यंजलादिनश्यतिनक्षीयतेनक्षरतीत्यर्थः । इयतीतिशोतनूकरणे इत्यस्यरूपं शरीरंबुद्धिलिंगंवा तप्तंआलोचितं विषयंब्रह्मलोकांतंअश्नुतेव्याप्नोति नतुत्यजतीत्यर्थः २५ शरीरपदेनलिंगस्यैवमोक्तृत्वंसूचितंतद्व्याचष्टे विषयानिति योविषयान्अश्नुतेआ लोकइवव्याप्नोतिप्रकाशयतिसाक्षीनासौभोक्तेत्यर्थः । यस्तुआत्माबुद्धिप्रधानश्चिदाभासोजीवोभोक्ताभोगांस्त्यजेद्वैराग्यविशात्सएवमोक्तुंव्यवस्यतिअध्यवसायंकरोति । तथाचश्रुतिर्द्वैवि धमात्मानंदर्शयति 'द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति'इति मोक्तुंविनश्यतीतिपाठेभोगार्थजन्मांतरलाभायैवम्रियतइत्यर्थः

यथामृणालानुगतमाशुमुंचतिकर्दमम् ॥ तथाऽऽत्मापुरुषस्येहमनसापरिमुच्यते २१ मनःप्रणयतेऽऽत्मानंसएनमभियुंजति ॥ युक्तोयदासभवतितदातंपश्यते परम् २२ परार्थेवर्तमानस्तुस्वंकार्यंयोऽभिमन्यते ॥ इंद्रियार्थेषुसंयुक्तःस्वकार्यात्परिमुच्यते २३ अधस्तिर्यग्गतिंचैवस्वर्गेचैवपरांगतिम् ॥ प्राप्नोतिसुकृतैरात्मा प्राज्ञस्येहेतरस्यच २४ मृन्मयेभाजनेपक्वेयथावैनश्यतिद्रवः ॥ तथाशरीरंतपसातप्तंविषयमश्नुते २५ विषयानश्नुतेयस्तुनसभोक्षत्यसंशयम् ॥ यस्तुभोगांस्त्य जेदात्मासवैभोक्तुंव्यवस्यति २६ नीहारेणहिसंवीतःशिश्नोदरपरायणः ॥ जात्यंधइवपंथानमावृतात्मानबुध्यते २७ वणिग्यथासमुद्राद्वैयथार्थंलभतेधनम् ॥ तथामर्त्यार्णवेजंतोःकर्मविज्ञानतोगतिः २८ अहोरात्रमयेलोकेजरारूपेणसंसरन् ॥ मृत्युर्ग्रसतिभूतानिपवनंपन्नगोयथा २९ स्वयंकृतानिकर्माणिजातोजंतुःप्रप द्यते ॥ नाकृत्वालभतेकश्चित्किंचिदत्रप्रियाप्रियम् ३० शयानंयांतमासीनंप्रवृत्तंविषयेषुच ॥ शुभाशुभानिकर्माणिप्रपद्यंतेनरंसदा ३१ नह्यन्यत्तीरमासाद्यपुन स्तर्तुंव्यवस्यति ॥ दुर्लभोदृश्यतेह्यस्यविनिपातोमहार्णवे ३२ यथाभावावसन्नाहिनौर्महाभसितंतुना ॥ तथामनोभियोगाद्वैशरीरंप्रचिकीर्षति ३३ यथासमुद्रमभितः संश्रिताःसरितोऽपराः ॥ तथाऽऽद्याप्रकृतिर्योगादभिसंश्रियतेसदा ३४ स्नेहपाशैर्बहुविधैरासक्तमनसोनराः ॥ प्रकृतिस्थाविषीदंतिजलेसैकतवेश्मवत् ३५

२६ नन्वभोक्ताऽऽत्माकुतोनोपलभ्यतइत्यतआह नीहारेणेति आवृतात्माजीवः नबुद्ध्यतेअनावृतंस्वस्वरूपमित्यर्थः तथाचश्रुतिरभोक्तारमीशमावृतंदर्शयति । 'नतंविदाथयइमाजजाना न्यद्युष्माकमंतरंबभूव । नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंति'इति २७ यथार्थंमूलधनानुसारेणयथाधनलाभः एवंकर्मविज्ञानानुसारेणगतिरित्यर्थः २८ तस्मादात्ममोक्षाययतेते त्याशयेनाह अहोरात्रेति अहोरात्रमयेकालप्रधाने २९ । ३० । ३१ ज्ञाततत्त्वस्यजन्मांतरंनास्तीत्याहदृष्टांतेनैव नहीति अन्यत्जलात्परम् ३२ भावेनधीवराभिप्रायेण धीवरस्तंतुनानाव मिव मनःअभियोगेनभावनाभिनिवेशेनशरीरंप्रचिकीर्षति अंतर्मावितण्यर्थोऽयं कारयितुमिच्छतीत्यर्थः ३३ अभियोगबलादेवनदीसमुद्रदृष्टांतेनमनसोमूलप्रकृतौलयमाह यथेति योगात्अभि योगात् अभिसंश्रियते मनसेतिशेषः ३४ योगाभावेदोषमाह स्नेहेति प्रकृतिस्थाःअज्ञानवशाः ३५

शरीरगृहस्यसंज्ञैवसंज्ञायस्य देहगतंनामरूपंआत्मधर्मत्वेनमन्यमानस्यदेहिनोदेहाभिमानवतः शौचंआंतरंभावशुद्धिः बाह्यंचप्रसिद्धं बुद्धिरात्मज्ञानंदेवताद्युपासनंवा ३६ विस्तराइति श्लोकोव्याख्यातः ३७ योगविघ्नभूताकुटुंबचिंतानकार्येत्याह संकल्पजइत्यादिना ३८ दानमेवपथिस्वर्गमार्गेहितमोदनस्थानीयंपाथेयंयस्यसःदानपथ्योदनः ३९ अष्टापदपदंसुवर्णकार्षापणस्त स्यस्थानेइदक्षयथामुद्रारेखाविशेषास्तद्वन्मात्रादयइत्यर्थः । स्वर्णवत्स्वादृष्टमेवस्त्राभ्युदयहेतुः रेखावत्तुबांधवादयोनाममात्रं खर्परेरेखवन्निर्देवेमात्रादयोनिष्फलाइत्यर्थः । दक्षसूत्रेणलक्ष्यतइ तिपाठेसूत्रेणसूचकेनमुद्रयेतियावत् । यथामुद्रयाकार्षापणविशेषोलक्ष्यतेएवंमात्रादिनाजातिविशेषइत्यर्थः ४० यांतिफलंदातुमितिशेषः ४१ व्यवसायमुद्योगम् ४२ अद्वैधमनसमेकाग्रचित्तम् ४३ विस्मयात्स्मयोगर्वस्तदभावात् ४४ गर्भाद्गर्भप्रवेशमारभ्य यद्यस्मात्तदुभयंशुभाशुभं अपरिहारवान्परिहर्तुमशक्यःकालेनप्राप्तेनविच्छेदिनाजीवननाशकेनसहायेनमृत्युःकर्मांतिकंदिष्टां

शरीरगृहसंज्ञस्यशौचतीर्थस्यदेहिनः ॥ बुद्धिमार्गप्रयातस्यसुखंत्विहपरत्रच ३६ विस्तराःक्लेशसंयुक्ताःसंक्षेपास्तुसुखावहाः ॥ परार्थंविस्तराःसर्वेत्याग मात्महितंविदुः ३७ संकल्पजोमित्रवर्गोज्ञातयःकारणात्मकाः ॥ भार्यापुत्रश्चदासश्चस्वमर्थमुपभुंजते ३८ नमातानपिताकिंचित्कस्यचित्प्रतिपद्यते ॥ दान पथ्योदनोजंतुःस्वकर्मफलमश्नुते ३९ मातापुत्रःपिताभ्राताभार्यामित्रजनस्तथा ॥ अष्टापदपदस्थानेदक्षमुद्रेवलक्ष्यते ४० सर्वाणिकर्माणिपुराकृतानिशुभा शुभान्यात्मनोयांतिजंतोः ॥ उपस्थितंकर्मफलंविदित्वाबुद्धिंतथाचोदयतेंऽतरात्मा ४१ व्यवसायंसमाश्रित्यसहायान्योऽधिगच्छति ॥ नतस्यकश्चिदारंभः कदाचिदवसीदति ४२ अद्वैधमनसंयुक्तंशूरंधीरंविपश्चितम् ॥ नश्रीःसंत्यजतेनित्यमादित्यमिवरश्मयः ४३ आस्तिक्यव्यवसायाभ्यामुपायाद्विस्मयाद्धि या ॥ समारभेदनिंद्यात्मानसोऽर्थःपरिषीदति ४४ सर्वःस्वानिशुभाशुभानिनियतंकर्माणिजंतुःस्वयंगर्भात्संप्रतिपद्यतेतदुभयंयत्तेनपूर्वंकृतम् ॥ मृत्युश्चापरि हारवान्समगतिःकालेनविच्छेदिनादारोश्चूर्णमिवाश्मसारविहितंकर्मांतिकंप्रापयेत् ४५ स्वरूपतामात्मकृतंचविस्तरंकुलान्वयंद्रव्यसमृद्धिसंचयम् ॥ नरोहिसर्वो लभतेयथाकृतंशुभाशुभेनात्मकृतेनकर्मणा ४६ ॥ भीष्मउवाच ॥ इत्युक्तोजनकोराजन्याथातथ्यंमनीषिणा ॥ श्रुत्वाधर्मविदश्रेष्ठःपरांमुदमवाप ह ४७ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि पराशरगीतायां अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥ ॥ पराशरगीतासमाप्ता ॥ ॥ ७ ॥

॥ युधिष्ठिरउवाच ॥ सत्यंदमंक्षमांप्रज्ञांप्रशंसंतिपितामह ॥ विद्वांसोमनुजालेकेकथमेतन्मतंतव १

तंविनाशाख्यंप्रापयेत् । दारोःकाष्ठस्यचूर्णमश्मसारविहितंक्रकचकृतं समाशीतोष्णसाम्यवतीगतिर्यस्यससमगतिर्वायुः दारुचूर्णमिवमृत्युर्नरंकालेनांतंनयतीत्यर्थः । तस्माद्यदृच्छयागतैर न्नादिभिःप्राणान्धारयित्वामोक्षार्थयतनीयमितिसिद्धम् ४५ स्वरूपतांस्वस्यरूपंहिरण्यंपशवोविवाहाइतिश्रुतंरूपमिवरूपंयस्यस्वकुलानुसारिविवाहादिकंतदेवतत्ता आत्मकृतंविस्तरंपुत्रसं तत्यादिपौष्कल्यं कुलान्वयंसत्कुलेजन्म यथाकृतंकृतमनतिक्रम्य यस्मात्सर्वंप्राक्कर्मवशादेवलभ्यतेऽतस्तदर्थंयत्नमकुर्वन्नात्मलाभायपरंयतेतइतिवचनादात्मतत्त्वसाक्षात्कारार्थंयतेतेतिभावः ४६ । ४७ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥ ॥ ७ ॥ ॥ अन्नाद्यर्थंयत्नमकुर्वतायत्कर्तव्यंतं निरूपयितुंहंसगीताआरभ्यते सत्यंदमंक्षमांप्रज्ञामित्यादिना १

२ । ३ । ४ हेद्विजपक्षिन् ५ । ६ मोअमृताशाअमृतभुजोदेवाः तपःस्वधर्माचरणं दमोबाह्येंद्रियनियमः सत्यंयथार्थभाषणं आत्माभिगुप्तिश्चित्तजयः ग्रंथीन्रागादीन् स्ववशेस्वाधीनतां प्रियाप्रिययोर्हर्षविषादौनकर्तव्यावित्यर्थः ७ अरुंतुदोमर्मच्छिन्नृशंसवादीनिष्ठुरवादीचनस्यात् हीनतोनीचात्परंशास्त्ररहस्यंचनाददीत उपतीमकल्याणींदाहकरीं पापलोक्यां

॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्येऽहमितिहासंपुरातनम् ॥ साध्यानामिहसंवादंहंसस्यचयुधिष्ठिर १ हंसोभूत्वाऽथसौपर्णस्त्वजोनित्यःप्रजापतिः ॥ स वैपर्येतिलोकांस्त्रीनथसाध्यानुपागमत् २ ॥ साध्याऊचुः ॥ ॥ शकुनेवयंस्मदेवावैसाध्यास्त्वामनुयुंक्ष्महे ॥ पृच्छामस्त्वांमोक्षधर्मंभवांश्चकिलमोक्षवित् ४ श्रुतोऽसिनःपंडितोधीरवादीसाधुशब्दश्चरतेतेपतत्रिन् ॥ किंमन्यसेश्रेष्ठतमंद्विजत्वंकस्मिन्मनस्तेरमतेमहात्मन् ५ तन्नःकार्यंपक्षिवरप्रशाधियत्कार्याणांमन्यसे श्रेष्ठमेकम् ॥ यत्कृत्वावैपुरुषःसर्वबंधैर्विमुच्यतेविहगेंद्रेहशीघ्रम् ६ ॥ हंसउवाच ॥ इदंकार्यममृताशाःशृणोमितपोदमःसत्यमात्माभिगुप्तिः ॥ ग्रंथीन्विमुच्यहृदयस्यसर्वान्प्रियाप्रियेस्वंवशमानयीत ७ नारुंतुदःस्यान्ननृशंसवादीनहीनतःपरमभ्याददीत ॥ ययास्यवाचापरउद्विजेतनतांवदेदुषतींपापलोक्याम् ८ वाक्सायकावदनान्निष्पतंतियैराहतःशोचतिरात्र्यहानि ॥ परस्यनामर्मसुतेपतंतितान्पंडितोनावसृजेत्परेषु ९ परश्चेदेनमतिवादबाणैर्भृशंविध्येच्छमएवेहकार्यः ॥ संरोष्यमाणःप्रतिहृष्यतेयःसआदत्तेसुकृतंवैपरस्य १० क्षेपायमाणमभिषंगव्यलीकंनिगृह्णातिज्वलितंयश्चमन्युम् ॥ अदुष्टचेतामुदितोऽनसूयुःसआदत्ते सुकृतंवैपरेषाम् ११ आक्रुश्यमानोनवदामिकिंचित्क्षमाम्यहंताड्यमानश्चनित्यम् ॥ श्रेष्ठंह्येतत्यत्क्षमामाहुरार्याःसत्यंतथैवार्जवमानृशंस्यम् १२ वेदस्योपनिषत्सत्यंसत्यस्योपनिषद्दमः ॥ दमस्योपनिषन्मोक्षएतत्सर्वानुशासनम् १३ वाचोवेगंमनसःक्रोधवेगंविधित्सावेगमुदरोपस्थवेगम् ॥ एतान्वेगान्योविषहेदुदीर्णांस्तंमन्येऽहंब्राह्मणंवैमुनिंच १४ अक्रोधनःक्रुध्यतांवैविशिष्टस्तथातितिक्षुरतितिक्षोर्विशिष्टः ॥ अमानुषान्मानुषोवैविशिष्टस्तथाऽज्ञानाज्ज्ञानविद्वैविशिष्टः १५ आक्रुश्यमानोनाक्रुश्येन्मन्युरेनंतितिक्षतः ॥ आक्रोष्टारंनिर्दहतिसुकृतंचास्यविंदति १६ योनात्युक्तःप्राहरूक्षंप्रियंवायोवाहतोनप्रतिहंतिधैर्यात् ॥ पापंचयोनेच्छतितस्यहंतुस्तस्येहदेवाःस्पृहयंतिनित्यम् १७ पापीयसःक्षमेतैवश्रेयसःसदृशस्यच ॥ विमानितोहतोक्रुष्टएवंसिद्धिंगमिष्यति १८ सदाऽहमार्यान्निभृतोऽप्युपासेनमेविधित्सोत्सहतेनरोषः ॥ नवाऽप्यहंलिप्समानःपरैमिनचैवकिंचिद्विषयेणयामि १९

नरकप्रदाम् ८ । ९ । १० क्षेपायमाणमधिक्षेपकारिणं अभिषंगव्यलीकमभिनिवेशवशादप्रियम् ११ । १२ उपनिषद्रहस्यं वेदाधिगमस्यफलंसत्यवचनमित्यर्थः तस्यापिफलंदमः १३ विधित्साविशिष्टापिपासा वेदपानेऽस्यरूपं तृष्णावेगमित्यर्थः ब्राह्मणंब्रह्मिष्ठं मुनिंध्यायिनम् १४ अज्ञानाज्ज्ञानहीनान्मूढात् ज्ञानविद्ब्रह्मविल्लब्धज्ञानोवा १५ । १६ अत्युक्तोऽस्यंतंनिंदितःस्तुतोवारूक्षंप्रियंवानप्राहेतियोऽयं तस्यस्पृहयंतितंलिप्संतेइत्यर्थः १७ । १८ निभृतोऽपिपूर्णोऽपि विधित्सातृष्णा उत्सहतेउल्लसति परैमिधर्मादपगच्छामि विषयेणविषयकामार्थनयामि देवतादिकंमार्थयामि १९



ब्रह्ममहत् २० । २१ उत्सेधनउत्तंभनकरः ब्रह्मांडमंडपस्तंभभूतइत्यर्थः २२ नैर्गुण्यंदोषं अनुयुंजकाःस्पर्धावंतः २३ इदंसर्वमेतस्यसर्वस्यफलं २४ अबुधानाक्रोष्टॄन्शुनकानिवनबोधयेत् नवर्धयेन्नहिंसयेत् २५ । २६ । २७ । २८ अस्पृहयन्परेषामाशांजितवान् २९ वत्सश्चतुरःस्तनानिवैनान्सत्यादीननुपदोक्तान्नवाऽनुचरेत् सत्यंदमंक्षमांप्रज्ञामित्युपक्रांतान्वाचतुःसंख्यान् आचक्षेकथयामि पारावारस्यसमुद्रस्य ३० । ३१ । ३२ यादृशैरितिश्लोकंव्याचष्टे यदीति ३३ मानुषंविषयंभोगंद्रष्टुमपिनेच्छंति विनाशित्वात्तस्येत्यर्थः तदेवाहइंदुरमृतमयोऽपिनसमर्गकितृपचयापचयधर्मा । तथावायुरप्यसमएव मंदमध्यमतीव्रभेदात् । एवंसर्वविषयसुखावचमुपचयापचयवंतंयोवेदसएववेदनान्यइत्यर्थः ३४ अदुष्टंरागद्वेषशून्यंयथास्यात्तथार्थं

नाहंशप्तःप्रतिशपामिकंचिद्दमंद्वारंह्यमृतस्येहवेद्मि ॥ गुह्यंब्रह्मतदिदंब्रवीमिनमानुषाच्छ्रेष्ठतरंहिकिंचित् २० निर्मुच्यमानःपापेभ्योघनेभ्यइवचंद्रमाः ॥ विरजाःकालमाकांक्षन्धीरोधैर्येणसिध्यति २१ यःसर्वेषांभवतिह्यर्चनीयउत्सेधनस्तंभइवाभिजातः ॥ यस्मैवाचंसुप्रसन्नांवदंतिसवैदेवान्गच्छतिसंयतात्मा २२ नतथावक्तुमिच्छंतिकल्याणान्पुरुषेगुणान् ॥ यथैषांवक्तुमिच्छंतिनैर्गुण्यमनुयुंजकाः २३ यस्यवाङ्मनसीगुप्तेसम्यक्प्रणिहितेसदा ॥ वेदास्तपश्चत्यागश्चसइदंसर्वमाप्नुयात् २४ आक्रोशनविमानाभ्यांनाबुधान्बोधयेद्बुधः ॥ तस्मान्नवर्धयेदन्यंनचात्मानंविहिंसयेत् २५ अमृतस्येवसंतृप्येदवमानस्यपंडितः ॥ सुखंह्यवमतःशेतेयोऽवमंतासनश्यति २६ यत्क्रोधनोयजतियद्ददातियद्वातपस्तप्यतियज्जुहोति ॥ वैवस्वतस्तद्धरतेऽस्यसर्वंमोघःश्रमोभवतिहिक्रोधनस्य २७ चत्वारियस्यद्वाराणिसुगुप्तान्यमरोत्तमाः ॥ उपस्थमुदरंहस्तौवाक्चतुर्थीसधर्मवित् २८ सत्यंदमंह्यार्जवमानृशंस्यंधृतिंतितिक्षामतिसेवमानः ॥ स्वाध्यायनित्योस्पृहयन्परेषामेकांतशील्यूर्ध्वगतिर्भवेत्सः २९ सर्वांश्चैनाननुचरन्वत्सवच्चतुरःस्तनान् ॥ नपावनतमंकिंचित्सत्यादध्यगमंक्वचित् ३० आचक्षेऽहंमनुष्येभ्योदेवेभ्यःप्रतिसंचरन् ॥ सत्यंस्वर्गस्यसोपानंपारावारस्यनौरिव ३१ यादृशैःसंनिवसतियादृशांश्चोपसेवते ॥ यादृगिच्छेच्चभवितुंतादृग्भवतिपूरुषः ३२ यदिसंतंसेवतियद्यसंतंतपस्विनंयदिवास्तेनमेव ॥ वासोयथारंगवशंप्रयातितथासतेषांवशमभ्युपैति ३३ सदादेवाःसाधुभिःसंवदंतेनमानुषंविषयंयांतिद्रष्टुम् ॥ नेंदुःसमःस्यादसमोहिवायुरुच्चावचंविषयंयःसवेद ३४ अदुष्टंवर्तमानेतुहृदयांतरपूरुषे ॥ तेनैवदेवाःप्रीयंतेसतांमार्गस्थितेनवै ३५ शिश्नोदरेयेनिरताःसदैवस्तेनानरावाक्परुषाश्चनित्यम् ॥ अपेतदोषानपितान्विदित्वादूराद्देवाःसंपरिवर्जयंति ३६ नवैदेवाहीनसत्वेनतोष्याःसर्वाशिनादुष्कृतकर्मणावा ॥ सत्यव्रतायेतुनराःकृतज्ञाधर्मेरतास्तैःसहसंभजंते ३७ अव्याहृतंव्याहृताच्छ्रेयआहुःसत्यंवदेद्व्याहृतंतद्द्वितीयम् ॥ धर्मंवदेद्व्याहृतंतत्तृतीयंप्रियंवदेद्व्याहृतंतच्चतुर्थम् ३८

तरंपूर्वेऽन्तर्यामिणिवर्तमानेसतितेनैवांतर्यामिणाज्ञातेनदेवाःप्रीयंते कीदृशेन अधिकारावस्थायांसतांमार्गेस्थितेन योऽन्तर्यामीसएवजीवइत्यर्थः तथाचश्रुतयः । 'अयमात्माब्रह्मअहंब्रह्मास्मितत्त्वमसि'इत्याद्याजीवब्रह्मणोरभेदप्रतिपादिकाः ३५ अपेतदोषान्प्रायश्चित्तेनेतिशेषः ३६ हीनसत्वेननीचबुद्धिना संभजंतेसुखंविभज्यसेवंते ३७ अव्याहृतंमौनंश्रेयःप्रथममितिशेषः यत्सत्यंवदेत्तद्द्वितीयंश्रेयइतिव्याहृतंसद्भिरितिशेषः मौनादपिश्रेष्ठमित्यर्थः एवमग्रेऽपियोज्यं ३८

एवंचेत्सर्वेकुतःश्रेयएवनाचरंतीत्याशयेनपृच्छंति केनेति ३९ । ४० नष्टाज्ञानस्यलक्षणंप्रकारचतुष्टयेनप्रश्नपूर्वकमाह कःस्विदिति ४१ । ४२ देवत्वंदेवत्वहेतुःएवमग्रेऽपि ४३ । ४४ क्षेत्रंस्थूलसूक्ष्मभेदेनद्विविधं तत्कर्मणांवयोवस्थाद्यभ्यासोपजीविनांयोनिःकारणं सद्भावःसत्तामाश्रंयत्ततत्सत्यमबाधितं तेनक्षेत्रस्यबाधितत्वमुक्तंभवति विशेषविधिनिषेधयोःशेषनिषेधा भ्यनुज्ञाफलकत्वनियमात् ४५ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे नवनवत्यधिकद्विशततमोऽध्यायः ॥ २९९ ॥ ॥ एवंपराशरहंसगीताभ्यामविका रिविशेषणान्युक्तांतेसांख्यमतमनुरुध्यसद्भावःसत्यमुच्यतइतिसत्तामात्रमबाध्यंजिज्ञास्यमुपक्षिप्तमितरस्यबाध्यत्वंसूचितं । तच्चप्रकृतिपरमार्थतावादिनांयोगानांमतेविरुद्धमितिमत्वासंदिहा नःसांख्ययोगयोर्विशेषंपृच्छति सांख्यइति १ अत्रसांख्यंनामऐकात्म्यज्ञानंइदंसर्वंयदयमात्मेतिश्रुतिप्रसिद्धंनतुकापिलेषष्टितंत्राख्यं 'संहृत्यसर्वंनिजदेहसंस्थंकृत्वासुशेतेजगदंतरात्मा'इत्युपसं हारात् । षष्टितंत्रेतुप्रधानेएवसर्वलयोनत्वंतरात्मनीतिप्रसिद्धं योगमतेतुनानात्मवादोजीवेश्वरयोर्भेदश्च । अत्रैवानीश्वरःकथंमुच्येदित्यादि गुरुंतदस्यमीश्वरंविनामोक्षदौर्लभ्यसूचनात्

साध्याऊचुः ॥ केनायमावृतोलोकःकेनवानप्रकाशते ॥ केनत्यजतिमित्राणिकेनस्वर्गंनगच्छति ३९ ॥ हंसउवाच ॥ अज्ञानेनावृतोलोकोमात्सर्यान्नप्रकाशते ॥ लोभात्त्यजतिमित्राणिसंगात्स्वर्गंनगच्छति ४० ॥ साध्याऊचुः ॥ कःस्विदेकोरमतेब्राह्मणानांकःस्विदेकोबहुभिर्जोषमास्ते ॥ कःस्विदेकोबलवान्दुर्बलोऽपिकः स्विदेषांकलहंनान्ववैति ४१ ॥ हंसउवाच ॥ प्राज्ञएकोरमतेब्राह्मणानांप्राज्ञश्चैकोबहुभिर्जोषमास्ते ॥ प्राज्ञएकोबलवान्दुर्बलोऽपिप्राज्ञएषांकलहंनान्ववैति ४२ ॥ साध्याऊचुः ॥ किंब्राह्मणानांदेवत्वंकिंचसाधुत्वमुच्यते ॥ असाधुत्वेचकिंतेषांकिमेषांमानुषंमतम् ४३ ॥ हंसउवाच ॥ स्वाध्यायएषांदेवत्वंव्रतंसाधुत्वमुच्यते असाधुत्वंपरिवादोमृत्युर्मानुष्यमुच्यते ४४ ॥ भीष्मउवाच ॥ संवादइत्ययंश्रेष्ठःसाध्यानांपरिकीर्तितः ॥ क्षेत्रंवैकर्मणांयोनिःसद्भावःसत्यमुच्यते ४५ ॥ इतिश्री म० शां० मो० हंसगीतासमाप्तौनवनवत्यधिकद्विशततमोऽध्यायः ॥ २९९ ॥ ॥ युधिष्ठिरउवाच ॥ सांख्येयोगेचमेतातविशेषंवक्तुमर्हसि ॥ तवधर्मज्ञसर्वं हिविदितंकुरुसत्तम १ ॥ भीष्मउवाच ॥ सांख्याःसांख्यंप्रशंसंतियोगायोगंद्विजातयः ॥ वदंतिकारणंश्रेष्ठंस्वपक्षोद्भावनायवै २ अनीश्वरःकथंमुच्येदित्येवंशत्रुक र्शन ॥ वदंतिकारणंश्रेष्ठंचयोगाःसम्यङ्मनीषिणः ३

कारणंहेतुः युक्तिरितियावत् स्वपक्षोद्भावनायस्वपक्षोत्कर्षाय २ युक्तिमेवाहानीश्वरइति । 'एषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषते ॥ एषह्येवासाधुकर्मकारयतितंयमधो निनीषते । अज्ञोजंतुरनीशोऽयमात्मनःसुखदुःखयोः ॥ ईश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववा'इतिश्रुतिस्मृतिभ्यांक्षित्यंकुरादिकंसकर्तृकंकार्यत्वाद्घटवदितियुक्त्यनुगृहीताभ्यामस्तितटस्थईश्वरस्त दभावेहिस्वतंत्रश्चेतनोऽनिष्टजनकेकर्मणिमप्रवर्तेत । प्रवर्ततेचेद्विद्वानप्यतोऽस्तिकश्चिच्चेतनोऽधिष्ठाता । नचकर्मणःप्रेरकत्वंसंभवति तस्यप्रकृतिकार्यस्यप्रवर्तकत्वायोगात् तथाचपातंजलं सूत्रं । निमित्तमप्रयोजकंप्रकृतीनामावरणभेदस्तुततःक्षेत्रिकवदिति । निमित्तंपुण्यपापात्मकंकर्मप्रकृतीनांगुणानांप्रयोजकंनभवति।किंतर्हिजलवत्स्वयंप्रवर्तकत्वायांप्रकृतौकेदारिकवदावर णभंगायैवकर्माण्युपयुज्यंते । यथादुरदृष्टप्रतिबद्धागुणाःप्रातिकूल्येनपरिणमंतेसदृष्टेनतुतद्विपरीतंक्रियतइतिसूत्रार्थः । तस्मादयस्कांतमणिवदुदासीनोऽपीश्वरःस्वसत्तामात्रेणप्रधानंप्रवर्त यन्भक्ताननुगृह्णाति । अतोमोक्षप्रदाताईश्वरोऽवश्यमस्तीतिज्ञेयमितियोगानांयुक्तिः ३



सांख्यानांयुक्तिमाहवदंतीतिद्वाभ्यां सर्वागतीर्विज्ञायसाक्षात्कृत्य । सांख्यमतेहियथास्फटिकःस्वतःशुद्धोजपाकुसुमसान्निध्याद्रक्तःसएवस्फटिकांशेधीप्रमोपिप्रत्ररागःसोऽपिचंद्रिकायामिंद्रनी लइत्यध्यासपरंपरा । तथाचिदात्मास्वतःशुद्धोमायायोगादीश्वरोऽविद्ययाब्रह्मधीप्रमोपेसूत्रात्माअविद्याप्राबल्येविराट् । अतिप्राबल्येविश्वोव्यष्टिदेहमात्राभिमानी तत्रयथावटांतर्ग तादीपप्रभाघटमात्रंभासयतिघटच्छिद्राद्बहिर्गतांकंचिद्वनगतंविषयंसर्वात्मनाघटाद्बहिर्गताकृत्स्नंभवनोदरंव्याप्नोतितथाप्रत्यक्छितिर्देहावृतादेहमात्रंभासयतिदेहेंद्रियादिद्वारादेहाद्बहिर्गतासती ब्रह्मांडांतर्गतंकंचिच्छब्दादिकंविषयंगुरूक्तयुक्त्याप्रत्यक्प्रवणस्यसर्वात्मनादेहाध्यासनिवृत्तौकृत्स्नंत्रिभुवनोदरंव्याप्नोतितदानीमयंसर्वात्मकोविराडस्मीत्यभिमन्यते । ततोऽविद्यायास्ता नवेसूत्रात्माऽस्मीतितस्यावशेषेईशोऽस्मीतिमायायाश्चविनाशेशुद्धचिन्मात्रात्मनादीप्यतइत्ययमनुभवक्रमः । तत्रविश्वस्यविराट्सूत्रेशशुद्धप्रापिकाःक्रमेणचतस्रोगतयस्ताःसर्वाःसाक्षात्कृ ताश्चेत्सूक्ष्मंसूक्ष्मतरांव्यक्तंदेहादिहचतुष्टयादूर्ध्वंब्रह्मविन्मुच्येत । ब्रह्मण्यज्ञानबलक्रमेणेशादिविश्वांताध्यासस्तत्तानवक्रमेणनश्यतिचपूर्वपूर्वरूपमुपतिष्ठति । सर्वात्मनास्वध्यासनिवृत्तौ स्फटिकवदनुपाधिप्रत्यक्प्रकाशतइत्यनुभवबलादेवसिद्धत्वात्किंतटस्थेश्वरेणांतर्गडुनेतिसांख्यामन्यंते ४ । ५ स्वपक्षइति पूर्वपक्षद्वयेऽपियुक्तौसत्यांयःस्वस्यसंमतःपक्षस्तद्विषयैवयुक्तिर्ग्रा ह्या वचनमपीश्वरमतेमागुदाहृतमेव श्रमयेस्वस्वपक्षे । सांख्यमतेऽपिअयमात्माब्रह्म सोऽयमात्मा चतुष्पादित्युपक्रम्यविश्वतैजसप्राज्ञान्जाग्रत्स्वप्नसुषुप्ताभिमानिनःक्रमेणनिर्दिश्यशिवम

वदंतिकारणंचेदंसांख्याःसम्यग्द्विजातयः ॥ विज्ञायेहगतीःसर्वाविरक्तोविषयेषुयः ४ ऊर्ध्वंसदेहात्सुव्यक्तंविमुच्येदितिनान्यथा ॥ एतदाहुर्म हाप्राज्ञाःसांख्यंवैमोक्षदर्शनम् ५ स्वपक्षेकारणंग्राह्यंसमर्थंवचनंहितम् ॥ शिष्टानांहिमतंग्राह्यंत्वद्विधैःशिष्टसंमतैः ६ प्रत्यक्षहेतवोयोगाः सांख्याःशास्त्रविनिश्चयाः ॥ उभेचैतेमतेतत्त्वेममतातयुधिष्ठिर ७ उभेचैतेमतेज्ञातेनृपतेशिष्टसंमते ॥ अनुष्ठितेयथाशास्त्रंनयेतांपरमांगतिम् ८ तुल्यंशौचंतपोयुक्तंदयाभूतेषुचानघ ॥ व्रतानांधारणंतुल्यंदर्शनंनसमंतयोः ९

द्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञेयइतिशुद्धात्मनोज्ञेयत्वपरं तत्रैवमाज्ञंप्रकृत्यैषसर्वेश्वरइत्याद्याम्नानात्प्रतीचोऽन्यईशोऽस्तीतिगम्यते तत्रापिस्वपक्षानुसारियद्वचनंतदेवहितं ६ किंतच्छिष्ट संमतमित्याकांक्षायांद्वयमपिहेतुविशेषयोःसमबलत्वात्सममेवेत्याह प्रत्यक्षेति कंठकूपेक्षुत्पिपासानिवृत्तिरित्यादिकंतत्रतत्रधारणाफलंयोगपक्षेप्रत्यक्षमेवप्रामाण्यहेतुः । सांख्यपक्षेतुपूर्वोदा हृतंशास्त्रमेवास्ति अतःश्रुतिप्रत्यक्षयोस्तुल्यबलत्वाद्द्वयमपिशिष्टसंमतमेवेत्यर्थः ७ फलस्याविसंवादादपिद्वयोःसाम्यमाह उभेचैतेइति ८ फलैक्येहेतुसाधनैक्यमाह तुल्यमिति व्रतानामहिंसा सत्यास्तेयादीनां नह्येकरूपेसाधनेगतिद्वयंसंभवतिनापिद्वयोर्गत्योःपरमत्वंसंभवत्यतउभयप्राप्यापकैवगतिः यथोक्तंभगवता । 'यत्सांख्यैःप्राप्यतेस्थानंतद्योगैरपिगम्यते'इति । कुतर्हितयोर्विसं वादइत्यतआह दर्शनंनसमंतयोरिति दर्शनंशास्त्रं अयमर्थः । महदादिसकारणंजगद्रज्ज्वांसर्पइवात्मन्यध्यस्तंतत्सम्यगवेक्षणलक्षणेनाधिष्ठानज्ञानेनबाधितंचेत्संसारस्यसबीजस्योच्छेदोभवती तिसांख्याः । योगास्तुहेयंदुःखमनागतमितिहेयंवस्तूपन्यस्यद्रष्टृदृश्ययोःसंयोगोहेयहेतुरितितन्निमित्तमुक्तं । तथाचमहदादिदृश्याकारवृत्तिनिरोधेनद्रष्टृदृश्ययोर्वियोगेसतिद्रष्टुर्वृत्तिसारूप्याभावा त्स्वरूपेऽवस्थितिःकैवल्यंभवति । यथोक्तंयोगश्चित्तवृत्तिनिरोधस्तदाद्रष्टुःस्वरूपेऽवस्थानंवृत्तिसारूप्यमितरत्रेति । एवंचहेतुनाशेकार्यनाशाज्जगतोमिथ्यात्वनिरूपणंव्यर्थमितिमन्यंतेइति यथोक्तंवासिष्ठे 'द्वौक्रमौचित्तनाशस्ययोगोज्ञानंचराघव ॥ योगोवृत्तिनिरोधोहिज्ञानंसम्यगवेक्षणं ॥ असाध्यःकस्यचिद्योगःकस्यचित्तत्त्वनिश्चयः ॥ प्रकारौद्वौततोदेवोजगादपरमःशिवः'इति ९

फलसाधनयोरैक्येकिमर्थोऽयंशास्त्रभेदइतिशंकते यदीति १० उत्तरमाह रागमिति अयंभावः । ज्ञानपक्षेवस्तुतत्त्वदर्शनेनसकृदपिबाधितस्यद्वैतसत्यत्वसंस्कारस्यपुनरुदयोनभवति प्रतिबिंबादिवत्तन्मिथ्यात्वनिश्चयात् । तथाचरागाद्यनुदयान्नकर्मनापिदेहोनापितज्जंदुःखंचभवतिसंसारकारणाभावात्सुखेनमुच्यतेष यथोक्तं । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायेतदनंतरापायादपवर्गइति । योगपक्षेतुनिरोधसंस्कारबलेनैवदृश्यसंस्कारोपमर्दःकार्यः ततश्चरागाद्युच्छेदक्रमेणमुच्यते तदभावेत्वसकृन्निरोधाभ्यासेऽपिरागाद्याक्रांततयायोगाद्भ्रश्यतीतियोगमार्गेमोक्षेविघ्नसंभावनाऽस्तीतिनासौमुख्यइति ११ एतदेवमहामत्स्याद्यनेकदृष्टांतैरुपपादयति यथाचेत्यादिना अनिमिषामत्स्याः योगशब्दोऽत्रप्रायेणमत्वर्थीयोऽप्रत्ययांतोयो

॥ युधिष्ठिरउवाच ॥ यदितुल्यंव्रतंशौचंदयाचात्रफलंतथा ॥ नतुल्यंदर्शनंकस्मात्तन्मेब्रूहिपितामह १० ॥ भीष्मउवाच ॥ रागंमोहंतथास्नेहंकामंक्रोधंचकेवलम् योगाच्छित्त्वाततोदोषान्पंचैतान्प्राप्नुवंतितत् ११ यथाचानिमिषाःस्थूलाजालंछित्त्वापुनर्जलम् ॥ प्राप्नुवंतितथायोगास्तत्पदंवीतकल्मषाः १२ तथैववागुरांच्छित्त्वाबलवंतोयथामृगाः ॥ प्राप्नुयुर्विमलंमार्गंविमुक्ताःसर्वबंधनैः १३ लोभजानितथाराजन्बंधनानिबलान्विताः ॥ छित्त्वायोगाःपरंमार्गंगच्छंतिविमलंशिवम् १४ अबलाश्चमृगाराजन्वागुरासुतथापरे ॥ विनश्यंतिनसंदेहस्तद्वद्योगबलादृते १५ बलहीनाश्चकौंतेययथाजालंगताझषाः ॥ वधंगच्छंतिराजेंद्रयोगास्तद्वत्सुदुर्बलाः १६ यथाचशकुनाःसूक्ष्मंप्राप्यजालमरिंदम ॥ तत्रसक्ताविपद्यंतेमुच्यंतेचबलान्विताः १७ कर्मजैर्बंधनैर्बद्धास्तद्वद्योगाःपरंतप ॥ अबलावैविनश्यंतिमुच्यंतेचबलान्विताः १८ अल्पकश्चयथाराजन्वह्निःशाम्यतिदुर्बलः ॥ आक्रांतइंधनैःस्थूलैस्तद्वद्योगोऽबलःप्रभो १९ सएवचयदाराजन्वह्निर्जातबलःपुनः ॥ समीरणगतःक्षिप्रंदहेत्कृत्स्नांमहीमपि २० तद्वज्जातबलोयोगीदीप्ततेजामहाबलः ॥ अंतकालइवादित्यःकृत्स्नंसंशोषयेज्जगत् २१ दुर्बलश्चयथाराजन्स्रोतसाह्रियतेनरः ॥ बलहीनस्तथायोगोविषयैर्ह्रियतेवशः २२ तदेवचमहास्रोतोविष्टंभयतिवारणः ॥ तद्वद्योगबलंलब्ध्वाव्यूहतेविषयान्बहून् २३ विशंतिचावशाःपार्थयोगाद्योगबलान्विताः ॥ प्रजापतीनृषीन्देवान्महाभूतानिचेश्वराः २४ नयमोनांतकःक्रुद्धोनमृत्युर्भीमविक्रमः ॥ ईशतेनृपतेसर्वेयोगस्यामिततेजसः २५ आत्मनांचसहस्राणिबहूनिभरतर्षभ ॥ योगःकुर्याद्बलंप्राप्यतैश्चसर्वैर्महींचरेत् २६ प्राप्नुयाद्विषयान्कश्चित्पुनश्चोग्रंतपश्चरेत् ॥ संक्षिपेच्चपुनस्तातसूर्यस्तेजोगुणानिव २७ बलस्थस्यहियोगस्यबंधनेशस्यपार्थिव ॥ विमोक्षेप्रभविष्णुत्वमुपपन्नमसंशयम् २८ बलानियोगप्राप्तानिमयैतानिविशांपते ॥ निदर्शनार्थंसूक्ष्माणिवक्ष्यामिचपुनस्तव २९

गिपरःप्रकरणाज्ज्ञेयः १२ वागुरांपाशवर्तीस्नायुरज्जुं १३ । १४ । १५ । १७ । १८ योगोऽबलःयोगीनिर्बलः १९ । २० । २१ । २२ व्यूहतेविक्षिपतितुच्छीकरोतीत्यर्थः २३ अवशाः स्वतंत्राः २४ स्वातंत्र्यमेवाह नयमइति २५ प्रत्यक्षहेतवोयोगाइतिस्वोक्तिंव्याचष्टे आत्मनामिति आत्मनांदेहानां सपकधामवतित्रिधामवतीत्यादिकायव्यूहस्यवेदेऽपिश्रवणात् । सौभर्यादिवद्युगपदनेकदेहधारणंयोगिनांदृष्टमित्यर्थः २६ कश्चित्कश्चिदुग्रमितिमूलपाठः २७ उपपादितमर्थंनिगमयतिबलस्थस्येति बंधनेशस्यबंधनंछेत्तुंसमर्थस्य २८ मयाउक्तानीतिशेषः ११



समाधिसिद्ध्यर्थंधारणानाम्याद्यन्यतमेदेशेचित्तस्यस्थिरीकरणं तांप्रतितद्विषये निदर्शनानिदृष्टांतान् ३० । ३१ पात्रेशिरसिस्थिते ३२ । ३३ । ३४ । ३५ । ३६ दार्ष्टांतिकमाह तथैवेति ३७ आत्मन्यात्मानंप्रवेश्यवृत्तिसारूप्यंत्यक्त्वेत्यर्थः पुनीतानांनहिज्ञानेनसदृशंपवित्रमिहविद्यतइतिस्मृतेर्ज्ञानेनपवित्राणांसांख्यानामित्यर्थः ३८ नाभ्यांमणिपूरे कंठेविशुद्धौ शीर्षेसहस्रारे हृदिअनाहते एतच्चाऽऽज्ञादिचक्राणामुपलक्षणं एतेआंतराधारणाविषयाः । वक्षःप्रभृतयोदेहावयवाबाह्याः । एतेतालुनिरसंविदित्यादियोगशास्त्रप्रसिद्धतात्वादीनामुपलक्षणं । दर्शनेबाह्यतरेसूर्यरश्म्यादौ । श्रवणेअनाहतध्वनौ । घ्राणेनासाग्रेदृष्टिधारणं । अत्रयोगानुष्ठानप्रयोगोवेदस्तुतिटीकायांचतुर्दशेश्लोकेऽस्माभिःप्रदर्शितोऽनुसंधेयः ३९ अहिंसादयएवजातिदेशकालसमयानवच्छिन्नाःसार्वभौमामहाव्रतमित्युच्यंते । तत्रपाठीनरोहितावाद्यौप्रशस्तौहव्यकव्ययोरितिस्मृतेः पाठीनादीनेवभक्षयिष्येनमत्स्यान् । 'भ

आत्मनश्चसमाधानेधारणांप्रतिवाविभो ॥ निदर्शनानिसूक्ष्माणिशृणुमेभरतर्षभ ३० अप्रमत्तोयथाधन्वीलक्ष्यंहंतिसमाहितः ॥ युक्तःसम्यक्तथायोगीमोक्षंप्राप्नोत्यसंशयम् ३१ स्नेहपूर्णेयथापात्रेमनआधायनिश्चलम् ॥ पुरुषोयुक्तआरोहेत्सोपानंयुक्तमानसः ३२ युक्तस्तथाऽयमात्मानंयोगःपार्थिवनिश्चलम् ॥ करोत्यमलमात्मानंभास्करोपमदर्शनम् ३३ यथाचनावंकौंतेयकर्णधारःसमाहितः ॥ महार्णवगतांशीघ्रंनयेत्पार्थिवसत्तम ३४ तद्वदात्मसमाधानंयुक्त्वायोगेनतत्त्ववित् ॥ दुर्गमंस्थानमाप्नोतिहित्वादेहमिमंनृप ३५ सारथिश्चयथायुक्त्वासदश्वान्सुसमाहितः ॥ देशमिष्टंनयत्याशुधन्विनंपुरुषर्षभ ३६ तथैवनृपतेयोगीधारणासुसमाहितः ॥ प्राप्नोत्याशुपरंस्थानंलक्ष्यंमुक्तइवाशुगः ३७ आवेश्यात्मनिचात्मानंयोगीतिष्ठतियोऽचलः ॥ पापंहंतिपुनीतानांपदमाप्नोतिसोऽजरम् ३८ नाभ्यांकंठेचशीर्षेचहृदिवक्षसिपार्श्वयोः ॥ दर्शनेश्रवणेचापिघ्राणेचामितविक्रम ३९ स्थानेष्वेतेषुयोयोगीमहाव्रतसमाहितः ॥ आत्मनासूक्ष्ममात्मानंयुंक्तेसम्यग्विशांपते ४० सशीघ्रमचलप्रख्यंकर्मदग्ध्वाशुभाशुभम् ॥ उत्तमंयोगमास्थाययदीच्छतिविमुच्यते ४१ ॥ युधिष्ठिरउवाच ॥ आहारान्कीदृशान्कृत्वाकानिजित्वाचभारत ॥ योगीबलमवाप्नोतितद्भवान्वक्तुमर्हति ४२ ॥ भीष्मउवाच ॥ कणानांभक्षणेयुक्तःपिण्याकस्यचभारत ॥ स्नेहानांवर्जनेयुक्तोयोगीबलमवाप्नुयात् ४३ भुंजानोयावकंरूक्षंदीर्घकालमरिंदम ॥ एकाहारोविशुद्धात्मायोगीबलमवाप्नुयात् ४४ पक्षान्मासानृतूंश्चैतान्संवत्सरानहस्तथा ॥ अपःपीत्वापयोमिश्रायोगीबलमवाप्नुयात् ४५ अखंडमपिवामांसंसततंमनुजेश्वर ॥ उपोष्यसम्यक्शुद्धात्मायोगीबलमवाप्नुयात् ४६

क्ष्यांश्चकामतोजग्ध्वापुनःसंस्कारमर्हति'इतिमत्स्यभक्षणेप्रायश्चित्तगौरवस्मृतेः । सोऽयंहिंसायांजात्यवच्छेदः पाठीनादीनप्यतीर्थेष्वेवहिंसिष्येनतीर्थेइतिदेशावच्छेदः । अतीर्थेऽपिदर्शादिव्यतिरिक्तएवकालेहिंसिष्येनान्यदेतिकालावच्छेदः । तत्रापिश्राद्धार्थमेवहिंसिष्येनात्मार्थमितिसमयावच्छेदः । एतैरनवच्छिन्नाःसर्वात्मनाऽपिहिंसात्यागात् । अनापद्यापदिवातस्यागःसोऽयंमहाव्रतमित्युच्यते । एवंसत्येअस्तेयेब्रह्मचर्येअपरिग्रहेचमहाव्रतमुदाहर्तव्यं ४० यदीच्छतीतियोगिनःस्वेच्छयाब्रह्मलोकादौगमनंविदेहकैवल्यंदेहधारणंचेतिदर्शितं ४१ । ४२ ४३ यावकंजलेऽष्मपक्वंयवान्नंयवपिष्टमयंवाभक्ष्यं ४४ पयोमिश्राःक्षीरमिश्राः ४५ अखंडंसर्वकालंमासमुपोष्यत्यक्त्वा मासमित्यन्येषामप्युपलक्षणं यथोक्तंहठयोगे 'मांसंदधिकुलित्थंचलशुनंशाकमेवच ॥ कट्वम्लतिक्तपिण्याकहिंगुसौवीरसर्षपाः ॥ तैलंचवर्ज्यान्येतानियमतोयोगिनासदा ॥ पुनरुष्णीकृतंद्रव्यमहितंचेतिकेचन'इति ४६

पौरुषान्पुरुषप्रियान्शब्दान् ४७ अरतिःस्त्रीसंगाभावजमस्वास्थ्यं स्पर्शःस्त्र्यादिसंयोगजंसुखं ४८ दीपयंतिप्रकाशयंति आत्मानंत्वंपदार्थं आत्मनाबुद्ध्या । दृश्यतेत्वग्र्ययाबुद्ध्येतिश्रुतेः ध्यानंध्येयाकारप्रत्ययप्रवाहः तत्रप्रत्ययैकतानताध्यानमितिसूत्रं अध्ययनंप्रणवजपः यथोक्तं । 'जपाच्छ्रांतःपुनर्ध्यायेद्ध्यानाच्छ्रांतःपुनर्जपेत् । जपध्यानपरिश्रांतआत्मानंच विचारयेत्'इति ४९ यःकश्चिदित्यनेनात्राधिकारिदौर्लभ्यमुक्तं ५० । ५१ । ५२ । ५३ सुस्थेयंसुखेनस्थातुंशक्यं ५४ नशुभांरोगाद्याघातवर्ती ५५ । ५६ योगेषुयोगशास्त्रेषु

कामंजित्वातथाक्रोधंशीतोष्णेवर्षमेवच ॥ भयंशोकंतथाश्वासंपौरुषान्विषयांस्तथा ४७ अरतिंदुर्जयांचैवघोरांतृष्णांचपार्थिव ॥ स्पर्शंनिद्रांतथातंद्रींदुर्जयांनृपसत्तम ४८ दीपयंतिमहात्मानःसूक्ष्ममात्मानमात्मना ॥ वीतरागामहाप्राज्ञाध्यानाध्ययनसंपदा ४९ दुर्गस्त्वेषमहापंथाब्राह्मणानांविपश्चिताम् ॥ यःकश्चिद्व्रजतिह्यस्मिन्क्षेमेणभरतर्षभ ५० यथाकश्चिद्वनंघोरंबहुसर्पसरीसृपम् ॥ श्वभ्रवत्तोयहीनंचदुर्गमंबहुकंटकम् ५१ अभक्ष्यमटवीप्रायंदावदग्धमहीरुहम् पंथानंतस्कराकीर्णंक्षेमेणाभिपतेद्युवा ५२ योगमार्गंतथाऽऽसाद्ययःकश्चिद्व्रजतेद्विजः ॥ क्षेमेणोपरमेन्मार्गाद्बहुदोषोहिसस्मृतः ५३ सुस्थेयंक्षुरधारासुनिशितासुमहीपते ॥ धारणासुतुयोगस्यदुःस्थेयमकृतात्मभिः ५४ विपन्नाधारणास्तातनयंतिनशुभांगतिम् ॥ नेतृहीनायथानावःपुरुषानर्णवेनृप ५५ यस्तुतिष्ठतिकौंतेयधारणासुयथाविधि ॥ मरणंजन्मदुःखंचसुखंचसविमुंचति ५६ नानाशास्त्रेषुनिष्पन्नंयोगेष्विदमुदाहृतम् ॥ परंयोगस्ययत्कृत्यंनिश्चितंतद्द्विजातिषु ५७ परंहितद्ब्रह्ममयंमहात्मन्ब्रह्माणमीशंवरदंचविष्णुम् ॥ भवंचधर्मंचषडाननंचयद्ब्रह्मपुत्रांश्चमहानुभावान् ५८ तमश्चकष्टंसुमहद्रजश्चसत्वंविशुद्धंप्रकृतिंपरांच ॥ सिद्धिंचदेवींवरुणस्यपत्नींतेजश्चकृत्स्नंसुमहच्चधैर्यम् ५९ ताराधिपंखेविमलंसतारंविश्वांश्चदेवानुरगान्पितृंश्च ॥ शैलांश्चकृत्स्नानुदधींश्चघोरान्नदीश्चसर्वाःसवनान्घनांश्च ६० नागान्नगान्यक्षगणान्दिशश्चगंधर्वसंघान्पुरुषान्स्त्रियश्च ॥ परस्परंप्राप्यमहान्महात्माविशेतयोगीनचिराद्विमुक्तः ६१

कृत्यंकर्तुं योग्यंफलमितियावत् ५७ ब्रह्मब्रह्मविष्ण्वादिस्रष्टृतुर्यंमूर्तिरूपंतत्प्रधानंपरंकैवल्यात्मकंयोगफलं तथाब्रह्मविष्ण्वादिभावोऽपियोगफलमित्यर्थः महानुभावान्ऋषभकपिलादीन् ५८ तमोरजसीलयविक्षेपौयोगविघ्नौ सत्वंचधर्मज्ञानैश्वर्योपगमंमाभूदितिविशुद्धमित्युक्तं आत्मतत्वप्रकाशकत्वंविशुद्धता विशेतयोगीत्यपकृष्यते परांप्रकृतिंप्रकृतिलयत्वंचविशते वरुणस्यपत्नींसिद्धिंजलजयंतेजश्चविशतेइत्यनेनतेजोजयं । सुमहच्चधैर्यमितिपृथ्वीजयंचप्राप्नोतीत्यर्थः ५९ ताराधिपादीनांमध्येयद्भावंवांछतितद्भावमिच्छयाप्राप्नोतीत्यर्थः यथोक्तंनिरुक्ते । अथागमोयांयांदेवतांनिराहतस्यास्तस्यास्ताद्भाव्यमनुभवतीति ६० । ६१



ननुयथाऽग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवैतस्मादात्मनःसर्वएतआत्मानोव्युच्चरंतीतिपुरुषादेवब्रह्मादीनांसृष्टिःश्रूयतेतत्कथंब्रह्मादीन्प्राक्सिद्धान्योगीविशतइत्युच्यतेइत्याशंक्याह कथाचेति देवेपरमात्मनिविषयेयेयंकथाजगत्कर्तृत्वादिनिरूपणात्मिकाआत्मनआकाशःसंभूतइत्यादिश्रुतिततःप्रसक्तासेयंशुभेवनास्मन्मतविरुद्धेत्यर्थः । यतोयोगीनारायणात्मानारायणंतुर्यंमूर्तावीश्वरेऽयमहंनारायणइत्यहंग्रहेणप्रणिहितआत्मायेनसतथा । तंयथायथोपासतेतथैवतःप्रेत्यभवतीतिश्रुतेर्नारायणभावंप्राप्तोमहात्माव्यापकचित्तःसर्वानभिभूयसर्वाधिकोभूत्वामर्त्यान्पांचभौतिकान् जरायुजादीन्कुरुतेसंकल्पमात्रेणसृजत्यतोयोगिनांसंप्रज्ञातेभूतस्रष्टृत्वंव्युत्थानेभौतिकजंतुस्रष्टृत्वंचास्तीतिनकयापिश्रुत्यायोगशास्त्रंविरुध्यते । वेदांतिभिरप्यस्ययोगैश्वर्यस्यहर्तुमशक्यत्वाच्छास्त्रांत्यपादेऽभ्युपगतत्वाच्चेतिनकिंचिदवद्यं ६२ ॥ इति शांति० मोक्ष० नी० भा० त्रिशततमोऽध्यायः ॥ ३०० ॥ सूचीकटाहन्यायेनयोगमुक्त्वासांख्यंवक्तुमारभते सम्यगिति १ । २ मेमतः इदंवक्ष्यमाणंतत्त्वमितिशेषः यतिभिःऋषभादिभिः विहितंप्रकाशितं ३ तदेवस्तौति यस्मिन्निति प्राणावैसत्यंतेषामेषसत्यमितिश्रुत्याप्राणोपलक्षितस्यकृत्स्नस्यप्रपंचस्ययावद्ब्रह्म

कथाचयेयंनृपतेप्रसक्तादेवेमहावीर्यमतौशुभेयम् ॥ योगीससर्वानभिभूयमर्त्यान्नारायणात्माकुरुतेमहात्मा ६२ ॥ इतिश्रीमहा० शांति० मोक्ष० योगविधौत्रिशततमोध्यायः ॥ ३०० ॥ ॥ ध ॥ ॥ युधिष्ठिरउवाच ॥ सम्यक्कयाऽयंनृपतेवर्णितःशिष्टसंमतः ॥ योगमार्गोयथान्यायंशिष्यायेहहितैषिणा १ सांख्येत्विदानींकात्स्न्येनविधिंप्रब्रूहिपृच्छते ॥ त्रिषुलोकेषुयज्ज्ञानंसर्वंतद्विदितंहिते २ ॥ भीष्मउवाच ॥ शृणुमेत्वमिदंसूक्ष्मंसांख्यानांविदितात्मनाम् ॥ विहितंयतिभिःसर्वैःकपिलादिभिरीश्वरैः ३ यस्मिन्नविभ्रमाःकेचिद्दृश्यंतेमनुजर्षभ ॥ गुणाश्चयस्मिन्बहवोदोषहानिश्चकेवला ४ ज्ञानेनपरिसंख्यायसदोषान्विषयान्नृप ॥ मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ५ राक्षसान्विषयान्ज्ञात्वायक्षाणांविषयांस्तथा ॥ विषयानौरगान्ज्ञात्वागांधर्वविषयांस्तथा ६ पितृणांविषयान्ज्ञात्वातिर्यक्षुचरतांनृप ॥ सुपर्णविषयान्ज्ञात्वामरुतांविषयांस्तथा ७ राजर्षिविषयान्ज्ञात्वाब्रह्मर्षिविषयांस्तथा ॥ आसुरान्विषयान्ज्ञात्वावैश्वदेवांस्तथैवच ८ देवर्षिविषयान्ज्ञात्वायोगानामपिचेश्वरान् ॥ प्रजापतीनांविषयान्ब्रह्मणोविषयांस्तथा ९

रमबाध्यत्वलक्षणंसत्वमन्यत्सर्वंवैवाबाध्यत्वंसत्वंप्रत्यगात्मनइतिदर्शितं । तत्राद्यमादायकृत्स्नोपिकर्मोपास्त्यादिव्यवहारःसिध्यतिअंत्यमादायनेहनानाऽस्तिकिंचनेत्यादिर्जगतोबाधादिकंसंगच्छते । मतांतरेतुसर्वस्यभेदस्यपारमार्थिकत्वादिदंसर्वंयदयमात्मानेहनानाऽस्तीत्याद्याअध्यारोपापवादन्यायेनात्मैक्यप्रतिपादनपराःश्रुतयउपरुध्यंतइतितेषांजगत्सत्यत्वविभ्रमोदृश्यते । केषांचिदात्मन्यप्यसत्यभ्रमोऽस्तिनत्वस्माकंकचिदप्यंशेविभ्रमोऽस्तीत्यर्थः । गुणाःकर्मज्ञानकांडयोर्दृष्टिभेदेनाविरोधादयः । दोषाश्चबह्वात्मवादेएकस्मिन्शरीरेसर्वात्मसान्निध्याविशेषादेकस्यभोगेनसर्वेषांभोगापत्तिरित्यादयस्तेषांहानिः ४ ज्ञानेनेति तत्वदर्शनोन्मुखंचेतस्तत्वरूपतमःपिहिततयाऽनधिगमात्तत्रशुक्तौरजतादिवन्मानुषत्वादिभावंपश्यति । तत्रोत्तरोत्तरज्ञानेनपूर्वंपूर्वंभ्रमान्परिसंख्यायबाधित्वाप्राप्नुवंतिशुभंमोक्षमितिप्रयोदशेनसंबंधः । सदोषानागमापायितयामिथ्यात्वदोषयुक्तान् यथोक्तं । 'आदावंतेचयन्नास्तिवर्तमानेऽपितत्तथा'इति ।'नासतोविद्यतेभावः'इतिच ज्ञात्वापरिसंख्यायेतिसर्वत्रयोज्यं । तत्रयथायथावत्वावरकस्यतमसःसम्यगवेक्षणेनापगमस्तथोत्तरोत्तरमुत्कृष्टविषयोपास्थितिर्यावद्ब्राह्मणोविषयान्पश्यतिप्रागवत् ५ । ६ । ७ । ८ । ९

१० । ११ अत्रगुणाअप्यागमापावितयादोषाएवेतितेऽपिहानार्थमेवज्ञातव्याः १२ सांख्यज्ञानेऽपिदोषाविद्वत्त्वाभिमानादयः गुणाअद्वेष्टृत्वादयः १३ सत्त्वमिति । 'आनंदःप्रीतिरुद्रेकःप्राकाश्यंपुण्यशीलता । संतोषःश्रद्दधानत्वमार्जवंत्यागशीलता । ऐश्वर्यंचेतिसत्त्वस्यगुणादशनिसर्गजाः । आस्तिकत्वमकार्पण्यंसुखदुःखोपसेवनम् । भेदःपुरुषताचैवकामक्रोधौमदस्तथा । दर्पद्वेषातिवादाश्चनवैतेराजसागुणाः । तमोमोहोमहामोहस्तामिस्रश्चांधपंचमः । निद्राप्रमादआलस्यमित्यष्टौतमसोगुणाःइति । बुद्धिसप्तगुणांमहदहंकारपंचतन्मात्ररूपाम् १४ मनःश्रोत्रादिपंचकेनसहषड्रूपं नभोवियदादिपंचकरूपं बुद्धिःसंशयनिश्चयगर्वस्मरणरूपा तमोऽप्रतिपत्तिविप्रतिपत्तिविपरीतप्रतिपत्तिरूपं १५ रजःप्रवृत्तिदुःखरूपं सत्त्वंप्रकाशरूपं बुद्ध्यादीनांपुनर्ग्रहणंप्रातिलोम्येनसत्त्वेतत्प्रविलापनार्थं एतेपंचपंचाशत् एतेषांमध्येतत्त्वेनयाथात्म्येनमार्गमात्मप्रापकंसत्त्वादिप्रधानंविज्ञायहानार्थंतत्प्रतिबंधकंचरजस्तमःप्रधानंगुणजातंविज्ञायप्रलयेप्राकृतलयेतथाप्रेक्षणेआत्मतत्त्वालोचनेच १६ ज्ञानविज्ञानसंपन्नाएतान्सर्वान्प्रत्यतोऽनुभवतश्चज्ञात्वाकारणैर्मोक्षोपयोगिभिःसात्त्विकैर्भावैर्भाविताःमानोवाप्तिसितावितामोक्षंप्राप्नुवंति सूक्ष्मारविरश्म

आयुषश्चपरंकालंलोकेविज्ञायतत्त्वतः ॥ सुखस्यचपरंतत्त्वंविज्ञायवदतांवर १० प्राप्तेकालेचयद्दुःखंसततंविषयैषिणाम् ॥ तिर्यक्षुपततांदुःखंपततांनरकेचयत् ११ स्वर्गस्यचगुणान्कृत्स्नान्दोषान्सर्वांश्चभारत ॥ वेदवादेऽपियेदोषागुणायेचापिवैदिकाः १२ ज्ञानयोगेचयेदोषागुणायोगेचयेनृप ॥ सांख्यज्ञानेचयेदोषास्तथैवचगुणानृप १३ सत्त्वंदशगुणंज्ञात्वारजोनवगुणंतथा ॥ तमश्चाष्टगुणंज्ञात्वाबुद्धिंसप्तगुणांतथा १४ षड्गुणंचमनोज्ञात्वानभःपंचगुणंतथा ॥ बुद्धिंचतुर्गुणांज्ञात्वातमश्चत्रिगुणंतथा १५ द्विगुणंचरजोज्ञात्वासत्त्वमेकगुणंपुनः ॥ मार्गंविज्ञायतत्त्वेनप्रलयेप्रेक्षणेतथा १६ ज्ञानविज्ञानसंपन्नाःकारणैर्भाविताःशुभाः ॥ प्राप्नुवंतिशुभंमोक्षंसूक्ष्माइवनभःपरम् १७ रूपेणदृष्टिंसंयुक्तांघ्राणंगंधगुणेनच ॥ शब्देसक्तंतथाश्रोत्रंजिह्वांरसगुणेषुच १८ तनुंस्पर्शेतथासक्तांवायुंनभसिचाश्रितम् ॥ मोहंतमसिसंयुक्तंलोभमर्थेषुसंश्रितम् १९ विष्णुंक्रांतेबलेशक्रंकोष्ठेसक्तंतथाऽनलम् ॥ अप्सुदेवींसमासक्तामपस्तेजसिसंश्रिताः २० तेजोवायौतुसंसक्तंवायुंनभसिचाश्रितम् ॥ नभोमहतिसंयुक्तंमहद्बुद्धौचसंश्रितम् २१ बुद्धिंतमसिसंसक्तांतमोरजसिसंश्रितम् ॥ रजःसत्त्वेतथासक्तंसत्त्वंसक्तंतथाऽऽत्मनि २२ सक्तमात्मानमीशेचदेवेनारायणेतथा ॥ देवंमोक्षेचसंसक्तंमोक्षंसक्तंतुनकचित् २३

योवायवोवा १७ अत्रप्राणेभ्योदेवादेवेभ्योलोकाइतिश्रुत्यनुसारादिंद्रियेभ्योदेवतासृष्टिंदेवताभ्योलोकसृष्टिंचाभ्युपेत्यब्रह्मणिसर्वलयमाह रूपेणेति रूपेणरूपवताद्रव्येणदृष्टिंचक्षुरिंद्रियंसंयुक्तंकुंडलेनकनकमिव चक्षुर्व्यतिरिक्तोरूपद्रव्यदेवतादिर्विषयोनास्तीत्यर्थः एवमग्रेऽपियावन्मोक्षंज्ञेयम् १८ वायुंत्वगिंद्रियदेवतांनभसिस्वकारणेसंश्रितं एतच्चसर्वंदेवतोपलक्षणं । मोहंवैचित्र्यंतमसितमोगुणे । लोभंरजःकार्यमर्थेषु तमसोऽर्थानांचवियोगेमोहलोभौनभवतइतिदृष्टांतमात्रमिदम् १९ क्रांतेपादविक्षेपे बलेहस्तेंद्रिये कोष्ठेउदरे देवींपृथ्वीम् २० महतिमहत्तत्त्वकार्येऽहंकारे महद्बुद्धौमहत्तत्त्वे २१ आत्मनिजीवेत्वंपदार्थे २२ ईशेमायाविनिदेवेनारायणेचेतितस्यैवविशेषणे । तत्पदार्थेमोक्षेकैवल्येनिर्विकल्पेवस्तुनि तच्चनकचित्सक्तं स्वेमहिम्निप्रतिष्ठितइतिश्रुतेः २३ ॥११९॥

ननुरूपादीनांमोक्षमात्रत्वोक्तिरागममात्रंनत्वत्रकाचिदुपपत्तिरस्तीत्याशंक्याह ज्ञात्वेति सत्त्वगुणंदेहबुद्धिसत्त्वमयंस्वात्मशरीरंषोडशभिर्गुणैःकार्यैःप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवींद्रियंमनोऽन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकेषुनामचेतिश्रुत्युक्तैःप्राणादिनामांतैर्वृतंज्ञात्वास्वभावंप्राक्कर्मफलदुत्पत्तिकारणंचेतनांधीवृत्तिंचतदवभासिकांदेहसमाश्रितेलिंगदेहाश्रितेज्ञात्वाचमध्यस्थमुदासीनमेकमात्मानंयस्मिन्पापंनविद्यतइत्यसंगंजानीयात् यथैकेनकर्मणास्वाप्नप्रपंचविभ्रमेआत्मनोऽसंगत्वेस्थूलशरीरजदुःखाननुवृत्तेर्दृश्यतेएवंजाग्रत्क्रमेऽपिविषयैषिणांविषयवासनावत्तांद्वितीयंकर्मकारणंविज्ञायेंद्रियादीनात्माश्रितानात्मन्यविद्ययाअध्यारोपितान्जानीयादित्यध्याहृत्ययोज्यं अयमर्थः । यथास्वप्नेएकस्यैवात्मनोवासनावशात्सर्वंजगदात्मकत्वमात्मनश्चासंगत्वंदृश्यतेएवंजाग्रत्क्रमेऽपिज्ञेयमितिसार्धश्लोकद्वयार्थः २४ । २५ एतस्माद्वासनामयादवस्थात्रयसंचरदात्मनोमोक्षस्यदुर्लभत्वंवक्ष्यमाणैःकारणैर्विज्ञायकश्चिन्मोक्षबुद्धिंसमाश्रितोभवतीतिच

ज्ञात्वासत्त्वगुणंदेहंवृतंषोडशभिर्गुणैः ॥ स्वभावंचेतनांचैवज्ञात्वादेहसमाश्रिते २४ मध्यस्थमेकमात्मानंपापंयस्मिन्नविद्यते ॥ द्वितीयंकर्मविज्ञायनृपतेविषयैषिणाम् २५ इंद्रियाणींद्रियार्थांश्चसर्वानात्मनिसंश्रितान् ॥ दुर्लभत्वंचमोक्षस्यविज्ञायश्रुतिपूर्वकम् २६ प्राणापानौसमानंचव्यानोदानौचतत्त्वतः ॥ अवश्चैवानिलंज्ञात्वाप्रवहंचानिलंपुनः २७ सप्तवातांस्तथाज्ञात्वासप्तधापिहितान्पुनः ॥ प्रजापतीनृषींश्चैवमार्गांश्चैवबहून्वरान् २८ सप्तर्षींश्चबहून्ज्ञात्वाराजर्षींश्चपरंतप ॥ सुरर्षीन्महतश्चान्यान्ब्रह्मर्षीन्सूर्यसन्निभान् २९ ऐश्वर्याच्च्यावितान्दृष्ट्वाकालेनमहतानृप ॥ महतांभूतसंघानांश्रुत्वानाशंचपार्थिव ३० गतिंचाप्यशुभांज्ञात्वानृपतेपापकर्मिणाम् ॥ वैतरण्यांचयद्दुःखंपतितानांयमक्षये ३१ योनीषुचविचित्रासुसंसारानशुभांस्तथा ॥ जठरेचाशुभेवासंशोणितोदकभाजने ३२ श्लेष्ममूत्रपुरीषेचतीव्रगंधसमन्विते ॥ शुक्रशोणितसंघातेमज्जास्नायुपरिग्रहे ३३ शिराशतसमाकीर्णेनवद्वारेपुरेऽशुचौ ॥ विज्ञायहितमात्मानंयोगांश्चविविधान्नृप ३४ तामसानांचजंतूनांरमणीयावृतात्मनाम् ॥ सात्त्विकानांचजंतूनांकुत्सितंभरतर्षभ ३५ गर्हितंमहतामर्थेसांख्यानांविदितात्मनाम् ॥ उपप्लवांस्तथाघोरान्शशिनस्तेजसस्तथा ३६ ताराणांपतनंदृष्ट्वानक्षत्राणांचपर्ययम् ॥ द्वंद्वानांविप्रयोगंचविज्ञायकृपणंनृप ३७ अन्योन्यभक्षणंदृष्ट्वाभूतानामपिचाशुभम् ॥ बाल्येमोहंचविज्ञायक्षयंदेहस्यचाशुभम् ३८ रागेमोहेचसंप्राप्तेकचित्सत्त्वंसमाश्रितम् ॥ सहस्रेषुनरःकश्चिन्मोक्षबुद्धिंसमाश्रितः ३९ दुर्लभत्वंचमोक्षस्यविज्ञायश्रुतिपूर्वकम् बहुमानमलब्धेषुलब्धेमध्यस्थतांपुनः ४० विषयाणांचदौरात्म्यंविज्ञायनृपतेपुनः ॥ गतासूनांचकौंतेयदेहान्दृष्ट्वातथाऽशुभान् ४१

तुर्देशेनान्वयः २६ यःप्राणादीन्पंचैकीकृत्याधोनयतिसोऽधोऽनिलःपवः एवंप्रवहऊर्ध्वनेतासप्तमः २७ तएतेसप्तवायवःप्रत्येकंसप्तधाविहिताः अयंभावः । यथैकस्मिन्घटेऽनेकानिबीजानितेषुचबीजेषुप्रतिबीजमनंतानिबीजानितद्वदेकस्मिन्देहेसप्तप्राणाःप्रतिप्राणंसप्तसप्तप्राणाएवमुत्तरोत्तरमितिजगदानंत्यमुक्तं तस्मात्संसारबीजस्याज्ञानस्यतत्त्वज्ञानेनोच्छेदेयतितव्यमिति भावः २८ । २९ ननुसंत्यनेकेप्राजापत्यादिदेहाएवसुखमयाःकिंमोक्षेणेत्याशंक्यतेषामप्यैश्वर्यस्यांतवत्त्वान्नेत्याह ऐश्वर्यादिति ३० । ३१ । ३२ । ३३ । ३४ । ३५ उपप्लवानुपरागान् तेजसःसूर्यस्य ३६ द्वंद्वानांदंपतीनां ३७ । ३८ कचित्पुंसि ३९ बहुमानमत्यादरं मध्यस्थतामौदासीन्यं ४० दौरात्म्यंबंधहेतुतां ४१

कलेवरेष्विह ४१ । ४२ । ४३ । ४४ । ४५ संवत्सरक्षयो बृहस्पतेर्मध्यमराशिभोगयोरंतरालेसूर्यस्यद्विरेकराशिसंक्रमेभवति । मासक्षयोदर्शयोरंतरालेसूर्यसंक्रांतिद्वयम् ४६ पक्षक्षयःसार्धचतुर्दशदिनमध्येपर्वद्वयंतदात्रयोदशभिर्दिनैःपक्षोभवति । दिवसक्षयःसूर्योदययोरंतरालेतिथित्रयस्पर्शः । कालाभिमानिदेवतानामपिक्षयोदयौदृश्येतेकिमुतकाल्यमानानामस्मदादीनामितिभावः ४७



वासंकुलेषुजंतूनांदुःखंविज्ञायभारत ॥ ब्रह्मघ्नानांगतिंज्ञात्वापतितानांसुदारुणाम् ४२ सुरापानेचसक्तानांब्राह्मणानांदुरात्मनाम् ॥ गुरुदारप्रसक्तानांगतिंविज्ञाय चाशुभाम् ४३ जननीषुचवर्ततेयेनसम्यग्युधिष्ठिर ॥ सदेवकेषुलोकेषुयेनवर्ततिमानवाः ४४ तेनज्ञानेनविज्ञायगतिंचाशुभकर्मणाम् ॥ तिर्यग्योनिगतानांचविज्ञा यगतयःपृथक् ४५ वेदवादांस्तथाचित्रानृतूनांपर्ययांस्तथा ॥ क्षयंसंवत्सराणांचमासानांचक्षयंतथा ४६ पक्षक्षयंतथादृष्ट्वादिवसानांचसंक्षयम् ॥ क्षयंवृद्धिंचचं द्रस्यदृष्ट्वाप्रत्यक्षतस्तथा ४७ वृद्धिंदृष्ट्वासमुद्राणांक्षयंतेषांतथापुनः ॥ क्षयंधनानांदृष्ट्वाचपुनर्वृद्धिंतथैवच ४८ संयोगानांक्षयंदृष्ट्वायुगानांचविशेषतः ॥ क्षयंचदृष्ट्वा शैलानांक्षयंचसरितांतथा ४९ वर्णानांचक्षयंदृष्ट्वाक्षयांतंचपुनःपुनः ॥ जरामृत्युस्तथाजन्मदृष्ट्वादुःखानिचैवह ५० देहदोषांस्तथाज्ञात्वातेषांदुःखंचतत्त्वतः ॥ देहविक्लवतांचैवसम्यग्विज्ञायतत्त्वतः ५१ आत्मदोषांश्चविज्ञायसर्वानात्मनिसंश्रितान् ॥ स्वदेहादुत्थितान्गंधांस्तथाविज्ञायचाशुभान् ५२ ॥ युधिष्ठिरउवाच ॥ कान्स्वगात्रोद्भवान्दोषान्पश्यस्यमितविक्रम ॥ एतन्मेसंशयंकृत्स्नंवक्तुमर्हसितत्त्वतः ५३ ॥ भीष्मउवाच ॥ पंचदोषान्प्रभोदेहेप्रवदंतिमनीषिणः ॥ मार्गज्ञाः कापिलाःसांख्याःशृणुतानरिसूदन ५४ कामक्रोधौभयंनिद्रापंचमःश्वासउच्यते ५५ एतेदोषाःशरीरेषुदृश्यंतेसर्वदेहिनाम् ॥ छिंदंतिक्षमयाक्रोधंकामंसंकल्पवर्ज नात् ५६ सत्त्वसंसेवनान्निद्रामप्रमादाद्भयंतथा ॥ छिंदंतिपंचमंश्वासमल्पाहारतयानृप ५७ गुणान्गुणशतैर्ज्ञात्वादोषान्दोषशतैरपि ॥ हेतून्हेतुशतैश्चित्रैश्चित्रा न्विज्ञायतत्त्वतः ५८ अपांफेनोपमंलोकंविष्णोर्मायाशतैर्वृतम् ॥ चित्रभित्तिप्रतीकाशंनलसारमनर्थकम् ५९ तमःश्वभ्रनिभंदृष्ट्वावर्षबुद्बुदसंनिभम् ॥ नाशप्रायं सुखाद्धीनंनाशोत्तरमिहायशम् ६० रजस्तमसिसंमग्नंपंकेद्विपमिवावशम् ॥ सांख्याराजन्महाप्राज्ञास्त्यक्त्वास्नेहंप्रजाकृतम् ६१ ज्ञानयोगेनसांख्येनव्यापिना महतानृप ॥ राजसानशुभान्गंधांस्तामसांश्चतथाविधान् ६२ पुण्यांश्चसात्त्विकान्गंधान्स्पर्शजान्देहसंश्रितान् ॥ छित्त्वाशुज्ञानशस्त्रेणतपोदंडेनभारत ६३ ततो दुःखोदकंघोरंचिंताशोकमहाह्रदम् ॥ व्याधिमृत्युमहाग्राहंमहाभयमहोरगम् ६४ तमःकूर्मंरजोमीनंप्रज्ञयासंतरंत्युत ॥ स्नेहपंकंजरादुर्गंज्ञानदीपमरिंदम ६५ कर्मा गाधंसत्यतीरंस्थितव्रतमरिंदम ॥ हिंसाशीघ्रमहावेगंनानारससमाकरम् ६६ नानाप्रीतिमहारत्नंदुःखज्वरसमीरणम् ॥ शोकतृष्णामहावर्ततीक्ष्णव्याधिमहागजम् ६६ अस्थिसंघातसंघट्टंश्लेष्मफेनमरिंदम ॥ दानमुक्ताकरंघोरंशोणितह्रदविद्रुमम् ६८ हसितोत्क्रुष्टनिर्घोषंनानाज्ञानसुदुस्तरम् ॥ रोदनाश्रुमलक्षारंसंगत्यागपरायणम् ६९ ॥१९६॥

४८ । ४९ । ५० । ५१ बाह्यदोषानुक्त्वादेहजान्दोषानाह स्वदेहादिति उत्थितान्दोषानित्यनुषंगः ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ नलसारंनलतृणवदंतःसारहीनं ५९ नाशप्रायंन शबहुलम् ६० । ६१ । ६२ शुभाशुभांश्चगंधांस्तपोदंडेनज्ञानशस्त्रेणधीकुठारेणछित्त्वाप्रयतयःसागरंतरंतीतिदशमेनसंबंधः ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९

७० । ७१ तीर्त्वाचेति जन्मदुःखेनालोचनेनजन्मपुरस्कृत्यस्थूलंशरीरंतीर्त्वाविस्मृत्यविमलंनभःप्रविशंति देहाध्यासापायेव्योमसंविदुदेतीत्यर्थः ७२ तत्रेति तस्मिन्हार्देव्योम्निपद्मतंतुवत् यथाकमलनालेनांतःसुषिरेणजलंमुखेनाकृष्यमाणमंतःप्रविशतितद्वत् । आत्मनिप्रणिधीयमानमनोद्वारासूर्योऽवराविशयत्रैवहृदयाकाशेसांख्यान्प्रतिस्वनाडीभिःसंबंधात्चतुर्दशभुवनगता न्विषयान्वहतिप्रापयति । प्रवहन्विषयानित्यनेनविषयैःसहसूर्यस्यनित्यसंबंधोदर्शितः । व्योमसंविदुदयेसांख्यस्यसार्वज्ञ्यंसार्वात्म्यंसर्वभोगभाक्त्वंचोदेतीत्यर्थः । एतेनप्रत्यगात्मस्था एवविषयामुकुरस्थवदज्ञानवशात्पराक्त्वेनभांतीत्यात्माद्वैतमुपपादितं । हार्दनाडीनांसूर्यरश्मिभिःसंबंधस्तेषांचब्रह्मांडेनसंबंधश्छांदोग्यादावुक्तःप्रागेवोदाहृतः ७३ तत्रेति तत्रहार्दाकाशे तांस्तेजोमयान्आत्मकान्विषयान्प्रवहसंज्ञकोवायुःप्रतिगृह्णातिस्वात्मसात्करोति तथाचश्रुतिः । 'वायुर्वैवतान्सर्वान्संवृंक्ते'इति । किंकृत्वा वीतरागान्यतीन् अपेक्ष्येतिशेषः संप्रज्ञातसुखा स्वादसक्तेषांत्वयेवायुर्विषयान्नसंहरति अन्यथातुसंहरतीत्यर्थः । अतएवसमाधिप्रकृत्यैवगौडपादीये नास्वादयेत्सुखंतत्रेति ७४ सूक्ष्मइति सूक्ष्मस्त्वगिंद्रियग्राह्यःस्पर्शः । ननुसूर्यर

पुत्रदारजलौकौघंमित्रबांधवपत्तनम् ॥ अहिंसासत्यमर्यादंप्राणत्यागमहोर्मिणम् ७० वेदांतगमनद्वीपंसर्वभूतदयोदधिम् ॥ मोक्षदुर्लभविषयंवडवामुखसागरम् ७१ तरंतियतयःसिद्धाज्ञानयानेनभारत ॥ तीर्त्वाऽतिदुस्तरंजन्मविशंतिविमलंनभः ७२ तत्रतान्सुकृतीन्सांख्यान्सूर्योवहतिरश्मिभिः ॥ पद्मतंतुवदाविश्यप्रव हन्विषयान्नृप ७३ तत्रतान्प्रवहोवायुःप्रतिगृह्णातिभारत ॥ वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् ७४ सूक्ष्मःशीतःसुगंधीचसुखस्पर्शश्चभारत ॥ सप्ता नांमरुतांश्रेष्ठोलोकान्गच्छतियःशुभान् ॥ सतान्वहतिकौंतेयनभसःपरमांगतिम् ७५ नभोवहतिलोकेशरजसःपरमांगतिम् ॥ रजोवहतिराजेंद्रसत्त्वस्यपरमांग तिम् ७६ सत्त्वंवहतिशुद्धात्मन्परंनारायणंप्रभुम् ॥ प्रभुर्वहतिशुद्धात्मापरमात्मानमात्मना ७७ परमात्मानमासाद्यतद्भूतायतनाऽमलाः ॥ अमृतत्वायकल्पंतेन निवर्ततिवाविभो ७८ परमासागतिःपार्थनिर्द्वंद्वानांमहात्मनाम् ॥ सत्यार्जवरतानांवैसर्वभूतदयावताम् ७९ ॥ युधिष्ठिरउवाच ॥ स्थानमुत्तममासाद्य भगवंतंस्थिरव्रताः ॥ आजन्ममरणंवातेस्मरंत्युतनवाऽनघ ८०

श्मिसंबंधेऽपिब्रह्मांडंन्हार्दाकाशेप्रवेष्टुमर्हति अत्रत्यानांघटादीनांसूर्यास्तोत्तरंलोकांतरसंबंधादर्शनादित्याशंक्याह सप्तानामिति तान्पिंडब्रह्मांडरूपान्विषयान् यथाऽयंप्रवहोवायुर्देहेन संबंधात्स्वयंलोकान्प्रतिगच्छतिपिंडेचतत्तल्लोकान्प्रतिवहति एवंनभसःपरमांगतिंहार्दाकाशंगच्छतिब्रह्मांडंचतंप्रतिवहति । तथाचब्रह्मांडंतातरज्जुभिःसूर्यमंडलेनिबद्धमतोहार्दनभसिसूर्यप्रवे शेनब्रह्मांडस्यापिप्रवेशोयुज्यते अत्रत्यघटादीनांतुरात्रावपिसूर्यरश्मिसंबंधविघटनंनास्तीतिनतैःसहदेशांतरगमनप्रसक्तिरस्ति अतोयुक्तमुक्तंतत्रतान्सुकृतीनित्यादि ७५ नभइति तम सःसूक्ष्मतमःपरिणामोव्योमसंवित्प्रभआख्यांरजसःपरमांगतिमहंकारंनयति । सत्त्वस्यपरमांगतिंमहतत्त्वमस्मितामात्रंशुद्धत्वंपदार्थं । तस्यापिपरमागतिःप्रभुस्तत्पदार्थस्तस्यापिनिरुपा धिचिन्मात्रमित्यर्थः ७६ । ७७ । ७८ योमत्वसांख्येऽपिशौचादिकंतुल्यमित्युक्तंतदत्रोपसंहरति निर्द्वंद्वानामिति सेयमात्मनिष्ठायोगैर्विषयेभ्यश्चित्तवृत्तेर्निरोधइत्युच्यते । सांख्यै स्तुतत्तद्विषयसहितानांवृत्तीनांलवणोदकन्यायेनप्रविलापनमित्युच्यते एवमयंमात्राभेदएव । शमादिसाधनंकैवल्यंचफलंपक्षद्वयेऽपिसमानमितिप्रागुक्तंनप्रस्मर्तव्यं ७९ भगवंतंषड्गुणैश्वर्य संपन्नंपरमात्मानमेवपरंमोक्षाख्यंस्थानंप्राप्याऽऽजन्ममरणंसर्वज्ञत्वाज्जन्ममरणादिकंतत्रस्मरंतिनवामोक्षेविशेषविज्ञानमस्तिनवेतिप्रश्नः 'कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवतियएवंवेदाहं-

–ब्रह्मास्मीतिसइदंसर्वंभवति'इतिमोक्षेसार्वज्ञ्यसार्वात्म्ययोःश्रवणात्तत्रस्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिविशेषविज्ञानाभावश्रुतेश्चसंशयः ८० । ८१ एवंद्विविधोऽपिमोक्षेमहान्दोषःस्फुरति सिद्धिगतान्मोक्षमतिपादकान्नृपीन्मंत्रान्प्राप्यस्फुरतिपरस्परंविरुद्धस्यैकत्रपक्षद्वयस्यासंभवात् । अन्यतरांगीकारेऽवश्यकर्तव्येऽन्यतरश्रुतेर्बाधोभवतीत्यर्थः । यदीति तत्रैवमोक्षेऽपि विज्ञानेविशेषदर्शनेसतिकर्मैवश्रेष्ठंकिंसंन्यसाद्यायासेनेत्यर्थः ८२ तदभावेतुमहान्दोषःसुषुप्ताविवविगलितज्ञानस्यापिज्ञानमस्तीत्युच्यतेचेदितोदुःखतरमयुक्ततरंनकिंचिदित्यर्थः ८३ बुधानांमैत्रेयीप्रभृतीनामप्यत्रसंमोहोदृश्यते तथाहि । मैत्रेयीभुक्तौद्वैतदर्शनेकर्मफलसाम्यंद्वैतादर्शनेनमुक्तमस्वंचपश्यंतीअन्यतरस्यश्रेयस्त्वमप्रतिपद्यमानायाज्ञवल्क्यमवोचत् अत्रैवमाभगवान मूमुहदिति मामां ८४ । ८५ अत्रसमाधानमाह इंद्रियाणीति देहिनांप्राणिनांस्वदेहेस्वस्वरूपेऽधिष्ठानेस्थितानींद्रियाण्येवमनःषष्ठानिबुध्यंतेविशेषतःपश्यंति । यतस्तान्यात्मनोविशेषविज्ञानेकारणानिहेतुभूतानि । कथंसूक्ष्मश्चिदात्मातैःकर्तृकारणरूपैःपश्यतिबाह्यमाभ्यंतरंवाविषयंप्रकाशयति अयंभावः । प्रत्यक्षंहिबाह्यमर्थंचक्षुरेवपश्यति तदभावेनपश्यति नचता वताआत्मनःप्रकाशनशक्तिर्हीयतेतेनविनाऽपिस्वप्नेतद्दर्शनात् । एवंसुषुप्तिसमाध्योर्मनसाविनाऽपिनास्त्यात्मनोज्ञशक्तिवियोगः उपकरणस्यस्वातंत्र्याविघातकत्वात् । तथाचकरणाभावकृत

यदत्रतथ्यंतन्मेत्वंयथावद्वक्तुमर्हसि ॥ त्वदृतेपुरुषंनान्यंप्रष्टुमर्हामिकौरव ८१ मोक्षेदोषोमहानेषप्राप्यसिद्धिगतान्नृपीन् ॥ यदितत्रैवविज्ञानेवर्त्ततेयतयःपरे ८२ प्रवृत्तिलक्षणंधर्मंपश्यामिपरमंनृप ॥ मग्नस्यहिपरंज्ञानंकिंनदुःखतरंभवेत् ८३ ॥ भीष्मउवाच ॥ यथान्यायंत्वयातातप्रश्नःप्रष्टःसुसंकटः ॥ बुधानामपिसंमोहःप्रश्नेऽस्मिन्भरतर्षभ ८४ अत्रापितत्त्वंपरमंशृणुसम्यङ्मयेरितम् ॥ बुद्धिश्चपरमायत्रकापिलानांमहात्मनाम् ८५ इंद्रियाण्येवबुध्यंतेस्वदेहेदेहिनांनृप ॥ कारणान्यात्मनस्तानिसूक्ष्मःपश्यतितैस्तुसः ८६ आत्मनाविप्रहीणानिकाष्ठकुड्यसमानितु ॥ विनश्यंतिनसंदेहःफेनाइवमहार्णवे ८७ इंद्रियैःसहसुप्तस्यदेहिनःशत्रुतापन ॥ सूक्ष्मश्चरतिसर्वत्रनभसीवसमीरणः ८८ सपश्यतियथान्यायंस्पर्शान्स्पृशतिवाविभो ॥ बुध्यमानोयथापूर्वमखिलेनेहभारत ८९ इंद्रियाणीहसर्वाणि स्वेस्वेस्थानेयथाविधि ॥ अनीशत्वात्प्रलीयंतेसर्पाहतविषाइव ९० इंद्रियाणांतुसर्वेषांस्वस्थानेष्वेवसर्वशः ॥ आक्रम्यगतयःसूक्ष्माश्चरत्यात्मानसंशयः ९१ सत्वस्यचगुणान्कृत्स्नान्रजसश्चगुणान्पुनः ॥ गुणांश्चतमसःसर्वान्गुणान्बुद्धेश्चभारत ९२

मेवास्यविशेषाविज्ञानराहित्यं । नत्वज्ञकृतमितिकैवल्येऽपिनात्मनःसार्वज्ञ्यहानिः तथाचश्रुतिः । 'यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यतियद्वैतंनशृणोत्यशृण्वन्वैतन्नशृणोति'इत्यादिकासुप्त्यादावप्यात्मनोद्रष्टृत्वादिकंदर्शयति ८६ आत्मनोज्ञशक्त्यवियोगंदर्शयितुमिंद्रियाणांजडत्वमाह आत्मनेति वस्तुतइंद्रियाणिस्वरूपेणैवनसंति अध्यस्तत्वात् । परमतेस्थिरत्वात्सत्त्वमुपेत्यापितानिकाष्ठवदचेतनान्येवातोविनश्यंति । तत्रफेनदृष्टांतोयथायोग्यंयोजनीयः यथाफेनोजलेनविनास्वयंनिरात्मैवसारमस्त्वेनदृष्टोऽपितेनविनानतिष्ठतीति ८७ इंद्रियाणांजडत्वमुक्त्वाऽऽत्मनःस्वयंज्योतिष्ट्वमाह इंद्रियैरिति देहाभिमानिनःसेंद्रियस्यस्वप्नेप्रलीनस्यापियःसूक्ष्मोंऽतरात्मासर्वत्रविषयेचरति । जाग्रतीवस्वप्नेऽपिसर्वविषयंभासयतीत्यर्थः ८८ एतदेवाह सइति यथापूर्वंजाग्रद्वदित्यर्थः ८९ इंद्रियाणांसात्मत्वमात्मचैतन्यानुवेधादेवेत्यन्वयव्यतिरेकाभ्यामाह इंद्रियाणीति इहस्वप्नेअनीशत्वान्नास्तिईशःप्रवर्तकोयेषांतानितथात्वात् ९० व्यतिरेकमुक्त्वान्वयमाह इंद्रियाणांत्विति स्वस्थानेस्थितानांगतयःगतीःसर्वाइंद्रियवृत्तयश्चिदात्माएवउपंतीत्यर्थः ९१ सर्वत्रचिदाभासंदर्शयति सत्वस्येति सत्वादीनांगुणान्व्याप्याऽऽत्माचरतीति पूर्वेणान्वयः सत्वस्यगुणान्धर्मादीन् रजसःप्रहृष्यादीन् तमसोऽप्रहृष्यादीन् बुद्धेरध्यवसायादीन् ९२

मनसःसंकल्पादीन् नभआदीनांश्रोत्रादीन् स्नेहात्स्नेहोजलंजायतेस्मात्तेजसस्तज्जान् ९३ सर्वाण्येवेति सर्वाणुकान्यमुकानिचक्षेत्रज्ञेपुसन्निहितानिसत्वादीनिगुणैर्मायिकैश्चित्सत्वानंदत्वाद्यैर्व्याप्यआत्माब्रह्मक्षेत्रज्ञंजीवंव्याप्यव्याप्नोति कर्मणीचतमेवक्षेत्रज्ञंव्याप्नुतइतिसंबंधः ९४ इंद्रियाणिमनःषष्ठानि एतत्क्षेत्रज्ञस्यकर्मसंबंधेकारणमुपन्यस्तं ९५ मुक्तिकारणंचाह प्रकृतिमिति चादिंद्रियाणि इंद्रियाणिकार्योपाधिप्रकृतिंकारणोपाधिंचातीत्यक्षेत्रज्ञोऽव्ययंवृद्धिह्रासशून्यंकूटस्थमात्मानंगच्छति तमेवविशिनष्टि परमिति ९६ तस्मात्तिफलमाह विमुक्तइति ९७ ननुपरमात्मानंप्राप्तस्यानिवृत्तोपुनर्देहस्योत्थानंनस्यादित्याशंक्याह शिष्टमिति निवृत्तेऽपिकारणेचक्रभ्रमिन्यायेनशिष्टंमनआदिप्रतियोगिनआगच्छंतिगच्छंति यथाकालंसमाधिव्युत्थानकालभेदेन गुरोःसंदेशकारिणः प्रारब्धकर्मानुसारिणीश्वरप्रेरणातांकर्तुंशीलंयेषांते ९८ एवंजीवन्मुक्तिसद्भावमुक्त्वाविदेहकैवल्यमाह शक्यमिति अल्पेनवर्तमानदेहपातावधिनाशांतिंविदेहमुक्ति

गुणांश्चमनसश्चापिनभसश्चगुणांश्चसः ॥ गुणान्वायोश्चधर्मात्मन्स्नेहजांश्चगुणान्पुनः ९३ अपांगुणांस्तथापार्थपार्थिवांश्चगुणानपि ॥ सर्वाण्येवगुणैर्व्याप्यक्षेत्रज्ञेषुयुधिष्ठिर ९४ आत्माचव्याप्तिक्षेत्रज्ञंकर्मणीचशुभाशुभे ॥ शिष्याइवमहात्मानमिंद्रियाणिचतंप्रभो ९५ प्रकृतिंचाप्यतिक्रम्यगच्छत्यात्मानमव्ययम् ॥ परंनारायणात्मानंनिर्द्वंद्वंप्रकृतेःपरम् ९६ विमुक्तःपुण्यपापेभ्यःप्रविष्टस्तमनामयम् ॥ परमात्मानमगुणंननिवर्ततिभारत ९७ शिष्टंत्वत्रमनस्तातइंद्रियाणिचभारत ॥ आगच्छंतियथाकालंगुरोःसंदेशकारिणः ९८ शक्यंचाल्पेनकालेनशांतिंप्राप्तुंगुणार्थिना ॥ एवमुक्तेनकौंतेययुक्तज्ञानेनमोक्षिणा ९९ सांख्याराजन्महाप्राज्ञागच्छंतिपरमांगतिम् ॥ ज्ञानेनानेनकौंतेयतुल्यंज्ञानंनविद्यते १०० अत्रतेसंशयोमाभूज्ज्ञानंसांख्यंपरंमतम् ॥ अक्षरंध्रुवमेवोक्तंपूर्णंब्रह्मसनातनम् १ अनादिमध्यनिधनंनिर्द्वंद्वंकर्तृशाश्वतम् ॥ कूटस्थंचैवनित्यंचयद्वदंतिमनीषिणः २ यतःसर्वाःप्रवर्तंतेसर्गप्रलयविक्रियाः ॥ यच्चशंसंतिशास्त्रेषुवदंतिपरमर्षयः ३ सर्वेविप्राश्चदेवाश्चतथाशमविदोजनाः ॥ ब्रह्मण्यंपरमंदेवमनंतंपरमच्युतम् ४ प्रार्थयंतश्चतंविप्रावदंतिगुणबुद्धयः ॥ सम्यग्युक्तास्तथायोगाःसांख्याश्चामितदर्शनाः ५ अमूर्तेस्तस्यकौंतेयसांख्यंमूर्तिरितिश्रुतिः ॥ अभिज्ञानानितस्याहुर्मतंहिभरतर्षभ ६ द्विविधानीहभूतानिपृथिव्यांपृथिवीपते ॥ जंगमागमसंज्ञानिजंगमंतुविशिष्यते १०७

९९ । १०० परंयोगापेक्षयाश्रेष्ठं एवंसांख्येनयोगेनवाशोधितस्यत्वंपदार्थस्यब्रह्माद्वैतसिद्धयेतत्पदार्थमिदंवक्तुंतत्पदार्थस्वरूपमाह अक्षरमित्यादिना अक्षरंव्यापकं अश्नोतेःसरन् ध्रुवमचंचलं अतएवपूर्णंब्रह्मसर्वोत्कृष्टं सनातनंसदैकरूपं १ निर्द्वंद्वंद्वैतवर्जितं कर्तृजगज्जन्मादिहेतुः शाश्वतमखंडदंडायमानं कूटस्थंनिर्विकारं २ । ३ ब्रह्मण्यंब्रह्मजातिहितं ४ प्रार्थयंतःगुणेषुविषयेषुबुद्धिर्येषांते तंवदंतिमायिकैर्गुणैःस्तुवंति सांख्यायोगाश्चस्तुवंति जगत्कर्तृत्वेनआदिगुरुत्वेनचेतिशेषः ५ सांख्यंज्ञानंशुद्धचिन्मात्रंतस्यस्वरूपमित्यर्थः तत्सत्त्वेमानमाह अभिज्ञानानीति घटादीनांज्ञानानितान्येवतस्यामूर्तेर्ब्रह्मणोमतंज्ञानं मनज्ञानेऽस्माद्वावेविष्ठा निर्विषयघटादिज्ञानभेनपरंब्रह्मेत्यर्थः । यथोक्तंवार्तिके 'परागर्थप्रमेयेषुयाफलत्वेनसंमता ॥ संवित्सैवेहमेयार्थोवेदांतोक्तिप्रमाणतः'इति ६ यदुक्तविधंब्रह्मतत्सच्चिदानंदरूपंतत्रस्थावरेषुसद्अंशमात्राभिव्यक्तिःजंगमेषुसच्चिदंशयोर्विद्वत्सुसच्चिदानंदांशानांत्रयाणामप्यभिव्यक्तिरितितेषामुत्तरमुत्तरंश्रेष्ठमित्याहद्वाभ्यां द्विविधानीति अगमंस्थावरं १०७

महत्सुब्रह्मवित्सु यन्महज्ज्ञानंतत्सांख्यागतंसांख्यैरेवगतं एतेनसांख्यविज्ञानात्सर्वविज्ञानमुक्तं । तथाचस्थावराज्जंगमंश्रेष्ठंजंगमेष्वपिविद्वान्श्रेष्ठतरइतिभावः ८ । ९ शमादिकंसर्वंसांख्ये
सांख्यविज्ञाननिमित्तंविहितमित्यर्थः ११० विपर्यंयेकिंचित्साधनवैकल्याज्ज्ञानानुत्पत्तौ यतेषुयत्नशीलेषु तांश्चानुसंचार्यतेषामाधिपत्यंकृत्वा ११ महार्हेअतिपूज्येऽधिकमभिरतास्तेदेवंत
त्पदार्थंप्रविशंतिक्रमेणेतिशेषः १२ कीदृशीगतिःपापकृतानामधिवासः एतत्परोक्षज्ञानफलमुक्तम् १३ अपरोक्षज्ञानफलमाह सांख्यमिति कृत्स्नंसांख्यंयेधारयंतेसाक्षात्कुर्वतेतेसना
रायणःपरंब्रह्मैव तथाचश्रुतिर्ब्रह्मविद्ब्रह्मैवभवतीति १४ हेनरमयाएतद्देवस्यात्मनस्तत्त्वमुक्तं तच्चनारायणोविश्वमिति सर्वंखल्विदंब्रह्मेतिश्रुतेरित्यर्थः तत्रहेतुः सइति एतेनतज्जलानिति

ज्ञानंमहद्यद्धिमहत्सुराजन्वेदेषुसांख्येषुतथैवयोगे ॥ यच्चापिदृष्टंविविधंपुराणेसांख्यागतंतन्निखिलंनरेंद्र ८ यच्चेतिहासेषुमहत्सुदृष्टंयच्चार्थशास्त्रेनृपशिष्टजुष्टे ॥
ज्ञानंचलोकेयदिहास्तिकिंचित्सांख्यागतंतच्चमहन्महात्मन् ९ शमश्चदृष्टःपरमंबलंचज्ञानंचसूक्ष्मंचयथावदुक्तम् ॥ तपांसिसूक्ष्माणिसुखानिचैवसांख्येयथा
वद्विहितानिराजन् १० विपर्ययेतस्यहिपार्थदेवान्गच्छंतिसांख्याःसततंसुखेन ॥ तांश्चानुसंचार्यततःकृतार्थाःपतंतिविप्रेषुयतेषुभूयः ११ हित्वाचदेहंप्रविशं
तिदेवंदिवौकसोद्यामिवपार्थसांख्याः ॥ अतोऽधिकंतेऽभिरतामहार्हेसांख्येद्विजाःपार्थिवशिष्टजुष्टे १२ तेषांनतिर्यग्गमनंहिदृष्टंनावाग्गतिःपापकृताधिवासः ॥ न
वाप्रधानाअपितेद्विजातयोयेज्ञानमेतन्नृपतेऽनुरक्ताः १३ सांख्यंविशालंपरमंपुराणंमहार्णवंविमलमुदारकांतम् ॥ कृत्स्नंचसांख्यंनृपतेमहात्मानारायणोधार
यतेऽप्रमेयम् १४ एतन्मयोक्तंनरदेवतत्त्वंनारायणोविश्वमिदंपुराणम् ॥ ससर्गकालेचकरोतिसर्गंसंहारकालेचतदत्तिभूयः १५ संहृत्यसर्वंनिजदेहसंस्थंकृत्वाऽप्सु
शेतेजगदंतरात्मा ११६ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्ष० सांख्यकथनेएकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥ ॥ युधिष्ठिरउवाच ॥
किंतदक्षरमित्युक्तंयस्मान्नावर्ततेपुनः ॥ किंचतत्क्षरमित्युक्तंयस्मादावर्ततेपुनः १ अक्षरक्षरयोर्व्यक्तिंपृच्छाम्यरिनिषूदन ॥ उपलब्धुंमहाबाहोतत्त्वेनकु
रुनंदन २ त्वंहिज्ञाननिधिर्विप्रैरुच्यसेवेदपारगैः ॥ ऋषिभिश्चमहाभागैर्यतिभिश्चमहात्मभिः ३ शेषमल्पंदिनानांतेदक्षिणायनभास्करे ॥ आवृत्तेभगवत्य
र्केगंतासिपरमांगतिम् ४ त्वयिप्रतिगतेश्रेयःकुतःश्रोष्यामहेवयम् ॥ कुरुवंशप्रदीपस्त्वंज्ञानदीपेनदीप्यसे ५ तदेतच्छ्रोतुमिच्छामित्वत्तःकुरुकुलोद्वह ॥
नतृप्यामीहराजेंद्रशृण्वन्नमृतमीदृशम् ६ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामिइतिहासंपुरातनम् ॥ वसिष्ठस्यचसंवादंकरालजनकस्यच ७

श्रुतेरर्थउक्तः १५ सांख्यसर्वस्वमाहार्धेन संहृत्येति सर्वकार्यंमात्रंवियदादिकंसंहृत्यप्रविलाप्य कुत्र निजदेहेकारणात्मनिसंस्थाप्यसमाधिर्यस्यसतथाकृत्वास्वयमपिकारणात्माऽप्सुनिर्विशेष
चिन्मात्रेशेतेलीनोभवति जगदंतरात्मानारायणःसर्वमत्स्यभूतः । एतेनयोयंमायावीजगज्जन्मादिहेतुःससर्वेषांमत्स्यभूतईश्वरश्चिन्मात्रेलीयतइतिनिर्विशेषब्रह्माद्वैतमुक्तंभवति ११६ ॥ इतिशां
तिपर्वणिमोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥ त्वंपदार्थशोधकौसांख्ययोगावुक्त्वातस्यपारमार्थिकंतत्पदार्थतत्त्वंक्रमक्षरंतुबमेवोक्तामिरया
दिनांतेतत्पदार्थस्वरूपमुपक्षिप्तंतद्विवरणायारभते किंतदक्षरमित्यादि व्यक्तिविवेकंतत्त्वेनयाथात्म्येनउपलब्धुंपृच्छामीतिद्वयोःसंबंधः १।२।३।४ ।५।६ करालनामाजनकःकरालजनकस्तस्य ७

कुशलंऊहापोहसमर्थं गतिरनुभवस्तेननिश्चयोऽस्यास्तीतितथा अध्यात्मेपरोक्षापरोक्षोभयविधज्ञानकंतमित्यर्थः । मैत्रावरुणिंमित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसंदृष्ट्वावासतीवरेकुंभेरेतोऽ
पतत्ततोऽगस्त्यवसिष्ठावजायेतामितिबह्वृचानांसर्वानुक्रमणिकायांतस्यमैत्रावरुणित्वमुक्तम् ९ प्रश्रितंविनीतं मधुरमर्थतः अनुल्बणंउत्तर्कहीनं १० । ११ यच्चेति यत्राक्षरेक्षरतेलवणोदकवल्ली
यते एतेनक्षराक्षरशब्दप्रवृत्तिनिमित्तेदर्शिते शिवमानंदरूपं क्षेम्यंसंसारमोचकंयतोऽनामयंनिर्द्वंद्वं १२ यावत्कालेनकृत्स्नेनापिकालेन १३ कृत्स्नंक्षरंयावताकालेनक्षरतितत्प्रमाणमाह युगमिति
युगंचतुर्युगंदेवमानेनअब्दानांद्वादशसहस्रसंमितं तदेवचतुर्युगंदशशतावृत्तंकल्पंतदेवचब्राह्ममहरुच्यते । अत्रयोऽयंमानुषःसंवत्सरःसदेवानामहोरात्रस्तयागणनयाद्वादशसहस्रंचतुर्युगं तेनएत
त्षष्ट्यधिकशतत्रयेणगुणितंत्रिचत्वारिंशल्लक्षाणिविंशतिसहस्राणिच । एतेषुदशधाभक्तेष्वेकोंऽशःचतुर्लक्षंद्वात्रिंशत्सहस्राणिचकलेर्मानं तदेवद्विगुणंद्वापरस्य त्रिगुणंत्रेतायाः चतुर्गुणंकृतस्य
एतद्ब्रह्मदिनमानंगीतास्वप्युक्तम् । 'चतुर्युगसहस्रांतद्ब्रह्मणोदिनमुच्यते । रात्रियुगसहस्रांतांतेऽहोरात्रविदोजनाः'इति १४ यस्यांते यस्येतितद्दिवप्रकृतेर्ग्रहणं ब्रह्मणोंतेइत्यर्थः प्रतिबुध्यतेशंभु

वसिष्ठंश्रेष्ठमासीनमृषीणांभास्करद्युतिम् ॥ प्रपच्छजनकोराजाज्ञानंनैःश्रेयसंपरम् ८ परमध्यात्मकुशलमध्यात्मगतिनिश्चयम् ॥ मैत्रावरुणिमासीनमभिवाद्यकृ
तांजलिः ९ स्वक्षरंप्रश्रितंवाक्यंमधुरंचाप्यनुल्बणम् ॥ पप्रच्छर्षिवरंराजाकरालजनकःपुरा १० भगवन्श्रोतुमिच्छामिपरंब्रह्मसनातनम् ॥ यस्मान्नपुनरावृत्ति
माप्नुवंतिमनीषिणः ११ यच्चतत्क्षरमित्युक्तंयत्रेदंक्षरतेजगत् ॥ यच्चाक्षरमितिप्रोक्तंशिवंक्षेम्यमनामयम् १२ ॥ वसिष्ठउवाच ॥ श्रूयतांपृथिवीपालक्षरतीदंयथा
जगत् ॥ यन्नक्षरतिपूर्वेणयावत्कालेनवाऽप्यथ १३ युगंद्वादशसाहस्रंकल्पंविद्धिचतुर्युगम् ॥ दशकल्पशतावृत्तमहस्तद्ब्राह्ममुच्यते १४ रात्रिश्चैतावतीराजन्य
स्यांतेप्रतिबुध्यते ॥ सृजत्यनंतकर्माणंमहांतंभूतमग्रजम् १५ मूर्तिमंतममूर्तात्माविश्वंशंभुःस्वयंभुवः ॥ अणिमालघिमाप्राप्तिरीशानंज्योतिरव्ययम् १६ सर्वतः
पाणिपादंतत्सर्वतोक्षिशिरोमुखम् ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति १७ हिरण्यगर्भोभगवानेषबुद्धिरितिस्मृतः ॥ महानितिचयोगेषुविरिंचिरितिचाप्य
जः १८ सांख्येचपठ्यतेशास्त्रेनामभिर्बहुधात्मकः ॥ विचित्ररूपोविश्वात्माएकाक्षरइतिस्मृतः १९ वृतंनैकात्मकंयेनकृतंत्रैलोक्यमात्मना ॥ तथैवबहुरूपत्वा
द्विश्वरूपइतिस्मृतः २० एषवैविक्रियापन्नःसृजत्यात्मानमात्मना ॥ अहंकारंमहातेजाःप्रजापतिमहंकृतम् २१ अव्यक्ताद्व्यक्तमापन्नंविद्यासर्गंवदंतितम् ॥
महांतंचाप्यहंकारमविद्यासर्गमेवच २२

रितिसंबंधः अग्रजंहिरण्यगर्भं 'हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् । सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम'इतिश्रुतेः १५ अणिमाद्यायत्रस्वयंभुवःनित्यंस्वतः
सिद्धाःनतुहिरण्यगर्भादिष्विवतपसाआविर्भूताः ततईशानंसर्वनियंतृज्योतिश्चिद्रूपमव्ययमपारिणामि १६ अमूर्तमेवाक्षरस्यज्ञेयंरूपमाह सर्वतइति १७ हिरण्यगर्भइतियोऽक्षरइतिस्मृतः
सएषहिरण्यगर्भःसूत्रात्माभगवान्सर्वैश्वर्यसंपन्नः । बुद्धिःसमष्टिबुद्धिरितिवेदांतिनः । योगेतुएषएवमहानितिप्रथमंकार्यं १८ । १९ नैकात्मकंबहुरूपंत्रैलोक्यंकृतंवृतंच तदेवविश्व
रूपोविराड्विश्वंरूपमस्य तथाचश्रुतिः । 'अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः । वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मा'इति २० एषसूत्रात्मा
अहंकारमुपाधिं अहंकर्तृत्वंतदभिमानिनंविराजं २१ अस्यद्वैविध्यमाह अव्यक्तादिति महांतंसमष्टिं चाव्यष्टिंअहंकारमविद्यासर्गम् २२

विद्याविद्ययोर्लक्षणमाह अविधिरिति अत्राक्षरात्कारणाद्धिरण्यगर्भसृष्टिःप्रथमा विराट्सृष्टिर्द्वितीया एकतएतेषांत्रयाणामन्यतमेएकस्मिन्विषयेयोविधिः । आप्नोतेरादिमत्वात् । आप्नोतिद वाइदंसर्वमादिमांश्चभवतियएवंवेदेति तत्तदुपास्तिविधानंसाऽविद्या । योविधिस्तत्त्वमस्यहंब्रह्मास्मिअयमात्माब्रह्मेतिसिद्धवत्कथनंसाविद्या । अयमर्थः यथारज्जुंसर्पत्वेनपश्यंतंभीतंनरंप्र तिकश्चिद्रज्जुरियंनसर्पइतिसिद्धवद्रज्जुमात्रमुपदिशति । तेनचसाक्षात्कृतेनसद्योभयनिवृत्तिर्जायतेसोऽयमविधिर्विद्या । अतिविक्षेपादाप्तवाक्येश्रद्धाहीनंप्रतिइमंसर्पंरज्जुत्वेनभावयतस्तवरज्जुरेव भविष्यति सचकर्मश्रद्धाजडोविधांविश्वस्यभावनाबलेनतस्यरज्जुत्वंपश्यति सर्पदष्टइवगरुडभावनेनात्मनोनिर्विषत्वंतद्वत्सोऽयंविधिरविद्येति तद्वदत्रापिध्येयं २३ उपहितयोर्महदहंकारयोः सूत्रविराडपरपर्याययोःसृष्टिमुक्त्वातदुपाध्योःसृष्टिमाह भूतेति भूतानिपंचतन्मात्राख्यानिसूक्ष्मपंचभूतान्यपंचीकृतानि सर्वेषुसात्विकराजसतामसेषु वैकृतंविकृतमेववैकृतं २४ तमेवाह वायुरिति तत्रवाय्वादीनिपंचीकृतानिस्थूलानिभूतानिशब्दादिसहितानितामसाहंकाराच्चतुर्थःसर्गः २५ युगपदित्याकाशाद्वायुःवायोरग्निरित्यादिःश्रौतक्रमोऽनादरणीयइत्युक्तंदृष्टिसृष्टयाभि

अविधिश्चविधिश्चैवसमुत्पन्नौतथैकतः ॥ विद्याऽविद्येतिविख्यातेश्रुतिशास्त्रार्थचिंतकैः २३ भूतसर्गमहंकारात्तृतीयंविद्धिपार्थिव ॥ अहंकारेषुसर्वेषुचतुर्थंविद्धिवै कृतम् २४ वायुर्ज्योतिरथाकाशमापोऽथपृथिवीतथा ॥ शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच २५ एवंयुगपदुत्पन्नंदशवर्गमसंशयम् ॥ पंचमंविद्धिराजेंद्रभौतिकं सर्गमर्थवत् २६ श्रोत्रंत्वक्चक्षुषीजिह्वाघ्राणमेवचपंचमम् ॥ वाक्हस्तौचपादौचपायुर्मेढ्रंतथैवच २७ बुद्धींद्रियाणिचैतानितथाकर्मेंद्रियाणिच ॥ संभूतानीह युगपन्मनसासहपार्थिव २८ एषातत्त्वचतुर्विंशासर्वाकृतिषुवर्तते ॥ यांज्ञात्वानाभिशोचंतिब्राह्मणास्तत्त्वदर्शिनः २९ एतद्देहंसमाख्यातंत्रैलोक्येसर्वदेहिषु ॥ वेदितव्यंनरश्रेष्ठसदेवनरदानवे ३० सयक्षभूतगंधर्वेसकिन्नरमहोरगे ॥ सचारणपिशाचेवैसदेवर्षिनिशाचरे ३१ सदंशकीटमशकेसपूतिकृमिमूषिके ॥ शुनिश्वपा केचैणेयेसचांडालेसपुल्कसे ३२ हस्त्यश्वखरशार्दूलेसवृक्षेगविचैवह ॥ यच्चमूर्तिमयंकिंचित्सर्वत्रैतन्निदर्शनम् ३३ जलेभुवितथाऽऽकाशेनान्यत्रेतिविनिश्चयः ॥ स्थानंदेहवतामासीदित्येवमनुशुश्रुम ३४ कृत्स्नमेतावतस्तातक्षरतेव्यक्तसंज्ञितम् ॥ अहन्यहनिभूतात्मातत:क्षरइतिस्मृतः ३५ एतदक्षरमित्युक्तंक्षरतीदंयथाजगत् ॥ जगन्मोहात्मकंप्राहुरव्यक्ताव्यक्तसंज्ञकम् ३६ महांश्चैवाग्रजोनित्यमेतत्क्षरनिदर्शनम् ॥ कथितंतेमहाराजयन्मांत्वंपरिपृच्छसि ३७

प्रायेण भौतिकंस्थूलभूतजम् २६ तमेवाह श्रोत्रमिति २७ अत्रतामसानिभूतानि सात्विकानिमनःश्रोत्रादीनि राजसानिवागादीनि जाड्यप्रकाशप्रवृत्तिधर्मत्वादेतेषामयंविभागोबोध्यः २८ एषामूलप्रकृतिः चतुर्विंशाचतुर्विंशतितमी चतुर्विंशीत्यृजुःपाठः । सर्वाकृतिषुसर्वासुविकृतिषु यांप्रकृतिंपुरुषात्पृथग्भूतांज्ञात्वा २९ एतद्विकृत्यात्मकंदेहंपिंडब्रह्मांडात्मकशरीरं क्लीबत्वमार्षं ३० । ३१ । ३२ । ३३ जलेतिनान्यत्रेतिचपंचमहाभूतावर्त्येवदेहवान्जीवस्तान्यतीतस्तुब्रह्मैवेतिभावः ३४ एतावतएतावत्पर्यंतमक्षरावधियद्व्यक्तंतत्क्षरते भूतात्माचतुर्वि शकःसंघातः ३५ एतदिति मत्यगात्मानंत्वंपदार्थमभिनीयदर्शयति इदमिति पराग्भूतंजगत् जगच्छब्दार्थमाह जगदिति एतेनाव्यक्तस्यापिक्षरत्वमुक्तं ३६ अत्रयुक्तिमाह महा निति यतोमहान्सूक्ष्माबुद्धिःसाऽपिनित्यंक्षरत्यतस्तत्कारणमव्यक्तमपिक्षरत्येवेत्यर्थः तथाचप्रयोगः । महान्क्षरोपादानकः क्षरात्मत्वाद्घटवदिति नचात्मधर्माणांदुःखादीनांक्षरत्वेऽपि क्षरोपादानकत्वनास्त्यात्मनोऽनित्यत्वादितिवाच्यं दुःखादेरात्मधर्मत्वस्यैवासिद्धेः । तदभ्युपगमेवावन्ध्यौष्ण्यवन्नित्यत्वसंभवेनयावद्दुःखनिवृत्तिलक्षणस्यमोक्षस्यासिद्धेरित्यास्तांतावत् ३७



पंचविंशतिमः तकारलोपआर्षः विष्णुःशुद्धःचिन्मात्रंसनिर्गुणत्वान्निस्तत्त्वः कथंतर्हिपंचविंशतितत्त्वेषुतस्यगणनेत्यतआह तत्त्वेति तत्त्वाधिष्ठानत्वादेवास्यतत्त्वसंज्ञानतुकार्यत्वात्कारणत्वाद्वाऽ स्यतत्त्वांतर्गतत्वमस्ति । एतेनब्रह्मणोजगदुपादानत्वमपितदुपादानाज्ञानाश्रयत्वादेवेतिव्याख्यातंअन्यथातस्यापिपूर्वोक्तानुमानेनक्षरत्वापत्तिः यथोक्तंसंप्रदायविद्भिः । 'अस्यद्वैतेंद्रजाल स्ययदुपादानकारणं ॥ अज्ञानंतदुपाश्रित्यब्रह्मकारणमुच्यते'इति ३८ निस्तत्त्वत्वादेवाधिष्ठातृत्वमपिनास्तीत्याह यदिति यद्यस्माद्धेतोःमर्त्यंक्षरणधर्मिप्रधानंकर्तृव्यक्तंकार्यमसृजत्तत स्माद्धेतोस्तन्मूर्तिमत् जगत्प्रधानेनैवप्रवर्त्यतइत्यर्थः । कोसावधिष्ठातायश्चतुर्विंशतितमःअव्यक्तः । ननुकथमचेतनस्याधिष्ठातृत्वंसंहतत्वादेवेतिगृहाण हियतःपुरुषोऽमूर्तोऽसंहतःअतो नासावधिष्ठातेत्यर्थः ३९ ननुसंहतमप्यव्यक्तंकाष्ठलोष्टसमत्वान्नाधिष्ठातृभवेदतआह सएवेति चतुर्विंशतितमएवआतिष्ठतेऽधितिष्ठति यतआत्मवान्चिच्छायावान् संधिरार्षः केवलोऽ नुपाधिरपिचेतनःसर्गप्रलयधर्मिण्याप्रकृत्यामूर्तिमान्भवतिस्वतस्त्वमूर्तिमानेव ४० तथैवचनिर्गुणमगोचरमपिगोचरेवर्तते दर्पणेनेवमुखं यदाहुः । नतावदयमेकांतेनाविषयः अस्मत्प्रत्य यविषयत्वादिति ४१ तत्पदार्थनिरूपणमुपसंहरति एवमिति त्वंपदार्थंनिरूपयति विकुर्वाणइति प्रकृतिमानविद्यावान् अबुद्धिमान्मूढः अभिमन्यतेअहमित्यात्मानंमन्यते ४२ ली

पंचविंशतिमोविष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः ॥ तत्त्वसंश्रयणादेततत्त्वमाहुर्मनीषिणः ३८ यन्मर्त्यमसृजद्व्यक्तंतत्तन्मूर्त्यधितिष्ठति ॥ चतुर्विंशतिमोऽव्यक्तोह्य मूर्तःपंचविंशकः ३९ सएवहृदिसर्वासुमूर्तिष्वातिष्ठतेऽऽत्मवान् ॥ केवलश्चेतनोनित्यःसर्वमूर्तिरमूर्तिमान् ४० सर्गप्रलयधर्मिण्यासप्तसर्गप्रलयात्मकः ॥ गोचरेवर्तते नित्यंनिर्गुणंगुणसंज्ञितम् ४१ एवमेषमहानात्मासर्गप्रलयकोविदः ॥ विकुर्वाणःप्रकृतिमानभिमन्यत्यबुद्धिमान् ४२ तमःसत्वरजोयुक्तस्तासुतास्विहयोनिषु ॥ लीयतेप्रतिबुद्धत्वादबुद्धजनसेवनात् ४३ सहवासविनाशित्वान्नान्योऽहमितिमन्यते ॥ योऽहंसोऽहमितिह्युक्त्वागुणानेवानुवर्तते ४४ तमसातामसान्भावान्विवि धान्प्रतिपद्यते ॥ रजसाराजसांश्चैवसात्विकान्सत्वसंश्रयात् ४५ शुक्ललोहितकृष्णानिरूपाण्येतानित्रीणितु ॥ सर्वाण्येतानिरूपाणियानीहप्राकृतानिवै ४६ तामसानिरयंयांतिराजसामानुषानथ ॥ सात्विकादेवलोकायगच्छंतिसुखभागिनः ४७ निष्कैवल्येनपापेनतिर्यग्योनिमवाप्नुयात् ॥ पुण्यपापेनमानुष्यंपुण्येनैकेन देवताः ४८ एवमव्यक्तविषयंक्षरमाहुर्मनीषिणः ॥ पंचविंशतिमोयोऽयंज्ञानादेवप्रवर्तते ४९ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वसिष्ठकरा लजनकसंवादे द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

यतेयोनिभिःसहतादात्म्यंप्राप्नोति ४३ तत्रहेतुमाह सहेति सहवासेनविनष्टुमदर्शनंगंतुंशीलमस्यतस्य भावस्तत्त्वंतस्मात्नान्योहंसंघातादितिमन्यते । योऽहंसोऽहममुष्यपुत्रोऽहममुकजातीयोऽहमितिगुणान्ब्राह्मण्यादीनेव ४४ तामसान्क्रोधादीन् राजसान्प्रवृत्त्यादीन् सात्विकान्प्रकाशादीन् ४५ शुक्लेति क्रमेणस्वच्छत्वाद्रंजकत्वान्मलिनत्वाच्चसत्वादीनिशुक्ललोहितकृष्णानि तान्येवजलतेजोऽन्नानि एतानिदृश्यानि । वाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यमितिश्रुतेः । प्राकृतानिप्रकृतिस्तेजोबन्नानितत्संबंधीनि ४६ तेजोबन्नोपाधिकेषुजीवेषुयेतामसाइतिव्याख्येयं ४७ । ४८ एवमिति यद्वा योऽयंपंचविंशतितमस्तमेवाव्यक्तविषयंमायागोचरंसंतं क्षरंविनाशिनंविकारिणंवाजातोदेवदत्तोमृतोदेवदत्तःसुखीदुःखीपुण्यवान्पापीचेत्यज्ञानादाहुः । कथंतर्हितदुपलब्धिरतआह ज्ञानादेवप्रवर्ततेप्रकाशते एतेनतत्पदार्थएवाज्ञानाज्जीवत्वमापन्नो ज्ञानान्मुच्यतइतिवदतातत्त्वमसीत्यादिवाक्यार्थोजीवब्रह्माभेदःप्राधितोभवति ४९ ॥ इतिशांतिपर्वणि मोक्षपर्वणि नीलकंठीये भारतभावदीपे द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

प्रकृतिसंयोगात्पुरुषस्त्वामेवानुवर्ततइत्युक्तंतत्प्रपंचयत्यध्यायद्वयेन एवममतिबुद्धत्वादित्यादिना अबुद्धमबोधमज्ञानं मावेनिष्ठातेनननसमासः १ गुणक्षयाद्गुणसामर्थ्यात् क्षिप्रैश्वर्ययो रित्यैश्वर्यार्थस्यक्षिधातोरूपं एतच्चतामसानिरयंयातीतिश्लोकेनप्रागेवोक्तं २ आनंत्यमनंतं ३ । ४ निर्द्वंद्वःसुखदुःखादिहीनः ५ हिध्माकासश्वासः ६ एवजीवोऽभिमन्यतेअहमेवदुःखीरो गीचेति ७ । ८ मंडूकवत्पाणिपादंसंकोच्यन्युजःशेतेइतिमंडूकशायी ९ आकाशेनिरावरणेदेशे १० ।११ फलगृद्धयाफलाशाः मुंजमेखलेतिकौपीनवस्त्रंलक्ष्यते १२ वालेत्याविकंकंबलोलक्ष्यते

॥ वसिष्ठउवाच ॥ एवमप्रतिबुद्धत्वादबुद्धमनुवर्तते ॥ देहाद्देहसहस्राणितथासमभिपद्यते १ तिर्यग्योनिसहस्रेषुकदाचिद्देवतास्वपि ॥ उपपद्यतिसंयोगाद्गुणैःसह गुणक्षयात् २ मानुषत्वाद्दिवंयातिदिवोमानुष्यमेवच ॥ मानुष्यान्निरयस्थानमानंत्यंप्रतिपद्यते ३ कोशकारोयथाऽऽत्मानंकीटःसमवरुंधति ॥ सूत्रतंतुगुणैर्नि त्यंतथाऽयमगुणोगुणैः ४ द्वंद्वमेतिचनिर्द्वंद्वस्तासुतास्विहयोनिषु ॥ शीर्षरोगेऽक्षिरोगेचदंतशूलेगलग्रहे ५ जलोदरेतृषारोगेज्वरगंडेविषूचके ॥ श्वित्रकुष्ठेऽग्नि दग्धेचहिध्मापस्मारयोरपि ६ यानिचान्यानिद्वंद्वानिप्राकृतानिशरीरिषु ॥ उत्पद्यंतेविचित्राणितान्येषोऽप्यभिमन्यते ७ तिर्यग्योनिसहस्रेषुकदाचिद्देवतास्वपि॥ अभिमन्यत्यभीमानात्तथैवसुकृतान्यपि ८ शुक्लवासाश्चदुर्वासाःशायीनित्यमधस्तथा ॥ मंडूकशायीचतथावीरासनगतस्तथा ९ चीरधारणमाकाशेशयनंस्था नमेवच ॥ इष्टकाप्रस्तरेचैवकंटकप्रस्तरेतथा १० भस्मप्रस्तरशायीचभूमिशय्यातलेषुच ॥ वीरस्थानांबुपंकेचशयनंफलकेषुच ११ विविधासुचशय्यासुफल गृद्ध्यान्वितस्तथा ॥ मुंजमेखलनग्नत्वंक्षौमकृष्णाजिनानिच १२ शाणीवालपरीधानोव्याघ्रचर्मपरिच्छदः ॥ सिंहचर्मपरीधानःपट्टवासास्तथैवच १३ फलक परिधानश्चतथाकंटकवस्त्रधृक् ॥ कीटकावसनश्चैवचीरवासास्तथैवच १४ वस्त्राणिचान्यानिबहून्यभिमन्यत्यबुद्धिमान् ॥ भोजनानिविचित्राणिरत्नानिविविधा निच १५ एकरात्रांतराशित्वमेककालिकभोजनम् ॥ चतुर्थाष्टमकालश्चषष्ठकालिकएवच १६ षड्रात्रभोजनश्चैवतथैवाष्टाहभोजनः ॥ सप्तरात्रदशाहारोद्वादशा हिकभोजनः १७ मासोपवासीमूलाशीफलाहारस्तथैवच ॥ वायुभक्षोऽम्बुपिण्याकदधिगोमयभोजनः १८ गोमूत्रभोजनश्चैवशाकपुष्पादएवच ॥ शैवालभोजन श्चैवतथाऽऽचामेनवर्तयन् १९ वर्तयन्शीर्णपर्णैश्चप्रकीर्णफलभोजनः ॥ विविधानिचकृच्छ्राणिसेवतेसिद्धिकांक्षया २० चांद्रायणानिविधिवल्लिंगानिविविधानिच॥ चातुराश्रम्यपंथानमाश्रयत्यपथानपि २१ उपाश्रमानप्यपरान्पाषंडान्विविधानपि ॥ विविक्ताश्चशिलाच्छायास्तथाप्रस्रवणानिच २२ पुलिनानिविविक्तानि विविक्तानिवनानिच ॥ देवस्थानानिपुण्यानिविविक्तानिसरांसिच २३ विविक्ताश्चापिशैलानांगुहागृहनिभोपमाः ॥ विविक्तानिचजप्यानिव्रतानिविविधानिच २४ नियमान्विविधांश्चापिविविधानितपांसिच ॥ यज्ञांश्चविविधाकारान्विधींश्चविविधांस्तथा २५

१३ फलकंभूर्जत्वगादिचिपिटकाष्ठंवाकौपीनरूपं कंटकवस्त्रंशा ल्मल्यादितूलजं । कटकेतिपाठेतृणमयःकटः कीटकावसनःपट्टसूत्रजवस्त्रः १४ । १५ । १६ दशाहारोदशाहाद्धारः एकोहाकारोऽष्टमः दशाहेनाहारोयस्येत्यर्थः १७ । १८ आचामेनभक्तमं डेन'भासराचामनिस्रावामंडेभक्तसमुद्भवे'इत्यमरः १९ । २० । २१ उपाश्रमान्पाशुपतपांचरात्राद्युक्तदीक्षायोगान् २२ । २३ गृहेषुयेनिभाःनिवरामांतिते दिव्यगृहोपमाइत्यर्थः २४ । २५



२६ । २७ प्रकृत्योपकरणभूतया २८ । २९ विशसनेसंग्रामे ३० मर्वमूर्ध्नि अभ्येत्यप्रसित्वा ३१ । ३२ आत्मरूपगुणान्आत्मनिकल्पितान् रूपंवयोवर्णादित्यादि गुणान्सत्त्वादीन् ३३ क्रियापथेकर्ममार्गे क्रियांतथातदितिमन्यतेइदंकर्मएवंगुणंफलमित्यावश्यकत्वेनमानयति ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ निरात्मानिःस्वरूपश्चिदाभासविशिष्टोदेहें द्रियादिसंघातः दृश्यत्वेनशुक्तिरजतादिवन्मिथ्यात्वात् आत्मगुणैश्चेतनत्वसत्यत्वसुखत्वैः यथोक्तं । आनंदोविषयानुभवोऽनित्यत्वंचेतिसतिधर्माः अपृथक्त्वेऽपिचतेषांचैतन्यात्पृथगिवा

वणिक्पथंद्विजंक्षत्रंवैश्यशूद्रांस्तथैवच ॥ दानंचविविधाकारंदीनांधकृपणादिषु २६ अभिमन्यत्यसंबोधात्तथैवत्रिविधान्गुणान् ॥ सत्त्वंरजस्तमश्चैवधर्मार्थौकामए वच २७ प्रकृत्यात्मानमेवात्माएवंप्रविभजत्युत ॥ स्वधाकारवषट्कारौस्वाहाकारनमस्क्रियाः २८ याजनाध्यापनंदानंतथैवाहुःप्रतिग्रहम् ॥ यजनाध्यापनेचै वयच्चान्यदपिकिंचन २९ जन्ममृत्युविवादेचतथाविशसनेऽपिच ॥ शुभाशुभमयंसर्वमेतदाहुःक्रियापथम् ३० प्रकृतिःकुरुतेदेवीभवंप्रलयमेवच ॥ दिवसांतेगुणा नेतानभ्येत्यैकोऽवतिष्ठते ३१ रश्मिजालमिवादित्यस्तत्तत्कालेनियच्छति ॥ एवमेषोऽसकृत्पूर्वंक्रीडार्थमभिमन्यते ३२ आत्मरूपगुणानेतान्विविधान्हृदय प्रियान् ॥ एवमेतांविकुर्वाणःसर्गप्रलयधर्मिणीम् ३३ क्रियांक्रियापथेरक्तस्त्रिगुणांस्त्रिगुणाधिपः ॥ क्रियांक्रियापथोपेतस्तथातदितिमन्यते ३४ प्रकृत्यासर्वमेवेदंज गद्ंधीकृतंविभो ॥ रजसातमसाचैवव्याप्तंसर्वमनेकधा ३५ एवंद्वंद्वान्यथैतानिसमावर्ततिनित्यशः ॥ ममैवैतानिजायंतेधावंतेतानिमामिति ३६ निस्तर्तव्या न्यथैतानिसर्वाणीतिनराधिप ॥ मन्यतेऽयंह्यबुद्धत्वात्तथैवसुकृतान्यपि ३७ भोक्तव्यानिमयैतानिदेवलोकगतेनवै ॥ इहैवचैनंभोक्ष्यामिशुभाशुभफलोदयम् ३८ सुखमेवतुकर्तव्यंसकृत्कृत्वासुखंमम ॥ यावदंतंचमेसौख्यंजात्यांजात्यांभविष्यति ३९ भविष्यतिचमेदुःखंकृतेनेहाप्यनंतकम् ॥ महद्दुःखंहिमानुष्यंनिरयेचापि मज्जनम् ४० निरयाच्चापिमानुष्यंकालेनैष्याम्यहंपुनः ॥ मनुष्यत्वाच्चदेवत्वंदेवत्वात्पौरुषंपुनः ४१ मनुष्यत्वाच्चनिरयंपर्यायेणोपगच्छति ॥ यएवंवेत्तिनित्यंवै निरात्माऽऽत्मगुणैर्वृतः ४२ तेनदेवमनुष्येषुनिरयेचोपपद्यते ॥ ममत्वेनावृतोनित्यंतत्रैवपरिवर्तते ४३ सर्गकोटिसहस्राणिमरणांतासुमूर्तिषु ॥ यएवंकुरुते कर्मशुभाशुभफलात्मकम् ॥ सएवंफलमाप्नोतित्रिषुलोकेषुमूर्तिमान् ॥ प्रकृतिःकुरुतेकर्मशुभाशुभफलात्मकम् ॥ प्रकृतिश्चतदश्नातित्रिषुलोकेषुकामगा ४५ ति र्यग्योनिमनुष्यत्वंदेवलोकेतथैवच॥ त्रीणिस्थानानिचैतानिजानीयात्प्राकृतानिह४६अलिंगांप्रकृतिंत्वाहुर्लिंगैरनुमिमीमहे ॥तथैवपौरुषंलिंगमनुमानाद्धिमन्यते ४७

वभासंतइति ४२ । ४३ । ४४ प्रकृतिरिति यथास्त्रीपुंसाभ्यामपत्यमिवपुंप्रकृतिभ्यामेवसर्वंकार्यंक्रियतेनान्यतरेणतथाऽपिविवक्षितविवेकेप्रकृतावेवकर्तृत्वंपर्यवस्यति तस्याःसविकारत्वात्नतु पुंसिनिर्विकारत्वादित्यर्थः ४५ । ४६ अलिंगांनित्यानुमेयां नतुवह्निवत्कदाचित्प्रत्यक्षां कथंतर्हिसामन्यते दृष्टैर्लिंगैर्महदादिकार्यैस्तत्कारणभूतांतामनुमिमीमहे पौरुषंलिंगंपुरुषस्यानु मापकंदेहाद्यनुगतंचैतन्यं चिदाभासलिंगेनचितिरनुमीयतेइत्यर्थः । इतिमन्यतेनिरीश्वरः सांख्योनतुवत्तयोतिभावः । यस्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरइतिचितोऽव्यवहितापरो क्षत्वश्रुतिविरोधात् ४७

सइति अव्रणंप्राकृतंलिंगंनिर्विकारंप्रकृतेरिदंलिंगंगमकं दृश्यायाःप्रकृतेःसाधकइत्यर्थः । सलिंगांतरंपुर्यष्टकंगर्भंप्राप्य क्षरणधर्मित्वाद्व्रणोलिंगंतस्यद्वाराणिश्रोत्रादीनि ४८ । ४९ निर्व्रणोऽपिव्रणवानस्मीतिमन्यते ५० । ५१ अलिंगोलिंगादन्योऽपि लिंगंपुर्यष्टकं कालंमृत्युं मरणधर्मास्मीतिमन्यतेइत्यर्थः सत्वंबुद्धिंअसत्वमवस्तुदेहादिकं आत्मनस्तत्त्वमनारोपितंरूपं ५१ मृत्युंहंतारं चरं चरत्वंसर्गंपुत्रादिमात्मसंबंधिनंमन्यते ५२ तपस्तपस्विनं गतिमुत्क्रांतिगत्यागतिं भवंभववंतंसंसारिणं ५३ अबुद्धिर्विपर्यस्तबुद्धिः ५४ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥ ॥ एवंपूर्वोक्तप्रकारेण १ धाम्नापोडशकलःपुरुषइतिप्रकृत्यप्रवैवास्यपोडशीकलेतिश्रुतिप्रसिद्धयाप्रकाशरूपयाचित्कलया धामसहस्राणिस्थानसहस्राणिप्राज्ञेनात्मनासंपरिष्वक्तउत्सर्जयातीतिब्रह्मलिंगितस्यैवगत्यादिश्रवणात् २ अत्रदृष्टांतमाह चंद्रमाइव ३ योनिःसाभासामूलप्रकृतिः दशेंद्रियाण्यंतःकरणचतुष्टयंचापेक्ष्यसापंचदशी सोममनूतं

सलिंगांतरमासाद्यप्राकृतंलिंगमव्रणम् ॥ व्रणद्वाराण्यधिष्ठायकर्मणाऽऽत्मनिमन्यते ४८ श्रोत्रादीनितुसर्वाणिपंचकर्मेंद्रियाण्यथ ॥ वागादीनिप्रवर्तंतेगुणेष्विह गुणैःसह ३९ अहमेतानिवैसर्वमय्येतानींद्रियाणिह ॥ निरिंद्रियोहिमन्येतव्रणवानस्मिनिर्व्रणः ५० अलिंगोलिंगमात्मानमकालःकालमात्मनः ॥ असत्वंसत्वमात्मानमतत्त्वंतत्त्वमात्मनः ५१ अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः ॥ अक्षेत्रःक्षेत्रमात्मानमसर्गःसर्गमात्मनः ५२ अतपास्तपआत्मानमगतिर्गतिमात्मनः ॥ अभवोभवमात्मानमभयोभयमात्मनः ५३ अक्षरःक्षरमात्मानमबुद्धिस्त्वभिमन्यते ५४ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वसिष्ठकरालजनकसंवादे त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥ ॥ वसिष्ठउवाच ॥ एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ सर्गकोटिसहस्राणिपतनांतानिगच्छति १ धाम्नाधामसहस्राणिमरणांतानिगच्छति ॥ तिर्यग्योनिमनुष्यत्वेदेवलोकेतथैवच २ चंद्रमाइवभूतानांपुनस्तत्रसहस्रशः ॥ लीयतेप्रतिबुद्धत्वादेवमेषह्यबुद्धिमान् ३ कलापंचदशीयोनिस्तद्धामप्रतिबुध्यते ॥ नित्यमेतद्विजानीहिसोमंवैषोडशींकलाम् ४ कलायांजायतेऽजस्रंपुनःपुनरबुद्धिमान् ॥ धामतस्योपयुंजंतिभूयएवोपजायते ५ षोडशीतुकलासूक्ष्मासससोमउपधार्यताम् ॥ नतूपयुज्यतेदेवैर्देवानुपयुनक्तिसा ६ एतामक्षपयित्वाहिजायतेनृपसत्तम ॥ साह्यस्यप्रकृतिर्दृष्टातत्क्षयान्मोक्षउच्यते ७

चिदात्मानं नित्यमेतद्धामेतिसंबंधः ४ कलायांयोनिभूतायांपंचदश्यामविद्यायांनिमित्तभूतायांसत्यां अबुद्धिमान्मूढोविपर्यस्तमतिः जायतेजन्मलभते तस्यजायमानस्यपुरुषस्यधामषोडशिकलात्मानंदरूपामुपयुंजंतिभूतानीतिशेषः । एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः । उपजायते एकवचनमार्षं युंजंतीतिप्रथमंसुप्तिचिदानंदलेशंविषयसंपर्कजमुपजीव्यभूतानिसंसरंतीत्यर्थः ५ चित्कलातुनेवसंसरतीत्याह षोडशीति देवैरिंद्रियैर्नोपयुज्यतेपाल्यतेकिंतुदेवानेवसत्तास्फूर्तिप्रदानेन उपयुनक्तिपालयति ६ एतांषोडशीमक्षपयित्वाअविनाश्यजायतेइदंसर्वंरज्जुमिवसर्पः नतुपिंडमिवघटउपमृद्यजायतेतद्वत् अक्षपणेहेतुमाह साहीति यत्रकार्यमुत्पद्यतेयत्रचलीयतेसाप्रकृतिरितिप्रसिद्धंलोके । नहिपिंडेघटोलीयतेकिंतुपिंडस्यप्रकृतिभूतायांमृद्येव । नचकपालादिकार्यांतरोत्पादएवपूर्वकार्यप्रलयइतिवाच्यं निराश्रयायाःकार्यधारायाअनुपपत्तेः कुतः घटशरावोदंचनादिषुपिंडलोष्टपांसुपरमाणुष्वव्यावृत्तेषुयन्मृदित्यनुस्यूतव्यवहारालंबनंतत्कुसुमेभ्यःसूत्रमिवतेभ्यःपृथक्तदुदयलयस्थानंमंतव्यं अतःप्रकृतित्वात्षोडश्याःक्षपणंनयुज्यतइत्यर्थः । अस्यकार्यस्य नन्वितएवदृष्टांतात्षोडश्याःकार्याकारत्वंदुस्त्यजमित्याशंक्याह तत्क्षयादिति कार्यक्षयान्मुच्यतइत्यर्थः । सत्यंमृदोऽपिविकारविशेषत्वात्



कतिपयविकारेष्वनुवृत्तावपिनिर्विकाररूपंनप्रत्यक्षंतथाऽपिजलमेवतस्यानिर्विकाररूपमेवंजलस्यतेजस्तेजसःसन्मात्रंयत्सर्वकार्येष्वनुस्यूतंतस्यैवसत्यत्वंवक्तव्यं इतरस्यविकारस्य मिथ्यात्वंवाचारंभणंविकारोनामधेयमितिश्रुतेः सतोऽपिविकारत्वेऽनवस्थापत्तिःशून्याच्चजगदुत्पत्त्यसंभवस्यकथमसतःसज्जायेतेतिश्रुत्यैवाक्षिप्तत्वात् । तस्मात्सर्वविकारक्षयेऽपिसन्मात्रंब्रह्मास्तीतितद्भावापत्तिर्मोक्षइतियुक्तमुक्तंतत्क्षयान्मोक्षउच्यतइति गौडास्तुएवंतांक्षपयित्वेतिपठंति तदापंचदशीपरएवायमृज्वर्थःश्लोकः ७ तदेवेति यद्धामशब्देनमोक्षशब्देनचोच्यतेतदेवाऽऽनंदात्मकंवस्तुषोडशकलंचिदचित्संघातरूपंपिंडब्रह्मांडात्मकं तथाचश्रुतिः । 'आनंदाद्ध्येवखल्विमानिभूतानिजायंते आनंदेनजातानिजीवंति आनंदंप्रयंत्यभिसंविशंतीति' तत्राप्यव्यक्तसंज्ञकंपंचदशीकल्यापूर्वयोनिशब्देनोक्तातत्कार्यत्वात्तदभिन्नंदेहंयोनरोममायमितिदेहममतांकरोति तत्रैवपरिवर्तते देहेननमुच्यतइत्यर्थः ८ योमन्वानस्तमाह पंचविंशइति शुद्धाशुद्धनिषेवणात्क्रमेणशुद्धोऽशुद्धश्चभवतीतिशेषः ९ तादृक्असंगोह्ययंपुरुषइतिश्रुतेरसंगोऽपिशुद्धात्माऽशुद्धएवभवति तत्रहेतुर्ममायमिति मन्वानइत्यनुवर्तते तादृगित्यनेनैववाऽयंहेतुरनुकृष्यते अबुद्धोऽज्ञः १० अप्रतिबुद्धःप्रतीपोबोधःप्रतिबोधस्तद्रहितोविपर्ययहीनः

तदेवषोडशकलंदेहमव्यक्तसंज्ञकम् ॥ ममायमितिमन्वानस्तत्रैवपरिवर्तते ८ पंचविंशोमहानात्मातस्यैवाप्रतिबोधनात् ॥ विमलस्यविशुद्धस्यशुद्धाशुद्धनिषेवणात् ९ अशुद्धएवशुद्धात्मातादृग्भवतिपार्थिव ॥ अबुद्धसेवनाच्चापिबुद्धोऽप्यबुद्धतांव्रजेत् १० तथैवाप्रतिबुद्धोऽपिविज्ञेयोनृपसत्तम ॥ प्रकृतेस्त्रिगुणायास्तुसेवनात्त्रिगुणोभवेत् ११ ॥ इति श्रीमहाभारते शांति॰ मोक्ष॰ वसिष्ठक॰चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥ ॥ जनकउवाच ॥ अक्षरक्षरयोरेषद्वयोःसंबंधइष्यते ॥ स्त्रीपुंसयोर्वाऽपिभगवन्संबंधस्तद्वदुच्यते १ ऋतेतुपुरुषंनेहस्त्रीगर्भंधारयत्युत ॥ ऋतेस्त्रियंनपुरुषोरूपंनिर्वर्तयेत्तथा २ अन्योन्यस्याभिसंबंधादन्योन्यगुणसंश्रयात् ॥ रूपंनिर्वर्तयत्येतदेवंसर्वासुयोनिषु ३ रत्यर्थमभिसंबंधादन्योन्यगुणसंश्रयात् ॥ ऋतौनिर्वर्त्यतेरूपंतद्वक्ष्यामिनिदर्शनम् ४ येगुणाःपुरुषस्येहयेचमातृगुणास्तथा ॥ अस्थिस्नायुश्चमज्जाचजानीमःपितृतोगुणाः ५ त्वङ्मांसंशोणितंचेतिमातृजान्यपिशुश्रुम ॥ एवमेतद्द्विजश्रेष्ठवेदशास्त्रेचपठ्यते ६ प्रमाणंयत्स्ववेदोक्तंशास्त्रोक्तंयच्चपठ्यते ॥ वेदशास्त्रद्वयंचैवप्रमाणंतत्सनातनम् ७ अन्योन्यगुणसंरोधादन्योन्यगुणसंश्रयात् ॥ एवमेवाभिसंबद्धौनित्यंप्रकृतिपूरुषौ ८

तथैवेत्यनेनतादृशजनसेवनात्तादृशोभवतीत्युक्तं ११ ॥ इति शांति॰ मोक्षध॰ नी॰ भारतभावदीपे चतुरधिकत्रिशततमोऽध्यायः ॥ २०४ ॥ तत्क्षयान्मोक्षउच्यतेइतिप्रकृतिवियोगान्मोक्षउक्तस्तंप्रकृतेःपुरुषतुल्यत्वेननिवृत्तिर्नसंभवतीतिमन्वानआक्षिपति अक्षरक्षरयोरिति १ रूपमाकृतिं २ । ३ । ४ येगुणाइति द्रोणस्यमातुरभावेऽपिधृष्टद्युम्नस्यमातापित्रोर्द्वयोरप्यभावेऽपित्वगस्थ्यादिदर्शनेनव्याप्तिव्यभिचारोनशंक्यः । यज्ञाद्भवतिपर्जन्यइतिस्मृतेर्दंपतीसाध्यस्ययज्ञस्यपर्जन्यादिद्वारामजाहेतुत्वेनतत्राप्युभयसंबंधानपायात् साधारणव्यवहारापेक्षयावाइयमुक्तिः ५ । ६ यद्वेदेशास्त्रेचप्रमाणत्वेनपठ्यतेतद्वेदशास्त्रंप्रमाणमित्यर्थः । तस्माद्वेदेषुक्तंतद्विद्वांसउपजीवंतीति । तस्माद्ब्राह्मणोनावैदिकमभिधीयेतेतिमैत्रायणीयेवेदस्यप्रामाण्यंतदन्यस्याप्रामाण्यंश्रूयते तस्माच्छास्त्रंप्रमाणंतइतिच । ननुवेदशास्त्रस्यप्रामाण्यंस्वोक्त्यैवचेत्शाक्यग्रंथानामपितथैवप्रामाण्यंस्यादित्याशंक्याह सनातनमिति वेदस्यहिदृष्टकर्तृस्मरणाभावादपौरुषेयतयानित्यत्वेनाप्रामाण्यशंकानास्पदत्वमस्तिनतुसंभवत्भ्रमविप्रलंभानांशाक्यादिपुरुषाणांवाक्यस्येतिभावः ७ एवंशास्त्रस्यप्रामाण्यमुक्त्वातदर्थंविध्याद्यधिकारिणंभट्टाभिमतंचिदचिदात्मकंकर्तारमाह अन्योन्येति पुंसाप्रकृतेर्जाड्यंरुद्धंदुःखंचाश्रितं तथाचास्याऽऽनंदादिकंरुद्धंचैतन्यादिकंचाश्रितम् । फलितमाह एवमिति चिदचित्ग्रंथेर्दृढत्वान्नमोक्षसंभावनाप्यऽस्तीतिभावः ८

अनंतरकृतंसाक्षात्कृतंनिदर्शनंमोक्षेदृष्टांतं प्रत्यक्षःप्रत्यक्षदर्शी ९ अनामयंनिर्दुःखं यस्माद्देहे 'अशरीरंवावसंतंनप्रियाप्रियेस्पृशतः'इतिश्रुतेः अनीश्वरमीशादपिपरमित्यर्थः १० वेदप्रामाण्यमभ्युपेत्यापिवेदार्थीचिदचितोस्त्रैकालिकंसंबंधंनजानासीत्याह यदेतदित्यादिना ११।१२ धारणंवृथेति श्रुतिश्चात्रभवति 'यस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोअस्ति। यदोंशृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथां'इतिपचसेवायाम् सेवाविदंसखायमंतरात्मानंतित्याजत्यक्तवान् भागःफलांशोऽक्षरग्रहणजः यदायदेतत् अलकमलीकंवृथेत्यर्थः सुकृतस्यब्रह्मणः पंथांपंथानं१३ भारमिति श्रुतिश्च।'स्थाणुरयंभारहारःकिलाभूदधीत्यवेदंनविजानातियोऽर्थं। योऽर्थज्ञइत्सकलंभद्रमश्नुतेनाकमेतिज्ञानविधूतपाप्मा'इति १४।१५ संसत्सुविद्वत्सभासु १६ छिद्रात्माज्ञानरिक्तचित्तभांडः सोपहासेपिपादपूरणार्थःसंधिः १७ महात्मस्वात्मवित्सु१८यदेवेति फलतःसाधनतश्चसांख्ययोगयोरैक्येसतिव्यवहारोपपादनेनिस्तात्पर्यैतयोर्विरोधोदृश्यमानोऽप्यकिंचित्करइतिभावः१९ 'अस्थिस्नायुश्चमज्जाचज्ञानीमःपितृतोगुणाः। त्वङ्

पश्यामिभगवंस्तस्मान्मोक्षधर्मोनविद्यते ॥ अथवाऽनंतरकृतंकिंचिदेवनिदर्शनम् ॥ तन्ममाचक्ष्वतत्त्वेनप्रत्यक्षोह्यसिसर्वदा ९ मोक्षकामावयंचापिकांक्षामोयदनामयम् ॥ अदेहमजरंनित्यमतींद्रियमनीश्वरम् १० ॥ वसिष्ठउवाच ॥ यदेतदुक्तंभवताविदशास्त्रनिदर्शनम् ॥ एवमेतद्यथाचैतन्निगृह्णातितथाभवान् ११ धार्यतेहित्वयाग्रंथउभयोर्वेदशास्त्रयोः ॥ नचग्रंथस्यतत्त्वज्ञोयथातत्त्वंनरेश्वर १२ योहिवेदेचशास्त्रेचग्रंथधारणतत्परः ॥ नचग्रंथार्थतत्त्वज्ञस्तस्यतद्धारणंवृथा १३ भारंसवहतेतस्यग्रंथस्यार्थंनवेत्तियः ॥ यस्तुग्रंथार्थतत्त्वज्ञोनास्यग्रंथागमोवृथा १४ ग्रंथस्यार्थस्यपृष्टःसंस्तादृशोवक्तुमर्हति ॥ यथातत्त्वाभिगमनादर्थंतस्यसविंदति १५ नयःसंसत्सुकथयेद्ग्रंथार्थंस्थूलबुद्धिमान् ॥ सकथंमंदविज्ञानोग्रंथंवक्ष्यतिनिर्णयात् १६ निर्णयंचापिच्छिद्रात्मानतंवक्ष्यतितत्त्वतः ॥ सोपहासात्मतामेतियस्माच्चैवात्मवानपि १७ तस्मात्त्वंशृणुराजेंद्रयथैतदनुदृश्यते ॥ याथातथ्येनसांख्येषुयोगेषुचमहात्मसु १८ यदेवयोगाःपश्यंतिसांख्यैस्तदनुगम्यते ॥ एवंसांख्यंचयोगंचयःपश्यतिसबुद्धिमान् १९ त्वङ्मांसंरुधिरंमेदःपित्तंमज्जाचस्नायुच ॥ अथचेंद्रियकंताततद्भवानिदमाहमाम् २० द्रव्याद्द्रव्यस्यनिर्वृत्तिरिंद्रियादिंद्रियंतथा ॥ देहाद्देहमवाप्नोतिबीजाद्बीजंतथैवच २१ निरिंद्रियस्याबीजस्यनिर्द्रव्यस्याप्यदेहिनः ॥ कथंगुणाभविष्यंतिनिर्गुणत्वान्महात्मनः २२

मांसंशोणितंचेतिमातृजान्यपिशुश्रुम'इतिस्त्रीपुंसाभ्यामिवपुंप्रकृतिभ्यांशरीरंनिर्वर्त्यतइत्युक्तंतदनुवदन्दृष्टांतासिद्धिमाह त्वगित्यादिना ऐंद्रियकामिंद्रियसमुदायश्चाधिकः २० सेंद्रियकंधातुसप्तकंबीजाद्बीजांतरमिवजायते नह्येकंकार्यंबीजद्वयोत्पत्तिकमितिदृष्टमस्तीत्याशयवानाह द्रव्यादिति २१ दार्ष्टांतिकेपुंप्रकृत्योर्विषमस्वभावत्वात्संबंधासंभवमाह निरिंद्रियस्येति नतावत्पुंप्रकृत्योर्विषयविषयिभावलक्षणःसंबंधः पुंसोनिरिंद्रियत्वात्प्रकृतेस्तुच्छत्वात् नापिबीजांकुरवज्जन्यजनकभावः केवलत्वेनपुंसोबीजशक्तिशून्यत्वात्प्रकृतेरकार्यत्वाच्च नापिकुलालघटवत् पुंसोऽद्वितीयत्वेनोपादानांतराभावात्तत्कल्पनेऽनवस्थापत्तेश्च। नाप्ययस्कांतमणिलोहवत्तयोःसंबंधः उभयोरप्यमूर्तत्वात्। मूर्तिमतोर्हिद्वयोरुभयकर्मजोऽन्यतरकर्मजोवासंबंधोयुज्यतेनत्वमूर्तयोः नास्तिदेहीप्रतिसंबंधीयस्येति नदेहीचसमासद्वयेनार्थद्वयमुन्नेयं। नापिपराभिमतःसमवायस्तादात्म्यंवा निर्गुणेगुणसंबंधासंभवात्। नत्वस्पर्शेनभसिशीतोष्णादिस्पर्शवत्त्वंवक्तुंशक्यमेवंनिरिंद्रियस्येत्यादिहेतुपंचकंपुंप्रकृत्योःसंबंधासंभवार्थमुक्तं वार्तिकेतु 'निःसंगस्यससंगेनकूटस्थस्यविकारिणा। आत्मनोऽनात्मनायोगोवास्तवोनोपपद्यते'इत्येवोक्तं तत्रासंगत्वकूटस्थत्वेप्रसाध्येनिरिंद्रियत्वादिहेतुचतुष्टयंतुबहुवादिसंमतमितियुक्ततरं २२



कथंतर्हिएषास्थितिरतआह गुणाइति गुणाःस्वादयः गुणेषुत्रिगुणात्मिकायांमायायां २३ कथमसहायायास्तस्याजगज्जनकत्वमित्याशंक्यदृष्टांतेनसाधयति त्वगिति यथाद्रोणशरीरंमातरंविनाऽप्येकेनैवशुक्रेणमेदआदिवत्त्वगादिकमपिजातं एवमेकयैवदर्पणवत्परप्रतिबिंबग्रहणशीलयाकृत्स्नोजगज्जीवात्माप्रपंचोजायतइतिश्लोकद्वयार्थः २४ पुमानविद्यायामंतःकरणेवाचिन्प्रतिबिंबोजीवः अपुमान्वियदादिः त्रैलिंग्यंत्रीण्यात्मनोलिंगानिगमकानिप्रमातृप्रमाणप्रमेयानि एतैर्हिलिंगैरेतेषांसाधकश्चिदात्मागम्यते स्वार्थेशत्र् पुमानपुमानितिआभासोपाध्योःपृथग्ग्रहणं त्रैलिंग्येतुतयोर्वैशिष्ट्यंविवक्षितं तथाहि अंतःकरणविशिष्टमाभासचैतन्यंप्रमाता अंतःकरणवृत्तिविशिष्टंप्रमाणंघटाद्यवच्छिन्नंप्रमेयमितिप्रसिद्धं। ननुप्रमातुर्योग्यतयाघटएवप्रमेयंनतुघटावच्छिन्नमाभासचैतन्यंघटज्ञानाख्यं सत्यं प्रमाकरणप्रमाणस्यहिफलं प्रमेयंतच्चोक्तविधाप्रमैव तत्संबंधात्तुघटादिरपिप्रमेयं अतोमुख्यंप्रमेयंचैतन्यमेव अज्ञानेनतस्यैवावृतत्वाज्जडेघटादौआवरणकृत्याभावाच्च। घटाद्यनुभवस्यैवहिपुरुषार्थत्वमतस्तस्यैवावृतत्वमनावृतत्वंवावाच्यंनघटादेरित्यास्तांतावत्। लिंगानांप्रमात्रादीनांप्राकृतत्वेऽपिलिंगीनप्राकृतइत्याह नवेति लिंगीपुमानितिअपुमानितिवानाभिधीयतइतियोजना जीवजगतोरन्यइत्यर्थः २५ ननुसंबंधाभावेप्रकृतिपुरुषयोःकथंलिंगलिंगिभावइत्याशंक्याह अलिंगादिति ल्यब्लोपेपंचमी अलिंगंपुरुषंप्राप्यसाप्रकृतिरात्मजैर्लिंगैर्महदादिभिःकार्यैर्गमकैरुपालभ्यतिउपलभ्यते अमूर्तयःक्रतवोयथाफलादि

गुणागुणेषुजायंतेतत्रैवनिविशंतिच ॥ एवंगुणाःप्रकृतितोजायंतेनिविशंतिच २३ त्वङ्मांसंरुधिरंमेदःपित्तंमज्जाऽस्थिस्नायुच ॥ अष्टौतान्यथशुक्रेणजानीहिप्राकृतानिवै २४ पुमांश्चैवापुमांश्चैवत्रैलिंग्यंप्राकृतंस्मृतम् ॥ नवाऽपुमान्पुमांश्चैवसलिंगीत्यभिधीयते २५ अलिंगात्प्रकृतिर्लिंगैरुपालभ्यतिसाऽऽत्मजैः ॥ यथापुष्पफलैर्नित्यमृतवोऽमूर्तयस्तथा २६ एवमप्यनुमानेनह्यलिंगमुपलभ्यते ॥ पंचविंशतिमस्तातलिंगेषुनियतात्मकः २७ अनादिनिधनोऽनंतःसर्वदर्शीनिरामयः ॥ केवलंत्वभिमानित्वाद्गुणेष्वगुणउच्यते २८ गुणागुणवतःसंतिनिर्गुणस्यकुतोगुणाः ॥ तस्मादेवंविजानंतियेजनागुणदर्शिनः २९

यतद्वच्चैतन्यप्रकाशितैर्महदादिभिस्तत्कारणभूताप्रकृतिरनुमीयते आलोकप्रकाशितैःपुष्पादिभिर्ऋतवइवेत्यर्थः। अलिंगेतिपाठेस्पष्टोऽर्थः २६ यथाप्रकृतितत्कार्ययोर्लिंगिलिंगभावएवमात्मानात्मनोरपीत्याह एवमिति दृश्यप्रकाशनेनदृगात्माऽपिसूर्यवद्दृश्यादन्योऽनुमेयइत्यर्थः। अलिंगंशुद्धचिन्मात्रंलिंगीत्यर्थः तदेवपंचविंशतितमःतकारलोपआर्षः लिंगेषुनियतात्मकइतिलिंगलिंगिनोर्व्याप्तिर्दर्शिता। ननुशब्दांतरेणजडाजडयोरयंविषयविषयिभावसंबंधएवोक्तः न योहिविषयीस्वविषयस्यशुभाशुभत्वाभ्यांहर्षविषादादिविकारवान्भवतिनतुलिंगी नह्यालोकःप्रकाश्याभ्यांमेध्यामेध्यवस्तुभ्यांविक्रियतइतितयोर्महान्भेदइतिभावः २७ अनादीत्यनेनाऽलिंगस्यप्रकाशस्यतार्किकाद्यभिमतमनित्यत्वंनिरस्तं। घटज्ञानंजातंपटज्ञानंनष्टमित्यनुभवस्यवृत्तीविषयत्वात् अतएवमनोवृत्तिषुह्रीर्धीर्भीरित्येतत्सर्वंमनएवेतिधीशब्दितंवृत्तिज्ञानमपिपठ्यते कालापरिच्छेदमुक्त्वादेशापरिच्छेदमाहानंतइति प्रकाशत्वादेवसर्वदर्शी निरामयइतिस्वगतपरिच्छेदंगुणगुणिभावादिरूपंव्यावर्तयति। कथंतर्ह्यस्यगुणसंबंधइत्यतआह केवलमिति वास्तवस्याभिमाननिमित्तस्याभावेऽपिशुक्तिरजतेममेदंरजतमित्यभिमानवद्गुणेषुदेहाद्याकारेष्वहमिदंदेहादीत्यभिमानित्वादयंगुणोदेहादिसंघातएवात्मेत्युच्यते। एतेनलिंगलिंगिनोःसंबंधःकेवलमाध्यासिकइतिसिद्धं २८ ननुनिर्गुणमपिगुणादिकंगुणवताद्रव्येणसहसंबध्यतेएवंनिर्गुणोऽप्यात्मागुणवत्याप्रकृत्यासंबध्यतामित्यतआह गुणाइति गुणाःसंयोगादयःसंबंधागुणवतएवसंतिनत्वगुणस्यगुणिनासहसंभवंतीत्यर्थः। नन्वस्तितादृशःसमवायाख्यःसंबंधइतिचेत् किमात्मनिप्रकृतेःसमवायउतविपरीतं। नाद्यः अनिर्मोक्षापत्तेःनह्याश्रयनाशमंतरेणाश्रितनाशोऽस्ति। नांत्यः-

—रूपादीनामाश्रयतःपृथगदर्शनेनप्रकृतिनाशेआत्मनोऽपिनाशापत्तेः अथकारणनाशेपियथाकंचित्कालंकार्यमस्तियथावाप्रलयेसर्वव्यक्तिनाशेपिजातिरस्त्येवंप्रकृतिनाशेप्यात्मानननश्यतीतिविवक्षेत कार्यं कारणयोर्जातिव्यक्त्योर्वावह्न्यौष्ण्यवद्वास्तवतादात्म्याभ्युपगमेर्इदृग्विवक्षायाएवासिद्धेः । ययात्वनुपपत्त्याएवंविवक्ष्यतेसैवतत्तादात्म्यस्यभ्रमत्वमाक्षिपतीतिकाणक्रमेलकस्त्वंनपश्यसीत्याश्चर्यं । तादात्म्यस्यभ्रमत्वेतूभयमप्युपपन्नं अविद्यानाशेऽपितत्कार्यस्यदेहादेःकंचित्कालमनुवृत्तिःसंभवतीतिजीवन्मुक्तिसिद्धिः । विदेहमुक्तौचसदात्ममात्रावशेषइति तस्माद्युक्तमुक्तंगुणागुणवतःसंतीति । तेनरज्जुःसर्पदंडधाराऽभूच्छिद्राद्यात्मनेवसद्वस्तुघटपटनूतनपुराणातीतानागतश्वेतपीतशीतोष्णाद्यात्मनाभातिनतुकचित्किंचित्समवायसंबंधोनोत्पद्यते समवायस्यैवानवस्थादोषेणाकरेनिरस्तत्वादिति सिद्धं । अत्रविद्वदनुभवंप्रमाणयति तस्मादिति २९ यदात्वेषइति अभिमन्यतेहिनस्तिकामादीन्जयतीत्यर्थः । यदिवाएनमभिमंस्येकनीयोऽन्नंकरिष्यइत्यभिपूर्वस्यमन्यतेर्हिंसार्थत्वदर्शनात् । यदाऽन्विष्ये तिगौडपाठेअन्विष्यश्रवणमननाभ्यामालोच्याऽभिमन्यतेजानातीत्यर्थः । गुणहान्यदेहाद्यात्मत्वभ्रमत्यागेन ३० किंतत्परमित्यतआह यत्तदिति सर्वशःसर्वेपितांत्रिकाः अबुद्धस्यजडस्याहंकारादेः परित्यागाद्बुद्ध्यमानंनत्वहंतयाइदंतयावा ३१ अतएवाप्रबुद्धमज्ञातं अगुणंगुणेभ्योऽन्यंनिर्गुणंगुणसंबंधशून्यं ईश्वरमंतर्यामिणं अधिष्ठातारंसर्वकार्यनिर्मातारं ३२ गुणानांमहदादीनांप्रकृतिगु

यदात्वेषगुणानेतान्प्राकृतानभिमन्यते ॥ तदासगुणहान्यैतंपरमेवानुपश्यति ३० यत्तद्बुद्धेःपरंप्राहुःसांख्ययोगाश्चसर्वशः ॥
बुद्ध्यमानंमहाप्राज्ञमबुद्धपरिवर्जनात् ३१ अप्रबुद्धमथाव्यक्तमगुणंप्राहुरीश्वरम् ॥ निर्गुणंचेश्वरंनित्यमधिष्ठातारमेवच ३२
प्रकृतेश्चगुणानांचपंचविंशतिकंबुधाः ॥ सांख्ययोगेचकुशलाबुध्यंतेपरमैषिणः ३३ यदाप्रबुद्धाह्यव्यक्तमवस्थाजन्मभीरवः ॥
बुध्यमानंप्रबुध्यंतिगमयंतिसमंतदा ३४ एतन्निदर्शनंसम्यगसम्यगनिदर्शनम् ॥ बुध्यमानाप्रबुद्धानांपृथक्पृथगरिंदम ३५
परस्परेणैतदुक्तंक्षराक्षरनिदर्शनम् ॥ एकत्वमक्षरंप्राहुर्नानात्वंक्षरमुच्यते ३६ पंचविंशतिनिष्ठोऽयंयदासम्यक्प्रवर्तते ॥
एकत्वंदर्शनंचास्यनानात्वंचाप्यदर्शनम् ३७

णांश्चापेक्ष्यपंचविंशकमित्यर्थः ३३ प्रबुद्धाज्ञातवंतः अवस्थाबाल्याद्याजाग्रदाद्याश्च बुद्ध्यमानं कर्तरिशानच् प्रमातारमेवप्रबुद्ध्यंति प्रबोधेनैवचतंसमंब्रह्मगमयंति प्रत्यगात्मैवाज्ञातोजीवोज्ञा तोब्रह्मेत्यर्थः यथोक्तं । 'अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः । अन्विष्टःस्यात्प्रमातैवपाप्मदोषादिवर्जितः' इति । शममितिपाठेऽपिशमप्राप्यंब्रह्मैवशमशब्दार्थः ३४ एतदिति एतज्जीवे श्वराभेददर्शनंबुद्ध्यमानेनसम्यगितिपृथगुक्तमित्युत्तरादपकृष्यते एतन्निदर्शनमसम्यक् अनिदर्शनमशास्त्रं अनुदर्शनमितिपाठेअमुख्यंदर्शनमितिपृथक्अप्रबुद्धेनोक्तमितियोजना ३५ एतत्क्षराक्षरनि दर्शनंजडाजडवस्तुतत्त्वप्रतिपादनपरंशास्त्रंपरस्परेणस्वमतंसम्यक्परमसम्यगित्युक्तं । इतिवादिनांविभ्रममुक्त्वास्वसंमतंतत्त्वमाह एकत्वमिति एकत्वेहिविनाशहेतोर्द्वितीयस्याभावादक्षरत्वमविना शित्वंयुक्तं नानात्वंतुक्षरमेव तथाचप्रयोगः । प्रधानाद्यनित्यंव्यावृत्तत्वात्घटादिवदिति ३६ एतच्चानुभववेद्यमित्याह पंचविंशतीति यदायंचिदाभाससहितेषुपंचविंशतितत्त्वेषुरज्जूरगकल्पेषुनि ष्ठांसम्यगवेक्षणंकर्तुंप्रवर्ततेतदातेषांबाधेनषड्विंशमात्मानंसाक्षात्करोति तदैवचैकत्वमेवशास्त्रंनानात्वमशास्त्रमितिनिश्चिनोतीत्यर्थः । तथाचात्मदर्शनफलंभिद्यंतेसर्वसंशयाइतिश्रूयते ३७



ननुपरेस्वशास्त्रमर्यादयायोगेनात्मानंजानंतोऽपिकुतएवंननिश्चिन्वंतीत्याशंक्याह तत्त्वेति तत्त्वंजन्यंनिस्तत्त्वंतदन्यदजन्यं तनुविस्तारेऽस्मात्करणार्थेतवैकेन्केन्यत्वनइतिछांदसस्त्वन् निदर्श नमनुभवः येऽपिकर्तारमात्मानमाहुस्तेऽपिसमाधौबुद्ध्याद्यभावेआत्मनिकर्तृत्वंनपश्यंतीतितत्रकर्तृत्वादिकंबुद्ध्यादियोगश्चदृश्यमानोऽपिकादाचित्कत्वाद्रज्जूरगवदसन्नेव । नहिधर्मोनिक्ष ष्टाधर्मीकचित्केनचिदुपलब्धोऽस्ति नहिदाहप्रकाशाभ्यांविप्रुक्तोऽपिवह्निर्गौचरीभवति तस्मात्तेऽनुभवविरुद्धंवदंतीतिभ्रांताएवेतिभावः । तत्त्वनिस्तत्त्वशब्दौव्याचष्टे पंचविंशतीति ३८ पंचविंशत्यपंचविंशात्परंनिदर्शनमनुभूयमानान्निष्क्रष्टमनुभवंनिस्तत्त्वमाहुः । तमेवविशिनष्टि सर्गस्यपंचविंशत्यात्मकस्य वर्गस्येतिपाठेऽप्ययमेवार्थः वर्गप्रतिवर्गमित्यध्याहृत्ययोज्यं वर्ग्यमि तिपाठेवर्गवर्गमर्हतीतिवर्ग्यमाधारं आसमंताधारउपलब्धिः दृश्यस्यप्रतिविषयनियतायाउपलब्धिःसर्वाङ्गिशइत्यर्थः । तत्रवर्गाःपंच यथापंचज्ञानेंद्रियाणिपंचकर्मेंद्रियाणिपंचभूतानिपंचशब्दाद्या विषयामनोबुद्ध्यहंकारप्रकृतिचिदाभासाइतिपंचप्रत्यंचः । तत्त्वंतस्यभावस्तत्त्वंयथार्थसत्यमितियावत् सत्यादपिसत्यमित्यर्थः तथाचश्रुतिः 'प्राणावैसत्यंतेषामेषसत्यंसत्यस्यसत्यमनुपप्रयुज्यते' इत्यादिप्राणशब्दितस्यकरणप्रपंचस्यव्यवहारतःसत्यस्यपारमार्थिकंसत्यंब्रह्मप्रतिभासतःसत्यस्यरजतस्यशुक्तिरिवेतिप्रतिपादयति । यतस्तत्त्वादपितत्त्वमतएवसनातनंसर्वदैकरूपंनतुकदा

तत्त्वनिस्तत्त्वयोरेतत्पृथगेवनिदर्शनम् ॥ पंचविंशतिसर्गंतुतत्वमाहुर्मनीषिणः ३८ निस्तत्वंपंचविंशस्यपरमाहुर्निदर्शनम् ॥ सर्गस्यवर्गमाधारंतत्वंतत्वात्सना
तनम् ३९ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वसिष्ठकरालजनकसंवादेपंचाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥ जनकउवाच ॥ नानात्वैकत्व
मित्युक्तंत्वयैतदृषिसत्तम ॥ पश्याम्येतद्धिसंदिग्धमेतयोर्वैनिदर्शनम् १ तथाऽबुद्धप्रबुद्धाभ्यांबुद्ध्यमानस्यचानघ ॥ स्थूलबुद्ध्यानपश्यामितत्वमेतन्नसंशयः २
अक्षरक्षरयोरुक्तंत्वयायदपिकारणम् ॥ तदप्यस्थिरबुद्धित्वात्प्रनष्टमिवमेऽनघ ३ तदेतच्छ्रोतुमिच्छामिनानात्वैकत्वदर्शनम् ॥ बुद्धंचाप्रतिबुद्धंचबुध्यमानं
चतत्वतः ४ विद्याविद्येचभगवन्नक्षरंक्षरमेवच ॥ सांख्यंयोगंचकात्स्न्येनपृथक्चैवापृथक्चह ५ ॥ वसिष्ठउवाच ॥ हंततेसंप्रवक्ष्यामियदेतदनुपृच्छसि ॥
योगकृत्यंमहाराजपृथगेवशृणुष्वमे ६

चित्सत्यंकदाचिदसत्यमित्यर्थः ३९ ॥ इति शांति० मोक्षधर्मे० नी० भा० पंचाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥ यदुक्तमेकत्वमक्षरंनानात्वंक्षरमितितत्रैकत्वेबंधमोक्षव्यवस्थानुपपत्ति नानात्वेत्वात्मनाशप्रसंगइति एतयोःपक्षयोर्निदर्शनंतत्त्वावधारणंसंदिग्धं १ यदुक्तंपंचविंशतिनिष्ठानुभवबलेनैवतत्त्वंनिश्चिनोतीतितत्राह तथेति अबुद्धेतिच्छेदः बुध्यमानस्यात्मवस्तुनस्तत्त्वंन पश्यामीत्यत्रनसंशयइतियोजना अनुभवस्यदुःसाध्यत्वान्नसंदेहनिवर्तकत्वमतोयुक्त्यैवतत्त्वंत्वयोपपादनीयमितिभावः २ यच्चाक्षरत्वंकारणमेकत्वंक्षरत्वकारणंचनानात्वमुक्तंतदप्यस्थिर बुद्धित्वाद्विकल्पग्रस्तत्वात् तत्रैकत्वंत्रिविधभेदशून्यत्वंचेत् हेतोःस्वरूपासिद्धिः नहिकचिदीदृशमेकत्वंप्रसिद्धमस्ति । एकरूपक्रिमात्रत्वंचेत् आकाशस्याप्यक्षरत्वापत्तिस्तथाचसांख्य शास्त्रविरोधः । नानात्वमपिसंहतत्वंचेत् प्रधानपरमाण्वादीनामपिक्षरत्वापत्तिः । भिन्नत्वमात्रंचेत्सांख्यात्मनामपिक्षरत्वापत्तिरितितयाचात्रनममतत्त्वावधारणेसामर्थ्यमस्तीतिभावः ३ तत्तस्माद्धेतोः बुद्धं ब्रह्म अप्रतिबुद्धंप्रधानादि बुध्यमानंचिदचिदात्मानंजीवं ४ विद्याज्ञाधिगमः अविद्याज्ञावरणं अक्षरंनित्यं क्षरमनित्यं सांख्यंवस्तुतत्त्वविवेकः योगश्चित्तवृत्तिनिरोधः पृथक्भेदः अपृथक्अभेदः भेदाभेदश्चनानात्वैकत्वदर्शनमित्यनेनप्रश्नमुक्तः ५ हंतेत्यालोचने प्रधानभूतयोःसांख्ययोगयोरेवनिरूपणप्रसंगात्प्रश्नांतराणामप्युत्तरंनिरूपितंभवतीत्याशयेनाह योगेति ६

योगानांयोगिनां योगेयोगशास्त्रोक्तरर्थंकर्तव्यमावश्यकं ध्यानमेवपरंबलमविद्याजयेसामर्थ्यं ध्यानमपिद्विविधंभावनाप्रणिधानभेदेनद्विप्रकारं विविधमितिपाठेऽप्ययमेवार्थः ७ तत्रध्यानस्यसा धारणंलक्षणंमनसएकाग्रतेति तथाप्राणायामोऽपियोगिनांयोगकृत्यंबलं तस्यद्वैविध्यमाह सगुणःसगर्भः निर्गुणोनिर्गर्भः तयोर्मनसःसंबंधीनियमः मानसइतिस्पष्टार्थःपाठः । तत्रभा वनावस्तुतत्त्वनिरपेक्षा । यथायोषितमभिध्यायीतेत्यनग्नेयोषायामग्निदृष्टिकरणम् । यथावाऽसतोऽपिकामिन्यादेर्विषयस्यभावनंतरफलंचानित्यं यथोक्तं । 'भावनाजंफलंयद्यद्यस्यात्कर्मणः फलं । बतस्थास्विवतिमंतव्यंपण्यस्त्रीसंगतंयथा'इति । एवंसांबपीतांबरादिमूर्तिभावनयाऽपिकीटभृंगन्यायेनप्राप्यंतत्सारूप्यमप्यस्थायीतिज्ञेयं प्रणिधानंतुवस्तुतत्त्वसापेक्षं । यथाचक्षुषारत्न गतसूक्ष्मविशेषैस्वेनाग्रहीतेपरेणोपदिष्टेसतितद्ग्रहणायतस्यैवचक्षुषःप्रणिधानंतत्रैवविषयेऽत्यादरेणनियोजनंक्रियतेतथामनसाग्रह्यमाणेप्रतीचिश्रुत्यानिर्विशेषचिन्मात्रोऽसीत्युपदिष्टेसतितद्ग्रहणा यतस्यैवमनसोगुरूक्तयुक्त्याप्रणिधानेप्रवर्तते तद्बलाच्चतावुभौवस्तुतत्त्वमवगच्छतः तत्रापिभावनायांफलभेदोदक्षेणसूचितः 'चतुर्णांसन्निधानेनयत्फलंतदशाश्वतं । द्वयोस्तुसन्निधानेनशा श्वतंप्राप्यतेफलं'इति । चतुर्णामात्मनःशरीरविषयाणां द्वयोरात्ममनसोः देहसंगेनसांबादीन्भावयन्पुनरावर्तते । देहासंगेनभावयंस्तुध्येयसारूप्यंप्राप्यक्रमेणकैवल्यंप्राप्नोति । उभयथाऽ पिभावनाफलस्यास्थायित्वमुक्तमितिनोदाहृतंवार्तिकंविरुध्यते । प्राणायामोऽपिवायुसंहितायामुक्तः 'जपध्यानंविनाऽगर्भःसगर्भस्तत्समन्वयात् । अगर्भाद्गर्भसंयुक्तःप्राणायामःशताधिकः' जपोमनसासंख्यानं । नंदिपुराणे'जाप्येनतुजपंकुर्यादविलंबितमद्रुतं । मनसैवप्रसंख्यानंप्राणायामविधौसदा' । जाप्येनप्रणवगायत्र्यादिना मंत्रेणमानसोजपइतिसगुणस्यैवप्राणायामस्यमा

योगकृत्यंतुयोगानांध्यानमेवपरंबलम् ॥तच्चापिद्विविधंध्यानमाहुर्विद्याविदोजनाः७ एकाग्रताचमनसःप्राणायामस्तथैवच॥ प्राणायामस्तुसगुणोनिर्गुणोमनसस्तथा८ सूत्रोत्सर्गेपुरीषेचभोजनेचनराधिप॥ त्रिकालंनाभियुंजीतशेषंयुंजीततत्परः९ इंद्रियाणींद्रियार्थेभ्योनिवर्त्यमनसाशुचिः॥ दशद्वादशभिर्वाऽपिचतुर्विंशात्परंततः १०

नसइतिविशेषणंयुज्यतेनत्वगुणस्य विस्तरस्तुयोगचिंतामणिप्रभृतिषुसंग्रहग्रंथेषुद्रष्टव्यः ८ शेषंकालं अत्यंतसंयोगेद्वितीया मूत्रादिभ्यातिरिक्तेसर्वस्मिन्कालेयोगमनुतिष्ठेदित्यर्थः ९ तत्रयो गांगेषुप्राणायामउक्तस्तेनैवततःप्राचीनानियमनियमासनान्याक्षिप्तानि अथप्रत्याहारमाह इंद्रियाणीति इंद्रियार्थेभ्यःशब्दादिभ्योमनसानिवर्त्येतिमुख्यंप्रत्याहारं । 'त्रिरुन्नतंप्राप्यसमंशरी रंहृदींद्रियाणिमनसासन्निरुध्य'इतिश्रुत्युक्तमुक्त्वाहठसाध्यंप्रत्याहारादिकमाह दशेति । दशयुक्ताभिर्द्वादशभिर्द्वाविंशतिसंख्याभिः । संचोदनाभिश्चिताश्वस्यप्रतोदस्थानीयाभिःप्रेरणाभिर्मति मानात्मानंजीवंचतुर्विंशादज्ञानात्प्रकृतिसंज्ञात्परंपंचविंशंप्रतिगंतुंचोदयेत्प्रेरयेत् । तत्राष्टादशसुस्थानेषुवायोःप्रत्याहरणंयाज्ञवल्क्येनोक्तं । 'अष्टादशसुयद्वायोर्मर्मस्थानेषुधारणं । स्थाना त्स्थानात्समाकृष्यप्रत्याहारोनिगद्यते'इत्युपक्रम्यमर्मस्थानानितेषामंतरंचोक्त्वाह । संपूर्यकुंभवद्वायुमंगुष्ठाम्मूर्ध्निमध्यतः । धारयत्यनिलंबुध्याप्राणायामःप्रचोदितः । कथोमरंघ्रात्समाकृष्यल लाटेधारयेत्पुनः । ललाटाद्वायुमाकृष्यभ्रुवोर्मध्येनिरोधयेत् । भ्रूमध्याद्वायुमाकृष्यनेत्रस्थानेनिरोधयेत् । नेत्राद्वायुंसमाकृष्यनासामूलेनिरोधयेत् । नासामूलात्तुजिह्वायामुलेप्राणंनिरोधयेत् । जिह्वामूलात्कंठकूपेततोवायुंनिरोधयेत् । कंठकूपात्तुहृन्मध्येहृन्मध्यान्नाभिमध्यमे । नाभिमध्यात्पुनर्मेढ्रेमेढ्राद्वह्न्यालयेततः । देहमध्याद्वेगाग्निगुदाद्वेऊरुमूलके । ऊरुमध्याततयोर्मध्येतस्माज्जा न्वोर्निरोधयेत् । चितिमूलेततस्तस्माज्जंघयोर्मध्यमेतथा । जंघांततःसमाकृष्यवायुंगुल्फेनिरोधयेत् । गुल्फादंगुष्ठयोर्योगीपादयोस्तंनिरोधयेत् । स्थानात्स्थानंसमाकृष्ययस्त्वेवंधारयेद्धिया । सर्वपापविशुद्धात्माजीवेदाचंद्रतारकं । एतत्तुयोगसिद्ध्यर्थमगस्त्येनापिकीर्तितं । प्रत्याहारेषुसर्वेषुप्रशस्तमितियोगिभिः'इति एवमष्टादशप्रत्याहारचोदनाः धारणाध्यानसमाधिसंज्ञा स्तिस्रः । ततःसत्वपुरुषान्यताख्यातिसंज्ञाद्वाविंशीचोदना । ततोऽपिसंप्रेरितोजीवोनदीसमुद्रन्यायेननिर्विशेषचिन्मात्रतांप्रतिपद्यतेसार्धः १०



तंयोगिनंतिष्ठंतंजीवन्मुक्तं अजरंजराहीनं मनीषिभिर्योगिभिर्यैर्यस्मात्तच्छद्वेनोक्तं । 'तदितिवाएतस्यमहतोभूतस्यनामभवति'इतिश्रुतेर्ब्रह्मत्वेननिर्दिष्टमतस्तद्भावापत्तयेआत्मानंप्रत्यंचंनरश्चतुर्विंशात्परंप्रति गंतुंचोदयेदितिपूर्वेणसंबंधः ११ तैर्द्वाविंशत्याप्रेरणैः अहीनंकामादिभिरनास्कंदितंमनोयस्यतस्यैवव्रतंयोगाख्यंयोग्यमितिशेषः १२ संगेभ्योऽहंकर्तृत्वाद्यभिमानेभ्यःरूपादिभ्योवा १३ पाषाणस्थाणुगि रिदृष्टांतानिश्चलत्वात्कर्पार्थाः १४ विधेःशास्त्रस्यविधानंतात्पर्यंतज्जानंतोविधिविधानज्ञाः बुद्धयास्वानुभवेनैव तदाआत्मप्राप्त्यवस्थायांयुक्तंयोगिनंप्रचक्षते नशृणोतीत्यादिनातदनुभवंवर्णयंतीत्यर्थः १५ । १६ प्रकृतिंस्वस्यशुद्धंस्वरूपं १७ निर्लिंगोबुद्ध्यादिहीनः अविचलोव्यापकत्वात् ऊर्ध्वंतिर्यग्वागतिंनप्राप्नुयात् तथाचश्रुतिः 'नतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंते'इति १८ तदेति अंत रात्मांऽतर्यामीश्वरोहृदयस्थोऽहमेवब्रह्मेतियदाकथ्यतेऽनुभवबलात्तदैवात्मानमनुपश्येतेतिज्ञेयं नान्यथात्वंपदार्थमात्रसाक्षात्कारेणात्मदर्शीभवतीत्यर्थः । नकथ्यतइतिपाठेज्ञोज्ञेयइतियदानकथ्यतेसर्ववृत्ति

संचोदनाभिर्मतिमानात्मानंचोदयेदथ ॥ तिष्ठंतमजरंतंतुयत्तदुक्तंमनीषिभिः ११ तैश्चात्मासततंज्ञेयइत्येवमनुशुश्रुम ॥ व्रतंह्यहीनमनसोनान्यथेतिविनिश्चयः १२ विमुक्तःसर्वसंगेभ्योलघ्वाहारोजितेंद्रियः॥ पूर्वरात्रेपररात्रेधारयीतमनोऽऽत्मनि १३ स्थिरीकृत्येंद्रियग्राममंमनसामिथिलेश्वर ॥ मनोबुद्ध्यास्थिरंकृत्वापा षाणइवनिश्चलः १४ स्थाणुवच्चाप्यकंपःस्याद्गिरिवच्चापिनिश्चलः ॥ बुद्ध्याविधिविधानज्ञास्तदायुक्तंप्रचक्षते १५ नशृणोतिनचाघ्रातिनरस्यतिनपश्यति ॥ नचस्पर्शंविजानातिनसंकल्पयतेमनः १६ नचाभिमन्यतेकिंचिन्नचबुध्यतिकाष्ठवत् ॥ तदाप्रकृतिमापन्नंयुक्तमाहुर्मनीषिणः १७ निर्वातेहियथादीप्यन्दीपस्त द्वत्प्रकाशते ॥ निर्लिंगोऽविचलश्चोर्ध्वंनतिर्यग्गतिमाप्नुयात् १८ तदातमनुपश्येतयस्मिन्दृष्टेऽनुकथ्यते ॥ हृदयस्थोंऽतरात्मेतिज्ञेयोज्ञस्तातमद्विधैः १९ विधूम इवसप्तार्चिरादित्यइवरश्मिमान् ॥ वैद्युतोऽग्निरिवाकाशेदृश्यतेऽऽत्मातथाऽऽत्मनि २० यंपश्यंतिमहात्मानोधृतिमंतोमनीषिणः ॥ ब्राह्मणाब्रह्मयोनिस्थाह्ययो निमप्रतात्मकम् २१ तदेवाहुरणुभ्योऽणुतन्महद्भ्योमहत्तरम् ॥ तत्तत्त्वंसर्वभूतेषुध्रुवंतिष्ठन्नदृश्यते २२ बुद्धिद्रव्येणदृश्येतमनोदीपेनलोककृत ॥ महतस्त मसस्तातपारेतिष्ठन्नतामसः २३ सतमोनुदइत्युक्तःसर्वज्ञैर्वेदपारगैः ॥ विमलोवितमस्कश्चनिर्लिंगोऽलिंगसंज्ञितः २४ योगएषहियोगानांकिमन्यद्योगल क्षणम् ॥ एवंपश्यंप्रपश्यंतिआत्मानमजरंपरम् २५ योगदर्शनमेतावदुक्तंतेतत्त्वतोमया ॥ सांख्यज्ञानंप्रवक्ष्यामिपरिसंख्यानदर्शनम् २६ अव्यक्तमाहुःप्रकृतिंप रांप्रकृतिवादिनः ॥ तस्मान्महत्समुत्पन्नंद्वितीयंराजसत्तम २७

निरोधादात्मनश्चप्रत्यक्त्वेनाज्ञेयत्वात्तदाऽऽत्मज्ञइत्युच्यतइत्यर्थः । तथाचश्रुतिः 'यदिमन्यसेसुवेदेतिदहमेवापिनूनंत्वंवेत्थब्रह्मणोरूपम्'इति सुवेदसम्यग्जानामि दहमल्पं । 'यस्यामतंतस्यमतंमतंयस्य नवेदसः । अविज्ञातंविजानतांविज्ञातमविजानताम्'इतिच १९ विधूमइत्यादिनाशुद्धप्रकाशात्मत्वमुक्तं २० ब्रह्मयोनिस्थाःब्रह्मावगमहेतुशास्त्रनिष्ठाः २१ । २२ नदृश्यतेचेत्कुतस्तदुपलब्धिरित्यतआह बुद्धीति बुद्धिद्रव्येणाधीधनेनपुंसा अतामसईश्वरात्परः २३ सज्ञातःसंस्तमोनुदःसंसारच्छित् निर्लिंगःसूत्रात्मनोऽप्यन्यः अलिंगेतिच्छेदः नास्तिलिंगंगमकंयस्य वाङ्मनसातीतत्वात् निरुपाधि ब्रह्मसंज्ञितइत्यर्थः २४ योगमुपसंहरति योगएषइति पश्यंद्रष्टारं प्रपश्यंतियोगाइतिशेषः २५ परिसंख्यानंपरिवर्जनंरज्जूरगवदुत्तरोत्तरस्यकार्यस्यपूर्वस्मिन्पूर्वस्मिन्प्रविलापनंतेनदर्शनंसाक्षा त्कारोयस्मिंस्तत्तथा २६ एतदेवाहाव्यक्तमितिषड्भिः परांप्रथमांनत्वविकृतिम् २७

पंचभूतानिसूक्ष्माणिपंचतन्मात्राख्यानि २८ एताअव्यक्ताद्याःप्रकृतयोविकृतयश्चषोडशविकाराएवनप्रकृतयः तेचैकादशेंद्रियाणिस्थूलभूतानिच एतेषुपंचवियदादयोविशेषसंज्ञाः शेषाएकादशतानींद्रियाणि तेषांविशेषणंपंचेतिपंचयंतिव्यक्तीकुर्वंतिस्वंस्वंविषयंशब्दवचनादिकमितिपंचानितानींद्रियाणिचेतिकर्मधारयः २९। ३० एतेषांप्रविलापनमाह यस्मादिति अंतरात्मनासृज्यंतेनतुनिरीश्वरसांख्याभिमतयाप्रकृत्या ३१। ३२ प्रकृतेरितिकर्मणिषष्ठी एवंप्रकृत्यादिकमुत्पद्यतेप्रलीयतेचेत्यर्थः। तथाचप्रकृतेरप्युत्पत्तिप्रलयौवक्ष्यति । तस्मादव्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेति । अव्यक्तंपुरुषेब्रह्मन्निष्कलेसंप्रलीयतइतिच । एवंसांख्यमुक्तानानात्वैकत्वेविभजते एकत्वमिति प्रतिलोमक्रमेणप्रकृतेरपिपुरुषेप्रलयेसतिमोक्षेअसंप्रज्ञातेचैकत्वमस्यपुरुषस्यभवतिसृष्टिकालेतुनानात्वमित्यर्थः ३३ नन्वेवंसृष्टिकालेनानात्वप्रापकशक्तिमतःकथमेकत्वमतआह अधिष्ठातारमिति अव्यक्तमव्याकृतमविद्यामायेतिपर्यायाःअव्यक्तमेवपुरुषंनानात्वंनयति तथाचश्रुतिः 'माययात्यन्यदिवेति। इंद्रोमायाभिःपुरुरूपईयते'इतिच नहितुच्छयामाययापुंसःसद्वितीयत्वमस्तिरज्ज्वाइवकल्पितभुजंगेन 'तुच्छ्येनाभ्वपिहितंयदासीत्तमसस्तन्महिनाजायतैकं'इतिश्रुतेः आभुब्रह्म तमसोऽज्ञानस्य महिनामाहात्म्येन

अहंकारस्तुमहतस्तृतीयमितिनःश्रुतम् ॥ पंचभूतान्यहंकारादाहुःसांख्यात्मदर्शिनः २८ एताःप्रकृतयश्चाष्टौविकाराश्चापिषोडश ॥ पंचचैवविशेषावैतथापंचेंद्रियाणिच २९ एतावदेवतत्त्वानांसांख्यमाहुर्मनीषिणः ॥ सांख्येविधिविधानज्ञानित्यंसांख्यपथेरताः ३० यस्माद्यदभिजायेततत्तत्रैवप्रलीयते ॥ लीयतेप्रतिलोमानिसृज्यंतेचांतरात्मना ३१ अनुलोमेनजायंतेलीयंतेप्रतिलोमतः ॥ गुणागुणेषुसततंसागरस्योर्मयोयथा ३२ सर्गप्रलयएतावान्प्रकृतेर्नृपसत्तम ॥ एकत्वंप्रलयेचास्यबहुत्वंचयदाऽसृजत् ३३ एवमेवचराजेंद्रविज्ञेयंज्ञानकोविदैः ॥ अधिष्ठातारमव्यक्तमस्याप्येतन्निदर्शनम् ३४ एकत्वंचबहुत्वंचप्रकृतेरर्थतत्त्ववान् ॥ एकत्वंप्रलयेचास्यबहुत्वंचप्रवर्तनात् ३५ बहुधात्माप्रकुर्वीतप्रकृतिंप्रसवात्मिकाम् ॥ तच्चक्षेत्रंमहानात्मापंचविंशोऽधितिष्ठति ३६ अधिष्ठातेतिराजेंद्रप्रोच्यतेयतिसत्तमैः ॥ अधिष्ठानादधिष्ठाताक्षेत्राणामितिनःश्रुतम् ३७ क्षेत्रंजानातिचाव्यक्तंक्षेत्रज्ञइतिचोच्यते ॥ अव्यक्तिकेपुरेशेतेपुरुषश्चेतिकथ्यते ३८ अन्यदेवचक्षेत्रंस्यादन्यःक्षेत्रज्ञउच्यते ॥ क्षेत्रमव्यक्तमित्युक्तंज्ञातारंपंचविंशकम् ३९

एकमप्यजायतप्रपंचात्मनाआविर्बभूवेत्यर्थः । अस्यव्यक्तस्याप्येतदेकत्वंनानात्वंचसुप्तिप्रलययोरेकत्वंसृष्टिकालेनानात्वंचेतितिनिदर्शनंदृष्टांतः पृथिव्यादिष्वप्येवमेवद्रष्टव्यं ३४ अर्थतत्त्ववानर्थतत्त्वसम्यगधिगतवान्यःसजानीयादितिशेषः । नन्वेवमव्यक्तस्याधिष्ठातृत्वेजितंनिरीश्वरसांख्यैरित्याशंक्याह एकत्वमिति प्रलयेमोक्षे अयस्कांतवत्स्वरूपसत्तामात्रेणायंप्रकृतिंप्रवर्तयंस्तांबहुधाप्रकरोति अतश्चिदात्मैवमुख्योऽधिष्ठाता प्रकृतेस्तुगौणमधिष्ठातृत्वंस्वकार्यविषयमितिभावः सार्धः ३५ एतदेवाह तथेति तत्प्रकृतिविकृत्यात्मकं ३६ पुंसोनामनिर्वक्ति अधिष्ठानादिति ३७ अव्यक्तिकेआवियकेक्षेत्रेपुर्यष्टके अत्रोक्तंवतके । 'सूर्यकांतमुपारुह्यसूर्यएवतृणंदहेत् । नत्वश्मापार्थिवस्तंचन्यायंचित्तमसौर्दिशेत्'इति । यथास्वरूपसत्तामात्रेणतृणंप्रकाशयतःसूर्यस्यसूर्यकांतद्वारातृणदग्धृत्वंतृणेप्रवेशश्चनतुव्यापाराविष्टस्य । एवंपुंसोऽप्यव्यक्तद्वारासर्वकार्याधिष्ठातृत्वंतत्तत्प्रकाशकत्वंचनतुकुलालवदधिष्ठातृत्वंनापिबुद्धिवदिंद्रियव्यापाराधीनप्रकाशकत्वंनापिकुंडबदरन्यायेनप्रविष्टत्वंकिंतुवह्निकाष्ठन्यायेनाभिव्यक्तत्वमात्रमितिभावः ३८ नामनिरुक्तेःफलंपुंप्रकृत्योर्विवेकमाहान्यदेवेति एवमधिष्ठातुरन्यदधिष्ठेयंप्रवेष्टुरन्यत्प्रवेशायतनमित्यपिद्रष्टव्यं ३९



ज्ञानंप्रमाणजन्यावृत्तिः ज्ञेयंप्रमारूपंफलं फलकरणयोश्छिदाधारभोर्भेदस्यस्पष्टत्वात् ज्ञानज्ञेयपदेव्याचष्टे ज्ञानमिति ४० अधिष्ठातारमव्यक्तमित्यत्रोक्तमव्यक्तपदंव्याचष्टेऽव्यक्तमिति । सत्त्वंबुद्धिःक्षेत्रसत्वेश्वरशब्दाःपर्यायाइत्यर्थः । ततश्चकिमतआह अनीश्वरमिति ईश्वरादिपदोपात्ताद्दृश्यादन्यत् तच्छब्दःपरोक्षवाची नास्तित्वंपरोक्षंयस्यतदतत्त्वंनित्यापरोक्षंद्रष्टुःस्वरूपंतदेवपंचविंशतेःपूरणं तत्त्वमनारोपितरूपं अन्यत्सर्वमीश्वरादिकं दृश्यमारोपितमित्यर्थः । अतोऽन्यदार्तमितिश्रुतेः ४१ उपसंहरति सांख्येति सांख्याःपरिसंख्यानुदर्शनंप्रकुर्वतेप्रकृतिंमायांचप्रचक्षतेजगत्कारणत्वेनवदंतीतिसंबंधः परिसंख्यास्थूलसूक्ष्मक्रमेणचिदात्मनिप्रपंचप्रविलापनंतामनुदर्शनंसाक्षात्कारंसंपादयंतीत्यर्थः४२ प्रविलाप्याप्याह तत्त्वानीति प्रकृत्यासह चतुर्विंशचतुर्विंशतिस्तत्त्वानिपरिसंख्यायेतियोजना निस्तत्त्वोनिर्गतंतत्त्वंपरोक्षत्वंयस्मात् यत्साक्षादपरोक्षाद्ब्रह्मेतिश्रुतेर्नित्यापरोक्षइत्यर्थः ४३ अप्रकृत्यात्माप्रकृतितोनिष्कृष्टः बुध्यमानः कर्तरिशानच् जीवएवप्रकृतित्यागात्केवलीभवति एतेनाऽबुद्धंप्रकृतिंबुध्यमानोजीवःप्रबुद्धःकेवलइतिप्रश्नत्रयस्योत्तरंसंक्षिप्योक्तं ४४ समंब्रह्मतस्यभावःसाम्यंतस्यापिभावःसाम्यतासाचब्रह्मैव । ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः ४५ प्रकृतेर्ब्रह्मणः ब्रह्मदर्शनमेवसम्यग्दर्शनंनामनत्वत्रब्रह्मदर्शनंरज्जूरगदर्शनवद्भ्रांतत्वात्तस्य नहिरज्जुंभुजंगत्वेनपश्यन्सम्यग्दर्शीभवतिकिंतुरज्जुत्वेनैवपश्यन् एवंब्रह्मण्यध्यस्तमहंकारादिकंपश्यन्नसम्यग्दर्शीअधिष्ठानंतुपश्यन्सम्यग्दर्शीत्यर्थः।

अन्यदेवचज्ञानंस्यादन्यज्ज्ञेयंतदुच्यते ॥ ज्ञानमव्यक्तमित्युक्तंज्ञेयोवैपंचविंशकः ४० अव्यक्तंक्षेत्रमित्युक्तंतथासत्वंतथेश्वरः ॥ अनीश्वरमतत्त्वंचतत्त्वंतत्पंचविंशकम् ४१ सांख्यदर्शनमेतावत्परिसंख्यानुदर्शनम् ॥ सांख्याःप्रकुर्वतेचैवप्रकृतिंचप्रचक्षते ४२ तत्त्वानिचचतुर्विंशत्परिसंख्यायतत्त्वतः ॥ सांख्याःसहप्रकृत्यातुनिस्तत्त्वःपंचविंशकः ४३ पंचविंशोऽप्रकृत्यात्माबुध्यमानइतिस्मृतः ॥ यदातुबुध्यतेऽऽत्मानंतदाभवतिकेवलः ४४ सम्यग्दर्शनमेतावद्भाषितंतवतत्त्वतः ॥ एवमेतद्विजानंतःसाम्यतांप्रतियांत्युत ४५ सम्यङ्निदर्शनंनामप्रत्यक्षंप्रकृतेस्तथा ॥ गुणतत्त्वाद्यथैतानिनिर्गुणेभ्यस्तथाभवेत् ४६

तथाशब्दःपादपूरणार्थः यद्वा । यथैतत्तथाश्रयतइत्यध्याहृत्यश्रुत्यंतरप्रदर्शनार्थः । यथादाशतय्यामाम्नायते । 'परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअपरेभिरेति ॥ अनानुभूतीरवधून्वानःपूर्वीरिंद्रःशरदस्तर्तरीति' अस्यार्थः पूर्वेषांदेवानांस्वाभाविकानांकामक्रोधादीनांसख्यासख्यानि सुपांसुलुगितिसुपोडा परावृणक्तिपरिवर्जयति । व्यवहितश्चेतिच्छंदसिव्यवहितक्रिययाऽप्युपसर्गसंबंधस्मृते; वितर्तुराणः अतिशयेनकालंतरतीतितर्तुराणः यङ्लुगंतात्तरतेस्ताच्छीलिकश्चानश् उदोष्ठ्यपूर्वस्येत्यस्मादुदित्यनुवर्तमानेबहुलंछंदसीत्युत्वंरपरत्वं अभ्यासगुणेरेफलोपाभावादिश्छांदसः अभ्यस्तानामादिरित्याद्युदात्तत्वेगतिकारकोपपदात्कृदितिप्रकृतिस्वरः । अपरेभिःशार्वीयैःशमदमादिभिःसख्यानिएतिप्राप्नोति । मुक्तिकामःकामादीन्जित्वाशमादीनाश्रयेदित्यर्थः । अनानुभूतीःअननुभवान् अनन्वित्यस्यमध्यममितिप्रातिशाख्यसूत्राद्दीर्घमध्यत्वं रज्जूरगज्ञानतुल्यानिभ्रांतिज्ञानान्यवधून्वानःकल्पितंदेहादितादात्म्यंप्रविलापयन् पूर्वीरनादिंशरदःकालंतर्तरीतिबलेनतरतीति । अस्यामृचिप्रपंचदर्शनमानुभूतिशब्देनोक्तं अतआत्मदर्शनमेवसम्यग्दर्शनमितरद्दर्शनंभ्रांतिदर्शनमितिसिद्धं । सम्यग्दर्शनविषयस्यप्रत्यगात्मरूपस्याधिष्ठानस्यशून्यतांवारयन्सम्यग्दर्शनस्यनष्टवनितासाक्षात्कारतुल्यतांनिरस्यति गुणतत्त्वादिति निर्गुणेभ्यःपुरुषेभ्योऽन्यानियथैतानिमहदादीनि गुणतत्त्वात्गुणानांतत्त्वंताद्रूप्यं गुणत्वाद्दृश्यत्वादितियावत् । यथैतानिव्यावहारिकप्रमारूपत्वेनाभ्रांतानिप्रत्यक्षाण्येवंनिर्गुणानांपुंसामप्यभ्रांतंप्रत्यक्षंभवेदित्यर्थः । निर्गुणेभ्यइतिबहुत्वंभूतपूर्वगत्याप्रमातृभेदाभिप्रायं तस्माद्यथावस्त्वेवात्मज्ञानंनभावनादिजन्यंनष्टवनिताज्ञानवदितिसिद्धं ४६

आत्मज्ञानफलमाह नत्विति विगतदेहानांमुक्तानांपुनरावृत्तिर्नविद्यते सदेहानांत्वपरैसत्यकामत्वसत्यसंकल्पत्वाद्यैश्वर्यपरंचसमाधिकालेनिरुपाधिसुखमव्ययंविद्यते । तत्रहेतुः अक्षरभावत्वादिति साम्यतापदव्याख्यातरीत्याभावशब्देनभावप्रत्ययेनचाक्षरमात्रंग्राह्यं यतोब्रह्मविदक्षरमेवभवति । अतोऽक्षरधर्माणां'एतस्यवाअक्षरस्यप्रशासनेगार्गिद्यावापृथिव्यौविधृतेतिष्ठतः । एतद्वैतदक्षरंगार्गि ब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घं'इत्यादिश्रुतिप्रसिद्धानांप्रशासितृत्वास्थूलत्वादीनां तत्रसैवयोयुज्यतएवेत्यर्थः । तथाचप्रागेवोदाहृतं 'सोपाधिर्निरुपाधिश्चद्वेधाब्रह्मविदुच्यते ॥ सोपाधिकः स्यात्सर्वात्मानिरुपाख्योऽनुपाधिकः ॥ जगत्क्रीडन्रतिंप्राप्तइतिसोपाधिकस्यतु ॥ छांदोग्येसर्वकामाप्तिःसार्वात्म्यात्स्पष्टमीरिता ॥ अहमन्नंतथाऽन्नादःश्लोककार्यप्यहोअहं ॥ इतितत्त्वविदःसामगाने सर्वात्मताश्रुता ॥ अत्रापिचकृदृष्टांतात्सोपाधिस्तत्त्वविच्छुतः ॥ अपूर्वानपरायुक्तथाश्रोप्यतेनिरुपाधिकः'इति ४७ केपुनरावर्ततइत्यतआह पश्येरन्निति नैकमतयोनानात्वदर्शिनोयेतेषुसम्यग्दर्शनंनास्ति व्यक्तंशरीरं ४८ 'कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभवति'इत्येकविज्ञानात्सर्वविज्ञानंश्रुतंसत्समर्थयते सर्वमिति एतद्वाक्यजातंतत्वमर्थंतोविजानंतोध्यानबलेनसर्वापरोक्ष्यव्यक्तत्वाद्देहस्यवशेनभविष्यं तीतियोज्यं ४९ सर्वमिति पंचविंशस्यविज्ञानात्सर्वज्ञोभवतीतिश्लोकद्वयतात्पर्यं भयंसंसारदुःखं ५० ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

नत्वेवंवर्तमानानामावृत्तिर्विद्यतेपुनः ॥ विद्यतेऽक्षरभावत्वादपरंपरमव्ययम् ४७ पश्येरन्नैकमतयोनसम्यक्तेषुदर्शनम् ॥ तेव्यक्तंप्रतिपद्यंतेपुनःपुनररिंदम ४८ सर्वमेतद्विजानंतोनसर्वस्यप्रबोधनात् ॥ व्यक्तीभूताभविष्यंतिव्यक्तस्यवशवर्तिनः ४९ सर्वमव्यक्तमित्युक्तमसर्वःपंचविंशकः ॥ यएनमभिजानंतिनभयंतेषुविद्यते ५० ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणि वसिष्ठकरालजनकसंवादे षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥ ॥ वसिष्ठउवाच ॥ सांख्यदर्शनमेतावदुक्तंतेनृपसत्तम ॥ विद्याविद्येत्विदानींमेत्वंनिबोधानुपूर्वशः १ अविद्यामाहुरव्यक्तंसर्गप्रलयधर्मिवै ॥ सर्गप्रलयनिर्मुक्तांविद्यांवैपंचविंशकः २ परस्परस्यविद्यांवैतन्निबोधानुपूर्वशः ॥ यथोक्तमृषिभिस्तातसांख्यस्यातिनिदर्शनम् ३ कर्मेंद्रियाणांसर्वेषांविद्याबुद्धींद्रियंस्मृतम् ॥ बुद्धींद्रियाणांचतथाविशेषाइतिनःश्रुतम् ४ विशेषाणांमनस्तेषांविद्यामाहुर्मनीषिणः ॥ मनसःपंचभूतानिविद्याइत्यभिचक्षते ५

नानात्वैकत्वविज्ञानमित्यादिनाकृतानांद्वादशानांप्रश्नानांमध्येसांख्ययोगौनानात्वैकत्वविज्ञानंचेतित्रयंव्याख्यातं अबुद्धादित्रयमग्रिमाध्यायेव्याकरिष्यते विद्यादिषट्कमिहव्याख्यायते सांख्यदर्शनमिति योगादिसहितमितिशेषः १ तत्त्वदर्शनंविद्या तत्त्वावरकंभावरूपमज्ञानादिकमविद्या । नतुविद्यायाअभावमात्रमित्याशयेनाह अविद्यामिति अभावात्सर्गाद्यसंभवाद्भावरूपैवाविद्याऽव्यक्ताख्येत्यर्थः । विद्यामाह सर्गेति विद्यांपंचविंशकइत्याहुरितियोजना २ अस्याविद्यायाःपरमत्वंवक्तुमवांतरविद्याभेदमाह परस्परस्येति ३ कर्मेंद्रियाणांव्यापारमुत्सृज्यकेवलंबुद्धींद्रियाण्येवाहमितिचिंतनंबुद्धींद्रियविद्येत्यर्थः । एवमुत्तरत्र विशेषाःस्थूलभूतानिदेहारंभकाणि तत्रपादादिजानुपर्यंतंपृथिवीस्थानंजान्वादिपायुपर्यंतमपांस्थानमित्यादिनाप्राग्व्युत्पादितरीत्योत्तरस्य भूतस्यपूर्वपूर्वस्मिन्प्रविलापनेनतत्तन्मात्रात्मनाऽवस्थानेनपंचभूतविद्याःपृथक्फलाअनुसंधेयाः ४ विशेषाणांचमनसिप्रविलापनेनमनोमात्रेणावस्थानंमनोविद्या । मनोऽपिविषयविकल्पाभिमुखं वासनामात्रेषुशब्दादिषुप्रविलाप्यतन्मात्रेणावस्थानंसूक्ष्मभूतविद्या एवमुत्तरत्रज्ञेयं अत्रविशेषमनसोःसूक्ष्मभूताहंकारयोरंतर्भावंविवक्षित्वावायुपुराणेएतासांविद्यानांफलान्युक्तानि । 'दशमन्वंतराणीह तिष्ठंतींद्रियचिंतकाः । भौतिकास्तुशतंपूर्णंसहस्रंत्वाभिमानिकाः । बौद्धादशसहस्राणितिष्ठंतिविगतज्वराः । पूर्णंशतसहस्रंतुतिष्ठंत्यव्यक्तचिंतकाः । पुरुषंनिर्गुणंप्राप्यकालसंख्यानविद्यते'इति ५



बुद्धिर्महत्तत्त्वं ६ तत्त्वानांमहदादीनां ७ सर्वस्यज्ञानस्यज्ञेयंसर्वमव्यक्तमित्युक्तं अव्यक्तज्ञानाद्धिसर्वज्ञोभवतीत्यर्थः । वेदांतेष्वपिसार्वज्ञ्यकारणज्ञानस्यमुख्यंफलंशुद्धज्ञानस्यतुनांतरीयकमितिभावः ८ ज्ञानंधीवृत्तिः ज्ञेयस्तदभिव्यंग्योबोधः योविज्ञाताप्रमातासएवपंचविंशकोबोधइत्यर्थः ९ विद्यासहिताऽविद्या अर्थतत्त्वेनयाथार्थ्येन क्षरंप्रधानममृताक्षरंहरः'क्षरात्मानावीशतेदेवएकः । द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच । उत्तमःपुरुषस्त्वन्यः'इतिश्रुतिस्मृत्युक्तंपुंत्रैविध्यमुपेत्यक्षराक्षरयोस्तावद्विभागमाहाक्षरंचेति अमृतोजीवोऽक्षरमितिश्रुतिपदयोरर्थः संधिश्छांदसः १० उभौप्रकृतिजीवावक्षरावनादित्वात्पुरुषोत्तमाख्याद्ब्रह्मणोऽनन्यत्वाच्चत्रयस्यापिब्रह्ममात्रत्वाच्च तथाचश्रुतिः । 'भोक्ताभोग्यंप्रेरितारंचमत्वासर्वंप्रोक्तंत्रिविधंब्रह्ममेतत्'इति । उभावनक्षरौअक्षरभिन्नौक्षरावित्यर्थः । विज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतीतिभूतशब्दितस्यक्षरस्यतदनुसारिणोविज्ञानघनस्यचनाशश्रुतेः भूतानिनष्टान्यनुविज्ञानघनोऽपिनश्यतीतिश्रुत्यर्थः । उभयोरप्यक्षरत्वेहेतुमाहसार्धत्रिभिः कारणंत्विति ११ अनादित्वादनिधनौ अनादिभावस्यानित्यत्वायोगात् ईश्वरोमिश्रौसंतावखंडदंडायमानस्यप्रपंचस्योपादानभूतौकथमनित्यौस्यातांनकथंचिदित्यर्थः ज्ञानचिंतकैर्ब्रह्मदार्शि

अहंकारस्तुभूतानांपंचानांनात्रसंशयः ॥ अहंकारस्यचतथाबुद्धिर्विद्यानरेश्वर ६ विद्याप्रकृतिरव्यक्तंतत्त्वानांपरमेश्वरी ॥ विद्याज्ञेयानरश्रेष्ठ विधिश्चपरमःस्मृतः ७ अव्यक्तस्यपरंप्राहुर्विद्यांवैपंचविंशकम् ॥ सर्वस्यसर्वमित्युक्तंज्ञेयंज्ञानस्यपार्थिव ८ ज्ञानमव्यक्तमित्युक्तंज्ञेयोवैपंचविंशकः ॥ तथैवज्ञानमव्यक्तंविज्ञातापंचविंशकः ९ विद्याविद्यार्थतत्त्वेनमयोक्ताविशेषतः ॥ अक्षरंचक्षरंचैवयदुक्तंतन्निबोधमे १० उभावेवाक्षरावुक्तावुभावेवानक्षरौ ॥ कारणंतुप्रवक्ष्यामियाथातथ्यंतुज्ञानतः ११ अनादिनिधनावेतावुभावेवेश्वरौमतौ ॥ तत्त्वसंज्ञावुभावेतौ प्रोच्येतेज्ञानचिंतकैः १२ सर्गप्रलयधर्मत्वादव्यक्तंप्राहुरक्षरम् ॥ तदेतद्गुणसर्गायविकुर्वाणंपुनःपुनः १३ गुणानांमहदादीनामुत्पत्तिश्चपरस्परम् ॥ अधिष्ठानात्क्षेत्रमाहुरेतत्तत्पंचविंशकम् १४ यदातुगुणजालंतदव्यक्तात्मनिसंक्षिपेत् ॥ तदासहगुणैस्तैस्तुपंचविंशोविलीयते १५ गुणागुणेषुलीयंतेतदेकाप्रकृतिर्भवेत् ॥ क्षेत्रज्ञोपियदाताततत्क्षेत्रेसंप्रलीयते १६

भिः १२ ननुक्षरायाःप्रकृतेरक्षरत्वंक्षरंप्रधानंक्षरःसर्वाणिभूतानीतिश्रुतिस्मृतिप्रसिद्धिविरुद्धमित्याशंक्याह सर्गेति तस्याःक्षरत्वेसंसारस्यांतवत्त्वंस्यात् । तच्च'नांतोनचादिर्नचसंप्रतिष्ठा'इतितदानंत्यस्मृतिविरुद्धं क्षरत्वश्रुत्यादिकंतुप्रतिक्षणपरिणामित्वमात्राभिप्रायंप्रवाहोच्छेदादितिभावः प्रवाहानुच्छेदमाहार्धेन तदेतदिति १३ जीवस्याप्यक्षरत्वमाह गुणानामिति पंचविंशकंचिदाभासमपिगुणानांक्षेत्रमुत्पत्तिस्थानमाहुः । कुतः परस्परमधिष्ठानात् चिच्छायामनवाप्यनकेवलाप्रकृतिर्वाप्रकृतिरूपमुपाधिमनवाप्यकेवलःपुरुषोवामहदादीन्स्रष्टुमुत्सहतेकिंतुपरस्परानुग्रहेणैवेत्यर्थः । अतःपंचविंशस्यापिक्षेत्रत्वात्प्रकृतिवदक्षरत्वमितिभावः १४ उभयोःक्षरत्वमाहयदात्वित्यादिना गुणजालंप्रकृत्याद्यव्यक्तात्मन्यहमनुभवागोचरेशुद्धेब्रह्मणिसंक्षिपेत्प्रविलापयेद्योगी । तदेति उपाधिनाशमनुआभासोऽपिनश्यतीतिद्वयोरपिक्षरत्वं १५ ननुपंचविंशस्यलयेनैरात्म्यंस्यादित्याशंक्याह गुणाइति यथामहदादीनांप्रकृतौलयेयथैकाप्रकृतिःप्रलयेशिष्यतेएवंक्षेत्रज्ञःपंचविंशोऽपितत्क्षेत्रेस्वोत्पत्तिस्थाने षड्विंशेसंप्रलीयते । अतआभासस्यलयेऽपिमुख्योननश्यतीतिननैरात्म्यवादप्रसंगः । यदातदेतिचोभयत्राध्याहारस्तदैकाप्रकृतिरित्यस्यानुकर्षश्चोत्तरार्धे १६

तदेति यदात्वसंप्रज्ञातेपुरुषोनिर्गुणंप्राप्नोति हेवैदेह वैदतिपृथक्पदंवा तदाप्रकृतिरपिक्षरत्वंविनाशित्वंगच्छते आर्षस्तङ् गुणसंश्रितामहदादिभिःसहिता । तत्रक्षरत्वेहेतुः देहगुणेष्वप्रतिवर्तना दिति देहाश्रितेषुश्रोत्रादिषुप्रतिविषयंवर्तनंतदभावात् १७ अयमेवन्यायःक्षेत्रज्ञेऽपीत्याह एवमिति क्षरत्वंगच्छतेइत्यनुषंगः कार्येणाहंकारेणास्तित्वंगम्यते यथानद्याःपूरेणोपरिदेशेवृष्टिमत्त्वं पुराभावेतदभावएवंगुणानामप्रवृत्तेरप्रकाशाच्चप्रकृतिक्षेत्रज्ञौनश्येते । तत्रापिक्षेत्रज्ञेविशेषमाह प्रकृत्येति गुणगुणिनौक्षेत्रक्षेत्रज्ञावनित्यौ क्षेत्रज्ञस्यतुक्षेत्रान्निष्क्रुष्टोनिर्गुणोज्ञानांशःसनित्यइत्यर्थः । अनुशुश्रुमसाक्षीचेताकेवलोनिर्गुणश्चेतिश्रुतवंतोवयं १८ एषक्षेत्रज्ञःसाक्षित्वत्यागेनक्षरोयदाऽसंप्रज्ञातोभवतितदेति शेषंस्पष्टं १९ प्रकृतेःपरिवर्जनात्प्रविलापनात्रतुशास्त्रजज्ञानमात्रात्बुध्यत्यप रोक्षीकरोति २० पृथक्त्वेवापृथक्त्वेहेत्यस्योत्तरमाह तदैषइति तत्त्वतामारोपशून्यतां चिदचिद्ग्रंथिरपृथक्त्वंतस्यभेदःपृथक्त्वमित्यर्थः २१ इदंज्ञानेनपश्यतीत्याह यदेति जुगुप्सतेनिंदति पश्यं

तदाक्षरत्वंप्रकृतिर्गच्छतेगुणसंश्रिता ॥ निर्गुणत्वंचवैदेहगुणेष्वप्रतिवर्तनात् १७ एवमेवचक्षेत्रज्ञःक्षेत्रज्ञानपरिक्षये ॥ प्रकृत्यानिर्गुणस्त्वेषइत्येवमनुशु श्रुम १८ क्षरोभवत्येषयदातदागुणवतीमथ ॥ प्रकृतिंत्वभिजानातिनिर्गुणत्वंतथाऽऽत्मनः १९ तदाविशुद्धोभवतिप्रकृतेःपरिवर्जनात् ॥ अन्योऽहम न्येयमितियदाबुध्यतिबुद्धिमान् २० तदैषतत्त्वतामेतिनचापिमिश्रतांव्रजेत् ॥ प्रकृत्याचैवराजेंद्रमिश्रोऽन्यश्चदृश्यते २१ यदातुगुणजालंतत्प्राकृतं वैजुगुप्सते ॥ पश्यतेचपरंपश्यंतदापश्यन्नसंत्यजेत् २२ किंमयाकृतमेतावद्योऽहंकालमिमंजनम् ॥ मत्स्योजालंह्यविज्ञानादनुवर्तितवानिह २३ अहमेवहिसंमोहादन्यमन्यंजनाज्जनम् ॥ मत्स्योयथोदकज्ञानादनुवर्तितवानहम् २४ मत्स्योऽन्यत्वंयथाज्ञानादुदकान्नाभिमन्यते ॥ आत्मानंतद्वदज्ञा नादन्यत्वंचैववेद्म्यहम् २५ ममास्तुधिगबुद्धस्ययोऽहंमग्नमिमंपुनः ॥ अनुवर्तितवान्मोहादन्यमन्यंजनाज्जनम् २६ अयमत्रभवेद्बंधुरनेनसहमेक्षमम् ॥ साम्यमेकत्वमायातोयादृशस्तादृशस्त्वहम् २७ तुल्यतामिहपश्यामिसदृशोऽहमनेनवै ॥ अयंहिविमलोव्यक्तमहमीदृशकस्तथा २८ योऽहम ज्ञानसंमोहादज्ञयासंप्रवृत्तवान् ॥ ससंगयाऽहंनिःसंगःस्थितःकालमिमंत्वहम् २९ अनयाऽहंवशीभूतःकालमेतंनबुद्धवान् ॥ उच्चमध्यमनी चानांतामहंकथमावसे ३०

द्रष्टारंपश्यन्नसंत्यजेन्नविस्मरेत् तत्त्वपक्षपातोहिधियांस्वभावइतिन्यायेनसकृज्ज्ञातमपिप्रमाणज्ञानंननश्यति अनादिकालीनमपिभ्रांतिज्ञानंनपुनरुन्मिषतीतिभावः । यदाहुर्बौद्धाअपि'निरुपद्रवभू तार्थस्वभावस्यविपर्ययैः । नबाधोयत्नवत्त्वेऽपिबुद्धेस्तत्पक्षपाततः'इति । अपरिणामिनोनित्यसिद्धस्यवस्तुनःसम्यग्ज्ञातस्यपुनर्बाधोनास्ति । अयत्नवत्त्वेऽपितद्विषयकप्रत्ययानावृत्तावपि तत्रहेतुर्बुद्धेरितीतिबाह्यश्लोकार्थः २२ इमंप्राकृतं जनंदेहं जालंहिजालमिव २३ उदकज्ञानादिदंममजीवनमितिज्ञानात् ह्रदात्ह्रदंमत्स्यइवदेहाद्देहमप्यनुवर्तितवान् २४ मत्स्यउदकादिवाहंपु त्रादिभ्योऽन्यमात्मानंनवेद्मीतिनञ्शब्दानुकर्षेणयोज्यं २५ मग्नंविपद्ग्रस्तं २६ बंधुःसखा एकत्वमविसंवादं तस्यैवव्याख्यायादृशइति २७ विमलोनिष्कपटः २८ अज्ञयाजडयाप्रकृत्या ससंगनिःसंगयोर्मोहमंतरेणसंबंधायोगादित्यर्थः २९ उच्चादीनां देवमनुष्यतिरश्चांसंबंधिनींतामनेकविकारवतीमित्यर्थः । एतेनविकारित्वाविकारित्वेऽपिसंबंधासंभवायदर्शिते तथोदाहृतंप्रागेव । 'निःसंगस्यससंगेनकूटस्थस्यविकारिणा । आत्मनोऽनात्मनायोगोवास्तवोनोपपद्यते'इति ३०



समानयासंयुतया एषेदानीमितिपादपूरणार्थःसंधिः स्थिरःसांख्येयोगेवानिष्ठायुक्तःसन्भवेप्राप्नुयांआत्मानंजानीयामित्यर्थः भूम्राप्तावित्यस्यरूपं ३१ वंचनाद्विपर्ययज्ञानजात् अनयामूला विद्यया विकारयाविकारवत्या ३२ पराङ्मुखंबहिर्मुखंविषयमुपस्थितोभोक्तुमुद्युक्तः ३३ ततःपराङ्मुखोपस्थानाद्बाह्यार्थप्रावण्यात् मूर्तिषुदेहेषु अमूर्तस्यापिमूर्तात्मत्वेहेतुर्ममत्वमित्यर्थः ३४ योनिषुनिपातितइतिशेषः एतदेवप्रधर्षणंनाम निर्ममस्येति किंकृतंनकिमपि ज्ञानस्यासाधनादित्यर्थः ३५ अहंकारेणकृतोहिंसितआत्मायथासातया आत्मयेतिसमासांतोडच् ३६ बहुधाऽने कदेहाकारं ३७ ममत्वमिति अपेत्याऽपसृत्यप्रत्यक्प्रावण्येनइमांप्रकृतिंत्यक्त्वेत्यर्थः । निरामयंनिर्द्वंद्वंपरमात्मानम् ३८ अनेननिरामयेणसाम्यमैक्यं अचेतयाजडया अनेनसहैकत्वंक्षेमंन त्वनयासहैकत्वं ३९ परमस्यपर्द्विंशस्यसंबोधात् क्षरंत्यक्त्वाअक्षरत्वंनियच्छेत्अक्षरएवभवेत् ब्रह्मभावंनजह्यादित्यर्थः कःयःपंचविंशःनिरामयमनुबुद्धवान् ४० प्रथमंमव्यक्तस्याप्यादिं तादृङ्नि र्गुणःप्रथमश्चभवति निर्गुणत्वादेवव्यावर्तकधर्माभावाद्ब्रह्मैवभवतीत्यर्थः ४१ निदर्शनमनुभवः यथाश्रुतिश्रुतिमनतिक्रम्य निदर्शनादनुभवात् ४२ विशुद्धंविशिष्टज्ञानं विमलंनिर्दोषं ४३

समानयाऽन्ययाचेहसहवासमहंकथम् ॥ गच्छाम्यबुद्धभावत्वादेषेदानींस्थिरोभवे ३१ सहवासंनयास्यामिकालमेतद्धिवंचनात् ॥ वंचितोऽस्म्यनयायद्धिनिर्विकारोवि कारया ३२ नचायमपराधोऽस्याह्यपराधोह्ययंमम ॥ योऽहमत्राभवंसक्तःपराङ्मुखमुपस्थितः ३३ ततोऽस्मिबहुरूपासुस्थितोमूर्तिष्वमूर्तिमान् ॥ अमूर्तश्चा पिमूर्तात्माममत्वेनप्रधर्षितः ३४ प्राकृतेनममत्वेनतासुतास्विहयोनिषु ॥ निर्ममस्यममत्वेनकिंकृतंतासुतासुच ३५ योनीषुवर्तमानेननष्टसंज्ञेनचेतसा ॥ नममा त्रानयाकार्यमहंकारकृतात्मया ३६ आत्मानंबहुधाकृत्वायेयंभूयोयुनक्तिमाम् ॥ इदानीमेषबुद्धोऽस्मिनिर्ममोनिरहंकृतः ३७ ममत्वमनयानित्यमहंकारकृता त्मकम् ॥ अपेत्याहमिमांहित्वासंश्रयिष्येनिरामयम् ३८ अनेनसाम्यंयास्यामिनानयाऽहमचेतया ॥ क्षेमंममसहानेनैकत्वमनयासह ३९ एवंपरमसंबोधात्पं चविंशोऽनुबुद्धवान् ॥ अक्षरत्वंनियच्छेतत्यक्त्वाक्षरमनामयम् ४० अव्यक्तंव्यक्तधर्माणंसगुणंनिर्गुणंतथा ॥ निर्गुणंप्रथमंदृष्ट्वातादृग्भवतिमैथिल ४१ अक्षर क्षरयोरेतदुक्तंतवनिदर्शनम् ॥ मयेहज्ञानसंपन्नंयथाश्रुतिनिदर्शनात् ४२ निःसंदिग्धंचसूक्ष्मंचविबुद्धंविमलंयथा ॥ प्रवक्ष्यामितुतेभूयस्तन्निबोधयथाश्रुतम् ४३ सांख्ययोगेमयाप्रोक्तौशास्त्रद्वयनिदर्शनात् ॥ यदेवशास्त्रंसांख्योक्तंयोगदर्शनमेवतत् ४४ प्रबोधनकरंज्ञानंसांख्यानामवनीपते ॥ विस्पष्टंप्रोच्यतेतत्र शिष्याणांहितकाम्यया ४५ बृहच्चैवमिदंशास्त्रमित्याहुर्विदुषोजनाः ॥ अस्मिंश्चशास्त्रेयोगानांपुनर्वेदपुरःसरः ४६

सांख्येति शमादिभिर्द्वैतादर्शनंमोक्षदमित्यस्यार्थस्योभयत्रसाम्यात् साधनानुभवफलैःसांख्ययोगयोरैक्यमित्यर्थः ४४ किमंशेनतर्हितयोर्भेदइत्याशंक्याह प्रबोधनेत्यादिना अत्रायमर्थः सांख्ये हिलवणोदकन्यायेनकार्यस्यकारणेप्रविलापनमितिक्रमेणाऽध्यायादौनिरूपितवियादृक्केननिर्विशेषप्रत्यङ्मात्रेणावस्थानंयुक्तिपूर्वकमुपपादितं ४५ तदेतद्धीमतांशिष्याणामाशुसिद्धिदंबृहच्छास्त्रंविदुषो विद्वांसःप्राहुः योगानांपुनरस्मिन्सांख्यशास्त्रेवेदेचपुरःसरोऽत्यंतमादरोऽस्ति तथाहि शास्त्रेऽपिसंराधनेप्रत्यक्षानुमानाभ्यामितिशास्त्रेयोगस्यादरोदृश्यतेसंराधनंभक्तिध्यानपूर्वकमात्मनिमनःप्रणिधानं तस्मिन्क्रियमाणेआत्मनःसम्यग्दर्शनंभवति । तत्रप्रमाणंप्रत्यक्षंश्रुतिःप्रामाण्यंप्रत्यनपेक्षत्वात् 'अध्यात्मयोगाधिगमेनदेवंमत्वाधीरोहर्षशोकौजहाति'इत्यादिका अनुमानंस्मृतिःप्रामाण्यंप्रतिसापे क्षत्वाद्योगिनस्तंप्रपश्यंतीत्यादिकाएताभ्यांप्रमाणाभ्यामित्यर्थः । तथावेदेऽपि 'विद्यामेतांयोगविधिंचकृत्स्नं यदापंचावतिष्ठंतेज्ञानानिमनसासह ॥ बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिं । तांयोग–

-मितिमन्यंतेस्थिरामिंद्रियधारणां । अप्रमत्तस्तदाभवतियोगोहिप्रभवाप्ययौ'इति । अज्ञातोयोगःसंसारोज्ञातोमोक्षइतियोगस्यादरोदृश्यते । तथाचसांख्यस्यशिष्यानुग्राहकत्वाद्योगस्यचवेदशास्त्रादृतत्वाद्द्वयमप्यपरित्याज्यमिति । ननुकथंतर्हिद्वाविमौमार्गावित्युद्घोषः प्रधानोपसर्जनभावेनेत्यवेहि तथाहि । द्विविधोमोक्षाधिकारीकृतोपास्तिरकृतोपास्तिश्च । तत्राद्योवाक्यर्थविचारात्प्रागेवानुष्ठितयोगइतिनतंप्रतिध्यानापेक्षा विविक्तस्यत्वंपदार्थस्यप्रागेवदृष्टत्वात् । तस्यतत्पदार्थाभेदमात्रंवाक्यात्प्रतिपत्तव्यंतंप्रतियोगउपसर्जनःसांख्यंप्रधानंचरमत्वात् । यस्त्वकृतोपास्तिरोत्सुक्याच्छ्रवणादावेवप्रवर्ततेतस्यवेदांतैपरोक्षंज्ञानंजायतेतदर्थस्यनिदिध्यासनादापरोक्ष्यंतंप्रतिसांख्यमुपसर्जनंयोगःप्रधानं । तदिदंमतद्वयंगृहीत्वाऔपनिषदस्यपुरुषस्यकचिद्वेदैकगम्यत्वंकचिद्विवेकगम्यत्वमुच्यते । 'नावेदविन्मनुतेतंबृहंतमिति दृश्यतेत्वग्र्ययाबुद्धचेतिच' सूत्रमपि'सहकार्यंतरविधिःपक्षेणतृतीयंतद्वतः'इतिध्यानस्यपाक्षिकत्वंदर्शयत्यधिकारिभेदेन तद्वतःश्रवणमननवतः तृतीयंनिदिध्यासनं । पक्षेणशुद्धचेतसामनपेक्षिततयाविकल्पेनसहकार्यंतरंविधीयतेआत्मदर्शनार्थमितिसूत्रपदानामर्थः ४६ किमंशेतर्हिसांख्याद्योगोनाद्रियंतइत्यतआह पंचविंशादिति । तेषांपंचविंशेऽसंगात्मनिकर्तृत्वानुपगमाज्जडेचप्रकृत्यादौकर्तृत्वासंभवाच्चिज्जडग्रंथ्यात्मनःकर्त्रात्मापलापेनसर्वविधिप्रतिषेधमोक्षपरंशास्त्रमनर्थकमितिभावः । सांख्यानांतुषड्विंशस्याभ्युपगमात् पंचविंशस्यकर्तृत्वान्नोक्तदोषस्तत्त्वमसीत्यादिजीवब्रह्माभेदवादानांसामंजस्यमित्याशयेनाह सांख्यानामिति ४७ कातर्हियोगमतेउक्तदोषगतिरित्याशंक्ययथाकथंचित्समाधत्ते बुद्धमिति यदेवानित्यप्रबुद्धंचिदात्म

पंचविंशात्परंतत्त्वंपठ्यतेनेनराधिप ॥ सांख्यानांतुपरंतत्त्वंयथावदनुवर्णितम् ४७ बुद्धमप्रतिबुद्धत्वाद्बुध्यमानंचतत्त्वतः ॥ बुध्यमानंचबुद्धंचप्राहुर्योगनिदर्शनम् ४८ ॥ इतिश्रीमहाभारतेशांति०मोक्षधर्मपर्वणि वसिष्ठकरालजनकसंवादेसप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥ ॥ वसिष्ठउवाच ॥ अथबुद्धमथाबुद्धमिमंगुणविधिंशृणु ॥ आत्मानंबहुधाकृत्वातान्येवप्रविचक्षते १ एतदेवंविकुर्वाणोबुध्यमानोनबुध्यते ॥ गुणान्धारयतेह्येषसृजत्याक्षिपतेतदा २ अजस्रंत्विहक्रीडार्थंविकरोतिजनाधिप ॥ अव्यक्तबोधनाच्चैवबुध्यमानंवदंत्यपि ३

स्वरूपंतदेववृत्तिसारूप्यदशायांतत्त्वतःकेवलेनरूपेणाऽप्रतिबुद्धत्वाद्बुध्यमानंबुभुत्साविषयोभवति नहिस्त्रीविपच्छन्नोनष्टोबुद्धोऽपिनबुभुत्सितोभवतीतियुज्यते नचतावतातस्यद्वैरूप्यंभवति यदपगमायतत्त्वमसीत्यादयोभेदवादाअपेक्ष्यंतेइत्याशयः । अतएवकर्त्रात्मापलापिनायोगानांद्वावेवपदार्थावित्याह बुध्यमानंदृश्यंप्रधानं बुद्धंबोधश्चिदात्मा ४८ ॥ इतिशांति०मो० नी० भारतभावदीपे सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥ ॥ ७ ॥ भोक्ताभोग्यंप्रेरितारंचमत्वेतिश्रुत्यनुसारात्पदार्थत्रयमुपेत्यबुद्धाबुद्धविभागमाह अथबुद्धमित्यादिना बुद्धंबोधःपरमात्मा अबुद्धंतदन्योजीवः अबुद्धस्यविशेषणंगुणविधिंगुणानांसत्वादीनामेवविधिंविधानंप्रभावमिमंशृणु दृश्यतेहीदंगुणसामर्थ्यंब्राह्मणोऽपिस्वप्नेराजाऽहमितिमन्यतेनचब्राह्मण्यमनुसंधत्तेइति । आत्मानंबहुधाविश्वतैजसप्राज्ञविराट्सूत्रांतर्यामिरूपेणकृत्वा माययेतिशेषः तान्येवचरूपाणिप्रविचक्षतेतात्त्विकत्वेनपश्यति । नटस्तुस्त्रीवेषकालेऽप्यात्मनःपुंस्त्वमनुसंधत्तेइतिपरागर्थभ्रमेतदुदाहरणंनप्रत्यक्तत्त्वभ्रमे । तस्मात्प्रधानादन्यौबुद्धाबुद्धौपृथगभ्युपेयौ । तथाचाबुद्धाधिकारिकंशास्त्रंनवैयर्थ्यमश्नुते १ नन्वेवंजितंभेदवादिनानेत्याह एतदिति बुध्यमानोजीवएतद्वद्वंब्रह्मनबुध्यते यतएवमहंकर्ताऽहंभोक्तेतिप्रकारेणविकुर्वाणोभवति । कुतएतद्विकुर्वाणत्वमतआह गुणानिति यतोगुणान्धारयतेऽतःसर्गादिकर्तृत्वेनविक्रियतइत्यर्थः २ एतद्विवृणोति अजस्रमिति बुध्यमापदंनिर्वक्ति अव्यक्तेति अव्यक्तंसकार्यंज्ञानंघटोऽयंमामहंनजानामीतिघटादीनांस्वाश्रिताज्ञानस्यचबोधाज्जीवंबुध्यमानपदेनवदंति ३

नन्विदंबुध्यमानत्वंसत्वस्यैवधर्मइत्याशंक्याह नत्विति अव्यक्तंकर्तृसगुणंरूपादिमन्निर्गुणंप्रधानपुरुषौवानबुध्यते अचेतनत्वादव्यक्तस्य अतएवतदप्रतिबुद्धकंजडमित्याहुः ४ बुध्यतुदुर्जनइतिन्यायेनाभ्युपेत्याप्याह बुध्यतइति अव्यक्तंकर्तृयदिजानातितर्हिपंचविंशकंचिदाभासमेवोपाधिविशिष्टमयमहमस्मीतिजानीयान्नतुषड्विंशमसंगं यत्स्वयंबुध्यमानःपंचविंशःससंगात्मकश्चिदचिद्ग्रंथिरूपोऽहंकारःपुण्यपापसुखदुःखादिसंगी तथाचश्रुतिः । 'पुण्योवैपुण्येनकर्मणाभवतिपापःपापेन'इति अनेनसंगात्मकत्वेनहेतुनाऽव्यक्तमस्फुटमच्युतमविकारिणमपिसंतमेतंपुरुषमप्रतिबुद्धोमूढइतिवदंति संधिरार्षः ५ बुध्यमानंजीवंपंचविंशंचिदाभासंनतुनिष्कृष्टचैतन्यरूपंमुख्यंनचासावपिबुध्यतेचिदाभासोऽपिदृश्यत्वान्नान्यंद्रष्टुमर्हति नहिघटोघटंबुध्यते । यदात्वाभासेऽपिनज्ञातृत्वंसंभवतितदानश्वरांतदुपाधिभूतेसत्त्वेइत्यर्थः ६ कस्तर्हिबुध्यतेइत्यतआह षड्विंशमिति निरुपाधिचैतन्यमेवसर्वप्रकाशकमित्यर्थः ७ षड्विंशस्यसत्त्वेमानमाह दृश्येति कार्येकारणेचस्वभावेनस्वसत्तयाऽनुगतंशुक्तीदमंशइवस्वाध्यस्तेरजतंसर्वस्मिन्दृश्येसत्सदित्यनुगमोयदनुवेधाद्दृश्यतेतत्सन्मात्रंकेवलंवस्तुषड्विंशशब्दितमित्यर्थः । अनुभवमप्यत्राह अव्यक्तमिति अव्यक्तमस्फुटमपि अत्रजीवत्येवदेहे

नत्वेवबुध्यतेव्यक्तंसगुणंतातनिर्गुणम् ॥ कदाचित्त्वेवखल्वेतदाहुरप्रतिबुद्धकम् ४ बुध्यतेयदिवाऽव्यक्तमेतद्वैपंचविंशकम् ॥ बुध्यमानोभवत्येवसंगात्मकइतिश्रुतिः ॥ अनेनाप्रतिबुद्धेतिवदंत्यव्यक्तमच्युतम् ५ अव्यक्तबोधनाच्चापिबुध्यमानंवदंत्युत ॥ पंचविंशंमहात्मानंनचासावपिबुध्यते ६ षड्विंशंविमलंबुद्धमप्रमेयंसनातनम् ॥ सततंपंचविंशंचचतुर्विंशंचबुध्यते ७ दृश्यादृश्येह्यनुगतंस्वभावेनमहाद्युते ॥ अव्यक्तमत्रतद्ब्रह्मबुध्यतेतातकेवलम् ८ केवलंपंचविंशंचचतुर्विंशंनपश्यति ॥ बुध्यमानोयदाऽऽत्मानमन्योऽहमितिमन्यते ९ तदाप्रकृतिमानेषभवत्यव्यक्तलोचनः ॥ बुध्यतेचपरांबुद्धिंविमलाममलांयदा १० षड्विंशोराजशार्दूलतथाबुद्धत्वमाव्रजेत् ॥ ततस्त्यजतिसोऽव्यक्तंसर्गप्रलयधर्मिवै ११ निर्गुणःप्रकृतिंवेदगुणयुक्तामचेतनाम् ॥ ततःकेवलधर्माऽसौभवत्यव्यक्तदर्शनात् १२ केवलेनसमागम्यविमुक्तोऽऽत्मानमाप्नुयात् ॥ एतत्तुतत्त्वमित्याहुर्निस्तत्त्वमजरामरम् १३ तत्त्वसंश्रयणादेतत्तत्त्ववन्नचमानद ॥ पंचविंशतितत्त्वानिप्रवदंतिमनीषिणः १४ नचैषतत्त्ववांस्तातनिस्तत्त्वस्त्वेषबुद्धिमान् ॥ एषमुंचतितत्त्वंहिक्षिप्रंबुद्धत्वलक्षणम् १५

तत्केवलंनिर्गुणंब्रह्मबुध्यतेज्ञायतेविद्वद्भिरितिशेषः ८ कुतस्तर्हिसर्वत्रानुगतोऽपिकेवलोऽस्मदादिभिर्नानुभूयतइत्यतआह केवलमिति बुध्यमानोजीवोयदाऽऽत्मानमहमन्योऽमुष्यपुत्रोब्राह्मणोऽधीतीत्यादिरूपंमन्यतेतदाकेवलंषड्विंशंपंचविंशंचसर्वत्रैकरूपंजीवंचतुर्विंशमव्यक्तंचनपश्यति कार्योपहतदृष्टित्वात् ९ कथंतर्हिकेवलज्ञःस्यादतआह तदेति अव्यक्तेअव्याकृतेलोचनंदृष्टिरस्याऽव्याकृतोपास्त्याप्रकृतिमान्प्रकृतिजयीयदाभवतितदाविमलांशुद्धब्रह्मविषयिणींबुद्धिंविद्याममलांनिर्द्वैतांपरांसर्वोत्कृष्टांबुध्यतेअवगच्छति १० तदेवपरविद्योदयकालेषड्विंशबोधःप्रकृतित्यागश्चभवतीत्याह षड्विंशइति ११ असौजीवः अव्यक्तस्यस्वस्मात्पृथक्त्वेनदर्शनात्केवलधर्माकेवलएवभवति योनिर्गुणःसन्प्रकृतिंवेदसकेवलइतियोज्यं १२ आत्मानंकेवलं विमुक्तउपाधित्रयान्मुक्तः सत्त्वमनारोपितरूपंनिस्तत्त्वंपारोक्ष्यरहितंनित्यापरोक्षमित्यर्थः १३ तत्त्वंदृश्यंशरीरादि तदाश्रयादस्यापिदृश्यत्वं वस्तुतस्तुनचदृश्यत्वमस्तिदृङ्मात्रत्वात् १४ एषषड्विंशः तत्त्ववान्पारोक्ष्यवान् कार्यभूतंमहदादितत्त्वमस्यास्तीतितत्त्ववान्नच यतोनिस्तत्त्वःकार्यकारणवर्जितःबुद्धलक्षणंतत्त्वमहंब्रह्मास्मीतिवृत्तिमपिएषमुंचति १५

एतदेवाह षड्विंशइति । ननुषड्विंशोऽहमितिययावृत्त्याषड्विंशोगृह्यतेतस्यानाशकस्यवृत्त्यंतरस्याभावाद्भावेवाऽनवस्थापातात्कथंनिरुपाधिकस्यसाक्षात्कारोवृत्तिरूपस्यैवोपाधेर्विद्यमानत्वादित्याशं क्याह केवलेनेति बलेनस्वसामर्थ्येनतद्वृत्तिरूपंग्रहणंसमतांयाति । यथाकतकरजोरजोंतरंशमयत्स्वयमपिशाम्यतितथाचरमाब्रह्माकारावृत्तिर्वृत्त्यंतरंस्वात्मानंचशमयतीत्यर्थः १६ षड्विंशेनेति येनके वलप्रकाशात्मनापंचविंशादीन्बुध्यतेनमजानन्नबुद्धिमान्यतोभवति एतत्तस्याज्ञानमेवनानात्वंब्रह्माज्ञानमूलकएवप्रपंचइत्यर्थः १७ षड्विंशानुभवस्वरूपमाह चेतनेनेति पंचविंशस्याऽहंप्रत्ययगम्यस्य चेतनायुक्तस्यजडस्यतदेकत्वंभवतियदाबुद्ध्याऽप्यहमित्यात्मानंनबुद्ध्यते । धीनिरोधेसतिगाढसुषुप्तिवत्षड्विंशानुभवइत्यर्थः १८ एतत्फलमाह बुध्यमानइति अहमितिगृह्यमाणःसंगधर्मासुखादि संगीजीवोऽप्रबुद्धेनवाङ्मनसातीततयाअगोचरीकृतेनषड्विंशेनयदासमतामभेदंयातितदानिःसंगात्मापुण्यापुण्यादिस्पर्शशून्योभवति १९ निःसंगात्मनःषड्विंशस्यसंगात्संगिनोऽपिजीवस्यनिःसंगताभवति

षड्विंशोऽहमितिप्राज्ञोगृह्यमाणोऽजरामरः ॥ केवलेनबलेनैवसमतांयात्यसंशयम् १६ षड्विंशेनप्रबुद्धेनबुध्यमानोऽप्यबुद्धिमान् ॥ एतन्नानात्वमित्युक्तंसांख्यश्रुति निदर्शनात् १७ चेतनेनसमेतस्यपंचविंशतिकस्यह ॥ एकत्वंवैभवत्यस्ययदाबुद्ध्यानबुध्यते १८ बुध्यमानोऽप्रबुद्धेनसमतांयातिमैथिल ॥ संगधर्माभवत्येषनिः संगात्मानराधिप १९ निःसंगात्मानमासाद्यषड्विंशकमजंविभुम् ॥ विभुस्त्यजतिचाव्यक्तंयदात्वेतद्विबुध्यते २० चतुर्विंशमसारंचषड्विंशस्यप्रबोधनात् ॥ एषह्यप्रतिबुद्धश्चबुध्यमानश्चतेऽनघ २१ प्रोक्तोबुद्धश्चतत्त्वेनयथाश्रुतिनिदर्शनात् ॥ नानात्वैकत्वमेतावद्द्रष्टव्यंशास्त्रदर्शनात् २२ मशकोदुंबरेयद्वदन्यत्वंतद्वदे तयोः ॥ मत्स्योदकेयथातद्वदन्यत्वमुपलभ्यते २३ एवमेवावगंतव्यंनानात्वैकत्वमेतयोः ॥ एतद्धिमोक्षइत्युक्तमव्यक्तज्ञानसंहितम् २४ पंचविंशतिकस्यास्ययो ऽयंदेहेषुवर्तते ॥ एषमोक्षयितव्येतिप्राहुरव्यक्तगोचरात् २५ सोऽयमेवंविमुच्येतनान्यथेतिविनिश्चयः ॥ परश्चपरधर्माचभवत्येषसमेत्यवै २६ विशुद्धधर्माशु द्धेनबुद्धेनचसबुद्धिमान् ॥ विमुक्तधर्मामुक्तेनसमेत्यपुरुषर्षभ २७ वियोगधर्मिणाचैवविमुक्तात्माभवत्यथ ॥ विमोक्षिणाविमोक्षश्चसमेत्येहतथाभवेत् २८ शुचिकर्माशुचिश्चैवभवत्यमितदीप्तिमान् ॥ विमलात्माचभवतिसमेत्यविमलात्मना २९ केवलात्मातथाचैवकेवलेनसमेत्यवै ॥ स्वतंत्रश्चस्वतंत्रेणस्वतंत्रत्वमवाप्नुते ३० एतावदेतत्कथितंमयातेतथ्यंमहाराजयथार्थतत्त्वम् ॥ अमत्सरत्वंपरिगृह्यचार्थंसनातनंब्रह्मविशुद्धमाद्यम् ३१

साचाऽव्यक्तत्यागेनैवेत्यर्थः । एतदव्यक्तं दृष्टमात्रेवप्रकृतिर्लीयतइत्यर्थः । यथोक्तंसप्तत्यां 'प्रकृतेःसुकुमारतरंनकिंचिदस्तीतिमेमतिर्भवति । याद्दष्टास्मीतिपुनर्नदर्शनमुपैतिपुरुषस्य'इति २० असारंरज्जु रगवन्निःस्वरूपंभवति क्षरंप्रधानममृताक्षरं हरःक्षरात्मानावीशतेदेवएकइतिश्रुत्यनुसारेणाप्रमतिबुद्धः क्षरःबुद्ध्यमानोऽक्षरःबुद्धईशः एतेयथाश्रुतिप्रोक्ताः २१ नानात्वेति यथोदुंबरेणसहमशकस्य यथावाजलेनसहमत्स्यस्यनानात्वैकत्वेएवंचतुर्विंशत्यातत्त्वैःसहपंचविंशस्येत्यर्थः एतद्योगसंमतंनानात्वैकत्वमुक्तं २२ । २३ अव्यक्तज्ञानसंहितमव्यक्तविपर्ययंपुरुषात्पृथक्त्वेनज्ञानंपुरुषमात्रावशेषप्रमे कत्वंमोक्षोऽन्यन्नानात्वमित्यर्थः २४ सांख्यमतमाह पंचविंशतिकस्येति अव्यक्तादज्ञानात्तद्विषयाग्महदादेश्चमोक्षयितव्यः २५ एवमज्ञानबाधेसत्येवविमुच्येतनान्यथेत्यर्थः । परोऽन्यश्चिदात्मा परधर्माक्षेत्रधर्मा समेत्यक्षेत्रेणैकीभूय २६ परधर्मत्वमेवप्रपंचयति विशुद्धेत्यादिना २७ । २८ । २९ । ३० । ३१



वेदनिष्ठस्यनिदाघवत्कर्मश्रद्धाजडस्य । नावेदनिष्ठस्येतिपाठःस्वच्छः विधित्समानायविशेषेणतृष्णावते धेनूपानेत्यस्यरूपं ३२।३३ ।३४। ३५। ३६ ।३७। ३८ अगाधमप्रतिष्ठितंजन्मयेनतत् जन्मनिवर्त कमित्यर्थः नास्तिमरणंयेनतदमरणं ३९। ४०।४१ किंतदक्षरमित्युक्तेयस्मान्नावर्ततेपुनरित्युपक्रांतमुपपाद्योपसंहरति एतदुक्तमिति ४२ ।४३ । ४४। ४५ । ४६ वित्तेविज्ञाते ४७ उपाद्रवत्क्लेशवानभूत्

नवेदनिष्ठस्यजनस्यराजन्प्रदेयमेतत्परमंत्वयाभवेत् ॥ विधित्समानायविबोधकारणंप्रबोधहेतोःप्रणतस्यशासनम् ३२ नदेयमेतच्चतथाऽनृतात्मनेशठायक्लीबा यनजिह्मबुद्धये ॥ नपंडितज्ञानपरोपतापिनेदेयंतुदेयंचनिबोधयादृशे ३३ श्रद्धान्वितायाथगुणान्वितायपरापवादाद्विरतायानित्यम् ॥ निशुद्धयोगायबुधायनि त्यंक्रियावतेचक्षमिणेहिताय ३४ विविक्तशीलायविधिप्रियायविवादहीनायबहुश्रुताय ॥ विजानतेचैवनचाहितक्षमेदमेचशक्तायशमेचदेयम् ३५ एतैर्गुणैर्हीं नतमेनदेयमेतत्परंब्रह्मविशुद्धमाहुः ॥ नश्रेयसायोक्ष्यतितादृशेकृतंधर्मप्रवक्तारमपात्रदानात् ३६ पृथ्वीमिमांयद्यपिरत्नपूर्णांदद्यान्नदेयंत्विदमव्रताय ॥ जितें द्रियायैतदसंशयंतेभवेत्प्रदेयंपरमंनरेंद्र ३७ करालमातेभयमस्तुकिंचिदेतच्छ्रुतंब्रह्मपरंत्वयाऽद्य ॥ यथावदुक्तंपरमंपवित्रंविशोकमत्यंतमनादिमध्यम् ३८ अगा धजन्मामरणंचराजन्निरामयंवीतभयंशिवंच ॥ समीक्ष्यमोहंत्यजवाऽद्यसर्वंज्ञानस्यतत्त्वार्थमिदंविदित्वा ३९ अवाप्तमेतद्धिमयासनातनाद्धिरण्यगर्भाद्गदतोनरा धिप ॥ प्रसाद्ययत्नेनतमुग्रचेतसंसनातनंब्रह्मयथाऽद्यवैत्वया ४० पृष्टस्त्वयाचास्मियथानरेंद्रयथामयेदंत्वयिचोक्तमद्य ॥ तथाऽवाप्तंब्रह्मणोमेनरेंद्रमहाज्ञानं मोक्षविदांपरायणम् ४१ ॥ भीष्मउवाच ॥ एतदुक्तंपरंब्रह्मयस्मान्नावर्ततेपुनः ॥ पंचविंशोमहाराजपरमर्षिनिदर्शनात् ४२ पुनरावृत्तिमाप्नोतिपरंज्ञानमवा प्यच ॥ नावबुध्यतितत्त्वेनबुध्यमानोऽजरामरम् ४३ एतन्निःश्रेयसकरंज्ञानंतेपरमंमया ॥ कथितंतत्त्वतस्तातश्रुत्वादेवर्षितोनृप ४४ हिरण्यगर्भादृषिणावसिष्ठे नमहात्मना ॥ वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ४५ नारदाद्विदितंमह्यमेतद्ब्रह्मसनातनम् ॥ माशुचःकौरवेंद्रत्वंश्रुत्वैतत्परमंपदम् ४६ येनक्षराक्षरे वित्तेभयंतस्यनविद्यते ॥ विद्यतेतुभयंतस्ययोनैतद्वेत्तिपार्थिव ४७ अविज्ञानाच्चमूढात्मापुनःपुनरुपाद्रवत् ॥ प्रेत्यजातिसहस्राणिमरणांतान्युपाश्नुते ४८ देव लोकंतथातिर्यङ्मनुष्यमपिचाश्नुते ॥ यदिशुध्यतिकालेनतस्मादज्ञानसागरात् ४९ अज्ञानसागरोघोरोह्यव्यक्तोऽगाधउच्यते ॥ अहन्यहनिमज्जंतियत्रभूता निभारत ५० यस्मादगाधादव्यक्तादुत्तीर्णस्त्वंसनातनात् ॥ तस्मात्त्वंविरजाश्चैववितमस्कश्चपार्थिव ५१ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि वासिष्ठकरालजनकसंवादसमाप्तौअष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ भीष्मउवाच ॥ मृगयांविचरन्कश्चिद्विजनेजनकात्मजः ॥ वनेददर्शविप्रेंद्रमृषिंवंशधरंभृगोः १

अश्नुतेचप्रेत्यचेत्युभयान्वयि ४८ । ४९ । ५० । ५१ ॥ इति शांति०मो०नी०भा० अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥ किंतदक्षरमितिपृष्टस्याक्षरस्यव्याख्यानायचतुर्विंशत्यात्मकंक्षरमुक्त्वापंचविं शोऽक्षरइतियोगमतमुक्तं सोऽपिधर्माद्यभिभूतत्वात्क्षरएवेतिधर्माद्यस्पृष्टःषड्विंशोऽक्षरःसांख्यमतेनोपक्षिप्तस्तंव्याचिख्यासुस्तदधिगमेऽधिकारहेतून्कांश्चिद्धर्मान्विधत्ते मृगयांविचरन्नित्यध्यायेन १

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ योनिकर्मविशुद्धःपात्रमित्युक्तंतत्रयोनिशुद्धिंकर्मशुद्धिंचव्याचष्टेसत्कृतेति एकस्यैवपत्नीएकपत्नीनत्वन्य

उपासीनमुपासीनःप्रणम्यशिरसामुनिम् ॥ पश्चादनुमतस्तेनपप्रच्छवसुमानिदम् २ भगवन्किमिदंश्रेयःप्रेत्यचापीहवाभवेत् ॥ पुरुषस्याध्रुवेदेहेकामस्यवशवर्ति
नः ३ सत्कृत्यपरिपृष्टःसन्सुमहात्मामहातपाः ॥ निजगादततस्तस्मैश्रेयस्करमिदंवचः ४ ॥ ऋषिरुवाच ॥ मनसोऽप्रतिकूलानिप्रेत्यचेहचवांछसि ॥ भू
तानांप्रतिकूलेभ्योनिवर्तस्वयतेंद्रियः ५ धर्मःसतांहितःपुंसांधर्मश्चैवाश्रयःसताम् ॥ धर्माल्लोकास्त्रयस्तातप्रवृत्ताःसचराचराः ६ स्वादुकामुककामानांवैतृष्ण्यंकिं
नगच्छसि ॥ मधुपश्यसिदुर्बुद्धेप्रपातंनानुपश्यसि ७ यथाज्ञानेपरिचयःकर्तव्यस्तत्फलार्थिना ॥ तथाधर्मेपरिचयःकर्तव्यस्तत्फलार्थिना ८ असताधर्मकामे
नविशुद्धंकर्मदुष्करम् ॥ सतातुधर्मकामेनसुकरंकर्मदुष्करम् ९ वनेग्राम्यसुखाचारोयथाग्राम्यस्तथैवसः ॥ ग्रामेवनसुखाचारोयथावनचरस्तथा १० मनोवाक्का
यिकेधर्मेकुरुश्रद्धांसमाहितः ॥ निवृत्तौवाप्रवृत्तौवासंप्रधार्यगुणागुणान् ११ नित्यंचबहुदातव्यंसाधुभ्यश्चानसूयता ॥ प्रार्थितंव्रतशौचाभ्यांसत्कृतंदेशकालयोः
१२ शुभेनविधिनालब्धमर्हायप्रतिपादयेत् ॥ क्रोधमुत्सृज्यदद्याच्चनानुतप्येन्नकीर्तयेत् १३ अनृशंसःशुचिर्दांतःसत्यवागार्जवेस्थितः ॥ योनिकर्मविशुद्धश्च
पात्रंस्याद्वेदविद्द्विजः १४ सत्कृताचैकपत्नीचजात्यायोनिरिहेष्यते ॥ ऋग्यजुःसामगोविद्वान्षट्कर्मापात्रमुच्यते १५ सएवधर्मःसोऽधर्मस्तंतंप्रतिनरंभवेत् ॥
पात्रकर्मविशेषेणदेशकालाववेक्ष्यच १६ लीलयाल्पंयथागात्रात्प्रमृज्यात्तुरजःपुमान् ॥ बहुयत्नेनचमहत्पापनिर्हरणंतथा १७ विरिक्तस्ययथासम्यग्घृतंभवतिभे
षजम् ॥ तथानिर्हृतदोषस्यप्रेत्यधर्मःसुखावहः १८ मानसंसर्वभूतेषुवर्ततेवैशुभाशुभम् ॥ अशुभेभ्यःसदाऽऽक्षिप्यशुभेष्वेवावतारयेत् १९ सर्वंसर्वेणसर्वत्रक्रियमा
णंचपूजयेत् ॥ स्वधर्मेयत्ररागस्तेकामधर्मेविधीयताम् २० अधृतात्मन्धृतौतिष्ठदुर्बुद्धेबुद्धिमान्भव ॥ अप्रशांतःप्रशाम्यत्वमप्राज्ञःप्राज्ञवच्चर २१ तेजसा
शक्यतेप्राप्तुमुपायःसहचारिणा ॥ इहचप्रेत्यचश्रेयस्तस्यमूलंधृतिःपरा २२ राजर्षिरधृतिःस्वर्गात्पतितोहिमहाभिषः ॥ ययातिःक्षीणपुण्योऽपिधृत्यालो
कानवाप्तवान् २३ तपस्विनांधर्मवतांविदुषांचोपसेवनात् ॥ प्राप्स्यसेविपुलांबुद्धिंतथाश्रेयोऽभिपत्स्यसे २४ ॥ भीष्मउवाच ॥ सतुस्वभावसंपन्नस्तच्छ्रुत्वामु
निभाषितम् ॥ विनिवर्त्यमनःकामाद्धर्मेबुद्धिंचकारह २५ ॥ इति श्रीमहाभारते शांतिपर्वणि जनकानुशासने नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

पूर्वा जात्याःपुत्रोत्पत्तेः योनिःस्थानं १५ । १६ । १७ विरिक्तस्येति विरेचनानंतरमेवयथावृतपानंभेषजमेवंदानेननिर्हृतदोषस्यैवयागादिर्धर्मःसुखावहइत्यर्थः १८ । १९ । २० २१ । २२ । २३ । २४ । २५ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनैलकंठीयेभारतभावदीपेनवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥ ॥ छ ॥

यथाकठवल्लीषुयेयंप्रेतेविचिकित्सामनुष्येअस्तीत्येकेनायमस्तीतिचैकेइत्यादिनाप्रश्नप्रतिवचनेनस्थूलदेहनाशेऽप्यात्मास्तित्वंप्रसाधितं तस्यैवपुनरन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतादन्यत्रभूताच्च भ्याच्चयत्तत्पश्यसितद्वदेत्यादिनाधर्माद्युपेतलिंगशरीरादन्यत्वंप्रश्नपूर्वकंसाधितंतद्वदिहापिसाधयतिधर्माधर्मविमुक्तंयदित्यादिना धर्माधर्मौसुखदुःखे तद्धेतूजन्ममृत्यूतद्धेतूपुण्यपापेप्रवृत्तिरूपेतद्धेतुः संशयशङ्कितमवस्तुविषयंभ्रांत्यादिज्ञानंरागादिजनकंतैर्विमुक्तंयत्प्रत्यगात्मवस्तु १ तदेवशिवंजाग्रदाद्यपेक्षयातुरीयं । शिवमद्वैतंचतुर्थंमन्यंतइतिश्रुतेःनित्यमभयंसर्वदाभयशून्यं प्रलयादौकारणब्रह्मभावं प्राप्तस्यापिजन्मांतरसत्त्वात् । नित्यमविनाशिहिरण्यगर्भादिवन्ननश्यतीत्यर्थः । अक्षरमपचयशून्यं । अतएवाव्ययंनाशहीनं । शुचिस्त्वतोनिर्दोषं । नित्यमनायासमुपाधिसंपर्केऽप्यप्रच्युतकौटस्थ्यमावं २ यत्पृष्टंयच्चापृष्टमपिपृष्टप्रतिपत्त्यर्थत्वादावश्यकंतत्सर्वमाख्यायिकामुखेनवक्तुंप्रतिजानीते अत्रेति ३ । ४ अव्यक्तंकारणंब्रह्म परंमहदादेस्तस्माच्चपरतोनिर्गुणं ५ कांक्षिणःकांक्षिणेमत्यमितिशेषः

॥ युधिष्ठिरउवाच ॥ धर्माधर्मविमुक्तंयद्विमुक्तंसर्वसंशयात् ॥ जन्ममृत्युविमुक्तंचविमुक्तंपुण्यपापयोः १ यच्छिवंनित्यमभयंनित्यमक्षरमव्ययम् ॥ शुचिनित्यम
नायासंतद्भवान्वक्तुमर्हति २ ॥ भीष्मउवाच ॥ अत्रतेवर्तयिष्यामिइतिहासंपुरातनम् ॥ याज्ञवल्क्यस्यसंवादंजनकस्यचभारत ३ याज्ञवल्क्यमृषिश्रेष्ठंदेवरा
तिर्महायशाः ॥ पप्रच्छजनकोराजाप्रश्नंप्रश्नविदांवरम् ४ ॥ जनकउवाच ॥ कतींद्रियाणिविप्रर्षेकतिप्रकृतयःस्मृताः ॥ किमव्यक्तंपरंब्रह्मतस्माच्चपरतस्तुकिं
५ प्रभवंचाप्ययंचैवकालसंख्यांतथैवच ॥ वक्तुमर्हसिविप्रेंद्रत्वदनुग्रहकांक्षिणः ६ अज्ञानात्परिपृच्छामित्वंहिज्ञानमयोनिधिः ॥ तदहंश्रोतुमिच्छामिसर्वमे
तदसंशयम् ७ ॥ याज्ञवल्क्यउवाच ॥ श्रूयतामवनीपालयदेतदनुपृच्छसि ॥ योगानांपरमंज्ञानंसांख्यानांचविशेषतः ८ नतवाविदितंकिंचिन्मांतुजिज्ञासते
भवान् ॥ पृष्टेनचापिवक्तव्यमेषधर्मःसनातनः ९ अष्टौप्रकृतयःप्रोक्ताविकाराश्चापिषोडश ॥ तत्रतुप्रकृतीरष्टौप्राहुरध्यात्मचिंतकाः १० अव्यक्तंचमहांतंचत
थाऽहंकारएवच ॥ पृथिवींवायुराकाशमापोज्योतिश्चपंचमम् ११ एताःप्रकृतयस्त्वष्टौविकारानपिमेशृणु ॥ श्रोत्रंत्वक्चैवचक्षुश्चजिह्वाघ्राणंचपंचमम् १२
शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ वाक्चहस्तौचपादौचपायुर्मेढ्रंतथैवच १३ एतेविशेषाराजेंद्रमहाभूतेषुपंचसु ॥ बुद्धींद्रियाण्यथैतानिसविशेषाणिमैथिल
१४ मनःषोडशकंप्राहुरध्यात्मगतिचिंतकाः ॥ त्वंचैवान्येचविद्वांसस्तत्त्वबुद्धिविशारदाः १५

६ । ७ सांख्ययोगयोरैकार्थ्यस्यप्रागुक्तत्वादुभयसंमतमित्यर्थः अव्यक्तंयोगमतेजडंसत्त्वंच सांख्यमतेचित्प्रतिबिंबगर्भमीश्वराख्यंशुद्धब्रह्मज्ञानेनबाध्यंचेति । यद्यप्येषामवांतरधर्मभेदोऽस्तितथाऽप्यव्यक्तादिधर्मिणःसर्वेषाममत्याख्येयाइतिभावः ८ । ९ । १० पृथिव्यादिपदैस्तन्मात्राण्युच्यंतेप्रकृतिशब्दितत्वात् ११ । १२ शब्दादयःस्थूलवियदाद्याः एषामप्राचांव्याख्या शब्दादीनांभौतिकत्वोपपादकवाक्यशेषविरोधात्तुयथाश्रुतमेवसाधु सर्वत्रलक्षणायांचसर्वशास्त्रविप्लवःस्यात् १३ एतेशब्दादयोदशविशेषाः विकारांतरानुपादानत्वंविशेषत्वंतच्चशब्दादिष्वेवदृष्टंनस्थूलपृथिव्यादिषु मनस्तुविकारांतर्गतमपिनविशेषः तस्यवक्ष्यमाणरीत्यामहाभूतोपादानत्वात् श्रोत्रादीनामपिविशेषत्वंनिराचष्टे बुद्धीति सविशेषाणीत्यनेनश्रोत्रादयोनविशेषाइत्युक्तं १४ षोडशकमितिबुद्ध्यहंकाराभ्यांमनःपृथक्करोति एतच्चानुभवबलात्तवचतार्किकादीनांचसंमतमित्याह त्वंचेति तथाहि । लौकिकामहंकारमात्मानंबुद्धिंतद्गुणंमनोंऽतरिंद्रियंचेतिमतियंति । शास्त्रतस्त्वेतु'मनोबुद्धिरहंकारश्चित्तंकरणमांतरं । संशयोनिश्चयोगर्वःस्मरणंविषयाअमी'इतिसर्वेषामंतरिंद्रियत्वमेव १५

सृष्टिक्रममाह अव्यक्तादिति । सुषुप्ताख्यंतमोऽज्ञानंयद्वीजंस्वप्नबोधयोरित्युक्तेरव्यक्तमिहसोषुप्तंतमस्तस्मान्महानात्माऽयमहंब्राह्मणोऽमुष्यपुत्रइतिविशेषानालिंगितोऽस्मीत्येतावन्मात्रप्रत्ययविषयो बुद्धिसूक्ष्माख्योमहानुत्पद्यते १६ ततउक्तविशेषालिंगितोऽस्मीतिप्रत्ययविषयोऽहंकारः १७ ततःसंकल्पविकल्पात्मकंमनस्तच्चवियदादिभूततद्गुणशब्दाद्यात्मकं १८ अतएवतस्मान्मनसोभूतोत्प त्तिरुच्यते अतोमानसत्वाद्भूतानांस्थूलसूक्ष्मतारूपोविभागोनास्तीतिविशेषेषुशब्दादयएवगणितानस्थूलपृथिव्यादयास्तेषांशब्दादिहेतुत्वेनविकारांतरानुपादानत्वरूपविशेषत्वायोगात् एतच्चतार्किका दीनामपिसंमतंश्रुत्यनुगृहीतंच तथाहि । तार्किकागुणिनःसकाशाद्गुणोत्पत्तिमिच्छंतआकाशादिभ्यएवशब्दाद्युत्पत्तिमिच्छंति श्रुतिश्च । 'इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः । मनसस्तुपराबुद्धि र्बुद्धेरात्मामहान्परः । महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः । पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिः'इतिविलोमक्रमेणइममेवानुक्रमंप्रदर्शयति परत्वंकारणत्वं अर्थाःखादयः १९ शब्दादीनां सर्गस्तुभौतिकःपंचमः २० बहुचिंतात्मकंमानसमित्यर्थः एतेनशब्दादीनांश्रोत्राद्यजनकत्वमुक्तंतेनचतेषांविशेषत्वंदृढीकृतंभवति २१ श्रोत्रादिभ्योऽधस्तनोऽधःश्रोत्रःसचासावैंद्रियग्रामश्चवागा

अव्यक्ताच्चमहानात्मासमुत्पद्यतिपार्थिव ॥ प्रथमंसर्गमित्येतदाहुःप्राधानिकंबुधाः १६ महतश्चाप्यहंकारउत्पन्नोहिनराधिप ॥ द्वितीयंसर्गमित्याहुरेतद्बुद्ध्या त्मकंस्मृतम् १७ अहंकाराच्चसंभूतंमनोभूतगुणात्मकम् ॥ तृतीयःसर्गइत्येषआहंकारिकउच्यते १८ मनसस्तुसमुद्भूतामहाभूतानराधिप ॥ चतुर्थंसर्गमित्ये तन्मानसंविद्धिमेमतम् १९ शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ पंचमंसर्गमित्याहुर्भौतिकंभूतचिंतकाः २० श्रोत्रंत्वक्चैवचक्षुश्चजिह्वाघ्राणंचपंचमम् ॥ सर्ग तुषष्ठमित्याहुर्बहुचिंतात्मकंस्मृतम् २१ अधःश्रोत्रेंद्रियग्रामउत्पद्यतिनराधिप ॥ सप्तमंसर्गमित्याहुरेतदैंद्रियकंस्मृतम् २२ ऊर्ध्वस्रोतस्तथातिर्यगुत्पद्यतिनरा धिप ॥ अष्टमंसर्गमित्याहुरेतदार्जवकंस्मृतम् २३ तिर्यक्स्रोतस्त्वधःस्रोतउत्पद्यतिनराधिप ॥ नवमंसर्गमित्याहुरेतदार्जवकंबुधाः २४ एतानिनवसर्गाणि तत्त्वानिचनराधिप ॥ चतुर्विंशतिरुक्तानियथाश्रुतिनिदर्शनात् २५ अतऊर्ध्वंमहाराजगुणस्यैतस्यतत्त्वतः ॥ महात्मभिरनुप्रोक्तंकालसंख्यांनिबोधमे २६ ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादे दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥ ॥ याज्ञवल्क्यउवाच ॥ अव्यक्तस्य नरश्रेष्ठकालसंख्यांनिबोधमे ॥ पंचकल्पसहस्राणिद्विगुणान्यहरुच्यते १

दिःसोऽपिश्रोत्रादिवद्विबात्मकएवेतिभावः ऐंद्रियकमिंद्रियसमुदायः २२ ऊर्ध्वस्रोतःप्रवाहोऽस्येतिप्राणऊर्ध्वस्रोताः तिर्यगित्यत्रापिस्रोतःपदानुषंगोद्रष्टव्यः । तेननाभिमध्यस्थस्यसमानस्य सर्वांगव्यापिनोव्यानस्यसर्वसंधिगतस्योदानस्यचोपरिभागगतांशानांग्रहणं । एतदार्जवकमेतस्यैंद्रियकस्यआर्जवकंऋजुवृत्तिः विशेषानाक्रांतसामान्यवृत्तिरितियावत् यथोक्तंसांख्यसप्तत्यां । सामान्यकरणवृत्तिःप्राणाद्यावायवःपंचेति २३ तिर्यक्स्रोतःशब्देनतेषामेवसमानोदानव्यानानांदेहस्याधोभागगतानांग्रहणं अधःस्रोताअपानः शेषंप्राग्वत् २४ सर्गाणिक्लीबत्वमार्षं चतुर्विंशतिरव्य क्तमहदहंकारमनांसिचत्वारिपंचभूतानिपंचशब्दाद्याः पंचज्ञानेंद्रियाणिपंचकर्मेंद्रियाणि प्राणादिपंचकस्येंद्रियेष्वेवांतर्भावाच्चतुर्विंशतिरेवेत्यर्थः २५ गुणस्यगुणसर्गस्य तत्त्वतस्तदुपासनयातत्तद्भा वापत्तिंप्राप्य ल्यब्लोपेपंचमी यावंतंयावंतंकालंतिष्ठतितत्तत्कालस्यसंख्यांनिबोधबुध्यस्व मेमत्तः २६ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे दशाधिकत्रिशततमोऽ ध्यायः ॥ ३१० ॥ मोक्षस्यानंत्यंवक्तुंकर्मोपास्तिफलस्यसर्वस्यसावधिकत्वमाह अव्यक्तस्येत्यादिना अव्यक्तस्योपासनयाऽव्यक्तभावंगतस्य १ ॥२११॥

रात्रिरेतावतीति अनयैवसंख्ययाशतायुर्वैपुरुषइतिश्रुतेरस्यशतंवर्षाण्यायुरितिज्ञेयं एवमुत्तरत्र अस्यैश्वर्यमाह सृजतीति ओषधिमन्नंतत्कार्यंमनः । अन्नमयंहिसोम्यमनइतिश्रुतेः । असतोऽधि मनोऽसृज्यतेतिश्रुतेश्चासच्छद्वितादव्यक्तान्महत्तत्त्वापरनामकंसूक्ष्मंमनोऽसृजदित्यर्थः २ मनःप्रजापतिमसृजतेतिश्रुतेरर्थमाह ततइति मनोद्वाराऽव्यक्तमेवप्रजापतिमसृजदितिश्रुत्यर्थोदर्शितः । एवमन्यास्वपिश्रुतिषुआकाशादीनांवाय्वादिसष्टृत्वोक्तिर्व्याख्येया । अंडंब्रह्मांडंवासनामयं सेतितच्छद्वेनांडमुच्यते ३ महामुनिर्महान् संदधेअनुसंधानंकृतवान् अव्यक्तस्याव्याकृतस्य येयंतदै क्षतबहुस्यांप्रजायेयेतिप्राणिकर्मानुरोधेनस्रष्टव्यब्रह्मांडालोचनात्मकस्यईक्षणस्यकर्त्रीचिदचिदात्मिकापारमेश्वरीशक्तिःसैवमहत्तत्त्वमितिप्रघट्टकार्थः ४ । ५ । ६ सृजतीति ऋषिर्महान् भूतंमहा

रात्रिरेतावतीचास्यप्रतिबुद्धोनराधिप ॥ सृजत्योषधिमेवाग्रेजीवनंसर्वदेहिनाम् २ ततोब्रह्माणमसृजद्धिरण्यांडसमुद्भवम् ॥ सामूर्तिःसर्वभूतानामित्येवमनुशुश्रुम ३ संवत्सरमुषित्वांऽडेनिष्क्रम्यचमहामुनिः ॥ संदधेसमहींकृत्स्नांदिवमूर्ध्वंप्रजापतिः ४ द्यावापृथिव्योरित्येषराजन्वेदेषुपठ्यते ॥ तयोःशकलयोर्मध्यमाकाशमकरो त्प्रभुः ५ एतस्यापिचसंख्यानंवेदवेदांगपारगैः ॥ दशकल्पसहस्राणिपादोनान्यहरुच्यते ६ रात्रिमेतावतींचास्यप्राहुरध्यात्मचिंतकाः ॥ सृजत्यहंकारमृषिर्भूतंदि व्यात्मकंतथा ७ चतुरश्चापरान्पुत्रान्देहात्पूर्वंमहानृषिः ॥ तेवैपितॄणांपितरःश्रूयंतेराजसत्तम ८ देवाःपितॄणांचसुतादेवैर्लोकाःसमावृताः ॥ चराचरानरश्रेष्ठइत्ये वमनुशुश्रुम ९ परमेष्ठीत्वहंकारःसृजन्भूतानिपंचधा ॥ पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् १० एतस्यापिनिशामाहुस्तृतीयामिहकुर्वतः ॥ पंचकल्पसहस्रा णितावदेवाहरुच्यते ११ शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ एतेविशेषाराजेंद्रमहाभूतेषुपंचसु १२ यैराविष्टानिभूतानिअहन्यहनिपार्थिव ॥ अन्योन्यंस्पृह यंत्येतेअन्योन्यस्यहितेरताः १३ अन्योन्यमतिवर्तंतेअन्योन्यस्पर्धिनस्तथा ॥ तेवध्यमानाह्यन्योन्यंगुणैर्हारिभिरव्ययैः १४ इहैवपरिवर्तंतेतिर्यग्योनिप्रवेशिनः ॥ त्रीणिकल्पसहस्राणिएतेषामहरुच्यते १५ रात्रिरेतावतीचैवमनसश्चनराधिप ॥ मनश्चरतिराजेंद्रचारितंसर्वमिंद्रियैः १६ नचेंद्रियाणिपश्यंतिमनएवात्रपश्यति ॥ चक्षुःपश्यतिरूपाणिमनसानतुचक्षुषा १७ मनसिव्याकुलेचक्षुःपश्यन्नपिनपश्यति ॥ तथेंद्रियाणिसर्वाणिपश्यंतीत्यभिचक्षते १८ नचेंद्रियाणिपश्यंतिमनए वात्रपश्यति ॥ मनस्युपरतेराजन्निंद्रियोपरमोभवेत् १९ तदिंद्रियेषूपरमोमनस्युपरमोभवेत् ॥ एवंमनःप्रधानानिइंद्रियाणिप्रभावयेत् २० इंद्रियाणांतुसर्वेषामी श्वरंमनउच्यते ॥ एतद्विशंतिभूतानिसर्वाणिहमहायशः २१ ॥ इतिश्रीम० शां० मोक्ष० याज्ञवल्क्यजनकसंवादे एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

भूतोपादानत्वात् ७ देहाद्भौतिकदेहोत्पत्तेःपूर्वंचतुरोभौतिकान्व्यष्टिमनोबुद्ध्यहंकारचित्ताख्यान्पुत्रान्महानृषिरसृजत् तेचत्वारःपुत्राःपितॄणांमहाभूतानामपिपितरइतिमनआदायएवभूतानांकल्पकाइ त्यर्थः ८ एवंदृष्टिसृष्टिमुक्त्वासृष्टिदृष्टिमाह देवाइति देवाइंद्रियाण्यंतःकरणचतुष्टयसहिताः पितॄणांमहाभूतानांसुताः देवैर्भूतैः लोकाश्चतुर्दशभुवनानिचराचराश्चतदंतर्गताभूतैरेवावृताः ९ एत देवविस्पष्टयति परमेष्ठीति चकाराद्भौतिकानिमनआदीनि १० अहंकारोपासकस्यापिकालमानमाहैतस्येति तृतीयमाहंकारिकंसर्गं ११ । १२ । १३ हारिभिर्हरणशीलैः गुणैःरूपादि भिः १४ त्रीणीति एतेषांविशेषोपासकानां १५ भूतादीनामुपास्तिर्मनआख्यान्महतउपासनान्नातिरिच्यतइत्याशयेनमनसःप्राधान्यंप्रतिपादयति मनश्चरतीत्यादिना १६ । १७ । १८ १९ । २० । २१ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥ ॥ ७ ॥ ॥ ७ ॥

विनाशिफलत्वेऽपिभोजनादिवत्तत्त्वानामुपास्तिरादर्त्तव्येत्याशंक्यतत्फलस्यांतेबीभत्सतांदर्शयितुंप्रलयमाह तत्त्वानामित्यादिना १ २ अहंकृतंनरमहंकाराभिमानिनंमहारुद्रं ३ सूर्यरूपीरुद्रएव
शतसूर्यसमोऽभूत् ४ । ५ । ६ । ७ जाज्वलतिअतिशयेनज्वलति ८ । ९ अष्टात्मकःयथाद्वादशात्मासूर्यएवमष्टात्मकोवायुःसर्वैःस्वरूपैर्युगपद्वातीत्यर्थः १० । ११ अहंकारःअहंकारंम
हानात्माग्रसतीत्यनुषजते १२ शंभुरीश्वरः तमेवविशिनष्टि अणिमेति सर्वसिद्धिरूपइत्यर्थः १३ सर्वतइत्यादिनाऐश्वर्यंज्ञेयरूपमुक्तं १४ हृदयंहृदयस्थायाबुद्धेःप्रवर्त्तकः पर्वणाएकदेशेनांगु
ष्ठमात्रकः बुद्ध्युपाधिवशादंगुष्ठपर्वमात्रइत्यर्थः । अंगुष्ठमात्रःपुरुषोंऽतरात्मेत्यादिश्रुतेः । विश्वंमहदंतं १५ महात्मनोऽपिनाशेसर्वंब्रह्मसमभवदाविर्भवति क्षयोऽपचयोव्ययोनाशोव्रणःपरिणाम

॥ याज्ञवल्क्यउवाच ॥ तत्त्वानांसर्वसंख्याचकालसंख्यातथैवच ॥ मयाप्रोक्ताऽनुपूर्व्येणसंहारमपिमेशृणु १ यथासंहरतेजंतून्ससर्जचपुनःपुनः ॥ अना
दिनिधनोब्रह्मानित्यश्चाक्षरएवच २ अहःक्षयमथोबुद्ध्वानिशिस्वप्नमनास्तथा ॥ चोदयामासभगवानव्यक्तोऽहंकृतंनरम् ३ ततःशतसहस्रांशुरव्यक्तेनाभिचो
दितः ॥ कृत्वाद्वादशधाऽऽत्मानमादित्योज्वलदग्निवत् ४ चतुर्विधंमहीपालनिर्दहत्याशुतेजसा ॥ जरायुजांडजस्वेदजोद्भिज्जंचनराधिप ५ एतदुन्मेषमात्रेण
विनष्टंस्थाणुजंगमम् ॥ कूर्मपृष्ठसमाभूमिर्भवत्यथसमंततः ६ जगद्दग्ध्वाऽमितबलःकेवलांजगतींततः ॥ अंभसाबलिनाक्षिप्रमापूरयतिसर्वशः ७ ततःकालाग्नि
मासाद्यतदंभोयातिसंक्षयम् ॥ विनष्टेंऽभसिराजेंद्रजाज्वलत्यनलोमहान् ८ तमप्रमेयोऽतिबलंज्वलमानंविभावसुम् ॥ ऊष्माणंसर्वभूतानांसप्तार्चिषमथांजसा ९ भ
क्षयामासभगवान्वायुरष्टात्मकोबली ॥ विचरन्नमितप्राणस्तिर्यगूर्ध्वमधस्तथा १० तमप्रतिबलंभीममाकाशंग्रसतेऽऽत्मना ॥ आकाशमप्यभिनदन्मनोग्रस
तिचाधिकम् ११ मनोग्रसतिभूतात्मासोऽहंकारःप्रजापतिः ॥ अहंकारोमहानात्माभूतभव्यभविष्यवित् १२ तमप्यनुपमात्मानंविश्वंशंभुःप्रजापतिः ॥ अणिमाल
घिमाप्राप्तिरीशानोज्योतिरव्ययः १३ सर्वतःपाणिपादांतःसर्वतोक्षिशिरोमुखः ॥ सर्वतःश्रुतिमाँल्लोकेसर्वमावृत्यातिष्ठति १४ हृदयंसर्वभूतानांपर्वणांगुष्ठमात्रकः ॥
अथग्रसत्यनंतोहिमहात्माविश्वमीश्वरः १५ ततःसमभवत्सर्वमक्षयाव्ययमव्रणम् ॥ भूतभव्यभविष्याणांस्रष्टारमनघंतथा १६ एषोऽप्ययस्तेराजेंद्रयथावत्समु
दाहृतः ॥ अध्यात्ममधिभूतंचअधिदैवंचश्रूयताम् १७ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादेद्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

स्तैःरहितं अनर्थमायादोषास्पर्शिनं १६ इमंचप्रलयंयोगिनोनित्यमनुभवंतीत्यहरहरनुष्ठेयइत्याशयेनाहाध्यात्ममिति अयंभावः । अथातोविभूतयोऽस्यपुरुषस्यवाचाह्यस्यपृथिवीचाग्निश्चेत्यादि
श्रुत्याऽध्यात्मिकवाग्वःसकाशादाधिभौतिकानांपृथिव्यादीनामाधिदैविकानामग्न्यादीनांचोत्पत्तिःश्रुता अतोवाचोनिग्रहेतत्कार्ययोःपृथिव्यग्न्योरपिप्रलयोभवतीतिसर्वकारणलयात्सर्वलयेसतिकेवलोऽद्वैतो
ऽवशिष्यते । ननुवागादेर्लयेऽपिव्यवहारानुच्छेदादग्न्यादिलयोनयुज्यतइतिचेत्भ्रांतोऽसि । येऽग्न्यादीन्पश्यंतितेषांवागादयोलीनाःसंतियस्यतुवागादयोलीनानासौवह्न्यादीन्पश्यतीति । नन्वेवंप्रप
ञ्चस्यरज्जूरगतुल्यतास्यात् योगिदृष्ट्यानाशेऽपीतरदृष्ट्यातदभावादितिचेत् इष्टापत्तिः । नहिनित्यसंनिहितंवस्तुबहूनामल्पदृशांमध्येकश्चिन्नपश्यतीतरेतुपश्यंतीतियुज्यते तस्माद्रज्जूरगस
मस्यास्यसंसारस्योच्छेदायतत्त्वज्ञानार्थंयत्नआस्थेयइति १७ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥



पादाविति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ एषेति आदौमध्येऽतेचेतिसृष्टिसमाधिप्रलयप्रपंचनेनैकाद्वितियस्यैवकृत्स्नंद्वैतंविभूतिःसर्पइवरज्ज्वामितिदर्शितमित्यर्थः
१४ प्रकृतिरविद्यासुप्तिप्रबोधवद्रात्रिदिनवदुन्मीलननिमीलनवद्गुणान्महदादीन्विकुरुतेविशेषेणाविष्कुरुते तेनप्रकरोतीतिप्रकृतिपदस्यव्युत्पत्तिर्दर्शिता । क्चित्कौचसंज्ञायामितिकृत्रःसंज्ञायां

॥ याज्ञवल्क्यउवाच ॥ पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ॥ गंतव्यमधिभूतंचविष्णुस्तत्राधिदैवतम् १ पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः ॥
विसर्गमधिभूतंचमित्रस्तत्राधिदैवतम् २ उपस्थोऽध्यात्ममित्याहुर्यथायोगप्रदर्शिनः ॥ अधिभूतंतथाऽऽनंदोदैवतंचप्रजापतिः ३ हस्तावध्यात्ममित्याहुर्यथासं
ख्यानदर्शिनः ॥ कर्तव्यमधिभूतंतुइंद्रस्तत्राधिदैवतम् ४ वागध्यात्ममितिप्राहुर्यथाश्रुतिनिदर्शिनः ॥ वक्तव्यमधिभूतंतुवह्निस्तत्राधिदैवतम् ५ चक्षुरध्यात्म
मित्याहुर्यथाश्रुतिनिदर्शिनः ॥ रूपमत्राधिभूतंतुसूर्यश्चाप्यधिदैवतम् ६ श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ शब्दस्तत्राधिभूतंतुदिशश्चात्राधिदैवतम्
७ जिह्वामध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ रसएवाधिभूतंतुआपस्तत्राधिदैवतम् ८ घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ गंधएवाधिभूतंतुपृथिवी
चाधिदैवतम् ९ त्वगध्यात्ममितिप्राहुस्तत्त्वबुद्धिविशारदाः ॥ स्पर्शमेवाधिभूतंतुपवनश्चाधिदैवतम् १० मनोऽध्यात्ममितिप्राहुर्यथाशास्त्रविशारदाः ॥ मंतव्य
मधिभूतंतुचंद्रमाश्चाधिदैवतम् ११ अहंकारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः ॥ अभिमानोऽधिभूतंतुबुद्धिश्चात्राधिदैवतम् १२ बुद्धिरध्यात्ममित्याहुर्यथावद
भिदर्शिनः ॥ बोद्धव्यमधिभूतंतुक्षेत्रज्ञश्चाधिदैवतम् १३ एषातेव्यक्तितोराजन्विभूतिरनुदर्शिता ॥ आदौमध्येतथांतेचयथातत्त्वेनतत्त्ववित् १४ प्रकृतिर्गुणा
न्विकुरुतेस्वच्छंदेनात्मकाम्यया ॥ क्रीडार्थंतुमहाराजशतशोऽथसहस्रशः १५ यथादीपसहस्राणिदीपान्मर्त्याःप्रकुर्वते ॥ प्रकृतिस्तथाविकुरुतेपुरुषस्यगुणान्ब
हून् १६ सत्वमानंदउद्रेकःप्रीतिःप्राकाश्यमेवच ॥ सुखंशुद्धित्वमारोग्यंसंतोषःश्रद्दधानता १७ अकार्पण्यमसंरंभःक्षमाधृतिरहिंसता ॥ समतासत्यमानृण्यंमार्द
वंह्रीरचापलम् १८ शौचमार्जवमाचारमलौल्यंहृद्यसंभ्रमः ॥ इष्टानिष्टवियोगानांकृतानामविकत्थना १९ दानेनचात्मग्रहणमस्पृहत्वंपरार्थता ॥ सर्वभूतदयाचै
वसत्वस्यैतेगुणाःस्मृताः २० रजोगुणानांसंघातोरूपमैश्वर्यविग्रहौ ॥ अत्यागित्वमकारुण्यंसुखदुःखोपसेवनम् २१ परापवादेषुरतिर्विवादानांचसेवनम् ॥ अ
हंकारमसत्कारश्चिंतावैरोपसेवनम् २२ परितापोऽभिहरणंह्रीनाशोऽनार्जवंतथा ॥ भेदःपरुषताचैवकामःक्रोधोमदस्तथा २३ दर्पोद्वेषोऽतिवादश्चएतेप्रोक्तारजो
गुणाः ॥ तामसानांतुसंघातंप्रवक्ष्याम्युपधार्यताम् २४ मोहोऽप्रकाशस्तामिस्रमंधतामिस्रसंज्ञितम् ॥ मरणंचांधतामिस्रंतामिस्रंक्रोधउच्यते २५ तमसोलक्ष
णानीहभक्षणाद्यभिरोचनम् ॥ भोजनानामपर्याप्तिस्तथाऽपेयेष्वतृप्तता २६ गंधवासोविहारेषुशयनेष्वासनेषुच ॥ दिवास्वप्नेऽतिवादेचप्रमादेषुचवैरतिः २७

क्चित् । स्वच्छंदेनोतिप्रेरकांतराभावउक्तः आत्मकाम्ययाक्रीडार्थंचेतिमोक्षभोगौतत्फलमुक्तं १५ दीपदृष्टांतेनक्रीडाविषयाणामानंत्यमुक्तं तेनपरिणामक्रमेणमोक्षफलमपियत्नंविनास्वयमेवभविष्यती
तिमत्याशानकार्येतिदर्शितं १६ गुणविकारानेवाह सत्वमित्यादिना सत्वंधैर्यं उद्रेकऐश्वर्यं शेषंस्पष्टार्थं १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ ॥इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीयेभारतभावदीपे त्रयोदशाधिकत्रिशततमोऽध्यायः ॥३१३ ॥ एतैर्गुणविकारैस्तत्प्रकाशकःपुरुषोऽनेकधाविक्रियतइवप्रकाशइवांगुल्याद्युपाधिभिराकाश इवकाहलकलशनलिकाद्युपाधिभिर्दीर्घवर्तुलदंडाद्याकारतामिवप्रतिपद्यते तद्वत्तत्तदाकारानुरूपाणिचोत्तममध्यमाधमानिस्थानानिप्राप्नोतीत्यत्रप्रतिपाद्यते एतेप्रधानस्यगुणाःइत्यादिना १ । २ । ३ । ४ । ५ ६ । ७ । ८ निरूपणतात्पर्यमाह पुण्येति ९ पुण्यादिवियोगेहेतुंज्ञानिनांमध्येसंभवमाह ज्ञानिनामिति तत्त्वज्ञसंगत्यातत्त्वंप्राप्यपुण्यपापविमुक्तोभवतीत्यर्थः अबीजंनिरविद्यं १० अव्यक्तस्थमव्यक्ते ऽमूर्तेब्रह्मणितिष्ठतीतितथाअव्यक्तद्वाराप्राप्यमित्यर्थः । किंमंजूषारत्नवन्नेत्याह सएषइति प्रकृतिःस्वरूपं नित्यंकूटस्थएवसउपचारात्प्रकृतिस्थइत्युच्यते घटाकाशेगतिरिवास्मिन्प्रकृतिस्थत्वमारोप्यते

नृत्यवादित्रगीतानामज्ञानाच्छ्रद्दधानता ॥ द्वेषोधर्मविशेषाणामेतेवैतामसागुणाः २८ ॥ इतिश्रीम०शांतिपर्वणि मोक्षधर्मपर्वणियाज्ञवल्क्यजनकसंवादेत्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥ ॥ याज्ञवल्क्यउवाच ॥ एतेप्रधानस्यगुणास्त्रयःपुरुषसत्तम ॥ कृत्स्नस्यचैवजगतस्तिष्ठंत्यनपगाःसदा १ अव्यक्तरूपोभगवान्शतधाचसहस्रधा ॥शतधासहस्रधाचैवतथाशतसहस्रधा २ कोटिशश्चकरोत्येषप्रत्यगात्मानमात्मना ॥ सात्विकस्योत्तमंस्थानंराजसस्येहमध्यमम् ३ तामसस्याधमंस्थानंप्राहुरध्यात्मचिंतकाः ॥ केवलेनेहपुण्येनगतिमूर्ध्वामवाप्नुयात् ४ पुण्यपापेनमानुष्यमधर्मेणाप्यधोगतिम् ॥ द्वंद्वमेषांत्रयाणांतुसन्निपातंच तद्वतः ५ सत्वस्यरजसश्चैवतमसश्चशृणुष्वमे ॥ सत्वस्यतुरजोदृष्टंरजसश्चतमस्तथा ६ तमसश्चतथासत्वंसत्वस्याव्यक्तमेवच ॥ अव्यक्तःसत्वसंयुक्तोदेवलोकमवाप्नुयात् ७ रजःसत्वसमायुक्तोमानुषेषुप्रपद्यते ॥ रजस्तमोभ्यांसंयुक्तस्तिर्यग्योनिषुजायते ८ राजसैस्तामसैःसत्वैर्युक्तोमानुषमाप्नुयात् ॥ पुण्यपापवियुक्तानां स्थानमाहुर्महात्मनाम् ९ शाश्वतंचाव्ययंचैवमक्षयंचामृतंचतत् ॥ ज्ञानिनांसंभवंश्रेष्ठंस्थानमव्रणमच्युतम् ॥ अतींद्रियमबीजंचजन्ममृत्युतमोनुदम् १० अव्यक्तस्थंपरंयत्तत्पृष्टस्तेऽहंनराधिप ॥ सएषप्रकृतिस्थोहितत्स्थइत्यभिधीयते ११ अचेतनाचैवमताप्रकृतिश्चापिपार्थिव ॥ एतेनाधिष्ठिताचैवसृजतेसंहरत्यपि १२ ॥ जनकउवाच ॥ अनादिनिधनावेतावुभावेवमहामते ॥ अमूर्तिमंतावचलावप्रकंप्यगुणागुणौ १३ अग्राह्यावृषिशार्दूलकथमेकोह्यचेतनः ॥ चेतनावांस्तथाचैकः क्षेत्रज्ञइतिभाषितः १४ त्वंहिविप्रेंद्रकात्स्न्र्येनमोक्षधर्ममुपाससे ॥ साकल्यंमोक्षधर्मस्यश्रोतुमिच्छामितत्त्वतः १५ अस्तित्वंकेवलत्वंचविनाभावंतथैवच ॥ दैवतानिचमेब्रूहिदेहंयान्याश्रितानिवै १६ तथैवोत्क्रामिणःस्थानंदेहिनोवैविपद्यतः ॥ कालेनयद्धिप्राप्नोतिस्थानंतत्प्रब्रवीहिमे १७

११ एतेनायस्कांतकल्पेनप्रकृतिर्लोहतुल्या १२ उभयोरपितुल्यवचेतनत्वंमन्वानःप्रकृतेरचेतनत्वमाक्षिपति अनादीत्यादिना अमूर्तत्वमदृश्यत्वं सत्त्वनित्यानुमेयेप्रधानेपुरुषेचतुल्यमतस्तयोरनादिनिधनत्वंततश्चाप्रकंप्यगुणागुणत्वंअगुणःसंगित्वादिर्दोषः गुणोऽसंगित्वादिः अप्रच्युतस्वभावावित्यर्थ १३ अग्राह्यत्वाचतयोर्वैलक्षण्यंननिश्चेतुंशक्यमित्याहाग्राह्याविति १४।१५ एवंपुंसश्चेतनत्वेऽप्यस्तित्वंकथं वह्न्यौष्ण्ययोरिवपुंप्रकृत्योर्युगपत्राशावश्यंभावात् । अस्तित्वेवाकेवलत्वंप्रकृत्याऽवियुक्तत्वंकथं पुंसोविभुत्वेनप्रकृतेरविनाशेनचतदसंभवात् । ननुतर्कमतेआत्ममनसोरिवपुंप्रकृत्योर्नित्ययोगेऽपिफलोपहितोविलक्षणःसंयोगोऽन्यःसचकदाचित्कइतितदभावान्मोक्षेपुंसःकेवलत्वंयुज्यतइत्याशंक्याह विनाभावमिति निरवयवेपुंस्यव्याप्यवर्तिनःसंयोगस्यैवासंभवात् अभ्युपगमेऽपितंत्वादिवत्प्रदेशभेदाभावेनतद्वैलक्षण्यस्य सुतरामसंभवाद्दृष्टांतेदार्ष्टांतिकेचतुल्यवत्संयोगासिद्धेर्दृश्यमानस्यसंयोगस्यमिथ्यात्वमंतरेणविनाभावोनसंभवति । मिथ्यात्वंचमत्पक्षादिप्रमाणविरुद्धमित्याशयः १६ उत्क्रामिणउत्क्रांतस्य विपद्यतोम्रियमाणस्य १७

अरिष्टानिमृत्युसूचकानि १८ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥ कथमेकोह्यचेतनइतिचेतनाचेतनविभागमाक्षिपतस्तयोभावपिकिंचेतनावचेतनौवासंमतौ । नांत्यः जगदांध्यप्रसंगात् । नाद्यः दृश्यमानस्यदृग्दृश्यविभागस्यदुरपह्नवत्वात् । अथयथामलयेचंदनाचंदनावपिचंदनावेवभवतएवमनादिसंयोगाचेतनाचेतनावपितौचेतनावेवभवतइतिब्रूषेतदपिन स्वभावस्यापरिहार्यत्वादित्याह नशक्यइति १ । २ स्वभावतोऽज्ञोप्यारोपितेनज्ञत्वेनोपयुंक्तेभुंक्ते तान्गुणान् ३ तर्हिमुख्योभोक्ताकिंपुरुषइत्याशंक्यनेत्याह अव्यक्तइति अव्यक्तोऽदृश्योदृगात्मानजानीतेनभुंक्तेच यतोमत्तआत्मनोऽन्यंभोग्यमर्थंनपश्यति अभिमन्यतइतिव्युत्थानाभिप्रायेणोक्तम् ४ अनेनभोक्तृत्वाभोक्तृत्ववैलक्षण्येनएतदव्यक्तंप्रधानं स्वभावतोऽचेतनमपितदन्यथाततोभोक्तुःसकाशादन्यथाविपरीतमभोक्तृत्वात् । कथंजडेभोक्तृत्वमतआह अक्षरत्वात्क्षरत्वाचेति क्षराक्षरात्मत्वाच्चिदचिदात्मकत्वात्तस्यभोक्तृत्वंनतुकाष्ठकुड्यवदचेतनांशमात्रस्येत्यर्थः । नित्यत्वाचभोग्यभोक्तृविभागस्यनकश्चिद्दोषइत्यर्थः ५ ननुजतुकाष्ठयोरिवतुल्यस्वभावयोःसंश्लेषोदृष्टोनतुकाष्ठाकाशयोरितिचिदचितोःसंबंधोदुर्निरूपइत्याशंक्याह

सांख्यज्ञानंचतत्त्वेनपृथग्योगंतथैवच ॥ अरिष्टानिचतत्त्वानिवक्तुमर्हसिसत्तम ॥ विदितंसर्वमेतत्तेपाणावामलकंयथा १८ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादे चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥ ॥ ॥ याज्ञवल्क्यउवाच ॥ ॥ नशक्योनिर्गुणस्तातगुणीकर्तुंविशांपते ॥ गुणवांश्चाऽप्यगुणवान्यथातत्त्वंनिबोधमे १ गुणैर्हिगुणवानेवनिर्गुणश्चागुणस्तथा ॥ प्राहुरेवंमहात्मानोमुनयस्तत्त्वदर्शिनः २ गुणस्वभावस्त्वव्यक्तोगुणान्नैवातिवर्तते ॥ उपयुंक्तेचतानेवसचैवाज्ञःस्वभावतः ३ अव्यक्तस्तुनजानीतेपुरुषोऽज्ञःस्वभावतः ॥ नमत्तःपरमोऽस्तीतिनित्यमेवाभिमन्यते ४ अनेनकारणेनैतदव्यक्तंस्यादचेतनम् ॥ नित्यत्वाच्चाक्षरत्वाच्चक्षरत्वान्नतदन्यथा ५ यदाऽज्ञानेनकुर्वीतगुणसर्गंपुनःपुनः ॥ यदाऽऽत्मानंनजानीतेतदाऽऽत्मापिनमुच्यते ६ कर्तृत्वाच्चापिसर्गाणांसर्गधर्मातथोच्यते ॥ कर्तृत्वाच्चापियोगानांयोगधर्मातथोच्यते ७ कर्तृत्वात्प्रकृतीनांचतथाप्रकृतिधर्मिता ८ कर्तृत्वाच्चापिबीजानांबीजधर्मातथोच्यते ॥ गुणानांप्रसवत्वाच्चप्रलयत्वात्तथैवच ९ उपेक्षत्वादनन्यत्वादभिमानाच्चकेवलम् ॥ मन्यंतेयतयःसिद्धाअध्यात्मज्ञागतज्वराः ॥ अनित्यंनित्यमव्यक्तंव्यक्तमेतद्धिशुश्रुम १०

यदेति अज्ञानेनेतिच्छेदः गुणसर्गंगुणसंसर्गं आद्योयदाशब्दोयस्मादर्थे यदितिपाठःस्वच्छः यस्मादाध्यासिकोऽयमज्ञानकृतआत्मनिगुणसंसर्गस्तस्माद्यावदात्मानमसंगंनजानातितावन्नमुच्यतेइत्यर्थः ६ अमुक्तिहेतुमाह कर्तृत्वादित्यादिना प्राकृतेनमहदादितत्त्वकर्तृत्वेनायमपिकर्तायतोभवत्यतोनमुच्यतइत्यर्थः ७ प्रकृतीनांप्रजानां ८ बीजानांस्थावराणां गुणानांकामशमादीनां ९ नन्वेवंविधस्यकथंकेवलत्वंस्यादतआह उपेक्षत्वादिति उपसमीपेस्थित्वाईक्षतेइत्युपेक्षःसाक्षी नहिसाक्ष्येणसाक्षीविक्रियतेघटेनालोकइवातःकेवलत्वमस्ययुज्यते यथोक्तम् । 'नर्तेस्याद्विक्रियादुःखीसाक्षिताकाऽविकारिणः ॥ धीविक्रियासहस्राणांसाक्ष्यतोऽहमविक्रियः' इति ननुसाक्षित्वमस्तुमावाप्रतिकूलवेदनीयंदुःखंत्वपरिहार्यमित्याशंक्याह अनन्यत्वादिति नास्त्यन्योऽस्मात्क्वियनन्यस्तस्वात् दुःखादेःस्वरूपेणाप्यसत्त्वान्नात्मनितत्संबंधःकदाचिदप्यस्तीत्यर्थः । कुतस्तर्हिदुःखभानमतआह अभिमानादिति यदाहिपुत्रमात्मीयंमन्यतेतदातद्दुःखेनदुःखीभवतिनान्यथा । एवंधीतादात्म्याद्धीदुःखेनैवास्यदुःखित्वंधीत्यागेतुकेवलत्वंनित्यसिद्धमित्येतेनअस्तित्वकेवलत्वाविनाभावानामाक्षेपःपरिहृतोज्ञेयः । अनित्यमिति अनित्यंपरिणामि अव्यक्तंकारणं व्यक्तंकार्यमिति १०

तत्रमतांतरमाह अव्यक्तस्यैकत्वं पुरुषाः पञ्चविंशप्रथमा पुरुषाणां नानात्वमित्याहुर्निरीश्वरसांख्याः तान्विशिनष्टि सर्वेत्यर्धेन ११ पुंप्रकृत्योर्भेदमनेकदृष्टांतपूर्वकमाह अन्यइत्यादिना अव्यक्तइति च्छेदः इषीकाणांबाह्योयथामुंजएवंपुंसोबाह्यअव्यक्ताद्याइत्यर्थः श्रुतिश्च । 'अंगुष्ठमात्रःपुरुषोंऽतरात्मासदाजनानांहृदयेसन्निविष्टः॥ तंस्वाच्छरीरात्प्रवृहेन्मुंजादिवइषीकांधैर्येणतंविद्याच्छुक्रममृतम्'इति १२ । १३ । १४ उखामृत्पात्रविशेषः १५ । १६ । १७ । १८ । १९ । २० ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नैलकंठीये भारतभावदीपे पंचदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥ ॥ ७ ॥ सांख्यज्ञानमिति १ एकेवचर्याशमाद्यनुष्ठानंययोस्तौ अनिधनौमृत्युनाशकौ २ पृथगिति उभाविविद्वितीयांतमनुकृष्यते ३ । ४ उत्क्रमणकालेदेहिनंरोदयंतीतिरुद्राःप्राणाइंद्रियाणिचतान्येवप्रधानभूता

अव्यक्तैकत्वमित्याहुर्नानात्वंपुरुषास्तथा ॥ सर्वभूतदयावंतःकेवलंज्ञानमास्थिताः ११ अन्यःसपुरुषोऽव्यक्तस्त्वध्रुवोध्रुवसंज्ञकः ॥ यथामुंजइषीकाणांतथैवैतद्धि जायते १२ अन्यच्चमशकंविद्यादन्यच्चोदुंबरंतथा ॥ नचोदुंबरसंयोगैर्मशकस्तत्रलिप्यते १३ अन्यएवतथामत्स्यस्तदन्यदुदकंस्मृतम् ॥ नचोदकस्यस्पर्शेन मत्स्योलिप्यतिसर्वशः १४ अन्योह्यग्निरुखाऽप्यन्यानित्यमेवमवेहिभोः ॥ नचोपलिप्यतेसोऽग्निरुखासंस्पर्शनेनवै १५ पुष्करंत्वन्यदेवात्रतथाऽन्यदुदकंस्मृ तम् ॥ नचोदकस्यस्पर्शेनलिप्यतेतत्रपुष्करम् १६ एतेषांसहवासंचनिवासंचैवनित्यशः ॥ याथातथ्येनपश्यंतिननित्यंप्राकृताजनाः १७ येत्वन्यथैवपश्यंति नसम्यक्तेषुदर्शनम् ॥ तेव्यक्तंनिरयंघोरंप्रविशंतिपुनःपुनः १८ सांख्यदर्शनमेतत्तेपरिसंख्यानमुत्तमम् ॥ एवंहिपरिसंख्यायसांख्याःकेवलतांगताः १९ ये त्वन्येतत्त्वकुशलास्तेषामेतन्निदर्शनम् ॥ अतःपरंप्रवक्ष्यामियोगानामनुदर्शनम् २० ॥ इतिश्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादे पंचदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥ ॥ ॥ याज्ञवल्क्यउवाच ॥ सांख्यज्ञानंमयाप्रोक्तंयोगज्ञानंनिबोधमे ॥ यथाश्रुतंयथादृष्टंतत्त्वेननृपस त्तम १ नास्तिसांख्यसमंज्ञानंनास्तियोगसमंबलम् ॥ तावुभावेकचर्यौतावुभावनिधनौस्मृतौ २ पृथक्पृथक्प्रपश्यंतियेऽप्यबुद्धिरतानराः ॥ वयंतुराजन्पश्या मएकमेवतुनिश्चयात् ३ यदेवयोगाःपश्यंतितत्सांख्यैरपिदृश्यते ॥ एकंसांख्यंचयोगंचयःपश्यतिसतत्त्ववित् ४ रुद्रप्रधानानपरान्विद्धियोगानरिंदम ॥ तेनैव चाथदेहेनविचरंतिदिशोदश ५ यावद्धिप्रलयस्तातसूक्ष्मेणाष्टगुणेनह ॥ योगेनलोकान्विचरन्सुखंसंन्यस्यचानघ ६ वेदेषुचाष्टगुणिनंयोगमाहुर्मनीषिणः ॥ सूक्ष्ममष्टगुणंप्राहुर्नेतरंनृपसत्तम ७ द्विगुणंयोगकृत्यंतुयोगानांप्राहुरुत्तमम् ॥ सगुणंनिर्गुणंचैवयथाशास्त्रनिदर्शनम् ८

न्यालंबनानियेपुतान् तथाचसूत्रम् । प्रच्छर्दनविधारणाभ्यांवाप्राणस्यविषयवतीवाप्रवृत्तिरुत्पन्नामनसःस्थितिनिबंधिनी । प्रच्छर्दनंरेचकः । विधारणंपूरकपूर्वकःकुंभकः । तथानासिकाग्रेधारयतोगं धसंवित् । जिह्वाग्रेरससंवित् । तालुनिरूपसंवित् । जिह्वामध्येस्पर्शसंवित् । जिह्वामूलेशब्दसंवित् । तत्रवायुधारणायाःफलंविचरंतिदिशोदशेत्युक्तंखेचरत्वंप्राप्नुवंतीत्यर्थः ५ अष्टगुणेनपुर्यष्टकमयेनसूक्ष्म शरीरेणसन्न्यस्यसंन्यासंचदेहस्यसुखंयथेच्छंकुरु । एतदपूर्वफलंमोक्षांतेपुयोगधर्मेषुश्रद्धोत्पादनार्थमुक्तंनतुयोगिनामवश्यादरणीयं ६ वेदेष्विति अष्टगुणिनमणिमाद्यष्टगुणवंतं नित्ययोगेमत्वर्थीयः अष्टगुणमष्टांगं प्राणायामःप्रत्याहारोध्यानंधारणातर्कःसमाधिःषडंगाइतिमैत्रायणीयोपनिषदिषडेवांगान्युक्तानितथापियमनियमाभ्यांश्रुत्यंतरोक्ताभ्यांसहाष्टसंख्याबोध्या । अत्रसूक्ष्ममित्युक्तेःपूर्वं स्यस्थूलत्वंमंदाधिकारित्वंचोक्तं । तर्कोयोगसिद्धिपपस्थितासुदोषोन्नयनं ७ द्विगुणंद्विप्रकारं तदेवाह सगुणंसबीजं निर्गुणंनिर्बीजं ८



सगुणमाह धारणमिति प्राणायामःप्राणनिग्रहपूर्वकंमनसःषोडशस्वाधारेषुधारणं तेचशिवयोगेप्रोक्ताः । 'अथतेषोडशाधारान्कथयामिविशेषतः'इत्यादिना पादांगुष्ठपार्ष्णिमूलप्रभृतयोनेत्राधारंषोडशोक्ता स्तैः । यद्वायाज्ञवल्क्योक्ताःप्रागुदाहृताअष्टादशस्थानात्स्थानंसमाकृष्येत्यादिनादर्शिताआधाराः । अथवायाज्ञवल्क्योक्ताएवपंचभूतधारणाज्ञेयाः । 'पादादिजानुपर्यंतंपृथिवीस्थानमुच्यते । आजा नोःपायुपर्यंतमपांस्थानंप्रकीर्तितं । आपायोर्हृदयांतंयद्वह्निस्थानंतदुच्यते । हृन्मध्यात्तुभ्रुवोर्मध्येयावद्वायुकुलंभवेत् । आभ्रूमध्यात्तुमूर्धांतमाकाशस्थानमुच्यते । पृथिव्यांधारयेद्ब्रह्माणंब्रह्माणंपरमेष्ठिनं । विष्णुमप्स्वनलेरुद्रमीश्वरंवायुमंडले । सदाशिवंतथाव्योम्निधारयेत्सुसमाहितः । पृथिव्यांवायुमास्थाप्यलकारेणसमन्वितं । ध्यायंश्चतुर्मुखाकारंब्रह्माणंसृष्टिकारणं । धारयेत्पंचघटिकाःपृथिवीजयमा प्नुयात् । वारुणेवायुमारोप्यवकारेणसमन्वितं । स्मरन्नारायणंदेवंचतुर्बाहुंशुचिस्मितं । शुद्धस्फटिकसंकाशंपीतवाससमच्युतं । धारयेत्पंचघटिकाःसर्वरोगैःप्रमुच्यते । वह्नावनिलमारोप्यरेफाक्षरसम न्वितं । त्र्यक्षंवरप्रदंरुद्रंतरुणादित्यसन्निभं । भस्मोद्धूलितसर्वांगंसुप्रसन्नमनुस्मरन् । धारयेद्घटिकाःपंचवह्निनाऽसौनदह्यते । मारुतंमरुतांस्थानेयकारेणसमन्वितं । धारयेत्पंचघटिकावायुवद्व्योमगोभ वेत् । आकाशेवायुमारोप्यहकारोपरिशंकरं । बिंदुरूपंमहादेवंसर्वलोकैककारणं । चिंतेनचिंतयेत्स्वस्थंमुहूर्तमपिधारयेत् । सएवयुक्तइत्युक्तस्तांत्रिकैश्चपिशिक्षितैः'इति । निर्गुणमाह एकाग्रतेति एकमेव ध्यातृध्येयध्यानविभागशून्यंवस्त्वग्रेयस्यतदेकाग्रंनिर्वृत्तिकं तस्यभावस्तत्ता मनसोबुद्धेः प्राणाइंद्रियाणिसमनस्कानितेषामायामोनिग्रहःप्राणायामः तथाचश्रुतिः 'यदापंचावतिष्ठंतेज्ञानानिमनसास ह । बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिं'इति ९ सगुणनिर्गुणयोरंगांगिभावमाहार्धेन प्राणायामोहीति । निर्गुणंनिर्वृत्तिकंधारयेत्स्थिरंकुर्यात् यदीति अदृश्यत्पद्दृश्यमानेमोचनस्थानेपदिवायुंमुंचन्भ

धारणंचैवमनसःप्राणायामश्चपार्थिव ॥ एकाग्रताचमनसःप्राणायामस्तथैवच ९ प्राणायामोहिसगुणो
निर्गुणंधारयेन्मनः ॥ यद्यदृश्यतिमुंचन्वैप्राणान्मैथिलसत्तम ॥ वाताधिक्यंभवत्येवतस्मात्तंनसमाचरेत्
१० निशायाःप्रथमेयामेचोदनाद्वादशस्मृताः ॥ मध्येस्वप्नात्परेयामेद्वादशैवतुचोदनाः ११

वतितर्हिवाताधिक्यंभवत्येव अयमर्थः । पूरकादीनांमूलाधारादीनांचदेवतादिकंध्यायन्योवायुधारणांकरोतिससिध्यति ध्यानवर्जितंत्वभ्यस्यन्नवश्यंबाध्यतइति यथोक्तंपवनयोगसंग्रहे । 'प्राणायामे नयुक्तेनसर्वरोगक्षयोभवेत् । अयुक्ताभ्यासयोगेनमहारोगसमुद्भवः'इति । युक्तेनदेवताध्यानयुक्तेन देवताश्चयाज्ञवल्क्योक्ताः 'नीलोत्पलदलश्यामंनाभिमध्येव्यवस्थितं । चतुर्भुजंमहात्मानंपूरकेणविचिं तयेत् । कुंभकेनहृदिस्थानंध्यायेत्तुकमलासनं । ब्रह्माणंरक्तगौरांगंचतुर्वक्त्रंपितामहं । रेचकेनेश्वरंविद्याल्ललाटस्थंमहेश्वरं । शुद्धस्फटिकसंकाशंनिर्मलंपापनाशनं'इत्यादिना १० निशायाइति द्वादशपू र्वोक्ताः द्वाविंशतिचोदनाएवात्रसंक्षेपेणद्वादशग्रंथांतरेगणिताः यथोक्तंशिवयोगे'मूलाधारेत्रिरावर्तंब्रह्मचक्रंभगोपमं । तत्कंदेऽग्निनिभेध्यायेदधःशक्तिमभीष्टदां १ स्वाधिष्ठानंततश्चक्रंतत्रचातुर्दलांबुजं । तदेवोड्डीयनंध्यायेत्पश्चिमाभिमुखंशिवं २ पंचावर्तंनाभिचक्रंमेघाकारंतडिन्निभं । तत्रकुंडलीनींध्यायेदधःशक्तिंसुसिद्धिदां ३ अधोमुखाष्टपत्राब्जयुक्तंहृच्चक्रमिष्टदं । तन्मध्यकर्णिकांध्यायेज्ज्योतिर्लिंगा कृतिंत्विमां ४ पंचमंकंठचक्रंतुतत्रांगुलचतुष्टयं । इडापिंगलयोर्ध्यायेत्सुषुम्नांमध्यसंस्थिताम् ५ षष्ठंचघंटिकालिंगमूलंतद्राजदंतकं । ध्यायेत्तुदशमंद्वारंतत्रशून्यंसुसिद्धये ६ भ्रूचक्रंसप्तमंत्वेकनालकंदंस्त्ववा क्प्रदं । ध्यायेद्दिव्यशिखाकारंपन्मध्येज्ञानलोचनं ८ ब्रह्मरंध्रेऽष्टमंचक्रंनिर्वाणाख्यंसुसूक्ष्मदं । तत्रजालंधरंध्यायेत्सूक्ष्मंमोक्षप्रदंततः ८ आकाशबीजंनवमंप्रशस्तंत्रिकूटकंपूर्णगिरेश्चपृष्ठे । तत्रोर्ध्वशक्तिं शुभदांसुशून्यांध्यायेचसाष्टारसरोजमध्ये' ९ आकाशबीजंहकारस्तत्स्मरणपूर्वकंशिरसउपरिभूताकाशमात्रंध्यायेत् एतानवचोदनावायुनिग्रहगर्भिताः । ततःशून्यात्परंसमधिकार्यंमनोधारयेत्ततःकारणे ततोनिष्कलेइतितिस्रएवंद्वादशचोदनाः पूर्वरात्रेआवर्त्यैकांनिद्रांगृहीत्वापश्चाद्धुनर्द्वादशएताएवाभ्यसेदित्यर्थः ११

एवंवायुधारणाद्युपायेनदुर्दांतंमनोनिगृह्यउपशांतेनदांतेनतत्त्वप्रतिपत्तियोग्येनएकांतशीलिनाएकाकिनासंग्यासितेत्यर्थः । आत्मन्येवनतुख्यादौआरमणंयस्यतेनात्मारामेण बुद्धेनशास्त्रतत्त्वविदा आत्मायोक्तव्यः संधिरार्षः १२ कथंयोक्तव्यइत्यतआह पंचानामिति दोषानप्राप्तस्पृहारूपान् प्राप्तमपिशब्दादिकंचाऽऽक्षिप्यनिरस्य एतेनप्रत्याहारउक्तः १३ प्रतिभांविक्षेपं अपवर्गंलयं प्रतिसंहारेयुक्तिमाह इंद्रियेति १४ बुद्धौमहत्तत्त्वे १५ परिसंख्यायप्रविलाप्यअलमत्यर्थंनित्यंनत्वाकाशादिवद्व्यावहारिकनित्यं १६ तस्थुषंतस्थिवांसंस्थाणुंकूटस्थमित्यर्थः नित्यमभेद्यं अज्ञानद शायांजीवेश्वरभावेनमाययाभिद्यमानमप्याकाशवदभेद्यं अव्ययमनश्वरंयतोऽव्ययंह्रासशून्यं १७ युक्तस्यसमाधिस्थस्य सुखंस्वपेदितिस्वसंवेद्यंलक्षणं १८ । १९ पाषाणइवेतिपरसंवेद्यं २० । २१

तदेवमुपशांतेनदांतेनैकांतशीलिना ॥ आत्मारामेणबुद्धेनयोक्तव्योऽऽत्मानसंशयः १२ पंचानामिंद्रियाणांतुदोषानाक्षिप्यपंचधा ॥ शब्दंरूपंतथास्पर्शंरसंगंधं तथैवच १३ प्रतिभामपवर्गंचप्रतिसंहृत्यमैथिल ॥ इंद्रियग्राममखिलंमनस्यभिनिवेश्यह १४ मनस्तथैवाहंकारेप्रतिष्ठाप्यनराधिप ॥ अहंकारंतथाबुद्धौबुद्धिं चप्रकृतावपि १५ एवंहिपरिसंख्यायततोध्यायंतिकेवलम् ॥ विरजस्कमलंनित्यमनंतंशुद्धमव्रणम् १६ तस्थुषंपुरुषंनित्यमभेद्यमजरामरम् ॥ शाश्वतंचाव्य यंचैवईशानंब्रह्मचाव्ययम् १७ युक्तस्यतुमहाराजलक्षणान्युपधारय ॥ लक्षणंतुप्रसादस्ययथातृप्तःसुखंस्वपेत् १८ निर्वातेतुयथादीपोज्वलेत्स्नेहसमन्वितः ॥ निश्चलोर्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः १९ पाषाणइवमेघोत्थैर्यथाबिंदुभिराहतः ॥ नालंचालयितुंशक्यस्तथायुक्तस्यलक्षणम् २० शंखदुंदुभिनिर्घोषैर्वि विधैर्गीतवादितैः ॥ क्रियमाणैर्नकंपेतयुक्तस्यैतन्निदर्शनम् २१ तैलपात्रंयथापूर्णंकराभ्यांगृह्यपुरुषः ॥ सोपानमारुहेद्भीतस्तर्ज्यमानोऽसिपाणिभिः २२ संयता त्माभयात्तेषांनपात्राद्बिंदुमुत्सृजेत् ॥ तथैवोत्तरमागम्यएकाग्रमनसस्तथा २३ स्थिरत्वादिंद्रियाणांतुनिश्चलत्वात्तथैवच ॥ एवंयुक्तस्यतुमुनेर्लक्षणान्युपलक्ष येत् २४ स्वयुक्तःपश्यतेब्रह्मयत्तत्परममव्ययम् ॥ महतस्तमसोमध्येस्थितंज्वलनसन्निभम् २५ एतेनकेवलंयातित्यक्त्वादेहमसाक्षिकम् ॥ कालेनमहतारा जन्श्रुतिरेषासनातनी २६ एतद्धियोगंयोगानांकिमन्यद्योगलक्षणम् ॥ विज्ञायतद्धिमन्यंतेकृतकृत्यामनीषिणः २७ ॥ इति श्रीमहाभारते शांतिपर्वणि मो क्षधर्मपर्वणि षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥ ॥ ७ ॥ ॥ याज्ञवल्क्यउवाच ॥ ॥ तथैवोत्क्रममाणंतुशृणुष्वावहितोनृप ॥ पद्भ्या मुत्क्रममाणस्यवैष्णवंस्थानमुच्यते १ जंघाभ्यांतुवसून्देवानाप्नुयादितिनःश्रुतम् ॥ जानुभ्यांचमहाभागान्साध्यान्देवानवाप्नुयात् २

युक्तस्यलक्षणान्युक्त्वायुंजानस्याह तैलेति उत्तरमुत्कृष्टतरं एकाग्रमनसः लक्षणमितिशेषः २२ । २३ स्थिरत्वाद्बहिर्मुखत्वनिवृत्तेः निश्चलत्वादंतरप्रकंप्यत्वात् २४ महतोमहत्तत्त्वस्यमध्येस्थि तंत्वंपदार्थं तमसोमध्येस्थितंतत्पदार्थंज्वलनसन्निभंचिन्मात्रंतदुभयनिष्कृष्टं २५ एतेनदर्शनेन केवलंमोक्षं देहत्यागात्प्राक्किंचिदज्ञानानुवृत्तिरस्तीतिभावः २६ योगं क्लीबत्वमार्षं वयंकृतकृत्याइ तिमन्यंतेमनीषिणः अनुभवसिद्धंयोगात्कैवल्यमित्यर्थः तथाचश्रुतिः । 'ऊर्ध्वमूलमवाक्शाखंवृक्षंयोवेदसंप्रति । नसजातुजनःश्रद्दध्यान्मृत्युर्मामारयादिति' २७ ॥ इति शांतिपर्वणि मोक्षधर्मप र्वणि नीलकंठीये भारतभावदीपे षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥ ॥ ७ ॥ कैवल्यप्राप्तिंराजयोगफलमुक्त्वाहठयोगफलमाह तथैवेत्यादिना अत्रयस्मिन्यस्मिन्नाधारेस मनस्कोवायुरामरणांतंम्रियतेतत्तदाधारदेवतालोकंतेनतेनैवाधारद्वारेणोत्क्रम्यगच्छतीतिप्रघट्टकतात्पर्यं १ । २



३ । ४ । ५ । ६ । मूर्ध्नासुषुम्नयानाड्याब्रह्मरंध्रेण एतत्क्रममुक्तिस्थानंनान्यत् तथाचश्रुतिः । 'शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेतिविष्वङ्ङन्या उत्क्र मणेभवंति'इति ७ मृत्युंसंनिहितंज्ञात्वाऽपिहितमाचरेदित्याशयेनाह अरिष्टानीति ८ । ९ । १० । ११ प्रकृतेर्विक्रियादातुःकार्पण्यंकृपणस्यदातृत्वमित्यादिः १२ कृष्णास्यश्यावच्छविर्धूसर तातच्छायापत्तिर्मरणचिन्हं छिद्रंछिद्रवंतं १३ शवगंधमितिसुरभिद्रव्येशवगंधग्रहइत्यर्थः १४ । १५ । १६ अरिष्टज्ञानफलमाह एतावंतीति १७ योगिनोमरणादन्यत्कर्तव्यंनास्तीत्याह प्रतीक्षमाणइति १८ मृत्युमपिनेच्छेच्चेदिमांवक्ष्यमाणांक्रियांस्थातुंकर्तुमिच्छेदित्याहाथेति पूर्वोक्तरीत्यापृथिव्यादिजयाद्गंधादिजयोभवतीतिपंचभूतजयान्मृत्युंजयतीत्यर्थः । तथाचश्रुतिः 'पृथ्व्या

पायुनोत्क्रममाणस्तुमैत्रंस्थानमवाप्नुयात् ॥ पृथिवींजघनेनाथऊरुभ्यांचप्रजापतिम् ३ पार्श्वाभ्यांमरुतोदेवान्नासाभ्यामिंद्रत्वमेवच ॥ बाहुभ्यामिंद्रमेवाहुरुरसा रुद्रमेवच ४ ग्रीवयातुमुनिश्रेष्ठंनरमाप्नोत्यनुत्तमम् ॥ विश्वेदेवान्मुखेनाथदिशःश्रोत्रेणचाप्नुयात् ५ घ्राणेनगंधवहंनंनेत्राभ्यामग्निमेवच ॥ भ्रूभ्यांचैवाश्विनौदे वौललाटेनपितॄनथ ६ ब्रह्माणमाप्नोतिविभुंमूर्ध्नादेवाग्रजंतथा ॥ एतान्युत्क्रमणस्थानान्युक्तानिमिथिलेश्वर ७ अरिष्टानिप्रवक्ष्यामिविहितानिमनीषिभिः ॥ संवत्सरवियोगस्यसंभवंतिशरीरिणः ८ योऽरुंधतींनपश्येतदृष्टपूर्वांकदाचन ॥ तथैवध्रुवमित्याहुःपूर्णेंदुंदीपमेवच ९ खंडाभासंदक्षिणतस्तेऽपिसंवत्सरायुषः ॥ परचक्षुषिचात्मानंयेनपश्यंतिपार्थिव १० आत्मच्छायाकृतीभूतंतेऽपिसंवत्सरायुषः ॥ अतिद्युतिरतिप्रज्ञाअप्रज्ञाचाद्युतिस्तथा ११ प्रकृतेर्विक्रियापत्तिःषण्मा सान्मृत्युलक्षणम् ॥ दैवतान्यवजानातिब्राह्मणैश्चविरुद्ध्यते १२ कृष्णश्यावच्छविच्छायःषण्मासान्मृत्युलक्षणम् ॥ ऊर्णनाभेर्यथाचक्रंछिद्रंसोमंप्रपश्यति १३ तथैवचसहस्रांशुंसप्तरात्रेणमृत्युभाक् ॥ शवगंधमुपाघ्रातिसुरभिंप्राप्ययोनरः १४ देवतायतनस्थस्तुसप्तरात्रेणमृत्युभाक् ॥ कर्णनासावनमनंदंतदृष्टिविरागि ता १५ संज्ञालोपोनिरूष्मत्वंसद्योमृत्युनिदर्शनम् ॥ अकस्माच्चस्रवेद्यस्यवाममक्षिनराधिप १६ मूर्धतश्चोत्पतेद्धूमःसद्योमृत्युनिदर्शनम् ॥ एतावंतित्वरिष्टानि विदित्वामानवोऽऽत्मवान् १७ निशिचाहनिचात्मानंयोजयेत्परमात्मनि ॥ प्रतीक्षमाणस्तत्कालंयत्कालंप्रेततांभवेत् १८ अथास्यनेष्टंमरणंस्थातुमिच्छेदि मांक्रियाम् ॥ सर्वगंधान्रसांश्चैवधारयीतनराधिप १९ ससांख्यधारणंचैवविदितात्मानरर्षभ ॥ जयेच्चमृत्युंयोगेनतत्परेणांतरात्मना २० गच्छेत्प्राप्याक्षयंकृत्स्न मजन्मशिवमव्ययम् ॥ शाश्वतंस्थानमचलंदुष्प्रापमकृतात्मभिः २१ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादे सप्तदशाधिक त्रिशततमोऽध्यायः ॥ ३१७ ॥ ॥ ७ ॥ ॥ याज्ञवल्क्यउवाच ॥ अव्यक्तस्थंपरंयत्तत्पृष्टस्तेऽहंनराधिप ॥ परंगुह्यमिमंप्रश्नंशृणुष्वावहितोनृप १

प्यतेजोनिलखेसमुत्थितेपंचात्मकेयोगगुणेप्रवृत्ते ॥ नतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरम्'इति १९ सांख्ययोगयोर्मुख्यंफलमाह ससांख्येति सांख्यंचधारणेतियोगउच्यते ताभ्यांसमुचिताभ्यांसहितंयथास्यात्तथाविदितात्मा मृत्युंसंसारं २० गच्छेदिति अक्षयमविनाशि अव्ययमपचयशून्यं अचलमपरिणामि प्रकृतेरन्यदित्यर्थः २१ ॥ इति शांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥ अचलत्वेनप्रकृतेरन्यत्वंब्रह्मणःप्रतिपादयितुमारभते अव्यक्तस्थमिति अत्राऽव्यक्तमव्याकृतंमायाशबलंहार्दाकाशइतिपर्या यास्त्रिगुणात्मकस्यकारणस्यब्रह्मणोवाचकाः । चक्रेनाभिरिवश्रितेतिमंत्रोपदर्शनात्तत्रविशिष्टेनिष्कृष्टंचक्रनाभिन्यायेनश्रितंवस्त्वव्यक्तस्थं किमव्यक्तंपरंब्रह्मतस्माच्चपरंतत्तुकिमितिपृष्टस्तेत्वयाहं १

निष्कलंब्रह्मविद्यायादौर्लभ्यंगोप्यत्वंदेवताप्रसादप्राप्यत्वंचदर्शयितुमाख्यायिकामाह यथाऽऽर्षेणेत्यादिना । आदित्यानीमानिशुक्लानियजूंषिवाजसनेयेनयाज्ञवल्क्येनाख्यायंतइतिश्रुतेरादित्यप्रसादात्
पंचदशशाखाद्रष्टुर्ममवचनमत्यंतंपथ्यंममापिगहनंचनिष्कलब्रह्मकथनमभूदित्याख्यायिकातात्पर्यं २ । ३ । ४ । ५ । ६ मेऽऽस्यंममाऽऽस्यं संधिरार्षः ७ । ८ शीतीभविष्यति त्वद्देहइतिशेषः ९
खिलंपरशाखीयंस्वशाखायामपेक्षावशात्पठ्यतेतत्खिलमित्युच्यते । यथाबह्वृचानांहिरण्यवर्णांहरिणीमितिश्रीसूक्तंसखिलंतत्सहितं सोत्तरंसोपनिषत्कं १० अपुनर्भावेमोक्षे ११ । १२ । १३ । १४

यथाऽऽर्षेणेहविधिनाचरताऽवनतेनह ॥ मयाऽऽदित्यादवाप्तानियजूंषिमिथिलाधिप २ महतातपसादेवस्तपिष्णुःसेवितोमया ॥ प्रीतेनचाहंविभुनासूर्येणोक्तस्त
दाऽनघ ३ वरंवृणीष्वविप्रर्षेयदिष्टंतेसुदुर्लभम् ॥ तत्तेदास्यामिप्रीतात्मामत्प्रसादोहिदुर्लभः ४ ततःप्रणम्यशिरसामयोक्तस्तपतांवरः ॥ यजूंषिनोपयुक्तानिक्षि
प्रमिच्छामिवेदितुम् ५ ततोमांभगवानाहवितरिष्यामितेद्विज ॥ सरस्वतीहवाग्भूताशरीरंतेप्रवेक्ष्यति ६ ततोमामाहभगवानास्यंस्वंविवृतंकुरु ॥ विवृतंचततो
मेऽऽस्यंप्रविष्टाचसरस्वती ७ ततोविदह्यमानोऽहंप्रविष्टोऽम्भस्तदानघ ॥ अविज्ञानादमर्षाच्चभास्करस्यमहात्मनः ८ ततोविदह्यमानंमामुवाचभगवान्रविः ॥
मुहूर्तंसह्यतांदाहस्ततःशीतीभविष्यति ९ शीतीभूतंचमांदृष्ट्वाभगवानाहभास्करः ॥ प्रतिष्ठास्यतितेवेदःसखिलःसोत्तरोद्विज १० कृत्स्नंशतपथंचैवप्रणेष्यसिद्वि
जर्षभ ॥ तस्यांतेचापुनर्भावेबुद्धिस्तवभविष्यति ११ प्राप्स्यसेचयदिष्टंतत्सांख्ययोगेप्सितंपदम् ॥ एतावदुक्त्वाभगवानस्तमेवाभ्यवर्तत १२ ततोऽनुव्याहृ
तंश्रुत्वागतेदेवेविभावसौ ॥ गृहमागत्यसंहृष्टोऽचिंतयंवैसरस्वतीम् १३ ततःप्रवृत्ताऽतिशुभास्वरव्यंजनभूषिता ॥ ओंकारमादितःकृत्वाममदेवीसरस्वती १४ त
तोऽहमर्घ्यंविधिवत्सरस्वत्यैन्यवेदयम् ॥ तपतांचवरिष्ठायनिषण्णस्तत्परायणः १५ ततःशतपथंकृत्स्नंसरहस्यंससंग्रहम् ॥ चक्रेसपरिशेषंचहर्षेणपरमेणह १६
कृत्वाचाध्ययनंतेषांशिष्याणांशतमुत्तमम् ॥ विप्रियार्थंसशिष्यस्यमातुलस्यमहात्मनः १७ ततःसशिष्येणमयासूर्येणेवगभस्तिभिः ॥ व्यस्तोयज्ञोमहाराजपितु
स्तवमहात्मनः १८ मिषतोदेवलस्यापिततोऽर्धंकृतवानहम् ॥ स्ववेददक्षिणायाऽर्थेविमर्देमातुलेनह १९ सुमंतुनाऽथपैलेनतथाजैमिनिनाचवै ॥ पित्रातेमुनिभि
श्चैवततोऽहमनुमानितः २० दशपंचचप्राप्तानियजूंष्यर्कान्मयाऽनघ ॥ तथैवरोमहर्षेणपुराणमवधारितम् २१ बीजमेतत्पुरस्कृत्यदेवींचैवसरस्वतीम् ॥ सूर्य
स्यचानुभावेनप्रवृत्तोऽहंनराधिप २२ कर्तुंशतपथंचेदमपूर्वंचकृतंमया ॥ यथाऽभिलषितंमार्गंतथातच्चोपपादितम् २३ शिष्याणामखिलंकृत्स्नमनुज्ञातंससंग्र
हम् ॥ सर्वेचशिष्याःशुचयोगताःपरमहर्षिताः २४ शाखाःपंचदशेमास्तुविद्याभास्करदेशिताः ॥ प्रतिष्ठाप्ययथाकामंवेद्यंतदनुचिंतयम् २५

१५ चक्रेकर्मकर्तरिप्रयोगः स्वयमेवाविरभूदित्यर्थः १६ मातुलस्यवैशंपायनस्य १७ । १८ मिषतइति देवलस्यमातुलपक्षीयस्यमिषतःपश्यतःपुरस्तात् अर्धेअर्धनिमित्तंमातुलादिभिःसहविमर्देसति
सर्वंविभज्यप्राप्यमितिनिर्बंधेसतिदेवलसंमत्याऽहंदक्षिणायाअर्धंकृतवान्स्वीकृतवानित्यर्थः । दक्षिणायाऽर्थेइतिसंधिरार्षः १९ । २० । २१ । २२ कर्तुंमकरोत्कर्तुं २३ । २४ । २५

ब्रह्मण्यंब्राह्मणजातेर्हितं २६ प्रष्टरिसत्यत्यंताभिनिवेशेनविचारेप्रवर्ततेइतिदर्शयतिविश्वावसुरित्यादिना २७ पंचविंशतिमिमिति श्रवणमनुईक्षायुक्त्याआलोचनमन्वीक्षामननंतत्प्रधानामान्वी
क्षिकीं चतुर्विंशत्प्रश्नाःश्रुत्यवष्टंभेनपंचविंशोयुक्त्यवष्टंभेनेत्यर्थः । अत्रकृत्स्नंशास्त्रंमायाशबलपरं निष्कलोनास्त्येवेतिपूर्वःपक्षः । सएवास्तिमायैवनास्तीतिसिद्धांतइत्याशयेनविश्वाविश्वमि
त्यादिःसंदर्भःप्रवर्तते । अत्रयद्यप्येकएवप्रश्नएकएवसिद्धांतस्तथापिविषयवाक्यानांप्रकारभेदात्प्रतिप्रकारंस्वपक्षस्थापनंपरपक्षदूषणंचेतिद्वौद्वौप्रश्नौज्ञेयौ । उत्तराणिचस्वपक्षसाधकानिपरपक्षदूष
णानीतिद्विप्रकाराणिचतुर्विंशतिरितिज्ञेयं विश्वाविश्वमिति आत्मेत्येवोपासीतइदंसर्वंयदयमात्मायएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवतीत्यव्याकृताख्यस्यकारणब्रह्मणआत्मत्वेनोपासनंविधायतस्यप्र
तिपत्तव्यंरूपमुपासनफलंचसार्वात्म्यमेवोक्तं । अतःसविशेषाद्वैतमेवतत्त्वंनहिसर्वस्मादन्यदसर्वंवस्त्वस्तीतिवक्तुंशक्यं वदतोव्याघातापत्तेरित्यर्थः । ननुसत्यंज्ञानमनंतंब्रह्मयोवेदनिहितंगुहायांपर
मेव्योमन्नितिपरमव्योमशब्दितेमायाशबलेसत्यादिशब्दितस्यनिष्कलस्यकुंडबदरन्यायेनसत्वमुक्तंकथंशुद्धंनास्तीत्युच्यतेइत्यतआह तथाऽश्वाश्वमिति यथाऽश्वातोऽन्योऽश्वोरेतःसिगस्त्येवंमायायां
स्वप्रतिबिंबस्यार्पयिताद्वितीयोऽस्तीतियद्युच्येततदपिन कोह्येवान्यात्कःप्राण्यात्यदेषआकाशआनंदोनस्यादित्याकाशानंदयोःसामानाधिकरण्यात्सैषाऽऽनंदस्यमीमांसाभवतीत्यादिनाकृत्स्नाया
उपनिषदआनंदमात्रेपर्यवसानंचानंदानंदिनोरभेदाद्वाशुक्रःपटइतिन्यायेनवाज्ञेयं । आनंदंब्रह्मणोविद्वानितिसंबंधदर्शनात् । अतआनंदादिगुणविशिष्टमेकमेवजगत्कारणंनतुवतोनिष्कृष्टंकुंडबदरवद
न्यद्ब्रह्मनिष्कलमस्तीतिभावः तथाचसर्वत्रैवंयोज्यं । विश्वैववर्ततेनत्वविश्वस्तथाऽश्वैवास्तिनत्वश्वइति । ननुमांडूक्येएषसर्वेश्वरइत्यादिनातृतीयमानंदमयंनिरूप्यनांतःप्रज्ञमित्यादिनाशिवमद्वै

किमत्रब्रह्मण्यमृतंकिंचवेद्यमनुत्तमम् ॥ चिंतयंस्तत्रचागत्यगंधर्वोमामपृच्छत २६ विश्वावसुस्ततोराजन्वेदांतज्ञानकोविदः ॥
चतुर्विंशांस्ततोऽपृच्छत्प्रश्नान्वेदस्यपार्थिव २७ पंचविंशतिमंप्रश्नंपप्रच्छान्वीक्षिकींतदा ॥ विश्वाविश्वंतथाऽश्वाश्वंमित्रंवरुणमेवच २८
ज्ञानंज्ञेयंतथाऽज्ञोज्ञःकस्तपाअतपास्तथा ॥ सूर्यादःसूर्यइतिचविद्याऽविद्येतथैवच २९

तंचतुर्थंमन्यंतेइतिपृथक्कृतयोर्भेदेनोपपादनंदृष्टं । नएषसर्वेश्वरइत्यादेरुत्तराम्वयित्वात् । तथाचविश्वतैजसप्राज्ञभेदेनत्रिविधंजीवमुक्त्वाचतुर्थंब्रह्मोपदिष्टमेषसर्वेश्वरइत्यादिनासविज्ञेयइत्यंतेनग्रंथेन ।
तथाचयथावृक्षात्मनेकत्वंपत्रपुष्पफलाद्यात्मनाचनानात्वमितिविशिष्टमेकमेवब्रह्म तथाचश्रुतिः । आपोवाइदꣳसर्वंविश्वाभूतानीत्युपक्रम्यभूर्भुवःसुवरापओमितिअबाख्यस्यजगत्कारणस्यओमर्थत्व
माह । नततोऽन्यद्दर्शयतीत्याहमित्रंवरुणंचेति वरुणशब्देनापःमित्रशब्देनसूर्यः ताभ्यांसगुणनिर्गुणेउच्येते तथाचवरुणएवास्तिनतुमित्रइति २८ ननुघटादालोकइवज्ञेयान्मायाशबलात्प्रकाश
रूपंज्ञानमन्यन्नतुतयोर्गुणगुणिभावोयुज्यतइत्याशंक्याह ज्ञानंज्ञेयमिति । सत्यंज्ञानमनंतंब्रह्मेतिपूर्वप्रक्रांतंब्रह्मभृगुणावरुणोऽधीहिभगवोब्रह्मेतिपृष्टोयतोवाइमानिभूतानिजायंतेइत्यादिनाब्रह्मलक्षण
मुक्त्वाऽऽहतद्विजिज्ञासस्वतद्ब्रह्मेतीतितस्यैवज्ञेयत्वमुक्तं अतोज्ञानवदेवब्रह्म प्रकाशमात्रस्यजगज्जन्मादिहेतुत्वायोगात् । तस्माज्ज्ञेयान्निष्कृष्टंनिष्कलंज्ञानंनास्तिकिंतुज्ञेयमेवास्ति । ननुएकधा
बहुधाचैवदृश्यतेजलचंद्रवदितिश्रुतेःप्रकाशस्यपृथक्त्वेतस्योपाधिमालिन्याजीवेष्वल्पत्वमुपाधेःस्वच्छत्वाचेश्वरेपूर्णत्वमित्यज्ञोजीवोज्ञईश्वरइतितयोर्विभागोयुज्यते । अन्यथाजीवेशयोस्तुल्यज्ञानता
स्यात्मृद्घटयोरिवतुल्यगंधतेत्याशंक्याह अज्ञोज्ञइति अज्ञत्वज्ञत्वेतयोःस्वाभाविकेएवनत्वौपाधिके प्रमाणाभावात् तस्मान्नकेवलःप्रकाशःपृथगस्ति ननुतदैक्षतबहुस्यांप्रजायेयेतिकल्पादावीश्वरोजी
वादृष्टानुरोधात्स्रष्टव्यंसर्वमीक्षतेऽतएवसर्वज्ञः । शुद्धस्तुयत्रनान्यत्पश्यतिनान्यच्छृणोतिसभूमायोवैभूमातत्सुखंअथयत्रान्यत्पश्यतितदल्पंअथयदल्पंतन्मर्त्यमितिचतयोर्भेदःश्रुतइत्याह कस्तपाइति
यएकोभूमानंदःसएवतपाःआलोचनकर्ताआकाशाख्यः तथाचश्रुतिःपद्मावर्कंतदेवसर्पदेवसंतदेवकमितिकखयोरभेदमुक्त्वोपसंहरतिप्राणंचहास्मैतदाकाशंचोचुरिति । तत्रप्रमाणस्यविजानाम्यहंप्राणो–

–ब्रह्मेतिवदतोपकोसलेनप्रागेवज्ञातत्वादाकाशाख्यकारणब्रह्ममात्रपरोऽयंवाक्यसंदर्भइत्यवसीयते । ननुसगुणब्रह्मपरेवोपकोसलविद्यातत्रतद्युक्तमेव । निर्गुणविद्याधिकारेतु अतपाःनिर्गुणः सूर्यादः सूतेविश्वमितिसूर्योमायावीतमप्तीतिसूर्यादःसएवसूर्योऽपिमायावेशादितितापनीयेश्रूयते । ईश्वरप्रासस्तुरीयइतिमाययाऽव्यविवेतिचेति । तस्मादस्तीश्वरात्पृथङ्निष्कलइत्याशंक्याह अतपाः सूर्यादःसूर्यइतिचेति एकस्मिन्निर्गुणेसगुणादत्वंसगुणत्वस्रष्टृत्वंचनयुज्यते विरोधात् । नहिकाष्ठादस्यवह्नेःकाष्ठोपादानत्वंघटते । कूर्मांगवन्निर्गुणात्सगुणस्याविर्भावतिरोभावावेवभवतइतिचेतस्यै वतर्हिसगुणत्वापत्तेः । श्रुतिस्तुसुषुप्तिसमाधिकालिकसुखप्रशंसामात्रपरेतिद्रष्टव्यं । ननुयत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिविद्यावस्थायांद्वैतदर्शनंनिषेधति । यत्रहिद्वैतमिवभवतितदि तरइतरंपश्यतीत्यविद्यावस्थायाद्वैतदर्शनमितिवदंतीकथमुपचारात्रेया । तस्मादस्तिसगुणात्सद्वयाद्द्वयमन्यत् । रज्जूरगवत्तुतत्रेश्वरस्योदयलयावितिनोक्तदोषइत्याशंक्याह विद्याविद्येइति उपा सनैवविद्यातदभावोऽविद्या । तत्रापिदिहमिवकृत्स्नंब्रह्मांडस्वरूपादनन्यत्वेनपश्यतीतिनोक्तश्रुतिविरोधइतिभावः २९ ननुज्ञातृज्ञानज्ञेयात्मकत्रिपुटीभानमविद्यातदभानंविद्येतिहि उदाहृतश्रुत्यो रर्थोनत्वदुक्तइत्याशंक्याह वेद्यावेद्यमिति वेद्यविषयाहिविद्यानावेद्यविषयाभवितुमर्हति । नचत्रिपुट्यभानेवेद्यविषयत्वमस्तिविद्यायाः वदतोव्याघातात् वेद्यंचब्रह्मैव'आत्मावाद्रष्टव्यःसोऽन्वेष्टव्यः सविजिज्ञासितव्यः'इत्यादिश्रुतिभ्यः । यथावेद्यंतद्ब्रह्म अतएवच्छांदोग्येसत्यकामःसत्यसंकल्पआत्मावेद्यत्वेनश्रूयते'यआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासःसत्य कामःसत्यसंकल्पःसोऽन्वेष्टव्यःसविजिज्ञासितव्योयस्तमात्मानमनुविद्यविजानातिससर्वांश्चलोकानाप्नोतिसर्वांश्चकामानिति' । अप्रियवेत्तैवभवतिविनाशमेवापीतोभवतीतिमूर्च्छामरणदृष्टांतेन सुषुप्तंचानिंदितं । त्रिपुट्याअभावान्निर्विकल्पकज्ञानान्मुक्तिरितिचेत्सर्वेऽपिसुषुप्तौताद्दशाःसंतीतिव्यर्थंसाधनं । सुषुप्तिसमाध्योर्भेदापादनंपरिभाषामात्रं । अनुभूयमानस्यत्रिपुट्यभावस्योभयत्रतुल्यत्वा दतोवेद्यमेवब्रह्मनत्ववेद्यं ननुवेद्यंचेद्ब्रह्मैवनभवतिघटादिवदनात्मत्वाज्जडत्वाच्च आत्माहिब्रह्मज्ञानमात्ररूपश्च'अयमात्माब्रह्मसत्यंज्ञानमनंतंब्रह्म'इत्यादिश्रुतिशतेभ्यःअतःस्वाभाविकानांदेहादिधर्माणां

वेद्यावेद्यंतथाराजन्नचलंचलमेवच ॥ अपूर्वमक्षयंक्षय्यमेतत्प्रश्नमनुत्तमम् ३०

स्थूलत्वादीनांयोगजधर्माणामणुत्वादीनांचव्यभिचारिणांव्युदासेनाऽस्थूलमनण्वित्यादिवाक्येभ्यःसर्वदृश्यधर्मशून्यमक्षरंप्रत्यक्त्वंप्रतिपत्तव्यमित्याशंक्याह अचलंचलमिति द्विविधंहिब्रह्मणिधर्मजातं श्रूयतेऽचलंचलंच । तत्रापहतपाप्मत्वादिसत्यसंकल्पत्वांतमचलं । अणुत्वस्थूलत्वादिकंयत्प्रसादायोगिनामपिवर्ततेतदस्यानित्यमिति । नहिसत्यसंकल्पोप्यणुःस्यामितिध्यायन्स्थूलत्वेनरो द्धुंशक्योनापिस्थूलःस्यामितिध्यायन्नणुत्वेन नहियुगपत्तद्द्वयंसंभवतिपरस्परविरोधात् । तस्माद्यथाच्छायापरिणाहादयोवृक्षधर्माएवंसुरभित्वमधुरत्वकषायत्वादयःपरंपरयावृक्षगताअपिपुष्पफ लशलाटनामेवधर्मानतुवृक्षस्यअव्याप्यवृत्तित्वात्तेषां तथासत्यसंकल्पादयोऽचलाब्रह्मधर्माःस्थूलत्वादयस्तुतेनसमरसीभूतस्यप्रज्ञत्यंशजातस्याऽतस्तन्निषेधोब्रह्मणियुज्यतएव । वृक्षेसौरभादेरिव स्वाश्रयतादात्म्येनतत्रतत्प्रसक्तेरित्यर्थः । किंचाऽऽत्मैवचेद्ब्रह्मतर्हिज्ञात्वस्यवैयर्थ्यंनित्यापरोक्षत्वात्तस्यतद्गुणानामपिज्ञानैश्वर्यादीनांसर्वदैवभानापत्तेश्च । नहिमणिबुद्ध्याऽपिस्पृष्टःस्फुलिंगोनदहती त्यस्त्यतोदेहबुद्ध्यागृहीतोऽपिस्वाभाविकंधर्मंप्रकाशयेदेवतस्मादयमात्माब्रह्मेतिममात्माभद्रसेनइतिवदुपासनार्थमौपचारिकोऽभेदइत्याशयेनाह अपूर्वमिति उपास्तेःप्रागविज्ञातं उपास्त्यातुकीटभृंग न्यायेनप्राप्तुंशक्यमित्यर्थः । ननूपास्त्यासाध्यस्यमोक्षस्यकथंनित्यतास्यात् नित्यश्चमोक्षः क्रियासाध्यस्यानित्यत्वंचसर्वसिद्धमित्याशंक्याह अक्षयंक्षय्यमिति क्षययोग्यमपिनचपुनरावर्ततइतिशास्त्र बलादक्षयमेव । नहिशास्त्रीयेऽर्थेयुक्तिःसंक्रमतेयेनक्रियासाध्यत्वादनित्यत्वंमोक्षस्यानुमीयेत । नहिभस्मीभूतेभ्यःसोमाज्यपयःप्रभृतिभ्यःस्वर्गोत्पत्तौशास्त्रादतेकिंचिन्मानमस्ति । तस्मा देतत्प्रश्नजातंश्रुत्युपलब्धमनुत्तमंयुक्तिमत्तरं । नह्यात्यंतिकंकैवल्यंपाषाणकल्पंनैरात्म्यवादादनतिरिच्यमानंपुरुषार्थोभवत्यपित्वात्यंतिकंसत्यसंकल्पत्वादिकमेव । लोकेऽपिनहिकश्चित्सुषुप्तिंपुरुषार्थ त्वेनेप्सत्यपितुस्त्र्यादिभोगमेव । तत्सामान्याद्देहेऽपिपुरुषार्थभूतस्यार्थस्यनिर्णयःकर्तव्यः । तस्मादव्यक्तमेवमुख्यंब्रह्मनतुततोऽन्यन्निष्कलंनामशून्यकल्पंकिंचिदस्तीतिसिद्धं ३०



अथान्वीक्षिक्यासहितायाश्चतुर्विंशतिप्रश्न्याःश्रवणानंतरं ३१ । ३२ घृतमिवेतिप्रश्नानांश्रुतिसारत्वेनगहनत्वमुक्तं ३३ परिशेषंश्रुतेर्वाक्यशेषभूतंतर्कं मथ्नामिश्रुतिमुपक्रमोपसंहारैकरूप्या दिनातात्पर्यलिंगषट्केनपरिभावयामि युक्तिमपिसाधकबाधकतर्कबलेनालोडयामि । पराम्आन्वीक्षिकींश्रुतिदर्शितांयुक्तिं ३४ चतुर्थींत्रयींवार्तादंडनीतिंचापेक्ष्य सांपरायिकीमोक्षायहिता हेराजशार्दूलहेजनक उदीरितातुभ्यं साविश्वावसुनिकटेऽप्युक्तेत्यर्थः । गतग्रंथेनपंचविंशात्पंचविंशःशारीरस्थमधिकृत्यस्थिता ३५ उक्तप्रश्नानामुत्तराणिवक्तुमुपोद्घातयति अथेति ३६ विश्वेति अव्यक्तमितिच्छेदः भूतभव्यरूपंयद्द्वयंसंसारस्तत्करोतीतिविभूतभव्यभयंकरं ३७ अविश्वोनिष्कलस्तथेतिगौडपाठःप्रामाणिकः । आत्मेत्येवोपासीतेत्यत्रोक्तस्योपास्यस्यात्मनस्तदेतत्प्रेयःपुत्रात्प्रे योवित्तात्प्रेयोऽन्यस्मात्सर्वस्मादंतरतरंयदयमात्मेतिसर्वांतरत्वमयमितिप्रत्यगनन्यत्वंचोक्तं । तदन्यस्यचविश्वस्यसयोऽन्यमात्मनःप्रियंब्रुवाणंब्रूयात्प्रियंरोत्स्यतीतिशोकहेतुत्वमुक्तं । अतःपौर्वा पर्यपर्यालोचनादुःखदाविश्वातदन्योविश्वोनिष्कलआत्मेतिसिद्धं । इदंसर्वंयदयमात्मेतिबाधायांसामानाधिकरण्यंयोऽयंस्थाणुःसपुमानितिवत् । आत्मविदःसार्वात्म्योक्तिरपिबाधकालीनानुभवानुसं धानमात्रमितिज्ञेयं । यदुक्तंयदेवआकाशआनंदोनस्यादित्याकाशानंदयोःसामानाधिकरण्याद्गुणगुणिभावेनाभेदइतितत्राह अश्वश्चेति मिथुनमश्वाऽश्वश्चेतिद्वयमित्यर्थः ३८ अव्यक्तंस्त्रीरूपांप्रकृतिं पुरुषंपुंरूपंरेतःसिचं यस्यप्रतिबिंबंप्राप्यप्रकृतिःसर्वंकरोतिसबिंबभूतोऽन्योनिष्कलइत्यर्थः । श्रुत्यर्थस्तु आकाशेइतिसप्तमी तेनयदिकारणेआनंदोनस्यात्तर्हिकार्येसुतरांनस्यादित्याधाराधेय

अथोक्तश्चमहाराजराजागंधर्वसत्तमः ॥ पृष्टवाननुपूर्वेणप्रश्नमर्थविदुत्तमम् ३१ मुहूर्तंमृष्यतांतावद्यावदेवंविचिंतये ॥ बाढमित्येवकृत्वाचतूष्णींगंधर्वआस्थितः ३२ ततोऽनुचिंतयमहंभूयोदेवींसरस्वतीम् ॥ मनसासचमेप्रश्नोदध्नोघृतमिवोद्धृतम् ३३ तत्रोपनिषदंचैवपरिशेषंचपार्थिव ॥ मथ्नामिमनसातातदृष्ट्वा चान्वीक्षिकींपराम् ३४ चतुर्थीराजशार्दूलविद्यैषासांपरायिकी ॥ उदीरितामयातुभ्यंपंचविंशादधिष्ठिता ३५ अथोक्तस्तुमयाराजन्राजाविश्वावसुस्तदा ॥ श्रूयतांयद्भवानस्मान्प्रश्नंसंपृष्टवानिह ३६ विश्वाविश्वेतियदिदंगंधर्वेंद्रानुपृच्छसि ॥ विश्वाऽव्यक्तंपरंविद्याद्भूतभव्यभयंकरम् ३७ त्रिगुणंगुणकर्तृत्वाद्विश्वान्यो निष्कलस्तथा ॥ अश्वश्चाश्वाचमिथुनमेवमेवानुदृश्यते ३८ अव्यक्तंप्रकृतिंप्राहुःपुरुषेतिचनिर्गुणम् ॥ तथैवमित्रंपुरुषंवरुणंप्रकृतिंतथा ३९ ज्ञानंतुप्रकृतिं प्राहुर्ज्ञेयंनिष्कलमेवच ॥ अज्ञश्चज्ञश्चपुरुषस्तस्मान्निष्कलउच्यते ४० कस्तपाअतपाःप्रोक्तःकोऽसौपुरुषउच्यते ॥ तपास्तुप्रकृतिंप्राहुरतपानिष्कलःस्मृतः ४१

भावश्चकारणानंदयोःसर्वत्रश्रूयतइतिनगुणगुणिभावेनतयोःसंबंधः । आनंदंब्रह्मणोविद्वानितिषष्ठ्यपिराहोःशिरइतिवदौपचारकीवाबोध्या ब्रह्मणइतिपदंब्रह्मवित्परंवाकर्तव्यंयच्चूक्तं । आपो वाइदंसर्वमित्यादिश्रुतेर्वरुणएवास्तिनमित्रः । मांडूक्योक्तंसर्वेश्वरत्वादिकमपितुरीयान्वय्येवेतितत्राह तथैवेति उदाहृताश्रुतिःकारणमात्रपरानतुशुद्धंनिषेधतीतिनतथामांडूक्यश्रुतंसर्वेश्वरत्वादिकंतृती यमानंदमयंप्रकृत्यश्रूयमाणंचतुर्थेनिष्कलपरतयानेतुंशक्यमतोऽस्तिवरुणादन्योमित्रइत्यर्थः ३९ यत्तूक्तंप्रकाशमात्रस्यजगज्जन्मादिहेतुत्वंनसंभवतीतिज्ञानवदेवब्रह्मेतितत्राह ज्ञानंतुप्रकृतिमिति यत्तावद्दृशंजगज्जन्माद्युपयोगिज्ञानंतन्मायावृत्तिरूपत्वात्प्रकृतिरेव । सत्त्वधर्मोहिज्ञानमितिसांख्यप्रसिद्धिः । यत्तुतेनज्ञानेनप्रमाणवृत्तिरूपेणजन्यंतेतत्प्रमाणफलभूतंप्रमारूपंज्ञानंवेदांतेषुज्ञेयमि त्युच्यते यथोक्तं । 'परागर्थप्रमेयेषुयाफलत्वेनसंमता । संवित्सैवेहमेयोऽर्थोवेदांतोक्तिप्रमाणतः'इति । तच्चज्ञेयस्वरूपंज्ञानंनिष्कलंसत्यंज्ञानमित्यादिश्रुतिविषयइत्यर्थः । यत्तुज्ञत्वाज्ञत्वेईशजीवयोः स्वाभाविकेतन्निरस्यति अज्ञेति ज्ञाज्ञौनिष्कलमेवब्रह्मेत्यर्थः । कार्योपाधिरयंजीवःकारणोपाधिरीश्वरःइतिब्रह्मण्यौपाधिकोजीवेशभावोश्रूयेतेतेनोपाध्यपगमेतावुभावपिनिष्कलमेवब्रह्मेतिभावः ४० य च्चानंदाकाशयोरभेदबोधकंवाक्यमुदाहृतंपद्धावृत्तंवेवखमितितत्प्रकरणिनःसगुणस्यस्तुतिमात्रमित्याशयेनाह कइति कआनंदः तपाःअव्यक्तं तौचक्रमेणपुंप्रकृतीइत्यर्थः यच्चूक्तं अतपाःसूर्यादःसूर्यइति–

–कूर्मांगवन्निर्गुणात्सगुणस्याविर्भावतिरोभावाविति चेन्निर्गुणस्यापि सगुणत्वापत्तिरिति तत्राह अतएवानिष्कलइति निष्कलस्यरज्जूरगवत्सगुणलयोदयाधिष्ठानत्वमतोननिष्कलत्वव्याघातइत्यर्थः ४१ ननु निष्कलस्यवेद्यत्वंनयुज्यतेत्रिपुट्याअभानादित्युक्तमतआह तथैवेति यदज्ञानंपुरुषार्थप्रतिबंधकंतदवेद्यं । 'यदाचर्मवदाकाशंवेष्टयिष्यंतिमानवाः । तदादेवमविज्ञायदुःखस्यांतोभविष्यति' इतिश्रुत्याआत्मज्ञानस्यतथात्वादात्मैववेद्यः प्रधानंतुपरिशेषादवेद्यमेव । तद्वेदनंचमनोनाशादेवेति नतत्रत्रिपुटीभानप्रसक्तिरस्ति तथाचश्रुतिः । 'तावन्मनोनिरोद्धव्यंहृदियावत्क्षयंगतं । एतज्ज्ञानंचध्यानंचशेषोऽन्योग्रंथविस्तरः' इति । अन्यथाघटादिवदनात्मत्वंजडत्वंस्थौल्यादिमत्त्वंचब्रह्मणःस्यात् । तथाच'अयमात्माब्रह्म विज्ञानमानंदंब्रह्म अस्थूलमनणु'इत्यादिश्रुतिविरोधः । नत्वसतिबाधकेतासामौपचारिकत्वंकुयुक्तं यद्वा । अयमात्मेत्युपास्त्यर्थंगौणंसामानाधिकरण्यं । छांदोग्येसगुणस्यैववेद्यत्वलक्षणोपास्यत्वश्रवणात् । विदेरुपास्त्यर्थत्वस्यापियोवायुंदिशांवत्संवेदेत्यादौसर्वत्रप्रसिद्धेश्चेत्याशंक्याह तथैवेति यदावृतंतद्वेद्यं आवरणंचसत्येनमलेनदर्पणादेर्दृष्टमसत्येनोरगेणरज्ज्वादेश्च । पक्षद्वयेऽपिप्रत्यगात्मैववेद्योनत्वनात्मातटस्थईश्वरोजडत्वापत्तेरितिनात्मब्रह्मणोरभेदोगौणः । अथागौणोऽप्यभेदउपास्तिसाध्यइत्यपिन छांदोग्येएवसोऽन्वेष्टव्यइत्यात्मन्यन्वेषणविध्याक्षिप्तस्यावरणस्यानुवादेनैतंब्रह्मलोकंनविंदत्यनृतेनहिप्रत्यूढाइत्यनृतत्वविधानात् । ब्रह्माभिन्नंलोकंब्रह्मलोकमात्मानं अतोनृताज्ञानमात्रापनोदेनब्रह्मवेद्यमेवनतूपास्यं अव्यक्तंत्ववेद्यं तुच्छत्वात् ४२ यत्तूक्तंवृक्षदृष्टांतेनज्ञानैश्वर्यादीनांसत्त्वंस्थूलत्वादीनांनिषेधश्चाविशिष्टेब्रह्मणियुज्यतइतितत्राह चलामिति चलाप्रकृतिरचलःपुरुषइतितयोःपरिणामित्वकूटस्थत्वादिकृतविशेषात्पारमार्थिकतादात्म्यायोगेनब्रह्मणिप्राकृतानांज्ञानैश्वर्यस्थौल्यादीनामाध्यासिकतादात्म्येनप्रसक्तानांमुख्यवृत्त्यैवनिषेधोयुज्यतइतिभावः । प्र

तथैवावेद्यमव्यक्तंवेद्यःपुरुषउच्यते ॥ चलाचलमितिप्रोक्तंत्वयातदपिमेशृणु ४२ चलांतुप्रकृतिंप्राहुःकारणंक्षयसर्गयोः ॥ आक्षेपसर्गयोःकर्तानिश्चलःपुरुषःस्मृतः ४३ तथैववेद्यमव्यक्तमवेद्यःपुरुषस्तथा ॥ अज्ञावुभौध्रुवौचैवअक्षयौचाप्युभावपि ४४ अजौनित्यावुभौप्राहुरध्यात्मगतिनिश्चयात् ४५

कृतिर्विक्रियमाणाजगल्लयोदयकर्त्री पुरुषस्त्वविक्रियमाणएवतत्कर्तेतिश्लोकार्थः ४३ यद्यपिशास्त्रतोऽवेद्यमव्यक्तंवेद्यःपुरुषइत्युक्तंतथाऽपिवस्तुस्वभावतोवेद्यमव्यक्तंदृश्यत्वात् । अवेद्यःपुरुषोऽदृश्यत्वादितितत्त्वमाह तथैवेति यत्त्वात्माचेद्ब्रह्मतर्हितस्यनित्यापरोक्षतयातज्ज्ञानफलंसार्वज्ञ्यंसर्वस्यैवस्यादितितत्राह अज्ञाविति यथाप्रकृतिर्जडत्वात्स्वात्मानंनजानात्येवंनिष्कलात्माऽपिस्वात्मनिवृत्तिविरोधात्स्वात्मानंनजानात्यतउभावप्यज्ञौ । आत्मनोनित्यापरोक्षत्ववादास्तूदासीनबोधरूपतयानतुवृत्तिविषयतया । योहिसोपाधीजीवेशौज्ञातृज्ञेयौतावधिकृत्यजीवस्यात्मज्ञानंतज्ज्ञानात्सार्वज्ञ्यमितिचोच्यते । निष्कलज्ञानस्यतुसार्वज्ञ्यफलकत्वंयोवेदनिहितंगुहायांपरमेव्योमन् सोऽश्नुतेसर्वान्कामान्सहेतिश्रूयमाणंनांतरीयकमितिज्ञेयं ईशज्ञानस्यचंद्रशाखान्यायेनतत्रोपलक्षणत्वात् । तस्मादुपलक्षणस्येश्वरस्याज्ञानादज्ञातंब्रह्मेतिनापूर्वत्वव्याहतिस्तज्ज्ञानस्येतिभावः । ध्रुवावनादी अक्षयौपरिणामिनित्यत्वाद्व्यवहारापेक्षयाप्रकृतिरपिनित्यापुरुषस्त्वसाध्यत्वादेवनित्यइति ४४ यत्तुसाध्योऽपिमोक्षःशास्त्रबलान्नित्योभवतीतितत्राह अजौनित्याविति द्वित्वमविवक्षितं । 'तद्यथेहकर्मचितोलोकःक्षीयतएवमेवामुत्रपुण्यचितोलोकःक्षीयते' इतिश्रुत्यायत्कृतकंतदनित्यमितितर्कोपगृहीतयाकर्मफलंनिंदित्वातद्यइहात्मानमनुविद्यव्रजंत्येतांश्चसत्यान्कामांस्तेषांसर्वेषुलोकेषुकामचारोभवतीतिविधीयमानमात्मज्ञानमुपासनारूपंचेत्तस्यकर्मांतःपातित्वाद्व्यर्थैवकर्मनिंदा अकर्मरूपस्यान्यस्यततउत्कृष्टविधेयस्याभावात् । यद्येतदपिवाक्यमुपासनापरमित्याग्रहस्तदाऽथयएषसंप्रसादोऽस्माच्छरीरात्समुत्थायपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतएषआत्मेतदमृतमभयमेतद्ब्रह्मेतिवाक्यमात्मविद्यापरंद्रष्टव्यं संप्रसादःसुषुप्ताभिमानीप्राज्ञः यंप्रकृत्यमांडूक्येएषसर्वेश्वरइत्यादिश्रूयते सपरंज्योतिःशब्दितं निष्कलमुत्तमंपुरुषंज्ञात्वास्वेनेश्वरेणरूपेणसंयुज्यतेएतदेवपरंज्योतिरमृतादिरूपमितिश्रुत्यर्थः । तेनयदकर्मफलंतदजंतदेवचनित्यमित्यर्थः ४५

एवंचतुर्विंशत्याप्रश्नैःश्रुतिबलेनप्रत्युत्थितस्यश्रुतिबलेनैवोत्तरंदत्तं । इदानीमान्वीक्षिक्याकेवलतर्कबलेनप्रत्यवस्थितस्यतर्कबलेनैवोत्तरंवक्तुमुपक्रमते अक्षयत्वादितिसार्धेन यत्तुनित्यःस्वर्गउपास्तिसाध्यःपुरुषार्थोनकैवल्यंपाषाणकल्पंनैरात्म्यवादानतिरेकादितितत्राह यतःप्रजननेऽक्षयत्वादजमत्राव्ययमाहुरितियोजना प्रकृष्टंजननमस्येतिप्रजननंतस्मिन्ननित्यस्वर्गे ल्यब्लोपेपंचमी । अक्षयत्वंपरोक्तंश्रुत्वाअक्षपादादयआचार्याअत्रव्यवहारेयदजमाकाशादितदेवाव्ययमित्याहुः जायमानस्यघटादेर्व्ययोहिप्रत्यक्षस्तद्वत्पराभिमतस्यमोक्षस्यापीत्यर्थः । नत्वागमशतेनापिवस्तुस्वभावोऽन्यथयितुंशक्यतेइतिभावः।पूर्ष्वेष्टसुवसतीतिपुरुषस्तमक्षयंप्राहुः। नतुपुरामक्षयत्वंयुक्तं । तथाचकैवल्यमेवमुक्तिर्नत्वैश्वर्यंतारतम्यग्रस्तत्वेनकार्यत्वेनपरतंत्रत्वेनचतस्यापिदुःखरूपत्वादितिभावः ४६ नन्वस्मदीयामोक्षिणोऽप्राकृतेपुलोकेपुस्थिताःप्रतिपदमभिनवंदेहेंद्रियादिकमुपादायभगवदाराधनंवाक्पादिभोगंवाकुर्वंत्यतोनतेषांप्रकृतिलयेऽपिप्रलयोनापिजराद्याघातोऽतस्तेषांप्रवाहनित्यमैश्वर्यं । तथाचश्रीधरस्वामिभिर्वेदस्तुतिटीकायामुदाहृतमुपनिषद्वाक्यं'यंसर्वेदेवानमंतिमुमुक्षवोब्रह्मवादिनश्चमुक्ताअपिलीलयाविग्रहंकृत्वाभजंते' इतितद्भाष्यंचोदाहृतमित्याशंक्याह गुणक्षयत्वादिति गुणानांक्षयवत्त्वादित्यर्थः । अप्राकृतेपुलोकेपुसत्वादयोगुणाःसंतिनवा । अंत्येनाम्नांतरेणकैवल्यमेवतत् । आद्येप्रलयकालेगुणसाम्यावस्थायांगुणकार्यत्वात्तेषामपिक्षयोऽवश्यंभावी अथतेषामनादित्वान्नक्षयइतितत्राह प्रकृतिः

अक्षयत्वात्प्रजननेअजमत्राहुरव्ययम् ॥ अक्षयंपुरुषंप्राहुःक्षयोह्यस्यनविद्यते ४६ गुणक्षयत्वात्प्रकृतिःकर्तृत्वादक्षयंबुधाः ॥ एषातेऽऽन्वीक्षिकीविद्याचतुर्थीसांपरायिकी ४७ विद्योपेतंधनंकृत्वाकर्मणानित्यकर्मणि ॥ एकांतदर्शनविदाःसर्वेविश्वावसोस्मृताः ४८ जायंतेचम्रियंतेचयस्मिन्नेतेयतश्च्युताः ॥ वेदार्थंयेनजानंतिवेद्यंगंधर्वसत्तम ४९ सांगोपांगानपियदियश्ववेदानधीयते ॥ वेदवेद्यंनजानीतेवेदभारवहोहिसः ५० योघृतार्थीखरीक्षीरंमथेद्गंधर्वसत्तम ॥ विष्ठांतत्रानुपश्येतनमंडंनचवैघृतम् ५१ तथावेद्यमवेद्यंचवेदविद्योनविंदति ॥ सकेवलंमूढमतिर्ज्ञानभारवहःस्मृतः ५२ द्रष्टव्योनित्यमेवैतौतत्परेणांतरात्मना ॥ यथाऽस्यजन्मनिधनेनभवेतांपुनःपुनः ५३ अजस्रंजन्मनिधनंचिंतयित्वात्रयीमिमाम् ॥ परित्यज्यक्षयमिहअक्षयंधर्ममास्थितः ५४ यदानुपश्यतेऽत्यंतमहन्यहनिकाश्यप ॥ तदासकेवलीभूतःषड्विंशमनुपश्यति ५५

कर्तृत्वादिति काकाक्षिवदयंहेतुरुभयत्रापिसंबध्यते प्रकरोतीतिप्रकृतिरितिव्युत्पत्तेस्तेषामकार्यत्वेप्राकृतत्वमेवनस्यात् नचेष्टापत्तिः ब्रह्मव्यतिरिक्ताप्राकृतवस्त्वंतरकल्पनेप्रमाणाभावात् । अतोऽन्यदार्तमितिश्रुत्यातन्नित्यत्वकल्पनाबाधाचेत्यर्थः । यत्त्वैश्वर्यंप्रवाहनित्यमितितत्राह कर्तृत्वादक्षयमिति सहीदमन्नंपुनःपुनर्जनयतीतिश्रुत्याभावनाज्ञानकर्मभिः पुनःपुनर्जायमानस्यभोग्यस्याक्षयत्वमुक्तं । नचभोगभूमौतानिसंतितस्मादप्राकृतेपुलोकेभोग्यस्याक्षयत्वंनयुज्यते कर्मभूमौसाधितस्यतस्यक्षयावश्यंभावाद्भोगभूमौचानुष्ठानाभावादितिसिद्धं । श्रीधरस्वामिभिरुदाहृतयोःश्रुतितद्भाष्ययोस्तुयोगसिद्धजीवन्मुक्ताभिप्रायेणाप्युपपत्तिरितिनाप्राकृतलोककल्पनंयुक्तमिति उपसंहरति एषेति उक्तेतिशेषः ४७ विद्योपेतमान्वीक्षिक्याविद्ययासहितंधनं । 'ऋचःसामानियजूंषि साहिश्रीरमृतासतां' इतिश्रुतेःश्रीशब्दितावेदविद्याधनंतांसोपपत्तिकांसंपाद्य श्रवणमननेकृत्वेतिभावः कर्मणागुरूपसदनादिनायत्नेन सर्वैर्वेदानित्यकर्मणिएकांतदर्शनाविज्ञेयाइत्यर्थः ४८ एतेवियदाद्याःयस्मिन्नधिष्ठानेजायंतेलीयंतेचतंवेदार्थंवेदप्रतिपाद्यंवेद्यमात्मानंयेनजानंतितेयतश्च्युताभवंतितन्नित्यमितिपूर्वानुषंगः ४९ । ५० विष्ठांविग्रासमंमंडपश्येतनतुघृतंमंडंवाशुद्धं ५१ अवेद्यंप्रकृतिः वेद्यंब्रह्मयोवेदविन्नविंदतिनलभतेनापरोक्षीकरोति ५२ यथायेनदर्शनेन ५३ त्रयींकर्मकांडोक्तंधर्मंक्षयंक्षयवंतंपरित्यज्य अक्षयंधर्मंयोगं ५४ पश्यतेदृश्यते कर्मणितङ् आत्मेतिशेषः शुद्धस्त्वंपदार्थोयदाप्रत्यग्दृश्यतेतदावाक्यजज्ञानेनकेवलीभूतस्त्यक्ताविद्यः षड्विंशंतत्पदार्थं ५५

तत्त्वमसीतिवाक्यार्थमेवाह शाश्वतईश्वरःपंचविंशकोजीवः तस्यतेऽभेनप्रदेनद्वावनुदृश्येतां अत्रापिकर्मणितङ् संभावनायांलोट् पृथगिवसंभाव्येतेइत्यर्थः । तमितिविधेयापेक्षयाएकत्वं तावु भावप्येकमभिन्नंवस्त्वितिसाधवोवेदांतनिष्ठाःसांख्याःपश्यंति ५६ तद्इति तेसांख्यायोगाश्च एतज्जीवेशाभेददर्शनं नाभिनंदंतीतिनापित्वभिनंदंत्येव । तत्रसांख्याःस्पष्टमेवाभेदमाहुः । योगाअ पिमोक्षेपंचविंशंसर्वक्लेशशून्यंनिर्विशेषचिन्मात्रमुपगच्छंतस्तादृशंचेश्वरमन्वानास्तयोश्चनिर्विशेषयोर्विशेषकृतस्यभेदस्यायोगात्फलतोऽभेदमेवेच्छंतीतिभावः । भयोद्वेगाइतिपाठेभयादुद्वेगोयेषांतेत था अस्मिन्पक्षेसांख्यमतेएवायमभेदइत्यर्थः ५७ पंचविंशंपंचविंशस्यतत्त्वंयदच्युतत्वंत्वयाउक्तंतत्तथाउतनतथा अयंभावः । यदिजीवत्वंसत्यंतर्हितस्येश्वरत्वंदुर्वचं नह्यागमोऽपिघटंपटयितु मीष्टेऽतस्तत्त्वमसीत्यभेदोगौणःस्यात् । यद्यसत्यंतदाब्रह्मकांडस्याप्रामाण्यंबंधमोक्षाद्यव्यवस्थाचेति ५८ यद्यप्येतद्बहुभ्यःश्रुतंतथाऽपित्वय्येवममविश्वासोऽस्तीत्याह जैगीषव्यस्येत्यादिना ५९

अन्यश्चशाश्वतोऽव्यक्तस्तथाऽन्यःपंचविंशकः ॥ तस्यद्वावनुपश्येतांतमेकमितिसाधवः ५६ तेनैतन्नाभिनंदंतिपंचविंशकमच्युतम् ॥ जन्ममृत्युभयाद्योगाःसांख्याश्चपरमैषिणः ५७ ॥ विश्वावसुरुवाच ॥ पंचविंशंयदेतत्तेप्रोक्तंब्राह्मणसत्तम ॥ तथातन्नतथाचेतितद्भवान्वक्तुमर्हति ५८ जैगीषव्यस्यासितस्यदेवलस्यमयाश्रुतम् ॥ पराशरस्यविप्रर्षेर्वार्षगण्यस्यधीमतः ५९ भृगोःपंचशिखस्यास्यकपिलस्यशुकस्यच ॥ गौतमस्यार्ष्टिषेणस्यगर्गस्यचमहात्मनः ६० नारदस्यासुरेश्चैवपुलस्त्यस्यचधीमतः ॥ सनत्कुमारस्यततःशुक्रस्यचमहात्मनः ६१ कश्यपस्यपितुश्चैवपूर्वमेवमयाश्रुतम् ॥ तदनंतरंचरुद्रस्यविश्वरूपस्यधीमतः ६२ दैवतेभ्यःपितृभ्यश्चदैतेयेभ्यस्ततस्ततः ॥ प्राप्तमेतन्मयाकृत्स्नंवेद्यंनित्यंवदंत्युत ६३ तस्मात्तद्वैभवद्बुद्ध्याश्रोतुमिच्छामिब्राह्मण ॥ भवान्प्रबर्हःशास्त्राणांप्रगल्भश्चातिबुद्धिमान् ६४ नतवाविदितंकिंचिद्भवान्श्रुतिनिधिःस्मृतः ॥ कथ्यतेदेवलोकेचपितृलोकेचब्राह्मण ६५ ब्रह्मलोकगताश्चैवकथयंतिमहर्षयः ॥ पतिश्चतपतांशश्वदादित्यस्तवभाषिता ६६ सांख्यज्ञानंत्वयाब्रह्मन्नवाप्तंकृत्स्नमेवच ॥ तथैवयोगशास्त्रंचयाज्ञवल्क्यविशेषतः ६७ निःसंदिग्धंप्रबुद्धस्त्वंबुध्यमानश्चराचरम् ॥ श्रोतुमिच्छामितज्ज्ञानंघृतंमंडमयंयथा ६८ ॥ याज्ञवल्क्यउवाच ॥ कृत्स्नधारिणमेवत्वांमन्येगंधर्वसत्तम ॥ जिज्ञाससेचमांराजंस्तन्निबोधयथाश्रुतम् ६९ अबुध्यमानांप्रकृतिंबुध्यतेपंचविंशकः ॥ नतुबुध्यतिगंधर्वप्रकृतिःपंचविंशकम् ७० अनेनप्रतिबोधेनप्रधानंप्रवदंतितत् ॥ सांख्ययोगाश्चतत्त्वज्ञायथाश्रुतिनिदर्शनात् ७१ पश्यंस्तथैवचापश्यन्पश्यत्यन्यःसदाऽनघ ॥ षड्विंशंपंचविंशंचचतुर्विंशंचपश्यति ७२ नतुपश्यतिपश्यंस्तुयश्चैनमनुपश्यति ॥ पंचविंशोऽभिमन्येतनान्योऽस्तिपरमोमम ७३

६० । ६१ । ६२ । ६३ प्रबर्हःश्रेष्ठःप्रगल्भोवक्ता ६४ । ६५ । ६६ । ६७ मंडमग्रंघृतमतिस्वादुइतिहिप्रसिद्धं ६८ । ६९ जीवतत्त्वंवक्तुमुपक्रमते अबुध्यमानामिति जडाप्रकृतिःपुंसामका श्यतेनतुपुमान्प्रकृत्यातेनजीवस्यबुद्ध्याद्यगोचरत्वेननिष्कलत्वमुक्तं ७० अनेनपंचविंशेनप्रतिबोधेनबोधप्रतिबिंबात्मनातत्तांप्रकृतिंप्रधानंप्रधीयतेऽस्मिन्निश्चितिच्छायेतियोगात्प्रधानसंज्ञंप्रवदंति । एतेनचितिच्छायापन्नाबुद्धिरेवाहंप्रत्ययविषयइत्युक्तं । यथाश्रुतिनिदर्शनात् । 'एकएवतुभूतात्माभूतेभूतेव्यवस्थितः । एकधाबहुधाचैवदृश्यतेजलचंद्रवत्' इतिजलचंद्रदृष्टांतादित्यर्थः ७१ पश्यन्निति चिदाभासादन्यःसाक्षीपश्यन्जाग्रदादौपुंप्रकृत्योर्विवेकख्यातिकालेवापश्यन्सविकारंचतुर्विंशंपंचविंशंचपश्यति । अपश्यन्सुषुप्त्यादौनिर्विकल्पकसमाधौचषड्विंशंपश्यति । एतेनयःसाक्षीस एवसाक्ष्येपार्संबद्धश्चेत्पंचविंशोभवतिसाक्ष्येणवियुक्तःषड्विंशइत्युक्तं ७२ षड्विंशस्याप्युक्तत्वंवदन्चतुर्विंशस्यात्मत्वंलोकायतसौगतसंमतंनिरस्यति पंचविंशइति ७३ ॥२१९॥

नचात्मभावेनेतिशेषः ७४ । ७५ कालस्यकालेन । एकत्वंषड्विंशादभेदं मज्जनोन्मज्जनेसंसारमोक्षौ समत्वेनज्ञातेनब्रह्मभावेन ७६ तमेवकालमाह यदेति अहंचिदात्मा एषोऽहमर्थोदिरनात्मा ७७ प्रागुक्तंजीवेशयोरभेदंपरामृशति अन्यइति वरःषड्विंशः तत्स्थानादितिभावप्रधानोनिर्देशः वरस्यावराधिष्ठानत्वादित्यर्थः । अवरस्यरज्जूरगवद्वाधेसतिवरएकएवेतिसाधवोऽनुभवंतीतिभावः ७८ तेनेतिसार्धश्लोकोव्याख्यातः ७९ । ८० अप्रतिबुद्धःप्रधानं बुध्यमानोजीवः बुद्धोब्रह्म ८१ धीफलमाह पश्येति पश्यंद्रष्टारं अपश्यंदृश्यं क्षेम्यंक्षेमायसाधु तत्त्वंदृग्दृश्ययोरन्यत्वंचनिर्वि

नचतुर्विंशकोग्राह्योमनुजैर्ज्ञानदर्शिभिः ॥ मत्स्यश्चोदकमन्वेतिप्रवर्तेतप्रवर्तनात् ७४ यथैवबुध्यतेमत्स्यस्तथैषोऽप्यनुबुध्यते ॥ सस्नेहात्सहवासाच्चसाभिमानाच्चनित्यशः ७५ सनिमज्जतिकालस्ययदैकत्वंनबुध्यते ॥ उन्मज्जतिहिकालस्यसमत्वेनाभिसंवृतः ७६ यदातुमन्यतेऽन्योऽहमन्यएषइतिद्विजः ॥ तदासकेवलीभूतःषड्विंशमनुपश्यति ७७ अन्यश्चराजन्यवरस्तथाऽन्यःपंचविंशकः ॥ तत्स्थानाच्चानुपश्यंतिएकएवेतिसाधवः ७८ तेनैतन्नाभिनंदंतिपंचविंशकमच्युतम् ॥ जन्ममृत्युभयाद्भीतायोगाःसांख्याश्चकाश्यप ॥ षड्विंशमनुपश्यंतःशुचयस्तत्परायणाः ७९ यदासकेवलीभूतःषड्विंशमनुपश्यति ॥ तदाससर्वविद्विद्वान्नपुनर्जन्मविंदति ८० एवमप्रतिबुद्धश्चबुध्यमानश्चतेऽनघ ॥ बुद्धश्चोक्तोयथातत्त्वंमयाश्रुतिनिदर्शनात् ८१ पश्यापश्यंयोनपश्येत्क्षेम्यंतत्त्वंचकाश्यप ॥ केवलाकेवलंचाद्यंपंचविंशंपरंचयत् ८२ ॥ विश्वावसुरुवाच ॥ तथ्यंशुभंचैतदुक्तंत्वयाविभोसम्यक्क्षेम्यंदैवताद्यंयथावत् ॥ स्वस्त्यक्षयंभवतश्चास्तुनित्यंबुद्ध्यासदाबुद्धियुक्तंमनस्ते ८३ ॥ याज्ञवल्क्यउवाच ॥ एवमुक्त्वासंप्रयातोदिवंसविभ्राजन्वैश्रीमतादर्शनेन ॥ दृष्टश्चतुष्ट्याचपरयाऽभिनंद्यप्रदक्षिणंममकृत्वामहात्मा ८४ ब्रह्मादीनांखेचराणांक्षितौचयेचाधस्तात्संवसंतेनरेंद्र ॥ तत्रैवतद्दर्शनंदर्शयन्वैसम्यक्क्षेम्यंयेपथंसंश्रितावै ८५ सांख्याःसर्वेसांख्यधर्मेरताश्चतद्वद्योगायोगधर्मेरताश्च ॥ येचाप्यन्येमोक्षकामामनुष्यास्तेषामेतद्दर्शनंज्ञानदृष्टम् ८६ ज्ञानान्मोक्षोजायतेराजसिंहनास्त्यज्ञानादेवमाहुर्नरेंद्र ॥ तस्माज्ज्ञानंतत्त्वतोऽन्वेषितव्यंयेनात्मानंमोक्षयेजन्ममृत्योः ८७ प्राप्यज्ञानंब्राह्मणात्क्षत्रियाद्वावैश्याच्छूद्रादपिनीचादभीक्ष्णम् ॥ श्रद्धातव्यंश्रद्दधानेननित्यंनश्रद्धिनंजन्ममृत्यूविशेताम् ८८ सर्वेवर्णाब्राह्मणाब्रह्मजाश्चसर्वेनित्यंव्याहरंतेचब्रह्म ॥ तत्त्वंशास्त्रंब्रह्मबुद्ध्याब्रवीमिसर्वंविश्वंब्रह्मचैतत्समस्तम् ८९ ब्रह्मास्यतोब्राह्मणाःसंप्रसूताबाहुभ्यांवैक्षत्रियाःसंप्रसूताः ॥ नाभ्यांवैश्याःपादतश्चापिशूद्राःसर्वेवर्णानान्यथावेदितव्याः ९० अज्ञानतःकर्मयोनिंभजंतेतांतांराजंस्तेतथायांत्यभावम् ॥ यथावर्णाज्ञानहीनाःपतंतेघोरादज्ञानात्प्राकृतंयोनिजालम् ९१

७४ कल्पकतयायोनपश्येत्सएवकेवलंसांख्येणापिनिर्मुक्तमकेवलंसाक्षिरूपंपंचविंशंचिदाभासरूपं आद्यंजगत्कारणं परंमहदादिकार्यं । अनेन 'यएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवति' इतिश्रुतौब्रह्मपदेनभिर्वि शेषंसर्वपदेनकेवलादिकंचप्राप्यमितिदर्शितम् ८२ क्षेम्यंमोक्षायहितं दैवताद्यंब्रह्म ८३ । ८४ दर्शनंशास्त्रं दर्शयन्नदर्शयन् पथंपंथानम् ८५ ज्ञानदृष्टंप्रत्यक्षफलमित्यर्थः ८६ । ८७ अश्रद्धिनंश्रद्धा वंतं आदंतादपिमत्वर्थीयइनिः ८८ । ८९ । ९० । ९१

९२ सर्वत्रस्थंसर्वेर्व्यपगतं तत्स्थोज्ञाननिष्ठोयःसएवब्रह्मात्ब्राह्मणःअपरःक्षत्रियादिरपि तस्थिवान्तत्स्थोज्ञानेइतिशेषः तस्मैतदर्थं मोक्षेनित्यंनित्यसिद्धम् ९३ । ९४ । ९५ स्पर्शयामासददौ ९६ उपासद्युपासीनः ९७ प्राकृतमाविचर्क ९८ अनंतत्रिविधपरिच्छेदशून्योऽहमितिमनसिनिश्चयंकृत्वानित्यंसर्वदायतोधर्मादिकंप्राकृतमिथ्याऽतःकेवलमेवाचिंतयदितिसार्धःश्लोकः ९९ इदंधर्मादि व्यक्तंबुद्ध्यादि अव्यक्तमज्ञानम् १०० तस्थौस्थाणुवदचलमस्तीत्यर्थः १०१ दीपमानेगवादिकंसर्वमात्मैवेत्यर्थः १०२ । १०३ एवमुक्तप्रकारेणमन्यस्वजानीहि १०४ । १०५ अव्यक्तादीनां

तस्माज्ज्ञानंसर्वतोमार्गितव्यंसर्वत्रस्थंचैतदुक्तंमयाते ॥ तत्स्थोब्रह्मातस्थिवांश्चापरोयस्तस्मैनित्यंमोक्षमाहुर्नरेंद्र ९२ यत्तेप्रष्टंतन्मयाचोपदिष्टंयाथातथ्यंतद्वि
शोकोभवस्व ॥ राजन्गच्छस्वैतदर्थस्यपारंसम्यक्प्रोक्तंस्वस्तितेत्वस्तुनित्यम् ९३ ॥ भीष्मउवाच ॥ सएवमनुशास्तस्तुयाज्ञवल्क्येनधीमता ॥ प्रीतिमान
भवद्राजामिथिलाधिपतिस्तदा ९४ गतेमुनिवरेतस्मिन्कृतेचापिप्रदक्षिणम् ॥ देवरातिर्नरपतिरासीनस्तत्रमोक्षवित् ९५ गोकोटिंस्पर्शयामासाहिरण्यंतुतथै
वच ॥ रत्नांजलिमथैकंचब्राह्मणेभ्योददौतदा ९६ विदेहराज्यंचतदाप्रतिष्ठाप्यसुतस्यवै ॥ यतिधर्ममुपासंश्चाप्यवसन्मिथिलाधिपः ९७ सांख्यज्ञानमधीयानो
योगशास्त्रंचकृत्स्नशः ॥ धर्माधर्मंचराजेंद्रप्राकृतंपरिगर्हयन् ९८ अनंतइतिकृत्वासनित्यंकेवलमेवच ॥ धर्माधर्मौपुण्यपापेसत्यासत्येतथैवच ९९ जन्ममृत्यूच
राजेंद्रप्राकृतंतदचिंतयत् ॥ व्यक्ताव्यक्तस्यकर्मेदमितिनित्यंनराधिप १०० पश्यंतियोगाःसांख्याश्चस्वशास्त्रकृतलक्षणाः ॥ इष्टानिष्टविमुक्तंहितस्थौब्रह्मपरा
त्परम् १ नित्यंतदाहुर्विद्वांसःशुचितस्माच्छुचिर्भव ॥ दीयतेयच्चलभतेदत्तंयच्चानुमन्यते २ ददातिचनरश्रेष्ठप्रतिगृह्णातियच्चह ॥ ददात्यव्यक्तइत्येतत्प्रतिगृह्णा
तियच्चवै ३ आत्माह्येवात्मनोह्येकःकोऽन्यस्तस्मात्परोभवेत् ॥ एवंमन्यस्वसततमन्यथामाविचिंतय ४ यस्याव्यक्तंनविदितंसगुणंनिर्गुणंपुनः ॥ तेनतीर्थानि
यज्ञाश्चसेवितव्याविपश्चिता ५ नस्वाध्यायैस्तपोभिर्वायज्ञैर्वाकुरुनंदन ॥ लभतेऽव्यक्तिकंस्थानंज्ञात्वाऽव्यक्तंमहीयते ६ तथैवमहतःस्थानमाहंकारिकमेवच ॥
अहंकारात्परंचापिस्थानानिसमवाप्नुयात् ७ येत्वव्यक्तात्परंनित्यंजानतेशास्त्रतत्पराः ॥ जन्ममृत्युविमुक्तंचविमुक्तंसदसच्चयत् ८ एतन्मयाऽऽप्तंजनकात्पुरस्ता
त्तेनापिचाप्तंनृपयाज्ञवल्क्यात् ॥ ज्ञानंविशिष्टंनतथाहियज्ञाज्ज्ञानेनदुर्गंतरतेनयज्ञैः ९ दुर्गंजन्मनिधनंचापिराजन्नभौतिकंज्ञानविदोवदंति ॥ यज्ञैस्तपोभिर्नियमै
र्व्रतैश्चदिवंसमासाद्यपतंतिभूमौ ११० तस्मादुपासस्वपरंमहच्छुचिशिवंविमोक्षंविमलंपवित्रम् ॥ क्षेत्रज्ञात्वापार्थिवज्ञानयज्ञमुपास्यवैतत्रऋषिर्भविष्यसि ११
यदुपनिषदमुपाकरोत्तथाऽसौजनकनृपस्यपुराहियाज्ञवल्क्यः ॥ यदुपगणितशाश्वताव्ययंतच्छुभममृतत्वमशोकमर्च्छति १२ ॥ ॥ इति श्रीमहाभारते शां
तिपर्वणिमोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादसमाप्तौ अष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ 

मप्येयचदुपास्तेतत्तत्तादात्म्यंमाप्नोतीत्याह लभतइत्यादिना व्यक्तं स्पर्ष्टं आपरोक्ष्येणेत्यर्थः १०६ शेषंस्पष्टार्थं १०७ । १०८ । १०९ । ११० । १११ । ११२ ॥ ॥ इति शांतिपर्वणिमोक्ष० नीलकंठीये भारतभावदीपे अष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥ ॥ ५ ॥ ॥

समाप्ताश्रुतियुक्तिप्रधानाब्रह्मविद्या अथसाधनप्रधानांवक्तुमुपक्रमते ऐश्वर्यंवामहत्प्राप्येत्यादिना । स्वधर्माचरणपूर्वकंनिवृत्तिमार्गेनिष्ठोऽजरांतकावतिक्रामतिनाऽन्यथेत्यध्यायतात्पर्यं १ । २ । ३ । ४ ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीयेभारतभावदीपे एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥ ॥ इदानींगार्ह स्थ्येऽपिनिवृत्तिनिष्ठामुक्तिबीजभूतासंभवतीतिदर्शयितुंसुलभाजनकसंवादआरभ्यते अपरित्यज्येति । बुद्धयाःबुद्धेः विनीयतेलीयतेऽस्मिन्नितिविनयोलयस्थानंमोक्षतत्त्वं १ आत्मालिंगदेहःव्यक्त

॥ युधिष्ठिरउवाच ॥ ऐश्वर्यंवामहत्प्राप्यधनंवाभरतर्षभ ॥ दीर्घमायुरवाप्याथकथंमृत्युमतिक्रमेत् १ तपसावासुमहताकर्मणावाश्रुतेनवा ॥ रसायनप्रयोगैर्वाकैर्ना
प्नोतिजरांतकौ २ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ भिक्षोःपंचशिखस्येहसंवादंजनकस्यच ३ वैदेहोजनकोराजामहर्षिंवेदवित्तमम् ॥
पर्यपृच्छत्पंचशिखंछिन्नधर्मार्थसंशयम् ४ केनवृत्तेनभगवन्नतिक्रामेज्जरांतकौ ॥ तपसावाऽथवाबुद्ध्याकर्मणावाश्रुतेनवा ५ एवमुक्तःसवैदेहंप्रत्युवाचापरोक्षवित् ॥
निवृत्तिर्नतयोरस्तिनानिवृत्तिःकथंचन ६ नह्यहानिनिवर्तंतेनमासानपुनःक्षपाः ॥ सोऽयंप्रपद्यतेऽध्वानंचिरायध्रुवमध्रुवः ७ सर्वभूतसमुच्छेदःस्रोतसेवोह्यतेस
दा ॥ उह्यमानंनिमज्जंतमप्लवेकालसागरे ८ जरामृत्युमहाग्राहेनकश्चिदभिपद्यते ॥ नैवास्यकश्चिद्भवितानासौभवतिकस्यचित् ९ पथिसंगतमेवेदंदारैरन्यैश्चबंधु
भिः ॥ नायमत्यंतसंवासोलब्धपूर्वोहिकेनचित् १० क्षिप्यंतेतेनतेनैवनिष्टनंतःपुनःपुनः ॥ कालेनजातायाताहिवायुनेवाभ्रसंचयाः ११ जरामृत्यूहिभूतानांखा
दितारौवृकाविव ॥ बलिनांदुर्बलानांचह्रस्वानांमहतामपि १२ एवंभूतेषुभूतात्मानित्यभूतोध्रुवेषुच ॥ कथंहिहृष्येज्जातेषुमृतेषुचनसंज्वरेत् १३ कुतोऽहमागतः
कोऽस्मिक्वगमिष्यामिकस्यवा ॥ कस्मिन्स्थितःक्वभवितास्मात्किमनुशोचसि १४ द्रष्टास्वर्गस्यकोऽन्योऽस्तितथैवनरकस्यच ॥ आगमांस्त्वनतिक्रम्यदद्या
च्चैवयजेतच १५ ॥ इतिश्रीमहाभारतेशांति०मोक्ष०पंचशिखजनकसंवादे एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥ ॥ युधिष्ठिरउवाच ॥ अप
रित्यज्यगार्हस्थ्यंकुरुराजर्षिसत्तम ॥ कःप्राप्तोविनयंबुद्ध्यामोक्षतत्त्वंवदस्वमे १ संन्यस्यतेयथाऽऽत्माऽयंव्यक्तस्यात्मायथाचयत् ॥ परंमोक्षस्ययच्चापितन्मेब्रूहि
पितामह २ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ जनकस्यचसंवादंसुलभायाश्चभारत ३ संन्यासफलिकःकश्चिद्बभूवनृपतिःपुरा ॥ मैथि
लोजनकोनामधर्मध्वजइतिश्रुतः ४ सवेदेमोक्षशास्त्रेचस्वेचशास्त्रेकृतश्रमः ॥ इंद्रियाणिसमाधायशशासवसुधामिमाम् ५ तस्यवेदविदःप्राज्ञाःश्रुत्वातांसाधुवृत्त
ताम् ॥ लोकेषुस्पृहयंत्यन्येपुरुषाःपुरुषेश्वर ६ अथधर्मयुगेतस्मिन्योगधर्ममनुष्ठिता ॥ महीमनुचचारैकासुलभानामभिक्षुकी ७ तयाजगदिदंकृत्स्नमटं
त्यामिथिलेश्वरः ॥ तत्रतत्रश्रुतोमोक्षेकथ्यमानस्त्रिदंडिभिः ८

स्यस्थूलदेहस्य आत्मास्वरूपं देहद्वयंयथात्यज्यतेयच्चमोक्षस्यपरंतत्त्वंतद्व देत्यर्थः २ । ३ संन्यासफलसम्यग्दर्शनंतदस्यास्तीतिसंन्यासफलिकः ४ स्वेशास्त्रेदंडनीतौ ५ तस्यसाधुवृत्ततांश्रुत्वातांस्पृहयंतीतिसंबंधः ६ धर्मयुगेसत्ययुगेअनुष्ठिताकर्तरिक्तः भिक्षुकीत्यनेनस्त्री णामपिप्राग्विवाहाद्वैधव्यादूर्ध्वंवासंन्यासेऽधिकारोऽस्तीतिदर्शितं । तेनभिक्षाचर्यंमोक्षशास्त्रश्रवणमेकांतेआत्मध्यानंचताभिरपिकर्तव्यंत्रिदंडादिकंचवार्यं ७ मोक्षेमोक्षशास्त्रेनिष्णातइतिशेषः ८

नेतिनवेति ९ । १० लघुशीघ्रमस्त्रगत्यागच्छतीतिसा ११ । १२ सौकुमार्यंसौंदर्यं १३ । १४ भाष्यविदांसूत्रार्थज्ञानांमध्ये १५ अस्यएनंजनकं धर्मेषुमोक्षधर्मेषुविषयेषु अन्याननाहत्यचोदयामा सपृष्टवतीअयंमुक्तोनेतिनवेतिससंशया सत्वमिति स्वस्ययोगैश्वर्यख्यापनार्थंजनकस्यसत्वंबुद्धिसत्वेनस्वयाबुद्ध्याप्रविवेश १६ स्वबुद्धेर्बहिरस्वातंत्र्यात्परबुद्धेश्चाप्रत्यक्षत्वात्कथंप्रविवेशेत्याशं क्याह नेत्राभ्यामिति बुद्धिसत्वंत्वन्नमयंहिसोम्यमनइतिश्रुतेर्भौतिकंद्रव्यंरविप्रभावत्सूक्ष्मंतयदाचक्षुरादिच्छिद्रेभ्योबहिर्निर्गत्यघटादिकंप्रकाशयतिघटच्छिद्रनिर्गतप्रदीपप्रभावत्तदाचक्षुरिंद्रियामि त्युच्यते । तत्रैकस्मिन्देशेयुगपत्प्रदीपयोरिवबुद्ध्योरंशवःसंसृज्यंतेतत्रयक्षराक्षसादयोवीराःस्वीयेनबुद्धचक्षुषेणसंसृष्टांपरबुद्धिमभिभूयतदीयैर्देहादिभिर्व्यवहरंतीतिप्रसिद्धंलोके । यदितुद्वावपि

साऽतिसूक्ष्मांकथांश्रुत्वातथ्यंनेतिससंशया ॥ दर्शनेजातसंकल्पाजनकस्यबभूवह ९ तत्रसाविप्रहायाथपूर्वरूपंहियोगतः ॥ अबिभ्रदनवद्यांगीरूपमन्यदनुत्तमम् १० चक्षुर्निमेषमात्रेणलघ्वस्त्रगतिगामिनी ॥ विदेहानांपुरींसुभ्रूर्जगामकमलेक्षणा ११ साप्राप्यमिथिलांरम्यांप्रभूतजनसंकुलाम् ॥ भैक्ष्यचर्यापदेशेनददर्शमिथिलेश्वरम् १२ राजातस्याःपरंदृष्ट्वासौकुमार्यंवपुस्तदा ॥ केयंकस्यकुतोवेतिबभूवागतविस्मयः १३ ततोऽस्याःस्वागतंकृत्वाव्यादिश्यचवरासनम् ॥ पूजितांपादशौचेनवरान्नेनाप्यतर्पयत् १४ अथभुक्तवतीप्रीताराजानंमंत्रिभिर्वृतम् ॥ सर्वभाष्यविदांमध्येचोदयामासभिक्षुकी १५ सुलभात्वस्यधर्मेषुमुक्तोनेतिससंशया ॥ सत्वंसत्वेनयोगज्ञाप्रविवेशमहीपतेः १६ नेत्राभ्यांनेत्रयोरस्यरश्मीन्संयम्यरश्मिभिः ॥ सास्मतंचोदयिष्यंतीयोगबंधैर्बबंधह १७ जनकोऽप्युत्स्मयन्राजाभावमस्याविशेषयन् ॥ प्रतिजग्राहभावेनभावमस्यानृपोत्तम १८ तदेकस्मिन्नधिष्ठानेसंवादःश्रूयतामयम् ॥ छत्रादिषुविमुक्तस्यमुक्तायाश्चत्रिदंडके १९ ॥ जनकउवाच ॥ भगवत्याःक्वचर्येयंकृताक्वचगमिष्यसि ॥ कस्यचत्वंकुतोवेतिपप्रच्छैनांमहीपतिः २० श्रुतेवयसिजातौचसद्भावोनाधिगम्यते ॥ एष्वर्थेषूत्तरंतस्मात्प्रवेद्यंमत्समागमे २१ छत्रादिषुविशेषेषुमुक्तंमांविद्धितत्त्वतः ॥ सत्वांसंमंतुमिच्छामिमानार्हाहिमताऽसिमे २२ यस्माच्चैतन्मयाप्राप्तंज्ञानंवैशेषिकंपुरा ॥ यस्यनान्यःप्रवक्ताऽस्तिमोक्षंतमपिमेशृणु २३ पराशरसगोत्रस्यवृद्धस्यसुमहात्मनः ॥ भिक्षोःपंचशिखस्याहंशिष्यःपरमसंमतः २४ सांख्यज्ञानेचयोगेचमहीपालविधौतथा ॥ त्रिविधेमोक्षधर्मेऽस्मिन्गताध्वाछिन्नसंशयः २५ सयथाशास्त्रदृष्टेनमार्गेणेहपरिभ्रमन् ॥ वार्षिकांश्चतुरोमासान्पुरामयिसुखोषितः २६

योगिवीरौबुद्धचक्षमयोगसंहाराभिज्ञौतदाऽस्त्रद्वयवद्द्वौद्वयंमिथोनाभिभूयतेततएकस्मिन्देहेद्वयोर्विवादोभवति संचोदयिष्यंतीप्रष्टुमिच्छंती योगबंधैर्योगबलेनचित्तबंधैर्बबंधवशीचकार १७ उत्स्मयन्स्वस्याऽजेयत्वाभिमानेगर्वंकुर्वन् अस्याःसुलभायाःभावमाशयमेनंमूकंकरिष्यामित्येवंरूपं विशेषयन्नभिभवन् भावेनभावंजग्राह १८ तयासहसमत्वेनैकस्मिन्देहेउवास अधिष्ठानेदेहेइत्येति उभावपिस्थूलदेहोपस्कारंत्यक्तवंतावित्यर्थः १९ एतदाख्यानतात्पर्यंत्वेकस्मिन्गेहेइवलिंगदेहेऽपिद्वयोर्जीवयोरवस्थानंभवतितेनस्थूलसूक्ष्मदेहौगृहवज्जीवस्यानात्मानावित्युक्तं एवंसतिस्वस्यानभिभूतत्वंदर्शयन्जनकउवाच भगवत्याइति २० परकीयंश्रुतादिकमज्ञातमतःपृष्टेनतद्वेदनीयमित्यर्थः २१ राजाऽप्यहंराज्यान्मुक्तोऽस्मीत्याह छत्रादिष्विति संमंतुंसम्यक्ज्ञातुं २२ मोक्षं मोक्षहेतुं २३ । २४ सांख्ययोगविधिशब्दैःक्रमेणज्ञानोपास्तिकर्मकांडार्थाज्ञेयाः । अयमेवत्रिविधोमोक्षधर्मस्तत्रविषयेगताध्वाज्ञातमार्गः २५ मयिममसमीपे २६



२७ । २८ वैराग्यमितिद्वाभ्यांवैराग्यज्ञानयत्नानांवासिष्ठादौवासनाक्षयविज्ञानमनोनाशशब्दितानांत्रिदंडविधंभवदम्योग्याश्रयेणसिद्धिरुक्ता यथा । 'तत्त्वज्ञानंमनोनाशोवासनाक्षयएवच । मिथःकारणतांगत्वादुःसाध्यानिस्थितानिहि । यावद्विलीनंनमनोनतावद्वासनाक्षयः । नक्षीणावासनायावच्चित्तंतावन्नशाम्यति । यावन्नतत्त्वविज्ञानंतावच्चित्तशमःकुतः । यावन्नचित्तोपशमोनतावत्तत्त्ववेदनं । यावन्नवासनानाशस्तावत्तत्त्वागमःकुतः । यावन्नतत्त्वसंप्राप्तिर्नतावद्वासनाक्षयः । एकैकशोनिषेव्यंतेयद्येतेचिरमप्यलं । तन्नसिद्धिंप्रयच्छंतिमंत्राःसंकीर्तिताइव'इति । यथाषडंगमंत्राणामेकैकमंत्रावृत्त्यानसिद्धिःकिंतुसहितानामावृत्त्यातद्वदित्यर्थः । मोक्षस्यतत्साधनस्यज्ञानस्यविधिरुपायः २९ यत्नंयोगाभ्यासंमनोनाशहेतुं महदात्मज्ञानं तेनचपरंवैराग्यमितिसाएषात्रयाणां सिद्धिर्निष्पत्तिर्महतांद्वंद्वानांसुखदुःखादीनांमोक्षायेतिजीवन्मुक्तिसुखायवयोतिगेतिमृत्युजयायभवतीत्युक्तं ३० । ३१ ननुराज्यंकुर्वतस्तवकथंमुक्तसंगितासंभावितेत्यतआह यथेत्यादिना सबीज

तेनाहंसांख्यमुख्येनसुदृष्टार्थेनतत्त्वतः ॥ श्रावितस्त्रिविधंमोक्षंनचराज्याद्विचालितः २७ सोऽहंतामखिलांवृत्तिंत्रिविधांमोक्षसंहिताम् ॥ मुक्तरागश्चराम्येकःपदे परमकेस्थितः २८ वैराग्यंपुनरेतस्यमोक्षस्यपरमोविधिः ॥ ज्ञानादेवचवैराग्यंजायतेयेनमुच्यते २९ ज्ञानेनकुरुतेयत्नंयत्नेनप्राप्यतेमहत् ॥ महद्द्वंद्वप्रमोक्षायसासिद्धिर्यावयोतिगा ३० सेयंपरमिकाबुद्धेःप्राप्तानिर्द्वंद्वतामया ॥ इहैवगतमोहेनचरतामुक्तसंगिना ३१ यथाक्षेत्रंमृदूभूतमद्भिराप्लावितंतथा ॥ जनयत्यंकुरंकर्मनृणांतद्वत्पुनर्भवम् ३२ यथाचोत्तापितंबीजंकपालेयत्रतत्रवा ॥ प्राप्याप्यंकुरहेतुत्वमबीजत्वान्नजायते ३३ तद्वद्भगवताऽनेनशिखाप्रोक्तेनभिक्षुणा ॥ ज्ञानंकृतमबीजंमेविषयेषुनजायते ३४ नाभिरज्यतिकस्मिंश्चिन्नानर्थेनपरिग्रहे ॥ नाभिरज्यतिचैतेषुव्यर्थत्वाद्रागरोषयोः ३५ यश्चमेदक्षिणंबाहुंचंदनेनसमुक्षयेत् ॥ सव्यंवास्यापियस्तक्षेत्समावेतावुभौमम ३६ सुखीसोऽहमवाप्तार्थःसमलोष्टाश्मकांचनः ॥ मुक्तसंगःस्थितोराज्येविशिष्टोऽन्यैस्त्रिदंडिभिः ३७ मोक्षेहित्रिविधानिष्ठादृष्टान्यैर्मोक्षवित्तमैः ॥ ज्ञानंलोकोत्तरंयच्चसर्वत्यागश्चकर्मणाम् ३८ ज्ञाननिष्ठांवदंत्येकेमोक्षशास्त्रविदोजनाः ॥ कर्मनिष्ठांतथैवान्येयतयःसूक्ष्मदर्शिनः ३९ प्रहायोभयमप्येवज्ञानंकर्मचकेवलम् ॥ तृतीयेयंसमाख्यतानिष्ठातेनमहात्मना ४० यमेचनियमेचैवकामेद्वेषेपरिग्रहे ॥ मानेदंभेतथास्नेहेसदृशास्तेकुटुंबिभिः ४१

त्वादंकुरंजनयतीत्यध्याहृत्ययोज्यं तद्वत्कर्मबीजस्थानीयं ३२ । ३३ ज्ञानंबुद्धिः अबीजंवासनाबीजशून्यं नजायतेनप्रवर्तते शिखापदयुक्तंप्रोक्तंनामयस्यतेनपंचशिखेनेत्यर्थः ३४ अनर्थेशत्रुवधादौ परिग्रहेकन्यादिसंग्रहे एतेपुरागरोषयोर्विषयेपुस्त्रीशत्रुप्रभृतिपुव्यर्थत्वात्तेषांमिथ्यात्वेननिःस्वरूपत्वादित्यर्थः ३५ वास्येतिवास्यसंज्ञकेनशस्त्रेण विभक्तिलोपआर्षः अल्पंवास्यंवासीतये तिवा ३६ उपपादितामात्मनोमुक्तसंगितामुपसंहरतिसुखीति ३७ त्रिविधाज्ञानोपास्तिकर्मात्मिकाएका । अन्याज्ञानोपास्त्यात्मिका । कर्मणांमानसानामपि तेनसांख्ययोगात्मिकेत्यर्थः ३८ ज्ञाननिष्ठांकर्मोपसर्जनां कर्मनिष्ठांज्ञानोपसर्जनां ३९ एवंचत्वारःपरपक्षाउपन्यस्ताः स्वमतमाह प्रहायेति उभयंसमुच्चयविकल्पाख्यंपूर्वश्लोकद्वयोक्तंत्यक्त्वेत्यर्थः । ज्ञानस्यकेवलत्वंकर्मकृतोपकारनैरपेक्ष्यं । कर्मणःकेवलत्वंप्रयोजनाभावेऽप्यत्यागः । सेयंतृतीयानिष्ठाज्ञानकर्मणोःसमुच्चयपक्षाद्विकल्पपक्षाच्चान्या । तेनपंचशिखेनसमाख्याता ४० इमामेवनिष्ठांस्तौति यमेचेति तेत्रिदंडिनः यमादौसतिगृहस्थःसंन्यासितुल्यःकामादौसतिसंन्यास्यपिगृहस्थतुल्यइत्यर्थः ४१

 

त्रिदंडेति यदिज्ञानेनैवमोक्षइतिसिद्धं तर्हित्रिदंडपरिग्रहवच्छत्रपरिग्रहोऽपिनबाधकोज्ञानेनसंगाभावस्योभयत्रापितुल्यत्वादित्यर्थः ४२ येनेति आलंबतेप्रयोजनवत्तयाआसक्तोभवति कुत्र कर्मणि द्रव्येपश्वादौ स्वेधनमर्थोःछत्रादयस्तेषांपरिग्रहे किमर्थं येनयेनकारणेनात्राणादिनायस्यार्थःप्रयोजनंक्षुन्निवृत्त्यादितदर्थमित्यर्थः । तथाचार्थस्याल्पत्वबहुत्वेबंधमोक्षहेतूनभवतःकिंतुतत्रासक्तयनासक्तीएवेतिभावः ४३ आधिपत्येतुल्येत्रिदंडाद्यर्थेआसक्तिर्बाधिकेत्याह दोषेति ४४ आसंगमेवविवृणोति आधिपत्येइति शिष्यादिष्वितिशेषः ४५ । ४६ त्रिविष्टब्धंत्रिदंडकं लिंगानिआश्रमपरिचायकानि ४७ । ४८ अथवेति दुःखाभावार्थंत्रिदंडंचेत्कर्तव्यंतर्हिराज्यमपितदर्थंकुतोनकर्तव्यमित्यर्थः अतएवोक्तंभगवता । 'दुःखमित्येवयत्कर्मकायक्लेशभयात्त्यजेत् । सकृत्वाराजसंत्यागंनैवत्यागफलंलभेत्'इति ४९ फलितमाह आकिंचन्येइति ५० एषुसत्स्वपिबंधपदेस्थितंमांविद्धि ५१ राज्यैश्वर्यमयःराज्याद्यासक्तयात्मप्रधानः क्षौमयोजालमइतिवत् स्नेहायतनैर्धनदारादिभिर्बंधाती

त्रिदंडादिषुयद्यस्तिमोक्षोज्ञानेनकस्यचित् ॥ छत्रादिषुकथंनस्यात्तुल्यहेतौपरिग्रहे ४२ येनयेनहियस्यार्थःकारणेनेहकर्मणि ॥ तत्तदालंबतेसर्वद्रव्येस्वार्थपरिग्रहे ४३ दोषदर्शीतुगार्हस्थ्येयोव्रजत्याश्रमांतरे ॥ उत्सृजन्परिग्रहंश्चसोऽपिसंगान्नमुच्यते ४४ आधिपत्येतथातुल्येनिग्रहानुग्रहात्मके ॥ राजभिर्भिक्षुकास्तुल्यामुच्यंतेकेनहेतुना ४५ अथसत्याधिपत्येऽपिज्ञानेनैवेहकेवलम् ॥ मुच्यंतेसर्वपापेभ्योदेहेपरमकेस्थिताः ४६ काषायधारणंमौंड्यंत्रिविष्टब्धंकमंडलुम् ॥ लिंगान्युत्पथभूतानिनमोक्षायेतिमेमतिः ४७ यदिसत्यपिलिंगेऽस्मिन्ज्ञानमेवात्रकारणम् ॥ निर्मोक्षायेहदुःखस्यलिंगमात्रंनिरर्थकम् ४८ अथवादुःखशैथिल्यंवीक्ष्यलिंगेकृतामतिः ॥ किंतदेवार्थसामान्यंछत्रादिषुनलक्ष्यते ४९ आकिंचन्येनमोक्षोऽस्तिकिंचन्येनास्तिबंधनम् ॥ किंचन्येचेतरेचैवजंतुर्ज्ञानेनमुच्यते ५० तस्माद्धर्मार्थकामेषुतथाराज्यपरिग्रहे ॥ बंधनायतनेष्वेषुविद्ध्यबंधेपदेस्थितम् ५१ राज्यैश्वर्यमयःपाशःस्नेहायतनबंधनः मोक्षाश्मनिशितेनेहच्छिन्नस्त्यागासिनामया ५२ सोऽहमेवंगतोमुक्तोजातास्थस्त्वयिभिक्षुकि ॥ अयथार्थंहितेवर्णवक्ष्यामिशृणुतन्मम ५३ सौकुमार्यंतथारूपंवपुरग्र्यंतथावयः ॥ तवैतानिसमस्तानिनियमश्चेतिसंशयः ५४ यच्चाप्यननुरूपंतेलिंगस्यास्यविचेष्टितम् ॥ मुक्तोऽयंस्यान्नवेतिस्याद्धर्षितोमत्परिग्रहः ५५ नचकामसमायुक्तेयुक्तेऽप्यस्तित्रिदंडके ॥ नरक्षतेत्वयाचेदंनमुक्तस्यास्तिगोपना ५६ मत्पक्षसंश्रयाच्चायंशृणुयस्तेव्यतिक्रमः ॥ आश्रयंत्याःस्वभावेनममपूर्वपरिग्रहम् ५७

तितथा एतेनसंगीबध्यतेत्यागीमुच्यतेइत्युक्तं ५२ त्वयियोगप्रभाववत्यांजातास्थोजातादरःअथापिअयथार्थंयोगाननुरूपंवर्णंत्रिगुणजंरूपं ५३ सौकुमार्यादिकंयोगश्चैकस्यांत्वयिपरस्परविरुद्धंकथंस्यादितिसंशयः । त्वंयोगसिद्धाब्राह्मणीवाआजानसिद्धायक्षराक्षसादियोनिजावेतिभावः ५४ लिंगस्यत्रिदंडधारणस्याननुरूपंशरीरशोषणाद्यभावात् । धर्षितोरूपादिनाऽभिभूतः परिग्रहःसभाविकृतवेषत्वंपराभिभवश्चनमुक्तलक्षणमितिभावः ५५ नंदिन्यादिलीपइवानुग्रहार्थमेवंधर्षितोऽसीत्याशंक्याह नचेति परानुग्रहनिग्रहकामेयुक्तेयोगिनिसंन्यासफलंनास्तीत्यर्थः । मच्छरीरसंगात्वयेदमाश्रमलिंगमपिनरक्ष्यतेअनेनलिंगेनापिमुक्तस्यारूढपतितस्यगोपनानास्ति । विमुक्तस्येतिपाठेज्ञाततत्त्वस्यापिगोपनाव्यभिचारायकृत्यादात्मरक्षाकर्तव्येत्यस्त्येवेत्यर्थः ५६ मत्पक्षेति मच्छरीरप्रवेशात् । नन्वहंस्वासनेएवास्मीत्याशंक्याह आश्रयंत्याइति स्वभावेनस्वेनचित्तेनममपरिग्रहंशरीरमाश्रयंत्याः अतस्त्वयिव्यभिचारदोषइतिभावः ५७



जारिण्योऽपिसंकेतेनैवपरपुरंगृहंवाप्रविशंतितत्रापितवास्माभ्यर्पयंत्याअपराधइत्याह कस्यवेति सन्निकर्षात्संकेतात् ५८ इष्टापत्तिमाशंक्याह वर्णेति ५९ आश्रमसंकरःसंन्यासाद्गार्हस्थ्यंप्रतिपुनरागमनम् ६० संन्यासिवेषेणगार्हस्थ्यार्थमेवाहमागतास्मीतिचेद्गोत्राद्यनिर्णयात्प्रागेतन्नोचितमित्याह सगोत्रामिति ६१। ६२ अविज्ञानेनज्ञानाभावेन मिथ्याज्ञानेनविपर्ययेण ६३ नस्त्रीस्वातंत्र्यमर्हतीतिशास्त्रोल्लंघनरूपेणस्वदोषेण तर्हिशास्त्रातिक्रमणात्तवश्रुतंव्यर्थम् ६४ भावयोश्चित्तयोःस्पर्शःऐक्यंप्रीतिरितियावत् ६५ दोषलिंगमेवाह नमयीति ६६ अर्हतःपूज्यान्उद्दिश्य ६७ अमर्षःपरोत्कर्षासहिष्णु

प्रवेशस्तेकृतःकेनममराष्ट्रेपुरेऽपिवा ॥ कस्यवासन्निकर्षात्त्वंप्रविष्टाहृदयंमम ५८ वर्णप्रवरमुख्याऽसिब्राह्मणीक्षत्रियस्त्वहम् ॥ नावयोरेकयोगोऽस्तिमाकृथावर्णसंकरम् ५९ वर्तसेमोक्षधर्मेणत्वंगार्हस्थ्येऽहमाश्रमे ॥ अयंचापिसुकष्टस्तेद्वितीयोऽऽश्रमसंकरः ६० सगोत्रांवाऽसगोत्रांवानवेदत्वांनवेत्थमाम् ॥ सगोत्रमाविशंत्यास्तेतृतीयोगोत्रसंकरः ६१ अथजीवतितेभर्ताप्रोषितोऽप्यथवाक्वचित् ॥ अगम्यापरभार्येतिचतुर्थोधर्मसंकरः ६२ सात्वमेतान्यकार्याणिकार्यापेक्षाव्यवस्यसि ॥ अविज्ञानेनवायुक्तामिथ्याज्ञानेनवापुनः ६३ अथवाऽपिस्वतंत्राऽसिस्वदोषेणेहकर्हिचित् ॥ यदिकिंचिच्छ्रुतंतेऽस्तिसर्वंकृतमनर्थकम् ६४ इदमन्यत्तृतीयंतेभावस्पर्शविघातकम् ॥ दुष्टायालक्ष्यतेलिंगंविष्ट्रण्वत्याप्रकाशितम् ६५ नमय्येवाभिसंधिस्तेजयैषिण्याजयेकृतः ॥ येयंमत्परिषत्कृत्स्नाजेतुमिच्छसितामपि ६६ तथाऽर्हतस्ततश्चत्वंदृष्टिंस्वांप्रतिमुंचसि ॥ मत्पक्षप्रतिघातायस्वपक्षोद्भावनायच ६७ सास्वेनामर्षजेनत्वमृद्धिमोहेनमोहिता ॥ भूयःसृजसियोगास्त्रंविषामृतमिवैकताम् ६८ इच्छतोरत्रयोलाभःस्त्रीपुंसोरमृतोपमः ॥ अलाभश्चापिरक्तस्यसोऽपिदोषोविषोपमः ६९ माऽस्प्राक्षीःसाधुजानीष्वस्वशास्त्रमनुपालय ॥ कृतेयंहिविजिज्ञासामुक्तोनेतित्वयामम ७० एतत्सर्वंप्रतिच्छन्नंमयिनार्हसिगूहितम् ॥ सायदित्वंस्वकार्येणयद्यन्यस्यमहीपतेः ॥ तत्त्वंसत्रप्रतिच्छन्नामयिनार्हसिगूहितम् ७१ नराजानंनृपागच्छेन्नद्विजातिंकथंचन ॥ नस्त्रियंस्त्रीगुणोपेतांहन्युर्ह्येतेनृपागताः ७२ राज्ञांहिबलमैश्वर्यंब्रह्मब्रह्मविदांबलम् ॥ रूपयौवनसौभाग्यंस्त्रीणांबलमनुत्तमम् ७३ अतएतैर्बलैरेवबलिनःस्वार्थमिच्छता ॥ आर्जवेनाभिगंतव्याविनाशायह्यनार्जवम् ७४ सात्वंजातिंश्रुतंवृत्तंभावंप्रकृतिमात्मनः ॥ कृत्यमागमनेचैववक्तुमर्हसितत्त्वतः ७५ ॥ भीष्मउवाच ॥ इत्येतैरसुखैर्वाक्यैरयुक्तैरसमंजसैः ॥ प्रत्यादिष्टानरेंद्रेणसुलभानव्यकंपत ७६ उक्तवाक्येतुनृपतौसुलभाचारुदर्शना ॥ ततश्चारुतरंवाक्यंप्रचक्रामाथभाषितुम् ७७ ॥ सुलभोवाच ॥ नवभिर्नवभिश्चैवदोषैर्वाग्बुद्धिदूषणैः ॥ अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ७८

त्वंतज्जेन योगात्परबुद्धेःसंबंधान् ६८ विषामृतशब्दौव्याचष्टे इच्छतोरिति रक्तायास्तवरक्तस्यपुंसोऽलाभात् तादृशयोर्योगोविषामृतमित्यर्थः ६९ स्वशास्त्रंसंन्यासिशास्त्रं ७० सत्रप्रतिच्छन्नावेषांतरेणगुप्ता ७१ । ७२ । ७३ । ७४ । ७५ प्रत्यादिष्टातिरस्कृता ७६ । ७७ नवभिर्वाग्दूषणैर्गुर्वक्षरसंयुक्तत्वादिभिर्वक्ष्यमाणैः । बुद्धिदूषणैश्चनवभिःकामादिभिर्वक्ष्यमाणैरेव । अष्टादशगुणाःनवैववाग्दूषणादिविपर्यासेनमधुराक्षरत्वादयोगुणाः । नवदोषाअपिगुणत्वेनयत्रोच्यंतेतेदोषगुणाश्चनवइत्येवमष्टादशगुणान्वितंवाक्यमित्युत्तरेणान्वयः ७८

सौक्ष्म्यंसंशयस्यविषयीभूतंपदादि संदिग्धार्थत्वमित्यर्थः । सांख्यंपूर्वपक्षेसिद्धांतेचगुणदोषसंख्यानं । क्रमःसंख्यातानांगुणदोषाणांबलाबलविचारणं । विनिर्णयःसिद्धांतः । प्रयोजनमनुष्ठानं । एतानिपंचसमुचितानिवाक्यंशब्दाख्यंप्रमाणमित्यर्थः ७९ स्वलक्षणंव्यावर्तकंधर्मवचनं तचविषयभेदाचतुर्धा पदतोवाक्यतः पदार्थतोवाक्यार्थतइति । एतेषामुदाहरणान्यनुपदमेववक्ष्यंते ८० ज्ञानमिति यत्रविषयवाक्येज्ञेयेषुवाक्यप्रमेयतयोपस्थितेषुभिन्नेष्वनेकेष्वर्थेषुसत्सुयदाज्ञानंबुद्धिर्भेदेननिर्णयमप्राप्नुवतीअधिवासिनीअनेककोटिस्पर्शिनीवर्ततेतत्सौक्ष्म्यंवाक्यस्यदुर्ज्ञेयत्वमित्युच्यते ८१ कचित्पूर्वपक्षेसिद्धांतेवासंमतंकंचिदनियतमर्थम् ८२ इदमिति संख्यातानांगुणानांदोषाणांचमध्येइदंपूर्वंवक्तव्यमिदंपश्चाद्विवक्षितमितिबलाबलविचारक्रमः ८३ वाक्यांतेवाक्यार्थविचारांते प्रोच्यतेप्रकर्षेणयुक्तिमत्तयाउच्यतेसनिर्णयः ८४ प्रयोजनंलक्षयति इच्छेति तत्रइच्छाप्रभवंदुःखंयत्रविषयेजायतेइदमवश्यंकर्तव्यमित्यौत्सुक्यंद्वेषभवंदुःखमिदमवश्यंत्याज्यमित्यसत्यत्वं । तत्रयाप्रवृत्तिरूपानिवृत्तिरूपावावृत्तिःसाप्रयोजनंनाम ८५ एकार्थसमवेतान्येकस्मिन्नर्थेपर्यवसितानि वाक्यमितिपंचांगंवाक्यंममवचनान्निश्चिनु सौक्ष्म्यादीनामुदाहरणानितु तत्रपदतःसौक्ष्म्यादेरुदाहरणंवायव्यंश्वेतमालभेतभूतिकामइतिविधायाम्नायतेवायुर्वैक्षेपिष्ठादेवतावायुमेवस्वेनभागधेयेनोपधावतिसएवैनंभूतिंगमयतीतिकिंवायुर्वाइत्यादीनिपदानिसमिधोयजतितनूनपातंजयतीत्यादिपदकदंबवत्कंचिदर्थंविधायप्रधानवाक्येनएकवाक्यतांप्रतिपद्यंतेउतसंभूयप्राशस्त्यमात्रंचेतालंभस्यार्थंलक्षयंति एतत्सौक्ष्म्यं अविशिष्टस्तुवाक्यार्थइतिन्यायेनतेषांप्रतीयमानस्यार्थस्यापलपितुमशक्यत्वात्समिदादिवाक्यवत्स्वार्थपर्यव

सौक्ष्म्यंसांख्यक्रमौचोभौनिर्णयःसप्रयोजनः ॥ पंचैतान्यर्थजातानिवाक्यमित्युच्यतेनृप ७९ एषामेकैकशोऽर्थानांसौक्ष्म्यादीनांस्वलक्षणम् ॥ शृणुसंसार्यमाणानांपदार्थपदवाक्यतः ८० ज्ञानंज्ञेयेषुभिन्नेषुयदाभेदेनवर्तते ॥ यत्राधिवासिनीबुद्धिस्तत्सौक्ष्म्यमितिवर्तते ८१ दोषाणांचगुणानांचप्रमाणंप्रविभागतः ॥ कंचिदर्थमभिप्रेत्यसासंख्येत्युपधार्यताम् ८२ इदंपूर्वमिदंपश्चाद्वक्तव्यंयद्विवक्षितम् ॥ क्रमयोगंतमप्याहुर्वाक्यंवाक्यविदोजनाः ८३ धर्मकामार्थमोक्षेषुप्रतिज्ञायविशेषतः ॥ इदंतदितिवाक्यांतेप्रोच्यतेसविनिर्णयः ८४ इच्छाद्वेषभवैर्दुःखैःप्रकर्षोयत्रजायते ॥ तत्रयान्नृपतेवृत्तिस्तत्प्रयोजनमिष्यते ८५ तान्येतानियथोक्तानिसौक्ष्म्यादीनिजनाधिप ॥ एकार्थसमवेतानिवाक्यंममनिशामय ८६

सानंप्राप्यैवमहावाक्येनैकवाक्यतांलभंतेइतिपूर्वपक्षेगुणः सिद्धांतेदोषः । तथासर्वस्याम्नायस्यप्रयोजनवदर्थपर्यवसायित्वात्वायोःशीघ्रगामित्वादिप्रतिपादनेशास्त्रस्यप्रवृत्तिनिवृत्तिकरत्वायोगात्आनर्थक्यलक्षणाप्रामाण्याद्वरंविधेयार्थप्राशस्त्यसमर्पणेनार्थवत्त्वमितिसिद्धांतेगुणाःपूर्वपक्षेदोषाश्च । एतत्सांख्यं अत्रैवक्रमाख्यंपूर्वोत्तरपक्षयोर्बलाबलमुन्नेयं पूर्वपक्षेआनर्थक्यात्दुर्बलत्वं सिद्धांतेऽर्थवत्त्वात्प्राबल्यमितिइतएवनिर्णयः । अर्थवादानांप्रयाजादिवाक्यानामिवप्रधानविधिनावाक्यैकवाक्यतानास्तिअपितुपदैकवाक्यतैवेतितस्माद्वायुर्वाइत्यादिकमेवपदमविधायकं अतःप्रशीघ्रगामिदेवताकंकर्मशीघ्रफलदमितिस्तुतिःसिद्धांतेफलं । पूर्वपक्षेतुयतोवायुःक्षेपिष्ठाऽतिशयेनक्षिप्रगामिनीदेवतेतिस्वयमपिधावनंकर्तव्यमिति । इदंपदैकत्वानेकत्वेसौक्ष्म्यादिकंवाक्यैकत्वानेकत्वेतुवैश्वानरंद्वादशकपालंनिर्वपेत्पुत्रेजातेयदष्टाकपालोभवत्यष्टाक्षरागायत्रीत्यादौसंशयः । किंद्वादशकपालेएवअष्टाकपालत्वादिर्वैकल्पिकोगुणविधिरुततस्यैवावयवद्वारास्तुतिरिति तत्रउत्पत्तिशिष्टद्वादशत्वावरुद्धेउत्पन्नशिष्टानामष्टत्वादीनांनिवेशायोगात्संभवत्येकवाक्यत्वेवाक्यभेदोहिनेष्यतइतिन्यायेनपुत्रेजातेइत्युपक्रम्ययस्मिन्जातएतामिष्टिंनिर्वपतीत्युपसंहारेणउपक्रमोपसंहारयोरैकरूप्यान्नात्रवाक्यभेदेदोषापत्त्यागुणविधानंकर्तुंशक्यमिति । अत्रापिपूर्ववत्सौक्ष्म्यादिकंद्रष्टव्यंतथापदार्थेसौक्ष्म्यादि । 'इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः ॥ मनसस्तुपराबुद्धिर्बुद्धेरात्मामहान्परः ॥ महतःपरमव्यक्तं'इत्यत्राव्यक्तपदेनसांख्याभिमतंप्रधानंग्राह्यंरूढेरितिपूर्वःपक्षः । 'आत्मानंरथिनंविद्धिशरीरंरथमेवतु ॥ बुद्धिंतुसारथिंविद्धिमनःप्रग्रहमेवच । इंद्रियाणिहयानाहुर्विषयांस्तेषुगोचरान्'इति–



रथरूपककल्पनायांयेश्रूयंतेइंद्रियादयस्तएवक्रमव्युत्क्रमाभ्यांप्रत्यभिज्ञायंतेऽतःपरिशेषादव्यक्तशब्देनसूक्ष्मंशरीरमितिसिद्धांतः । तथावाक्यार्थेऽपिसौक्ष्म्यादिकंमिंद्रेणप्रतर्दनंप्रत्युच्यतेप्राणोऽस्मिप्रज्ञात्मातंमामायुरमृतमित्युपास्वेतिकिमिहवक्ताइंद्रएवोपास्यःउतमुख्यःप्राणःश्रौतार्थलाभात् उतप्रज्ञात्मेतिविशेषणाज्जीवः । उततद्यथापुरेषुनिमिरर्पितोनाभावराअर्पिताएवमस्मिन्प्राणेसर्वंसमर्पितमितिसर्वलयाधिष्ठानत्वोक्तेर्ब्रह्मवातत्रअन्यतमपरत्वमितिपूर्वःपक्षः । वाक्यभेदस्यायुक्तत्वेनैकस्मिन्नर्थेवाक्यपर्यवसानावश्यकत्वाद्धिततमंब्रूहीतिप्रक्रमात्ब्रह्मेतरस्यहिततमत्वायोगात् । वक्रात्मोपदेशस्यवामदेववदहंमनुरभवंसूर्यश्चेतिप्रत्यक्तत्त्वानुसंधानपरत्वेब्रह्मपरत्वोपपत्तेः। प्राणादिधर्मवैशिष्ट्येनापिब्रह्मोपास्तिसंभवादुदाहृतोपसंहाराच्चब्रह्मपरत्वमितिसिद्धांतइतिदिक् ८६ एवंसौक्ष्म्याद्यंगपंचकंसलक्षणमंगिचवाक्यंसलक्षणमुक्त्वावाक्यगुणानाह उपेतार्थमितित्रिभिः । अत्रालंकारिकैःश्लेषादयःशब्दगुणाश्चतुर्विंशतिःप्रतिपादिताः तेऽत्रशब्दांतरैःसंक्षेपेणचअंतर्भावेणचपंचदशप्रोक्ताः तत्रकेनशब्देनकोगुणउच्यतेकस्मिंश्चकोऽतर्भवतितत्संक्षेपेणप्रकाश्यते तत्रश्लेषादयस्तावद्भोजेनप्रोक्ताः 'श्लेषः १ प्रसादः २ समता ३ माधुर्यं ४ सुकुमारता ५। अर्थव्यक्ति ६ स्तथाकांति ७ रुदारत्व ८ मुदात्तता ९। ओज १० स्तस्थान्यदौर्जित्यं ११ प्रेयान १२ थसुशब्दता १३। तद्वत्समाधिः१४ सौक्ष्म्यम् १५ चगांभीर्य १६ मथविस्तरः१७। संक्षेपः १८ संमितत्वंच १९ भाविकत्वम् २० गतिस्तथा २१। रीति२२ रुक्ति २३ स्तथाप्रौढिः २४'इति 'श्लेषःसाम्यंकांतिरोजऔर्जित्योदार्यरीतयः ॥ गतिश्चांतर्भवत्यष्टौश्लक्ष्णेबंधगुणावने' उपेतार्थंअर्थव्यक्तिःसंपूर्णवाक्यत्वरूपा १ अभिन्नार्थमनानार्थंप्रसिद्धार्थपदत्वंप्रसादाख्यं २ न्यायवृत्तंश्लाघ्यैर्विशेषणैर्योगउदात्तताख्यः ३ नचाधिकंसंक्षिप्तम् ४ नाश्लक्ष्णंश्लेषाद्यष्टगुणयुक्तं ५ नसंदिग्धंविविक्तपदतारूपमाधुर्यवत् ६ एतेषड्वाक्यगुणाः ८७ अतःपरं

उपेतार्थमभिन्नार्थंन्यायवृत्तंनचाधिकम् ॥ नाश्लक्ष्णंनचसंदिग्धंवक्ष्यामिपरमंततः ८७
नगुर्वक्षरसंयुक्तंपराङ्मुखसुखंनच ॥ नानृतंनत्रिवर्गेणविरुद्धंनाप्यसंस्कृतम् ८८
नन्यूनंकष्टशब्दंवाविक्रमाभिहितंनच ॥ नशेषमनुकल्पेननिष्कारणमहेतुकम् ८९

नवपददोषास्तेऽपिविपर्ययेणवाक्यगुणाएवेतिनञ्संबंधाद्बोध्याः नगुर्वक्षरसंयुक्तं अनिष्ठुराक्षरप्रायंसुकुमाराख्यं निष्ठुराक्षरंतु'शुष्कोवृक्षस्तिष्ठत्यग्रे'एवमादि १ पराङ्मुखानांसुखकरंग्राम्यं अश्लीलामंगलघृणावदर्थंग्राम्यं इदंचनतथा अंतर्मुखग्राह्यंसूक्ष्मार्थमित्यर्थः यथोक्तं 'अंतःसंजल्परूपत्वंशब्दानांसौक्ष्म्यमुच्यते' उदाहृतंच'केवलंदधतिकर्तृवाचिनःप्रत्ययानिहनजातुकर्मणि । धावतःसृजतिसंहृशास्तयःस्तौतिरत्रविपरीतकारकः'इति २ अनृतंपुराणाद्यमूलकंमेघसंदेशादिवत् ततोऽन्यत्श्रुत्यादिमूलकतयाप्रौढोक्तिरूपम् ३ त्रिवर्गेणविरुद्धं असावनुपनीतोऽपिवेदानधिजगेगुरोरितिधर्मशास्त्रविरुद्धं कामोपभोगसाकल्यफलोराज्ञांमहीजयइत्यर्थशास्त्रविरुद्धं 'तवोत्तरोष्ठेविंबोष्ठिदशनांकोविराजते'इतिकर्मशास्त्रविरुद्धंच तदन्यत् श्रेयस्करंप्रेयःसंज्ञं असंस्कृतंदेश्यं तद्यथा 'गल्लोलावण्यतल्लोतेलडहोमडहोभुजो॥ नेत्रेसेवाहृक्कंदोद्दमोट्टायितसखेसखि' । तदन्यत् उक्तिसंज्ञंविशिष्टभणितिरूपं ८८ न्यूनमसमर्थं 'असंगतंपदंयत्तदसमर्थमितिस्मृतं' इदंतदन्यत्समर्थंविस्तररूपं ६ कष्टशब्दंछंदोव्याकरणदोषयुक्तं तदन्यत्सुशब्दतारूपं ७ विक्रमाभिहितंउदारत्वं नृत्यद्भिरिवपदैर्वाक्यरचनंगुणः नचेतिचकारात्पूर्वनकारानुवृत्तिः नकारद्वयेनौदार्याधिक्यंसूचितं तदन्यत्क्लिष्टं यथोक्तं 'दूरंयस्यार्थसंवित्तिःक्लिष्टंनेष्टंहितत्सतां'उदाहृतंच 'विजितात्मभवद्वेषी'इत्यादि विनागरुत्मताजितइंद्रस्तस्यात्मभवोऽर्जुनस्तस्यद्वेषीकर्णइत्यर्थः ८ नशेषं शेषःपदांतराध्याहारःअनुकल्पोलक्षणातयायुक्तत्वं निष्कारणंनिष्प्रयोजनं अहेतुकंयुक्तिशून्यं अध्याहारलक्षणाफलयुतयपेक्षमित्यर्थः यथाइपेत्वेतिवाक्यंछिनद्मीत्यध्याहारसापेक्षं मित्रंप्रतिविषंभुंक्ष्वेतिवचनंशत्रुगृहेभोजननिषेधलक्षणार्थं एतच 'समाधिः–

–सोऽन्यधर्माणांयदन्यत्रप्रकल्पनं'इत्यालंकारिकाणांगुणः तथापिवेदार्थमर्यादाविदांमतेऽयंदोषः प्रयोजनहीनंराजासौगच्छतीत्यादिनिर्युक्तिकं 'गौरपत्यंबलीवर्दस्तृणमत्तिमुखेनसः'इति एतेदोषै हीनंभाविकत्वादिगुणांतरयुक्तं तएतेनवशब्दानांगुणानवदोषाश्रुतंत्रेणैवनञ्वद्भिःपदैर्दर्शिताः यद्यपिउपेतार्थमितिश्लोकेऽपिनञ्वंतिपदानिवर्ततेतथापितल्लक्ष्याणांदोषाणामेष्वेवांतर्भावान्नतत्रापित यर्थत्वंकल्पितं तथानिष्ठुराक्षरत्वादीनांदोषाणामपिगुणत्वंकैश्चिन्नेमितेनोच्यते यथा 'यच्छ्रुतेर्विरसंकष्टंतस्यदुर्वचकादिषु । गुणत्वमनुमन्यंतेसानुप्रासस्यसूरयः'इति 'भ्राष्ट्रास्त्वाष्ट्रारिराष्ट्रेनभ्राष्ट्रे नार्दष्ट्रिणोजनाः । धार्तराष्ट्राःसुराष्ट्रेनमहाराष्ट्रेचनोष्ट्रिणः'इत्यादिग्रंथांतरेद्रष्टव्यं मोक्षकथाव्यवधायकत्वाचनैतत्प्रपंचितं तदेतदभिप्रेत्योक्तंनववाग्दोषाअष्टादशवाचोगुणाइति ८९ नवबुद्धिदोषाना ह कामादिति अनार्यकात्दर्पात् न्हीतःत्रपातः अनुक्रोशतःकृपातः ९० वाक्यगुणानुक्त्वावक्तृगुणानाह वक्तेति अविकलमव्यग्रंयथास्यात्तथाविवक्षायांतत्त्वनिर्णयार्थायांकथायांसमंसिद्धांताविरोधेनयदाएतिप्रविशतितदासःविवक्षितार्थःप्रकाशते ननूभयोरप्युत्पथगामित्वे ९१ तयोरेवस्वस्वपक्षाग्रहेऽर्थनिर्णयोनभवतीत्याह वक्तव्येइति स्वार्थस्त्वेनपरिगृहीतमर्थंपरार्थंमुत्कृष्टमर्थं यदारो

कामात्क्रोधाद्भयाल्लोभाद्दैन्याच्चानार्यकात्तथा ॥ ह्रीतोनक्रोशतोमानान्नवक्ष्यामिकथंचन ९० वक्ताश्रोताचवाक्यंचयदात्वविकलंनृप ॥ सममेतिविवक्षायांतदासोर्थःप्रकाशते ९१ वक्तव्येतुयदावक्ताश्रोतारमवमन्यते ॥ स्वार्थमाहपरार्थंतत्तदावाक्यंनरोहति ९२ अथयःस्वार्थमुत्सृज्यपरार्थंप्राहमानवः ॥ विशंकाजायतेतस्मिन्वाक्यंतदपिदोषवत् ९३ यस्तुवक्ताद्वयोरर्थमविरुद्धंप्रभाषते ॥ श्रोतुश्चैवात्मनश्चैवसवक्तानेतरोनृप ९४ तदर्थवदिदंवाक्यंराजन्नेकमनाःशृणु ॥ यथाजतुचकाष्ठंचपांसवश्चोदबिंदवः ९५ संश्लिष्टानितथाराजन्प्राणिनामिहसंभवः ॥ शब्दःस्पर्शोरसोरूपंगंधःपंचेंद्रियाणिच ९६ पृथगात्मानआत्मानंसंश्लिष्टाजतुकाष्ठवत् ॥ नचैषांचोदनाकाचिदस्तीत्येषविनिश्चयः ९७ एकैकस्येहविज्ञानंनास्त्यात्मनितथापरे ॥ नवेदचक्षुश्चक्षुष्ट्वंश्रोत्रंनात्मनिवर्तते ९८ तथैवव्यभिचारेणनवर्तंतेपरस्परम् ॥ प्रश्लिष्टंचनजानंतियथाऽऽपइवपांसवः ९९ बाह्यानन्यानपेक्षंतेगुणांस्तानपिमेशृणु ॥ रूपंचक्षुःप्रकाशश्चदर्शनेहेतवस्त्रयः १००

इतिहृद्यारूढंभवति ९२ विशंकाभ्रमविप्रलंभकत्वादिबुद्धिरूपा ९३ । ९४ जडाद्देहेंद्रियादेर्वाममेववदात्मानंपृथक्पश्यंतीसुलभाप्राणिनांचिदचित्संघातात्मनांजीवानांसंबंधीकेवलश्चिदंशआकाशवत्त्वयिमयिचएकोवाङ्मनसातीतश्चेतिनप्रष्टव्यएवमचिदंशोऽपिकाष्ठलोष्ठसमःस्वदेहवत्सुतरांनप्रष्टव्यइत्याह यथेत्यादिना ९५ । ९६ आत्मानंशब्दाद्यात्मकवियदादिसंघातं पृथगात्मानःनानारूपाःसंतः जतुकाष्ठंबालक्रीडनकं यथापृथगात्मनीजतुकाष्ठेसंश्रयतोनचताभ्यामन्यत्तस्यरूपंगृह्यतेतद्वदिहापीत्यर्थः एषांव्यस्तानांसंहतानांवाचोदनाकोसीतिवेदेत्येवंरूपाप्रेरणानास्त्यचेतनत्वादित्याह नचेति ९७ व्यस्तानामचेतनत्वंपरस्परस्वस्वस्यचाज्ञानादित्याह एकैकस्येति आत्मनिवर्तते चक्षुर्वत्स्वस्यरूपंनजानातीत्यर्थः ९८ अज्ञानेहेतुमाह तथेति संघातादन्यस्तत्प्रकाशकोदृष्टोघटादिवसूर्यः नचैतेसंघातात्पृथग्दृश्यंतेऽतोऽप्रकाशात्मत्वादात्मानंपरस्परमन्यंचनप्रकाशयंतीत्यर्थः संभूयाप्येतेनजानंतीत्याह प्रश्लिष्टमिति प्रश्लिष्टंयथास्यात्तथासंश्लेषंप्राप्यापीत्यर्थः ९९ ननुचक्षुरादयोऽपिदेहाश्रिताःसंतोघटादीन्सूर्यादिवत्प्रकाशयंत्येवेत्याह बाह्यानिति यथाचक्षुःस्वापेक्षयाबाह्यमालोकंघटप्रकाशार्थमपेक्षतेनैवंसूर्यइतितस्यैवप्रकाशकत्वंनबाह्यापेक्षस्वचक्षुषइत्यर्थः बाह्यानेवाह रूपमिति यथारूपमालोकश्चतद्वच्चक्षुरपिसहकार्येवनतुप्रकाशकमितिभावः १००



ननुबाह्येत्यप्रयोजकंयथासूर्यश्चक्षुरपेक्षोपिनाप्रकाशकएवंचक्षुःसूर्यापेक्षमपीत्याशंक्याह ज्ञानेति ज्ञानंप्रकाशोज्ञेयंरूपादितयोरंतरालेचक्षुरपेक्षयाऽपरोमनोनामगुणोस्ति १ तत्सत्त्वेमानमाह विचारयतीति निश्चयनिमित्तंचक्षुर्निमीलनेऽपियेनकरणेनायंभोक्तासाध्वसाधुनीविचारयतितन्मनः बाह्यानपेक्षप्रकाशकत्वंतद्दृष्टांतेसूर्येएवास्तिनचक्षुषितस्यसूर्यापेक्षत्वात् नापिमनसितस्यापिघटादौचक्षुराद्यपेक्षत्वात् अतःसुस्थितमिदंस्वप्रकाशत्वलक्षणं अस्यलक्षणस्यबुद्ध्यादिष्वपिसद्भावंवारयितुंतेषामपिबाह्यापेक्षत्वमाह द्वादशस्त्वित्यादिना २ संशयपूर्वेषुबुद्धिःस्वकार्येनिश्चयेकर्तव्येस्वस्माद्बाह्यंसंशयात्मकंमनोऽपेक्षतेइत्यर्थः व्यवस्यतिनिश्चिनोति भूतेंद्रियमनांस्यपेक्ष्यबुद्धेर्द्वादशत्वं बुद्धिद्रव्यस्योपादानंसत्त्वं तस्यरजस्तमोभ्यामत्यंताभिभवेमध्यत्वंकिंचिदभिभवेमहत्त्वं तस्याल्पत्वादिकंदेहात्मकर्त्रात्मासंगचिदात्मादिनिश्चयद्वाराऽनुमीयतेज्ञायते अक्षरार्थःस्पष्टः ३ अहंकर्तेति येनसत्त्वेनाहंकर्ताममायंनिश्चयइतिमन्यतेसतत्रसत्त्वेचतुर्दशोगुणः सत्त्वमपेक्ष्यबुद्धिनिश्चयप्रकाशकेऽहमर्थेऽपिबाह्यानपेक्षप्रकाशकत्वलक्षणंस्वप्रकाशत्वंनास्तीत्यर्थः ४ कलाःप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवींद्रियंमनोऽन्नंअन्नाद्वीर्यंतपोमंत्राःकर्मलोकेषुनामचेतिश्रुत्युक्ताःषोडशतासांसमूहस्यसामर्थ्यंवासनात्मकंजगदर्दकर्तयेस्ति यथोक्तंवासिष्ठे 'यत्राहंत्वंजगत्तत्रपूर्वमागत्यतिष्ठति । त्रसरेणूदरेऽपींद्रोव्यपश्यद्भुवनत्रयम्'इति । वासनाप्यहंकारद्वारास्वकार्यंजगत्प्रकाश

यथैवात्रतथाऽन्येषुज्ञानज्ञेयेषुहेतवः ॥ ज्ञानज्ञेयांतरेतस्मिन्मनोनामापरोगुणः १ विचारयतियेनायंनिश्चयेसाध्वसाधुनी ॥ द्वादशस्त्वपरस्तत्रबुद्धिर्नामगुणःस्मृतः ॥ येनसंशयपूर्वेषुबोद्धव्येषुव्यवस्यति २ अथद्वादशकेतस्मिन्सत्वंनामापरोगुणः ॥ महासत्वोऽल्पसत्वोवाजंतुर्येनानुमीयते ३ अहंकर्तेतिचाप्यन्योगुणस्तत्रचतुर्दशः ॥ ममायमितियेनायंमन्यतेनममेतिच ४ अथपंचदशोराजन्गुणस्तत्रापरःस्मृतः ॥ पृथक्कलासमूहस्यसामर्थ्यंतदिहोच्यते ५ गुणस्त्वेवापरस्तत्रसंघातइवषोडशः ॥ प्रकृतिर्व्यक्तिरित्येतौगुणौयस्मिन्समाश्रितौ ६ सुखासुखेजरामृत्यूलाभालाभौप्रियाप्रिये ॥ इतिचैकोनविंशोऽयंद्वंद्वयोगइतिस्मृतः ७

यतीतिनस्वप्रकाश्येत्यर्थः ५ गुणइति तत्रवासनायांतदुपादानभूतोगुणः त्रिगुणात्मत्वात्संघातइवजगदंकुरबीजभूतोऽविद्यासंज्ञकोगुणःषोडशोऽस्ति 'सुषुप्ताख्यंतमोज्ञानंयद्बीजंस्वप्रबोधयोः'इति स्मृतेःसोपुप्ताज्ञानस्यसंहतत्वेनाभासमानत्वात्संघातेऽपिलौकिकानुभवापेक्षा संहतत्वविवक्षयाइवशब्दः 'तत्राकस्मात्परित्यक्तपूर्वापरविचारणं । यदादानंपदार्थस्यवासनासाप्रकीर्तिता'इतिवासिष्ठोक्तोक्तलक्षणवासनाद्वारासोपुप्ताविद्याप्यहमर्थंजनयतीतितस्यामपिबाह्यानपेक्षप्रकाशकत्वमस्तीतिनासावपिस्वप्रकाशा तथायस्मिन्षोडशेसौपुप्ताज्ञानेप्रकृतिःमायाव्यक्तिस्तत्प्रकाशइत्येतौद्वौगुणावाश्रितौकल्पितरजतेइवशुक्तीदमंशः मायाशबलेब्रह्मण्येवसौपुप्ताज्ञानमध्यस्तमित्यर्थः अतएवसौपुप्तंप्रकृत्यतदीयपारमार्थिकरूपापेक्षयाएषसर्वेश्वरएषसर्वज्ञइत्यादिमांडूक्येतस्येश्वरत्वंसमाम्नातंविवक्षाभेदाज्जीवमप्येनंवदंति यदाहुर्बाह्याअपिजीवस्यदेहाभिमानलयेसार्वज्ञ्यमस्तीति 'मणिहुतवहतारासोमसूर्यादयोऽपिक्षितिविषयमिहाल्पंबाह्यमुद्योतयंति । सहजलयसमुत्थेद्योतयेज्ज्योतिरंतस्त्रिभुवनमपिसूक्ष्मस्थूलभेदंक्रमेण'इति । एतयोश्चप्रकृतिव्यक्त्योर्गुणत्वंदृश्यत्वादेव तथाहि दर्पणेनमुखमिवप्रकृत्याचिदात्मादृश्यते चंद्रेणराहुरिवचिदात्मनाप्रकृतिःप्रकाश्यते अतोयद्यस्यसाधकंतत्तत्आंतरमित्यनुगमात् एतयोःपरस्परापेक्षयाबाह्यत्वात् स्वस्वकार्यप्रकाशेपरस्परापेक्षत्वाचनद्वयोरपिबाह्यानपेक्षप्रकाशकत्वलक्षणंस्वप्रकाशकत्वमस्तीतिप्रकृतेर्निष्कृष्टश्चेतनःस्वप्रकाश इतिभावः ६ तत्रप्रकृतिकार्यमाह सुखेति ७

व्यक्तिकार्यमाह ऊर्ध्वमिति कालः अविद्याख्यः षोडशोगुणउक्तः तदुपाधिर्जीवः कालसंज्ञः तस्यसदसद्वासनामयत्वात्कृतत्रेताविकालरूपत्वंप्रागुक्तेनप्रस्मर्तव्यं विंशत्यासंख्यातं ८ महाभूतानि देहारंभकांशव्यतिरिक्तानि सद्भावयोगःइहघटोऽस्तीत्यादिर्व्यपदेशःअसद्भावयोगइहघटोनास्तीत्यादिर्व्यपदेशः यद्वाप्रमाभ्रमविषयौसदसद्भावयोगौज्ञेयौ ९ विधिःवासनाबीजभूतौधर्माधर्मौ शुक्रंवासनोद्बोधकःसंस्कारः बलंवासनाविषयमाप्त्यनुकूलोयत्नः संघातधर्मत्वेनएतेषांपृथग्ग्रहणं ११० विंशतिर्दशचेतित्रिंशत्संघातःशरीरं ११ अस्यत्रिंशकस्योत्पत्तौमतांतराण्याह आव्यक्तमिति अव्यक्तंप्रधानं प्रकृतिमुपादानं कलानांत्रिंशत्संख्यानां कश्चिन्निरीश्वरसांख्यः व्यक्तंपरमाणवः चकारादव्यक्तंकालादृष्टेश्वरादि स्थूलदर्शीकणादादिः १२ अव्यक्तंकापिलाः व्यक्तंचतुर्विधाः परमाणवएवेतिचार्वाकाः द्वयींकाणादाः चतुष्टयींव्यवहारेस्वयमभ्युपगतांजीवेशौस्वस्योपाधियुतौपश्यंतिवृत्त्याविषयीकुर्वंति इदंसर्वमप्यस्माकमध्यात्मविदामविरुद्धं व्यावहारिकेष्वर्थेष्वतात्त्विकेषु

ऊर्ध्वंचैकोनविंशत्याकालोनामापरोगुणः ॥ इतीमंविद्धिविंशत्याभूतानांप्रभवाप्ययम् ८ विंशकश्चैषसंघातोमहाभूतानिपंचच ॥ सदसद्भावयोगौतुगुणावन्यौप्रकाशकौ ९ इत्येवंविंशकश्चैवगुणाःसप्तचयेस्मृताः ॥ विधिःशुक्रंबलंचेतित्रयएतेगुणाःपरे ११० विंशतिर्दशचैवंहिगुणाःसंख्यानतःस्मृताः ॥ समग्रायत्रवर्ततेतच्छरीरमितिस्मृतम् ११ अव्यक्तंप्रकृतिंत्वासांकलानांकश्चिदिच्छति ॥ व्यक्तंचासांतथाचान्यःस्थूलदर्शीप्रपश्यति १२ अव्यक्तंयदिवाव्यक्तंद्वयीमथचतुष्टयीम् ॥ प्रकृतिंसर्वभूतानांपश्यंत्यध्यात्मचिंतकाः १३ येयंप्रकृतिरव्यक्ताकलाभिर्व्यक्ततांगता ॥ अहंचत्वंचराजेंद्रयेचाप्यन्येशरीरिणः १४ बिंदुन्यासादयोऽवस्थाःशुक्रशोणितसंभवाः ॥ यासामेवनिपातेनकललंनामजायते १५ कललाद्बुद्बुदोत्पत्तिःपेशीचबुद्बुदात्स्मृता ॥ पेश्यास्त्वंगाभिनिर्वृत्तिर्नखरोमाणिचांगतः १६ संपूर्णेनवमेमासिजंतोर्जातस्यमैथिल ॥ जायतेनामरूपत्वंस्त्रीपुमान्वेतिलिंगतः १७ जातमात्रंतुतद्रूपंदृष्ट्वाताम्रनखांगुलि ॥ कौमाररूपमापन्नंरूपतोनोपलभ्यते १८ कौमाराद्यौवनंचापिस्थाविर्यंचापियौवनात् ॥ अनेनक्रमयोगेनपूर्वंपूर्वंनलभ्यते १९ कलानांपृथगर्थानांप्रतिभेदःक्षणेक्षणे ॥ वर्ततेसर्वभूतेषुसौक्ष्म्यात्तुनविभाव्यते १२० नचैषामप्ययोराजन्लक्ष्यतेप्रभवोनच ॥ अवस्थायामवस्थायांदीपस्येवार्चिषोगतिः २१ तस्याप्येवंप्रभावस्यसदश्वस्येवधावतः ॥ अजस्रंसर्वलोकस्यकःकुतोवानवाकुतः २२

नातीवाभिनिवेष्टव्यमित्याशयः ११३ क्वतर्ह्यभिनिवेष्टव्यमतआह येयमिति इयमितिप्रत्यक्त्वेनाभिनीयदर्शयति प्रकृतिरधिष्ठानमात्रत्वेनोपादानं अव्यक्तात्रिंशकवद्दृश्यत्वानगृहीता अदृष्टोद्रष्टेत्यादिश्रुतेर्वाङ्मनसातीतत्वात् कलाभिरुक्ताभिरेवत्रिंशत्संख्याभिः इत्थंभावेतृतीया माययाकलात्मनाव्यक्ततांदृश्यतांगतेत्यर्थः याचनिष्कलाबाध्यानपेक्षप्रकाशकतयासूर्यवत्त्रिंशकादन्यास्वयंज्योतिःसैवत्वंचाहंचान्येचस्मः सर्वेषांमप्यनुस्यूतआत्मेत्यर्थः घटमणिकमल्लिकाद्याकाशानामिवोपाधिप्रतिसंधानमंतरेणभेदस्याविभाव्यमानत्वात्सर्वेषामस्माकंतन्मात्रत्वमितिभावः नन्वस्यापिमुकुरमुखवद्बाह्यापेक्षप्रकाशत्वमुक्तं न प्रतिबिंबस्यैवसप्रकाशोनत्वस्येतिदिक् एवंचिदंशाभिप्रायेणकाऽसीत्यादिप्रश्नानुपपत्तिमुक्त्वाजडांशाभिप्रायेणापितामाह बिंद्विति बिंदुन्यासोरेतःसेकस्ततःशुक्रशोणितसंयोगाद्भवंतिताः निपातेनमिश्रणेन कललंपरस्पराविविक्तं १५ । १६ । १७ । १८ । १९ कलानांपरिणामवतीनांपृथगर्थानांरूपादिप्रकाशार्थानांप्रतिभेदोरूपभेदः १२० सौक्ष्म्यादित्येवविवृणोति नचेति २१ एवंपरिणामभेदाद्रूप्यभेदमुपेत्यप्रश्नोत्तरक्षणयोर्देहभेदात्कासिकस्यासीतिप्रश्नस्यानुपपत्तिमुक्त्वादेहस्यानित्यत्वादपितदयोगमाह तस्येति २२

२३ आदित्यात्सूर्यकांतेन मणेर्लोहसंबंधात् वीरुद्भ्योर्मंथनादिना कलानांसमुदयात् इवशब्दोऽनर्थकःपादपूरणार्थः २४ आत्मनीतिसार्धश्लोकः आत्मनिदेहे आत्मानंदेहं आत्मानंनिष्कलं देहात्मवन्निष्कलात्मानमपियद्यसंदिग्धंपश्यसितर्हिअक्लिष्टस्त्वमेकात्म्यविस्वादन्यस्मिन्नपिदेहेनिष्कलमेवकुतोनपश्यसीत्यर्थः 'देहात्मज्ञानवज्ज्ञानंदेहात्मज्ञानबाधकं । ज्ञानंयस्यभवेद्व्रसनेच्छन्नपिमुच्यते'इति देहज्ञानदृष्टांतःशुद्धज्ञानेऽस्तितमज्ञात्वाकेचिदिदमध्यमप्रथमंनपठंति २५ । २६ । २७ कृतवानुचितक्रियावान् भावेनिष्ठा २८ धर्मोर्थःकामइत्यसंकीर्णास्त्रयः धर्मार्थयोर्धर्मकामयोःकामार्थयोश्चेति

कस्येदंकस्यवानेदंकुतोवेदंनवाकुतः ॥ संबंधःकोऽस्तिभूतानांस्वैरप्यवयवैरिह २३ यथाऽऽदित्यान्मणेश्चापिवीरुद्भ्यश्चैवपावकः ॥ जायंत्येवंसमुदयात्कलानामिवजंतवः २४ आत्मन्येवात्मनाऽऽत्मानंयथात्वमनुपश्यसि ॥ एवमेवात्मनाऽऽत्मानंयथात्वमनुपश्यसि ॥ एवमेवात्मनाऽऽत्मानमन्यस्मिन्किंनपश्यसि २५ यद्यात्मनिपरस्मिंश्चसमतामध्यवस्यसि ॥ अथमांकाऽसिकस्येतिकिमर्थमनुपृच्छसि २६ इदंमेस्यादिदंनेतिद्वंद्वैर्मुक्तस्यमैथिल ॥ काऽसिकस्यकुतोवेतिवचनैःकिंप्रयोजनम् २७ रिपौमित्रेऽथमध्यस्थेविजयेसंधिविग्रहे ॥ कृतवान्योमहीपालःकिंतस्मिन्मुक्तलक्षणम् २८ त्रिवर्गेसप्तधाव्यक्तंयोनवेदेहकर्मसु ॥ संगवान्यस्त्रिवर्गेणकिंतस्मिन्मुक्तलक्षणम् २९ प्रियेवाऽप्यप्रियेवाऽपिदुर्बलेबलवत्यपि ॥ यस्यनास्तिसमंचक्षुःकिंतस्मिन्मुक्तलक्षणम् १३० तदयुक्तस्यतेमोक्षेयोऽभिमानोभवेन्नृप ॥ सुहृद्भिःसन्निवार्यस्तेऽविरक्तस्येवभेषजम् ३१ तानितानितुसंचिंत्यसंगस्थानान्यरिंदम ॥ आत्मनात्मनिसंपश्येत्किमन्यन्मुक्तलक्षणम् ३२ इमान्यन्यानिसूक्ष्माणिमोक्षमाश्रित्यकानिचित् ॥ चतुरंगप्रवृत्तानिसंगस्थानानिमेशृणु ३३ यइमांपृथिवींकृत्स्नामेकच्छत्रांप्रशास्तिह ॥ एकएवसवैराजापुरमध्यावसत्युत ३४ तत्पुरेचैकमेवास्यगृहंयदधितिष्ठति ॥ गृहेशयनमप्येकंनिशायांयत्रलीयते ३५ शय्यार्धंतस्यचाप्यत्रस्त्रीपूर्वमधितिष्ठति ॥ तदनेनप्रसंगेनफलेनैवेहयुज्यते ३६ एवमेवोपभोगेषुभोजनाच्छादनेषुच ॥ गुणेषुपरिमेयेषुनिग्रहानुग्रहंप्रति ३७ परतंत्रःसदाराजास्वल्पेप्यपिप्रसज्जते ॥ संधिविग्रहयोगेचकुतोराज्ञःस्वतंत्रता ३८ स्त्रीषुक्रीडाविहारेषुनित्यमस्यास्वतंत्रता ॥ मंत्रेचामात्यसमितौकुतस्तस्यस्वतंत्रता ३९ यदात्वाज्ञापयत्यन्यांस्तत्रास्योक्ताऽस्वतंत्रता ॥ अवशःकार्यतेतत्रतस्मिंस्तस्मिन्क्षणेस्थितः १४० स्वप्नकामोनलभतेस्वप्तुंकार्यार्थिभिर्जनैः ॥ शयनेचाप्यनुज्ञातःसुप्तउत्थाप्यतेऽवशः ४१ स्नाह्यालभपिबप्राशजुहुध्यग्नीन्यजेत्यपि ॥ ब्रवीहिशृणुचापीतिविवशःकार्यतेपरैः ४२

संकीर्णाद्विकास्त्रयः धर्मार्थकामानांत्रिसंकीर्णस्त्रिकःएकइतिसप्तधा त्रिवर्गासक्तोनमुच्यतइत्यर्थः २९ । १३० अविरक्तस्याऽपथ्यशीलस्य ३१ तानीतिसंगस्थानानिरूपादीन्यात्मन्येवसंपश्येत्रतुबहिः आत्मक्रीडआत्मरतिश्चयःसएवमुक्तइत्यर्थः ३२ चतुर्ष्वंगेषुशयनोपभोगभोजनाच्छादनेषुप्रवृत्तानिसंगस्थानानिपृथिव्यादीनि ३३ यदुक्तंप्रवेशस्त्वेकृतःकेनममराज्येपुरेऽपिवेतितत्रतवपुरादिनासंबंधएवनास्तीत्याह यइमामिति । पृथ्वीपतिःपुरेऽस्तीतिपृथ्वीव्यर्थापुरेशोगृहेऽस्तीतिपुरंव्यर्थंगृहेशोऽपिमंचेऽस्तीतिगृहंव्यर्थंमंचस्थोऽप्येकदेशेऽस्तीतितदीयप्रदेशांतरंव्यर्थं अल्पेनैवनिर्वाहसिद्धेरधिकेममतामोहमात्रं यथोक्तं 'गोशतादपिगोक्षीरंप्रस्थंधान्यशतादपि । प्रासादादपिखट्वार्धंशेषाःपरविभूतयः'इति ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२

४३ । ४४ । ४५ । ४६ एवंराज्येदुःखान्युक्त्वायत्तत्रसुखंतत्सर्वेषामप्यस्तीत्याह स्वेस्वेइति ४७ । ४८ राज्याभिमानेतापोऽधिकइत्याह हतइति ४९ अमुक्तोनित्यसंबद्धः १५० । ५१ । ५२ कइति प्राप्यकोऽभियेतनकोऽपीत्यर्थः अतउपशममेवलभेत्प्राप्नुयात् ५३ त्रिदंडविष्टंभोयथान्योन्याश्रयेणतिष्ठत्येवंमित्रादयःसप्त नात्रतेषांप्रधानगुणभावोऽस्तीत्यर्थः ५४ । ५५ तत्रोदयावृद्धिक्षयस्था

अभिगम्याभिगम्यैवंयाचंतेसततंनराः ॥ नचाप्युत्सहतेदातुंवित्तरक्षीमहाजनान् ४३ दानेकोशक्षयोऽप्यस्यवैरंचास्यप्रयच्छतः ॥ क्षणेनास्योपवर्ततेदोषावैराग्य कारकाः ४४ प्राज्ञान्शूरांस्तथैवाढ्यानेकस्थानपिशंकते ॥ भयमप्यभयेराज्ञोयैश्चनित्यमुपास्यते ४५ तथाचैतेप्रदुष्यंतिराजन्येकीर्तितामया ॥ तथैवास्यभ यंतेभ्योजायतेपश्ययाहशम् ४६ सर्वःस्वेस्वेगृहेराजासर्वःस्वेस्वेगृहेगृही ॥ निग्रहानुग्रहान्कुर्वंस्तुल्योजनकराजभिः ४७ पुत्रादारास्तथैवात्माकोशोमित्रा णिसंचयाः ॥ परैःसाधारणाह्येतेतैस्तैरेवास्यहेतुभिः ४८ हतोदेशःपुरंदग्धंप्रधानःकुंजरोमृतः ॥ लोकसाधारणेष्वेषुमिथ्याज्ञानेनतप्यते ४९ अमुक्तोमानसै र्दुःखैरिच्छाद्वेषभयोद्भवैः ॥ शिरोरोगादिभीरोगैस्तथैवाभिनियंद्भिः ५० द्वंद्वैस्तैस्तैस्त्वपहतःसर्वतःपरिशंकितः ॥ बहुप्रत्यर्थिकंराज्यमुपास्तेगणयन्निशाः ५१ तदल्पसुखमत्यर्थंबहुदुःखमसारवत् ॥ तृणाग्निज्वलनप्रख्यंफेनबुद्बुदसन्निभम् ५२ कोराज्यमभिपद्येतप्राप्यचोपशमंलभेत् ॥ ममेदमितियच्चेदंपुरंराष्ट्रंचम न्यसे ५३ बलंकोशममात्यांश्चकस्यैतानिनवानृप ॥ मित्रामात्यपुरंराष्ट्रंदंडःकोशोमहीपतिः ५४ सप्तांगस्यास्यराज्यस्यत्रिदंडस्येवतिष्ठतः ॥ अन्योन्यगुण युक्तस्यकःकेनगुणतोऽधिकः ५५ तेषुतेषुहिकालेषुतत्तदंगंविशिष्यते ॥ येनयत्सिध्यतेकार्यंतत्प्राधान्यायकल्पते ५६ सप्तांगश्चैवसंघातस्त्रयश्चान्येत्रपोत्तम ॥ संभूयदशवर्गोऽयंभुंक्तेराज्यंहिराजवत् ॥ यश्चराजामहोत्साहःक्षत्रधर्मरतोभवेत् ५७ सतुष्येद्दशभागेनततस्त्वन्योदशावरैः ॥ नास्त्यसाधारणोराजानास्तिराज्य मराजकम् ५८ राज्येऽसतिकुतोधर्मोधर्मेऽसतिकुतःपरम् ॥ योप्यत्रपरमोधर्मःपवित्रंराजराज्ययोः ५९ पृथिवीदक्षिणायस्यसोऽश्वमेधोनयुज्यते ॥ साऽहमेता निकर्माणिराजदुःखानिमैथिल १६० समर्थाःशतशोवक्तुमथवाऽपिसहस्रशः ॥ स्वदेहेनाभिषंगोमेकुतःपरपरिग्रहे ६१ नमामेवंविधांयुक्तामीदृशंवक्तुमर्हसि ॥ ननुनामत्वयामोक्षःकृत्स्नःपंचशिखाच्छ्रुतः ६२ सोपायःसोपनिषदःसोपासंगःसनिश्चयः ॥ तस्यतेमुक्तसंगस्यपाशानाक्रम्यतिष्ठतः ६३ छत्रादिषुविशेषेषुपुनः संगःकथंनृप ॥ श्रुतंतेनश्रुतंमन्येमृषावाऽपिश्रुतंश्रुतम् ६४ अथवाश्रुतसंकाशंश्रुतमन्यच्छ्रुतंत्वया ॥ अथापीमासुसंज्ञासुलौकिकीषुप्रतिष्ठसे ६५ अभिषंगावरो धाभ्यांबद्धस्त्वंप्राकृतोयथा ॥ सत्त्वेनानुप्रवेशोहियोऽयंत्वयिकृतोमया ६६

नाख्यानीतिशास्त्रोक्ताः ५६ संभूयेति तथाऽचेतनःकोशःस्वपुष्ट्यैमित्रादीन्भुंक्तेएवंमित्रादयोऽपिकोशमितिजडयोरेवोपकार्योपकारकभावोनतुजडाजडयोः ५७ । ५८ असतीतिच्छेदः परंमोक्षसुखं ५९ ।१६० । ६१ ईदृशंसत्वसंबंधेनसंकरकर्तृत्वं ६२ उपायोनिदिध्यासनं उपनिषच्छ्रवणमनने उपासंगोध्यानांगानियमादीनि निश्चयस्तद्धेतुर्ब्रह्मात्मैकत्वानुभवः पाशानाक्रम्यकामादीन्जित्वा ६३ श्रुतंशास्त्रंतेत्वयानश्रुतंनज्ञातं मृषादंभेन ६४ श्रुतसंकाशंशास्त्राभासरूपंश्रुतंशास्त्रंत्वयाश्रुतमाकर्णितं संज्ञासु'वाचारंभणंविकारोनामधेयम्'इतिश्रुतेर्नाममात्रासुसंपत्सु ६५ । ६६



६७ शून्यंबोधशून्यंतवबुद्धिसत्वमितिभावः शून्यागारेवासश्चसंन्यासिनांधर्मइतिनममकश्चिद्दोषोऽस्ति ६८ । ६९ । १७० । ७१ । ७२ । ७३ मोक्षवार्तिकोवार्तामात्राभिज्ञोनतुमुक्तः ७४ मुक्तत्वेहि माकृथावर्णसंकरमित्युक्तिरयुक्तेत्याह नहीति एकत्वंचिदात्मनःपृथक्त्वंपुंप्रकृत्योः भावआत्मा अभावस्तुच्छरूपत्वात्प्रकृतिः अनयोःसमायोगेवर्णसंकरोनत्वस्ति ७५ कथंतर्हिवर्णसंकरोनियतइ त्याशंक्यवर्णाश्रमाभिमानवशादित्याह वर्णाश्रमाइति अपृथक्त्विनः पृथक्त्वंपुंप्रकृत्योर्विवेकस्तदस्यास्तीतिपृथक्त्वीतदन्यस्य अतएवपृथक्त्वेननानात्वेनवर्णाश्रमायस्यभांति दृष्टाअर्थायेनसः

किंतवापकृतंतत्रयदिमुक्तोऽसिसर्वशः ॥ नियमोह्येषुवर्णेषुयतीनांशून्यवासिता ६७ शून्यमाविशयंत्याचमयाकिंकस्यदूषितम् ॥ नपाणिभ्यांनबाहुभ्यांपादोरु भ्यांनचाऽनघ ६८ नगात्रावयवैरन्यैःस्पृशामित्वांनराधिप ॥ कुलेमहतिजातेनह्रीमतादीर्घदर्शिना ॥ नैतत्सदसिवक्तव्यंसद्वाऽसद्वामिथःकृतम् ६९ ब्राह्मणा गुरवश्चेमेतथामान्यागुरूत्तमाः ॥ त्वंचाथगुरुरप्येषामेवमन्योन्यगौरवम् १७० तदेवमनुसंदृश्यवाच्यावाच्यंपरीक्षता ॥ स्त्रीपुंसोःसमवायोऽयंत्वयावाच्यो नसंसदि ७१ यथापुष्करपर्णस्थंजलंतत्पर्णमस्पृशत् ॥ तिष्ठत्यस्पृशतीतद्वत्त्वयिवत्स्यामिमैथिल ७२ यदिचाप्यस्पृशंत्यामेस्पर्शंजानासिकंचन ॥ ज्ञानंकृत मबीजंतेकथंतेनेहभिक्षुणा ७३ सगार्हस्थ्याच्च्युतश्चत्वंमोक्षंचानाप्यदुर्विदम् ॥ उभयोरंतरालेवैवर्तसेमोक्षवार्तिकः ७४ नहिमुक्तस्यमुक्तेनज्ञस्यैकत्वपृथक्त्वयोः ॥ भावाभावसमायोगेजायतेवर्णसंकरः ७५ वर्णाश्रमाःपृथक्त्वेनदृष्टार्थस्यापृथक्त्विनः ॥ नान्यदन्यदितिज्ञात्वानान्यदन्यत्रवर्तते ७६ पाणौकुंडंतथाकुंडेपयः पयसिमक्षिका ॥ आश्रिताश्रययोगेनपृथक्त्वेनाश्रिताःपुनः ७७ नतुकुंडेपयोभावःपयश्चापिनमक्षिका ॥ स्वयमेवाप्नुवंत्येतेभावानतुपराश्रयम् ७८ पृथक्त्वादा श्रमाणांचवर्णान्यत्वेतथैवच ॥ परस्परपृथक्त्वाच्चकथंतेवर्णसंकरः ७९ नास्मिवर्णोत्तमाजात्यानवैश्यानावरातथा ॥ तवराजन्सवर्णाऽस्मिशुद्धयोनिरविप्लुता १८० प्रधानोनामराजर्षिर्व्यक्तंतेश्रोत्रमागतः ॥ कुलेतस्यसमुत्पन्नांसुलभांनाममविद्धिमाम् ८१ द्रोणश्चशतशृंगश्चवक्रद्वारश्चपर्वतः ॥ ममसत्रेषुपूर्वेषांचि तामघवतासह ८२ साऽहंतस्मिन्कुलेजाताभर्तर्यसतिमद्विधे ॥ विनीतामोक्षधर्मेषुचराम्येकामुनिव्रतम् ८३ नास्मिसत्रप्रतिच्छन्नानपरस्वापहारिणी ॥ नधर्मसंकरकरीस्वधर्मेऽस्मिन्धृतव्रता ८४ नास्थिरास्वप्रतिज्ञायांनासमीक्ष्यप्रवादिनी ॥ नासमीक्ष्यागताचेहत्वत्सकाशंजनाधिप ८५ मोक्षेतेभावितांबुद्धिं श्रुत्वाऽहंकुशलैषिणी ॥ तवमोक्षस्यचाप्यस्यजिज्ञासार्थमिहागता ८६

जगतःपृथक्त्वंमन्वानस्यैतद्दृष्टंचाव्यभिचाराद्वर्णसंकरइत्यर्थः यदात्वेवंजानात्यन्यच्छरीरमन्यदात्मानभवतिइतितदाज्ञात्वाएतदेवापरोक्षीकृत्यस्थितायाममाऽन्यत्सत्वमन्यत्रत्वयिनवर्ततइत्यर्थः ७६ पाणिकुंडादयएकदेशस्थाअपिपरस्परंनसंकीर्यंतेकुसरान्नवदेकलोलीभावंनगच्छंत्येवमाश्रमाणांवर्णानांचाऽऽत्मनःसकाशात्तेतवब्रह्मनिष्ठस्यपृथक्त्वात्कथंवर्णसंकरइतिश्लोकत्रयार्थः ७७ । ७८ । ७९ १८० । ८१ द्रोणादयःपर्वताममपूर्वेषांसत्रेषुमघवतासहचिताश्चयनेइष्टकास्थानेनिवेशिताइत्यर्थः ८२ तस्मिन्विख्यातप्रभावेकुले विनीतागुरुभिःशिक्षिता मद्विधेभर्तर्यसत्यप्राप्तेसतिनैष्ठिकंब्रह्म चर्यमेवाश्रित्यसंन्यासंकृतवत्यस्मीत्यर्थः ८३ सत्रप्रतिच्छन्नाकपटसंन्यासिनी ८४ । ८५ । ८६

स्वपक्षपरपक्षयोर्मध्येवर्गस्थास्वपक्षेपक्षपातेनस्थितासतीनाहंब्रवीम्यपितुत्वद्धितार्थंब्रवीमीतिभावः नन्वुज्ञाततत्त्वस्यमेकिंत्वदीयैर्वाक्यैरित्याशंक्याह मुक्तइति नकारोभिन्नक्रमः योनव्यापच्छते मल्लवत्स्वजयार्थंव्यायामंवादश्रमंनकरोतियश्चशांतौब्रह्मणिशाम्यतिसमुक्तोऽतस्तवतत्त्वज्ञस्याप्यादरेणमद्वाक्यश्रवणंयुक्तमितिभावः ८७ स्वस्यग्रामैकरात्रवासित्वंद्योतयति यथेति ८८ । ८९ हेतुमंतियुक्तिमंति अर्थवंतिप्रयोजनवंति नाधिजगौनाधिगतवान् उत्तरंवक्तुंनसमर्थोबभूवेत्यर्थः एतेनगार्हस्थ्येमुक्तिर्दुर्लभाऽतःसंन्यासएवश्रेयानितिसुलभामतमेवसिद्धांतइतिदर्शितं १९० ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥ संन्यासस्यश्रैष्ठ्यमुक्त्वातद्धर्मान्शुकचरितेनैवदर्शयतिप्रश्नोत्तरमुखेन कथमित्यादिना निर्वेदंवैराग्यंसंन्यासेमुख्यंविशेषणं 'यदहरेवविरजेत्तदहरेवप्रव्रजेत'इतिश्रुतेः १ अव्यक्तंकारणं व्यक्तंकार्यं तत्त्वंतयोरनारोपितरूपंब्रह्मतेषांनिश्चयं अजस्यनारायणस्यकृतिर्लीला आकृतिरितिच्छेदेस गुणरूपं अत्रप्रथमस्यप्रश्नस्योत्तरंशुकोत्पत्तिरितरयोरुत्तरंशेषग्रंथइतिविभागः २ स्वाध्यायंपितृपितामहपरंपरयापरिगृहीतंवेदभागमध्याप्यशब्दतोऽर्थतश्चग्राहयित्वातत्रानधिगवान्शाखांतरीयान

नवर्गस्थाब्रवीम्येतत्स्वपक्षपरपक्षयोः ॥ मुक्तोव्यायच्छतेयश्चशांतौयश्चनशाम्यति ८७ यथाशून्येपुरागारेभिक्षुरेकांनिशांवसेत् ॥ तथाऽहंत्वच्छरीरेऽस्मिन्निमांवत्स्यामिशर्वरीम् ८८ साऽहंमानप्रदानेनवागातिथ्येनचार्चिता ॥ सुप्तासुशरणंप्रीताश्वोगमिष्यामिमैथिल ८९ ॥ भीष्मउवाच ॥ इत्येतानिसवाक्यानिहेतुमंत्यर्थवंतिच ॥ श्रुत्वानाधिजगौराजाकिंचिदन्यदतःपरम् १९० ॥ इतिश्रीमहाभारते शांति०मो०प० सुलभाजनकसंवादे विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥ ॥ युधिष्ठिरउवाच ॥ कथंनिर्वेदमापन्नःशुकोवैयासकिःपुरा ॥ एतदिच्छाम्यहंश्रोतुंपरंकौतूहलंहिमे १ अव्यक्तव्यक्ततत्त्वानांनिश्चयंबुद्धिनिश्चयम् ॥ वक्तुमर्हसिकौरव्यदेवस्याजस्ययाकृतिः २ ॥ भीष्मउवाच ॥ प्राकृतेनसुवृत्तेनचरंतमकुतोभयम् ॥ अध्याप्यकृत्स्नंस्वाध्यायमन्वशाद्वैपितासुतम् ३ ॥ व्यासउवाच ॥ धर्मंपुत्रनिषेवस्वसुतीक्ष्णौचहिमातपौ ॥ क्षुत्पिपासेचवायुंचजयनित्यंजितेंद्रियः ४ सत्यमार्जवमक्रोधमनसूयांदमंतपः ॥ अहिंसांचानृशंस्यंचविधिवत्परिपालय ५ सत्येतिष्ठरतोधर्मेहित्वासर्वमनार्जवम् ॥ देवतातिथिशेषेणयात्रांप्राणस्यसंलिह ६ फेनमात्रोपमेदेहेजीवेशकुनिवत्स्थिते ॥ अनित्येप्रियसंवासेकथंस्वपिषिपुत्रक ७ अप्रमत्तेषुजाग्रत्सुनित्ययुक्तेषुशत्रुषु ॥ अंतरंलिप्समानेषुबालस्त्वंनावबुध्यसे ८ अहःसुगण्यमानेषुक्षीयमाणेतथाऽऽयुषि ॥ जीवितेलिख्यमानेचकिमुत्थायनधावसि ९ ऐहलौकिकमीहंतेमांसशोणितवर्धनम् ॥ पारलौकिककार्येषुप्रसुप्ताभृशनास्तिकाः १०

र्थानन्वशादनुशासितवान् नचाऽध्याप्येतिशब्दतएवस्वाध्यायग्रहणमुच्यतेनत्वर्थतोऽपि चैत्रोऽयमधीतइत्यक्षरोच्चारणमात्रेऽधीतिशब्दप्रयोगादितिवाच्यं अध्ययनविधेर्वाक्योपक्रमेणोक्तार्थस्यदर्शितत्वात् तथाहि 'यस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोअस्ति । यदी"शृणोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथाम्'इति तस्मात्स्वाध्यायोऽध्येतव्यइतिसुकृतमार्गोज्ञानेवेदस्यश्रवणग्रहणे निष्फलेइत्युक्त्वाविधीयमानस्याध्ययनस्यार्थज्ञानपर्यंततावसीयते अयंमंत्रःप्रागेवव्याख्यातः कान्यमर्थ.तेपाणिनीयमधीतेकाणादमधीतेइत्यर्थग्रहणेऽप्यधीतिप्रयोगदर्शनान्मैत्रोऽयमधीतइत्यक्षरमात्रोच्चारणेसगौणइतिमंतव्यं अन्यथाध्याप्यान्वशादितिक्रममात्रंविधीयेततच्चव्यर्थं आकांक्षितसमर्पणेतुवाक्यस्यार्थवत्त्वमितिदिक् ३ । ४ । ५ संलिहस्पृश स्वादस्वादुविवेकंमाकार्षीरित्यर्थः ६ स्वपिषिपुरुषार्थसाधनेनप्रवर्तसे ७ शत्रुषुकामादिषु अंतरंछिद्रं ८ नधावसिदेवंगुरुंवाशरणंनयासि ९ । १० 

अपथाअपथेन ११ । १२ । १३ आद्यकालिकयावर्तमानमात्रदर्शिन्या १४ । १५ कूलघातंमहानदीपूरं १६ धृतिःप्राणादिवेगधारणं योगइत्यर्थः १७ अमोघास्वायुर्हरणेनसफलासुरात्रिषु धर्मपोतेनधर्मनौकया १८ । १९ संचिन्वानकंधनादिसंचयपरं २० अंधकारेसंसारे दीपोज्ञानं २१ । २२ । २३ । २४ संवास्यइच्छेद्रुंयोग्यः संभ्रास्पइतिपाठेउच्छेत्तुंयोग्यः संध्यांसइतिपाठेसंध्याद्यमंसस्थानीयंयस्यशुक्लकृष्णौपक्षौ २५ चक्षुर्ज्ञानंपरप्रणेतृनेयं अंधवद्यदिनभवसीत्यर्थः परंपरलोकमात्मानंवा २६ परिगतंमाप्तंवेदनाशरीरंयमलोकेयातनाशरीरंयैस्तेतथाभूताभवंतीतिशेषः अधर्मकारणाभिःअधर्मक्रियाभिः २७ एतत्भयंश्रुत्वाभीतंराजानमाश्वासयति राजेति शुभाशुभस्यउत्तमाधमवर्णजातस्यसुकृतेप्रवर्तकत्वात् सुकृतिनांलोकान्ददातिधारयतेप्राप्नोतीत्यर्थः ।

धर्माययेऽभ्यसूयंतिबुद्धिमोहान्वितानराः ॥ अपथागच्छतांतेषामनुयाताऽपिपीड्यते ११ येतुतुष्टाःश्रुतिपरामहात्मानोमहाबलाः ॥ धर्म्यंपंथानमारूढास्तानुपास्वचपृच्छच १२ उपधार्यमतंतेषांबुधानांधर्मदर्शिनाम् ॥ नियच्छपरयाबुद्धयाचित्तमुत्पथगामिवै १३ आद्यकालिकयाबुद्धयादूरेश्वइतिनिर्भयाः ॥ सर्वभक्ष्यानपश्यंतिकर्मभूमिमचेतसः १४ धर्मंनिःश्रेणिमास्थायकिंचिकिंचित्समारुह ॥ कोपकारवदात्मानंवेष्टयन्नावबुध्यसे १५ नास्तिकंभिन्नमर्यादंकूलपातमिवस्थितम् ॥ वामतःकुरुविस्रब्धोनरंवेणुमिवोद्धृतम् १६ कामंक्रोधंचमृत्युंचपंचेंद्रियजलांनदीम् ॥ नावंधृतिमयींकृत्वाजन्मदुर्गाणिसंतर १७ मृत्युनाऽभ्याहतेलोकेजरयापरिपीडिते ॥ अमोघासुपतंतीषुधर्मपोतेनसंतर १८ तिष्ठंतंचशयानंचमृत्युरन्वेषतेयदा ॥ निर्वृतिंलभतेकस्मादकस्मान्मृत्युनाऽशितः १९ संचिन्वानकमेवैनंकामानामवितृप्तकम् ॥ वृकीवोरणमासाद्यमृत्युरादायगच्छति २० क्रमशःसंचितशिखोधर्मबुद्धिमयोमहान् ॥ अंधकारेप्रवेष्टव्यंदीपोयत्नेनधार्यताम् २१ संपतन्देहजालानिकदाचिदिहमानुषे ॥ ब्राह्मण्यंलभतेजंतुस्तत्पुत्रपरिपालय २२ ब्राह्मणस्यतुदेहोऽयंनकामार्थायजायते ॥ इहक्लेशायतपसेप्रेत्यत्वनुपमंसुखम् २३ ब्राह्मण्यंबहुभिरवाप्यतेतपोभिस्तल्लब्ध्वानरतिपरेणहेलितव्यम् ॥ स्वाध्यायेतपसिदमेचनित्ययुक्तःक्षेमार्थीकुशलपरःसदायतस्व २४ अव्यक्तप्रकृतिरयंकलाशरीरःसूक्ष्मात्माक्षणत्रुटिशोनिमेषरोमा ॥ संवास्यःसमबलशुक्लकृष्णनेत्रोमासांगोद्रवतिवयोहयोनराणाम् २५ तंदृष्ट्वाप्रसृतमजस्रमुग्रवेगंगच्छंतंसततमिहान्ववेक्षमाणम् ॥ चक्षुस्तेयदिनपरप्रणेतृनेयंधर्मेतेभवतुमनःपरंनिशाम्य २६ येचात्रप्रचलितधर्मकामवृत्ताःक्रोशंतःसततमनिष्टसंप्रयोगाः ॥ क्लिश्यंतःपरिगतवेदनाशरीराबह्वीभिःसुभृशमधर्मकारणाभिः २७ राजासदाधर्मपरःशुभाशुभस्यगोप्तासमीक्ष्यसुकृतिनांदधातिलोकान् ॥ बहुविधमपिचरतिप्रविशातिसुखमनुपगतंनिरवद्यम् २८ श्वानोभीषणकायाअयोमुखानिवयांसिबलगृध्रपक्षिणांचसंघाः ॥ नरकदनेरुधिरपागुरुवचनतुदमुपरतंविशंत्यसंतः २९ मर्यादानियतास्वयंभुवायइहेमाःप्रभिनत्तिदशगुणामनोनुगत्वात् ॥ निवसतिभृशमसुखंपितृविषयविपिनमवगाह्यसपापः ३०

अनुपगतंनानायोनिसहस्रेष्वप्राप्तंमोक्षं स्वर्गंमोक्षंचसाधुर्नृपःप्राप्नोतीत्यर्थः २८ गुरुद्रोहिणांदुर्गतिमाह श्वानइति नराणांकदनंयत्रतस्मिन्नरके रुधिरपाःकीटाः गुरूणांमातृपितृप्रभृतीनांवचनंनुदति दूरीकरोतितंगुरुवचनतुदंउपरतंमृतं २९ नियताःविहिताः स्वयंभुवावेदेन ब्रह्मस्वयंभुइतिश्रुतेः दशगुणाःदशविधाः शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानिपंचविधिरूपाः अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाख्यानिषेधरूपाश्चपंच पितृविषयेयमलोके विपिनमसिपत्रवनं तदेवावमात्यतत्रैवनिवसति ३०

निकृतिर्नीचकर्म वंचनाचौर्यादि उपनिधिभिश्छलेन ३१ । ३२ नरकादुद्विजेदित्युक्त्वास्वर्गेऽपिनरज्येतेत्याह महापदानीत्यादिना ब्रह्मादीनांस्थानानिदृष्ट्वाकत्थसेधन्योऽहमितिश्लाघसेपरंतु ब्रह्मनावेक्षसे मृत्युकारिकांजरां ३३ प्रयायतांप्रचल्यतांमोक्षमार्गेणमस्थातव्यं सुखस्यप्रमाथिसंविधीयतांप्रयत्यतां ३४ अंतकायअयतिसुखाय दारुणैःकृच्छ्रादितपोभिः ३५ यावत्जी वितहरणंनजायतेततःप्रागेवसांपरायिकंपरलोकहितंकुरुष्वेत्युत्तरेणसंबंधः ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ वृकाःकामादयः ४३ हिरण्मयवृक्षदर्शनंमरणचिह्नं ४४ तेत्वांतवमतिंवा ४५

योलुब्धःसुभृशंप्रियानृतश्चमनुष्यःसततनिकृतिवंचनाभिरतिःस्यात् ॥ उपनिधिभिरसुखकृत्सपरमनिरयगोभृशमसुखमनुभवतिदुष्कृतकर्मा ३१ उष्णांवैत रणींमहानदीमवगाढोऽसिपत्रवनभिन्नगात्रः ॥ परशुवनशयोनिपतितोवसतिचमहानिरयेभृशार्तः ३२ महापदानिकत्थसेनचाप्यवेक्षसेपरम् ॥ चिरस्यमृत्युका रिकामनागतांनबुध्यसे ३३ प्रयायतांकिमास्यतेसमुत्थितंमहद्भयम् ॥ अतिप्रमाथिदारुणंसुखस्यसंविधीयताम् ३४ पुरामृतःप्रणीयतेयमस्यराजशासनात् ॥ त्वमंतकायदारुणैःप्रयत्नमार्जवेकुरु ३५ पुरासमूलबांधवंप्रभुर्हरत्यदुःखवित् ॥ तवेहजीवितंयमोनचास्तितस्यवारकः ३६ पुराऽभिवातिमारुतोयमस्ययःपुरः सरः ॥ पुरैकएवनीयसेकुरुष्वसांपरायिकम् ३७ पुरासहिक्कएवतेप्रवातिमारुतोंतकः ॥ पुराचविभ्रमंतितेदिशोमहाभयागमे ३८ श्रुतिश्चसन्निरुध्यतेपुरातवेह पुत्रक ॥ समाकुलस्यगच्छतःसमाधिमुत्तमंकुरु ३९ शुभाशुभेपुराकृतेप्रमादकर्मविप्लुते ॥ स्मरन्पुरानतप्यसेनिधत्स्वकेवलंनिधिम् ४० पुराजराकलेवरंविजर्ज रीकरोतिते ॥ बलांगरूपहारिणीनिधत्स्वकेवलंनिधिम् ४१ पुराशरीरमंतकोभिनत्तिरोगसारथिः ॥ प्रसह्यजीवितक्षयेतपोमहत्समाचर ४२ पुरावृकाभयंकराम नुष्यदेहगोचराः ॥ अभिद्रवंतिसर्वतोयतस्वपुण्यशीलने ४३ पुरांधकारमेककोऽनुपश्यसित्वरस्ववै ॥ पुराहिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि ४४ पुराकुसंग तानितेसुहृन्मुखाश्चशत्रवः ॥ विचालयंतिदर्शनाद्घटस्वपुत्रयत्परम् ४५ धनस्ययस्यराजतोभयंनचास्तिचोरतः ॥ मृतंचयन्नमुंचतिसमर्जयस्वतद्धनम् ४६ नतत्रसंवियुज्यतेस्वकर्मभिःपरस्परम् ॥ यदेवयस्ययौतकंतदेवतत्रसोऽश्नुते ४७ परत्रयेनजीव्यतेतदेवपुत्रदीयताम् ॥ धनंयदक्षरंध्रुवंसमर्जयस्वतत्स्वयम् ४८ नयावदेवपच्यतेमहाजनस्ययावकम् ॥ अपक्वएवयावकेपुराप्रलीयसेत्वरम् ४९ नमातृपुत्रबांधवानसंस्तुतःप्रियोजनः ॥ अनुव्रजंतिसंकटेव्रजंतमेकपातिनम् ५० यदेवकर्मकेवलंपुराकृतंशुभाशुभम् ॥ तदेवपुत्रसार्थिकंभवत्यमुत्रगच्छतः ५१ हिरण्यरत्नसंचयाःशुभाशुभेनसंचिताः ॥ नतस्यदेहसंक्षयेभवंतिकार्यसाधकाः ५२ परत्रगामिकस्यतेकृताकृतस्यकर्मणः ॥ नसाक्षिआत्मनासमोनृणामिहास्तिकश्चन ५३

तद्धनंविद्यां ४६ यौतकंविवाहार्थंधनंदायादाद्यार्थं पाथेयमित्यर्थः ४७ । ४८ यावकेघृतखंडमिश्रेयवपिष्टविकारेत्वरंत्वरायुक्तंयथास्यात्तथाप्रलीयसेम्रियसे भोगान्भुक्त्वामोक्षेयत्नंकरिष्या मीतिनमंतव्यं अप्राप्तएवभोगेमृत्युभयमस्तीतिभावः ४९ । ५० सार्थिकंदेहेंद्रियादिसार्थवाहकं ५१ । ५२ परत्रगामिकस्यगमनशीलस्य साक्षिआत्मनेति इकोऽसवर्णेशाकल्यस्यह्रस्वश्चेतिप्रकृति भावेह्रस्वः साक्षितात्मनेतिपाठःप्रामादिकः मामन्योनजानातीतिभ्रमात्पापंनकर्तव्यमितिभावः ५३



ननुकर्त्रात्मनोतिरिक्तस्यसाक्षिणःसत्त्वेमानंकिमतआह मनुष्येति अमुत्रसाक्षिणिगच्छतीलीयमानस्यकर्तुर्मनुष्यदेहस्यशून्यमिवशून्यकमभावोभवति परदृष्ट्यासन्नपियोगिदृष्ट्यामनुष्यदेहोनष्टोभवती त्यर्थः अत्रविद्वदनुभवंप्रमाणयति प्रविश्येति हार्दाकाशमितिशेषः ५४ साक्ष्यंतराण्याह इहेति ५५ । ५६ तत्रपरलोकमार्गे विरूपाःरौद्राश्चमाक्षिकादंशायस्मिन्अनेकेपरिपंथिनःशत्रवोलोहतुंडाःप क्षिवृकादयोयस्मिन् ५७ । ५८ । ५९ । ६० । ६१ अबुद्धीन्मोहयतीतितथापावकःपुनातिपवित्रीकरोतीतिव्युत्पत्त्यार्धर्मः क्लीबपाठेपावकंसत्कर्म यावकमितिपाठेऽपियावकमिवपाथेयरूपो धर्मएव ६२ । ६३ प्रमादगःप्रमादगृहवासीअंतकः चमूंचमतिभक्षयतीतिचमूरिंद्रियसेनातामप्रमुखामंतकत्वादिदोषेणस्वस्वविषयभोगहीनांयावत्करोति । ततःपुरेवगृहीतंदेहमनतिक्रम्येतियथागृ हीतंदेहमात्रेणेत्यर्थः ६४ यथेति पुरःपश्चाच्चसर्वमात्ममात्रंयथाभवतितथागतिमात्मज्ञानरूपां आत्मनादेहेन परेणतत्संबंधिपुत्रादिना ६५ भयेषुउपस्थितेषुएकपातिनाएकाकिनायत्सांपरायिकं

मनुष्यदेहशून्यकंभवत्यमुत्रगच्छतः ॥ प्रविश्यबुद्धिचक्षुषाप्रदृश्यतेहिसर्वशः ५४ इहाग्निसूर्यवायवःशरीरमाश्रितास्त्रयः ॥ तएवतस्यसाक्षिणोभवंतिधर्मदर्शि नः ५५ अहर्निशेषुसर्वतःस्पृशत्सुसर्वचारिषु ॥ प्रकाशगूढवृत्तिषुस्वधर्ममेवपालय ५६ अनेकपारिपंथिकेविरूपरौद्रमक्षिके ॥ स्वमेवकर्मरक्ष्यतांस्वकर्मतत्रग च्छति ५७ नतत्रसंविभज्यतेस्वकर्मणापरस्परम् ॥ तथाकृतंस्वकर्मजंतदेवभुज्यतेफलम् ५८ यथाऽप्सरोगणाःफलंसुखंमहर्षिभिःसह ॥ तथाऽऽप्नुवंतिकर्मजंविमा नकामगामिनः ५९ यथेहयत्कृतंशुभंविपाप्मभिःकृतात्मभिः ॥ तदाप्नुवंतिमानवास्तथाविशुद्धयोनयः ६० प्रजापतेःसलोकतांबृहस्पतेःशतक्रतोः ॥ व्रजंतितेपरां गतिंगृहस्थधर्मसेतुभिः ६१ सहस्रशोप्यनेकशःप्रवक्तुमुत्सहामते ॥ अबुद्धिमोहनंपुनःप्रभुर्विनायपावकः ६२ गतात्रिरष्टवर्षताध्रुवोसिपंचविंशकः ॥ कुरुष्व धर्मसंचयंवयोहितेऽतिवर्तते ६३ पुराकरोतिसोंतकःप्रमादगोमुखांचमूम् ॥ यथागृहीतमुत्थितस्त्वरस्वधर्मपालने ६४ यथात्वमेवपृष्ठतस्त्वमग्रतोगमिष्यसि ॥ तथागतिंगमिष्यतःकिमात्मनापरेणवा ६५ यदेकपातिनासतांभवत्यमुत्रगच्छताम् ॥ भयेषुसांपरायिकंनिधत्स्वकेवलंनिधिम् ६६ सकूलमूलबांधवंप्रभुर्हरत्यसं गवान् ॥ नसंतियस्यवारकाःकुरुष्वधर्मसंनिधिम् ६७ इदंनिदर्शनंमयातवेहपुत्रसांप्रतम् ॥ स्वदर्शनानुमानतःप्रवर्णितंकुरुष्वतत् ६८ दधातियःस्वकर्मणा ददातियस्यकस्यचित् ॥ अबुद्धिमोहजैर्गुणैःसएकएवयुज्यते ६९ श्रुतंसमस्तमश्नुतेप्रकुर्वतःशुभाःक्रियाः ॥ तदेतदर्थदर्शनंकृतज्ञमर्थसंहितम् ७० निबं धनीरज्जुरेषायाग्रामेवसतोरतिः ॥ छित्वैतांसुकृतोयांतिनैनांछिंदंतिदुष्कृतः ७१ किंतेधनेनकिंबंधुभिस्तेकिंतेपुत्रैःपुत्रकयोमरिष्यसि ॥ आत्मानम न्विच्छगुहांप्रविष्टंपितामहास्तेक्वगताश्चसर्वे ७२

परलोकेहितंतमेवधर्मंज्ञानंवानिधिमिवनिगूह्यनिधत्स्व केवलंशुद्धं निष्कामंनिर्गुणं ६६ कूलमग्रं प्राकूलेषुदर्भेषूपविश्येतिलिंगात् बालवृद्धैर्वयस्यैःसहितंयथास्यात्तथेत्यर्थः ६७ । ६८ यःस्वकर्मणा दधातिआत्मानंदेहंपुष्णाति यस्यकस्यचित्फलस्यकृतेददातिच अबुद्धिरज्ञानंमोहोविपरीतज्ञानंतदुभयजैर्गुणैर्दुःखादिभिः मुच्यतइतिपाठेआत्मानंचित्तंदधातिएकस्मिंस्तत्त्वेधारयति यस्येतियत्किं चिद्ददातिसर्वंत्यजतीत्यर्थः ६९ श्रुतंतत्त्वमस्यादिवाक्यजंज्ञानंकर्तृ समस्तंब्रह्मांडमश्नुतेव्याप्नोति । 'यएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवति'इतिब्रह्मविदःसार्वात्म्यश्रुतेःतदेतत्सार्वात्म्यंसार्वज्ञ्यंचार्थ स्यमोक्षाख्यपरमपुरुषार्थस्यदर्शनं नान्यत् कृतज्ञंकृतज्ञेउपदिष्टमर्थसंहितंपुरुषार्थसंगतंभवतिनतुकृतघ्नादौ सार्वज्ञ्यसार्वात्म्यदाइयंविद्याउत्तमायैवदातव्येत्यर्थः ७० । ७१ । ७२

७३ । ७४ । ७५ । ७६ । ७७ देहभेदेऽपिमरणंनास्तीतिजानतां अनुपालितेशिष्टैराहतेपथिवर्त्तमानानां ७८ । ७९ । ८० नोत्क्रामतिधर्ममितिशेषः ८१ नोपहतेतिनेकथेतिवत्समासः ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ मोक्षदेशिकंमोक्षोपदेष्टारं ९४ पावकस्यधर्मस्याध्ययनं यावकेतिपाठेऽपिसएवार्थः यद्वापावकाध्ययनं



श्वःकार्यमद्यकुर्वीतपूर्वाह्णेचापराह्णिकम् ॥ नहिप्रतीक्षतेमृत्युःकृतंवाऽस्यनवाकृतम् ७३ अनुगम्यविनाशांतेनिवर्त्ततेहबांधवाः ॥ अग्नौप्रक्षिप्यपुरुषंज्ञातयःसुहृदस्त
था ७४ नास्तिकान्निरनुक्रोशान्नरान्पापमतेस्थितान् ॥ वामतःकुरुविस्रब्धंपरंप्रेप्सुरतंद्रितः ७५ एवमभ्याहतेलोकेकालेनोपनिपीडिते ॥ सुमहद्धैर्यमालंब्यध
र्मंसर्वात्मनाकुरु ७६ अथेमंदर्शनोपायंसम्यग्योवेत्तिमानवः ॥ सम्यक्स्वधर्मंकृत्वेहपरत्रसुखमश्नुते ७७ नदेहभेदेमरणंविजानतांनचप्रणाशःस्वनुपालितेपथि ॥
धर्मंहियोवर्धयतेसपंडितोयएवधर्माच्च्यवतेसमुह्यति ७८ प्रयुक्तयोःकर्मपथिस्वकर्मणोःफलंप्रयोक्तालभतेयथाकृतम् ॥ निहीनकर्मानिरयंप्रपद्यतेत्रिविष्टपंगच्छ
तिधर्मपारगः ७९ सोपानभूतंस्वर्गस्यमानुष्यंप्राप्यदुर्लभम् ॥ तथाऽऽत्मानंसमादध्याद्भ्रश्यतेनपुनर्यथा ८० यस्यनोत्क्रामतिमतिःस्वर्गमार्गानुसारिणी ॥
तमाहुःपुण्यकर्माणमशोच्यंपुत्रबांधवैः ८१ यस्यनोपहताबुद्धिर्निश्चयेह्यवलंबते ॥ स्वर्गेकृतावकाशस्यनास्तितस्यमहद्भयम् ८२ तपोवनेषुयेजातास्तत्रैव
निधनंगताः ॥ तेषामल्पतरोधर्मःकामभोगानजानताम् ८३ यस्तुभोगान्परित्यज्यशरीरेणतपश्चरेत् ॥ नतेनकिंचिन्नप्राप्तंतन्मेबहुमतंफलम् ८४ मातापि
तृसहस्राणिपुत्रदारशतानिच ॥ अनागतान्यतीतानिकस्यतेकस्यवावयम् ८५ अहमेकोनमेकश्चिन्नाहमन्यस्यकस्यचित् ॥ नतंपश्यामियस्याहंतन्नपश्यामियोमम
८६ नतेषांभवताकार्यंनकार्यंतववैरपि ॥ स्वकृतैस्तानिजातानिभवांश्चैवगमिष्यति ८७ इहलोकेहिधनिनांस्वजनःस्वजनायते ॥ स्वजनस्तुदरिद्राणांजीवतामपि
नश्यति ८८ संचिनोत्यशुभंकर्मकलत्रापेक्षयानरः ॥ ततःक्लेशमवाप्नोतिपरत्रेहतथैवच ८९ पश्यतिछिन्नभूतंहिजीवलोकंस्वकर्मणा ॥ तत्कुरुष्वतथापुत्रकृत्स्नंयत्समु
दाहृतम् ९० तदेतत्संप्रदृश्यैवकर्मभूमिंप्रपश्यतः ॥ शुभान्याचरितव्यानिपरलोकमभीप्सता ९१ मासर्तुसंज्ञापरिवर्तकेनसूर्याग्निनारात्रिदिवेंधनेन ॥ स्वकर्मनि
ष्ठाफलसाक्षिकेनभूतानिकालःपचतिप्रसह्य ९२ धनेनकिंयन्नददातिनाश्नुतेबलेनकिंयेनरिपुंनबाधते ॥ श्रुतेनकिंयेननधर्ममाचरेत्किमात्मनायोनजितेंद्रियोवशी ९३
॥ भीष्मउवाच ॥ इदंद्वैपायनवचोहितमुक्तंनिशम्यतु ॥ शुकोगतःपरित्यज्यपितरंमोक्षदैशिकम् ९४ ॥ इतिश्री०शां०मोक्ष०पावकाध्ययनंनामएकविंशत्यधिक
त्रिशततमोऽध्यायः ॥ ३२१ ॥ युधिष्ठिरउवाच ॥ यद्यस्तिदत्तमिष्टंवातपस्तप्तंतथैवच ॥ गुरूणांवापिशुश्रूषातन्मेब्रूहिपितामह १ ॥ भीष्मउवाच ॥ आत्मनानर्थ
युक्तेनपापेनिविशतेमनः ॥ सकर्मकलुषंकृत्वाक्लेशेमहतिधीयते २ दुर्भिक्षादेवदुर्भिक्षंक्लेशात्क्लेशंभयाद्भयम् ॥ मृतेभ्यःप्रमृतायांतिदरिद्राःपापकर्मिणः ३ ॥२२९॥

चित्तशोधकाध्ययनंनाम ॥ इति शांति० मोक्षपर्वणिनीलकंठीये भा० एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥ संन्यासोपयोगिवैराग्यहेतून्धर्मानुक्त्वाइतरेषांवैयर्थ्यमाशंक्यतेषामपि
सदसत्फलत्वमनिवार्यमित्याह यद्यस्तीत्यादिना प्राग्व्याख्यातोऽयमध्यायः १ । २ । ३

४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपे द्वाविंशत्यधिकत्रि

उत्सवादुत्सवंयांतिस्वर्गात्स्वर्गसुखात्सुखम् ॥ श्रद्दधानाश्चदांताश्चधनस्थाःशुभकारिणः ४ व्यालकुंजरदुर्गेषुसर्पचौरभयेषुच ॥ हस्तावापेनगच्छंतिनास्तिकाःकिम
तःपरम् ५ प्रियदेवातिथेयाश्चवदान्याःप्रियसाधवः ॥ क्षेम्यमात्मवतांमार्गमास्थिताहस्तदक्षिणाः ६ पुलकाइवधान्येषुपूत्यंडाइवपक्षिषु ॥ तद्विधास्तेमनुष्ये
षुयेषांधर्मोनकारणम् ७ सुशीघ्रमपिधावंतंविधानमनुधावति ॥ शेतेसहशयानेनयेनयेनयथाकृतम् ८ पापंतिष्ठतितिष्ठंतंधावंतमनुधावति ॥ करोतिकुर्वतः
कर्मच्छायेवानुविधीयते ९ येनयेनयथायद्यत्पुराकर्मसुनिश्चितम् ॥ तत्तदेवोत्तरंभुंक्तेनित्यंविहितमात्मना १० समानकर्मविक्षेपविधानपरिरक्षणम् ॥ भूतग्राममिमं
कालःसमंतादपकर्षति ११ अचोद्यमानानियथाऽपुष्पाणिचफलानिच ॥ स्वंकालंनातिवर्तंतेतथाकर्मपुराकृतम् १२ समानश्चावमानश्चलाभोलाभःक्षयाव्य
यौ ॥ प्रावृत्तानानिवर्तंतेनिधनांताःपदेपदे १३ आत्मनाविहितंदुःखमात्मनाविहितंसुखम् ॥ गर्भशय्यामुपादायभजतेपूर्वदेहिकम् १४ बालोयुवावावृद्धश्चय
त्करोतिशुभाशुभम् ॥ तस्यांतस्यामवस्थायांभुंक्तेजन्मनिजन्मनि १५ यथाधेनुसहस्रेषुवत्सोविंदतिमातरम् ॥ तथापूर्वकृतंकर्मकर्तारमनुगच्छति १६ मलि
नंहियथावस्त्रंपश्चाच्छुद्ध्यतिवारिणा ॥ उपवासैःप्रतप्तानांदीर्घसुखमनंतकम् १७ दीर्घकालेनतपसासेवितेनमहामते ॥ धर्मनिर्धूतपापानांसंसिध्यंतेमनोरथाः
१८ शकुनानामिवाकाशेमत्स्यानामिवचोदके ॥ पदंयथानदृश्येततथापुण्यकृतांगतिः १९ अलमन्यैरुपालब्धैःकीर्तितैश्चव्यतिक्रमैः ॥ पेशलंचानुरूपंचकर्त
व्यंहितमात्मनः २० ॥ इतिश्रीमहाभारतेशांतिपर्वणि मोक्षधर्मपर्वणि धर्ममूलिकोनामद्वाविंशत्यधिकत्रिशततमोध्यायः ॥ ३२२ ॥ ॥ छ ॥ ॥ युधिष्ठिर
उवाच ॥ कथंव्यासस्यधर्मात्माशुकोजज्ञेमहातपाः ॥ सिद्धिंचपरमांप्राप्तस्तन्मेब्रूहिपितामह १ कस्यांचोत्पादयामासशुकंव्यासस्तपोधनः ॥ नह्यस्यजननीं
विद्मजन्मचाग्र्यंमहात्मनः २ कथंचबालस्यसतःसूक्ष्मज्ञानेगतामतिः ॥ यथानान्यस्यलोकेऽस्मिन्द्वितीयस्येहकस्यचित् ३ एतदिच्छाम्यहंश्रोतुंविस्तरेणम
हामते ॥ नहिमेतृप्तिरस्तीहशृण्वतोऽमृतमुत्तमम् ४ महात्म्यमात्मयोगंचविज्ञानंचशुकस्यह ॥ यथावदनुपूर्वेणतन्मेब्रूहिपितामह ५ ॥ भीष्मउवाच ॥ नहा
यनैर्नपलितैर्नवित्तैर्नचबंधुभिः ॥ ऋषयश्चक्रिरेधर्मंयोनूचानःसनोमहान् ६ तपोमूलमिदंसर्वंयन्मांपृच्छसिपांडव ॥ तदिंद्रियाणिसंयम्यतपोभवतिनान्यथा ७
इंद्रियाणांप्रसंगेनदोषमृच्छेत्यसंशयम् ॥ संनियम्यतुतान्येवसिद्धिमाप्नोतिमानवः ८ अश्वमेधसहस्रस्यवाजपेयशतस्यच ॥ योगस्यकलयातातनतुल्यंविद्यते
फलम् ९ अत्रतेवर्तयिष्यामिजन्मयोगफलंतथा ॥ शुकस्याग्र्यांगतिंचैवदुर्विदामकृतात्मभिः १०

शततमोऽध्यायः ॥ ३२२ ॥ ॥ छ ॥ शकुनानामिवाकाशइतिब्रह्मनिष्ठानांनिष्कलात्मत्वंश्रुत्वासंन्याससहितब्रह्मनिष्ठावान्शुकःश्रुतिपथमवतीर्णस्तदीयेनैवमार्गेणाहंकृतकृत्यःस्यामितिमन्वान
स्तस्यजन्मादिकंसर्वंपृच्छति कथंव्यासस्यधर्मात्मेत्यादि १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १०

११ । १२ योगेनात्मानमाविश्यांतर्हृदयेइंद्रियाणिनिरुध्येत्यर्थः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ कृष्णस्यव्यासस्य २५ । २६ । २७ । २८
तद्भावभावीति तद्भावंब्रह्मभावंब्रह्माहमिति भावमाशयंभावयतीतितद्भावभावी 'तविति वाएतस्यमहतोभूतस्यनामभवति' इतितच्छद्रस्यब्रह्मनामधेयत्वश्रुतेः नकेवलभावनामात्रकृत्अपितुतद्बुद्धिस्तत्रैवबु



मेरुशृंगेकिलपुराकर्णिकारवनायुते ॥ विजहारमहादेवोभीमैर्भूतगणैर्वृतः ११ शैलराजसुताचैवदेवीतत्राभवत्पुरा ॥ तत्रदिव्यंतपस्तेपेकृष्णद्वैपायनस्तदा १२
योगेनात्मानमाविश्ययोगधर्मपरायणः ॥ धारयन्सतपस्तेपेपुत्रार्थंकुरुसत्तम १३ अग्नेर्भूमेरपांवायोरंतरिक्षस्यवाविभो ॥ धैर्येणसंमितःपुत्रोममभूयादितिस्मह
१४ संकल्पेनाथयोगेनदुष्प्रापमकृतात्मभिः ॥ वरयामासदेवेशमास्थितस्तपउत्तमम् १५ अतिष्ठन्मारुताहारःशतंकिलसमाःप्रभुः ॥ आराधयन्महादेवंबहु
रूपमुमापतिम् १६ तत्रब्रह्मर्षयश्चैवसर्वेराजर्षयस्तथा ॥ लोकपालाश्चलोकेशंसाध्याश्चवसुभिःसह १७ आदित्याश्चैवरुद्राश्चदिवाकरनिशाकरौ ॥ वसवोमरुत
श्चैवसागराःसरितस्तथा १८ अश्विनौदेवगंधर्वास्तथानारदपर्वतौ ॥ विश्वावसुश्चगंधर्वःसिद्धाश्चाप्सरसस्तथा १९ तत्ररुद्रोमहादेवःकर्णिकारमयींशुभाम् ॥ धार
याणःस्रजंभातिज्योत्स्नामिवनिशाकरः २० तस्मिन्दिव्येवनेरम्येदेवदेवर्षिसंकुले ॥ आस्थितःपरमंयोगमृषिःपुत्रार्थमच्युतः २१ नचास्यहीयतेप्राणोनग्ला
निरुपजायते ॥ त्रयाणामपिलोकानांतदद्भुतमिवाभवत् २२ जटाश्चतेजसातस्यवैश्वानरशिखोपमाः ॥ प्रज्वलंत्यःस्मदृश्यंतेयुक्तस्यामिततेजसः २३ मार्कंडे
योहिभगवानेतदाख्यातवान्मम ॥ सदेवचरितानीहकथयामासमेसदा २४ एताअद्यापिकृष्णस्यतपसातेनदीपिताः ॥ अग्निवर्णाजटास्तातप्रकाशंतेमहात्मनः
२५ एवंविधेनतपसातस्यभक्त्याचभारत ॥ महेश्वरःप्रसन्नात्माचकारमनसामतिम् २६ उवाचचैवंभगवांस्त्र्यंबकःप्रहसन्निव ॥ एवंविधस्तेतनयोद्वैपायनभवि
ष्यति २७ यथाह्यग्निर्यथावायुर्यथाभूमिर्यथाजलम् ॥ यथाचखंतथाशुद्धोभवितातेसुतोमहान् २८ तद्भावभावीतद्बुद्धिस्तदात्मातदपाश्रयः ॥ तेजसाऽऽवृत्य
लोकाँस्त्रीन्यशःप्राप्स्यतितेसुतः २९ ॥ इति श्रीमहाभारते शांति०मोक्ष०शुकोत्पत्तौत्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥ ॥ भीष्मउवाच ॥
सलब्ध्वापरमंदेवाद्वरंसत्यवतीसुतः ॥ अरणींसहितेगृह्यममंथाग्निचिकीर्षया १ अथरूपंपरंराजन्बिभ्रतींस्वेनतेजसा ॥ घृताचींनामाप्सरसमपश्यद्भगवानृषिः २
ऋषिरप्सरसंदृष्ट्वासहसाकाममोहितः ॥ अभवद्भगवान्व्यासोवनेतस्मिन्युधिष्ठिर ३ साचदृष्ट्वातदाव्यासंकामसंविग्नमानसम् ॥ शुकीभूत्वामहाराजघृताचीसमुपा
गमत् ४ सतामप्सरसंदृष्ट्वारूपेणान्येनसंवृताम् ॥ शरीरजेनानुगतःसर्वगात्रातिगेनह ५ सतुधैर्येणमहतानिगृह्णन्हृच्छयंमुनिः ॥ नशशाकनियंतुंतद्व्यासःप्रवि
सृतंमनः ६ भावित्वाच्चैवभावस्यघृताच्यावपुषाहृतः ॥ यत्नान्नियच्छतस्तस्यमुनेरग्निचिकीर्षया ७ अरण्यामेवसहसातस्यशुक्रमवापतत् ॥ सोऽविशंकेनमन ॥२३०॥
सातथैवद्विजसत्तमः ८

द्धिर्निश्चयोयस्येत्यनेनश्रद्धावानुच्यते तत्रैवात्माचित्तंयस्येतिआदरः तदपाश्रयइतितत्रस्थैर्येणनैरंतर्यमुच्यते २९
॥ इति शांतिपर्वणि नीलकंठीये भारतभावदीपे त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥ ॥ ७ ॥ ॥ सहिते अरणीद्वेअधरोत्तरे सहितेमिथुनरूपे १ । २ । ३ । ४ । ५ । ६ । ७ । ८

शुक्रेनिर्मथ्यमानेजातत्वात्शुकइतिरेफलोपेनास्यनामकृतं ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ महात्मामहादेवउपानयत्स्वशिष्यंकृतवानितिसंबंधः १८ । १९ । २० । २१ । २२

अरणीममंथब्रह्मर्षिस्तस्यांजज्ञेशुकोनृप ॥ शुक्रेनिर्मथ्यमानेसशुकोजज्ञेमहातपाः ९ परमर्षिर्महायोगीअरणीगर्भसंभवः ॥ यथाध्वरेसमिद्धोग्निर्भातिहव्यमुदावहन्
१० तथारूपःशुकोजज्ञेप्रज्वलन्निवतेजसा ॥ बिभ्रत्पितुश्चकौरव्यरूपवर्णमनुत्तमम् ११ बभौतदाभावितात्माविधूमइवपावकः ॥ तंगंगासरितांश्रेष्ठामेरुपृष्ठेजने
श्वर १२ स्वरूपिणीतदाऽभ्येत्यतर्पयामासवारिणा ॥ अंतरिक्षाच्चकौरव्यदंडःकृष्णाजिनंचह १३ पपातभूमिंराजेंद्रशुकस्यार्थेमहात्मनः ॥ जेगीयंतेस्मगंधर्वा
ननृतुश्चाप्सरोगणाः १४ देवदुंदुभयश्चैवप्रावाद्यंतमहास्वनाः ॥ विश्वावसुश्चगंधर्वस्तथातुंबुरुनारदौ १५ हाहाहूहूश्चगंधर्वावतुष्टुवुःशुकसंभवम् ॥ तत्रशक्रपुरोगाश्च
लोकपालाःसमागताः ॥ देवादेवर्षयश्चैवतथाब्रह्मर्षयोऽपिच ॥ दिव्यानिसर्वपुष्पाणिप्रववर्षचमारुतः १७ जंगमाजंगमंचैवप्रहृष्टमभवज्जगत् ॥ तंमहात्मास्वयं
प्रीत्यादेव्यासहमहाद्युतिः १८ जातमात्रंमुनेःपुत्रंविधिनोपानयत्तदा ॥ तस्यदेवेश्वरःशक्रोदिव्यमद्भुतदर्शनम् १९ ददौकमंडलुंप्रीत्यादेववासांसिवाविभो ॥
हंसाश्चशतपत्राश्चसारसाश्चसहस्रशः २० प्रदक्षिणमवर्ततशुकाश्चाषाश्चभारत ॥ आरणेयस्ततोदिव्यंप्राप्यजन्ममहाद्युतिः २१ तत्रैवोवासमेधावीव्रतचारीसमा
हितः ॥ उत्पन्नमात्रंतंवेदाःसरहस्याःससंग्रहाः २२ उपतस्थुर्महाराजयथाऽस्यपितरंतथा ॥ बृहस्पतिंचवव्रेसवेदवेदांगभाष्यवित् २३ उपाध्यायंमहाराजधर्ममे
वानुचिंतयन् ॥ सोऽधीत्यनिखिलान्वेदान्सरहस्यान्ससंग्रहान् २४ इतिहासंचकात्स्न्र्येनराजशास्त्राणिवाविभो ॥ गुरवेदक्षिणांदत्वासमावृत्तोमहामुनिः २५
उग्रंतपःसमारेभेब्रह्मचारिसमाहितः ॥ देवतानामृषीणांचबाल्येऽपिसमहातपाः २६ संमंत्रणीयोमान्यश्चज्ञानेनतपसातथा ॥ नत्वस्यरमतेबुद्धिराश्रमेषुनराधिप ॥
त्रिषुगार्हस्थ्यमूलेषुमोक्षधर्मानुदर्शिनः २७ ॥ इतिश्रीमहाभारतेशांति०मोक्ष०प०शुकोत्पत्तौचतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥ भीष्मउवाच ॥
समोक्षमनुचिंत्यैवशुकःपितरमभ्यगात् ॥ प्राहाभिवाद्यचगुरुंश्रेयोर्थीविनयान्वितः १ मोक्षधर्मेषुकुशलोभगवान्प्रब्रवीतुमे ॥ यथामेमनसःशांतिःपरमासंभवेत्प्रभो
२ श्रुत्वापुत्रस्यतुवचःपरमर्षिरुवाचतम् ॥ अधीष्वपुत्रमोक्षंवैधर्मांश्चविविधानपि ३ पितुर्नियोगाज्जग्राहशुकोधर्मभृतांवरः ॥ योगशास्त्रंचनिखिलंकापिलंचैवभा
रत ४ सतंब्राह्म्याश्रियायुक्तंब्रह्मतुल्यपराक्रमम् ॥ मेनेपुत्रंयदाव्यासोमोक्षधर्मविशारदम् ५ उवाचगच्छेतितदाजनकंमिथिलेश्वरम् ॥ सतेवक्ष्यतिमोक्षार्थंनिखि
लंमिथिलेश्वरः ६ पितुर्नियोगमादायजगाममिथिलांनृप ॥ प्रष्टुंधर्मस्यनिष्ठांवैमोक्षस्यचपरायणम् ७

ईश्वरप्रसादात्स्वयंभातवेदोऽपिशिष्टाचारपालनार्थंबृहस्पतिंगुरुंचकारेत्याह बृहस्पतिमिति २३ । २४ । २५ । २६ । २७ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुर्विंशत्य
धिकत्रिशततमोऽध्यायः ॥ ३२४ ॥ सइति मोक्षंमोक्षशास्त्रंअनुचिंत्यउपादेयत्वेनज्ञात्वा १ । २ । ३ । ४ । ५ उवाचेतिजनकंप्रतिप्रेषणमतिसंवादार्थंनत्वज्ञानापनयार्थं मोक्षार्थंमोक्षशास्त्रार्थं ६ । ७

८ । ९ । १० । ११ । १२ । १३ मेरोर्वर्षमिलावृतं हरेर्वर्षंहरिवर्षाख्यं हैमवतंवर्षंकिंपुरुषाख्यं १४ । १५ । १६ पश्यन्नपिनपश्यतितुच्छत्वनिश्चयाद्वैराग्याद्वा १७ । १८ । १९ । २० । २१ । २२

उक्तश्चमानुषेणत्वंपथागच्छेत्यविस्मितः ॥ नप्रभावेणगंतव्यमंतरिक्षचरेणवै ८ आर्जवेणैवगंतव्यंनसुखान्वेषिणातथा ॥ नान्वेष्टव्याविशेषास्तुविशेषाहिप्रसंगिनः ९ अहंकारोनकर्तव्योयाज्येतस्मिन्नराधिपे ॥ स्थातव्यंचवशेतस्यसतेछेत्स्यतिसंशयम् १० सधर्मकुशलोराजामोक्षशास्त्रविशारदः ॥ याज्योममसयद्ब्रूयात्तत्कार्यमविशंकया ११ एवमुक्तःसधर्मात्माजगाममिथिलांमुनिः ॥ पद्भ्यांशक्तोंतरिक्षेणक्रांतुंपृथ्वींससागराम् १२ सगिरींश्चाप्यतिक्रम्यनदीतीर्थसरांसिच ॥ बहुव्यालमृगाकीर्णाह्यटवीश्चवनानिच १३ मेरोर्हरेश्चद्वेवर्षेवर्षंहैमवतंततः ॥ क्रमेणैवंव्यतिक्रम्यभारतंवर्षमासदत् १४ सदेशान्विविधान्पश्यंश्चीनहूणनिषेवितान् ॥ आर्यावर्तमिमंदेशमाजगाममहामुनिः १५ पितुर्वचनमाज्ञायतमेवार्थंविचिंतयन् ॥ अध्वानंसोऽतिचक्रामखचरःखेचरन्निव १६ पत्तनानिचरम्याणिस्फीतानिनगराणिच ॥ रत्नानिचविचित्राणिपश्यन्नपिनपश्यति १७ उद्यानानिचरम्याणितथैवायतनानिच ॥ पुण्यानिचैवरत्नानिसोत्यक्रामदथाध्वगः १८ सोऽचिरेणैवकालेनविदेहानाससादह ॥ रक्षितान्धर्मराजेनजनकेनमहात्मना १९ तत्रग्रामान्बहून्पश्यन्बह्वन्नरसभोजनान् ॥ पल्लीघोषान्समृद्धांश्चबहुगोकुलसंकुलान् २० स्फीतांश्चशालियवसैर्हंससारससेवितान् ॥ पद्मिनीभिश्चशतशःश्रीमतीभिरलंकृतान् २१ सविदेहानतिक्रम्यसमृद्धजनसेवितान् ॥ मिथिलोपवनंरम्यमाससादसमृद्धिमत् २२ हस्त्यश्वरथसंकीर्णंनरनारीसमाकुलम् ॥ पश्यन्नपश्यन्निवतत्समतिक्रामदच्युतः २३ मनसातंवहन्भारंतमेवार्थंविचिंतयन् ॥ आत्मारामःप्रसन्नात्मामिथिलामाससादह २४ तस्याद्वारंसमासाद्यनिःशंकःप्रविवेशह ॥ तत्रापिद्वारपालास्तमुग्रवाचान्यषेधयन् २५ तथैवचशुकस्तत्रनिर्मन्युःसमतिष्ठत ॥ नचातपाध्वसंतप्तःक्षुत्पिपासाश्रमान्वितः २६ प्रताम्यतिग्लायतिवानापैतिचतथाऽऽतपात् ॥ तेषांतुद्वारपालानामेकःशोकसमन्वितः २७ मध्यंगतमिवादित्यंदृष्ट्वाशुकमवस्थितम् ॥ पूजयित्वायथान्यायमभिवाद्यकृतांजलिः २८ प्रावेशयत्ततःकक्ष्यांद्वितीयांराजवेश्मनः ॥ तत्रासीनःशुकस्तातमोक्षमेवान्वचिंतयत् २९ छायायामातपेचैवसमदर्शीसमद्युतिः ॥ तंमुहूर्तादिवागम्यराज्ञोमंत्रीकृतांजलिः ३० प्रावेशयत्ततःकक्ष्यांतृतीयांराजवेश्मनः ॥ तत्रांतःपुरसंबद्धंमहच्चैत्ररथोपमम् ३१ सुविभक्तजलाक्रीडंरम्यंपुष्पितपादपम् ॥ शुकंप्रावेशयन्मंत्रीप्रमदावनमुत्तमम् ३२ सतस्यासनमादिश्यनिश्चक्रामततःपुनः ॥ तंचारुवेषाःसुश्रोण्यस्तरुण्यःप्रियदर्शनाः ३३ सूक्ष्मरक्तांबरधरास्तप्तकांचनभूषणाः ॥ संलापोल्लापकुशलानृत्यगीतविशारदाः ३४ स्मितपूर्वाभिभाषिण्योरूपेणाप्सरसांसमाः ॥ कामोपचारकुशलाभावज्ञाःसर्वकोविदाः ३५ परंपंचाशतंनार्योवारमुख्याःसमाद्रवन् ॥ पाद्यादीनिप्रतिग्राह्यपूजयापरयाऽर्चयन् ३४ कालोपपन्नेनतदास्वाद्वन्नेनाभ्यतर्पयन् ॥२३१॥

तस्यभुक्तवतस्तातततदंतःपुरकाननम् ३७

२३ हंभारंजिज्ञासाख्यं अर्थंमोक्षं २४ तस्याद्वारमित्यादिनाअध्यायशेषेणास्यक्रोधकामजयोव्याख्यायते २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७

३८ आरणेयःअरणिजःशुकः ३९ । ४० । ४१ । ४२ । ४३ कार्ष्णिःशुकः अच्युतोधैर्यादितिशेषः ४४ ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणिनैलकंठीये भारतभावदीपेपंचविंशत्यधिकत्रिशततमो

सुरम्यंदर्शयामासुरेकैकश्येनभारत ॥ क्रीडंत्यश्चहसंत्यश्चगायंत्यश्चापिताःशुभम् ३८ उदारसत्वंसत्वज्ञाःस्त्रियःपर्यचरंस्तथा ॥ आरणेयस्तुशुद्धात्मानिःसंदेहःस्वकर्मकृत् ३९ वश्येंद्रियोजितक्रोधोनहृष्यतिनकुप्यति ॥ तस्मैशय्यासनंदिव्यंदेवार्हंरत्नभूषितम् ४० स्पर्ध्यास्तरणसंकीर्णंददुस्ताःपरमस्त्रियः ॥ पादशौचंतुकृत्वैवशुकःसंध्यामुपास्यच ४१ निषसादासनेपुण्येतमेवार्थंविचिंतयन् ॥ पूर्वरात्रेतुतत्रासौभूत्वाध्यानपरायणः ४२ मध्यरात्रेयथान्यायंनिद्रामाहारयत्प्रभुः ॥ ततोमुहूर्तादुत्थायकृत्वाशौचमनंतरम् ॥ स्त्रीभिःपरिवृतोधीमान्ध्यानमेवान्वपद्यत ४३ अनेनविधिनाकार्ष्णिस्तदहःशेषमच्युतः ॥ तांचरात्रिंनृपकुलेवर्तयामासभारत ४४ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिशुकोत्पत्तौपंचविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥ ॥ भीष्मउवाच ॥ ततःसराजाजनकोमंत्रिभिःसहभारत ॥ पुरःपुरोहितंकृत्वासर्वाण्यंतःपुराणिच १ आसनंचपुरस्कृत्यरत्नानिविविधानिच ॥ शिरसाचार्घमादायगुरुपुत्रंसमभ्यगात् २ सतदासनमादायबहुरत्नविभूषितम् ॥ स्पर्ध्यास्तरणसंस्तीर्णंसर्वतोभद्रमृद्धिमत् ३ पुरोधसासंगृहीतंहस्तेनालभ्यपार्थिवः ॥ प्रददौगुरुपुत्रायशुकायपरमार्चितम् ४ तत्रोपविष्टंतंकार्ष्णिंशास्त्रतःप्रत्यपूजयत् ॥ पाद्यंनिवेद्यप्रथममर्घ्यंगांचन्यवेदयत् ५ सचतांमंत्रवत्पूजांप्रत्यगृह्णाद्यथाविधि ॥ प्रतिगृह्यतुतांपूजांजनकाद्द्विजसत्तमः ६ गांचैवसमनुज्ञायराजानमनुमान्यच ॥ पर्यपृच्छन्महातेजाराज्ञःकुशलमव्ययम् ७ अनामयंचराजेंद्रशुकःसानुचरस्यह ॥ अनुशिष्टस्तुतेनासौनिषसादसहानुगः ८ उदारसत्वाभिजनोभूमौराजाकृतांजलिः ॥ कुशलंचाव्ययंचैवपृष्ट्वावैयासकिंनृपः ॥ किमागमनमित्येवंपर्यपृच्छतपार्थिवः ९ ॥ ॥ शुकउवाच ॥ पित्राऽहमुक्तोभद्रंतेमोक्षधर्मार्थकोविदः ॥ विदेहराजोयाज्योमेजनकोनामविश्रुतः १० तत्रगच्छस्ववैतूर्णंयदितेहृदिसंशयः ॥ प्रवृत्तौवानिवृत्तौवासतेछेत्स्यतिसंशयम् ११ सोऽहंपितुर्नियोगात्त्वामुपप्रष्टुमिहागतः ॥ तन्मेधर्मभृतांश्रेष्ठयथावद्वक्तुमर्हसि १२ किंकार्यंब्राह्मणेनेहमोक्षार्थश्चकिमात्मकः ॥ कथंचमोक्षःप्राप्तव्योज्ञानेनतपसाऽथवा १३ ॥ जनकउवाच ॥ यत्कार्यंब्राह्मणेनेहजन्मप्रभृतितच्छृणु ॥ कृतोपनयनस्तातभवेद्वेदपरायणः १४ तपसागुरुवृत्त्याचब्रह्मचर्येणवाविभो ॥ देवतानांपितृणांचाप्यनृणोह्यनसूयकः १५ वेदानधीत्यनियतोदक्षिणामपवर्ज्यच ॥ अभ्यनुज्ञामथप्राप्यसमावर्तेतवैद्विजः १६ समावृत्तश्चगार्हस्थ्येस्वदारनिरतोवसेत् ॥ अनसूयुर्यथान्यायमाहिताग्निस्तथैवच १७ उत्पाद्यपुत्रपौत्रंतुवन्याश्रमपदेवसेत् ॥ तानेवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः १८ सवनेऽग्नीन्यथान्यायमात्मन्यारोप्यधर्मवित् ॥ निर्द्वंद्वोवीतरागात्माब्रह्माश्रमपदेवसेत् १९

ऽध्यायः ॥ ३२५ ॥ ॥ ततइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ यत्कार्यमित्यादिनाब्रह्मचारीभूत्वागृहीभवेद्गृहीभूत्वावनीभवेद्वनीभूत्वाप्रव्रजेदितिश्रुत्युक्तःक्रमसमुच्चयपक्षोदर्शितः १४ । १५ । १६ । १७ । १८ वीतरागात्माविरक्तचित्तः ब्रह्माश्रमःसंन्यासाश्रमस्तदेवपदंपदस्थानंतत्र १९

एतदाक्षिपति उत्पन्नेइति ज्ञानंशास्त्रजाधीः विज्ञानमनुभवः तस्मिन्मोक्षाश्रमफलेब्रह्मचर्यात्प्रागेवोत्पन्नेसति त्रिषुब्रह्मचर्यादिषु । समुच्चयपक्षेयदितरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वायदहरेवविरजे त्तदहरेवप्रव्रजेदित्यनियमश्रुतिर्बाध्येतेतिभावः २० । २१ तत्रब्रह्मचर्यस्यावश्यकत्वंतावदाह नविनेति २२ प्लावयिताकर्णधारः ज्ञानंशास्त्रं 'तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनि ष्ठं । नैषातर्केणमतिरापनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठा' इत्यादिश्रुतिभिरन्वयव्यतिरेकाभ्यामाचार्यकरणस्यविद्याहेतुत्वावगमात्तदावश्यकमितिभावः तदुभयमाचार्यशास्त्रे २३ वामदेववद्ब्रह्मचर्या

॥ शुकउवाच ॥ उत्पन्नेज्ञानविज्ञानेनिर्द्वंद्वेहृदिशाश्वते ॥ किमवश्यंनिवस्तव्यमाश्रमेषुभवेत्रिषु २० एतद्भवंतंपृच्छामितद्भवान्वक्तुमर्हति ॥ यथावेदार्थतत्त्वे नब्रूहिमेत्वंजनाधिप २१ ॥ जनकउवाच ॥ नविनाज्ञानविज्ञानेमोक्षस्याधिगमोभवेत् ॥ नविनागुरुसंबंधंज्ञानस्याधिगमःस्मृतः २२ गुरुःप्लावयितातस्यज्ञा नंप्लवइहोच्यते ॥ विज्ञायकृतकृत्यस्तुतीर्णस्तदुभयंत्यजेत् २३ अनुच्छेदायलोकानामनुच्छेदायकर्मणाम् ॥ पूर्वैराचरितोधर्मश्चातुराश्रम्यसंकटः २४ अनेन क्रमयोगेनबहुजातिषुकर्मणाम् ॥ हित्वाशुभाशुभंकर्ममोक्षोनामेहलभ्यते २५ भावितैःकरणैश्चायंबहुसंसारयोनिषु ॥ आसादयतिशुद्धात्मामोक्षंवैप्रथमाश्रमे २६ तमासाद्यतुमुक्तस्यदृष्टार्थस्यविपश्चितः ॥ त्रिष्वाश्रमेषुकोन्वर्थोभवेत्परमभीप्सतः २७ राजसांस्तामसांश्चैवनित्यंदोषान्विवर्जयेत् ॥ सात्त्विकंमार्गमास्थायपश्ये दात्मानमात्मना २८ सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ॥ संपश्यन्नोपलिप्येतजलेवारिचरोयथा २९ पक्षिवत्प्रवणादूर्ध्वममुत्रानंत्यमश्नुते ॥ विहायदेहान्नि र्मुक्तोनिर्द्वंद्वःप्रशमंगतः ३० अत्रगाथाःपुरागीताःशृणुराज्ञाययातिना ॥ धार्यंतेयाद्विजैस्तातमोक्षशास्त्रविशारदैः ३१ ज्योतिरात्मनिनान्यत्रसर्वजंतुषुतत्समम् ॥ स्वयंचशक्यतेद्रष्टुंसुसमाहितचेतसा ३२ नबिभेतिपरोयस्मान्नबिभेतिपराच्चयः ॥ यश्चनेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा ३३ यदाभावंनकुरुतेसर्वभूतेषुपापकम् ॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा ३४ संयोज्यमनसाऽऽत्मानमीर्ष्यामुत्सृज्यमोहिनीम् ॥ त्यक्त्वाकामंचमोहंचतदाब्रह्मत्वमश्नुते ३५ यदाश्राव्येचदृश्येचसर्व भूतेषुचाप्ययम् ॥ समोभवतिनिर्द्वंद्वोब्रह्मसंपद्यतेतदा ३६ यदास्तुतिंचनिंदांचसमत्वेनैवपश्यति ॥ कांचनंचायसंचैवसुखंदुःखंतथैवच ३७ शीतमुष्णंतथै वार्थमनर्थंप्रियमप्रियम् ॥ जीवितंमरणंचैवब्रह्मसंपद्यतेतदा ३८ प्रसार्येहयथांगानिकूर्मःसंहरतेपुनः ॥ तथेंद्रियाणिमनसासंयंतव्यानिभिक्षुणा ३९ तमःपरि गतंवेश्मयथादीपेनदृश्यते ॥ तथाबुद्धिप्रदीपेनशक्यआत्मानिरीक्षितुम् ४०

त्याग्विज्ञानेजातेसतिकिंतेनेत्याशंक्याह अनुच्छेदायेति लोकशिक्षार्थमपितदावश्यकमितिभावः २४ जातिषुजन्मसु २५ भावितैःशोधितैः करणैर्बुद्ध्यादिभिः २६ तमिति चित्तशुद्ध्यर्थमाश्रमधर्मा स्तच्छुद्धौतुतेव्यर्थाइत्यर्थः २७ । २८ सर्वभूतेष्वनुगतमात्मानंसंप्रज्ञातेपश्यत्येपश्यतिसर्वभूतानिचाऽऽत्मनिरज्जूरगवद्विलीनान्यसंप्रज्ञातेपश्यन्नि वारिचरोहंसादिः २९ प्रवणान्निम्नात् यथाभूचरःपर्वता त्पर्वतंगच्छन्निम्नंदेशमनुसृत्यगच्छतिनैवंपक्षीतद्वद्विद्वान्देहानानुसरतीत्यर्थः ३० । ३१ ज्योतिश्चिन्मात्रंब्रह्म आत्मनिबुद्धौ सममेकं एकत्वेऽनुभवएवमानमित्याहस्वयमिति सुष्ठुसमाहितंयोगारूढंचेतो यस्यतेन ३२ दर्शनलिंगमाह नबिभेतीत्यादिना ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ तमःपरिगतमंधकारव्याप्तमज्ञानव्याप्तंच वेश्मगृहंसर्वाधिष्ठानंब्रह्मच ४०

४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥ ॥

एतत्सर्वंचपश्यामित्वयिबुद्धिमतांवर ॥ यच्चान्यदपिवेत्तव्यंतत्त्वतोवेदतद्भवान् ४१ ब्रह्मर्षेऽविदितश्चासिविषयांतमुपागतः ॥ गुरोस्तवप्रसादेनतवचैवोपशिक्षया ४२ तस्यैवचप्रसादेनप्रादुर्भूतंमहामुने ॥ ज्ञानंदिव्यंममापीदंतेनासिविदितोमम ४३ अधिकंतवविज्ञानमधिकाचगतिस्तव ॥ अधिकंतवचैश्वर्यंतच्चत्वंनावबु ध्यसे ४४ बाल्याद्वासंशयाद्वापिभयाद्वाऽप्यविमोक्षजात् ॥ उत्पन्नेचापिविज्ञानेनाधिगच्छतितांगतिम् ४५ व्यवसायेनशुद्धेनमद्विधैश्छिन्नसंशयः ॥ विमुच्यहृद यग्रंथीनासादयतितांगतिम् ४६ भवांश्चोत्पन्नविज्ञानःस्थिरबुद्धिरलोलुपः ॥ व्यवसायाद्वतेब्रह्मन्नासादयतितत्परम् ४७ नास्तितेसुखदुःखेषुविशेषोनासिलोलुपः ॥ नौत्सुक्यंनृत्यगीतेषुनरागउपजायते ४८ नबंधुष्वनुबंधस्तेनभयेष्वस्तितेभयम् ॥ पश्यामित्वांमहाभागतुल्यलोष्टाश्मकांचनम् ४९ अहंत्वामनुपश्यामियेचा प्यन्येमनीषिणः ॥ आस्थितंपरमंमार्गमक्षयंतमनामयम् ५० यत्फलंब्राह्मणस्येहमोक्षार्थश्चयदात्मकः ॥ तस्मिन्वैवर्तसेब्रह्मन्किमन्यत्परिपृच्छसि ५१ ॥ इति श्रीमहाभारते शांति० मोक्ष० शुकोत्पत्तौषड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥ भीष्मउवाच ॥ एतच्छ्रुत्वातुवचनंकृतात्माकृतनिश्चयः ॥ आत्मनात्मा नमास्थायदृष्ट्वाचात्मानमात्मना १ कृतकार्यःसुखीशांतस्तूष्णींप्रायादुदङ्मुखः ॥ शैशिरंगिरिमुद्दिश्यसधर्मामातरिश्वनः २ एतस्मिन्नेवकालेतुदेवर्षिर्नारदस्त था ॥ हिमवंतमियाद्द्रष्टुंसिद्धचारणसेवितम् ३ तमप्सरोगणाकीर्णंशांतस्वननिनादितम् ॥ किन्नराणांसहस्रैश्चभृंगराजैस्तथैवच ४ मद्गुभिःखंजरीटैश्चविचित्रैर्जी वजीवकैः ५ चित्रवर्णैर्मयूरैश्चकेकाशतविराजितैः ॥ राजहंससमूहैश्चहृष्टैःपरभृतैस्तथा ६ पक्षिराजोगरुत्मांश्चयंनित्यमधितिष्ठति ॥ चत्वारोलोकपालाश्चदेवाः सर्षिगणास्तथा ७ तत्रनित्यंसमायांतिलोकस्यहितकाम्यया ॥ विष्णुनायत्रपुत्रार्थेतपस्तप्तंमहात्मना ८ तत्रैवचकुमारेणबाल्येक्षिप्तादिवौकसः ॥ शक्तिर्न्यस्ता क्षितितलेत्रैलोक्यमवमन्यवै ९ तत्रोवाचजगत्स्कंदःक्षिपन्वाक्यमिदंतदा ॥ योऽन्योऽस्तिमत्तोऽभ्यधिकोविप्रायस्याधिकंप्रियाः १० योब्रह्मण्योद्वितीयोऽस्ति त्रिषुलोकेषुवीर्यवान् ॥ सोऽभ्युद्धरत्विमांशक्तिमथवाकंपयत्विति ११ तच्छ्रुत्वाव्यथितालोकाःकइमामुद्धरेदिति ॥ अथदेवगणंसर्वंसंभ्रांतेंद्रियमानसम् १२ अप श्यद्भगवान्विष्णुःक्षिप्तंसासुरराक्षसम् ॥ किंत्वत्रसुकृतंकार्यंभवेदितिविचिंतयन् १३ अनामृष्यततःक्षेपमवैक्षतचपावकिम् ॥ संप्रगृह्यविशुद्धात्माशक्तिंप्रज्वलि तांतदा १४ कंपयामाससव्येनपाणिनापुरुषोत्तमः ॥ शक्त्यांतुकंप्यमानायांविष्णुनाबलिनातदा १५

एतच्छ्रुत्वातुवचनमित्यादेरध्यायस्यतात्पर्यंतुयत्रशिवविष्णुस्कंदप्रल्हादादीनांमहामहिम्नांसमागमस्तत्रपुण्यतमेदेशेयोगिनाध्यानार्थंगंतव्यंविद्याचगोपनीयागुरुशिष्याभ्यांचस्वोचितधर्मेणस्थेयमिति १ शैशिरंगिरिंहिमाख्यं २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५

१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ ।४५

मेदिनीकंपितासर्वासशैलवनकानना ॥ शक्तेनापिसमुद्धर्तुंकंपितासाऽभवत्तदा १६ रक्षितास्कंदराजस्यधर्षणाप्रभविष्णुना ॥ तांकंपयित्वाभगवान्प्रह्लादमिदमब्र
वीत् १७ पश्यवीर्यंकुमारस्यनैतदन्यःकरिष्यति ॥ सोऽमृष्यमाणस्तद्वाक्यंसमुद्धरणनिश्चितः १८ जग्राहतांतदाशक्तिंनचैनांसव्यकंपयत् ॥ नादंमहांतंमुक्त्वा
सम्मूर्च्छितोगिरिमूर्धनि १९ विह्वलःप्रापतद्भूमौहिरण्यकशिपोःसुतः ॥ तत्रोत्तरांदिशंगत्वाशैलराजस्यपार्श्वतः २० तपोऽतप्यतदुर्धर्षंतातनित्यंवृषध्वजः ॥ पाव
केनपरिक्षितंदीप्यतायस्यचाश्रमम् २१ आदित्यपर्वतंनामदुर्धर्षमकृतात्मभिः ॥ नतत्रशक्यतेगंतुंयक्षराक्षसदानवैः २२ दशयोजनविस्तारमग्निज्वालासमा
वृतम् ॥ भगवान्पावकस्तत्रस्वयंतिष्ठतिवीर्यवान् २३ सर्वान्विघ्नान्प्रशमयन्महादेवस्यधीमतः ॥ दिव्यंवर्षसहस्रंहिपादेनैकेनतिष्ठतः २४ देवान्संतापयंस्तत्र
महादेवोमहाव्रतः ॥ ऐंद्रींतुदिशमास्थायशैलराजस्यधीमतः २५ विविक्तेपर्वततटेपाराशर्योमहातपाः ॥ वेदानध्यापयामासव्यासःशिष्यान्महातपाः २६ सुमं
तुंचमहाभागंवैशंपायनमेवच ॥ जैमिनिंचमहाप्राज्ञंपैलंचापितपस्विनम् २७ यत्रशिष्यैःपरिवृतोव्यासआस्तेमहातपाः ॥ तत्राश्रमपदंरम्यंददर्शपितुरुत्तमम्
२८ आरणेयोविशुद्धात्मानभसीवदिवाकरः ॥ अथव्यासःपरिक्षिप्तंज्वलंतमिवपावकम् २९ ददृशेसुतमायांतंदिवाकरसमप्रभम् ॥ असज्जमानंवृक्षेषुशैलेषुवि
षयेषुच ॥ योगयुक्तंमहात्मानंयथाबाणंगुणच्युतम् ३० सोऽभिगम्यपितुःपादावगृह्णादरणीसुतः ॥ यथोपजोषंतैश्चापिसमागच्छन्महामुनिः ३१ ततोनिवेदया
मासपित्रेसर्वमशेषतः ॥ शुकोजनकराजेनसंवादंप्रीतमानसः ३२ एवमध्यापयन्शिष्यान्व्यासःपुत्रंचवीर्यवान् ॥ उवासहिमवत्पृष्ठेपाराशर्योमहामुनिः ३३ ततः
कदाचिच्छिष्यास्तंपरिवार्यावतस्थिरे ॥ वेदाध्ययनसंपन्नाःशांतात्मानोजितेंद्रियाः ३४ वेदेषुनिष्ठांसंप्राप्यसांगेष्वपितपस्विनः ॥ अथोचुस्तेतदाव्यासं
शिष्याःप्रांजलयोगुरुम् ३५ ॥ शिष्याऊचुः ॥ महतातेजसायुक्तायशसाचापिवर्धिताः ॥ एकंत्विदानीमिच्छामोगुरुणाऽनुग्रहंकृतम् ३६ इतितेषांवचःश्रुत्वाब्र
ह्मर्षिस्तानुवाचह ॥ उच्यतामितितद्वत्सायद्वःकार्यंप्रियंमया ३७ एतद्वाक्यंगुरोःश्रुत्वाशिष्यास्तेहृष्टमानसाः ॥ पुनःप्रांजलयोभूत्वाप्रणम्यशिरसागुरुम् ३८
ऊचुस्तेसहिताराजन्निदंवचनमुत्तमम् ॥ यदिप्रीतउपाध्यायोधन्याःस्मोमुनिसत्तम ३९ कांक्षामस्तुवयंसर्वेवरंदातुंमहर्षिणा ॥ षष्ठःशिष्योनतेख्यातिंगच्छेदत्रप्रसी
दनः ४० चत्वारस्तेवयंशिष्यागुरुपुत्रश्चपंचमः ॥ इहवेदाःप्रतिष्ठेरन्नेषनःकांक्षितोवरः ४१ शिष्याणांवचनंश्रुत्वाव्यासोवेदार्थतत्त्ववित् ॥ पराशरात्मजोधीमा
न्परलोकार्थचिंतकः ४२ उवाचशिष्यान्धर्मात्माधर्म्यंनैःश्रेयसंवचः ॥ ब्राह्मणायसदादेयंब्रह्मशुश्रूषवेतथा ४३ ब्रह्मलोकेनिवासंयोध्रुवंसमभिकांक्षते ॥ भवंतो
बहुलाःसंतुवेदोविस्तार्यतामयम् ४४ नाशिष्येसंप्रदातव्योनाव्रतेनाकृतात्मनि ॥ एतेशिष्यगुणाःसर्वेविज्ञातव्यायथार्थतः ४५



४६ । ४७ । ४८ । ४९ । ५० । ५१ । ५२ । ५३ ॥ इति शांति०मोक्ष०नीलकंठीयेभारतभावदीपेसप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥ ॥ एतच्छ्रुत्वागुरोर्वाक्यमित्यादिर्व्यासःपुत्रमवारय
दित्यंतस्यतात्पर्यंविद्याप्रचारःकर्तव्योविदुषाऽपिवेदाध्ययनंनत्याज्यंस्वाध्यायानध्यायपरिपालनंचकर्तव्यमिति १ तदात्वायतिसंहितं तदात्वेतत्कालेआयतावुत्तरकालेचसंहितंसम्यग्घितं २ । ३

नापरीक्षितचारित्रेविद्यादेयाकथंचन ॥ यथाहिकनकंशुद्धंतापच्छेदनिकर्षणैः ४६ परीक्षेततथाशिष्यानीक्षेत्कुलगुणादिभिः ॥ ननियोज्याश्चवःशिष्याअनियोगेमहा
भये ४७ यथामतियथापाठंतथाविद्याफलिष्यति ॥ सर्वस्तरतुदुर्गाणिसर्वोभद्राणिपश्यतु ४८ श्रावयेच्चतुरोवर्णान्कृत्वाब्राह्मणमग्रतः ॥ वेदस्याध्ययनंहीदंतच्चकार्यं
महत्स्मृतम् ४९ स्तुत्यर्थमिहदेवानांवेदाःसृष्टाःस्वयंभुवा ॥ योनिर्वदेतसंमोहाद्ब्राह्मणंवेदपारगम् ५० सोऽभिध्यानाद्ब्राह्मणस्यपराभूयादसंशयम् ॥ यश्चाधर्मेणविब्रू
याद्यश्चाधर्मेणपृच्छति ५१ तयोरन्यतरःप्रैतिविद्वेषंचाधिगच्छति ॥ एतद्वःसर्वमाख्यातंस्वाध्यायस्यविधिंप्रति ५२ उपकुर्याच्चशिष्याणामेतच्चहृदिवोभवेत् ५३
इतिश्रीम०शांति०मोक्ष०सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥ भीष्मउवाच ॥ एतच्छ्रुत्वागुरोर्वाक्यंव्यासशिष्यामहौजसः ॥ अन्योन्यंहृष्टमनसःपरिषस्व
जिरेतदा १ उक्ताःस्मोयद्भगवतातदात्वायतिसंहितम् ॥ तन्नोमनसिसंरूढंकरिष्यामस्तथाचतत् २ अन्योन्यंसंविभाष्यैवंसुप्रीतमनसःपुनः ॥ विज्ञापयंतिस्मगुरुं
पुनर्वाक्यविशारदाः ३ शैलादस्मान्महींगंतुंकांक्षितंनोमहामुने ॥ वेदाननेकधाकर्तुंयदितेरुचितंप्रभो ४ शिष्याणांवचनंश्रुत्वापराशरसुतःप्रभुः ॥ प्रत्युवाचततोवा
क्यंधर्मार्थसहितंहितम् ५ क्षितिंवादेवलोकंवागम्यतांयदिरोचते ॥ अप्रमादश्चवःकार्योब्रह्महिप्रचुरच्छलं ६ तेऽनुज्ञातास्ततःसर्वेगुरुणासत्यवादिना ॥ जग्मुःप्रद
क्षिणंकृत्वाव्यासंमूर्ध्नाऽभिवाद्यच ७ अवतीर्यमहींतेऽथचातुर्होत्रमकल्पयन् ॥ संयाजयंतोविप्रांश्चराजन्यांश्चविशस्तथा ८ पूज्यमानाद्विजैर्नित्यंमोदमानागृहेर
ताः ॥ याजनाध्यापनरताःश्रीमंतोलोकविश्रुताः ९ अवतीर्णेषुशिष्येषुव्यासःपुत्रसहायवान् ॥ तूष्णींध्यानपरोधीमानेकांतेसमुपाविशत् १० तंददर्शाश्रमपदे
नारदःसुमहातपाः ॥ अथैनमब्रवीत्कालेमधुराक्षरयागिरा ११ भोभोब्रह्मर्षिवासिष्ठब्रह्मघोषोनवर्तते ॥ एकोध्यानपरस्तूष्णींकिमास्सेचिंतयन्निव १२ ब्रह्मघोषै
र्विरहितःपर्वतोऽयंनशोभते ॥ रजसातमसाचैवसोमःसोपप्लवोयथा १३ नभ्राजतेयथापूर्वंनिषादानामिवालयः ॥ देवर्षिगणजुष्टोऽपिवेदध्वनिनिराकृतः १४ ऋ
षयश्चहिदेवाश्चगंधर्वाश्चमहौजसः ॥ वियुक्ताब्रह्मघोषेणनभ्राजंतेयथापुरा १५ नारदस्यवचःश्रुत्वाकृष्णद्वैपायनोऽब्रवीत् ॥ महर्षेयत्त्वयाप्रोक्तंवेदवादविचक्ष
ण १६ एतन्मनोनुकूलंमेभवानर्हतिभाषितुम् ॥ सर्वज्ञःसर्वदर्शीचसर्वत्रचकुतूहली १७ त्रिषुलोकेषुयद्वृत्तंसर्वंतवमतेस्थितम् ॥ तदाज्ञापयविप्रर्षेब्रूहिकिंकरवा
णिते १८ यन्मयासमनुष्ठेयंब्रह्मर्षेतदुदाहर ॥ विमुक्तस्येहशिष्यैर्मेनातिहृष्टमिदंमनः १९

४ । ५ । ६ । ७ चातुर्होत्रंचतुर्होतृसंज्ञकामंत्राश्चित्तिःस्रुक्चित्तमाज्यमित्यादयोऽध्यात्माधियज्ञयोरभेददर्शनार्थाः तत्पूर्वकंप्रवृत्तकर्मचातुर्होत्रमग्निहोत्रादिकंसोमांतमकल्पयन्प्रवर्तितवंतः ८ । ९
१० । ११ । १२ सोपप्लवोराहुग्रस्तः १३ । १४ । १५ । १६ । १७ १८ नातिहृष्टमिदंमनइतिविदुषामपिशिष्यादिसंयोगवियोगजंसुखंदुःखमपरिहार्यमितिभावः १९

अनाम्नायःअनावृत्तिःसएवमलोदूषणंयेषु २० । २१ । २२ । २३ । २४ ततोऽनध्यायइत्यादिग्रंथोयोगिनांस्वेच्छयाकृत्स्नेब्रह्मांडेसंचारयोग्यताइच्छयादेहत्यागश्चययाभवतितादृशींविद्यांवक्तुंप्रवर्तते २५ कुतइतिवायोर्मूलकारणप्रश्नः । विचेष्टितमितिवायुकर्मप्रश्नः २६ । २७ प्रश्नमभिनंदन्नस्यार्थस्यजिज्ञासाऽतिदुर्लभेतिसूचयति दिव्यमिति योगसंस्कृतंचक्षुर्व्यवहितार्थग्राहित्वात्मनश्चनिर्मलम् तीतादिग्राहि सत्वेसर्वज्ञत्वादिहेतौबुद्धिसत्वे २८ आत्मनिबुद्धौ वेदान्वेदार्थान् व्यस्यऊहापोहाभ्यांपरिभाव्य बुद्ध्यानिश्चयेनसमनुचिंतयवायुःकुतोऽभूदित्यादिकंविचारय २९ देवयानेति योविष्णोर्व्यापकस्यपरमात्मनःसंबंधीदेवयानोऽर्चिरादिमार्गस्तत्रचरतीतितेनमार्गेण सात्विकानुपासकान् विष्णुलोकमपुनरावृत्तिपदंप्रापयतीत्यर्थः । पितृयानश्चधूमादिपितृयानमार्गप्रदश्चायमेव सतु तामसःपुनरावृत्तिप्रदत्वात् ३० पृथिव्यामितिपृथिव्यांपिंडे अंतरिक्षेब्रह्मांडे संवांतिसंगच्छंति वायुमार्गाःवायुसंचारस्थानानि तत्रदेहेतावद्वायुस्थानवर्णबीजानिनकुलीशयोगपारायणेप्रोक्तानि ।

॥ नारदउवाच ॥ अनाम्नायमलावेदाब्राह्मणस्यावृतंमलम् ॥ मलंपृथिव्यावाहीकाःस्त्रीणांकौतूहलंमलम् २० अधीयतांभवान्वेदान्सार्धंपुत्रेणधीमता ॥ विधुन्वन्ब्रह्मघोषेणरक्षोभयकृतंतमः २१ ॥ भीष्मउवाच ॥ नारदस्यवचःश्रुत्वाव्यासःपरमधर्मवित् ॥ तथेत्युवाचसंहृष्टोवेदाभ्यासदृढव्रतः २२ शुकेनसहपुत्रेणवेदाभ्यासमथाकरोत् ॥ स्वरेणोच्चैःसशैक्ष्येणलोकानापूरयन्निव २३ तयोरभ्यसतोरेवंनानाधर्मप्रवादिनोः ॥ वातोऽतिमात्रंप्रववौसमुद्रानिलवेजितः २४ ततोऽनध्यायइतिव्यासःपुत्रमवारयत् ॥ शुकोवारितमात्रस्तुकौतूहलसमन्वितः २५ अपृच्छत्पितरंब्रह्मन्कुतोवायुरभूदयम् ॥ आख्यातुमर्हतिभवान्वायोःसर्वंविचेष्टितम् २६ शुकस्यैतद्वचःश्रुत्वाव्यासःपरमविस्मितः ॥ अनध्यायनिमित्तेऽस्मिन्निदंवचनमब्रवीत् २७ दिव्यंतेचक्षुरुत्पन्नंस्वस्थंतेनिर्मलंमनः ॥ तमसारजसाचापित्यक्तःसत्वेव्यवस्थितः २८ आदर्शेस्वामिवच्छायांपश्यस्यात्मानमात्मना ॥ व्यवस्यात्मनिस्वयंवेदान्बुद्ध्यासमनुचिंतय २९ देवयानचरोविष्णोःपितृयानश्चतामसः ॥ द्वावेतौप्रेत्यपंथानौदिवंचाधश्चगच्छतः ३० पृथिव्यामंतरिक्षेचयत्रसंवांतिवायवः ॥ सप्तैतेवायुमार्गावैतान्निबोधानुपूर्वशः ३१ तत्रदेवगणाःसाध्यामहाभूतामहाबलाः ॥ तेषामप्यभवत्पुत्रःसमानोनामदुर्जयः ३२ उदानस्तस्यपुत्रोऽभूद्व्यानस्तस्याभवत्सुतः ॥ अपानश्चततोज्ञेयःप्राणश्चापिततोपरः ३३ अनपत्योऽभवत्प्राणोदुर्धर्षःशत्रुतापनः ॥ पृथक्कर्माणितेषांतुप्रवक्ष्यामियथातथम् ३४ प्राणिनांसर्वतोवायुश्चेष्टांवर्तयतेपृथक् ॥ प्राणनाच्चैवभूतानांप्राणइत्यभिधीयते ३५

'प्राणोघ्राणाग्रहृन्नाभिपादांगुष्ठांतसंस्थितिः ॥ नीलःसौंकाररेफादिबीजेनविनियोजितः' ओंयमित्यर्थः । 'कृष्णोपानःकृकाटिस्थःपृष्ठपृष्ठांतपार्ष्णिगः ॥ सतारकनकारांतबीजेनविनियोजितः' ओंपमित्यर्थः । 'शक्रचापनिभोव्यानस्त्वगिंद्रियनिकेतनः ॥ तारकोपेतयांतांतबीजतेजोविराजितः' ओंलमित्यर्थः । 'मूर्धस्थोमध्यताल्वग्रकंठहृत्पत्तलाश्रयः ॥ उदानोऽरुणच्छायस्तारकाक्रांतयांतयुक्' ओंरमित्यर्थः । 'श्वेतःसमानोहृन्नाभिसर्वसंधिनिकेतनः ॥ प्रणवाक्रांतलांतेनबीजेनात्यंतमुज्ज्वलः'इति ओंवमित्यर्थः । षष्ठसप्तममार्गौतुजीवन्मुक्तिविदेहमुक्तिप्रदौवक्ष्यति १ देवगणाअध्यात्ममिंद्रियाणि तेषांपुत्रःसमानःइंद्रियाणांसामान्यावृत्तिरिवसमानादयः तदुक्तंसांख्यसप्तत्यां सामान्याकरणवृत्तिःप्राणाद्यावायवःपंचेति एवमधिदैवमपिसाध्यानांदेवानांसामान्यंरूपंसमानादयइत्यर्थः पिंडब्रह्मांडयोरभेदात् ३२ उदानइति एतेषामुत्तरोत्तरस्यपूर्वपूर्वकार्यत्वादुत्तरोत्तरंस्थूलत्वंज्ञेयं ३३ अनपत्यइतिप्राणस्यकार्यांतरंनास्तिसर्वापेक्षयास्थूलत्वंचदर्शितं ३४ पिंडेप्राणकार्यंप्राणशब्दप्रवृत्तिनिमित्तंचाह प्राणिनामिति ३५



अस्यैवाधिदैवकर्मनामनीआह प्रेरयतीतिसार्धेन धूमोष्मजान्मेघान्स्नेहंस्नेहत्वमथवास्नेहगुणयुक्तजलवृष्टिकालंप्राप्यअंबरेप्रेरयतीतियोजना सएववायुर्धूमज्योतिःस्नेहक्रमेणविद्युत्त्वंप्राप्यमहाद्युतिश्चभवति विद्युद्भ्यइतिपंचमील्यब्लोपे । प्रथमः विष्णुदेवसमानादिक्रमेणसप्तमोऽपिसंहारक्रमेणप्रथमइत्यर्थः । अयंभावः । पूर्वोदाहृतघ्राणांतहृन्नाभिपादांगुष्ठानांमध्येऽन्यतमेस्थानेप्राणंनिरोध्य नीलवर्णंप्राणंओंयमितिबीजशरीरंसंचिंतयन्योगीकियताकालेनसिद्धिंप्राप्तोजीवतेवशरीरेणप्रवहमार्गेणसंचरति देहांतेचप्रवहेणतादात्म्यंप्राप्नोति एवंसर्वत्रप्रयोगोज्ञेयइति ३६ आध्यात्मिकस्यापानस्याधिदैवकर्मनामनीआह आवहइति भचक्रमासमंताद्वहतीत्यावहः ३७ आदत्तेन्नमनेनोद्दीपकेनजठराग्निरित्यादानोऽपानः अपानस्यजाठरोद्दीपकत्वमाहयाज्ञवल्क्यः । 'स्वयंत्वपानंसंप्राप्यतेनैवसहमारुतः । प्रयातिज्वलनंतत्रप्राणोमध्यगतंपुनः । वायुनावाजितोवह्निरपानेनशनैःशनैः । तदाज्वलतिविप्रेंद्रसकलेदेहमध्यमे' प्राणःअपानंप्राप्यप्रवर्त्यज्वलनंप्रयातिप्रवर्तयति अपानेनवायुनावाजितःवीजितः योविधूननेजुकृइतिजुगंताद्धातोर्निष्ठायांरूपं । हेविप्रेंद्रेगार्गिइतियाज्ञवल्क्यश्लोकार्थः । आदानइत्यपावस्यनामांतरंयोगिप्रसिद्धमित्यर्थः । अंतर्देहेष्वित्यर्धे उदानमितिपाठेउत्तरान्वयि

प्रेरयत्यभ्रसंघातान्धूमजांश्चोष्मजांश्चयः ॥ प्रथमःप्रथमेमार्गेप्रवहोनामयोऽनिलः ३६ अंबरेस्नेहमभ्येत्यविद्युद्भ्यश्चमहाद्युतिः ॥ आवहोनामसंवातिद्वितीयःश्वसनोनदन् ३७ उदयंज्योतिषांशश्वत्सोमादीनांकरोतियः ॥ अंतर्देहेषुचादानंयंवदंतिमनीषिणः ३८ यश्चतुर्भ्यःसमुद्रेभ्योवायुर्धारयतेजलम् ॥ उद्धृत्याददतेचापोजीमूतेभ्योंऽबरेऽनिलः ३९ योऽद्भिःसंयोज्यजीमूतान्पर्जन्यायप्रयच्छति ॥ उद्वहोनामवंहिष्ठस्तृतीयःससदागतिः ४० समुह्यमानावहुधायेननीताःपृथग्घनाः ॥ वर्षमोक्षकृतारंभास्तेभवंतिघनाघनाः ४१ संहतायेनचाविद्धाभवंतिनदतांनदाः ॥ रक्षणार्थायसंभूतामेघत्वमुपयांतिच ४२ योऽसौवहतिभूतानांविमानानिविहायसा ॥ चतुर्थःसंवहोनामवायुःसगिरिमर्दनः ४३ येनवेगवतारुग्णारूक्षेणरुवतानगाः ॥ वायुनासहितामेघास्तेभवंतिबलाहकाः ४४ दारुणोत्पातसंचारोनभसःस्तनयित्नुमान् ॥ पंचमःसमहावेगोविवहोनाममारुतः ४५ यस्मिन्पारिप्लवादिव्यावहंत्यापोविहायसा ॥ पुण्यंचाकाशगंगायास्तोयंविष्टभ्यतिष्ठति ४६ दूरात्प्रतिहतोयस्मिन्नेकरश्मिर्दिवाकरः ॥ योनिरंशुसहस्रस्ययेनभातिवसुंधरा ४७ यस्मादाप्यायतेसोमःक्षीणःसंपूर्णमंडलः ॥ षष्ठःपरिवहोनामसवायुर्जयतांवरः ४८

३८ उद्धृत्यादानसाम्यादुद्वहादानयोरैक्यं ३९ पर्जन्यायवृष्ट्यभिमानिदेवतायै वंहिष्ठःअतिशयेनबहुः ४० वर्षमोक्षायकृतआरंभोयैस्ते रिच्यमानोमेघःपूर्णोपूर्णत्वाद्घनाघनउच्यतइत्यर्थः ४१ संहताःसंघीभूताअपियेनहेतुनातेपृथक्आविद्धाःप्रक्षिप्ताभवंति अतस्तेषांवाद्यमानवेणुवन्नदतांशब्दंकुर्वतांनदाइतिनामभवति । रक्षणार्थायगोस्तनवत्सेचनात्रिक्ताअपितेमेघत्वंयांति मिहसेचनइतिधातुः नतुनीरसफलवन्नश्यंतीत्यर्थः ४२ योऽसाविति वर्धनइतिपाठेऽपिसएवार्थः वृधुहिंसायामितिधातोरूपं ४३ मर्दनमेवाह येनेति बलेनपरोपमर्दनंअहंतिगच्छंतितेबलाहकाः पृषोदरादित्वान्नकारलोपः अहिगतावितिधातुः ४४ दारुणेति दारुणालोकनाशसूचकाधूमकेतुसंवर्तमेघादयउत्पातास्तेषांसंचारोयेनस्तनयित्नुःसगर्जितोमेघस्तद्वान् विषमवहनाद्विवहः ४५ परितउपर्यैवयस्यवेगात्पतंतिनत्वधःपतंतीतिपरिप्लवाः स्वार्थेतद्धितः यस्तोयंविष्टभ्याऽऽकाशेएवावस्थाप्य ४६ दूरादिति येनप्रतिहतःसूर्यःसहस्ररश्मिरप्येकरश्मिरिवभातीत्यर्थः ४७ एवंपिंडब्रह्मांडांतर्गतानाधिकारिकान्पंचवायूनुक्त्वाषष्ठंतदंतर्गतमपितदस्पर्शिनंवायुमाह यस्मादिति यस्मात्सहस्रारस्थिताच्चिंद्राख्यादयंसोमोब्रह्मांडांतर्गतओषधीशोब्रह्मांडाप्यायनकृत्पिंडांतर्गतंमनश्चपिंडाप्यायनकृदेतद्वयंप्राप्यआप्यायतेवर्धतेसपरिवहःसर्वतोवहनाद्व्यापकःकारणात्माषष्ठोवायुरित्यर्थः ४८

अनुकालेकल्पांते निरस्यतिसंहरति मृत्युर्वैवस्वतावपियदनुरोधिनौ तयोरपिभिरकइत्यर्थः । एतेनमृत्युग्रस्तानांब्रह्मादीनांतदधीनत्वंकैमुतिकन्यायसिद्धं ४९ भोअध्यात्मचिंतकाइतिपूजयांबहुत्वे नपुत्रसंबोधनं । शांतयाबाह्याभ्यंतरविषयेभ्यउपरतयाबुद्ध्यासम्यगहंब्रह्मास्मीतिवाक्यार्थानुसंधानपूर्वकमन्वीक्षतांश्रवणमननमनुध्यानेनपश्यतां । ध्यानाभ्यासोनिरंतरंध्यानमेवाऽभिरामंये षांतेषांयोऽमृतत्वायमोक्षायकल्पते ५० दिशोंतंप्रतिपेदिरेब्रह्मांडंनिर्भिद्यगताइत्यर्थः ५१ सप्तममाह येनेति सृष्टउपसृष्टः एकएवायंनिर्बीजसमाधिगम्यः यावदारब्धकर्मभोगंयस्मिन्लीनो ऽपियोगीसंस्कारशेषसत्त्वात्पुनरावर्ततेप्रारब्धभोगांतेदेहनाशेतुनावर्ततेइतिएतयोर्भेदः । अतोदक्षपुत्राणामप्यारब्धकर्मभोगांतेऽनावृत्तिरेवज्ञेया ५२ अदितेःखंडनशून्यायाअदीनायाःपरमचितेःपुत्रा इवपुत्रारूपभेदाः ५३ । ५४ पर्वतकंपनेहेतुमाह विष्णोरिति यतोऽयंवेदोविष्णोर्निःश्वासवातः । 'महतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदः'इत्यादिश्रुतेः सयदावेगेनसमीरितःसहसाऽकस्मादु

सर्वप्राणभृतांप्राणान्योऽनुकालेनिरस्यति ॥ यस्यवर्त्मानुवर्त्तेतेमृत्युवैवस्वतावुभौ ४९ सम्यगन्वीक्षतांबुद्ध्याशांतयाध्यात्मचिंतकाः ॥ ध्यानाभ्यासाभिरामाणां योऽमृतत्वायकल्पते ५० यंसमासाद्यवेगेनदिशोंऽतंप्रतिपेदिरे ॥ दक्षस्यदशपुत्राणांसहस्राणिप्रजापतेः ५१ येनसृष्टःपराभूतोयात्येवननिवर्तते ॥ परावहो नामपरोवायुःसदुरतिक्रमः ५२ एवमेतेऽदितेःपुत्रामारुताःपरमाद्भुताः ॥ अनारतंतेसंवांतिसर्वगाःसर्वधारिणः ५३ एतत्तुमहदाश्चर्यंयदयंपर्वतोत्तमः ॥ कंपि तःसहसातेनवायुनाऽतिप्रवायता ५४ विष्णोर्निःश्वासवातोऽयंयदावेगसमीरितः ॥ सहसोदीर्यतेतातजगत्प्रव्यथतेतदा ५५ तस्माद्ब्रह्मविदोवेदान्नाधीयंतेऽति वायति ॥ वायोर्वायुभयंह्युक्तंब्रह्मतत्पीडितंभवेत् ५६ एतावदुक्त्वावचनंपराशरसुतःप्रभुः ॥ उक्त्वापुत्रमधीष्वेतिव्योमगंगामगात्तदा ५७ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि शुकोत्पत्तिर्नाम अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८ ॥ ॥ ध ॥ ॥ भीष्मउवाच ॥ एतस्मिन्नंतरेशून्येना रदःसमुपागमत् ॥ शुकंस्वाध्यायनिरतंवेदार्थान्प्रष्टुमीप्सया १ देवर्षिंतुशुकोदृष्ट्वानारदंसमुपस्थितम् ॥ अर्घपूर्वेणविधिनावेदोक्तेनाभ्यपूजयत् २ नारदोऽथाब्रवी त्प्रीतोब्रूहिधर्मभृतांवर ॥ केनत्वांश्रेयसावत्सयोजयामीतिहृष्टवत् ३ नारदस्यवचःश्रुत्वाशुकःप्रोवाचभारत ॥ अस्मिन्लोकेहितंयत्स्यात्तेनमांयोक्तुमर्हसि ४ ॥ नारदउवाच ॥ तत्त्वंजिज्ञासतांपूर्वमृषीणांभावितात्मनाम् ॥ सनत्कुमारोभगवानिदंवचनमब्रवीत् ५

दीर्यतेउच्चैःपठ्यतेतदाजगद्व्यथते मूलपुरुषनिःश्वासःसहसोच्चैरुत्थितःकदाचित्सर्वंसंहरेदितिहेतोरितिभावः ५५ आख्यायिकायाविधित्सितमाह तस्मादिति वायुर्वेदरूपोवेगेनोच्चार्यमाणः एवंबा ह्यवायुकृतभयजनकोभवतितेनचतद्ब्रह्मजगद्रूपंवेदरूपंबापीडितंभवत्यतोमहावायौवायतिवाधिसतिनाध्येतव्यमित्यर्थः ५६ । ५७ ॥ इति शांतिपर्वणि नीलकंठीये भारतभावदीपे अष्टाविंशत्य धिकत्रिशततमोऽध्यायः ॥ ३२८ ॥ ॥ ध ॥ ॥ आत्मज्ञानेनसंचितक्रियमाणयोःकर्मणोर्दाहाश्लेषौभवतःप्रारब्धंतुज्ञानेनाप्यपरिहार्यमितिसर्वत्रप्रसिद्धं । योगीतुनिर्विकल्पकसमाध्यभ्यासे नवासुख्भावद्गृहाद्गृहांतरमिवदेहाद्देहांतरंप्रविश्यवाशुकवद्यथेष्टंदेहत्यागेनवादेहसिद्ध्यावादेहारंभकंकर्मप्रतिबध्यात्युच्छिनत्तिवेतिदर्शयितुंशुकोत्पतनमारभ्यते अतएवयोगीज्ञानिभ्योऽपिमहानितिगीतास्व प्युक्तं । 'तपस्विभ्योऽधिकोयोगीज्ञानिभ्योऽपिमतोऽधिकः'इति । तत्रतावल्लोकद्वयस्यहानार्थंतुच्छत्वंप्रदर्शयतेनारदवाक्येन एतस्मिन्नंतरेइत्यादिना शुकंनारदउपागमत्प्रष्टुकोवेदार्थान्प्रष्टुमी हयानारदमभ्यपूजयदितिसंबंधः १ । २ । ३ । ४ । ५



६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ आत्मभूतैर्देहेंद्रियादिभिःसहचवर्तते विनैवपृथक्चवर्तते कः अतद्भूतोदेहादितादात्म्यंबाधित्वाकेवलीभूतः १६ । १७ । १८

नास्तिविद्यासमंचक्षुर्नास्तिसत्यसमंतपः ॥ नास्तिरागसमंदुःखंनास्तित्यागसमंसुखम् ६ निवृत्तिःकर्मणःपापात्सततंपुण्यशीलता ॥ सद्वृत्तिःसमुदाचारःश्रेयएत दनुत्तमम् ७ मानुष्यमसुखंप्राप्ययःसज्जतिसमुह्यति ॥ नालंसदुःखमोक्षायसंयोगोदुःखलक्षणम् ८ सक्तस्यबुद्धिश्चलतिमोहजालविवर्धनी ॥ मोहजालावृतोदुःख मिहचामुत्रसोऽश्नुते ९ सर्वोपायात्तुकामस्यक्रोधस्यचविनिग्रहः ॥ कार्यःश्रेयोर्थिनातौहिश्रेयोघातार्थमुद्यतौ १० नित्यंक्रोधात्तपोरक्षेच्छ्रियंरक्षेच्चमत्सरात् ॥ विद्यां मानावमानाभ्यामात्मानंतुप्रमादतः ११ आनृशंस्यंपरोधर्मःक्षमाचपरमंबलम् ॥ आत्मज्ञानंपरंज्ञानंनसत्याद्विद्यतेपरम् १२ सत्यस्यवचनंश्रेयःसत्यादपिहितं वदेत् ॥ यद्भूतहितमत्यंतमेतत्सत्यंमतंमम १३ सर्वारंभपरित्यागीनिराशीर्निष्परिग्रहः ॥ येनसर्वंपरित्यक्तंसविद्वान्सचपंडितः १४ इंद्रियैरिंद्रियार्थान्यश्चरत्या त्मवशैरिह ॥ असज्जमानःशांतात्मानिर्विकारःसमाहितः १५ आत्मभूतैरतद्भूतःसहचैवविनैवच ॥ सविमुक्तःपरंश्रेयोनचिरेणाधितिष्ठति १६ अदर्शनमसंस्पर्शस्त थाऽसंभाषणंसदा ॥ यस्यभूतैःसहमुनेसश्रेयोविंदतेपरम् १७ नहिंस्यात्सर्वभूतानिमैत्रायणगतश्चरेत् ॥ नेदंजन्मसमासाद्यवैरंकुर्वीतकेनचित् १८ आकिंचन्यंसुसं तोषोनिराशीस्त्वमचापलम् ॥ एतदाहुःपरंश्रेयआत्मज्ञस्यजितात्मनः १९ परिग्रहंपरित्यज्यभवतातजितेंद्रियः ॥ अशोकंस्थानमातिष्ठइहचामुत्रचाभयम् २० निरामिषानशोचंतित्यजेदामिषमात्मनः ॥ परित्यज्यामिषंसौम्यदुःखतापाद्विमोक्ष्यसे २१ तपोनित्येनदांतेनमुनिनासंयतात्मना ॥ अजितंजेतुकामेनभाव्यं संगेष्वसंगिना २२ गुणसंगेष्वनासक्तएकचर्यारतःसदा ॥ ब्राह्मणोनचिरादेवसुखमायात्यनुत्तमम् २३ द्वंद्वारामेषुभूतेषुयएकोरमतेमुनिः ॥ विद्धिप्रज्ञानतृप्तं तंज्ञानतृप्तोनशोचति २४ शुभैर्लभतिदेवत्वंव्यामिश्रैर्जन्ममानुषम् ॥ अशुभैश्चाप्यधोजन्मकर्मभिर्लभतेऽवशः २५ तत्रमृत्युजरादुःखैःसततंसमभिद्रुतः ॥ सं सारेपच्यतेजंतुस्तत्कथंनावबुद्ध्यसे २६ अहितेहितसंज्ञस्त्वमध्रुवेध्रुवसंज्ञकः ॥ अनर्थेचार्थसंज्ञस्त्वंकिमर्थंनावबुध्यसे २७ संवेष्ट्यमानंबहुभिर्मोहात्तंतुभिरात्मजैः ॥ कोषकारइवात्मानंवेष्टयन्नावबुध्यसे २८ अलंपरिग्रहेणेहदोषवान्हिपरिग्रहः ॥ कृमिर्हिकोषकारस्तुबध्यतेस्वपरिग्रहात् २९ पुत्रदारकुटुंबेषुसक्ताःसीदंतिजंतवः ॥ सरःपंकार्णवेमग्नाजीर्णावनगजाइव ३० महाजालसमाकृष्टान्स्थलेमत्स्यानिवोद्धृतान् ॥ स्नेहजालसमाकृष्टान्पश्यजंतून्सुदुःखितान् ३१ कुटुंबंपुत्रदारांश्च शरीरंसंचयाश्चये ॥ पारक्यमध्रुवंसर्वंकिंस्वंसुकृतदुष्कृतम् ३२ यदासर्वान्परित्यज्यगंतव्यमवशेनते ॥ अनर्थेकिंप्रसक्तस्त्वंस्वमर्थंनानुतिष्ठसि ३३ अविश्रांत मनालंबमपाथेयमदैशिकम् ॥ तमःकांतारमध्वानंकथमेकोगमिष्यसि ३४ नहित्वांप्रस्थितंकश्चित्पृष्ठतोऽनुगमिष्यति ॥ सुकृतंदुष्कृतंचत्वांयास्यंतमनुयास्यति ३५

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५

३६ । ३७ । ३८ क्षमैवाऽरित्राणिनौचालनदंडायस्यां धर्मस्थैर्यवटारकानौकाकर्षणरज्जुर्यस्यां ३९ । ४० । ४१ । ४२ । ४३ महाभूतेति पंचभूतानि महद्बुद्धिः यदाश्रयादेहात्परंपरलोकगामि
एषसप्तदशकः इंद्रियाणिपंच चकारात्पंचप्राणाः तमआदित्रयमेकमिति ४४ इंद्रियार्थैरष्टभिः शब्दादिभिः पंचभिर्मंतव्यंबोद्धव्यमहंकर्तव्यंचतैःसहाष्टभिःएवंचतुर्विंशकः ४५ । ४६

विद्याकर्मचशौचंचज्ञानंचबहुविस्तरम् ॥ अर्थार्थमनुसार्यंतेसिद्धार्थश्चविमुच्यते ३६ निबंधनीरज्जुरेषायाग्रामेवसतोरतिः ॥ छित्वैतांसुकृतोयांतिनैनांछिंदंतिदु
ष्कृतः ३७ रूपकूलांमनःस्रोतांस्पर्शद्वीपांरसावहाम् ॥ गंधपंकांशब्दजलांस्वर्गमार्गदुरावहाम् ३८ क्षमारित्रांसत्यमयींधर्मस्थैर्यवटारकाम् ॥ त्यागवाताध्वगां
शीघ्रांनौतार्यांतांनदींतरेत् ३९ त्यजधर्ममधर्मंचतथासत्यानृतेत्यज ॥ उभेसत्यानृतेत्यक्त्वायेनत्यजसितंत्यज ४० त्यजधर्ममसंकल्पादधर्मंचाप्यलिप्सया ॥ उ
भेसत्यानृतेबुद्ध्याबुद्धिंपरमनिश्चयात् ४१ अस्थिस्थूणंस्नायुयुतंमांसशोणितलेपनम् ॥ चर्मावनद्धंदुर्गंधिपूर्णंमूत्रपुरीषयोः ४२ जराशोकसमाविष्टंरोगायतनमा
तुरम् ॥ रजस्वलमनित्यंचभूतावासमिमंत्यज ४३ इदंविश्वंजगत्सर्वमजगच्चापियद्भवेत् ॥ महाभूतात्मकंसर्वंमहद्यत्परमाश्रयात् ४४ इंद्रियाणिचपंचैवतमःसत्वं
रजस्तथा ॥ इत्येषसप्तदशकोराशिरव्यक्तसंज्ञकः ४५ सर्वैरिहेंद्रियार्थैश्चव्यक्ताव्यक्तैर्हिसंहितः ॥ चतुर्विंशकइत्येषव्यक्ताव्यक्तमयोगणः ४६ एतैःसर्वैःसमायुक्तः
पुमानित्यभिधीयते ॥ त्रिवर्गंतुसुखंदुःखंजीवितंमरणंतथा ४७ यइदंवेदतत्त्वेनसवेदप्रभवाप्ययौ ॥ पारंपर्येणबोद्धव्यंज्ञानानांयच्चकिंचन ४८ इंद्रियैर्गृह्यतेयद्यत्
तत्व्यक्तमितिस्थितिः ॥ अव्यक्तमितिविज्ञेयंलिंगग्राह्यमतींद्रियम् ४९ इंद्रियैर्नियतैर्देहीधाराभिरिवतर्प्यते ॥ लोकेविततमात्मानंलोकांश्चात्मनिपश्यति ५०
परावरदृशःशक्तिर्ज्ञानमूलाननश्यति ॥ पश्यतःसर्वभूतानिसर्वावस्थासुसर्वदा ५१ सर्वभूतस्यसंयोगोनाशुभेनोपपद्यते ॥ ज्ञानेनविविधान्क्लेशानतिवृत्तस्यमोह
जान् ५२ लोकेबुद्धिप्रकाशेनलोकमार्गोनरिष्यते ॥ अनादिनिधनंजंतुमात्मनिस्थितमव्ययम् ५३ अकर्तारममूर्तंचभगवानाहतीर्थवित् ॥ योजंतुःस्वकृतैस्तै
स्तैःकर्मभिर्नित्यदुःखितः ५४ सदुःखप्रतिघातार्थंहंतिजंतूननेकधा ॥ ततःकर्मसमादत्तेपुनरन्यन्नवंबहु ५५ तप्यतेऽथपुनस्तेनभुक्त्वाऽपथ्यमिवातुरः ॥ अजस्र
मेवमोहांधोदुःखेषुसुखसंज्ञितः ५६ बध्यतेमथ्यतेचैवकर्मभिर्मंथवत्सदा ॥ ततोनिबद्धःस्वांयोनिंकर्मणामुदयादिह ५७ परिभ्रमतिसंसारंचक्रवद्बहुवेदनः ॥ सत्वंनि
वृत्तबंधस्तुनिवृत्तश्चापिकर्मतः ५८ सर्ववित्सर्वजित्सिद्धोभवभावविवर्जितः ॥ संयमेननवंबंधंनिवर्त्यतपसोबलात् ॥ संप्राप्ताबहवःसिद्धिमप्यबाधांसुखोदयाम् ५९
॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिएकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥ नारदउवाच ॥ अशोकंशोकनाशार्थंशास्त्रंशांतिकरंशिवम् ॥
निशम्यलभतेबुद्धिंतांलब्ध्वासुखमेधते १ शोकस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् २

४७ । ४८ । ४९ । ५० । ५१ । ५२ रिष्यतेहिंस्यते ५३ तीर्थविन्मोक्षोपायवित् ५४ । ५५ । ५६ । ५७ । ५८ संयमेनधारणाध्यानसमाध्यात्मकेननवंदृष्टिमात्रेणोत्पन्नं ५९ ॥ ॥ इतिशांतिपर्व
णिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेएकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥ ॥ ७ ॥ अशोकमिति १ । २

३ । ४ । ५ । ६ । ७ । ८ द्वावनर्थौइष्टस्यादिदेहविनाशःस्वशरीरतापश्च शेषग्रंथःस्पष्टार्थोव्याख्यातप्रायश्चेतिनव्याख्यायते ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९

तस्मादनिष्टनाशार्थमितिहासंनिबोधमे ॥ तिष्ठतेचेद्वशेबुद्धिर्लभतेशोकनाशनम् ३ अनिष्टसंप्रयोगाच्चविप्रयोगात्प्रियस्यच ॥ मनुष्यामानसैर्दुःखैर्युज्यंतेस्व
ल्पबुद्धयः ४ द्रव्येषुसमतीतेषुयेगुणास्तान्नचिंतयेत् ॥ नतानाद्रियमाणस्यस्नेहबंधःप्रमुच्यते ५ दोषदर्शीभवेत्तत्रयत्ररागःप्रवर्तते ॥ अनिष्टवर्धितंपश्येत्तथा
क्षिप्रंविरज्यते ६ नार्थोनधर्मोनयशोयोऽतीतमनुशोचति ॥ अप्यभावेनयुज्येततच्चास्यननिवर्तते ७ गुणैर्भूतानियुज्यंतेवियुज्यंतेतथैवच ॥ सर्वाणिनैतदेकस्य
शोकस्थानंहिविद्यते ८ मृतंवायदिवानष्टंयोऽतीतमनुशोचति ॥ दुःखेनलभतेदुःखंद्वावनर्थौप्रपद्यते ९ नाश्रुकुर्वंतियेबुद्ध्यादृष्ट्वालोकेषुसंततिम् ॥ सम्यक्प्रपश्य
तःसर्वंनाश्रुकर्मोपपद्यते १० दुःखोपघातेशारीरेमानसेचाप्युपस्थिते ॥ यस्मिन्नशक्यतेकर्तुंयत्नस्तन्नानुचिंतयेत् ११ भैषज्यमेतद्दुःखस्ययदेतन्नानुचिंतयेत् ॥
चिंत्यमानंहिनव्येतिभूयश्चापिप्रवर्धते १२ प्रज्ञयामानसंदुःखंहन्याच्छारीरमौषधैः ॥ एतद्विज्ञानसामर्थ्यंनबालैःसमतामियात् १३ अनित्यंयौवनंरूपंजीवितंद्र
व्यसंचयः ॥ आरोग्यंप्रियसंवासोगृध्येत्तत्रनपंडितः १४ नजानपदिकंदुःखमेकःशोचितुमर्हति ॥ अशोचन्प्रतिकुर्वीतयदिपश्येदुपक्रमम् १५ सुखाद्बहुतरंदुःखं
जीवितेनात्रसंशयः ॥ स्निग्धत्वंचेंद्रियार्थेषुमोहान्मरणमप्रियम् १६ परित्यजतियोदुःखंसुखंवाप्युभयंनरः ॥ अभ्येतिब्रह्मसोऽत्यंतंनतंशोचंतिपंडिताः १७
त्यजंतेदुःखमर्थाहिपालनेनचतेसुखाः ॥ दुःखेनचाधिगम्यंतेनाशमेषांनचिंतयेत् १८ अन्यामन्यांधनावस्थांप्राप्यवैशेषिकींनराः ॥ अतृप्तायांतिविध्वंसंसंतोषं
यांतिपंडिताः १९ सर्वेक्षयांतानिचयाःपतनांताःसमुच्छ्रयाः ॥ संयोगाविप्रयोगांतामरणांतंहिजीवितम् २० अंतोनास्तिपिपासायास्तुष्टिस्तुपरमंसुखम् ॥
तस्मात्संतोषमेवेहधनंपश्यंतिपंडिताः २१ निमेषमात्रमपिहिवयोगच्छन्नतिष्ठति ॥ स्वशरीरेष्वनित्येषुनित्यंकिमनुचिंतयेत् २२ भूतेषुभावंसंचिंत्ययेबुद्ध्वामन
सःपरम् ॥ नशोचंतिगताध्वानःपश्यंतःपरमांगतिम् २३ संचिन्वानकमेवैनंकामानामवितृप्तकम् ॥ व्याघ्रःपशुमिवासाद्यमृत्युरादायगच्छति २४ तथाप्युपा
यंसंपश्येद्दुःखस्यपरिमोक्षणम् ॥ अशोचन्नारभेच्चैवमुक्तश्चाव्यसनीभवेत् २५ शब्देस्पर्शेचरूपेचगंधेषुचरसेषुच ॥ नोपभोगात्परंकिंचिद्धनिनोवाऽधनस्यच
२६ प्राक्संप्रयोगाद्भूतानांनास्तिदुःखंपरायणम् ॥ विप्रयोगात्तुसर्वस्यनशोचेत्प्रकृतिस्थितः २७ धृत्याशिश्नोदरंरक्षेत्पाणिपादंचचक्षुषा ॥ चक्षुःश्रोत्रेचम
नसामनोवाचंचविद्यया २८ प्रणयंप्रतिसंहृत्यसंस्तुतेष्वितरेषुच ॥ विचरेदसमुन्नद्धःससुखीसचपंडितः २९ अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः ॥ आत्मनै
वसहायेनयश्चरेत्ससुखीभवेत् ३० ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिशुकाभिपतनेत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥ ॥ ७ ॥

२० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥ ॥ ७ ॥ ॥

सुखेति विपर्यासःसुखेदुःखधीदुःखेसुखधीः १ । २ । ३ विधित्साभिःपिपासाभिस्तृष्णाभिः ४ । ५ व्यत्ययःपौर्वापर्यं ६ । ७ । ८ । ९ । १० । ११ । १२ १३ । १४ । १५ । १६ । १७ । १८
१९ । २० शीघ्रमिति परशरीराणिशरीरांतराणिप्राप्नुवंतीतिशेषः छिन्नबीजंस्वर्गनरकांकुरबीजंस्थूलशरीरंयस्यतंशरीरिणं कदा प्राणसंरोधेसति कीदृशंशरीरिणं मांसशोणितादियुक्तेनबीभत्सेनदेहे

॥ नारदउवाच ॥ सुखदुःखविपर्यासोयदासमनुपद्यते ॥ नैनंप्रज्ञासुनीतंवात्रायतेनापिपौरुषम् १ स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति ॥ जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् २ रुजंतिहिशरीराणिरोगाःशारीरमानसाः ॥ सायकाइवतीक्ष्णाग्राःप्रयुक्तादृढधन्विभिः ३ व्यथितस्यविधित्साभिस्ताम्यतोजीवितैषिणः ॥ अवशस्यविनाशायशरीरमपकृष्यते ४ स्रवंतिननिवर्तंतेस्रोतांसिसरितामिव ॥ आयुरादायमर्त्यानांरात्र्यहानिपुनःपुनः ५ व्यत्ययोह्ययमत्यंतंपक्षयोःशुक्लकृष्णयोः ॥ जातान्मर्त्यान्जरयतिनिमेषान्नावतिष्ठते ६ सुखदुःखानिभूतानामजरोजरयत्यसौ ॥ आदित्योह्यस्तमभ्येतिपुनःपुनरुदेतिच ७ अदृष्टपूर्वानादायभावानपरिशंकितान् ॥ इष्टानिष्टान्मनुष्याणामस्तंगच्छंतिरात्रयः ८ योऽयमिच्छेद्यथाकामंकामानांतदवाप्नुयात् ॥ यदिस्यान्नपराधीनंपुरुषस्यक्रियाफलम् ९ संयताश्चहिदक्षाश्चमतिमंतश्चमानवाः ॥ दृश्यंतेनिष्फलाःसंतःप्रहीणाःसर्वकर्मभिः १० अपरेबालिशाःसंतोनिर्गुणाःपुरुषाधमाः ॥ आशीर्भिरप्यसंयुक्तादृश्यंतेसर्वकामिनः ११ भूतानामपरःकश्चिद्धिंसायांसततोत्थितः ॥ वंचनायांचलोकस्यससुखेष्वेवजीर्यते १२ अचेष्टमानमासीनंश्रीःकंचिदुपतिष्ठते ॥ कश्चित्कर्मानुसृत्यान्योनाप्राप्यमधिगच्छति १३ अपराधंसमाचक्ष्वपुरुषस्यस्वभावतः ॥ शुक्रमन्यत्रसंभूतंपुनरन्यत्रगच्छति १४ तस्ययोनौप्रयुक्तस्यगर्भोभवतिवानवा ॥ आम्रपुष्पोपमायस्यनिर्वृत्तिरुपलभ्यते १५ केषांचित्पुत्रकामानामनुसंतानमिच्छताम् ॥ सिद्धौप्रयतमानानांनचांडमुपजायते १६ गर्भाच्चोद्विजमानानांक्रुद्धादाशीविषादिव ॥ आयुष्मान्जायतेपुत्रःकथंप्रेत्यइवाभवत् १७ देवानिष्ट्वातपस्तप्त्वाकृपणैःपुत्रगृद्धिभिः ॥ दशमासान्परिधृताजायंतेकुलपांसनाः १८ अपरेधनधान्यानिभोगांश्चपितृसंचितान् ॥ विपुलानभिजायंतेलब्धास्तैरेवमंगलैः १९ अन्योन्यंसमभिप्रेत्यमैथुनस्यसमागमे ॥ उपद्रवइवाविष्टोयोनिंगर्भःप्रपद्यते २० शीघ्रंपरशरीराणिच्छिन्नबीजंशरीरिणम् ॥ प्राणिनंप्राणसंरोधेमांसश्लेष्मविचेष्टितम् २१ निर्दग्धंपरदेहेऽपिपरदेहंचलाचलम् ॥ विनश्यंतंविनाशांतेनाविनावमिवाहितम् २२ संगत्याजठरेन्यस्तंरेतोबिंदुमचेतनम् ॥ केनयत्नेनजीवंतंगर्भंत्वमिहपश्यसि २३ अन्नपानानिजीर्यंतेयत्रभक्षाश्चभक्षिताः ॥ तस्मिन्नेवोदरेगर्भःकिंनान्नमिवजीर्यते २४

नचेष्टितंचेष्टायस्यतं मरणेऽपिसद्यःशरीरांतरमायातीतिदेहबंधविच्छेदोनकदाचिदस्तीत्यर्थः २१ परदेहेदेहांतरेनिर्दग्धंविनश्यंतंजीवमभिलक्ष्यपरंदेहंदेहांतरंचलाचलंपरिणामितयाऽतिचपलं आहितं उपस्थापितंभवति कर्मणेतिशेषः २२ देहधारणमत्याश्चर्यमित्याह संगत्येति २३ । २४



२५ । २६ । २७ सतस्येति सहजातस्यअनादिप्रवाहसंबद्धस्यदेहस्य गर्भवासोजन्मबाल्यंकौमारंपौगंडंयौवनंस्थाविर्यंजराप्राणरोधोनाशश्चेतिदशशरीरस्यदशास्तासुसप्तमींस्थाविर्यं तत्रकुटुंबभरणादिचिंतयात्याकुलत्वं नवमीतुप्राणरोधः तामुभयींपंचभूतान्येवप्राप्नुवंतिमत्वात्मा ततःनवमींप्राप्यनभवंतिदशमीमभावदशांचप्राप्नुवंतीत्यर्थः गतायुषःसतःसस्येतिसंबंधः २८ योगाःसाम

गर्भेमूत्रपुरीषाणांस्वभावनियतागतिः ॥ धारणेवाविसर्गेवानकर्ताविद्यतेऽवशः २५ स्रवंतिह्युदराद्गर्भाजायमानास्तथापरे ॥ आगमेनतथाऽन्येषांविनाशउपपद्यते २६ एतस्माद्योनिसंबंधाद्योबीजंपरिमुच्यते ॥ प्रजांचलभतेकांचित्पुनर्द्वंद्वेषुसज्जति २७ सतस्यसहजातस्यसप्तमींनवमींदशाम् ॥ प्राप्नुवंतिततःपंचनभवंतिगतायुषः २८ नाभ्युत्थानेमनुष्याणांयोगाःस्युर्नात्रसंशयः ॥ व्याधिभिश्चविमथ्यंतेव्याधैःक्षुद्रमृगाइव २९ व्याधिभिर्मथ्यमानानांत्यजतांविपुलंधनम् ॥ वेदनांनापकर्षंतियतमानाश्चिकित्सकाः ३० तेचातिनिपुणावैद्याःकुशलाःसंभृतौषधाः ॥ व्याधिभिःपरिकृष्यंतेमृगाव्याधैरिवार्दिताः ३१ तेपिबंतःकषायांश्चसर्पींषिविविधानिच ॥ दृश्यंतेजरयाभग्नानगानागैरिवोत्तमैः ३२ केवाभुविचिकित्संतेरोगार्तान्मृगपक्षिणः ॥ श्वापदानिदरिद्रांश्चप्रायोनार्ताभवंतिते ३३ घोरानपिदुराधर्षान्नृपतीनुग्रतेजसः ॥ आक्रम्याददतेरोगाःपशून्पशुगणाइव ३४ इतिलोकमनाक्रंदंमोहशोकपरिप्लुतम् ॥ स्रोतसासहसाक्षिप्तंह्रियमाणंबलीयसा ३५ नधनेननराज्येननोग्रेणतपसातथा ॥ स्वभावमतिवर्तंतेयेनियुक्ताःशरीरिणः ३६ नम्रियेरन्नजीर्येरन्सर्वेस्युःसर्वकामिनः ॥ नाप्रियंप्रतिपश्येयुरुत्थानस्यफलेसति ३७ उपर्युपरिलोकस्यसर्वोगंतुंसमीहते ॥ यततेचयथाशक्तिनचतद्वर्ततेतथा ३८ ऐश्वर्यमदमत्तांश्चमत्तान्मद्यमदेनच ॥ अप्रमत्ताःशठाःशूराविक्रांताःपर्युपासते ३९ क्लेशाःपरिनिवर्तंतेकेषांचिदसमीक्षिताः ॥ स्वंस्वंचपुनरन्येषांनकिंचिदधिगम्यते ४० महच्चफलवैषम्यंदृश्यतेकर्मसंधिषु ४१ वहंतिशिबिकामन्येयांत्यन्येशिबिकागताः ४२ सर्वेषामृद्धिकामानामन्येरथपुरःसराः ॥ मनुष्याश्चगतस्त्रीकाःशतशोविविधाःस्त्रियः ॥ द्वंद्वारामेषुभूतेषुगच्छंत्येकैकशोनराः ॥ इदमन्यत्पदंपश्यमाऽत्रमोहंकरिष्यसि ४३ त्यजधर्ममधर्मंचउभेसत्यानृतेत्यज ॥ उभेसत्यानृतेत्यक्त्वायेनत्यजसितंत्यज ४४ एतत्तेपरमंगुह्यमाख्यातमृषिसत्तम ॥ येनदेवाःपरित्यज्यमर्त्यलोकंदिवंगताः ४५ नारदस्यवचःश्रुत्वाशुकःपरमबुद्धिमान् ॥ संचिंत्यमनसाधीरोनिश्चयंनाध्यगच्छत ४६ पुत्रदारैर्महान्क्लेशोविद्याम्नायेमहाञ्छ्रमः ॥ किंनुस्याच्छाश्वतंस्थानमल्पक्लेशंमहोदयम् ४७ ततोमुहूर्तंसंचिंत्यनिश्चितांगतिमात्मनः ॥ परावरज्ञोधर्मस्यपरांनैःश्रेयसींगतिम् ४८ कथंत्वहमसंश्लिष्टोगच्छेयंगतिमुत्तमाम् ४ नावर्तेयंयथाभूयोयोनिसंकरसागरे ४९ परंभावंहिकांक्षामियत्रनावर्ततेपुनः ॥ सर्वसंगान्परित्यज्यनिश्चितोमनसागतिम् ५० तत्रयास्यामियत्रात्माशमंमेऽधिगमिष्यति ॥ अक्षयश्चाव्ययश्चैवयत्रथास्यामिशाश्वतः ५१ नतुयोगमृतेशक्याप्राप्तुंसापरमागतिः ॥ अवबंधोहिबुद्धस्यकर्मभिर्नोपपद्यते ५२



ध्यानि २९ । ३० । ३१ । ३२ । ३३ । ३४ अनाक्रंदंवेदनयामूढं ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८
असंश्लिष्टःसर्वोपाधिनिर्मुक्तः ४९ । ५० । ५१ अवबंधःनीचोदेहबंधः ५२

दिवाकरमित्यर्कमंडलांतर्वर्तीभर्गपदवाच्यःसंसारबीजभर्जनकर्तासर्वेषांप्राणिनांबुद्धेःप्रवर्तकोगायत्रीप्रतिपाद्योप्राप्तोनत्वर्चिरादिमार्गपर्वभूतोमंडलाभिमान्यादित्यः । कुतएतत्कार्यंब्रह्मलोकंप्रतितद्गम
नस्यादर्शनात् । 'शुकस्तुमारुतादूर्ध्वंगतिंकृत्वांऽतरिक्षगां । दर्शयित्वाप्रभावंस्वंब्रह्मभूतोऽभवत्तदा'इतिवाक्यशेषेशुद्धब्रह्मभावदर्शनाच । सूर्यमंडलपर्यंतंगमनंतुस्वस्ययोगप्रभावदर्शनमात्रमितित्वंत्रैव
स्पष्टमस्ति ५३ आवृत्तिमार्गंनिंदति नहीति सोमः धूमादिमार्गेणसोमलोकंगतः ५४ तल्लोकाधिपतेर्वृद्धिह्रासवत्त्वात्तत्रगताअपितादृशाएवभवंतीत्याह क्षीयतेहीति ५५ । ५६ अत्रवत्स्यामीति

तस्माद्योगंसमास्थायत्यक्त्वागृहकलेवरम् ॥ वायुभूतःप्रवेक्ष्यामितेजोराशिंदिवाकरम् ५३ नह्येषक्षयतांयातिसोमःसुरगणैर्यथा ॥ कंपितःपततेभूमिंपुनश्चैवा
धिरोहति ५४ क्षीयतेहिसदासोमःपुनश्चैवाभिपूर्यते ॥ नेच्छाम्येवंविदित्वैतेह्रासवृद्धीपुनःपुनः ५५ रविस्तुसंतापयतेलोकानरश्मिभिरुल्बणैः ॥ सर्वतस्तेजआ
दत्तेनित्यमक्षयमंडलः ५६ अतोमेरोचतेगंतुमादित्यंदीप्ततेजसम् ॥ अत्रवत्स्यामिदुर्धर्षोनिःशंकेनांतरात्मना ५७ सूर्यस्यसदनेचाहंनिक्षिप्येदंकलेवरम् ॥ ऋ
षिभिःसहयास्यामिसौरंतेजोऽतिदुःसहम् ५८ आपृच्छामिनगान्नागान्गिरिमुर्वींदिशोदिवम् ॥ देवदानवगंधर्वान्पिशाचोरगराक्षसान् ५९ लोकेषुसर्वभूतानि
प्रवेक्ष्यामिनसंशयः ॥ पश्यंतुयोगवीर्यंमेसर्वेदेवाःसहर्षिभिः ६० अथानुज्ञाप्यतमृषिंनारदंलोकविश्रुतम् ॥ तस्मादनुज्ञांसंप्राप्यजगामपितरंप्रति ६१ सोऽभिवा
द्यमहात्मानंकृष्णद्वैपायनंमुनिं ॥ शुकःप्रदक्षिणंकृत्वाकृष्णमापृष्टवान्मुनिं ६२ श्रुत्वाचार्षिस्तद्वचनंशुकस्यप्रीतोमहात्मापुनराहचैनम् ॥ भोभोपुत्रस्थीयतांताव
द्ययावच्चक्षुःप्रीणयामित्वदर्थे ६३ निरपेक्षःशुकोभूत्वानिःस्नेहोमुक्तसंशयः ॥ मोक्षमेवानुसंचिंत्यगमनायमनोदधे ६४ पितरंसंपरित्यज्यजगाममुनिसत्तमः ॥
कैलासपृष्ठंविपुलंसिद्धसंघनिषेवितम् ६५ ॥ इतिश्रीमहाभारतेशांति०मोक्ष०शुकाभिगमनेएकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥ भीष्मउवाच ॥ गिरि
शृंगंसमारुह्यसुतोव्यासस्यभारत ॥ समेदेशेविविक्तेसनिःशलाकउपाविशत् १ धारयामासचात्मानंयथाशास्त्रंयथाविधि ॥ पादप्रभृतिगात्रेषुक्रमेणक्रमयोगवित् २
ततःसप्राङ्मुखोविद्वानादित्येनाचिरोदिते ॥ पाणिपादंसमादायविनीतवदुपाविशत् ३ नतत्रपक्षिसंघातोनशब्दोनातिदर्शनम् ॥ यत्रवैयासकिर्धीमान्योक्तुंसमु
पचक्रमे ४ सददर्शतदाऽऽत्मानंसर्वसंगविनिःसृतम् ॥ प्रजहासततोहासंशुकःसंप्रेक्ष्यतत्परम् ५ सपुनर्योगमास्थायमोक्षमार्गोपलब्धये ॥ महायोगेश्वरोभूत्वा
सोऽत्यक्रामद्विहायसम् ६ ततःप्रदक्षिणंकृत्वादेवर्षिंनारदंततः ॥ निवेदयामासचतंस्वंयोगंपरमर्षये ७ ॥ शुकउवाच ॥ दृष्टोमार्गःप्रवृत्तोऽस्मिस्वस्ति
तेऽस्तुतपोधन ॥ त्वत्प्रसादाद्गमिष्यामिगतिमिष्टांमहाद्युते ८ नारदेनाभ्यनुज्ञातःशुकोद्वैपायनात्मजः ॥ अभिवाद्यपुनर्योगमास्थायाकाशमाविशत् ९

स्थित्वाऽत्रमार्गपर्वभूतआदित्योगृह्यते । सूर्यद्वारेणतेविरजाःप्रयांतीतितस्यद्वारत्वमात्रश्रवणात् ५७ सौरंआदित्यांतर्यामि । 'यआदित्येतिष्ठन्नादित्यादंतरोयमादित्योनवेद'इत्यादिश्रुतेस्ततोऽन्यत्
५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेएकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥ ॥ ७ ॥ गिरिशृं
गमिति निःशलाकेनिस्तृणे १ । २ । ३ । ४ । ५ ६ । ७ । ८ । ९

१० । ११ व्यवसायेनसार्वात्म्यनिश्चयेन १२ । १३ । १४ । १५ अधःकायातऊर्ध्वंवक्रंयस्य सूर्येदत्तदृष्टिरतःस्वदेहस्याधोभागंनपश्यतीत्यर्थः १६ । १७ । १८ । १९ । २० । २१ । २२
२३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥ ॥ इत्येवमिति । दोषान्रसा

कैलसपृष्ठादुत्पत्यसपपातदिवंतदा ॥ अंतरिक्षचरःश्रीमान्वायुभूतःसुनिश्चितः १० तमुद्यंतंद्विजश्रेष्ठंवैनतेयसमद्युतिम् ॥ ददृशुःसर्वभूतानिमनोमारुतरंहसम् ११
व्यवसायेनलोकांस्त्रीन्सर्वान्सोऽथविचिंतयन् ॥ आस्थितोदीर्घमध्वानंपावकार्कसमप्रभः १२ तमेकमनसंयांतमव्यग्रमकुतोभयम् ॥ ददृशुःसर्वभूतानिजंगमानिच
राणिच १३ यथाशक्तियथान्यायंपूजांचैवक्रिरेतदा ॥ पुष्पवर्षैश्चदिव्यैस्तमवचकुर्दिवौकसः १४ तंदृष्ट्वाविस्मिताःसर्वेगंधर्वाप्सरसांगणाः ॥ ऋषयश्चैवसंसिद्धाः
परंविस्मयमागताः १५ अंतरिक्षगतःकोऽयंतपसासिद्धिमागतः ॥ अधःकायोर्ध्ववक्त्रश्चनेत्रैःसमभिरज्यते १६ ततःपरमधर्मात्मात्रिषुलोकेषुविश्रुतः ॥ भास्क
रंसमुदीक्षन्सप्राङ्मुखोवाग्यतोऽगमत् १७ शब्देनाकाशमखिलंपूरयन्निवसर्वशः ॥ तमापतंतंसहसादृष्ट्वासर्वाप्सरोगणाः १८ संभ्रांतमनसोराजन्नासन्परमवि
स्मिताः ॥ पंचचूडाप्रभृतयोभृशमुत्फुल्ललोचनाः १९ दैवतंकतमंह्येतदुत्तमांगतिमास्थितम् ॥ सुनिश्चितमिहायातिविमुक्तमिवनिःस्पृहम् २० ततःसम
भिचक्राममलयंनामपर्वतम् ॥ उर्वशीपूर्वचित्तिश्चयंनित्यमुपसेवतः २१ तस्यब्रह्मर्षिपुत्रस्यविस्मयंययतुःपरम् ॥ अहोबुद्धिसमाधानंवेदाभ्यासरतेद्विजे २२
अचिरेणैवकालेननभश्चरतिचंद्रवत् ॥ पितृशुश्रूषयाबुद्धिंसंप्राप्तोऽयमनुत्तमाम् २३ पितृभक्तोदृढतपाःपितुःसुदयितःसुतः ॥ अनन्यमनसातेनकथंपित्राविस
र्जितः २४ उर्वश्यावचनंश्रुत्वाशुकःपरमधर्मवित् ॥ उदैक्षतदिशःसर्वावचनेगतमानसः २५ सोंऽतरिक्षंमहींचैवसशैलवनकाननाम् ॥ विलोकयामासतदासरांसिस
रितस्तथा २६ ततोद्वैपायनसुतंबहुमानात्समंततः ॥ कृतांजलिपुटाःसर्वानिरीक्षंतेस्मदेवताः २७ अब्रवीत्तास्तदावाक्यंशुकःपरमधर्मवित् ॥ पितायद्यनुगच्छेन्मां
क्रोशमानःशुकेतिवै २८ ततःप्रतिवचोदेयंसर्वैरेवसमाहितैः ॥ एतन्मेस्नेहतःसर्ववचनंकर्तुमर्हथ २९ शुकस्यवचनंश्रुत्वादिशःसर्वाःसकाननाः ॥ समुद्राःसरितः
शैलाःप्रत्यूचुस्तंसमंततः ३० यथाऽऽज्ञापयसेविप्रबाढमेवंभविष्यति ॥ ऋषेर्व्याहरतोवाक्यंप्रतिवक्ष्यामहेवयम् ३१ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्ष
धर्मपर्वणिशुकाभिपतने द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥ ॥ ७ ॥ ॥ भीष्मउवाच ॥ इत्येवमुक्त्वावचनंब्रह्मर्षिःसुमहातपाः ॥ प्रातिष्ठतशु
कःसिद्धिंहित्वादोषांश्चतुर्विधान् १ तमोह्यष्टविधंहित्वाजहौपंचविधंरजः ॥ ततःसत्त्वंजहौधीमांस्तदद्भुतमिवाभवत् २

त्विकान्मोक्षप्रतिबंधकान्धर्मज्ञानवैराग्यैश्वर्यप्रदानेनकिल्बिषसंसर्गोऽनैश्वर्याख्यान्वा यदाहमनुः । 'प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्बिषान् ॥ प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान्'इति ।
योगानितिपाठेवितर्कविचारानंदास्मिताख्यान्संप्रज्ञातभेदान्तत्फलानीत्यर्थः १ अष्टविधंपुर्यष्टकमप्रकारंतमः पंचविधंविषयपंचकेप्रवर्तकंवासनामयंरजः नवगुणंरजइतिपाठे 'अत्यागित्वमकार्पण्यंसु
खदुःखोपसेवनं ॥ भेदःपरुषताचैवकामःक्रोधस्तथैवच॥दर्पोद्वेषोऽतिवादश्चएतेप्रोक्तारजोगुणाः'इतिप्रोक्ताज्ञेयाः । सत्त्वंबुद्धिसत्त्वेनसर्वंसंत्यज्यसत्त्वमपित्यक्तंयेनत्यजसितत्त्यजेतिनारदेनोपदिष्टत्वात्२

तस्मिन्नादित्यांतर्यामिणिपरब्रह्मणिनित्येपुनरावृत्तिवर्जितेयतोनिर्गुणेप्रत्यतिष्ठत् ३ महापुरुषस्योपरमेहिजगदभाग्यसूचकाउत्पाताभवंतीत्याह उल्कापाताइति ४ । ५ । ६ ववर्षेत्यादयःशु
कस्योत्पतनेशकुनानि ७ । ८ । ९ द्विधाकृतेभारेण समुद्रलंघनेहनुमद्भारेणमहेंद्रपर्वतइवव्यथामपेत्यर्थः १० । ११ । १२ । १३ । १४ । १५ ततइति पूर्वोक्तासुसप्तसुवायुविद्यासुपंचम्याःज्ञानक

॥२३९॥ ततस्तस्मिन्पदेनित्येनिर्गुणेलिंगवर्जिते ॥ ब्रह्मणिप्रत्यतिष्ठत्सविधूमोग्निरिवज्वलन् ३ उल्कापातादिशांदाहोभूमिकंपस्तथैवच ॥ प्रादुर्भूतःक्षणेतस्मिंस्तदद्भुत अ०
मिवाभवत् ४ द्रुमाःशाखाश्चमुमुचुःशिखराणिचपर्वताः ॥ निर्घातशब्दैश्चगिरिर्हिमवान्दीर्यतीवह ५ नबभासेसहस्रांशुर्नजज्वालचपावकः ॥ ह्रदाश्चसरितश्चैव ॥३३३॥
चुक्षुभुःसागरास्तथा ६ ववर्षवासवस्तोयंरसवच्चसुगंधिच ॥ ववौसमीरणश्चापिदिव्यगंधवहःशुचिः ७ सशृंगेप्रथमेदिव्येहिमवन्मेरुसंभवे ॥ संश्लिष्टेश्वेतपीतेद्वेरु
क्मरूप्यमयेशुभे ८ शतयोजनविस्तारेतिर्यगूर्ध्वंचभारत ॥ उदीचींदिशमास्थायरुचिरेसंददर्शह ९ सोऽविशंकेनमनसातथैवाभ्यपतच्छुकः ॥ ततःपर्वतशृंगेद्वे
सहसैवद्विधाकृते १० अदृश्येतांमहाराजतदद्भुतमिवाभवत् ॥ ततःपर्वतशृंगाभ्यांसहसैवविनिःसृतः ११ नचप्रतिजघानास्यसगतिंपर्वतोत्तमः ॥ ततोमहानभू
च्छब्दोदिविसर्वदिवौकसां १२ गंधर्वाणामृषीणांचयेचशैलनिवासिनः ॥ दृष्ट्वाशुकमतिक्रांतंपर्वतंचद्विधाकृतम् १३ साधुसाध्वितितत्रासीन्नादःसर्वत्रभारत ॥ स
पूज्यमानोदेवैश्चगंधर्वैर्ऋषिभिस्तथा १४ यक्षराक्षससंघैश्चविद्याधरगणैस्तथा ॥ दिव्यैःपुष्पैःसमाकीर्णमंतरिक्षंसमंततः १५ आसीत्किलमहाराजशुकाभिपतने
तदा ॥ ततोमंदाकिनींरम्यामुपरिष्टादभिव्रजन् १६ शुकोददर्शधर्मात्मापुष्पितद्रुमकाननां ॥ तस्यांक्रीडंत्यभिरतास्तेचैवाप्सरसांगणाः १७ शून्याकारंनिराका
राःशुकंदृष्ट्वाविवाससः ॥ तंप्रक्रामंतमाज्ञायपितास्नेहसमन्वितः १८ उत्तमांगतिमास्थायपृष्ठतोऽनुससारह ॥ शुकस्तुमारुताद्रूर्ध्वंगतिंकृत्वांऽतरिक्षगाम् १९ दर्श
यित्वाप्रभावंस्वंब्रह्मभूतोऽभवत्तदा ॥ महायोगगतिंत्वन्यांव्यासोत्थायमहातपाः २० निमेषांतरमात्रेणशुकाभिपतनंययौ ॥ सददर्शद्विधाकृत्वापर्वताग्रंशुकंगतम् २१
शशंसुर्ऋषयस्तत्रकर्मपुत्रस्यतत्तदा॥ततःशुकेतिदीर्घेणशब्देनाक्रंदितस्तदा२२स्वयंपित्रास्वरेणोच्चैस्त्रीँल्लोकाननुनाद्यवै॥शुकःसर्वगतोभूत्वासर्वात्मासर्वतोमुखः२३
प्रत्यभाषतधर्मात्माभोःशब्देनानुनादयन्॥ ततएकाक्षरंनादंभोरित्येवसमीरयन् २४ प्रत्याहरज्जगत्सर्वमुच्चैःस्थावरजंगमम् ॥ ततःप्रभृतिचाद्यापिशब्दानुच्चारितान्पृ
थक् २५ गिरिगह्वरपृष्ठेषुव्याहरंतिशुकंप्रति ॥ अंतर्हितःप्रभावंतुदर्शयित्वाशुकस्तदा २६ गुणान्संत्यज्यशब्दादीन्पदमभ्यगमत्परम् ॥ महिमानंतुतंदृष्ट्वापुत्रस्यामि
ततेजसः २७ निषसादगिरिप्रस्थेपुत्रमेवानुचिंतयन् ॥ ततोमंदाकिनीतीरेक्रीडंतोऽप्सरसांगणाः २८ आसाद्यतमृषिंसर्वाःसंभ्रांतागतचेतसः ॥ जलेनिलिल्यिरेका
श्चित्काश्चिद्गुल्मान्प्रपेदिरे २९ वसनान्याददुःकाश्चित्तंदृष्ट्वामुनिसत्तमम् ॥ तांमुक्ततांतुविज्ञायमुनिःपुत्रस्यवैतदा ३० सक्ततामात्मनश्चैवप्रीतोऽभूद्व्रीडितश्चह ३१ ॥२३९॥

मेंसमुच्चयरूपायाःपार्यंतिकंफलंपंचमवायुस्थानस्यमंदाकिनीदेशस्यप्राप्तिः १६ । १७ । १८ शुकस्त्विति मारुतात्सूत्रात्मनऊर्ध्वं । वायुर्वैगौतमतत्सूत्रमितिश्रुतेः १९ व्यासउत्थाय संधिरार्षः २०
२१ शुकेति शुका ३ इतिदूराहूतेप्लुतिः अप्लुतवदुपस्थितइत्यप्लुतवद्भावात्प्रकृतिभावः २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१

३२ तमुवाचमहादेवइत्यादिनाछायाशुकस्यदानंव्यासादीनामपिपुत्रशोकोऽत्यंतापरिहार्यइतिचसूचनेनशुकवदेवनैष्ठिकंब्रह्मचर्यमातिष्ठेदित्याशयोदर्शितः ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९
४० । ४१ । ४२ ॥ इतिशांति०नी०भा०त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥ 'यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ । तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः'इतिश्रुतेर्भक्त्यामामभिजानाती
तिभगवद्वचनाच्चभक्तेर्ज्ञानांगत्वंबुद्ध्वाभजनीयांदेवतांपृच्छति गृहस्थइति १ कुतःकस्यप्रसादात्ध्रुवोऽनावृत्तिफलकोब्रह्मलोकः २ । ३ तस्माद्देवादीनांजनकात् ४ तर्कयातर्केण आर्षोलिंगव्यत्ययः

तंदेवगंधर्ववृतोमहर्षिगणपूजितः ॥ पिनाकहस्तोभगवानभ्यागच्छतशंकरः ३२ तमुवाचमहादेवःसांत्वपूर्वमिदंवचः ॥ पुत्रशोकाभिसंतप्तंकृष्णद्वैपायनंतदा ३३
अग्नेर्भूमेरपांवायोरंतरिक्षस्यचैवह ॥ वीर्येणसदृशःपुत्रःपुरामत्तस्त्वयावृतः ३४ सतथालक्षणोजातस्तपसातवसंभृतः ॥ ममचैवप्रसादेनब्रह्मतेजोमयःशुचिः ३५
सगतिंपरमांप्राप्तोदुष्प्रापामजितेंद्रियैः ॥ दैवतैरपिविप्रर्षेतंत्वंकिमनुशोचसि ३६ यावत्स्थास्यंतिगिरयोयावत्स्थास्यंतिसागराः ॥ तावत्तवाक्षयाकीर्तिःसपुत्रस्य
भविष्यति ३७ छायांस्वपुत्रसदृशींसर्वतोऽनपगांसदा ॥ द्रक्ष्यसेत्वंचलोकेऽस्मिन्मत्प्रसादान्महामुने ३८ सोऽनुनीतोभगवतास्वयंरुद्रेणभारत ॥ छायांपश्यन्स
मावृत्तःसमुनिःपरयामुदा ३९ इतिजन्मगतिश्चैवशुकस्यभरतर्षभ ॥ विस्तरेणसमाख्यातायन्मांत्वंपरिपृच्छसि ४० एतदाचष्टमेराजन्देवर्षिर्नारदःपुरा ॥ व्या
सश्चैवमहायोगीसंजल्पेषुपदेपदे ४१ इतिहासमिमंपुण्यंमोक्षधर्मोपसंहितम् ॥ धारयेद्यःशमपरःसगच्छेत्परमांगतिम् ४२ ॥ इति श्रीम०शांति०मोक्ष०शुकोत्प
तनसमाप्तिर्नामत्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः॥३३३॥युधिष्ठिरउवाच ॥ गृहस्थोब्रह्मचारीवावानप्रस्थोऽथभिक्षुकः ॥ यइच्छेत्सिद्धिमास्थातुंदेवतांकांयजेतसः
१ कुतोह्यस्यध्रुवःस्वर्गःकुतोनैःश्रेयसंपरम् ॥ विधिनाकेनजुहुयाद्दैवंपित्र्यंतथैवच २ मुक्तश्चकांगतिंगच्छेन्मोक्षश्चैवकिमात्मकः ॥ स्वर्गतश्चैवकिंकुर्याद्येननच्यवते
दिवः ३ देवतानांचकोदेवःपितॄणांचपितातथा ॥ तस्मात्परतरंयच्चतन्मेब्रूहिपितामह ४ ॥ भीष्मउवाच ॥ गूढंमांप्रश्नवित्प्रश्नंपृच्छसेत्वमिहानघ ॥ नह्येतत्त
र्कयाशक्यंवक्तुंवर्षशतैरपि ५ ऋतेदेवप्रसादाद्वाराजन्ज्ञानागमेनवा ॥ गहनंह्येतदाख्यानंव्याख्यातव्यंतवारिहन् ६ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥
नारदस्यचसंवादमृषेर्नारायणस्यच ७ नारायणोहिविश्वात्माचतुर्मूर्तिःसनातनः ॥ धर्मात्मजःसंबभूवपितैवंमेऽभ्यभाषत ८ कृतेयुगेमहाराजपुरास्वायंभुवेऽन्तरे ॥
नरोनारायणश्चैवहरिःकृष्णःस्वयंभुवः ९ तेषांनारायणनरौतपस्तेपतुरव्ययौ ॥ बदर्याश्रममासाद्यशकटेकनकामये १०

ज्ञानागमेनऋतेविना ५ । ६ । ७ चतस्रोमूर्तयोनराद्याः ८ स्वयंभुवइत्यनेनवासुदेवस्यैवैतेचत्वारोव्यूहाअजन्मानः तेनतुपांचरात्राणामिववासुदेवात्परमकारणात्संकर्षणाख्योजीवउत्पद्यतेततःप्रद्युम्ना
ख्यंमनोजायतेततोऽनिरुद्धाख्योऽहंकारउत्पद्यतइतिमतंनिरस्तंतथाचसूत्रं । उत्पत्त्यसंभवादितिनचकर्तुःकरणमितिच । जीवस्योत्पत्तौविनाशित्वंस्यात्तथाचमोक्षिणोऽभावः कर्तुःसकाशात्करणोत्प
त्तिर्दृष्टालोकेइतिसूत्रार्थः ९ शकटेशकटवत्परप्रेर्येशरीरे कनकवन्मोहकत्वात्कनकामयंतन्मयेस्थितेवेतिशेषः १०

अष्टौअविद्यायक्रवद्वाहकानियस्य भूतैःपंचभिर्युक्तं हिशब्दाल्लोकमसिद्धमिदं नरनारायणयोःशरीरेतुमायामयेइत्यर्थः वक्ष्यतिच । 'मायाह्येषामयासृष्टायन्मांपश्यसिनारद ॥ सर्वभूतगुणैर्युक्तमेवंमां ज्ञातुमर्हसि'इति ११ । १२ नूनमिति हृच्छयोंऽतर्यामीतेनमेरितः १३ । १४ आह्निकंब्रह्मयज्ञादि आस्पदमधिष्ठानं १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६।२७ अवाच्यमपिभक्तिमत्त्वाद्वक्ष्यामीत्यर्थः २८ सूक्ष्मंदुर्लक्ष्यं यतोऽविज्ञेयंनविज्ञेयंरूपादियत्र अतएवाऽव्यक्तंनास्तिव्यक्तंकार्यंयस्यकारणमपिनेत्यर्थः यतोऽचलंकूटस्थं विकारिणएवकारणत्वनियमात्

अष्टचक्रंहितद्यानंभूतयुक्तंमनोरमम् ॥ तत्राद्यौलोकनाथौतौकृशौधमनिसंततौ ११ तपसातेजसाचैवदुर्निरीक्ष्यौसुरैरपि ॥ यस्यप्रसादंकुर्वातेसदेवौद्रष्टुमर्हति
१२ नूनंतयोरनुमतेहृदिहृच्छयचोदितः ॥ महामेरोर्गिरेःशृंगात्प्रच्युतोगंधमादनम् १३ नारदःसुमहद्भूतंसर्वलोकानचीचरत ॥ तंदेशमगमद्राजन्बदर्याश्रममा
शुगः १४ तयोराह्निकवेलायांतस्यकौतूहलंत्वभूत ॥ इदंतदास्पदंकृत्स्नंयस्मिन्लोकाःप्रतिष्ठिताः १५ सदेवासुरगंधर्वाःसकिन्नरमहोरगाः ॥ एकामूर्तिरियंपूर्वंजाता
भूयश्चतुर्विधा १६ धर्मस्यकुलसंतानेधर्मादेभिर्विवर्धितः ॥ अहोह्यनुगृहीतोऽद्यधर्मएभिःसुरैरिह १७ नरनारायणाभ्यांचकृष्णेनहरिणातथा ॥ अत्रकृष्णोहरिश्चै
वकस्मिंश्चित्कारणांतरे १८ स्थितौधर्मोत्तरौह्येतौतथातपसिधिष्ठितौ ॥ एतौहिपरमंधामकाऽनयोराह्निकक्रिया १९ पितरौसर्वभूतानांदैवतंचयशस्विनौ ॥ कां
देवतांतुयजतःपितन्वाकान्महामती २० इतिसंचिंत्यमनसाभक्त्यानारायणस्यतु ॥ सहसाप्रादुरभवत्समीपेदेवयोस्तदा २१ कृतेदैवेचपित्र्येचततस्ताभ्यांनिरी
क्षितः ॥ पूजितश्चैवविधिनायथाप्रोक्तेनशास्त्रतः २२ तद्दृष्ट्वामहदाश्चर्यमपूर्वंविधिविस्तरम् ॥ उपोपविष्टःसुप्रीतोनारदोभगवानृषिः २३ नारायणंसंनिरीक्ष्यप्र
सन्नेनांतरात्मना ॥ नमस्कृत्वामहादेवमिदंवचनमब्रवीत् २४ ॥ नारदउवाच ॥ वेदेषुसपुराणेषुसांगोपांगेषुगीयसे ॥ त्वमजःशाश्वतोधाताऽमाताऽमृतमनुत्तमम्
२५ प्रतिष्ठितंभूतभव्यंत्वयिसर्वमिदंजगत ॥ चत्वारोह्याश्रमादेवसर्वेगार्हस्थ्यमूलकाः २६ यजंतेत्वामहरहर्नानामूर्तिसमास्थितम् ॥ पितामाताचसर्वस्यजगतः
शाश्वतोगुरुः ॥ कंत्वद्ययजसेदेवंपितरंकंनविद्महे २७ ॥ श्रीभगवानुवाच ॥ अवाच्यमेतद्वक्तव्यमात्मगुह्यंसनातनम् ॥ तवभक्तिमतोब्रह्मन्वक्ष्यामितुयथातथम्
२८ यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलंध्रुवम् ॥ इंद्रियैरिंद्रियार्थैश्चसर्वभूतैश्चवर्जितम् २९ सह्यंतरात्माभूतानांक्षेत्रज्ञश्चेतिकथ्यते ॥ त्रिगुणव्यतिरिक्तोवैपुरुषश्चे
तिकल्पितः ३० तस्माद्व्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तम ॥ अव्यक्ताव्यक्तभावस्थायासाप्रकृतिरव्यया ३१

ध्रुवंशाश्वतंसद्रूपमित्यर्थः एतेनतदसत्त्ववर्शकानिरस्ता २९ पुरिशरीरेवसतीतियोगात्पुरुषइतिकल्पितः । नतुतस्यदेहसंगित्वंवास्तवमस्तीत्यर्थः ३० अव्यक्तंसांख्यैर्नित्यत्वेनकल्पितंप्रधानं । ननुपुरुषस्याऽव्यक्तजनकत्वेकौटस्थ्यव्याहतिरतआह अव्यक्तेति यासत्तास्वयमव्यक्ता घटादिभ्योनिष्कृष्टायास्तस्याअग्रहणात् व्यक्तेषुचभावेषुघटःसन्पटःसन्नितिसद्रूपेणतिष्ठति सैवसत्ताअव्यया अपरिणामिनी प्रकृतिरुपादानं रज्जूरगवद्ब्रह्मण्यज्ञानंविवर्ततइत्यभ्युपगमान्नब्रह्मणःकौटस्थ्यहानिरित्यर्थः कल्पितस्यकार्यंकारणंकार्यस्यसजातीयंकल्पितमेवभवति । तत्सत्त्वंचकल्पनासमानकालिकमेव । नहिरज्जूरगस्यसत्त्वंदर्शनात्प्रागप्यस्तीत्यत्रकिंचिन्मानमस्ति । नचबाधकाभावात्कार्यस्यकल्पितत्वमेवासिद्धमितिवाच्यं । यद्यत्रतात्त्विकरूपावरणपूर्वकमभेदेनभातितत्तत्रकल्पितमिति-



-नियमेनाहंकारादेर्मिथ्यात्वावगमाद्भातिचचिदात्मनोऽसंगरूपमावृत्यतदभेदेनप्रत्यगात्माऽयमहंसुखीदुःखीब्राह्मणोगौरःकाणइति । सुवर्णेकुंडलस्यवाऽभ्यस्तत्वंमाभूदिदितितात्त्विकेति । नन्वहंकारध र्मादुःखादयश्चिदात्मनिचिदात्मधर्माश्चैतन्यादयोऽहंकारेचाध्यस्यतांकिंधर्म्यध्यासकल्पनेनेतिचेन्न यत्रहिधर्ममात्रमध्यस्यतेनतत्रधर्मिणउल्लेखोदृश्यते । यथालोहितःस्फटिकइतिलौहित्यमात्रमुल्लिख्यते नजपाकुसुममपि । अहंकाराध्यासेत्वहंदुःखीतिधर्म्युल्लेखपूर्वकंधर्माध्यासःप्रतीयमानस्तत्रधर्मिणोऽप्यध्यस्ततांविस्पष्टमाचष्टे । तस्मादध्यस्तत्वेनाहमादेर्मिथ्यात्वात्तत्कारणस्याव्यक्तस्यापितथात्वेनदृष्टिसमसमयकल्पितत्वस्यावश्यवक्तव्यत्वात्तस्माद्व्यक्तमुत्पन्नमित्यव्यक्तोत्पत्तिवचनंसंगच्छतेतरामितिदिक् ३१ अस्यचाध्यस्तस्याव्यक्तस्यजीवेशविभागहेतुत्वमाह तांयोनिमिति विधेयापेक्षं स्त्रीत्वं तांनिष्कलचैतन्यरूपां माययाआवयोर्जीवेश्वरयोःप्रकृतिंविद्धि तथाचश्रुतिः 'जीवेशावाभासेनकरोतिमायाचाविद्याचस्वयमेवभवति' इति । योसौनिष्कलःसदसदात्मकःसदसतीकार्यका

तांयोनिमावयोर्विद्धियोऽसौसदसदात्मकः ॥ आवाभ्यांपूज्यतेसोहिदैवेपित्र्येचकल्प्यते ३२ नास्तिततस्मात्परोऽन्योहिपितादेवोऽथवाद्विज ॥ आत्माहिनःस
विज्ञेयस्ततस्तंपूजयावहे ३३ तेनैषाप्रथिताब्रह्मन्मर्यादालोकभाविनी ॥ दैवंपित्र्यंचकर्तव्यमितितस्यानुशासनम् ३४ ब्रह्मास्थाणुर्मनुर्दक्षोभृगुर्धर्मस्तथायमः ॥
मरीचिरंगिराऽत्रिश्चपुलस्त्यःपुलहःक्रतुः ३५ वसिष्ठःपरमेष्ठीचविवस्वान्सोमएवच ॥ कर्दमश्चापियःप्रोक्तःक्रोधोविक्रीतएवच ३६ एकविंशतिरुत्पन्नास्तेप्रजाप
तयःस्मृताः ॥ तस्यदेवस्यमर्यादांपूजयंतःसनातनीम् ३७ दैवंपित्र्यंचसततंतस्यविज्ञायतत्त्वतः ॥ आत्मप्राप्तानिचततःप्राप्नुवंतिद्विजोत्तमाः ३८ स्वर्गस्थाअ
पियेकेचित्तान्नमस्यंतिदेहिनः ॥ तेतत्प्रसादाद्गच्छंतितेनादिष्टफलांगतिम् ३९ येहीनाःसप्तदशभिर्गुणैःकर्मभिरेवच ॥ कलाःपंचदशत्यक्तास्तेमुक्ताइतिनिश्चयः
४० मुक्तानांतुगतिर्ब्रह्मन्क्षेत्रज्ञइतिकल्पिता ॥ सहिसर्वगुणश्चैवनिर्गुणश्चैवकथ्यते ४१ दृश्यतेज्ञानयोगेनआवांचप्रसृतौततः ॥ एवंज्ञात्वातमात्मानंपूजयावःस
नातनम् ४२ तंवेदाश्चाश्रमाश्चैवनानामतसमास्थिताः ॥ भक्त्यासंपूजयंत्याशुगतिंचैषांददातिसः ४३ येतुतद्भाविताल्लोकेह्येकांतित्वंसमास्थिताः ॥ एतदभ्य
धिकंतेषांयत्तेतंप्रविशंत्युत ४४ इतिगुह्यसमुद्देशस्तवनारदकीर्तितः ॥ भक्त्याप्रेम्णाचविप्रर्षेअस्मद्भक्त्याचतेश्रुतः ४५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्ष
धर्मपर्वणिचतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥ भीष्मउवाच ॥ सएवमुक्तोद्विपदांवरिष्ठोनारायणेनोत्तमपूरुषेण ॥ जगादवाक्यंद्विपदांवरिष्ठंनारायणं
लोकहिताधिवासम् १ ॥ नारदउवाच ॥ यदर्थमात्मप्रभवेणजन्मकृतंत्वयाधर्मगृहेचतुर्धा ॥ तत्साध्यतांलोकहितार्थमद्यगच्छामिद्रष्टुंप्रकृतिंतवाद्याम् २

रणेतत्कल्पनाधिष्ठानत्वात्तदात्मकः सएवपूज्यतेआनंदात्मासर्वैरित्यर्थः ३२ । ३३ तेनमायोपाधिना ३४ । ३५ । ३६ । ३७ । ३८ । ३९ सप्तदशभिःपंचप्राणमनोबुद्धिदशेंद्रियैः गुणैःसत्त्वादिभिः कर्मभिःशुक्लकृष्णैः येश्चपंचदशकलावैराजीयास्त्यक्ताः पूर्वार्धेलिंगभंगउक्तःउत्तरार्धेस्थूलभंगउक्तःउभयोरप्येकोनविंशतिमुखत्वस्यमांडूक्येतुल्यवच्छ्रवणात् ताभ्यैवैकोनविंशतिरंतर्भाविणसप्तदश पंचदशचभवंति ४० क्षेत्रज्ञश्चिदात्मा सर्वगुणत्वंमायया निर्गुणत्वंस्वतः ४१ प्रसृतौनिर्गतौ ४२ । ४३ । ४४ अस्मिन्नेवाध्यायेसर्वेप्रश्नाःसमाहिताज्ञेयाः ४५ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥ ॥ ७ ॥ सएवेति १ आत्मप्रभवेणस्वयंभुवा जन्मअवतारः आद्यांमूर्तिंश्वेतद्वीपस्थां २

तद्दर्शनेस्वस्याधिकारसंपत्तिमाह पूजामिति ३ चत्वारिपाणिपादोदरोपस्थानि ४ । ५ । ६ । ७ उत्तरपश्चिमेनवायव्यकोणतः योत्तरतःयःउत्तरतः ८ मेरुमूलाद्द्वात्रिंशत्सहस्रयोजनादूर्ध्वं अनिं
द्रियाःस्थूलदेहसंगहीनाःअतएवाऽनशनाः शब्दादिविषयभोगशून्याः निष्पंदहीनाःनिश्चेष्टाश्च सुगंधिःपरमात्मा सुगंधिंपुष्टिवर्धनमितिमंत्रलिंगात् शोभनःसुगंधिःसुसुगंधिःसोऽस्त्येषांध्यानगोचर
इतिसुसुगंधिनः ९ श्वेताःशुद्धसत्वप्रधानाः चक्षुर्मुपस्तेजस्वित्वात् मानश्चोन्मानोऽपमानश्चसमौयेषांते शुभोयोगप्रभावजःसारोबलंतेनोपेताः १० छत्राकृतिशीर्षानिर्मांसग्रीवत्वात् समंपीनत्वर
हितंमुष्कौवृषणौचतुष्कमंसयोःकट्योश्चांतरालंचमुष्कचतुष्कंबाहुचतुष्कंवा । किमुत्वावान्मुष्कयोर्बद्धआसतइतिलिंगान्मुष्कोबाहुः । शुष्कंकाष्ठतुल्यंचतुष्कंयेषांसंशुष्कचतुष्काइत्यपिपठंति । राजी
वत्यःपंक्तियुक्ताःशिरारेखास्तासांशतैर्युक्ताःपादायेषां नाडीशतपादाइतिपाठांतरं षष्ट्याषष्टिसंख्येदं तैरिवजगच्चणकचर्वणक्षमैःसंवत्सरैर्युक्ताः । अष्टौदिशःसर्वेषामाश्रयभूतास्ताभिश्चयुक्तः देशकालो

पूजांगुरूणांसततंकरोमिपरस्यगुह्यंनतुभिन्नपूर्वम् ॥ वेदाःस्वधीताऽमललोकनाथतप्तंतपोनान्ततमुक्तपूर्वम् ३ गुप्तानिचत्वारियथागमंमेशत्रौचमित्रेचसमोऽस्मि
नित्यम् ॥ तंचादिदेवंसततंप्रपन्नएकांतभावेनवृणोम्यजस्रम् ४ एभिर्विशेषैःपरिशुद्धसत्वःकस्मान्नपश्येयमनंतमीशम् ॥ तत्पारमेष्ठ्यस्यवचोनिशम्यनारायणः
शाश्वतधर्मगोप्ता ५ गच्छेतितंनारदमुक्तवान्ससंपूजयित्वाऽऽत्मविधिक्रियाभिः ॥ ततोविसृष्टःपरमेष्ठिपुत्रःसोभ्यर्चयित्वातमृषिंपुराणम् ६ खमुत्पपातोत्तमयो
गयुक्तस्ततोऽधिमेरौसहसानिलिल्ये ॥ तत्रावतस्थेचमुनिर्मुहूर्तमेकांतमासाद्यगिरेःसशृंगे ७ आलोकयन्नुत्तरपश्चिमेनददर्शचाप्यद्भुतमुक्तरूपम् ॥ क्षीरोदधेर्यो
त्तरतोहिद्वीपःश्वेतःसनाम्नाप्रथितोविशालः ८ मेरोःसहस्रैःसहियोजनानांद्वात्रिंशतोर्ध्वंकविभिर्निरुक्तः ॥ अनिंद्रियाश्चानशनाश्चतत्रनिष्पंदहीनाःसुसुगंधिनस्ते
९ श्वेताःपुमांसोगतसर्वपापाश्चक्षुर्मुषःपापकृतांनराणाम् ॥ वज्रास्थिकायाःसममानोन्मानादिव्यावयवयरूपाःशुभसारोपेताः १० छत्राकृतिशीर्षामेघौघनिना
दाःसममुष्कचतुष्काराजीवच्छदपादाः ॥ षष्ट्यादंतैर्युक्ताःशुक्लैरष्टाभिर्दंष्ट्राभिर्येजिह्वाभिर्येविश्ववक्त्रंलेलिह्यंतेसूर्यप्रख्यम् ११ देवंभक्त्याविश्वोत्पन्नंयस्मात्सर्वेलोकाः
संप्रसूताः ॥ वेदाधर्मामुनयःशांतादेवाःसर्वेतस्यनिसर्गः १२ ॥ युधिष्ठिरउवाच ॥ अनिंद्रियानिराहाराअनिष्पंदाःसुगंधिनः ॥ कथंतेपुरुषाजाताःकातेषांगति
रुत्तमा १३ येचमुक्ताभवंतीहनराभरतसत्तम ॥ तेषांलक्षणमेतद्धितच्छ्वेतद्वीपवासिनाम् १४ तस्मान्मेसंशयंछिंधिपरंकौतूहलंहिमे ॥ त्वंहिसर्वकथारामस्त्वांचै
वापाश्रितावयम् १५ ॥ भीष्मउवाच ॥ विस्तीर्णैषाकथाराजन्श्रुतामेपितृसन्निधौ ॥ यैषातवहिवक्तव्याकथासारोहिसामता १६ राजोपरिचरोनामबभूवाधि
पतिर्भुवः ॥ आखंडलसखःख्यातोभक्तोनारायणंहरिम् १७ धार्मिकोनित्यभक्तश्चपितुर्नित्यमतंद्रितः ॥ साम्राज्यंतेनसंप्राप्तंनारायणवरात्पुरा १८

येषांमुखमध्येमविष्टावित्यर्थः । सूर्येणमख्यायतेस्फुटीक्रियतेदिनमासर्तुसंवत्सरात्मामहाकालस्तं विश्ववक्त्रंविश्वंवक्त्रेयस्यताद्दशं जिह्वाभिरिवस्वांगभूताभीरसनाशक्तिभिर्लेलिह्यंतेपायसमिवलिह्यं
ति ११ कुतएतेषामीदृशंकालग्रसनसामर्थ्यमतआह देवमिति यस्माद्धेतोर्देवंपरमेश्वरंसंमसूताध्यानबलेनहृदयेव्यक्तीकृतवंतःसूत्पणारेमातापुत्रमिव । तमेवदेवंविशिनष्टि विश्वोत्पन्नंविश्वमुत्पन्नंय
स्मात् वेदादयस्तस्यनिसर्गःअपत्यरचिताः १२ । १३ श्वेतद्वीपनिवासिनांजीवन्मुक्तानांचनिरिंद्रियत्वादिकमेवलक्षणंकथं मूर्तब्रह्मध्यायिनांभक्तानाममूर्तब्रह्मध्यायिनांचयोगिनांतुल्यत्वंकथ
मितिभावः १४ । १५ । १६ । १७ । १८



सात्वतंसात्वतानांपांचरात्राणांहितं तच्छेषेणविष्णुशेषेण १९ । २० । २१ । २२ । २३ । २४ प्रायणमुपहारं २५ । २६ । २७ । २८ । २९ सप्तप्रकृतयोमहदहंकारादिमूर्तयः स्वायंभुवस्तुमूलप्रकृ

सात्वतंविधिमास्थायप्राक्सूर्यमुखनिःसृतम् ॥ पूजयामासदेवेशंतच्छेषेणपितामहान् १९ पितृशेषेणविप्रांश्चसंविभज्याश्रितांश्चसः ॥ शेषान्नभुक्सत्यपरःसर्वभू
तेष्वहिंसकः २० सर्वभावेनभक्तःसदेवदेवंजनार्दनम् ॥ अनादिमध्यनिधनंलोककर्तारमव्ययम् २१ तस्यनारायणेभक्तिंवहतोऽमित्रकर्षिणः ॥ एकशय्यासनंदेवो
दत्तवान्देवराट्स्वयम् २२ आत्मराज्यंधनंचैवकलत्रंवाहनंतथा ॥ यत्तद्भागवतंसर्वमितितत्प्रोक्षितंसदा २३ काम्यनैमित्तिकाराजन्यज्ञियाःपरमक्रियाः ॥
सर्वाःसात्वतमास्थायविधिंचक्रेसमाहितः २४ पांचरात्रविदोमुख्यास्तस्यगेहेमहात्मनः ॥ प्रायणंभगवत्प्रोक्तंभुंजतेवाग्रभोजनम् २५ तस्यप्रशासतोराज्यं
धर्मेणामित्रघातिनः ॥ नानृतावाक्समभवन्मनोदुष्टंनचाभवत् २६ नचकायेनकृतवान्सपापंपरमण्वपि ॥ येहितेऋषयःख्याताःसप्तचित्रशिखंडिनः २७ तैरे
कमतिभिर्भूत्वायत्प्रोक्तंशास्त्रमुत्तमम् ॥ वेदैश्चतुर्भिःसमितंकृतंमेरौमहागिरौ २८ आस्यैःसप्तभिरुद्गीर्णंलोकधर्ममनुत्तमम् ॥ मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्र
तुः ॥ वसिष्ठश्चमहातेजास्तेहिचित्रशिखंडिनः २९ सप्तप्रकृतयोह्येतास्तथास्वायंभुवोऽष्टमः ॥ एताभिर्धार्यतेलोकस्ताभ्यःशास्त्रंविनिःसृतम् ३० एकाग्रमनसो
दांतामुनयःसंयमेरताः ॥ भूतभव्यभविष्यज्ञाःसत्यधर्मपरायणाः ३१ इदंश्रेयइदंब्रह्मइदंहितमनुत्तमम् ॥ लोकान्संचिंत्यमनसाततःशास्त्रंप्रचक्रिरे ३२ तत्रधर्मा
र्थकामाहिमोक्षःपश्चाच्चकीर्तितः ॥ मर्यादाविविधाश्चैवदिविभूमौचसंस्थिताः ३३ आराध्यतपसादेवंहरिंनारायणंप्रभुम् ॥ दिव्यंवर्षसहस्रंवैसर्वेतेऋषिभिःसह ३४
नारायणानुशास्ताहितदादेवीसरस्वती ॥ विवेशतानृषीन्सर्वाँल्लोकानांहितकाम्यया ३५ ततःप्रवर्तितासम्यक्तपोविद्भिर्द्विजातिभिः ॥ शब्देचार्थेचहेतौचएषा
प्रथमसर्गजा ३६ अदावेवहितच्छास्त्रमोंकारस्वरपूजितम् ॥ ऋषिभिःश्रावितंयत्रतत्रकारुणिकोह्यसौ ३७ ततःप्रसन्नोभगवाननिर्दिष्टशरीरगः ॥ ऋषीनुवाच
तान्सर्वानदृश्यःपुरुषोत्तमः ३८ कृतंशतसहस्रंहिश्लोकानामिदमुत्तमम् ॥ लोकतंत्रस्यकृत्स्नस्ययस्माद्धर्मःप्रवर्तते ३९ प्रवृत्तौचनिवृत्तौचयस्मादेतद्भविष्यति ॥
यजुर्ऋक्सामभिर्जुष्टमथर्वांगिरसैस्तथा ४० यथाप्रमाणंहिमयाकृतोब्रह्माप्रसादतः ॥ रुद्रश्चक्रोधजोविप्रायूयंप्रकृतयस्तथा ४१ सूर्याचंद्रमसौवायुर्भूमिरापोऽग्नि
रेवच ॥ सर्वेचनक्षत्रगणायच्चभूताभिशब्दितम् ४२ अधिकारेषुवर्तंतेयथास्वंब्रह्मवादिनः ॥ सर्वेप्रमाणंहियथातथातच्छास्त्रमुत्तमम् ४३ भविष्यतिप्रमाणंवैएत
न्मदनुशासनम् ॥ तस्मात्प्रवक्ष्यतेधर्मान्मनुःस्वायंभुवःस्वयम् ४४ उशनाबृहस्पतिश्चैवयदोत्पन्नौभविष्यतः ॥ तदाप्रवक्ष्यतःशास्त्रंयुष्मन्मतिभिरुद्धृतम् ४५ स्वायं
भुवेषुधर्मेषुशास्त्रेचौशनसेकृते ॥ बृहस्पतिमतेचैवलोकेषुप्रतिचारिते ४६ युष्मत्कृतमिदंशास्त्रंप्रजापालोवसुस्ततः ॥ बृहस्पतिसकाशाद्वैप्राप्स्यतेद्विजसत्तमाः ४७

तिरेव महत्कर्तृकत्वादिदंशास्त्रमुपादेयमितिपांचरात्रागमस्तुतिः स्तुतिरध्यायशेषेण स्पष्टार्थश्चाध्यायः ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१
४२ । ४३ । ४४ । ४५ । ४६ । ४७

४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपे पंचत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥ ॥ ततोऽतीतेमहाकल्पेइत्यध्यायःपर

सहिसद्भावितोराजामद्भक्तश्चभविष्यति ॥ तेनशास्त्रेणलोकेषुक्रियाःसर्वाःकरिष्यति ४८ एतद्धियुष्मच्छास्त्राणांशास्त्रमुत्तमसंज्ञितम् ॥ एतदर्थ्यंचधर्म्यंचरहस्यंचै
तदुत्तमम् ४९ अस्यप्रवर्त्तनाच्चैवप्रजानंतोभविष्यथ ॥ सचराजश्रियायुक्तोभविष्यतिमहान्वसुः ५० संस्थितेतुनृपेतस्मिन्शास्त्रमेतत्सनातनम् ॥ अंतर्धास्यति
तत्सर्वमेतद्वःकथितंमया ५१ एतावदुक्त्वावचनमदृश्यःपुरुषोत्तमः ॥ विसृज्यतानृषीन्सर्वान्कामपिप्रसृतोदिशम् ५२ ततस्तेलोकपितरःसर्वलोकार्थचिंतकाः ॥
प्रावर्त्तयंतततच्छास्त्रंधर्मयोनिंसनातनम् ५३ उत्पन्नेऽंगिरसेचैवयुगेप्रथमकल्पिते ॥ सांगोपनिषदंशास्त्रंस्थापयित्वाबृहस्पतौ ५४ जग्मुर्यथेप्सितंदेशंतपसेकृतनि
श्चयाः ॥ धारणाःसर्वलोकानांसर्वधर्मप्रवर्त्तकाः ५५ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिनारायणीयेपंचत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥
॥ भीष्मउवाच ॥ ततोऽतीतेमहाकल्पेउत्पन्नेंऽगिरसःसुते ॥ बभूवुर्निर्वृतादेवाजातेदेवपुरोहिते १ बृहद्ब्रह्ममहच्चेतिशब्दाःपर्यायवाचकाः ॥ एभिःसमन्वितोराज
न्गुणैर्विद्वान्बृहस्पतिः २ तस्यशिष्योबभूवाग्र्योराजोपरिचरोवसुः ॥ अधीतवांस्तदाशास्त्रंसम्यक्चित्रशिखंडिजम् ३ सराजाभावितःपूर्वंदैवेनविधिनावसुः ॥
पालयामासपृथिवींदिवमाखंडलोयथा ४ तस्ययज्ञोमहानासीदश्वमेधोमहात्मनः ॥ बृहस्पतिरुपाध्यायस्तत्रहोताबभूवह ५ प्रजापतिसुताश्चात्रसदस्याश्चाभवं
स्त्रयः ॥ एकतश्चद्वितश्चैवत्रितश्चैवमहर्षयः ६ धनुषाख्योऽथरैभ्यश्चअर्वावसुपरावसू ॥ ऋषिर्मेधातिथिश्चैवतांड्यश्चैवमहानृषिः ७ ऋषिःशांतिर्महाभागस्तथा
वेदशिराश्चयः ॥ ऋषिःश्रेष्ठश्चकपिलःशालिहोत्रपितास्मृतः ८ आद्यःकठस्तैत्तिरिश्चवैशंपायनपूर्वजः ॥ कण्वोऽथदेवहोत्रश्चएतेषोडशकीर्त्तिताः ९ संभूताःसर्वे
संभारास्तस्मिन्राजन्महाक्रतौ ॥ नतत्रपशुघातोऽभूत्सराजैवंस्थितोऽभवत् १० अहिंस्रःशुचिरक्षुद्रोनिराशीःकर्मसंस्तुतः ॥ आरण्यकपदोद्भूताभागास्तत्रोपक
ल्पिताः ११ प्रीतस्ततोऽस्यभगवान्देवदेवःपुरातनः ॥ साक्षात्तंदर्शयामाससोऽदृश्योऽन्येनकेनचित् १२ स्वयंभागमुपाघ्रायपुरोडाशंगृहीतवान् ॥ अदृश्येनहृ
तोभागोदेवेनहरिमेधसा १३ बृहस्पतिस्ततःक्रुद्धःस्रुचमुद्यम्यवेगितः ॥ आकाशंघ्नन्स्रुचःपातैरोषादश्रूण्यवर्तयत् १४ उवाचचोपरिचरंमयाभागोयमुद्यतः ॥
ग्राह्यःस्वयंहिदेवेनमत्प्रत्यक्षंनसंशयः १५ ॥ युधिष्ठिरउवाच ॥ उद्यतायज्ञभागाहिसाक्षात्प्राप्ताःसुरैरिह ॥ किमर्थमिहनप्राप्तोदर्शनंसहरिर्विभुः १६ ॥ भीष्मउ
वाच ॥ ततःसतंसमुद्धूतंभूमिपालोमहान्वसुः ॥ प्रसादयामासमुनिंसदस्यास्तेचसर्वशः १७ ऊचुश्चैनमसंभ्रांतानरोषंकर्तुमर्हसि ॥ नैषधर्मःकृतयुगेयस्त्वंरोषमची
कृथाः १८ अरोषणोह्यसौदेवोयस्यभागोऽयमुद्यतः ॥ नशक्यःसत्वयाद्रष्टुमस्माभिर्वाबृहस्पते १९ यस्यप्रसादंकुरुतेसवैतंद्रष्टुमर्हति ॥ एकतद्वितत्रिताश्चोचु
स्ततश्चित्रशिखंडिनः २०

क्षेश्वरदर्शनस्यदौर्लभ्यंतद्भक्तदर्शनाच्चतद्दर्शनसिद्धिरित्येतत्प्रतिपादयति स्पष्टार्थश्च १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २०

२१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ ४३ । ४४ । ४५ । ४६ । ४७ । ४८ । ४९ । ५० । ५१

वयंहिब्रह्मणःपुत्रामानसाःपरिकीर्तिताः ॥ गतानिःश्रेयसार्थंहिकदाचिद्दिशमुत्तराम् २१ तप्त्वावर्षसहस्राणिचरित्वातपउत्तमम् ॥ एकपादाःस्थिताःसम्यक्काष्ठभू
ताःसमाहिताः २२ मेरोरुत्तरभागेतुक्षीरोदस्यानुकूलतः ॥ सदेशोयत्रनस्तप्तंतपःपरमदारुणम् २३ कथंपश्येमहिवयंदेवंनारायणात्मकम् ॥ वरेण्यंवरदंतंवैदेव
देवंसनातनम् २४ कथंपश्येमहिवयंदेवंनारायणंत्विति ॥ अथव्रतस्यावभृथेवागुवाचाशरीरिणी २५ स्निग्धगंभीरयावाचाप्रहर्षणकरीविभो ॥ सुतप्तंवस्तपोवि
प्राःप्रसन्नेनांतरात्मना २६ यूयंजिज्ञासवोभक्ताःकथंद्रक्ष्यथतंविभुम् ॥ क्षीरोदधेरुत्तरतःश्वेतद्वीपोमहाप्रभः २७ तत्रनारायणपरामानवाश्चंद्रवर्चसः ॥ एकां
तभावोपगतास्तेभक्ताःपुरुषोत्तमम् २८ तेसहस्रार्चिषंदेवंप्रविशंतिसनातनम् ॥ अनिंद्रियानिराहाराअनिष्पंदाःसुगंधिनः २९ एकांतिनस्तेपुरुषाःश्वेतद्वी
पनिवासिनः ॥ गच्छध्वंतत्रमुनयस्तत्रात्मामेप्रकाशितः ३० अथश्रुत्वावयंसर्वेवाचंतामशरीरिणीम् ॥ यथाख्यातेनमार्गेणतंदेशंप्रतिपेदिरे ३१ प्राप्यश्वेतंमहाद्वी
पंतच्चित्तास्तद्दिदृक्षवः ॥ ततोऽस्मद्दृष्टिविषयस्तदाप्रतिहतोऽभवत् ३२ नचपश्यामपुरुषंतत्तेजोहृतदर्शनाः ॥ ततोनःप्रादुरभवद्विज्ञानंदेवयोगजम् ३३ नकि
लाततप्ततपसाशक्यतेद्रष्टुमंजसा ॥ ततःपुनर्वर्षशतंतप्त्वातात्कालिकंमहत् ३४ व्रतावसानेचशुभान्नरान्ददृशिरेवयम् ॥ श्वेतांश्चंद्रप्रतीकाशान्सर्वलक्षणलक्षितान्
३५ नित्यांजलिकृतान्ब्रह्मजपतःप्रागुदङ्मुखान् ॥ मानसोनामसजपोजप्यतेतैर्महात्मभिः ३६ तेनैकाग्रमनस्त्वेनप्रीतोभवतिवैहरिः ॥ याऽभवन्मुनिशार्दूल
भाःसूर्यस्ययुगक्षये ३७ एकैकस्यप्रभातादृक्साऽभवन्मानवस्यह ॥ तेजोनिवासःसद्वीपइतिवैमेनिरेवयम् ३८ नतत्राभ्यधिकःकश्चित्सर्वेतेसमतेजसः ॥ अथसूर्य
सहस्रस्यप्रभांयुगपदुत्थिताम् ३९ सहसादृष्टवंतःस्मपुनरेवबृहस्पते ॥ सहिताश्चाभ्यधावंतततस्तेमानवाद्रुतम् ४० कृतांजलिपुटाहृष्टानमइत्येववादिनः ॥ ततो
हिवदतांतेषामश्रौष्मविपुलंध्वनिम् ४१ बलिःकिलोपह्रियतेतस्यदेवस्यतैर्नरैः ॥ वयंतुतेजसातस्यसहसाहृतचेतसः ४२ नकिंचिदपिपश्यामोहतचक्षुर्बलेंद्रियाः ॥
एकस्तुशब्दोविततःश्रुतोऽस्माभिरुदीरितः ४३ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन ॥ नमस्तेऽस्तुहृषीकेशमहापुरुषपूर्वज ४४ इतिशब्दःश्रुतोऽस्माभिःशि
क्षाक्षरसमन्वितः ॥ एतस्मिन्नंतरेवायुःसर्वगंधवहःशुचिः ४५ दिव्यान्युवाहपुष्पाणिकर्मण्याश्चौषधीस्तथा ॥ तैरिष्टःपंचकालज्ञैर्हरिरेकांतिभिर्नरैः ४६ भक्त्याप
रमयायुक्तैर्मनोवाक्कर्मभिस्तदा ॥ नूनंतत्रागतोदेवोयथातैर्वागुदीरिता ४७ वयंत्वेनंनपश्यामोमोहितास्तस्यमायया ॥ मारुतेसन्निवृत्तेचबलौचप्रतिपादिते ४८
चिंताव्याकुलितात्मानोजाताःस्मोंगिरसांवर ॥ मानवानांसहस्रेषुतेषुवैशुद्धयोनिषु ४९ अस्मान्नकश्चिन्मनसाचक्षुषावाप्यपूजयत् ॥ तेऽपिस्वस्थामुनिगणाए
कभावमनुव्रताः ५० नास्मासुदधिरेभावंब्रह्मभावमनुष्ठिताः ॥ ततोऽस्मान्सुपरिश्रांतांस्तपसाचातिकर्शितान् ५१

५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥ ॥ ७ ॥ ॥ यदाभागवतोत्यर्थमित्यादिरध्यायोवैष्णवानांहिंस्रयज्ञवर्जनार्थः १ । २ । ३ अजसंज्ञानिबीजानितस्मादेषएतेषांपशूनांमयुक्ततमोयदजस्तेजमालभंतसोऽजादालब्धादुदकामत्सइमांमाविशत्तस्मादियंमेध्याऽभवत्तमस्यामन्ववायन्सोऽनुगतोव्रीहिरभवदितिबहूचब्राह्मणं सर्वेषांपशूनां सयज्ञोमेध्यतामः इमांपृथिवींमविष्टः अन्ववायन्अन्वेषितवंतः इयंश्रुतिः पुरोडाशस्तुतिमात्रपरानतुपशूनाममेध्यत्वमतिपादनपरा नहिनिंदानिंद्यंनिंदितुंमवर्तते‌ऽपितुविधेयंस्तोतुमितिन्यायात् इतिभोगलोलुपानांदेवानांमतं । वीतरागाणामृषीणांतुमानांतराविसंवादादहिंसा

उवाचखस्थंकिमपिभूतंतत्राशरीरकम् ॥ देवउवाच ॥ दृष्टावःपुरुषाःश्वेताःसर्वेंद्रियविवर्जिताः ५२ दृष्टोभवतिदेवेशएभिर्दृष्टैर्द्विजोत्तमैः ॥ गच्छध्वंमुनयःसर्वेयथागतमितोऽचिरात् ५३ नसशक्यस्त्वभक्तेनद्रष्टुंदेवःकथंचन ॥ कामंकालेनमहताएकांतित्वमुपागतैः ५४ शक्योद्रष्टुंसभगवान्प्रभामंडलदुर्दृशः ॥ महत्कार्यंचकर्तव्यंयुष्माभिर्द्विजसत्तमाः ५५ इतःकृतयुगेऽतीतेविपर्यासंगतेऽपिच ॥ वैवस्वतेंतरेविप्राःप्राप्तेत्रेतायुगेपुनः ५६ सुराणांकार्यसिद्ध्यर्थंसहायावैभविष्यथ ॥ ततस्तदद्भुतंवाक्यंनिशम्यैवाम्रतोपमम् ५७ तस्यप्रसादात्प्राप्ताःस्मोदेशमीप्सितमंजसा ॥ एवंसुतपसाचैवहव्यकव्यैस्तथैवच ५८ देवोऽस्माभिर्नदृष्टःसकथंत्वंद्रष्टुमर्हसि ॥ नारायणोमहद्भूतंविश्वसृग्घव्यकव्यभुक् ५९ अनादिनिधनोऽव्यक्तोदेवदानवपूजितः ॥ एवमेकतवाक्येनद्वितत्रितमतेनच ३० अनुनीतःसदस्यैश्चबृहस्पतिरुदारधीः ॥ समापयत्ततोयज्ञंदैवतंसमपूजयत् ६१ समाप्तयज्ञोराजाऽपिप्रजांपालितवान्वसुः ॥ ब्रह्मशापाद्दिवोभ्रष्टःप्रविवेशमहींततः ६२ सराजाराजशार्दूलसत्यधर्मपरायणः ॥ अंतर्भूमिगतश्चैवसततंधर्मवत्सलः ३६ नारायणपरोभूत्वानारायणजपंजपन् ॥ तस्यैवचप्रसादेनपुनरेवोत्थितस्तुसः ६४ महीतलाद्गतःस्थानंब्रह्मणःसमनंतरम् ॥ परांगतिमनुप्राप्तइतिनैष्ठिकमंजसा ६५ ॥ इति श्रीमहाभारते शां०मोक्षधर्मपर्वणि नारायणीयेषट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥ ॥ युधिष्ठिरउवाच ॥ यदाभागवतोत्यर्थमासीद्राजामहान्वसुः ॥ किमर्थंसपरिभ्रष्टोविवेशविवरंभुवः १ ॥ भीष्मउवाच ॥ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ ऋषीणांचैवसंवादंत्रिदशानांचभारत २ अजेनयष्टव्यमितिप्राहुर्देवाद्विजोत्तमान् ॥ सचच्छागोप्यजोज्ञेयोनान्यःपशुरितिस्थितिः ३ ॥ ऋषयऊचुः ॥ बीजैर्यज्ञेषुयष्टव्यमितिवैवैदिकीश्रुतिः ॥ अजसंज्ञानिबीजानिच्छागंनोहंतुमर्हथ ॥ नैषधर्मःसतांदेवायत्रवध्येतवैपशुः ॥ इदंकृतयुगंश्रेष्ठंकथंवध्येतवैपशुः ५ ॥ भीष्मउवाच ॥ तेषांसंवदतामेवमृषीणांविबुधैःसह ॥ मार्गागतोनृपश्रेष्ठस्तंदेशंप्राप्तवान्वसुः ६

शास्त्रानुग्रहाबाऽवांतरतात्पर्येणमतीयमानोऽर्थोयथाभूतएवनतुसस्वार्थेऽप्रमाणं यथाऽऽहुःसंप्रदायविदः।'विरोधेगुणवादःस्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधामतः'इति तत्रयजमानःप्रस्तरइत्यादिःप्रस्तरयजमानयोरभेदस्यप्रत्यक्षविरोधात्प्रस्तरस्तुत्यर्थंगुणवादोऽयं अग्निर्हिमस्यभेषजमितिलोकावगतार्थत्वादनुवादः मेधातिथिंहकाण्वायनंमेषोभूत्वेंद्रोजहारेत्यादिर्विरोधानुवादयोरभावात्भूतार्थवादइतिवृद्धश्लोकार्थः नचात्रापिक्रत्वर्थेनालंभविधिनापुरुषार्थनिषेधस्यविरोधोऽस्ति अतोऽर्थवादोऽप्ययंस्वार्थेऽवांतरतात्पर्यविषयादेवताधिकरणन्यायेनप्रामाण्यमश्नुवीत अन्यथाभारतरामायणादीनामपिस्वार्थेप्रामाण्यंविहन्येतेति तस्मादजस्थस्यमेधस्यबीजेषुसंक्रमाद्बीजान्येवाजसंज्ञानीतियुक्तं ४ । ५ । ६ ॥२४३॥

७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ । २३ अत्रराज्ञःशापहेतुत्वाद्धिंस्रयज्ञोऽधर्मोऽपिवसोर्धाराभागप्रापकदेवानुग्रहवशात्किंचित्फलम्

अंतरिक्षचरःश्रीमान्समग्रबलवाहनः ॥ तंदृष्ट्वासहसाऽऽयांतंवसुंतेत्वंतरिक्षगम् ७ ऊचुर्द्विजातयोदेवानेषच्छेत्स्यतिसंशयम् ॥ यज्वादानपतिःश्रेष्ठःसर्वभूतहितप्रियः ८ कथंस्विदन्यथाब्रूयादेषवाक्यंमहान्वसुः ॥ एवंतेसंविदंकृत्वाविबुधाऋषयस्तथा ९ अपृच्छन्सहिताभ्येत्यवसुंराजानमंतिकात् ॥ भोराजन्केनयष्टव्यमजेनाहोस्विदौषधैः १० एतन्नःसंशयंछिंधिप्रमाणंनोभवान्मतः ॥ सतान्कृतांजलिर्भूत्वापरिपप्रच्छवैवसुः ११ कस्यवैकोमतःकामोब्रूतसत्यंद्विजोत्तमाः ॥ ऋषयऊचुः ॥ धान्यैर्यष्टव्यमित्येवपक्षोऽस्माकंनराधिप १२ देवानांतुपशुःपक्षोमतोराजन्वदस्वनः ॥ भीष्मउवाच ॥ देवानांतुमतंज्ञात्वावसुनापक्षसंश्रयात् १३ छागेनाजेनयष्टव्यमेवमुक्तंवचस्तदा ॥ कुपितास्तेततःसर्वेमुनयःसूर्यवर्चसः १४ ऊचुर्वसुंविमानस्थंदेवपक्षार्थवादिनम् ॥ सुरपक्षोगृहीतस्तेयस्मात्तस्माद्दिवःपत १५ अद्यप्रभृतितेराजन्नाकाशेविहतागतिः ॥ अस्मच्छापाभिघातेनमहींभित्त्वाप्रवेक्ष्यसि १६ ततस्तस्मिन्मुहूर्तेऽथराजोपरिचरस्तदा ॥ अधोवैसंबभूवाशुभूमेर्विवरगोनृप १७ स्मृतिस्त्वेवंनविजहौतदानारायणाज्ञया ॥ देवास्तुसहिताःसर्वेवसोःशापविमोक्षणम् १८ चिंतयामासुरव्यग्राःसुकृतंहिनृपस्यतत् ॥ अनेनास्मत्कृतेराज्ञाशापःप्राप्तोमहात्मना १९ अस्यप्रतिप्रियंकार्यंसहितैर्नोदिवौकसः ॥ इतिबुद्ध्याव्यवस्याशुगत्वानिश्चयमीश्वराः २० ऊचुःसंहृष्टमनसोराजोपरिचरंतदा ॥ ब्रह्मण्यदेवभक्तस्त्वंसुरासुरगुरुर्हरिः २१ कामंसतवतुष्टात्माकुर्याच्छापविमोक्षणम् ॥ माननातुद्विजातीनांकर्तव्यावैमहात्मनाम् २२ अवश्यंतपसातेषांफलितव्यंनृपोत्तम ॥ यतस्त्वंसहसाभ्रष्टआकाशान्मेदिनीतलम् २३ एकंत्वनुग्रहंतुभ्यंदद्मोवैनृपसत्तम ॥ यावत्त्वंशापदोषेणकालमासिष्यसेऽनघ २४ भूमेर्विवरगोभूत्वातावत्त्वंकालमाप्स्यसि ॥ यज्ञेषुसुहुतांविप्रैर्वसोर्धारांसमाहितैः २५ प्राप्स्यसेऽस्मदनुध्यानान्माचत्वांग्लानिरस्पृशत् ॥ नक्षुत्पिपासेराजेंद्रभूमेश्छिद्रेभविष्यतः २६ वसोर्धाराभिपीतत्वात्तेजसाप्यायितेनच ॥ सदेवोस्मद्वरात्प्रीतोब्रह्मलोकंहिनेष्यति २७ एवंदत्वावरंराज्ञेसर्वेतेचदिवौकसः ॥ गताःस्वभवनंदेवाऋषयश्चतपोधनाः २८ चक्रेवसुस्ततःपूजांविष्वक्सेनायभारत ॥ जप्यंजगौचसततंनारायणमुखोद्गतम् २९ तत्रापिपंचभिर्यज्ञैःपंचकालानरिंदम ॥ अजयद्धरिंसुरपतिंभूमेर्विवरगोऽपिसन् ३० ततोऽस्यतुष्टोभगवान्भक्त्यानारायणोहरिः ॥ अनन्यभक्तस्यसतस्तत्परस्यजितात्मनः ३१ वरदोभगवान्विष्णुःसमीपस्थंद्विजोत्तमम् ॥ गरुत्मंतंमहावेगमाबभाषेप्सितंतदा ३२ द्विजोत्तममहाभागपश्यतांवचनान्मम ॥ सम्राड्राजावसुर्नामधर्मात्मासंशितव्रतः ३३ ब्राह्मणानांप्रकोपेनप्रविष्टोवसुधातलम् ॥ मानितास्तेतुविप्रेंद्रास्त्वंतुगच्छद्विजोत्तम ३४ भूमेर्विवरसंगुप्तंगरुडेहममाज्ञया ॥ अधश्चरंनृपश्रेष्ठंखेचरंकुरुमाचिरम् ३५ गरुत्मानथविक्षिप्यपक्षौमारुतवेगवान् ॥ विवेशविवरंभूमेर्यत्रास्तेपार्थिवोवसुः ३६ पिजनयतीत्यत्रैवसूचितं वसोर्धारेत्युक्तमासः २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६

३७ । ३८ । ३९ अध्यायतात्पर्यमाह केवलमिति ४० । ४१ ॥ इति शांति० मोक्ष० नील० भारतभावदीपे सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥ ॥ प्राप्येति १ । २ । ३ देवैरिंद्रियैर्दीव्यतीतिजीवोदेवदेवस्तस्येशोंऽतर्यामी १ निष्क्रियःव्यापकत्वात् २ निर्गुणःअसंगत्वात् ३ लोकसाक्षीउदासीनबोधरूपत्वात् ४ क्षेत्रज्ञः देहद्वयप्रकाशकोजीवः ५ पुरुषोत्तमःशरीरजीवेभ्योज्यायान् ६ अतएवानंतोदेशतःकालतोवस्तुतश्चपरिच्छेदशून्यः ७ पुराणिव्यष्टिस्थूलसूक्ष्मकारणशरीराणिओषतिदहतीतिपुरुषःअतएवानंतइत्युक्तं ८ महापुरुषसमष्टिस्थूलादिदाहकत्वात् ९ अतएवपुरुषेष्वन्नमयादिपूत्तमःसत्यज्ञानानंतानंदरूपः १० त्रिगुणेत्यादिनामायिकंरूपंस्तौति सत्वरजस्तमोरूप ११ प्रधानतत्संघातरूप १२ अमृतंसुधा १३ अमृतादेवास्तदाख्य १४ अनंताख्यशेषशर्मन् १५ व्योमअव्याकृताख्य १६ सनातनोऽनादिः १७ सदसतोःकार्यकारणयोःरूपेणव्यक्तोऽव्यक्तश्चग्राह्योऽग्राह्यश्चेत्यर्थः १८ ऋतंसत्यमविकारंधामप्रकाशोयस्य १९ आदिदेवोनारायणः २० वसुप्रदःकर्मफलदाता २१ प्रजापतिर्दक्षादिः २२ सुप्रजापतिःसनकादिः मोक्षगुरुत्वात् २३ वनस्पतिःअश्वत्थादिः २४ महाप्रजापतिःचतुर्मुखः २५ ऊर्जस्पतेऊर्जःअन्नादयोजीवरूपाःपशवस्तेषांपते अलुक्समासः एकत्वंजात्यभिप्रायं २६ वाचस्पतिःवाचःप्रवर्तकोदेवाचार्योवा २७ जगत्पतिरिंद्रः २८ मनस्पतिःसूत्रात्मा २९ दिवस्पतिःसूर्यः ३० मरुत्पतिःप्राणवायुः ३१ सलिलपतिर्वरुणः ३२ पृथिवीपतिःराजा ३३ दिक्पतिरिंद्राद्यादिः ३४ पूर्वनिवासमहाप्रलयेजगदाधार ३५ गुह्यअप्रकाश्य ३६ ब्रह्मपुरोहितब्रह्मणेवेदप्रद 'योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै । तंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये'इतिश्रुतेः ३७ ब्रह्मकायिकब्राह्मणशरीरसाध्ययज्ञाध्ययनादिरूप ३८ महाराजिकादयश्चत्वारोदेवानांगणविशेषाः ३९ । ४० । ४१ । ४२ सप्तभिर्गायत्र्यादिभिरर्पणीयाःसप्तैवमहांतोयज्ञभामायस्यससप्तमहाभागः ४३ याम्ययमगण ४४ महायाम्यचित्रगुप्तादिरूप ४५ संज्ञायमपत्नीतन्नामक ४६ तुषितमहातुषितौदेवगणविशेषौ ४७ । ४८ प्रमर्दनोमृत्युः ४९

ततएनंसमुत्क्षिप्यसहसाविनतासुतः ॥ उत्पपातनभस्तूर्णंतत्रचैनममुंचत ३७ अस्मिन्मुहूर्तेसंजज्ञेराजोपरिचरःपुनः ॥ सशरीरोगतश्चैवब्रह्मलोकंनृपोत्तमः ३८ एवंतेनापिकौंतेयवाग्दोषाद्देवताज्ञया ॥ प्राप्तागतिरधस्ताद्धिद्विजशापान्महात्मना ३९ केवलंपुरुषस्तेनसेवितोहरिरीश्वरः ॥ ततःशीघ्रंजहौशापंब्रह्मलोकमवाप च ४० ॥ भीष्मउवाच ॥ एतत्तेसर्वमाख्यातंसंभूतामानवायथा ॥ नारदोऽपियथाश्वेतंद्वीपंसगतवानृषिः ॥ तत्तेसर्वंप्रवक्ष्यामिशृणुष्वैकमनानृप ४१ ॥ इति श्रीमहाभारतेशांतिपर्वणि मोक्षधर्मपर्वणि नारायणीयेसप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥ ॥ भीष्मउवाच ॥ प्राप्यश्वेतंमहाद्वीपंनारदोभगवानृषिः ॥ ददर्शतानेवनरान्श्वेतांश्चंद्रसमप्रभान् १ पूजयामासशिरसामनसातैश्चपूजितः ॥ दिदृक्षुर्जप्यपरमःसर्वकृच्छ्रगतःस्थितः २ भूत्वैकाग्रमनाविप्रऊर्ध्वबाहुःसमाहितः ॥ स्तोत्रंजगौसविश्वायनिर्गुणायगुणात्मने ३ ॥ नारदउवाच ॥ नमस्तेदेवदेवेश १ निष्क्रिय २ निर्गुण ३ लोकसाक्षिन् ४ क्षेत्रज्ञ ५ पुरुषोत्तमा ६ नंत ७ पुरुष ८ महापुरुष ९ पुरुषोत्तम १० त्रिगुण ११ प्रधाना १२ मृता १३ मृताख्या १४ नंताख्य १५ व्योम १६ सनातन १७ सदसद्व्यक्ताव्यक्त १८ ऋतुधाम १९ न्नादिदेव २० वसुप्रद २१ प्रजापते २२ सुप्रजापते २३ वनस्पते २४ महाप्रजापते २५ ऊर्जस्पते २६ वाचस्पते २७ जगत्पते २८ मनस्पते २९ दिवस्पते ३० मरुत्पते ३१ सलिलपते ३२ पृथिवीपते ३३ दिक्पते ३४ पूर्वनिवास ३५ गुह्य ३६ ब्रह्मपुरोहित ३७ ब्रह्मकायिक ३८ महाराजिक ३९ चातुर्महाराजिका ४० भासुर ४१ महाभासुर ४२ सप्तमहाभाग ४३ याम्य ४४ महायाम्य ४५ संज्ञासंज्ञ ४६ तुषित ४७ महातुषित ४८ प्रमर्दन ४९

परिनिर्मितंमृत्युसहायत्वेनकल्पितंकामरोगादि ५० अपरिनिर्मितंतदन्यत्शमारोग्यादि ५१ वशवर्तीकामादिग्रस्तः ५२ अपरिनिंदितःशमादिमत्त्वात् ५३ अपरिमितःसर्वजातीयेष्वपिरूपेष्वनंतः ५४ वशवर्तीशास्यः ५५ अवशवर्तीशास्ता ५६ यज्ञोऽग्निहोत्रादिः ५७ महायज्ञोब्रह्मयज्ञादिः ५८ यज्ञसंभवोऋत्विगादिः ५९ यज्ञयोनिर्वेदः ६० यज्ञगर्भोऽग्निः ६१ यज्ञहृदयंयज्ञांगोपासनारूपः ६२ ६३ ६४ ६५ पंचकालाअहोरात्रमासर्त्वयनसंवत्सराः पंचकर्तारः'अधिष्ठानंतथाकर्ताकरणंचपृथग्विधं ॥ विविधाश्चपृथक्चेष्टादैवंचैवात्रपंचमं ॥ शरीरवाङ्मनोभिर्यत्कर्मप्रारभतेनरः ॥ न्याय्यंवाविपरीतंवापंचैतेतस्यहेतवः'इतिगीतोक्तास्तेषांपते ६६ पंचरात्रागमगम्य ६७ वैकुंठअकुंठित विकुंठायाःपुत्रेतिवा ६८ ६९ मानसिकमनउपाधिक ७० नामनामिकनाम्निनाम्निविदित ' नामानिसर्वाणियमाविशंति'इतिश्रुतेः ७१ परोब्रह्मातस्यस्वामी ७२ सुस्नातसमाप्तवेदव्रत ७३ हंसस्त्रिदंडी ७४ परमहंसएकदंडी ७५ महाहंसोदंडादिहीनः ७६ ७७ ७८ ७९ अमृतंजीवः हिरण्यंहृदयंदेवाइंद्रियाणि कुशंसमुद्रजलं ब्रह्मवेदःपद्मंब्रह्मांडमेतेषुशयनादमृतेशयादिपदसंज्ञकः ८० ८१ ८२ ८३ ८४ ८५ ८६ विष्वक्सेनोगमनशीलाभक्तपालनार्थंसेनायस्य ८७ जगतिसत्तारूपेणान्वयोयस्य ८८ ८९ ९० वडवामुखजोऽग्निस्त्वमेव ९१ ९२ सारथिरग्निश्चत्वं सारथिरस्यकेशीतिमंत्रवर्णात् अग्निर्वायुःसूर्यश्चकेशिनइतिस्मृतोसत्यामप्यत्राग्निरेवप्रकरणाद्ग्राह्यः ९३ ९४ ९५ ९६ ९७ ९८ चक्षुराज्यमवेक्षणेनसंस्कृतंयज्ञियंसर्पिः ९९ १०० १०१ भानुर्भासकः २ विदिक्दिक्कोणः ३ ४ ब्रह्ममेतुमामित्यादीनित्रीणित्रिसुपर्णानितैत्तिरीयोपनिषदिपठ्यंते तत्रप्रथमंसवितृदेवत्यंत्वंजगत्कर्तेत्यर्थः चतुष्कपर्दायुवतिःसुपेशाइत्यादिऋग्वेदमंत्रत्रयंवाप्रथमत्रिसुपर्णं ५ वर्णाःब्राह्मणादयस्तेषांधारकः ६ पंचगार्हपत्यदक्षिणाहवनीयसभ्यावसथ्याख्याग्निरूप ७ त्रिणाचिकेतनाचिकेताख्योऽग्निःत्रिवारंचितोयेनसत्रिणाचिकेतसंज्ञ ८ षडंगानिशिक्षादीनिनिधीयंतेऽस्मिन्नितिसांगवेदरूप ९ प्राग्ज्योतिषंज्येष्ठसामेतिचद्वेसामनीताभ्यांगेयजोतोवाहायीतिसामप्राग्ज्योतिः मूर्द्धानंदिवइत्यस्यामृचिगीयमानंसामज्येष्ठसाम ११० ११ सामिकानांसामकानांव्रतंवेदव्रतंधारयतीतिसामिकव्रतधर १२ अथर्वशिरःसंज्ञाउपनिषत्तद्रूप १३ पंचमहाकल्पाःसौरशाक्तगाणेशशैववैष्णवागमास्तत्प्रतिपाद्य १४ १५ १६ १७ १८ परिसंख्यानंविचारः १९ २० २१ युगनिधनंयुगांतः २२ आखंडलइंद्रः २३ प्राचीनगर्भकौशिकौमुनी २४

परिनिर्मिता ५० परिनिर्मित ५१ वशवर्त्ति ५२ न्नपरिनिंदिता ५३ परिमित ५४ वशवर्ति ५५ न्नवशवर्त्तिन् ५६ यज्ञ ५७ महायज्ञ ५८ यज्ञसंभव ५९ यज्ञयोने ६० यज्ञगर्भ ६१ यज्ञहृदय ६२ यज्ञस्तुत ६३ यज्ञभागहर ६४ पंचयज्ञ ६५ पंचकालकर्तृपते ६६ पांचरात्रिक ६७ वैकुंठ ६८ अपराजित ६९ मानसिक ७० नामनामिक ७१ परस्वामिन् ७२ सुस्नात ७३ हंस ७४ परमहंस ७५ महाहंस ७६ परमयाज्ञिक ७७ सांख्ययोग ७८ सांख्यमूर्ते ७९ स्मृतेशय ८० हिरण्येशय ८१ देवेशय ८२ कुशेशय ८३ ब्रह्मेशय ८४ पद्मेशय ८५ विश्वेश्वर ८६ विष्वक्सेन ८७ त्वंजगदन्वय ८८ त्वंजगत्प्रकृति ८९ त्वमग्निरास्यं ९० वडवामुखोग्नि ९१ त्वमाहुतिः ९२ सारथि ९३ त्वंवषट्कार ९४ त्वमोंकार ९५ त्वंतप ९६ त्वंमन ९७ त्वंचंद्रमा ९८ त्वंचक्षुराज्यं ९९ त्वंसूर्य १०० त्वंदिशांगज १ त्वंदिग्भानो २ विदिग्भानो ३ हयशिरः ४ प्रथमत्रिसौपर्णो ५ वर्णधरः ६ पंचाग्ने ७ त्रिणाचिकेत ८ षडंगनिधान ९ प्राग्ज्योतिष ११० ज्येष्ठसामग ११ सामिकव्रतधरा १२ थर्वशिराः १३ पंचमहाकल्प १४ फेनपाचार्य १५ वालखिल्य १६ वैखानसा १७ भग्नयोगा १८ भग्नपरिसंख्यान १९ युगादे १२० युगमध्य २१ युगनिधना २२ खंडल २३ प्राचीनगर्भ २४

२५ पुरुबहु २६ २७ २८ २९ ३० भोगःशरीरं ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ सर्वेच्छंदकसर्वमनोरथप्रद ४८ हरिःक पिःसएवरामावतारेहयोऽश्वोयस्य ४९ हरिमेधअश्वमेध ५० महायज्ञोयोगस्तत्रभागोहोर्म्यद्रव्यंजीवस्तस्यहर्ता ५१ ५२ ५३ ५४ हरोमेधाबुद्धिर्यस्यहारिभक्त ५५ ५६ ५७ महानियमो यमादीनामेवपराकाष्ठा ५८ ५९ ६० ६१ ६२ ६३ ६४ प्रवचनेअध्ययनेगतःस्थितोब्रह्मचारी ६५ ६६ ६७ ६८ ६९ ७० ७१ ७२ महतीवियदादिसृष्टिरूपाविभूतिरस्य ७३ मा हात्म्ययुक्तंविराडाख्यंशरीरमस्य ७४ पवित्राणिशुक्रियारण्यकादीनि महापवित्राणिपावमानीसूक्तादीनि हिरण्मयानिमंडलब्राह्मणादीनि बृहद्देवाख्यंब्रह्मइतिजप्यचतुष्टयात्मकेत्यर्थः ७५ ७६

कौशिक २५ पुरुष्टत २६ पुरुहूत २७ विश्वकृ २८ द्विश्वरूपा २९ नंतगते १३० नंतभोगा ३१ नंता ३२ नादे ३३ ऽमध्या ३४ व्यक्तमध्या ३५ व्यक्त निधन ३६ व्रतावास ३७ समुद्राधिवास ३८ यशोवास ३९ तपोवास १४० दमावास ४१ लक्ष्म्यावास ४२ विद्यावास ४३ कीर्त्यावास ४४ श्रीवास ४५ सर्वा वास ४६ वासुदेव ४७ सर्वच्छंदक ४८ हरिहय ४९ हरिमेध १५० महायज्ञभागहर ५१ वरप्रद ५२ सुखप्रद ५३ धनप्रद ५४ हरिमेध ५५ यम ५६ नियम ५७ महानियम ५८ कृच्छ्र ५९ तिकृच्छ्र १६० महाकृच्छ्र ६१ सर्वकृच्छ्र ६२ नियमधर ६३ निवृत्तभ्रम ६४ प्रवचनगत ६५ पृश्निगर्भप्रवृत्त ६६ प्रवृत्तवेदक्रिया ६७ ज ६८ सर्वगते ६९ सर्वदर्शी १७० न्ग्राह्या ७१ चल ७२ महाविभूते ७३ महात्म्यशरीर ७४ पवित्र ७५ महापवित्र ७६ हिर ण्मय ७७ बृहद ७८ प्रतर्क्या ७९ विज्ञेय १८० ब्रह्माग्र्य ८१ प्रजासर्गकर ८२ प्रजानिधनकर ८३ महामायाधर ८४ चित्रशिखंडिन् ८५ वरप्रद ८६ पुरोडाशभागहर ८७ गताध्वर ८८ च्छिन्नतृष्ण ८९ च्छिन्नसंशय १९० सर्वतोवृत्त ९१ निवृत्तरूप ९२ ब्राह्मणरूप ९३ ब्राह्मणप्रिय ९४ विश्वमूर्ते ९५ महामूर्ते ९६ बांधव ९७ भक्तवत्सल ९८ ब्रह्मण्यदेव ९९ भक्तोऽहंत्वांदिदृक्षुरेकांतदर्शनायनमोनमः ॥ इति श्रीम० शां० मो० अष्टत्रिंशदधिकत्रिशततमो ऽध्यायः ॥ ३३८ ॥ भीष्मउवाच ॥ एवंस्तुतःसभगवान्गुह्यैस्तथ्यैश्चनामभिः ॥ तंमुनिंदर्शयामासनारदंविश्वरूपधृक् १ किंचिच्चंद्राद्विशुद्धात्माकिंचिच्चंद्राद्विशे षवान् ॥ कृशानुवर्णःकिंचिच्चकिंचिद्धिष्ण्याकृतिःप्रभुः २ शुकपत्रनिभःकिंचित्किंचित्स्फटिकसन्निभः ॥ नीलांजनचयप्रख्योजातरूपप्रभःक्वचित् ३ प्रवालां कुरवर्णश्चश्वेतवर्णस्तथाक्वचित् ॥ क्वचित्सुवर्णवर्णाभोवैडूर्यसदृशःक्वचित् ४ नीलवैडूर्यसदृशइंद्रनीलनिभःक्वचित् ॥ मयूरग्रीववर्णाभोमुक्ताहारनिभःक्वचित् ५ एता न्बहुविधान्वर्णान्रूपैर्बिभ्रत्सनातनः ॥ सहस्रनयनःश्रीमाञ्छतशीर्षःसहस्रपात् ६ सहस्रोदरबाहुश्चअव्यक्तइतिचक्वचित् ॥ ओंकारमुद्गिरन्वक्त्रात्सावित्रींचतदन्वयां ७

७७ ७८ अप्रतर्क्यस्तर्कागम्यः ७९ अविज्ञेयोरूपादिहीनत्वात् ८० ब्रह्मणांकार्यकारणमहाकारणानांमध्येअग्र्यंश्रेष्ठंमहाकारणं ८१ ८२ ८३ ८४ ८५ ८६ ८७ गताध्वरप्राप्तयज्ञ ८८ ८९ ९० सर्वतोवृत्तंवृत्तिर्वर्तनंयस्य ९१ ९२ ९३ ९४ ९५ ९६ ९७ ९८ ९९ दिदृक्षुरस्मिएकमेवज्ञेयज्ञानज्ञातृविभागहीनंवस्तुअम्यतेगम्यतेयस्मिन्ततनिर्विकल्पकंदर्शनंतस्मैमह्यंक्षायेत्यर्थः ॥ इति शांतिपर्वणिमोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥ एवमिति विश्वानिसर्वाणिरूपाणिधारयतीतिविश्वरूपधृक् १ एतदेवस्पष्टयति किंचिदि त्यादिना २ । ३ जातरूपस्वर्णयोरवांतरवैजात्यकृतोभेदोज्ञेयः ४ । ५ सहस्रनयनइत्यादिनाविश्वैर्यदायज्ञाश्रममतनुरितिदर्शितं ६ । ७



८ । ९ । १० । ११ । १२ ददृशिरिदद्दृशुः पदव्यत्ययआर्षः १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० मांप्रवेक्ष्यंतीत्युक्तंतत्रप्रवेशार्हंआत्मस्वरूपमाह नदृश्यइत्यादिना नघ्रेयःघ्रा ग्रसनीयत्वादिवर्जितः यतोगंधादिनाविवर्जितः २१ रूपाद्यभावमुक्त्वासत्वाद्यभावमाह सत्वमिति कार्यकारणातीतमित्यर्थः २२ अस्योपाधिधर्मास्पर्शित्वमाह भूतेति अजोनित्यइतिजन्मा दिसर्वभावविकारनिषेधः शाश्वतइतिप्रकृतिवत्परिणामराहित्यं यतोनिर्गुणः चलंगुणवृत्तमितिन्यायेनसाम्यदशायामपिगुणानांपरिणामरूपत्वापरित्यागात् गुणा अपिगुणवंतोनभवंत्यनवस्थापातादत

शेषेभ्यश्चैववक्त्रेभ्यश्चतुर्वेदान्गिरन्बहून् ॥ अरण्यंकंजगौदेवोहरिर्नारायणोवशी ८ वेदिंकमंडलुंशुभ्रान्मणीनुपानहौकुशान् ॥ अजिनंदंडकाष्ठंचज्वलितंचहुताश नम् ९ धारयामासदेवेशोहस्तैर्यज्ञपतिस्तदा ॥ तंप्रसन्नंप्रसन्नात्मानारदोद्विजसत्तमः १० वाग्यतःप्रणतोभूत्वाववंदेपरमेश्वरम् ॥ तमुवाचनतंमूर्ध्नादेवानामादि रव्ययः ११ ॥ श्रीभगवानुवाच ॥ एकतश्चद्वितश्चैवत्रितश्चैवमहर्षयः ॥ इमंदेशमनुप्राप्तामममदर्शनलालसाः १२ नचमांतेददृशिरेनचद्रक्ष्यतिकश्चन ॥ ऋतेह्ये कांतिकश्रेष्ठात्त्वंचैवैकांतिकोत्तम १३ ममैतास्तनवःश्रेष्ठाजाताधर्मगृहेद्विज ॥ तास्त्वंभजस्वसततंसाधयस्वयथागतम् १४ वृणीष्वचवरंविप्रमत्तस्त्वंयदिहेच्छ सि ॥ प्रसन्नोऽहंतवाद्येहविश्वमूर्तिरिहाव्ययः १५ ॥ नारदउवाच ॥ अद्यमेतपसोदेवयमस्यनियमस्यच ॥ सद्यःफलमवाप्तंवैदृष्टोयद्भगवान्मया १६ वरएषम मात्यंतंदृष्टस्त्वंयत्सनातनः ॥ भगवन्विश्वदृक्सिंहःसर्वमूर्तिर्महान्प्रभुः १७ ॥ भीष्मउवाच ॥ एवंसंदर्शयित्वातुनारदंपरमेष्ठिनम् ॥ उवाचवचनंभूयोगच्छना रदमाचिरम् १८ इमेह्यनिंद्रियाहारामद्भक्ताश्चंद्रवर्चसः ॥ एकाग्राश्चिंतयेयुर्मांनैषांविघ्नोभवेदिति १९ सिद्धाह्येतेमहाभागाःपुराह्येकांतिनोऽभवन् ॥ तमोरजो भिर्निर्मुक्तामांप्रवेक्ष्यंत्यसंशयम् २० नदृश्यश्चक्षुषायोऽसौनस्पृश्यःस्पर्शनेनच ॥ नघ्रेयश्चैवगंधेनरसेनचविवर्जितः २१ सत्वंरजस्तमश्चैवनगुणास्तंभजंति वै ॥ यश्च सर्वगतःसाक्षीलोकस्यात्मेतिकथ्यते २२ भूतग्रामशरीरेषुनश्यत्सुनविनश्यति ॥ अजोनित्यःशाश्वतश्चनिर्गुणोनिष्कलस्तथा २३ द्विर्द्वादशेभ्यस्तत्त्वेभ्यःख्यातोयः पंचविंशकः ॥ पुरुषोनिष्क्रियश्चैवज्ञानदृश्यश्चकथ्यते २४ यंप्रविश्यभवंतीहमुक्तावैद्विजसत्तमाः ॥ सवासुदेवोविज्ञेयःपरमात्मासनातनः २५ पश्यदेवस्यमाहात्म्यं महिमानंचनारद ॥ शुभाशुभैःकर्मभिर्योनलिप्यतिकदाचन २६ सत्वंरजस्तमश्चेतिगुणानेतान्प्रचक्षते ॥ यत्तेसर्वशरीरेषुतिष्ठंतिविचरंतिच २७ एतान्गुणांस्तुक्षेत्र ज्ञोभुंक्तेनैभिःसभुज्यते ॥ निर्गुणोगुणभुक्चैवगुणस्रष्टागुणाधिकः २८ जगत्प्रतिष्ठादेवर्षेपृथिव्यप्सुप्रलीयते ॥ ज्योतिष्यापःप्रलीयंतेज्योतिर्वायौप्रलीयते २९ खेवा युःप्रलयंयातिमनस्याकाशमेवच ॥ मनोहिपरमंभूतंतदव्यक्तेप्रलीयते ३० अव्यक्तंपुरुषेब्रह्मन्निष्क्रियेसंप्रलीयते ॥ नास्तितस्मात्परतरःपुरुषाद्वैसनातनात् ३१

आह निष्कलइति एकगुणशरीरेगुणांतरस्याप्युपसर्जनत्वेनप्रवेशसत्त्वाद्गुणानांनिष्कलत्वलक्षणंनिरवयवत्वमस्तीतिततोऽप्यन्यद्ब्रह्मेत्यर्थः २३ द्विर्द्वादशेभ्यश्चतुर्विंशतिभ्यः ज्ञानदृश्यःसूक्ष्मबु द्धिग्राह्यः दृश्यतेत्वग्र्ययाबुद्ध्येतिश्रुतेः २४ प्रवेशार्हंरूपमुपपाद्योपसंहरति यमिति तंप्रविष्टोऽयःसनलिप्यतइत्यर्थः २५ । २६ । २७ गुणाधिकःगुणेभ्योऽतिरिक्तः २८ निर्गुणत्वंवक्तुम व्यक्तस्यकार्यस्यप्रलयमाह जगदित्यादिना २९ । ३० अव्यक्तमिति अव्यक्तस्यापिलयंवदतासांख्यमतमपास्तं ३१

एतदेवव्यतिरेकमुखेनद्रढयति नित्यमिति नित्यमविनाशिभूतंनित्यसिद्धंपरस्मादन्यन्नास्तीत्यर्थः ३२ एवंतत्पदार्थस्वरूपमुक्त्वात्वंपदार्थस्वरूपमाह सर्वेति सर्वेषांभूतानामात्मभूतःप्रत्यग्रूपोवासुदेवः एतदेवकथमित्यतआह पृथिवीत्यादिना ३३ सएषइहप्रविष्टआनखाग्रेभ्यइतिश्रुतेरर्थंसंगृह्णाति तदिति आविशतीतिप्रवेशोक्त्यापांचरात्राभिमतोजीवोत्पत्तिपक्षोऽपास्तः लघुविक्रमःशीघ्रकारी एतेनदृष्टिसृष्टिरुक्ता ३४ घटाकाशवदुपाध्युत्पत्त्याउत्पन्नइति एवशब्दोऽनवधारणे प्रवेशाभावेचेष्टानुपपत्तिमाह नविनेति ३५ सइति योऽयंप्रविष्टःसजीवःसंकर्षणाख्योविश्वविधारकोभगवतोव्यूहः ३६ सजीवएवसनत्कुमारत्वंजीवन्मुक्तत्वंस्वेनध्यानार्चनादिकर्मणालभते एवमविद्योपाधिकंजीवमुपपाद्यतस्मादेवजीवात्प्रद्युम्नाख्यंमनउत्पद्यतइत्याह यस्मिन्नित्यायर्धद्वयेन प्रद्युम्नसंज्ञकेमनसिसर्वेषांभूतानांलयोदयाबुक्तौअतोमानस्यैवेयंसृष्टिरितिभावः ३७ तस्मात्प्रसूतइति तच्छब्देनसंकर्षणःपरामृश्यते ३८ तस्मात्सर्वमितितच्छब्देनप्रद्युम्नः सएववानिरुद्धाख्योऽहंकारः

नित्यंहिनास्तिजगतिभूतंस्थावरजंगमम् ॥ ऋतेतमेकंपुरुषंवासुदेवंसनातनम् ३२ सर्वभूतात्मभूतोहिवासुदेवोमहाबलः ॥ पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् ३३ तेसमेतामहात्मानःशरीरमितिसंज्ञितम् ॥ तदाविशतियोब्रह्मन्नदृश्योलघुविक्रमः ३४ उत्पन्नएवभवतिशरीरंचेष्टयन्प्रभुः ॥ नविनाधातुसंघातंशरीरंभवतिकिंचित् ३५ नचजीवंविनाब्रह्मन्वायवश्चेष्टयंत्युत ॥ सजीवःपरिसंख्यातःशेषःसंकर्षणःप्रभुः ३६ तस्मात्सनत्कुमारत्वंयोऽलभत्स्वेनकर्मणा ॥ यस्मिंश्चसर्वभूतानिप्रलयंयांतिसंक्षयम् ३७ समनःसर्वभूतानांप्रद्युम्नःपरिपठ्यते ॥ तस्मात्प्रसूतोयःकर्ताकारणंकार्यमेवच ३८ तस्मात्सर्वंसंभवतिजगत्स्थावरजंगमम् ॥ सोऽनिरुद्धःसईशानोऽव्यक्तःससर्वकर्मसु ३९ योवासुदेवोभगवान्क्षेत्रज्ञोनिर्गुणात्मकः ॥ ज्ञेयःसएवराजेंद्रजीवःसंकर्षणःप्रभुः ४० संकर्षणाच्चप्रद्युम्नोमनोभूतःसउच्यते ॥ प्रद्युम्नाद्योऽनिरुद्धस्तुसोऽहंकारःसईश्वरः ४१ मत्तःसर्वंसंभवतिजगत्स्थावरजंगमम् ॥ अक्षरंचक्षरंचैवसच्चासच्चैवनारद ४२ मांप्रविश्यभवंतीहमुक्ताभक्तास्तुयेमम ॥ अहंहिपुरुषोज्ञेयोनिष्क्रियःपंचविंशकः ४३ निर्गुणोनिष्कलश्चैवनिर्द्वंद्वोनिष्परिग्रहः ॥ एतत्त्वयानविज्ञेयंरूपवानितिदृश्यते ४४ इच्छन्मुहूर्तान्नश्येयमीशोऽहंजगतोगुरुः ॥ मायाह्येषामयासृष्टायन्मांपश्यसिनारद ४५ सर्वभूतगुणैर्युक्तंनैवंत्वंज्ञातुमर्हसि ॥ मयैतत्कथितंसम्यक्तवमूर्तिचतुष्टयम् ४६

३९ एवंत्वंपदार्थंप्रद्युम्नादिजनकंजीवमुक्त्वाऽस्यपूर्वोक्तेनतत्पदार्थेनाभेदमाह योवासुदेवइति ४० । ४१ परमकारणत्वंस्वस्यैवाह मत्तइति अक्षरंजीवः क्षरंप्रकृतिमहदहंकारादि सत्कारणं ४२ मांप्रविश्येत्युक्तःप्रवेशोनदीसमुद्रदृष्टांतेनमाभूदितिस्वस्योपाधिशबलत्वंनिराचष्टेऽहंहीति पुरुषश्चिन्मात्रः निष्क्रियःकूटस्थः ज्ञेयएवनतुप्राप्यः सर्वभूतप्रत्यगात्मत्वात् ४३ निर्गुणत्वात्सुषुप्ताविववासनाशेषवतीप्राप्तिःनिष्कलत्वान्नसंयोगरूपा अतएवनिर्द्वंद्वः महाकाशघटाकाशयोरिवोपाध्यपगममात्रकृतत्वादभेदस्य अतएवोपाध्यभावाद्वासनादिरूपःपरिग्रहोपिनास्ति । ननुविश्वरूपस्यतवकथंनिष्कलत्वमतआह एतदिति अयंरूपवानिति यदेतत्त्वयानज्ञातव्यं ४४ यतोहंमुहूर्तान्नश्येयमदृश्योभवेयं इच्छन्नितिमदीक्षामात्रंसृष्टिसंहारावित्यर्थः । देवतादिवद्दर्शनेऽपिविश्वरूपत्वंनापैतीत्याशंक्याह मायेति निष्कलस्यममवैश्वरूप्यमेवमायेत्यर्थः ४५ सर्वभूतगुणैःस्वरूपादिभिरेवंप्रकारेणयुक्तंमांज्ञातुंनार्हसिनिर्गुणत्वान्ममेत्यर्थः ४६



संज्ञातःजीवत्वेनसम्यक्ज्ञातः । पाठांतरेजीवस्योपकरणभूतःसंघातःजडवर्गोऽप्यहमेव । जीवत्वाधिष्ठानत्वाजीवोऽप्यहमेवेतिभावः । यतः जडाजडवर्गात्माऽहमेवततोहेतोश्चक्षुषामांद्रष्टासोपाधिकः

अहंहिजीवसंज्ञातोमयिजीवःसमाहितः ॥ नैवंतेबुद्धिरत्राभूद्दृष्टोजीवोमयेतिवै ४७ अहंसर्वत्रगोब्रह्मन्भूतग्रामांतरात्मकः ॥ भूतग्रामशरीरेषुनश्यत्सुननशाम्यहम् ४८ सिद्धाहितेमहाभागानराह्येकांतिनोऽभवन् ॥ तमोरजोभ्यांनिर्मुक्ताःप्रवेक्ष्यंतिचमांमुने ४९ हिरण्यगर्भोलोकादिश्चतुर्वक्त्रोनिरुक्तगः ॥ ब्रह्मासनातनोदेवोममबह्वर्थचिंतकः ५० ललाटाच्चैवमेरुद्रोदेवःक्रोधाद्विनिःसृतः ॥ पश्यैकादशमेरुद्रान्दक्षिणंपार्श्वमास्थितान् ५१ द्वादशैवतथाऽऽदित्यान्वामपार्श्वेसमास्थितान् ॥ अग्रतश्चैवमेपश्यवसूनष्टौसुरोत्तमान् ५२ नासत्यंचैवदस्रंचभिषजौपश्यपृष्ठतः ॥ सर्वान्प्रजापतीन्पश्यपश्यसप्तऋषींस्तथा ५३ वेदान्यज्ञांश्चशतशःपश्यामृतमथौषधीः ॥ तपांसिनियमांश्चैवयमानपिपृथग्विधान् ५४ तथाष्टगुणमैश्वर्यमेकस्थंपश्यमूर्तिमत् ॥ श्रियंलक्ष्मींचकीर्तिंचपृथिवींचककुद्मिनीम् ५५ वेदानांमातरंपश्यमत्स्थांदेवींसरस्वतीम् ॥ ध्रुवंचज्योतिषांश्रेष्ठंपश्यनारदखेचरम् ५६ अंभोधरान्समुद्रांश्चसरांसिसरितस्तथा ॥ मूर्तिमंतःपितृगणांश्चतुरःपश्यसत्तम ५७ त्रींश्चैवेमान्गुणान्पश्यमत्स्थान्मूर्तिविवर्जितान् ॥ देवकार्यादपिमुनेपितृकार्यंविशिष्यते ५८ देवानांचपितॄणांचपिताह्येकोऽहमादितः ॥ अहंहयशिराभूत्वासमुद्रेपश्चिमोत्तरे ५९ पिबामिसुहुतंहव्यंकव्यंचश्रद्धयान्वितम् ॥ मयासृष्टःपुराब्रह्मामांयज्ञमयजत्स्वयम् ६० ततस्तस्मिन्वरान्प्रीतोदत्तवानस्म्यनुत्तमान् ॥ मत्पुत्रत्वंचकल्पादौलोकाध्यक्षत्वमेवच ६१ अहंकारकृतंचैवनामपर्यायवाचकम् ॥ त्वयाकृतांचमर्यादांनातिक्रंस्यतिकश्चन ६२ त्वंचैववरदोब्रह्मन्वरेप्सूनांभविष्यसि ॥ सुरासुरगणानांचऋषीणांचतपोधन ६३ पितॄणांचमहाभागसततंसंशितव्रत ॥ विविधानांचभूतानांत्वमुपास्योभविष्यसि ६४ प्रादुर्भावगतश्चाहंसुरकार्येषुनित्यदा ॥ अनुशास्यस्त्वयाब्रह्मन्नियोज्यश्चसुतोयथा ६५ एतांश्चान्यांश्चरुचिरान्ब्रह्मणेऽमिततेजसे ॥ अहंदत्त्वावरान्प्रीतोनिवृत्तिपरमोऽभवम् ६६ निर्वाणंसर्वधर्माणांनिवृत्तिःपरमास्मृता ॥ तस्मान्निवृत्तिमापन्नश्चरेत्सर्वांगनिर्वृतः ६७ विद्यासहायवंतंचआदित्यस्थंसमाहितम् ॥ कपिलंप्राहुराचार्याःसांख्यानिश्चितनिश्चयाः ६८ हिरण्यगर्भोभगवानेषच्छंदसिसुष्टुतः ॥ सोऽहंयोगरतिर्ब्रह्मन्योगशास्त्रेषुशब्दितः ६९ एषोऽहंव्यक्तिमागत्यतिष्ठामिदिविशाश्वतः ॥ ततोयुगसहस्रांतेसंहरिष्येजगत्पुनः ७० कृत्वात्मस्थानिभूतानिस्थावराणिचराणिच ॥ एकाकीविद्ययासार्धंविहरिष्येजगत्पुनः ७१ ततोभूयोजगत्सर्वंकरिष्यामीहविद्यया ॥ अस्मिन्मूर्तिश्चतुर्थीयासाऽसृजच्छेषमव्ययम् ७२

समष्टिजीवएवमयादृष्टोनत्वीश्वरइतिनमंतव्यंजीवादिरूपेणममैवावस्थानादित्याह नैवमिति ४७ स्पष्टार्थोऽध्यायशेषः ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८ । ६९ । ७० । ७१ । ७२

॥२४७॥ सहिसंकर्षणःप्रोक्तःप्रद्युम्नंसोऽप्यजीजनत् ॥ प्रद्युम्नादनिरुद्धोऽहंसर्गोममपुनःपुनः ७३ अनिरुद्धात्तथाब्रह्मातन्नाभिकमलोद्भवः ॥ ब्रह्मणःसर्वभूतानिचराणि
स्थावराणिच ७४ एतांसृष्टिंविजानीहिकल्पादिषुपुनःपुनः ॥ यथासूर्यस्यगगनादुदयास्तमनेइह ७५ नष्टेपुनर्बलात्कालआनयत्यमितद्युतिः ॥ तथाबलाद् अ०
हंपृथ्वींसर्वभूतहितायवै ७६ सत्वैराक्रांतसर्वांगांनष्टांसागरमेखलाम् ॥ आनयिष्यामिस्वस्थानंवाराहंरूपमास्थितः ७७ हिरण्याक्षंवधिष्यामिदैतेयंबलग ॥३३९॥
र्वितम् ॥ नारसिंहंवपुःकृत्वाहिरण्यकशिपुंपुनः ७८ सुरकार्येहनिष्यामियज्ञघ्नंदितिनंदनम् ॥ विरोचनस्यबलवान्बलिःपुत्रोमहासुरः ७९ अवध्यःसर्वलोका
नांसदेवासुररक्षसाम् ॥ भविष्यतिसशक्रंचस्वराज्याच्च्यावयिष्यति ८० त्रैलोक्येऽपहृतेतेनविमुखेचशचीपतौ ॥ अदित्यांद्वादशादित्यःसंभविष्यामिकश्य
पात् ८१ ततोराज्यंप्रदास्यामिशक्रायामिततेजसे ॥ देवताःस्थापयिष्यामिस्वस्वस्थानेषुनारद ८२ बलिंचैवकरिष्यामिपातालतलवासिनम् ॥ दानवंचब
लिश्रेष्ठमवध्यंसर्वदैवतैः ८३ त्रेतायुगेभविष्यामिरामोभृगुकुलोद्वहः ॥ क्षत्रंचोत्सादयिष्यामिसमृद्धबलवाहनम् ८४ संध्यांशेसमनुप्राप्तेत्रेतायाद्वापरस्यच ॥
अहंदाशरथीरामोभविष्यामिजगत्पतिः ८५ त्रितोपघाताद्वैरूप्यमेकतोऽथद्वितस्तथा ॥ प्राप्स्येतेवानरत्वंहिप्रजापतिसुतावृषी ८६ तयोर्येत्वन्वयेजा
ताभविष्यंतिवनौकसः ॥ महाबलामहावीर्याःशक्रतुल्यपराक्रमाः ८७ तेसहायाभविष्यंतिसुरकार्येममद्विज ॥ ततोरक्षःपतिंघोरंपुलस्त्यकुलपांसनम् ८८
हनिष्येरावणंरौद्रंसगणंलोककंटकम् ॥ द्वापरस्यकलेश्चैवसंधौपार्यवसानिके ८९ प्रादुर्भावःकंसहेतोर्मथुरायांभविष्यति ॥ तत्राहंदानवान्हत्वासुबहून्देवकं
टकान् ९० कुशस्थलींकरिष्यामिनिवेशंद्वारकांपुरीम् ॥ वसानस्तत्रवैपुर्यामदितेर्विप्रियंकरम् ९१ हनिष्येनरकंभौमंमुरुंपीठंचदानवम् ॥ प्राग्ज्योतिषं
पुरंरम्यंनानाधनसमन्वितम् ९२ कुशस्थलींनयिष्यामिहत्वावैदानवोत्तमम् ॥ महेश्वरमहासेनौबाणप्रियहितैषिणौ ९३ पराजेष्याम्यथोद्युक्तौदेवौलोकन
मस्कृतौ ॥ ततःसुतंबलेर्जित्वाबाणंबाहुसहस्रिणम् ९४ विनाशयिष्यामिततःसर्वान्सौभनिवासिनः ॥ यःकालयवनःख्यातोगर्गतेजोभिसंवृतः ९५ भविष्यति
वधस्तस्यमत्तएवद्विजोत्तम ॥ जरासंधश्चबलवान्सर्वराजविरोधनः ९६ भविष्यत्यसुरःस्फीतोभूमिपालोगिरिव्रजे ॥ ममबुद्धिपरिस्पंदाद्वधस्तस्यभविष्यति
९७ शिशुपालंवधिष्यामियज्ञेधर्मसुतस्यवै ॥ समागतेषुबलिषुपृथिव्यांसर्वराजसु ९८ वासविःसुसहायोवैममत्वेकोभविष्यति ॥ युधिष्ठिरंस्थापयिष्येस्वराज्ये ॥२४७॥
भ्रातृभिःसह ९९ एवंलोकावदिष्यंतिनरनारायणावृषी ॥ उद्युक्तौदहतःक्षत्रंलोककार्यार्थमीश्वरौ १०० कृत्वाभारावतरणंवसुधायायथेप्सितम् ॥ सर्वसात्वतमुख्या
नांद्वारकायाश्चसत्तम १०१ करिष्येप्रलयंघोरमात्मज्ञातिविनाशनम् ॥ कर्माण्यपरिमेयाणिचतुर्मूर्तिधरोह्यहम् १०२



कृत्वालोकान्गमिष्यामिस्वानहंब्रह्मसत्कृतान् ॥ हंसःकूर्मश्चमत्स्यश्चप्रादुर्भावाद्विजोत्तम ३ वराहोनरसिंहश्चवामनोरामएवच ॥ रामोदाशरथिश्चैवसात्वतःकल्किरे
वच ४ यदावेदश्रुतिर्नष्टामयाप्रत्याहृतापुनः ॥ सवेदाःसश्रुतीकाश्चकृताःपूर्वंकृतेयुगे ५ अतिक्रांताःपुराणेषुश्रुतास्तेयदिवाक्वचित् ॥ अतिक्रांताश्चबहवःप्रादुर्भा
वाममोत्तमाः ६ लोककार्याणिकृत्वाचपुनःस्वांप्रकृतिंगताः ॥ नह्येवद्ब्रह्मणाप्राप्तमीदृशंममदर्शनम् ७ यत्त्वयाप्राप्तमद्येहएकांतगतबुद्धिना ॥ एतत्तेसर्वमाख्यातं
ब्रह्मन्भक्तिमतोमया ८ पुराणंचभविष्यंचसरहस्यंचसत्तम ॥ भीष्मउवाच ॥ एवंसभगवान्देवोविश्वमूर्तिधरोऽव्ययः ९ एतावदुक्त्वावचनंतत्रैवांतर्दधेपुनः ॥
नारदोऽपिमहातेजाःप्राप्यानुग्रहमीप्सितम् ११० नरनारायणौद्रष्टुंबदर्याश्रममाद्रवत् ॥ इदंमहोपनिषदंचतुर्वेदसमन्वितम् ११ सांख्ययोगकृतंतेनपंचरात्रानुश
ब्दितम् ॥ नारायणमुखोद्गीतंनारदोऽश्रावयत्पुनः १२ ब्रह्मणःसदनेतातयथादृष्टंयथाश्रुतम् ॥ युधिष्ठिरउवाच ॥ एतदाश्चर्यभूतंहिमाहात्म्यंतस्यधीमतः १३
किंब्रह्मानजानीतेयतःशुश्रावनारदात् ॥ पितामहोऽपिभगवांतस्मादेवादनंतरः १४ कथंसनविजानीयात्प्रभावममितौजसः ॥ भीष्मउवाच ॥ महाकल्पसहस्रा
णिमहाकल्पशतानिच १५ समतीतानिराजेंद्रसर्गाश्चप्रलयाश्चह ॥ सर्गस्यादौस्मृतोब्रह्माप्रजासर्गकरःप्रभुः १६ जानातिदेवप्रवरंभूयश्चातोऽधिकंनृप ॥ परमा
त्मानमीशानमात्मनःप्रभवंतथा १७ येत्वन्येब्रह्मसदनेसिद्धसंघाःसमागताः ॥ तेभ्यस्तच्छ्रावयामासपुराणंवेदसंमितम् १८ तेषांसकाशात्सूर्यस्तुश्रुत्वावैभाविता
त्मनाम् ॥ आत्मानुगामिनांराजन्श्रावयामासवैततः १९ षट्षष्टिर्हिसहस्राणिऋषीणांभावितात्मनाम् ॥ सूर्यस्यतपतोलोकान्निर्मितायेपुरःसराः १२० तेषाम
कथयत्सूर्यःसर्वेषांभावितात्मनाम् ॥ सूर्यानुगामिभिस्तातऋषिभिस्तैर्महात्मभिः २१ मेरौसमागतादेवाःश्राविताश्चेदमुत्तमम् ॥ देवानांतुसकाशाद्वैततःश्रुत्वाऽसि
तोद्विजः २२ श्रावयामासराजेंद्रपितॄणांमुनिसत्तमः ॥ ममचापिपितातातकथयामासशांतनुः २३ ततोमयाऽपिश्रुत्वाचकीर्तितंतवभारत ॥ सुरैर्वामुनिभिर्वाऽपि
पुराणंयैरिदंश्रुतम् २४ सर्वेतेपरमात्मानंपूजयंतेसमंततः ॥ इदमाख्यानमार्षेयंपारंपर्यागतंनृप २५ नावासुदेवभक्तायत्वयादेयंकथंचन ॥ मत्तोऽन्यानिचतेरा
जन्नुपाख्यानशतानिवै २६ यानिश्रुतानिसर्वाणितेषांसारोऽयमुद्धृतः ॥ सुरासुरैर्यथाराजन्निर्मथ्यामृतमुद्धृतम् २७ एवमेतत्पुराविप्रैःकथामृतमिहोद्धृतम् ॥ यश्चेदं
पठतेनित्यंयश्चेदंशृणुयान्नरः २८ एकांतभावोपगतएकांतेषुसमाहितः ॥ प्राप्यश्वेतंमहाद्वीपंभूत्वाचंद्रप्रभोनरः २९ ससहस्रार्चिषंदेवंप्रविशेन्नात्रसंशयः ॥ मुच्ये
दार्तस्तथारोगाच्छ्रुत्वेमामादितःकथाम् १३० जिज्ञासुर्लभतेकामान्भक्तोभक्तगतिंव्रजेत् ॥ त्वयाऽपिसततंराजन्नभ्यर्च्यःपुरुषोत्तमः ३१ सहिमातापिताचैवकृत्स्न
स्यजगतोगुरुः ॥ ब्रह्मण्यदेवोभगवान्प्रीयतांतेसनातनः ॥ युधिष्ठिरमहाबाहोमहाबुद्धिर्जनार्दनः ३२

३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । १४१ ॥ इतिशांतिपर्वणि नीलकंठीये भारतभावदीपे ऊनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥ ॥ ७ ॥ कथंसइति यज्ञधारी यज्ञकृत् एकस्यैवयज्ञभोक्तृत्वंयज्ञकर्तृत्वंचविरुद्धमित्यर्थः तथापरस्परविरुद्धयोःप्रवृत्तिनिवृत्तिधर्मयोरेकस्यशास्त्रत्वंविरुद्धंप्रतारकत्वापतेरितिप्रश्नार्थः एतेनजीवेशयोरभेदस्तत्प्रतिपत्त्यर्थोनिवृ

॥ वैशंपायनउवाच ॥ ॥ श्रुत्वैतदाख्यानवरंधर्मराड्जनमेजय ३३ भ्रातरश्चास्यतेसर्वेनारायणपराऽभवन् ॥ जितंभगवतातेनपुरुषेणेतिभारत ३४ नित्यं जप्यपराभूत्वासरस्वतीमुदीरयन् ॥ योह्यस्माकंगुरुःश्रेष्ठःकृष्णद्वैपायनोमुनिः ३५ जगौपरमकंजप्यंनारायणमुदीरयन् ॥ गत्वांतरिक्षात्सततंक्षीरोदममृता शयम् ३६ पूजयित्वाचदेवेशंपुनरायात्स्वमाश्रमम् ॥ ॥ भीष्मउवाच ॥ एतत्तेसर्वमाख्यातंनारदोक्तंमयेरितम् ३७ पारंपर्यागतंह्येतत्पित्रामेकथितंपुरा ॥ ॥ सौतिरुवाच ॥ एतत्तेसर्वमाख्यातं वैशंपायनकीर्तितम् ३८ जनमेजयेनतच्छ्रुत्वाकृतंसम्यग्यथाविधि ॥ यूयंहितप्ततपसःसर्वेचचरितव्रताः ३९ सर्वेवेदविदो मुख्यानैमिषारण्यवासिनः ॥ शौनकस्यमहासत्रंप्राप्ताःसर्वेद्विजोत्तमाः १४० यजध्वंसुहुतैर्यज्ञैःशाश्वतंपरमेश्वरम् ॥ पारंपर्यागतंह्येतत्पित्रामेकथितंपुरा १४१ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिनारायणीयेऊनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥ ॥ शौनकउवाच ॥ कथंसभगवान्दे वोयज्ञेष्वग्रहरःप्रभुः ॥ यज्ञधारीचसततंवेदवेदांगवित्तथा १ निवृत्तंचास्थितोधर्मंक्षमीभागवतःप्रभुः ॥ निवृत्तिधर्मान्विदधेसएवभगवान्प्रभुः २ कथंप्रवृत्तिधर्मेषु भागार्हादेवताःकृताः ॥ कथंनिवृत्तिधर्माश्चकृताव्यावृत्तबुद्धयः ३ एतंनःसंशयंसौतेछिंधिगुह्यंसनातनम् ॥ त्वयानारायणकथाःश्रुतावैधर्मसंहिताः ४ ॥ सौति रुवाच ॥ जनमेजयेनयत्पृष्टःशिष्योव्यासस्यधीमतः ॥ तत्तेऽहंकथयिष्यामिपौराणंशौनकोत्तम ५ श्रुत्वामाहात्म्यमेतस्यदेहिनांपरमात्मनः ॥ जनमेजयोमहाप्रा ज्ञोवैशंपायनमब्रवीत् ६ ॥ जनमेजयउवाच ॥ इमेसब्रह्मकालोकाःससुरासुरमानवाः ॥ क्रियास्वभ्युदयोक्तासुसक्तादृश्यंतिसर्वशः ७ मोक्षश्चोक्तस्त्वयाब्रह्मन्निर्वा णंपरमंसुखम् ॥ येतुमुक्ताभवंतीहपुण्यपापविवर्जिताः ८ तेसहस्रार्चिषंदेवंप्रविशंतीहशुश्रुम ॥ अयंहिदुरनुष्ठेयोमोक्षधर्मःसनातनः ९ यंहित्वादेवताःसर्वाहव्यक व्यभुजोऽभवन् ॥ किंचब्रह्माचरुद्रश्चशक्रश्चबलभित्प्रभुः १० सूर्यस्ताराधिपोवायुरग्निर्वरुणएवच ॥ आकाशंजगतीचैवयेचशेषादिवौकसः ११ प्रलयंनविजानंतिआ त्मनःपरिनिर्मितम् ॥ ततस्तेनास्थितामार्गंध्रुवमक्षरमव्ययम् १२ स्मृतिकालपरीमाणंप्रवृत्तिंयेसमास्थिताः ॥ दोषःकालपरीमाणेमहानेषक्रियावताम् १३ एत न्मेसंशयंविप्रहृदिशल्यमिवार्पितम् ॥ छिंधीतिहासकथनात्परंकौतूहलंहिमे १४ कथंभागहराःप्रोक्तादेवताःक्रतुषुद्विज ॥ किमर्थंचाध्वरेब्रह्मन्निज्यंतेत्रिदिवौकसः १५

त्तिधर्मश्चाक्षिप्तइतिज्ञेयं १ । २ । ३ । ४ । ५ देहिनांपरमात्मनोंऽतरात्मनः ६ । ७ । ८ सहस्रार्चिषंसूर्यंतिर्यग्मिणमनंतचित्रूपंवा ९ यमिति निवृत्तिधर्मश्रेष्ठेऽप्यस्तहिंयेऽस्मद पेक्षयाजगत्तत्त्वमधिकंजानंतितेऽपिब्रह्मरुद्रादयःसृष्टिसंहारादौनप्रवर्तेयुरतःप्रतारणामात्रंनिवृत्तिधर्मइत्यर्थः १० । ११ । १२ । १३ । १४ कथमिति यथादेवादेवांतराभावादितरेभ्योभाग प्रदत्वास्वयंसुखमेधंतेएवंवयमपिसुखंस्थास्यामइतिप्रवृत्तिमार्गोप्याऽऽक्षिप्तः १५



१६ । १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ मयेति श्रुत्यनुमानाभ्यांपारोक्ष्येणगृहीतार्थोयोगिनांप्रत्यक्षः अतोयोगजंप्रत्यक्षंप्रकृत्योक्तंयोगभाष्ये तत्परंप्रत्यक्षं तच्चश्रुतानुमानयोर्बीजमिति योगसिद्धत्वभावेत्वात्मागमगम्यएवायमर्थइत्याशयः २५ । २६ । २७ परमात्मनःप्रतिबिंबभूतादेवाबिंबभूतंपरमात्मानंयेनरूपेणमहीचक्रुस्तेनतेनरूपेणस्वयंपू जांयज्ञभागादिरूपांलब्धवंतः यथोक्तंभागवते 'यद्यज्जनोभगवतेविदधीतमानंतच्चात्मनःप्रतिमुखस्ययथामुखश्रीः'इति अतःफलावस्थांस्वयमकुर्वंतोऽपिदेवाअस्मदत्तान्यज्ञभागान्भुंजते अस्माकंच

येचभागंप्रगृह्णंतियज्ञेषुद्विजसत्तम ॥ तेयजंतोमहायज्ञैःकस्यभागंददंतिवै १६ ॥ वैशंपायनउवाच ॥ अहोगूढतमःप्रश्नस्त्वयापृष्टोजनेश्वर ॥ नातप्ततपसाह्येष नावेदविदुषातथा १७ नापुराणविदाचैवशक्योव्याहर्तुमंजसा ॥ हंततेकथयिष्यामियन्मेपृष्टःपुरागुरुः १८ कृष्णद्वैपायनोव्यासोवेदव्यासोमहानृषिः ॥ सुमंतु र्जैमिनिश्चैवपैलश्चसुदृढव्रतः १९ अहंचतुर्थःशिष्योवैपंचमश्चशुकःस्मृतः ॥ एतान्समागतान्सर्वान्पंचशिष्यान्दमान्वितान् २० शौचाचारसमायुक्तान्जितक्रो धान्जितेंद्रियान् ॥ वेदानध्यापयामासमहाभारतपंचमान् २१ मेरौगिरिवरेरम्येसिद्धचारणसेविते ॥ तेषामभ्यस्यतांवेदान्कदाचित्संशयोऽभवत् २२ एषवैयस्त्व यापृष्टस्तेनतेषांप्रकीर्तितः ॥ ततःश्रुतोमयाचापितवाख्येयोद्यभारत २३ शिष्याणांवचनंश्रुत्वासर्वाज्ञानतमोनुदः ॥ पराशरसुतःश्रीमान्व्यासोवाक्यमथाब्र वीत् २४ मयाहिसुमहत्तप्तंतपःपरमदारुणम् ॥ भूतंभव्यंभविष्यंचजानीयामितिसत्तमाः २५ तस्यमेतप्ततपसोनिगृहीतेंद्रियस्यच ॥ नारायणप्रसादेनक्षीरोद स्यानुकूलतः २६ त्रैकालिकमिदंज्ञानंप्रादुर्भूतंयथेप्सितम् ॥ तच्छृणुध्वंयथान्यायंवक्ष्येसंशयमुत्तमम् २७ यथावृत्तंहिकल्पादौदृष्टंमेज्ञानचक्षुषा ॥ परमात्मेति यंप्राहुःसांख्ययोगविदोजनाः २८ महापुरुषसंज्ञांसलभतेस्वेनकर्मणा ॥ तस्मात्प्रसूतमव्यक्तंप्रधानंतंविदुर्बुधाः २९ अव्यक्ताद्व्यक्तमुत्पन्नंलोकसृष्ट्यर्थमीश्वरात् ॥ अनिरुद्धोहिलोकेषुमहानात्मेतिकथ्यते ३० योऽसौव्यक्तत्वमापन्नोनिर्ममेचपितामहम् ॥ सोऽहंकारइतिप्रोक्तःसर्वतेजोमयोहिसः ३१ पृथिवीवायुराकाशमापो ज्योतिश्चपंचमम् ॥ अहंकारप्रसूतानिमहाभूतानिपंचधा ३२ महाभूतानिसृष्ट्वैवतान्गुणान्निर्ममेपुनः ॥ भूतेभ्यश्चैवनिष्पन्नामूर्तिमंतश्चतान्शृणु ३३ मरीचिरं गिराश्चात्रिःपुलस्त्यःपुलहःक्रतुः ॥ वसिष्ठश्चमहात्मावैमनुःस्वायंभुवस्तथा ३४ ज्ञेयाःप्रकृतयोऽष्टौतायासुलोकाःप्रतिष्ठिताः ॥ वेदवेदांगसंयुक्तान्यज्ञयज्ञांगसंयु तान् ३५ निर्ममेलोकसिद्ध्यर्थंब्रह्मालोकपितामहः ॥ अष्टाभ्यःप्रकृतिभ्यश्चजातंविश्वमिदंजगत् ३६ रुद्रोरोषात्मकोजातोदशान्यान्सोऽसृजत्स्वयम् ॥ एकाद शैतेरुद्रास्तुविकारपुरुषाःस्मृताः ३७ तेरुद्राःप्रकृतिश्चैवसर्वेचैवसुरर्षयः ॥ उत्पन्नालोकसिद्ध्यर्थंब्रह्माणंसमुपस्थिताः ३८

तेभ्योऽप्रदानेमहान्दोषः । 'इष्टान्भोगान्हिवोदेवादास्यंतेयज्ञभाविताः ॥ तैर्दत्तानप्रदायैभ्योयोभुंक्तेस्तेनएवसः'इतिगीतावचनात् । अतःप्रवृत्तिमार्गोऽवश्यमनुसरणीयइत्याह परमात्मेतियंप्राहुरि त्यादिनासनःसनत्सुजातश्चेत्यतःप्राक्तनेनग्रंथेन २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८

 ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ ४८ । ४९ ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ 

 वयंसृष्टाहिभगवंस्त्वयाचप्रभविष्णुना ॥ येनयस्मिन्नधीकारेवर्तितव्यंपितामह ३९ योऽसौत्वयाऽभिनिर्दिष्टोह्यधिकारोर्थचिंतकः ॥ परिपाल्यःकथंतेनसाहंकारे
णकर्तृणा ४० प्रदिशस्वबलंतस्ययोऽधिकारार्थचिंतकः ॥ एवमुक्तोमहादेवोदेवांस्तानिदमब्रवीत् ४१ ॥ ब्रह्मोवाच ॥ साध्वहंज्ञापितोदेवायुष्माभिर्भद्रमस्तुवः ॥ 
ममाप्येषासमुत्पन्नाचिंतायाभवतांमता ४२ लोकत्रयस्यकृत्स्नस्यकथंकार्यःपरिग्रहः ॥ कथंबलक्षयोनस्याद्युष्माकंह्यात्मनश्चमे ४३ इतःसर्वेऽपिगच्छामःशरणं
लोकसाक्षिणम् ॥ महापुरुषमव्यक्तंसनोवक्ष्यतियाद्धितम् ४४ ततस्तेब्रह्मणासार्धमृषयोविबुधास्तथा ॥ क्षीरोदस्योत्तरंकूलंजग्मुर्लोकहितार्थिनः ४५ तेतपःस 
मुपातिष्ठन्ब्रह्मोक्तंवेदकल्पितम् ॥ समहानियमोनामतपश्चर्यासुदारुणः ४६ ऊर्ध्वादृष्टिर्बाहवश्चएकाग्रंचमनोऽभवत् ॥ एकपादाःस्थिताःसर्वेकाष्ठभूताःसमाहिताः
४७ दिव्यंवर्षसहस्रंतेतपस्तप्त्वासुदारुणम् ॥ शुश्रुवुर्मधुरांवाणींवेदवेदांगभूषिताम् ४८ ॥ श्रीभगवानुवाच ॥ भोभोःसब्रह्मकादेवाऋषयश्चतपोधनाः ॥ स्वाग
तेनार्च्यवःसर्वान्श्रावयेवाक्यमुत्तमम् ४९ विज्ञातंवोमयाकार्यंतच्चलोकहितंमहत् ॥ प्रवृत्तियुक्तंकर्तव्यंयुष्मत्प्राणोपबृंहणम् ५० सुतप्तंचतपोदेवाममाराधनका
म्यया ॥ भोक्ष्यथास्यमहासत्वास्तपसःफलमुत्तमम् ५१ एषब्रह्मालोकगुरुर्महान्लोकपितामहः ॥ यूयंचविबुधश्रेष्ठामांयजध्वंसमाहिताः ५२ सर्वेभागान्कल्पय
ध्वंयज्ञेषुममनित्यशः ॥ तथाश्रेयोऽभिधास्यामियथाऽधीकारमीश्वराः ५३ ॥ वैशंपायनउवाच ॥ श्रुत्वैतद्देवदेवस्यवाक्यंहृष्टतनूरुहाः ॥ ततस्तेविबुधाःसर्वेब्र
ह्मातेचमहर्षयः ५४ वेददृष्टेनविधिनावैष्णवंक्रतुमाहरन् ॥ तस्मिन्सत्रेसदाब्रह्मास्वयंभागमकल्पयत् ५५ देवादेवर्षयश्चैवस्वंस्वंभागमकल्पयन् ॥ तेकार्तयुगध
र्मिणोभागाःपरमसत्कृताः ५६ प्राहुरादित्यवर्णंतंपुरुषंतमसःपरम् ॥ बृहंतंसर्वगंदेवमीशानंवरदंप्रभुम् ५७ ततोऽथवरदोदेवस्तान्सर्वानमरान्स्थितान् ॥ अशरी
रोबभाषेदंवाक्यंखस्थोमहेश्वरः ५८ येनयःकल्पितोभागःसतथामामुपागतः ॥ प्रीतोऽहंप्रदिशाम्यद्यफलमावृत्तिलक्षणम् ५९ एतद्वोलक्षणंदेवामत्प्रसाद
समुद्भवम् ॥ स्वयंयज्ञैर्यजमानाःसमाप्तवरदक्षिणैः ६० युगेयुगेभविष्यध्वंप्रवृत्तिफलभागिनः ॥ यज्ञैर्येचापियक्ष्यंतिसर्वलोकेषुवैसुराः ६१ कल्पयिष्यंति
वोभागांस्तेनरावेदकल्पितान् ॥ योमेयथाकल्पितवान्भागमस्मिन्महाक्रतौ ६२ सतथायज्ञभागार्हो वेदसूत्रेमयाकृतः ॥ यूयंलोकान्भावयध्वंयज्ञभागफलो
चिताः ६३ सर्वार्थचिंतकालोकेयथाधीकारनिर्मिताः ॥ याःक्रियाःप्रचरिष्यंतिप्रवृत्तिफलसत्कृताः ६४ आभिराप्यायितबलालोकान्वैधारयिष्यथ ॥
यूयंहिभावितायज्ञैःसर्वयज्ञेषुमानवैः ६५ मांततोभावयिष्यध्वमेषावोभावनामम ॥ इत्यर्थंनिर्मितावेदायज्ञाश्चौषधिभिःसह ६६ एभिःसम्यक्प्रयुक्तैर्हिप्रीयं 
तेदेवताःक्षितौ ॥ निर्माणमेतद्युष्माकंप्रवृत्तिगुणकल्पितम् ६७

६८ । ६९ । ७० । ७१ एवंरजःप्रधानानांप्रवृत्तिमार्गमुक्त्वासत्वप्रधानानांयोग्यंनिवृत्तिमार्गमाह सनइति ७२ । ७३ । ७४ कुतएवंमार्गभेदोऽधिकारिभेदश्चेत्याशंक्याह यतोऽहमिति अहं
कारोयतस्त्रिगुणःसात्विकोराजसस्तामसश्चातःसृष्टिस्त्रैविध्यंजातं येऽत्यंतंसात्विकास्तेधर्मज्ञानवैराग्यैश्वर्यबलेनाहंकारात्परंक्षेत्रज्ञंसंहारक्रमेणप्रविशंति येराजसास्तेऽहंकारात्पराचीनमेवशब्दादिकंपुरुषा
मयाकृतंसुरश्रेष्ठायावत्कल्पक्षयादिह ॥ चिंतयध्वंलोकहितंयथाधीकारमीश्वराः ६८ मरीचिरंगिराश्चात्रिःपुलस्त्यःपुलहःक्रतुः ॥ वसिष्ठइतिसप्तैतेमानसानि
र्मिताहिते ६९ एतेवेदविदोमुख्यावेदाचार्याश्चकल्पिताः ॥ प्रवृत्तिधर्मिणश्चैवप्राजापत्येचकल्पिताः ७० अयंक्रियावतांपंथाव्यक्तीभूतःसनातनः ॥ अनिरुद्ध
इतिप्रोक्तोलोकसर्गकरःप्रभुः ७१ सनःसनत्सुजातश्चसनकःससनंदनः ॥ सनत्कुमारःकपिलःसप्तमश्चसनातनः ७२ सप्तैतेमानसाःप्रोक्ताऋषयोब्रह्मणःसुताः ॥
स्वयमागतविज्ञानानिवृत्तिंधर्ममास्थिताः ७३ एतेयोगविदोमुख्याःसांख्यज्ञानविशारदाः ॥ आचार्याधर्मशास्त्रेषुमोक्षधर्मप्रवर्तकाः ७४ यतोऽहंप्रसृतःपूर्वमव्य
क्तात्त्रिगुणोमहान् ॥ तस्मात्परतरोयोऽसौक्षेत्रज्ञइतिकल्पितः ७५ सोऽहंक्रियावतांपंथाःपुनरावृत्तिदुर्लभः ॥ योयथानिर्मितोजंतुर्यस्मिन्यस्मिंश्चकर्मणि ७६
प्रवृत्तौवानिवृत्तौवातत्फलंसोऽश्नुतेमहत् ॥ एषलोकगुरुर्ब्रह्माजगदादिकरःप्रभुः ७७ एषमातापिताचैवयुष्माकंचपितामहः ॥ मयाऽनुशिष्टोभवितासर्वभूतवरप्रदः
७८ अस्यचैवात्मजोरुद्रोललाटाद्यःसमुत्थितः ॥ ब्रह्माऽनुशिष्टोभवितासर्वभूतधरःप्रभुः ७९ गच्छध्वंस्वानधीकारांश्चिंतयध्वंयथाविधि ॥ प्रवर्ततांक्रियाःसर्वाःसर्व
लोकेषुमाचिरम् ८० प्रदिश्यंतांचकर्माणिप्राणिनांगतयस्तथा ॥ परिनिष्ठितकालानिआयूंषीहसुरोत्तमाः ८१ इदंकृतयुगंनामकालःश्रेष्ठःप्रवर्तितः ॥ अहिंस्या
यज्ञपशवोयुगेऽस्मिन्नतदन्यथा ८२ चतुष्पात्सकलोधर्मोभविष्यत्यत्रवैसुराः ॥ ततस्त्रेतायुगंनामत्रयीयत्रभविष्यति ८३ प्रोक्षितायत्रपशवोवधंप्राप्स्यंतिवै
मखे ॥ यत्रपादश्चतुर्थोवैधर्मस्यनभविष्यति ८४ ततोवैद्वापरंनाममिश्रःकालोभविष्यति ॥ द्विपादहीनोधर्मश्चयुगेतस्मिन्भविष्यति ८५ ततस्तिष्येऽथसंप्रा
प्तेयुगेकलिपुरस्कृते ॥ एकपादस्थितोधर्मोयत्रतत्रभविष्यति ८६ देवादेवर्षयश्चोचुस्तमेवंवादिनंगुरुम् ॥ एकपादस्थितेधर्मेयत्रक्वचनगामिनि ८७ कथंकर्त
व्यमस्माभिर्भगवंस्तद्वदस्वनः ॥ श्रीभगवानुवाच ॥ यत्रवेदाश्चयज्ञाश्चतपःसत्यंदमस्तथा ८८ अहिंसाधर्मसंयुक्ताःप्रचरेयुःसुरोत्तमाः ॥ सवोदेशःसेवितव्योमावो
ऽधर्मःपदास्पृशेत् ८९ ॥ व्यासउवाच ॥ तेऽनुशिष्टाभगवतादेवाःसर्षिगणास्तथा ॥ नमस्कृत्वाभगवतेजग्मुर्देशान्यथेप्सितान् ९० गतेषुत्रिदिवौकःसुब्रह्मैकः
पर्यवस्थितः ॥ दिदृक्षुर्भगवंतंतमनिरुद्धतनौस्थितम् ९१ तंदेवोदर्शयामासकृत्वाहयशिरोमहत् ॥ सांगानावर्तयन्वेदान्कमंडलुत्रिदंडधृक् ९२ ततोऽश्वशिरसंदृ
 ष्ट्वातंदेवममितौजसम् ॥ लोककर्ताप्रभुर्ब्रह्मालोकानांहितकाम्यया ९३ मूर्ध्नाप्रणम्यवरदंतस्थौप्रांजलिरग्रतः ॥ सपरिष्वज्यदेवेनवचनंश्रावितस्तदा ९४
र्थत्वेनपश्यंतःप्रवृत्तावधिक्रियंतइत्यर्थः ७५ सोऽहमिति सोऽहंनिवृत्तिमार्गरूपआत्यंतिकीनिवृत्तिरात्ममात्रावशेषैवेत्यात्मैवनिवृत्तिरूपःपंथाःसक्रियावतांपुनरावृत्तिमतांदुर्लभःपुनरावृत्तिदुर्लभःमध्यम
पदलोपीसमासः मामेंद्वैविध्यादिकमुपसंहरति योयथेति ७६ एषलोकगुरुरित्यादिस्पष्टार्थं ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९१ । ९२ । ९३ । ९४

९५ । ९६ एवमुक्त्वेत्यादिव्यासवाक्यं ९७ प्रश्नानांक्रमेणोत्तराण्युक्त्वोपसंहरति एवमेषइत्यादिना ९८ । ९९ भक्त्यतिशयात्प्रश्नोत्तरमुक्त्वास्मृतंपरमात्मानंस्तौति सआदिरिति धाताद

॥ श्रीभगवानुवाच ॥ लोककार्यगतीःसर्वास्त्वंचिंतययथाविधि ॥ धातात्वंसर्वभूतानांत्वंप्रभुर्जगतोगुरुः ९५ त्वय्यावेशितभारोऽहंधृतिंप्राप्स्याम्यथांजसा ॥ यदाच
सुरकार्यंतेअविषह्यंभविष्यति ९६ प्रादुर्भावंगमिष्यामितदाऽऽत्मज्ञानदेशिकः ॥ एवमुक्त्वाहयशिरास्तत्रैवांतरधीयत ९७ तेनानुशिष्टोब्रह्माऽपिस्वलोकमचिरा
द्गतः ॥ एवमेषमहाभागपद्मनाभःसनातनः ९८ यज्ञेष्वग्रहरःप्रोक्तोयज्ञधारीचनित्यदा ॥ निवृत्तिंचास्थितोधर्मंगतिमक्षयधर्मिणाम् ॥ प्रवृत्तिधर्मान्विदधेकृत्वा
लोकस्यचित्रतां ९९ सआदिःसमध्यःसचांतःप्रजानांसधातासवेयंसकर्तासकार्यम् ॥ युगांतेप्रसुप्तःसुसंक्षिप्यलोकान्युगादौप्रबुद्धोजगद्ध्युत्ससर्ज १०० तस्मैनम
ध्वंदेवायनिर्गुणायमहात्मने ॥ अजायविश्वरूपायधाम्नेसर्वदिवौकसाम् १ महाभूताधिपतयेरुद्राणांपतयेतथा ॥ आदित्यपतयेचैववसूनांपतयेतथा २ अश्विभ्यां
पतयेचैवमरुतांपतयेतथा ॥ वेदयज्ञाधिपतयेवेदांगपतयेऽपिच ३ समुद्रवासिनेनित्यंहरयेमुंजकेशिने ॥ शांतायसर्वभूतानांमोक्षधर्मानुभाषिणे ४ तपसांतेजसां
चैवपतयेयशसामपि ॥ वचसांपतयेनित्यंसरितांपतयेतथा ॥ कपर्दिनेवराहायएकशृंगायधीमते ॥ विवस्वतेऽश्वशिरसेचतुर्मूर्तिधृतेसदा ॥ गुह्यायज्ञानदृश्याय
अक्षरायक्षरायच ॥ एषदेवःसंचरतिसर्वत्रगतिरव्ययः ७ एषचैतत्परंब्रह्मज्ञेयोविज्ञानचक्षुषा ॥ एवमेतत्पुरादृष्टंमयावैज्ञानचक्षुषा ८ कथितंतच्चवैसर्वंमयापृष्टे
नतत्त्वतः ॥ क्रियतांमद्वचःशिष्याःसेव्यतांहरिरीश्वरः ॥ गीयतांवेदशब्दैश्चपूज्यतांचयथाविधि ९ ॥ वैशंपायनउवाच ॥ इत्युक्तास्तुवयंतेनवेदव्यासेनधी
मता ॥ सर्वेशिष्याःसुतश्चास्यशुकःपरमधर्मवित् ११० सचास्माकमुपाध्यायःसहास्माभिर्विशांपते ॥ चतुर्वेदोद्गताभिस्तमृग्भिःसमभितुष्टुवे ११ एतत्ते
सर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ॥ एवंमेऽकथयद्राजन्पुराद्वैपायनोगुरुः १२ यश्चेदंशृणुयान्नित्यंयश्चैनंपरिकीर्तयेत् ॥ नमोभगवतेकृत्वासमाहितमतिर्नरः १३
भवत्यरोगोमतिमान्बलरूपसमन्वितः ॥ आतुरोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् १४ कामान्कामीलभेत्कामंदीर्घंचायुरवाप्नुयात् ॥ ब्राह्मणःसर्ववेदीस्यात्क्ष
त्रियोविजयीभवेत् १५ वैश्योविपुललाभःस्याच्छूद्रःसुखमवाप्नुयात् ॥ अपुत्रोलभतेपुत्रंकन्याचैवेप्सितंपतिम् १६ लग्नगर्भाविमुच्येतगर्भिणीजनयेत्सुतम् ॥
वंध्याप्रसवमाप्नोतिपुत्रपौत्रसमृद्धिमत् १७ क्षेमेणगच्छेदध्वानमिदंयःपठतेपथि ॥ योयंकामंकामयतेसतमाप्नोतिचध्रुवम् १८ इदंमहर्षेर्वचनंविनिश्चितं
महात्मनःपुरुषवरस्यकीर्तितम् ॥ समागमंचर्षिदिवौकसामिमंनिशम्यभक्ताःसुसुखंलभंते ११९ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिनारा
यणीयेचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥

धातिधारयतिपोषयतिवा धेयंधारणीयंपोषणीयंच १०० माम्नांनिर्वचनंतुस्वयमेवकरिष्यतीतिनव्याख्यायंते १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । ११० । ११
१२ । १३ । १४ । १५ । १६ । १७ । १८ । ११९ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥



अस्तौषीदिति निरुक्तेनिर्वचने १ । २ गुणकर्मजंगुणःसर्वज्ञत्वादिस्तज्जं कर्मजगत्सृष्ट्यादितज्जं ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ अष्टादशगुणंसत्त्वं ।' प्रीतिःप्राकाश्यमु
द्रेकोलघुतासुखमेवच । अकार्पण्यमसंरंभःसंतोषःश्रद्दधानता ॥ क्षमाधृतिरहिंसाचशौचमक्रोधएवच ॥ आर्जवंसमतासत्यमनसूयातथैवच'इति तत्तद्गुणोपाधिःप्रीत्यादिशब्दितोभवतीतिगौणनामनि

॥ जनमेजयउवाच ॥ अस्तौषीद्यैरिमंव्यासःसशिष्योमधुसूदनम् ॥ नामभिर्विविधैरेषांनिरुक्तंभगवन्मम १ वक्तुमर्हसिशुश्रूषोःप्रजापतिपतेर्हरेः ॥ श्रुत्वाभवेयं
यत्पूतःशरच्चंद्रइवामलः २ ॥ वैशंपायनउवाच ॥ शृणुराजन्यथाऽऽचष्टफाल्गुनस्यहरिःप्रभुः ॥ प्रसन्नात्माऽऽत्मनोनाम्नांनिरुक्तंगुणकर्मजम् ३ नामभिःकीर्ति
तैस्तस्यकेशवस्यमहात्मनः ॥ पृष्टवान्केशवंराजन्फाल्गुनःपरवीरहा ४ ॥ अर्जुनउवाच ॥ भगवन्भूतभव्येशसर्वभूतसृगव्यय ॥ लोकधामजगन्नाथलोकानामभ
यप्रद ५ यानिनामानितेदेवकीर्तितानिमहर्षिभिः ॥ वेदेषुसपुराणेषुयानिगुह्यानिकर्मभिः ६ तेषांनिरुक्तंत्वत्तोऽहंश्रोतुमिच्छामिकेशव ॥ नह्यन्योवर्णयेन्नाम्नांनि
रुक्तंत्वामृतेप्रभो ७ ॥ श्रीभगवानुवाच ॥ ऋग्वेदेसयजुर्वेदेतथैवाथर्वसामसु ॥ पुराणेसोपनिषदेतथैवज्योतिषेऽर्जुन ८ सांख्येचयोगशास्त्रेचआयुर्वेदेतथैवच ॥
बहूनिममनामानिकीर्तितानिमहर्षिभिः ९ गौणानितत्रनामानिकर्मजानिचकानिचित् ॥ निरुक्तंकर्मजानांत्वंशृणुष्वप्रयतोऽनघ १० कथ्यमानंमयाताततवंहिमे
ऽर्द्धंस्मृतःपुरा ॥ नमोऽतियशसेतस्मैदेहिनांपरमात्मने ११ नारायणायविश्वायनिर्गुणायगुणात्मने ॥ यस्यप्रसादजोब्रह्मारुद्रश्चक्रोधसंभवः १२ योऽसौयोनि
र्हिसर्वस्यस्थावरस्यचरस्यच ॥ अष्टादशगुणंयत्तत्सत्त्वंसत्त्ववतांवर १३ प्रकृतिःसापरामह्यंरोदसीयोगधारिणी ॥ ऋतासत्याऽमराऽजय्यालोकानामात्मसंज्ञिता
१४ तस्मात्सर्वाःप्रवर्तंतेसर्गप्रलयविक्रियाः ॥ तपोयज्ञश्चयष्टाचपुराणःपुरुषोविराट् १५ अनिरुद्धइतिप्रोक्तोलोकानांप्रभवाप्ययः ॥ ब्राह्मेरात्रिक्षयेप्राप्तेतस्यह्य
मिततेजसः १६ प्रसादात्प्रादुरभवत्पद्मंपद्मनिभेक्षण ॥ ततोब्रह्मासमभवत्सतस्यैवप्रसादजः १७ अह्नःक्षयेललाटाच्चसुतोदेवस्यवैतथा ॥ क्रोधाविष्टस्यसंजज्ञेरुद्रः
संहारकारकः १ एतौद्वौविबुधश्रेष्ठौप्रसादक्रोधजावुभौ ॥ तदादेशितपंथानौसृष्टिसंहारकारकौ १९ निमित्तमात्रंतावत्रसर्वप्राणिवरप्रदौ ॥ कपर्दीजटिलोमुंडःश्म
शानगृहसेवकः २० उग्रव्रतचरोरुद्रोयोगीपरमदारुणः ॥ दक्षक्रतुहरश्चैवभगनेत्रहरस्तथा २१ नारायणात्मकोज्ञेयःपांडवेययुगेयुगे ॥ तस्मिन्हिपूज्यमानेवैदेवदे
वेमहेश्वरे २२ संपूजितोभवेत्पार्थदेवोनारायणःप्रभुः ॥ अहमात्माहिलोकानांविश्वेषांपांडुनंदन २३ तस्मादात्मानमेवाग्रेरुद्रंसंपूजयाम्यहम् ॥ यद्यहंनार्चयेयं
वैईशानंवरदंशिवम् २४ आत्मानंनार्चयेत्कश्चिदितिमेभावितात्मनः ॥ मयाप्रमाणंहिकृतंलोकःसमनुवर्तते २५ प्रमाणानिहिपूज्यानिततस्तंपूजयाम्यहम् ॥
यस्तंवेत्तिसमांवेत्तियोऽनुतंसहिमामनु २६

र्वचने १३ साऽष्टादशगुणमयीमत्वंममपराप्रकृतिःस्वरूपं रोदसीद्यावापृथिव्यात्मिका योगेनलोकान्धारयतीतियोगधारिणी ऋताकर्मफलभूताब्रह्मलोकांता सत्याअबाधितचिन्मात्ररूपा १४ तस्मा
त्प्रकृतायारम्भकात्परमात्मन्यध्यस्तात्सत्वात् तपआदिरूपोऽनिरुद्धएव १५ । १६ । १७ । १८ । १९ २० । २१ । २२ । २३ । २४ । २५ । २६

२७ । २८ । २९ । ३० । ३१ । ३२ चतुर्विधाःआर्तोजिज्ञासुरर्थार्थीज्ञानीचेतिगीतोक्ताः ३३ अन्याआत्मातिरिक्तादेवताऽस्यास्तीत्यन्यदेवतः तथाचश्रुतिः । 'अथयोऽन्यांदेवतामुपास्तेऽन्योऽसाव
न्योऽहमस्मीतिनसवेदयथापशुरेवसदेवानां'इतिअन्योपास्तिंनिंदति अनन्याऽऽत्मैवदेवतायेषां । आत्मेत्येवोपासीतेत्यादिश्रुतेः । तेज्ञानिनइत्यर्थः ३४ । ३५ । ३६ । ३७ । ३८ प्रतिज्ञातंनामनिर्व
चनंकरोति नराणामित्यादिना नराजीवाःबिंबेप्रतिबिंबमिवयत्राध्यस्ताःअतस्तेषामयनंनरायणःस्वार्थेतद्धितइत्येकोऽर्थः दर्पणादिस्वच्छंद्रव्यंप्राप्यरविरश्मिवत्प्रतिस्रोतःप्रवृत्तैर्नयनरश्मिभिर्ग्रीवा
स्थमेवमुखंपूर्वप्रवृत्तपराक्संस्कारात्प्रत्यङ्मुखत्वाद्युपाधिधर्मविशिष्टंगृह्यते । अन्यथाऽत्यंताननुभूतपुरुषादिदर्शनंदर्पणेनस्यात् तद्विषयकसंस्काराभावात् । योऽयंदर्पणेदृष्टःस एवायमित्यबाधित
प्रत्यभिज्ञाबलाच्चनदर्पणेभिनवमुखाध्यासइतिव्युत्पादितंवेदांतकतकेऽस्माभिः । श्रुतिश्चईशजीवयोर्बिंबप्रतिबिंबभावंदर्शयति । 'यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन् ॥ उ

रुद्रोनारायणश्चैवसत्वमेकंद्विधाकृतम् ॥ लोकेचरतिकौंतेयव्यक्तिस्थंसर्वकर्मसु २७ नहिमेकेनचिद्देयोवरःपांडवनंदन ॥ इतिसंचिंत्यमनसापुराणंरुद्रमीश्वरम्
२८ पुत्रार्थमाराधितवानहमात्मानमात्मना ॥ नहिविष्णुःप्रणमतिकस्मैचिद्विबुधायच २९ ऋतेआत्मानमेवेतिततोरुद्रंभजाम्यहम् ॥ सब्रह्मकाःसरुद्राश्चसेंद्रादे
वाःसहर्षिभिः ३० अर्चयंतिसुरश्रेष्ठंदेवंनारायणंहरिम् ॥ भविष्यतांवर्ततांचभूतानांचैवभारत ३१ सर्वेषामग्रणीर्विष्णुःसेव्यःपूज्यश्चनित्यशः ॥ नमस्वहव्यदं
विष्णुंतथाशरणदंनमः ३२ वरदंनमस्वकौंतेयहव्यकव्यभुजंनमः ॥ चतुर्विधाममजनाभक्ताएवहिमेश्रुतम् ३३ तेषामेकांतिनःश्रेष्ठायेचैवानन्यदेवताः ॥ अहमे
वगतिस्तेषांनिराशीःकर्मकारिणाम् ३४ येचशिष्टास्त्रयोभक्ताःफलकामाहितेमताः ॥ सर्वेच्यवनधर्मास्तेप्रतिबुद्धस्तुश्रेष्ठभाक् ३५ ब्रह्माणंशितिकंठंचयाश्चान्या
देवताःस्मृताः ॥ प्रबुद्धचर्याःसेवंतोमामेवैष्यंतियत्परम् ३६ भक्तंप्रतिविशेषस्तेएषपार्थानुकीर्तितः ॥ त्वंचैवाहंचकौंतेयनरनारायणौस्मृतौ ३७ भारावतरणार्थंतु
प्रविष्टौमानुषींतनुम् ॥ जानाम्यध्यात्मयोगांश्चयोऽहंयस्माच्चभारत ३८ निवृत्तिलक्षणोधर्मस्तथाऽभ्युदयिकोऽपिच ॥ नराणामयनंख्यातमहमेकःसनातनः
३९ आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अयनंममतत्पूर्वमतोनारायणोह्यहम् ४० छादयामिजगद्विश्वंभूत्वासूर्यइवांशुभिः ॥ सर्वभूताधिवासश्चवासुदेव
स्ततोह्यहम् ४१ गतिश्चसर्वभूतानांप्रजनश्चापिभारत ॥ व्याप्तामेरोदसीपार्थकांतिश्चाभ्यधिकामम ४२

पाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवमजोऽयमात्मा'इति । तस्माद्बिंबचेतन्येऽध्यस्तस्यजीवाख्यप्रतिबिंबस्याविद्यादर्पणापनयेतत्रैवविलयइतियुक्तं ३९ तस्यनारायणत्वेनिर्वचनांतरमाह आपइति
नरोजीवस्तदविद्याकल्पितमंबुप्रधानत्वादापःपुरुषवचसोभवंतीतिश्रुतेश्चापइतिशरीरमुच्यते तदस्यपूर्वमयनंप्रवेशस्थानं । उपाधिसृष्टिसमकालंहिघटाकाशवदुपाधौचितेःप्रवेशः । उपाध्यभिमाना
नंतरंचजीवत्वमितिविवेकः । अतउक्तंममतत्पूर्वमयनमिति ४० वासयत्याच्छादयतिविश्वंवसत्यस्मिन्विश्वमितिवावासुः वसआच्छादनेवसनिवासेइत्यनयोरूपे सचासौदेवश्चेतिवासुदेवइत्यर्थः।
एतेन'ईशावास्यमिदंसर्वंकर्माध्यक्षःसर्वभूताधिवासः'इतिश्रुत्योरर्थःसंगृहीतः ४१ विच्छगतौतुदादिः विच्छदीप्तौचुरादिः विपुसेचनेभ्वादिः विष्लृव्याप्तौजुहोत्यादिः विशप्रवेशनेतुदादिः ष्णुप्रस्र
वणेऽदादिः एतेषामन्यतमस्यरूपंविष्णुरित्यभिप्रेत्याह गतिरिति विच्छंतिगच्छंतिलीयंतेऽस्मिन्विच्छंत्यस्माल्लोकाइतिवावेवेष्टिव्याप्नोतीतिवाविच्छयतिदीप्यतइतिवा ४२



अधिभूतानिसर्वाणिप्राणिजातानिदिव्यादिव्यान्यंतेपुदेहावसानेपुयद्ब्रह्मइच्छन्ऐच्छन्अडभावश्चार्षः इच्छितवंति तदस्मिसर्वकामप्रपूरकमिति विशेषेणस्नौतिप्रस्रवतिकामक्षीरमितिवाचकारार्दित
चलितजीवनंप्रविशतिहृदयंक्रामतिकार्यमितिवाविष्णुरित्यर्थः । एतेनगच्छंत्यस्मिन्नागच्छंतिचयस्मात्प्रजाः । येनावृतंखंचदिवंमहींचतस्यभासासर्वमिदंविभाति । यदिच्छंतोब्रह्मचर्यंचरंतितद्धावतो
ऽन्यानत्येतीति । अन्नादोवसुदानइत्यादिश्रुत्यर्थउक्तः ४३ दमनंदामस्तेनउदुत्कर्षेणऋच्छंतिप्राप्नुवंतिस्वर्गादिकंयस्मादितिदामोदरइत्यभिप्रेत्याह दमादिति ४४ पृच्छंत्येनंजिज्ञासवोधर्मजा
तमितिवापृच्छंत्येनंक्षुधितादयइतिवापृश्निर्वेदोऽन्नादिवागर्भोगर्भस्थाप्यतःपृश्निगर्भोऽहमित्यर्थः ४५ ऋषयइतिद्वावेतन्नामजपफलमाहतुः ४६ । ४७ केशैःकेशवत्सूक्ष्मैःसूर्यादिरश्मिभिस्तद्रूपेण

अधिभूतानिचांतेषुतदिच्छंश्चास्मिभारत ॥ क्रमणाच्चाप्यहंपार्थविष्णुरित्यभिसंज्ञितः ४३ दमात्सिद्धिंपरीप्संतोमांजनाःकामयंतिह ॥ दिवंचोर्वींचमध्यंचतस्मा
द्दामोदरोह्यहं ४४ पृश्निरित्युच्यतेचान्नंवेदआपोऽमृतंतथा ॥ ममैतानिसदागर्भःपृश्निगर्भस्ततोह्यहम् ४५ ऋषयःप्राहुरेवंमांत्रितंकूपनिपातितम् ॥ पृश्निगर्भ
त्रितंपाहीत्येकतद्वितपातितम् ४६ ततःसब्रह्मणःपुत्रआद्योऋषिवरस्त्रितः ॥ उत्ततारोदपानाद्वैपृश्निगर्भानुकीर्तनात् ४७ सूर्यस्यतपतोलोकानग्नेःसोमस्य
चाप्युत ॥ अंशवोयत्प्रकाशंतेममैतेकेशसंज्ञिताः ४८ सर्वज्ञाःकेशवंतस्मान्मामाहुर्द्विजसत्तमाः ॥ स्वपत्न्यामाहितोगर्भउतथ्येनमहात्मना ४९ उतथ्येऽन्त
र्हितेचैवकदाचिद्देवमायया ॥ बृहस्पतिरथाविंदत्पत्नींतस्यमहात्मनः ५० ततोवैतमृषिश्रेष्ठंमैथुनोपगतंतथा ॥ उवाचगर्भःकौंतेयपंचभूतसमन्वितः ५१
पूर्वागतोऽहंवरदनार्हस्यंबांप्रबाधितुम् ॥ एतद्बृहस्पतिःश्रुत्वाचुक्रोधचशशापच ५२ मैथुनायागतोयस्मात्त्वयाऽहंविनिवारितः ॥ तस्मादंधोयास्यसित्वं
मच्छापान्नात्रसंशयः ५३ सशापादृषिमुख्यस्यदीर्घतमउपेयिवान् ॥ सहिदीर्घतमानामनाम्नाह्यासीदृषिःपुरा ५४ वेदानवाप्यचतुरःसांगोपांगान्सनात
नान् ॥ प्रयोजयामासतदानामगुह्यमिदंमम ५५ आनुपूर्व्येणविधिनाकेशवेतिपुनःपुनः ॥ सचक्षुष्मान्समभवद्गोतमश्चाभवत्पुनः ५६ एवंहिवरदंनाम
केशवेतिममार्जुन ॥ देवानामथसर्वेषामृषीणांचमहात्मनाम् ५७ अग्निःसोमेनसंयुक्तएकयोनित्वमागतः ॥ अग्नीषोममयंतस्माज्जगत्कृत्स्नंचराचरम् ५८
अपिहिपुराणेभवतिएकयोन्यात्मकावग्नीषोमौदेवाश्चाग्निमुखाइति ॥ एकयोनित्वाच्चपरस्परमर्हंतोलोकान्धारयंतइति ५९ ॥ इतिश्रीमहाभारतेशांति
पर्वणिमोक्षधर्मपर्वणिनारायणीयेएकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१ ॥

वावातिगच्छतीतिकेशवइत्याह सूर्यस्येति । 'यदादित्यगतंतेजोजगद्भासयतेऽखिलं ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकं' इतिभगवद्वचनार्थःकेशवपदव्युत्पत्त्युक्त्यासिद्धः ४८ केशवशब्दजपफल
मंधस्यचक्षुःप्राप्तिरित्याह स्वपत्न्यामित्यादिना ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ गोतमःगोशब्देनचक्षुरुच्यते चक्षुष्मत्तमइत्यर्थः ५६ तापनादाप्यायनाच्चलोकंहर्षयतइति
हृषीअग्नीषोमौजाठरान्नरूपौतौकेशाइवकेशायस्येतिहृषीकेशइत्येतमर्थंव्युत्पादयितुमग्नीषोमयोर्भोक्तृभोग्ययोरेकयोनित्वमाह देवानामित्यादिना ५७ । ५८ एकयोनित्वंविनाभोक्तृभोग्यभावासंभ
वः अन्यथावाय्वग्नियोन्योःस्पर्शचक्षुषोरपिभोग्यभोक्तृभावःस्यादित्याशयेनाह परस्परमर्हंतइति भोक्तृभोग्यत्वमितिशेषः ५९ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये
भारतभावदीपे एकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१ ॥

अग्नीषोमाविति १ तेजोद्भवेसंधिरार्थः २ संप्रक्षालनकालेप्रलयकाले चतुर्युगानांसहस्रांतदंतेजलैकार्णवेसलिलवद्विदेकसमुद्रे ३ आपइत्येवमिति सलिलएकोद्रष्टाऽद्वैतोभवतीतिश्रुतौब्रह्मभूतस्याऽप्यांयसलिलशब्देनोपादानात् एकार्णववदद्वितीयइत्यर्थः प्रतिष्ठितेस्वमहिम्नीतिशेषः ४ 'नरात्र्यांअह्नआसीत्प्रकेतः नासदासीन्नोसदासीत्तदानीं नासीद्रजोनोव्योमापरोऽयत्' इत्येतावतःश्रुतिभागस्यार्थंसंगृह्णाति नवैरात्र्यामिति सतिप्रधाने असतिशून्ये व्यक्तेपरमाण्वादौ अव्यक्तेमायाशबलेपरव्योमाख्ये ५ एवंनिर्विशेषसन्मात्रेब्रह्मण्यिव्यवस्थितेसत्यनिर्वचनीयात्तमसःसृष्टिमाह एवमस्यामित्यादिना नारायणगुणानामैश्वर्यादीनामाश्रयादजरामरत्वंभूताकाशेऽस्ति । नतुतस्यश्रोत्रेंद्रियात्मनोनिरिंद्रियत्वमस्तीत्यतउक्तमनिंद्रियादिति । तदपिकालेऽस्तीत्यतआह अग्राह्यादिति कालस्यापिषडिंद्रियवेद्यत्वमस्ति इदानींघटंपश्यामीत्याद्यनुभवात् । विशिष्टप्रत्यक्षस्यचविशेषणप्रत्यक्षंविनाऽसंभवादित्यर्थः । अथवातार्किकाभिमतमनःप्रत्यक्षात्मव्यावृत्त्यर्थमिदं । तटस्थेश्वरेवा



॥ अर्जुनउवाच ॥ अग्नीषोमौकथंपूर्वमेकयोनीप्रवर्तितौ ॥ एषमेसंशयोजातस्तंछिंधिमधुसूदन १ ॥ श्रीभगवानुवाच ॥ हंततेवर्तयिष्यामिपुराणंपांडुनंदन ॥
आत्मतेजोद्भवंपार्थशृणुष्वैकमनामम २ संप्रक्षालनकालेऽतिक्रांतेचतुर्युगसहस्रांते ॥ अव्यक्तेसर्वभूतेप्रलयेसर्वभूतस्थावरजंगमे ॥ ज्योतिर्धरणिवायुरहितेअंधेत
मसिजलैकार्णवेलोके ३ आपइत्येवंब्रह्मभूतसंज्ञकेऽद्वितीयेप्रतिष्ठिते ४ नवैरात्र्यांनदिवसेनसतिनासतिनव्यक्तेनचाप्यव्यक्तेव्यवस्थिते ५ एवमस्यांव्यवस्थायां
नारायणगुणाश्रयादजरामरादनिंद्रियादग्राह्यादसंभवात्सत्यादहिंस्राल्ललामाद्विविधप्रवृत्तिविशेषादवैरादक्षयादमरादजरादमूर्तितःसर्वव्यापिनःसर्वकर्तुःशाश्वतस्त
मसःपुरुषःप्रादुर्भूतोहरिरव्ययः ६ निदर्शनमपिह्यत्रभवति ७ नासीदहोनरात्रिरासीन्नसदासीन्नासदासीत्तमएवपुरस्तादभवद्विश्वरूपम् ॥ साविश्वरूपस्यरजनी
हिएवमस्यार्थोऽनुभाष्यः ८ तस्येदानींतमसःसंभवस्यपुरुषस्यब्रह्मयोनेर्ब्रह्मणःप्रादुर्भावेसपुरुषःप्रजाःसिसृक्षमाणोनेत्राभ्यामग्नीषोमौससर्ज ॥ ततोभूतसर्गेप्रसृष्टे
प्रजाक्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठत ॥ यःसोमस्तद्ब्रह्मयद्ब्रह्मतेब्राह्मणायोऽग्निस्तत्क्षत्रंक्षत्राद्ब्रह्मबलवत्तरम् ॥ कस्मादितिलोकप्रत्यक्षगुणमेतत्तद्यथा ॥ ब्राह्मणेभ्यःपरं
भूतंनोत्पन्नपूर्वंदीप्यमानेऽग्नौजुहोतियोब्राह्मणमुखेजुहोतीतिकृत्वाब्रवीमिभूतसर्गःकृतोब्रह्मणाभूतानिचप्रतिष्ठाप्यत्रैलोक्यंधार्यतइतिमंत्रवादोऽपिहिभवति ९

रणार्थमाह असंभवादिति तस्यहिक्षित्यादिकंसकर्तृकंकार्यत्वात्संमतवदित्यनुमानतःसंभवोऽस्ति । नचैतत्तथाऽस्यजडत्वाभ्युपगमात् सत्यात्व्यवहारतइतिशेषः । ननुपरीक्षातःसत्यत्वमस्यास्ति तत्र हेतुः अहिंस्रादिति स्वप्रव्याघ्रोहिनिद्रादोषेणोपप्लुतंभीषयत्येवनतुहिनस्तितद्वदेतत् सत्यत्वेअहिंस्रत्वंनोपपद्येतेत्यर्थः । नन्वेवंनामांतरेणासदेवोक्तंनेत्याह ललामादिति चिंतामणिरत्नवद्भावरूपादित्यर्थः । अतएवविविधाःप्रवृत्तिविशेषायस्मात् भावरूपत्वेऽपिजडत्वात्तुच्छत्वाच्चवैरक्षयजरामृत्युमूर्तयोऽस्यनसंभवंति । ईदृशमपिसर्वव्यापकंसर्वकर्तृचेति। शश्वद्भवमनादि पंचम्यर्थेप्रथमा तमसःसकाशाच्चिदात्माप्रादुर्भूतोव्यक्ततांगतोऽहंप्रत्ययविषयत्वंगतःहरिरव्ययः ६ निदर्शनंश्रुतिरूपंप्रमाणं ७ तदेवपठति नासीदिति तमएवपुरस्तादभवद्विश्वरूपमित्यस्मिन्नर्थेश्रुत्यंतरमप्यस्ति । 'तमआसीत्तमसागूळ्हमग्रेऽप्रकेतंसलिलंसर्वमाइदं तुच्छ्येनाभ्वपिहितंयदासीत्तमसस्तन्महिनाजायतैकं' इति एषाश्रुतिःप्राग्व्याख्याता एवमस्यार्थोऽनुभाष्यः अग्नीषोमयोरेकयोनित्वंभाषितमेवशुद्धात्मावशेषोक्त्या पुनरप्यनुभाष्यः हरिप्रभवत्वेनेत्यर्थः ८ तदेवाहतस्येदानीमित्यादिना सपुरुषः ब्रह्मणाब्राह्मणेन मंत्रवादोऽपिब्राह्मणमाहात्म्यप्रख्यापकः ९



हेअग्नेत्वंदेवादीनांहितोऽसियतस्त्वंयज्ञानांहोताहोतृस्वरूपोऋत्विगसि होतृत्वेनाग्निस्तुतःअग्नितोऽपिहोताब्राह्मणोऽधिकइतिदर्शितं १० संक्षिप्यमंत्रंव्याचष्टे निदर्शनमिति ११ विस्तरेणव्याचष्टे अग्निर्हीति होताऋत्विक् कर्तायजमानः उभौहोतृशब्दार्थः उभयरूपीअग्निर्ब्रह्मब्राह्मणः १२ ब्राह्मणस्यवेदधारित्वेनब्रह्मभावमुपपादयति नहीत्यादिना १३ अग्नाविति अग्नौहुतेसतिब्राह्मणोनतृप्यतिब्राह्मणमुखेहुतेचेदग्न्यादयोदेवताब्राह्मणशरीरंप्रविश्यधारयंत्यतस्तत्तृप्त्यातृप्यंतीतिशतपथवाक्यार्थः १४ । १५ । १६ शैक्यइवशैक्यःशिक्यसमुदायः यथाशिक्यंगव्यादीन्धारयति एवंब्राह्मणोमर्त्यादीनित्यर्थः १७ । १८ मर्गरोदधीक्षुतैलादिनिपीडनयंत्रं येषांराज्ञांकृप्यादिहीनत्वात्तादृशाराजानोमर्टाश्चोराश्चभवंतीत्यर्थः १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७

त्वमग्नेयज्ञानांहोताविश्वेषांहितोदेवानांमानुषाणांचजगतइति १० निदर्शनंचात्रभवतिविश्वेषामग्नेयज्ञानांत्वंहोतेति ॥ त्वंहितोदेवैर्मनुष्यैर्जगतइति ११ अग्निर्हि
यज्ञानांहोताकर्तासचाग्निर्ब्रह्म १२ नह्यृतेमंत्राणांहवनमस्तिनविनापुरुषंतपःसंभवति ॥ हविर्मंत्राणांसंपूजाविद्यतेदेवमानुषऋषीणामनेनत्वंहोतेतिनियुक्तः ॥
येचमानुषहोत्राधिकारास्तेचब्राह्मणस्यहियाजनंविधीयतेनक्षत्रवैश्ययोर्द्विजात्योस्तस्माद्ब्राह्मणाह्यग्निभूतायज्ञानुद्वहंति ॥ यज्ञास्तेदेवांस्तर्पयंतिदेवाःपृथिवींभावयं
तिशतपथेऽपिहिब्राह्मणमुखेभवति १३ अग्नौसमिद्धेसजुहोतियोविद्वान्ब्राह्मणमुखेनाहुतिंजुहोति १४ एवमप्यग्निभूताब्राह्मणाविद्वांसोऽग्निंभावयंति ॥ अग्निर्वि
ष्णुःसर्वभूतान्यनुप्रविश्यप्राणान्धारयंति १५ अपिचात्रसनत्कुमारगीताःश्लोकाभवंति ॥ ब्रह्माविश्वंसृजत्पूर्वंसर्वादिर्निरवस्करम् ॥ ब्रह्मघोषैर्दिवंगच्छंत्यमरा
ब्रह्मयोनयः १६ ब्राह्मणानांमतिर्वाक्यंकर्मश्रद्धातपांसिच ॥ धारयंतिमहींद्यांचशैक्योवाग्मृतंतथा १७ नास्तिसत्यात्परोधर्मोनास्तिमातृसमोगुरुः ॥ ब्राह्मणेभ्यः
परंनास्तिप्रेत्यचेहचभूतये १८ नैषामुक्षावहतिनोतवाहानगर्गरोमथ्यतिसंप्रदाने ॥ अपध्वस्तादस्युभूताभवंतियेषांराष्ट्रेब्राह्मणावृत्तिहीनाः १९ वेदपुराणेति
हासप्रामाण्यान्नारायणमुखोद्गताःसर्वात्मानःसर्वकर्तारःसर्वभावाश्चब्राह्मणाश्च २० वाक्संयमकालेहितस्यवरप्रदस्यदेवदेवस्यब्राह्मणाःप्रथमंप्रादुर्भूताब्राह्मणेभ्यश्च
शेषावर्णाःप्रादुर्भूताः २१ इत्थंचसुरासुरविशिष्टाब्राह्मणायएवमयाब्रह्मभूतेनपुरास्वयमेवोत्पादिताःसुरासुरमहर्षयोभूतविशेषाःस्थापितानिगृहीताश्च २२ अह
ल्याधर्षणनिमित्तंहिगौतमाद्धरिश्मश्रुतामिंद्रःप्राप्तः ॥ कौशिकनिमित्तंचेंद्रोमुष्कवियोगंमेषवृषणत्वंचावाप २३ अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्यपुरंदरस्यच्यव
नेनस्तंभितौबाहू २४ क्रतुवधप्राप्तमन्युनाचदक्षेणभूयस्तपसाचात्मानंसंयोज्यनेत्राकृतिरन्याललाटेरुद्रस्योत्पादिता २५ त्रिपुरवधार्थंदीक्षामुपगतस्यरुद्रस्यउ
शनसाजटाःशिरसउत्कृत्यप्रयुक्तास्ततःप्रादुर्भूताभुजगास्तैरस्यभुजगैःपीड्यमानःकंठोनीलतामुपगतः ॥ पूर्वंचमन्वंतरेस्वायंभुवेनारायणहस्तग्रहणान्नीलकंठ
त्वमेवच २६ अमृतोत्पादनपुरश्चरणतामुपगतस्यांगिरसोबृहस्पतेरुपस्पृशतोनप्रसादंगतवत्यःकिलापः ॥ अथबृहस्पतिरपांचुक्रोधयस्मान्ममोपस्पृशतःकलुषी
भूतानचप्रसादमुपगतास्तस्माद्द्यप्रभृतिझषमकरकच्छपजंतुभिःकलुषीभवितेति ॥ तदाप्रभृत्यऽऽपोयादोभिःसंकीर्णाःसंप्रवृत्ताः २७

विश्वरूपोहि वैत्वाष्ट्रः पुरोहितोदेवानामासीत् ॥ स्वस्रीयोऽसुराणांसप्रत्यक्षंदेवेभ्योभागमदात्परोक्षमसुरेभ्यः २८ अथहिरण्यकशिपुंपुरस्कृत्यविश्वरूपमातरंस्व
सारमसुरावरमयाचंतहेस्वसरयंतेपुत्रस्त्वाष्ट्रोविश्वरूपस्त्रिशिरादेवानांपुरोहितःप्रत्यक्षंदेवेभ्योभागमदात्परोक्षमस्माकंततोदेवावर्धंतेवयंक्षीयामस्तदेनंत्वंवारयितु
मर्हसितथायथाऽस्मान्भजेदिति २९ अथविश्वरूपंनंदनवनमुपगतंमातोवाचपुत्रकिंपरपक्षवर्धनस्त्वंमातुलपक्षंनाशयसि ॥ नार्हस्येवंकर्तुमितिसविश्वरूपोमा
तुर्वाक्यमनतिक्रमणीयमितिमत्वासंपूज्यहिरण्यकशिपुमगात् ३० हैरण्यगर्भात्तुवसिष्ठाद्धिरण्यकशिपुःशापंप्राप्तवान्यस्मात्त्वयाऽन्योवृतोहोतातस्मादसमाप्तय
ज्ञस्त्वमपूर्वात्सत्वजाताद्वधंप्राप्स्यसीतितच्छापदानाद्धिरण्यकशिपुःप्राप्तवान्वधम् ३१ अथविश्वरूपोमातृपक्षवर्धनोऽत्यर्थंतपस्यभवत्तस्यव्रतभंगार्थमिंद्रोबह्वीः
श्रीमत्योऽप्सरसोनियुयोजताश्चदृष्ट्वामनःक्षुभितंतस्याभवत्तासुचाप्सरःसुनचिरादेवसक्तोऽभवत्सक्तंचैनंज्ञात्वाअप्सरसऊचुर्गच्छामहेवयंयथागतमिति ३२ ता
स्त्वाष्ट्रउवाचक्वगमिष्यथास्यतांतावन्मयासहश्रेयोभविष्यतीतितास्तमब्रुवन्वयंदेवस्त्रियोऽप्सरसइंद्रंदेवंवरदंपुराप्रभविष्णुंवृणीमहइति ३३ अथताविश्वरूपोऽब्र
वीदद्यैवसेंद्रादेवानभविष्यंतीतिततोमंत्रान्जजापतैर्मंत्रैरवर्धतत्रिशिराएकेनास्येनसर्वलोकेषुयथावद्विजैःक्रियावद्भिर्यज्ञेषुसुहुतंसोमंपपावेकेनान्नमेकेनसेंद्रान्देवानथें
द्रस्तंविवर्धमानंसोमपानाप्यायितसर्वगात्रंदृष्ट्वाचिंतामापेदेसहदेवैः ३४ तेदेवाःसेंद्राब्रह्माणमभिजग्मुस्तऊचुर्विश्वरूपेणसर्वयज्ञेषुसुहुतःसोमःपीयतेवयमभागाः
संवृत्ताअसुरपक्षोवर्धतेवयंक्षीयामस्तदर्हसिनोविधातुंश्रेयोऽनंतरमिति ३५ तान्ब्रह्मोवाचऋषिर्भार्गवस्तपस्तप्यतेदधीचःसयाच्यतांवरंसयथाकलेवरंजह्यात्तथा
विधीयतांतस्यास्थिभिर्वज्रंक्रियतामिति ३६ ततोदेवास्तत्रागच्छन्यत्रदधीचोभगवान्तपस्तपस्तेपेसेंद्रादेवास्तंतथाऽभिगम्योचुर्भगवंस्तपःसुकुशलमविघ्नंचे
ति ३७ तान्दधीचउवाचस्वागतंभवद्भ्यउच्यतांकिंक्रियतामितियद्वक्ष्यथतत्करिष्यामि ३८ तेतमब्रुवन्शरीरपरित्यागंलोकहितार्थंभगवान्कर्तुमर्हतीति ३९
अथदधीचस्तथैवाविमनाःसुखदुःखसमोमहायोगीआत्मानंसमाधायशरीरपरित्यागंचकार ४० तस्यपरमात्मन्यपसृतेतान्यस्थीनिधातासंगृह्यवज्रमकरोत्तेनवज्रे
णाभेद्येनाप्रधृष्येणब्रह्मास्थिसंभूतेनविष्णुप्रविष्टेनेंद्रोविश्वरूपंजघानशिरसांचास्यच्छेदनमकरोत्तस्मादनंतरंविश्वरूपगात्रमथनसंभवंत्वाष्ट्रोत्पादितमेवारिंवृत्रमिंद्रो
जघान ४१ तस्यांद्वैधीभूतायांब्रह्मवध्यायांभयादिंद्रोदेवराज्यंपर्यत्यजदप्सुसंभवांचशीतलांमानससरोगतांनलिनींप्रतिपेदेतत्रचैश्वर्ययोगादणुमात्रोभूत्वाबिसग्रं
थिंप्रविवेश ४२ अथब्रह्मवध्याभयप्रणष्टेत्रैलोक्यनाथेशचीपतौजगदनीश्वरंबभूवदेवान्रजस्तमश्चाविवेशमंत्रानप्रावर्तंतमहर्षीणांरक्षांसिप्रादुरभवन्ब्रह्मचोत्साद
नंजगामानिंद्राश्चाबलालोकाःसुप्रधृष्याबभूवुः ४३

२८। २९। ३०। ३१। ३२। ३३। ३४। ३५। ३६। ३७। ३८। ३९। ४०। ४१। ४२। ४३



अथदेवाऋषयश्चायुषःपुत्रंनहुषंनामदेवराज्येऽभिषिषिचुर्नहुषःपंचभिःशतैर्ज्योतिषांललाटेज्वलद्भिःसर्वतेजोहरैस्त्रिविष्टपंपालयांबभूव ४४ अथलोकाःप्रकृतिमापे
दिरेस्वस्थाश्चहृष्टाश्चबभूवुः ४५ अथोवाचनहुषःसर्वमांशक्रोपभुक्तमुपस्थितमृतेशचीमितिसएवमुक्त्वाशचीसमीपमगमदुवाचैनांसुभगेऽहमिंद्रोदेवानांभजस्वमा
मितितंशचीप्रत्युवाचप्रकृत्यात्वंधर्मवत्सलःसोमवंशोद्भवश्चनार्हसिपरपत्नीधर्षणंकर्तुमिति ४६ तामथोवाचनहुषऐंद्रंपदमध्यास्यतेमयाऽहमिंद्रस्यराज्यरत्नहरोना
त्राधर्मःकश्चित्त्वमिंद्रोपभुक्तेतिसातमुवाचास्तिममकिंचिद्व्रतमपर्यवसितंतस्यावभृथेत्वामुपगमिष्यामिकैश्चिदेवाहोभिरितिसशच्यैवमभिहितोजगाम ४७ अथ
शचीदुःखशोकार्ताभर्तृदर्शनलालसानहुषभयगृहीताबृहस्पतिमुपागच्छत्सचतामत्युद्विग्नांदृष्ट्वैवध्यानंप्रविश्यभर्तृकार्यतत्परांज्ञात्वाबृहस्पतिरुवाचानेनैवव्रतेनतप
साचान्वितादेवींवरदामुपश्रुतिमाह्वयतदासातेइंद्रंदर्शयिष्यतीतिसाऽथमहानियमस्थितादेवींवरदामुपश्रुतिंमंत्रैराह्वयतिसोपश्रुतिःशचीसमीपमगादुवाचचैनामिय
मस्मीतित्वयाऽऽहूतोपस्थिताकिंतेप्रियंकरवाणीतितांमूर्ध्नाप्रणम्योवाचशचीभगवत्यर्हसिमेभर्तारंदर्शयितुंत्वंसत्याऋताचेतिसैनांमानसंसरोऽनयत्तत्रेंद्रंबिसग्रंथिग
तमदर्शयत् ४८ तामथपत्नींकृशांग्लानांचेंद्रोदृष्ट्वाचिंतयांबभूवअहोममदुःखमिदमुपगतंनष्टंहिमामियमन्विष्ययत्पत्न्यभ्यगमद्दुःखार्तेतितामिंद्रउवाचकथंवर्तयसी
तिसातमुवाचनहुषोमामाह्वयतिपत्नींकर्तुंकालश्चास्यमयाकृतइतितामिंद्रउवाचगच्छनहुषस्त्वयावाच्योऽपूर्वेणमामृषियुक्तेनयानेनत्वमधिरूढउद्वहस्वेति ॥ इंद्र
स्यमहांतिवाहनानिसंतिमनःप्रियाण्यधिरूढानिमयात्वमन्येनोपयातुमर्हसीतिसैवमुक्ताहृष्टाजगामेंद्रोऽपिबिसग्रंथिमेवाविवेशभूयः ४९ अथेंद्राणीमभ्यागतांदृष्ट्वाता
मुवाचनहुषःपूर्णःसकालइतितंशच्यब्रवीच्छक्रेणयथोक्तंसमहर्षियुक्तंवाहनमधिरूढःशचीसमीपमुपागच्छत् ५० अथमैत्रावरुणिःकुंभयोनिरगस्त्यऋषिवरोमहर्षीन्
धिक्क्रियमाणांस्तान्नहुषेणापश्यत्पद्भ्यांचतमस्पृशत्ततःसनहुषमब्रवीदकार्यप्रवृत्तपापपतस्वमहीसर्पोभवयावद्भूमिर्गिरयश्चतिष्ठेयुस्तावदितिसमहर्षिवाक्यसमकालमे
वतस्माद्यानादवापतत् ५१ अथानिंद्रंपुनस्त्रैलोक्यमभवत्ततोदेवाऋषयश्चभगवंतंविष्णुंशरणमिंद्रार्थेऽभिजग्मुरूचुश्चैनंभगवन्निंद्रंब्रह्महत्याभिभूतंत्रातुमर्हसीति
ततःसवरदस्तानब्रवीदश्वमेधंयज्ञंवैष्णवंशक्रोऽभियजतांततःस्वस्थानंप्राप्स्यतीतिततोदेवाऋषयश्चेंद्रंनापश्यन्यदातदाशचीमूचुर्गच्छसुभगेइंद्रमानयस्वेतिसापु
नस्तत्सरःसमभ्यगच्छदिंद्रश्चतस्मात्सरसःप्रत्युत्थायबृहस्पतिमभिजगामबृहस्पतिश्चाश्वमेधंमहाक्रतुंशक्रायाहरत्तत्रकृष्णसारंगंमेध्यमश्वमुत्सृज्यवाहनंतमेवकृत्वा
इंद्रंमरुत्पतिंबृहस्पतिःस्वंस्थानंप्रापयामास ५२ ततःसदेवराड्देवैर्ऋषिभिःस्तूयमानस्त्रिविष्टपस्थोनिष्कल्मषोबभूवहब्रह्मवध्यांचतुर्षुस्थानेषुवनिताऽग्निवनस्पति
गोषुव्यभजदेवमिंद्रोब्रह्मतेजःप्रभावोपबृंहितःशत्रुवधंकृत्वास्वंस्थानंप्रापितः ५३

४४। ४५। ४६। ४७। ४८। ४९। ५०। ५१। ५२। ५३

५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ ब्राह्मणमाहात्म्यकथनपरोग्रंथःस्पष्टार्थः ६३ क्षत्रियमाहात्म्यमप्याह क्षत्रमिति ६४ उपसंहरति यदेतदिति यदेतद्ब्रह्मसत्रगततेजोऽग्नीषोमी



आकाशगंगागतश्चपुराभरद्वाजोमहर्षिरुपास्पृशत्त्रीन्क्रमानक्रमताविष्णुनाऽभ्यासादितःसभरद्वाजेनससलिलेनपाणिनोरसिताडितःसलक्षणोरस्कःसंवृत्तः ५४
भृगुणामहर्षिणाशप्तोऽग्निःसर्वभक्षत्वमुपानीतः ५५ अदिति र्वैदेवानामन्नमपचदेतद्भुक्त्वाऽसुरान्हनिष्यंतीतितत्रबुधोव्रतचर्यासमाप्तावागच्छददितिंचावोच
द्भिक्षांदेहीतितत्रदेवैःपूर्वमेतत्प्राश्यंनान्येनेत्यदितिर्भिक्षांनादादथभिक्षाप्रत्याख्यानरुषितेनबुधेनब्रह्मभूतेनादितिःशप्ताअदितेरुदरेभविष्यतिव्यथाविवस्वतोद्वितीयजन्मन्यंडसंज्ञितस्यअंडंमातुरदित्यामारितंसमार्तंडोविवस्वानभवच्छ्राद्धदेवः ५६ दक्षस्ययावैदुहितरःषष्टिरासंस्ताभ्यःकश्यपायत्रयोदशप्रादाद्दशधर्मायदशम
नवेसप्तविंशतिमिंदवेतासुतुल्यासुनक्षत्राख्यांगतासुसोमोरोहिण्यामभ्यधिकंप्रीतिमानभूत्ततस्ताःशिष्टाःपत्न्यईर्ष्यावत्यःपितुःसमीपंगत्वेममर्थंशशंसुर्भगवन्नस्मा
सुतुल्यप्रभावासुसोमोरोहिणींप्रत्यधिकंभजतीतिसोऽब्रवीद्यक्ष्मैनमाविश्यतेतिदक्षशापात्सोमंराजानंयक्ष्माविवेशसयक्ष्मणाऽऽविष्टोदक्षमगाद्दक्षश्चैनमब्रवीन्नसमंवर्त
यसीतितत्रर्षयःसोममब्रुवन्क्षीयसेयक्ष्मणापाश्चिमायांदिशिसमुद्रेहिरण्यसरस्तीर्थंतत्रगत्वाआत्मानमभिषेचयस्वेत्यथागच्छत्सोमस्तत्रहिरण्यसरस्तीर्थंगत्वाचात्म
नःसेचनमकरोत्स्नात्वाचात्मानंपाप्मनोमोक्षयामासतत्रचावभासितस्तीर्थेयदासोमस्तदाप्रभृतिचतीर्थंतत्प्रभासमितिनाम्नाख्यातंबभूव ५७ तच्छापादद्या
पिक्षीयतेसोमोऽमावास्यांतरस्थःपौर्णमासीमात्रेऽधिष्ठितोमेघलेखाप्रतिच्छन्नंवपुर्दर्शयतिमेघसदृशंवर्णमगमत्तदस्यशशलक्ष्मविमलमभवत् ५८ स्थूलशि
रामहर्षिर्मेरोःप्रागुत्तरेदिग्विभागेतपस्तेपेततस्तस्यतपस्तप्यमानस्यसर्वगंधवहःशुचिर्वायुर्वायमानःशरीरमस्पृशत्सतपसातापितशरीरःकृशोवायुनोपवीज्यमा
नोहृदयेपरितोषमगमत्तत्रकिलतस्यानिलव्यजनकृतपरितोषस्यसद्योवनस्पतयःपुष्पशोभांनिदर्शितवंतइतिसएतान्शशापनसर्वकालंपुष्पवंतोभविष्यथेति ॥
५९ नारायणोलोकहितार्थंवडवामुखोनामपुरामहर्षिर्बभूवतस्यमेरौतपस्तप्यतःसमुद्रआहूतोनागतस्तेनामर्षितेनात्मगात्रोष्मणासमुद्रःस्तिमितजलःकृतःस्वेद
प्रस्यंदनसदृशश्चास्यलवणभावोजनितः ६० उक्तश्चाप्यपेयोभविष्यस्येतच्चतेतोयंवडवामुखसंज्ञितेनपेपीयमानंमधुरंभविष्यतितिदेतदद्यापिवडवामुखसंज्ञि
तेनानुवर्तिनातोयंसमुद्रात्पीयते ६१ हिमवतोगिरेर्दुहितरमुमांकन्यांरुद्रश्चकमेभृगुरपिचमहर्षिर्हिमवंतमागत्याब्रवीत्कन्यामिमांमेदेहीतितमब्रवीद्धिमवानभि
लक्षितोवरोरुद्रइतितमब्रवीद्भृगुर्यस्मात्त्वयाऽहंकन्यावरणकृतभावःप्रत्याख्यातस्तस्मान्नरत्नानांभवान्भाजनंभविष्यतीति ६२ अद्यप्रभृत्येतदवस्थितमृषिवच
नंतदेवंविधंमाहात्म्यंब्राह्मणानाम् ६३ क्षत्रमपिचब्राह्मणप्रसादादेवशाश्वतीमव्ययांचपृथिवींपत्नीमभिगम्यबुभुजे ६४ यदेतद्ब्रह्माग्नीषोमीयंतेनजगद्धार्यते ६५ ॥२५४॥
उच्यते ॥ सूर्याचंद्रमसौचक्षुःकेशाश्चैवांशवःस्मृताः ॥ बोधयंस्तापयंश्चैवजगदुत्तिष्ठतेपृथक् ६६

यमतस्तेनैवतेजसाजगद्धार्यतेऽतोजगदप्याग्नीषोमीयमित्यर्थः ६५ सूर्याचंद्रमसावग्नीषोमौचक्षुः परमेश्वरनेत्राभ्यामुत्पन्नत्वात् केशाअंशवःकिरणाःबोधयंश्चंद्रस्तापयन्सूर्यः ६६

तौजगद्धर्षयतोयस्मात्तस्मात्तौहृषी हृष्यतेरिन्नतस्येगुपधात्किदितिकित्वंअलुक्समासः हृषीअग्नीषोमौकेशावंशुइवांशूयस्यसहृषीकेशइत्यर्थः ६७ हरिनामनिर्वक्ति इलेति इलोपहूतासहदिवेत्यादि
मंत्रेणाहूतोहंतयोगाद्यज्ञभागंहरेहरणंकुर्वेऽतोहंहरिरित्यर्थः वर्णश्चहरिर्हरिन्मणितुल्यस्तस्माद्धरिरिति ६८ ऋतधामशब्दंनिर्वक्ति धामेति धामशब्दोलोकसारवाची ऋतमबाधितंधामसत्तास्फूर्तिरूपंयस्य
सऋतधामेत्यर्थः ६९ नष्टांजलेमग्नांगांधरणींविंदतिलभतइतिगोविंदइत्यर्थः ७० हीनानित्यक्तानिरोमाणीवरोमाण्यंशवोऽवयवायेनसशिपिर्निष्कलइत्यर्थः तेनशिपिनारूपेणयत्किंचिदाविष्टंयेना
ऽतोऽयंशिपिविष्टइत्यर्थः ७१ । ७२ अधोनष्टंवेदहरणवेलायांपातालंतर्हितं ७३ अजशब्दंनिर्वक्तिनहीति ७४ नोक्तेतिसत्यभाषित्वात् ७५ पृथिव्यप्तेजांसिसत्वाय्वाकाशौत्यत्तदुभयात्मत्वाद्धा
सत्यनामाहमित्यर्थः पौष्करेमन्नाभिकमलोत्थे ७६ सत्वेनतायतेपालयतेवासत्वंतनोतिविस्तारयतिवासत्वतःसत्वमस्त्यस्मिन्निितिसत्वतःसत्वपूर्वकमेवसर्वंकर्म चिरतीतिसत्वतः सत्वतएवसात्वतः ।

बोधनात्तापनाच्चैवजगतोहर्षणंभवेत् ॥ अग्नीषोमकृतैरेभिःकर्मभिःपांडुनंदन ॥ हृषीकेशोऽहमीशानोवरदोलोकभावनः ६७ इलोपहूतयोगेनहरेभागंक्रतुष्वहम् ॥
वर्णश्चमेहरिश्रेष्ठस्तस्माद्धरिरहंस्मृतः ६८ धामसारोहिभूतानामृतंचैवविचारितम् ॥ ऋतधामाततोविप्रैःसत्यश्चाहंप्रकीर्तितः ६९ नष्टांचधरणींपूर्वमविंदंवैगुहा
गताम् ॥ गोविंदइतितेनाहंदेवैर्वाग्भिरभिष्टुतः ७० शिपिविष्टेतिचाख्यायांहीनरोमाचयोभवेत् ॥ तेनाविष्टंतुयत्किंचिच्छिपिविष्टेतिचस्मृतः ७१ यास्कोमामृ
षिरव्यग्रोनैकयज्ञेषुगीतवान् ॥ शिपिविष्टइतिह्यस्माद्गुह्यनामधरोह्यहम् ७२ स्तुत्वामांशिपिविष्टेतियास्कऋषिरुदारधीः ॥ मत्प्रसादादधोनष्टंनिरुक्तमभिजग्मि
वान् ७३ नहिजातोनजायेयंनजनिष्येकदाचन ॥ क्षेत्रज्ञःसर्वभूतानांतस्मादहमजःस्मृतः ७४ नोक्तपूर्वंमयाक्षुद्रमश्लीलंवाकदाचन ॥ ऋताब्रह्मसुतासामेसत्या
देवीसरस्वती ७५ सच्चासच्चैवकौंतेयमयावेशितमात्मनि ॥ पौष्करेब्रह्मसदनेसत्यंमामृषयोविदुः ७६ सत्वान्नच्युतपूर्वोऽहंसत्वंवैविद्धिमत्कृतम् ॥ जन्मनीहाभवे
त्सत्वंपौर्विकंमेधनंजय ७७ निराशीःकर्मसंयुक्तःसत्वतश्चाप्यकल्मषः ॥ सात्वतज्ञानदृष्टोऽहंसत्वतामितिसात्वतः ७८ कृषामिमेदिनींपार्थभूत्वाकार्ष्णायसोमहान्॥
कृष्णोवर्णश्चमेयस्मात्तस्मात्कृष्णोऽहमर्जुन ७९ मयासंश्लेषिताभूमिरद्भिर्व्योमचवायुना ॥ वायुश्चतेजसासार्धंवैकुंठत्वंततोमम ८० निर्वाणंपरमंब्रह्मधर्मोऽसौपर
उच्यते ॥ तस्मान्नच्युतपूर्वोऽहमच्युतस्तेनकर्मणा ८१ पृथिवीनभसीचोभेविश्रुतेविश्वतोमुखे ॥ तयोःसंधारणार्थंहिमामधोक्षजमंजसा ८२

तावृसंतानपालनयोस्तनुविस्तारेआभ्यांसत्वशब्दपूर्वाभ्यांडः । तप्पर्वमरुद्भ्यामित्यत्रश्रुतोमत्वर्थीयस्तप्प्रत्ययोबाहुलकात्सत्वशब्दादपि अंतेतद्धितांतानुकरणमेवप्रातिपदिकं । सद्ब्रह्मतद्वंतःसत्वंतः
आर्षेभत्वं तेषामिदंतंत्रंसात्वतंपांचरात्रादितजन्यज्ञानेनदृष्टोऽहंसात्वतोवेत्यभिप्रेत्याह सत्वादिति ७७ निराशीःकर्मनिष्कामकर्म ७८ कृषामीति कृष्णायसोलांगलकीलरूपी ७९ विशब्दः
पक्षिवाचीव्योमचारित्वसामान्याद्वायुतेजसोर्मेघरूपास्वप्सुचवर्तते कुःपृथ्वी ठशब्दआकाशवचनःएतेषांसमाहारोविकुंठवर्णागमेनविकुंठशब्दउत्पन्नः विकुंठानामयंश्लेषणकर्तावैकुंठइत्यभिसंधायाह
मयेति विगताकुंठा पंचानांभूतानांमेलनेअसामर्थ्यंयस्यसःविकुंठःस्वार्थेतद्धितः इतिस्पष्टोऽर्थः ८० । ८१ अधइतिपृथिवी अक्षून्व्याप्तावित्यतोऽक् आकाशः तेउभेसंजयतिसंगेनधारयतीत्यधोक्षज
इत्याह पृथिवीति अधोक्षशब्दपूर्वात्संजेःकःअनिदितामितिनकारलोपः ८२

निर्वचन।तस्माह निरुक्तमिति प्राग्वंशेयज्ञशालैकदेशे ८३ एकपदैःपृथक्पदैः अर्तेतिसततंगच्छंत्यस्मिन्नितिअः अक्षसातत्यगमनेऽस्मात् अक्षः धोक्षः दुहप्रपूरणेऽस्मादौणादिकःसःगुणभष्भावौ जायतेऽस्मात्सर्वमितिजः जगल्लयस्थितिजन्मस्थानमित्यर्थः ८४ ममवह्निस्वरूपस्यार्चिषोवर्धकमितिशेषः ८५ । ८६ त्रयोधातवउपाधिभूताःसंत्यस्यसत्रिधातुः ८७ । ८८ । ८९ विभु पदंव्याचष्टे नचादिमिति ९० । ९१ । ९२ त्रीणिककुदान्युच्चप्रदेशाःस्कंधपोत्रदंष्ट्रायस्यत्रिककुदःशरीरस्येतिसामानाधिकरण्यं ९३ विशेषेणरिणक्तितत्त्वानांपरिसंख्यानाख्यंप्रविलयंकरोतीति

निरुक्तंवेदविदुषोवेदशब्दार्थचिंतकाः ॥ तेमांगायंतिप्राग्वंशेअधोक्षजइतिस्थितिः ८३ शब्दएकपदैरेषव्याहृतःपरमर्षिभिः ॥ नान्योह्यधोक्षजोलोकेऋतेनारायणंप्रभुम् ८४ घृतंममार्चिषोलोकेजंतूनांप्राणधारणम् ॥ घृतार्चिरहमव्यग्रैर्वेदज्ञैःपरिकीर्तितः ८५ त्रयोहिधातवःख्याताःकर्मजाइतियेस्मृताः ॥ पित्तंश्लेष्माचवायुश्चएषसंघातउच्यते ८६ एतैश्चधार्यतेजंतुरेतैःक्षीणैश्चक्षीयते ॥ आयुर्वेदविदस्तस्मात्त्रिधातुंमांप्रचक्षते ८७ वृषोहिभगवान्धर्मःख्यातोलोकेषुभारत ॥ नैघंटुकपदाख्यानेविद्धिमांवृषमुत्तमम् ८८ कपिर्वराहःश्रेष्ठश्चधर्मश्चवृषउच्यते ॥ तस्माद्वृषाकपिंप्राहकश्यपोमांप्रजापतिः ८९ नचादिंनमध्यंतथाचैवनांतंकदाचिद्विदंतेसुराश्चासुराश्च ॥ अनाद्योह्यमध्यस्तथाचाप्यनंतःप्रगीतोऽहमीशोविभुर्लोकसाक्षी ९० शुचीनिश्रवणीयानिशृणोमीहधनंजय ॥ नचपापानिगृह्णामिततोऽहंवैशुचिश्रवाः ९१ एकशृंगःपुराभूत्वावराहोनंदिवर्धनः ॥ इमांचोद्धृतवान्भूमिमेकशृंगस्ततोह्यहम् ९२ तथैवासंत्रिककुदोवाराहंरूपमास्थितः ॥ त्रिककुत्तेनविख्यातःशरीरस्यतुमापनात् ९३ विरिंचइतियःप्रोक्तःकापिलंज्ञानचिंतकैः ॥ सप्रजापतिरेवाहंचेतनात्सर्वलोककृत् ९४ विद्यासहायवंतंमामादित्यस्थंसनातनम् ॥ कपिलंप्राहुराचार्याःसांख्यानिश्चितनिश्चयाः ९५ हिरण्यगर्भोद्युतिमान्यएषच्छंदसिस्तुतः ॥ योगैःसंपूज्यतेनित्यंसएवाहंभुविस्मृतः ९६ एकविंशतिसाहस्रंऋग्वेदंमांप्रचक्षते ॥ सहस्रशाखंयत्सामयेवैवेदविदोजनाः ९७ गायंत्यारण्यकेविप्रामद्भक्तास्तेहिदुर्लभाः ॥ षट्पंचाशतमष्टौचसप्तत्रिंशतमित्युत ९८ यस्मिन्शाखायजुर्वेदेसोऽहमाध्वर्यवेस्मृतः ॥ पंचकल्पमथर्वाणंकृत्याभिःपरिबृंहितम् ९९ कल्पयंतिहिमांविप्राअथर्वाणविदस्तथा ॥ शाखाभेदाश्चयेकेचिद्याश्चशाखासुगीतयः १०० स्वरवर्णसमुच्चाराःसर्वांस्तान्विद्धिमत्कृतान् ॥ यत्तद्धयशिरःपार्थसमुदेतिवरप्रदम् १ सोऽहमेवोत्तरेभागेक्रमाक्षरविभागवित् ॥ वामादेशितमार्गेणमत्प्रसादान्महात्मना २ पांचालेनक्रमःप्राप्तस्तस्माद्भूतात्सनातनात् ॥ बाभ्रव्यगोत्रःसबभौप्रथमंक्रमपारगः ३ नारायणाद्वरंलब्ध्वाप्राप्ययोगमनुत्तमम् ॥ क्रमंप्रणीयशिक्षांचप्रणयित्वासगालवः ४ कंडरीकोऽथराजाचब्रह्मदत्तःप्रतापवान् ॥ जातीमरणजंदुःखंस्मृत्वास्मृत्वापुनःपुनः ५

विरिंचइत्यर्थः रेचनादितिपाठेरेचनद्वारातत्साध्यंचेतनमेवलक्षणीयं ९४ कपिलंपीतं आदित्यपुरुषंप्रकृत्यच्छांदोग्येआप्रणखात्सर्वएवसुवर्णइतिश्रुतेः ९५ छंदसिसमष्टिलिंगाभिमानीसूत्रात्माभुविचतुर्मुखः ९६ । ९७ । ९८ । ९९ । १०० । १ क्रमविभागःपदद्वयमादायपूर्वंविसृज्योत्तरमुत्तरेणसंदध्यात् यथा अग्निमीळेईळेपुरोहितंपुरोहितंयज्ञस्येत्यादि अक्षरविभागःपदविभागःवामेतिवामदेवादिष्टेनध्यानमार्गेणमामाराधयतापांचालेनमुनिनेतिसंबंधः २ । ३ । ४ कंडरीकइतिकुलनाम सप्तजन्मिकंजन्मादिदुःखंस्मृत्वातीव्रतमवैराग्याच्छीघ्रंयोगिनांसंपदमैश्वर्यंगतःप्राप्तइतिसार्धः ५



६ । ७ । ८ अपाहरन्नाशितवान्रुद्रइतिशेषः ९ तच्छूलंकर्तृ ११० आवयोर्नरनारायणयोरंतिकादागच्छदागतं ११ तत्तेजसाशूलतेजसा १२ । १३ एवंसमुद्धतमुद्धीयागतंरुद्रं १४

सप्तजातिषुमुख्यत्वाद्योगानांसंपदंगतः ॥ पुराऽहमात्मजःपार्थप्रथितःकारणांतरे ६ धर्मस्यकुरुशार्दूलततोऽहंधर्मजःस्मृतः ॥ नरनारायणौपूर्वंतपस्तेपतुरव्ययम् ७ धर्मयानंसमारूढौपर्वतेगंधमादने ॥ तत्कालसमयेचैवदक्षयज्ञोबभूवह ८ नचैवाकल्पयद्भागंदक्षोरुद्रस्यभारत ॥ ततोदधीचिवचनाद्दक्षयज्ञमपाहरत् ९ ससर्जशूलंकोपेनप्रज्वलंतंमुहुर्मुहुः ॥ तच्छूलंभस्मसात्कृत्वादक्षयज्ञंसविस्तरम् ११० आवयोःसहसाऽऽगच्छद्बदर्याश्रममंतिकात् ॥ वेगेनमहतापार्थपतन्नारायणोरसि ११ ततस्तत्तेजसाऽऽविष्टाःकेशानारायणस्यह ॥ बभूवुर्मुंजवर्णास्तुततोऽहंमुंजकेशवान् १२ तच्चशूलंविनिर्धूतंहुंकारेणमहात्मना ॥ जगामशंकरकरंनारायणसमाहतम् १३ अथरुद्रउपाधावत्तावृषीतपसान्वितौ ॥ ततएनंसमुद्धूतंकंठेजग्राहपाणिना १४ नारायणःसविश्वात्मातेनास्यशितिकंठता ॥ अथरुद्रविघातार्थमिषीकांनरउद्धरन् १५ मंत्रैश्चसंयुयोजाऽऽशुसोऽभवत्परशुर्महान् ॥ क्षिप्तश्चसहसातेनखंडनंप्राप्तवांस्तदा १६ ततोऽहंखंडपरशुःस्मृतःपरशुखंडनात्॥ ॥ अर्जुनउवाच ॥ अस्मिन्युद्धेतुवार्ष्णेयत्रैलोक्यशमनेतदा १७ कोजयंप्राप्तवांस्तत्रशंसैतन्मेजनार्दन ॥ श्रीभगवानुवाच ॥ तयोःसंलग्नयोर्युद्धेरुद्रनारायणात्मनोः १८ उद्विग्नाःसहसाकृत्स्नाःसर्वेलोकास्तदाऽभवन् ॥ नागृह्णात्पावकःशुभ्रंमखेषुसुहुतंहविः १९ वेदानप्रतिभांतिस्मऋषीणांभावितात्मनाम् ॥ देवान्रजस्तमश्चैवसमाविविशतुस्तदा १२० वसुधासंचकंपेचनभश्चविपफालह ॥ निष्प्रभाणिचतेजांसिब्रह्माचैवासनच्युतः २१ अगाच्छोषंसमुद्रश्चहिमवांश्चव्यशीर्यत ॥ तस्मिन्नेवंसमुत्पन्नेनिमित्तेपांडुनंदन २२ ब्रह्मावृतोदेवगणैर्ऋषिभिश्चमहात्मभिः ॥ आजगामाशुतंदेशंयत्रयुद्धमवर्तत २३ सोंजलिप्रग्रहोभूत्वाचतुर्वक्त्रोनिरुक्तगः ॥ उवाचवचनंरुद्रंलोकानामस्तुवैशिवम् २४ न्यस्यायुधानिविश्वेशजगतोहितकाम्यया ॥ यदक्षरमथाव्यक्तमीशंलोकस्यभावनम् २५ कूटस्थंकर्तृनिर्द्वंद्वमकर्तेतिचयंविदुः ॥ व्यक्तिभावगतस्यास्यएकामूर्तिरियंशुभा २६ नरोनारायणश्चैवजातौधर्मकुलोद्वहौ ॥ तपसामहतायुक्तौदेवश्रेष्ठौमहाव्रतौ २७ अहंप्रसादजस्तस्यकुतश्चित्कारणांतरे ॥ त्वंचैवक्रोधजस्तातपूर्वसर्गेसनातनः २८ मयाचसार्द्धंवरदविबुधैश्चमहर्षिभिः ॥ प्रसादयाऽऽशुलोकानांशांतिर्भवतुमाचिरम् २९ ब्रह्मणात्वेवमुक्तस्तुरुद्रःक्रोधाग्निमुत्सृजन् ॥ प्रसादयामासततोदेवंनारायणंप्रभुम् ॥ शरणंचजगामाऽऽद्यंवरेण्यंवरदंप्रभुम् १३० ततोऽथवरदोदेवोजितक्रोधोजितेंद्रियः ॥ प्रीतिमानभवत्तत्ररुद्रेणसहसंगतः ३१ ऋषिभिर्ब्रह्मणाचैवविबुधैश्चसुपूजितः ॥ उवाचदेवमीशानमीशःसजगतोहरिः ३२

शितिकंठताकृष्णवर्णस्यनारायणस्यसंबंधान्नीलकंठत्वंरुद्रेणगतइत्यर्थः १५ इषीकैवपरशुतांप्राप्ताक्षिप्तआक्षिप्तस्तेनरुद्रशूलेनरुद्रेणवा १६ रुद्रस्यखंडपरशुत्वप्रसिद्धिस्तुमदनन्यत्वादित्यर्थः १७ । १८
१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२

३३ । ३४ ३५ । ३६ । ३७ । ३८ । ३९ । १४० । १४१ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥ ॥ सौतेइति १

यस्त्वां वेत्तिसमांवेत्तियस्त्वामनुसमामनु ॥ नावयोरंतरंकिंचिन्मातेऽभूद्बुद्धिरन्यथा ३३ अद्यप्रभृतिश्रीवत्सःशूलांकोमेभवत्वयम् ॥ ममपाण्यंकितश्चापिश्रीकंठ
स्त्वंभविष्यसि ३४ ॥ श्रीभगवानुवाच ॥ एवंलक्षणमुत्पाद्यपरस्परकृतंतदा ॥ सख्यंचैवातुलंकृत्वारुद्रेणसहितावृषी ३५ तपस्तेपतुरव्यग्रौविसृज्यत्रिदिवौकसः॥
एषतेकथितःपार्थनारायणजयोमृधे ३६ नामानिचैवगुह्यानिनिरुक्तानिचभारत ॥ ऋषिभिःकथितानीहयानिसंकीर्तितानिते ३७ एवंबहुविधैरूपैश्चरामीह
वसुंधराम् ॥ ब्रह्मलोकंचकौंतेयगोलोकंचसनातनम् ३८ मयात्वंरक्षितोयुद्धेमहांतंप्राप्तवान्जयम् ॥ यस्तुतेसोऽग्रतोयातियुद्धेसंप्रत्युपस्थिते ३९ तंविद्धिरुद्रंकौं
तेयदेवदेवंकपर्दिनम् ॥ कालःसएवकथितःक्रोधजेतिमयातव १४० निहतास्तेनवैपूर्वंहतवानसियान्रिपून् ॥ अप्रमेयप्रभावंतंदेवदेवमुमापतिम् ॥ नमस्वदेवंप्र
यतोविश्वेशंहरमक्षयम् १४१ यश्चतेकथितःपूर्वंक्रोधजेतिपुनःपुनः ॥ तस्यप्रभावएवाग्रेयच्छ्रुतंतेधनंजय १४२ ॥ इति श्रीमहाभारते शांति० मोक्ष०नारायणी
येद्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥ शौनकउवाच ॥ सौतेसुमहदाख्यानंभवतापरिकीर्तितम् ॥ यच्छ्रुत्वामुनयःसर्वेविस्मयंपरमंगताः १ सर्वा
श्रमाभिगमनंसर्वतीर्थावगाहनम् ॥ नतथाफलदंसौतेनारायणकथायथा २ पाविताङ्गाःस्मसंवृत्ताःश्रुत्वेमामादितःकथाम् ॥ नारायणाश्रयांपुण्यांसर्वपापप्रमो
चनीम् ३ दुर्दर्शोभगवान्देवःसर्वलोकनमस्कृतः ॥ सब्रह्मकैःसुरैःकृत्स्नैरन्यैश्चैवमहर्षिभिः ४ दृष्टवान्नारदोयत्तुदेवंनारायणंहरिम् ॥ नूनमेतद्ध्यनुमतंतस्यदेवस्यसूत
ज ५ यद्दृष्टवान्जगन्नाथमनिरुद्धतनौस्थितम् ॥ यत्प्राद्रवत्पुनर्भूयोनारदोदेवसत्तमौ ६ नरनारायणौद्रष्टुंकारणंतद्ब्रवीहिमे ॥ सौतिरुवाच ॥ तस्मिन्यज्ञेवर्त्तमा
नेराज्ञःपारिक्षितस्यवै ७ कर्मांतरेषुविधिवद्वर्तमानेषुशौनक ॥ कृष्णद्वैपायनव्यासमृषिंवेदनिधिंप्रभुम् ८ परिपप्रच्छराजेंद्रःपितामहपितामहम् ॥ जनमेजय
उवाच ॥ श्वेतद्वीपान्निवृत्तेननारदेनसुरर्षिणा ९ ध्यायताभगवद्वाक्यंचेष्टितंकिमतःपरम् ॥ बदर्याश्रममागम्यसमागम्यचतावृषी १० कियंतंकालमवसत्कांकथां
पृष्टवांश्चसः ॥ इदंशतसहस्राद्धिभारताख्यानविस्तरात् ११ आमंथ्यमतिमंथेनज्ञानोदधिमनुत्तमम् ॥ नवनीतंयथादध्नोमलयाच्चंदनंयथा १२ आरण्यकंचवेदे
भ्यओषधिभ्योऽमृतंयथा ॥ समुद्धृतमिदंब्रह्मन्कथाऽमृतमिदंतथा १३ तपोनिधेत्वयोक्तंहिनारायणकथाश्रयम् ॥ सईशोभगवान्देवःसर्वभूतात्मभावनः १४ अहो
नारायणंतेजोदुर्दर्शंद्विजसत्तम ॥ यत्राविशंतिकल्पांतेसर्वेब्रह्मादयःसुराः १५ ऋषयश्चसगंधर्वायच्चकिंचिच्चराचरम् ॥ नततोऽस्तिपरंमन्येपावनंदिविचेहच १६ सर्वा
श्रमाभिगमनंसर्वतीर्थावगाहनम् ॥ नतथाफलदंचापिनारायणकथायथा १७ सर्वथापाविताःस्मेहश्रुत्वेमामादितःकथाम् ॥ हरेर्विश्वेश्वरस्येहसर्वपापप्रणाशनीम् १८

२ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८

१९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ जालपादाहंसास्तदंकितभुजौहंसपादांकितभुजौचक्रलक्षणौचक्रांकितपादौ ३६ । ३७

नचित्रंकृतवांस्तत्रयदार्योमेधनंजयः ॥ वासुदेवसहायोयःप्राप्तवान्जयमुत्तमम् १९ नचास्यकिंचिदप्राप्यंमन्येलोकेष्वपित्रिषु ॥ त्रैलोक्यनाथोविष्णुःसयथाऽऽसी
त्साह्यकृत्सवै २० धन्याश्चसर्वएवासन्ब्रह्मंस्तेममपूर्वजाः ॥ हितायश्रेयसेचैवयेषामासीज्जनार्दनः २१ तपसाऽथसुदृश्योहिभगवान्लोकपूजितः ॥ यंदृष्टवंतस्ते
साक्षाच्छ्रीवत्सांकविभूषणम् २२ तेभ्योधन्यतरश्चैवनारदःपरमेष्ठिजः ॥ नचाल्पतेजसमृषिंवेद्मिनारदमव्ययम् ॥ श्वेतद्वीपंसमासाद्ययेनदृष्टःस्वयंहरिः ॥ देवप्र
सादानुगतंव्यक्तंततस्यदर्शनम् २४ यद्दृष्टवांस्तदादेवमनिरुद्धतनौस्थितम् ॥ बदरीमाश्रमंयत्तुनारदःप्राद्रवत्पुनः २५ नरनारायणौद्रष्टुंकिंतुतत्कारणंमुने ॥
श्वेतद्वीपान्निवृत्तश्चनारदःपरमेष्ठिजः २६ बदरीमाश्रमंप्राप्यसमागम्यचतावृषी ॥ कियंतंकालमवसत्प्रश्नान्कान्पृष्टवांश्चह २७ श्वेतद्वीपादुपावृत्तेतस्मिन्वासुमहा
त्मनि ॥ किमब्रूतांमहात्मानोनरनारायणावृषी २८ तदेतन्मेयथातत्त्वंसर्वमाख्यातुमर्हसि ॥ वैशंपायनउवाच ॥ नमोभगवतेतस्मैव्यासायामिततेजसे २९
यस्यप्रसादाद्वक्ष्यामिनारायणकथामिमाम् ॥ प्राप्यश्वेतंमहाद्वीपंदृष्ट्वाचहरिमव्ययम् ३० निवृत्तोनारदोराजंस्तरसामेरुमागमत् ॥ हृदयेनोद्वहन्भारंयदुक्तंपरमा
त्मना ३१ पश्चादस्याभवद्राजन्नात्मनःसाध्वसंमहत् ॥ यद्गत्वादूरमध्वानंक्षेमीपुनरिहागतः ३२ मेरोःप्रचक्रामततःपर्वतंगंधमादनम् ॥ निपपातचखात्तूर्णंवि
शालांबदरीमनु ३३ ततःसददृशेदेवौपुराणावृषिसत्तमौ ॥ तपश्चरंतौसुमहदात्मनिष्ठौमहाव्रतौ ३४ तेजसाऽभ्यधिकौसूर्यात्सर्वलोकविरोचनात् ॥ श्रीवत्सलक्ष
णौपूज्यौजटामंडलधारिणौ ३५ जालपादभुजौतौतुपादयोश्चक्रलक्षणौ ॥ व्यूढोरस्कौदीर्घभुजौतथामुष्कचतुष्किणौ ३६ षष्टिदंतावष्टदंष्ट्रौमेघौघसदृशस्वनौ ॥
स्वास्यौपृथुललाटौचसुभ्रूसुहनुनासिकौ ३७ आतपत्रेणसदृशेशिरसीदेवयोस्तयोः ॥ एवंलक्षणसंपन्नौमहापुरुषसंज्ञितौ ३८ तौदृष्ट्वानारदोहृष्टस्ताभ्यांचप्रति
पूजितः ॥ स्वागतेनाभिभाष्याथपृष्टश्चानामयंतथा ३९ बभूवांतर्गतमतिर्निरीक्ष्यपुरुषोत्तमौ ॥ सदोगतास्तत्रयेवैसर्वभूतनमस्कृताः ४० श्वेतद्वीपेमयादृष्टा
स्तादृशावृषिसत्तमौ ॥ इतिसंचिंत्यमनसाकृत्वाचाभिप्रदक्षिणम् ४१ सचोपविविशेतत्रपीठेकुशमयेशुभे ॥ ततस्तौतपसांवासौयशसांतेजसामपि ४२ ऋषीशम
दमोपेतौकृत्वापौर्वाह्णिकंविधिम् ॥ पश्चान्नारदमव्यग्रौपाद्यार्घ्याभ्यामथार्चतः ४३ पीठयोश्चोपविष्टौतौकृतातिथ्याह्निकौनृपौ ॥ तेषुतत्रोपविष्टेषुसदेशोऽभिव्य
राजत ४४ आज्याहुतिमहाज्वालैर्यज्ञवाटोयथाऽग्निभिः ॥ अथनारायणस्तत्रनारदंवाक्यमब्रवीत् ४५ सुखोपविष्टंविश्रांतंकृतातिथ्यंसुखस्थितम् ॥ नरनारा
यणावूचतुः ॥ अपीदानींसभगवान्परमात्मासनातनः ४६ श्वेतद्वीपेत्वयादृष्टआवयोःप्रकृतिःपरा ॥ नारदउवाच ॥ दृष्टोमेपुरुषःश्रीमान्विश्वरूपधरोऽव्ययः ४७
सर्वेलोकाहितत्रस्थास्तथादेवाःसहर्षिभिः ॥ अद्यापिचैनंपश्यामियुवांपश्यन्सनातनौ ४८ ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६ । ४७ । ४८

४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ अष्टनलोत्सेधामित्यत्रनलवत्पर्वयुक्तत्वान्नलशब्देनांगुलंग्राह्यं तलेतिपाठेऽहस्तस्यतलमंगुलोच्छ्रायमेवभवति ६० । ६१ । ६२
६३ एकांतगतबुद्धिभिरव्यभिचरितबुद्धिभिः ६४ । ६५ । ६६ । ६७ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेत्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३ ॥ ॥ ७ ॥ धन्यो
ऽसीत्यध्यायेभूतपंचकात्मकंशरीरंसमनस्कंयेनसृष्टंयोविद्यासह ।योविद्यैकलभ्यस्तंसूर्यद्वारेणविशंतीत्युक्तंतत्रायमर्थः आदित्यमंडलांतःस्थेनारायणेसम्यग्दत्तदृष्टिःपुरुषस्तदेकाग्रतयापदाशरीरंसर्वात्म

यैर्लक्षणैरुपेतःसहरिरव्यक्तरूपधृक् ॥ तैर्लक्षणैरुपेतौहिव्यक्तरूपधरौयुवाम् ४९ दृष्टौयुवांमयातत्रतस्यदेवस्यपार्श्वतः ॥ इहैवचागतोऽस्म्यद्यविसृष्टःपरमात्म
ना ५० कोहिनामभवेत्तस्यतेजसायशसाश्रिया ॥ सदृशस्त्रिषुलोकेषुऋतेधर्मात्मजौयुवाम् ५१ तेनमेकथितःकृत्स्नोधर्मःक्षेत्रज्ञसंज्ञितः ॥ प्रादुर्भावाश्चकथिताभ
विष्याइहयेयथा ५२ तत्रयेपुरुषाःश्वेताःपंचेंद्रियविवर्जिताः ॥ प्रतिबुद्धाश्चतेसर्वेभक्ताश्चपुरुषोत्तमम् ५३ तेऽर्चयंतिसदादेवंतैःसार्धंरमतेचसः ॥ प्रियभक्तोहिभ
गवान्परमात्माद्विजप्रियः ५४ रमतेसोऽर्च्यमानोहिसदाभागवतप्रियः ॥ विश्वभुक्सर्वगोदेवोमाधवोभक्तवत्सलः ५५ सकर्ताकारणंचैवकार्यंचातिबलद्युतिः ॥ हेतु
श्चाज्ञाविधानंचतत्त्वंचैवमहायशाः ५६ तपसायोज्यसोऽऽत्मानंश्वेतद्वीपात्परंहियत् ॥ तेजइत्यभिविख्यातंस्वयंभासाऽवभासितम् ५७ शांतिःसात्रिषुलोकेषुवि
हिताभावितात्मना ॥ एतयाशुभयाबुद्ध्यानैष्ठिकंव्रतमास्थितः ५८ नतत्रसूर्यस्तपतिनसोमोऽभिविराजते ॥ नवायुर्वातिदेवेशेतपश्चरतिदुश्चरम् ५९ वेदीमष्ट
नलोत्सेधांभूमावास्थायविश्वकृत ॥ एकपादस्थितोदेवऊर्ध्वबाहुरुदङ्मुखः ६० सांगानावर्तयन्वेदांस्तपस्तेपेसुदुश्चरम् ॥ यद्ब्रह्माऋषयश्चैवस्वयंपशुपतिश्चयत्
६१ शेषाश्चविबुधश्रेष्ठादैत्यदानवराक्षसाः ॥ नागाःसुपर्णागंधर्वाःसिद्धाराजर्षयश्चये ६२ हव्यंकव्यंचसततंविधियुक्तंप्रयुंजते ॥ कृत्स्नंतुतस्यदेवस्यचरणावुपति
ष्ठतः ६३ याःक्रियाःसंप्रयुक्ताश्चएकांतगतबुद्धिभिः ॥ ताःसर्वाःशिरसादेवःप्रतिगृह्णातिवैस्वयम् ६४ नतस्यान्यःप्रियतरःप्रतिबुद्धैर्महात्मभिः ॥ विद्यतेत्रिषुलोके
षुततोऽस्म्यैकांतिकंगतः ६५ इहचैवागतस्तेनविसृष्टःपरमात्मना ॥ एवंमेभगवान्देवःस्वयमाख्यातवान्हरिः ६६ आसिष्येतत्परोभूत्वायुवाभ्यांसहनित्यशः ६७
॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिनारायणीयेत्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३ ॥ नरनारायणावूचतुः ॥ धन्योऽस्यनुगृहीतोऽसियत्ते
दृष्टःस्वयंप्रभुः ॥ नहितंदृष्टवान्कश्चित्पद्मयोनिरपिस्वयम् १ अव्यक्तयोनिर्भगवान्दुर्दर्शःपुरुषोत्तमः ॥ नारदैतद्धिनोसत्यंवचनंसमुदाहृतम् २ नास्यभक्तात्प्रिय
तरोलोकेकश्चनविद्यते ॥ ततःस्वयंदर्शितवान्स्वमात्मानंद्विजोत्तम ३ तपोहितप्यतस्तस्ययत्स्थानंपरमात्मनः ॥ नतत्संप्राप्नुतेकश्चिदृतेह्यावांद्विजोत्तम ४

नाविस्मरतितदादग्धसर्वांगोभवति ततआदित्यपुरुषाकारंमनःक्रमेणपुरुषाकृतिंपरित्यज्यअणुःस्मितमात्राकारोनखचंद्रमात्राकारोवाभवेत् एवंसूक्ष्मीकृतंमनःअकारार्थेविराजिअनिरुद्धाख्येऽहंकारे
प्रवेशयेत्तदप्यनिरुद्धाकारतांपरित्यज्योकारार्थेसूत्रात्मनिप्रद्युम्नाख्येमनसितदपिमकारार्थेअंतर्यामिसंकर्षणाख्येजीवेशुद्धत्वंपदार्थेप्रविशतितमपिपरित्यज्यचतुर्थेऽर्धमात्रार्थेशुद्धेब्रह्मणिवासुदेवाख्येमहा
काशकल्पेघटाकाशवत्प्रविशेदिति १ । २ । ३ । ४



५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ १६ । १७ । १८ । १९ विशालांबदरीं २० भगवदवताराणांस्वस्तीत्याशिषातत्पालनीयस्यविश्वस्यकल्याणंचिंतितंभवति २१

याहिसूर्यसहस्रस्यसमस्तस्यभवेद्युतिः ॥ स्थानस्यसाभवेत्तस्यस्वयंतेनविराजता ५ तस्मादुत्तिष्ठतेविप्रदेवाद्विश्वभुवःपतेः ॥ क्षमाक्षमावतांश्रेष्ठययाभूमिस्तु
युज्यते ६ तस्माच्चोत्तिष्ठतेदेवात्सर्वभूतहिताद्रसः ॥ आपोहितेनयुज्यंतेद्रवत्वंप्राप्नुवंतिच ७ तस्मादेवसमुद्भूतंतेजोरूपगुणात्मकम् ॥ येनसंयुज्यतेसूर्यस्ततोलो
केविराजते ८ तस्माद्देवात्समुद्भूतःस्पर्शस्तुपुरुषोत्तमात् ॥ येनस्मयुज्यतेवायुस्ततोलोकान्विवात्यसौ ९ तस्माच्चोत्तिष्ठतेशब्दःसर्वलोकेश्वरात्प्रभोः ॥ आका
शंयुज्यतेयेनततस्तिष्ठत्यसंवृतम् १० तस्माच्चोत्तिष्ठतेदेवात्सर्वभूतगतंमनः ॥ चंद्रमायेनसंयुक्तःप्रकाशगुणधारणः ११ सद्भूतोत्पादकंनामतत्स्थानंवेदसंज्ञितम्
विद्यासहायोयत्रास्तेभगवान्हव्यकव्यभुक् १२ येहिनिष्कलुषालोकेपुण्यपापविवर्जिताः ॥ तेषांवैक्षेममध्वानंगच्छतांद्विजसत्तम १३ सर्वलोकतमोहंताआदि
त्योद्वारमुच्यते ॥ आदित्यदग्धसर्वांगाअदृश्याःकेनचित्क्वचित् १४ परमाणुभूताभूत्वातुतंदेवंप्रविशंत्युत ॥ तस्मादपिचनिर्मुक्ताअनिरुद्धतनौस्थिताः १५
मनोभूतास्ततोभूत्वाप्रद्युम्नंप्रविशंत्युत ॥ प्रद्युम्नाच्चापिनिर्मुक्ताजीवंसंकर्षणंततः १६ विशंतिविप्रप्रवराःसांख्याभागवतैःसह ॥ ततस्त्रैगुण्यहीनास्तेपरमात्मानमं
जसा ॥ प्रविशंतिद्विजश्रेष्ठाःक्षेत्रज्ञंनिर्गुणात्मकम् ॥ सर्वावासंवासुदेवंक्षेत्रज्ञंविद्धितत्त्वतः १८ समाहितमनस्काश्चनियताःसंयतेंद्रियाः ॥ एकांतभावोपगतावा
सुदेवंविशंतिते १९ आवामपिचधर्मस्यगृहेजातौद्विजोत्तम ॥ रम्यांविशालामाश्रित्यतपउग्रंसमास्थितौ २० येतुतस्यैवदेवस्यप्रादुर्भावाःसुरप्रियाः ॥ भविष्यं
तित्रिलोकस्थास्तेषांस्वस्तीत्यथोद्विज २१ विधिनास्वेनयुक्ताभ्यांयथापूर्वंद्विजोत्तम ॥ आस्थिताभ्यांसर्वकृच्छ्रंव्रतंसम्यगनुत्तमम् २२ आवाभ्यामपिदृष्टस्त्वं
श्वेतद्वीपेतपोधन ॥ समागतोभगवतासंकल्पंकृतवांस्तथा २३ सर्वंहिनौसंविदितंत्रैलोक्येसचराचरे ॥ यद्भविष्यतिवृत्तंवावर्ततेवाशुभाशुभम् ॥ सर्वंसतेकथित
वान्देवदेवोमहामुने २४ ॥ वैशंपायनउवाच ॥ एतच्छ्रुत्वातयोर्वाक्यंतपस्युग्रेचवर्ततोः ॥ नारदःप्रांजलिर्भूत्वानारायणपरायणः २५ जजापविधिवन्मंत्रान्नाराय
णगतान्बहून् ॥ दिव्यंवर्षसहस्रंहिनरनारायणाश्रमे २६ अवसत्समहातेजानारदोभगवानृषिः ॥ तमेवाभ्यर्चयन्देवंनरनारायणौचतौ २७ ॥ इतिश्रीमहाभारते
शांतिपर्वणिमोक्षधर्मपर्वणिनारायणीयेचतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥ ॥ ७ ॥ वैशंपायनउवाच ॥ कस्यांचित्त्वथकालस्यनारदः
परमेष्ठिजः ॥ दैवंकृत्वायथान्यायंपित्र्यंचक्रेततःपरम् १ ततस्तंवचनंप्राहज्येष्ठोधर्मात्मजःप्रभुः ॥ कइज्यतेद्विजश्रेष्ठदैवेपित्र्येचकल्पिते २

२२ । २३ । २४ । २५ । २६ । २७ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेचतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥ ॥ ७ ॥ देवतांकांयजेतेत्यादिप्रश्नजात
स्योत्तरमुक्तंविधिनाकेनजुहुयाद्दैवंपित्र्यंतथैवचेत्यस्योत्तरमाह कस्यचित्त्वथेत्यादिना १ । २

३ । ४ । ५ ममपितरंप्रजापतिंब्रह्मापरमेष्ठीतिसंबंधः नारदोदक्षशापात्प्रजापतेःसकाशात्पुनर्जन्मप्रापेतिहरिवंशेस्ति तस्यब्रह्मणः ६ नारायणविधौतांत्रिकेपूजादौ ७ श्रुतिश्चेति अग्निष्वा
त्तादीन्पुत्रान्पितरोदेवाअध्याप्यासुरैःसहयुद्धार्थंगतास्ततश्चिरोषितानांतेषांश्रुतिःप्रनष्टाप्रतिभातितितस्तेपुत्रेभ्यएववेदमधीतवंतइत्याख्यायिकापुराणांतरप्रसिद्धासूचिता ८ । ९ । १० पूर्वेषू



त्वयामतिमतांश्रेष्ठतन्मेशंसयथागमम् ॥ किमेतत्क्रियतेकर्मफलंचास्यकिमिष्यते ३ ॥ नारदउवाच ॥ त्वयैतत्कथितंपूर्वंदैवंकर्तव्यमित्यपि ॥ दैवतंचपरोयज्ञः
परमात्मासनातनः ४ ततस्तद्भावितोनित्यंयजेवैकुंठमव्ययम् ॥ तस्माच्चप्रसृतःपूर्वंब्रह्मालोकपितामहः ५ ममवैपितरंप्रीतःपरमेष्ठ्यप्यजीजनत् ॥ अहंसंकल्प
जस्तस्यपुत्रःप्रथमकल्पितः ६ यजामिवैपितॄन्साधोनारायणविधौकृते ॥ एवंसएवभगवान्पितामातापितामहः ७ इज्यतेपितृयज्ञेषुतथानित्यंजगत्पतिः ॥
श्रुतिश्चाप्यपरादेवीपुत्रान्हिपितरोऽयजन् ८ वेदश्रुतिःप्रनष्टाचपुनरध्यापितासुतैः ॥ ततस्तेमंत्रदाःपुत्राःपितृत्वमुपपेदिरे ९ नूनंसुरैस्तद्विदितंयुवयोर्भावितात्म
नोः ॥ पुत्राश्चपितरश्चैवपरस्परमपूजयन् १० त्रीन्पिंडान्न्यस्यवैपृथ्व्यांपूर्वंदत्वाकुशानिति ॥ कथंतुपिंडसंज्ञांतेपितरोलेभिरेपुरा ११ ॥ नरनारायणावूचतुः ॥
इमांहिधरणींपूर्वंनष्टांसागरमेखलां ॥ गोविंदउज्जहाराऽऽशुवाराहंरूपमास्थितः १२ स्थापयित्वातुधरणींस्वेस्थानेपुरुषोत्तमः ॥ जलकर्दमलिप्तांगोलोककार्यार्थ
मुद्यतः १३ प्राप्तेचाह्निककालेतुमध्यदेशगतेरवौ ॥ दंष्ट्राविलग्नांस्त्रीन्पिंडान्विधूयसहसाप्रभुः १४ स्थापयामासवैपृथ्व्यांकुशानास्तीर्यनारद ॥ सतेष्वात्मान
मुद्दिश्यपित्र्यंचक्रेयथाविधि १५ संकल्पयित्वात्रीन्पिंडान्स्वेनैवविधिनाप्रभुः ॥ आत्मगात्रोष्मसंभूतैःस्नेहगर्भैस्तिलैरपि १६ प्रोक्ष्यापवर्गंदेवेशःप्राङ्मुखःकृत
वान्स्वयम् ॥ मर्यादास्थापनार्थंचततोवचनमुक्तवान् १७ ॥ वृषाकपिरुवाच ॥ अहंहिपितरःस्रष्टुमुद्यतोलोककृत्स्वयम् ॥ यस्यचिंतयतःसद्यःपितृकार्यविधीन्प
रान् १८ दंष्ट्राभ्यांप्रविनिर्धूतामत्तेदक्षिणांदिशम् ॥ आश्रिताधरणींपिंडास्तस्मात्पितरएवते १९ त्रयोमूर्तिविहीनावैपिंडमूर्तिधरास्त्विमे ॥ भवंतुपितरोलो
केमयासृष्टाःसनातनाः २० पितापितामहश्चैवतथैवप्रपितामहः ॥ अहमेवात्रविज्ञेयस्त्रिषुपिंडेषुसंस्थितः २१ नास्तिमत्तोऽधिकःकश्चित्कोवाऽन्योऽर्च्योमयास्व
यम् ॥ कोवाममपितालोकेअहमेवपितामहः २२ पितामहपिताचैवअहमेवात्रकारणम् ॥ इत्येतदुक्त्वावचनंदेवदेवोवृषाकपिः २३ वराहपर्वतेविप्रदत्वापिं
डान्सविस्तरान् ॥ आत्मानंपूजयित्वैवतत्रैवादर्शनंगतः २४ एषातस्यस्थितिर्विप्रपितरःपिंडसंज्ञिताः ॥ लभंतेसततंपूजांवृषाकपिवचोयथा २५ येयजंतिपितॄ
न्देवान्गुरूंश्चैवातिथींस्तथा ॥ गाश्चैवद्विजमुख्यांश्चपृथिवींमातरंयथा २६ कर्मणामनसावाचाविष्णुमेवयजंतिते ॥ अंतर्गतःसभगवान्सर्वसत्वशरीरगः २७



ष्व्यांकुशान्दत्वातत्रपित्राद्युद्देशेनपिंडान्न्यस्यापूजयन्नितिसंबंधः ११ । १२ । १३ । १४ । १५ । १६ । १७ अहंहीति पितरःपितॄन् १८ विष्णोःशालग्रामइवपितृणांमूर्तयःपिंडा
एवेत्याहदंष्ट्राभ्यामिति १९ । २० पितापितामहश्चेत्यादिनाश्राद्धेसर्वविष्णुदेवत्वमेवेतिपित्र्यप्रकारोदर्शितः २१ । २२ । २३ । २४ । २५ । २६ । २७

२८ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रुत्वेति अस्यतात्पर्यंसर्वभूतात्म
केविष्णौद्रोहमकुर्वाणेनपरमेश्वरःसम्यगाराधनीयइति १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ गुरवेबृहस्पतये

समःसर्वेषुभूतेषुईश्वरःसुखदुःखयोः ॥ महान्महात्मासर्वात्मानारायणइतिश्रुतः २८ ॥ इति श्रीमहाभारते शांति० मोक्ष०नारायणीयेपंचचत्वारिंशदधिकत्रिश
ततमोऽध्यायः ॥ ३४५ ॥ वैशंपायनउवाच ॥ श्रुत्वैतन्नारदोवाक्यंनरनारायणेरितम् ॥ अत्यंतंभक्तिमान्देवेएकांतित्वमुपेयिवान् १ प्रोष्यवर्षसहस्रंतुनरनारा
यणाश्रमे ॥ श्रुत्वाभगवदाख्यानंदृष्ट्वाचहरिमव्ययम् २ हिमवंतंजगामाऽऽशुयत्रास्यस्वकआश्रमः ॥ तावपिख्याततपसौनरनारायणावृषी ३ तस्मिन्नेवाश्रमेर
म्येतेपतुस्तपउत्तमम् ॥ त्वमप्यमितविक्रांतःपांडवानांकुलोद्वहः ४ पावितात्माऽद्यसंवृत्तःश्रुत्वेमामादितःकथाम् ॥ नैवतस्यापरोलोकोनायंपार्थिवसत्तम ५ कर्म
णामनसावचायोद्विष्याद्विष्णुमव्ययम् ॥ मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाः ६ योद्विष्याद्विबुधश्रेष्ठंदेवंनारायणंहरिम् ॥ कथंनामभवेद्द्वेष्यआत्मालोकस्य
कस्यचित् ७ आत्माहिपुरुषव्याघ्रज्ञेयोविष्णुरितिस्थितिः ॥ यएषगुरुरस्माकंऋषिर्गंधवतीसुतः ८ तेनैतत्कथितंतातमाहात्म्यंपरमव्ययम् ॥ तस्माच्छ्रुतंमया
चेदंकथितंचतवानघ ९ नारदेनतुसंप्राप्तःसरहस्यःससंग्रहः ॥ एषधर्मोजगन्नाथात्साक्षान्नारायणान्नृप १० एवमेषमहान्धर्मःसतेपूर्वंनृपोत्तम ॥ कथितोहरिगीता
सुसमासविधिकल्पितः ११ कृष्णद्वैपायनंव्यासंविद्धिनारायणंभुवि ॥ कोह्यन्यःपुरुषव्याघ्रमहाभारतकृद्भवेत् १२ धर्मान्नानाविधांश्चैवकोब्रूयात्तमृतेप्रभुम् १३
वर्ततांतेमहायज्ञोयथासंकल्पितस्त्वया ॥ संकल्पिताश्वमेधस्त्वंश्रुतधर्मश्चतत्त्वतः १४ ॥ सौतिरुवाच ॥ एतत्तुमहदाख्यानंश्रुत्वापार्थिवसत्तमः ॥ ततोयज्ञसमा
प्त्यर्थंक्रियाःसर्वाःसमारभत् १५ नारायणीयमाख्यानमेतत्तेकथितंमया ॥ पृष्टेनशौनकाद्येहनैमिषारण्यवासिषु १६ नारदेनपुरायद्वैगुरवेतुनिवेदितम् ॥ ऋषी
णांपांडवानांचशृण्वतोःकृष्णभीष्मयोः १७ सहिपरमर्षिर्जनभुवनपतिःपृथुधरणिधरःश्रुतिविनयविधिः ॥ शमनियमनिधिर्यमनियमपरोद्विजवरसहितस्तवचभव
तुगतिर्हरिरमरहितः १८ असुरवधकरस्तपसांनिधिःसुमहतांयशसांचभाजनम् ॥ मधुकैटभहाकृतधर्मविदांगतिदोऽभयदोमखभागहरोऽस्तुशरणंसते १९ त्रिगु
णोविगुणश्चतुरात्मधरःपूर्तेष्टयोश्चफलभागहरः ॥ विदधातुनित्यमजितोऽतिचलोगतिमात्मगांसुकृतिनामृषीणाम् २० तंलोकसाक्षिणमजंपुरुषंपुराणंरविवर्णमी
श्वरंगतिंबहुशः ॥ प्रणमध्वमेकमनसोयतःसलिलोद्भवोऽपितमृषिंप्रणतः २१

१७ सहीति सनारायणः शमस्यनियमोनिग्रहस्तत्परः यमानियमाश्चपंचपंचअहिंसादयःसत्यादयश्च १८ कृतधर्मःकृतयुगधर्मःसत्यादिस्तद्विदां १९ चत्वारोवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्याआ
त्मानस्तान्धारयतिसतथा पूर्तंवाप्यादि इष्टमग्निहोत्रादि आत्मगांप्रत्यक्त्वगामिनीं २० सलिलमुद्भवोपस्यसनारायणःशेषशायीतमृषिंवासुदेवं २१

लोकस्याव्यक्तादेर्योनिः अमृतस्यमोक्षस्यपदंस्थानं पदंपदनीयं हेउदार तद्वृतं धृतमितिपाठांतरेध्यातं यतात्मभिर्निरुद्धचित्तैः २२ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ श्रुतंभगवतस्तस्येत्यादिरध्यायोहयग्रीवावतारस्यप्रयोजनंमाहात्म्यंचप्रतिपादयति तस्य तात्पर्यंरजस्तमोभ्यांवेदानष्टास्तिरोहितार्थाभवंति सत्वेनत्वर्थतःसम्यक्प्रकाशंतइति १ । २ हव्यकव्यभुजः मूलंबिभुजादित्वात्कः अकारांतःशब्दः उदक्पूर्वेऐशानकोणे महोदधौतत्समीपे इदमु त्तरान्वयि ३ । ४ अपूर्वमागहष्टं ५ अपूर्वमद्भुतं ६ । ७ । ८ । ९ दर्शितवांस्तदश्वशिरोरूपं १० वेदोवेदहर्तावेदाध्यायीवेदहरणमित्यादिकंसर्वंभगवल्लीलामात्रमितिपृष्टस्योत्तरंवक्ष्यंस्तज्जन्मे

सहिलोकयोनिरमृतस्यपदंसूक्ष्मंपरायणमचलंहिपदम् ॥ तत्सांख्ययोगिभिरुदारवृतंबुद्ध्यायतात्मभिरिदंसनातनम् २२ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि नारायणीये षट्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४६ ॥ शौनकउवाच ॥ श्रुतंभगवतस्तस्यमाहात्म्यंपरमात्मनः ॥ जन्मधर्मगृहेचैवनरनारायणात्मकम् १ महावराहसृष्टाचपिंडोत्पत्तिःपुरातनी ॥ प्रवृत्तौचनिवृत्तौचयोयथापरिकल्पितः २ तथाचनःश्रुतोब्रह्मन्कथ्यमानस्त्वयाऽनघ ॥ हव्यकव्यभुजो विष्णुरुदक्पूर्वेमहोदधौ ३ यच्चतत्कथितंपूर्वंत्वयाहयशिरोमहत् ॥ तच्चदृष्टंभगवताब्रह्मणापरमेष्ठिना ४ किंतदुत्पादितंपूर्वंहरिणालोकधारिणा ॥ रूपंप्रभावमहता मपूर्वंधीमतांवर ५ दृष्ट्वाहिविबुधश्रेष्ठमपूर्वममितौजसम् ॥ तदश्वशिरसंपुण्यंब्रह्माकिमकरोन्मुने ६ एतन्नःसंशयंब्रह्मन्पुराणंज्ञानसंभवम् ॥ कथयस्वोत्तममतेमहापुरुषनिर्मितम् ७ पाविताःस्मत्वयाब्रह्मन्पुण्यांकथयताकथाम् ॥ सौतिरुवाच ॥ कथयिष्यामितेसर्वंपुराणंवेदसंमितम् ८ जगौयद्भगवान्व्यासोराज्ञःपारिक्षितस्यवै ॥ श्रुत्वाऽश्वशिरसोमूर्तिंदेवस्यहरिमेधसः ९ उत्पन्नसंशयोराजाएतदेवमचोदयत् ॥ जनमेजयउवाच ॥ यत्तद्दर्शितवान्ब्रह्मादेवंहयशिरोधरम् १० किमर्थं तत्समभवत्तन्ममाचक्ष्वसत्तम ॥ वैशंपायनउवाच ॥ यत्किंचिदिहलोकेवैदेहसत्वंविशांपते ११ सर्वंपंचभिराविष्टंभूतैरीश्वरबुद्धिभिः ॥ ईश्वरोहिजगत्स्रष्टाप्रभुर्नारायणोविराट् १२ भूतांतरात्मावरदःसगुणोनिर्गुणोऽपिच ॥ भूतप्रलयमत्यंतंशृणुष्वनृपसत्तम १३ धरण्यामथलीनायामप्सुचैकार्णवेपुरा ॥ ज्योतिर्भूतेजलेचापिलीनेज्योतिषिचानिले १४ वायौचाकाशसंलीनेआकाशेचमनोनुगे ॥ व्यक्तेमनसिसंलीनेव्यक्तेचाव्यक्ततांगते १५ अव्यक्तेपुरुषंयातेपुंसिसर्वगतेऽपिच ॥ तमएवाभवत्सर्वंनप्राज्ञायतकिंचन १६ तमसोब्रह्मसंभूतंतमोमूलामृतात्मकम् ॥ तद्विश्वभावसंज्ञांतंपौरुषींतनुमाश्रितम् १७ सोऽनिरुद्धइतिप्रोक्तस्तत्प्रधानंप्रचक्षते ॥ तदव्यक्तमितिज्ञेयंत्रिगुणंनृपसत्तम १८ विद्यासहायवान्देवोविष्वक्सेनोहरिःप्रभुः ॥ अप्स्वेवशयनंचक्रेनिद्रायोगमुपागतः १९

नसृष्टिमेवतावदुपक्रमते यत्किंचिदिति ११ ईश्वरबुद्धिभिरीश्वरसंकल्पमात्रैः १२ लयमाह भूतेति १३ । १४ व्यक्तेमहत्तत्त्वेमनोलीनंतद्व्यक्तेऽप्यव्यक्ततांगुणसाम्यावस्थांगतेसति १५ पुरुषंत्वमर्थं पुंसिसर्वगतेब्रह्मणिलीनेसतिमलयावस्थायांतमएवाभवत्सर्वं विशेषविज्ञानंसर्वंलुप्तमित्यर्थः १६ तमसःसकाशात्ब्रह्मजगत्कारणंपरव्योमाख्यमुत्पन्नं तमःकुतउत्पन्नमित्याकांक्षायामाह तमोमूलामृतात्मकमिति अधिष्ठानमात्रात्मकमुरगश्वरज्जुमात्रात्मकः तन्मूलामृतंस्वाध्यस्ततमसाउपेतंसद्विश्वभावाःसर्वरूपसंज्ञानामतदंतंप्रपंचात्मकमित्यर्थः पौरुषींवैराजीं १७ अनिरुद्धएवसूक्ष्मरूपोऽव्यक्तसंज्ञितोज्ञेयः १८ विद्यानिर्विशेषचिन्मात्राकाराचेतोवृत्तिः अप्सुनिर्विशेषेब्रह्मणिशयनंचक्रेविलयंजगाम १९



सएवचिद्रूपोजगतःसृष्टिंचिंतयन्बहुस्यांप्रजायेयेतीक्षणंकुर्वन् २० । २१ पद्मेब्रह्मांडे अनिरुद्धादहंकारात् संभूतआविर्भूतोब्रह्मा २२ । २३ पद्मस्यपत्रेब्रह्मांडैकदेशे २४ । २५ । २६ । २७ । २८ । २९ ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ रजस्तमोभ्यामभिभूतैर्नष्टज्ञानैरीश्वरएवजपध्यानादिनाज्ञानलाभार्थमनुसरणीयइत्याशयेनाह ओंनमस्तेइति ३८ तुभ्यंतव लोकधामप्रकाशकःसचासौस्वयंभूश्चतस्य ३९ त्वत्तोमइति ननु 'ज्ञानमप्रतिघंयस्यवैराग्यंचजगत्पतेः ॥ ऐश्वर्यंचैवधर्मश्चसहसिद्धंचतुष्टयं'इतिस्मृत्या'सहायमीक्षांचक्रेयन्मदन्यन्नास्तिकस्मान्नुबिभेमीति

जगतश्चिंतयन्सृष्टिंचित्रांबहुगुणोद्भवाम् ॥ तस्यचिंतयतःसृष्टिंमहानात्मगुणःस्मृतः २० अहंकारस्ततोजातोब्रह्मासतुचतुर्मुखः ॥ हिरण्यगर्भोभगवान्सर्वलोकपितामहः २१ पद्मेऽनिरुद्धात्संभूतस्तदापद्मनिभेक्षणः ॥ सहस्रपत्रेद्युतिमानुपविष्टःसनातनः २२ ददृशेऽद्भुतसंकाशोलोकानापोमयान्प्रभुः ॥ सत्वस्थःपरमेष्ठीसततोभूतगणान्सृजन् २३ पूर्वमेवचपद्मस्यपत्रेसूर्यांशुसप्रभे ॥ नारायणकृतौबिंदूअपामास्तांगुणोत्तरौ २४ तावपश्यत्सभगवाननादिनिधनोच्युतः ॥ एकस्तत्राभवद्बिंदुर्मध्वाभोरुचिरप्रभः २५ सतामसोमधुर्जातस्तदानारायणाज्ञया ॥ कठिनस्त्वपरोबिंदुःकैटभोराजसस्तुसः २६ तावभ्यधावतांश्रेष्ठौतमोरजगुणान्वितौ ॥ बलवंतौगदाहस्तौपद्मनालानुसारिणौ २७ ददृशातेऽरविंदस्थंब्रह्माणममितप्रभम् ॥ सृजंतंप्रथमंवेदांश्चतुरश्चारुविग्रहान् २८ ततोविग्रहवंतौतौवेदान्दृष्ट्वाऽसुरोत्तमौ ॥ सहसाजगृहतुर्वेदान्ब्रह्मणःपश्यतस्तदा २९ अथतौदानवश्रेष्ठौवेदान्गृह्यसनातनान् ॥ रसांविविशतुस्तूर्णमुदक्पूर्वेमहोदधौ ३० ततोहृतेषुवेदेषुब्रह्माकश्मलमाविशत् ॥ ततोवचनमीशानंप्राहवेदैर्विनाकृतः ३१ ॥ ब्रह्मोवाच ॥ वेदामेपरमंचक्षुर्वेदामेपरमंबलम् ॥ वेदामेपरमंधामवेदामेब्रह्मचोत्तरम् ३२ ममवेदाहृताःसर्वेदानवाभ्यांबलादितः ॥ अंधकाराहिमेलोकाजातावेदैर्विनाकृताः ३३ वेदानृतेहिकिंकुर्यांलोकानांसृष्टिमुत्तमाम् ॥ अहोबतमहद्दुःखंवेदनाशनजंमम ३४ प्राप्तंदुनोतिहृदयंतीव्रंशोकपरायणम् ॥ कोहिशोकार्णवेमग्नंमामितोऽद्यसमुद्धरेत् ३५ वेदांस्तांश्चानयेन्नष्टान्कस्यचाहंप्रियोभवे ॥ इत्येवंभाषमाणस्यब्रह्मणोनृपसत्तम ३६ हरेःस्तोत्रार्थमुद्भूताबुद्धिर्बुद्धिमतांवर ॥ ततोजगौपरंजप्यंसांजलिप्रग्रहःप्रभुः ३७ ॥ ब्रह्मोवाच ॥ ॐनमस्ते ब्रह्महृदयनमस्तेममपूर्वज ॥ लोकाद्यभुवनश्रेष्ठसांख्ययोगनिधेप्रभो ३८ व्यक्ताव्यक्तकराचिंत्यक्षेमंपंथानमास्थित ॥ विश्वभुक्सर्वभूतानामंतरात्मन्नयोनिज ॥ अहंप्रसादजस्तुभ्यंलोकधामस्वयंभुवः ३९ त्वत्तोमेमानसंजन्मप्रथमंद्विजपूजितम् ॥ चाक्षुषंवैद्वितीयंमेजन्मचासीत्पुरातनम् ४० त्वत्प्रसादात्तुमेजन्मतृतीयंवाचिकंमहत् ॥ त्वत्तःश्रवणजंचापिचतुर्थंजन्ममेविभो ४१

कस्माद्ध्यभेष्यत् द्वितीयाद्वैभयंभवति'इतिश्रुत्यावद्धाप्येपचब्रह्मणःस्वतःसिद्धज्ञानत्वमुक्तं । सतिचज्ञानेजन्मांतरंनास्तीतिकथंतस्यपंचजन्मान्युच्यंते । अभ्युपगमेत्वाजानसिद्धज्ञानस्यवैफल्यं । अतोऽयथमोक्षधर्मान्वाख्यानमितिचेदत्रब्रूमः अत्रत्यहंकारादुत्पन्नश्चतुर्मुखः स्वस्यवैराजंरूपंसर्वनामरूपात्मकमनुसंदधानोमन्यतेयदायदायत्प्रकाशतेतत्तदेवोत्पन्नमितितावंतिवैराजानिजन्मानीति । स्थूलप्रपंचात्मकंमानसंभोगद्वारामनस्तृप्तिकरंप्रथमंवैराजंजन्म । रूपप्रपंचात्मकंचाक्षुषंतवोऽपिबाह्यत्वाद्द्वितीयं ४० वचनमात्रोपस्थापितमेरुस्वर्गाद्यात्मकंततोऽपिबाह्यत्वात्तृतीयं । अस्पभोग्यतयांऽतरंगस्योपस्थापकोवेदात्मानामप्रपंचस्ततोऽपिबाह्यत्वाच्चतुर्थं ४१

नासत्यमिति अधिदैवत्यप्राणजंजन्मगंधमर्यमात्मकंनामोहित्वपूर्वकरूपस्मारकतयाततोऽपिबहिरंगत्वात्पंचमं । अंडंब्रह्मांडंतद्दर्शनसंस्कारजंवासनात्मकंस्वाप्नप्रपंचमयंततोऽपिबाह्यंषष्ठं ४२ त
तोऽपिबाह्यंपचतेगम्यतइतिवापचनीयंवापाद्मंसर्वप्राणिधीवासनोद्बोधकंकारणात्मकमिदंसप्तमं । इतोऽपिबाह्यस्त्वंशुद्धचिन्मात्रोऽष्टमः । सर्वेषुकार्येष्वनुगतत्वात्पिताऽहंत्वत्तस्तत्त्वैवकार्यसप्तकरूपेण

॥२६०॥ नासत्यंचापिमेजन्मत्वत्तःपरमुच्यते ॥ अंडजंचापिमेजन्मत्वत्तःषष्ठंविनिर्मितम् ४२ इदंचसप्तमंजन्मपद्मजन्मेतिवैप्रभो ॥ सर्गेसर्गेह्यहंपुत्रस्तवत्रिगुणवर्जित ४३ अ०
प्रथमंपुंडरीकाक्षःप्रधानगुणकल्पितः ॥ त्वमीश्वरःस्वभावश्चकर्मबंधःस्वयंभुवः ४४ त्वयाविनिर्मितोऽहंवैवेदचक्षुर्वयोतिगः ॥ तेमेवेदाहृताश्चक्षुरंधोजातोस्मिजागृ ॥३४७॥
हि ४५ ददस्वचक्षूंषिममप्रियोहंतेप्रियोऽसिमे ॥ एवंस्तुतःसभगवान्पुरुषःसर्वतोमुखः ४६ जहौनिद्रामथतदावेदकार्यार्थमुद्यतः ॥ ऐश्वर्येणप्रयोगेणद्वितीयांतनुमा
स्थितः ४७ सुनासिकेनकायेनभूत्वाचंद्रप्रभस्तदा ॥ कृत्वाहयशिरःशुभ्रंवेदानामालयंप्रभुः ४८ तस्यमूर्धासमभवद्द्यौःसनक्षत्रतारका ॥ केशाश्चास्याभवन्दीर्घारवे
रंशुसमप्रभाः ४९ कर्णावाकाशपातालेललाटंभूतधारिणी ॥ गंगासरस्वतीश्रोण्यौभ्रुवावास्तांमहोदधी ५० चक्षुषीसोमसूर्यौतेनासासंध्यापुनःस्मृता ॥ ॐकारस्त्व
थसंस्कारोविद्युज्जिह्वाचनिर्मिता ५१ दंताश्चपितरोराजन्सोमपाइतिविश्रुताः ॥ गोलोकोब्रह्मलोकश्चओष्ठावास्तांमहात्मनः ५२ ग्रीवाचास्याभवद्राजन्कालरा
त्रिर्गुणोत्तरा ॥ एतद्धयशिरःकृत्वानानामूर्तिभिरावृतम् ५३ अंतर्दधौसविश्वेशोविवेशचरसांप्रभुः ॥ रसांपुनःप्रविष्टश्चयोगंपरममास्थितः ५४ शैक्ष्यंस्वरंसमा
स्थायउद्गीतंप्रासृजत्स्वरम् ॥ सस्वरःसानुनादीचसर्वशःस्निग्धएवच ५५ बभूवांतर्महीभूतःसर्वभूतगुणोदितः ॥ ततस्तावसुरौकृत्वावेदान्समयबंधनान् ५६
रसातलेविनिक्षिप्ययतःशब्दस्ततोद्रुतौ ॥ एतस्मिन्नंतरेराजन्देवोहयशिरोधरः ५७ जग्राहवेदानखिलान्रसातलगतान्हरिः ॥ प्रादाच्चब्रह्मणेभूयस्ततःस्वांप्रकृतिं
गतः ५८ स्थापयित्वाहयशिरउदक्पूर्वेमहोदधौ ॥ वेदानामालयंचापिबभूवाश्वशिरास्ततः ५९ अथकिंचिदपश्यंतौदानवौमधुकैटभौ ॥ पुनराजग्मतुस्तत्रवे
गितौपश्यतांचतौ ६० यत्रवेदाविनिक्षिप्तास्तत्स्थानंशून्यमेवच ॥ ततउत्तममास्थायवेगंबलवतांवरौ ६१ पुनरुत्तस्थतुःशीघ्रंरसानामालयात्तदा ॥ ददृशातेच
पुरुषंतमेवादिकरंप्रभुम् ६२ श्वेतंचंद्रविशुद्धाभमनिरुद्धतनौस्थितम् ॥ भूयोऽप्यमितविक्रांतंनिद्रायोगमुपागतम् ६३ आत्मप्रमाणरचितेअपामुपरिकल्पिते ॥
शयनेनागभोगाढ्येज्वालामालासमावृते ६४ निष्कल्मषेणसत्त्वेनसंपन्नंरुचिरप्रभम् ॥ तंदृष्ट्वादानवेंद्रौतौमहाहासममुंचताम् ६५ ऊचतुश्चसमाविष्टौरजसातमसा
चतौ ॥ अयंसपुरुषःश्वेतःशेतेनिद्रामुपागतः ६६ अनेननूनंवेदानांकृतमाहरणंरसात् ॥ कस्यैषकोनुखल्वेषकिंचस्वपितिभोगवान् ६७ इत्युच्चारितवाक्यौतौ
बोधयामासतुर्हरिम् ॥ युद्धार्थिनौहिविज्ञायविबुद्धःपुरुषोत्तमः ६८ ॥२६०॥

मानसतयात्वत्पुत्रोऽस्मीत्याह सर्गेसर्गेइति ४३ प्रधानंमुख्योगुणःसत्त्वंतेनकल्पितःशुद्धसत्त्वमयशरीरइत्यर्थः ४४ यतोवेदचक्षुरहमतोवयोतिगःकालवित् अध्यायशेषःस्पष्टार्थः ४५ । ४६ । ४७ । ४८
४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ । ६२ । ६३ । ६४ । ६५ । ६६ । ६७ । ६८

६९ । ७० । ७१ । ७२ । ७३ । ७४ । ७५ । ७६ । ७७ । ७८ । ७९ । ८० । ८१ । ८२ । ८३ । ८४ । ८५ । ८६ । ८७ । ८८ । ८९ । ९० । ९१ । ९२ । ९३ । ९४ । ९५ । ९६

निरीक्ष्यचासुरेंद्रौतौततोयुद्धेमनोदधे ॥ अथयुद्धंसमभवत्तयोर्नारायणस्यवै ६९ रजस्तमोविष्टतनूतावुभौमधुकैटभौ ॥ ब्रह्मणोऽपचितिंकुर्वन्जघानमधुसूदनः ७०
ततस्तयोर्वधेनाशुवेदापहरणेनच ॥ शोकापनयनंचक्रेब्रह्मणःपुरुषोत्तमः ७१ ततःपरिवृतोब्रह्माहरिणावेदसत्कृतः ॥ निर्ममेसतदालोकान्कृत्स्नान्स्थावरजंगमान्
७२ दत्वापितामहायाग्र्यांमतिंलोकविसर्गिकीम् ॥ तत्रैवांतर्दधेदेवोयतएवागतोहरिः ७३ तौदानवौहरिर्हत्वाकृत्वाहयशिरस्तनुम् ॥ पुनःप्रवृत्तिधर्मार्थंतामेववि
दधेतनुम् ७४ एवमेवमहाभागोबभूवाश्वशिराहरिः ॥ पौराणमेतत्प्रख्यातंरूपंवरदमैश्वरम् ७५ योह्येतद्ब्राह्मणोनित्यंशृणुयाद्धारयीतवा ॥ नतस्याध्ययनंनाश
मुपगच्छेत्कदाचन ७६ आराध्यतपसोग्रेणदेवंहयशिरोधरम् ॥ पंचालेनक्रमःप्राप्तोदेवेनपथिदेशिते ७७ एतद्धयशिरोराजन्नाख्यानंतवकीर्तितम् ॥ पुराणंवेदस
मितंयन्मांत्वंपरिपृच्छसि ७८ यांयामिच्छेत्तनुंदेवःकर्तुंकार्यविधौक्वचित् ॥ तांतांकुर्याद्विकुर्वाणःस्वयमात्मानमात्मना ७९ एषवेदनिधिःश्रीमानेषवैतपसोनिधिः ॥
एषयोगश्चसांख्यंचब्रह्मचाग्र्यंहविर्विभुः ८० नारायणपरावेदायज्ञानारायणात्मकाः ॥ तपोनारायणपरंनारायणपरागतिः ८१ नारायणपरंसत्यमृतंनारायणात्म
कम् ॥ नारायणपरोधर्मःपुनरावृत्तिदुर्लभः ८२ प्रवृत्तिलक्षणश्चैवधर्मोनारायणात्मकः ॥ नारायणात्मकोगंधोभूमौश्रेष्ठतमःस्मृतः ८३ अपांचापिगुणाराजन्रसा
नारायणात्मकाः ॥ ज्योतिषांचपरंरूपंस्मृतंनारायणात्मकम् ८४ नारायणात्मकश्चापिस्पर्शोवायुगुणःस्मृतः ॥ नारायणात्मकश्चैवशब्दआकाशसंभवः ८५
मनश्चापिततोभूतमव्यक्तगुणलक्षणम् ॥ नारायणपरःकालोज्योतिषामयनंचयत् ८६ नारायणपराकीर्तिःश्रीश्चलक्ष्मीश्चदेवताः ॥ नारायणपरंसांख्यंयोगोनारा
यणात्मकः ८७ कारणंपुरुषोह्येषांप्रधानंचापिकारणम् ॥ स्वभावश्चैवकर्माणिदैवंयेषांचकारणम् ८८ अधिष्ठानंतथाकर्ताकरणंचपृथग्विधम् ॥ विविधाचतथाचे
ष्टादैवंचैवात्रपंचमम् ८९ पंचकारणसंख्यातोनिष्ठासर्वत्रवैहरिः ॥ तत्त्वंजिज्ञासमानानांहेतुभिःसर्वतोमुखैः ९० तत्त्वमेकोमहायोगीहरिर्नारायणःप्रभुः ॥ ब्रह्मादी
नांसलोकानामृषीणांचमहात्मनाम् ९१ सांख्यानांयोगिनांचापियतीनामात्मवेदिनाम् ॥ मनीषितंविजानातिकेशवोनतुतस्यते ९२ येकेचित्सर्वलोकेषुदैवंपि
त्र्यंचकुर्वते ॥ दानानिचप्रयच्छंतिततप्यंतेचतपोमहत् ९३ सर्वेषामाश्रयोविष्णुरैश्वरंविधिमास्थितः ॥ सर्वभूतकृतावासोवासुदेवेतिचोच्यते ९४ अयंहिनित्यःप
रमोमहर्षिर्महाविभूतिर्गुणवर्जिताख्यः ॥ गुणैश्चसंयोगमुपैतिशीघ्रंकालोयथर्तावृतुसंप्रयुक्तः ९५ नैवास्यविंदंतिगतिंमहात्मनोनचागतिंकश्चिदिहानुपश्यति ॥
ज्ञानात्मकाःसंतिहियेमहर्षयःपश्यंतिनित्यंपुरुषंगुणाधिकम् ९६ ॥ इतिश्रीमहाभारतेशां० मोक्षपर्वणिनारायणीयेसप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥३४७॥

॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७ ॥

यान्येतानिब्रह्मणःसप्तजन्मान्युक्तानिमानसंचाक्षुषंवाचिकंश्रावणंनासत्यमंडजंपाद्मंचेतितान्येवपरब्रह्मणःस्वरूपाणितेषामेकोपास्तिस्तुतिद्वाराचरमस्तुतयेऽयमध्यायआरभ्यते अहोह्येकांतिनइत्यादि। सर्वान्सप्तविधब्रह्मणोव्यस्तोपासकान्समस्तोपासकांश्च १ दग्धेंधनाःनष्टवासनाः पारंपर्यागतागुरुसंप्रदायागता गतिर्ज्ञानं २ चतुर्थ्यामनिरुद्धप्रद्युम्नसंकर्षणानपेक्ष्यचतुर्थ्यांवासुदेवाख्यायांहरिभक्तानां विशेषमाह एकांतिनस्त्विति एकांतिनोनिष्कामभक्ताः ३ गतयःगतीः अनिरुद्धादींस्त्रीननुपास्यैववासुदेवंगच्छंतीत्यर्थः ४ जापकेभ्योऽपिभक्तानांश्रेष्ठांगतिमाह सहेति ५। ६। ७ अगतिर्गतिशून्यो ज्ञानधर्मःगतिर्गतिमानुपासनाधर्मः ८। ९ सामवेदेनसंमितःसामवेदोक्तंतत्त्वमसीतिवाक्यंयथाधिकारिणःसद्योज्ञानजनकमेवंवैष्णवधर्मोऽपिशमादिमतांसद्यःकैवल्यहेतुरित्यर्थः। तथाचयोगशास्त्रेतीव्रवैराग्यवतामासन्नःसमाधिलाभःप्रस्तुत्यमृदुमध्यातिमात्रत्वात्ततोऽपिविशेषइतिमृदुतीव्रमध्यतीव्रातिमात्रतीव्रवैराग्यवतामासन्नआसन्नतरआसन्नतमःसमाधिलाभइत्युक्त्वाईश्वरप्रणिधानाद्वेतीश्वरप्रणि

॥ जनमेजयउवाच ॥ अहोह्येकांतिनःसर्वान्प्रीणातिभगवान्हरिः ॥ विधिप्रयुक्तांपूजांचगृह्णातिभगवान्स्वयम् १ येतुदग्धेंधनालोकेपुण्यपापविवर्जिताः ॥ तेषांत्वयाऽभिनिर्दिष्टापारंपर्यागतागतिः २ चतुर्थ्यांचैवतेगत्यांगच्छंतिपुरुषोत्तमम् ॥ एकांतिनस्तुपुरुषागच्छंतिपरमंपदम् ३ नूनमेकांतधर्मोऽयंश्रेष्ठोनारायणप्रियः ॥ अगत्वागतयस्तिस्रोयद्गच्छंत्यव्ययंहरिम् ४ सहोपनिषदान्वेदान्येविप्राःसम्यगास्थिताः ॥ पठंतिविधिमास्थाययेचापियतिधर्मिणः ५ तेभ्योविशिष्टांजानामिगतिमेकांतिनांनृणाम् ॥ केनैषधर्मःकथितोदेवेनऋषिणाऽपिवा ६ एकांतिनांचकाचर्याकदाचोत्पादिताविभो ॥ एतन्मेसंशयंछिंधिपरंकौतूहलंहिमे ७ वैशंपायनउवाच ॥ समुपोढेष्वनीकेषुकुरुपांडवयोर्मृधे ॥ अर्जुनेविमनस्केचगीताभगवतास्वयम् ८ अगतिश्चगतिश्चैवपूर्वंतेकथितामया ॥ गहनोह्येषधर्मोवैदुर्विज्ञेयोऽकृतात्मभिः ९ संमितःसामवेदेनपुरैवादियुगेकृतः ॥ धार्यतेस्वयमीशेनराजन्नारायणेनच १० एतदर्थंमहाराजपृष्टःपार्थेननारदः ॥ ऋषिमध्येमहाभागःशृण्वतोःकृष्णभीष्मयोः ११ गुरुणाचमयाऽप्येषकथितोनृपसत्तम ॥ यथातत्कथितंतत्रनारदेनतथाशृणु १२ यदासीन्मानसंजन्मनारायणमुखोद्गतम् ॥ ब्रह्मणःपृथिवीपालतदानारायणःस्वयम् १३

धानस्यप्रवर्षोधिक्यमुच्यते ईशेनमहादेवेन १०। ११। १२ यदासीदिति अत्रमानसादीनांसप्तानांपूर्वपूर्वस्मिन्नुत्तरेषांसर्वेषामनुगमोऽस्तिनतूत्तरस्मिन्नुत्तरस्मिन्पूर्वपूर्वस्य। कारणंहिकार्येऽनुवर्ततेनतुकार्यस्यकारणेऽनुगमोऽस्तीतिप्रसिद्धंलोके। तत्रमानसंनामस्थूलंसमित्कुशाज्यगंधपुष्पधूपदीपाद्युपकरणंशालग्रामब्राह्मणादिप्रतिमालंबनंदेवंपित्र्यंचधर्मं नारायणेनोपदिष्टंफेनपादयोऽनुवर्ततेइतिश्लोकत्रयार्थः। अयंभावः। अप्रयतोयशालग्रामप्रतिमादिषुस्थूलालंबनेष्वेकाग्र्येणादरनैरंतर्यदीर्घकालोपोद्बलितांदृढवत्वोपासीनस्याक्ष्यादीनांचेतनरूपंदृष्टिगोचरंभवति। तत्रहिजडमध्यस्तंरज्ज्वामिवसर्पःसयथानिरंतरंनिरीक्ष्यमाणोलीयतेरज्जुश्चप्रकाशतेतद्वदिहाप्यक्ष्यादीनांतीव्राभिनिवेशेननिरीक्ष्यमाणानांजाड्यंलीयतेचैतन्यंचप्रकाशते। सेयंमहाविदेहानामधारणा यांप्रकृत्योक्तंयोगसूत्रकृता। बहिरकल्पितावृत्तिर्महाविदेहातत्संयमात्प्रकाशावरणक्षयइति। देहविस्मरणेसतियाबाह्याकारावृत्तिःसाऽकल्पितानन्याकल्पिता। अस्यांसिद्धायामेवप्रतिमादीनांजाड्यंतिरोधीयते नान्यथातद्दर्शनेचैतन्येपरिच्छेदोऽध्यस्तस्तस्यैवेक्षणेनप्रविलापनीयस्तेनतदीयमानंत्यंप्रकाशते। यत्कृष्णशरीरेयशोदयार्जुनेनचदृष्टंतस्यापिसविशेषत्वमेवंप्रविलाप्यनिर्विशेषचिन्मात्रात्मनातिष्ठेदिति १३



१४। १५ यदासीचाक्षुषमिति चाक्षुषंचक्षुर्ग्राह्यंतेजःसूर्यादिरश्मिरूपंतत्रनिविडतरशुक्लभास्वरांधकारकल्पेप्रत्यस्तमितसमस्तविशेषरूपेदृढंधारयतोऽपिपूर्ववद्देहविस्मरणेसतितत्रैवविश्वरूपंप्रकाशते। ततश्चिन्मात्रमितिद्वितीयोयोगप्रकारः एतौद्वौबाह्यालंबनौयोगौ १६। १७ आंतरालंबनंतृतीयमाह तृतीयमिति वाचिकंवाङ्निर्वर्त्यंमंत्रार्थचिंतनपूर्वकंजपंतत्रापिमातृकास्मरणमतीत्य

तेनधर्मेणकृतवान्दैवंपित्र्यंचभारत ॥ फेनपाऋषयश्चैवतंधर्मंप्रतिपेदिरे १४ वैखानसाःफेनपेभ्योधर्मंतंप्रतिपेदिरे ॥ वैखानसेभ्यःसोमस्तुततःसोंतर्दधेपुनः १५ यदाऽऽसीच्चाक्षुषंजन्मद्वितीयंब्रह्मणोनृप ॥ यदापितामहेनैवसोमाद्धर्मःपरिश्रुतः १६ नारायणात्मकोराजन्रुद्रायप्रददौचतम् ॥ ततोयोगस्थितोरुद्रःपुराकृतयुगेनृप १७ वालखिल्यानृषीन्सर्वान्धर्ममेतदपाठयत् ॥ अंतर्दधेततोभूयस्तस्यदेवस्यमायया १८ तृतीयंब्रह्मणोजन्मयदासीद्वाचिकंमहत् ॥ तत्रैषधर्मःसंभूतःस्वयंनारायणान्नृप १९ सुपर्णोनामतमृषिःप्राप्तवान्पुरुषोत्तमात् ॥ तपसावैसुतप्तेनदमेननियमेनच २० त्रिःपरिक्रांतवानेतत्सुपर्णोधर्ममुत्तमम् ॥ यस्मात्तस्माद्व्रतंह्येतत्त्रिसौपर्णमिहोच्यते २१ ऋग्वेदपाठपठितंव्रतमेतद्धिदुश्चरम् ॥ सुपर्णाच्चाप्यधिगतोधर्मएषसनातनः २२ वायुनाद्विपदांश्रेष्ठकथितोजगदायुषा ॥ वायोःसकाशात्प्राप्तश्चऋषिभिर्विघसाशिभिः २३ ततोमहोदधिश्चैवप्राप्तवान्धर्ममुत्तमम् ॥ अंतर्दधेततोभूयोनारायणसमाहितः २४ यदाभूयःश्रवणजासृष्टिरासीन्महात्मनः ॥ ब्रह्मणःपुरुषव्याघ्रतत्रकीर्तयतःशृणु २५ जगत्स्रष्टुमनादेवोहरिर्नारायणःस्वयं ॥ चिंतयामासपुरुषंजगत्सर्गकरंप्रभुं २६ अथचिंतयतस्तस्यकर्णाभ्यांपुरुषःस्मृतः ॥ प्रजासर्गकरोब्रह्मातमुवाचजगत्पतिः २७ सृजप्रजाःपुत्रसर्वामुखतःपादतस्तथा ॥ श्रेयस्तवविधास्यामिबलंतेजश्चसुव्रत २८ धर्मंचमत्तोगृह्णीष्वसात्वतंनामनामतः ॥ तेनसृष्टंकृतयुगंस्थापयस्वयथाविधि २९ ततोब्रह्मानमश्चक्रेदेवायहरिमेधसे ॥ धर्मंचाग्र्यंसजग्राहसरहस्यंससंग्रहम् ३० आरण्यकेनसहितंनारायणमुखोद्भवम् ॥ उपदिश्यततोधर्मंब्रह्मणेऽमिततेजसे ३१ त्वंकर्तायुगधर्माणांनिराशीःकर्मसंज्ञितम् ॥ जगामतमसःपारंयत्राव्यक्तंव्यवस्थितम् ३२ ततोऽथवरदोदेवोब्रह्मालोकपितामहः ॥ असृजत्सततोलोकान्कृत्स्नान्स्थावरजंगमान् ३३ ततःप्रावर्तततदाआदौकृतयुगंशुभम् ॥ ततोहिसात्वतोधर्मोव्याप्यलोकानवस्थितः ३४ तेनैवाद्येनधर्मेणब्रह्मालोकविसर्गकृत् ॥ पूजयामासदेवेशंहरिंनारायणंप्रभुम् ३५ धर्मप्रतिष्ठाहेतोश्चमनुंस्वारोचिषंततः ॥ अध्यापयामासतदालोकानांहितकाम्यया ३६ ततःस्वरोचिषःपुत्रंस्वयंशंखपदंनृप ॥ अध्यापयत्पुराऽव्यग्रःसर्वलोकपतिर्विभुः ३७ ततःशंखपदश्चापिपुत्रमात्मजमौरसम् ॥ दिशांपालंसुवर्णाभमध्यापयतभारत ॥ सोंऽतर्दधेततोभूयःप्राप्तेत्रेतायुगेपुनः ३८



मंत्रार्थमात्रंध्यायतस्तदाकारायांचित्तवृत्तौपुनःपूर्ववद्देवस्वरूप्याधिगमद्वाराचिन्मात्रेणावस्थानं १८। १९ त्रिःपरिक्रांतवान्त्रिरावर्तितवान्प्रत्यहमितिशेषः २० ऋग्वेदपाठपठितंत्रिसौपर्णंचतुष्कपर्दायुवतिःसुपेशाइत्यादिसुपर्णलिंगकंमंत्रत्रयं २१। २२। २३ यदाभूयइतिश्रवणजाअनाहतध्वनिरूपा एतदेवनादब्रह्महंसोपनिषत्प्रसिद्धं २४। २५ तदुपासनाज्जगत्स्रष्टृत्वादिसामर्थ्यंभवतीत्याह अथेति २६। २७। २८। २९। ३०। ३१। ३२। ३३। ३४। ३५। ३६। ३७। ३८

नासत्येजन्मनीति नासत्येतिपूर्वोक्तरीत्यागंधर्वसंवित् सारसादिसंविदांप्राग्युक्तानामुपलक्षणं अनाहतध्वनिश्चितैकाग्र्याभावेऽपिगुरूक्तयुक्त्यास्फुरति गंधादिसंविदस्तुचित्तवैयग्र्यलक्षणेनस्फुरंतीतिपूर्वस्मात्सूक्ष्मास्तत्रापिगंधांशत्यक्तासंविन्मात्रेस्थेयमितियोगः ३९ । ४० । ४१ । ४२ । ४३ अंडजेजन्मनिसूत्रात्मनिअत्रधारणायांसिद्धायामहंब्रह्मास्मीतिवाक्यश्रवणमात्रात्कृतकृत्यतेतिननिर्विकल्पापेक्षाऽपीत्ययंसर्वापेक्षयाश्रेयान् ४४ । ४५ । ४६ । ४७ यदिदंसप्तममिति अंतर्यामिरूपंजन्म इदमेवसमुपोढेष्वनीकेष्वित्यादिनाउपक्रांतंगीतायामुक्तमितिप्रत्यभिज्ञानार्थं इमंविवस्वतेयोगंप्रो

नासत्येजन्मनिपुराब्रह्मणःपार्थिवोत्तम ॥ धर्ममेतंस्वयंदेवोहरिर्नारायणःप्रभुः ३९ तज्जगादारविंदाक्षोब्रह्मणःपश्यतस्तदा ॥ सनत्कुमारोभगवांस्ततःप्राधीतवान्नृप ४० सनत्कुमारादपिचवीरणोवैप्रजापतिः ॥ कृतादौकुरुशार्दूलधर्ममेतदधीतवान् ४१ वीरणश्चाप्यधीत्यैनंरैभ्यायमुनयेददौ ॥ रैभ्यःपुत्रायशुद्धायसुव्रतायसुमेधसे ४२ कुक्षिनाम्नेसप्रददौदिशांपालायधर्मिणे ॥ ततोऽप्यंतर्दधेभूयोनारायणमुखोद्भवः ४३ अंडजेजन्मनिपुनर्ब्रह्मणेहरियोनये ॥ एषधर्मःसमुद्भूतोनारायणमुखात्पुनः ४४ गृहीतोब्रह्मणाराजन्प्रयुक्तश्चयथाविधि ॥ अध्यापिताश्चमुनयोनाम्नाबर्हिषदोनृप ४५ बर्हिषद्भ्यश्चसंप्राप्तःसामवेदांतगंद्विजम् ॥ ज्येष्ठंनामाभिविख्यातंज्येष्ठसामव्रतोहरिः ४६ ज्येष्ठाच्चाप्यनुसंक्रांतोराजानमविकंपनम् ॥ अंतर्दधेततोराजन्नेषधर्मःप्रभोर्हरेः ४७ यदिदंसप्तमंजन्मपद्मजंब्रह्मणोनृप ॥ तत्रैषधर्मःकथितःस्वयंनारायणेनह ४८ पितामहायशुद्धाययुगादौलोकधारिणे ॥ पितामहश्चदक्षायधर्ममेतंपुराददौ ४९ ततोज्येष्ठेतुदौहित्रेप्रादाद्दक्षोनृपोत्तम ॥ आदित्येसवितुर्ज्येष्ठेविवस्वान्जगृहेततः ५० त्रेतायुगादौचततोविवस्वान्मनवेददौ ॥ मनुश्चलोकभूत्यर्थंसुतायेक्ष्वाकवेददौ ५१ इक्ष्वाकुनाचकथितोव्याप्यलोकानवस्थितः ॥ गमिष्यतिक्षयांतेचपुनर्नारायणंनृप ५२ यतीनांचापियोधर्मःसतेपूर्वंनृपोत्तम ॥ कथितोहरिगीतासुसमासविधिकल्पितः ५३ नारदेनसुसंप्राप्तःसरहस्यःससंग्रहः ॥ एषधर्मोजगन्नाथात्साक्षान्नारायणान्नृप ५४ एवमेषमहान्धर्मआद्योराजन्सनातनः ॥ दुर्विज्ञेयोदुष्करश्चसात्वतैर्धार्यतेसदा ५५ धर्मज्ञानेनचैतेनसुप्रयुक्तेनकर्मणा ॥ अहिंसाधर्मयुक्तेनप्रीयतेहरिरीश्वरः ५६ एकव्यूहविभागोवाक्वचिद्द्विव्यूहसंज्ञितः ॥ त्रिव्यूहश्चापिसंख्यातश्चतुर्व्यूहश्चदृश्यते ५७ हरिरेवहिक्षेत्रज्ञोनिर्ममोनिष्कलस्तथा ॥ जीवश्चसर्वभूतेषुपंचभूतगुणातिगः ५८ मनश्चप्रथितंराजन्पंचेंद्रियसमीरणम् ॥ एषलोकविधिर्धीमानेषलोकविसर्गकृत् ५९ अकर्ताचैवकर्ताचकार्यंकारणमेवच ॥ यथेच्छतितथाराजन्क्रीडतेपुरुषोऽव्ययः ६० एषएकांतधर्मस्तेकीर्तितोनृपसत्तम ॥ मयागुरुप्रसादेनदुर्विज्ञेयोऽकृतात्मभिः ६१ एकांतिनोहिपुरुषादुर्लभाबहवोनृप ॥ यद्येकांतिभिराकीर्णंजगत्स्यात्कुरुनंदन ६२

क्तवानहमव्ययं ॥ विवस्वान्मनवेप्राहमनुरिक्ष्वाकवेऽब्रवीत्' इतितत्रत्यवंशकीर्तनेनद्रढयति विवस्वान्जगृहेततइत्यादिना ४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ एकव्यूहेति अत्रानिरुद्धश्चतुष्टयानुगतःप्रद्युम्नस्त्रितयानुगतःसंकर्षणोद्वितयानुगतोवासुदेवएकएव । एतदेवव्युत्क्रमेणात्रोक्तं अधिकारतारतम्यादेषामुपासनानांव्यवस्था ५७ जीवश्चहरिरेवेतिसंबंधः ५८ मनश्चाहंकारोऽपिहरिरेवेत्यन्वयः एषहरिःलोकविधिःलोकप्रवर्तकोऽन्तर्यामी ५९ । ६० एकांतधर्मःनिष्कामानांभक्तानांधर्मः ६१ । ६२



आशीःकर्मकाम्यंकर्म ६३ । ६४ । ६५ । ६६ योगधर्मानादरहेतुमविद्यांदर्शयति एवमित्यादिना ६७ । ६८ देहबंधेषुदेहएवबंधोयेषांतेषुजीवेषुपुरुषःसात्विकःश्रेष्ठइतियोजना ६९ सात्विकलक्षणमाह अत्रापीत्यादिना ७० । ७१ । ७२ जायमानमिति जन्ममरणादिदुःखभाजंपश्येत्कृपयेतिशेषः ७३ । ७४ ईशकृपयैवज्ञानंजायतेनत्वात्मेच्छयेत्याह नारायणेनेति तस्माद्भक्तिरास्थेयेतिभावः ७५ भक्त्यभावेदोषमाहराजसीति व्यामिश्रेसदोषे ७६ एनंराजसंब्रह्मापश्यतिमप्रवृत्तिमार्गेनियोजयतीत्यर्थः ७७ । ७८ वैकारिकाःसात्विकाहंकारजाःसूक्ष्मेणापिसत्त्वेनत्यक्ताःसंतःकदाचिन्मुच्यंतइत्यर्थः । अतएवेंद्रादीनांतत्त्वज्ञानंश्रूयतेछांदोग्यादिषु । वैकारिकोऽहंकारोजीवःपुरुषोत्तमंकथंगच्छेत् । अन्यस्यान्यात्मताऽयोगात्तजीवस्यब्रह्मभावोघटतइत्यर्थः ७९ अत्रानुभवएवमानमि

अहिंसकैरात्मविद्भिःसर्वभूतहितेरतैः ॥ भवेत्कृतयुगप्राप्तिराशीःकर्मविवर्जिता ६३ एवंसभगवान्व्यासोगुरुर्ममविशांपते ॥ कथयामासधर्मज्ञोधर्मराज्ञेद्विजोत्तमः ६४ ऋषीणांसंनिधौराजन्शृण्वतोःकृष्णभीष्मयोः ॥ तस्याप्यकथयत्पूर्वंनारदःसुमहातपाः ६५ देवंपरमकंब्रह्मश्वेतंचंद्राभमच्युतम् ॥ यत्रचैकांतिनोयांतिनारायणपरायणाः ६६ ॥ जनमेजयउवाच ॥ एवंबहुविधंधर्मंप्रतिबुद्धैर्निषेवितम् ॥ नकुर्वंतिकथंविप्राअन्येनानाव्रतेस्थिताः ६७ ॥ वैशंपायनउवाच ॥ तिस्रःप्रकृतयोराजन्देहबंधेषुनिर्मिताः ॥ सात्विकीराजसीचैवतामसीचैवभारत ६८ देहबंधेषुपुरुषःश्रेष्ठःकुरुकुलोद्वह ॥ सात्विकःपुरुषव्याघ्रभवेन्मोक्षायनिश्चितः ६९ अत्रापिसविजानातिपुरुषंब्रह्मवित्तमम् ॥ नारायणपरोमोक्षस्ततोवैसात्विकःस्मृतः ७० मनीषितंचप्राप्नोतिचिंतयन्पुरुषोत्तमम् ॥ एकांतभक्तिःसततंनारायणपरायणः ७१ मनीषिणोहियेकेचिद्यतयोमोक्षधर्मिणः ॥ तेषांविच्छिन्नतृष्णानांयोगक्षेमवहोहरिः ७२ जायमानंहिपुरुषंयंपश्येन्मधुसूदनः ॥ सात्विकस्तुसविज्ञेयोभवेन्मोक्षेचनिश्चितः ७३ सांख्ययोगेनतुल्योहिधर्मएकांतसेवितः ॥ नारायणात्मकेमोक्षेततोयांतिपरांगतिम् ७४ नारायणेनदृष्टस्तुप्रतिबुद्धोभवेत्पुमान् ॥ एवमात्मेच्छयाराजन्प्रतिबुद्धोनजायते ७५ राजसीतामसीचैवव्यामिश्रेप्रकृतीस्मृते ॥ तदात्मकंहिपुरुषंजायमानंविशांपते ७६ प्रवृत्तिलक्षणैर्युक्तंनावेक्षतिहरिःस्वयम् ॥ पश्यत्येनंजायमानंब्रह्मालोकपितामहः ७७ रजसातमसाचैवमानसंसमभिप्लुतम् ॥ कामंदेवाश्चऋषयश्चसत्वस्थानृपसत्तम ७८ हीनाःसत्वेनसूक्ष्मेणततोवैकारिकाःस्मृताः ॥ जनमेजयउवाच ॥ कथंवैकारिकोगच्छेत्पुरुषःपुरुषोत्तमम् ७९ वदसर्वंयथादृष्टंप्रवृत्तिंचयथाक्रमम् ॥ वैशंपायनउवाच ॥ सुसूक्ष्मंतत्त्वसंयुक्तंसंयुक्तंत्रिभिरक्षरैः ८० पुरुषःपुरुषंगच्छेन्निष्क्रियःपंचविंशकः ॥ एवमेकंसांख्ययोगंवेदारण्यकमेवच ८१ परस्परांगान्येतानिपांचरात्रंचकथ्यते ॥ एषएकांतिनांधर्मोनारायणपरात्मकः ८२

त्याह सुसूक्ष्ममिति सुसूक्ष्मंदुर्ग्राह्यं तत्त्वेनाऽनारोपितेनरूपेणसंयुक्तमधिष्ठानमात्रं अथवाप्रकृतेश्चचतुर्विंशतितत्त्वरूपोपाधियुतं तदेवत्रिभिरक्षरैरकारोकारमकारैःसंयुक्तंसम्यक्समाहितमुपाधित्यागेन ८० एतदेवपुरुषःपुरुषंगच्छेदित्युच्यतेनतत्रप्राप्यप्राप्तृत्वलक्षणोनगरनरवद्भेदोऽस्तिकिंतूपाधिवियोगएवतत्प्राप्तिरित्यर्थः । एवमेकंसमुचितं सांख्यमात्मानात्मविवेकः योगश्चित्तवृत्तिनिरोधः वेदारण्यकंजीवब्रह्माभेदपरंतत्त्वमस्यादिवाक्यजंज्ञानं । पांचरात्रंभक्तिमार्गःपरमगुरौकृतानांवैदिकानांकर्मणामर्पणं । एतत्सर्वमेककार्यकारित्वात्समुचितमेवनतुविकल्पितमित्यर्थः । उपसंहरति एषइति नारायणपरात्मकोनारायणनिष्ठः ८१ । ८२

८३ । ८४ श्वेतानांगृहस्थादीनां यतिनांकाषायधारिणां ८५ । ८६ । ८७ कृष्णाद्वैतंप्रतिपादितंनिगमयति कृष्णएवेति भावनःपालकः ८८ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये
भारतभावदीपे अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४८ ॥ ७ ॥ कृष्णाद्वैतमुक्तंतत्सांख्यादिभिःसर्वैःप्राप्यमेकमेवेतिचोक्तं तत्रतैःसमुच्चितैर्विकल्पितैर्वाप्राप्यंतदितिसंदिहानःपृच्छतिसांख्य
मिति १ । २ अज्ञानतमोनुदायेतिच्छेदः ३ पितामहस्याऽऽद्योनारायणस्तंयंषष्ठंनारायणावतारंवदंतीत्यर्थः तथाहि । कार्यस्यकारणानन्यत्वाद्वाआत्माविपुत्रनामाऽऽसीतिगौणाभेदाद्वाव्या

यथासमुद्रात्प्रसृताजलौघास्तमेवराजन्पुनराविशंति ॥ इमेतथाज्ञानमहाजलौघानारायणंवैपुनराविशंति ८३ एषतेकथितोधर्मःसात्वतःकुरुनंदन ॥ कुरुष्वैनंय
थान्यायंयदिशक्तोऽसिभारत ८४ एवंहिसमहाभागोनारदोगुरवेमम ॥ श्वेतानांयतिनांचाहएकांतगतिमव्ययाम् ८५ व्यासश्चाकथयत्प्रीत्याधर्मपुत्रायधीमते ॥
सएवायंमयातुभ्यमाख्यातःप्रसृतोगुरोः८६ इत्थंहिदुश्चरोधर्मएषपार्थिवसत्तम ॥ यथैवत्वंतथैवान्येभवंतीहविमोहिताः८७ कृष्णएवहिलोकानांभावनोमोहनस्तथा ॥
संहारकारकश्चैवकारणंचविशांपते ८८ ॥ इतिश्रीमहाभारतेशांतिपर्व० मोक्षधर्मपर्वणिनारायणीयेएकांतिकभावेअष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥३४८॥
॥ जनमेजयउवाच ॥ सांख्यंयोगःपांचरात्रंवेदारण्यकमेवच ॥ ज्ञानान्येतानिब्रह्मर्षेलोकेषुप्रचरंतिह १ किमेतान्येकनिष्ठानिपृथङ्निष्ठानिवामुने ॥ प्रब्रूहिवैम
यापृष्टःप्रवृत्तिंचयथाक्रमम् २ ॥ वैशंपायनउवाच ॥ जज्ञेबहुज्ञंपरमत्युदारंयंद्वीपमध्येसुतमात्मयोगात् ॥ पराशरात्सत्यवतीमहर्षितस्मैनमोऽज्ञानतमोनुदाय ३
पितामहाद्यंप्रवदंतिषष्ठंमहर्षिमार्षेयविभूतियुक्तं ॥ नारायणस्यांशजमेकपुत्रंद्वैपायनंवेदमहानिधानम् ४ तमादिकालेषुमहाविभूतिर्नारायणोब्रह्ममहानिधानम् ॥
ससर्जपुत्रार्थमुदारतेजाव्यासंमहात्मानमजंपुराणम् ५ ॥ जनमेजयउवाच ॥ त्वयैवकथितंपूर्वंसंभवेद्विजसत्तम ॥ वसिष्ठस्यसुतःशक्तिःशक्तिपुत्रःपराशरः ६ प
राशरस्यदायादःकृष्णद्वैपायनोमुनिः ॥ भूयोनारायणसुतंत्वमेवैनंप्रभाषसे ७ किमतःपूर्वजंजन्मव्यासस्यामिततेजसः ॥ कथयस्वोत्तममतेजन्मनारायणोद्भवम्
८ ॥ वैशंपायनउवाच ॥ वेदार्थान्वेत्तुकामस्यधर्मिष्ठस्यतपोनिधेः ॥ गुरोर्मेज्ञाननिष्ठस्यहिमवत्पादआसतः ९ कृत्वाभारतमाख्यानंतपःश्रांतस्यधीमतः ॥
शुश्रूषांतत्पराराजन्कृतवंतोवयंतदा १० सुमंतुर्जैमिनिश्चैवपैलश्चसुदृढव्रतः ॥ अहंचतुर्थःशिष्योवैशुकोव्यासात्मजस्तथा ११ एभिःपरिवृतोव्यासःशिष्यैःपंच
भिरुत्तमैः ॥ शुशुभेहिमवत्पादेभूतैर्भूतपतिर्यथा १२ वेदानावर्तयन्सांगान्भारतार्थांश्चसर्वशः ॥ तमेकमनसंदांतंयुक्तावयमुपास्महे १३ कथांतरेऽथकस्मिंश्चित्पृ
ष्टोऽस्माभिर्द्विजोत्तमः ॥ वेदार्थान्भारतार्थांश्चजन्मनारायणात्तथा १४ सपूर्वमुक्त्वावेदार्थान्भारतार्थांश्चतत्त्ववित् ॥ नारायणादिदंजन्मव्याहर्तुमुपचक्रमे १५
शृणुध्वमाख्यानवरमिदमार्षेयमुत्तमम् ॥ आदिकालोद्भवंविप्रास्तपसाऽधिगतंमया १६

स्यनारायणांशत्वाद्वाषष्ठेनारायणत्वं । ऋषिर्हिरण्यगर्भस्तदीयैश्वर्य
युक्तंनारायणस्यांशजं । 'कृष्णद्वैपायनंव्यासंविद्धिनारायणांशजं ' इतिस्मृतेः । पितामहाद्यमारभ्यषष्ठंवदंतीतिवायस्मात्पितामहाद्यंषष्ठंवदंतीतिवाऽध्याहृत्ययोज्यं सर्वथाऽपिपितामहाद्यमित्येकंपदं
४ । ५ नारायणःपुत्रार्थंव्यासंससर्जेत्येतदाक्षिपति त्वयैवेति अत्रआरभ्यभक्तानांस्नेहतोमयेत्यंतोग्रंथःस्पष्टार्थः ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६

१७ । १८ । १९ । २० । २१ । २२ । २३ । २५ । २६ । २७ । २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ । ४३ । ४४ । ४५ । ४६।४७

प्राप्तेप्रजाविसर्गेवैसप्तमेपद्मसंभवे ॥ नारायणोमहायोगीशुभाशुभविवर्जितः १७ ससृजेनाभितःपूर्वंब्रह्माणममितप्रभः ॥ ततःसप्रादुरभवदथैनंवाक्यमब्रवीत् १८
ममत्वंनाभितोजातःप्रजासर्गकरःप्रभुः ॥ सृजप्रजास्त्वंविविधाब्रह्मन्सजडपंडिताः १९ सएवमुक्तोविमुखश्चिताव्याकुलमानसः ॥ प्रणम्यवरदंदेवमुवाचहरिमीश्व
रम् २० काशक्तिर्ममदेवेशप्रजाःस्रष्टुंनमोऽस्तुते ॥ अप्रज्ञावानहंदेवविधत्स्वयदनंतरम् २१ सएवमुक्तोभगवान्भूत्वाऽथांतर्हितस्ततः ॥ चिंतयामासदेवेशोबुद्धिं
बुद्धिमतांवरः २२ स्वरूपिणीततोबुद्धिरुपतस्थेहरिंप्रभुम् ॥ योगेनचैनांनिर्योगःस्वयंनियुयुजेतदा २३ सतामैश्वर्ययोगस्थांबुद्धिंगतिमतींसतीम् ॥ उवाचवच
नंदेवोबुद्धिंवैप्रभुरव्ययः २४ ब्रह्माणंप्रविशस्वेतिलोकसृष्ट्यर्थसिद्धये ॥ ततस्तमीश्वरादिष्टाबुद्धिःक्षिप्रंविवेशसा २५ अथैनंबुद्धिसंयुक्तंपुनःसददृशेहरिः ॥ भूय
श्चैववचःप्राहसृजेमाविविधाःप्रजाः २६ बाढमित्येवकृत्वाऽसौयथाऽऽज्ञांशिरसाहरेः ॥ एवमुक्त्वासभगवांस्तत्रैवांतरधीयत २७ प्रापचैनंमुहूर्तेनसंस्थानंदेवसंज्ञि
तम् ॥ तांचैवप्रकृतिंप्राप्यएकीभावगतोऽभवत् २८ अथास्यबुद्धिरभवत्पुनरन्यातदाकिल ॥ सृष्टाःप्रजाइमाःसर्वाब्रह्मणापरमेष्ठिना २९ दैत्यदानवगंधर्वरक्षोग
णसमाकुला ॥ जाताहीयंवसुमतीभाराक्रांतातपस्विनी ३० बहवोबलिनःपृथ्व्यांदैत्यदानवराक्षसाः ॥ भविष्यंतितपोयुक्तावरान्प्राप्स्यंतिचोत्तमान् ३१ अवश्य
मेवतैःसर्वैर्वरदानेनदर्पितैः ॥ बाधितव्याःसुरगणाऋषयश्चतपोधनाः ३२ तत्रन्याय्यमिदंकर्तुंभारावतरणंमया ॥ अथनानासमुद्भूतैर्वसुधायांयथाक्रमम् ३३ नि
ग्रहेणचपापानांसाधूनांप्रग्रहेणच ॥ इयंतपस्विनीसत्याधारयिष्यतिमेदिनी ३४ मयाह्येषाहिध्रियतेपातालस्थेनभोगिना ॥ मयाधृताधारयतिजगद्विश्वंचराचरम्
३५ तस्मात्पृथ्व्याःपरित्राणंकरिष्येसंभवंगतः ॥ एवंसचिंतयित्वातुभगवान्मधुसूदनः ३६ रूपाण्यनेकान्यसृजत्प्रादुर्भावेभवायसः ॥ वाराहंनारसिंहंचवामनंमा
नुषंतथा ३७ एभिर्मयानिहंतव्यादुर्विनीताःसुरारयः ॥ अथभूयोजगत्स्रष्टाभोःशब्देनानुनादयन् ३८ सरस्वतीमुच्चचारतत्रसारस्वतोऽभवत् ॥ अपांतरतमानामा
सुतोवाक्संभवःप्रभुः ३९ भूतभव्यभविष्यज्ञःसत्यवादीदृढव्रतः ॥ तमुवाचनतंमूर्ध्नादेवानामादिरव्ययः ४० वेदाख्यानेश्रुतिःकार्यात्वयामतिमतांवर ॥ तस्मा
त्कुरुयथाज्ञप्तंममैतद्वचनंमुने ४१ तेनभिन्नास्तदावेदामनोःस्वायंभुवेंतरे ॥ ततस्तुतोषभगवान्हरिस्तेनास्यकर्मणा ४२ तपसाचसुतप्तेनयमेननियमेनच ॥ म
न्वंतरेषुपुत्रत्वमेवमेवप्रवर्तकः ४३ भविष्यस्यचलोब्रह्मन्नप्रधृष्यश्चनित्यशः ॥ पुनस्तिष्येचसंप्राप्तेकुरवोनामभारताः ४४ भविष्यंतिमहात्मानोराजानःप्रथिताभु
वि ॥ तेषांत्वत्तःप्रसूतानांकुलभेदोभविष्यति ४५ परस्परविनाशार्थंत्वामृतेद्विजसत्तम ॥ तत्राप्यनेकधावेदान्भेत्स्यसेतपसाऽन्वितः ४६ कृष्णेयुगेचसंप्राप्तेकृष्ण
वर्णोभविष्यसि ॥ धर्माणांविविधानांचकर्ताज्ञानकरस्तथा ४७

४८ । ४९ । ५० । ५१ । ५२ । ५३ । ५४ । ५५ । ५६ । ५७ । ५८ । ५९ । ६० । ६१ अत्रैवकेचिदध्यायंसमापयंति ६२ प्रासंगिकोपसंहारपूर्वकंप्रश्नस्योत्तरंवक्तुंप्रतिजानीते एषतइति ६३ नाना मतानिभिन्नप्रस्थानानि ६४ सर्वेषांप्रामाण्यसिद्धयेविशिष्टकर्तृत्वेनसर्वाणिस्तौति सांख्यस्येत्यादिना ६५ । ६६ । ६७ । ६८ आगमंवेदंज्ञानमनुभवंचानतिक्रम्यएतेषांसर्वेषांनिष्ठापरमतात्पर्यविषयी



भविष्यसितपोयुक्तोनचरागाद्विमोक्ष्यसे ॥ वीतरागश्चपुत्रस्तेपरमात्माभविष्यति ॥ महेश्वरप्रसादेननैतद्वचनमन्यथा ४८ यंमानसंवैप्रवदंतिविप्राःपितामहस्यो त्तमबुद्धियुक्तम् ॥ वसिष्ठमग्र्यंचतपोनिधानंयस्यातिसूर्यंव्यतिरिच्यतेभाः ४९ तस्यान्वयेचापिततोमहर्षिःपराशरोनाममहाप्रभावः ॥ पितासतेवेदनिधिर्वरिष्ठो महातपावैतपसोनिवासः ५० कानीनगर्भःपितृकन्यकायांतस्मादृषेस्त्वंभविताचपुत्रः ५१ भूतभव्यभविष्याणांछिन्नसर्वार्थसंशयः ॥ येह्यतिक्रांतकाःपूर्वंसहस्रयुग पर्ययाः ५२ तांश्चसर्वान्मयोद्दिष्टान्द्रक्ष्यसेतपसाऽन्वितः ॥ पुनर्द्रक्ष्यसिचानेकसहस्रयुगपर्ययान् ५३ अनादिनिधनंलोकेचक्रहस्तंचमांमुने ॥ अनुध्यानान्मम मुनेनैतद्वचनमन्यथा ५४ भविष्यतिमहासत्वख्यातिश्चाप्यतुलातव ॥ शनैश्चरःसूर्यपुत्रोभविष्यतिमनुर्महान् ५५ तस्मिन्मन्वंतरेचैवमन्वादिगणपूर्वकः ॥ त्वमे वभवितावत्समत्प्रसादान्नसंशयः ५६ यत्किंचिद्विद्यतेलोकेसर्वंतन्मद्विचेष्टितम् ॥ अन्योह्यन्यंचिंतयतिस्वच्छंदंविदधाम्यहम् ५७ एवंसारस्वतमृषिमपांतरतमं तथा ॥ उक्त्वावचनमीशानःसाधयस्वेत्यथाब्रवीत् ॥ सोऽहंतस्यप्रसादेनदेवस्यहरिमेधसः ५८ अपांतरतमानामततोजातोऽऽज्ञयाहरेः ॥ पुनश्चजातोविख्यातोव सिष्ठकुलनंदनः ५९ तदेतत्कथितंजन्ममयापूर्वकमात्मनः ॥ नारायणप्रसादेनतथानारायणांशजम् ६० मयाहिसुमहत्तप्तंतपःपरमदारुणम् ॥ पुरामतिमतांश्रे ष्ठाःपरमेणसमाधिना ६१ एतद्वःकथितंसर्वंयन्मांपृच्छथपुत्रकाः ॥ पूर्वजन्मभविष्यंचभक्तानांस्नेहतोमया ६२ ॥ वैशंपायनउवाच ॥ एषतेकथितःपूर्वसं भवोऽस्मद्गुरोर्नृप ॥ व्यासस्याक्लिष्टमनसोयथापृष्टःपुनःशृणु ६३ सांख्यंयोगःपांचरात्रंवेदाःपाशुपतंतथा ॥ ज्ञानान्येतानिराजर्षेविद्धिनानामतानिवै ६४ सां ख्यस्यवक्ताकपिलःपरमर्षिःसउच्यते ॥ हिरण्यगर्भोयोगस्यवेत्तानान्यःपुरातनः ६५ अपांतरतमाश्चैववेदाचार्यःसउच्यते ॥ प्राचीनगर्भंतमृषिंप्रवदंतीहके चन ६६ उमापतिर्भूतपतिःश्रीकंठोब्रह्मणःसुतः ॥ उक्तवानिदमव्यग्रोज्ञानंपाशुपतंशिवः ६७ पांचरात्रस्यकृत्स्नस्यवेत्तातुभगवान्स्वयम् ॥ सर्वेषुचनृपश्रेष्ठज्ञाने ष्वेतेषुदृश्यते ६८ यथागमंयथाज्ञानंनिष्ठानारायणःप्रभुः ॥ नचैनमेवंजानंतितमोभूताविशांपते ६९ तमेवशास्त्रकर्तारःप्रवदंतिमनीषिणः ॥ निष्ठांनारायणमृ षिंनान्योऽस्तीतिवचोमम ७० निःसंशयेषुसर्वेषुनित्यंवसतिवैहरिः ॥ ससंशयान्हेतुबलान्नाध्यावसतिमाधवः ७१ पांचरात्रविदोयेतुयथाक्रमपरानृप ॥ एकां तभावोपगतास्तेहरिंप्रविशंतिवै ७२ ॥२६४॥

भूतोऽर्थस्तुनारायणःपरमात्मैवेतिदृश्यतइत्यर्थः अत्रभिन्नप्रस्थानत्वाभिमानोमूढानामेवेत्याह नचैति ६९ स्वमतमाह तमेवेति ७० निःसंशयेषुश्रुत्यनुभवबलादितिशेषः हेतुबलात्कुतर्कबलात् ससंशयान् ७१ ईदृशाएवपांचरात्राअपिमुच्यंतइत्याह पांचरात्रेति ७२

सनातनेश्रुतिप्रतिपादितत्वादार्यतश्शून्येउभेअपि तेनपांचरात्रस्यपुंप्रणीतत्वेवेदविरुद्धत्वंचसूचितंतथापिअवांतरतात्पर्यभेदेऽपिपरमतात्पर्यंत्वेकमेवेत्याह सर्वैरिति 'इदंविश्वंनारायणइतिइदंसर्वंयदयमा त्माब्रह्मैवेदंसर्वं' इत्यादिश्रुतेरर्थोब्रह्माद्वैतरूपोदर्शितः ७३ शुभाशुभमिति सर्वत्रनारायणएवप्रवर्तकोंतर्यामीत्यर्थः । समीरितंवेदेविहितं तस्मादृषेर्नारायणात् ७४ ॥ ॥ इतिशांतिपर्वणि मोक्ष धर्मपर्वणि नीलकंठीये भारतभावदीपे ऊनपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३४९ ॥ ॥ ७ ॥ पुरुषभेदमंतरेणबंधमोक्षव्यवस्थानुपपत्तेःश्रूयमाणस्यात्मैक्यस्यचानतिलंघनीयत्वात्संदिहानः पृच्छति बहवइति । नन्वेकस्मिन्नाकाशेकर्णशष्कुलीरूपोपाधिभेदात्श्रोत्रभेदःकल्पितोबाधिर्यंसुश्रवस्त्वादिव्यवहारहेतुःशब्दग्रहासंकरहेतुश्चएवमेकस्मिन्नात्मनिअंतःकरणभेदाज्जीवभेदःकल्पितोबद्धमुक्त व्यवहारहेतुर्भोगासंकरहेतुश्चभविष्यतीतिव्यवहारपरमार्थदृष्ट्यापुरुषबहुत्वेकत्वेसंभवतइतिनतत्रप्रष्टव्यमस्तीत्याशंक्याह कोह्यत्रेति योषावावगौतमाग्निरितिवदात्मैवेदंसर्वमित्यात्माभेदश्रुतेरुपासना र्थंगौणाभेदपरत्वेनाप्युपपत्तेरात्मैक्यासिद्धेःशष्कुलीदृष्टांतेनापिउक्तव्यवस्थाकल्पनस्यनिर्मूलत्वात्मानांतरेणचाद्वैतासिद्धेःकःश्रेष्ठःपुरुषोऽस्तिकोवायोनिरस्तिनकोपीत्यर्थः १ लोकेव्यवहारेएतदेत स्मिन्व्यवहारेबहवएवपुरुषानत्वेकइत्यर्थः परमार्थतस्त्वेकएवनचबहवइतिभावः २ स्वमतमाह बहूनामिति । पूर्वंउपाधिषुवसतांपुरुषाणांघटमठाकाशदर्पणमणिकृपाणप्रतिबिंबायात्मनांयथेकायोनिर्म हाकाशबिंबपुरुषादिरूपातथैवतमस्मदादीनांयोनिंएकंपुरुषंव्याख्यास्यामीत्यर्थः । अयंभावः ऐकात्म्यंश्रुतेस्तात्पर्याभावाद्यमानांतरविरोधाद्वात्यज्येत नांत्यः एकस्मादपिमाणिकर्मवासना

सांख्यंचयोगंचसनातनेद्वेवेदाश्चसर्वेनिखिलेनराजन् ॥ सर्वैःसमस्तैर्ऋषिभिर्निरुक्तोनारायणोविश्वमिदंपुराणम् ७३ शुभाशुभंकर्मसमीरितंयत्प्रवर्ततेसर्वलोकेषुकिं चित् ॥ तस्मादृषेस्तद्भवतीतिविद्यादिव्यंतरिक्षेभुविचाप्सुचेति ७४ ॥ इति श्रीमहाभारते शांति० मोक्ष० प० द्वैपायनोत्पत्तौ ऊनपंचाशदधिकत्रिशतत मोऽध्यायः ॥ ३४९ ॥ ॥ जनमेजयउवाच ॥ बहवःपुरुषाब्रह्मन्नुताहोएकएवतु ॥ कोह्यत्रपुरुषःश्रेष्ठःकोवायोनिरिहोच्यते १ वैशंपायनउवाच ॥ बहवः पुरुषालोकेसांख्ययोगविचारणे ॥ नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह २ बहूनांपुरुषाणांचयथैकायोनिरुच्यते ॥ तथातंपुरुषंविश्वंव्याख्यास्यामिगुणाधि कम् ३ नमस्कृत्वाचगुरवेव्यासायविदितात्मने ॥ तपोयुक्तायदांतायवंद्यायपरमर्षये ४

गर्भिताज्ञानसहायात्स्वप्रवद्वियदाद्युत्पत्तेरविरोधात् शष्कुलीन्यायेनैकस्मिन्नप्यौपाधिकभेदकल्पनयाबंधमोक्षादिव्यवस्थोपपत्तेश्च नाद्यः 'उपक्रमोपसंहारावभ्यासोपूर्वताफलं ॥ अर्थवादोपपत्ती चलिंगंतात्पर्यनिर्णये' इत्येतैर्लिंगैःश्रुतेरैकात्म्येएवतात्पर्यदर्शनात् तथाहि । सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयमित्युपक्रम्यऐतदात्म्यमिदंसर्वंतत्सत्यंसआत्मातत्त्वमसिश्वेतकेतोइतिचोपक्रमोपसं हारयोरेकरूप्यंऐतदात्म्यमित्यादेरसकृत्श्रवणमभ्यासः मानांतरानवगतत्वादात्मैकतत्वस्यअपूर्वता उततमादेशमप्राक्षीर्येनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातमित्येकविज्ञानात्सर्वविज्ञानंफलं यथासोम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंस्यादितिदृष्टांताउपपत्तयः लवणमेतदुदकेऽवधायन्यग्रोधफलमतआहरेतीत्यादिरर्थवादः लवणोदकन्यायेनब्रह्मणिजगल्लयंन्यग्रोधकणिकान्यायेनततोजगदु दयंचप्रतिपादयंस्तस्यैका द्वितीयत्वमवगमयतिएवमैकात्म्यंप्रतिपाद्य 'घटसंवृतमाकाशंनीयमानेयथाघटे । घटोनीयेतनाकाशंतद्वज्जीवोनभोपमः । एकएवतुभूतात्माभूतेभूतेप्रकाशते । एक धाबहुधाचैवदृश्यतेजलचंद्रवत् ॥ अहरहर्गच्छंत्यएतंब्रह्मलोकंनविंदंत्यनृतेनहिप्रत्यूढा' इत्यादिश्रुतिभिर्घटाकाशजलचंद्रादिदृष्टांतपूर्वकंबंधस्याज्ञानकार्यत्वंप्रतिपाद्यतेऽतोनश्रुतेरुपासनार्थतात्पर्यमस्ति प्रत्युतऐकात्म्येएवेति व्यक्तमाकरे ३ इदमेवगुरुनमस्कारपूर्वकमाख्यायिकामुखेनोपपादयति नमस्कृत्वेत्यादिना आख्यायिकास्पष्टार्था ४

५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । १३ । १४ । १५ । १६ । १७ । १८ । १९ । २० । २१ । २२ बहवःपुरुषाब्रह्मन्निति पुरुषाणांस्वद्रष्टाऽपिपुरुषांतरंप्रणमतीत्याश्चर्यं संघातादन्यःपुरुषोनास्तीतिभावः २३ । २४ बहवःपुरुषाःपुत्रेतियेसंघातात्मानस्त्वयाउदाहृताः एतदतिक्रांतंप्रत्यक्षेणैवापहृतविपर्ययंविदामतिपार्थनैतद्द्रष्टव्यमित्यर्थः । अनधिगतार्थ

इदंपुरुषसूक्तंहिसर्ववेदेषुपार्थिव ॥ ऋतंसत्यंचविख्यातमृषिसिंहेनचिंतितम् ५ उत्सर्गेणापवादेनऋषिभिःकपिलादिभिः ॥ अध्यात्मचिंतामाश्रित्यशास्त्राण्युक्तानिभारत ६ समासतस्तुयद्व्यासःपुरुषैकत्वमुक्तवान् ॥ तत्तेहंसंप्रवक्ष्यामिप्रसादादमितौजसः ७ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ ब्रह्मणासहसंवादंत्र्यंबकस्यविशांपते ८ क्षीरोदस्यसमुद्रस्यमध्येहाटकसप्रभः ॥ वैजयंतइतिख्यातःपर्वतप्रवरोनृप ९ तत्राध्यात्मगतिंदेवएकाकीप्रविचिंतयन् ॥ वैराजसदनान्निर्त्यवैजयंतंनिषेवते १० अथतत्रासतस्तस्यचतुर्वक्त्रस्यधीमतः ॥ ललाटप्रभवःपुत्रःशिवआगाद्यदृच्छया ११ आकाशेनमहायोगीपुरात्रिनयनःप्रभुः ॥ ततःखान्निपपाताशुधरणीधरमूर्धनि १२ अग्रतश्चाभवत्प्रीतोववंदेचापिपादयोः ॥ तंपादयोर्निपतितंदृष्ट्वासव्येनपाणिना १३ उत्थापयामासतदाप्रभुरेकःप्रजापतिः ॥ उवाचचैनंभगवांश्चिरस्यागतमात्मजम् १४ ॥ पितामहउवाच ॥ स्वागतंतेमहाबाहोदिष्ट्याप्राप्तोऽसिमेंतिकम् ॥ कच्चित्तेकुशलंपुत्रस्वाध्यायतपसोःसदा १५ नित्यमुग्रतपास्त्वंहिततःपृच्छामितेपुनः १६ ॥ रुद्रउवाच ॥ त्वत्प्रसादेनभगवन्स्वाध्यायतपसोर्मम ॥ कुशलंचाव्ययंचैवसर्वस्यजगतस्तथ १७ चिरदृष्टोहिभगवान्वैराजसदनेमया ॥ ततोऽहंपर्वतंप्राप्तस्त्विमंत्वत्पादसेवितम् १८ कौतूहलंचापिहिमेएकांतगमनेनते ॥ नैतत्कारणमल्पंहिभविष्यतिपितामह १९ किंनुतत्सदनंश्रेष्ठंक्षुत्पिपासाविवर्जितम् ॥ सुरासुरैरध्युषितंऋषिभिश्चामितप्रभैः २० गंधर्वैरप्सरोभिश्चसततंसंनिषेवितम् ॥ उत्सृज्येमंगिरिवरमेकाकीप्राप्तवानसि २१ ॥ ब्रह्मोवाच ॥ वैजयंतोगिरिवरःसततंसेव्यतेमया ॥ अत्रैकाग्रेणमनसापुरुषश्चिंत्यतेविराट् २२ ॥ रुद्रउवाच ॥ बहवःपुरुषाब्रह्मंस्त्वयासृष्टाःस्वयंभुवा ॥ सृज्यंतेचापरेब्रह्मन्सचैकःपुरुषोविराट् २३ कोह्यसौचिंत्यतेब्रह्मंस्त्वयैकःपुरुषोत्तमः ॥ एतन्मेसंशयंब्रूहिमहत्कौतूहलंहिमे २४ ॥ ब्रह्मोवाच ॥ बहवःपुरुषाःपुत्रत्वयायेसमुदाहृताः ॥ एवमेतदतिक्रांतंद्रष्टव्यंनैवमित्यपि २५ आधारंतुप्रवक्ष्यामिएकस्यपुरुषस्यते ॥ बहूनांपुरुषाणांसयथैकायोनिरुच्यते २६ तथातंपुरुषंविश्वंपरमंसुमहत्तमम् ॥ निर्गुणंनिर्गुणाभूत्वाप्रविशंतिसनातनम् २७ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणि मोक्षधर्मपर्वणिनीलकंठीये भारतभावदीपेनारायणीयेब्रह्मरुद्रसंवादेपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥

ज्ञापकंहिप्रमाणं आत्मभेदश्चाधिगतएवेतिनशास्त्रस्यविषयस्तत्परत्वेऽग्निर्हिमस्यभेषजमितिवत्शास्त्रस्यानुवादकत्वापत्तेः अतस्तत्त्वमस्यादिवाक्यंनगौणाभेदपरमित्यर्थः २५ आधारोऽधिष्ठानं एकस्यविराजः सोपाधिकत्वेऽपिपुरुषस्यैकत्वमस्तिकिमुतनिरुपाधिकत्वेइतिभावः २६ विश्वंविराजं परमंसूत्रात्मानं सुमहत्तमंकारणं निर्गुणंशुद्धं अनेनानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाःक्रमेणोक्ताः । तत्रनिर्गुणस्यैवनिर्गुणेवासुदेवेप्रवेशइत्यर्थः २७ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥



इदमेवपुरुषैकत्वंदृष्टांतैरुपपादयन्कृत्स्नस्यमोक्षशास्त्रस्यार्थमुपसंहरति शृणुपुत्रेत्यादिना । पुरुषःपूर्णत्वात् । शाश्वतःआद्यंतशून्यत्वात् । अव्ययःअपरिणामित्वात् । अतएवअक्षयःअपचयहीनः । अप्रमेयः वाङ्मनसातीतत्वात् । सर्वगःसर्वोपादानत्वात् १ सगुणैःबुद्धींद्रियादिसहितैःनिर्गुणैःशमादिहीनैर्मूढैः विश्वोविश्वात्माज्ञानेनचिन्मात्रेणैवदृश्यः स्वयंप्रकाशइत्यर्थः २ अशरीरःस्थूलसूक्ष्मकारणशरीरैर्विरहितः नलिप्यतिनलिप्यते आकाशइवघटांतर्गतैर्दोषैर्वृत्तत्वादिभिर्गत्यादिभिर्वा ३ अस्यतटस्थतांवारयति ममेति अंतरात्माऽपिनग्राह्यः उपाध्यभिनिवेशात् ४ अयमेवविश्वरूपइत्याह विश्वेति सर्वेषांशरीरैरयमेवशरीरीत्यर्थः ५ अस्यैवक्षेत्रज्ञत्वंसनिरुक्तमाह क्षेत्राणीति ६ नन्वयमेवक्षेत्रज्ञश्चेदुत्क्रांतिगत्यागत्यादिकमस्यैवप्रसक्तमित्याशंक्याह नागतिरिति घटाकाशस्यैवाप्रतीतितोऽगत्यादिमत्त्वेऽपिवस्तुतोनैवास्ति अतोनैवसाज्ञेया आत्मनिगतिरस्तीतिनज्ञातव्यमित्यर्थः ७ कातर्हिगतिप्रतीतिर्गतिरित्याशंक्यानिर्वचनीयास्मिन्गतिप्रतीतिरित्याह चिंतयामीति गतेर्निर्वचनं सत्त्वेनासत्त्वेनवादुर्निरूपं पुरुषंयथाज्ञानंश्रुतियुक्त्यनुभूतीरनतिक्रम्यवक्ष्यामि यतःसनातनंनित्यैकरूपं यद्भिन्नानारूपंतदिदमित्थमेवेतिदुर्निरूपमित्यर्थः ८ अस्यमहापुरुषत्वंनिर्वक्ति तस्येति

॥ ब्रह्मोवाच ॥ शृणुपुत्रयथाह्येषपुरुषःशाश्वतोऽव्ययः ॥ अक्षयश्चाप्रमेयश्चसर्वगश्चनिरुच्यते १ नसशक्यस्त्वयाद्रष्टुंमयाऽन्यैर्वाऽपिसत्तम ॥ सगुणैर्निर्गुणैर्विश्वोज्ञानदृश्योह्यसौस्मृतः २ अशरीरःशरीरेषुसर्वेषुनिवसत्यसौ ॥ वसन्नपिशरीरेषुनसलिप्यतिकर्मभिः ३ ममांतरात्मातवचयेचान्येदेहसंज्ञिताः ॥ सर्वेषांसाक्षिभूतोऽसौनग्राह्यःकेनचित्क्वचित् ४ विश्वमूर्धाविश्वभुजोविश्वपादाक्षिनासिकः ॥ एकश्चरतिक्षेत्रेषुस्वैरचारीयथासुखम् ५ क्षेत्राणिहिशरीराणिबीजंचापिशुभाशुभम् ॥ तानिवेत्तिसयोगात्माततःक्षेत्रज्ञउच्यते ६ नागतिर्नगतिस्तस्यज्ञेयाभूतेषुकेनचित् ॥ सांख्येनविधिनाचैवयोगेनचयथाक्रमम् ७ चिंतयामिगतिंचास्यनगतिंवेद्मिचोत्तराम् ॥ यथाज्ञानंतुवक्ष्यामिपुरुषंतुसनातनम् ८ तस्यैकत्वंमहत्त्वंचसचैकःपुरुषःस्मृतः ॥ महापुरुषशब्दंसबिभर्त्येकःसनातनः ९ एकोहुताशोबहुधासमिध्यतेएकःसूर्यस्तपसोयोनिरेका ॥ एकोवायुर्बहुधावातिलोकेमहोदधिश्चांभसांयोनिरेकः ॥ पुरुषश्चैकोनिर्गुणोविश्वरूपस्तंनिर्गुणंपुरुषंचाविशंति १० हित्वागुणमयंसर्वंकर्महित्वाशुभाशुभम् ॥ उभेसत्यानृतेत्यक्त्वाएवंभवतिनिर्गुणः ११

पुरुषांतरसत्त्वेएकस्यमहत्वंनस्यात् समत्वात्पुरुषाणां ९ ननुक्लेशादिभिरपरामृष्टईश्वरत्वियोगावदंतिसचमहानित्याशंक्यैकस्यैवोपाध्यावेशात्संसारस्तटस्थेश्वरस्यपूर्वमेवनिरस्तत्वादित्याशयेनाह एकइति । आद्योदृष्टांतउपाधितादात्म्येज्ञेयः । द्वितीयस्त्वौपाधिकधर्माणामुपहितेप्रतिबिंबेजलचांचल्यवत्प्रतीतावसंगित्वेऽप्युपाधिप्रकाशकत्वेच । तपसःप्रकाशस्य श्रुतौतु 'एकएवाग्निर्बहुधासमिद्धःएकःसूर्योविश्वमनुप्रभूतःएकैवोषाःसर्वमिदंविभात्येकंवाइदंविबभूवसर्वं'इतिदृष्टांतत्रयंपृथगुक्तं । सर्वेऽप्येकस्यानेकत्वेदृष्टांताएते वायुदृष्टांतोऽप्यसंगत्वएव । समुद्रदृष्टांतस्तूत्पत्तिलयस्थानत्वेइतिविवेकः दृष्टांतानुक्त्वादार्ष्टांतिकमाहार्धेन पुरुषश्चेति । निर्गुणोऽपिमाययाविश्वरूपोभवति । विश्वानिचरूपाणितमेवाविशंति समुद्रादुद्भूताआपःसमुद्रमिवेत्यर्थः १० कदानिर्गुणंपुरुषंविशंतीत्यतआह हित्वेति । गुणमयंदेहेंद्रियाद्यहंकारांतंहित्वातद्धर्मनाचशुभाशुभंकर्मत्यक्त्वाततःसत्यानृतेसत्यमक्षरंजीवाख्यमनृतंप्रधानं भोक्तारंभोग्यंचत्यक्त्वेत्यर्थः । क्षरंप्रधानममृताक्षरंहरःक्षरात्मानावीशतेदेवएकइति । अमृतोऽक्षरइतिवक्तव्येअमृताक्षरमितिच्छांदसउत्वाभावः ११

तंनिर्गुणमचिंत्यंमनोऽतीतंज्ञात्वासाक्षात्कृत्यचतुष्टयंभावसूक्ष्मंविचरेत् । भावस्यसत्तामात्रस्यसूक्ष्मंसूक्ष्मरूपभूतंचतुष्टयमनिरुद्धप्रद्युम्नसंकर्षणवासुदेवापरपर्यायमधिदैवंविराट्सूत्रांतर्यामिशुद्धब्रह्मरूपमध्यात्मं । विश्वतैजसप्राज्ञतुरीयसंज्ञमवस्थाचतुष्टयंयःसंचरेत् । स्थूलसूक्ष्मप्रविलापनक्रमेणयोनित्यंसमाधिमनुतिष्ठेदित्यर्थः । तस्यलक्षणमसमुन्नद्धःअत्यंतंशांतः सएवपरमंपुरुषंगच्छेन्नान्यइत्यर्थः १२ एवंयोगमार्गेणकेचिद्योगाः अपरेसांख्याआत्मानंप्रत्यंचमेकात्मानंब्रह्माभिन्नमिच्छंति १३ पक्षद्वयेपिपरमात्मशब्दार्थमाह सार्धेन तत्रेति १४ आत्मशब्दार्थमाह कर्मेति १५ ससप्तदशकेनराशिनालिंगशरीरेणसःसोपाधिरात्माजीवःसचकर्मभेदाद्देवतिर्यगादिभावमापन्नोबहुविधइत्याह एवमिति । एवमौपाधिकेपुरुषबहुत्वेसतियेस्वतएवपुंबहुत्वमाहुर्निरीश्वरसांख्यादयस्तेभ्रांताइत्यर्थः १६ एवंबहवःपुरुषाराजन्नुताहोएकएवचेत्यस्यप्रश्नस्योत्तरंसिद्धांतेपुरुषैक्यमुक्तं । संप्रतिब्रह्मविद्यासमाप्तौमंगलार्थंतद्देवानुसंदधानो 'भोक्ताभोग्यंप्रेरितारंचमत्वासर्वंप्रोक्तंत्रिविधंब्रह्ममेतत्'इतिश्रुतेरर्थंभोक्तृभोग्ययोर्ब्रह्माभेदंदर्शयतियत्तदित्यादिना धामप्रकाशकंचिज्ज्योतिः तदेवपरंवेद्यंतदेवचबोद्धाबोद्धायोयंजीवःसएवबोधनीयईश्वरइत्यर्थः यथोक्तंवृद्धैः । 'अन्वेष्टव्यात्म

अचिंत्यंचापितंज्ञात्वाभावसूक्ष्मंचतुष्टयम् ॥ विचरेद्योऽसमुन्नद्धःसगच्छेत्पुरुषंशुभम् १२ एवंहिपरमात्मानंकेचिदिच्छंतिपंडिताः ॥ एकात्मानंतथात्मानमपरेज्ञानचिंतकाः १३ तत्रयःपरमात्माहिसनित्यंनिर्गुणःस्मृतः ॥ सहिनारायणोज्ञेयःसर्वात्मापुरुषोहिसः १४ नलिप्यतेफलैश्चापिपद्मपत्रमिवांभसा ॥ कर्मात्मात्वपरोयोऽसौमोक्षबंधैःसयुज्यते १५ ससप्तदशकेनापिराशिनायुज्यतेचसः ॥ एवंबहुविधःप्रोक्तःपुरुषस्तेयथाक्रमम् १६ यत्तत्कृत्स्नंलोकतंत्रस्यधामवेद्यंपरंबोधनीयःसबोद्धा ॥ मंतामंतव्यंप्राशिताप्राशनीयंघ्राताघ्रेयंस्पर्शितास्पर्शनीयम् १७ द्रष्टाद्रष्टव्यंश्राविताश्रावणीयंज्ञाताज्ञेयंसगुणंनिर्गुणंच ॥ यद्वैप्रोक्तंतातसम्यक्प्रधानंनित्यंचैतच्छाश्वतंचाव्ययंच १८ यद्वैसूतेधातुराद्यंविधानंतद्वैविप्राःप्रवदंतेऽनिरुद्धम् ॥ यद्वैलोकेवैदिकंकर्मसाधुआशीर्युक्तंतद्धितस्यैवभाव्यम् १९ देवाःसर्वेमुनयःसाधुशांतास्तंप्राग्वंशेयज्ञभागंभजंते ॥ अहंब्रह्माआद्यईशःप्रजानांतस्माज्जातस्त्वंचमत्तःप्रसूतः २० मत्तोजगज्जंगमंस्थावरंचसर्वेवेदाःसरहस्याहिपुत्र २१ चतुर्विभक्तःपुरुषःसक्रीडतियथेच्छति ॥ एवंसभगवान्स्वेनज्ञानेनप्रतिबोधितः २२

विज्ञानात्प्राक्प्रमातृत्वमात्मनः ॥ अन्विष्टःस्यात्प्रमातैवपाप्मदोषादिवर्जितइति । नकेवलमात्मनएवमंतृमंतव्यत्वादिकमपितुब्रह्मत्वादिकमपितस्यैवेत्याह घ्रातेत्यादिना १७ किंबहुनायत्प्रधानमनात्मत्वेनप्रसिद्धंघ्रेयादीनामुपादानंतदप्यात्मैवेत्याह यद्वैप्रोक्तमिति यत्प्रधानमितिप्रोक्तंयदपिधातुःआद्यंविधानंमहत्तत्त्वंसूतेतदपिएतदेवेत्यन्वयः । एतदेवविशिनष्टि नित्यंध्वंसहीनं अतएवशाश्वतमनादि अव्ययमपरिणामि परिणामिनोहिविकारवत्त्वादाद्यंतवत्त्वंप्रधानस्ययुज्यतेनत्वताहशस्यपुरुषस्य १८ तदेवंपरंपांमहत्त्वेनाभिमतंविप्राःपूर्णज्ञानाब्राह्मणाअनिरुद्धमहंकाराख्यमाहुः । अयमेववैदिककर्मणामधिष्ठात्रीदेवतेत्याह यद्वैलोकेइति आशीर्युक्तंकाम्यंतस्यैवतादर्थ्येनैवभाव्यंचिंतनीयं अनेनाग्निहोत्रेणानिरुद्धात्मावासुदेवःप्रीयतामितिकर्मावसरेऽनुसंधानंकर्तव्यमित्यर्थः १९ इदमेवसदाचारप्रदर्शनेनद्रढयति देवाइत्यादिना २० मत्तइति मम आराध्यादेवतामजीरपिस्थावरजंगमात्मकैर्जीवैराराधनीयेत्यर्थः २१ पांचरात्रमार्गमुपसंहरति चतुर्विभक्तइति चतुर्विभक्तःचतुर्धावासुदेवादिरूपेणविभक्तःक्रीडति शास्यशासितृभावेनभोग्यभोक्तृभावेनचेत्यर्थः । एवंसभगवान्वासुदेवउपाध्यावेशाद्बुद्धइवसन्स्वेनस्वरूपाभिन्नेनज्ञानेनप्रतिबोधितःसन्जीवत्वंपरित्यज्य-



वासुदेवएवभवतीत्यर्थः । ननुचतुर्विभक्तइत्युपसंहारोनयुज्यते पांचरात्रमतस्यावैदिकस्यश्रौतेसांख्ययोगमतेऽनुपसंहार्यत्वादितिचेत्कृत्स्नभावादितिब्रूमः तथाहि । भगवदाराधनंविनासंन्यासपूर्वकंसांख्यमनुतिष्ठतश्चित्तैकाग्र्यस्याभावाद्बुद्धिभ्रंशपतिततत्रारूढपतितास्तेउभयंभ्रष्टाभवंति यथोक्तंश्रीभागवते । ' श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंतियेकेवलबोधलब्धये ॥ तेषामसौक्लेशलएवशिष्यतेनान्ययथास्थूलतुषावघातिनां ॥ येऽन्येरविंदाक्षविमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्यकृच्छ्रेणपरंपदंततःपतंत्यधोनादृतयुष्मदंघ्रयः'इति । यथायोगिनामपिप्रत्यक्तत्वाधिगमोंऽतरायाभावश्चनभगवदाराधनंविनाभवतीतिस्मर्यते । ततःप्रत्यक्चेतनाधिगमोंऽतरायाभावश्च अंतरायास्तुयोगिभिरेवोक्ताः व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रांतिदर्शनालब्धभूमिकत्वानवस्थितत्वानिचित्तविक्षेपास्तेंऽतरायाः । दुःखदौर्मनस्यांगमेजयत्वश्वासप्रश्वासाविक्षेपसहभुवइति । ' तथानतेमाधवतावकाःक्वचिद्भ्रश्यंतिमार्गात्त्वयिबद्धसौहृदाः ॥ त्वयाऽभिगुप्ताविचरंतिनिर्भयाविनायकानीकपमूर्धसुप्रभो'इति । तस्माद्भक्तोक्तकृत्स्नस्यशास्त्रफलस्यांतर्भावोऽस्तिअतस्तयैवोपसंहारोयुक्तः २२ परमप्रकृतौसांख्ययोगावुपसंहरति एतत्तइति तथाचज्ञानस्यैवप्राकरणिकत्वात्तत्प्रकरणेपठिताभक्तिस्तदंगभावंभजतइतिभावः तथाचोक्तंभगवता । भक्त्यामामभिजानातीति । श्रुतिरपि ' यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः'

एतत्तेकथितंपुत्रयथावदनुपृच्छतः ॥ सांख्यज्ञानेतथायोगेयथावदनुवर्णितम् २३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिनारायणीयसमाप्तौएकपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥ ॥ युधिष्ठिरउवाच ॥ धर्माःपितामहेनोक्तामोक्षधर्माश्रिताःशुभाः ॥ धर्ममाश्रमिणांश्रेष्ठंवक्तुमर्हतिमेभवान् १ भीष्मउवाच ॥ सर्वत्रविहितोधर्मःस्वर्ग्यःसत्यफलंमहत् ॥ बहुद्वारस्यधर्मस्यनेहास्तिविफलाक्रिया २ यस्मिन्यस्मिंश्चविषयेयोयोयातिविनिश्चयम् ॥ सतमेवाभिजानातिनान्यंभरतसत्तम ३ इमांचत्वंनरव्याघ्रश्रोतुमर्हसिमेकथाम् ॥ पुराशक्रस्यकथितांनारदेनमहर्षिणा ४ महर्षिर्नारदोराजन्सिद्धस्त्रैलोक्यसंमतः ॥ पर्येतिक्रमशोलोकान्वायुरव्याहतोयथा ५ सकदाचिन्महेष्वासदेवराजालयंगतः ॥ सत्कृतश्चमहेंद्रेणप्रत्यासन्नगतोऽभवत् ६ तंकृतक्षणमासीनंपर्यपृच्छच्छचीपतिः ॥ महर्षेकिंचिदाश्चर्यमस्तिदृष्टंत्वयाऽनघ ७ यद्वात्वमपिविप्रर्षेत्रैलोक्यंसचराचरम् ॥ जातकौतूहलोनित्यंसिद्धश्चरसिसाक्षिवत् ८

इतिभक्तेर्ज्ञानांगत्वंदर्शयति तदर्थसंग्रहः कर्मभिर्भगवद्भक्तिर्भक्त्येश्वरकृपातया ॥ ज्ञानंतेनविमुक्तिश्चमोक्षधर्मार्थसंग्रहः २३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नैलकंठीये भारतभावदीपे एकपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥ ॥ यद्यपिसुलभाजनकसंवादेसंन्यासस्यैवश्रेष्ठत्वंस्थितंतथाऽपिसर्वैःप्रकारैःसुखहेतुत्वेनश्रेष्ठतरः कोवाआश्रमइतिजिज्ञासयापृच्छति धर्माइति आश्रमिणांआश्रमवतांमध्येश्रेष्ठंप्रशस्यतमंधर्ममाश्रमधर्मंवक्तुमर्हतिभवान् अयंभावः । संन्यासःश्रेष्ठोऽपितद्धर्माणामत्यंतंदुरनुष्ठेयत्वात् यथोक्तंतत्रैवसुलभाजनकसंवादे । ' आधिपत्येतथातुल्येनिग्रहानुग्रहात्मके ॥ राजभिर्भिक्षुकास्तुल्यामुच्यंतेकेनहेतुना ' इति । तत्रारूढपातित्यंकलौसंभावितमतोनव्यानःपतत्यधइतिन्यायेनयत्रपातित्यंनास्त्यूर्ध्वंगतिश्चसर्वैःप्रकारैःसंभाव्यतेताहशआश्रमःप्रशस्ततरःकःइतिप्रष्टुरभिप्रायइति १ सर्वत्राश्रमेषुविहितोधर्मःस्वर्ग्यःस्वर्गसाधनंसत्यफलमबाधितमोक्षाख्यफलसाधनंचभवति साधनेसाध्योपचारः बहूनियज्ञदानादीनिद्वाराणियस्य २ यस्मिन्निति सर्वेष्वाश्रमेषुस्वर्गोमोक्षश्चास्तितेषुयत्रयस्यरुचिस्तेनसकृतकृत्योनान्यंधर्मंबहुमन्यतेइतिश्लोकद्वयार्थः ३ एकंसत्यपिन्यायागतधनस्यगृहस्थस्यश्रेष्ठतमत्वंप्रतिपादयितुंउच्छवृत्त्युपाख्यानमारभंते इमांचत्वंनरव्याघ्रेत्यादिना ४ । ५ । । ६ । ७ । ८

९ । १० । ११ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे द्विपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥ ॥ आसीदिति १ सोमान्वयेअत्रिगोत्रेगताध्वाज्ञातमार्गः २ ३ । ४ । ५ । ६ । ७ । ८ । ९ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्रिपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ समुत्पन्नेति अभिधानिबंधनरज्जुःअथाभिधानीमादत्तइतिब्राह्मणात् तेनाभिधानशब्दोऽपिबंधनवाचीजातबंधनइत्यर्थः १ । २ आत्मानंअवस्थायआलंब्यएकएवआत्मनिस्थितिंआत्मज्ञानार्थमेकाकितयास्थातुंसंन्यासंकर्तुमिच्छामि गुणैर्विषयपाशैर्निबद्धश्चतंनेच्छामि यथामंदाग्निर्बह्वाहारकामयानोऽप्यौदर्यदोषेणभोक्तुंनेच्छतितद्वदित्यर्थः ३ । ४ कुतोधर्ममयःप्लवः कुतःकुत्राश्रमे

नह्यस्त्यविदितंलोकेदेवर्षेतवर्किंचन ॥ श्रुतंवाऽप्यनुभूतंवादृष्टंवाकथयस्वमे ९ तस्मैराजन्सुरेंद्रायनारदोवदतांवरः ॥ आसीनायोपपन्नायप्रोक्तवान्विपुलांकथाम् १० यथायेनचकल्पेनसतस्मैद्विजसत्तमः ॥ कथांकथितवान्पृष्टस्तथाऽममपिमेशृणु ११ ॥ इतिश्रीमहाभारते शांति०मोक्ष०प०उंछवृत्त्युपाख्यानेद्विपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥ ७ ॥ भीष्मउवाच ॥ आसीत्किलनरश्रेष्ठमहापद्मेपुरोत्तमे ॥ गंगायादक्षिणेतीरेकश्चिद्विप्रःसमाहितः १ सौम्यःसोमान्वयेवेदेगताध्वाछिन्नसंशयः ॥ धर्मनित्योजितक्रोधोनित्यतृप्तोजितेंद्रियः २ तपःस्वाध्यायनिरतःसत्यःसज्जनसंमतः ॥ न्यायप्राप्तेनवित्तेनस्वेनशीलेनचान्वितः ३ ज्ञातिसंबंधिविपुलेसत्वाद्याश्रयसंमिते ॥ कुलेमहतिविख्यातेविशिष्टांवृत्तिमास्थितः ४ सपुत्रान्बहुलान्दृष्ट्वाविपुलेकर्मणिस्थितः ॥ कुलधर्माश्रितोराजन्धर्मचर्याऽऽस्थितोऽभवत् ५ ततःसधर्मंवेदोक्तंतथाशास्त्रोक्तमेवच ॥ शिष्टाचीर्णंचधर्मंचत्रिविधंचिंत्यचेतसा ६ किंनुमेस्याच्छुभंकृत्वाकिंक्षतंकिंपरायणम् ॥ इत्येवंखिद्यतेनित्यंनचयातिविनिश्चयम् ७ तस्यैवंखिद्यमानस्यधर्मंपरममास्थितः ॥ कदाचिदतिथिःप्राप्तोब्राह्मणःसुसमाहितः ८ सतस्मैसत्क्रियांचक्रेक्रियायुक्तेनहेतुना ॥ विश्रांतंसुसमासीनमिदंवचनमब्रवीत् ९ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि उंछवृत्त्युपाख्यानेत्रिपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥ ॥ ब्राह्मणउवाच ॥ समुत्पन्नाभिधानोऽस्मिवाङ्माधुर्येणतेऽनघ ॥ मित्रत्वमभिपन्नस्त्वंकिंचिद्वक्ष्यामितच्छृणु १ गृहस्थधर्मंविप्रेंद्रकृत्वापुत्रगतंत्वहम् ॥ धर्मंपरमकंकुर्यांकोहिमार्गोभवेद्द्विज २ अहमात्मानमास्थायएकएवात्मनिस्थितिम् ॥ कर्तुंकांक्षामिनेच्छामिबद्धःसाधारणैर्गुणैः ३ यावदेतदतीतंमेवयःपुत्रफलाश्रितम् ॥ तावदिच्छामिपाथेयमादातुंपारलौकिकम् ४ अस्मिन्हिलोकसंभारेपरंपारमभीप्सतः ॥ उत्पन्नामेमतिरियंकुतोधर्ममयःप्लवः ५ संयुज्यमानानिनिशम्यलोकेनिर्यात्यमानानिचसात्विकानि ॥ दृष्ट्वातुधर्मध्वजकेतुमालांप्रकीर्यमाणामुपरिप्रजानाम् ६ नमेमनोरज्यतिभोगकालेदृष्ट्वायतीन्प्रार्थयतःपरत्र ॥ तेनातिथेबुद्धिबलाश्रयेणधर्मेणधर्मेविनियुंक्ष्वमांत्वम् ७ सोऽतिथिर्वचनंतस्यश्रुत्वाधर्माभिभाषिणः ॥ प्रोवाचवचनंश्लक्ष्णंप्राज्ञोमधुरयागिरा ८ ॥३६७॥

प्लवःसंसाराब्धितरणसाधनं ५ धर्मप्लवापेक्षायांहेतुमाह संयुज्यमानानीति निशम्यआलोच्य निर्यात्यमानानिनिपीड्यमानानि सात्विकानिदेवादीनि धर्मस्यपमस्यध्वजाःकेतवःपताकादंडोपमारोगादयस्तेषांमालासंततिस्तांदृष्ट्वामेमनोभोगकालेनरज्यतीत्युत्तरेणसंबंधः ६ तर्हिकिंभोगत्यागेरज्यतिनेत्याह यतीन्परिव्राजकानपिपरत्रगृहेवस्त्रान्नादिकंप्रार्थयतःप्रार्थयमानान्दृष्ट्वाचयतिधर्मेऽपिमेमनोनरज्यतिअतःदोलायमानंमांधर्मेनियुंक्ष्व ७ । ८

९ । १० । ११ । १२ । १३ । १४ । १५ । १६ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुःपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥ ॥ उपदेशंत्विति १ । २ । ३

॥ अतिथिरुवाच ॥ अहमप्यत्रमुह्यामिममाप्येषमनोरथः ॥ सचसंनिश्चयंयामिबहुद्वारेत्रिविष्टपे ९ केचिन्मोक्षंप्रशंसंतिकेचिद्यज्ञफलंद्विजाः ॥ वानप्रस्थाश्रयाःकेचिद्गार्हस्थ्यंकेचिदास्थिताः १० राजधर्माश्रयंकेचित्केचिदात्मफलाश्रयम् ॥ गुरुधर्माश्रयंकेचित्केचिद्वाक्संयमाश्रयम् ११ मातरंपितरंकेचिच्छुश्रूषंतोदिवंगताः ॥ अहिंसयाऽपरेस्वर्गंसत्येनचतथाऽपरे १२ आहवेऽभिमुखाःकेचिन्निहतास्त्रिदिवंगताः ॥ केचिदुंछव्रतैःसिद्धाःस्वर्गमार्गसमाश्रिताः १३ केचिदध्ययनेयुक्तावेदव्रतपराःशुभाः ॥ बुद्धिमंतोगताःस्वर्गंतुष्टात्मानोजितेंद्रियाः १४ आर्जवेनापरेयुक्तानिहतानार्जवैर्जनैः ॥ ऋजवोनाकपृष्ठेवैशुद्धात्मानःप्रतिष्ठिताः १५ एवंबहुविधैर्लोकैर्धर्मद्वारैरनावृतैः ॥ ममापिमतिराविग्नामेघलेखेववायुना १६ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि उंछवृत्त्युपाख्याने चतुःपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥ ॥ अतिथिरुवाच ॥ उपदेशंतुतेविप्रकरिष्येऽहंयथाक्रमम् ॥ गुरुणामेयथाऽऽख्यातमर्थतत्त्वंतुमेशृणु १ यत्रपूर्वाभिसर्गेवैधर्मचक्रंप्रवर्तितम् ॥ नैमिषेगोमतीतीरेतत्रनागाह्वयंपुरम् २ समग्रैस्त्रिदशैस्तत्रइष्टमासीद्द्विजर्षभ ॥ यत्रेंद्रातिक्रमंचक्रेमांधाताराजसत्तमः ३ कृताधिवासोधर्मात्मातत्रचक्षुःश्रवामहान् ॥ पद्मनाभोमहानागःपद्मइत्येवविश्रुतः ४ सवाचाकर्मणाचैवमनसाचद्विजर्षभ ॥ प्रसादयतिभूतानित्रिविधेवर्त्मनिस्थितः ५ साम्नाभेदेनदानेनदंडेनेतिचतुर्विधम् ॥ विषमस्थंसमस्थंचचक्षुर्ध्यानेनरक्षति ६ तमतिक्रम्यविधिनाप्रष्टुमर्हसिकांक्षितम् ॥ सतेपरमकंधर्मंनमिथ्यादर्शयिष्यति ७ सहिसर्वातिथिर्नागोबुद्धिशास्त्रविशारदः ॥ गुणैरनुपमैर्युक्तःसमस्तैराभिकामिकैः ८ प्रकृत्यानित्यसलिलोनित्यमध्ययनेरतः ॥ तपोदमाभ्यांसंयुक्तोवृत्तेनानवरेणच ९ यज्वादानपतिःक्षांतोवृत्तेचपरमेस्थितः ॥ सत्यवागनसूयुश्चशीलवान्नियतेंद्रियः १० शेषान्नभोक्तावचनानुकूलोहितार्जवोत्कृष्टकृताकृतज्ञः ॥ अवैरकृद्भूतहितेनियुक्तोगंगाह्रदांभोऽभिजनोपपन्नः ११ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षपर्वणि उंछवृत्त्यु०पंचपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥ ब्राह्मणउवाच ॥ अतिभारोऽद्यतस्यैवभारावतरणंमहत् ॥ पराश्वासकरंवाक्यमिदंमेभवतःश्रुतम् १ अध्वक्लांतस्यशयनंस्थानक्लांतस्यचासनम् ॥ तृषितस्यचपानीयंक्षुधार्तस्यचभोजनम् २ ईप्सितस्यैवसंप्राप्तिरन्नस्यसमयेऽतिथेः ॥ एषितस्यात्मनःकालेवृद्धस्यैवसुतोयथा ३ मनसाचिंतितस्यैवप्रीतिस्निग्धस्यदर्शनम् ॥ प्रह्लादयतिमांवाक्यंभवतायदुदीरितम् ४ दत्तचक्षुरिवाकाशेपश्यामिविमृशामिच ॥ प्रज्ञानवचनाद्योऽयमुपदेशोहिमेकृतः ५

चक्षुःश्रवाःसर्पः ४ त्रिविधेकर्मज्ञानोपास्त्यात्मके ५ चक्षुःचक्षुरादि ध्यानेनवस्तुतत्त्वानुसंधानेन ६ अतिक्रम्यापगम्य ७ आभिकाभिकैरभीप्सितैः ८ नित्यंसलिलवन्निर्मलोनित्यसलिलः ९ । १० ११ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे पंचपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥ ॥ अतिभारेति १ । २ । ३ । ४ । ५

६ । ७ । ८ चतुर्थधर्मोमोक्षधर्मस्तेनसंयुक्तं ९ । १० । ११ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नी० भा० षट्पंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥ सवनानीति १ । २ । ३ । ४

बाढमेवंकरिष्यामियथामेभाषतेभवान् ॥ इमांहिरजनींसाधोनिवसस्वमयासह ६ प्रभातेयास्यतिभवान्पर्यश्विस्तःसुखोषितः ॥ असौहिभगवान्सूर्योमंदरश्मि रवाङ्मुखः ७ ॥ भीष्मउवाच ॥ ततस्तेनकृतातिथ्यःसोऽतिथिःशत्रुसूदन ॥ उवासकिलतांरात्रिंसहतेनद्विजेनवै ८ चतुर्थधर्मसंयुक्तंतयोःकथयतोस्तदा ॥ व्यतीतासानिशाकृत्स्नासुखेनदिवसोपमा ९ ततःप्रभातसमयेसोऽतिथिस्तेनपूजितः ॥ ब्राह्मणेनयथाशक्त्यास्वकार्यमभिकांक्षता १० ततःसविप्रःकृतकर्म निश्चयःकृताभ्यनुज्ञःस्वजनेनधर्मकृत् ॥ यथोपदिष्टंभुजगेंद्रसंश्रयंजगामकालेसुकृतैकनिश्चयः ११ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिउंछवृत्त्यु पाख्यानेषट्पंचाशदधिकत्रिशततमोऽध्याय ॥ ३५६ ॥ भीष्मउवाच ॥ सवनानिविचित्राणितीर्थानिचसरांसिच ॥ अभिगच्छन्क्रमेणस्मकंचिन्मुनिमुप स्थितः १ तंसतेनयथोद्दिष्टंनागंविप्रेणब्राह्मणः ॥ पर्यपृच्छद्यथान्यायंश्रुत्वैवचजगामसः २ सोऽभिगम्ययथान्यायंनागायतनमर्थवित् ॥ प्रोक्तवानहमस्मीति भोःशब्दालंकृतंवचः ३ ततस्यवचनंश्रुत्वारूपिणीधर्मवत्सला ॥ दर्शयामासतंविप्रंनागपत्नीपतिव्रता ४ सातस्मैविधिवत्पूजांचक्रेधर्मपरायणा ॥ स्वागतेनाग तंकृत्वाकिंकरोमीतिचाब्रवीत् ५ ॥ ब्राह्मणउवाच ॥ विश्रांतोऽभ्यर्चितश्चास्मिभवत्याश्लक्ष्णयागिरा ॥ द्रष्टुमिच्छामिभवतिदेवंनागमनुत्तमम् ६ एतद्धिपरमं कार्यमेतन्मेपरमेप्सितम् ॥ अनेनचार्थेनास्म्यद्यसंप्राप्तःपन्नगाश्रमम् ७ ॥ नागभार्योवाच ॥ आर्यःसूर्यरथंवोढुंगतोऽसौमासचारिकः ॥ सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम् ८ एतद्विदितमार्यस्यविवासकरणंतव ॥ भर्तुर्भवतुकिंचान्यत्क्रियतांतद्वदस्वमे ९ ॥ ब्राह्मणउवाच ॥ अनेननिश्चयेनाहंसाध्विसंप्राप्त वानिह ॥ प्रतीक्षन्नागमंदेविवत्स्याम्यस्मिन्महावने १० संप्राप्तस्यैवचाव्यग्रमावेद्योऽहमिहागतः ॥ ममाभिगमनंप्राप्तोवाच्यश्चवचनंत्वया ११ अहमप्यत्र वत्स्यामिगोमत्याःपुलिनेशुभे ॥ कालंपरिमिताहारोयथोक्तंपरिपालयन् १२ ततःसविप्रस्तांनागींसमाधायपुनःपुनः ॥ तदेवपुलिनंनद्याःप्रययौब्राह्मणर्ष भः १३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिउंछवृत्त्युपाख्यानेसप्तपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५७ ॥ भीष्मउवाच ॥ अथतेननर श्रेष्ठब्राह्मणेनतपस्विना ॥ निराहारेणवसतादुःखितास्तेभुजंगमाः १ सर्वेसंभूयसहितास्तस्यनागस्यबांधवाः ॥ भ्रातरस्तनयाभार्याययुस्तंब्राह्मणंप्रति २ तेऽपश्यन्पुलिनेतंवैविविक्तेनियतव्रतम् ॥ समासीनंनिराहारंद्विजंजप्यपरायणम् ३ तेसर्वेसमतिक्रम्यविप्रमभ्यर्च्यचासकृत् ॥ ऊचुर्वाक्यमसंदिग्धमातिथेयस्य बांधवाः ४ षष्ठोहिदिवसस्तेऽद्यप्राप्तस्येहतपोधन ॥ नचाभिभाषसेकिंचिदाहारंधर्मवत्सल ५

५ । ६ । ७ । ८ विवासकरणंप्रवासकारणं ९ । १० । ११ । १२ । १३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे सप्तपंचाशाधिकत्रिशततमोऽध्यायः ॥ ३५७ ॥ अथेति १ । २ । ३ समतिक्रम्योपेत्य ४ । ५



---

६ । ७ । ८ । ९ । १० । ११ । १२ । १३ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे अष्टपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५८ ॥ ॥ ७ ॥ अथेति

अस्मानभिगतश्चासिवयंचत्वामुपस्थिताः ॥ कार्यंचातिथ्यमस्माभिर्वयंसर्वेकुटुंबिनः ६ मूलंफलंवापर्णंवापयोवाद्विजसत्तम ॥ आहारहेतोरन्नंवाभोक्तुमर्हसिब्रा ह्मण ७ त्यक्ताहारेणभवतावनेनिवसतात्वया ॥ बालवृद्धमिदंसर्वंपीडयतेधर्मसंकरात् ८ नहिनोभ्रूणहाकश्चिज्जातापत्यन्तोऽपिवा ॥ पूर्वाशीवाकुलेह्यस्मिन्देवता तिथिबंधुषु ९ ॥ ब्राह्मणउवाच ॥ उपदेशेनयुष्माकमाहारोऽयंकृतोमया ॥ द्विरूनंदशरात्रंवैनागस्यागमनंप्रति १० यद्यष्टरात्रेऽतिक्रांतेनागमिष्यतिपन्नगः ॥ तदाऽऽहारंकरिष्यामितन्निमित्तमिदंव्रतम् ११ कर्तव्योनचसंतापोगम्यतांचयथागतम् ॥ तन्निमित्तमिदंसर्वंनैतद्भेत्तुमिहार्हथ १२ तेतेनसमनुज्ञाताब्राह्मणेनभु जंगमाः ॥ स्वमेवभवनंजग्मुरकृतार्थानरर्षभ १३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिउंछवृत्त्युपाख्यानेअष्टपंचाशदधिकत्रिशततमोऽध्यायः॥३५८॥ ॥ भीष्मउवाच ॥ अथकालेबहुतिथेपूर्णेप्राप्तोभुजंगमः ॥ दत्ताभ्यनुज्ञःस्वंवेश्मकृतकर्माविवस्वता १ तंभार्याऽप्युपचक्रामपादशौचादिभिर्गुणैः ॥ उपपन्नांचतांसाध्वीं पन्नगःपर्यपृच्छत २ अथत्वमसिकल्याणिदेवतातिथिपूजने ॥ पूर्वमुक्तेनविधिनायुक्तियुक्तेनतत्समम् ३ नखल्वस्यकृतार्थेनस्त्रीबुद्ध्यामार्दवीकृता ॥ मद्वियोगेनसुश्रो णिविमुक्ताधर्मसेतुना ४ ॥ नागभार्योवाच ॥ शिष्याणांगुरुशुश्रूषाविप्राणांवेदधारणम् ॥ भृत्यानांस्वामिवचनंराज्ञोलोकानुपालनम् ५ सर्वभूतपरित्राणंक्षत्रध र्मइहोच्यते ॥ वैश्यानांयज्ञसंवृत्तिरातिथेयसमन्विता ६ विप्रक्षत्रियवैश्यानांशुश्रूषाशूद्रकर्मतत् ॥ गृहस्थधर्मोनागेंद्रसर्वभूतहितैषिता ७ नियताहारतानित्यंव्रतचर्यायथाक्रमम् ॥ धर्मोहिधर्मसंबंधादिंद्रियाणांविशेषतः ८ अहंकस्यकुतोवाऽपिकःकोमेहमवेदिति ॥ प्रयोजनमतिर्नित्यमेवंमोक्षाश्रमेवसेत् ९ पतिव्रतात्वंभा र्यायाःपरमोधर्मउच्यते ॥ तवोपदेशान्नागेंद्रतच्चतत्त्वेनवेद्मिवै १० साऽहंधर्मंविजानंतीधर्मेनित्येत्वयिस्थिते ॥ सत्पथंकथमुत्सृज्ययास्यामिविपथंपथः ११ देवता नांमहाभागधर्मचर्यानहीयते ॥ अतिथीनांचसत्कारेनित्ययुक्ताऽस्म्यतंद्रिता १२ सप्ताष्टदिवसास्त्वद्यविप्रस्येहागतस्यवै ॥ तच्चकार्यंनमेख्यातिदर्शनंतवकांक्ष ति १३ गोमत्यास्त्वेषपुलिनेत्वद्दर्शनसमुत्सुकः ॥ आसीनोवर्तयन्ब्रह्मब्राह्मणःसंशितव्रतः १४ अहंत्वनेननागेंद्रसत्यपूर्वंसमाहिता ॥ प्रस्थाप्योमत्सकाशंसंप्रा प्तोभुजगोत्तमः १५ एतच्छ्रुत्वामहाप्राज्ञतत्रगंतुंत्वमर्हसि ॥ दातुमर्हसिवातस्यदर्शनंदर्शनश्रवः १६ ॥ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिउंछवृ त्त्युपाख्यानेएकोनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९ ॥ ॥ ७ ॥

१ । २ । ३ अकृतार्थेनधर्मसेतुना ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ मेमांप्रतिख्यातिकथयति १३ वर्तयन् आवर्तयन् ब्रह्मवेदं १४ । १५ दर्शनश्रवः हेसर्प १६ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे एकोनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९ ॥ ७ ॥

अथेति १ । २ सौरभेयादिव्यगंधवहाः ३ । ४ । ५ स्तोककश्चातकः ६ हित्वाविना प्रतिपालयेत्प्राप्नुयात् त्वद्दर्शनंविनाऽस्यकोऽपिविघ्नोमाभूदित्यर्थः अभिजनेसद्वंशेजातस्तुल्योऽप्य
न्योनागोऽपिकश्चिन्नपर्युपास्तेपरित्यज्यनआस्ते अतिथिंत्यक्त्वानकश्चित्स्वकुलेआस्तेइत्यर्थः ७ सहजंसर्पत्वजातिजं ८ भ्रूणहत्यैवभ्रूणहत्ययैव ९। १० । ११ । १२ । १३ । १४ । १५ । १६ । १७

॥२६९॥ ॥ नागउवाच ॥ अथब्राह्मणरूपेणकंतंसमनुपश्यसि ॥ मानुषंकेवलंविप्रंदेवंवाऽथशुचिस्मिते १ कोहिमांमानुषःशक्तोद्रष्टुकामोयशस्विनि ॥ संदर्शनरुचिर्वाक्य अ०
माज्ञापूर्वंवदिष्यति २ सुरासुरगणानांचदेवर्षीणांचभाविनि ॥ ननुनागामहावीर्याःसौरभेयास्तरस्विनः ३ वंदनीयाश्चवरदावयमप्यनुयायिनः ॥ मनुष्याणांवि ॥३६०॥
शेषेणनावेक्ष्याइतिमेमतिः ४ ॥ नागभार्योवाच ॥ आर्जवेनविजानामिनासौदेवोऽनिलाशन ॥ एकंतस्मिन्विजानामिभक्तिमानतिरोषण ५ सहिकार्यांतराकां
क्षीजलेप्सुःस्तोककोयथा ॥ वर्षंवर्षप्रियःपक्षीदर्शनंतवकांक्षति ६ हित्वात्वद्दर्शनंकिंचिद्विघ्नंनप्रतिपालयेत् ॥ तुल्योऽप्यभिजनेजातोनकश्चित्पर्युपास्ते ७ तद्रो
षंसहजंत्यक्त्वात्वमेनंद्रष्टुमर्हसि ॥ आशाच्छेदेनतस्याद्यनात्मानंदग्धुमर्हसि ८ आशयाह्यभिपन्नानामकृत्वाऽश्रुप्रमार्जनम् ॥ राजावाराजपुत्रोवाभ्रूणहत्यैवयुज्यते ९
मौनेज्ञानफलावाप्तिर्दानेनचयशोमहत् ॥ वाग्मित्वंसत्यवाक्येनपरत्रचमहीयते १० भूप्रदानेनचगतिंलभत्याश्रमसंमिताम् ॥ न्याय्यस्यार्थस्यसंप्राप्तिंकृत्वाफल
मुपाश्नुते ११ अभिप्रेतामसंक्लिष्टांकृत्वाचात्महितांक्रियाम् ॥ नयातिनिरयंकश्चिदितिधर्मविदोविदुः १२ ॥ नागउवाच ॥ अभिमानेर्नमानोमेजातिदोषेणवैम
हान् ॥ रोषःसंकल्पजःसाध्विदग्धोवागग्निनात्वया १३ नचरोषादहंसाध्विपश्येयमधिकंतमः ॥ तस्यवक्तव्यतांयातिविशेषेणभुजंगमाः १४ रोषस्यहिवशंगत्वा
दशग्रीवःप्रतापवान् ॥ तथाशक्रप्रतिस्पर्धीहतोरामेणसंयुगे १५ अंतःपुरगतंवत्संश्रुत्वारामेणनिर्हृतम् ॥ धर्षणारोषसंविग्नाःकार्तवीर्यसुताहताः १६ जामदग्न्ये
नरामेणसहस्रनयनोपमः ॥ संयुगेनिहतोरोषात्कार्तवीर्योमहाबलः १७ तदेषतपसांशत्रुःश्रेयसांविनिपातकः ॥ निगृहीतोमयारोषःश्रुत्वैवंवचनंतव १८ आत्मानं
चविशेषेणप्रशंसाम्यनपायिनि ॥ यस्यमेत्वंविशालाक्षिभार्यागुणसमन्विता १९ एषतत्रैवगच्छामियत्रतिष्ठत्यसौद्विजः ॥ सर्वथाचोक्तवान्वाक्यंसकृतार्थःप्रयास्य
ति २० ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिउंछवृत्त्युपाख्यानेषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६० ॥ भीष्मउवाच ॥ सपन्नगपतिस्तत्रप्रययौब्रा
ह्मणंप्रति ॥ तमेवमनसाध्यायन्कार्यवत्तांविचारयन् १ तमतिक्रम्यनागेंद्रोमतिमान्सनरेश्वर ॥ प्रोवाचमधुरंवाक्यंप्रकृत्याधर्मवत्सलः २ भोभोक्षाम्याभिभाषेत्वां
नरोषंकर्तुमर्हसि ॥ इहत्वमभिसंप्राप्तःकस्यार्थेकिंप्रयोजनम् ३ आभिमुख्यादभिक्रम्यस्नेहात्पृच्छामितेद्विज ॥ विविक्तेगोमतीतीरेकंवात्वंपर्युपाससे ४ ॥ ब्राह्मण
उवाच ॥ धर्मारण्यंहिमांविद्धिनागंद्रष्टुमिहागतम् ॥ पद्मनाभंद्विजश्रेष्ठतत्रमेकार्यमाहितम् ५ ॥२६९॥

१८ । १९ । २० ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६० ॥ ॥ ५ ॥ सपन्नगपतिरिति १ । २ क्षाम्यक्षमा
पनंकृत्वा ३ । ४ धर्मारण्यंमुनिंमांविद्धि पद्मनाभंनामंद्रष्टुमागतं ५

६ अक्लेशकरणंक्लेशनिवारकं ७ । ८ । ९ । १० । ११ । १२ अनर्थज्ञःअर्थानभिज्ञः १३ आत्मानंब्रह्मआत्मानोजीवस्यपरांतिविश्रांतिस्थानं आ मस्थोविषयेभ्योन्यावृत्तः एवंविधोऽपिचलभिर्नवासा
र्थिनंगृहासक्तमपिमहामज्ञंगृहदोषदर्शिनंउपास्मिह तथाचनरक्तोनापिविरक्तोऽस्मीत्यर्थः १४ । १५ । १६ ॥ ॥ इतिशांतिपर्वणिमोक्षधर्मपर्वणिनीलकंठीयेभारतभावदीपेएकषष्ट्यधिकत्रिशततमो

तस्यचाहमसान्निध्येश्रुतवानस्मितंगतम् ॥ स्वजनात्तंप्रतीक्षामिपर्जन्यमिवकर्षकः ६ तस्यचाक्लेशकरणंस्वस्तिकारसमाहितम् ॥ आवर्तयामितद्ब्रह्मयोगयुक्तो
निरामयः ७ ॥ नागउवाच ॥ अहोकल्याणवृत्तस्त्वंसाधुःसज्जनवत्सलः ॥ अवाच्यस्त्वंमहाभागपरंस्नेहेनपश्यसि ८ अहंसनागोविप्रर्षेयथामांविंदतेभवान् ॥
आज्ञापययथास्वैरंकिंकरोमिप्रियंतव ९ भवंतंस्वजनादस्मिसंप्राप्तंश्रुतवानहम् ॥ अतस्त्वांस्वयमेवाहंद्रष्टुमभ्यागतोद्विज १० संप्राप्तश्चभवानद्यकृतार्थःप्रतिया
स्यति ॥ विस्रब्धोमांद्विजश्रेष्ठविषयेयोक्तुमर्हसि ११ वयंहिभवतासर्वेगुणक्रीताविशेषतः ॥ यस्त्वमात्महितंत्यक्त्वामामेवेहानुरुध्यसे १२ ॥ ब्राह्मणउवाच ॥
आगतोऽहंमहाभागतवदर्शनलालसः ॥ कंचिदर्थमनर्थज्ञःप्रष्टुकामोभुजंगम १३ अहमात्मानमात्मस्थोमार्गमाणोत्मनोगतिम् ॥ वासार्थिनंमहाप्रज्ञंचलचित्तमुपा
स्मिह १४ प्रकाशितस्त्वंसगुणैर्यशोगर्भगभस्तिभिः ॥ शशांककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः १५ तस्यमेप्रश्नमुत्पन्नंछिंधित्वमनिलाशन ॥ पश्चात्कार्यंवदिष्या
मिश्रोतुमर्हतितद्भवान् १६ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षधर्मपर्वणिउंछवृत्त्युपाख्यानेएकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१ ॥ ब्राह्मणउवाच ॥
विवस्वतोगच्छतिपर्ययेणवोढुंभवांस्तंरथमेकचक्रम् ॥ आश्चर्यभूतंयदितत्रकिंचिद्दृष्टंत्वयाशंसितुमर्हसित्वम् १ ॥ नागउवाच ॥ आश्चर्याणामनेकानांप्रतिष्ठाभगवा
न्रविः ॥ यतोभूताःप्रवर्तंतेसर्वेत्रैलोक्यसंमताः २ यस्यरश्मिसहस्रेषुशाखास्विवविहंगमाः ॥ वसंत्याश्रित्यमुनयःसंसिद्धादैवतैःसह ३ यतोवायुर्विनिःसृत्यसूर्यर
श्म्याश्रितोमहान् ॥ विजृंभत्यंबरेतत्रकिमाश्चर्यमतःपरम् ४ विभज्यतंतुविप्रर्षेप्रजानांहितकाम्यया ॥ तोयंसृजतिवर्षासुकिमाश्चर्यमतःपरम् ५ यस्यमंडलमध्य
स्थोमहात्मापरमत्विषा ॥ दीप्तःसमीक्षतेलोकान्किमाश्चर्यमतःपरम् ६ शुक्रोनामाऽसितःपादोयश्चवारिधरोंबरे ॥ तोयंसृजतिवर्षासुकिमाश्चर्यमतःपरम् ७
योष्टमासांस्तुशुचिनाकिरणेनोक्षितंपयः ॥ प्रत्यादत्तेपुनःकालेकिमाश्चर्यमतःपरम् ८ यस्यतेजोविशेषेषुस्वयमात्माप्रतिष्ठितः ॥ यतोबीजंमहीचेयंधार्यतेसचरा
चरा ९ यत्रदेवोमहाबाहुःशाश्वतःपुरुषोत्तमः ॥ अनादिनिधनोविप्रकिमाश्चर्यमतःपरम् १० आश्चर्याणामिवाश्चर्यमिदमेकंतुमेशृणु ॥ विमलेयन्मयादृष्टमंबरेसू
र्यसंश्रयात् ११ पुरामध्यान्हसमयेलोकांस्तपतिभास्करे ॥ प्रत्यादित्यप्रतीकाशःसर्वतःसमदृश्यत १२ सलोकांस्तेजसासर्वान्स्वभासानिर्विभासयन् ॥ आदित्या
भिमुखोऽभ्येतिगगनंपाटयन्निव १३

ऽध्यायः ॥ ३६१ ॥ ॥ विवस्वतइति १ । २ । ३ । ४ तैवार्तंपुरोवातादिरूपेणविभज्यपरिणामंनीत्वा ५ महात्मांतर्यामी ६ पादइवपादोऽवयवः नीलमेघरूपेणाप्ययमेववर्ततीत्यर्थः ७ । ८
यतःसूर्यात् बीजंओषधं ९ । १० । ११ प्रत्यादित्यप्रतीकाशःआदित्यांतरतुल्यतेजस्कः समदृश्यतदृष्टः १२ सइति तदेवभूतंपरामृश्यते १३

१४ । १५ । १६ । १७ । १८ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे द्विषष्ट्यधिकत्रिशततमोऽध्याय ॥ ३६२ ॥ ॥ ७ ॥ ॥ नैषइति अनिलसखोवह्निः १
२ । ३ । ४ । ५ । ६ ॥ ॥ इति शांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥ ॥ ७ ॥ ॥ आश्चर्यमिति १ । २ । ३ उक्ता
नुक्तेपृष्टेअपृष्टेऽपिमयैववात्सल्यात्कृतेसति ४ । ९ अर्हत्वयिभक्तिमानितिशेषः मयिमित्रेसतिकार्यचिंतानकापीत्यर्थः ६ । ७ सएवत्वमिति 'यत्रदेवोमहाबाहुःशाश्वतःपुरुषोत्तमः ॥ अनादिनि

हुताहुतिरिवज्योतिर्व्याप्यतेजोमरीचिभिः ॥ अनिर्देश्येनरूपेणद्वितीयइवभास्करः १४ तस्याभिगमनप्राप्तौहस्तौदत्तौविवस्वता ॥ तेनापिदक्षिणोहस्तोदत्तःप्र
त्यर्चिताऽर्थिना १५ ततोभित्त्वैवगगनंप्रविष्टोरश्मिमंडलम् ॥ एकीभूतंचतत्तेजःक्षणेनादित्यतांगतम् १६ तत्रनःसंशयोजातस्तयोस्तेजःसमागमे ॥ अनयोःको
भवेत्सूर्योरथस्थोयोयमागतः १७ तेवयंजातसंदेहाःपर्यपृच्छामहेरविम् ॥ कएषदिवमाक्रम्यगतःसूर्यइवापरः १८ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमोक्षपर्वणि
उंछवृत्त्युपाख्यानेद्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥ सूर्यउवाच ॥ नैषदेवोऽनिलसखोनासुरोनचपन्नगः ॥ उंछवृत्तिव्रतेसिद्धोमुनिरेषदिवंगतः १
एषमूलफलाहारःशीर्णपर्णाशनस्तथा ॥ अब्भक्षोवायुभक्षश्चआसीद्विप्रःसमाहितः २ भवश्चानेनविप्रेणसंहिताभिरभिष्टुतः ॥ स्वर्गद्वारेकृतोद्योगोयेनासौत्रिदिवंग
तः ३ असंगतिरनाकांक्षीनित्यमुंछशिलाशनः ॥ सर्वभूतहितेयुक्तएषविप्रोभुजंगमाः ४ नहिदेवानगंधर्वानासुरानचपन्नगाः ॥ प्रभवंतीहभूतानांप्राप्तानामुत्तमां
गतिम् ५ एतदेवंविधंदृष्टमाश्चर्यंतत्रमेद्विज ॥ संसिद्धोमानुषःकामंयोऽसौसिद्धगतिंगतः ॥ सूर्येणसहितोब्रह्मन्पृथिवींपरिवर्तते ६ ॥ इतिश्रीमहाभारतेशांतिपर्व
णिमोक्षधर्मपर्वणिउंछवृत्त्युपाख्यानेत्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥ ब्राह्मणउवाच ॥ आश्चर्यंनात्रसंदेहःसुप्रीतोस्मिभुजंगम ॥ अन्वर्थोपगतैर्वा
क्यैःपंथानंचास्मिदर्शितः १ स्वस्तितेऽस्तुगमिष्यामिसाधोभुजगसत्तम ॥ स्मरणीयोऽस्मिभवतासंप्रेषणनियोजनैः २ ॥ नागउवाच ॥ अनुक्त्वाहृद्गतंकार्यं
क्वेदानींप्रस्थितोभवान् ॥ उच्यतांद्विजयत्कार्यंयदर्थंत्वमिहागतः ३ उक्तानुक्तेकृतेकार्येमामामंत्र्यद्विजर्षभ ॥ मयाप्रत्यभ्यनुज्ञातस्ततोयास्यसिसुव्रत ४ नहि
मांकेवलंदृष्ट्वात्यक्त्वाप्रणयवानिह ॥ गंतुमर्हसिविप्रर्षेवृक्षमूलगतोयथा ५ त्वयिचाहंद्विजश्रेष्ठभवान्मयिनसंशयः ॥ लोकोऽयंभवतःसर्वःकाचिंतामयितेऽनघ ६
॥ ब्राह्मणउवाच ॥ एवमेतन्महाप्राज्ञविदितात्मन्भुजंगम ॥ नातिरिक्तास्त्वयादेवाःसर्वथैवयथातथम् ७ सएवत्वंसएवाहंयोऽहंसत्तुभवानपि ॥ अहंभवांश्च
भूतानिसर्वेयत्रगताःसदा ८

धनोविप्रकिमाश्चर्यमतःपरं'इतियःपूर्वमादित्यांतर्वर्तीपुरुषोत्तमउक्तःसएवत्वंसएवचाहं सयश्चायंपुरुषे यश्चासावादित्येसएकइतिहृदयादित्यपुरुषयोरभेदावगमातकारणात्मनाऽभेदेपिकार्यात्मना
आवयोर्भेदोभविष्यतीत्याशंक्याह योऽहंसएवभवानपि तुशब्दोऽवधारणे एतेनभेदाभेदपक्षोनिरस्तः भूतानिवियदादीनि सर्वेयत्रगताःप्रलयकालेतदेवब्रह्मस्मइत्यर्थः एतच्चोंछवृत्तेःसूर्यप्रवेशमात्र
श्रवणेनैवज्ञातंनिश्चितंचवेदवाक्यादितिभावः ८

भोगपतेभोगोऽहिकुलंतत्पते भोगिपतेइतिस्वच्छःपाठः ९ । १० ॥ इतिशांतिपर्वणि मोक्षधर्मपर्वणि नीलकंठीये भारतभावदीपे चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥ सचेति दीक्षाक्षौरप्राय
श्चित्तादिपूर्वमुंछव्रतस्वीकारस्तदर्थी १ तदनेनप्रबंधेनयद्यपिसर्वेष्वाश्रमेषुमोक्षोऽस्तितथाऽपिगार्हस्थ्यमेवस्वाध्यायव्रतयमनियमशमदमाद्युपेतमाश्रमांतरधर्माणामाश्रयइतितत्रैवकात्स्न्येनसर्वेधर्माःसं
भवंतीतितेनैवोपसंहारःकृतः यथाछांदोग्येब्रह्मसंस्थोऽमृतत्वमेतीतितिसंन्यासोत्कर्षप्रतिपादकेवाक्येसत्यप्याचार्यकुलाद्वेदमधीत्ययथाविधानंगुरोःकर्मातिशेषेणाभिसमावृत्यकुटुंबेशुचौदेशेस्वाध्यायमधी
यानोधार्मिकान्विदधदात्मनिसर्वेंद्रियाणिप्रतिष्ठाप्याहिंसन्सर्वाणिभूतान्यत्रतीर्थेभ्यःसखल्वेवंवर्तयन्यावदायुषंब्रह्मलोकमभिसंपद्यतेनचपुनरावर्ततेनचपुनरावर्ततइतिगृहिणैवोपसंहारःकृतस्तत्रैवकृत्स्ना

आसीत्तुमेभोगपतेसंशयःपुण्यसंचये ॥ सोहमुंछव्रतंसाधोचरिष्याम्यर्थसाधनम् ९ एषमेनिश्चयःसाधोकृतंकारणमुत्तमम् ॥ आमंत्रयामिभद्रंतेकृतार्थोऽ
स्मिभुजंगम १० ॥ ॥ इति श्रीमहाभारते शांतिपर्वणि मोक्षधर्मपर्वणि उंछवृत्त्युपाख्याने चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥
॥ ॥ भीष्मउवाच ॥ ॥ सचामंत्र्योरगश्रेष्ठंब्राह्मणःकृतनिश्चयः ॥ दीक्षाकांक्षीतदाराजंश्च्यवनंभार्गवंश्रितः १ सतेनकृतसंस्कारोधर्ममेवाधितस्थिवान् ॥
तथैवचकथामेतांराजन्कथितवांस्तदा २ भार्गवेणापिराजेंद्रजनकस्यनिवेशने ॥ कथैषाकथितापुण्यानारदायमहात्मने ३ नारदेनापिराजेंद्रदेवेंद्रस्यनिवे
शने ॥ कथिताभरतश्रेष्ठपृष्टेनाक्लिष्टकर्मणा ४ देवराजेनचपुराकथितैषाकथाशुभा ॥ समस्तेभ्यःप्रशस्तेभ्योविप्रेभ्योवसुधाधिप ५ यदाचममरामेणयु
द्धमासीत्सुदारुणम् ॥ वसुभिश्चतदाराजन्कथेयंकथितामम ६ पृच्छमानायतत्त्वेनमयाचैवोत्तमातव ॥ कथेयंकथितापुण्याधर्म्याधर्मभृतांवर ७ यदयं
परमोधर्मोयन्मांपृच्छसिभारत ॥ आसीद्वीरोह्यनाकांक्षीधर्मार्थकरणेनृप ८

श्रमधर्मसमाप्तेः यथोक्तंभगवताबादरायणेनकृत्स्नभावात्तुगृहिणोपसंहारइति तथेहापिसुलभाजनकसंवादेसंन्यासस्याधिक्येसिद्धेप्युंछवृत्त्युपाख्यानेनगृहिणैवोपसंहारःप्रदर्शितः अतिशेषेणनिःशेषेणकृ
त्वेत्यध्याहारः धार्मिकान्पुण्यावहान्धर्मान् सर्वेंद्रियाणिप्रतिष्ठाप्येत्यनेनयोगउक्तः तीर्थेभ्योयज्ञेभ्यइतिश्रुतिपदानामर्थः यत्रकुत्राप्याश्रमेजितेंद्रियोध्याननिष्ठोमुच्यतइत्युक्तंभवति तथैवचकथा
मेतामित्यादिनावंशउक्तः २ । ३ । ४ । ५ । ६ । ७ परकृतिस्वरूपेणार्थवादेननिष्कामस्वकर्मैवजितेंद्रियेणकर्तव्यंतदेवमोक्षपरमित्याशयेनाद्वेनाहासीदिति ८

उपसंहरति सचेति यमाअहिंसादयः नियमाःशौचादयः वनांतरंवनमध्यंप्रविष्टः उंछःकणशआदानंकणिशाद्यर्जनंशिलं परिगणितंपरिमितमुंछशिलार्जितमन्नमश्नन्फणिपत्युक्तामुंछवृत्तेर्गतिंप्रापे तिशेषः ९ ॥ वेदांतेलक्ष्मणार्यंक्रतुविधिविवृतौतीर्थनारायणार्यंतर्कैधीरेशमिश्रान्फणिपतिभणितोपोल्मंगाधरार्यं ॥ वेदेसांगेपिवृन्दंशिवमथपितरंदक्षिणामूर्तिंपास्तोश्रौतेचिंतामणिंपःशरणमुपगतो

सचकिलकृतनिश्चयोद्विजोभुजगपतिप्रतिदेशितात्मकृत्यः ॥ यमनियमसहोवनांतरंपरिगणितोंछशिलाशनःप्रविष्टः ९ ॥ ॥ इति श्रीमहाभारतेशतसाहस्र्यां संहितायां वैयासक्यां शांतिपर्वणि उंछवृत्त्युपाख्याने पंचषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥ ॥ ४ ॥ ॥ अस्यानंतरमनुशासनपर्वभविष्यति तस्यायमाद्यःश्लोकः ॥ ॥ युधिष्ठिरउवाच ॥ शमोबहुविधाकारःसूक्ष्मउक्तःपितामह ॥ नचमेहृदयेशांतिरस्तिश्रुत्वेदमीदृशम् ॥ १ ॥

भूम्निगोपालदेवं ॥ १ ॥ व्याकरोन्मोक्षधर्मान्सनीलकंठःसमासतः ॥ अनेनप्रीयतांदेवोगिरिजापतिरव्ययः ॥ २ ॥ ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोः श्रीनीलकंठस्यकृतौभारतभावदीपे मोक्षधर्मपर्वार्थप्रकाशे पंचषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥ ॥ ॥ समाप्तेयंटीका ॥ शुभमस्तु ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

॥ अस्मिन्पर्वणि व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यं तल्लिपिकरादिप्रमाददिवेतिबोध्यं ॥

